

# गीता-व्याख्यान-सङ्ग्रहः

(पञ्चदशव्याख्यानसमेता श्रीमद्भगवद्गीता)

## द्वितीयं सम्पुटम्

### तृतीयतः अष्टमाध्यायात्मकम्







॥ श्रीमन्मूलरामो विजयते ॥

॥ श्रीगुरुराजो विजयते ॥

# गीता-व्याख्यान-सङ्ग्रहः

## (पञ्चदशव्याख्यानसमेता श्रीमद्भगवद्गीता)

## द्वितीयं सम्पुटम्

तृतीयाध्यायतः अष्टमाध्यायपर्यन्तम्


सम्पादकाः

विद्वान् राजा एस्. पवमानाचार्यः

विद्वान् कडप राघवेन्द्राचार्यः

विद्वान् डॉ. एन्. वादिराजाचार्यः

विद्वान् पुराणिक सुब्रह्मण्याचार्यः







प्रकाशकः

**श्रीगुरुसार्वभौमसंस्कृतविद्यापीठम्**

जगद्गुरु श्रीमन्मध्वाचार्यमूलमहासंस्थानम्

श्रीराघवेन्द्रस्वामिनां मठः, मन्त्रालयः

# Gīiā-Vyākhyāna-Saṅgraha

**A Collection of Fifteen Commentaries on**

## Srīmad Bhagavad Gītā

Valume : II - Adhyāyas 3 to 8

Printed Pages : xvi + 859

*Hon. Editors :*

***Śrī Rājā S. Rājagopālāchārya,*** *Āpta Kāryadarśī, and*

***Śrī S. N. Suyamīndrāchārya,*** *Additional Āpta Kāryadarśī*

**Śrī Rāghavendra Swāmy Mutt,** Mantrālayam, A.P.

*Edited By :*

**Vidwān Rājā S. Pavamānāchārya**

**Vidwān Kaḍapa Rāghavendrāchārya**

**Vidwān Dr. N. Vādirājāchārya**

**Vidwān Purāṇik Subrahmaṇyāchārya**

*Published By :*

**Śrī Gurusārvabhoum Sanskrit Vidyāpīṭha**

Jagadguru Śrīman Madhvācharya Mūla Mahāsamsthānam

Śrī Rāghavendra Swāmi Muṭha, Mantralayam (A.P)

*Printed By :*

**Dhananjay Warkhedkar**

at : **Sudhā Mudraṇa**

Śankarpuram, Bangalore - 560 004.

☎ 080-65602836 *Mobile* : 9243074414

॥ श्रीमन्मूलरामो विजयते ॥

श्रीमत्परमहंसपरिव्राजकाचार्य पदवाक्यप्रमाणपारावारपारङ्गत सर्वतन्त्रस्वतन्त्र
श्रीमद्वैष्णवसिद्धान्तप्रतिष्ठापनाचार्य श्रीमन्मूलरघुपतिवेदव्यासदेवदिव्यश्रीपादपद्माराधक
**जगद्गुरु श्रीमन्मध्वाचार्यमूलमहासंस्थानाधीश्वरैः**

श्रीराघवेन्द्रस्वामिमठीयवेदान्तसाम्राज्यदिग्विजयविद्यासिंहासनाधीश्वरैः

**श्रीमत्सुजयीन्द्रतीर्थश्रीचरणकरकमलसञ्जात**

**श्रीमत्सुशमीन्द्रतीर्थवरकुमारकाणां**

## श्रीमत्सुयतीन्द्रतीर्थश्रीपादानाम्

# अनुग्रहसन्देशः

**"गीता सुगीता कर्तव्या किमन्यैः शास्त्रविस्तरैः"**

इति वचनेन भगवद्गीतायाः महत्त्वम् अस्माकं अवगम्यते । अस्याः गीतायाः अस्मत्पूर्वाचार्याः ज्ञानिनः व्याख्यां कृत्वा तस्याः महत्त्वं प्रकाशयामासुः । अस्मदादिगुरुभिः श्रीमध्वाचार्यैः आरभ्य अनेकयतिश्रेष्ठानां तथा गृहस्थाश्रमिणां भाष्यटीकाटिप्पणीभिः पञ्चदशसङ्ख्याभिः संयुतम् एकं बृहत् सम्पुटं प्रकाशनीयम् इति अस्माकं गुरूणां मनीषा आसीत् । पञ्चविंशदधिकटिप्पणीसहितां श्रीमन्न्यायसुधां मुद्राप्य कीर्तिमतां गुरूणां महा-समाराधनासमये गीतासम्पुटं संशोध्य प्रकाशनीयम् इति विचिन्त्य अस्मन्मठीयविद्वद्भ्यः राजा एस्. पवमानाचार्येभ्यः, कडप राघवेन्द्राचार्येभ्यः, एन्. वादिराजाचार्येभ्यः पुराणिक सुब्रह्मण्याचार्येभ्यश्च आज्ञापितमासीत् । ते अन्येषाम् अस्मद्विद्यापीठीयविदुषां तथा अन्येषां पण्डितानां साहाय्येन संशोध्य सम्पादितवन्तः । ग्रन्थस्यास्य मुद्रणकार्यं अस्मदाज्ञानुसारेण धनंजय वरखेडकर इत्यनेन सुशीघ्रमेव कृतम् । तेषां सर्वेषां अस्मद्गुर्वन्तर्गतभारतीरमण-मुख्यप्राणान्तर्गतश्रीमूलरघुपतिवेदव्यासः इतोऽप्यतिशयज्ञानाभिवृद्धिं प्रददतु इत्याशास्महे ।

इत्यनेके नारायणस्मृतयः ॥

—*श्री श्री सुयतीन्द्रतीर्थश्रीपादाः*
जगद्गुरु श्रीमन्मध्वाचार्यमूलमहासंस्थानम्
श्रीराघवेन्द्रस्वामिनां मठः, मन्त्रालयः

# गीता-व्याख्यान-सङ्ग्रहः

## प्रस्तुतग्रन्थे समाविष्टानि व्याख्यानानि

| क्र. | लेखकनाम | ग्रन्थनाम | ग्रन्थे सङ्क्षिप्तनाम |
|---|---|---|---|
| **मूलगीताविभागः—** | | | |
| १. | श्रीविद्याधिराजतीर्थाः | गीताविवृतिः | वि०वि०— |
| २. | श्रीवादिराजतीर्थाः | गीतालक्षालङ्कारः | वा०ल०— |
| ३. | श्रीराघवेन्द्रतीर्थाः | गीतासारसङ्ग्रहः | सा०सं०— |
| ४. | श्रीराघवेन्द्रयतिः | गीताअन्वयप्रकाशिका | अ०प्र०— |
| ५. | पांगरी श्रीनिवासाचार्यः | त्रिविधार्थविवृतिः | त्रि०वि०— |
| **गीताभाष्यविभागः—** | | | |
| ६. | श्रीमन्मध्वाचार्याः | गीताभाष्यम् | भाष्यम् |
| ७. | श्रीपद्मनाभतीर्थाः | गीताभावप्रकाशिका | प०टी०— |
| ८. | श्रीनरहरितीर्थाः | गीताभाष्यभावप्रकाशिका | न०टी०— |
| ९. | श्रीमज्जयतीर्थाः | गीताभाष्यप्रमेयदीपिका | प्र०दी०— |
| १०. | श्रीराघवेन्द्रतीर्थाः | प्रमेयदीपिकाभावदीपः | भा०दी०— |
| ११. | श्रीसुमतीन्द्रतीर्थाः | भावरत्नकोशः | भा०र०— |
| **गीतातात्पर्यविभागः—** | | | |
| १२. | श्रीमन्मध्वाचार्याः | गीतातात्पर्यनिर्णयः | गीतातात्पर्यनिर्णयः |
| १३. | श्रीपद्मनाभतीर्थाः | भावप्रदीपिका | प्रका०— |
| १४. | श्रीमज्जयतीर्थाः | गीतातात्पर्यन्यायदीपिका | न्या०दी०— |
| १५. | श्रीराघवेन्द्रतीर्थाः | न्यायदीपिकाभावदीपः | भा०दी०— |

॥ श्रीः ॥

# प्रस्तावना

ज्ञाने तिरोहिते उत्तमज्ञानमार्गात् भ्रष्टे सज्जने सर्वोत्तमः भगवान् नारायणः श्रीवेदव्यासत्वेन अवतीर्य वेदार्थनिर्णायकानि ब्रह्मसूत्राणि अष्टादशपुराणानि उपपुराणानि महाभारतं च अरचयत् । अत एव "व्यासोच्छिष्टं जगत्सर्वं" इति वाक् सुप्रसिद्धा । व्यासः साक्षात् विष्णुरेव । तथा च श्रीमन्महाभारते—

कृष्णद्वैपायनं व्यासं विद्धि नारायणं प्रभुम् ।
को ह्यन्यः पुण्डरीकाक्षात् महाभारतकृद्भवेत् ॥ इति ।

**महाभारतम्**

महाभारतं गात्रेण अर्थेन च श्रेष्ठः ग्रन्थः । अस्य च भावं विशेषं च यो जानाति सः सर्वपापविमुक्तो भवतीति महाभारतवचनम् ।

महत्त्वात् भारवत्त्वाच्च महाभारतमुच्यते ।
निरुक्तमस्य यो वेद सर्वपापैः प्रमुच्यते ॥

सर्वशास्त्रेषु श्रीमन्महाभारतग्रन्थः अत्यन्तश्रेष्ठः इति प्रतिपादितः । भारतं पञ्चमो वेदः इत्युक्त-दिशा महाभारतस्य पञ्चमवेदत्वं प्रसिद्धम् । एतादृशे श्रीमन्महाभारते अष्टादश पर्वाणि सन्ति, लक्षाधिकश्लोकाश्च विद्यन्ते ।

**भगवद्गीता**

"भारतपारिजातमधुभूताम्" इत्यनया वाचा भगवद्गीतायाः महत्त्वं अवगम्यते । "भारते गीतिका वरा", "विष्णोः सहस्रनामाऽपि ज्ञेयं पाठ्यं च तद् द्वयम्" पौरुषेयनिर्णयशास्त्रेषु यदा महाभारतग्रन्थः श्रेष्ठः तदा भगवद्गीता विष्णुसहस्रनामस्तोत्रं च । अन्यत्र एवं वर्णितम्—

सर्वोपनिषदो गावो दोग्धा गोपालनन्दनः ।
पार्थो वत्सः सुधीर्भोक्ता दुग्धं गीतामृतं महत् ॥

सर्वा उपनिषदः गोस्थानीयाः । श्रीकृष्णपरमात्मा दोग्धृस्थानीयः । अर्जुनश्च वत्सस्थानीयः । क्षीरस्थानीयं च गीतामृतम् । इदं अमृतं सर्वे सज्जनाः पिबन्तु ।

श्रीमद्भगवद्गीता सर्वेषामपि जनानां उत्तमजीवनाय मार्गदर्शिका । एतस्याः अर्थविवरणाय न केवलं अस्मद्देशीयव्याख्यानानि अपि तु पाश्चात्यदेशीयानि व्याख्यानानि च उपक्रान्तानि ।

पुराणेष्वपि गीतायाः महात्त्वं वर्णितमस्ति—

गीतायाः पुस्तकं यत्र यत्र पाठः प्रवर्तते ।
तत्राहं निश्चितं पृथ्वि निवसामि सदैव हि ॥ इति वराहपुराणे ।

गीतायाः पुस्तकं यत्र विद्यते, यत्र च गीतापाठः प्रवर्तते, तत्र सर्वदा निश्चयेन अहं वसामि इति साक्षात् भगवतः वचनं विश्रुतम् । गीता गङ्गा गायत्री गोविन्दः इति चतुर्भिः गकारैः यः युक्तो भवति सः न पुनर्भवति – संसारात् मुच्यते इति यावत् । गीतायां च अस्याम् अर्जुनविषाद-साङ्ख्य-कर्म-ज्ञान-संन्यास-आत्मसंयमन-ज्ञान-विज्ञान-अक्षरब्रह्म-राजविद्याराजगुह्य-विभूति-भक्ति-क्षेत्रक्षेत्रज्ञ-गुणत्रयविभाग-पुरुषोत्तम-दैवासुरसम्पद्विभाग-श्रद्धात्रयविभाग-मोक्षसंन्यासयोग-नाम्ना अष्टादश अध्यायाः वर्तन्ते ।

कर्तव्यविमुखानां कर्तव्यांशं बोधयति, क्रियमाणमपि कर्म स्वतन्त्रकर्तृत्वभ्रान्तिरहितेन फला-पेक्षारहितेन च कर्तव्यमिति गीता बोधयति ।

**श्रीमन्मध्वाचार्याः – गीताव्याख्यानम्**

भगवतः आज्ञां शिरसि धृत्वा भुवमवतीर्णः मुख्यप्राण एव श्रीमन्मध्वाचार्यः । तत्त्वप्रसाराय 'सप्तत्रिंशदमन्दधीः' इत्युक्तदिशा सप्तत्रिंशत्सङ्ख्याकान् ग्रन्थान् आरचय्य, एकविंशतिकुभाष्यान् अवखण्ड्य, सिद्धान्तं स्थापितवान् । ज्ञानिसिंहोऽयं "गीताभाष्यं चकारोऽसौ प्रथमं तुष्टिदं हरेः" इति व्यासार्यकृत ग्रन्थमालिकास्तोत्रोक्तदिशा भगवतः प्रीत्यै प्रथमं गीताभाष्यं ग्रथयित्वा हरये समार्पयत् ।

गीताभाष्यस्य मङ्गलाचरणम्—

देवं नारायणं नत्वा सर्वदोषविवर्जितम् ।
परिपूर्णं गुरुंश्चान् गीतार्थं वक्ष्यामि शक्तितः ॥

इति 'शक्तितः' इति पदयोजनेनाचार्यैः प्रथमं विहितिम् । अथापि श्रीवेदव्यासः श्रीमदाचार्यं प्रति भवतः अगाधज्ञानसागरे लवमात्रांशोपयोगेन लिखितमेतद्भाष्यमतः 'शक्तितः' इति पदं त्यक्त्वा 'लेशतः' इति पदसंयोजनमुचितमिति आचार्यस्य सर्वज्ञतां संसूचयामास ।

श्रीमदाचार्याः प्रारम्भे गीतायाः महत्वबोधनमपहाय महाभारतस्य तदन्तर्गतायाः सहस्रनाम-स्तोत्रस्य च महत्त्वमुक्त्वा वेदानधिकारिणां कृते विरचितं महाभारतं सर्ववेदसारभूतमिति सूचयन् द्वितीयाध्यायस्य एकादशश्लोकादारभ्य (अशोच्यानन्वशोचस्त्वं) भाष्यं व्यरचयन् । तथा तत्र तत्र इतरमतीयानां व्याख्यानान्यपि निराकृत्य श्रीवेदव्यासानां सम्मतं गीतायाः विवरणमकुर्वन् ।

अत्र भाष्ये 'अकर्म', 'प्रज्ञावादः', 'सर्वधर्मान्', 'विज्ञानम्' इत्यादिशब्दानां विशिष्टां व्याख्यां वयं पश्यामः । एवं जगद्वृक्षः, ज्ञानिनां कर्तव्याचरणं, दानं इत्यादि शब्दानामर्थविषयेऽपि प्रमाणबद्धं विवरणमाचार्या अदुः ।

### गीतातात्पर्यम्

श्रीमदाचार्याः गीताविषये गीतातात्पर्यमिति व्याख्यानान्तरं व्यलिखन् । गीताभाष्ये अप्रद-र्शितानाम् अनेकविषयाणां विवेचनं गीतातात्पर्ये वयं पश्यामः । एवम् अनेकहेतुभिः गीतातात्पर्ये वैशिष्ट्यं वर्तते इति विदुषां मतम् । अत एव 'एकान्ते' कथयन्नपि व्यासरूपेण तदेव लोके प्रकाश-यिष्यति हि इति वचनं प्रवृत्तमासीत् ।

### गीताभाष्यटीकाः

अस्य भाष्यस्य पद्मनाभतीर्थैः विरचिता भावदीपिका, नरहरितीर्थानां भावप्रकाशिका तथा श्रीजयतीर्थानां प्रमेयदीपिका इति तिस्रः टीकाः विलसन्ति ।

### श्रीपद्मनाभतीर्थानां गीताभाष्यतात्पर्यटीका

श्रीमदाचार्याणां प्रथमशिष्याः श्रीपद्मनाभतीर्थाः ज्ञानिश्रेष्ठाः । एते पूर्वम् अद्वैतमतस्थाः । आचार्यैः साकं वादं कृत्वा तेषां युक्तिभिः पराजिताः । द्वैतसिद्धान्ते सञ्जातविश्वासः श्रीमदाचार्याणां शिष्यत्वं स्वीकृत्य जगति मध्वतत्त्वप्रसारे दीक्षिता अभूवन् । द्वादशसङ्ख्याकादधिकग्रन्थनिर्मातारः एते श्रीपद्मनाभतीर्थाः गीताभाष्यस्य गीतातात्पर्यस्य च भावदीपिका, प्रकाशिका इति व्याख्याने कृत्वा आचार्याणां हृदयप्रकाशकाः आसन् । अत्र गीताभाष्यस्य पद्मानाभतीर्थानां टीकाद्वयमपि अस्म-त्पुस्तके संयोजितमस्ति ।

### श्रीनरहरितीर्थाः

श्रीमदाचार्याणां साक्षाच्छिष्याः एते गजपतिभण्डारात् श्रीमूलरामदेवस्य प्रतिमाम् आनीय विशिष्टसेवां कृत्वा गीताभाष्यभावप्रकाशिका इति व्याख्यानं निर्माय सारस्वतप्रपञ्चस्यापि सेवाम्

अकुर्वन् । श्रीमद्गीताभाष्यस्य अत्युपयुक्तविवरणपूर्वकं गीतायाः अपि केषुचित्स्थलेषु व्याख्यानम् अकुर्वन् । एतत् व्याख्यानमपि अत्र प्रकाश्यमानमस्ति ।

**श्रीजयतीर्थानां टीका**

श्रीमट्टीकाकृत्पादाः श्रीमदाचार्याणां पाठप्रवचनसमये वृषभरूपेण पुरत उपविश्य, तैः सर्वमूल-ग्रन्थानाम् आशयं विज्ञाय जन्मान्तरे अक्षोभ्यतीर्थैः तुर्याश्रमं स्वीकृत्य श्रीजयतीर्थ इति नाम्ना प्रख्याताः आसन् । आचार्यविरचितानां बहूनां ग्रन्थानां टीका विलिख्य टीकाचार्याः इत्येव प्रसिद्धिं प्रापुः । एते गीताभाष्यस्य प्रमेयदीपिका इति तथा गीतातात्पर्यस्य न्यायदीपिका इति टीकां व्यलिखन् ।

एतेषां ग्रन्थशैली गभीरा, भाष्यार्थबोधने अत्यन्तोपयुक्ता च वर्तते । एते आचार्याणां वाक्यानां व्याख्यानं कुर्वन्तः तत्र तत्र अन्यमताचार्याणामुक्तीः विमृशन्तः तन्मतं खण्डयन्तः नितरामुपकुर्वन्ति । गीतायाम् अस्पष्टं विचारं श्रीमदाचार्याः स्वभाष्ये सूक्ष्मतया प्रकटयन्ति । तं विचारं श्रीटीकाकृत्पादाः विशेषतः स्पष्टीकृत्य अध्येतृणां महानन्दमुत्पादयन्ति । एतादृशानां टीकाकृत्पादानां गीताभाष्यतात्पर्ययोः वाक्ये अत्र मुद्रापिते ।

**श्रीविद्याधिराजानां गीताव्याख्यानम्**

टीकाचार्याणां अनन्तरं गीतायाः साक्षाद्व्याख्यातारः यतिश्रेष्ठाः श्रीजयतीर्थानां शिष्याः श्रीविद्याधिराजतीर्थाः एव । एते श्रीजयतीर्थेभ्यः तुर्याश्रमं आप्त्वा महासंस्थानस्य आधिपत्यञ्च स्वीकृत्य आचार्याणां मतप्रसारे बद्धकङ्कणास्सन्तः सर्वत्र सञ्चरितवन्तः आसन् । एते विष्णुसहस्र-नामस्तोत्रस्य विष्णुसहस्रनामविवृतिः इति व्याख्यानम् अकुर्वन् । गीतायाः एतेषां व्याख्याने भाष्य-तात्पर्यटीकासूक्तविषयाः सङ्गृहीताः । अतिगाम्भीर्येण तत्र तत्र प्रमाणानि उदाहरन्ती तेषां शैली सर्वैः मानिता । एतादृशी तेषां कृतिरपि अस्माभिः मुद्रितपुस्तकेऽस्मिन् संयोजिता वर्तते ।

**श्रीवादिराजतीर्थानां महाभारतलक्षालङ्कारान्तर्गतं गीताव्याख्यानम्**

श्रीभाविसमीराः श्रीवादिराजगुरुसार्वभौमाः श्रीमदानन्दतीर्थानां अनुजैः श्रीविष्णुतीर्थैः प्रवर्तिते भव्यपीठे मण्डितानां श्रीवागीशतीर्थानां शिष्याः । श्रीव्यासराजानां शास्त्रपरम्परायां समागताः एते तत्त्वशास्त्रप्रचारस्य भारमूढ्वा ग्रन्थरचन-वादिनिग्रहादिभिः स्वीयैरसाधारणैः कार्यैः, द्वैतसिद्धान्तप्रपञ्चं श्रीमन्तमकुर्वन् । शताधिकग्रन्थप्रणेतारः एते माध्वानां काव्यरसाभिज्ञता नास्तीति अपवादं तिर-स्कुर्वन्तः श्रेष्ठानि रसमयकाव्यानि विरचय्य, सुजनानन्वगृह्णन् ।

एते भगवद्गीतायाः व्याख्यानं चिकीर्षवः महाभारतलक्षालङ्कारावयवत्वेन गीताव्याख्यानं व्यरचयन् । साक्षात् गीतायाः व्याख्यानं कृत्वा, गीतार्थस्य अनायासेन बोधनं एषां वैशिष्ट्यम् । अनेकेषु स्थलेषु केषाञ्चित् पदानां विशिष्टार्थलेखनं एतद्व्याख्याने दृश्यते । तत्र तत्र परमत-व्याख्यानक्रमं निराकृत्य श्रीमदाचार्याणां व्याख्यानपद्धतिसमर्थनम् एतेषां अपरं वैशिष्ट्यम् ।

प्रकृते, एतद्ग्रन्थोऽपि अस्माकं एतत्प्रकटने संयोजितः ।

**श्रीगुरुसार्वभौमानां गीताव्याख्यानानि**

वाय्वावेशसम्भूताः श्रीप्रह्लादा एव बाह्लीकरूपेण, व्यासराजरूपेण, श्रीराघवेन्द्रतीर्थरूपेण अवतारं कृतवन्तः । श्रीसुधीन्द्रतीर्थश्रीमच्चरणैः चतुर्थाश्रमं स्वीकृतवन्तः श्रीराघवेन्द्रतीर्थाः जातिमत-मविगणय्य सर्वान् उद्धृत्य सर्वेष्वपि धर्मजागृतिमुत्पाद्य, अनेकमहिम्नः प्रदर्श्य, अष्टचत्वारिंश-दधिकग्रन्थान् विरचय्य, आबालगोपालं सर्वेभ्यः प्रियगुरवः भूत्वा, समस्तभारते सञ्चार्य, अवसाने सशरीरमेव मन्त्रालये वृन्दावनप्रवेशं कृतवन्तः । एषां सान्निध्येन अल्पग्रामतयी स्थिता 'मञ्चाला' मन्त्रालयक्षेत्रमिति नाम्ना प्रथिता सती सर्वसज्जनान् आकर्षति । श्रीराघवेन्द्रतीर्थाः स्ववाङ्मयद्वारा समस्तविद्वद्भ्यः अनुग्राहका अभूवन् । एते गीतायाः आहत्य त्रीणि व्याख्यानानि रचितवन्तः ।

**गीताविवृतिः अथवा गीतार्थसङ्ग्रहः**

एतत् गुरुराजैः कृतं साक्षात् गीताव्याख्यानम् । एते भाष्यटीकादिग्रन्थेषु अभिहितविचारान् सङ्गृह्य, विशिष्टशैल्या ग्रन्थमिमं लिखितवन्तः । प्रतिश्लोकं अर्थं वदन्तः तत्र तत्र आचार्याणां सिद्धान्तस्य वैशिष्ट्यं बोधितवन्तः । मध्ये क्वचिच्छ्लोकेषु पदानां शास्त्रोक्तं निर्वचनं दत्त्वा, व्याक-रणविचारान् बोधयित्वा अध्येतॄणां उत्तममार्गदर्शनं कृतवन्तः । श्रीजयतीर्थाणां गीताभाष्यतात्पर्य-टीकयोरपि टिप्पण्यौ कृतवन्तः । अन्वपि साक्षात् गीतायाः व्याख्यानावश्यकतां वर्णयन्तः 'गुरुगुणस्तवन'काराः श्रीवादीन्द्रतीर्थाः

गीतामत्यर्थधूतश्रितजनदुरितामिन्दुवंशप्रसूतौ<br>
व्याचक्षाणे मुरद्विष्यभिजनमभजद्भद्रमिन्दोरनिद्रम् ।<br>
धीर श्रीराघवेन्द्र त्वयि पुनरनघे हंसवंशोदिते तां<br>
व्याकुर्वत्यद्य भव्यं कथमिव न भजेदाशु मित्रान्ववायः ॥

इति श्लोके अतिसुन्दरतया वर्णितवन्तः ।

टीकायाः व्याख्यानसमये श्रीगुरुसार्वभौमाः श्रीजयतीर्थकृतटीकास्थपदानां उत्तमव्याख्यानं कृत्वा टीकाया अभिप्रायं सहृदयहृदयाह्लादकत्वेन अभिव्यक्तीकृतवन्तः । एतद्ग्रन्थद्वयं अस्मत्प्रकाशने संयोजितम् । तयोरपि टिप्पण्योः "गीताभाष्यप्रमेयदीपिकाटिप्पणीभावदीपं" इदंप्रथमतया मुद्राप्य अध्येतृभ्यः उपायनीकुर्मः इत्यमुं विषयं ससन्तोषं उद्घोषयामः ।

**श्रीसुमतीन्द्रतीर्थानां गीताभावरत्नकोशः**

श्रीमन्मध्वाचार्याणां मूलमहासंस्थाने श्रीगुरुराजानन्तरं प्रसिद्धाः यतिश्रेष्ठाः श्रीसुमतीन्द्रतीर्थाः । श्रीसूरीन्द्रतीर्थैः एतत्पीठं लब्ध्वा श्रीमदाचार्यसिद्धान्तप्रकाशने दक्षाः आसन् । एते श्रीगुरुसार्वभौमानां अत्यन्तं प्रीत्यास्पदाः आसन् । श्रीराघवेन्द्रतीर्थविरचितग्रन्थाः श्रीसुमतीन्द्रतीर्थानां कृते इत्येव इति उक्तवन्तः । श्रीसुमतीन्द्रतीर्थाः स्वलिखितानामनेकग्रन्थानां 'भावरत्नकोश' इति नामकरणं अकुर्वन् इत्ययं विषयः प्रथितः । गीतायाः अतिविस्तरं व्याख्यानमेतद्, स्वतः तैरेव उक्तरीत्या श्रीराघवेन्द्र-तीर्थटिप्पण्याः अनुरूपम् अस्तीत्यवगम्यते ।

एतादृशभावरत्नकोशाख्यग्रन्थोऽपि अस्माकं प्रकाशने अन्तर्गतो भवति ।

**पांगरी श्रीनिवासाचार्यविरचिता त्रिविधार्थविवृतिः**

"पांगरी श्रीनिवासाचार्य" इति एते उत्तमतत्त्वज्ञानिनः । अनेकग्रन्थान् अरचयन् इति प्रसिद्धिरस्ति । एते गीतायाः 'त्रिविधार्थविवृति'नाम्ना आध्यात्मिक-आधिभौतिक-आधिदैविक इति क्रमे त्रिविधमर्थं वर्णितम् । एषां व्याख्यानमपि अत्र मुद्रणं क्रियते ।

**श्रीमद्भगवद्गीतायाः सम्बन्धिनः माध्ववाङ्मयग्रन्थाः**

(१) श्रीमन्मध्वाचार्यकृतं – गीताभाष्यम् ।

(२) श्रीमन्मध्वाचार्यकृतं – गीतातात्पर्यम् ।

(३) श्रीपद्मनाभतीर्थकृता – गीताभाष्यप्रकाशिका ।

(४) श्रीपद्मनाभतीर्थकृता – गीतातात्पर्यप्रकाशिका ।

(५) श्रीनरहरितीर्थकृता – गीताभाष्यभावदीपिका ।

(६) श्रीजयतीर्थकृता – गीताभाष्यप्रमेयदीपिका ।

(७) श्रीजयतीर्थकृता – गीतातात्पर्यन्यायदीपिका ।

(८) श्रीविद्याधिराजतीर्थकृता – गीताविवृतिः ।

(९) श्रीविजयीन्द्रतीर्थकृता – गीताविवृतिः ।

(१०) श्रीविजयीन्द्रतीर्थकृता – गीताभाष्यप्रमेयदीपिकाटिप्पणी ।

(११) श्रीविजयीन्द्रतीर्थकृता – गीतातात्पर्यन्यायदीपिकाटिप्पणी ।

(१२) श्रीराघवेन्द्रतीर्थकृता – गीताभाष्यप्रमेयदीपिकाव्याख्याभावदीपः ।

(१३) श्रीराघवेन्द्रतीर्थकृता – गीताविवृतिः ।

(१४) श्रीराघवेन्द्रतीर्थकृता – गीतातात्पर्यन्यायदीपिकाभावदीपः ।

(१५) श्रीसमुतीन्द्रतीर्थकृत – गीताक्षरार्थः

(१६) श्रीसुमतीन्द्रतीर्थकृत – गीताभाष्यप्रमेयदीपिकाभावरत्नकोशः ।

(१७) सातारीराघवेन्द्राचार्यकृता – गीताभाष्यविवृतिः ।

(१८) श्रीसत्यसन्धतीर्थकृतं – गीताव्याख्यानम् ।

(१९) श्रीरघोत्तमतीर्थकृतः – गीताभाष्यप्रमेयदीपिकाव्याख्या भावबोधः ।

(२०) श्रीसत्याभिनवतीर्थकृता – गीताभाष्यप्रमेयदीपिका टिप्पणी ।

(२१) वंशपल्लिआचार्यकृता – गीताभाष्यभावप्रदीपिका ।

(२२) केशवाचार्यपाण्डुरङ्गिकृता – गीताभाष्यप्रमेयदीपिकाटिप्पणी ।

(२३) उमर्जीप्रह्लादकृष्णाचार्यकृतटिप्पणी – प्रमेयदीपिकाभावप्रकाशः ।

(२४) श्रीताम्रपर्णी श्रीनिवासाचार्यकृता – गीताभाष्यप्रमेयदीपिकाटिप्पणी किरणावली ।

(२५) कट्टे तिम्मण्णाचार्यकृता – गीताभाष्यप्रमेयदीपिकाटिप्पणी ।

(२६) वरदाचार्यकृता – गीताभाष्यप्रमेयदीपिकाटिप्पणी ।

(२७) वासुदेवाचार्यकृता – गीताभाष्यप्रमेयदीपिकाटिप्पणी ।

(२८) नृसिंहमूर्तिकृता – गीताभाष्यप्रमेयदीपिकाटिप्पणी ।

(२९) गूढकर्तृक – गीताभाष्यबृहद्भावबोधि ।

(३०) श्रीसत्यनाथतीर्थकृतः – गीतातात्पर्यन्यायदीपिकावाक्यविवेकः ।

(३१) श्रीसत्यप्रज्ञतीर्थकृतः – गीतातात्पर्यन्यायदीपिकाटिप्पणी भावप्रकाशः ।

(३२) यदुपत्याचार्यकृता – गीतातात्पर्यन्यायदीपिकाटिप्पणी ।

(३३) ताम्रपर्णीविठलाचार्यकृता – गीतातात्पर्यन्यायदीपिकाटिप्पणी ।

(३४) ताम्रपर्णीश्रीनिवासाचार्यकृता – गीतातात्पर्यन्यायदीपिकाटिप्पणी किरणावलिः ।

(३५) वंशपल्लि आचार्यकृता – गीतातात्पर्यन्यायदीपिका टिप्पणी ।

(३६) वेदगर्भपुट्टाचार्यकृता – गीतातात्पर्यन्यायदीपिका टिप्पणी ।

(३७) हुलिगि नरसप्पाचार्यकृतः – गीताभाष्यार्थानुवादः ।

(३८) वरखेडि तिम्मण्णाचार्यकृतः – गीतापञ्चानन ।

(३९) पांगरी आचार्यकृतम् – त्रिविधार्थविवृतिः ।

(४०) आयी नरहरि आचार्यकृतम् – गीताविवृतिव्याख्यानम् ।

(४१) करवीर अनन्ताचार्यकृतम् – गीताव्याख्यानम् ।

(४२) वनमालिमिश्रकृतम् – गीताव्याख्यानम् ।

(४३) गूढकर्तृक – गीताविवृतिः

(४४) शतावधानि लक्ष्मणाचार्यकृतं – भगवद्गीतोपन्यासदर्पणम् ।

(४५) सि. एम्. पद्मनाभाचार्यकृता – गीताभावचन्द्रिका ।

(४६) गूढकर्तृक – मध्वमतानुसारि गीताविवरणम् ।

(४७) गूढकर्तृकः – गीताभाष्य-गीतातात्पर्य-विरोधोद्धारः ।

(४८) गूढकर्तृका – गीताभाष्यविरोधोद्धारः ।

(४९) रत्नगर्भवडेय – गीताव्याख्यानम् ।

इत्याद्यनेकमुद्रितव्याख्यानानि अमुद्रितानि च उपलब्धानि सन्ति ॥

## कृतज्ञताऽऽविष्कारः

एतादृशमहत्तरग्रन्थं सम्यक् शोधयित्वा प्रकाशनार्थं गुरुतरभारं अस्माकमुपरि स्थापयित्वा परमानुग्रहं कृतवतां परमपूज्य श्री श्री सुयतीन्द्रतीर्थश्रीपादानां चरणपङ्कजयोः साष्टाङ्गपूर्वकान् अनेकानेकान् नमस्सुमाञ्जलीन् समर्पयामः ।

अस्मदीय एतत्संशोधनकार्ये उत्तममार्गदर्शनं आचरितवतां अस्मद् विद्यागुरूणां श्री विद्वान् राजा. एस्. गिरियाचार्याणां कृते अनेकप्रणामान् कार्तज्ञ्यं अर्पयामः । एतादृश ग्रन्थप्रकाशनविचारे विशेषासक्तानां श्रीपादानां आप्तकार्यदर्शिनां श्री राजा. एस्. राजगोपालाचार्याणां उपकारं स्मारं स्मारं अस्मिन् सन्दर्भे संस्मरामः ।

श्रीगुरुसार्वभौमसंस्कृतविद्यापीठीयकुलपतिस्थानं अलङ्कृताः डॉ. वा. रा. पञ्चमुखि आचार्याः अस्मिन् संशोधनकार्ये प्रोत्साहितवन्तः । तेषां कृतेऽपि अस्माकं कृतज्ञतां आविष्कुर्मः ।

एतादृशमहत्तरसम्पुटस्य संशोधनाकार्ये विशेषतया सहकृतवतां (श्रीगुरुसार्वभौमसंस्कृत-विद्यापीठीयाध्यापकानां) सर्वश्री अक्कि राघवेन्द्राचार्य, ब्रि. के. विजयविठ्ठलाचार्य, एन्. राघवेन्द्रा-चार्य, डॉ. पुरोहित नरसिंहाचार्य, एल्. कृष्णाचार्य, डि. आर्, माधवाचार्य, कनकाचल ओडेयर, प्रदीपसिंहाचार्य, मधुसूदनाचार्य, अर्चक वेदव्यासाचार्य, गरग जयरामाचार्य, भास्कराचार्य, श्रीकान्ताचार्य, करणं वेङ्कटेशाचार्य, एतेषां विशिष्टसेवां स्मृत्वा अभिनन्दयामः ।

एतत्संशोधनकार्ये अस्माभिः अनेकहस्तप्रतीन् तथा अनेकमुद्रितपुस्तकानि च सहायत्वेन स्वीकृतानि ।

श्रीमठीय श्रीगुरुसार्वभौमसंस्कृतविद्यापीठीय समग्रहस्तप्रतयः तथा श्रीगुरुसार्वभौमानां पूर्वा-श्रमवंशस्थानां विद्वत्तल्लजानां श्रीराजा. एस्. गिरियाचार्याणां आध्यात्मिककेन्द्रीयसमग्रहस्तप्रतयः एवं डॉ. वा. रा. पञ्चमुखीमहोदयानां श्रीसुमतीन्द्रतीर्थीय भावरत्नकोशहस्तप्रतिः । पांगरीव्याख्यानं मुद्रितपुस्तकं, अखिलभारतमाध्वमहामण्डलतः प्रकाशितं डि. प्रह्लादाचार्यैः सम्पादितं मुद्रितगीता-भाष्यतात्पर्यपुस्तकं तथा विद्वान् व्यासनकेरि प्रभञ्जनाचार्यैः दत्ता श्रीसुमतीन्द्रतीर्थीय भावरत्नकोश-हस्तप्रतिः तथा तैः प्रकाशिताः पुस्तकाश्च, पण्ढरपुरस्थ वरखेडी भीमसेनाचार्यैः दत्ता गीताअन्वय-प्रकाशिकायाः हस्तप्रतिश्च ।

(३०) श्रीसत्यनाथतीर्थकृतः – गीतातात्पर्यन्यायदीपिकावाक्यविवेकः ।

(३१) श्रीसत्यप्रज्ञतीर्थकृतः – गीतातात्पर्यन्यायदीपिकाटिप्पणी भावप्रकाशः ।

(३२) यदुपत्याचार्यकृता – गीतातात्पर्यन्यायदीपिकाटिप्पणी ।

(३३) ताम्रपर्णीविठलाचार्यकृता – गीतातात्पर्यन्यायदीपिकाटिप्पणी ।

(३४) ताम्रपर्णीश्रीनिवासाचार्यकृता – गीतातात्पर्यन्यायदीपिकाटिप्पणी किरणावलिः ।

(३५) वंशपल्लि आचार्यकृता – गीतातात्पर्यन्यायदीपिका टिप्पणी ।

(३६) वेदगर्भपुट्टाचार्यकृता – गीतातात्पर्यन्यायदीपिका टिप्पणी ।

(३७) हुलिगि नरसप्पाचार्यकृतः – गीताभाष्यार्थानुवादः ।

(३८) वरखेडि तिम्मण्णाचार्यकृतः – गीतापञ्चानन ।

(३९) पांगरी आचार्यकृतम् – त्रिविधार्थविवृतिः ।

(४०) आयी नरहरि आचार्यकृतम् – गीताविवृतिव्याख्यानम् ।

(४१) करवीर अनन्ताचार्यकृतम् – गीताव्याख्यानम् ।

(४२) वनमालिमिश्रकृतम् – गीताव्याख्यानम् ।

(४३) गूढकर्तृक – गीताविवृतिः

(४४) शतावधानि लक्ष्मणाचार्यकृतं – भगवद्गीतोपन्यासदर्पणम् ।

(४५) सि. एम्. पद्मनाभाचार्यकृता – गीताभावचन्द्रिका ।

(४६) गूढकर्तृक – मध्वमतानुसारि गीताविवरणम् ।

(४७) गूढकर्तृकः – गीताभाष्य-गीतातात्पर्य-विरोधोद्धारः ।

(४८) गूढकर्तृका – गीताभाष्यविरोधोद्धारः ।

(४९) रत्नगर्भवडेय – गीताव्याख्यानम् ।

इत्याद्यनेकमुद्रितव्याख्यानानि अमुद्रितानि च उपलब्धानि सन्ति ॥

## कृतज्ञताऽऽविष्कारः

एतादृशमहत्तरग्रन्थं सम्यक् शोधयित्वा प्रकाशनार्थं गुरुतरभारं अस्माकमुपरि स्थापयित्वा परमानुग्रहं कृतवतां परमपूज्य श्री श्री सुयतीन्द्रतीर्थश्रीपादानां चरणपङ्कजयोः साष्टाङ्गपूर्वकान् अनेकानेकान् नमस्सुमाञ्जलीन् समर्पयामः ।

अस्मदीय एतत्संशोधनकार्ये उत्तममार्गदर्शनं आचरितवतां अस्मद् विद्यागुरूणां श्री विद्वान् राजा. एस्. गिरियाचार्याणां कृते अनेकप्रणामान् कार्तज्ञ्यं अर्पयामः । एतादृश ग्रन्थप्रकाशनविचारे विशेषासक्तानां श्रीपादानां आप्तकार्यदर्शिनां श्री राजा. एस्. राजगोपालाचार्याणां उपकारं स्मारं स्मारं अस्मिन् सन्दर्भे संस्मरामः ।

श्रीगुरुसार्वभौमसंस्कृतविद्यापीठीयकुलपतिस्थानं अलङ्कृताः डॉ. वा. रा. पञ्चमुखि आचार्याः अस्मिन् संशोधनकार्ये प्रोत्साहितवन्तः । तेषां कृतेऽपि अस्माकं कृतज्ञतां आविष्कुर्मः ।

एतादृशमहत्तरसम्पुटस्य संशोधनाकार्ये विशेषतया सहकृतवतां (श्रीगुरुसार्वभौमसंस्कृत-विद्यापीठीयाध्यापकानां) सर्वश्री अक्कि राघवेन्द्राचार्य, बि. के. विजयविठ्ठलाचार्य, एन्. राघवेन्द्रा-चार्य, डॉ. पुरोहित नरसिंहाचार्य, एल्. कृष्णाचार्य, डि. आर्. माधवाचार्य, कनकाचल ओडेयर, प्रदीपसिंहाचार्य, मधुसूदनाचार्य, अर्चक वेदव्यासाचार्य, गरग जयरामाचार्य, भास्कराचार्य, श्रीकान्ताचार्य, करणं वेङ्कटेशाचार्य, एतेषां विशिष्टसेवां स्मृत्वा अभिनन्दयामः ।

एतत्संशोधनकार्ये अस्माभिः अनेकहस्तप्रतीन् तथा अनेकमुद्रितपुस्तकानि च सहायत्वेन स्वीकृतानि ।

श्रीमठीय श्रीगुरुसार्वभौमसंस्कृतविद्यापीठीय समग्रहस्तप्रतयः तथा श्रीगुरुसार्वभौमानां पूर्वा-श्रमवंशस्थानां विद्वत्तल्लजानां श्रीराजा. एस्. गिरियाचार्याणां आध्यात्मिककेन्द्रीयसमग्रहस्तप्रतयः एवं डॉ. वा. रा. पञ्चमुखीमहोदयानां श्रीसुमतीन्द्रतीर्थीय भावरत्नकोशहस्तप्रतिः । पांगरीव्याख्यानं मुद्रितपुस्तकं, अखिलभारतमाध्वमहामण्डलतः प्रकाशितं डि. प्रह्लादाचार्यैः सम्पादितं मुद्रितगीता-भाष्यतात्पर्यपुस्तकं तथा विद्वान् व्यासनकेरि प्रभञ्जनाचार्यैः दत्ता श्रीसुमतीन्द्रतीर्थीय भावरत्नकोश-हस्तप्रतिः तथा तैः प्रकाशिताः पुस्तकाश्च, पण्ढरपुरस्थ वरखेडी भीमसेनाचार्यैः दत्ता गीताअन्वय-प्रकाशिकायाः हस्तप्रतिश्च ।

(३०) श्रीसत्यनाथतीर्थकृतः – गीतातात्पर्यन्यायदीपिकावाक्यविवेकः ।

(३१) श्रीसत्यप्रज्ञतीर्थकृतः – गीतातात्पर्यन्यायदीपिकाटिप्पणी भावप्रकाशः ।

(३२) यदुपत्याचार्यकृता – गीतातात्पर्यन्यायदीपिकाटिप्पणी ।

(३३) ताम्रपर्णीविठलाचार्यकृता – गीतातात्पर्यन्यायदीपिकाटिप्पणी ।

(३४) ताम्रपर्णीश्रीनिवासाचार्यकृता – गीतातात्पर्यन्यायदीपिकाटिप्पणी किरणावलिः ।

(३५) वंशपल्लि आचार्यकृता – गीतातात्पर्यन्यायदीपिका टिप्पणी ।

(३६) वेदगर्भपुट्टाचार्यकृता – गीतातात्पर्यन्यायदीपिका टिप्पणी ।

(३७) हुलिगि नरसप्पाचार्यकृतः – गीताभाष्यार्थानुवादः ।

(३८) वरखेडि तिम्मण्णाचार्यकृतः – गीतापञ्चानन ।

(३९) पांगरी आचार्यकृतम् – त्रिविधार्थविवृतिः ।

(४०) आयी नरहरि आचार्यकृतम् – गीताविवृतिव्याख्यानम् ।

(४१) करवीर अनन्ताचार्यकृतम् – गीताव्याख्यानम् ।

(४२) वनमालिमिश्रकृतम् – गीताव्याख्यानम् ।

(४३) गूढकर्तृक – गीताविवृतिः

(४४) शतावधानि लक्ष्मणाचार्यकृतं – भगवद्गीतोपन्यासदर्पणम् ।

(४५) सि. एम्. पद्मनाभाचार्यकृता – गीताभावचन्द्रिका ।

(४६) गूढकर्तृक – मध्वमतानुसारि गीताविवरणम् ।

(४७) गूढकर्तृकः – गीताभाष्य-गीतातात्पर्य-विरोधोद्धारः ।

(४८) गूढकर्तृका – गीताभाष्यविरोधोद्धारः ।

(४९) रत्नगर्भवडेय – गीताव्याख्यानम् ।

इत्याद्यनेकमुद्रितव्याख्यानानि अमुद्रितानि च उपलब्धानि सन्ति ॥

## कृतज्ञताऽऽविष्कारः

एतादृशमहत्तरग्रन्थं सम्यक् शोधयित्वा प्रकाशनार्थं गुरुतरभारं अस्माकमुपरि स्थापयित्वा परमानुग्रहं कृतवतां परमपूज्य श्री श्री सुयतीन्द्रतीर्थश्रीपादानां चरणपङ्कजयोः साष्टाङ्गपूर्वकान् अनेकानेकान् नमस्सुमाञ्जलीन् समर्पयामः ।

अस्मदीय एतत्संशोधनकार्ये उत्तममार्गदर्शनं आचरितवतां अस्मद् विद्यागुरूणां श्री विद्वान् राजा. एस्. गिरियाचार्याणां कृते अनेकप्रणामान् कार्तज्ञ्यं अर्पयामः । एतादृश ग्रन्थप्रकाशनविचारे विशेषासक्तानां श्रीपादानां आप्तकार्यदर्शिनां श्री राजा. एस्. राजगोपालाचार्याणां उपकारं स्मारं स्मारं अस्मिन् सन्दर्भे संस्मरामः ।

श्रीगुरुसार्वभौमसंस्कृतविद्यापीठीयकुलपतिस्थानं अलङ्कृताः डॉ. वा. रा. पञ्चमुखि आचार्याः अस्मिन् संशोधनकार्ये प्रोत्साहितवन्तः । तेषां कृतेऽपि अस्माकं कृतज्ञतां आविष्कुर्मः ।

एतादृशमहत्तरसम्पुटस्य संशोधनाकार्ये विशेषतया सहकृतवतां (श्रीगुरुसार्वभौमसंस्कृत-विद्यापीठीयाध्यापकानां) सर्वश्री अक्कि राघवेन्द्राचार्य, ब्रि. के. विजयविठ्ठलाचार्य, एन्. राघवेन्द्रा-चार्य, डॉ. पुरोहित नरसिंहाचार्य, एल्. कृष्णाचार्य, डि. आर्, माधवाचार्य, कनकाचल ओडेयर, प्रदीपसिंहाचार्य, मधुसूदनाचार्य, अर्चक वेदव्यासाचार्य, गरग जयरामाचार्य, भास्कराचार्य, श्रीकान्ताचार्य, करणं वेङ्कटेशाचार्य, एतेषां विशिष्टसेवां स्मृत्वा अभिनन्दयामः ।

एतत्संशोधनकार्ये अस्माभिः अनेकहस्तप्रतीन् तथा अनेकमुद्रितपुस्तकानि च सहायत्वेन स्वीकृतानि ।

श्रीमठीय श्रीगुरुसार्वभौमसंस्कृतविद्यापीठीय समग्रहस्तप्रतयः तथा श्रीगुरुसार्वभौमानां पूर्वा-श्रमवंशस्थानां विद्वत्तल्लजानां श्रीराजा. एस्. गिरियाचार्याणां आध्यात्मिककेन्द्रीयसमग्रहस्तप्रतयः एवं डॉ. वा. रा. पञ्चमुखीमहोदयानां श्रीसुमतीन्द्रतीर्थीय भावरत्नकोशहस्तप्रतिः । पांगरीव्याख्यानं मुद्रितपुस्तकं, अखिलभारतमाध्वमहामण्डलतः प्रकाशितं डि. प्रह्लादाचार्यैः सम्पादितं मुद्रितगीता-भाष्यतात्पर्यपुस्तकं तथा विद्वान् व्यासनकेरि प्रभञ्जनाचार्यैः दत्ता श्रीसुमतीन्द्रतीर्थीय भावरत्नकोश-हस्तप्रतिः तथा तैः प्रकाशिताः पुस्तकाश्च, पण्ढरपुरस्थ वरखेडी भीमसेनाचार्यैः दत्ता गीताअन्वय-प्रकाशिकायाः हस्तप्रतिश्च ।

(३०) श्रीसत्यनाथतीर्थकृतः – गीतातात्पर्यन्यायदीपिकावाक्यविवेकः ।

(३१) श्रीसत्यप्रज्ञतीर्थकृतः – गीतातात्पर्यन्यायदीपिकाटिप्पणी भावप्रकाशः ।

(३२) यदुपत्याचार्यकृता – गीतातात्पर्यन्यायदीपिकाटिप्पणी ।

(३३) ताम्रपर्णीविठलाचार्यकृता – गीतातात्पर्यन्यायदीपिकाटिप्पणी ।

(३४) ताम्रपर्णीश्रीनिवासाचार्यकृता – गीतातात्पर्यन्यायदीपिकाटिप्पणी किरणावलिः ।

(३५) वंशपल्लि आचार्यकृता – गीतातात्पर्यन्यायदीपिका टिप्पणी ।

(३६) वेदगर्भपुट्टाचार्यकृता – गीतातात्पर्यन्यायदीपिका टिप्पणी ।

(३७) हुलिगि नरसप्पाचार्यकृतः – गीताभाष्यार्थानुवादः ।

(३८) वरखेडि तिम्मण्णाचार्यकृतः – गीतापञ्चानन ।

(३९) पांगरी आचार्यकृतम् – त्रिविधार्थविवृतिः ।

(४०) आयी नरहरि आचार्यकृतम् – गीताविवृतिव्याख्यानम् ।

(४१) करवीर अनन्ताचार्यकृतम् – गीताव्याख्यानम् ।

(४२) वनमालिमिश्रकृतम् – गीताव्याख्यानम् ।

(४३) गूढकर्तृक – गीताविवृतिः

(४४) शतावधानि लक्ष्मणाचार्यकृतं – भगवद्गीतोपन्यासदर्पणम् ।

(४५) सि. एम्. पद्मनाभाचार्यकृता – गीताभावचन्द्रिका ।

(४६) गूढकर्तृक – मध्वमतानुसारि गीताविवरणम् ।

(४७) गूढकर्तृकः – गीताभाष्य-गीतातात्पर्य-विरोधोद्धारः ।

(४८) गूढकर्तृका – गीताभाष्यविरोधोद्धारः ।

(४९) रत्नगर्भवडेय – गीताव्याख्यानम् ।

इत्याद्यनेकमुद्रितव्याख्यानानि अमुद्रितानि च उपलब्धानि सन्ति ॥

## कृतज्ञताऽऽविष्कारः

एतादृशमहत्तरग्रन्थं सम्यक् शोधयित्वा प्रकाशनार्थं गुरुतरभारं अस्माकमुपरि स्थापयित्वा परमानुग्रहं कृतवतां परमपूज्य श्री श्री सुयतीन्द्रतीर्थश्रीपादानां चरणपङ्कजयोः साष्टाङ्गपूर्वकान् अनेकानेकान् नमस्सुमाञ्जलीन् समर्पयामः ।

अस्मदीय एतत्संशोधनकार्ये उत्तममार्गदर्शनं आचरितवतां अस्मद् विद्यागुरूणां श्री विद्वान् राजा. एस्. गिरियाचार्याणां कृते अनेकप्रणामान् कार्तज्ञ्यं अर्पयामः । एतादृश ग्रन्थप्रकाशनविचारे विशेषासक्तानां श्रीपादानां आप्तकार्यदर्शिनां श्री राजा. एस्. राजगोपालाचार्याणां उपकारं स्मारं स्मारं अस्मिन् सन्दर्भे संस्मरामः ।

श्रीगुरुसार्वभौमसंस्कृतविद्यापीठीयकुलपतिस्थानं अलङ्कृताः डॉ. वा. रा. पञ्चमुखि आचार्याः अस्मिन् संशोधनकार्ये प्रोत्साहितवन्तः । तेषां कृतेऽपि अस्माकं कृतज्ञतां आविष्कुर्मः ।

एतादृशमहत्तरसम्पुटस्य संशोधनाकार्ये विशेषतया सहकृतवतां (श्रीगुरुसार्वभौमसंस्कृत-विद्यापीठीयाध्यापकानां) सर्वश्री अक्कि राघवेन्द्राचार्य, बि. के. विजयविठ्ठलाचार्य, एन्. राघवेन्द्रा-चार्य, डॉ. पुरोहित नरसिंहाचार्य, एल्. कृष्णाचार्य, डि. आर्, माधवाचार्य, कनकाचल ओडेयर, प्रदीपसिंहाचार्य, मधुसूदनाचार्य, अर्चक वेदव्यासाचार्य, गरग जयरामाचार्य, भास्कराचार्य, श्रीकान्ताचार्य, करणं वेङ्कटेशाचार्य, एतेषां विशिष्टसेवां स्मृत्वा अभिनन्दयामः ।

एतत्संशोधनकार्ये अस्माभिः अनेकहस्तप्रतीन् तथा अनेकमुद्रितपुस्तकानि च सहायत्वेन स्वीकृतानि ।

श्रीमठीय श्रीगुरुसार्वभौमसंस्कृतविद्यापीठीय समग्रहस्तप्रतयः तथा श्रीगुरुसार्वभौमानां पूर्वा-श्रमवंशस्थानां विद्वत्तल्लजानां श्रीराजा. एस्. गिरियाचार्याणां आध्यात्मिककेन्द्रीयसमग्रहस्तप्रतयः एवं डॉ. वा. रा. पञ्चमुखीमहोदयानां श्रीसुमतीन्द्रतीर्थीय भावरत्नकोशहस्तप्रतिः । पांगरीव्याख्यानं मुद्रितपुस्तकं, अखिलभारतमाध्वमहामण्डलतः प्रकाशितं डि. प्रह्लादाचार्यैः सम्पादितं मुद्रितगीता-भाष्यतात्पर्यपुस्तकं तथा विद्वान् व्यासनकेरि प्रभञ्जनाचार्यैः दत्ता श्रीसुमतीन्द्रतीर्थीय भावरत्नकोश-हस्तप्रतिः तथा तैः प्रकाशिताः पुस्तकाश्च, पण्ढरपुरस्थ वरखेडी भीमसेनाचार्यैः दत्ता गीताअन्वय-प्रकाशिकायाः हस्तप्रतिश्च ।

उपरिनिर्दिष्टसमग्रग्रन्थान् प्रदत्तवतः महात्मानः स्मारं स्मारं स्मरणपूर्वकं तेषां धन्यवादान् समर्पयामः ॥

एतद्ग्रन्थमुद्रणकाले त्वरितगत्या मुद्रायितानां 'सुधामुद्रण' अधिकारिणां श्री धनंजय वरखेडकर महोदयानां कार्यम् अभिनन्द्य ग्रन्थमिमं लोकार्पणं कुर्मः ।

इति शम् ।

12.4.2011

श्रीरामनवमी

मन्त्रालयः

*विद्वान् राजा. एस्. पवमानाचार्यः*

*विद्वान् कडप राघवेन्द्राचार्यः*

*विद्वान् डॉ. एन्. वादिराजाचार्यः*

*विद्वान् पुराणिक सुब्रह्मण्याचार्यः*

*तथा*

*सम्पादकमण्डली*

॥ श्री वेदव्यास भगवान् ॥



॥ ಶ್ರೀ ವೇದವ್ಯಾಸ ಭಗವಾನ್ ॥

येन प्रादुरभावि भूमिवलये व्यस्तारि गोसन्ततिः
प्राबोधि श्रुतिपङ्कजं करुणया प्राकाशि तत्त्वं परम् ।
ध्वान्तं ध्वंसमनायि साधुनिकरश्चाकारि सन्मार्गग-
स्तेन व्यासदिवाकरेण सततं मा त्याजि मे मानसम् ॥

## ॥ अवतारत्रयोपेत-श्रीमध्वाचार्याः ॥

**प्रथमो हनुमन्नाम द्वितीयो भीम एव च ।**
**पूर्णप्रज्ञस्तृतीयस्तु भगवत्कार्यसाधकः ॥**



## ॥ ಅವತಾರತ್ರಯೋಪೇತ-ಶ್ರೀಮಧ್ವಾಚಾರ್ಯಾಃ ॥

**ಪ್ರಥಮೋ ಹನುಮನ್ನಾಮ ದ್ವಿತೀಯೋ ಭೀಮ ಏವ ಚ ।**
**ಪೂರ್ಣಪ್ರಜ್ಞಸ್ತೃತೀಯಸ್ತು ಭಗವತ್ಕಾರ್ಯಸಾಧಕಃ ॥**

## ॥ श्रीमदानन्दतीर्थभगवत्पादाचार्याः ॥

अभ्रमं भङ्गरहितं अजडं विमलं सदा ।
आनन्दतीर्थमतुलं भजे तापत्रयापहम् ॥



## ॥ ಶ್ರೀಮದಾನಂದತೀರ್ಥಭಗವತ್ಪಾದಾಚಾರ್ಯಾಃ ॥

ಅಭ್ರಮಂ ಭಂಗರಹಿತಂ ಅಜಡಂ ವಿಮಲಂ ಸದಾ ।
ಆನಂದತೀರ್ಥಮತುಲಂ ಭಜೇ ತಾಪತ್ರಯಾಪಹಮ್ ॥

## ॥ श्रीमज्जयतीर्थाः ॥



॥ ಶ್ರೀ ಶ್ರೀ 1008 ಶ್ರೀ ಜಯತೀರ್ಥಾಃ ॥

सत्पद्मबन्धवो यस्य गावो विश्वतमोनुदः ।
स स्यात् तत्त्वप्रकाशाय जयतीर्थरविर्मम ॥

# ॥ श्रीविजयीन्द्रतीर्थाः ॥



## ॥ ಶ್ರೀ ಶ್ರೀ 1008 ಶ್ರೀ ವಿಜಯೀಂದ್ರತೀರ್ಥಾಃ ॥

धर्मः सत्ये च धीमानहिरिव वचसा भूसुराणां सभायां
जेता भीमैव वादे पवन इव गतौ सम्पदि श्रीरिवाढ्यः ।
धाता ज्ञाता च सर्वानहिपतिशयनं पूजयंस्तोषयंश्च
लोकैः सर्वैश्च पूज्यो भुवि मनुजवरैर्मानितोऽभून्मुनीन्द्रः ॥

## ॥ श्रीराघवेन्द्रतीर्थाः ॥



## ॥ ಶ್ರೀ ಶ್ರೀ 1008 ಶ್ರೀ ರಾಘವೇಂದ್ರತೀರ್ಥಾಃ ॥

चित्ते चेन्मृदुता शिरीषसदृशो हय्यङ्गवीनं शिला
गाम्भीर्यं यदि यस्य सोऽन्धुरुदधिः शास्त्रेषु चेत्पाण्डिती ।
आचार्यो विबुधेशितुः कलयते विद्यार्थितामादरात्
औदार्यं यदि कल्पपादपमुखाः सम्भावयन्तेऽर्थिताम् ॥

## ॥ श्री श्री १००८ श्री सुशमीन्द्रतीर्थाः ॥



## ॥ ಶ್ರೀ ಶ್ರೀ 1008 ಶ್ರೀ ಸುಶಮೀಂದ್ರತೀರ್ಥಾಃ ॥

॥ श्री श्री १००८ श्री सुयतीन्द्रतीर्थाः ॥



॥ ಶ್ರೀ ಶ್ರೀ 1008 ಶ್ರೀ ಸುಯತೀಂದ್ರತೀರ್ಥಾಃ ॥

॥ श्रीः ॥

॥ श्रीवेदव्यासाय नमः ॥

॥ श्रीमदानन्दतीर्थगुरुभ्यो नमः ॥

# श्रीमद्-भगवद्गीता

## अथ तृतीयोऽध्यायः

**गीता**

**अर्जुन उवाच—**

**ज्यायसी चेत् कर्मणस्ते मता बुद्धिर्जनार्दन ।**
**तत् किं कर्मणि घोरे मां नियोजयसि केशव ॥ १ ॥**

*वि०वि०*— द्वितीयेऽध्याये जीवेश्वरादितत्त्वज्ञानोपदेशपूर्वकं ज्ञानोपायः कर्मयोगः प्राधान्येन उक्तः । स एव विशेषतः प्रपञ्च्यतेऽस्मिन्नध्याये । काम्यकर्मणो ज्ञानमत्युत्तममभिहितं भगवता 'दूरेण ह्यवरं कर्म' इत्यादौ । तत्र **अर्जुन उवाच ज्यायसीति** । काम्यकर्मणः सकाशात् बुद्धिरात्मज्ञानं ज्यायसी प्रशस्ततरा चेत् । ते मता । तर्हि 'शान्तो दान्तः' इत्युपक्रम्य 'आत्मानं पश्येत्' इति ज्ञानार्थत्वेन विहितान् शुद्धान् यतिधर्मान् शमादीन्विहाय किमिति 'सर्व एते पुण्यलोका भवन्ति' इत्यादिना, तथा अत्रापि 'हतो वा प्राप्स्यसि स्वर्गम्' इत्यादिना काम्यत्वेन प्रसिद्धे तत्रापि घोरे रागद्वेषाद्युपेते युद्धाख्ये कर्मणि 'युध्यस्व भारत' इति मां नियोजयसि ॥

*ता०ल०*— 'ज्यायसी चेत्कर्मणस्ते' इत्यत्र कर्मणः युद्धकर्मणः सकाशात् बुद्धिः ब्रह्म-विषयिणी बुद्धिः ज्यायसी मता चेदिति सम्बन्धः ॥

*सा०सं०*— 'एषा तेऽभिहिता साङ्ख्ये' (२-३९) इत्यन्तेन 'न त्वेवाहम्' (२-१२) इत्यादिना ग्रन्थेन जीवेश्वरस्वरूपमुक्त्वा, तज्ज्ञानोपायं च 'योगे त्विमां शृणु' (२-३९) इति प्रतिज्ञापूर्वं 'त्रैगुण्यविषया वेदाः' (२-४५) इत्यादिनोक्त्वा, 'कर्मजं बुद्धियुक्ता हि' (२-५१) इत्यादिना किञ्चित् प्रपञ्चनं तस्य कृतं पूर्वाध्याये । अत्र तु पूर्वोक्तस्यैव निवृत्तकर्मरूपज्ञानोपाय-

शब्दितयोगस्यावश्यकार्यतया ज्ञापनरूपं प्रपञ्चनं प्राचुर्येण क्रियत इति पूर्वोत्तराध्याययोः पौर्वापर्यं ध्येयम् ।

'दूरेण ह्यवरं कर्म' (२-४९) इत्युक्ते लब्धावसरः पृच्छति **ज्यायसी चेदिति** । 'दूरेण ह्यवरं कर्म बुद्धियोगात्', 'कृपणाः फलहेतवः' (२-४९) इत्यादिनोक्तदिशा **बुद्धिः कर्मणः सकाशात् ज्यायसी चेत्** श्रेष्ठा यदि । हे **जनार्दन ! ते** तव **मता तत्** तर्हि **कर्मणि किं** किमर्थं **मां नियोजयसी**त्येकः प्रश्नः । तत्रापि **घोरे** रागद्वेषाद्युपेते युद्धाख्ये **कर्मणि** किमर्थं **नियोजयसी-**त्यन्यः ।

अयं भावः— 'सर्व एते पुण्यलोका भवन्ति' इत्यादिफलश्रवणेन सर्वकर्मणां 'हतो वा प्राप्स्यसि स्वर्गम्' (२-३७) इत्यादि युद्धस्यापि काम्यत्वात्, तेषां च बुद्धियोगादवरत्वात्, यत्या-श्रमविहितानां शमादीनां फलाश्रवणेनाकाम्यत्वात्, 'शान्तो दान्तः' इत्युपक्रम्य 'आत्मानं पश्येत्' इति ज्ञानार्थत्वश्रवणाच्च, यत्याश्रमं स्वीकृत्य तद्धर्मनिष्ठो भवेत्येवेति नियोक्तव्यम् । नतु काम्यकर्मणि युद्धे 'युद्ध्यस्व भारत' इति नियोजनं युक्तमिति । अत्र **केशव**शब्दार्थ उक्तः प्रथमाध्याये । 'न जायते अर्दयति च संसारम्' इति दशमभाष्ये । 'नञः परनिपातः अत एव नलोपाभावः । उत्तरपदे परतः तस्य स्मरणात्' इति तट्टीकोक्तदिशा च **जनार्दन**शब्दार्थो ध्येय इति ॥

*अ०प्र०*— एवं तावद् 'अशोच्यानन्वशोचस्त्वं' इत्यादिना प्रथमं मोक्षसाधनत्वेन देहात्म-बुद्धिरुक्ता । तदनन्तरं 'एषा तेऽभिहिता साङ्ख्ये बुद्धिरि'त्यादिना कर्म चोक्तम् । न च तयोः गुण-प्रधानभावः स्पष्टं दर्शितः । तत्र बुद्धियुक्तस्य स्थितप्रज्ञस्य निष्कामत्व-नियतेन्द्रियत्व-निरहङ्कारत्वा-द्यभिधानाद् 'एषा ब्राह्मी स्थितिः पार्थे'ति सप्रशंसमुपसंहाराच्च बुद्धिकर्मणोर्मध्ये बुद्धेः श्रैष्ठ्यं भगवतोऽभिमतं मत्वा अर्जुनः पृच्छति **ज्यायसी चेति** ।

हे जनार्दन ![१], कर्मणस्सकाशात्[२], बुद्धिः[३], ज्यायसी चेत्[४], ते[५], मता[६], तर्हि हे केशव ![७], तत्[८], घोरे[९], कर्मणि[१०], मां[११], किं[१२], नियोजयसीत्यन्वयः ।

हे जनार्दन ![१], कर्मणस्सकाशात् = मोक्षान्तरङ्गत्वेन काम्यकर्मणः सकाशात्[२], बुद्धिः[३], ज्यायसी चेत् = प्रशस्ततरा अधिकतरा श्रेष्ठा चेत्[४], ते = तव[५], मता = सम्मता तर्हि[६], हे केशव[७], तत् = तत्रापि[८], घोरे = हिंसात्मके रागादियुक्ते[९], कर्मणि = युद्धाख्यकर्मणि[१०], मां[११], किं = किमर्थं, तस्माद् उत्तिष्ठेति तस्मात् युध्यस्वेति च वारं वारं वदन्[१२], नियोजयसि = प्रवर्तयसि कुर्विति आज्ञापयसीत्यर्थः ॥ १ ॥

**गीता**

# व्यामिश्रेणैव वाक्येन बुद्धिं मोहयसीव मे ।
# तदेकं वद निश्चित्य येन श्रेयोऽहमाप्नुयाम् ॥ २ ॥

*वि०वि०*— अथ विहितं युद्धमपि 'कर्मबन्धं प्रहास्यसि' इत्युक्तत्वात् ज्ञानार्थं भवतीति मतं तदा व्यामिश्रेण वाक्येन मे बुद्धिं मोहयन्निवासि । अथाभिसन्धिभेदादुभयरूपत्वम्, तथापि शुद्धेषु निवृत्तिलक्षणेषु यत्याश्रमधर्मेषु सत्सु वैकल्पिककाम्येषु नियोजनमयुक्तमेव । अतोऽहं येन निश्चित्य श्रेय आप्नुयाम्, तदेकं वाक्यं वदेति ॥

*सा०सं०*— ननु 'बुद्ध्या युक्तो यया पार्थ कर्मबन्धं प्रहास्यसि' इति बुद्धिपदोक्तयुद्धाख्य-कर्मणोऽपि ज्ञानार्थत्वमुक्तमिति चेत्, तर्हि **व्यामिश्रेण** क्वचित् कर्मप्रशंसा क्वचित् ज्ञानप्रशंसे-त्येवम् ।

यद्वा, युद्धस्य क्वचित् स्वर्गार्थत्वं क्वचिज्ज्ञानार्थत्वमित्येवं **व्यामिश्रेण** सन्देहोत्पादकेन **वाक्येन** । **मे बुद्धिं मोहयसीव** डोलायमानं करोषीव । यदि कामिनो युद्धं स्वर्गार्थम्, अकामिनो ज्ञानार्थम् इति चेत्, तथाऽपि यतिधर्म एव नियोगो युक्तो न तु वैकल्पिके युद्धे । अतो **येनाहं श्रेयोऽवाप्नुयाम्, तदेकं निश्चित्य वदे**ति ॥

*अ०प्र०*— ननु धर्म्याद्धि युद्धाच्छ्रेयोऽन्यदित्यादिना कर्मणो श्रेष्ठत्वमित्याशङ्क्याह **व्यामि-श्रेणेति** ।

हे केशव !, व्यामिश्रेणैव[१], वाक्येन[२], मे[३], बुद्धिं[४], मोहयसीव भाति[५], अहं[६], येन[७], श्रेयः[८], आप्नुयाम्[९], तदेकम्[१०], निश्चित्य[११], वद[१२] इत्यन्वयः ।

हे केशव ! व्यामिश्रेणैव = क्वचित्कर्मप्रशंसा क्वचिज्ज्ञानप्रशंसा परस्परविरुद्धार्थद्वयप्रतिपादक इत्येव व्यामिश्रं सन्देहोत्पादकमिव[१], वाक्येन = यद्वाक्यं तेन[२], मे = मम[३], बुद्धिं[४], मोहयसीव भाति = उभयत्र डोलायितां कुर्वन्निव परमकारुणिकस्य तव मोहकत्वं नास्ति । एवं तथापि भ्रान्त्या ममैव भातीति इवशब्देनोक्तम्[५], अहं[६], येन = ज्ञानाचरणेन कर्माचरणेन वा[७], श्रेयः = भद्रं[८], आप्नुयां = प्राप्स्यामि[९], अतः तदेकम् = उभयोर्मध्ये एकम्[१०], निश्चित्य = निर्णीय[११], वद = शिक्षय[१२], यद्वा इदं मे ज्ञानकर्मणोः श्रेष्ठं श्रेयः साधनमिति निश्चित्य तत्रापि येनानुष्ठितेन मोक्षं आप्नुयाम् । तदेकं वदेत्यर्थः । कर्मयोगात् ज्ञानयोगस्य ज्यायस्त्वेऽपि त्वमाधिकारिकत्वा-त्कर्मण्येवाधिकृत इति ॥ २ ॥

**भाष्यम्**

**आत्मस्वरूपं ज्ञानसाधनं चोक्तं पूर्वत्र । ज्ञानसाधनत्वेन अकर्म विनिन्द्य कर्म विधीयते उत्तराध्याये ।**

**'कर्मणो ज्ञानमत्युत्तमम्' इत्यभिहितं भगवता ''दूरेण ह्यवरं कर्म'' इत्यादौ । एवं चेत् किमिति कर्मणि घोरे युद्धाख्ये नियोजयसि निवृत्तिधर्मान् विनेत्याह— ज्यायसीति । कर्मणः सकाशाद् बुद्धिर्ज्यायसी चेत् ते मता तर्हि ॥ १ ॥ २ ॥**

*प०टी०*— पूर्वाध्यायसङ्गतितश्चोत्तराध्यायार्थमाह **आत्मेति** । **आत्म**पदात् जीवेश्वरौ । **अकर्म** कर्माकरणम् । 'तस्मादसक्तः' इतिपर्यन्तं विनिन्द्य, ततः 'एवं' कर्म विधीयते । तत्राद्यश्लोकं साभिप्रायमवतारयति । 'दूरेण' इति काम्यकर्मणो ज्ञानमुत्तममित्युक्तम् । तर्हि तत्साधनेषु निवृत्तिधर्मेष्वेव नियोजय न प्रवृत्तिधर्मे युद्धे । युद्धमपि निवृत्तिधर्मश्चेत् तर्हि तव वाक्यस्य व्यामिश्रता स्यात् । 'स्वर्गद्वारं' 'प्राप्स्यसे स्वर्गम्' इति वचनादिति । श्लोकार्थमाह **कर्मण इति** ॥

*न०टी०*—तृतीयाध्यायार्थं वदन् सङ्गतिप्रसङ्गेन पूर्वाध्यायार्थं चाह **आत्मस्वरूपमिति** । परमात्मस्वरूपम् । तज्ज्ञानस्यैव पुरुषार्थहेतुत्वात् । अत एव 'ज्ञानं हि जैवमुक्तम्' इत्यत्र जीवाश्रितज्ञानं परमात्मविषयमिति ज्ञातव्यम् । तदुपायस्यैवोपर्यभिधानाच्च । 'न त्वेवाहम्' इति दृष्टान्तमुखेन शास्त्रप्रतिपाद्यमेवोन्मुखीचकार । उपरि च 'नाभावो विद्यते सतः', 'अप्रमेयस्य', 'अजो नित्यः,' 'सर्वगतस्थाणुः' इति परमात्मस्वरूपस्यैव प्रतिपादकत्वात्, न च तस्यान्यार्थता । बिम्बपरिज्ञानार्थत्वदर्शनात् प्रतिबिम्बावलोकस्य । अतो 'न त्वेवाहम्' इत्यारभ्य प्राधान्यतः परमात्मा परमात्मस्वरूपम्, तज्ज्ञानसाधनं च सयोगकर्म 'योगस्थः' इत्यादावुक्तं पूर्वाध्याये ।

उत्तराध्याये यदि बन्धभयात् कर्मसंयोगः क्रियते, तर्ह्यकरणेऽपि बन्धो न स्यात् । कृतानां तु कर्मणां भोगेन क्षयात्, किं कर्मणा तत्साध्येन वा ज्ञानेन ? इत्याशङ्क्य, अनन्तत्वात् कर्मणां भोगतः साकल्येन क्षयासम्भवात्, पुनरकर्तुमशक्यत्वात्, कर्मेन्द्रियसंयमनेऽपि मानसदुष्कर्मोत्पत्त्या मिथ्याचारत्वप्रसङ्गात्, प्रजापतिवचनलङ्घनप्रसङ्गात्, स्वोपकारिदेवायजनेन कृतघ्नत्वापत्तेः, स्वविहित-यज्ञद्वारा चक्राप्रवर्तनेन विश्वहननदोषप्रसङ्गाच्च, न कर्माकरणं मुक्तिसाधनमित्यकर्म विनिन्द्य, ज्ञानमेव मुक्तिसाधनमिति ज्ञानसाधनत्वेन कर्म विधीयते 'तस्मादसक्तः' इत्यादिनेति भावः ।

तत्र तावज्ज्ञानस्य मुक्तिसाधनत्वम्, तत्साधनत्वं च कर्मणोऽङ्गीकारेऽपि न घोररूपं युद्धादिकं मुक्तिहेतुज्ञानसाधनम्, 'शान्तो दान्तः' इत्यादिविरोधात् । 'स्वर्गद्वारमपावृतम्' इत्यादिनाऽन्यार्थता-

वगतेश्च । अतः स्वर्गादिफलकर्मणः सकाशात् बुद्धिर्जायसि चेत् बुद्धिहेतुशान्त्यादिनिवृत्तिधर्मेष्वेव नियोजय माम्, किमिति पुनः स्वर्गादिहेतुयुद्धादौ नियोजयसि ? इति प्रश्नाभिप्रायं प्रकटयन् तद्वाक्यमवतारयति **कर्मण इति** । 'ज्यायसी' इत्यादि 'तत्' इत्यन्तं वाक्यं योजयति **कर्मणः सकाशादिति** । 'हतो वा प्राप्स्यसि स्वर्गम्' इत्युक्त्वा 'कर्मण्येवाधिकारस्ते मा फलेषु' इत्याद्युक्तेः व्यामिश्रवाक्यम् ॥

*प्र०दी०*— पूर्वोत्तराध्यायेभ्योऽस्य भेदं, स्वस्मिन्नेकवाक्यतां च दर्शयन्नेतदध्यायप्रतिपाद्यमर्थं पूर्वाध्यायार्थसङ्गतत्वेन विवक्षुः तत्प्रतिपाद्यं तावदाह— **आत्मेति** । जीवेश्वरस्वरूपं साङ्ख्याख्य-मित्यर्थः । ज्ञानसाधनमात्मज्ञानसाधनं योगाख्यम् । पूर्वत्र पूर्वस्मिन्नध्याये । न चैवं द्वितीयाध्याय-स्यैक्यानुपपत्तिः । साधनस्यैव प्राचुर्यात् । प्रचुरेण च व्यपदेशात् । तथा च सप्तमादौ वक्ष्यति 'साधनं प्राधान्येनोक्तमतीतैरध्यायैः' इति । 'आत्मस्वरूपं' इत्यादि तु प्रकरणभेदप्रदर्शनायोक्तमिति । एत-त्सङ्गतत्वेन तृतीयाध्यायार्थमाह— **ज्ञानेति** । योगो द्विविधः । कर्मसमाधिभेदात् । तत्र तावज्ज्ञान-साधनत्वेन कर्म विधीयते कर्तव्यमेवेति ज्ञाप्यते कैश्चन वाक्यैः । अकर्म कर्माकरणम् । विनिन्द्य अस्मिन्नध्याये । अकर्मनिन्दाऽपि कर्मविध्यर्थेऽत्येकार्थता । तथापि प्रकरणभेदार्थमेवमुक्तम् । ज्ञानसाधनत्वेनेति वदता मोक्षसाधनता निरस्ता । तेन प्रश्नप्रतिवचनापव्याख्यानमप्यपहस्तितम् । आनन्दवृद्ध्यर्थता त्वनुज्ञायत एव । बीजं प्रदर्शयन् प्रश्नवाक्यतात्पर्यमाह— **कर्मण इति** । आदिपदेन 'कृपणाः फलहेतवः' इत्यादेर्ग्रहणम् । घोरे रागद्वेषाद्युपेते । अत्रोभयत्र कर्मशब्देन काम्यं कर्माभिप्रेतम् । निवृत्तधर्मान् निष्कामधर्मान् । यत्याश्रमविहितान् शमदमादीन् । अत्र "कर्मणि किमिति नियोजयसि" इत्येकः प्रश्नः । 'घोरे' इति द्वितीय इत्यवधेयम् ।

इदमुक्तं भवति । आश्रमत्रयविहितानि यज्ञादीनि युद्धादीनि च कर्माणि काम्यान्येव । फलश्रवणात् "सर्व एते पुण्यलोका भवन्ति" इत्यादि । तथाऽत्रापि "हतो वा प्राप्स्यसि स्वर्गं" इत्यादि । चतुर्थाश्रमविहितानि शमदमादीन्यकाम्यानि । फलाश्रवणात् । "शान्तो दान्तः" इत्युपक्रम्य "आत्मानं पश्येत्" इति ज्ञानार्थत्वश्रवणाच्च । ज्ञानं च काम्यात् कर्मणोऽत्युत्तम-मित्यभिहितम् । ततश्च काम्ये कर्मणि युद्धे "युद्धस्व भारत" इति नियोजनमयुक्तम् । किन्तु चतुर्थाश्रमं स्वीकृत्य तद्धर्मनिष्ठो भवेति नियोक्तव्यम् । ननु युद्धमपि "कर्मबन्धं प्रहास्यसि" इत्यु-क्त्वाज्ज्ञानार्थं भवतीति मतम् । तदा व्यामिश्रेण वाक्येन बुद्धिमोहनमिवापद्यते । अथैवं मतम् । युद्धादीनि कर्माणि काम्यान्यकाम्यानि च । तत्र यः सकामः तं प्रति 'हतो वा' इत्याद्युक्तम् । यः पुनर्ज्ञानार्थी तमुद्दिश्य 'कर्मण्येवाधिकारः' इत्युक्तम् । तत्र का व्यामिश्रतेति । तथापि शुद्धेषु

निवृत्तलक्षणेषु यत्याश्रमधर्मेषु सत्सु वैकल्पिकेषु नियोजनमयुक्तमेव । तत्र मनोविक्षेपाभावात् । अत्र तद्भावादिति । किं च कामक्रोधादीनां नरकफलत्वमुक्तम् । युद्धे त्व कामादयोऽवर्जनीयाः । ततोऽपि तत्र नियोजनमयुक्तम् । नन्वस्योत्तरं ''सुखदुःखे समे कृत्वा'' इत्युक्तम् । सत्यम् । तथापि रागादि-प्रसक्तिहीनेषु शक्यानुष्ठानेषु यतिधर्मेषु सत्स्वशक्यानुष्ठेये युद्धे नियोजनमयुक्तमेवेति ।

प्रथमश्लोके पदानां व्यवहितत्वादन्वयं दर्शयन् किञ्चिद्व्याचष्टे— **कर्मण इति** । षष्ठीभ्रान्ति-निरासाय 'सकाशात्' इत्युक्तम् । बुद्धिरात्मज्ञानम् । ज्यायसी प्रशस्ततरा ॥

*भा०दी०*— **स्वस्मिन्नेकवाक्यतामिति** । अर्थैकत्वनिबन्धनत्वादिकवाक्यताया इति भावः । **विवक्षुरिति** । ज्ञानेत्यादिना जीवेश्वरस्वरूपमिति । 'न त्वेवाहम्' इत्यादिना प्राधान्येन जीवस्य तादर्थ्येनेश्वरस्य च स्वरूपमित्यर्थः । 'एषा तेऽभिहिता साङ्ख्य' इत्युक्तं **साङ्ख्याख्यमिति** । **आत्मज्ञानेति** । ईश्वरज्ञाने इत्यर्थः । **योगाख्यमिति** । निवृत्तिकर्मरूपं समाधिरूपं चेत्यर्थः । **अपव्याख्यानमिति** । ज्ञानकर्मणो मोक्षहेतुत्वे समुच्चयतया हेतुत्वेन यदपव्याख्यानं तदित्यर्थः । **बीजमिति** । प्रश्नस्येति योज्यम् । **अत्रोभयत्रेति** । प्रश्नपरे गीतावाक्ये तद्भाष्ये चेत्यर्थः । यद्वात्र भाष्ये उभयत्र कर्मण इत्यत्र कर्मणीत्यत्र चेत्यर्थः । **एकः प्रश्न इति** । स च लोकेऽस्मिन् इत्यत्र । द्वितीयस्तु श्रेयान् स्वधर्मो विगुण इत्यत्र निरसिष्यत इति तत्रैव व्यक्तीभविष्यतीति भावः ।

ननु सर्वकर्मणां काम्यत्वात् कथं निवृत्तधर्मानित्युक्तिः । मुक्त्यर्थानां निवृत्तधर्मत्वे तु 'बुद्ध्या युक्तो यया पार्थ कर्मबन्धं प्रहास्यती'ति ....कर्मणोऽपि मुक्त्यर्थत्वेन निवृत्तधर्मान्विनेत्ययुक्तमित्यतः प्रश्नपरश्लोकद्वयतात्पर्यमाह **इदमुक्तमिति** । ननु प्रोपाभ्यां युजेरयज्ञपात्रेष्विति आत्मनेपदिविधिपरे 'स्वरा-यन्तोपसृष्टाच्च' इति वक्तव्यमिति वार्तिककृता आत्म........ज्ञाना........नियोक्ष्ये इति प्रयोक्तव्यम् । कथं नियोक्ष्यामीति प्रयुक्तमित्यत आह **स्वरादीति** । स्वरोच् आदिरन्तो वा यस्य तादृशेनोपसर्गेण सम्बद्धात् युजेर्धातोरात्मनेपदं वक्तव्यमिति वार्तिकार्थः । कात्यायनवाक्यं अनित्यत्वे ज्ञापकम् **अत एवेति** । अनित्यत्वादेवेत्यर्थः । अन्यथा प्रोपाभ्यामित्यनुक्त्वा स्वराद्यन्तोपसृष्टा-द्युजेरित्यवक्ष्यत् । अतो वार्तिककारमते तथात्वेऽपि सूत्रकारमतेनासाध्विति भावः ।

काव्यमिश्रतो वेत्यस्याकारभेदेन व्यवस्थितत्वादिति भावः । वैकल्पिकेषु व्यवस्थितविकल्प-वत्स्वित्यर्थः । **नरकफलत्वमुक्तमिति** । विषयान् ध्यायत इत्यादाविति भावः । ज्यायसीत्यस्य वृद्धतमेति विभ्रमनिरासायाह **प्रशस्ततरेति** ॥

*भा०र०*— तृतीयाध्यायस्य द्वितीयाध्यायशेषत्वं चतुर्थाध्यायशेषत्वं वा किं न स्यात् ? न स्यात् । तेभ्यो भिन्नार्थप्रतिपादकत्वात् । एवं विलक्षणार्थप्रतिपादकत्वे स्वयं नानार्थप्रतिपादनपरो नैकं वाक्यं स्याद् इत्यपि न । स्वयं ज्ञानसाधनकर्मकर्तव्यत्वरूपम् एकमर्थं प्रतिपादयत एकार्थत्वेनैकवाक्यत्वात् । तथा च आहुः "अर्थैकत्वादेकं वाक्यम्" (मी.सू. २.१.४६) इति । अस्तु ततो विलक्षणार्थत्वम् एकवाक्यत्वं च । तथाऽपि द्वितीयानन्तर्यमस्य कुतः ? सङ्गतिसद्भावादित्येव अर्थ उत्तरभाष्येणोच्यत इति भावेन तदवतारयति **पूर्वोत्तरेति** ।

**एतदध्यायप्रतिपाद्यं** व्याचिख्यासिततृतीयाध्यायार्थम् । अबुद्धिस्थेन सङ्गतेर्दर्शयितुमशक्यत्वादुक्तं **तत्प्रतिपाद्यमिति** । पूर्वाध्यायप्रतिपाद्यमित्यर्थः । तेन 'ज्ञानसाधनत्वेन" इति भाष्येणैव प्रतिपाद्योक्तिलाभात् किम् 'आत्मस्वरूपम्" इति भाष्येण ? इति शङ्का निरस्ता । "न त्वेवाहम्" (२.१२) इत्यादिना जीवेश्वरस्वरूपस्योक्तत्वादाह **जीवेश्वरस्वरूपमिति** । आत्मशब्दस्तूभयसाधारण इति भावः । नन्वेतदयुक्तम् । "एषा तेऽभिहिता साङ्ख्ये" (२.३९) इति साङ्ख्यस्यैवाभिधानावेदनादित्यत उक्तं **साङ्ख्याख्यमिति** । **आत्मज्ञानसाधनं** परमात्मज्ञानसाधनम् । तत् किं रूपमिति न ज्ञायते, "योगे त्विमां शृणु" (२.३९) इति योग एवोक्तश्चेत्यत उक्तं **योगाख्यमिति** । समनन्तरातीतश्लोक आत्मस्वरूपज्ञानयोरनुक्तेराह **पूर्वस्मिन्नध्याय इति** । तेन "पूर्वयोरध्याययोरिति भाष्यार्थवर्णनं प्रथमे जीवादिस्वरूपानुक्तेरयुक्तम्" इति चोद्यं निरस्तम् ।

**एवं** जीवेश्वरस्वरूपस्य योगाख्यज्ञानसाधनस्याभिधानाङ्गीकारे, प्रतिपाद्यभेद्यभेदस्य वाक्यभेदप्रयोजकत्वं हि न्यायप्राप्तमिति भावः । **प्राचुर्यात्** प्राधान्यात् । ज्ञानसाधनं हि योगाख्यं प्रायेण प्रतिपादितमिति तत् प्रधानम् । अन्यत् प्रतिपादितमपि क्वचित् तदपि तदर्थमिति भावः । तावताऽप्येतस्य साधनपरत्वव्यपदेशः कुत इत्यत आह **प्रचुरेण इति** । अल्पनीरमिश्रक्षीरे क्षीरव्यपदेश इवेति इति भावः । तथा च तत्त्वप्रकाशिकायां "योऽर्थो यत्र प्रायेणोच्यते सोऽध्यायादिस्तदर्थ इति व्यवस्थोपपत्तेः" (ब्र.सू.भा. ४.१.१) इति । **सप्तमादौ** सप्तमाध्यायोपक्रमे । नन्वेकवाक्यताज्ञापनार्थं प्रधानप्रतिपाद्यं निरूपणीयम् । तच्च साधनमेव । तत् किम् 'आत्मस्वरूपम्' इति भाष्यप्रयोजनम् ? इत्यत आह **आत्मस्वरूपमित्यादि त्विति** । "एषा तेऽभिहिता साङ्ख्ये" (२-३९) इत्यन्तेनात्मस्वरूपरूपज्ञेयमुक्तम् । ततः अध्यायपरिसमाप्तेर्ज्ञानसाधनं योगलक्षणमुच्यत इति प्रकरणभेदप्रदर्शनाय अभिहितमित्यर्थः । प्रकरणभेदाप्रदर्शने तु कुत्र किमुच्यत इति शिष्याणां मनो व्याकुलं स्यादिति भावः । ननु "योगे त्विमां शृणु" (२.३९) इति प्रतिज्ञानुसारेण योग एव वाच्यो न तु कर्म, तदुक्तेरसङ्गतत्वादित्यत आह **योग इति** । कर्मणोऽपि योगत्वाद् ज्ञानसाधनत्वेन तद्वचनं

नासङ्गतमिति भावः । "समाधिर्ध्यानम्" इति न्यायदीपिकायां व्यक्तम् । स च षष्ठे वक्ष्यत इति **तावद्** इत्युक्तम् । **कर्म विधीयत इति** । तथा च तात्पर्यनिर्णये "तत्र कर्मयोगं विशेषतः प्रपञ्चयत्यनेनाध्यायेन" (गी.ता.३.१) इति । विपूर्वस्य दधातेः करणार्थत्वाद् अत्र कर्म क्रियत इति न युज्यते । कृष्णेन कर्म क्रियत इत्यसङ्गतेरित्याशङ्क्य 'विधीयते" इत्यस्यार्थमाह **कर्तव्य-मेवेति ज्ञाप्यत इति** । "तस्मादसक्तः सततं कार्यं कर्म समाचर" (३.१९) इति विधिदर्शना-दिति भावः ।

**कैश्चन** 'तस्मादसक्तः' (३.१९) इत्यन्तैः । अकर्मेत्यस्यार्थः कर्माकरणमिति । युक्तिभिः कर्माकरणस्यैव मोक्षाङ्गत्वान्नावश्यं कर्मानुष्ठेयमिति कर्माकरणपक्षं "कर्मणामकर्तुमशक्यत्वात्, कर्मे-न्द्रियसंयमेऽपि मानसदुष्कर्मादिमिथ्याचारत्वप्रसङ्गात्, प्रजापतिवाक्यानालम्बनप्रसङ्गात्, स्वोपकारि-देवायजनेऽकृतज्ञत्वापत्तेः, स्वविहितयज्ञद्वारा चक्राप्रवर्तने विश्वहननदोषप्रसङ्गाच्च, न कर्माकरणं मुक्तिसाधनम्" इति **प्राचीनटीकोक्तरीत्या** विनिन्द्येत्यर्थः । नन्वकर्मनिन्दनं कर्मविधानं चेत्येवम् अनेकार्थकत्वाद् एतदध्यायस्यैकवाक्यता न स्यादित्यत आह **अकर्मेति** । प्रयाजादिविधिसमभि-व्याहृतस्य ज्योतिष्टोमादिवाक्यस्य तदेकवाक्यता यथा तथेहापीति भावः । एवमेकवाक्यत्वाभि-प्रायेण "अकर्म विनिन्द्य" इति भाषणं नातीवप्रयोजनवदित्यत आह **तथाऽपीति** । यद्यपि कैश्चन श्लोकैरकर्म विनिन्द्यते कर्मविधानार्थमिति व्याख्याने सुकरमेवैकवाक्यत्वपरिज्ञानम् । तथाऽपि प्राधान्येन कर्मकरणं विधीयत इति ज्ञापनार्थम् "अकर्म विनिन्द्य" इत्युक्तमित्यर्थः ।

**तेन** मोक्षसाधनतानिरासेन । **अपव्याख्यानं** "बुद्धिः कर्मापेक्षया चेत् ज्यायसी तव मता तर्हि क्रूरे युद्धकर्मणि किमिति मां नियोजयसि ? ज्ञानमेव सम्पादयिष्यामि । न तूभयम्" इत्यादिरूपं प्रश्नवाक्यापव्याख्यानं, "यतः कर्मणामनारम्भात् मोक्षं नाश्नुतेऽतो ज्ञानकर्मणी समुच्चिते एव मोक्ष-साधने" इति प्रवचनवाक्यापव्याख्यानम् । **अपहस्तितमिति** । "कर्तृकरणाद् धात्वर्थे" इत्यपा-सितुः करणवाचकाद् हस्तशब्दाद् धात्वर्थे निरसने णिच्प्रत्यये हस्तेनापास्यति अपहस्तयतीत्यतः कर्मणि निष्ठायाम् अपहस्तितमिति रूपम् । वामेन पाणिनाऽपास्तमित्यर्थः । यद्वा, "अप अपवर्जन-वियोग-आलेखन-चौर्य-निर्देश-वैकृत-विधिविपर्यय-ऋणग्रहण-अवयवपूजा-निह्नव-सव्यावृत्तिषु" इत्युपसर्गनिघण्टौ 'अप' इत्युपसर्गस्य विधिविपर्ययार्थकत्वाभिधानात् साधुकर्मविवक्षितदक्षिण-पाणिविपरीते सव्यपाणावपहस्तशब्दः । अपशब्द इति यथा । सोऽस्य निरासकत्वेन प्राप्त इत्यत्र "तदस्य सञ्जातं तारकादिभ्य इतच्" इतीतच्प्रत्यये **अपहस्तेन** सव्यहस्तेन निरस्तम्, अति-तुच्छमित्यर्थः ।

ननु कर्मणां मोक्षसाधकत्वनिराकरणं स्वव्याहतम् । स्वयमपि तदङ्गीकारात् । ''सुकृतमप्रियं मानुष्यादिफलं जहाति । न बृहत्फलमुपासनादिनिमित्तम्''इति भाष्ये (गी.भा. २.५०), टीकायां (गी.प्र.दी. २.५०) च, मुक्तेर्ज्ञानकर्मसमुच्चयसाध्यत्वं चोच्यते । अतः कथं मुक्तौ कर्मणोऽनुप्रवेशा–भावप्रतिपादनम् इति चेत्, अत्र वक्तव्यम् । किं कर्मणां ज्ञानवत् प्राधान्येन मोक्षसाधनत्वं किंवा ज्ञानफलमुक्तावतिशयाधायकतयाऽऽरादुपकारकत्वरूपतच्छेषत्वेन । नाऽद्यः, ''कर्मणा ज्ञानमातनोति, ज्ञानेनामृतीभवति'', ''सर्वं कर्माखिलं पार्थ ज्ञाने परिसमाप्यते'' (४.३३) इत्यादिश्रुतिस्मृतिविरो-धात् । तदिदमाह **ज्ञानसाधनत्वेनेति** । न द्वितीयः । इष्टापत्तेरिति भावेनाऽह **आनन्दवृद्ध्यर्थता त्विति** । **केचित्तु**, यदि कर्म मोक्षसाधनतया भगवतोऽभिप्रेतं न स्यात् कथं तर्हि ''कुरु कर्मैव'' (४.१५) इत्यादिना तद्विधानम् ? इत्याशङ्क्य कर्मणः साक्षान्मोक्षाननुप्रवेशेऽपि मोक्षगतातिशया-धायकत्वमस्तीत्याह **आनन्दवृद्ध्यर्थता तु** इत्यवतारयन्ति । ज्ञानात् पूर्वमनुष्ठितानि निवृत्तकर्माणि ज्ञानमापादयन्ति । ज्ञानानन्तरमनुष्ठितानि तु ज्ञानकार्ये मोक्षेऽतिशयमादधतीति न कोऽपि दोष इति भावः ।

**बीजं** प्रश्नबीजम् । '**इत्यादेः**' इत्यादिपदेन ''बुद्धियुक्तो जहातीह'' (२.५०) इत्यादेर्ग्रहणम् । ''घोरं भीमं भयानकम्'' इति (अमर)कोशरीत्या घोरशब्दस्य भयहेतुत्वार्थकत्वं न प्रकृते घटते । ''सुखिनः क्षत्रियाः पार्थ लभन्ते युद्धमीदृशम्'' (२.३२) इति युद्धस्योपेक्षितत्वावेदनेन तत्र विरोधा-दित्यत आह **घोरे रागेति** । **अत्र** भाष्ये । **उभयत्र** 'कर्मणः' इत्यत्र, 'कर्माणि' इत्यत्र च । 'अतीतधर्मान्' इति प्रतीतिं वारयन् ''निष्कामं ज्ञानपूर्वं तु निवृत्तमिति चोच्यते'' (म.स्मृ. १२.८९) इति प्रमाणप्रसिद्ध्यनुसारेण तदर्थमाह **निवृत्तेति** । श्रुतफलाभिसन्धिरहितान् भगवदर्पणबुद्ध्या-ऽनुष्ठितधर्मान् इत्यर्थः । के ते तथविधा धर्माः ? किंरूपाश्च ? इत्यत उक्तम् **यत्याश्रमेति** । **शमो** भगवन्निष्ठबुद्धित्वम् । **दम** इन्द्रियनिग्रहः । आदिपदेनोपरतितितिक्षादयो ग्राह्याः । ननु कर्मणि किमिति नियोजयसि ? इति प्रश्ने 'ज्यायसी' इत्यनेन हेतोरभिधानाद् 'घोरे' इति विशेषणं व्यर्थमित्याशङ्क्य, 'लोकेऽस्मिन्' (३.३) इति श्लोके, 'श्रेयान्' (३.३५) इति श्लोके च पृथक् परिहारदर्शनात् तदनुरोधेन प्रश्नद्वयमत्रेत्याह **अत्र कर्मणि किमितीत्यादि** । ''तत् किं घोरे कर्मणि माम्'' इति विशेषणं पूर्वं निपात्यापि शक्ये वचने यत् परतो निपात्य प्रश्नकरणं तत् किमपि प्रयोजनं सूचयति । तच्च प्रश्नद्वयकरणोपस्थापनमेवेति भावः ।

कर्मणां बुद्ध्यपरत्वे तत् नियोजनं त्वदीयं नोपपद्यत इति प्रश्नतात्पर्ये ''निवृत्तधर्मान् विना'' इति भाषणमयुक्तम् । तेषामपि कर्मत्वाद् इत्यतो भाष्यभावमाह **इदमुक्तमिति** ॥ यद्वा सबीजं प्रश्नवाक्यतात्पर्यमाहेत्युक्तम् । तदेव तात्पर्यं व्यनक्ति **इदमुक्तमिति** ।

**यज्ञादीनि** यज्ञदानव्रततपांसि । एतानि च त्रैवर्णिकसाधारणधर्माः । असाधारणधर्मानाह **युद्धादीनि चेति** । कृषिगोरक्षादिकं वैश्यासाधारणधर्मः, याजनमध्यापनं प्रतिग्रहश्च विप्रासाधारणधर्म आदिपदेन ग्राह्यः । विप्रधर्माणामादौ वक्तव्यत्वेऽपि 'युद्धादीनि' इति क्षत्रियधर्माभिधानं प्रस्तावात् । यज्ञादीनां फलश्रवणं दर्शयति **सर्व एत इति** । युद्धादीनां तद् दर्शयति **तथेति** ।

"हतो वा प्राप्स्यसि स्वर्गं जित्वा वा भोक्ष्यसे महीम् ।
तस्मादुत्तिष्ठ कौन्तेय युद्धाय कृतनिश्चयः ॥" (२.३७)

इति गीतायामप्यस्ति फलश्रवणमित्यर्थः । **इत्यादि** इति क्रियाविशेषणम् । विश्वजिन्न्यायेन स्वर्ग-फलकल्पनायां फलाश्रवणमसिद्धमित्यत आह **शान्त इति** । युक्तं विश्वजिदादौ सर्वथा फलाश्रवणात् कामिनियोज्यान्वयाय "स स्वर्गः स्यात् सर्वान् प्रत्यविशिष्टत्वात्" (मी.सू. ४.३.१३) इति स्वर्ग एव फलतया कल्प्यत इति । प्रकृते तु न तथा । ज्ञानलक्षणदृष्टफलश्रवणादित्यर्थः । **अयुक्त-मिति** । "इमं लोकं हीनतरं वा विशन्ति" (आथ. १.२.१०) इत्यादिना तस्य क्लेशशिरस्कत्वा-वेदनादिति भावः । **तद्धर्मनिष्ठः** चतुर्थाश्रमविहितधर्माचरणनिष्ठावान् । तस्य च निवृत्तधर्मतया तदनुष्ठानस्य "कर्मणा ज्ञानमातनोति" इति ज्ञानार्थत्वावगमादिति भावः ।

**तदा** युद्धादिकर्मणोऽपि ज्ञानार्थत्वेन ज्ञानान्तभवि । "दूरेण ह्यवरं कर्म" (२.४९) इति ज्ञान-बहिर्भाववचनेन त्वदीयेन विरुद्धार्थप्रतिपादकेन **बुद्धेर्मोहनम्** अनवस्थानम् एकार्थनिष्ठत्वाभाव आपद्यत इत्यर्थः । "हतो वा" (२.३७) इत्यनेन युद्धस्य स्वर्गाद्यर्थत्वप्रतिपादनात्, "कर्मबन्धं प्रहास्यसि" (२.३९) इति च ज्ञानार्थत्वप्रतिपादनाद् इति भावः । परमकारुणिकस्य तव न सर्वथा मोहनार्थ-वचनमस्ति । मम तु वाक्यद्वयं शृण्वत एवं प्रतिभातीति मोहनमिवेति 'इव'शब्दः । वचनद्वयस्य मोहनार्थत्वं परिहर्तुं शङ्कते **अथैवमिति** । **वैकल्पिकेषु** अधिकारिभेदेन काम्या-काम्यरूपेषु ।

**तत्र** यत्याश्रमविहितधर्मेषु । **अत्र** युद्धादिषु । **घोरे** रागद्वेषाद्युपेत इति कर्म विशेषितम् । तद् द्वितीयप्रश्नतात्पर्यमाह **किञ्चेति** । **उक्तम्** "ध्यायतो विषयान्" (२.६२) इत्यत्र । **ततोऽपि** न केवलं काम्ये विक्षेपभावात्, किन्तु कामक्रोधाभिभूतत्वेन नरकफलत्वादपि । **अशक्यानुष्ठाने** रागक्रोधादिदोषविनिर्मोकेणाशक्यानुष्ठाने । **पदानां** 'कर्मणः', 'बुद्धिः', 'ज्यायसी' इति पदानाम् । **व्यवहितत्वात्** अन्वयबोधानुकूलसन्निधिशून्यत्वात् । 'सकाशाद्' इति शेषपूरणात् 'तद्' इत्यस्या-नुवादेन 'तर्हि' इति व्याख्यानाच्च आह **किञ्चिदिति** ।

"एषा तेऽभिहिता साङ्ख्ये बुद्धिः" (२.३९) इत्यत्र बुद्धिशब्दस्य वागर्थकत्वं भाषितमिति अत्रापि तद्ग्रहणे तस्याः कर्मणो ज्यायस्त्वानुवादोऽनुपपन्न इत्यतो भावे क्तिन्नन्तत्वमभ्युपेत्य "शुद्धात्मतत्त्वविज्ञानम्" (व्या.स्मृ.) इति प्रमाणसिद्धं भगवद्विषयं ज्ञानमत्र ग्राह्यमित्याह **आत्मज्ञानमिति** । 'ज्यायसी' इत्यस्य वृद्धशब्दप्रकृतिकत्वे वयःपरिपाकादिरूपाया वृद्धेर्बुद्धावसम्भवात्, प्रशस्यशब्दप्रकृतिकत्वम् अभिप्रेत्य व्याचष्टे **ज्यायसी प्रशस्ततरेति** । बुद्धिकर्मणोर्मध्ये बुद्धिरतिशयेन प्रशस्येत्यर्थः । प्रशस्तवाचिप्रशस्यशब्दाद् आतिशायनिके ईयसुन् प्रत्यये "ज्य च" इति ज्यादेशे 'ज्यादादीयसः' इत्यात्त्वे 'उगितश्च' इति ङीपि 'ज्यायसी' इति रूपे तेनोक्तार्थलाभ इति भावः । ईयसुन्प्रत्ययस्य अजादित्वात् तस्य च "अजादी गुणवचनादेव" इति नियमितत्वात् प्रशस्यानुवचननिमित्तत्वात् ततः कथमीयसुन् उत्पत्तिरिति शङ्का "आदेशविधानादेवैतद्विषये 'अजादी गुणवचनादेव' इति नियमो न प्रवर्तते" इति काशिकायां परिहृता । 'प्रशस्यतरा' इत्यपि क्वचित् पाठः ॥ १-२ ॥

**गीतातात्पर्यनिर्णयः**

## ज्ञानं योगश्चोक्तौ । तत्र कर्मयोगं विशेषतः प्रपञ्चयत्यनेनाध्यायेन ।

*प्रका०*— गताध्यायसङ्गतत्वेनोत्तराध्यायप्रतिपाद्यमाह **ज्ञानमिति** ।

*न्या०दी०*— पूर्वाध्यायसङ्गतत्वेन एतदध्यायं दर्शयितुं पूर्वाध्यायप्रतिपाद्यमाह **ज्ञानमिति** । "एषा तेऽभिहिता" इत्यन्तेन ज्ञायत इति ज्ञानमीश्वरादिस्वरूपं निरूपितम् । ततोऽध्यायपरिसमाप्तिपर्यन्तं तत्स्वरूपज्ञानोपायश्चोक्तः पूर्वाध्याय इत्यर्थः । तत्सङ्गतत्वेन एतदध्यायार्थमाह **तत्रेति** । तयोर्ज्ञानयोगयोर्मध्ये योगोऽपि द्विविधो भवति । कर्मध्यान-योगभेदात् । तत्र प्रागुक्तमेव कर्मयोगं प्रपञ्चयत्यनेनाध्यायेन भगवानित्यर्थः । ननु "कर्मजं बुद्धियुक्ता हि फलं त्यक्त्वा" इत्यादिना पूर्वत्रापि कर्मयोगस्य प्रपञ्चितत्वात् किमनेनाध्यायेनेत्यत उक्तम् **विशेषत इति** । नन्वत्रापि "इन्द्रियाणि पराणि" इत्यादिना ज्ञानस्याप्युक्तेः कथं कर्मयोगं प्रपञ्चयतीत्युच्यत इत्यतो वाऽऽह विशेषत इति । प्राचुर्येणेत्यर्थः ।

*भा०दी०*— **इत्यन्तेन** इत्यस्य निरूपितमित्यन्वयः । "न त्वेवाहमि"त्यादिना ग्रन्थेनेत्यपि योज्यम् । कर्मणि ल्युडिति भावेनाह **ज्ञायत इति** । ईश्वरादीत्यादिपदेन प्राधान्येन प्रकृतस्य जीवस्य प्रासंगिकवेददेशकालादेश्च ग्रहः । ईश्वरस्यापि युद्धगतत्वेन येषां अनित्यत्वशङ्का तान् प्रति तस्यापि "न त्वेवाहमि"त्यादिना प्राधान्येन प्रकृतत्वात् "योगे त्विमां शृण्वि"ति प्रतिज्ञापूर्वं "त्रैगुण्यविषया

**यज्ञादीनि** यज्ञदानव्रततपांसि । एतानि च त्रैवर्णिकसाधारणधर्माः । असाधारणधर्मानाह **युद्धादीनि चेति** । कृषिगोरक्षादिकं वैश्यासाधारणधर्मः, याजनमध्यापनं प्रतिग्रहश्च विप्रासाधारणधर्म आदिपदेन ग्राह्यः । विप्रधर्माणामादौ वक्तव्यत्वेऽपि 'युद्धादीनि' इति क्षत्रियधर्माभिधानं प्रस्तावात् । यज्ञादीनां फलश्रवणं दर्शयति **सर्व एत इति** । युद्धादीनां तद् दर्शयति **तथेति** ।

"हतो वा प्राप्स्यसि स्वर्गं जित्वा वा भोक्ष्यसे महीम् ।
तस्मादुत्तिष्ठ कौन्तेय युद्धाय कृतनिश्चयः ॥" (२.३७)

इति गीतायामप्यस्ति फलश्रवणमित्यर्थः । **इत्यादि** इति क्रियाविशेषणम् । विश्वजिन्न्यायेन स्वर्गफलकल्पनायां फलाश्रवणमसिद्धमित्यत आह **शान्त इति** । युक्तं विश्वजिदादौ सर्वथा फलाश्रवणात् कामिनियोज्यान्वयाय "स स्वर्गः स्यात् सर्वान् प्रत्यविशिष्टत्वात्" (मी.सू. ४.३.१३) इति स्वर्ग एव फलतया कल्प्यत इति । प्रकृते तु न तथा । ज्ञानलक्षणदृष्टफलश्रवणादित्यर्थः । **अयुक्तमिति** । "इमं लोकं हीनतरं वा विशन्ति" (आथ. १.२.१०) इत्यादिना तस्य क्लेशशिरस्कत्वावेदनादिति भावः । **तद्धर्मनिष्ठः** चतुर्थाश्रमविहितधर्माचरणनिष्ठावान् । तस्य च निवृत्तधर्मतया तदनुष्ठानस्य "कर्मणा ज्ञानमातनोति" इति ज्ञानार्थत्वावगमादिति भावः ।

**तदा** युद्धादिकर्मणोऽपि ज्ञानार्थत्वेन ज्ञानान्तभवि । "दूरेण ह्यवरं कर्म" (२.४९) इति ज्ञानबहिर्भाववचनेन त्वदीयेन विरुद्धार्थप्रतिपादकेन **बुद्धेर्मोहनम्** अनवस्थानम् एकार्थनिष्ठत्वाभाव आपद्यत इत्यर्थः । "हतो वा" (२.३७) इत्यनेन युद्धस्य स्वर्गाद्यर्थत्वप्रतिपादनात्, "कर्मबन्धं प्रहास्यसि" (२.३९) इति च ज्ञानार्थत्वप्रतिपादनाद् इति भावः । परमकारुणिकस्य तव न सर्वथा मोहनार्थ-वचनमस्ति । मम तु वाक्यद्वयं शृण्वत एवं प्रतिभातीति मोहनमिवेति 'इव'शब्दः । वचनद्वयस्य मोहनार्थत्वं परिहर्तुं शङ्कते **अथैवमिति** । **वैकल्पिकेषु** अधिकारिभेदेन काम्याकाम्यरूपेषु ।

**तत्र** यत्याश्रमविहितधर्मेषु । **अत्र** युद्धादिषु । **घोरे** रागद्वेषाद्युपेत इति कर्म विशेषितम् । तद् द्वितीयप्रश्नतात्पर्यमाह **किञ्चेति** । **उक्तम्** "ध्यायतो विषयान्" (२.६२) इत्यत्र । **ततोऽपि** न केवलं काम्ये विक्षेपभावात्, किन्तु कामक्रोधाभिभूतत्वेन नरकफलत्वादपि । **अशक्यानुष्ठाने** रागक्रोधादिदोषविनिर्मोकेणाशक्यानुष्ठाने । **पदानां** 'कर्मणः', 'बुद्धिः', 'ज्यायसी' इति पदानाम् । **व्यवहितत्वात्** अन्वयबोधानुकूलसन्निधिशून्यत्वात् । 'सकाशाद्' इति शेषपूरणात् 'तद्' इत्यस्यानुवादेन 'तर्हि' इति व्याख्यानाच्च आह **किञ्चिदिति** ।

"एषा तेऽभिहिता साङ्ख्ये बुद्धिः" (२.३९) इत्यत्र बुद्धिशब्दस्य वागर्थकत्वं भाषितमिति अत्रापि तद्ग्रहणे तस्याः कर्मणो ज्यायस्त्वानुवादोऽनुपपन्न इत्यतो भावे क्तिन्नन्तत्वमभ्युपेत्य "शुद्धात्मतत्त्वविज्ञानम्" (व्या.स्मृ.) इति प्रमाणसिद्धं भगवद्विषयं ज्ञानमत्र ग्राह्यमित्याह **आत्म-ज्ञानमिति** । 'ज्यायसी' इत्यस्य वृद्धशब्दप्रकृतिकत्वे वयःपरिपाकादिरूपाया वृद्धेर्बुद्धावसम्भवात्, प्रशस्यशब्दप्रकृतिकत्वम् अभिप्रेत्य व्याचष्टे **ज्यायसी प्रशस्ततरेति** । बुद्धिकर्मणोर्मध्ये बुद्धिरतिशयेन प्रशस्येत्यर्थः । प्रशस्तवाचिप्रशस्यशब्दाद् आतिशायनिके ईयसुन् प्रत्यये "ज्य च" इति ज्यादेशे 'ज्यादादीयसः' इत्यात्त्वे 'उगितश्च' इति ङीपि 'ज्यायसी' इति रूपे तेनोक्तार्थलाभ इति भावः । ईयसुन्प्रत्ययस्य अजादित्वात् तस्य च "अजादी गुणवचनादेव" इति नियमितत्वात् प्रश्नस्यानुवचननिमित्तत्वात् ततः कथमीयसुन् उत्पत्तिरिति शङ्का "आदेशविधानादेवैतद्विषये 'अजादी गुणवचनादेव' इति नियमो न प्रवर्तते" इति काशिकायां परिहृता । 'प्रशस्यतरा' इत्यपि क्वचित् पाठः ॥ १-२ ॥

**गीतातात्पर्यनिर्णयः**

**ज्ञानं योगश्चोक्तौ । तत्र कर्मयोगं विशेषतः प्रपञ्चयत्यनेनाध्यायेन ।**

*प्रका०*— गताध्यायसङ्गतत्वेनोत्तराध्यायप्रतिपाद्यमाह **ज्ञानमिति** ।

*न्या०दी०*— पूर्वाध्यायसङ्गतत्वेन एतदध्यायं दर्शयितुं पूर्वाध्यायप्रतिपाद्यमाह **ज्ञानमिति** । "एषा तेऽभिहिता" इत्यन्तेन ज्ञायत इति ज्ञानमीश्वरादिस्वरूपं निरूपितम् । ततोऽध्याय-परिसमाप्तिपर्यन्तं तत्स्वरूपज्ञानोपायश्चोक्तः पूर्वाध्याय इत्यर्थः । तत्सङ्गतत्वेन एतदध्यायार्थमाह **तत्रेति** । तयोर्ज्ञानयोगयोर्मध्ये योगोऽपि द्विविधो भवति । कर्मध्यान-योगभेदात् । तत्र प्रागुक्तमेव कर्मयोगं प्रपञ्चयत्यनेनाध्यायेन भगवानित्यर्थः । ननु "कर्मजं बुद्धियुक्ता हि फलं त्यक्त्वा" इत्यादिना पूर्वत्रापि कर्मयोगस्य प्रपञ्चितत्वात् किमनेनाध्यायेनेत्यत उक्तम् **विशेषत इति** । नन्वत्रापि "इन्द्रियाणि पराणि" इत्यादिना ज्ञानस्याप्युक्तेः कथं कर्मयोगं प्रपञ्चयतीत्युच्यत इत्यतो वाऽऽह विशेषत इति । प्राचुर्येणेत्यर्थः ।

*भा०दी०*— **इत्यन्तेन** इत्यस्य निरूपितमित्यन्वयः । "न त्वेवाहमि"त्यादिना ग्रन्थेनेत्यपि योज्यम् । कर्मणि ल्युडिति भावेनाह **ज्ञायत इति** । ईश्वरादीत्यादिपदेन प्राधान्येन प्रकृतस्य जीवस्य प्रासंगिकवेददेशकालादेश्च ग्रहः । ईश्वरस्यापि युद्धगतत्वेन येषां अनित्यत्वशङ्का तान् प्रति तस्यापि "न त्वेवाहमि"त्यादिना प्राधान्येन प्रकृतत्वात् "योगे त्विमां शृण्वि"ति प्रतिज्ञापूर्वं "त्रैगुण्यविषया

वेदा'' इत्यादिना ईश्वरज्ञानोपायस्यैव उक्तत्वात् ईश्वरादीति स्वशब्देन तस्योक्तिः । अत एव तत्स्वरूपज्ञानोपायश्चोक्त इत्युक्तम् । **कर्मध्यानयोगेति** । कर्मरूपज्ञानोपायध्यानरूपज्ञानोपाय-भेदादित्यर्थः ॥

**गीतातात्पर्यनिर्णयः**

**''दूरेण ह्यवरं कर्म'' इति प्रश्नबीजम् ॥ १-२ ॥**

***प्रका०***— **दूरेणेति** । ''दूरेण ह्यवरं कर्म बुद्धियोगाद् धनञ्जय'' इत्युक्तेन कारणेनायमर्जुनप्रश्नः ''ज्यायसी चेत्कर्मणस्ते मता बुद्धिर्जनार्दन । तत्किं कर्मणि घोरे मां नियोयसी''ति ।

***न्या०दी०***— ननु कर्मणः सकाशाद्बुद्धेर्ज्यायस्त्वं प्राक् कुत्रोक्तम् ? यद्बीजोऽयं ''ज्यायसी चेत्कर्मणः'' इत्यर्जुनप्रश्न इत्यत आह **दूरेणेति** ॥ १-२ ॥

**गीता**

## श्रीभगवानुवाच—

**लोकेऽस्मिन् द्विविधा निष्ठा पुरा प्रोक्ता मयाऽनघ ।**
**ज्ञानयोगेन साङ्ख्यानां कर्मयोगेन योगिनाम् ॥ ३ ॥**

***वि०वि०***— बुद्धेर्ज्यायस्त्वेऽपि त्वमाधिकारिकत्वात् कर्मण्यधिकृत इति तत्र नियोजयामी-त्याशयवान् भगवानुवाच **लोक इति** । अस्मिन् लोके द्विविधा निष्ठा स्थितिः । पुरा पूर्वम् । मया प्रोक्ता । कथम्— **साङ्ख्यानां** सम्यक् ख्यातिर्ज्ञानं सङ्ख्या । तत्र भवाः साङ्ख्याः तेषाम् । ज्ञाननिष्ठानां सनकादीनाम् । **ज्ञानयोगेन** जपध्यानादिना स्थितिः । योगिनामुपायिनाम् । ज्ञानित्वे-ऽप्याधिकारिकत्वादीश्वरेच्छया प्रियव्रतादिवल्लोकसङ्ग्रहार्थत्वाच्च कर्मयोग्यानां जनकादीनां कर्मयोगे-नाश्रमत्रयविहितेन स्थितिः । त्वं तु जनकादिवत् गृहस्थधर्मवानेव ज्ञानयोग्यो न तु सनकादिवत् तत्त्यागेनेत्यर्थः । आधिकारिकास्तु ज्ञानाधिकारमात्रं किन्तु केचिदेव । तदुक्तम्—

'प्रजापाश्च तथा देवा महाधिकारिणः स्मृताः ।
ऋष्यशीतिस्तथा सप्त पितरोऽप्सरसां शतम् ॥

गन्धर्वाणां तथा राज्ञां विंशदन्यासु जातिषु ।
अल्पाधिकारिणः प्रोक्ता अनधिकारिणः परे ॥'

इति । अथवा ज्ञानप्रचुरो योगो ज्ञानयोगः । कर्मप्रचुरयोगः कर्मयोगः । निष्ठा पर्यवसिति-र्मुक्तिः । तदुक्तम्—

'साङ्ख्या ज्ञानप्रधानत्वात् देवाश्च ऋषयस्तथा ।
मुख्यसाङ्ख्यास्तत्र देवा ज्ञानमेषां महद्यतः ॥
बहुकर्मकृतोऽप्यन्ते ततोऽपि बहु वेदनात् ।
मुख्यसाङ्ख्या इति ज्ञेयास्तदन्ये कर्मयोगिनः ॥
ज्ञानिनोऽप्यतिबाहुल्यात् कर्मणः कर्मयोगिनः ।
नोभयं तद्विना कश्चित् पुमान् हि पुरुषार्थभाक् ॥'
'ज्ञानिनो मोक्षनियमस्तथापि शुभकर्मणा ।
आनन्दवृद्धिरन्येन ह्रासो ज्ञानं तु कर्मणा ॥' इति ॥

***सा०सं०***— यद्यपि सर्वकर्मण्याश्रमत्रयविहितानि काम्यकामिभेदेन चेति वैकल्पिकानि । यतिधर्मास्तु शमादयः केवलमकाम्याः, युद्धकर्मेव नरकाद्यनर्थहेतुरागद्वेषाद्युपेताश्च न भवन्ति । तथाऽपि तेषाम् अनाधिकारिकविषयत्वात्, तव च जनकप्रियव्रतादेरिव आधिकारिकत्वात् । 'सुखदुःखे समे कृत्वा' इत्यत्रोक्तदिशा भगवद्भक्त्या स्वधर्मत्वेनानुष्ठाने पापानवाप्तेर्वैकल्पिकेऽपि युद्धकर्मण्येव नियोज्य इति भावेनाद्यप्रश्नस्योत्तरमाह **लोक इत्यादिना** । द्वितीयस्य तु 'श्रेयान्' इत्यादिनाऽग्रे ध्येयम् । **अस्मिन् लोके** साधकवर्गे । **निष्ठा** स्वरूपेण स्थितिः । मुक्तिरिति यावत् ।

यद्वा, **निष्ठा** नितरां संसारगतिनिवृत्तिः । **द्विविधा** द्विप्रकारा द्विविधसाधनसाध्येत्यर्थः । **पुरा मया प्रोक्ता** । हे **अनघे**ति सम्बुद्धिः । कथमित्यत आह **साङ्ख्यानां** ज्ञानप्रधानानां देवानां सनकादियतीनां च । **ज्ञानयोगेन** प्राचुर्याज्ज्ञानस्योक्तिः । अप्रचुरकर्मोपेतप्रचुरज्ञानोपायेन । जप-ध्यानादिना **निष्ठा** मुक्तिः, **योगिनां** कर्मरूपोपायवताम्, **कर्मयोगेना**प्रचुरज्ञानोपेतेन प्रचुरकर्मोपायेन, **निष्ठा** मुक्तिः, **योगिनामि**त्यनन्तरमितिशब्दोऽध्याहार्यः । अत्र भगवज्ज्ञानिनामप्युभयेषां न ज्ञान-मात्रेण स्वयोग्ययावदानन्दानुभवरूपसम्पूर्णमुक्तिः, अपि तु कर्मसमुच्चितेनैव । तत्र केचन सनकादयो यतयः स्वगतज्ञानकर्मणोर्मध्ये ज्ञानप्रचुराः सन्तो मुक्तिभाजः । केचित् तु जनकप्रियव्रतादयो गृहस्थाः स्वगतज्ञानकर्मणोर्मध्ये प्रचुरकर्माणः सन्त एव मुक्तिभाजो भवन्ति । आधिकारिकतया तथैव भगवता क्लृप्तत्वात् । तथा च त्वमप्याधिकारिक इति कर्मणि विनियोज्य एवेति भावः । अत्र नीरमिश्रक्षीरे क्षीरशब्दप्रयोगवत् प्राचुर्याभिप्रायेण ज्ञानयोगेन कर्मयोगेनेत्येकैकोक्तिरिति ज्ञेयम् ॥

*अ०प्र०*— अत्रोत्तरं श्रीभगवानाह **लोकेऽस्मिन्निति** । *अयमर्थः*— यदि मया परस्पर-निरपेक्षं मोक्षसाधनत्वेन कर्मज्ञानरूपं निष्ठाद्वयमुक्तं स्यात्तर्हि तयोर्मध्ये यद्भद्रं तदेकं वदेति त्वदीय-प्रश्नः सङ्गच्छते । न तु मया तत्तथोक्तम् । किन्तु द्वाभ्यामेकैव ब्रह्मनिष्ठोक्ता गुणप्रधानभूतयोस्तयोः स्वातन्त्र्यानुपपत्तेः । एकस्यैव तु प्रकारभेदेनोक्तमिति ।

हे अनघ ! अस्मिन्[१], लोके[२], निष्ठा[३], द्विविधा[४], पुरा[५], मया[६], प्रोक्ता[७], साङ्ख्यानां[८], ज्ञान-योगेन[९], योगिनां[१०], कर्मयोगेन[११], इत्यन्वयः ।

हे अनघ ![१], अस्मिन् लोके[२], निष्ठा द्विविधा[३], = द्वे विधे प्रकारौ यस्याः सा तथा यद्वा द्वे विधे अधिकारिजने द्विविधा, तानि सर्वाणि संयम्य युक्त आसीत मत्पर इति साङ्ख्यानां, एषा तेऽभिहिता साङ्ख्येति योगिनां इति भेदेन, निष्ठा = मोक्षपरता स्थितिः[४], पुरा = पूर्वाध्याये[५], मया = सर्वज्ञेन[६], प्रोक्ता = प्रकारद्वयेन स्पष्टमेवोक्ता मोक्षाधिकारिभेदेन विविधसाधनसाध्य इत्यर्थः[७], तत्कथम्, साङ्ख्यानां = सम्यक् ख्यातिः ज्ञानं सङ्ख्या तत्रभवाः तदेकनिष्ठाः साङ्ख्याः तेषां शुद्धान्तःकरणानां ज्ञानभूमिकामारूढानां ज्ञानपरिपाकार्थं[८], ज्ञानयोगेन = ज्ञानमात्रसाधनेन ध्यानादिना यद्वा ज्ञानप्रचुरो योगो ज्ञानयोगः तेन ज्ञानयोगेन निष्ठा ब्रह्मपरता स्थितिरुक्ता[९], योगिनां = ज्ञानभूमिकामारुरुक्षूणां गार्हस्थ्यादिकर्मरतानां अन्तःकरणशुद्धिद्वारा तदारोहार्थं तदुपाय-भूतकर्मयोगाधिकारिणां[१०], कर्मयोगेन = कर्मप्रचुरो योगो कर्मयोगः आश्रमत्रयविहितेन यज्ञादिरूपो-पायेन निष्ठोक्ता[११] इत्यर्थः, अत एव चित्तशुद्ध्यशुद्धिरूपावस्थाभेदेनैव द्विविधाऽपि निष्ठोक्ता । अतः सम्यक् चित्तशुद्ध्या ज्ञानोत्पत्तिपर्यन्तवर्णाश्रमोचितानि कर्माणि कर्तव्यानि अन्यथा चित्तशुद्ध्यभावे ज्ञानानुत्पत्तेः । अत्र संसारगतिनिवृत्तिर्मुक्तिरिति यावत् ॥ ३ ॥

### भाष्यम्

**ज्यायस्त्वेऽपि बुद्धेराधिकारिकत्वात् त्वं कर्मण्यप्यधिकृत इति तत्र नियो-क्ष्यामीत्याशयवान् भगवानाह— लोक इति । द्विविधा अपि जनाः सन्ति । गृहस्थादिकर्मत्यागेन ज्ञाननिष्ठाः सनकादिवत् । तत्स्था एव ज्ञाननिष्ठाश्च जन-कादिवत् । मद्धर्मस्था एवेत्यर्थः । साङ्ख्यानां ज्ञानिनां सनकादीनाम् । योगिना-मुपायिनां जनकादीनाम् । ज्ञाननिष्ठा अप्याधिकारिकत्वादीश्वरेच्छया लोकसङ्ग्र-हार्थत्वाच्च ये कर्मयोग्या भवन्ति तेऽपि योगिनः । निष्ठा स्थितिः । त्वं तु जनकादिवत् सकर्मैव ज्ञानयोग्यः, न तु सनकादिवत् तत्त्यागेनेत्यर्थः । सन्ति**

**हीश्वरेच्छयैव कर्मकृतः प्रियव्रतादयोऽपि ज्ञानिनः एव । तथा ह्युक्तम् ईश्वरेच्छया विनिवेशितकर्माधिकारः इति ॥ ३ ॥**

***प०टी०***— साभिप्रायं परिहारवाक्यमवतारयति **ज्यायस्त्वेऽपीति** । सत्यम्, प्रवृत्तकर्मणो बुद्धिर्ज्यायसीति । तथाऽपि तत्र त्वां नियोक्ष्यामि । यत आधिकारिकत्वात् त्वं कर्मण्यधिकृतः । प्रवृत्तिकर्मणैव स्वर्गो ज्ञानं च भवति तवेत्यर्थः । श्लोकार्थं सोदाहरणमाह **द्विविधा इति** । एवं न केवलं शमदमादिमन्त एव ज्ञाननिष्ठाः, किन्तु कर्मिणोऽपि ज्ञाननिष्ठाः सन्ति । तेऽपि **तत्स्था एव, मद्धर्मस्था एव** न मार्गान्तरस्था इत्यर्थः । यदि जनकादयो ज्ञाननिष्ठाः, तर्हि कथमुपायिनः ? इत्यत आह **ज्ञाननिष्ठा अपीति** । 'किं कर्मणि मां नियोजयसि' इत्यस्य कः परिहारः ? इत्यतः श्लोकाभिप्रेतमाह **त्वं त्विति** । 'ततो नियोक्ष्यामि' इति शेषः । ज्ञानिनां कर्माधिकारः क्व दृष्टो येन जनकादीनामसौ भवेत् ? इत्यत आह **सन्तीति** ॥

***न०टी०***—सत्यम्, बुद्धिरभ्यधिका स्वर्गादिफलकर्मणः । तथाऽप्यधिकारिभेदाद्युद्धादेरपि बुद्धिहेतुत्वं बुद्धिमद्युद्धादेर्मुक्तावानन्दवृद्धिहेतुत्वं चाविरुद्धमिति परिहाराभिप्रायं प्रकटयन् तद्वाक्यमवतारयति **ज्यायस्त्वेऽपीति** । न च 'हतो वा' इत्यादिनाऽन्यार्थतो मुक्तिविरोधत्वं युद्धादेः, उत्तमाधिकारिज्ञानिकर्मणः स्वर्गाद्यतिशयजनकत्वेऽपि मुक्तावानन्दवृद्धिकरत्वाविरोधात् । अधिकारिणां च यावदधिकारमवस्थितेरपेक्षितत्वात् स्वर्गादाविति भावः ।

अधिकारिशब्दो न ज्ञानाधिकारिमात्रमाचष्टे किन्तु कांश्चिदेव । तथा ह्युक्तम्—

> 'प्रजापाश्च तथा देवा महाधीकारिणः स्मृताः ।
> ऋष्यशीतिस्तथा सप्तपितरोऽप्सरसां शतम् ।
> गन्धर्वाणां तथा राज्ञां विंशदन्यासु जातिषु ।
> अल्पाधिकारिणः प्रोक्ताः अनधिकारिणः परे ॥' इति ब्रह्माण्डे ।

श्लोकतात्पर्यं तावत् सोदाहरणमाह **द्विविधा इति** । कर्मयोगप्रतियोगित्वेनोक्ते ज्ञानयोगे, कर्मत्यागोऽवगम्यमानो गृहस्थादिकर्मत्यागः, न ज्ञानान्तरं शमादिपारमहंसस्य कर्मत्यागः । ज्ञानस्य निष्ठा येषां ते ज्ञाननिष्ठाः । स्थितप्रज्ञा इत्यर्थः । ज्ञाने निष्ठा येषामिति वा । योग्यत्वेनात्र ज्ञानपदं प्रतिष्ठितम् । ज्ञाननिष्ठाश्चेत् भगवद्धर्मस्थिता एव । निवृत्तिधर्मान् विना इत्यस्यायं परिहारः । भगवद्धर्मो हि निवृत्तिधर्मः । तथाहि तल्लक्षणं 'निष्कामं ज्ञानपूर्वं च' इति ।

'स्वोचितेनैव धर्मेण विष्णुपूजामृते क्वचित् ।
नाप्रवृत्तिः प्रवृत्तिर्वा यत्र धर्मः स वैष्णवः ॥' इति ।

'साङ्ख्य'-'योग'पदयोरत्र विवक्षितार्थं सोदाहरणमाह **साङ्ख्यानामिति** ।

ननु यैरितःपरं ज्ञानमुपेयं त उपायिनः स्युः । ये तु ज्ञाननिष्ठाः उपेतज्ञानास्तेषां किमुपायेनेत्यत आह **ज्ञाननिष्ठा अपीति** । ज्ञानाख्योपायलाभेऽपि मुक्तावानन्दवृद्ध्यर्थं ये पुनर्ज्ञानोपायमनुतिष्ठन्ति तेऽपि योगिन इत्यर्थः । 'निष्ठा'पदस्य स्थितिवाचित्वात् स्थितप्रज्ञानाचष्ट इति भावेन आह **निष्ठेति** ॥ अनेनैवंविधः श्लोकान्वयः सूच्यते – द्विविधाः जनाः साङ्ख्याः योगिनश्च । तत्र साङ्ख्यानां समाधिजपकथादीनां ज्ञानयोगाख्येन करणेन ज्ञाननिष्ठा सिद्ध्यति । तदुत्तरकाले च ज्ञानयोगाख्येन करणेन ज्ञाननिष्ठा सिद्ध्यति । तदुत्तरकाले च ज्ञानयोगेन सह ज्ञाननिष्ठा वर्तन्ते । योगिनामपि कर्मयोगेन ज्ञाननिष्ठा सिद्ध्यति । तदुत्तरकाले च तेन सह वर्तन्त इति भगवता पुरा प्रोक्तं 'कर्मण्येवाधिकारः' इत्यादौ । भवन्त्येवंविधाः जनाः । कोऽहमेषाम् ? इत्याकाङ्क्षायां श्लोकफलितार्थमाह **त्वं त्विति** । ज्ञाननिष्ठानामपि कर्मानुष्ठेयमित्यत्र सदाचारं सप्रमाणकमाह **सन्ति हीति** ॥

***प्र०दी०***— एवं चेत् प्रश्नस्तर्हि कथं परिहारवाक्यं सङ्गच्छते । तत्र निष्ठाद्वैविध्यकथनादित्यतस्तदभिप्रायं वदन्नवतारयति— **ज्यायस्त्वेऽपीति** । बुद्धिः काम्यकर्मभ्यो ज्यायसीति यदुक्तं तत्तथैवेत्यर्थः । तथापि त्वां तत्रैव वैकल्पिके युद्धादिकर्मणि प्रेरयामि । कुतः ? आधिकारिकत्वात् । त्वं कर्मण्यपि विक्षेपकारिण्यपि वैकल्पिकेऽधिकृत इति कृत्वा ।

अयमत्रोत्तरक्रमः । आश्रमत्रयविहितानि यज्ञादीनि युद्धादीनि च न शुद्धकाम्यानि । किन्तु कर्तुरिच्छया स्वर्गाद्यर्थानि ज्ञानाद्यर्थानि च भवन्ति । अतो बुद्धेः काम्यकर्मणो ज्यायस्त्वेऽपि युद्धस्य बुद्ध्यर्थत्वसम्भवात् तत्र नियोगो नानुपपन्नः । यतिधर्मान्विना किमेतेन नियोगेनेति चेदनधिकारिकाणामेव यत्याश्रमस्वीकारो नाधिकारिकाणाम् । तैर्गृहस्थाद्याश्रमम् अपरित्यज्यैव तद्विहितानि कर्माणि निष्कामतयाऽनुष्ठेयानीतीश्वरनियमात्तव चाधिकारिकत्वादिति । 'स्वराद्यन्तोपसृष्टाच्च' इति कात्यायनवचनमनित्यम् । अत एव न पाणिनिरभाणीत् । अयमाशयः श्लोकात्कथं लभ्यत इत्यतो व्याचष्टे— **द्विविधा अपीति** । निष्ठा द्विविधेति व्याख्याने क्रमेणैकस्यैव पुरुषस्य तत्सम्भवान्नोक्ताभिप्रायो लभ्यत इत्येवं व्याख्यानम् । न केवलमेकविधाः साङ्ख्या एवेत्यपेरर्थः । द्वैविध्यमेव सोदाहरणमाह **गृहस्थादीति** । यत्याश्रमपरिग्रहेणेत्यपि ग्राह्यम् । ज्ञाननिष्ठा यत्याश्रमविहितैरेव

कर्मभिर्ज्ञानसाधनेऽभियुक्ताः । सनकादिभिस्तुल्यं वर्तन्त इति सनकादिवत् । एवं जनकादिवदि-त्यपि । तत्स्था एव गृहस्थाद्याश्रमस्था एव । तद्धर्मैर्युद्धादिभिर्ज्ञानसाधनेऽभियुक्ताः । द्विविधा अपि जनास्सन्तीत्युक्ते कर्ममार्गस्था ज्ञानमार्गस्थाश्चेति द्वैविध्यं प्रतीयते । तन्निवृत्त्यर्थमाह— **मद्धर्मेति** । ज्ञानमार्गस्था एव । ततश्च मद्धर्मस्था एवः जना द्विविधा अपि सन्तीत्यन्वयः । तत्कथमित्या-काङ्क्षायामुत्तरं वाक्यद्वयम् । साङ्ख्यानां योगिनामिति पदद्वयम् अन्यथाप्रतीतिनिरासाय व्याचष्टे— **साङ्ख्यानामिति** । सम्यक् ख्यातिर्ज्ञानं सङ्ख्या । तत्र भवाः साङ्ख्याः । तेषां, ज्ञानिनाम् । ज्ञाननिष्ठानामित्यर्थः । ननु जनकादयोऽपि ज्ञाननिष्ठाः । तत्कथं योगिन इत्यत आह— **ज्ञाननिष्ठा अपीति** । कर्मयोग्याः गृहस्थादिकर्मयोग्याः । साङ्ख्ययोगशब्दौ प्रसिद्धार्थौ किं न स्यातामित्यतो मुक्तिवचनादिति भावेनाह— **निष्ठेति** । स्थितिः स्वरूपेणेति शेषः । अस्त्वेवं श्लोकार्थः । तथाप्याधिकारिकत्वादिकमत्र न श्रूयत इत्यतोऽध्याहृत्याह— **त्वं त्विति** । सकर्मा गृहस्थादि-कर्मवान् । भवेदिदं व्याख्यानं यदि ते जनाः प्रमिताः स्युर्येषां ज्ञाननिष्ठानामपि गृहस्थादिकर्म-स्वेवाधिकारो न यत्याश्रमकर्मसु । जनकादयस्तु यत्याश्रमं नानुष्ठितवन्त इत्येव प्रमितम् । न तु तत्रानधिकारिण इति तत्राह— **सन्ति हीति** । निवेशितः कर्माधिकारो गृहस्थकर्माधिकारो यस्मिन् स तथोक्तः । प्रियव्रतो हि यत्याश्रमं स्वीचिकीर्षुराधिकारिकत्वयुक्त्या हिरण्यगर्भेण निवारित इत्यनेनोच्यते ॥

*भा०दी०*— **क्रमेणेति** । पूर्वं गार्हस्थ्यं पश्चाद्यत्याश्रमनिष्ठेत्येवं पौर्वापर्यक्रमेणेत्यर्थः । **नोक्ताभिप्राय इति** । इत्याशयवानिति भाष्योक्ताभिप्राय इत्यर्थः । तेन 'तुल्यं क्रिया चेद्वतिः' इति वतिप्रत्यय इति भावेनाह **सनकादिभिरिति** । मद्धर्मस्थ एवेत्यत्र विशेष्याकाङ्क्षायाह **ज्ञानमार्गस्था एवेति** । ते प्रागपि भगवद्धर्मस्थत्वोक्तौ फलमाह **ततश्चेति** । साङ्ख्यानामपि भगवद्धर्मत्वोक्तौ सत्या-मित्यर्थः । अन्यथा प्रतीतिनिन्दितसाङ्ख्ययोगे धीनिरासायेत्यर्थः । निष्ठास्थितिरित्युक्तावपि मुक्त्यर्थ-त्वलाभायाह **स्वरूपेणेति** । **विशेष इति** । 'मुक्तिर्हित्वाऽन्यथारूपं स्वरूपेण व्यवस्थितिरि'ति उक्तेरिति भावः । **इत्यादिकमिति** । अवतारिकायामुक्तकृतमित्यर्थः । **इत्यनेनोच्यत इति** । ईश्वरे-च्छेत्यादिभाष्योक्त पञ्चमस्कन्धवाक्येनेत्यर्थः ॥

*भा०र०*— ननु "यतिधर्मेषु सत्सु युद्धे नियोजनमयुक्तम्" इति पृष्टम् । तत्र "युद्धे नियोजनमयुक्तम्" इत्यस्यैव परिहारः प्रतीयते । न तु यतिधर्मानुष्ठाने हेतुरुच्यत इत्यत आह **अयमत्र इति** । "काम्यान्येव, फलश्रवणाद्" इति प्राक् चोदितत्वात् निषेधति **न शुद्धेति** । अविरोधं घटयितुं 'कर्तुरिच्छया' इत्युक्तम् । **तत्र** युद्धे । **नियोगः** प्रेरणा । **अनधिकारिकाणाम्**

आधिकारिकेतरेषाम् । **तैः** आधिकारिकैः । तेषामपि यत्याश्रमविहितशमदमादिभिरेव ज्ञानसम्पादन-सम्भवात् किं कर्मानुष्ठानेन ? इति चोद्यं परिहर्तुम् 'ईश्वरनियमाद्' इत्युक्तम् ।

ननु "प्रोपाभ्यां युजेरयज्ञपात्रेषु" इत्यात्मनेपदविधिपरे सूत्रे "स्वराद्यन्तोपसृष्टाच्चेति वक्तव्यम्" इति वार्तिककृताऽऽत्मनेपदविधानाद् भाष्ये 'नियोक्ष्ये' इति प्रयोक्तव्यम् । कथं 'नियोक्ष्यामि' इति प्रयुक्तम् ? इत्यत आह **स्वरादीति** । **स्वरः** अच्, आदिरन्तो वा यस्य तादृशेनोपसर्गेण सम्बद्धाद् "युजिर् योगे" इत्यस्माद् धातोरात्मनेपदं वक्तव्यमिति वार्तिकार्थः । **कात्यायनवाक्यं** वार्तिकम् । अनित्यत्वे ज्ञापकम् **अत एवेति** । अनित्यत्वादेवेत्यर्थः । अन्यथा 'प्रोपाभ्याम्' इत्यनुक्त्वा "स्वराद्यन्तोपसृष्टाद् युजेः" इत्येवावक्ष्यत् । अतो वार्तिककारमते परस्मैपदं न साधु इति भावः । उपलक्षणं चैतत् । 'युज पृच संयमन' इति चुरादौ पठितस्य विकल्पितणिच्कस्य युजेर्ग्रहणे लृटि णिचि 'नियोजयिष्यामि' इति रूपमिव णिजभावपक्षे 'नियोक्ष्यामि' इति निष्प्रत्यूहं रूपम् । न चोक्तकात्यायनवचनेनास्मादपि धातोरात्मनेपदं स्यादेवेति वाच्यम् । 'प्रोपाभ्याम्' इति सूत्रे "युजेरितीकारो विवक्षितः" इति हरदत्तवचनात् । चौरादिकस्तु अकारान्त इति न तस्यात्मनेपद-प्राप्तिरित्यपि द्रष्टव्यम् । श्रूयते च बह्वृचब्राह्मणे सप्तमपञ्चके षोडशे खण्डे "तस्य ह विश्वामित्रो होताऽसीत्" इत्युपक्रम्य "शतं दत्त्वाऽहमेनं नियोक्ष्यामि" इति । स्मर्यते चात्रैव गीतायामष्टा-दशाध्याये "मिथ्यैष व्यवसायस्ते प्रकृतिस्त्वां नियोक्ष्यति" (१८.५९) इति ।

**अयमाशय इति** । "इत्याशयवान् भगवान्" इति भाष्योक्तोऽभिप्राय इत्यर्थः । स्फुटप्रती-तिकमप्यक्षरार्थम् अनादृत्य भावभङ्ग्या व्याकुर्वतो भाष्यकारस्य भावमाह **निष्ठेति** । **क्रमेणेति** । एकस्यैव स्वीकृतगार्हस्थ्यस्य पुरुषस्य गृहस्थाश्रमविहितकर्मानुष्ठानानन्तरं यत्याश्रमं स्वीकृत्य शम-दमादिसम्पादनेन निष्ठाद्वैविध्योपपत्तौ "गृहस्थादिकर्मत्यागेन ज्ञाननिष्ठाः, तत्स्था एव ज्ञाननिष्ठाः" इति भाष्योक्तोऽभिप्रायो न लभ्यत इत्यर्थः । एवंविधान् दर्शयति **साङ्ख्या एवेति** । ननु गृहस्थादिसर्वकर्म एव त्यागे ज्ञाननिष्ठैवायुक्ता । कर्मणा ज्ञानमातनोति" इति श्रुत्या कर्मण एव ज्ञानसाधनत्वावेदनाद् इत्यतः भाष्ये गृहस्थादिपदस्वारस्यलब्धमर्थं संयोजयति **यत्याश्रमेति** । यत्याश्रमस्वीकारे पुनर्ज्ञाननिष्ठा न युज्यते । तस्य निष्क्रियत्वपर्यायनैष्कर्म्यरूपत्वाद् इत्यतः गृहस्थादिकर्माभावेन नैष्कर्म्यशब्दसम्भवेऽपि तदाश्रमोक्तकर्मभिर्ज्ञानापादनं भवतीति । 'ज्ञाननिष्ठाः' इति भाष्यार्थमाह **ज्ञानेति** । **कर्मभिः** "..........यतेः स्वीयवित्तेन तु विना सदा । मूलमन्त्रैः सदा स्नानं विष्णोरेव च तर्पणम् । विशेषो निष्क्रिययतेरजलाञ्जलिना तथा" इत्यादिशास्त्रविहित-कर्मभिरित्यर्थः । **ज्ञानसाधने** ज्ञाननिष्पादने । **अभियुक्ताः** आग्रहयुक्ताः । अनेन "ज्ञानजनकनिष्ठा ज्ञाननिष्ठा" इति मध्यमपदलोपी समास इत्युक्तं भवति ।

"तत्र तस्येव" इति सूत्रेण सप्तमीसमर्थात् षष्ठीसमर्थाद् वा इवार्थे वतिप्रत्यय इति प्रक्रिया-स्वीकारे 'ज्ञाननिष्ठाः' इति प्रथमाविभक्त्यनन्वय इत्यतः नात्र उक्तसूत्रेण प्रत्ययः । किन्तु "तेन तुल्यं क्रिया चेद् वतिः" इति वतिप्रत्यये रूपमिति भावेन आह **सनकादिभिरिति** । **एवमिति** । यथा 'सनकादिवत्' इति पदम्, तथा जनकादिभिस्तुल्यं वर्तत इति 'जनकादिवत्' इति पदं व्याख्येय-मित्यर्थः । 'गृहस्थादि' इति भाष्ये सन्निहितगृहस्थवानप्रस्थाद्याश्रम एव तच्छब्देन गृह्यत इति व्याख्याति **तत्स्था एवेति** । "तत्स्था एव ज्ञाननिष्ठाः" इति भाष्ये गृहस्थादिधर्मज्ञानयोर्हेतुहेतु-मद्भावं प्रकटयितुमाह **तद्धर्मैरिति** । **द्वैविध्यं प्रतीयत इति** । तथात्वे च ज्ञानकर्मणोः समुच्चयेन विकल्पेन वा निष्ठाशब्दितमोक्षहेतुत्वापत्त्या "कर्मणा ज्ञानमातनोति" इति श्रुतिव्याकोपः स्यादिति भावः ।

ननु "मद्धर्मस्था एव" इत्यनेनापि स्वविवक्षितभागवतधर्मानुष्ठानतत्परमेव प्रतीयते । तथा च नोक्तद्वैविध्यप्रतीतिनिरास इत्यतोऽर्थमाह **ज्ञानमार्गस्था एवेति** । समानाधिकरणयोर्ज्ञानकर्मणोर्मध्ये सनकादिषु ज्ञानं प्रचुरम्, जनकादिषु कर्म प्रचुरमिति तु वेदितव्यमिति भावः । तथा च तात्पर्य-निर्णये "ज्ञानप्रचुरो योगो ज्ञानयोगः, कर्मप्रचुरोऽन्यः" (गी.ता. ३.३) इति ।

**ततः** अन्वयानन्तरम् । "तत् कथम्" इत्यपि क्वचित् पाठः । **उत्तरं वाक्यद्वयं** "द्विविधा अपि जनास्सन्ति" इति भाष्यवाक्यादुपरितनं "गृहस्थादि" इत्यादिभाष्यवाक्यद्वयम् । उक्ताकाङ्क्षा-शान्तये प्रवृत्तमित्यर्थः । **अन्यथाप्रतीतिः** कापिलपातञ्जलार्थत्वेन प्रतीतिः ।

'ज्ञानिनाम्' इति भाष्यं घटयितुं 'साङ्ख्यानाम्' इति गीतापदं व्युत्पादयति **सम्यगिति** । ख्यातिर्ज्ञानमिति वदन् "दर्शनकर्मा चायम्" इति शाब्दिकवचनम् अनुसन्दधानः सम्पूर्वाच्चक्षिङः "चक्षिङः ख्याञ्" इति ख्याञादेशे 'आतश्चोपसर्गे' इत्यङ्प्रत्यये 'सङ्ख्या' इति रूपमित्यभिप्रैति । इममर्थं घटयितुमाह **तत्रेति** । "तत्र भवः" इति सूत्रेण भवेऽर्थेऽण्प्रत्यये आदिवृद्धौ "यस्येति च" इत्याकारलोपे रूपसिद्धिः । तत्र भवत्वं च तद्वत्त्वं विवक्षितमिति 'ज्ञानिनाम्' इति भाषणं युक्तमिति भावेन तदर्थमाह **ज्ञाननिष्ठानामिति** ।

यत्याश्रमविहितकर्मयोग्यत्वं साङ्ख्यानामप्यस्ति, इत्यतोऽत्राभिप्रेतमाह **गृहस्थादिकर्मयोग्या इति** । **प्रसिद्धार्थौ** कापिलपातञ्जलार्थकौ । 'स्थितिः' इत्युक्तावपि कथं मुक्तिवचनत्वम् । तस्याः साधारणत्वादित्यत आह **स्वरूपेणेति शेष इति** । "मुक्तिर्हित्वाऽन्यथारूपं स्वरूपेण व्यवस्थितिः" (भाग. २.१०.६) इति वचनाद् अत्र स्वरूपेण स्थितिर्मुक्तिरेवेति भावः । "कर्मणा सहितः सकर्मा" इति साधारणतया प्रतीयमानं सकर्मपदं व्याख्याति **गृहस्थादिकर्मवानिति** । ननु जनकादीनामेव

यत्याश्रमकर्मस्वनधिकारः प्रसिद्ध इत्यत आह **जनकादयस्त्विति** । "न तु" इत्यनन्तरं 'तेषाम्' इति योज्यम् । ईश्वरेच्छयैव कर्मकृतः स्वविहितानि कर्माणि निष्कामतयाऽनुष्ठेयानीति ईश्वरनियमात् कर्मकारिण इति भाष्यार्थः स्फुटः ।

ननु भाष्योदाहृतपञ्चमस्कन्धगद्ये प्रियव्रतराजस्य गृहस्थकर्माधिकारमात्रं प्रतीयते । न तु यत्याश्रमविहितकर्मानधिकार इत्यतस्तद्वाक्यतात्पर्यमाह **प्रियव्रतो हीति** ।

**अनेन** "ईश्वरेच्छया विनिवेशितकर्माधिकारः" इति भाष्यगृहीतभागवतपञ्चमस्कन्धाद्याध्याय-वाक्यपूर्वोत्तरसन्दर्भेणेत्यर्थः ।

**कर्मसाध्यत्वमिति** । "न कर्मणामनारम्भान्नैष्कर्म्यं पुरुषोऽश्नुते" इति तद्व्यतिरेकेण तद्व्यति-रेकोक्तेर्मोक्षस्य कर्मकार्यत्वमवगम्यत इत्यर्थः ॥ ३ ॥

***गीताक्षरार्थस्तु***— पूर्वाध्याये आत्मस्वरूपं साङ्ख्याख्यमुक्तम् । तज्ज्ञानोपायश्च "योगे त्विमां शृणु" (२.३९) इति प्रतिज्ञाय "त्रैगुण्यविषया वेदा निस्त्रैगुण्यो भव" (२.४५) इत्यादि-नोक्त्वा "कर्मजं बुद्धियुक्ता हि" (२.५१) इत्यादिना किञ्चिद् विवृतश्च । अत्र पुनस्तृतीयाध्याये स एव कर्मयोगः प्राधान्येन कर्तव्यतया ज्ञाप्यत इति पूर्वोत्तराध्याययोः सङ्गतिर्भाष्यटीकयोः सप्रपञ्चमुक्ता । "दूरेण ह्यवरं कर्म बुद्धियोगाद् धनञ्जय" (२.४९), "कृपणाः फलहेतवः" (२.४९) इत्यादिना कर्मणो बुद्धेरवरत्वमिति भगवतोक्तौ लब्धावसरेणार्जुनेन पृच्छ्यत इत्युच्यते **अर्जुन उवाच— ज्यायसी चेदिति** । **कर्मणः** सकाशाद् **बुद्धिः** आत्मज्ञानं **ज्यायसी चेत्** प्रशस्ततरा यदि जनार्दन ! "न जायतेऽर्दयति च संसारम्" (गी.भा. १०.१८) इति दशमे वक्ष्यमाणरीत्या जनार्दनशब्दार्थः । **ते** तव **मता, तत्** तर्हि **कर्मणि** किमर्थं मां नियोजयसि ? इत्येकः प्रश्नः । तत्रापि **घोरे** रागद्वेषाद्युपेते युद्धाख्ये **कर्मणि** किमर्थं नियोजयसि ? इत्येकः प्रश्नः । तत्रापि **घोरे** रागद्वेषाद्युपेते युद्धाख्ये **कर्मणि** किमर्थं नियोजयसि ? इत्यन्यः ।

इदमुक्तं भवति— "सर्व एते पुण्यलोका भवन्ति" इत्यादौ फलश्रवणेन सर्वकर्मणां काम्य-त्वावगमात्, काम्यानां च बुद्धियोगादवरत्वस्य त्वया प्रागभिधानात्, "हतो वा प्राप्स्यसि स्वर्गम्" (२.३७) इति युद्धस्य स्वर्गफलत्वेन काम्यत्वात्, यत्याश्रमविहितानां शमादीनां फलाश्रवणेना-काम्यत्वात्, "शान्तो दान्तः" इत्युपक्रम्य "आत्मानं पश्येत्" (बृ. ६.४.२४) इति ज्ञानार्थत्व-श्रवणाच्च, यत्याश्रमं स्वीकृत्य तद्धर्मनिष्ठो भवेति नियोक्तव्यम् । न तु काम्यकर्मणि "युद्ध्यस्व भारत" (२.३७) इति नियोजनं युक्तम् ।

ननु "बुद्ध्या युक्तो यया पार्थ कर्मबन्धं प्रहास्यसि" (२.३९) इति बुद्धिपदोक्तयुद्धाख्य-कर्मणोऽपि ज्ञानार्थत्वमुक्तमिति मतम्, तदा **व्यामिश्रेण वाक्येन बुद्धिमोहनमिवाऽपाद्यते**। अथैवं मतं कामिनो युद्धं स्वर्गाद्यर्थकम्, अकामिनस्तु ज्ञानार्थमिति का व्यामिश्रता ? इति । तथाऽपि शुद्धेषु निवृत्तलक्षणेषु यत्याश्रमधर्मेषु सत्सु वैकल्पिकेषु नियोजनमयुक्तमेव । तत्र मनोविक्षेपाभावाद् अत्र तद्भावादिति । किञ्च कामक्रोधादीनां नरकफलत्वं सर्वसिद्धम् । युद्धे च कामादयोऽवर्ज-नीयाः । ततोऽपि तत्र नियोजनमयुक्तम् । नन्वस्योत्तरं "सुखदुःखे समे कृत्वा" (२.३८) इत्यु-क्तम् । सत्यम् । तथाऽपि, रागादिप्रसक्तिहीनेषु शक्यानुष्ठानेषु **यतिधर्मेषु** सत्सु अशक्यानुष्ठाने युद्धे नियोजनमयुक्तमेवेति॰। उत्तरार्धस्तु स्पष्टः ।

यद्यप्याश्रमत्रयविहितानि यज्ञादीनि युद्धादीनि च सर्वकर्माणि काम्याकाम्यभेदेन काम्यानि, अकाम्यानि चेति वैकल्पिकानि । यतिधर्माः शमादयस्तु केवलमकाम्याः, युद्धमिव नरकाद्यनर्थहेतु-रागद्वेषाद्युपेताश्च न भवन्ति । तथाऽपि तेषामनधिकारिकविषयत्वात्, तव च जनकप्रियव्रतादेरिव आधिकारिकत्वात् "सुखदुःखे समे कृत्वा" (२.३८) इत्युक्तदिशा भगवद्भक्त्या स्वधर्मत्वेनानुष्ठाने पापानवाप्तेः, वैकल्पिकेऽपि युद्धकर्मण्येव त्वं नियोज्य इति भावेन "श्रेयान् स्वधर्मो विगुणः" (३.३५) इति द्वितीयप्रश्नं प्रतिवक्ष्यता आद्यप्रश्नप्रतिवचनं भगवतोच्यते "**लोकेऽस्मिन् द्विविधा निष्ठा**" इति । **अस्मिन् लोके** साधकवर्गे **निष्ठा** स्वरूपेणावस्थितिः मुक्तिरिति यावत् **द्विविधा** द्विप्रकारसाधनसाध्या **पुरा** पूर्वम् "कर्मण्येवाधिकारः" (२.४७) इत्यादाविति **प्राचीनटीका**। **मया प्रोक्ता**। कथम् ? **साङ्ख्यानां** सम्यक् ख्यातिः ज्ञानं सङ्ख्या । तत्र भवाः साङ्ख्यास्तेषां ज्ञान-निष्ठानां देवानां सनकादियतीनां च **ज्ञानयोगेन** ज्ञानप्रचुरोपायेन स्थितिः । योगिनां कर्मरूपोपाय-वतां **कर्मयोगेन** कर्मप्रचुरोपायेन निष्ठा । 'योगिनाम्' इत्यनन्तरम् 'इति'शब्दोऽध्याहार्यः । इदमुक्तं भवति— भगवज्ज्ञानिनामपि न ज्ञानमात्रेण स्वयोग्ययावदानन्दानुभवरूपमुक्तिः । अपितु कर्मसह-कृतेनैव । तत्र केचन सनकादयो यतयः यज्ज्ञानकर्मणोर्मध्ये ज्ञानप्रचुराः सन्तो मुक्तिभाजः । केचि-ज्जनकप्रियव्रतादयो गृहस्थाः स्वगतज्ञानकर्मणोर्मध्ये प्रचुरकर्मणा एव मुक्तिभाजो भवन्ति । आधि-कारिकतया तथैव भगवता क्लृप्तत्वात् । त्वमप्याधिकारिकतया कर्माणि नियोज्य एवेति ॥ ३ ॥

**गीता**

**न कर्मणामनारम्भान्नैष्कर्म्यं पुरुषोऽश्नुते ।**
**न च संन्यसनादेव सिद्धिं समधिगच्छति ॥ ४ ॥**

***वि०वि०*— किञ्च कुतः कर्म न कर्तव्यम् । कर्माकरणस्य मोक्षसाधनत्वादिति चेत् । तत् किं मोक्षो नैष्कर्म्यशब्दवाच्य इत्येवमुच्यते उत कर्माकरणे कर्ममूलसंसारो न भवतीति । आद्यं दूषयति **न कर्मणामिति** । कर्मणां युद्धादीनामनारम्भान्नैष्कर्म्यं मोक्षं नाश्नुते । काम्यकर्मपरित्यागेन प्राप्यत इति नैष्कर्म्यशब्दवाच्यत्वमन्यथाप्युपपद्यत इति भावः । कर्माभावसाध्यत्त्वेन नैष्कर्म्यशब्द-वाच्यत्वं किं न स्यादित्याशङ्क्याह **पुरुष इति** । सर्वदा स्थूलेन सूक्ष्मेण वा पुरेण युक्तो जीवः यदि तस्य कर्माकरणेन मुक्तिः स्यात्तदाऽनधिकारिणामपि स्यात्ततश्च तस्यानादौ संसारेऽनधिकृतदेहस्य सम्भवेन मुक्तिप्रसङ्गादधुनाऽपि दृश्यमानस्य पुरुषत्वं न स्यादिति भावः । द्वितीयेऽप्येतदेवोत्तरं **न कर्मणामिति** । इदानीमकरणेऽपि पुरुषत्वेनानादौ संसारेऽधिकृतानन्तजन्मसम्भवात् तत्र कृताना-मनन्तकर्मणां भावादनन्तत्वेन भोगेन क्षयाभावाच्च किमद्य अकरणमात्रेण भवतीति भावः। उक्तं च–

'जीवंश्चतुर्दशादूर्ध्वं पुरुषो नियमेन तु ।
स्त्रीवाऽप्यनूनदशकं देहं मानुषमार्जते ॥

चतुर्दशोर्ध्वजीवीनि संसारश्चादिवर्जितः ।
अतोऽविदित्वा परं देवं मोक्षाशा का महामुने ॥' इति ।

ननु—

'निष्कामं ज्ञानपूर्वं च निवृत्तमिति चोच्यते ।
निवृत्तं सेवमानस्तु ब्रह्माभ्येति सनातनम् ॥'

इति निष्कामकर्मणा मोक्षः स्मृतः । तत्र फलाभाव एव उपपत्तिः । ज्ञानस्य श्रवणादि-जन्यत्वात् । अतोऽकरणेऽपि फलाभावस्य साम्यात् किं कर्मकरणायासेनेत्यत आह **न चेति** । सन्यसनं काम्यकर्मत्यागः । 'काम्यानां कर्मणां न्यासं संन्यासं कवयो विदुः' इति वक्ष्यमाण-त्वात् । तेन च निष्कामकर्मकरणमुपलक्ष्यते । सन्यसनान्निष्कामकर्मकरणात् । सिद्धिं मोक्षम् । न समधिगच्छति । किन्तु सत्वशुध्यादिद्वारा ज्ञानमेव प्राप्नोति । अतो न तत्प्रतिबन्दिग्रहणं युक्तमिति भावः । ननु यत्याश्रमो मोक्षसाधनत्वेन श्रुत्यादिप्रसिद्धः । तत्र चेयमेवोपपत्तिः । यतिधर्माणां फलाभावः । अतस्तत्साम्यादकरणेऽपि मोक्षो भविष्यतीत्याशङ्कानिरासार्थं चोक्तं **न चेति** । सन्यसनादेवेति चित्तशुद्धिवैराग्यश्रवणादिजन्यज्ञानशून्यादाश्रममात्रादित्यर्थः । अनधिकारिणां प्रायत्यार्थो यत्याश्रमः । अन्येषां त्वधिकारावस्थायामपि प्रायत्यस्य सत्वाद्विशेषलाभाय विधीयते । तदुक्तम्—

'देवादीनामादिराज्ञां महोद्योगेऽपि नो मनः ।
विष्णोश्चलति तद्धोगोऽप्यतीव हरितोषणम् ॥' इति ॥

***वा०ल०***— 'न कर्मणामनारम्भान्नैष्कर्म्यं पुरुषोऽश्नुते' इत्यत्र नैष्कर्म्यं निष्कर्मणां योग्यं ज्ञानम् । अनारम्भात् विष्णुप्रीत्यर्थमारम्भाभावात् ॥

***सा०सं०***— यतिधर्माः शमादय एवानुष्ठेयाः न तु गृहिधर्माः । (तत्रापि न घोरं युद्धकर्मेति एवानुष्ठेयाः नतु गृहिधर्माः ।) तत्रापि न घोरं युद्धकर्मेति वादिनं पार्थं प्रति तव जनकादेरिवाधिकारिकत्वात् वर्णाश्रमोचिताः धर्मास्त्वयाऽनुष्ठेया एवेत्युक्तम् । इदानीं कर्म न कार्यमिति वदतः किं कर्माकरणप्राप्यत्वहेतुना मुक्तेर्नैष्कर्म्यशब्दवाच्यत्वात् तदन्यथाऽनुपपत्त्या कर्म न कार्यमित्यभिप्रायः, उत कर्मणः संसारबीजत्वात्, तदकरणं मुक्तिहेतुरिति । 'कर्मणा बध्यते जन्तुः' इति स्मृतेः कर्मणो मुक्तिप्रतिबन्धकत्वाद्वा । आद्यं निराह **नेति** । **कर्मणामनारम्भात्** अकरणात्, **नैष्कर्म्यं** कर्माकरणप्राप्यत्वहेतुना नैष्कर्म्यशब्दवाच्यं मोक्षम् **अश्नुते** इति यत् त्वयोक्तम्, तत् **न** भवति । कुत इत्यत उक्तम् **पुरुष इति** । पुराणि शरीराणि सरति प्राप्नोतीति पुरुसः । पुरुस एव पुरुषः । हेतुगर्भमिदम् । सदा सूक्ष्मेण स्थूलेन वा देहेन युक्तत्वादिति । कर्माकरणमात्रेण मोक्ष इति पक्षे कदाचित् कर्मानधिकारिशरीरस्यापि सम्भवेन तद्देहे कर्माकरणनिमित्तमोक्षप्राप्त्याऽधुना दृश्यमानं पुरुषत्वं न स्यादिति भावः । नैष्कर्म्यशब्दवाच्यत्वं तु काम्यकर्माप्राप्यत्वनिमित्तेनोपपन्नम् । मया तु निवृत्तकर्मण्येव नियोगः क्रियत इति भावः ।

द्वितीयमपि निराह **नेति** । **कर्मणामनारम्भात्** अकरणात् । **नैष्कर्म्यं** काम्यकर्माप्राप्यं मोक्ष**मश्नुते,** संसारबीजभूतकर्माभावादिति त्वयोक्तं यत्, तन्न । कुतः **पुरुष** इति । प्राग्वदेवार्थः । अनादौ संसारे कर्माधिकृतानन्तजन्मसम्भवेन सदा पुरुषशब्दितदेहयुतत्वात् तत्र कृतानन्तकर्मणां भावेनाद्यतनदेहावच्छेदेन कर्माकरणमात्रेण संसारबीजाभावकृतमोक्षाशा कुतः स्यादिति भावः । तृतीयपक्षनिरासस्तु 'यज्ञार्थात् कर्मणोऽन्यत्र' इत्यादौ वक्ष्यते ।

ननु ''निष्कामं ज्ञानपूर्वं तु'' इति स्मृतौ निवृत्तकर्मणा मोक्ष उच्यते । तस्य मोक्षहेतुत्वे फलान्तराभाव एव युक्तिर्न त्वन्या । तथा च कर्माकरणस्यापि फलान्तराभावरूपयुक्तिसाम्यात्, आयासाभावरूपगुणवत्त्वाच्च, कर्माकरणादपि मोक्षः स्यात् । 'एवं त्वयि नान्यथेतोऽस्ति' (महा. ना.उ.) इत्यादौ श्रुतः कर्माकरणे प्रत्यवायस्तु अमुमुक्षुविषयतयोपपन्न इत्यत आह **न चेति** । **संन्यसनात्** काम्यकर्माकरणादेव, तन्मात्रादिति यावत् । अनेन निवृत्तिकर्मकरणमुपलक्ष्यते । निवृत्तकर्मकरणमात्रात् **सिद्धिं** मोक्षं **पुरुषो न समधिगच्छति** न प्राप्नोति । किन्तु तेनान्तःकरणशुद्धिविषयवैराग्यश्रवणमननध्यानज्ञानद्वारैव । 'निवृत्तं सेवमानस्तु ब्रह्माभ्येति' इति स्मृतेरप्ययमेवाभिप्रायः । तथा च न तत्प्रतिवन्द्या कर्माकरणस्य मोक्षहेतुत्वं शङ्क्यमिति भावः ।

ननु यत्याश्रमधर्माणां श्रुत्यादिसिद्धे मुक्तिहेतुत्वे फलान्तराभाव एव युक्तिरिति, तत्प्रतिबन्ध्याऽस्तु कर्माकरणस्य मुक्तिहेतुत्वमित्यतोऽप्युक्तम् **न चेति** । **संन्यसनात्** यत्याश्रमादेवेत्यर्थः । स तु भगवति मनःसमाधानद्वारा (तत्प्रतीतिविशेषद्वारा) वा मुक्तिहेतुर्न फलान्तराभाववत्त्वहेतुना । येन तत्प्रतिबन्ध्याऽपि फलान्तराभावयुक्त्या कर्माकरणस्य मुक्तिहेतुत्वं शङ्क्येतेति । एतेन 'लोके' इति पूर्वश्लोकोक्तदिशा न केवलमाधिकारिकत्वात् तव कर्मणि नियोगः, अपि तु कर्माकरणस्य त्वदुक्तरीत्या मुक्तिहेतुत्वाभावादपीति हेत्वन्तरमुक्तं भवति ॥

***अ०प्र०***— पुरुषः[१], कर्मणां[२], अनारम्भात्[३], नैष्कर्म्यं[४], नाश्नुते[५], संन्यसनादेव[६], सिद्धिं[७], न च समधिगच्छति इत्यन्वयः ।

उत संसारस्य कर्ममूलत्वात् कर्माकरणे बीजाभावात् स न भवतीति अयं दर्शयति **न कर्मणामिति** ॥ पुरुषः = पुरु शेत इति तथा यद्वा यदा स्थूलेन सूक्ष्मेण वा पुरेण शरीरेण युक्तो जीवो हि पुरुषः[१], कर्मणां = विहितयुद्धादीनां[२], अनारम्भात् = अननुष्ठानात् अकरणाद्वा[३], नैष्कर्म्यं = ज्ञानं यद्वा निर्गतं कर्म यस्मात्स निष्कर्मा तस्य भावो नैष्कर्म्यं मुक्तिः काम्यकर्मवता पुंसा न प्राप्यत इति अन्यथोपपत्तेः नैष्कर्म्यशब्दवाच्यत्वस्येति भावः[४] । नाश्नुते न प्राप्नोति । ननु च, ''एवमेव प्रव्राजिनो लोकमीप्सतः प्रव्रजन्ती''ति संन्यासस्य मोक्षाङ्गत्वश्रुतेः संन्यासादेव मोक्षो भविष्यति किं कर्मभिरित्याशङ्क्योक्तं न च चित्तशुद्धिं विना कृतात् संन्यसनादेव ज्ञानशून्यात्[५], संन्यसनादेव काम्यकर्मत्यागादेव[६], सिद्धिं = मोक्षं[७], न च समधिगच्छति = नाप्नोत्येव[८], अतो न तत्प्रतिबन्धीग्रहणं युक्तमिति भावः । संन्यसनादेव न साक्षान्मोक्षः किन्तु सत्त्वशुद्धिवैराग्यादिद्वारकज्ञानद्वारकान्मोक्षो भवतीत्येवकारेणाह ॥ ४ ॥

### भाष्यम्

**इतश्च नियोक्ष्यामीत्याह— न कर्मणामिति । न कर्मणां युद्धादीनां अनारम्भेण नैष्कर्म्यं निष्कर्मतां काम्यकर्मपरित्यागेन प्राप्यते इति मोक्षं नाश्नुते । ज्ञानमेव तत्साधनं, न तु कर्माकरणमित्यर्थः । कुतः ? पुरुषत्वात् । सर्वदा स्थूलेन सूक्ष्मेण वा पुरेण युक्तो ननु जीवः । यदि कर्माकरेण मुक्तिः स्यात् स्थावराणाम् । न च अकरणे कर्माभावान्मुक्तिर्भवति । प्रतिजन्मकृतानां अनन्तकर्मणां भावात् । न च सर्वाणि कर्माणि भुक्तानि । एकस्मिन् शरीरे बहूनि हि कर्माणि करोति । तानि चैकैकानि बहुजन्मफलानि कानिचित् । तत्र चैकैकानि**

**कर्माणि भुञ्जन् प्राप्नोत्येव शेषेण मानुष्यम् । ततश्च बहुशरीरफलानि कर्माणीति असमाप्तिः । तच्चोक्तं—**

> **"जीवंश्चतुर्दशादूर्ध्वं पुरुषो नियमेन तु ।**
> **स्त्री वाऽप्यनूनदशकं देहं मानुषमार्जते ।**
> **चतुर्दशोर्ध्वजीवीनि संसारश्चादिवर्जितः ।**
> **अतोऽवित्त्वा परं देवं मोक्षाशा का महामुने ।"**

**—इति ब्राह्मे ॥**

**यदि च सादिः स्यात्संसारः पूर्वकर्माभावादतत्प्राप्तिः । अबन्धकत्वं तु अकामेनैव भवति । तच्च वक्ष्यते 'अनिष्टमिष्टं' इति ।**

***प०टी०***— उत्तरश्लोकमवतारयति **इतश्चेति** । (किं) युद्धादेर्ज्ञानसाधनत्वाभावे तत्राप्रवृत्तिः ? किं वा ज्ञानं न मोक्षसाधनम्, किन्तु कर्माकरणमेव, मोक्षस्य नैष्कर्म्यरूपत्वात् ? नाद्यः । युद्धादेरधिकारिभेदेन ज्ञानसाधनत्वस्योक्तत्वात् । द्वितीयं दूषयति **कर्मणामिति** । कुतः कर्माकरणे न मुक्तिः ? इत्याशङ्क्याह **कुत इति** । ननु सर्वदा पुरुषत्वे कुतो न कर्माकरणेन मोक्षः ? इत्यत आह **यदीति** । यदि कर्माकरणेन मुक्तिः, तर्हि जीवस्यानादिसिद्धं पुरुषत्वं न स्यात् । स्थावरशरीरे कर्माकरणसम्भवादित्यर्थः । स्यादेव स्थावराणां मोक्षः, अकरणे बन्धकाभावादित्यत आह **न चेति** । पूर्वकर्माणि स्थावरशरीरे भुक्तानीत्यत आह **न चेति** । बहून्यपि स्थावरशरीरे भुक्तानीत्यत आह **तानि चेति** । बहुशरीरफलकर्माण्यपि बहुस्थावरशरीरैर्भुक्त्वा मुक्तिरित्यत आह **तत्र चेति** । मानुष्यकर्माकरणे मुक्तिः स्यादित्यत आह **ततश्चेति** । तत्र प्रमाणमाह **तच्चेति** । संसारानादित्वं च युक्त्या साधयति **यदीति** । ननु ज्ञानान्मोक्षपक्षेऽपि बन्धनिवृत्त्यर्थं कर्म त्याज्यमेवेत्यत आह **अबन्धकत्वमिति** । काम्यमेव त्याज्यं न विहितमित्यर्थः ।

***न०टी०***—कर्माकरणमात्रेण मुक्त्युनुपपत्तेरपि त्वया स्ववर्णाश्रमोचितं नित्यकर्मानुष्ठेयमिति भावेनोत्तरमर्धमवतारयति **इतश्चेति** । यद्यपि 'निष्कर्मतया प्राप्यत इति नैष्कर्म्यम्' इति नैकर्म्यशब्दबलात् कर्माकरणेन मोक्षः शक्यते । तथाऽपि 'काम्यकर्मपरित्यागेन स प्राप्यते' इति युद्धादिनित्यकर्मणामनारम्भेण मोक्षं न प्राप्नोति । तेषामन्तःकरणशोधकत्वेन ज्ञानहेतुवैराग्यजनकत्वात्, तस्यैव मुक्तिहेतुत्वादिति भावेन तं व्याचष्टे **कर्मणामिति** । कर्माकरणमात्रेण मुक्तिः कुतो न ?

इत्याकाङ्क्षापूर्वकं पुरुषपदं तदुत्तरत्वेनावतार्य व्याचष्टे **कुत इत्यादिना** । एतावन्तं कालं स्थावर-जङ्गमात्मकस्थूलदेहप्रवाहान्वितत्वात्, सततं लिङ्गदेहान्वितत्वाद्वा, न कर्माकरणं मुक्तिहेतुरिति भावः । नन्वेतावन्तं कालममुमुक्षुत्वात् तदन्यभोगाय कर्मकरणादमुक्तिरित्याशङ्क्य, मुमुक्षुत्वेऽपि स्थावराणां कर्माकरणसम्भवात् तेषां मुक्तिः स्यादिति भावेनाह **यदीति** । स्यादित्युभयतः सम्ब-ध्यते । ततो न ज्ञानाद्विना मुक्तिरिति भावः । नन्वतीतजन्मादृष्टं भोगेन क्षपयतां पुनरकरणे, कर्मा-भावात् मुक्तिः स्यादेव स्थावराणामपि, को दोषः ? इत्यत आह **न चेति** । नन्वतीतजन्मा-दृष्टस्योत्तरोत्तरजन्मन एव क्षपणात्, कथमनन्तकर्मसम्भवः ? इत्यत आह **न च सर्वाणीति** । ननु करोत्येकेनैव देहेन बहुकर्माणि । तेषामेकेनैव जन्मना भोगः किं न स्यात् ? इत्यत आह **तानि चेति । कानिचिदिति** । विशेषणादेकैकजन्मफलान्यपि कानिचिदिति भावः । ननु यदि कथञ्चित् तिर्यगादिफलान्येव तानि सर्वाणि **तर्त्तर्हि** तत्र पुण्यपापाभावात्, तद्भोगावसाने मुक्तिः स्यादित्यत आह **तत्र चेति** । **च**शब्दात् मानुष्यफलान्येव कानिचित् कर्माणीत्यर्थः । ननु भवतु दोषेण प्राधान्येन मानुष्यम् तत्राकरणे पुण्यपापयोस्तदन्ते मुक्तिः किं न स्यात् ? इत्यत आह **ततश्च इति** । तत्रावश्यं बहुशरीरफलकर्माणि करोति, अतो न ज्ञानं विना मुक्तिरिति भावः । तत्र प्रमाणमाह **तच्चेति** । संसारस्यादिमत्वे द्वित्र्यादिवर्षजीवानां कतिपयजन्मभिः पूर्वकर्मक्षये पुनः कर्माकरणादेव कथञ्चिन्मुक्तिशङ्का स्यादिति तन्निवृत्तये तत्कर्म बाधितं चेत्याह **यदि चेति** । ननु भवतु नाम मुमुक्षोः तज्जन्मनि कर्माकरणेऽपि जन्मान्तरकृतानन्तकर्मबद्धत्वात् तन्निवृत्तिर्ज्ञानादेवेति तदर्थं प्रयत्नः । तथाऽपि पुनरबन्धाय कर्मणां युद्धादीनामनारम्भ एव स्यादित्यत आह **अबन्धकत्वं त्विति** । अतः कामत्याग एव मुमुक्षुभिः कार्यो न कर्मत्यागः ।

***प्र०दी०***— 'न कर्मणाम्' इति मोक्षस्य कर्मसाध्यत्वमुच्यत इत्यन्यथाप्रतीतिनिरासायाह— **इतश्चेति** । स्ववर्णाश्रमोचिते युद्धादाविति शेषः । प्रागाधिकारिकत्वात्त्वया कर्म कर्तव्यमित्युक्तम् । इदानीं कोऽपरो हेतुरुच्यत इत्यतो व्याचष्टे— **कर्मणामिति** । अयमभिप्रायः । कर्माणि न कार्याणीति वदन् प्रष्टव्यः । किं ज्ञानं न मोक्षसाधनम् । अपि तु कर्माकरणमेवेति मत्वा कर्माणि त्यज्यन्ते । उत ज्ञानं मोक्षसाधनं भवत्येव । किन्तु 'कर्मणा बध्यते जन्तुः' इत्यादेः कर्माणि तत्प्रतिबन्धकानीति मत्वा । आद्येऽपि किं मोक्षस्य नैष्कर्म्यशब्दवाच्यत्वमात्रमाश्रित्येदमुच्यते । अथवा क्रियाकारकफलरूपस्य संसारस्य कर्मैव बीजम् । अकरणे च बीजाभावात्संसारो न भविष्यतीति युक्तिमाश्रित्य । आद्यस्य दूषणं **न कर्मणामिति** । नैष्कर्म्यशब्दस्यान्यथापि व्याख्याना-न्नाद्य इत्यर्थः । ततः किमित्यत आह— **ज्ञानमेवेति** । उक्तमाक्षिप्य समाधत्ते— **कुत इति** ।

नैष्कर्म्यशब्दस्यान्यार्थतामङ्गीकृत्य कर्माकरणस्य मोक्षसाधनत्वनिराकरणे को हेतुरित्यर्थः । कथमस्य हेतुत्वमित्यतो व्याचष्टे— **सर्वदेति** । प्रलयेऽपि सम्भवार्थं स्थूलेन सूक्ष्मेण वेत्युक्तम् । तथापि कथं हेतुत्वमित्यत आह— **यदीति** । 'स्यात्' इत्यस्य पूर्वोत्तराभ्यां सम्बन्धः । 'स्थावराणां' इत्यनधिकृतोपलक्षणम् । ततश्चानादौ संसारेऽनधिकृतदेहस्य सम्भवेन मुक्तिप्रसङ्गादधुनापि दृश्यमानं पुरुषत्वं न स्यादिति भावः । द्वितीयनिरासेऽप्यस्यैवार्थस्य तात्पर्यमाह— **न चेति** । कर्माभावात्संसारबीजाभावात् । अत्र नैष्कर्म्यमिति मुक्तिनामैव । न तु परप्रमाणानुवादः । कुतो न भवतीत्यतोऽत्रापि पुरुषत्वादिति हेतुमभिप्रेत्याह— **प्रतीति** । जन्मनि जन्मनि कृतानामित्यर्थः । पुरुषत्वेनानादौ संसारेऽधिकृतानन्तजन्मसम्भवात् तत्र कृतानामनन्तकर्मणां भावात् किमद्य अकरणमात्रेण भवतीत्यर्थः । ननु पूर्वपूर्वशरीरकृतानि कर्माण्युत्तरोत्तरशरीरे भुक्तानि । तत्कुतोऽनन्तकर्मणां भाव इत्यत आह— **न चेति** । कुतो नेत्यत आह— **एकस्मिन्निति** । हिशब्दो हेतौ । बहून्यपि भुज्यतां को दोष इत्यत आह— **तानि चेति** । तानि च कानिचिदिति सम्बन्धः । **एकैकानीति** । प्रत्येकमित्यर्थः । तथाविधान्यप्यनधिकृतजन्मभिर्भुक्तानीत्यत आह— **तत्र चेति** । तेषु कर्मसु । भुञ्जन् भुञ्जानः । शेषेण कर्मशेषेण । मानुष्ये चाकरणमसम्भावितमित्याह— **ततश्चेति** । असमाप्तिर्भोगेनैव कर्मणामिति शेषः । सम्भावनामात्रेणेदमुदितं न तु प्रमितमित्यत आह— **तच्चेति** । चतुर्दशाद्वर्षात् । अनूनो दशको यस्येति विग्रहः । ह्रस्वदीर्घव्यत्ययेन 'चतुर्दशोर्ध्वजीविनी' इति स्त्रिया विशेषणम् । संसारश्चेति कर्मणामनन्तत्वोपपादनम् । अतो भोगेन क्षयासम्भवात् । अवित्त्वा अविदित्वा । पुरुषशब्देनानादिदेहसम्बन्ध उक्तः । सोऽसिद्ध इत्यत आह— **यदीति** । अतत्प्राप्तिराकस्मिकस्य संसारस्याप्राप्तिः स्यात् । अतः पुरुषत्वं सिद्धमिति । ननु सन्तु प्राग्भवीयान्यनन्तकर्माणि । तथापि बन्धकानि कथं प्रेक्षावता क्रियेरन् । न ह्यनन्तानि पापानि प्राक्तनानि सन्तीत्येतावताऽद्य क्रियन्त इत्यत आह— **अबन्धकत्वं त्विति** । कर्मणां बन्धाहेतुत्वं त्वकामादिनैव भवति । न त्वकरणेन । प्रत्यवायस्यैव प्राप्तेरित्यर्थः । अकामेऽबन्धकत्वं भगवत्सम्मतमिति भावेन आह— **तच्चेति** ।

सङ्करस्त्वकरणमसन्न सन्तं प्रत्यवायं जनयति । 'कथमसतस्सज्जायत' इति श्रुतेरित्यवादीत् । तद्भास्करः प्रत्यषेधीत् । द्रव्यविषया श्रुतिः । गुणस्त्वसतोऽपि जायत इति । उभावपि स्थूलदृश्वानौ । न ह्यकरणमसत् । तथा सति करणप्रसङ्गात् । किन्त्वभावः । स च भाववत्तत्वमेवेति कथमकरणम् । गुणं प्रति कारणत्वे च द्रव्यकारणत्वं कुतो न भवेत् । न ह्यत्रोपादानत्वं विवक्षितम् । किन्तु निमित्तत्वमेवेत्यलम् ।

*भा०दी०*— **कथमिति** । पुरुषत्वादित्यस्येत्यर्थः । स्थावराणां चेत्यन्वयप्रतीत्यर्थमाह **स्यादित्यस्येति** । **अनधिकृतेति** । कर्माधिकारशून्यदेहवन्मात्रोपलक्षणमिति । तेषामपि कर्मा-करणसत्त्वेनापादनसम्भवादिति भावः । **अस्यैवार्थस्येति** । न कर्मणामित्यर्थस्येत्यर्थः । **अत्र नैष्कर्म्यमितीति** । अस्मिन् द्वितीयपक्षे गीतायां नैष्कर्म्यमिति मुक्ते नाममात्रं न तु नैष्कर्म्य-शब्दवाच्यत्वान्यथानुपपत्तिपूर्वपक्ष्यभिमतप्रमाणानुवाद इत्यर्थः । वीप्सायामव्ययीभाव इति भावेनाह **जन्मनि जन्मनीति** । **पुरुषत्वेनेति** । शरीरयुक्ततया पुरुषत्वेनेत्यर्थः । **अधिकृतेति** । अधिकार इत्युक्तेत्यर्थः भुञ्जन्नित्यस्यावन्नित्यर्थः । प्रतीतिनिरासायाह **भुञ्जान इति** । भुञ्जानो न वा न इत्युक्तात्मात्मनेपदस्याभावः छान्दस इति भावः । **पुरुषत्वमिति** । पुरुषशब्दितानेकदेहयुतत्वं सिद्धमित्यर्थः । **तच्चेतीति** । 'अनिष्टमिष्टं मिश्रं च त्रिविधं कर्मणः फलम् । भवत्यत्यागिनां पार्थ न तु संन्यासिनां क्वचिदि'त्यष्टादशाध्याये युक्तमिति भाष्यार्थो ज्ञेयः । तृतीयपक्षनिरासस्तु 'यथार्था-त्कर्मणोऽन्यत्र' इति श्लोके भविष्यतीति भावः । **सङ्करस्त्विति** । मायावादीत्यर्थः । **तथा सति इति** । कारणाभावस्य असत्त्वे भावप्रतियोगित्वे सति इत्यर्थः । अभावाभावस्य भावत्वनियमादिति भावः । कथमसतो द्रव्योपादानत्वमित्यत आह **न हि अत्रेति** ।

**भाष्यम्**

**ननु निष्कामकर्मणः फलाभावान्मोक्षः स्मृतः—**

**"निष्कामं ज्ञानपूर्वं तु निवृत्तमिति चोच्यते ।**
**निवृत्तं सेवमानस्तु ब्रह्माभ्येति सनातनम् ।" —इति मानवे ॥**

**अतः तत्साम्यात् अकरणेऽपि भवतीत्यत आह— 'न चे'ति । संन्यासः काम्यकर्मपरित्यागः । "काम्यानां कर्मणां" इति वक्ष्यमाणत्वात् । अकामकर्मणा-मन्तःकरणशुद्ध्या ज्ञानान्मोक्षो भवति । तच्चोक्तम् "कर्मभिः शुद्धसत्त्वस्य वैराग्यं जायते हृदि ॥" इति भागवते । विरक्तानामेव च ज्ञानमुक्तम्—**

**"न तस्य तत्त्वग्रहणाय साक्षाद्**
**वरीयसीरप वाचः समासन् ।**
**स्वप्ने निरुक्त्या गृहमेधिसौख्यं**
**न यस्य हेयानुमितं स्वयं स्यात् ॥"**

**—(भाग. ५-११-३) इति ।**

**न तु फलाभावात् । कर्माभावात् । अतो न कर्मत्याग एव मोक्षसाधनम् । यत्याश्रमस्तु प्रायत्यार्थो भगवत्तोषणार्थश्च । अप्रयतत्वमेव हि प्रायो गृहस्थादीनाम् । इतरकर्मोद्योगात् । अप्रयतानां च न ज्ञानम् । तथा हि श्रुतिः– "नाशान्तो नासमाहितः" (कठ. २-२३) इति । महांश्च यत्याश्रमे तोषो भगवतः । तथा ह्याह "यत्याश्रमं तुरीयं तु दीक्षां मम सुतोषिणीम् ।" इति नारायणाष्टाक्षरकल्पे । आधिकारिकास्तु तत्स्था एव प्रायत्ये समर्थाः । स एव च महान् भगवतस्तोषः । तच्चोक्तम्—**

**"देवादीनामादिराज्ञां महोद्योगेऽपि नो मनः ।**
**विष्णोश्चलति तद्योगोऽप्यतीव हरितोषणम् ॥"**

**—इति पाद्मे ॥ ४ ॥**

*प०टी०*— ननु निष्कामकर्मणा मोक्षः स्मर्यते 'निष्कामम्' इति । स च तस्य फलाभावादबन्धकत्वाभिप्रायेणैव भवेत् । न ज्ञानसाधनत्वेन । ज्ञानस्य श्रवणादिनाऽपि सम्भवात् । अतः कर्माकरणेऽपि फलाभावसाम्यात् तदेव वरमित्याशङ्क्य, उत्तरत्वेनोत्तरार्धमवतार्य व्याचष्टे **नन्विति** । श्लोकाभिप्रायमाह **अकामेति** ! ज्ञानस्य श्रवणादिनाऽपि सम्भवात् किमनेन ? इत्यत उक्तम् **अन्तःकरणेति** । कर्मणाऽन्तःकरणशुद्धिद्वारा ज्ञानं भवतीत्यत्र प्रमाणमाह **तच्चेति** । कर्मणा विरक्तिः श्रूयते न ज्ञानमित्यत आह **विरक्तानामेव चेति** । अकामकर्मणाम् इत्यस्य व्यावर्त्यमाह **न तु इति** । ततश्च किम् ? इत्यत आह **कर्मेति** । अतो दृष्टान्ताभावात्, न कर्माभावात्, इत्यर्थः । श्लोकार्थमुपसंहरति **अत इति** । कर्मत्यागस्य मोक्षसाधनत्वाभावे कथं यत्याश्रमाश्रयणम् ? इत्यत आह **यत्याश्रमस्त्विति** । न पुनर्मोक्षसिद्धये कर्मन्यासार्थमित्यर्थः । **प्रायत्यं** हरौ मनोनियमनम् । प्रायत्यस्यान्यत्रापि सम्भवान्न तदर्थं संन्यास इत्यत आह **अप्रयतत्वमिति** । भवेद्यज्ञादिनाऽप्रयतत्वम् । किं तेन ? इत्यत आह **अप्रयतानामिति** । भगवत्प्रसादस्याश्रमान्तरेऽपि सम्भवात् किं यत्याश्रमेण ? इत्यत आह **महांश्चेति** । तर्हि बहुबाह्यकर्मणामिन्द्रादीनां प्रायत्याद्यभावेन मोक्षाभाव इत्यत आह **आधिकारिकास्त्विति** ॥

*न०टी०*—ननु ज्ञानादेव मोक्षाङ्गीकारात्, निष्कामकर्म किं ज्ञानाय ?, फलाभावमात्राय वा ? नाद्यः । श्रवणादिभिरेव ज्ञानोत्पत्तेः । नेतरः । कर्माकरणेऽपि फलाभावोपपत्तेः । अतः किं

तदायासेन ? इति भावेनाशङ्क्योत्तरार्धमवतार्य व्याचष्टे **नन्विति** । न वयं काम्यकर्मत्यागेन तत्फलाभावात् मोक्षं ब्रूमः । येनेतरकर्मत्यागोऽपि शङ्क्येत । किन्त्वन्तःकरणशुद्ध्या विरक्तानां ज्ञानोदयादेवेत्याह **अकामकर्मणामिति** । अशुद्धान्तःकरणानां श्रवणादिभिरपि न ज्ञानोदय इति भावः । उपसंहरति **अत इति** । ननु यदि युद्धादीनामपि मोक्षसाधनज्ञानाङ्गत्वम्, कथं तर्हि मुमुक्षूणां तद्धीनयत्याश्रमाश्रयणमित्यत आह **यत्याश्रमस्त्विति** । प्रायत्यं नाम विष्णौ स्वमति (?) ज्ञानादिनियामकत्वम् । तच्चेतराश्रमिणां न सम्भवति, बाह्यकर्मविस्तारादित्याह **अप्रयतत्वमिति** । ननु किं प्रायत्येन ? अकामकर्मकरणादेव ज्ञानोपपत्तेरित्यत आह **अप्रयतानामिति** । न केवलं सकामानां न ज्ञानम् । किन्त्वप्रयतानां चेत्यर्थः । तत्र प्रमाणमाह **तथा हीति** । 'नाविरतो दुश्चरितान्नाशान्तो नासमाहितः । नाशान्तमनसो वाऽपि प्रज्ञानेनैनमाप्नुयात् ॥' इत्यस्यायमर्थः— 'दुश्चरितात् विरतः प्रज्ञानेनैनं परमात्मानं नाप्नुयात् । अशान्तः फलनिष्ठबुद्धित्वाच्चाविष्णुनिष्ठबुद्धिः । असमाहितः फलकामोऽपि बाह्यकर्मोद्योगात् । अशान्तमनसः संयतकर्मेन्द्रियोऽपि विषयस्मृतिः । एतेऽपि प्रकृष्टज्ञानेनैनं नाप्नुयुः' इति । ननु भवतु प्रायत्यार्थो यत्याश्रमः, न तु भगवत्तोषार्थः । तस्येतराश्रमेष्वपि सम्भवादित्यत आह **महांश्चेति** । यत्याश्रमस्यापि चातुर्विध्यात् यस्तुरीयः पारमहंसाख्यः तद्दीक्षां भगवतः सुतोषकरामित्यर्थः । प्रस्तुतांशस्यैवोदाहृतत्वात् शेषस्तत्रैव ज्ञातव्यो, नत्वध्याहर्तव्यः । ननु तर्हि प्रायत्यभगवत्तोषयोरेव सिद्धये मुमुक्षुमात्रस्य यत्याश्रमः किं न स्यात् ? इत्यत आह **आधिकारिकास्त्विति** ॥

***प्र०दी०***— 'न च संन्यसनादेव' इति पुनरुक्तम् । अत्रापि कर्मसंन्यसनस्यामोक्षसाधन-त्वोक्तेरित्यत आह— **नन्विति** । 'निष्कामं ज्ञानपूर्वं च' इति मानवे वाक्ये तावन्निष्कामकर्मणा मोक्षः स्मृतः । स चोपपत्त्यन्तरादर्शनान्निष्कामकर्मणः फलाभावादित्येव तत्रोपपत्तिरङ्गीकार्या । यत एवं फलाभावस्यैव प्राधान्यमतोऽकरणेऽपि फलाभावस्यैव साम्यान्मोक्षो भवत्येव । यत्प्राग्भवीय-कर्मफलमुक्तं निष्कामकर्मपक्षेऽपि तत्समानम् । न च विनिगमने कारणाभावः । आयासाभावस्य सत्त्वात् । न च प्रत्यवायप्राप्तिः । अमुमुक्षुविषयत्वसम्भवात् । अतो न कर्माणि करोमीति भावः । अनेन कथमस्य परिहार इत्यत आह— **संन्यास इति** । तेन च निष्कामकर्मकरणमुपलक्ष्यत इति भावः । निष्कामकर्मकरणान्मोक्षं न प्राप्नोति । अतो न तत्प्रतिबन्दीग्रहणं युक्तमित्यनेनोक्तम् । तथा च स्मृतिविरोध इत्यतः स्मृतेरभिप्रायमाह— **अकामेति** । सकाशादिति शेषः । पुंसामिति वा । अकामकर्मभिरन्तःकरणशुद्धिद्वारा ज्ञानं जायत इत्येतत्कुत इत्यत आह— **तच्चेति** । नन्वत्र वैराग्यं जायत इत्युच्यते, न तु ज्ञानमिति । तत्राह— **विरक्तानामेवेति** । प्रागपि वैराग्यद्वारेत्यभिमतमिति

भावः । तथापि कथं विरोधपरिहारः । गीतायामकामकर्मणां मोक्षसाधनत्वाभावावधारणादित्यत-स्तदभिप्रायमाह— **न त्विति** । फलाभावोपपत्तिकं मोक्षसाधनत्वं निषिध्यते । न तु सर्वथाऽपी-त्यर्थः । प्रतिबन्दीं मोचयति— **कर्माभावादिति** । अत॰ कर्माभावान्न मोक्ष इत्यर्थः । श्लोकतात्पर्य-मुपसंहरति— **अत इति** ।

ननु यत्याश्रमो मोक्षसाधनत्वेन श्रुत्यादिप्रसिद्धः । तत्र चेयमेवोपपत्तिर्यत्तद्धर्माणां फलाभावः । अतः तत्साम्यादकरणेऽपि मोक्षो भवतीत्येतच्छङ्कानिरासार्थं चोक्तम्— **न च संन्यसनादेवेति** । एवं तर्हि श्रुत्यादिविरोध इत्यत आह— **यत्याश्रमस्त्विति** । प्रायत्यं प्रयतत्वम् । ईश्वरे मनः-समाधानम् । एतद्द्वारद्वयेन मोक्षसाधनत्वं श्रुत्यादेरभिप्रेतम् । फलाभावोपपत्तिकं तु गीतायां निवारितमतो न विरोध इति भावः । आश्रमान्तरेऽपि प्रायत्यसम्भवात्किं तदर्थं यत्याश्रमेणेत्यत आह— **अप्रयतत्वमेवेति** । इतरकर्मसु यजनादिषु । प्रायत्यं कथं मोक्षसाधनमित्यतो व्यतिरेकमुखेन उपपादयति– **अप्रयतानां चेति** । 'प्रज्ञानेनैनमाप्नुयात्' (कठ.२-२६) इति श्रुतिशेषः । अशान्तो-ऽभगवन्निष्ठः । असमाहितस्तत्र चित्तसमाधानहीनः । भगवत्तोषणस्याऽश्रमान्तरेण सम्भवात् किं यत्याश्रमेणेत्यत आह— **महांश्चेति** । तुरीयं परमहंसाख्यम् । वाक्यशेषेण अन्वयः । यत्याश्रम एव चेत्प्रायत्यं महान् भगवतस्तोषश्च तर्हि तद्रहितानामाधिकारिकाणां तदुभयाभाव इत्यत आह— **आधिकारिकास्त्विति** । तत्स्थाः अधिकारस्थाः । स एव अधिकार एव । तुष्यत्यनेनेति तोषः । समासान्तविधेरनित्यत्वादादिराज्ञामिति युक्तम् । यथोक्तं महाभाष्ये 'शुच्यम्पि तटाकानि' इति ॥

*भा०दी०*— **फलमुक्तमिति** । संसारानुवृत्तिरूपमित्यर्थः । **तत्समानमिति** । इदानीं निष्कामकर्मकरणेऽपि संसारानुवृत्तिः स्यादेव प्राग्भावीयकर्मणामनिवृत्तेरिति भावः । **न च विनि-गमन इति** । कर्माकरणनिष्कामकरणयोर्मध्ये कर्माकरणोपादानमित्यत्र कारणाभावो न चेत्यर्थः । प्रकृतोपयोग .......**ते चेति** । काम्यकर्मयागोक्तकर्मपरेण संन्यसनादेवेत्यनेनेत्यर्थः । **स्मृतीति** । मानवस्मृतीत्यर्थः । **गीतायामिति** । संन्यसन...............कर्मोपलक्षकत्वोक्तेरकामकर्मणामित्युक्तम् । **वाक्यशेषेणेति** । नारायणाष्टाक्षरकल्पगतवाक्यशेषेणेत्यर्थः । "राजाहः सखिभ्यष्ठगि"ति ठक्प्रत्यये सत्यादिराजानामिति भाव्यमित्यत आह **समासान्तेति** । व्याकरणभाष्ये शु.......पानीति वक्तव्यं "ऋक्पूरब्धूः पथामानक्ष" इति समासान्तविधानात् तथापि शून्यपीत्युक्त्या तद्विधेरनित्यत्वं ज्ञापयत इत्यर्थः ॥

*भा०र०*— किञ्च त्वदभिप्रेतं कर्माकरणं न श्रेयःप्राप्तिहेतुः, विकल्पासहत्वाद् इति युक्त्य-न्तरेणापि कर्म कार्यमिति वक्तुं "न कर्मणाम्" इति श्लोक इति भावेन भाष्ये 'इतश्च' इत्युक्तम् ।

तत्र विकल्पासहत्वं स्फुटीकर्तुमाह **अयमभिप्राय इति** । 'नैष्कर्म्यशब्दवाच्यत्वमात्रम्' इत्यत्र निष्क्रान्तः कर्मभ्यो निष्कर्मा । कर्मपरित्यागीति यावत् । तस्य भावो नैष्कर्म्यम् । "गुणवचन-ब्राह्मणादिभ्यः कर्मणि च" इति भावे ष्यञ् । "ये चाभावकर्मणोः" इति टिलोपः । अनेन च नैष्कर्म्यशब्देन कर्मत्यागप्राप्यो मोक्षो लक्ष्यते । तस्य निष्कर्मताप्राप्यत्वाद् विवक्षितार्थसिद्धिरिति भावः । 'बीजाभावात्' इति वक्ष्यमाणयुक्तिव्यावृत्तये मात्रपदम् । **क्रियेति** । **क्रियाः** गत्यादयः । **कारकाणि** इन्द्रियाणि । **फलं** सुखादीत्यर्थः । **अन्यथाऽपि व्याख्यानादिति** । नैष्कर्म्यशब्दा-न्तर्गतकर्मशब्दस्य काम्यकर्मपरत्वेन व्याख्यानसम्भवेनान्यथोपपत्तेर्मोक्षस्य नैष्कर्म्यशब्दवाच्यत्वा-न्यथाऽनुपपत्त्या न कर्मत्यागः शक्यः शङ्कितुमिति भावः । ततः कर्माकरणस्य मोक्षसाधनत्व-निराकरणात् । **अस्य** पुरुषत्वस्य । प्रलयकाले जीवस्य स्थूलशरीराभावात् कथं 'सर्वदा' इति भाषणम् ? इत्यत आह **प्रलयेऽपीति** । **सम्भवार्थं** देहसद्भावसम्भवार्थम् । 'स्थूलेन' इत्यनन्तरम् 'इत्युक्तावसम्भवादिति' इति शेषः । **सूक्ष्मेण** लिङ्गशरीरेण । **हेतुत्वं** पुरुषत्वस्य । **पूर्वोत्तरा-भ्यामिति** । मुक्तिः स्यात् तदा स्यात् स्थावराणां चेति पूर्वोत्तरभाष्याभ्यां काकाक्षिन्यायेनान्वय इत्यर्थः । तेनोत्तरभाष्यस्यानन्वितत्वशङ्कानिरास इति भावः ।

ननु पश्वादिजङ्गमदेहेष्वपि कर्माकरणरूपमुक्तिसाधनसम्पादनसम्भवात् किं विशिष्याभिधीयते 'स्थावराणाम्' इति ? इत्यत आह **स्थावराणामित्यनधिकृतोपलक्षणमिति** ।

अनधिकृतदेहेषु स्थावरदेहस्य प्रधानत्वाद् उपलक्ष्यतावच्छेदकम् अनधिकृतत्वमिति सूचनाय 'स्थावराणाम्' इति स्थावरपदं इतरोपलक्षकमुपात्तमित्यर्थः । "स्यात् स्थावरणाम्" इत्यनधिकृत-देहस्य मुक्त्यापादनमिष्टमेवेत्यतः पुरुषपदसूचितम् आपादनतात्पर्यमाह **ततश्चेति** । **द्वितीयेति** । संसारस्य कर्म बीजम् । अकरणे च बीजाभावाद् संसारो न भविष्यतीति युक्तिमाश्रित्येति आद्य-द्वितीयपक्षनिरासेऽपि, **अस्यैवार्धस्य** "न कर्मणामनारम्भात्" इत्यर्धस्यैवेत्यर्थः । कर्माभावे मुक्तिः कथं स्याद् ? इत्यतो द्वितीयविकल्पनिरासरूपत्वस्फोरणायार्थमाह **कर्मेति** ।

नैष्कर्म्यशब्दस्य पूर्ववद् व्युत्पत्तिग्रहणेऽत्र पक्षे वैयर्थ्यप्रसङ्गादाह **अत्रेति** । द्वितीयपक्ष इत्यर्थः । गीतायां 'नैष्कर्म्यम्' इति मुक्तेर्नाममात्रम् । काम्यकर्माभावप्राप्यत्वात् । न तु नैष्कर्म्य-शब्दवाच्यत्वान्यथाऽनुपपत्तिरूपपूर्वपक्ष्यभिमतप्रमाणानुवाद इति भावेन भाष्ये "नैष्कर्म्यं भवति" इति वक्तव्येऽपि 'मुक्तिः' इत्येवोक्तमिति भावः । **कुतो न भवतीति** । "कर्माभावान्मुक्तिर्भवतीति न" इत्येतत् कुतो हेतोः प्रतिपत्तव्यमित्यर्थः । 'प्रतिजन्म' इति वीप्सायामव्ययीभाव इति भावेन आह **जन्मनिजन्मनीति** ।

**अधिकृतेति** । कर्माधिकारयुक्तेत्यर्थः । **अद्य** एतस्मिन् जन्मनि । **अर्थः** वाक्यार्थः । कुत इत्यवतारितत्वादाह **हेताविति** । यस्माद् बहूनि कर्माणि करोतीति तस्मान्न भुक्तानीति भाष्ये अन्वयः । "पिपीलिकावधादीनि क्षुद्रपापोदितानि च । (धर्मविवेकः)", मानुषेषु तु दुःखित्वं क्षुद्रपापफलं स्मृतम् ॥ (धर्मतत्त्वम्)" इति वचनेन क्षुद्रपापकर्मणां स्वल्पफलत्वावेदनात् कथं तानि बहुजन्मफलानि ? इत्यत आह **तानि च कानिचिदिति** । तेषां मध्ये कानिचित् कर्माणि तु तथाविधानीत्यर्थः । "एकं बहुव्रीहिवत्" इति द्विर्वचने बहुव्रीहिवद्भावे सुब्लोपे एकैकम् एकैकम् एकैकम् इत्येवं सरूपैकशेषे एकैकानीति निष्पन्नस्य भाष्यस्यार्थमाह **प्रत्येकमिति** ।

**तथाविधान्यपि** बहुजन्मफलान्यपि । बहुकर्मभोगघटनाय "अनधिकृतजन्मभिः" इति बहुवचनम् । तत्रेत्यस्यार्थः **तेष्विति** ।

ननु भाष्ये 'भुञ्जन्' इति कथं शत्रन्तम् ? यावता 'भुजोऽनवने' इति पालनान्यार्थे भुजेरात्मनेपदे शानजेव प्राप्नोति । सत्यम् । "चन्द्रादयस्तु मन्यन्ते सर्वस्मादुभयं पदम्" इति वैयाकरणवचनादिह भाष्यं शत्रन्तयुक्तमिति भावेन तदर्थमाह **भुञ्जन् भुञ्जान इति** ।

**अकरणं** कर्माकरणम् । भाष्ये 'कर्माणि' इत्यनन्तरं "कुर्वाणो भवति" इति शेषः । **इदं** कर्मणाम् अकरणासम्भावनम् असमाप्त्यभिधानं च । 'चतुर्दशात्' इत्यत्र विशेष्यं पूरयति **चतुर्दशाद् वर्षादिति** । तथा च स्मृत्यन्तरम् "आचतुर्दशमाद् वर्षात्" इति । दशकशब्दो हि दश परिमाणमस्येत्यस्मिन्नर्थे व्युत्पन्नः । "पञ्चद्दशतौ वर्गे वा" इति स्मरणात् । तस्य चानूनशब्देन कर्मधारये दशतोऽप्यधिकदेहप्रापकमानविरोधः । स्मर्यते हि "मृताऽहं समतिक्रम्य चण्डालः कोटिजन्मसु", "सप्तजन्मनि विप्रः स्यात्", "श्वानयोनिशतं प्राप्य" इत्यादीत्यत आह **अनून इति** । यस्य देहस्य दशकोऽन्यूनो न भवतीत्युक्तौ दशत्वावरसङ्ख्या न । किन्तु तदधिकैवेति प्रतीयत इति नोक्तप्रमाणविसंवाद इति भावः । 'चतुर्दशोर्ध्वजीवीनि' इति न पुरुषस्य स्त्रिया वा विशेषणम् । क्लीबबहुवचनान्तत्वादित्यत आह **ह्रस्वदीर्घेति** । नकारोपरितनस्य इकारस्य दीर्घतया, वकारादुपरितनस्य ईकारस्य ह्रस्वतया व्यत्यस्य योजने 'जीविनी' इति शब्दः "स्त्रिया विशेषणं व्याख्यातव्यम्" इत्यर्थः । "स्त्रियो विशेषणम्" इत्यलाक्षणिकः पाठश्चेत् पुराणप्रयोगानुवादः । "चतुर्दशोर्ध्वजीवीनि भूतानि" इति यथाश्रुतव्याख्यानमयुक्तम् । पुरुषं स्त्रियं वा विनाऽन्यस्य पश्वादेर्दशाधिकमानुषदेहसम्पादककर्मसद्भावे मानाभावात् । विधिनिषेधागोचरत्वेनानधिकारित्वाच्चेति । संसारस्यानादित्वोक्तिः प्रकृतासङ्गतेत्यत आह **संसारश्चेति** । देहयोगादिरूपस्य तस्य कर्मापाद्यत्वेन तदनुकूलकर्मणामनन्तत्वं भवतीति भावः । चतुर्दशोर्ध्वजीवित्वादेरेतच्छब्देन परामर्शे प्रकृतासङ्गतेराह **अतः**

**भोगेनेति** । ज्ञानार्थकस्य विदेः सेट्त्वाद् 'अवित्त्वा' इति प्रयोगश्छान्दस इति भावेन व्याचष्टे **अविदित्वेति** । ''विद विचारणे'' इत्यस्यानिट्त्वेऽपि तेनापरोक्षज्ञानाप्राप्तेः ज्ञानेनैव मोक्षो न कर्माकरणेनेति प्रकृतार्थलाभाय ''विद ज्ञाने'' इत्यस्यैवेदं रूपमिति भावेनैवं व्याख्यातम् । भाष्ये **आशा** आशासनं **का** कुतस्त्या इति योजने त्त्वाप्रत्यय उपपन्नः । **पुरुषशब्देनेति** । ''सर्वदा स्थूलेन सूक्ष्मेण वा पुरेण युक्तः'' (गी.भा. ३.४) इति भाष्ये तथैव पुरुषशब्दार्थोक्तेरिति भावः ।

**आकस्मिकस्य** इति हेत्वर्थगर्भम् । 'स्याद्' इत्यनन्तरं ''अस्ति च तत्प्राप्तिः'' इति शेषः । **कथमिति** ॥ युद्धादीनामपि कर्मत्वात् कर्ममात्रस्य च ''कर्मणा बध्यते'' इति बन्धकत्वावगमात् तदनुष्ठानेन स्वात्मानं बन्धयन् कथं नाम प्रेक्षावान् भवेदित्यर्थः । अप्रेक्षावत्त्वं व्यनक्ति **न हीति** । प्राक्तनानि बहूनि बन्धकानि सन्तीत्यद्यापि बन्धकान्यनुतिष्ठन् मूर्ख एव स्यादिति भावः । **कर्मणां** विहितानां युद्धादीनाम् ।

**अत्रेयं प्राचीनटीका**— ''भवतु नाम मुमुक्षोः तज्जन्मनि कर्माकरणेऽपि जन्मान्तरकृतानन्त-कर्मबद्धत्वात् तन्निवृत्तिर्ज्ञानादेवेति तदर्थः प्रयत्नः । तथाऽपि पुनः स्वात्मबन्धकानां युद्धादीनामनारम्भ एव युक्त इत्यत आह **अबन्धकत्वं त्विति** । अतः कामत्याग एव मुमुक्षुभिः कार्यः, न पुनः कर्मस्वरूपत्यागोऽपि इति ।''

कर्मणां = विहितयुद्धादिकर्मणाम् । 'अकामादिना' इत्यत्र आदिपदेन भगवदर्पणादिग्रहः । एतेन भाष्येऽकामपदमुपलक्षणार्थमित्युक्तं भवति । भाष्योक्तैवकारव्यावर्त्यं सहेतुकमाह **न त्विति** । कर्मत्वाविशेषे फलकामनाऽभावमात्रेण कुतस्तेषां बन्धाहेतुत्वम् ? इति चोद्योत्तरत्वेनोत्तरं भाष्यमव-तारयति **अकाम इति** । फलकामनाऽभाव इत्यर्थः । 'अकामेन' इत्यपि क्वचित्पाठः । **अबन्धकत्वं** कर्मणाम् । **तच्चेतीति** ।

''अनिष्टमिष्टं मिश्रं च त्रिविधं कर्मणः फलम् ।
भवत्यत्यागिनां प्रेत्य न तु संन्यासिनां क्वचित् ॥'' (१८.१२)

इत्यष्टादशेऽध्याये निरय-त्रिदिव-मानुष्यरूपत्रिविधकर्मफलाभावोऽकामिनां भवतीत्यभिधास्यते । तेन संन्यासिपदोक्तफलकामनारहितानाम् उक्तत्रिविधफलाभावेन तत्कृतकर्मणाम् अबन्धकत्वं विज्ञा-यत इति भाष्यार्थः ।

''कर्मणां बन्धाहेतुत्वम् अकामादिनैव भवति । न त्वकरणेन । प्रत्यवायस्यैव प्राप्तेः'' इति भाष्याभिमतमसहमानः **सङ्करः** मोक्षस्याकार्यत्वान्मुमुक्षोः कर्मानर्थक्यम् । नित्यानित्यप्रत्यवाय-परिहारार्थानीति चेन्न । असंन्यासिविषयत्वात् प्रत्यवायप्राप्तेः । संन्यासिनामपि न तावन्नित्यानाम्

अकरणाद् अभावरूपाद् भावरूपस्य प्रत्यवायस्योत्पत्तिः कल्पयितुं शक्या युक्ता च । "कथमसतः सज्जायेत" (छा. ६.२.१) इत्यसतः सज्जन्मासम्भवश्रुतेरिति गीताहृदयं नित्यकर्माकरणे प्रत्यवायमदूषयत् । तदिदं सङ्करभाष्यमनुवदति **सङ्करस्त्विति** । प्रतिषेधप्रकारमेव दर्शयति **द्रव्यविषयेति** । "तत्तेजोऽसृजत" इत्यादिवाक्यशेषे तेजःप्रभृतिद्रव्यसृष्टेरेवोक्तत्वाद् असतः सकाशात् **सत्** द्रव्यं कथं जायेत ? इत्येवंपरा श्रुतिरित्यर्थः । **उभौ** सङ्करभास्करौ । तत्र सङ्करमतं तावद् दूषयन् अकरणम् असत् न सन्तं प्रत्यवायं जनयतीत्यत्र साक्षित्वेनोदाहृतश्रुतावसच्छब्दः किमत्यन्ताभावप्रतियोगिवाची उताभाववाचीति विकल्प्याऽद्यं प्रत्याह **न हीति** । अत्यन्तासदित्यर्थः । अकरणस्य अत्यन्तासत्त्वे करणं सत् स्यात् । करणस्यैवाकरणात्यन्ताभावरूपत्वादिति भावः । द्वितीयं शङ्कते **किन्त्विति** । **अभावः** करणाभावः । **कथमकारणमिति** । प्रागभावे प्रतियोगिकारणत्वस्य तान्त्रिकैरङ्गीकृतत्वादिति भावः ।

भास्करमतं दूषयति **गुणं प्रतीति** । असति कारकशक्त्यङ्गीकारे द्रव्यकारणता नास्ति गुणकारणता तु इष्यत इति कल्पनस्य विशेषनियामकाभावेनायुक्तत्वादिति भावः । ननु "न त्वकरणेन प्रत्यवायप्राप्तेः" इति करणाभावस्य प्रत्यवायं प्रति सिद्धान्त्यभिमतं कारणत्वमयुक्तम् । अभावस्य उपादानत्वाभावादित्यत आह **न ह्यत्रेति** । 'कथमसतः' इति श्रुतस्य करणाभावस्य प्रत्यवायोपादानत्वं न विवक्षितम् । तार्किकमते प्रत्यवायस्याधर्मलक्षणत्वेन आत्मोपादानकत्वात् । सिद्धान्ते च मन उपादानकत्वादिति भावः ।

ननु "सदेव सोम्य इदमग्र आसीत्" (छा. ६.२.१.),"तद्धैक आहुरसदेवेदमग्र आसीदिति" (छा. ६.२.१), "कथमसतस्सज्जायेत" (छा. ६.२.१.), "असद्वा इदमग्र आसीत्" (तै. २.१२), "ततो वै सदजायत" (तै. २.१२) इत्यादि प्रकरणे "बहु स्याम्" (तै. २.११) इति बहुभावश्रवणाद् उपादानत्वमेवाभिमतमिति ज्ञायत इति चेन्न । असच्छब्दार्थस्य ब्रह्मणश्चेतनत्वेनाविकारितयैव "अजायमानो बहुधा विजायते" (तै.आ. ३.१३) इति श्रुत्यैव बहुभावावेदनाद् इत्यन्यत्रोपपादितत्वादिति भावेन आह **इत्यलमिति** । **केचित्तु** "कथमसतस्सज्जायेत" इत्यत्र श्रुतौ 'असतः' इत्युपादाने पञ्चमी । "जनिकर्तुः प्रकृतिः" इति स्मरणाद् इत्यत आह **न ह्यत्रेति** । "पुत्रात् प्रमोदो जायते" इति वृत्तिकारोदाहृतप्रयोगे, "गोलोमाविलोमभ्यो दूर्वा जायन्ते" इति भाष्यकारोदाहृतप्रयोगे, "बिलाद् दीर्घभोगी निष्क्रामति" इति कैयटप्रयोगे चानपादानेऽपि पञ्चमीदर्शनात्, न्यासेऽपि "प्रकृतिपदं हेतुमात्रपरम्" इत्याश्रितत्वाच्च नापादानत्वं पञ्चम्या विवक्षितमिति भावेन आह **इत्यलमिति** इति व्याकुर्वते ।

*भा०र०*— **पुनरुक्तं** "न कर्मणामनारम्भान्नैष्कर्म्यं पुरुषोऽश्नुते इत्यनेन" इति शेषः । **अमोक्षसाधनत्वोक्तेः** मोक्षसाधनत्वाभावोक्तेः । 'मानवे' इत्यनन्तरं शेषमाह **वाक्य इति** । **स च** मोक्षः । **फलाभावाद्** इत्यनन्तरं 'भवति' इति शेषः । **तत्र** निष्कामकर्मणा मोक्षो भवतीत्यत्र । **प्राधान्यं** मोक्षोपादाने । 'तत्साम्यात्' इत्यस्यार्थः **फलाभावस्यैव साम्यादिति** । ननु कर्माकरणे मोक्षो भवतीत्यसत् । प्राग्भावीयानन्तकर्मफलस्यावश्यभोक्तव्यस्य भावादित्यत आह **यत् प्राग्भवीयेति** । **उक्तं** भोक्तव्यतया । **तत्समानं** भोक्तव्यं कर्मफलं समानम् । एवं सति कर्माकरणस्यैव किमित्यावश्यकत्वम् ? इत्याशङ्क्य निरस्यति **न चेति** । **अमुमुक्षिवति** । 'प्रत्यवायश्रवणस्य' इति शेषः । **अतः** बाधकस्य परिहृतत्वाद्, अकरणस्यानायासेन मोक्षसाधनत्वाच्चेत्यर्थः । **अनेन** "न च संन्यसनादेव" इति गीतावचनेन । **अस्य** "ननु निष्काम" इति कृतचोद्यस्य ।

ननु निष्कामकर्मप्रतिबन्द्या शङ्किते काम्यकर्मसंन्यसनेन सिद्ध्यभावोक्तिः असङ्गता । 'अकामकर्मणाम्' इत्युत्तरभाष्यानानुगुण्यं चेत्यत आह **तेन चेति** । काम्यकर्मत्यागाद्यर्थकसंन्यसनपदेन इत्यर्थः । **प्रतिबन्दी** अतोऽकरणेऽपि फलाभावस्य साम्यादिति प्रतिबन्दी । **स्मृतीति** । "निवृत्तं सेवमानस्तु ब्रह्माप्येति" इति मानवस्मृतीत्यर्थः । **अभिप्रायं** निवृत्तकर्मणा भवन्मोक्षः सव्यापारेणैव भवतीत्यभिप्रायम् । कर्मणाम् अन्तःकरणशुद्धिमोक्षयोरसम्भवादाह **सकाशादिति शेष इति** । अध्याहारानुशयादाह **पुंसामिति** । पूर्ववाक्यतात्पर्यं वदन्नेवोत्तरवाक्यमवतारयति **अकामेति** । भागवते **सत्त्वम्** अन्तःकरणम् । नन्वन्तःकरणशुद्धेर्वैराग्यहेतुत्वे ज्ञानहेतुत्वोक्तिः कथम् ? इत्यत आह **प्रागपीति** । 'अकामकर्मणाम्' इति भाष्येऽपीत्यर्थः । **वरीयसीः** वरीयस्यः । **गृहमेध(धि)सौख्यं** हेयत्वेन यस्य ज्ञातं न स्यात् तस्य तत्त्वावबोधाभावाभिधानेन वैराग्यस्य ज्ञानप्रयोजकत्वमवगम्यत इति भागवतश्लोकार्थः । **तथाऽपि** अन्तःकरणशुद्धेर्वैराग्यस्य च द्वारत्वेऽपि । **गीतायामिति** । तत्र संन्यसनशब्दस्याकामकर्मोपलक्षकत्वात्, "सिद्धिं न समधिगच्छत्येव" इत्येवकारश्रवणाद्वेति भावः । **तदभिप्रायं** गीताऽभिप्रायम् । **फलाभावेति** । फलाभावेन मोक्ष इत्येतच्च नन्वित्यादिगमनिकाभाष्ये स्फुटमिति भावः । **सर्वथाऽपि** स्वरूपतोऽपि । **प्रतिबन्दीं** निष्कामकर्मप्रतिबन्दीम् । "अतो न" इति वक्ष्यमाणमत्राऽकृष्य योजनीयमित्याशयेन आह **अतः कर्माभावान्नेति** । कर्माकरणादित्यर्थः । न मोक्ष इति वदन् नञोऽनुवृत्तिमभिप्रैतीत्यपि **आहुः** ।

**श्रुत्यादीति** । "तस्मान्न्यास एवात्यरेचयत्", "मोक्षाश्रमश्चतुर्थो वै यो भिक्षोः परिकीर्तितः" इत्यादिश्रुतिस्मृतिप्रसिद्ध इत्यर्थः । उपपत्तिशब्दापेक्षया 'इयमेव' इति स्त्रीलिङ्गम् । वक्ष्यमाणफलाभाव एवेत्यर्थः । **तद्धर्माणां** यत्याश्रमविहितधर्माणाम् । **तत्साम्यात्** फलाभावस्य साम्यात् । **एत-**

**च्छङ्कानिरासार्थं चेति** । न केवलं फलाभावसाम्याद्, निष्कामकर्मप्रतिबन्ध्या युद्धादिकर्माकरणेऽपि मोक्षो भवेदिति शङ्कानिरासार्थमिति चशब्दः । **एवं तर्हि** संन्यसनस्य सिद्ध्यनङ्गत्वे । **श्रुत्यादि इति** । उक्तश्रुतिस्मृतिविरोध इत्यर्थः ।

ननु कर्मत्यागस्य मोक्षसाधनत्वाभावे कथं यत्याश्रमाश्रयणमित्यत आह **यत्याश्रमस्त्विति** इति तु भावप्रदीपिकायामवतारितम् । प्रयतशब्दात् भावे ष्यञि निष्पन्नः प्रायत्यशब्दः प्रयतत्वार्थ इत्याह **प्रायत्यमिति** । किं नाम प्रयतत्वम् ? किंविषयं च ? इत्यत आह **ईश्वर इति** । **समाधानं** सम्यगाधानम् । अनेन कथं गीतायाः श्रुत्यादिविरोधः ? इति कृतचोद्यस्य परिहार इत्यतो भाष्य-भावमाह **एतद्वारद्वयेनेति** । प्रायत्य-भगवत्तोषणद्वारद्वयेनेत्यर्थः । **मोक्षसाधनत्वं** यत्याश्रमस्य । **फलाभावोपपत्तिकं त्विति** । मोक्षसाधनत्वमित्यनुवर्तते । **तदर्थं** प्रायत्यार्थम् । 'गृहस्थादीनाम्' इति भाष्यस्य गृहस्था आदयो येषां वानप्रस्थानां ब्रह्मचारिणां च ते गृहस्थादयः, तेषामित्यर्थः । **यजनादिषु** यजनौपासनाग्निपरिचर्याध्ययनादिषु ।

'भगवत्तोषार्थश्च' इत्यनन्तरम् "इत्यतो मोक्षसाधनम्" इति वर्तत इति भाष्यार्थः स्पष्ट इति मनसि निधाय शङ्कते **प्रायत्यं कथमिति** । व्यतिरेकमुखेन प्रायत्यस्य ज्ञानद्वारा मोक्षहेतुत्व-मित्यत्र 'नाशान्तः' इति श्रुतिः कथं प्रमाणमित्यत आह **प्रज्ञानेनेति** । भाष्यपदार्थमाह **अशान्त इत्यादि** । **तत्र** भगवति । "नाविरतो दुश्चरितान्नाशान्तो नासमाहितः । नाशान्तमनसो वाऽपि प्रज्ञानेनैनमाप्नुयात् ॥" (कठ. १.६.१०) इति श्रुतेरयमर्थः— दुश्चरितादविरतः प्रज्ञानेन एनं परमात्मानं नाप्नुयात् । **अशान्तः** फलनिष्ठबुद्धित्वात् अभगवन्निष्ठः । **असमाहितः** फलकामोऽपि बाह्यकर्मोद्योगाद् भगवति चित्तसमाधानहीनः । अशान्तमानसः संयतकर्मेन्द्रियोऽपि विषयस्मृति-मान् । प्रज्ञानेनैनं प्राप्नुयादिति **प्राचीनटीकायाम्** । यत्याश्रमस्य गृहस्थाद्याश्रमापेक्षया तुरीयत्वं सिद्धमेवेति व्यभिचाराभावान्नेदं विशेषणमित्यत आह **तुरीयं परमहंसाख्यमिति** । यत्याश्रमस्य कुटीचक-बहूदक-हंस-परमहंसभेदेन चतुर्विधत्वाद् हंसादिव्यावृत्तये 'तुरीयम्' इति विशेषणं फल-वदिति भावः । द्वितीयान्वयाय आह **वाक्यशेषेणेति** । नारायणाष्टाक्षरकल्पगतवाक्यशेषेणेत्यर्थः । **तद्रहितानां** परमहंसाश्रमरहितानाम् । ननु तेषामपि परमहंसाश्रमस्वीकारानन्तरमेव भगवत्तोषादीति सर्वैरपि पारमहंस्यमापाद्यमित्यत आह **आधिकारिकाणामिति** । प्रियव्रतादीनां गार्हस्थ्यस्यैव आव-श्यकत्वाभिधानादिति भावः । "प्रायत्ये समर्थाः" इत्यत्र प्रायत्वम् ईश्वरे मनस्समाधानम् । अधिकारः साधकनिष्ठः । तोषस्तु भगवन्निष्ठः । अतः कथं "स एव तोषः" इति सामानाधि-करण्यम् ? इत्यत आह **तुष्यत्यनेनेति** । **अनेन** अधिकारेण । 'हलश्च' इति करणे घञि निष्पन्नस्य तोषशब्दस्य तोषहेतुत्वार्थकत्वाद्युक्तं सामानाधिकरण्यमिति भावः ।

**समासान्तविधेरिति** । राजन्शब्दे "राजाहस्सखिभ्यष्टच्" इति विहितटच्प्रत्ययस्यानित्यत्वादित्यर्थः । तथा च "प्रतेरंश्वादयस्तत्पुरुषे" इति सूत्रे वृत्तिकारः "राजन्शब्दः समासान्तविधेरनित्यत्वाद् यदा टच् नास्ति तदा प्रयोजयति । तस्मिन् हि सति चित्त्वादेव सिद्धमन्तोदात्तत्वम्" इति । एवं च राजन्शब्दस्याश्वादिगणे पाठ एव तस्य समासान्तप्रत्ययोऽनित्य इत्यत्र ज्ञापक इति भावः ।

नन्वेतदयुक्तम् । महाभाष्यकारेण स्वार्थिकप्रत्ययानां समासान्तप्रत्ययानां च नित्यत्वस्योक्तत्वाद् इत्याशङ्क्य भाष्यप्रयोग एव समासान्तस्यानित्यत्वं ज्ञापयतीति भावेनाऽऽह **यथा भाष्य इति** । शुचय आपो येषु तानि शुच्यम्पीति बहुव्रीहिः । 'शुच्याम्पि' इति कृतात्त्वं क्वचित् पठ्यते । 'अप्तृन्' इति सूत्रे 'बह्वाम्पि' इति वृत्तिकारः । 'अप्तृन्' इति दीर्घः । 'स्वाम्पि' इति आधुनिकश्च आहेति सोऽपि पाठः साधुरित्याहुः । 'शुच्यापि' इति पठित्वा नुमभावोऽत्रास्तीति दर्शयितुमेवं प्रयोगः कृतो भाष्यकृतेति केचिदाहुः । तन्न । मनोरमायां 'अप्तृन्' इति प्रतिपदोक्तत्वाद् दीर्घत्वमाश्रित्य "स्वाम्पि तटाकानि" इति प्रयोगो दुर्लभः । परत्वात् 'नपुंसकस्य झलचः' इति नुमः प्राप्तेः । न च प्रतिपदोक्तत्वाद् दीर्घत्वस्य प्राबल्यम् । निरवकाशत्वे सत्येव प्रतिपदोक्तस्य प्राबल्यप्रयोजकतया, सावकाशत्वे तदभावात् । सावकाशं चेदम् । स्त्रीपुंसयोरिति विमृश्य "स्वम्पि तटाकानि" इत्येव युक्तम् इत्युक्तत्वेन शुच्यापीत्यादिप्रयोगस्यानाघ्रातत्वात् । काशिकायां नुमो नित्यत्वोक्तेः, मनोरमायां परत्वोक्तेश्च । अत्र सर्वत्रापि "ऋक्पूरब्धूःपथामानक्षे" इति विहितः समासान्तप्रत्ययोऽनित्यत्वान्न भवतीति ज्ञायते । स्वम्पीत्यादौ "न पूजनात्" इति समासान्तप्रत्ययो निषिद्ध इति तदनादृत्य भाष्यप्रयोगो दर्शित इति । **तद्भोगः** स्वाधिकारनिबन्धनपदभोगः । **हरितोषणं** हरितोषणहेतुरिति भाष्यार्थः ॥

***गीताक्षरार्थस्तु***— प्रागधिकारिकत्वात् त्वया कर्म कर्तव्यमित्युक्तम् । विकल्पासहत्वादपि कर्माकरणमयुक्तम् । तथा हि । किं ज्ञानं न मोक्षसाधनम्, अपि तु कर्माकरणमेवेति मत्वा कर्माणि त्यजन्ते उत ज्ञानं मोक्षसाधनं भवत्येव । किन्तु "कर्मणा बध्यते जन्तुः" इत्यादेः कर्माणि तत्प्रतिबन्धकानीति मत्वा । आद्येऽपि किं मोक्षस्य नैष्कर्म्यशब्दवाच्यत्वमात्रेणेदमुच्यते अथ क्रियाकारकफलरूपस्य संसारस्य कर्मैव बीजम् । अकरणे च बीजाभावात् संसारो न भविष्यतीति युक्तिमाश्रित्य । आद्यस्येदं दूषणं **न कर्मणामिति** । **कर्मणां** वर्णाश्रमविहितानाम् **अनारम्भात्** अकरणात् **नैष्कर्म्यं** निष्कर्मतां काम्यकर्मपरित्यागप्राप्यं मोक्षम् **अश्नुते** इति यत् **तन्न** तथा । यतः **पुरुषः** पुराणि शरीराणि सरति प्राप्नोति । सर्वदा स्थूलेन सूक्ष्मेण वा देहेन युक्तत्वात् । कर्माकरण-

मात्रेण मोक्ष इति पक्षे कदाचित् कर्मानधिकृतस्थावरादिशरीरस्यापि प्राप्तिसम्भवेन तद्देहे कर्माकरण-निमित्तमोक्षप्राप्त्यापत्त्या अधुना दृश्यमानः शरीरयोगो न स्यात् । मोक्षस्य नैष्कर्म्यशब्दवाच्यत्वं तु काम्यकर्माप्राप्यत्वेनाप्युपपन्नमिति भावः । द्वितीयेऽप्येतद्देवोत्तरं "न कर्मणामनारम्भान्नैष्कर्म्यं पुरुषोऽश्नुत" इति । प्राग्वदेव अर्थः । अनादौ संसारे कर्माधिकृतानन्तजन्मसम्भवेन सदा पुरुषशब्दित-देहयोगित्वात् तत्कृतानन्तकर्मसद्भावेनाद्यतने देहे कर्माकरणमात्रात् संसारबीजाभावकृतमोक्षप्रत्याशा कुतः स्यादिति भावः । तृतीयपक्षस्तु "कर्मणा बध्यते" इति वाक्यमाश्रित्य न युद्धादिकर्मत्यागः कार्यः । तस्यावैष्णवकाम्यकर्मविषयत्वादिति "यज्ञार्थात् कर्मणः" (३.९) इत्यत्र निरसिष्यते ।

ननु "निष्कामं ज्ञानपूर्वं च" इति मानवस्मृतौ निवृत्तकर्मणो मोक्षोऽस्तीत्युच्यते । निवृत्त-कर्मणश्च मोक्षहेतुत्वे फलान्तराभाव एवोपपत्तिरङ्गीकार्या । तथा च कर्माकरणस्यापि फलान्तराभाव-रूपोपपत्तिसाम्याद् आयासाभावरूपगुणवत्त्वाच्च कर्माकरणादेव मोक्षोऽस्तु । "एवं त्वयि नान्यथेतोऽस्ति" (ईश. १.२) इत्यादौ श्रुतः प्रत्यवायस्त्वमुमुक्षुविषयः सम्भवतीत्यत उच्यते **न चेति** । **संन्यसनात्** काम्यकर्माकरणात् । तेन निष्कामकर्मकरणमुपलक्ष्यते । निवृत्तकर्मकरणमात्रान्मोक्षं न प्राप्नोति । किन्तु तदापादितान्तःकरणशुद्धि-विषयवैराग्य-श्रवण-मनन-निदिध्यासन-ज्ञानद्वारैव । 'निवृत्तम्' इति स्मृतेरप्ययमेवाभिप्रायः । तथा च न तत्प्रतिबन्ध्या कर्माकरणस्य मोक्षहेतुत्वं वक्तु-मुचितमिति भावः । ननु यत्याश्रमो मोक्षहेतुत्वेन श्रुत्यादिसिद्धः । तत्र चेयमेवोपपत्तिर्यत् "तद्धर्माणां फलाभावः" । अतस्तत्साम्याद् अकरणेऽपि मोक्षो भवतीत्याशङ्कानिरासार्थं चोक्तम् **न च संन्य-सनादेवेति** । यत्याश्रममात्रादित्यर्थः । यत्याश्रमेणापीश्वरे मनस्समाधानं भगवत्तोषश्च आपादनीय इत्येतद् द्वारद्वयेन तस्य मोक्षसाधनत्वं श्रुत्यादेरभिप्रेतम् । न फलान्तराभावहेतुना । येन तत्प्रति-बन्ध्याऽपि कर्माकरणस्य मुक्तिहेतुत्वं शङ्क्येतेति ॥ ४ ॥

**गीतातात्पर्यनिर्णयः**

**ज्ञानप्रचुरो योगो ज्ञानयोगः । कर्मप्रचुरोऽन्यः ।**

*प्रका०*— एतत्परिहारत्वेन यद्भगवद्वचनं "लोक इति" तदर्थमाह **ज्ञानप्रचुर इत्यादिना** ।

*न्या०दी०*— "लोकेऽस्मिन्" इति परिहारवाक्ये केषाञ्चिदधिकारिणां ज्ञानमेव केषाञ्चित् कर्मैवानुष्ठेयमुच्यत इत्यन्यथाप्रतीतिनिरासायाह **ज्ञानेति** ॥ नात्र ज्ञानयोगपदेन ज्ञानमात्रं विवक्षितं, कर्मयोगपदेन च कर्ममात्रमुच्यते । किन्तु प्रत्येकमुभयम् । तर्ह्युभावपि ज्ञानकर्मयोगाविति वक्तव्यौ । कथं कश्चिज्ज्ञानयोगः कश्चित्कर्मयोग उच्यत इति चेन्न । एकैकत्र ज्ञानकर्मणोः प्राचुर्याभिप्रायेण अल्पजलमिश्रेऽपि क्षीरे क्षीरशब्दप्रयोगवत् प्रयोगोपपत्तेरिति भावः ।

**गीतातात्पर्यनिर्णयः**

**"साङ्ख्या ज्ञानप्रधानत्वाद् देवाश्च यतयस्तथा ।**
**मुख्यसाङ्ख्यास्तत्र देवा ज्ञानमेषां महद् यतः ॥**

*न्या०दी०*— साङ्ख्यानां ज्ञानमेव योगिनां कर्मैवेति प्रतीत एवार्थः किं न स्यादिति चेत् तथाऽङ्गीकारे स्मृतिविरोधः स्यादिति भावेनाह **साङ्ख्या इति** ॥

*भा०दी०*— नोभयं विनेत्यादि निषेधस्य प्रसक्तिमाह **साङ्ख्यानां ज्ञानेनेति** । "तरति शोकमात्मवित् । अपाम सोमममृता अभूम" इत्यादिश्रुतौ, "ज्ञानयोगेन साङ्ख्यानामि"त्यादिस्मृतौ च इत्यर्थः ॥

**गीतातात्पर्यनिर्णयः**

**बहुकर्मकृतोऽप्येते ततोऽपि बहुवेदनात् ।**
**मुख्यसाङ्ख्या इति ज्ञेयास्तदन्ये कर्मयोगिनः ॥**

*न्या०दी०*— देवानां बहुकर्मसद्भावात् कथं मुख्यसाङ्ख्यत्वमित्यत आह **बह्विति** ॥ **ततोऽपि** कर्मणोऽपि ।

**गीतातात्पर्यनिर्णयः**

**ज्ञानिनोऽप्यतिबाहुल्यात् कर्मणः कर्मयोगिनः ।**
**नोभयं तद् विना कश्चित् पुमान् हि पुरुषार्थभाक् ॥**

*न्या०दी०*— गृहस्थादीनामपि किं केवलकर्मैवेत्यपेक्षायामाह **ज्ञानिनोऽपीति** ॥ तर्हि कथं कर्मयोगिन इत्यत आह **अतीति** ॥ साङ्ख्यानां केवलं ज्ञानमेव योगिनां केवलं कर्मैवेति किं न स्यादित्यत आह **नोभयमिति** ॥ साङ्ख्यानां ज्ञानेन योगिनां कर्मणा पुरुषार्थो भवतीति श्रुत्यादौ श्रूयते । न चैकैकेन पुरुषार्थो युज्यते । अतो नैकैकग्रहणं युक्तमिति भावः ।

**गीतातात्पर्यनिर्णयः**

**न हि कश्चित् क्षणमपि जातु तिष्ठत्यकर्मकृत् ।**
**न च ज्ञानं विना कर्म पुरुषार्थकरं भवेत् ॥"**

**—इति ब्रह्मवैवर्ते ।**

***न्या०दी०***— कर्माभावे कुतो न पुरुषार्थ इति चेत् किं कर्मपदेन कर्ममात्रं विवक्ष्यते अथ यज्ञादिकर्म वा । आद्यं दूषयति **न हीति** ।। द्वितीयं दूषयति **न चेति** ।। ज्ञानमात्रं कर्म विना संसारनिवृत्तिसाधनमपि न सम्पूर्णपुरुषार्थकरमिति भावः । तर्ह्यस्तु केवलं कर्मैव पुरुषार्थकरमित्यत आह **न चेति** ।। ''न कर्मणा न प्रजया'' इत्यादिश्रुतिविरोधादिति भावः ।

***भा०दी०***— **न हीतीति** । कर्ममात्राभावोऽसम्भवीति भावः ।। **न सम्पूर्णेति** । मुक्तौ स्वयोग्ययावदानन्दानुभवरूपेत्यर्थः । तस्य ज्ञानोत्तरकर्मसचिवज्ञानसाध्यत्वात् इति भावः । तदेव वाक्यमन्यथाऽपि योजयति **तर्ह्यस्त्विति** ।।

**गीतातात्पर्यनिर्णयः**

**निष्ठा पर्यवसितिर्मुक्तिः ।**

***न्या०दी०***— अनेन ''न कर्मणामनारम्भात्'' इत्यादेश्च तात्पर्यमुक्तं भवति । भवेदत्र ज्ञानकर्मणोः समुच्चयकल्पनं, यद्यत्र साङ्ख्ययोगादेः पुरुषार्थहेतुत्वमुच्यते । एकैकस्य पुरुषार्थसाधनत्वाभावोक्तेः । न च तदत्रोच्यत इत्यत आह **निष्ठेति** ।। 'ष्ठा गतिनिवृत्तावि'त्यतो निष्ठा पर्यवसितिः । गतेरिति शेषः । कथमनेन चोद्यपरिहार इत्यत आह **मुक्तिरिति** ।। अत्र निष्ठापदेन गतिपर्यवसितिवाचिना संसारगतिपर्यवसानं मुक्तिरभिप्रेतेत्यर्थः ।

***भा०दी०***— **अनेनेति** । न च ज्ञानं विनेत्यादिकथनेनेत्यर्थः । अस्मिंल्लोके संसारे ज्ञानेन साङ्ख्यानां कर्मणा योगिनां निष्ठा नितरां स्थितिः न तु मुक्तिरिति भ्रान्तः शङ्कते **भवेदत्रेत्यादिना** ।। **न च तदत्रेति** । समुच्चयस्य पुरुषार्थहेतुत्वमित्यर्थः ।। **चोद्येति** । भवेदित्यादिना कृतचोद्येत्यर्थः ।।

**गीतातात्पर्यनिर्णयः**

**''ज्ञानिनो मोक्षनियमस्तथाऽपि शुभकर्मणा ।**
**आनन्दवृद्धिरन्येन ह्रासो ज्ञानं तु कर्मणा ।।'' इति परमश्रुतेः,**

***प्रका०***— ज्यायस्त्वेऽपि बुद्धियोगस्य कर्मणः करणं युक्तम् । ज्ञानफलेऽतिशयजनकत्वात् । तदुक्तं श्रुत्या **ज्ञानिनो मोक्षनियम इति** । **ज्ञानं कर्मणा** इत्यस्य ज्ञानोत्पत्तिः कर्मणैवेत्यर्थः ।

**गीतातात्पर्यनिर्णयः**

**''न कर्मणा न प्रजया धनेन'' इत्यादिविरोधो न ।**

*प्रका०*— "न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुरि"ति श्रुतिः । केवलं कर्मणा अमृतत्वं न प्राप्यत इत्येतदभिप्रायेणोपपाद्य "तमेवं विद्वानमृत इह भवति, नान्यः पन्था अयनाय विद्यत" इति श्रुतेरपि ज्ञानं परित्यज्य मोक्षं गन्तुं अन्यत्साधनं नास्तीत्यर्थः । न तु मत्यतिशयजनकं कर्म न कर्तव्यमिति । अतो "ज्ञानयोगेन साङ्ख्यानां कर्मयोगेन योगिनाम्" इत्यस्यायमर्थः । ज्ञानप्रचुरेण कर्मणा साङ्ख्यानां मुक्तिः । कर्मप्रचुरेण ज्ञानेन कर्मयोगिनां मुक्तिरिति । न तु साङ्ख्यानां कर्मरहितज्ञानेन मुक्तिरिति । "न कर्मणामनारम्भादि"त्यादिवाक्यशेषेण साङ्ख्यकर्मयोगिसाधारणेन विरोधः स्यात् । साधारण्यं चास्य "न हि कश्चित्क्षणमि"त्युपरितन-वाक्यादवगम्यते ॥

*न्या०दी०*— नन्वेवं ज्ञानकर्मभ्यां मोक्ष इत्यङ्गीकारे "न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुः" इत्यादिश्रुतिविरोधः स्यादित्यत आह **ज्ञानिन इति** ॥ ज्ञानकर्मभ्यां मोक्ष-सिद्ध्यङ्गीकारेऽपि नैतच्छ्रुतिविरोधः । कर्मरहितज्ञानमात्रस्य मोक्षसाधनत्वाभिधानात् । अस्माभिरपि तदङ्गीकारात् । कर्मणस्तु ज्ञानमात्रेणैव सिद्धे मोक्षे सुखाधिक्यहेतुत्वेनाङ्गीकारात् । ज्ञानादेव मोक्षः कर्मणा आनन्दवृद्धिरित्येतत् कुत इति चेत् ज्ञानिन इति श्रुतेरेवेति भावः ।

**गीतातात्पर्यनिर्णयः**

**अन्यथा "न कर्मणामनारम्भात्" इत्याद्युभयसमवाक्यशेषविरोधश्च ।**

*न्या०दी०*— इतश्च "ज्ञानयोगेन" इत्यत्र कर्मापि संयोज्यम् । न ज्ञानमात्रमित्याह **अन्यथेति** ॥ अन्यथा ज्ञानमात्रेणैव पुरुषार्थाङ्गीकारे । कर्मयोगिनामपि प्रकृतत्वात् तेषां कर्मानारम्भे पुरुषार्थासम्भवाभिधायकमेतद्वाक्यं किं न स्यादित्यत उक्तम् **उभयेति** ॥ न केवलमेतत्कर्मयोगि-विषयम्, अपि तु उभयविषयमित्यर्थः ।

**गीतातात्पर्यनिर्णयः**

**समत्वं च "न हि कश्चित्" इत्यादेः । "नान्यः पन्थाः" इत्यपि ज्ञानमृते न मोक्ष इत्येव आह ॥ ३-४ ॥**

*न्या०दी०*— कुतोऽस्योभयविषयत्वं ज्ञायत इत्यत आह **समत्वं चेति** ॥ मोक्षे कर्मणा आनन्दवृद्धिर्भवतीत्ययुक्तम् । "नान्यः पन्था" इति श्रुतौ कर्मणो मोक्षसम्बन्धस्यैव निराकरणा-दित्यत आह **नान्य इति** ॥ ज्ञानायोगमेवेयं श्रुतिर्व्यवच्छिनत्ति । न तु कर्मसम्बन्धं निराकरोति । तथात्वे "ज्ञानिनो मोक्षनियमः" इति श्रुतिविरोधादिति भावः ॥ ३-४ ॥

गीता

**न हि कश्चित् क्षणमपि जातु तिष्ठत्यकर्मकृत् ।**
**कार्यते ह्यवशः कर्म सर्वः प्रकृतिजैर्गुणैः ॥ ५ ॥**

***वि०वि०***— किञ्च, सर्वात्मना कर्मणां त्यक्तुमशक्यत्वान्न कर्माकरणेन मुक्तिरित्याह **न हि इति** । जातु कस्याञ्चिदवस्थायाम् । क्षणमात्रमपि कश्चिदपि ज्ञानी वाऽज्ञो वा । कर्मकृत् कर्माण्यकुर्वाणो न तिष्ठति । तत्र हेतुः **कार्यत इति** । सर्वो जनः प्रकृतिजैर्गुणैः सत्वादिभिः, अवशो अस्वतन्त्रः विष्णुवशो वा । 'अः इति ब्रह्म' इति श्रुतिः । कर्म कार्यते । अत्रेश्वरजीव-जडानां कर्तृत्वमनेकविधम् । तदुक्तम्—

'तस्मात्स्वतन्त्रकर्तृत्वं विष्णोरेव न चान्यगम् ।
तदधीनस्वतन्त्रत्वं स्वावरापेक्षयैव तु ॥
जीवस्य विकृतिर्नाम कर्तृत्वं जडसंश्रयम् ।
पुमान् दोग्धाऽथ गौर्दोग्ध्री स्तनो दोग्धेतिवत् क्रमात् ॥' इति ॥

***वा०ल०***— 'न हि कश्चित्' इत्यत्र अकर्मकृत् चक्षुरुन्मेषणनिमेषणभोजनादीनां सर्वैः क्रियमाणत्वात् अकर्मकृन्न तिष्ठतीत्युक्तम् । अवशः विष्णुवशः ॥

***सा०सं०***— किञ्च 'कर्मणा' इत्यादिस्मृतिबलात् कर्मणो मुक्तिप्रतिबन्धकत्वमिति तृतीयपक्षे स्मृतौ कर्मशब्दः सङ्कुचितवृत्तिरिति वक्ष्यमाणोपोद्धाततया कर्माणि सर्वात्मना त्यक्तुं न शक्यानीत्याह **न हीति** । **जातु** कस्याञ्चिदवस्थायाम् । क्षणमात्रमपि कश्चिदपि ज्ञोऽज्ञो वा । **अकर्मकृत्** कर्माण्यकुर्वन् न तिष्ठति । कुत इत्यत उक्तम् **कार्यत इति** । **सर्वः** सर्वेण जनेन, व्यत्ययात् । अवशः अवशेन 'अः इति ब्रह्म' (ऐ.आ. २-३-८) इति श्रुतेः । विष्णुवशेनैव (सता) कर्त्रा स्वतन्त्रकर्तृ-विष्णवधीनकर्तृताकेनैव सता । **प्रकृतिजैर्गुणैः** सत्त्वादिभिर्विकारकर्तृभूतैः कर्म कार्यते । स्वतन्त्र-कर्त्रा भगवता विकारकर्तृसत्वादिभिश्च प्रेरितो जनः सदा किञ्चित् कर्म करोतीति हेतोरकर्मकृत् कोऽपि नेत्यर्थः ॥

***अ०प्र०***— कर्मणां संन्यासः तेष्वनासक्तिमात्रं न तु स्वरूपेण अशक्यत्वादित्याह **न हीति** ।

कश्चित्[१], जातु[२], क्षणमपि[३], अकर्मकृत्[४], न तिष्ठति[५], हि[६], सर्वः जनः[७], अवशः सन् अस्व-तन्त्रः विष्णुवशो वा यद्वा अनिच्छन् सन्[८], प्रकृतिजैः[९], गुणैः[१०], कर्म[११], कार्यते[१२] इत्यन्वयः ।

कश्चित् = ज्ञानी वा अज्ञो वा[१], जातु = कदाचिदपि दिवादौ जाग्रदवस्थायां वा[२], क्षणमपि = क्षणमात्रमपि[३], अकर्मकृत् = कर्माण्यकुर्वाणो[४], न तिष्ठति[५], हि = यस्मात्[६], सर्वः जनः = सर्वोऽपि जनः[७], प्रकृतिजैः = स्वभावप्रभवैः रागद्वेषादिभिः, यद्वा प्रकृतिशब्दवाच्यानां ईश्वरजीवजडानां सकाशाज्जातैः[९], गुणैः = इच्छादिभिः सत्त्वादिभिश्च कर्तृभिः[१०], कर्म कार्यते = कर्मणि प्रवर्त्यते, यद्वा ईश्वरादिः जीवेन सदा कर्म कारयत्येव । जीवस्तु स्वयमस्वतन्त्रत्वात् तत्कर्म त्यक्तुमशक्त एवेति भावः[११,१२], अत्र ईश्वरजीवजडानां कर्तृत्वमनेकविधम् । तदुक्तम्—

'तस्मात्स्वतन्त्रकर्तृत्वं विष्णोरेव न चान्यगम् ।
तदधीनस्वतन्त्रत्वं स्वावरापेक्षयैव तु ॥
जीवस्य विकृतिर्नाम कर्तृत्वं जडसंश्रयम् ।
पुमान्दोग्धाऽथ गौः दोग्ध्री स्तनो दोग्धेति च क्रमात् ॥' इति ॥ ५ ॥

**भाष्यम्**

## न तु कर्माणि सर्वात्मना त्यक्तुं शक्यानीत्याह— न हीति ॥ ५ ॥

***प०टी०***— एवं कर्मत्यागेन न मोक्ष इत्युक्तम् । इदानीं सोऽपि न युक्त इत्यर्थे श्लोकमवतारयति **न चेति** ॥

***न०टी०***—नन्वकामकर्मणां मोक्षाविरोधित्वेऽपि, अधमाधिकारिणामप्रायत्यकरत्वात् तत्सङ्कोचेन यत्याश्रमश्चेत्, सर्वकर्मत्याग एव श्रेयान् कर्मार्थप्रवृत्तेन्द्रियस्य विषयसङ्गभयादित्याशङ्कापरिहारायोत्तरश्लोकानवतारयति **न त्विति** । तथाऽपि यथाशक्त्यखिलं कर्म त्याज्यम्, विषयसङ्गपरित्यागस्यावश्यकत्वादिति भावेनाशङ्क्य तदुत्तरत्वेनोत्तरं श्लोकद्वयमवतार्य व्याचष्टे **तथाऽपीति** ॥

***प्र०दी०***— ज्ञानरहितात् कर्मत्यागरूपात् यत्याश्रमात्सिद्धिं न समधिगच्छतीति किल पूर्वमुक्तम् । तत्र हेत्वाकाङ्क्षायां 'न हि कश्चित्' इत्युच्यत इति व्याख्यानमसदिति भावेन श्लोकतात्पर्यमाह— **न त्विति** । न ह्यत्र ज्ञानस्यावश्यकत्वे किञ्चिदुच्यते । नापि यज्ञादिकर्माकरणस्यासम्भवोऽभिधीयते । येन प्रकृतसङ्गतिः स्यात् । किन्तु शरीरयात्राद्यर्थानां कर्मणामपरिहार्यत्वम् । अतो नेदं व्याख्यानम् । अपि तर्हि "कर्मणा बध्यते जन्तुः" इति स्मृतिमाश्रित्य यस्तृतीयः पक्षस्तमाशङ्क्य 'यज्ञार्थात्' इति स्मृतेरर्थसङ्कोचं वक्ष्यति । तत्र कुतः स्मृतेरर्थसङ्कोच इत्याकाङ्क्षा स्यात् । तामपाकर्तुमुपोद्घातन्यायेन कर्मशब्दस्तावदसङ्कुचितार्थः परेणाप्यङ्गीकर्तुमशक्य इति प्रतिपादयितुं कर्माणि सर्वात्मना त्यक्तुं नैव शक्यानीत्यनेनाहेति भावः ॥

*भा०दी०*— अपव्याख्यां स्वयं निराह **न ह्यत्रेति** । **प्रकृतेति** । त्वदभिप्रेतपूर्वश्लोकार्थ-सङ्गतिरित्यर्थः । **तृतीयः पक्ष इति** । ज्ञानं तु मोक्षसाधनं भवत्येषु कर्मणीति प्रतिबन्धकानीति प्राग्विकल्पितः पक्ष इत्यर्थः । आद्यस्य द्वेधाविकल्पितत्वादयं द्वितीयस्तृतीयत्वेनोक्तः ॥ ५ ॥

*भा०र०*— **इति व्याख्यानमसदिति** । कस्मात् पुनः कारणात् कर्मसंन्यासादेव ज्ञानरहितात् सिद्धिं नैष्कर्म्यलक्षणां पुरुषो न समधिगच्छतीत्यत्र हेत्वाकाङ्क्षायामाहेति सङ्करव्याख्यानमित्यर्थः । कथमनेनापव्याख्याननिरसनम् ? इत्यतो भाष्यभावं व्यञ्जयन्नाह **न ह्यत्रेति** । अत्र "न हि कश्चित्" इति श्लोके । ज्ञानरहितात् कर्मत्यागरूपाद् यत्याश्रमान्न मोक्ष इत्यर्थे हेतुप्रतिपादनपरे "न हि कश्चित्" इत्यत्र किञ्चित् साधकं वक्तव्यम् । तथात्वे ज्ञानराहित्यरूपविशेषणविघटनाद् विशिष्टस्य कारणत्वाभावः सेत्स्यति । यज्ञादिरूपविहितकर्मत्यागासम्भवो वाऽत्राभिधातव्यः । तथात्वे विशेष्याभावसम्पादनेन विशिष्टस्य हेतुत्वं विहन्यते । तत्राऽऽद्यो न युक्तः । ज्ञानावश्यकतायां साध-कोपन्यासानुपलम्भात् । न द्वितीयः । विहितत्यागस्य कार्यत्वानभिधानात् । येनान्यतराभिधानेन ज्ञानरहितकर्मत्यागस्य मोक्षहेतुप्रतिपादकतया सङ्गतिः स्यादिति भावः । **अपरिहार्यत्वम्** 'अभि-धीयते' इति वर्तते । **तृतीयः पक्ष इति** । यद्यपि, "उत ज्ञानं मोक्षसाधनं भवत्येव । किन्तु "कर्मणा बध्यते जन्तुः" (सं.उ. २.२१) इत्यादेः कर्माणि तत्प्रतिबन्धकानीति मत्वा" इति विक-ल्पितत्वाद् अयं द्वितीयपक्ष इव भाति । तथाऽप्याद्यपक्षस्य द्वेधा विकल्पितत्वात् तदपेक्षया अयं तृतीयतयोक्त इति स्वामिनः । **स्मृतेः** "कर्मणा बध्यते जन्तुः" इति स्मृतिगतकर्मशब्दस्य । **वक्ष्यति** गीताकारः । **उपोद्धातः** प्रकृतिसिद्ध्यनुकूलार्थान्तरपरामर्शः । **परेणापि** कर्मत्यागरूपाद् यत्याश्रमान्नैष्कर्म्यमिति वदता पूर्वपक्षिणाऽपि ॥ ५ ॥

**गीता**

## कर्मेन्द्रियाणि संयम्य य आस्ते मनसा स्मरन् ।
## इन्द्रियार्थान् विमूढात्मा मिथ्याचारः स उच्यते ॥ ६ ॥

*वि०वि०*— ननु कर्मणां सर्वात्मना त्यक्तुमशक्यत्वेऽपि शक्यानां त्यागः कार्य इत्यत आह **कर्मेद्रियाणीति द्वाभ्याम्** । कर्मेन्द्रियाणि वागादीनि संयम्य निगृह्य । यो मनसा इन्द्रियार्थान् विषयान् स्मरन्नास्ते स विमूढात्मा भ्रान्तचित्तः मिथ्याचारः कपटाचारः दाम्भिक इति उच्यते ॥

*वा०ल०*— इन्द्रियार्थान् मनसा स्मरन् इति सम्बन्धः ॥

*सा०सं०*— ननु शरीरयात्राद्यर्थकर्मणां त्यक्तुमशक्यत्वेऽपि यज्ञादिकर्मणां त्यक्तुं शक्यत्वात् तेषामस्तु त्यागः । न ह्यशक्यविषये शास्त्रप्रवृत्तिरस्ति । अतः 'कर्मणा बध्यते' इति कर्मत्यागपरे शास्त्रे कर्मशब्दो यज्ञादिकर्मपरो भविष्यतीत्यतो मन एव बन्धमोक्षयोः प्रयोजकं न कर्मकरणाकरणे इति भावेन मनस एव प्राधान्यमाह **कर्मेत्यादि** श्लोकाभ्याम् । **कर्मेन्द्रियाणि** वाक्पाणिपाद-पायूपस्थानि । चक्षुरादीन्युपलक्ष्यन्ते । **संयम्य** निगृह्य, **यो मनसा इन्द्रियार्थान्** रूपादीन्, **मनसा स्मरन्नास्ते** वर्तते । **स विमूढात्मा** भ्रान्तः । **मिथ्याचारः** कपटाचारः डाम्भिक उच्यत इत्यर्थः । **यस्त्विन्द्रियाणि** चक्षुरादिज्ञानेन्द्रियाणि । **मनसा नियम्य** । **असक्तः** फलेच्छाहीनः सन् । **कर्मेन्द्रियैः कर्मयोगं** स्ववर्णाश्रमोचितकर्मरूपज्ञानोपायम् । **आरभते** करोति । **स विशिष्यते** पूर्वतनादधिको भवति ।

*अ०प्र०*— ननु शरीरशरीरयात्राद्यर्थानां कर्मकर्तुमशक्यत्वेऽपि शक्यानां यज्ञादीनां त्यागः कार्य इत्यत आह **कर्मेन्द्रियाणीति** द्वाभ्याम् । अतोऽज्ञं कर्मत्यागिनं निन्दति **कर्मेति** ।

यः[१], विमूढात्मा[२], कर्मेन्द्रियाणि[३], संयम्य[४], मनसा[५], इन्द्रियार्थान्[६], स्मरन् सन्[७], आस्ते[८], सः[९], मिथ्याचार इति[१०], उच्यते[११], इत्यर्थः ।

यः = पुरुषः[१], विमूढात्मा = अविशुद्धतया मनसः आत्मनि स्थैर्याभावात् भ्रान्तचित्तः[२], कर्मेन्द्रियाणि = वाक्पाण्यादीनि कर्मेन्द्रियाणि च दश संयम्येति वा, संयम्य = निगृह्य[४], मनसा = भगवद्ध्यानच्छलेन[५], इन्द्रियार्थान् = विषयान्[६], स्मरन् सन्[७], आस्ते[८], सः = पुरुषः[९], मिथ्याचारः = कपटाचारो दाम्भिक इति[१०], उच्यते[११] ॥ ६ ॥

**गीता**

## यस्त्विन्द्रियाणि मनसा नियम्यारभतेऽर्जुन ।
## कर्मेन्द्रियैः कर्मयोगमसक्तः स विशिष्यते ॥ ७ ॥

*वि०वि०*— यस्तु ज्ञानेन्द्रियाणि मनसा नियम्य कर्मेन्द्रियैः कर्मयोगं स्ववर्णाश्रमोचितम् । असक्तः फलेच्छारहितः । आरभते करोति । स अधिको भवति । अनेन मन एव बन्धमोक्षयोः प्रयोजकं न कर्मकरणाकरणे । अतस्तन्निग्रह एव कार्यो न कर्मत्याग इत्युक्तं भवति ॥

*वा०ल०*— 'असक्तः स विशिष्यते' इत्यत्र असक्तः फलापेक्षारहितः ॥

***सा०सं०***— एतेन पूर्वश्लोके मनसो निग्रहाभावे बन्ध इत्यन्वयः, द्वितीये तु मनसो निग्रहे बन्धाभाव इति व्यतिरेक उक्तः । तथा पूर्वत्र मनसोऽनिग्रहे मोक्षाभाव इति व्यतिरेकः, द्वितीये तु श्लोके मनसो निग्रहे मोक्ष इत्यन्वयः इति बन्धापेक्षया मनसोऽनिग्रहनिग्रहयोरन्वयव्यतिरेकौ, मोक्षापेक्षया च व्यतिरेकान्वयावित्युक्तदिशाऽभिप्रेततया बन्धमोक्षयोर्मनोऽनिग्रहनिग्रहावेव प्रयोजकावित्युक्तं भवति । मनस एव प्रयोजकत्वज्ञापनाय मनसा स्मरन्नित्युक्तिः । अन्यथा स्मरणस्य मानसत्वाव्यभिचारान्मनसेति व्यर्थं स्यादिति ज्ञेयम् ॥ ७ ॥

***अ०प्र०***— यो तद्विपरीतः कर्मकर्ता श्रेष्ठ इत्याह **यस्त्विति** ।

हे अर्जुन[१], यस्तु[२], मनसा[३], इन्द्रियाणि[४], नियम्य[५], असक्तः सन्[६], कर्मेन्द्रियैः[७], कर्मयोगं[८], आरभते[९], स[१०], विशिष्यते[११] इत्यन्वयः ।

हे अर्जुन[१], यस्तु = यश्च पुरुषः[२], मनसा = सह तेन वा[३], इन्द्रियाणि = ज्ञानेन्द्रियाणि[४], नियम्य = प्रत्याहृत्येश्वरे कृत्वा ईश्वरप्रवणानि कृत्वा[५], असक्तः सन् = फले कर्मणि च स्नेहशून्यः यद्वा फलाभिलाषरहितः सन्[६], कर्मेन्द्रियैः = वागादिभिः[७], कर्मयोगं = कर्मरूपोपायं स्ववर्णाश्रमोचितं[८], आरभते = अनुतिष्ठति करोति वा[९], सः विशिष्यते = सोऽधिक इत्यर्थः[१०,११], चित्तशुद्ध्या ज्ञानवान् भवतीत्यर्थः, अत्र मनोनिग्रहाभावे संसारो, मनोनिग्रहे संसाराभावः इत्यन्वयव्यतिरेकौ पूर्वोत्तराभ्यां श्लोकाभ्यामुक्तौ । तथा च मन एव बन्धमोक्षयोः प्रयोजकं, न कर्मणां कारणाकारणे । अतो मोक्षार्थं मनोनिग्रह एव कार्यः न कर्मत्यागमित्युक्तं भवति । "मन एव मनुष्याणां कारणमि"ति वचनात् ॥ ७ ॥

**भाष्यम्**

**तथापि शक्तितस्त्यागः कार्य इत्यत आह— कर्मेन्द्रियाणीति । मन एव प्रयोजकमिति दर्शयितुं अन्वयव्यतिरेकावाह— मनसा स्मरन्, मनसा नियम्येति । कर्मयोगं स्ववर्णाश्रमोचितम् । न तु गृहस्थकर्मैवेति नियमः । संन्यासादिविधानात् । सामान्यवचनाच्च ॥ ६ ॥ ७ ॥**

***प०टी०***— ननु मानसकर्मत्यागायोगेऽपि बाह्यकर्मणस्त्यक्तुं शक्यत्वात् तत्त्यागः कार्यः । कर्मणो बन्धकत्वात् । कियानपि लाभो लाभ एवेति न्यायादित्याशङ्क्य, उत्तरत्वेनोत्तरश्लोकद्वयमवतारयति **तथाऽपीति** । यथाशक्ति मनोनिग्रह एव कार्यो न कर्मत्यागः । मनस एव बन्धमोक्ष-

हेतुत्वात्, कर्मणस्तदभावादित्यर्थः । 'कर्मयोग'शब्दस्यापव्याख्यां निराकुर्वंस्तदर्थमाह **कर्मेति** । न सर्वैः कार्यः कर्मयोगो गृहस्थकर्माख्यः । आश्रमान्तरविधिवैयर्थ्यात् । कर्मयोगपदस्य सामान्यतः सर्वाश्रमिकर्मवाचित्वादेवेत्यर्थः ॥

***न०टी०***— विषयासक्तौ मनः प्रयोजकं न सर्वकर्मत्याग इत्याह **मन एवेति** । ननु कर्मयोगेन योगिनाम्' इत्यत्र कर्मयोगशब्दस्य गृहस्थादित्रयकर्मपरत्वेन व्याख्याततत्वात् । तत्कर्त्तैवाधिकश्चेत् सर्वैरपि तदनुष्ठानात् प्रायत्याभावेन तज्ज्ञानाभाव इत्यत आह **कर्मयोगमिति** । तत्तदधिकारिणां संन्यासादिविधानात्, 'कर्मयोगम्' इति सामान्यस्यैव वचनाच्च, स्ववर्णाश्रमोचितमेव स्यात् सर्वेषाम् । न गृहस्थकर्म न वनस्थकर्म वेत्यर्थः ॥

***प्र०दी०***— तथापि 'कर्मेन्द्रियाणि' इत्यसङ्गतम् । तृतीयपक्षस्थेन मनसेन्द्रियार्थस्मरणस्यानुक्तत्वादित्यत आह— **तथाऽपीति** । यद्यपि शरीरयात्राद्यर्थानि कर्माणि त्यक्तुमशक्यानि । तथापि शक्तितः शक्यत्वाद्यज्ञादिकर्मणां त्यागः कार्यः । एतदुक्तं भवति । नाशक्यविषये शास्त्रप्रवृत्तिरित्यतस्तद्व्यतिरिक्तकर्मार्थः स्मृतौ कर्मशब्दो भविष्यतीति । एतच्छङ्कापरिहारः श्लोके न दृश्यते । द्वितीयश्लोकश्च व्यर्थ इत्यत आह— **मन एवेति** । मन एव बन्धमोक्षयोः प्रयोजकम् । न कर्मकरणाकरणे । अतस्तन्निग्रह एव कार्यो न कर्मत्याग इति ज्ञापयितुमित्यर्थः । अनिगृहीतत्वे मनसो बन्धापेक्षया आद्योऽन्वयः । द्वितीयो व्यतिरेकः । मोक्षापेक्षया तु व्यत्यास इति । एतेन स्मरणस्य मानसत्वाव्यभिचारात् 'मनसा' इति व्यर्थमित्यपि परास्तम् । ''कर्मयोगेन योगिनाम्'' इत्यत्र कर्मयोगशब्दस्य गृहस्थादिकर्मविषयत्वेन प्रकृतत्वादत्रापि तद्विषयत्वप्रतीतिः स्यात् । तन्निरासार्थमाह— **कर्मयोगमिति** । गृहस्थकर्मैव वनस्थकर्मैव ब्रह्मचारिकर्मैवेति नियमो न विवक्षित इत्यर्थः । 'संन्यासादि' इत्यादिपदेन यो नियम्यते तद्व्यतिरिक्तग्रहणम् । कर्मयोगशब्दस्य सामान्यवाचित्वाच्च । पूर्वं 'ज्ञानयोगेन साङ्ख्यानाम्' इति यत्याश्रमकर्मणः पृथगुक्तत्वात्सामान्यशब्दोऽपि विशेषे व्यवस्थितः । न चात्र तथाविधं किञ्चिदस्तीति भावः ॥

***भा०दी०***— **इन्द्रियार्थस्मरणस्येति** । मोक्षप्रतिबन्धकत्वेनेति योज्यम् । **स्मृताविति** । कर्मणो बन्धकत्वोक्त्या तत्त्यागपरायां 'कर्मणा बध्यते जन्तुरि'ति स्मृतौ कर्मशब्दो शक्यकर्मव्यतिरिक्तकर्मपर इत्यर्थः । **आद्य इति** । कर्मेन्द्रियाणीति श्लोकद्वितीयो यस्त्विन्द्रियाणीति श्लोकं व्यत्यास इति, द्वितीयो अन्वयः, आद्यो व्यतिरेक इत्यर्थः । **एतेनेति** । मनस एव प्रयोजकत्वोक्तिपरत्वकथनेनेत्यर्थः । मनसेत्यनुक्तौ तस्यालाभादिति भावः । भाष्यमुपलक्षणं मत्वा आह **गृहस्थकर्मैवेत्यादि** । 'कर्मयोगेन योगिनामि'त्याश्रमत्रयविहितकर्मणामपि प्रकृतत्वादेव व्याख्या कार्येति

भावः । न विवक्षित इत्यनन्तरं किं त्वाश्रमचतुष्टयधर्मोऽपि विवक्षित इति योज्यम् । नन्वेवमुत्तरवाक्ये संन्यासविधानामित्येव वाच्यपदं न युक्तमित्यत आह **संन्यासादीत्यादिपदेनेति** । यदा न गृहस्थकर्मैवेति नियम इत्यर्थः । तदा वनस्थत्वब्रह्मचारित्वयोर्विधानादित्यस्य ग्रहणम् । यदा वनस्थकर्मैवेति नियम इत्यर्थः । तदा गृहस्थं ब्रह्मचर्ययोर्ग्रहणं यदा तु न ब्रह्मचारिकर्मैवेति नियम इति भाष्यार्थस्तदा गार्हस्थवनस्थयोर्ग्रहणमित्यर्थः । **सामान्येति** । आश्रमचतुष्टयसर्वकर्मयोगसाधारणवचनत्वात् इत्यर्थः । कथं तर्हि 'कर्मयोगेन योगिनाम्' इत्यत्र कर्मयोगपदस्याश्रमत्रयकर्मपरत्वोक्तिरित्यत आह **पूर्वमिति** ॥

***भा०र०*— तथाऽपि** "न हि कश्चित्" इत्यस्य शरीरयात्राद्यर्थककर्मत्यागायोगप्रतिपादकतया सर्वकर्मत्यागासम्भवेऽपि । असङ्गतिमुपपादयति **तृतीयेति** । "कर्मणा बध्यते जन्तुः" (सं.उ. २.२१) इति स्मृतिमाश्रित्य यस्तृतीयः पक्षः चोदितः तत्स्थेन । मनःकारणकेन्द्रियार्थस्मरणस्य मोक्षप्रतिबन्धकताया अनुक्तत्वात् 'कर्मेन्द्रियाणि' इति पद्यं न सङ्गतमित्यर्थः । प्रतियोगि दर्शयन् 'तथाऽपि' इत्येतदर्थमाह **यद्यपीति** । शक्तित इत्यस्यार्थः **शक्यत्वादिति** । शक्यत्वघटनायोक्तम् **यज्ञादीति** । अनेन त्यागार्हकर्मपरः स्मृतौ कर्मशब्द इत्यत्र किं नियामकमुक्तम् ? इत्यत आह **एतदुक्तमिति** । 'प्रयोजकम्' इत्युक्ते 'कस्य' इति न ज्ञायते । अतः प्रयोज्यं संयोजयति **बन्धमोक्षयोरिति** । **न कर्मत्याग इति ज्ञापयितुमिति** । तथा च "एतदुक्तं भवति" इति कृतशङ्कापरिहारः श्लोकारूढः कृत इति भावः ।

"अन्वयव्यतिरेकौ" इति भाष्ये "मन एव" इति प्रकृतत्वान्मनस एवेति वक्तव्यम् । तन्न युज्यते । बन्धे मोक्षे च मनसः कारणीभूतस्यावर्जनीयतया व्यतिरेकसम्पादनासम्भवाद् इत्याशङ्क्य विशिष्टस्य मनसोऽन्वयो विशिष्टस्य मनसो व्यतिरेकः । विशेषणं च निगृहीतत्वमनिगृहीतत्वं च । तत्र "अनिगृहीतत्वविशिष्टे मनसि सति बन्धः", "अनिगृहीतत्वविशिष्टमनसोऽभावे बन्धाभावः", निगृहीतत्वविशिष्टे मनसि सति मोक्षः", "निगृहीतत्वविशिष्टमनसोऽभावे मोक्षाभावः" इति मनसो बन्धमोक्षौ प्रत्यन्वयव्यतिरेकौ वक्तुं श्लोकद्वयम् । तत्रापि 'कर्मेन्द्रियाणि' इत्याद्यः श्लोको बन्धं प्रत्युक्तान्वयप्रदर्शनाय प्रवृत्तः । "यस्त्विन्द्रियाणि" इति द्वितीय उक्तव्यतिरेकप्रदर्शनाय । एवमन्वयव्यतिरेकौ बन्धं प्रति, मोक्षं प्रति तु "निगृहीतमनसः सत्त्वे मोक्षः" इत्यन्वयप्रदर्शको द्वितीयः । "निगृहीतमनसोऽसद्भावे मोक्षाभावः" इति व्यतिरेकप्रदर्शक आद्यः श्लोकः । प्रथमे श्लोके 'मिथ्याचारः' इति बन्धस्य, द्वितीये "स विशिष्यते" इति मोक्षस्य चाभिधानात् । तथा चोक्तशङ्कानिरासो द्वितीयश्लोकावैयर्थ्यं चेति भावः । **एतेनेति** । मनसो बन्धप्रयोजकत्वप्रदर्शनार्थं मनोग्रहणस्याव-

श्यकत्वेनेत्यर्थः । **इत्यपीति** । न केवलमेतच्छङ्कापरिहारः श्लोके न दृश्यत इति चोद्यं, द्वितीय-श्लोकश्च व्यर्थ इति चोद्यं च "मन एव" इत्यादिभाष्येण परिहृतम् । किन्तु गीतायाम् "मनसा" इति व्यर्थम् इत्यपि चोद्यं परिहृतमित्यर्थः । "गृहस्थकर्मैव इति नियमः" इति भाष्य इतिशब्द आद्यर्थ इति भावेन तद् व्याचष्टे **गृहस्थकर्मैव वनस्थकर्मैवेति** ।

कुत इत्यतः 'संन्यासादि' इत्यादिभाष्यम् । तत्र आदिपदार्थमाह **आदीति** । **नियम्यते** गृहस्थेनैवेदं कर्तव्यम्, वनस्थेनैवेदं कर्तव्यम्, ब्रह्मचारिणैवेदं कर्तव्यमिति यद्यन्नियम्यते तद्व्यतिरिक्तं कर्म सर्वं गृह्यते इत्यर्थः । 'सामान्य' इत्यतः पूर्वमध्याहार्यमाह **कर्मयोगशब्दस्येति** । **सामान्य-वाचित्वाच्चेति** । सामान्यतः सर्वाश्रमकर्मवाचित्वाच्चेत्यर्थः । नन्वेवं सति "कर्मयोगेन योगिनाम्" इत्यत्र कथं कर्मयोगशब्दस्य गृहस्थादिकर्ममात्रवाचित्वमिष्यते ? इत्यत आह **पूर्वमिति** । **सामान्यशब्दोऽपि** कर्मयोगसामान्यवाचकशब्दोऽपि । **विशेषे** गृहस्थादिकर्ममात्रे । **तथाविधं** विशेषव्यवस्थापकम् । नियामकमित्यर्थः ॥ ६-७ ॥

**गीता**

## नियतं कुरु कर्म त्वं कर्म ज्यायो ह्यकर्मणः ।
## शरीरयात्राऽपि च ते न प्रसिद्ध्येदकर्मणः ॥ ८ ॥

***वि०वि०***— ततः किमित्यत आह **नियतमिति** । वर्णाश्रमोचितं कर्म कुरु, हि यस्मादकर्मणः कर्माकरणात् । कर्म ज्यायः प्रशस्ततरम् । किञ्च अकर्मणस्तव देहनिर्वाहोऽपि न भवेत् ॥

***वा०ल०***— 'कर्म ज्यायो ह्यकर्मणः' इत्यत्र अकर्मणः सर्वथा कर्मनिरसनात् कर्म ज्यायः ॥

***सा०सं०***— ततः किमित्यत आह **नियतमिति** । हि यस्मात् **अकर्मणः** कर्माकरणात् । कर्मानुष्ठानं **ज्यायः** प्रशस्ततमम् । अतो **नियतं** वर्णाश्रमोचितम् । **कर्म कुरु** । किञ्च, **अकर्मणः** कर्माकुर्वतः । **ते** तव **शरीरयात्राऽपि** देहनिर्वाहोऽपि **न प्रसिद्ध्येदि**त्यर्थः ॥

***अ०प्र०***— हि[१], अकर्मणः[२], कर्म[३], ज्यायः[४], तस्मात् त्वम्[५], नियतं[६], कर्म[७], कुरु[८], च पुनः[९], अकर्मणः[१०], ते[११], शरीरयात्राऽपि[१२], न प्रसिद्ध्येत्[१३] इत्यन्वयः ।

हि = यस्मात् कर्मयोगं कुर्वाणो विशिष्यते[१], अकर्मणः = कर्माकरणात्[२], कर्म = तत्करणं[३], ज्यायः = प्रशस्ततरं श्रेष्ठं वा[४], तस्मात् त्वं[५], नियतं = नित्यसन्ध्योपासनादिकं वर्णाश्रमविहितं[६], कर्म[७], कुरु[८] । च = किञ्च[९], अकर्मणः = कर्म अकुर्वाणस्य सर्वकर्मशून्यस्य[१०], ते = तव[११], शरीरयात्राऽपि = शरीरधारणं देहनिर्वाहोऽपि[१२], न प्रसिद्ध्येत् = न भवेत्[१३] इत्यर्थः ॥

**भाष्यम्**

**अतो नियतं स्ववर्णाश्रमोचितं कर्म कुरु ॥ ८ ॥**

***प०टी०***— यतः कर्मत्यागेन न मोक्षो नाप्यसौ शक्यः, अतो नियतकर्मैव कुरु इत्युत्तरश्लोकार्थमाह **अत इति** ॥

***न०टी०***—यत एवमशक्यः सर्वथा कर्मत्यागः, अतो विहिताकरणादनर्थकरणाद्वरं स्ववर्णाश्रमविहितकरणमिति भावेनोत्तरश्लोकमवतारयति **अत इति** ॥

***प्र०दी०***— उत्तरश्लोकपर्यालोचनया चैवमेवेति भावेन सङ्गतिं सूचयन् व्याचष्टे— **अत इति** । अतःशब्दपरामर्शो 'कर्म ज्यायः' इत्यादिनैवोच्यते ॥

***भा०दी०***— **एवमेवेति** । कर्मयोगपदं सर्ववर्णसर्वाश्रमकर्मपरमेवेति भावेनेत्यर्थः । **उच्यत इति** । गीतायामुच्यत इत्यर्थः । अतो न व्याख्यायत इत्येवकारार्थः । एतेन प्रागुपपादितकर्मकरणावश्यकत्वस्यात इति हेतुकरणात् सङ्गतिः कार्यकारणरूपा सूचितेति भावः ॥

***भा०र०***— एवमेव कर्मयोगशब्दस्य स्ववर्णाश्रमोचितकर्मपरत्वमेव । अतःशब्दप्रयोगो भाष्ये कृतः तत्तात्पर्यमाह **सङ्गतिमिति** । भाष्यं घटयितुमाह **अतःशब्देति** । तथा च प्रागुपपादितकर्मकरणावश्यकत्वं स्यादिति हेतूकरणाद् हेतुहेतुमद्भावलक्षणा सङ्गतिरिति सूचयितुम् 'अतः' इति भाषितमिति भावः । उच्यते विव्रियते ॥

**गीतातात्पर्यनिर्णयः**

**"कर्तृत्वं द्विविधं प्रोक्तं विकारश्च स्वतन्त्रता ।**
**विकारः प्रकृतेरेव विष्णोरेव स्वतन्त्रता ॥" —इति पैङ्गिश्रुतेः ।**

**"कार्यते ह्यवश" इत्यत्र अवशो विष्णुवशः । "अः इति ब्रह्म" इत्यादि श्रुतेः ॥ ५-८ ॥**

***प्रका०***— एतदनन्तरं वाक्यम् । "कार्यते ह्यवशः कर्म सर्वः प्रकृतिजैर्गुणैः" इत्यत्र तृतीयया विभक्त्या प्रकृतिगुणानां जडत्वाद्विकारिलक्षणं कर्तृत्वमयुक्तम् । "अवशः सर्व" इति सर्वस्याकारवाच्यविष्णवधीनत्वोक्तेः स्वतन्त्रकर्तृत्वमभिप्रेतमित्याह **कर्तृत्वमिति** ॥

*न्या०दी०*— कार्यत इत्यत्र स्वतन्त्रकर्तुरन्यस्याप्रतीतेः प्रकृतिगुणानामेव स्वतन्त्र-कर्तृत्वमुच्यत इत्यन्यथाप्रतीतिनिरासायाह **कर्तृत्वमिति** ।। अत्र गुणानां विकारकर्तृत्व-मेवोच्यते । न तु स्वतन्त्रकर्तृत्वम् । अवश इति विष्णोः स्वतन्त्रकर्तृत्वोक्तेः । अवशपदेन स्वानधीनत्वं गृहीत्वा गुणानां स्वतन्त्रकर्तृत्वमेव किं न गृह्यत इति चेन्न । 'कर्तृत्वम्' इति श्रुतिविरोधादिति भावः । श्रुतिरिति कुत्रचित् पाठः । तत्रान्यथाप्रतीतिनिरासाय श्रुत्यैव व्याख्यातं विष्णोः स्वतन्त्रकर्तृत्वमत्र न प्रतीयत इत्यत उक्तम् **अवश इति** ।। अवशपदं कथं विष्णुवशत्वं वक्तीत्यत आह **अः इति** ।।

*भा०दी०*— **स्वानधीनमिति** । जीवानधीनमित्यर्थः ।। ५-८ ।।

**गीता**

## यज्ञार्थात् कर्मणोऽन्यत्र लोकोऽयं कर्मबन्धनः ।
## तदर्थं कर्म कौन्तेय मुक्तसङ्गः समाचर ।। ९ ।।

*वि०वि०*— ननु—

'कर्मणा बध्यते जन्तुर्विद्यया च विमुच्यते ।
तस्मात्कर्म न कुर्वन्ति यतयः पारदर्शिनः ।।'

इत्यादिवचनात् कर्मणो बन्धकत्वावगतेः कथं 'कुरु कर्म' इति विधीयत इत्याशङ्क्य अवैष्णवकर्मविषयं तद्वचनमित्याह **यज्ञार्थादिति** । यज्ञो विष्णुः । 'यज्ञो वै विष्णुः' इति श्रुतेः ।

अथवा विषयीकृतो ज्ञानरूपत्वात् ज्ञो भगवान् येनोद्देशेन स यज्ञः ।

'ज्ञो नाम भगवान् विष्णुः तं यात्युद्देश एष यः ।
स यज्ञ इति सम्प्रोक्तो विहिते कर्मणि स्थितः ।।'

इति वचनात् । तदर्थात्कर्मणोऽन्यत्र तदेकं विना । अयं लोकः । कर्म बन्धनं यस्य सः कर्मबन्धनः । अतस्तदर्थं यज्ञार्थं मुक्तसङ्गः कर्म समाचर ।।

*वा०ल०*— 'तदर्थं कर्म कौन्तेय मुक्तसङ्गः समाचर' इत्यत्र मुक्तसङ्गः त्यक्तफलस्नेहः ।।

*सा०सं०*— "कर्मणा बध्यते जन्तुर्विद्यया च विमुच्यते । तस्मात् कर्म न कुर्वन्ति यतयः पारदर्शिनः" इति स्मृतेर्मुक्तिप्रतिबन्धकत्वात् कर्म न कार्यमिति प्राग्विकल्पितं तृतीयं पक्षं निराह **यज्ञार्थादिति** । **यज्ञो** विष्णुः । 'यज्ञो वै विष्णुः' इति श्रुतेः । तदर्थात् विष्णवर्थात् । यद्वा, जाना-

तीति ज्ञः । 'इगुपधज्ञाप्रीकिरः कः' (३-१-१३५) स्वपरगताशेषविशेषज्ञत्वात्, ज्ञो विष्णुः । येनोद्देशेन यातो विषयीकृतः स उद्देशो यज्ञः । विष्णुविषयोद्देशार्थात् **कर्मणोऽन्यत्र** विष्णवन्यविषये विष्णूद्देशादन्योद्देशविषये वा । **अयं लोको** जनः । **कर्मबन्धनः** । 'कृत्यल्युटो बहुलम्' (३-३-११३) इति कर्तरि ल्युट् । कर्म बन्धनं बन्धकं यस्य स कर्मबन्धनः । अवैष्णवकर्मैव प्रतिबन्धकं न वैष्णवं कर्म । 'कर्मणा' इति स्मृतौ कर्मपदमवैष्णवकर्मपरम्, न तु कर्ममात्रपरम् । अत एव प्राक् 'नहि कश्चित्' इति श्लोके 'कर्मणा' इतिस्मृतिबलात् कर्ममात्रं न करोमीति त्वया वक्तुमशक्यम् । स्मृतौ कर्मपदस्य सङ्कोचस्त्वयाऽप्यभ्युपेय इति भावेनाकर्मकृत् कोऽपि नास्ति । सदा भगवदादि-प्रेरितः किञ्चित् कर्म कुर्वन्नेव सर्वोऽप्यास्ते, इत्यसङ्कुचितवृत्तित्वे बाधकमुक्तम् । तथा 'शरीर-यात्राऽपि' इत्यत्रापि देहनिर्वाहाभावो बाधक उक्तः । अतस्**तदर्थं** भगवत्पूजार्थम् । **मुक्तसङ्गः** फलकामनाहीनः सन् । **कर्म समाचर** कुर्विति ॥

*अ०प्र०*— साङ्ख्यास्तु सर्वमपि कर्म बन्धकत्वान्न कार्यमित्याहुः तन्निराकुर्वन्नाह **यज्ञा-र्थादिति** ।

हे कौन्तेय ![१], यज्ञार्थात्[२], कर्मणः[३], अन्यत्र[४], अयं[५], लोकः[६], कर्मबन्धनः[७], अतस्तदर्थं[८], मुक्तसङ्गः सन्[९], कर्म[१०], समाचर[११] इत्यन्वयः ।

हे कौन्तेय ![१], यज्ञार्थात् = यज्ञोऽत्र विष्णुः "यज्ञो वै विष्णुर्देवते"ति श्रुतेः । सोऽर्थोऽर्थ्यः आराध्यो येन तत्तथोक्तः तदर्थात् तदाराधनरूपात्[२], कर्मणः = कर्मतः[३], अन्यत्र = तदेकं विना[४], अयं[५], लोकः[६], कर्मबन्धनः = कर्मबन्धनं यस्य सः तथा कर्मभिर्बध्यते न तु ईश्वराराधनार्थेन[७], अतस्तदर्थं = विष्णुप्रीत्यर्थं, मुक्तसङ्गः सन् = निष्कामः सन्[९], कर्म समाचर = सम्यग् आचर[११] । यद्वा— यज्ञो नाम भगवान् विष्णुः, तं यान्त्युद्देशं विषयः । "स यज्ञ इति सम्प्रोक्तो विहिते कर्मणि स्थितः" इति वचनात् ।

यः यातः प्राप्तः ज्ञः ज्ञानरूपो विष्णुः येन स उद्देशो यज्ञ इत्युच्यते । विहिते कर्मणि स्थिते विष्णूद्देशो यज्ञं तदर्थात् विष्णूद्देशार्थात् कर्मणः तदर्थं विष्णूद्देशार्थं, शेषं समम् ॥ ९ ॥

**भाष्यम्**

**'कर्मणा बध्यते जन्तुः' इति कर्म बन्धकं स्मृतमित्यत आह— यज्ञार्था-दिति । कर्म बन्धनं यस्य लोकस्य स कर्मबन्धनः । यज्ञो विष्णुः । यज्ञार्थं सङ्गरहितं कर्म न बन्धकमित्यर्थः । 'मुक्तसङ्गः' इति विशेषणात् । "कामान् यः**

**कामयते' (मुं. ३२-२) इति श्रुतेश्च । "अनिष्टमिष्टम्" इति वक्ष्यमाणत्वाच्च । 'एतान्यपि तु कर्माणि' इति च । 'तस्मान्नेष्टियाजुका स्यात्' (बृह.उप. १-५-२) इति च । विशेषवचनत्वे समेऽपि विशेषणं परिशिष्यते ॥ ९ ॥**

***प०टी०***— 'कर्मणा बध्यते जन्तुः' इति साक्षात् कर्मणो बन्धकत्वं श्रूयते । अतः कथं तत्र नियोजयसि ? इत्याशङ्क्य, उत्तरश्लोकमवतार्य व्याचष्टे **कर्मणेति** । सङ्गराहित्यमत्रानुक्तं किमिति संयुज्यते ? इत्यत आह **मुक्तेति** । ननु 'कर्मणा बध्यते जन्तुः' इत्यस्यापि विशेषवचनत्वात् कथं विशेषवचनान्तराश्रयेण बाध उच्यतेऽत्र ? इत्यत आह **विशेषेति** । 'यज्ञार्थात्' इत्यतिरिक्त-विशेषणम् ॥

***न०टी०***—ननु विद्यैव विधीयते, कर्म निषिध्यत एव । तयोरिष्टानिष्टहेतुत्वोक्तेः । 'कर्मणा बध्यते' इत्यादिना कर्मवाक्यानपि तेषां बन्धकत्वमेव ज्ञापयन्ति । अतो न विहिताकरणदोषः कर्माकरणेऽपि । अवशत्वेन शरीरयात्रायैव किञ्चित्कर्मकरणेऽपि न निषिद्धकर्मकरणदोषोऽशक्य-त्वादिति भावेनाशङ्क्य तदुत्तरत्वेनोत्तरश्लोकमवतार्य व्याचष्टे **कर्मणा इति** । विष्णूद्दिष्टमपि कर्म साहङ्कारेण फलकामेन वा कृतं चेद्बन्धकमेव भवति । तन्निवृत्त्यर्थं 'मुक्तसङ्ग' शब्दप्राप्तमर्थमाह **यज्ञार्थं सङ्गरहितमिति** । 'मुक्तसङ्ग'पदस्य कर्माहङ्कारफलकामपरित्यागोऽर्थ इति सूचयन्, तदुभय-वत्कर्मणो बन्धकत्वे, तद्रहितस्याबन्धकत्वे च प्रमाणाह **कामानित्यादिना** । **सङ्गम्** अहं करोमि इति भावम्, फलानि फलेच्छां त्यक्त्वेत्यर्थः । **नेष्टियाजुकः स्यात्** फलेच्छया न यजेदित्यर्थः । ननु विशेषवचनानुरोधेन सामान्यविषयसङ्कोचः 'सर्वानानय नैकं मैत्रम्' इत्यादौ । अत्र तु द्वयोरपि विशेषवचनत्वात्, 'कर्मणा बध्यते' इत्यस्य 'न कर्मणा बध्यते' इत्यनेन कथं विषयसङ्कोचः ? इत्याशङ्क्य, यज्ञार्थेन सङ्गरहितेनेति विशेषणाधिक्याद्युज्यते सङ्कोच इति भावेनाह **विशेषवचनत्व इति** ॥

***प्र०दी०***— इदानीं तृतीयपक्षमाशङ्क्य तत्परिहाराय श्लोकमवतारयति— **कर्मणेति** । बन्धकं मोक्षस्य प्रतिबन्धकम् । अतो न करोमीति शेषः । तत्पुरुषभ्रान्तिनिरासायाह— **कर्मेति** । तत्पुरुषत्वेऽसङ्गतिः स्यादिति भावः । यज्ञशब्दस्य यागार्थत्वप्रतीतिमपाकर्तुमाह— **यज्ञ इति** । अवैष्णवयागस्यापि बन्धकत्वादिति भावः । तदर्थमित्युत्तरवाक्यस्यासङ्गतिपरिहारायार्थात्सिद्धं पूर्ववाक्यार्थमाह— **यज्ञार्थमिति** । सङ्गरहितमित्यनुक्तं कस्मादुक्तमित्यत आह— **मुक्तेति** । **इष्टियाजुकः** फलेच्छया यष्टा ।

ननु कर्मणा बध्यते जन्तुरित्यपि विशेषवचनम् । अविद्यादीनामनेकेषां बन्धकत्वेनाविद्यादिभिरिति सामान्यस्यानुपात्तत्वात् । गीतावाक्यं 'न कर्म बन्धकं' इतीदमपि विशेषवचनम् । तत्कथं तत्परिहारायावतार्य व्याख्यातमित्यत आह— **विशेषेति** । यद्यप्युक्तविधया द्वयोर्विशेषवचनत्वं समम् । तथापि गीतावाक्ये 'यज्ञार्थात्' इत्यादिविशेषणम् अतिरिच्यते । अतः तदपेक्षया तत् सामान्यवचनमेव । अतो युक्तमेतद्व्याख्यानमिति भावः ।

अयमत्र प्रत्युत्तरक्रमः । 'कर्मणा बध्यते' इति वाक्यमाश्रित्य न युद्धादिकर्मत्यागः कार्यः । तस्यावैष्णवकाम्यकर्मविषयत्वात् । कुतः सङ्कोच इति चेत् । परेणापि परिस्पन्दमात्रस्य त्यक्तुमशक्यत्वेनासङ्कुचितार्थतायाः स्वीकर्तुमशक्यत्वात् । तर्ह्यत एव बाधकाच्छरीरयात्रार्थकर्मव्यतिरिक्तविषयत्वं कल्प्यत इति चेन्न । वैयर्थ्यात् । एवमपि मनोव्यापारस्यात्यक्तत्वेन प्रतिबन्धकाभावो न सिद्ध्यति । तस्यैवान्वयव्यतिरेकाभ्यां प्रयोजकत्वावधारणात् । बाधकात्सङ्कोचमङ्गीकुर्वतां चायमपि सङ्कोचोऽङ्गीकार्यः । विधानसामर्थ्याद्युद्धादीनामपि तत्तद्वर्णाश्रमोचितत्वात् । न च विधानस्यामुमुक्षुविषयत्वम् । कल्पकाभावात् । न चेदमेव वाक्यं कल्पकम् । तस्यावैष्णवत्वादिधर्मत्यागेन चरितार्थत्वात् । धर्मिपरित्यागाद्धर्ममात्रपरित्यागस्य ज्यायस्त्वात् । अतो न कर्मस्वरूपं त्याज्यमिति ॥

*भा०दी०*— **तृतीयपक्षमिति** । कर्मबन्धकमिति प्राग्विकल्पितं तृतीयपक्षमित्यर्थः । **असङ्गतिपरिहारायेति** । यज्ञार्थकर्मतोऽन्यकर्मणो बन्धकत्वे पूर्वार्धेनोक्ते सत्युत्तरार्धे तदर्थमन्यकर्म न कार्यमित्युक्तिरेव सङ्गता न तु कर्मसमाचारेत्युक्तिः । एवमुक्तौ तु यज्ञार्थं कर्मबन्धकमित्येव पूर्वार्धोक्तिः सङ्गतेति हेतोरसङ्गतिपरिहारार्थेत्युक्तं भाष्ये इति श्रुतेश्चेत्यस्य सकामभिर्जायते तत्र तत्रेति श्रुतिविशेषे काम्यकर्मणो बन्धकत्वोक्तेरित्यर्थः । अनिष्टमिष्टमिति वक्ष्यमाणत्वाच्च यस्यानिष्टमिति वाक्यशेषे 'भवत्यत्यागिनां पार्थ न तु संन्यासिनामि'ति कामिनो बन्धका अकामिनो नेत्युक्तेरिति भावः । 'एतान्यपि च कर्माणी'ति वाक्यशेषे 'सङ्गं त्यक्त्वा धनञ्जय । कर्तव्यानी'त्यष्टादशेऽध्याये वक्ष्यमाणत्वाच्चेत्यर्थः । विशेषवचनं व्यनक्ति **अविद्यादीनामिति** । इदमपि गीतावाक्यमित्यन्वयः । **कर्म न बन्धकमिति** । पूर्वार्धाभिप्रेतार्थानुवादः । 'न हि कश्चिदि'ति श्लोकचतुष्टयस्य यज्ञादित्येतदुपोद्घातत्वमुक्तं, तत्कथमित्यतो 'न ही'त्यादिश्लोकचतुष्टयस्य यज्ञार्थादित्येतदुपयुक्तार्थतां व्यक्तीकर्तुमाह **अयमत्र प्रत्युत्तरक्रम इति** । यज्ञार्थादित्यस्याभिप्रायं तावदाह **कर्मणेत्यादिना** । न हि कश्चिदिति श्लोकतात्पर्यमाह **परेणेति** । **कल्प्यत इति** कर्मणेति स्मृतेरिति योज्यम् । वैय्यर्थ्यमेव व्यनक्ति **एवमपीति** । उक्तार्थकत्वकल्पनेऽपीत्यर्थः । यद्वा देहयात्रार्थं कर्मान्यकर्मपरत्वकल्पनया तत्स्मृतिबलेन देहयात्रार्थकर्मत्यागेऽपीत्यर्थः । **प्रतिबन्धकेति** । मोक्षस्येति योज्यम् । कुत इत्यत

आह **कर्मेन्द्रियाणीति** । श्लोकद्वयतात्पर्यमाह **तस्यैव इति** । मनोव्यापारस्यैवेत्यर्थः । कुतो इत्यतो नियतमिति श्लोकतात्पर्यमाह **विधानेति** । **धर्ममात्रेति** । अवैष्णवत्वकाम्यत्वरूपकर्मनिष्ठधर्ममात्रेत्यर्थः ॥

*भा०र०*— "कर्मणा बध्यते जन्तुः" (सं.उ. २.२१) इति स्मृतिमाश्रित्य यस्तृतीयः पक्षः तमाशङ्क्य 'यज्ञार्थात्' इति स्मृतेरर्थसङ्कोचं वक्ष्यतीत्युक्तम् । तदाह **इदानीमिति** । कर्मणो बन्धकत्वाभिधानं प्रकृतासङ्गतमित्यतो बन्धकशब्दस्य विवक्षितमर्थमाह **मोक्षस्य प्रतिबन्धकमिति** ।

**न करोमि** कर्माणि । **तत्पुरुषत्वेति** । "कर्मणो बन्धनः कर्मबन्धनः" इति तत्पुरुषत्वभ्रान्तीत्यर्थः । यद्यपि 'बन्धनः' इति शब्दस्य पुलिङ्गतया तत्पुरुषत्वभ्रमः सम्भवति । तथाऽपि "कोऽसावनुमानो नाम" (व्या.म.भा.) इत्यादिप्रयोगादत्रापि तथा स्यादिति युक्त्याभासेन सम्भवत्येव भ्रान्तिरिति हृदयम् । **असङ्गतिरिति** । लोकोऽयं कर्मणो बन्धन इति विग्रहे तत्पुरुषसमासपक्षे कर्मणो मोक्षप्रतिबन्धकत्वपक्षे उत्तरानभिधानाद्, अनुपयुक्ताभिधानाच्चासङ्गतिः स्यादित्यर्थः । **यागार्थत्वेति** । "यज्ञस्सर्वोऽध्वरो यागः" (अमर) इत्यभिधानादिति भावः । प्रसिद्धार्थत्यागे किं नियामकम् ? इत्यत आह **अवैष्णवयागस्यापीति** । यज्ञलक्षणकर्मणः अन्यकर्मण एव बन्धकत्वाभिधानमयुक्तम् । यज्ञस्यापि विष्णुप्रीत्यनुद्देश्यकस्य "ते तं भुक्त्वा स्वर्गलोकं विशालं क्षीणे पुण्ये मर्त्यलोकं विशन्ति" (९.२१) इति बन्धकत्वाभिधानाद्, गीतायां यज्ञशब्दोऽन्यपर एवेति स्वीकार्ये "यज्ञो विष्णुः" इति श्रुतिप्रसिद्ध्या विष्णुपर इत्यभ्युपगम एव न्याय्य इति भावः । **तदर्थमित्युत्तरवाक्यस्येति** । "तदर्थं कर्म कौन्तेय मुक्तसङ्गः समाचर" (३.९) इत्युत्तरगीतावाक्यस्येत्यर्थः । **असङ्गतीति** । यज्ञार्थान्यकर्मणा बन्धकत्वात् कर्म कुर्वित्युक्तावसङ्गतिः स्यादिति तत्परिहाराय इत्यर्थः ।

**अर्थादिति** । "यज्ञार्थादन्यत्कर्म बन्धकम्" इत्युक्तावर्थापत्तेर्यज्ञार्थं कर्म न बन्धकमित्यर्थः । मुक्तसङ्गः फलस्नेहरहित इति कौन्तेयस्य विशेषणात्, "कामान् यः कामयते" इति श्रुतौ "स कामभिर्बध्यते तत्रतत्र" (आथ. ४.१.२) इति काम्यकर्मणो बन्धकत्वश्रवणात्, 'अनिष्टमिष्टम्' (१८.१२) इत्येतद्वाक्यशेषे "भवति आत्यागिनां पुंसां न तु संन्यासिनाम्" इति सङ्गनिषेधाभिप्रायस्य वक्ष्यमाणश्लोकतोऽवगमात्,"एतान्यपि तु कर्माणि (१८.६) इत्यत्र सङ्गं त्यक्त्वा धनञ्जय कर्माणि कर्तव्यानीति सङ्गराहित्यस्य वक्ष्यमाणत्वाच्चेति भाष्यार्थः । 'इष्टियाजुकः' इत्यत्र यजतेभवि क्तिनि सम्प्रसारणे "यजनेन याजकः" इत्यर्थो भवति । स च न युज्यते । प्रकृतार्थासङ्गतेरित्यत आह **फलेच्छयेति** । इषु = इच्छायाम् इति धातोः क्तिनि इष्टिः इच्छा, योग्यतया फलस्य

सम्बन्धः । यजतेश्च बाहुलकात् उकञ्प्रत्यये, याजकशब्द एव पृषोदरादिभावेनाकारस्योकारे विकारे वा 'याजुकः' इति रूपम् । "इष्ट्या याजुक इष्टियाजुकः" इति समासे च प्रकृतार्थसिद्धिरिति भावः । तथा च **प्राचीनटीका** "फलेच्छया न यजेदित्यर्थः" इति ।

विशेषवचनत्वमुपपादयति **अविद्यादीनामिति** । "प्रकृतिं स्वात्मसंश्लिष्टां गुणान् सत्त्वादिकानपि । कर्माणि सूक्ष्मदेहं च" इत्यादौ अविद्यागुणत्रयादेरपि बन्धकत्वावेदनेन इत्यर्थः । 'यज्ञार्थात्' इति पूर्वार्धतात्पर्यमनुवदति **गीतेति** । "कर्म न बन्धकमितीदमपि गीतावाक्यम्" इत्यन्वयः । भाष्यस्थम् अपिपदं विशेषणपदं च विवृणोति **यद्यपीत्यादि** । **इत्यादिविशेषणमिति** । 'मुक्तसङ्गः' इति कर्तृविशेषणस्यापि परम्परया कर्मविशेषणत्वं वक्तव्यमिति भावेन आदिपदं प्रयुक्तम् । अत एव भाष्ये 'सङ्गरहितम्' इति कर्मैव विशेषितम् । "कर्माहङ्कारफलकामनापरित्यागो मुक्तसङ्गशब्दार्थः" इति **प्राचीनटीका** । **एतद्व्याख्यानम्** "अवैष्णवकर्मणो बन्धकत्वं नान्यस्य" इत्येतद्व्याख्यानम् ।

"न हि कश्चित्" (३.५) इत्यादिचतुःश्लोक्या 'यज्ञार्थात्' इत्येतदुपोद्घातत्वमुक्तं व्यक्तीकर्तुमाह **अयमत्रेति** । "यज्ञार्थात् कर्मणः" इत्यादेस्तात्पर्यं **"कर्मणा बध्यत इति"** इति । **सङ्कोचः** कर्मशब्दस्य सर्वविषयस्यावैष्णवकर्मार्थत्वमिति सङ्कोचः कुतो हेतोरित्यर्थः । "न हि कश्चित्" इत्यस्य तात्पर्यं **परेणापीति** । **व्यतिरिक्तविषयत्वं** व्यतिरिक्तकर्मविषयत्वम् । **कल्प्यते** "कर्मणा बध्यते" इत्यत्र 'कर्मशब्दस्य' इति योज्यम् । **वैयर्थ्यात्** शरीरयात्रार्थकर्मव्यतिरिक्तकर्मणां बन्धकत्वं वदत् "कर्मणा बध्यते जन्तुः" इति वचनं मोक्षरूपमर्थं प्रयोजनं न आवहतीति भावः । वैयर्थ्यमुपपादयति **एवमपीति** । स्मृत्युक्तकर्मशब्दस्य देहयात्रार्थकर्मान्यकर्मपरत्वेऽपीत्यर्थः । **प्रतिबन्धकाभावः** मोक्षप्रतिबन्धकाभावः । **तस्यैव** मनोव्यापारस्यैव । अनेन 'कर्मेन्द्रियाणि' इत्यादिश्लोकद्वयतात्पर्यमुक्तं भवति । कुत इत्यतो 'नियतम्' इति श्लोकभावमाह **विधानेति** । **उचितत्वादिति** । नियतम् इत्यस्य तत्तद्वर्णाश्रमोचितत्वेन विहितार्थत्वादिति भावः । **इदमेव** "कर्मणा बध्यते" इति स्मृतिवाक्यमेव । 'अवैष्णवत्वादि' इत्यत्र आदिशब्देन ससङ्गत्वं ग्राह्यम् । **धर्ममात्रेति** । अवैष्णवत्वफलस्नेहरूप-धर्ममात्रेत्यर्थः । 'त्याज्यमिति' इत्यत्र इतिशब्दस्य 'अयमत्र' इति पूर्वेण सम्बन्धः ॥ ९ ॥

*गीताक्षरार्थः*— "न हि कश्चित्" इत्यादिपञ्चश्लोक्यक्षरार्थस्तु "कर्मणा बध्यते जन्तुः" इति स्मृतिमाश्रित्य यश्चोदितस्तृतीयः पक्षः तमाशङ्क्य 'यज्ञार्थात्' इत्यत्रोक्तस्मृतिगतकर्मशब्दस्य अभागवतकर्मपरत्वेनार्थसङ्कोचो वक्ष्यते । तत्र कुतः स्मृतेरर्थसङ्कोच इत्याकाङ्क्षा स्यात् । तामपाकर्तुम् उपोद्घातन्यायेन कर्मशब्दस्तावदसङ्कुचितार्थः परेणाप्यङ्गीकर्तुमशक्य इति प्रतिपादयितुं शरीर-

आह **कर्मेन्द्रियाणीति** । श्लोकद्वयतात्पर्यमाह **तस्यैव इति** । मनोव्यापारस्यैवेत्यर्थः । कुतो इत्यतो नियतमिति श्लोकतात्पर्यमाह **विधानेति** । **धर्ममात्रेति** । अवैष्णवत्वकाम्यत्वरूपकर्मनिष्ठधर्ममात्रेत्यर्थः ॥

***भा०र०***— "कर्मणा बध्यते जन्तुः" (सं.उ. २.२१) इति स्मृतिमाश्रित्य यस्तृतीयः पक्षः तमाशङ्क्य 'यज्ञार्थात्' इति स्मृतेरर्थसङ्कोचं वक्ष्यतीत्युक्तम् । तदाह **इदानीमिति** । कर्मणो बन्धकत्वाभिधानं प्रकृतासङ्गतमित्यतो बन्धकशब्दस्य विवक्षितमर्थमाह **मोक्षस्य प्रतिबन्धकमिति** ।

**न करोमि** कर्माणि । **तत्पुरुषत्वेति** । "कर्मणो बन्धनः कर्मबन्धनः" इति तत्पुरुषत्वभ्रान्तीत्यर्थः । यद्यपि 'बन्धनः' इति शब्दस्य पुलिङ्गतया तत्पुरुषत्वभ्रमः सम्भवति । तथाऽपि "कोऽसावनुमानो नाम" (व्या.म.भा.) इत्यादिप्रयोगादत्रापि तथा स्यादिति युक्त्याभासेन सम्भवत्येव भ्रान्तिरीति हृदयम् । **असङ्गतिरिति** । लोकोऽयं कर्मणो बन्धन इति विग्रहे तत्पुरुषसमासपक्षे कर्मणो मोक्षप्रतिबन्धकत्वपक्षे उत्तरानभिधानाद्, अनुपयुक्ताभिधानाच्चासङ्गतिः स्यादित्यर्थः । **यागार्थत्वेति** । "यज्ञस्सर्वोऽध्वरो यागः" (अमर) इत्यभिधानादिति भावः । प्रसिद्धार्थत्यागे किं नियामकम् ? इत्यत आह **अवैष्णवयागस्यापीति** । यज्ञलक्षणकर्मणः अन्यकर्मण एव बन्धकत्वाभिधानमयुक्तम् । यज्ञस्यापि विष्णुप्रीत्यनुद्देश्यकस्य "ते तं भुक्त्वा स्वर्गलोकं विशालं क्षीणे पुण्ये मर्त्यलोकं विशन्ति" (९.२१) इति बन्धकत्वाभिधानाद्, गीतायां यज्ञशब्दोऽन्यपर एवेति स्वीकार्ये "यज्ञो विष्णुः" इति श्रुतिप्रसिद्ध्या विष्णुपर इत्यभ्युपगम एव न्याय्य इति भावः । **तदर्थमित्युत्तरवाक्यस्येति** । "तदर्थं कर्म कौन्तेय मुक्तसङ्गः समाचर" (३.९) इत्युत्तरगीतावाक्यस्येत्यर्थः । **असङ्गतीति** । यज्ञार्थान्यकर्मणा बन्धकत्वात् कर्म कुर्वित्युक्तावसङ्गतिः स्यादिति तत्परिहाराय इत्यर्थः ।

**अर्थादिति** । "यज्ञार्थादन्यत्कर्म बन्धकम्" इत्युक्तावर्थापत्तेर्यज्ञार्थं कर्म न बन्धकमित्यर्थः । मुक्तसङ्गः फलस्नेहरहित इति कौन्तेयस्य विशेषणात्, "कामान् यः कामयते" इति श्रुतौ "स कामभिर्बध्यते तत्रतत्र" (आथ. ४.१.२) इति काम्यकर्मणो बन्धकत्वश्रवणात्, 'अनिष्टमिष्टम्' (१८.१२) इत्येतद्वाक्यशेषे "भवति आत्यागिनां पुंसां न तु संन्यासिनाम्" इति सङ्गनिषेधाभिप्रायस्य वक्ष्यमाणश्लोकतोऽवगमात्,"एतान्यपि तु कर्माणि (१८.६) इत्यत्र सङ्गं त्यक्त्वा धनञ्जय कर्माणि कर्तव्यानीति सङ्गराहित्यस्य वक्ष्यमाणत्वाच्चेति भाष्यार्थः । 'इष्टियाजुकः' इत्यत्र यजतेर्भवि क्तिनि सम्प्रसारणे "यजनेन याजकः" इत्यर्थो भवति । स च न युज्यते । प्रकृतार्थासङ्गतेरित्यत आह **फलेच्छयेति** । इषु = इच्छायाम् इति धातोः क्तिनि इष्टिः इच्छा, योग्यतया फलस्य

सम्बन्धः । यजतेश्च बाहुलकात् उकञ्प्रत्यये, याजकशब्द एव पृषोदरादिभावेनाकारस्योकारे विकारे वा 'याजुकः' इति रूपम् । ''इष्ट्या याजुक इष्टियाजुकः'' इति समासे च प्रकृतार्थसिद्धिरिति भावः । तथा च **प्राचीनटीका** ''फलेच्छया न यजेदित्यर्थः'' इति ।

विशेषवचनत्वमुपपादयति **अविद्यादीनामिति** । ''प्रकृतिं स्वात्मसंश्लिष्टां गुणान् सत्त्वादिकानपि । कर्माणि सूक्ष्मदेहं च'' इत्यादौ अविद्यागुणत्रयादेरपि बन्धकत्वावेदनेन इत्यर्थः । 'यज्ञार्थात्' इति पूर्वार्धतात्पर्यमनुवदति **गीतेति** । ''कर्म न बन्धकमितीदमपि गीतावाक्यम्'' इत्यन्वयः । भाष्यस्थम् अपिपदं विशेषणपदं च विवृणोति **यद्यपीत्यादि** । **इत्यादिविशेषणमिति** । 'मुक्तसङ्गः' इति कर्तृविशेषणस्यापि परम्परया कर्मविशेषणत्वं वक्तव्यमिति भावेन आदिपदं प्रयुक्तम् । अत एव भाष्ये 'सङ्गरहितम्' इति कर्मैव विशेषितम् । ''कर्माहङ्कारफलकामनापरित्यागो मुक्तसङ्गशब्दार्थः'' इति **प्राचीनटीका** । **एतद्व्याख्यानम्** ''अवैष्णवकर्मणो बन्धकत्वं नान्यस्य'' इत्येतद्व्याख्यानम् ।

''न हि कश्चित्'' (३.५) इत्यादिचतुःश्लोक्या 'यज्ञार्थात्' इत्येतदुपोद्घातत्वमुक्तं व्यक्तीकर्तुमाह **अयमत्रेति** । ''यज्ञार्थात् कर्मणः'' इत्यादेस्तात्पर्यं **''कर्मणा बध्यत इति''** इति । **सङ्कोचः** कर्मशब्दस्य सर्वविषयस्यावैष्णवकर्मार्थत्वमिति सङ्कोचः कुतो हेतोरित्यर्थः । ''न हि कश्चित्'' इत्यस्य तात्पर्यं **परेणापीति** । **व्यतिरिक्तविषयत्वं** व्यतिरिक्तकर्मविषयत्वम् । **कल्प्यते** ''कर्मणा बध्यते'' इत्यत्र 'कर्मशब्दस्य' इति योज्यम् । **वैयर्थ्यात्** शरीरयात्रार्थकर्मव्यतिरिक्तकर्मणां बन्धकत्वं वदत् ''कर्मणा बध्यते जन्तुः'' इति वचनं मोक्षरूपमर्थं प्रयोजनं न आवहतीति भावः । वैयर्थ्यमुपपादयति **एवमपीति** । स्मृत्युक्तकर्मशब्दस्य देहयात्रार्थकर्मान्यकर्मपरत्वेऽपीत्यर्थः । **प्रतिबन्धकाभावः** मोक्षप्रतिबन्धकाभावः । **तस्यैव** मनोव्यापारस्यैव । अनेन 'कर्मेन्द्रियाणि' इत्यादिश्लोकद्वयतात्पर्यमुक्तं भवति । कुत इत्यतो 'नियतम्' इति श्लोकभावमाह **विधानेति** । **उचितत्वादिति** । नियतम् इत्यस्य तत्तद्वर्णाश्रमोचितत्वेन विहितार्थत्वादिति भावः । **इदमेव** ''कर्मणा बध्यते'' इति स्मृतिवाक्यमेव । 'अवैष्णवत्वादि' इत्यत्र आदिशब्देन ससङ्गत्वं ग्राह्यम् । **धर्ममात्रेति** । अवैष्णवत्वफलस्नेहरूप-धर्ममात्रेत्यर्थः । 'त्याज्यमिति' इत्यत्र इतिशब्दस्य 'अयमत्र' इति पूर्वेण सम्बन्धः ॥ ९ ॥

***गीताक्षरार्थः***— ''न हि कश्चित्'' इत्यादिपञ्चश्लोक्यक्षरार्थस्तु ''कर्मणा बध्यते जन्तुः'' इति स्मृतिमाश्रित्य यश्चोदितस्तृतीयः पक्षः तमाशङ्क्य 'यज्ञार्थात्' इत्यत्रोक्तस्मृतिगतकर्मशब्दस्य अभागवतकर्मपरत्वेनार्थसङ्कोचो वक्ष्यते । तत्र कुतः स्मृतेरर्थसङ्कोच इत्याकाङ्क्षा स्यात् । तामपाकर्तुम् उपोद्घातन्यायेन कर्मशब्दस्तावदसङ्कुचितार्थः परेणाप्यङ्गीकर्तुमशक्य इति प्रतिपादयितुं शरीर-

यात्राद्यर्थकर्मणां सर्वात्मना त्यक्तुमशक्यत्वमुच्यते **न हि कश्चिदिति** । **जातु** कदाचित् कस्या-मप्यवस्थायां क्षणमपि कालं "कालाध्वनोरत्यन्तसंयोगे" द्वितीया । क्षणेऽपि । **कश्चिदपि** ज्ञोऽज्ञो वा **अकर्मकृत्** कर्माण्यकुर्वाणो न तिष्ठति । कुतः ? **हि** यस्मात्, **अवशः** विष्णुवशः अस्वतन्त्र एव **सर्वः** प्राणी **प्रकृतिजैः** "सप्तम्यां जनेर्डः" प्रकृतौ जातैः सत्त्वरजस्तमोलक्षणैर्गुणैः **कर्म** द्वितीयान्तम् । **कार्यते** अत इति ॥ ५ ॥

ननु यद्यपि शरीरयात्राद्यर्थानि कर्माणि त्यक्तुमशक्यानि, तथाऽपि शक्यत्वाद् यज्ञादिकर्मणां त्यागः कार्यः । तथा च तद्व्यतिरिक्तकर्मार्थः स्मृतौ कर्मशब्दो भविष्यतीत्याशङ्कायां मन एव सविशेषणं बन्धमोक्षयोः प्रयोजकम् । न कर्मकरणाकरणे । अतस्तन्निग्रह एव कार्यो न कर्मत्याग इति ज्ञापयितुं अनिगृहीतमनसो बन्धहेतुत्वम्, तदभावे तदभावः । तस्यैव निगृहीतत्वे मोक्षहेतु-त्वम् । तदभावे तदभाव इत्यन्वयव्यतिरेकावुच्येते **कर्मेन्द्रियाणीति** द्वाभ्याम् । कर्मेन्द्रियाणि वाक्-पाणि-पाद-पायु-उपस्थानि । उपलक्षणम् । ज्ञानेन्द्रियाणि च **संयम्य** स्वविषयेभ्यः समाहृत्य **इन्द्रियार्थान्** रूपादीन् **मनसा** संस्मरन् **य आस्ते स विमूढात्मा** विमूढान्तःकरणः **मिथ्याचारः** डाम्भिक **उच्यते** । मनस एव प्रधानतया तन्निग्रहाभावे कृतोऽपीतरेन्द्रियनिग्रहो न पुरुषार्थोपयोगीति भावः ॥ ६ ॥

**यस्त्विन्द्रियाणि** चक्षुरादिबुद्धीन्द्रियाणि विषयेभ्यो **मनसा नियम्य असक्तः** फलेच्छारहितः सन् कर्मेन्द्रियैः वागादिभिः **कर्मयोगं** स्ववर्णाश्रमोचितत्वेन विहितं कर्मरूपं ज्ञानोपायम् **आरभते** करोति । **स विशिष्यते** उक्तमिथ्याचारादतिशयितो भवति ॥ ७ ॥

ततः किम् ? इत्यत उच्यते **नियतमिति** । **नियतं** स्ववर्णाश्रमोचितं **कर्म कुरु** । **हि** यस्मात् **अकर्मणः** कर्माकरणात् **कर्म** कर्मानुष्ठानं **ज्यायः** प्रशस्यतरम् । अपि च **अकर्मणः** कर्माकुर्वतस्तव **शरीरयात्राऽपि** देहनिर्वाहोऽपि **न प्रसिध्येत्** न भवेत् ॥ ८ ॥

अथेदानीं "कर्मणा बध्यते जन्तुः" इति स्मृतिमाश्रित्य कर्माणि न करोमि मोक्षप्रतिबन्धक-त्वादिति यस्तृतीयः पक्षश्चोदितः स निरस्यते **यज्ञार्थादिति** । **यज्ञो** विष्णुः । **तदर्थात्** तदुद्देश्यकात् **कर्मणोऽन्यत्र** तदेकं विना **अयं लोकः** कर्मबन्धनः कर्म **बन्धनं** बाहुलकात् कर्तरि ल्युट् बन्धकं यस्य स तथा । कर्म बन्धकमिति वचनमवैष्णवकर्मविषयमिति भावः । अतः **तदर्थं** विष्णूद्देश्यकं विष्णुपरितोषमात्रार्थकं **कर्म मुक्तसङ्गः** सन् कर्माहङ्कारफलकामनापरित्यागवान् **समाचर** अनुतिष्ठ इति ॥ ९ ॥

**गीतातात्पर्यनिर्णयः**

**कर्मणा बध्यते जन्तुरित्यादिकमप्यवैष्णवकर्मविषयमित्याह यज्ञार्थादिति ।**

**"ज्ञो नाम भगवान् विष्णुस्तं यात्युद्देश एष यः ।**
**स यज्ञ इति सम्प्रोक्तो विहिते कर्मणि स्थितः ॥"**

**—इति बर्कश्रुतिः ॥ ९ ॥**

*प्रका०*— कर्मणो मुक्तिसुखातिशयजनकत्वे "कर्मणा बध्यते जन्तुरि"त्यादिवचनविरोधः स्यादित्यत आह **कर्मणेत्यादिना** । विष्णुमुद्दिश्य यद्विहितं कर्म क्रियते ततोऽन्येन कर्मणा जनो बध्यते । अयमुद्देशोऽत्र यज्ञशब्देनोच्यते । यज्ञं विषयीकरोति (इति) निर्वचनादित्यर्थः ॥

*न्या०दी०*— ननु "कर्मणा बध्यते जन्तुः" इत्यादेः कर्मणो बन्धकत्वात् कथं "कुरु कर्म" इति विधीयत इत्याशङ्कापरिहाराय श्लोकमवतारयति **कर्मणेति** ॥ अयज्ञार्थं कर्म बन्धकमित्येवात्र प्रतीयते, न त्ववैष्णवं कर्म बन्धकमित्यतो यज्ञशब्दार्थं श्रुत्यैवाह **ज्ञ इति** ॥ नात्र यज्ञपदेन प्रसिद्धयज्ञ उच्यते । अपि तु यातो विषयीकृतो ज्ञानरूपत्वाज्ज्ञो भगवान् येनोद्देशेन स एव इत्यर्थः । य एष उद्देश इति योजना ॥

*भा०दी०*— **ज्ञानरूपत्वादिति** । स्वरूपस्यैव सर्ववस्तुज्ञत्वादित्यर्थः । "इगुपधज्ञाप्रीकिरः क" इति कर्तर्येव कप्रत्ययविधानात् ॥ ९ ॥

**गीता**

**सहयज्ञाः प्रजाः सृष्ट्वा पुरोवाच प्रजापतिः ।**
**अनेन प्रसविष्यध्वमेष वोऽस्त्विष्टकामधुक् ॥ १० ॥**

*वि०वि०*— अत्रार्थवादमाह **सहेत्यादिभिः** चतुर्भिः । सहयज्ञाः यज्ञसहिताः । प्रजाः ब्राह्मणाद्याः । पुरा सर्गादौ । सृष्ट्वा प्रजापतिरुवाच **किमिति** । अनेन यज्ञेन प्रसविष्यध्वम्, अभिवर्धयध्वम् । एष यज्ञो वो युष्माकमिष्टकामधुक् मोक्षप्रदोऽस्तु ॥

*वा०ल०*— 'अनेन प्रसविष्यध्वम्' इत्यत्र अनेन यज्ञेन ॥

*सा०सं०*— वर्णाश्रमोचितकर्मणः सर्वथा कर्तव्यत्वे स्तुतिनिन्दापरकृतिपुराकल्परूपार्थवादं चाह **सहेत्यादिचतुर्भिः** श्लोकैः । यज्ञैः सहवर्तन्त इति **सहयज्ञाः** ब्राह्मणादिप्रजाः । **पुरा**

सर्गादौ । **सृष्ट्वा प्रजापतिरुवाच** । किमुवाचेत्यत आह **अनेनेत्यादिना कारणादित्यन्तेन** । हे **प्रजाः अनेन** यज्ञेन । यूयं **प्रसविष्यध्वम्** । इष्टकामानिति शेषः । स्वस्वाभिमतपुमर्थान् सम्पादयत । **एष** यज्ञः । **वः** युष्माकम् । **इष्टकामधुक्** । कामा भोगाः, तान् दोग्धीति कामधुक् । इच्छाविषयभोगप्रदोऽस्तु ॥

***अ०प्र०***— प्रजापतिवचनादपि कर्मकर्तैव विशिष्ट इत्याह **सहयज्ञा इति** ।

प्रजापतिः[१], पुरा[२], सहयज्ञाः[३], प्रजाः[४], सृष्ट्वा[५], उवाच[६], किमिति, अनेन[७], प्रसविष्यध्वं[८], एषः[९], वः[१०], इष्टकामधुक्[११], अस्तु[१२] इत्यन्वयः ।

प्रजापतिः = ब्रह्मा[१], पुरा = सर्गादौ[२], सहयज्ञाः = यज्ञेन सह वर्तत इति तथा यज्ञसहिताः यज्ञाधिकृता वा[३], प्रजाः = विप्राद्याः प्रजाः[४], सृष्ट्वा = सृष्टिं कृत्वा[५], उवाच किमिति[६], अनेन = यज्ञेन[७], प्रसविष्यध्वं = प्रसूयध्वं प्रसवोऽभिवृद्धिः उत्तरोत्तराभिवृद्धिं लभध्वमित्यर्थः[८], तत्र हेतुः एषः = यज्ञः[९], वः = युष्माकं[१०] इष्टकामधुक् = इष्टान् कामान् दोग्धीति धर्मादिपुमर्थप्रदः अभीष्ट-भोगप्रदश्च अस्तु[११], अत्र यज्ञग्रहणमावश्यककाम्यकर्माऽपि कर्मोपलक्षणार्थं काम्यकर्मप्रशंसा तु अत्र प्रकरणे असङ्गताऽपि सामान्येनाकर्मणः काम्यकर्माऽपि कर्मश्रेष्ठमित्येतदर्थेत्यदोषः ॥ १० ॥

**गीता**

## देवान् भावयतानेन ते देवा भावयन्तु वः ।
## परस्परं भावयन्तः श्रेयः परमवाप्स्यथ ॥ ११ ॥

***वि०वि०***— कथम् अनेन यज्ञेन यूयं देवान् भावयत हविर्भिर्वर्धयत । ते देवाः वः युष्मान् भावयन्तु वर्धयन्तु । एवमन्योन्यं वर्धयन्तो देवाश्च यूयं परं श्रेयो मोक्षाख्यमवाप्स्यथ ॥ ११ ॥

***वा०ल०***— 'देवान् भावयतानेन' इत्यत्र देवान् भावयत पूजयत । अनेन यज्ञेन । भावयन्तु फलदानेन सम्भावयन्तु ॥ ११ ॥

***सा०सं०***— कथमभीष्टकामदोग्धृत्वं यज्ञस्येत्यत आह **देवानिति** । हे प्रजाः **अनेन** यज्ञेन । यूयं **देवान् भावयत** सम्भावयत, हविर्भिः तर्पयत । ते हविरादिभिस्तृप्ता **देवाः** । **वो** युष्मान् । **भावयन्तु** इष्टकामदानेन तर्पयन्तु । एवमन्योन्यं **भावयन्तो** देवाश्च यूयं च । **परं श्रेयो** मोक्षाख्यम् । **अवाप्स्यथ** ॥ ११ ॥

*अ०प्र०*— कथमिष्टकामदोग्धा यज्ञो भवेदित्यत्राह **देवानिति** ।

अनेन[१], यूयं[२], देवान्[३], भावयत[४], ते च[५], देवाः[६], वः[७], भावयन्तु[८], एवं परस्परं भावयन्तः सन्तः[९], परं[१०], श्रेयः[११], अवाप्स्यथेत्यन्वयः ।

अनेन = यज्ञेन[१], यूयं[२], देवान्[३], भावयत = हविर्भागैः संवर्धयत यद्वा हविरादिभिः आराधयत[४], ते च देवाः वः = युष्मान् पुमर्थदानेन[७], भावयन्तु संवर्धयन्तु[८], एवं, परस्परं भावयन्तः सन्तः = एवमन्योन्यं वर्धयन्तो देवाश्च यूयं च[९], परं श्रेयः = अभीष्टमर्थं मोक्षादिकारणमर्थं वा[१०,११], अवाप्स्यथ = प्राप्स्यथ[१२] ॥ ११ ॥

**गीता**

## इष्टान् भोगान् हि वो देवा दास्यन्ते यज्ञभाविताः ।
## तैर्दत्तानप्रदायैभ्यो यो भुङ्क्ते स्तेन एव सः ॥ १२ ॥

*वि०वि०*— यज्ञैर्भाविता देवा इष्टान् भोगान् मोक्षसम्बन्धिनो दास्यन्ति । अतो देवैर्दत्तान्नादीन् तेभ्यो यज्ञादिभिरदत्वा यो भुङ्क्ते स चोर एव ॥

*वा०ल०*— 'अप्रदायैभ्यो' इत्यत्र एभ्यः देवेभ्यः अप्रदाय अदत्वा ॥

*सा०सं०*— एतदेव स्पष्टयन् कर्माकरणे दोषमाह **इष्टानिति** । यज्ञैर्भाविता **देवा वो** युष्मभ्यम् । **इष्टान् भोगान् दास्यन्ति** । तैः देवैर्दत्तान्नादींस्तेभ्यो यज्ञादिभिः **अप्रदाय, यो भुङ्क्ते** सः **स्तेन एव** चोर एव ॥

*अ०प्र०*— यज्ञभाविताः[१], देवाः[२], वः[३], इष्टान्[४], भोगान्[५], दास्यन्ते हि[६], अतस्तैः[७], दत्तान्[८], येभ्यो[९], अप्रदाय[१०], यः भुङ्क्ते[११], स तु[१३], स्तेन एवेत्यन्वयः ।

यज्ञैः भाविताः सन्तः[१], देवाः वृष्ट्यादिद्वारेण[२], वः = युष्मभ्यं [३], इष्टान् भोगान् = स्वर्गादि इष्टान् भोगान्[५], दास्यन्ते हि यस्मात्[६], अतस्तैः = देवैः[७], दत्तान् = अन्नादीन्[८], येभ्यो = एतेभ्यो देवेभ्यः[९], अप्रदाय = यज्ञादिद्वारेण पञ्चयज्ञादिभिर्वा अदत्वा[१०], यः भुङ्क्ते[११], स तु स्तेन एव = चोर एवं ज्ञेयः इत्यर्थः [१४] । एतदेव स्पष्टीकृतवान् ॥ १२ ॥

**गीता**

# यज्ञशिष्टाशिनः सन्तो मुच्यन्ते सर्वकिल्बिषैः ।
# भुञ्जते ते त्वघं पापा ये पचन्त्यात्मकारणात् ॥ १३ ॥

***वि०वि०***— यज्ञशिष्टाशिनः विष्णूच्छिष्टभोजिनः संसारबीजैः किल्बिषैर्मुच्यन्ते । ये त्वात्मभोजनार्थमेव पचन्ति न विष्णुपूजार्थं ते पापा दुराचाराः अघनिमित्तमेव भुञ्जन्त इति । तच्चोक्तम्–

'कर्मणा निरपेक्षेण विष्णवे चार्पितेन च ।
सम्यग्ज्ञानं भवेत् पुंसां देवतातृप्तिपूर्वकम् ॥
निर्देशाद्भगवत्येव तृप्ताः स्युर्देवता यतः ।
तदङ्गत्वेन निर्देशस्त्वेषु ते तृप्तिमाप्नुयुः ॥
तेषु तृप्तेषु देवेशे विष्णौ चोत्पद्यते परम् ।
ज्ञानं तेनैव सम्यक् च मुच्यते कर्मपीडनात् ॥' इति ॥

***वा०ल०***— 'ये पचन्त्यात्मकारणात्' इत्यत्र आत्मनः स्वस्य कारणात् उदरपूरणाख्यकारणात् ।

***सा०सं०***— एवमयजतो विनिन्द्य यजतः स्तौति **यज्ञेति** । विष्णुतदितरदेवाराधनावशिष्टभोजिनः **सन्तः** । **सर्वकिल्बिषैः** पापैः, **मुच्यन्ते** । यद्वा वैश्वदेवादियज्ञावशिष्टभोजिनः सन्तः सर्वकिल्बिषैः— "खण्डिनी पेषिणी चुल्ली उदकुम्भी च मार्जनी । पञ्चसूना गृहस्थस्य ताभिः स्वर्गं न विन्दति" इत्युक्तपञ्चसूनाकृतदोषैर्मुच्यन्त इत्यर्थः । पुनरयजतो निन्दति **भुञ्जत इति** । **आत्मकारणात्** स्वार्थमेव । **ये पचन्ति** ते पापाः । **अघमेव** अघनिमित्तमेव **भुञ्जते** । तद्भोजनं पापहेतुरेवेत्यर्थः । इति प्रजापतिरुवाचेति इति शब्दो योज्यः ॥ १३ ॥

***अ०प्र०***— इतश्च यजन्त एव श्रेष्ठा नेतर इत्याह **यज्ञशिष्टाशिन इति** ।

यज्ञशिष्टाशिनः सन्तः[१], सर्वकिल्बिषैः[२], मुच्यन्ते[३], ये तु[४], आत्मकारणात्[५], पचन्ति[६], ते पापाः[७], अघमेव[८], भुञ्जते इत्यन्वयः ।

यज्ञशिष्टाशिनः = विष्णुनैवेद्यशेषेण यज्ञे वैश्वदेवादयो विष्णूद्देशेन तद्भक्तान् ब्रह्मादिदेवान् पित्रादींश्चेष्ट्वा तच्छिष्टाशिनः सन्तः[१], सर्वकिल्बिषैः = पञ्चसूनादि पापैः संसारबीजैश्च[२], मुच्यन्ते[३], ये तु आत्मकारणात् = आत्मनो भोजनार्थमेव[५], पचन्ति = पाकं कुर्वन्ति न तु विष्णुवैष्णव-

वैश्वदेवार्थं[६], ते पापाः = दुराचाराः[७], अघमेव = पापमेव[८], भुञ्जन्ते = तन्निमित्तमेव भुञ्जन्ते । तदुक्तम्—

कर्मणा चानपेक्षेण विष्णवे चार्पितेन वा ।
सम्यग्ज्ञानं भवेत्पुंसां देवतातृप्तिपूर्वकम् ॥ १३ ॥

**भाष्यम्**

**अत्रार्थवादमाह— सहयज्ञा इति ॥ १० - १३ ॥**

*प०टी०*— कर्मविध्युपयोगितयोत्तरप्रघट्टकमवतारयति **अत्रेति** । स्तुतिर्निन्दा परकृतिः पुराकल्पः अर्थवादः ॥

*न०टी०*—न केवलं यज्ञार्थं सङ्गरहितं कर्म न बन्धकम्, किन्तु मोचकमेव ज्ञानद्वारेति भावेनोत्तरं प्रघट्टकमवतारयति **तत्रेति** । अस्मिन्नेवार्थेऽन्यत्र तन्त्रभागवतवाक्यमुदाहृतं भाष्यकारैः—

'कर्मणा निरपेक्षेण विष्णावेवार्पितेन च ।
सम्यज्ज्ञानं भवेत् पुंसां देवतातृप्तिपूर्वकम् ॥
निर्देशाद्भगवत्येव तृप्ता स्युर्देवता यतः ।
तदङ्गत्वेन निर्देशात् तेषु तृप्तिं व्रजन्ति ते ।
तृप्तेषु तेषु देवेशे विष्णौ चोत्पद्यते परम् ।
ज्ञानं तेनैव सम्यक् च मुच्यते कर्मपीडनात् ॥' इत्यादि ।

मुक्तिरेव ह्युच्यते मुख्यतः, इष्टकामधुक्' 'श्रेयः परमवाप्स्यथ' 'मुच्यन्ते सर्वकिल्बिषैः' इति वाक्येषु पुरावृत्ताख्यानात् स्तुतिनिन्दात्मकत्वाच्चार्थवादोऽयम् ॥

*प्र०दी०*— 'सहयज्ञा' इत्यादेर्न प्रकृतेन सङ्गतिर्दृश्यते । अत आह— **अत्रेति** । वर्णाश्रमोचितस्य कर्मणः सर्वथा कर्तव्यत्वे । स्तुतिर्निन्दा परकृतिः पुराकल्पोऽर्थवादः ॥

*भा०दी०*— **अत्र** इत्यस्यार्थः अपवर्गेत्यादिः । **स्तुतिरिति** । गुणिनिष्ठगुणोक्तिः स्तुतिः । दोषोक्तिर्निन्दा । एककर्तृकचरितानुवादः परकृतिः । बहुकर्तृकचरितानुवादः पुराकल्पः । सहेत्यादि श्लोकचतुष्टयं प्रजापतिरुवाचेत्येककर्तृकचरितानुवादस्य दोषकीर्तनस्य च सत्त्वेन चतुर्णामप्युक्तिः ॥

*भा०र०*— बहूनामर्थानां प्रकृतत्वात् 'अत्र' इति भाष्य एतच्छब्देन कस्य परामर्श इति न ज्ञायते । अत आह **वर्णाश्रमेति** । विहितकर्मणो विधिबलेनैव कर्तव्यत्वसिद्धावप्यर्थवादेन स्ववर्णा-

श्रमोचितं कर्म **सर्वथा कर्तव्यम्** अत्यवश्यमनुष्ठेयमिति ज्ञाप्यत इत्यर्थवादोपयोगः । तत्र स्तुतिरूपार्थवादेन करणेऽभ्युदयस्य, निन्दया चाकरणेऽनिष्टस्य सूचनादिति भावः । अत्रार्थवादशब्देन सङ्कोचाभावाच्चतुर्विधोऽपि विवक्षित इति भावेनोक्तम् **स्तुतिरित्यादि** । अस्ति च प्रकृते "एष वोऽस्त्विष्टकामधुक्" इति स्तुतिः । मुक्तिरेव हि मुख्यत इष्टकामः । "यो भुङ्क्ते स्तेन एव सः" इति निन्दा । "पुरोवाच प्रजापतिः" इत्येककर्तृकचरितानुवादरूपपरकृतिः । "इष्टान् भोगान् हि वो देवाः" इत्यनेककर्तृकचरितानुवादरूपपुराकल्पश्च । 'तमाह' इत्यर्थ इति शेषः ॥ १०-१३ ॥

**'सहयज्ञाः' इत्यादिचतुःश्लोक्यक्षरार्थस्तु**— यज्ञैः सह वर्तन्त इति **सहयज्ञाः** । यज्ञसाहित्यं च प्रजानां ब्राह्मणक्षत्रियवैश्यानां "स एष यज्ञः पञ्चविधोऽग्निहोत्रं दर्शपूर्णमासौ चातुर्मास्यानि पशुः सोमः" इत्यादिश्रुतिप्राप्ताग्निहोत्राद्यनुष्ठातृत्वमेव । इष्टकामान् **प्रसविष्यध्वम्** । प्रपूर्वात् "षूङ् = प्राणिगर्भविमोचने" इत्यतो लृटि स्यप्रत्यये, ध्वमिडागमयोः, टित आत्मनेपदानाम्" इति प्राप्तैत्त्वस्य छान्दसत्त्वेनाभावे च, रूपम् । सम्पादयिष्यथेत्यर्थः । लोट्यपि स्यप्रत्ययेत्यस्य व्यत्ययो वा 'इष्टकामधुग्' इत्यत्र काम्यन्त इति कामा भोगाः ॥ १० ॥

कथमिष्टानां दोग्धा यज्ञः स्यादित्यत उक्तम् **देवानिति** । **अनेन** यज्ञेन । "स एष यज्ञः" इत्यादावेकवचननिर्देशादत्राप्येकवचनम् । **देवान्** इन्द्रादीन् **भावयत** हविरादिभिस्तर्पयत । **परं श्रेयः** मोक्षम् । **दत्तान्** तदनुग्रहप्राप्तान् अन्नादीन् । तेभ्यो देवेभ्यो हविरूपेण **अप्रदाय** । **स्तेनः** चोरः । स्वाम्यननुज्ञया आत्मीयत्वापादनादिति भावः । **सर्वकिल्बिषैः** संसारबीजभूतैः पापैः । **आत्मकारणात्** स्वात्मार्थमेव **ये** पचन्ति तद्भोजनं पापहेतुरेव इत्युवाच प्रजापतिरिति इतिशब्दोऽध्याहार्य इति ॥ ११-१३ ॥

**गीता**

## अन्नाद् भवन्ति भूतानि पर्जन्यादन्नसम्भवः ।
## यज्ञाद् भवति पर्जन्यो यज्ञः कर्मसमुद्भवः ॥ १४ ॥

***वि०वि०***— कर्म कर्तव्यमित्यत्र हेत्वन्तरमाह **अन्नादिति त्रिभिः** । अन्नाद्भूतान्युत्पद्यन्ते, अन्नं च पर्जन्यादुद्भवति, यज्ञात् पर्जन्याभिमन्यमानवृष्टिजनकमेघचक्रस्योत्पन्नत्वात् तत्कारणमुच्यते । मेघचक्राभिमानी च पर्जन्यः । तच्च यज्ञाद्भवति—

'अग्नौ प्रास्ताऽऽहुतिः सम्यगादित्यमुपतिष्ठति ।
आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजा ॥'

इति स्मृतेश्च उभयवचनादादित्यात्समुद्राच्च वृष्ट्यङ्गीकारादविरोधः । अतश्च यज्ञात्पर्जन्योद्भवः सम्भवति । यज्ञो देवतामुद्दिश्य द्रव्यत्यागः । 'उद्दिश्य देवतां द्रव्यत्यागो यज्ञ इतीरितः' इति वचनात् । कर्म इतरक्रिया ॥

*सा०सं०*— वर्णाश्रमोचितकर्मणः सर्वथा कर्तव्यत्वे स्तुत्याद्यात्मकार्थवादं चतुर्भिरुक्त्वा, अधुना जगच्चक्रप्रवर्तकत्वरूपं हेत्वन्तरं विपक्षेऽनर्थोक्त्याऽह **अन्नादित्यादि** त्रिभिः श्लोकैः । **अन्नाद्भूतानि भवन्ति,** रेतोद्वारा प्राणिन उत्पद्यन्ते । पर्जन्यादित्यादन्नसम्भवः वृष्टिद्वारा अन्नस्योत्पत्तिः । पर्जन्यो मेघचक्राभिमानी आदित्यः **यज्ञाद्भवति** । यज्ञशब्दोऽत्राज्यादिहविःपरः । यजमानदत्तानाम् आज्यादिहविषामुपभोजनेन आदित्यस्य बलाद्युपचयान्निमित्तात्, उपचारेण 'यज्ञाद्भवति पर्जन्यः' इत्युच्यते ।

यद्वा पर्जन्यशब्देनादित्याभिमन्यमानं मेघचक्रमेव लक्षणयां वा, 'जननात् परसस्यादेः पर्जन्यो मेघसन्ततिः' (नारदीये) इति स्मृत्युक्तयोगवृत्त्या वा ग्राह्यम् । तच्च यज्ञाद्भवति । हविर्भागेन परितुष्टादादित्यादुत्पद्यते । 'अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते । आदित्याज्जायते वृष्टिः' (नारदीये) इत्यादेः । **वृष्टिः** वार्षिकमेघचक्रं जायत इत्यर्थः । **यज्ञः** देवतोद्देशेन द्रव्यत्यागरूपो ज्योतिष्टोमादिः । **कर्मसमुद्भवः** तदङ्गक्रिययोत्पद्यते ॥

*अ०प्र०*— किञ्च जगच्चक्रप्रवृत्तिहेतुत्वादपि कर्म कर्तव्यमित्याह **अन्नादिति** त्रिभिः ।

भूतानि[१], अन्नात्[२], भवन्ति[३], अन्नसम्भवः[४], पर्ज्यन्याद्भवति[५], पर्जन्यः[६], यज्ञात्[७], भवति[८], स च यज्ञः[९], कर्मसमुद्भव इत्यन्वयः ।

भूतानि अन्नात् = शुक्लशोणितरूपेण परिणतात्[१,२], भवन्ति = उत्पद्यन्ते[३], अन्नस्य च सम्भवः[४], पर्जन्यात् = वृष्टेस्सकाशाद्भवति[५], स च पर्जन्यः[६], यज्ञात् = परित्यक्तहविरादेः[७], भवति[८], स च यज्ञः[९], कर्मसमुद्भवः = कर्मणा यजमानादिव्यापारेण सम्यक् निष्पादित इत्यर्थः । तदुक्तम्—"उद्दिश्य देवतां द्रव्यत्यागो यज्ञ इतीरितः ।" यज्ञो देवतामुद्दिश्य द्रव्यपरित्यागः । यज्ञाङ्गभूतहस्तादिव्यापारः कर्म च परब्रह्मणो जायते । "एष हि एव साधु कर्म कारयती"त्यादिश्रुतेः ॥ १४ ॥

**भाष्यम्**

**हेत्वन्तरमाह— अन्नादिति । यज्ञः पर्जन्यान्नत्वात् तत्कारणमुच्यते । पूर्वयज्ञविवक्षायां च तस्य चक्रप्रवेशो न सम्भवति । तद्व्यापाद्यं कर्मविधये ।**

**न तु साम्यमात्रेणेदानीं कार्यम् । मेघचक्राभिमानी च पर्जन्यः । तच्च यज्ञाद् भवति ।**

**"अग्नौ प्रास्ताऽऽहुतिः सम्यगादित्यमुपतिष्ठति ।**
**आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः ॥"**

**—इति स्मृतेश्च ॥**

**उभयवचनाद् आदित्यात् समुद्राच्च अविरोधः । अतश्च यज्ञात् पर्जन्योद्भवः सम्भवति । यज्ञो देवतामुद्दिश्य द्रव्यत्यागः । कर्म इतरक्रिया ॥ १४ ॥**

***प०टी०***— उत्तरप्रघट्टकं तत्रोदाहरति **हेत्वन्तरमिति** । यज्ञोद्देश्यपर्जन्यस्य कथं यज्ञादुद्भवः ? इत्यत आह **यज्ञ इति** । पर्जन्यपदप्रापकयज्ञोऽत्र तत्कारणतयोच्यते इति किं न स्यात् ? इत्यत आह **पूर्वेति** । तदा तस्य चक्रप्रवेश आसीदेवेत्यत आह **तद्धीति** । तच्च कर्मविध्युपयोगितयैवापाद्यम् । न त्वितिहासरूपेण कथने कर्मविधिर्भवतीत्यर्थः । पर्जन्यकृतकर्मणा चक्रप्रवेशो जातः । अतस्त्वयाऽपि कर्म कार्यमिति कर्मविध्युपयोग इत्यत आह **नत्विति** । पर्जन्यकर्मण एव चक्रप्रवर्तकत्वे नेदानीं कर्म कार्यम् । न हीष्टानिष्टप्राप्तिपरिहारसाधनतावबोधं विना कर्मता (?) मात्रेण कर्मणि प्रवृत्तिरित्यर्थः । 'स्वकीयमुदकं नद्यः' इति वचनात् समुद्राद्वृष्टिर्जायते, अतः कथमादित्यात् ? इत्यत आह **उभयेति** । मेघचक्रस्य यज्ञोद्भूतत्वे किं प्रकृते ? इत्यत आह **अतश्चेति** । अभिमानिनाऽभिमन्यमानस्येत्यर्थः । कर्मैव यज्ञः कथं तदुद्भवः ? इत्यत आह **यज्ञ इति** ॥

***न०टी०***—तस्मिन्नेवार्थे तदुत्तरं प्रघट्टकमवतारयति **हेत्वन्तरमिति** । ननु पूर्वसिद्धदेवताया एव यज्ञोद्देश्यत्वात् कथं यज्ञात् पर्जन्यो भवति ? इत्यत आह **यज्ञ इति** । आहुतिरूपत्वात् तदन्नत्वात् तत्कारणमुच्यते । न तु तज्जनकत्वादित्यर्थः । ननु पर्जन्यपदप्रापकतत्कृतपूर्वयज्ञविवक्षया 'यज्ञाद्भवति पर्जन्यः' इत्याद्युक्तिः किं न स्यात् ? इत्यत आह **पूर्वेति** । न ह्यर्जुनादिभिः सर्वै पर्जन्यपदप्रापकयज्ञः क्रियते । अतस्तस्य चक्रप्रवेशाभावप्रसङ्गात् नासौ 'यज्ञाद्भवति पर्जन्यः' इत्यत्र विवक्षित इत्यर्थः । ननु यज्ञत्वेन पर्जन्यपदकारणतत्कृतपूर्वयज्ञसमानजातीयत्वादिदानीन्तनसर्वपुरुषा-नुष्ठेययज्ञस्य सामान्यतः, स चक्रप्रविष्टः किं न स्यात् ? इत्यत आह **तद्धीति** । तच्चक्रं कर्मविध्युपयोग्येवापाद्यम् । न तु पर्जन्यपदकारणस्यार्जुनाद्यनुष्ठेययज्ञत्वसाम्यमात्रेणेदानीं चक्रमापाद्यम् । अर्जुनाद्यनुष्ठितयज्ञेन पर्जन्यादिद्वारा भूतोद्भवाभावात्, तदभावे भूतविनाशाभावाच्च । न कर्म-

विध्युपयोग्येवंविधचक्रकरणमिति भावः । प्रकारान्तरेणापि यज्ञात् पर्जन्योद्भवमाह **मेघेति** । मेघ-चक्राभिमान्यादित्यः, पर्जन्यनामा । परसस्यादिजननात्, तेनाभिमन्यमानत्वात् तदपि पर्जन्याख्यम् । तत्र यज्ञाराधितादित्यात् भवतीति यज्ञात् पर्जन्यो भवतीत्यर्थः । तत्र प्रमाणमाह **अग्नाविति** । **सम्यगिति** । यथाशास्त्रं प्रक्षिप्ताहुतिरादित्यमुपतिष्ठत इत्यर्थः । क्वचित् समुद्रस्य वृष्टिकारणत्वोक्ता-वप्यविरोधमाह **उभयवचनादिति** । एवमादित्यवचनो मेघचक्रवचनो वा पर्जन्यशब्दः । उभयथाऽपि यज्ञात् पर्जन्योद्भवः सम्भवतीत्युक्तमुपसंहरति **अतश्चेति** । ननु कर्मैव यज्ञः, स कथं कर्मसमु-द्भवः ? इत्यत आह **यज्ञ इति** ॥

***प्र०दी०***— 'अन्नात्' इत्यादेः सङ्गतिमाह— **हेत्वन्तरमिति** । अत्रेत्यनुवर्तते । अत्र पर्जन्यो मेघ आदित्यश्च विवक्षितौ । तत्रादित्यस्य पूर्वसिद्धस्य कथं 'यज्ञाद्भवति पर्जन्यः' इति यज्ञः कारणत्वेनोच्यत इत्यत आह— **यज्ञ इति** । यद्यपि यज्ञो देवतामुद्दिश्य द्रव्यत्याग इति वक्ष्यति । तथाऽप्यत्र परित्यज्यमानं द्रव्यं गृह्यते । तस्य पर्जन्यान्नत्वात् पर्जन्योपभोग्यत्वात् । उपभुक्तेन च तस्य बलाद्युपचयाद्यज्ञः तस्य पर्जन्यस्य कारणमुच्यते । ननु पर्जन्यो देवतात्मा येन यज्ञेन पर्जन्यत्वं प्राप्तः स यज्ञो विवक्षितोऽत्रास्तु । तथा सति यज्ञात्पर्जन्योद्भवो मुख्य एव सम्पत्स्यत इति । नेत्याह— **पूर्वेति** । तस्य पर्जन्यपदप्राप्तिहेतोर्यज्ञस्येति शेषः । ननु तदा चक्रं प्रवृत्तमेव । अतः कथं पूर्वयज्ञस्य चक्राप्रवेश इत्यत आह— **तदिति** । तच्च क्रमापाद्यं ह्यत्र विवक्षितम् । न तु प्रागा-पादितम् । कुतः ? कर्मविधये ह्येतदुच्यते । यदि विहितं कर्म करिष्यसि तदा जगच्चक्रप्रवृत्ति-र्भविष्यति । अन्यथा तद्विघातः । अतस्त्वया कर्म कर्तव्यमिति । कर्मविध्युपयोगिता चापाद्यस्यैव । न त्वापादितस्य । आपाद्ये च यज्ञव्यक्तिविशेषस्य पर्जन्यपदप्राप्तिहेतोर्न प्रवेश इत्यर्थः ।

प्राक्पर्जन्येन कर्म कृतम् । तेन च यज्ञादिद्वारा चक्रं प्रवृत्तम् । अतः त्वयापि कर्म कर्तव्य-मित्येवं प्रागापादितचक्रोक्तिरपि कर्मविध्युपयोगिनी भवतीति चेन्मैवम् । अत इति कोऽर्थः । त्वत्कर्मणापि चक्रप्रवृत्तिसम्भवादिति वा कर्मत्वादिति वा । नाद्यः । इदानीन्तनपुरुषकर्मजेन यज्ञेन पर्जन्योत्पत्त्यसम्भवेन चक्राप्रवृत्तेः । न हि सर्वेऽपि कर्मकारिणः पर्जन्यत्वं प्राप्नुवन्ति । द्वितीयं दूषयति— **न त्विति** । फलरहितेन कर्मत्वसाम्येनेदानीं कर्म कार्यं न भवति स्वयं क्लेशरूप-त्वादिति ।

प्रकारान्तरेणापि 'यज्ञाद्भवति पर्जन्यः' इत्येतद्घटयितुमाह— **मेघेति** । चक्रं समूहः । ततः किमित्यत आह— **तच्चेति** । मेघचक्रम् । कुत इत्यत आह— **अग्नाविति** । ''ननु स्वकीयमुदकं नद्यः'' इति समुद्राद्वृष्टिरुच्यते । अत आदित्याद्वृष्ट्यङ्गीकारे तद्विरोधः स्यादित्यत आह—

**उभयेति** । वृष्ट्यङ्गीकारादिति शेषः । वर्षुका मेघा इह वृष्टिशब्देनोच्यन्ते । अतोऽपि किमित्यत आह— **अतश्चेति** । प्राक् पर्जन्यस्य भवनं गौणमङ्गीकृत्य व्याख्यातम् । इदानीं त्वभिमन्यमानगत-स्याभिमानिनि लक्षणामाश्रित्येति भेदः । यद्वाऽभिमानिगतस्य पर्जन्यशब्दस्याभिमन्यमाने लक्षणा-माश्रित्य द्वितीयं व्याख्यानम् । तात्पर्यनिर्णये तु मेघसन्ततौ पर्जन्यशब्दो यौगिकोऽङ्गीकृतः । ननु यज्ञः कर्मात्मकः । तत्कथमुच्यते 'यज्ञः कर्मसमुद्भवः' इति । तत्राह— **यज्ञ इति** । इतरक्रिया यज्ञाङ्गभूता । अपूर्वाङ्गीकारे रूढित्यागेन लक्षणाश्रयणं स्यात् ॥

***भा०दी०***— **अत्रेत्यनुवर्तत इति** । तदर्थस्तु प्रागुक्त एवेति भावः । प्राचीनस्यापि चक्र-प्रवेशमाशङ्कते **प्राक्पर्जन्येनेति** । **स्वकीयमिति** । 'स्वकीयमुदकं नद्यः समुद्रे नैव जानते । वायुस्तु तत्पृथक् ज्ञात्वा मेघे कृत्वा प्रवर्षती'ति स्मृतावुच्यत इत्यर्थः । **इहेति** । स्मृतावध्याहृतवाक्ये चेत्यर्थः । योगिकोऽङ्गीकृतोऽतो नामुख्यवृत्तिदोष इति भावः ।

ननु यज्ञपुण्याख्यमर्थमपूर्वं गौणमिति कार्यस्यैवोपचयाख्यगुणयोगोक्तेर्गौणमित्यर्थः । **तात्प-र्येति** । गीतातात्पर्यनिर्णये तु जननात्परसस्यादेः पर्जन्यो मेघसन्ततिरिति पक्षद्वयमपि पर्जन्योद्भवस्य अमुख्यत्वाशेषप्रकारान्तरेणापि कथमित्यत आह **प्राक्पर्जन्यस्येति** । प्राक्यज्ञपर्जन्यस्येत्यादि ग्रन्थ इत्यर्थः । कर्मपदेन गृह्यतां कर्मणोपूर्वस्य समुद्भवो यस्मादिति वा यज्ञशब्देन वा पूर्वग्रहणे कर्मणा समुद्भवो यस्येति विग्रहे 'यज्ञः कर्मसमुद्भव' इति सङ्गच्छत इत्यत आह **अपूर्वेति** । भाष्ये बुद्धि-र्ज्ञानमित्यादिभ्य इत्यस्य 'बुद्धिर्ज्ञानमसम्मोहः', 'क्षमा सत्यमि'त्यादिना 'भवन्ति भावा भूतानां मत्त एव पृथग्विधा' इत्यन्तेन दशमे सर्वस्य तदधीनत्वस्य वक्ष्यमाणत्वादित्यर्थः ॥

***भा०र०***— **अत्रेत्यनुवर्तत इति** । वर्णाश्रमोचितकर्मणः सर्वथा कर्तव्यत्वे जगच्चक्रप्रवर्तक-त्वरूपं हेतुम् अर्थवादहेतोरन्यम् आह गीताकार इति भाष्यं योजनीयमिति भावः । "पर्जन्यादन्न-सम्भवः । यज्ञाद् भवति पर्जन्यः" इति गीतायां पर्जन्यशब्देन आदित्यमात्रविवक्षायां "मेघचक्राभि-मानी पर्जन्यः" इत्युत्तरभाष्यानानुगुण्यादाह **अत्र पर्जन्य इति** । "पर्जन्यौ रसशब्देन्दौ" इत्यादि-लौकिकप्रसिद्ध्या, "स्वगोभिर्भोक्तुमारेभे पर्जन्यः काल आगतः" इत्यादिवैदिकप्रसिद्ध्या च, मेघा-दित्ययोः प्रतीतेरुभावपि विवक्षितावित्यर्थः । **तत्र** तथा सति । 'आदित्यस्य' इत्यस्य "यज्ञः कारणत्वेनोच्यते" इत्यनेन सम्बन्धः । पूर्वकालवर्तिन एव कारणत्वाद् यज्ञस्य पश्चात्तनस्य न कार-णत्वं युक्तमिति भावः । पर्जन्यान्नत्वं, तत्कारणत्वं चोपपादयितुमाह **यद्यपीति** । **अत्र** गीता-भाष्ययोः । **पर्जन्योपभोग्यत्वात्** यत्र यज्ञे पर्जन्यो देवता तत्र दत्तस्य हविषः पर्जन्योपभोग्य-त्वादित्यर्थः ।

**देवताऽऽत्मा** प्राप्तदेवपदः । **पर्जन्यत्वं** पर्जन्यपदम् । **अत्र** ''यज्ञाद् भवति पर्जन्यः'' इत्यत्र । विवक्षायाः फलोक्तिः **तथा सतीति** । **मुख्य एवेति** । पूर्वत्र तु बलाद्युपचयद्वारा गौण उद्भवः कल्प्य इति भावः । ''पूर्वयज्ञविवक्षायाम्'' इत्यनन्तरं 'चक्रप्रवेशः' इत्यतः पूर्वं भाष्येऽपेक्षितमध्याहरति **तस्येति** । इति शेष इत्यन्वयः । कृतचोद्यपरिहारस्फोरणायाध्याहृतस्य 'तस्य' इत्यस्य अर्थमाह **पर्जन्यपदप्राप्तिहेतोर्यज्ञस्येति** । भाष्य एव 'तस्य' इति पाठ इति पक्षस्तु टीकाऽननुगुणः ।

**तदा** पर्जन्येन स्वपदप्राप्तये यदा यज्ञोऽनुष्ठीयते तदा । तदित्यस्यार्थः **चक्रमिति** । **जगच्चक्रमित्यर्थः** । हिशब्दं व्यत्यस्य संयोजयन्नपेक्षितं पूरयति **आपाद्यं ह्यत्र विवक्षितमिति** । **आपादितं** पर्जन्यानुष्ठितम् । 'कर्मविधये' इत्येतद् हिशब्दमनुवर्तयन्नवतारयति **कुत इति** । 'उच्यते' इति शेषपूरणम् । उपपादयति **यदीति** । **अन्यथा** विहितकर्माकरणे । **तद्विघातः** जगच्चक्रप्रवृत्तिविघातः । ''त्वया कृतो भविष्यति'' इति शेषः । **त्वया** अर्जुनोपलक्षितेनाधिकारिणा । **कर्मविधिः** कर्मविधानम् । **आपाद्ये** अनुष्ठेये चक्रे । ''यज्ञव्यक्तिविशेषस्य'' इत्येतद्विवरणं **पर्जन्येति** । कर्मविधानानुपयोगित्वान्न चक्रे प्रवेश इत्युक्तोपयोगं शङ्कते **प्राक् पर्जन्येनेति** । 'यज्ञादिद्वारा' इत्यत्र आदिशब्देन पर्जन्यादिग्रहणम् । **पर्जन्योत्पत्त्यसम्भवेनेति** । कार्यत्वस्य पश्चात्तनत्वरूपत्वादिति भावः । पर्जन्योद्भवो नाम पर्जन्यत्वप्राप्तिः । स च प्रकृते न सम्भवतीत्याह **न हीति** । **द्वितीयं** 'कर्मत्वाद्' इति द्वितीयपक्षम् । मात्रपदतात्पर्यमाह **फलेति** । **क्लेशरूपत्वादिति** । फलरहितत्वादेवेति भावः ।

**प्रकारान्तरेणेति** । ''यज्ञः पर्जन्यान्नत्वात्'' इत्युक्त्यपेक्षया अन्यः प्रकारः प्रकारान्तरम् । तेनेत्यर्थः । चक्रशब्दस्य प्रकृतजगच्चक्रपरत्वे तस्य मेघमात्रसम्बन्धित्वानुपपत्तिरित्यतोऽत्र प्रसिद्धार्थत्वं विवक्षितमिति भावेन आह **चक्रं समूह इति** । यद्यपि ''चक्रो गणे चक्रवाके'' इति समूहार्थश्चक्रशब्दो विश्वप्रकाशे पुंलिङ्गोऽभिहितः, तथाऽपि ''पटलं पेटलं चक्रं चक्रवालं च मण्डलम्'' इत्यारभ्य ''निकर-निकाय-निवह-निबिड-व्रज-विसर-पुञ्ज-समूह-सञ्चयाः'' इति हलायुधादौ नपुंसकत्वमभिहितमित्यत्र नपुंसकतया निर्देशः । अत एव केशवः ''पुंनपुंसकयोश्चक्रशब्दः'' इत्यभ्यधत्त । **कुत इति** । मेघचक्रं यज्ञाद् भवतीत्येतत् कुतः प्रमाणादवगम्यते ? अप्रत्यक्षत्वादिति भावः । **सम्यक्** यथाशास्त्रम् । **अग्नौ** प्रास्ता प्रक्षिप्ता आहुतिः आदित्यम् **उपतिष्ठति** प्राप्नोतीति प्रमाणवचनार्थः ।

इदमुक्तं भवति । ''यज्ञाद् भवति पर्जन्यः'' इत्यत्र तु पर्जन्यशब्देन मेघचक्राभिमान्यादित्यो ग्राह्यः । ततस्तदभिमन्यमानं मेघचक्रमपि तच्छब्दार्थः । तच्च यज्ञाराधिताद् आदित्याद् भवतीति

यज्ञात् पर्जन्योद्भव आदित्यद्वारक इति "यज्ञाद् भवति पर्जन्यः" इति यज्ञपर्जन्ययोः कार्यकारण-भाववचनमुपपद्यत इति । इदं च **प्राचीनटीकायां** स्पष्टमुक्तम् । **स्वकीयमिति** । "स्वकीयमुदकं नद्यः समुद्रे नैव जानते । वायुस्तु तत् पृथग् ज्ञात्वा मेघे कृत्वा प्रवर्षति" इति स्मृतौ नादेयानामपि जलानां समुद्रे मेलनेन समुद्रत्वविवक्षया तत्रत्यं जलं मेघे कृत्वा प्रवर्षतीत्युक्तौ समुद्रादेव वृष्टिरुक्ताऽसीदिति भावः । **इति शेष इति** । "आदित्यात् समुद्राच्चेत्यनन्तरम्" इति शेषः ।

ननु "आदित्याज्जायते वृष्टिः" इत्यत्र भावार्थक्तिन्प्रत्ययान्तवृष्टिशब्देन वर्षणक्रियाऽभिधाने वृष्टेरादित्यद्वारा यज्ञजन्यत्वं प्रतीयते । तत् कथमिदं वचनं मेघचक्रस्य यज्ञजन्यत्वे मानं भवेद् ? इत्यत आह **वर्षुका मेघा इहेति** । क्रियावाचिनाऽपि वृष्टिशब्देन तत्कर्तारो मेघा लक्षणया प्रतिपाद्यन्ते इत्यभिसन्धाय लक्षणायां शक्यसम्बन्धं प्रदर्शयितुं वर्षुका इत्युक्तम् । यद्वा, वृष्यतेऽनेन मेघचक्रेणेति "अकर्तरि च कारके" इति क्तिन्प्रत्यये कर्तरि करणत्वोपचाराद् वृष्टिशब्दो मेघचक्रवाचक इत्यर्थः । 'वार्षुकाः' इति पाठे तु "लष-पत-पद-स्था-भू-वृष-हन-कम-गम-शॄभ्य उकञ्" इति सूत्रेण वृषु = सेचन इत्यतस्ताच्छीलिक-उकञ्प्रत्यये अणन्तत्वेन "अत उपधायाः" इति वृद्धौ "वर्णशीला इत्यर्थः । **अतोऽपीति** । इयताऽपि मेघचक्रस्य यज्ञोद्भूतत्वमुक्तम्, अतोऽपि किं प्रकृत इत्यर्थः । ननु "यज्ञः पर्जन्यान्नत्वात्" इत्यादिना "मेघचक्राभिमानी च पर्जन्यः" इत्यादिना चामुख्यमेव पर्जन्यस्य भवनं व्याख्यातं भाष्ये । तत्र कथं प्रकारान्तरेणेत्युक्तम् ? इत्यत आह **प्राक् पर्जन्यस्येति** । **भवनं गौणमिति** । भवनकर्तृवाचकं 'भवति' इति पदं गौण्या वृत्त्या प्रवृत्तमित्यर्थः । बीजोद्भूतेऽङ्कुर उपचय इव यज्ञोद्भूते आदित्ये बलोपचय एव समानो गुण इति भावः । **अभिमन्यमानगतस्येति** । पर्जन्याभिमन्यमानं मेघचक्रम् । तद्गतस्य भवनस्य तदभिमानिनि पर्जन्यशब्दितादित्ये लक्षणया व्यवहारः । एवं सति "आदित्यस्य पूर्वसिद्धस्य कथं यज्ञः कारणत्वेनोच्यते" इति चोद्यमनवकाशम् । लक्षणायां च शक्यसम्बन्धं प्रदर्शयितुं भाष्ये "मेघचक्राभिमानी पर्जन्यः" इत्युक्तम् । गौणीतो लक्षणा च जघन्येत्यन्यत्र व्यवस्थापितत्वात् "प्रकारान्तरेणापि इति गमनिकायामुक्तमिति भावः ।

ननु लक्षणा नाम शक्यसम्बन्धिनी वृत्तिः शब्दधर्मः । तथा चोक्तं भगवत्पादैः "उपलक्षणा च गौणी च तिस्रः शब्दस्य वृत्तयः" (अनु. १.४.६ अधि. ३१ श्लो. ३३७) इति । अत्र च भवनस्याभिमानिनि लक्षणामाश्रित्येत्युच्यते । भवनं च क्रियैवेति कथं तस्य लक्षणावृत्तिः । न च 'भवति' इत्यस्य 'प्रसीदति' इत्यर्थाङ्गीकारे धातोर्लक्षणेत्येवमुक्तिरिति वाच्यम् । "मेघचक्राभिमानी पर्जन्यः । तच्च यज्ञाद् भवति" इति भाष्याक्षरास्वारस्यापत्तेः । प्रकृतानुपयुक्तश्चेत्यरुचेराह **यद्वेति** ।

**अभिमानिगतस्य** अभिमानिवाचकस्य । तथा च आदित्यवाचकस्य पर्जन्यशब्दस्य तदभिमन्यमाने मेघचक्रे लक्षणेत्यङ्गीकारान्नोक्तचोद्यावकाशः । अभिमानिना अभिमन्यमानस्येति **प्राचीनटीकाऽपि** लक्षणाभिप्रायेणैव प्रवृत्तेति भावः । अनेन "अत्र पर्जन्यो मेघ आदित्यश्च विवक्षितौ" इत्युक्तेरुपयोगः, "यज्ञः पर्जन्यान्नत्वात्" इत्यत्र 'भवति', 'भवति इव' इति भवतिशब्दे गौणी वृत्तिराश्रिता । 'मेघचक्राभिमानी' इत्यादिभाष्ये तु पर्जन्यशब्दे लक्षणावृत्तिराश्रितेति भेदश्च प्रदर्शितो भवति । "गौणं भवनम्" इति, "पर्जन्यशब्दलक्षणामाश्रित्य" इति च स्पष्टमेव विभावितत्वात् ।

ननु यज्ञशब्दस्यापूर्वार्थत्वं परोक्तं प्रत्याख्यास्यत्याचार्यः । तन्न युक्तम् । पर्जन्यशब्दस्य युष्माभिरपि लक्षणाङ्गीकारेण विशेषाभावाद् इत्यतो विशेषं प्रदर्शयति **तात्पर्येति** । गीतातात्पर्यनिर्णय इत्यर्थः । प्रस्तुतत्वाद् 'मेघचक्रे' इति वक्तव्ये 'सन्ततौ' इति वदन् "जननात् परसस्यादेः पर्जन्यो मेघसन्ततिः" (गी.ता. ३.१४) इति तत्रत्यवचनं स्मारयति । योगवृत्तिमङ्गीकृत्यैव लाक्षणिकत्वाभ्युपगमान्नामुख्यार्थत्वाङ्गीकाराविशेष इति भावः । एतेनैव निर्णयविरोधोऽपि परिहृतः । रूढ्यभावस्योभयत्राभिप्रेततया योगलक्षणाऽन्यतरनिराकरणस्य क्वाप्यनभिसंहितत्वादिति । **कर्मात्मक इति** । 'त्रिकर्मकृत्' इत्यादौ यज्ञादेः कर्मशब्दार्थत्वादिति भावः । **यज्ञाङ्गभूता** पूर्वोत्तराङ्गकल्पनानुष्ठानरूपा ।

ननु "**यज्ञः** अपूर्वम्, स च कर्मसमुद्भवः । ऋत्विग्यजमानव्यापारः **कर्म** तत् **समुद्भवः** जनकं यस्यापूर्वस्य स यज्ञः कर्मसमुद्भवः" इति **सङ्करीत्या** व्याख्याने "यज्ञः कर्मात्मा । तत्कथमुच्यते यज्ञः कर्मसमुद्भव इति" इति कृतचोद्यानवकाश इत्यत आह **अपूर्वाङ्गीकार इति** । यज्ञशब्देन अपूर्वमिह ग्राह्यमिति परव्याख्याने देवतोद्देश्यकद्रव्यपरित्यागलक्षणलोकप्रसिद्धमुख्यार्थत्यागपूर्वकं तज्जन्यापूर्वे लक्षणाश्रयणमापद्येत । न च मुख्ये सम्भवति लाक्षणिकाश्रयणं न्याय्यमित्यर्थः । तदिदं दूषणं भाष्यकाराभिप्रेतमिति दर्शयितुं **रूढित्यागेन** इत्युक्तम् ॥ १४ ॥

**गीता**

## कर्म ब्रह्मोद्भवं विद्धि ब्रह्माक्षरसमुद्भवम् ।
## तस्मात् सर्वगतं ब्रह्म नित्यं यज्ञे प्रतिष्ठितम् ॥ १५ ॥

*वि०वि०*— कर्म ब्रह्मणो जायते । 'एष ह्येव साधु कर्म कारयति' इत्यादेः । तच्च ब्रह्माक्षराख्यवेदाभिव्यङ्ग्यम् । यत एवं परम्परया यज्ञाभिव्यङ्ग्यं ब्रह्म तस्मान्नित्यं यज्ञे प्रतिष्ठितम् । तानि चाक्षराणि भूताव्यङ्ग्यानीति चक्रम् ॥

*वा०ल०*— 'ब्रह्माक्षरसमुद्भवम्' इत्यत्र अक्षरो वेदः, तस्मात् समुद्भवः सम्यक्प्रतिपादनेन व्यक्तीकरणं यस्य तत् तथोक्तम् । तस्मात् स्वप्रतिपादकवेदविहितत्वात् ॥

*सा०सं०*— **कर्म ब्रह्मोद्भवं** परब्रह्मजन्यम् । **विद्धि** जानीहि । **ब्रह्म** परब्रह्म **चाक्षर-समुद्भवम्** अक्षरशब्दितवेदाभिव्यङ्ग्यम् । वेदेन यथावदवगतमेव ब्रह्म सत्कर्म कारयतीति भावः । तानि चाक्षराणि भूतव्यङ्ग्यानीति शेषोक्त्या चक्रं ध्येयम् । तस्मादुक्तपरम्परया यज्ञाभिव्यङ्ग्यत्वात् सर्वगतं ब्रह्म 'नित्यं यज्ञे प्रतिष्ठितम्' इत्युच्यते । एवं च भगवतो यज्ञे प्रतिष्ठितत्वात् यज्ञानुष्ठानेन चक्रप्रवृत्तौ भूतस्थितिहेतुत्वनिमित्तसुकृतमिव भगवदभिव्यक्तिनिमित्तं च सुकृतं भवतीति भावः ॥

*अ०प्र०*— तथा, **कर्म ब्रह्मोद्भवमिति** ।

तच्च कर्म[१], ब्रह्मोद्भवम्[२], विद्धि[३], तच्च ब्रह्म[४], अक्षरसमुद्भवं विद्धि[५], तस्मात्[६], ब्रह्म[७], सर्वगतं विद्धि[८], तच्च ब्रह्म नित्यम्[९], यज्ञे[१०], प्रतिष्ठितं विद्धीत्यर्थः ।

तच्च कर्म = यजमानादिव्यापाररूपं कर्म[१], ब्रह्मोद्भवं = ब्रह्म वेदः तस्मात् उद्भवं प्रवृत्तं[२], विद्धि = जानीहि[३], तच्च ब्रह्म = वेदाख्यम्[४], अक्षरसमुद्भवं = अक्षरात् परब्रह्मणः समुद्भवं समुद्भूतं विद्धि[५], एवं अक्षरादेव यज्ञप्रवृत्तेः अत्यन्तं तस्याभिप्रेतो यज्ञो यस्मात् तस्मात्[६], ब्रह्म[७], सर्वगतमपि अक्षरं विद्धि[८], तच्च ब्रह्म नित्यं = सर्वदा[९], यज्ञे = विशेषतो भोक्तृत्वादिरूपेण यद्वा यज्ञेनोपायभूतेन प्राप्यत इति यज्ञे[१०], प्रतिष्ठितं = सन्निहितं उच्यते विद्धीति वा, यद्वा यस्माज्जगच्चक्रमूलं कर्म तस्मात् सर्वगतं मन्त्रार्थवादैः सर्वेषु सिद्धार्थप्रतिपादकेषु भूतान् व्याख्यानादिषु गतं स्थितमपि वेदाख्यं ब्रह्म सर्वदा यज्ञे तात्पर्येण प्रतिष्ठितं अतो यज्ञादि कर्म कर्तव्यमित्यर्थः । यद्वा तानि च वेदाक्षराणि भूताभिव्यङ्ग्यानि इति चक्रम् । तथा चादौ भूतानि तेभ्यो वेदपाठादिः । तस्मादर्थभूतं ब्रह्म । तत्प्रेरणया हस्तादिव्यापारः तस्माद्यज्ञः, तस्मात्पर्जन्यः, तस्मादन्नं अन्नाद्भूतानि उत्पद्यन्ते पुनस्तैश्च वेदादि इत्येवं परम्परापरिवर्तनं चक्रमित्युच्यते ॥ १५ ॥

**भाष्यम्**

**कर्म ब्रह्मणो जायते । "एष ह्येव साधुकर्म कारयति", "बुद्धिर्ज्ञानं" इत्यादिभ्यः । न च मुख्ये सम्भाव्यमाने पारम्पर्येणौपचारिकं कल्प्यम् । न च जडानां स्वतः प्रवृत्तिः सम्भवति । "एतस्य वाऽक्षरस्य" इत्यादि सर्वनियमन-श्रुतेश्च । "द्रव्यं कर्म च कालश्च" इत्यादेश्च । अचिन्त्यशक्तिश्चोक्ता । जीवस्य च प्रतिबिम्बस्य बिम्बपूर्वैव चेष्टा । "न कर्तृत्वं" इत्यादि निषेधाच्च ।**

***प०टी०***— 'कर्म ब्रह्मोद्भवम्' इत्येतत् 'कर्म वेदेन प्रकाश्यते इति' इत्यपव्याख्यां दूषयितुं व्याचष्टे **कर्मेति** । अर्थान्तरे किं बाधकम् ? इत्यत आह **न चेति** । 'ब्रह्म' 'उद्भव'शब्दयोर्मुख्यार्थे सम्भवत्यमुख्यार्थः 'कर्म वेदेनाभिमानिद्वारा प्रकाश्यते' इति, न युक्त इत्यर्थः । वेदोऽभिमानिनं विनाऽपि कर्म प्रकाशयति । अतः का परम्परा ? इत्यत आह **न चेति** । न केवलं जडत्वात् वेदस्य स्वतः प्रवृत्त्ययोगः, किन्तु भगवतः सर्वनियामकत्वश्रुतेश्चेत्याह **एतस्येति** । अर्थप्रकाशकत्वं वेदस्वभावः कथमन्यनियतः ? इत्यत आह **द्रव्यमिति** । श्रुतमपि स्वभावनियमनं कथं घटते ? इत्यत आह **अचिन्त्येति** । जीवस्यैव कर्तृत्वात् 'कर्म ब्रह्मोद्भवम्' इत्यत्र भवद्भिरप्युपचरितार्थ एवाङ्गीकार्य इत्यत आह **जीवस्येति** ।

***न०टी०***—'कर्म ब्रह्मोद्भवम्' इत्यत्र ब्रह्मशब्दोक्तो वेद उद्भवशब्दोक्तः प्रकाश इत्येतावामपव्याख्यामपाकर्तुं तावद्ब्रह्मशब्दोक्तं परब्रह्म, उद्भवशब्दोक्तं जन्मेति सप्रमाणकं सम्यगेव व्याचष्टे **कर्मेति** । अपव्याख्यामपाकरोति **न चेति** । ब्रह्मशब्दमुख्यार्थपरब्रह्मणः साक्षादुद्भवशब्दमुख्यार्थे कर्मजनने सम्भाव्यमाने वेदाख्यादौपचारिकब्रह्मणः तदन्तर्यामिद्वारा प्रकाशाख्यौपचारिकोद्भवः कर्मणो न कल्पनीय इत्यर्थः । देशतः कालतो ब्रह्मत्वेऽप्यगुणब्रह्मवदौपचारिकं ब्रह्म वेद इति भावः । ननु वेदानां बुध्यारोह एव परापेक्षा । बुद्ध्यारूढानां स्वार्थप्रकाशनं स्वत एव । अतः का परम्परा ? इत्यत आह **न चेति** । जडानां च बालादिवदीप (?) वेदादीनामर्थप्रकाशाख्यप्रवृत्तिरपि स्वतो न सम्भवतीत्यर्थः । न केवलमचेतनत्वयुक्त्यैवान्यनियम्यत्वं वेदादेः । किन्तु विष्णोः सर्वनियामकश्रुतेश्चेत्याह **एतस्येति** । ननु भवत्यन्याधीनत्वं जडगतचलनादेरस्वभावधर्मस्य अर्थप्रकाशनादेस्तु स्वभावत्वादनन्याधीनत्वमित्याशङ्क्य, तस्याप्यन्याधीनत्वे प्रमाणमाह **द्रव्यमिति** । ननु नित्यवेदादिस्वभावनियमाकत्वं श्रुतमपि कथं शक्यम् ? पुंप्रयत्नासाध्यत्वादित्याशङ्क्य, अन्यस्याशक्यमप्यचिन्त्यशक्तित्वाद्भगवतः शक्यमिति भावेनाह **अचिन्त्येति** । ननु तर्हि जीवानां स्वतः प्रवृत्तिसम्भवात्, न तत्कर्म परब्रह्मणो जायत इति मुख्यार्थासम्भवात्, पारम्पर्येण वेदाख्यापरब्रह्मप्रकाश्यमेव किं न स्यात् ? इत्यत आह **जीवस्येति** । जडजीवयोः पराधीनत्वापराधीनत्वविशेषेऽपि, जीवं क्वचित् तदिच्छानुपूर्वकं चेष्टयतीत्येतावतैवासौ स्वतः प्रवर्तत इत्युच्यते क्वचिदिति भावः । इतोऽपि न जीवकर्म जीवेनैव जायत इत्यङ्गीकार्यम् । भगवतैव निषिद्धत्वादित्याह **न कर्तृत्वमिति** ।

***प्र०दी०***— कर्म ब्रह्मोद्भवं ब्रह्मणा वेदेन प्रकाश्यमिति परेषां व्याख्यानमसदिति भावेनाह— **कर्मेति** । ब्रह्मणः परब्रह्मणः । कुत इत्यत आह— **एष हीति** । अपव्याख्यानं प्रत्याख्याति— **न चेति** । उद्भवशब्दस्य मुख्येऽभिधेये जन्मनि सम्भाव्यमाने सत्यौपचारिकं प्रकाशनमर्थतया न

कल्प्यम् । तथा ब्रह्मशब्दस्य मुख्येऽभिधेये परे ब्रह्मणि सम्भाव्यमाने सत्यौपचारिकममुख्यं वेदाख्यं ब्रह्मशब्दार्थतया न कल्प्यम् ।

किं चैवं व्याचक्षाणेनापि वेदस्य कर्मप्रकाशकत्वमन्तर्यामिद्वारा परम्परयाऽङ्गीकार्यम् । तथा चान्ततोऽपि परब्रह्मण्यङ्गीकार्ये शब्दत एव प्राप्तस्य तस्य परित्यागोऽनुपपन्नः । ननु वेदः स्वयमेव कर्म प्रकाशयति । किं परब्रह्मणा । अतो न परम्परेत्यत आह— **न चेति** । न केवलं वेदस्य जडत्वादन्याधीनत्वं, किं त्वागमाद्विष्ण्वधीनत्वं सिद्धमित्याह— **एतस्येति** । विष्णोरिति शेषः । ननु शब्दस्यार्थप्रकाशनं स्वभावः । न त्वागन्तुको व्यापारः । यथाऽग्नेरौष्ण्यम् । ततो जडत्वेऽपि न परापेक्षेत्यतः स्वभावस्यापि भगवदधीनत्वे प्रमाणमाह— **द्रव्यमिति** । एतत्प्रमाणसिद्धमपि स्वभाव-नियमनं विष्णोरसम्भावितमित्यत आह— **अचिन्त्येति** । यदि जडस्य न स्वतः प्रवृत्तिः तर्ह्य-भिमानिदेवताद्वाराऽस्तु । तथा च नान्ततोऽपि परब्रह्माङ्गीकार इत्यत आह— **जीवस्य चेति** । ततश्चाधिक्येन परम्परेति भावः । न केवलं प्रतिबिम्बत्वाज्जीवस्य स्वतःप्रवृत्त्यभावः । किन्त्वागमा-च्चेत्याह— **नेति** ।

***भा०दी०***— **अन्तर्यामिद्वारेति** । साक्षाद्वेदस्य जडस्य प्रकाशकत्वायोगादन्तर्यामित्वरूपे-श्वरेत्यर्थः । **स्वभावस्यापीति** । 'इत्यादेश्चे'ति भाष्ये 'स्वभावो जीव एव च । यदनुग्रहतः सन्ति न सन्ति यदुपेक्षये'ति वाक्यशेषं आदिपदार्थः । 'अचिन्त्येती'ति भाष्ये उक्तेत्यस्य पूर्वाध्याये स्थाणुत्वेऽप्येक्षतेत्याद्यविरुद्धमीश्वरेत्यादि न इत्यादिवचनादित्यन्तेनोक्तेत्यर्थः । 'न कर्तृत्वम्' इत्यादि भाष्यस्य तु 'न कर्तृत्वं न कर्माणि लोकस्य सृजति प्रभुरि'ति पञ्चमे वक्ष्यमाणत्वादिना कर्तृत्वादि-निषेधाच्चेत्यर्थः ।

***भा०र०***— "कर्म ब्रह्मोद्भवम्" इत्यत्र "**ब्रह्म** वेदः स **उद्भवः** प्रकाशको यस्य तद् ब्रह्मोद्भवम्" इति परेषां भाष्यं सप्रतीकमर्थतोऽनुवदति **कर्म ब्रह्मोद्भवं ब्रह्मणा वेदेन प्रकाश्य-मितीति** । ब्रह्मशब्देन वेदग्रहणे किं परेणापराद्धम् ? इत्यतः "मुख्यस्य निर्विशेषेण शब्दः" (ब्र.सू.भा.१-१-१) इति शास्त्रं मनसि निधाय तदर्थमाह **ब्रह्मणः परब्रह्मण इति** । **कुत इति** । "कर्म ब्रह्मणो जायते" इत्येतत् कुतः प्रमाणाज्ज्ञातव्यमित्यर्थः । **एषः** परमात्मा । 'बुद्धिर्ज्ञानम्' इति गीतावचन एव "भवन्ति भावा भूतानाम्" (१०.५) इति भावशब्देन बुद्ध्यादिधर्माणां जीव-निर्वर्त्यसर्वकर्मणां च "मत्त एव" इति भगवदेकायत्तत्वश्रवणादिति भाष्यार्थः । अर्थान्तरे किं बाधकम् ? इत्यत उक्तम् **अपव्याख्यानमिति** । 'मुख्ये' इत्यनन्तरम् 'अभिधेये' इति तु शेषः । तस्यार्थो **जन्मनीति** । व्याख्यानान्तरं **तथेति** । **अमुख्यं वेदाख्यमिति** । "ब्रह्मशब्दः परे विष्णौ

नान्यत्र क्वचिदिष्यते । असम्पूर्णाः परे यस्मादुपचारेण वा भवेत्'' (ब्र.सू.भा. १.१.१२) इति वचनादिति भावः । 'पारम्पर्येण' इति भाष्यमपव्याख्यानस्य दूषणान्तराभिप्रायमिति तद् विशदयति **किञ्चैवमिति । अन्तर्यामीति** । वेदस्य जडस्य स्वतः कर्मप्रकाशकत्वसामर्थ्यायोगाद् अन्तर्नियन्त्री-श्वरद्वारैव तद् वाच्यम् । तथा च पारम्पर्यमङ्गीकार्यमित्यर्थः ।

**शब्दत एव** निर्विशेषब्रह्मशब्दत एव । **तस्य** परब्रह्मणः । एतेन ''कर्म ब्रह्मोद्भवम्'' इत्यत्र यत् केषाञ्चिद् भाष्यं ''ब्रह्मशब्देन प्रकृतिर्निर्दिष्टा । ''एतद् ब्रह्म नाम रूपमन्नं च जायते'' (आथ. १.१.१०) इति श्रुतेः । तेन च तत्परिणामरूपं शरीरं ग्राह्यम् । प्रकृतिपरिणामरूपशरीरोद्भवं कर्मे-त्युक्तं भवति'' इति, तदपि निरस्तम् । ब्रह्मशब्दस्य **मुख्येऽभिधेये** परब्रह्मणि सम्भाव्यमाने सति **औपचारिकम्** अमुख्यं प्रकृत्याख्यं ब्रह्मशब्दार्थतया न कल्पनीयम् । मुख्यामुख्ययोर्मुख्यस्य ग्राह्यत्वात् । किञ्च एवं व्याचक्षाणेनापि ब्रह्मशब्दितप्रकृतेः साक्षाद् द्रव्यार्जनादिरूपकर्तृव्यापारा-त्मककर्मजनकत्वं नास्तीति देहद्वारा परम्परयाऽङ्गीकार्यम् । तत्रापि शरीरमात्रस्य यज्ञानुकूलसाधु-कर्मजनकत्वाभावात् परब्रह्म यत्र शरीरे स्थित्वा साधु कर्म कारयति तदेव शरीरं ग्राह्यम् । तथा चान्ततोऽपि परब्रह्मण्यङ्गीकार्ये स्वशब्दत एव प्राप्तस्य तस्य परित्यागोऽनुपपन्न इति । ''न च मुख्ये'' इति भाष्यव्याख्यानेन दूषणसाम्यात् । ''तस्मात्सर्वगतं ब्रह्म नित्यं यज्ञे प्रतिष्ठितम् (३.१५) इति गीताक्षरास्वरसाच्च । न च ब्रह्म प्रकृतिः शरीरं वा सर्वगतं यज्ञे प्रतिष्ठितं वा । कथञ्चित् प्रकृतोपयोगकल्पनं त्वगतिका गतिः । ''एतद् ब्रह्म नाम रूपम्'' (आथ. १.१.१०) इत्यत्र ''एतद् ब्रह्म चतुर्मुखः'' इति च भाषितमन्यत्र (आथ.भा.१.१.१०) इति । 'स्वयमेव' इत्यनन्तरं 'दीपो-ऽर्थमिव' इति शेषः । ''यद्यज्जडं तत्तत् पराधीनम्, जडं चेदं वेदाख्यं ब्रह्म'' इति व्याप्तिपक्षधर्मता-वत्तया युक्तं जडत्वस्य हेतुत्वमिति प्रदर्शयितुं भाष्ये 'जडानाम्' इति बहुवचनमिति भावेन ''वेदोऽर्थप्रकाशने स्वव्यापारेऽन्याधीनः जडत्वात् मृत्पिण्डादिवद्'' इत्यनुमानम् उपन्यस्यन्नेवोत्तर-भाष्यमवतारयति **न केवलमिति** । एतेन भाष्ये चशब्दो व्याख्यातः । **विष्णवधीनत्वमिति** । अनुमानेन सामान्येन नियन्तृमात्रसिद्धावपि नियन्तुर्विष्णुत्वबोधनाय आगमोदाहरणमिति भावः ।

नन्वत्र भाष्ये नियमनं प्रतीयते । तच्च विष्णुकर्तृकमिति तु नेत्यतः ''तच्च प्रशासनं विष्णोरेव'' (ब्र.सू.भा. १.३.११) इति सूत्रभाष्यं मनसि निधाय शेषं पूरयति **विष्णोरिति शेष इति** । ''एतस्य वा अक्षरस्य प्रशासने गार्गि प्राच्योऽन्या नद्यः स्यन्दन्ते'' (बृ. ५.८.९) इति श्रुता-वक्षरशब्देन विष्णोरभिधानात्, तया नद्यादिचलनस्य विष्णवधीनत्वं ज्ञायत इत्येतदर्थं प्राप्ताया नियमनश्रुतेरित्यर्थः । पूर्वं भाष्ये शेषः पूरणीय इत्यर्थः । **इत्यादीति** । क्रियाविशेषणमिति

भावः । **न त्वागन्तुको व्यापार इति** । मृदः पृथुबुध्नोदराकारतावत् नद्याः स्पन्दनं न मध्ये समुपगतो धर्म इति न तद्दृष्टान्तीकरणमुपयोगि । प्रत्युत जडत्वहेतोरग्नौ व्यभिचारः । तस्य स्वव्यापार औष्ण्ये परानपेक्षादृष्टेर्वेदस्य जडत्वेऽप्यर्थप्रकाशने पराधीनत्वाभाव इति जडत्वमप्रयोजकमिति भावः । **स्वभावस्यापीति** । **द्रव्यं** प्रकृत्यादि । **स्वभावः** प्रकृत्यादीनां परिणामादिरिति वचनार्थस्याङ्गीकाराद् वेदेऽर्थप्रकाशनरूपस्वभावस्यापि भगवदधीनत्वं प्रामाणिकमित्यर्थः । **असम्भावितमिति** । "उत्ताना वै देवगवा वहन्ति" इत्यादिश्रुतिसिद्धमप्युत्तानानां देवगवानां वहनमिवेदमप्यसम्भावितम् । पुम्प्रयत्नासाध्यत्वादिति भावः । अन्यस्याशक्यमपि अचिन्त्यशक्तियोगाद् ईश्वरस्य शक्यमिति पूर्वाध्याये "स्थाणुत्वेऽप्यैक्षतेत्याद्यविरुद्धमीश्वरस्य" (गी.भा. २.२४) इति भगवतोऽचिन्त्यशक्तिरुक्तेति भाष्यार्थः । **परब्रह्माङ्गीकार इति** । तथा च कर्म ब्रह्मणो जायत इति व्याख्यानमयुक्तमिति भावः । **आधिक्येनेति** । जडस्य वेदस्य स्वतःप्रवृत्त्यनुपपत्तिशमनायाभिमानिदेवताया अङ्गीकार्यत्वे तस्याश्च भगवत्प्रतिबिम्बतया बिम्बाधीनक्रियाव्यतिरिक्तक्रियाया अयोगाद् बिम्बभूतपरब्रह्मण एव अन्ततोऽकामेनापि स्वीकर्तव्यत्वात् पूर्वोक्तपरम्परापेक्षयाऽधिकैव परम्पराऽभ्युपगन्तव्या स्यादित्यर्थः । भाष्ये चशब्दसमुच्चेयं दर्शयितुमाह **न केवलमिति** । **आगमाच्चेति** । लोकशब्दितजीवस्य कर्तृत्वं क्रियास्वातन्त्र्यं नास्तीति निषेधप्रतिपादकागमाच्च तस्य स्वतःप्रवृत्त्यभावो विज्ञायत इत्यर्थः ।

### भाष्यम्

**अक्षराणि प्रसिद्धानि । तेभ्यो ह्यभिव्यज्यते परं ब्रह्म । अन्यथा अनादिनिधनमचिन्त्यं परिपूर्णमपि ब्रह्म को जानाति ? न च रूढिं विना योगाङ्गीकारो युक्तः । परामर्शाच्च— "तस्मात् सर्वगतं ब्रह्म" इति । न ह्येकेन शब्देन द्विरुक्तेन भेदश्रुतिं विना वस्तुद्वयं कुत्रचिदुच्यते ।**

***प०टी०***— 'अक्षरशब्देन ब्रह्मोच्यते' इत्यपव्याख्यां दूषयितुं तदर्थमाह **अक्षराणीति** । कथं वेदाद्ब्रह्मणो जननम् ? इत्यत आह **तेभ्य इति** । जननमेव कुतोऽर्थो न स्यादभिव्यक्तेः प्रमाणान्तरेणापि सम्भवात् ? इत्यत आह **अन्यथेति** । नन्वत्र न क्षरतीत्यक्षराद्ब्रह्मणो बृहत्त्वाद्ब्रह्म वेदो जायत इत्यर्थः किं न स्यादुद्भवशब्दस्य मुख्यार्थलाभात् ? इत्यत आह **न चेति** । शब्दद्वयमुख्यार्थलाभादेकशब्दस्योपचारितार्थत्वं न बाधकम् । अर्थान्तरे शब्दद्वयस्योपचरितार्थतापत्तेरिति भावः । इतश्च न ब्रह्मशब्दोक्तो वेद इत्याह **परामर्शाच्चेति** । न च तत्रापि वेदोऽर्थः । वेदस्य

यन्नास्थित्युक्तेरसङ्गतत्वात् । अत्र 'ब्रह्म'शब्देन वेदवत्, उत्तर'ब्रह्म'शब्देन 'अक्षर'पदोक्तब्रह्मणः परामर्शः क्रियत इत्यत आह **न हीति** । 'अन्नरसमयः' इत्यादिभेदश्रुतिं विना ।

*न०टी०*— 'कर्म ब्रह्मोद्भवम्' इत्यत्र परं प्रत्यापादितदोषं 'ब्रह्माक्षरसमुद्भवम्' इत्यत्र स्वमते परिहरन्नेतद्व्याचष्टे **अक्षराणीति** । 'ब्रह्म - अक्षर - समुद्भवम्' इति त्रयःशब्दाः प्रतीयन्ते । तत्र तावन्नक्षरशब्दे मुख्यपरित्यागः । तेन प्रसिद्धाक्षरत्वात्मकवेदस्वीकारात् । नापि ब्रह्मशब्दे । तेन परब्रह्मण एव स्वीकारात् । शब्दद्वयमुख्यार्थत्वाविरोधेनैकस्योद्भवशब्दस्याभिव्यक्त्यर्थत्वाङ्गीकारो युक्त एव । नह्यनादिनिधनमनन्तगुणपरिपूर्णं ब्रह्मान्यतो जायत इति भावः । नन्वेवंविधस्य ब्रह्मणोऽभिव्यक्तिरन्यतः कुतः ? इत्यत आह **अन्यथेति** । ननु यौगिकार्थस्यापि मुख्यार्थत्वात् प्रसिद्धार्थपरित्यागेऽपि 'बृहत्त्वात् ब्रह्म' वेदः, न क्षरति इत्यक्षरं' परंब्रह्म, किं न स्यात् ? उद्भवशब्दस्य मुख्यार्थत्वायेत्यत आह **न चेति** । अव्याकृताकाशादेरपि सर्वगतनित्यत्वात् ब्रह्मत्वमक्षरत्वं च स्यादिति भावः । 'तस्मात् सर्वगतं ब्रह्म' इत्यत्र ब्रह्मशब्देन परब्रह्मवाचिना 'ब्रह्माक्षरसमुद्भवम्' इत्युक्तब्रह्मणः परामर्शाच्च, न ब्रह्मशब्दोऽयं बृहत्त्वयोगमात्रेण वेदपर इत्याह **परामर्शाच्चेति** । ननु 'ब्रह्माक्षरसमुद्भवम्' इत्यत्र ब्रह्मशब्दस्य वेदवाचित्वेऽपि, अक्षरशब्दोक्तपरब्रह्मपरामर्शक एवोत्तरो ब्रह्मशब्दः किं न स्यात् ? इत्यत आह **न हीति** । सत्यां भेदश्रुतावेकस्मिन्नपि शब्दे द्विरुक्तेऽर्थभेदोऽवगम्यते । यथा हि 'ओषधीभ्यो अन्नम्' 'अन्नरसमयः' इत्यत्र द्वितीयान्नशब्दस्य रसश्रुत्या विशेषितत्वादर्थभेदः, न तथाऽत्रेत्यर्थः ।

*प्र०दी०*— 'ब्रह्माक्षरसमुद्भवं' इत्यस्य ''ब्रह्म वेदो अक्षरात्परब्रह्मणो जायते'' इति परेषां व्याख्यानमसदिति भावेनाह— **अक्षराणीति** । प्रसिद्धाकारादीनि नियतानुपूर्वीविशिष्टानि । वेद इति यावत् । ननु समुद्भवशब्दस्य मुख्यार्थाङ्गीकारे किं बाधकम्, येनाभिव्यज्यत इत्यमुख्योऽर्थः स्वीक्रियते ? किं च प्रमाणान्तरेणापि ब्रह्माभिव्यक्तिसम्भवात् 'तेभ्यः' इति किमर्थमुक्तमित्यत आह— **अन्यथेति** । व्यक्त्यर्थत्वानङ्गीकारे । अनादिनिधनं ब्रह्म कथं जायेत इति शेषः । तथा वेदस्य तदभिव्यञ्जकत्वानङ्गीकारे परिपूर्णत्वादचिन्त्यं ब्रह्म को जानाति । वाक्यार्थद्वयसमुच्चयेऽपिशब्दः । समुद्भवशब्दस्य मुख्यार्थलाभात्परोक्तार्थः किं न स्यादित्यत आह— **न चेति** । ब्रह्मशब्दो हि परब्रह्मणि रूढः । वेदे तु बृहत्त्वयोगेन प्रवृत्तः । तथाऽक्षरशब्दो वर्णेषु रूढः । ब्रह्मणि त्वक्षरणयोगेन प्रवृत्तः । तथा चान्यथा व्याकुर्वता रूढिं परित्यज्य योगोऽङ्गीकृतः स्यात् । तच्च न्यायबाह्यमित्यर्थः । इतश्च ब्रह्मशब्दः परब्रह्मवाचीत्याह— **परामर्शाच्चेति** । उत्तरवाक्ये ब्रह्मशब्देन परब्रह्मणः परामर्शाच्च पूर्ववाक्यस्थो ब्रह्मशब्दः परब्रह्मार्थो ज्ञायते । तथा चाक्षरशब्दोऽप्यर्थाद्वेदवचनो

भविष्यतीति भावः । प्रागक्षरशब्दोक्तं परब्रह्मेदानीं ब्रह्मशब्देन परामृश्यते । अतः पूर्वो ब्रह्मशब्दो वेदार्थ एवेत्यत आह— **न हीति** । एतस्मिन्नेव प्रकरण इति शेषः । "अन्नात्पुरुषः । स वा एष पुरुषोऽन्नरसमयः" इत्यादिव्यावृत्त्यर्थं 'भेदश्रुतिं विना' इत्युक्तम् । श्रुतिशब्दश्च प्रमाणोपलक्षणार्थः । अत्रापि सर्वगतमिति विशेषणमस्तीति चेन्न । वर्णानामपि सर्वगतत्वात् । विकारत्वान्नेति चेन्न । अनन्तरमेव निराकरणात् । इदं च भास्करं प्रत्यभिहितम् ।

***भा०दी०*— वाक्यार्थद्वयेति** । अनादिनिधनं ब्रह्म कथं ज्ञायतेति अचिन्त्यमित्यादि-वाक्यार्थद्वय इत्यर्थः । 'तपसा चीयते ब्रह्म' इत्यस्योत्तरवाक्ये तस्मादेतद्ब्रह्म नाम रूपमन्नं जायत इति श्रुतब्रह्मशब्दादेः सङ्ग्रहमाह **श्रुतिशब्दश्चेति** । सर्वस्य ब्रह्मविकारित्वभावेन संस्कृते विकार-त्वादिति वर्णानां सर्वगतत्वं नेत्यर्थः । **अनन्तरमेवेति** । तानि चेति ग्रन्थ इति भावः ।

***भा०र०*— परेषामिति** । "**ब्रह्म** वेदः, अक्षरसमुद्भवम् **अक्षरं** परमात्मा **समुद्भवो** हेतुर्यस्य तत् तथा" इति सङ्करः, तदनुयायिनामित्यर्थः । **अकारादीनीति** । "अक्षरं ब्रह्मवर्णयोः" इति विश्वरुद्रयोः "वर्णे ब्रह्मण्यक्षरं स्यात् इत्यमरशेषे च तथाऽभिधानादिति भावः ।

एकैकाक्षरस्य परब्रह्मव्यञ्जकत्वं न सर्वाधिकारिणः प्रतीयत इत्यत उक्तं **नियतेति** । नियता-नुपूर्वीविशिष्टानि कान्यक्षराणीत्यतस्तात्पर्यमाह **वेद इति** ।

**किमर्थमिति** । तेभ्योऽक्षरेभ्यो व्यज्यते परं ब्रह्मेति किमर्थमित्यर्थः । 'अन्यथा' इत्यस्य व्याख्यानं **व्यक्त्यर्थत्वानङ्गीकार इति** । **अनादिनिधनम्** उत्पत्तिविनाशशून्यमिति ब्रह्मविशेषणं हेत्वर्थगर्भमिति मनसि निधायोक्तं चोद्यं परिहर्तुं शेषमाह **कथं जायेतेति शेष इति** । 'अन्यथा' इत्यस्यार्थान्तरमाह **तथा वेदस्येति** । 'परिपूर्णम्' इत्यचिन्त्यत्वे हेतुसमर्पकम् इति भावेन आह **परिपूर्णत्वादचिन्त्यमिति** । **वाक्यार्थद्वयेति** । अनादिनिधनं ब्रह्म कथं जायेत ? परिपूर्णत्वा-दचिन्त्यं ब्रह्म को जानाति ? इति च वाक्यार्थद्वयसमुच्चयार्थतया भाष्यस्थापिशब्दो व्याख्येय इत्यर्थः । अनेन "किं बाधकम्" इति चोद्यम्, "किमर्थमुक्तम्" इति चोद्यं च परिहृतं भवति । **परोक्तार्थ इति** । "**ब्रह्म** वेदः **अक्षरात्** परब्रह्मणो जायते" इति परव्याख्यानमित्यर्थः । **रूढ इति** । "तदेव ब्रह्म परमं कवीनाम्" (म.ना.उ. १.६), "ब्रह्मेति परमात्मेति भगवानिति शब्द्यते" (भाग. १.२.११) इत्यादि श्रुतिस्मृतिषु परब्रह्मणि तस्य बहुलप्रयोगदर्शनादिति भावः । **बृहत्त्व-योगेनेति** । तथा च "वेदस्तत्त्वं तपो ब्रह्म" इत्यमरे, बृहति = वर्धत इति ब्रह्म, "बृह-वृद्धौ" इत्यतो "बृंहेरम्लोपश्च" इति मनिन्प्रत्ययोऽमागम उपधानकारस्य च लोपः इति हरिदीक्षितः ।

एवञ्च ब्रह्मशब्दस्य वेदेऽपि रूढत्वमेवेति न परस्य पर्यनुयोगावकाश इति भावः । **अक्षरण-योगेन** अविनाशित्वलक्षणप्रवृत्तिनिमित्तधर्मेण प्रवृत्त इत्यक्षराधिकरणे (ब्र.सू.अ. १.३.३) स्थितेरिति भावः ।

**अन्यथा व्याकुर्वतेति** । ब्रह्मशब्दस्य परब्रह्मार्थकत्वमित्यस्मद्व्याख्यानस्य व्यत्यासेन व्याकुर्वतेत्यर्थः । **तच्चेति** । एवमङ्गीकृत्य व्याख्यानं अवयवार्थनिरपेक्षाया रूढेः शीघ्रगामित्वात्, तत्सापेक्षतया मन्थरगामियोगात् प्राबल्यमिति मीमांसकैः रथकाराधिकरणे (मी.सू. ६.१२ अ.) यो न्याय उक्तः **तद्बाह्यं** तद्विरुद्धमित्यर्थः । एतेन भाष्यस्थयुक्तशब्दार्थ उक्तः । न च प्रोक्षण्यादिशब्देषु मीमांसकैर्योगाङ्गीकाराद् अत्रेव वेदे सोऽस्त्विति वाच्यम् । "प्रोक्षणीष्वर्थसंयोगात्" (मी.सू. १.४.११) इति चन्द्रिकायां व्यक्तम् । "ब्रह्मेति सर्ववेदानां नामानन्तत्वतः स्मृतम्" (छा.भा. ३.१.५) इति छान्दोग्यभाष्यमपि अनन्तत्वत इति बृहत्त्वयोगेनैव प्रवृत्तमिति न तद्विरोधोऽपि । **उत्तरेति** । "तस्मात् सर्वगतं ब्रह्म नित्यं यज्ञे प्रतिष्ठितम्" (३.१५) इत्युत्तरवाक्ये सर्वगतत्वनित्यत्वादिविशेषणेन परब्रह्मण एव परामर्शादित्यर्थः । 'परामर्शाच्च' इत्यस्य हेतोः साध्यमाह **पूर्वेति** । **अर्थादिति** । परब्रह्माभिव्यञ्जकस्यान्यस्य वक्तुमशक्यत्वादर्थापत्तिवशादक्षरशब्दो वेदवचन इत्यर्थः ।

ननु "औषधीभ्योऽन्नम् । अन्नात् पुरुषः" (तै.२.२) । "अन्नं प्राणं चक्षुः श्रोत्रम्" (तै.३.१) इति ब्रह्मवल्ली-भृगुवल्लीरूपप्रकरणद्वये द्विरुक्तेनान्नशब्देन प्रसिद्धान्नपरब्रह्मरूपान्नद्वयग्रहणदर्शनात् "न ह्येकशब्देन" इत्याद्युक्तम् अयुक्तमित्यत आह **एकस्मिन्नेव प्रकरण इति शेष इति** । उक्तस्थलस्य च भिन्नप्रकरणत्वेन तत्रत्यान्नशब्दस्यार्थद्वयाङ्गीकारो न दोष इति भावः । **इत्युक्तमिति** । तथा च "अन्नात् पुरुषः" इत्यत्रान्नशब्देन प्रसिद्धान्नग्रहणेऽपि "अन्नरसमयः" इत्यत्र अन्नशब्देन परमेश्वरग्रहणं युक्तम् । भेदज्ञापकरसशब्दश्रवणादित्यर्थ इति भावः ।

नन्वेवमपि "आत्मन आकाशः सम्भूतः" (तै. २.१.) इत्यारभ्य "को ह्येवान्यात् कः प्राण्यात् । यदेष आकाश आनन्दः" (तै. २.१२) इत्यन्तं पठितमेकं प्रकरणम् । "सत्यं ज्ञानमनन्तम्"(तै. २.१) इति मन्त्रवर्णविवरणरूपत्वात् । तथा "तपसा चीयते ब्रह्म" (आथ. १.१.९) इत्यस्योत्तरवाक्यं "तस्मादेतद् ब्रह्म नामरूपमन्नं च जायते" (आथ. १.१.१०) इति वाक्यं चैकप्रकरणमेव । तत्र च भेदश्रुतिं विनैव द्विरुक्तेन आकाशशब्देन, तथाविधेन ब्रह्मशब्देन च, भूताकाश-ब्रह्मरूपार्थद्वयं, परब्रह्म-चतुर्थमुखरूपार्थद्वयं च, सिद्धान्ते स्वीकृतमिति तत्र व्यभिचार इत्यत आह **श्रुतिशब्दश्चेति** । उक्तस्थले भूतसहपाठः, सम्भूतत्वं च, लोकचेष्टकत्वं, पूर्णानन्दत्वं च भेदलिङ्गं श्रूयते । तथा "तपसा चीयते ब्रह्म" इत्यत्र सर्वस्रष्टृत्व-सर्वज्ञत्वादिभगवल्लिङ्गं "तस्मादेतद् ब्रह्म"

इत्यत्र परब्रह्मजातत्वं, नामरूपात्मककार्यप्रपञ्चसहपाठश्च भेदलिङ्गं श्रूयते । भाष्ये श्रुतिशब्दश्च "भेदज्ञापकप्रमाणोपलक्षकः" इति भेदकलिङ्गसद्भावाद् अर्थद्वयाङ्गीकारो नानुचित इति भावः ।

"तस्मात् सर्वगतं ब्रह्म" इति वाक्येऽपि भेदज्ञापकमस्तीति शङ्कते **अत्रापीति** । **वर्णानामिति** । सिद्धान्तेऽक्षरशब्दार्थभूतानामिति योज्यम् । तथा च भेदज्ञापकं नास्तीति भावः ।

ननु वर्णानां सर्वगतत्वेऽप्यक्षरशब्देन प्रकृतानां वेदानां व्याप्यत्वं कुत इति चेत् ? "यावद् ब्रह्म विष्ठितं तावती वाक्" इति श्रुतिबलादिति ब्रूमः । नियतानुपूर्वीविशेषविशिष्टानां वर्णानामेव वेदत्वात् वर्णव्याप्तिरिति भावेनेयमुक्तिरित्यवगन्तव्यम् । **विकारत्वादिति** । पुरुषप्रयत्नजन्यत्वेन अनित्यत्वात् न वर्णानां सर्वगतत्वं युक्तमित्यर्थः । **अनन्तरमेवेति** । "तानि चाक्षराणि" इत्युत्तरभाष्य एवेत्यर्थः । अभ्युपगम्य चेदमुदितम् । स्वरीत्या तु सर्वगतस्यापि क्षणलवादेरनित्यत्वदर्शनाद् व्यभिचार इति दूषणं द्रष्टव्यम् । ननु प्रागक्षरशब्दोक्तं परब्रह्मेदानीं ब्रह्मशब्देन, प्रकृतिपरिणामशरीरम् अक्षरशब्देन परामृश्यत इति न **सङ्करमतम्** । दूष्यते च साम्प्रतं सङ्करमतमेव "अक्षराणि प्रसिद्धानि" इत्यादिना । **रामानुजस्तु** ब्रह्मशब्देन प्रकृतिपरिणामशरीरम् अक्षरशब्देन जीवात्मानं च गृहीतवानिति न तस्याप्युक्तदूषणास्पदत्वमित्यत आह **इदं चेति** । न मतद्वयमेतद्दूषणपात्रम् । किन्तु भास्करमतमेवेति नानुक्तोपालम्भशङ्केति भावः ।

**भाष्यम्**

**तानि च अक्षराणि नित्यानि, "वाचा विरूप नित्यया", "अनादिनिधना नित्या वागुत्सृष्टा स्वयम्भुवा", "अत एव च नित्यत्वं", इत्यादि श्रुतिस्मृतिभगवद्वचनेभ्यः । दोषाश्चोक्ताः सकर्तृकत्वे । न च अबुद्धिपूर्वं उत्पन्नानि । तत्प्रमाणाभावात् । निःश्वसितशब्दस्तु अक्लेशाभिप्रायः । नाबुद्धिपूर्वाभिप्रायः । 'सोऽकामयत' इत्यादेश्च । इष्टं हुतमादित्यादिरूपप्रपञ्चेन सहाभिधानाच्च । महातात्पर्यविरोधाच्च । तच्चोक्तं पुरस्तात् । न ह्यस्वातन्त्र्येणोत्पत्तिकर्तुः प्राधान्यम् । अस्वातन्त्र्यं च तदमतिपूर्वकत्वेन भवति । यथा रोगादीनां पुरुषस्य तज्जत्वेऽपि ।**

***प०टी०***— त्वत्पक्षेऽपि, 'उद्भव'पदस्य मुख्यार्थो नास्ति । वेदस्यानादिनित्यत्वादित्याह **तानि चेति** । वेदानित्यत्वे बाधकमाह **दोषश्चेति** । अबुद्धिपूर्वकमुत्पन्नत्वान्नायं दोषः इत्यत आह

**न चेति** । 'निःश्वसितमेतद्यदृग्वेद' इति वाक्यार्थपर्यालोचनया सिद्धमबुद्धिपूर्वमुत्पन्नत्वं वेदस्येत्यत आह **निःश्वसितेति** । इतश्च नाबुद्धिपूर्वं भगवतः किञ्चिदुत्पद्यत इत्याह **स इति** । नामप्रपञ्च-स्याबुद्धिपूर्वमुत्पन्नेऽपि रूपप्रपञ्चविषयिणी सा श्रुतिरित्यत आह **इष्टमिति** । सर्वस्यापि निःश्वसित-त्वोक्तेर्वैयर्थ्यं कामश्रुतेस्तत्पक्ष इत्यर्थः । इतश्च नाबुद्धिपूर्वं भगवत्सृष्टिरित्याह **महातात्पर्येति** । किं तन्महातात्पर्यम् ? इत्यत आह **तच्चेति** । विष्णोः सर्वप्राधान्यानिराकरणात् कथं महातात्पर्य-विरोधः ? इत्यत आह **न हीति** । अबुद्धिपूर्वकत्वमेवोच्यते नास्वातन्त्र्यमित्यत आह **अस्वातन्त्र्यं चेति** । अत्र दृष्टान्तमाह **यथेति** । पुरुषस्य 'अस्वातन्त्र्यम्' इति शेषः ।

***न०टी०***—या त्वाशा - उद्भवशब्दार्थमुख्यार्थत्वात् ब्रह्माक्षरशब्दार्थयोः व्यत्यासः किं न स्यादिति, सा न कर्तव्या । अक्षराणां नित्यत्वादित्येतत् सप्रमाणकमाह **तानि चेति** । ननूत्पत्तावपि प्रमाणम् 'ऋचः सामानि जज्ञिरे' इत्यादीत्याशङ्क्य, तद्युक्तिविरुद्धत्वादन्यथा व्याख्येयमिति भावेनाह **दोषश्चेति** । रचितत्वे च इत्यादाविति शेषः । नन्वबुद्धिपूर्वमुत्पन्नत्वाद्वेदानां न तेषु कर्तृगुणदोषा-वित्यत आह **न चेति** । 'निःश्वसितमेतद्यदृग्वेदः' इत्यादि तत्प्रमाणं स्यादित्यत आह **निःश्वसि-तेति** । न हि सर्वज्ञात् स्वतन्त्रादबुद्धिपूर्वकं किञ्चिज्जायत इति भावः । इच्छापूर्वकसर्वसृष्टिश्रवणाच्च नाबुद्धिपूर्वकं किञ्चित् भगवत उत्पद्यत इत्याह **स इति** । नन्वत्र नामप्रपञ्चस्य निःश्वसितत्वोक्तेः, 'सोऽकामयत' इत्यारभ्य 'इदं सर्वमसृजत' इत्यत्र रूपप्रपञ्चविषय एव सर्वशब्दः किं न स्यात् ? इत्यत आह **इष्टमिति** । इतोऽपि नाबुद्धिपूर्वकाभिप्राये निःश्वसितशब्द इत्याह **महातात्पर्येति** । किं तन्महातात्पर्यम् ? इत्याकाङ्क्षायामाह **तच्चेति** । भगवत्प्राधान्ये सर्वागमतात्पर्यमुक्तं द्वितीयाध्याये । ननु कथमबुद्धिपूर्वसृष्टत्वेऽपि तद्विरोधः ? इत्यत आह **न हीति** । ननु निःश्वसितमात्रेणोत्पत्तिकर्तुः कथमस्वातन्त्र्यम् ? इत्यत आह **अस्वातन्त्र्यं चेति** । 'विमता जनिर्न जनकाधीना, अबुद्धिपूर्वक-जनित्वात् रोगादिजनिवत्' इत्यर्थः ।

***प्र०दी०***— मायावादिना तु प्राग्ब्रह्मशब्दोक्तस्य वेदस्यैवायं परामर्श इत्यङ्गीकृतत्वाद्यद-प्यन्यथाव्याख्याने समुद्भवशब्दस्य मुख्यार्थतालाभ इत्यभिप्रेतं तदपि दुराशामात्रमित्याह— **तानि चेति** । यान्यस्माभिः प्रसिद्धानि व्याख्यातानि । अनेनाभिधानादिबलाद्ब्रह्माक्षरशब्दौ द्वावप्युभयत्र योगरूढाविति प्रत्यवस्थानमपि परास्तम् । परामर्शस्य वर्णनित्यत्वस्य चापरिहार्यत्वात् ।

न केवलं श्रुत्यादिभ्यो वेदस्य नित्यत्वं, किं तर्हि विपक्षे बाधकाच्चेत्याह— **दोषाश्चेति** । ''रचितत्वे च धर्मप्रमाणस्य'' इत्यत्र । ननु वेदाक्षराणि ब्रह्मणोऽबुद्धिपूर्वमुत्पन्नानि । अतो न विपर्ययादिमूलत्वशङ्केत्यत आह— **न चेति** । 'निःश्वसितमेतद्यदृग्वेदो यजुर्वेदः' इति श्रुतिवेदानां

ब्रह्मणोऽबुद्धिपूर्वमुत्पन्नत्वे प्रमाणमिति चेत् । किमयं निःश्वसितशब्दोऽबुद्धिपूर्वमुत्पन्नत्वस्य वाचक उत निश्वसितमिव निःश्वसितं, इवार्थश्चाबुद्धिपूर्वमुत्पन्नत्वमिति गौण्या वृत्त्या तदभिप्रायः । नाद्यः । प्रमाणाभावात् । द्वितीयं दूषयति— **निःश्वसितेति** । अक्लेशेन निस्सरणस्यापीवार्थस्य सम्भवेन निःश्वसितशब्दस्य तदभिप्रायतोपपत्तौ नाबुद्धिपूर्वोत्पत्त्यभिप्रायत्वनिश्चय इत्यर्थः । न च परस्येवास्माकमपि निश्चयायोग इति भावेनाह— **स इति** । ''सोऽकामयत, स इदं सर्वमसृजत'' इति ब्रह्मणः सर्वसृष्टेरिच्छापूर्वकत्वमुच्यते । इच्छा च बुद्ध्यविनाभूता । अतो न किञ्चिद्ब्रह्मणोऽबुद्धिपूर्वमुत्पन्नमिति । ननु निःश्वसितमेतत् इति श्रुतिः नामप्रपञ्चस्याबुद्धिपूर्वमुत्पत्तिं वक्ति । 'सोऽकामयत' इति रूपप्रपञ्चस्येच्छापूर्वमित्यतो न विरोध इत्यत आह— **इष्टमिति** । एवं सति 'निःश्वसितं' इति श्रुतौ ''इष्टं हुतमाशितं पायितमयं च लोकः परश्च लोकः'' इति नामप्रपञ्चस्य रूपप्रपञ्चेन सहाभिधानाद्रूपप्रपञ्चस्यापि निःश्वसितशब्देनाबुद्धिपूर्वोत्पन्नत्वप्राप्तौ 'सोऽकामयत' इति श्रुतिर्निर्विषयैवापद्येतेति भावः । इतोऽपि नाबुद्धिपूर्वा ब्रह्मणः सृष्टिरित्याह— **महातात्पर्येति** । ब्रह्मणः सर्वोत्तमत्वे यत्सर्ववेदानां महातात्पर्यं तद्विरोधाच्चेत्यर्थः । तदेव कुत इत्यत आह— **तच्चेति** । उक्तं साधितम् । कथं तद्विरोध इत्यत आह— **न हीति** । प्राधान्यं सर्वोत्तमत्वम् । अस्वातन्त्र्येणोत्पत्तिकर्तृत्वस्य प्राधान्यविरोधित्वेऽप्यबुद्धिपूर्वमुत्पादकत्वस्य किमायातमित्यत आह— **अस्वातन्त्र्यं चेति** । कार्यस्य पुरुषमतिपूर्वकत्वाभावे तत्र तस्य पुरुषस्यास्वातन्त्र्यं भवति । तत्र दृष्टान्तमाह— **यथेति** । रोगादीनां पुरुषजत्वेऽपि बुद्धिपूर्वकत्वाभावात्तत्र पुरुषस्यास्वातन्त्र्यं यथेत्यर्थः । ततश्चाबुद्धिपूर्वमुत्पादकत्वादस्वातन्त्र्यम् । अस्वातन्त्र्यादप्राधान्यं प्रसज्येत । तथा च महातात्पर्यविरोध इत्युक्तं भवति । साक्षात्प्रसङ्गसम्भवेऽपि व्युत्पादनार्थमेवमुक्तम् ।

***भा०दी०***— एतेनेत्युक्तं व्यनक्ति **परामर्शस्येति** । कुत्रेत्यतः पूर्वाध्यायगतस्थलमाह **रचितत्वे चेति** । **अबुद्धिपूर्वमिति** । पूर्वाध्याय इति योज्यम् । साक्षात्प्रसङ्गसम्भव इति अबुद्धिपूर्वं भगवतः सृष्टहेतुत्वे रोगोत्पत्तौ पुरुषस्यैवास्वातन्त्र्यं स्यादिति साक्षात्प्रसङ्गशब्दितानिष्टापादनसम्भवे सत्यस्वातन्त्र्ये प्राधान्यम् । अप्राधान्येव प्राधान्ये प्रागुक्तमहातात्पर्यविरोध इत्यापाद्यस्य अनिष्टताव्युत्पादनायैव परम्परोक्तेत्यर्थः ।

***भा०र०***— **इत्यङ्गीकृतत्वादिति** । तथा च **सङ्करभाष्यम्** ''यस्मात् परमात्माख्याद् अक्षरात् पुरुषनिःश्वासवत् समुद्भूतं **ब्रह्म** ब्रह्माक्षरसमुद्भवमित्यत्र प्रस्तुतो वेदः, तस्मात् सर्वार्थप्रकाशकत्वात् सर्वगतम्, नित्यं सदा यज्ञविधिप्रधानत्वाद् यज्ञे प्रतिष्ठितम्'' इति । **अन्यथा** सङ्करीत्या । **प्रसिद्धानि** अकारादीनि नियतानुपूर्वीविशिष्टानि । वेद इति यावत् । ''अभिधानादि'' इत्यादिपदेन

प्रयोगनिरुक्तिग्रहः । "वेदस्तत्त्वं तपो ब्रह्म" इत्यभिधानात् "सत्यं ज्ञानमनन्तं ब्रह्म" इत्यादि-प्रयोगाच्च ब्रह्मशब्दो वेदपरब्रह्मणो रूढः । "अक्षरं ब्रह्मवर्णयोः" इत्यभिधानादक्षरशब्दोऽप्युभयत्र रूढः । तथा बृहत्त्वयोगेनाक्षरणयोगेन च वेदब्रह्मणोः प्रवृत्तौ ब्रह्माक्षरशब्दाविति योगरूढावित्यतः यदुक्तं "न च रूढिं विना योगाङ्गीकारो युक्तः" इति तदयुक्तमिति दूषणं परास्तमित्यर्थः । 'अनेन' इत्युक्तहेतुं व्यनक्ति **परामर्शस्येति** । योगरूढत्वाङ्गीकारेणोक्तन्यायविरोधसमाधानेऽपि उत्तरवाक्ये ब्रह्मशब्देन परब्रह्मणः परामर्शात् पूर्ववाक्यस्थो ब्रह्मशब्दः परब्रह्मार्थो ज्ञायते, न वेदार्थ इति परामर्शस्येत्यर्थः । तत्रापि वेदस्यैव परामर्श इत्युक्तौ सर्वगतत्वादेरमुख्यत्वापत्तिरिति भावः ।

**वर्णनित्यत्वस्येति** । नियतानुपूर्वीविशिष्टवर्णानादित्वस्येत्यर्थः । तथा च तानि चाक्षराणि **नित्यानि** अनादिनित्यानि । "तस्मै नूनमभिद्यवे वाचा विरूप नित्यया । वृष्णे चोदस्व सुष्टुतिम्" (ऋ. ८.६४.६) । अभितो द्यौः प्रकाशो यस्यासावभिद्युः । तस्मै **अभिद्यवे वृष्णे** वर्षित्रे **नूनं** निश्चितं भो **विरूप नित्यया** वाचा वेदलक्षणया **सुष्टुतिं** शोभनां स्तुतिं **चोदस्व** प्रेरय कुर्विति विरूपऋषिं प्रत्युच्यते इति । **स्वयम्भुवा** स्वतन्त्रेण विष्णुना या वेदवागुच्चारिता सा **अनादि-निधनतया** उत्पत्तिविनाशशून्यतया **नित्या** ध्रुवा इति । **अत एव** वेदनित्यत्वादेव । **नित्यत्वं** वेदप्रवाहस्य । न केवलं शब्दात्, किन्तु वेदनित्यत्वान्यथाऽनुपपत्तेश्चेति चशब्दः । इति श्रुति-स्मृति-ब्रह्मसूत्राणामर्थः । **बाधकाच्च** नित्यत्वम् । **इत्यत्रेति** । "रचितत्वे च धर्मप्रमाणस्य कर्तु-रज्ञानादिदोषशङ्का स्याद्" (गी.भा. २.१३) इति पूर्वाध्याये रचयितृपुरुषे अज्ञान-विप्रलम्भ-विप-र्ययादिसम्भवेन तस्य विपर्ययादिमूलत्वं किं न स्यादिति दोष उक्त इति भाष्यार्थ इति भावः ।

'उत्पन्नानि' इति विशेषणश्रवणात् तद्विशेष्यं संयोजयन् उत्तरभाष्यमवतारयति **ननु वेदा-क्षराणीति** । पुरुषरोगघुणाक्षराणीवेति भावः । "अस्य महतो भूतस्य" (बृ. ४.४.१०) इत्यत्र महाभूतशब्दस्य "एको विष्णुर्महद्भूतम्" (म.भा.अनु. १४९.१४०) इति परब्रह्मपरत्वादाह **ब्रह्मण इति** । ऋग्वेदादेर्निस्सृतत्त्वानुपपत्तेः "परत्र परशब्दः प्रयुज्यमानोऽन्तरेणापि वतिं वत्यर्थं गमयति" इति न्यायमनुसन्दधदाह **निःश्वसितमिव निःश्वसितमिति** । इवार्थश्च सादृश्यम् । "वत् वा यथा तथा इव एवं साम्ये" इत्यमरे, "इवेति सादृश्ये" इति मनोरमायां चोक्तेः, "इवोभये च सादृश्ये" (अनु. २.३.१४ अधि. ७४ (९४३) श्लो.) इत्यनुव्याख्यानोक्ताभिधानाच्चेति हृदि निधाय अत्र विवक्षितं सादृश्यं दर्शयति **अबुद्धिपूर्वकमुत्पन्नत्वमिति** । **प्रमाणेति** । अबुद्धिपूर्वमुत्पन्नस्य निश्वसितशब्दो वाचक इत्येतन्न युक्तम् । अभिधानादेरभावादिति भावः । **निस्सरणस्यापीति** । इवशब्दार्थः सादृश्यम् इहाक्लेशेन निस्सृतत्वमिति निस्सरणस्यापीवार्थस्येत्यर्थः । निःश्वसितशब्दार्थ-

निश्चयाभावात् 'नाबुद्धिपूर्वाभिप्रायः' इति भाष्ये कथं तत्पक्षदूषणमिति दोषं परिहरन्नाहेति भावेनोत्तरभाष्यमवतारयति **न चेति** ।

**इच्छापूर्वकत्वमिति** । 'सोऽकामयत' इत्यत्र कमिधातोः कान्त्यर्थत्वात् 'कान्तिरिच्छा' इति वैयाकरणैरुक्तत्वाद् 'ऐच्छद्' इत्यर्थादिति भावः । तथाऽप्यबुद्धिपूर्वमुत्पन्नत्वं नार्थ इत्यत्रैतच्छ्रुते-रुपयोगाय आह **इच्छा चेति** । तद्विषयकज्ञानाभावे तदिच्छायाः क्वाप्यदर्शनादिति भावः । **इति श्रुतिरिति** । "अस्य महतो भूतस्य निःश्वसितमेतद् यदृग्वेदो यजुर्वेदस्सामवेदोऽथर्वाङ्गिरस इतिहासः पुराणं विद्या उपनिषदः श्लोकाः सूत्राण्यनुव्याख्यानानि" (बृ. ४.४.१०) इति श्रुतिः । ऋग्वेदादे-र्भारतादेश्चापौरुषेयपौरुषेयग्रन्थजातस्य निःश्वासितत्वं वक्ति । "सोऽकामयत । बहु स्यां प्रजाये-येति । स तपोऽतप्यत । स तपस्तप्त्वा । इदं सर्वमसृजत । यदिदं किञ्च । तत्सृष्ट्वा । तदेवानु-प्राविशत् । तदनुप्रविश्य । सच्च त्यच्चाभवत् । निरुक्तञ्च" (तै. २.११) इत्यादिश्रुतिरस्त्वर्थात्मक-प्रपञ्चस्येच्छापूर्वमुत्पत्तिं वक्तीति भिन्नविषयत्वान्न विरोध इत्यर्थः । **इष्टमित्यादि** । **इष्टं** यजनम् । **हुतं** हवनम् । **आशितं** अन्नादनम् । **पायितं** पानीयपानम् । **अयं लोकः** पृथिवी । **परो लोकः** स्वर्गश्चेत्यर्थः । **सहाभिधानादिति** । यद्यपि तुरीयाध्याये "निःश्वसितमेतद् यद् ऋग्वेदः" (बृ. ४.४.१०) इत्युदाहृतश्रुतौ "इष्टं हुतमाशितम्" इत्यादिवाक्यमेव नास्तीति न रूपप्रपञ्चस्य सहाभिधानमस्ति । तथाऽपि षष्ठाध्याये "ऋग्वेदो यजुर्वेदः" (बृ. ६.१.२) इति पठित्वा "इष्टं हुतमाशितम्" इत्यादि पठ्यते । तत्र च तुरीयाध्यायोक्तार्थस्यैव प्रत्यभिज्ञानात् तुरीये च 'निःश्वसितम्' इति निःश्वसितशब्दश्रवणादर्थैक्येनैक्यम् अभिसन्धायैव 'निःश्वसितम्' इति श्रुतौ नामप्रपञ्चस्य रूपप्रपञ्चेन सहाभिधानादित्युक्तमिति वेदितव्यम् ।

**निर्विषयैवेति** । सा हि ब्रह्मणः सर्वसृष्टेरिच्छापूर्वकत्वमाह । इच्छा च बुद्ध्यविनाभूतेत्यबुद्धि-पूर्वमुत्पन्नत्वं न केनापि प्रकारेण शक्यं वक्तुमिति विषयाभावादप्रमाणं स्यादित्यर्थः । कस्य क्व तात्पर्यमिति न ज्ञायत इत्यत आह **सर्ववेदानां ब्रह्मणः सर्वोत्तमत्व इति** । **तदेव** तात्पर्य-मेव । **कुत** इति साधकं पृष्टम् । तत्र च 'उक्तम्' इत्ययुक्तम् । उक्तिमात्रस्यासाधकत्वाद् इत्यत आह **साधितमिति** । "मोक्षो हि महापुरुषार्थः" (गी.भा. २.२४) इत्यादिना द्वितीयाध्याय इति शेषः । **तद्विरोधो** महातात्पर्यविरोधः । सर्वोत्तमत्वस्यैव तात्पर्यविषयत्वेन प्रस्तुतत्वात् "प्राधान्यं सर्वोत्तमत्वम्" इत्युक्तम् । 'पुरुषस्य' इति वक्ष्यमाणमत्रापि सम्बध्यत इति भावेन 'तदमतिपूर्वं' इति भाष्ये तच्छब्दार्थमाह **पुरुषमतीति** । 'यथा' इत्येतद्वाक्यशेषोऽपीत्यभिप्रायेणाह **यथेत्यर्थ इति** । अबुद्धिपूर्वमुत्पादकत्वस्य स्वातन्त्र्यविरोधित्वं कथमित्यर्थकेन 'किमायातम्' इत्यनेन कृतचोद्यं परिहर्तुं

'तदमतिपूर्वकत्वेन' इति तृतीयाविभक्तिभावमाह **ततश्चेति** । तत्र अबुद्धिपूर्वकत्वेऽस्वातन्त्र्य-मित्यत्र अस्वातन्त्र्यं यथेति पूर्वोक्तदृष्टान्तः सामान्यात्मा । एतद्भाष्योक्तस्तु विशेषात्मेति ज्ञातव्यम् । तच्छब्दार्थः **पुरुषेति** । **तत्र** रोगादिषु । महातात्पर्यविरोधाच्चेत्यादिघट्टतात्पर्यमाह **ततश्चे-त्यादि** । "न ह्यस्वातन्त्र्येणोत्पत्तिकर्तुः प्राधान्यम्" इति भाष्यतात्पर्यम् **अस्वातन्त्र्यादप्राधान्यं प्रसज्येतेति** ।

नन्वेवंप्रसञ्जनस्य भाष्याभिप्रायविषयत्वे यदि ब्रह्मणोऽबुद्धिपूर्वमुत्पादकत्वं स्यात् तर्ह्यस्वातन्त्र्यं स्यात् । रोगाद्युत्पादकपुरुषे तद्दृष्टेरिति साक्षादेवानिष्टापादनरूपतर्कावतारे सम्भवति किमित्यस्वातन्त्र्ये चाप्राधान्यम्, अप्राधान्ये च महातात्पर्यविरोध इति परम्परयाऽऽपादनम् ? इत्याशङ्क्य समाधत्ते साक्षात् **प्रसङ्गसम्भवेऽपीति** ।

यद्यप्युक्तरीत्या साक्षादापादनं शक्यं कर्तुम् । तावतैव परपक्षप्रतिक्षेपात् । तथाऽपि शिष्यान् व्युत्पादयितुं मध्येऽस्वातन्त्र्यमप्राधान्यं च सदृष्टान्तमभिनिवेशितमित्यर्थः । एवं सति भगवतो-ऽस्वातन्त्र्यम्, अस्वातन्त्र्याद् अप्राधान्यम्, अप्राधान्यान्महातात्पर्यं न स्यादिति परपक्षे बहूनि दूषणान्युद्भावितानि भवन्तीति ।

**प्राचीनटीकायां** तु "विमता जनिर्जनकाधीना न अबुद्धिपूर्वकजनित्वाद् रोगादिजनिवद्" इत्यनुमानोक्तिपरतयेदं भाष्यं योजितम् ।

**भाष्यम्**

**उत्पत्तिवचनान्यभिव्यक्त्यर्थान्यभिमानिदेवताविषयाणि च । 'नित्या' इति उक्त्वा 'उत्सृष्टा' इति वचनात् । अभिव्यञ्जके कर्तृवचनं चास्ति । "ऋग्वेद एवाग्नेरजायत वायोर्यजुर्वेदः" । "कृत्स्नं शतपथं चक्रे" इति । कथमादित्यस्था वेदाः तेनैव क्रियन्ते । वचनमात्राच्च निर्णयात्मकशारीरकोक्तं बलवत् । शास्त्रं योनिः प्रमाणमस्येति तु शास्त्रयोनित्वम् । 'जन्माद्यस्य यतः' इत्युक्ते प्रमाणं हि तत्र अपेक्षितं, न तु तस्य जातत्वं वेदकारणत्वं वा । न हि वेदकारणत्वं जगत्कारणत्वे हेतुः । न हि विचित्रजगत्सृष्टेर्वेदसृष्टिरशक्या सृज्यत्वे । न च सर्वज्ञत्वे । यदि वेदस्रष्टा सर्वज्ञः किमिति न जगत्स्रष्टा ? तस्माद्वेदप्रमाण-कत्वमेवात्र विवक्षितम् । अतो नित्यान्यक्षराणि । यत एवं परम्परया यज्ञाभि-व्यङ्ग्यं ब्रह्म तस्मात् तन्नित्यं यज्ञे प्रतिष्ठितम् ॥ १५ ॥**

निश्चयाभावात् 'नाबुद्धिपूर्वाभिप्रायः' इति भाष्ये कथं तत्पक्षदूषणमिति दोषं परिहरन्नाहेति भावेनोत्तरभाष्यमवतारयति **न चेति** ।

**इच्छापूर्वकत्वमिति** । 'सोऽकामयत' इत्यत्र कमिधातोः कान्त्यर्थत्वात् 'कान्तिरिच्छा' इति वैयाकरणैरुक्तत्वाद् 'ऐच्छद्' इत्यर्थादिति भावः । तथाऽप्यबुद्धिपूर्वमुत्पन्नत्वं नार्थ इत्यत्रैतच्छ्रुते-रुपयोगाय आह **इच्छा चेति** । तद्विषयकज्ञानाभावे तदिच्छायाः क्वाप्यदर्शनादिति भावः । **इति श्रुतिरिति** । "अस्य महतो भूतस्य निःश्वसितमेतद् यदृग्वेदो यजुर्वेदस्सामवेदोऽथर्वाङ्गिरस इतिहासः पुराणं विद्या उपनिषदः श्लोकाः सूत्राण्यनुव्याख्यानानि" (बृ. ४.४.१०) इति श्रुतिः । ऋग्वेदादे-र्भारतादेश्चापौरुषेयपौरुषेयग्रन्थजातस्य निःश्वासितत्वं वक्ति । "सोऽकामयत । बहु स्यां प्रजाये-येति । स तपोऽतप्यत । स तपस्तप्त्वा । इदं सर्वमसृजत । यदिदं किञ्च । तत्सृष्ट्वा । तदेवानु-प्राविशत् । तदनुप्रविश्य । सच्च त्यच्चाभवत् । निरुक्तञ्च" (तै. २.११) इत्यादिश्रुतिस्त्वर्थात्मक-प्रपञ्चस्येच्छापूर्वमुत्पत्तिं वक्तीति भिन्नविषयत्वान्न विरोध इत्यर्थः । **इष्टमित्यादि** । **इष्टं** यजनम् । **हुतं** हवनम् । **आशितं** अन्नादनम् । **पायितं** पानीयपानम् । **अयं लोकः** पृथिवी । **परो लोकः** स्वर्गश्चेत्यर्थः । **सहाभिधानादिति** । यद्यपि तुरीयाध्याये "निःश्वसितमेतद् यद् ऋग्वेदः" (बृ. ४.४.१०) इत्युदाहृतश्रुतौ "इष्टं हुतमाशितम्" इत्यादिवाक्यमेव नास्तीति न रूपप्रपञ्चस्य सहाभिधानमस्ति । तथाऽपि षष्ठाध्याये "ऋग्वेदो यजुर्वेदः" (बृ. ६.१.२) इति पठित्वा "इष्टं हुतमाशितम्" इत्यादि पठ्यते । तत्र च तुरीयाध्यायोक्तार्थस्यैव प्रत्यभिज्ञानात् तुरीये च 'निःश्वसितम्' इति निःश्वसितशब्दश्रवणादर्थैक्येनैक्यम् अभिसन्धायैव 'निःश्वसितम्' इति श्रुतौ नामप्रपञ्चस्य रूपप्रपञ्चेन सहाभिधानादित्युक्तमिति वेदितव्यम् ।

**निर्विषयैवेति** । सा हि ब्रह्मणः सर्वसृष्टेरिच्छापूर्वकत्वमाह । इच्छा च बुद्ध्यविनाभूतेत्यबुद्धि-पूर्वमुत्पन्नत्वं न केनापि प्रकारेण शक्यं वक्तुमिति विषयाभावादप्रमाणं स्यादित्यर्थः । कस्य क्व तात्पर्यमिति न ज्ञायत इत्यत आह **सर्ववेदानां ब्रह्मणः सर्वोत्तमत्व इति** । **तदेव** तात्पर्य-मेव । **कुत** इति साधकं पृष्टम् । तत्र च 'उक्तम्' इत्ययुक्तम् । उक्तिमात्रस्यासाधकत्वाद् इत्यत आह **साधितमिति** । "मोक्षो हि महापुरुषार्थः" (गी.भा. २.२४) इत्यादिना द्वितीयाध्याय इति शेषः । **तद्विरोधो** महातात्पर्यविरोधः । सर्वोत्तमत्वस्यैव तात्पर्यविषयत्वेन प्रस्तुतत्वात् "प्राधान्यं सर्वोत्तमत्वम्" इत्युक्तम् । 'पुरुषस्य' इति वक्ष्यमाणमत्रापि सम्बध्यत इति भावेन 'तदमतिपूर्वं' इति भाष्ये तच्छब्दार्थमाह **पुरुषमतीति** । 'यथा' इत्येतद्वाक्यशेषोऽपीत्यभिप्रायेणाह **यथेत्यर्थ इति** । अबुद्धिपूर्वमुत्पादकत्वस्य स्वातन्त्र्यविरोधित्वं कथमित्यर्थकेन 'किमायातम्' इत्यनेन कृतचोद्यं परिहर्तुं

'तदमतिपूर्वकत्वेन' इति तृतीयाविभक्तिभावमाह **ततश्चेति** । तत्र अबुद्धिपूर्वकत्वेऽस्वातन्त्र्य-मित्यत्र अस्वातन्त्र्यं यथेति पूर्वोक्तदृष्टान्तः सामान्यात्मा । एतद्भाष्योक्तस्तु विशेषात्मेति ज्ञातव्यम् । तच्छब्दार्थः **पुरुषेति** । **तत्र** रोगादिषु । महातात्पर्यविरोधाच्चेत्यादिघट्टतात्पर्यमाह **ततश्चेत्यादि** । "न ह्यस्वातन्त्र्येणोत्पत्तिकर्तुः प्राधान्यम्" इति भाष्यतात्पर्यम् **अस्वातन्त्र्यादप्राधान्यं प्रसज्येतेति** ।

नन्वेवंप्रसञ्जनस्य भाष्याभिप्रायविषयत्वे यदि ब्रह्मणोऽबुद्धिपूर्वमुत्पादकत्वं स्यात् तर्ह्यस्वातन्त्र्यं स्यात् । रोगाद्युत्पादकपुरुषे तद्दृष्टेरिति साक्षादेवानिष्टापादनरूपतर्कावतारे सम्भवति किमित्यस्वातन्त्र्ये चाप्राधान्यम्, अप्राधान्ये च महातात्पर्यविरोध इति परम्परयाऽऽपादनम् ? इत्याशङ्क्य समाधत्ते साक्षात् **प्रसङ्गसम्भवेऽपीति** ।

यद्यप्युक्तरीत्या साक्षादापादनं शक्यं कर्तुम् । तावतैव परपक्षप्रतिक्षेपात् । तथाऽपि शिष्यान् व्युत्पादयितुं मध्येऽस्वातन्त्र्यमप्राधान्यं च सदृष्टान्तमभिनिवेशितमित्यर्थः । एवं सति भगवतोऽस्वातन्त्र्यम्, अस्वातन्त्र्याद् अप्राधान्यम्, अप्राधान्यान्महातात्पर्यं न स्यादिति परपक्षे बहूनि दूषणान्युद्भावितानि भवन्तीति ।

**प्राचीनटीकायां** तु "विमता जनिर्जनकाधीना न अबुद्धिपूर्वकजनित्वाद् रोगादिजनिवद्" इत्यनुमानोक्तिपरतयेदं भाष्यं योजितम् ।

**भाष्यम्**

**उत्पत्तिवचनान्यभिव्यक्त्यर्थान्यभिमानिदेवताविषयाणि च । 'नित्या' इति उक्त्वा 'उत्सृष्टा' इति वचनात् । अभिव्यञ्जके कर्तृवचनं चास्ति । "ऋग्वेद एवाग्नेरजायत वार्योर्यजुर्वेदः" । "कृत्स्नं शतपथं चक्रे" इति । कथमादित्यस्था वेदाः तेनैव क्रियन्ते । वचनमात्राच्च निर्णयात्मकशारीरकोक्तं बलवत् । शास्त्रं योनिः प्रमाणमस्येति तु शास्त्रयोनित्वम् । 'जन्माद्यस्य यतः' इत्युक्ते प्रमाणं हि तत्र अपेक्षितं, न तु तस्य जातत्वं वेदकारणत्वं वा । न हि वेदकारणत्वं जगत्कारणत्वे हेतुः । न हि विचित्रजगत्सृष्टेर्वेदसृष्टिरशक्या सृज्यत्वे । न च सर्वज्ञत्वे । यदि वेदस्रष्टा सर्वज्ञः किमिति न जगत्स्रष्टा ? तस्माद्वेदप्रमाणकत्वमेवात्र विवक्षितम् । अतो नित्यान्यक्षराणि । यत एवं परम्परया यज्ञाभिव्यङ्ग्यं ब्रह्म तस्मात् तन्नित्यं यज्ञे प्रतिष्ठितम् ॥ १५ ॥**

***प०टी०***— वेदनित्यत्वमिव तदुत्पत्तावपि वचनानि सन्तीत्यत आह **उत्पत्तीति** । कुत इयं व्यवस्था ? इत्यत आह **नित्येति** । एतद्वाक्यप्रामाण्यानुपपत्त्येत्यर्थः । अभिव्यञ्जके कर्तृवचनवदभिव्यक्ते कृतकत्ववचनमुपपन्नमित्याह **अभिव्यञ्जक इति** । शतपथकर्तैव किं न स्यात् ? इत्यत आह **कथमिति** । इतश्चोत्पत्तिवचनस्यार्थान्तरमेवेत्याह **वचनेति** । 'अत एव च नित्यत्वम्' इतिवच्छारीरक एव 'शास्त्रयोनित्वात्' इति वेदोत्पत्तिः श्रूयत इत्यत आह **शास्त्रमिति** । ननु शास्त्रस्य योनिरिति किं न स्यात् ? अन्यथा ब्रह्मणो जातत्वापातादित्यत आह **जन्मादीति** । उभयमपि पूर्वसूत्रासङ्गतमित्यर्थः । अशक्यवेदस्रष्टुर्जगत्स्रष्टुत्वं किमुतेति जन्मादिकारणत्वे हेतुतयोच्यते शास्त्रयोनित्वमित्यत आह **न हीति** । जन्माद्यस्येत्यर्थातिशयं न । सर्वज्ञे हेतुः शास्त्रयोनित्वमित्यत आह **न चेति** । इतोऽपि सार्वज्ञस्यादिसूत्र एव सिद्धेर्द्वितीयसूत्रवैयर्थ्यमित्यर्थः । सूत्रार्थस्तर्हि कः ? इत्यत आह **तस्मादिति** । तानि च इत्याद्युक्तमुपसंहरति **अत इति** । 'तस्मात् सर्वगतम्' इत्येतत्परामृष्टहेतुप्रदर्शनपूर्वकं व्याचष्टे **यत इति** । यज्ञे ब्रह्मणः प्रतिष्ठितत्वात् तत्करणे ब्रह्मप्रतिमानिर्माणं भवतीति भावः । नन्वत्रान्नादिपरम्परैव श्रूयते न चक्रमित्यत आह **तानीति** । अत्र कर्मादौ तत्सजातीयमात्रग्रहणेऽपि भक्त्येव चक्रम् । भूतचक्रस्यापि कर्मविध्युपयोगित्वादिति ॥

***न०टी०***—ननु उत्पत्तिवचनानामप्रामाण्यं स्यादित्यत आह **उत्पत्तीति** । वचनसूचितैवेयं व्यवस्थेत्याह **नित्येति** । **उत्सृष्टा** उत्पन्ना । नित्यस्योत्पत्तिर्नामाभिव्यक्तिः, अभिमानिदेवतोत्पत्तिः वा । साऽपि यथायोग्यम् । एवमभिव्यङ्ग्ये कार्यशब्दप्रदर्शनेन 'ऋचः सामानि जज्ञिरे' इत्यादि व्याख्यातं भवति । न केवलमेतावत् । किं तर्हि ? इत्याकाङ्क्षायामाह **अभिव्यञ्जक इति** । तथा हि मोक्षधर्मे याज्ञवल्क्यवचनम्—

> 'ततः शतपथं कृत्स्नं सरहस्यं ससङ्ग्रहम् ।
> चक्रे सपरिशेषं च हर्षेण परमेण ह ॥' इति ।

ननु याज्ञवल्क्यः शतपथस्य कर्तैव किं न स्यात् ? इत्यत आह **कथमिति** । पूर्वमादित्यस्थत्वं तेषां वेदानाम्, ततो याज्ञवल्क्यप्राप्तिश्च 'मयाऽऽदित्यादवाप्तानि यजूंषि मिथिलाधिप' इत्याद्युपक्रमादवगम्यते । एतेन 'आदिविद्वान् वेदकर्ता' इत्यादि व्याख्यातं भवति । न केवलं नित्यवचनं निरवकाशत्वात् प्रबलम्, किन्तु निर्णयात्मकत्वादपीत्याह **वचनेति** । **शारीरकं** ब्रह्मसूत्राणि । ननु शारीरक एव शास्त्रयोनित्वादिति वेदोत्पत्तिः श्रूयत इत्यत आह **शास्त्रमिति** । ननु समासबलीयस्त्वेन तत्पुरुष एव भवेत् । ब्रह्मण एव जातत्वापत्तेश्चेत्यत आह **जन्मेति** । पूर्वसूत्रासङ्गतत्वात् बहुव्रीहिप्रातीतिकार्थः, तत्पुरुषश्च न युक्त इत्यर्थः । ननु जगत्कारणत्वं

वेदकारणत्वेन साधयतीति कथमसङ्गतिः ? यस्त्वन्याशक्यमपि वेदं सृजति, किमुतासौ न जगत् ? इति कैमुत्यन्यायादित्यत आह **न हीति** । सृज्यत्वपक्ष इत्यर्थः । ननु सर्वज्ञत्वसाधकत्वेन वेदकर्तृत्वं सङ्गच्छत इत्याशङ्क्य, निःश्वसितमित्यबुद्धिपूर्वकत्वाङ्गीकारात् तदयुक्तमिति भावेनाह **न चेति** । इतोऽपि तन्न युक्तमित्याह **यदीति** । एवमन्यथा गत्यभावादयमेव भगवद्विवक्षितसूत्रार्थ इत्याह **तस्मादिति** । उपसंहरति **अत इति** । अतो नोद्भवशब्दमुख्यार्थत्वायापि ब्रह्माक्षरशब्दयो-र्व्यत्यास इत्यर्थः । 'तस्मात्' इत्यत्रोक्तहेतोरप्रसिद्धत्वात् तत्प्रकाशयन् योजयति **यत इति** । अतो न केवलं यज्ञार्थं सङ्गरहितं कर्म न बन्धकम्, किन्त्वेवं ब्रह्मज्ञानाङ्गत्वेन मोचकमपीति भावः । नन्वत्राक्षरादिभूतान्तानां कार्यकारणभाव एवोक्तो न चक्रम् । चक्रं च भूतानामक्षरशब्दोक्तब्रह्मत्व एव भवतीति ब्रह्माक्षरशब्दार्थयोर्व्यत्यास एव भगवतोऽभिप्रेत इत्याशङ्कां स्वमते तत्साधनेनैव परिहरति **तानि चेति** । इति चक्रं नान्यथेत्यर्थः । न च भूतानामक्षरशब्दोक्तपरब्रह्मत्वं भगवदभिप्रेतम् । 'क्षरः सर्वाणि भूतानि' इति वक्ष्यमाणत्वात् । नाप्यद्वैतवाक्यात् तत्सिद्धिः । उपजीव्यप्रमाणविरोधात् । अतः पूर्वोक्तदोषात् न कथञ्चित् ब्रह्माक्षरशब्दार्थव्यत्यासः । स्वाभिमतं चक्रं भगवान् नारदीये प्रकटमाह 'जननात् परसस्यादेः' इत्यादिना । अत एवाक्षरशब्दोक्तं ब्रह्म भूतैर्ज्ञायत इति ईदृष्येपि चक्रता निरस्तेति भावः ॥

***प्र०दी०***— ननु वेदनित्यत्ववत्तदुत्पत्तावपि "ऋचः सामानि जज्ञिरे" इत्यादिवचनानि सन्ति । तत्कथं निर्णय इत्यतो विपक्षे बाधकोपेतानां नित्यत्ववाक्यानां प्राबल्यादुत्पत्तिवचना-न्यन्यथा व्याख्येयानीत्याह— **उत्पत्तीति** । उत्पत्तिवाचीशब्दो अभिव्यक्तौ दृष्ट इत्यत आह **नित्येति** । अनादिनिधनतया नित्या न तूपचारेणेति मुख्यं नित्यत्वमुक्त्वा पुनरुत्सृष्टेत्युच्यते । तत्र गत्यन्तराभावाद्व्यक्तिरेव ग्राह्येत्यर्थः । अन्यत्रापि प्रयोगं दर्शयति— **अभिव्यञ्जक इति** । शत-पथाभिव्यञ्जकतया निश्चिते याज्ञवल्क्ये कर्तृशब्दोऽस्तीत्यर्थः । याज्ञवल्क्यः शतपथस्य कर्तैव किं न स्यादित्यत आह— **कथमिति** । प्रागादित्ये स्थितास्ततो याज्ञवल्क्येनाधीता इत्येतत्प्रमित-मित्यर्थः । इतोऽपि नित्यत्वपक्ष एव बलवानित्याह— **वचनेति** । 'ऋचः सामानि' इत्यादिकं वचनमात्रम् । "अत एव च नित्यत्वं" इति शारीरकोक्तं वाक्यं निर्णयात्मकम् । वचनं च वृत्त्य-न्तरेणापि सम्भवति । न तूपचरितो वाक्यार्थावधारणात्मकोऽपि निर्णयः । अतस्तस्मादिदं बलवदित्यर्थः ।

ननु शारीरक एव 'शास्त्रयोनित्वात्' इति ब्रह्मणो वेदकारणत्वमुच्यत इत्यत आह— **शास्त्रमिति** । ननु तत्पुरुषं परित्यज्य को बहुव्रीहिरङ्गीक्रियते । तथात्वे च ब्रह्मणो वेदाज्ज्ञातत्वं

प्रसज्येतेत्यत आह— **जन्मादीति** । लक्षणप्रमाणाभ्यां हि वस्तुनिर्णयः । तत्र 'जन्माद्यस्य' इति सूत्रेण लक्षणेऽभिहिते कुतः प्रमाणादेवं प्रतिपत्तव्यमिति ब्रह्मणो जगज्जन्मादिकारणत्वे प्रमाणाकाङ्क्षा स्यात् । न तु तस्य वेदाज्ज्ञातत्वं वेदकारणत्वं वाऽऽकाङ्क्षितम् । आकाङ्क्षादिवशाच्च वाक्यार्थोऽवसेयः । अतो योनिशब्दं प्रमाणवचनमङ्गीकृत्य बहुव्रीहिरेवायं प्रतिपत्तव्यो न तत्पुरुषः । वेदकारणत्वं जगत्कारणत्वे हेतुत्वेनात्रोच्यते । तेन नानाकाङ्क्षिताभिधानमेतदित्यत आह— **न हीति** । अन्वयाभावादेकदेशकारणत्वेन समुदायकारणत्वानुमानेऽतिप्रसङ्गाच्चेति हेरर्थः । मा भूदयं निश्चयहेतुः । तथाऽप्यशक्यसृष्टेर्वेदस्य कर्तुर्ब्रह्मणो जगत्सृष्टिकर्तृत्वं सम्भवतीति सम्भावनाहेतुरयं स्यादित्यत आह— **न हीति** । सम्भावना ह्यधिकेनाल्पस्य भवति । यथा सहस्रेण शतस्य । न च समुदायसृष्टेस्तदेकदेशसृष्टिरधिकेति भावः । सृज्यत्वे वेदस्य । कार्यत्वपक्ष इत्यर्थः । जगत्कारणत्वोक्त्या ब्रह्मणः सर्वज्ञत्वं प्रतीतम् । तत्स्फुटीकर्तुं तत्र वेदकारणत्वं हेतुरनेनोच्यते । अतो नासङ्गतिरित्यत आह— **न चेति** । वेदकारणत्वं हेतुरित्यनुवर्तते । अबुद्धिपूर्वमुत्पन्नत्वाङ्गीकारादिति भावः । किं च यदि जगदेकदेशस्य वेदस्य स्रष्टा परमेश्वरः सर्वज्ञः सिध्येत्तर्ह्यन्तर्भावितवेदस्य जगतस्स्रष्टा सुतरां सर्वज्ञः सिद्ध्येदेव । तथा चार्थादपि जन्मादिसूत्रेणैव सार्वज्ञस्य स्फुटं प्रतीतत्वात्पुनर्हेत्वाकाङ्क्षाऽभावेनासङ्गतिस्तदवस्थेति भावेनाह— **यदीति** । सूत्रार्थमुपसंहरति— **तस्मादिति** । ब्रह्मण इति शेषः । 'तानि च' इत्यादिनोक्तमुपसंहरति— **अत इति** । तथा च समुद्भवशब्दस्य मुख्यार्थत्वलाभाय न ब्रह्माक्षरशब्दार्थव्यत्ययः कार्य इति । तस्मादिति परामर्शविषयाप्रतीतेस्तद्दर्शयन् वाक्यं व्याख्याति— **यत इति** । प्रतिष्ठितमित्युच्यत इति शेषः ॥

***भा०दी०***— **विपक्ष इति** । सकर्तृकर्तृत्वे दोषश्चोक्त इति प्रागुक्तविपक्षबाधकोपेतानां वाचा विरूपनित्ययेत्यादीनामित्यर्थः । अपौनरुक्त्यायाह अनादिनिधनतया **नित्येति** । **तत्पुरुषमिति** । समस्यमानपदार्थत्यागेनाबहुव्रीहे तत्पुरुषस्य तदत्यागेनोत्तरपदार्थप्रधानस्य प्राबल्यादिति भावः । तत्र हि शब्दसूचितं हेतुद्वयं स्वयमाह **अन्वयाभावादिति** । ईश्वरो विश्वकर्तेति तदेकदेशकर्तृत्वादित्यन्वितं भविष्यवदकारिणत्वमित्यत आह **एकदेशेति** । कुलालादेरपि विश्वकर्तृत्वापत्तेरिति भावः ॥

***भा०र०***— **नित्यत्ववत्** अनुत्पन्नत्व इव । "ऋचः सामानि जज्ञिरे" इत्यादीनि **अभिव्यक्तिः अर्थः** तात्पर्यविषयो येषां तानि तथोक्तानि । **अभिमानिदेवताविषयाणि** अवान्तराभिमानिदेवताशरीरजन्मविषयाणि । 'चशब्दः' वाशब्दार्थ इति भाष्यार्थः । तथा चोक्तम्—

"वेदानां सृष्टिवाक्यानि भवेयुर्व्यक्त्यपेक्षया ।
अवान्तराभिमानानां देवानां वा व्यपेक्षया ॥" (ब्रह्माण्डे) इति ।

**प्राचीनटीकायां** च "अभिमानिदेवतोत्पत्तिर्वा" इति । "अनादिनिधना नित्या वागुत्सृष्टा स्वयम्भुवा" इति भाष्योपात्तवाक्ये 'अनादिनिधना' इति विशेषणं हेत्वर्थगर्भमिति तदर्थमाह **अनादिनिधनतयेति** ।

मुख्यं नित्यत्वं वेदवाक्य इति योज्यम् । तत्र 'उत्सृष्टा' इति पदे । **गत्यन्तरेति** । उत्पत्तेरेव ग्रहणे पूर्ववाक्यविरोधो दुर्वार इति व्यक्तिरेवार्थतया उपादातव्येत्यर्थः । प्रयोगम् उत्पत्तिवाचिशब्दस्य अभिव्यक्तौ । 'कर्तृवचनम्' इत्यस्यार्थः **कर्तृशब्द इति** । तथा हि मोक्षधर्मे—

"ततः शतपथं कृत्स्नं सरहस्यं ससङ्ग्रहम् ।
चक्रे सपरिशेषं च हर्षेण परमेण ह ॥"

इति **प्राचीनटीकायाम्** उदाहृतयाज्ञवल्क्यवचनावमर्शे अभिव्यञ्जकतया निश्चितेऽपि कर्तृवाचकः 'चक्रे' इति शब्दोऽस्तीत्यर्थः । अत्र 'चक्रे' इति लिडात्मनेपदोत्तमपुरुषैकवचनम् । कृतवानहमित्यर्थः । तथा च मोक्षधर्मे—

"सूर्यस्य चानुभावेन प्रवृत्तोऽहं नराधिप ।
कर्तुं शतपथं वेदमपूर्वं च कृतं मया ॥"

इति याज्ञवल्क्यवचनम् । भाष्यं त्वन्वयप्रदर्शनपरमिति ज्ञातव्यम् ।

'आदित्यस्थाः' इत्यस्य तात्पर्यं **प्रागादित्ये स्थिता इति** । **ततः** आदित्यात् । **प्रमितमिति** । तथा च **प्राचीनटीकायां** "मयाऽऽदित्यादवाप्तानि यजूंषि मिथिलाधिपेत्युपक्रमात्" इति प्रमाणमुपन्यस्तम् । अनेनैव भाष्ये वेदशब्दो यजुर्विशेषपरः, शतपथाभिव्यञ्जकत्वेन मोक्षधर्मे याज्ञवल्क्यस्योपस्थितत्वात् **तेनैव** याज्ञवल्क्येनेत्यर्थोऽवगम्यते । "एवमुक्तौ ददौ तस्मै यजूंषि भगवान् रविः" इति विष्णुपुराणवाक्येन प्रमितमित्यर्थ इत्यपि **आहुः** । भाष्ये चशब्दश्रवणादाह **इतोऽपीति** । **शारीरकेति** । "शारीरः परमात्मा । तद्विचारकं शास्त्रं शारीरकम्" इति सुधायां व्याख्यातम् इति अत्र शारीरकशब्देन ब्रह्मसूत्राण्युच्यन्ते । तत्रोक्तं **वाक्यम्** "अत एव च नित्यत्वम्" (ब्र.सू. १-३-२९) इत्येवंरूपम् । **निर्णयात्मकं** अवधारणात्मकज्ञानसाधनमित्यर्थः । **अत एव** शब्दस्य नित्यत्वादेव देवप्रवाहनित्यत्वं युक्तमिति ब्रह्मसूत्रार्थः । **वृत्त्यन्तरेण** पूर्वोक्तगौण्यादिरूपेण । **सम्भवति** अर्थान्तरे प्रवर्तयितुम् । **उपचरितः** वृत्त्यन्तरेणान्यत्र नीतः । **अवधारणात्मकोऽपीति** । भाष्यगतद्वितीयचशब्दार्थः । न निर्णयः उपचरितः सम्भवतीत्यन्वयः । तथात्वे च सन्देहाद्यापादकत्वापत्त्या 'असन्दिग्धम्' इति शारीरकस्योक्तं लक्षणं न स्यादिति भावः । **अतः**

शारीरकस्य वृत्त्यन्तरेण प्रवर्तयितुमशक्यत्वादित्यर्थः । **तस्मात्** वचनमात्रात् । **इदं** शारीरक-वाक्यम् ।

शारीरक एव ब्रह्ममीमांसाशास्त्र एव । भाष्ये 'इति'शब्दात् पूर्वं 'तद्'शब्दो योज्यः । तस्य भावस्तत्त्वमिति शास्त्रयोनित्वं विवक्षितमिति योजना । **तत्पुरुषं** समस्यमानपदार्थप्रधानतया प्रबलमपि । **कुतः** अन्यपदार्थप्रधानतया दुर्बलः कस्मादङ्गीक्रियत इत्यर्थः । न केवलं समासबलीयस्त्वात् तत्पुरुषोऽङ्गीकार्यः, किन्त्वजत्वेन प्रमितस्य परब्रह्मणो वेदादुत्पत्त्यङ्गीकारप्रसङ्गाच्चेत्याह **तथात्वे चेति** । सूत्रद्वयतात्पर्यमनुवदन्भाष्यं योजयति **लक्षणेति** । "अथातो ब्रह्मजिज्ञासा" इति ब्रह्मणो जिज्ञास्यत्वेऽभिहिते किं तस्य लक्षणम् ? किञ्च तत्र प्रमाणम् ? इत्याकाङ्क्षा जायते । लक्षण-प्रमाणाभ्यामेव वस्तुनो निर्णेतव्यत्वादित्यर्थः । **तत्र** लक्षणप्रमाणयोर्मध्ये । **लक्षणे** जगज्जन्मादि-कारणत्वरूपलक्षणे । **एवं** लक्षणलक्षितत्वेन । 'जातत्वम्' इति भाष्यार्थः **वेदाज्ज्ञातत्वमिति** । 'अपेक्षितम्' इत्यस्यार्थः **आकाङ्क्षितमिति** । **वाक्यार्थः** 'शास्त्रयोनित्वाद्' इति वाक्यार्थः । **प्रमाणवाचिनमिति** । "योनिः स्त्रीणां भगे स्थाने गुह्ये कारणतन्त्रयोः" इत्यभिधानेन कारणा-भिधायकमेव प्रमाकरणवाचिनमङ्गीकृत्य "शास्त्रं योनिः प्रमाकरणमस्य" इति बहुव्रीहिरेव ज्ञातव्य इत्यर्थः । **तत्पुरुषः** "शास्त्रस्य योनिः शास्त्रयोनिः" इति षष्ठीतत्पुरुषो न प्रतिपत्तव्यः । पूर्वसूत्रा-सङ्गतत्वादिति भावः । असङ्गतिं शङ्कते **वेदेति** । **जगत्कारणत्वे** पूर्वसूत्रोक्ते । **अत्र** शास्त्रयोनि-सूत्रे । वेदकारणत्वरूपो हेतुरन्वयी व्यतिरेकी वा । नाद्य इत्याह **अन्वयाभावादिति** । "यत्र वेदकर्तृत्वं तत्र जगत्कर्तृत्वम्" इत्यन्वयसहचारग्रहस्य दृष्टान्ताभावेनायोगान्नान्वयानुमानत्वमित्यर्थः । न द्वितीय इत्याह **अन्वयाभावादिति** । व्याप्तिर्ह्यनुमानाङ्गम् । सा च न व्यतिरेकिणि हेता-वन्वेति । साध्याभावनिष्ठताऽङ्गीकारात् । साध्याभावनिष्ठायाश्च व्यतिरेकव्याप्तेर्वेदकारणत्वहेतावन्वया-भावात् । व्याप्तिपक्षधर्मतावत एव च हेतुत्वान्न व्यतिरेकिणो हेतुत्वमित्यर्थः । न हि भावेन भावसाधनेऽभावस्याभावेन व्याप्तिरुपयुज्यत इति भावः । ननु वेदकारणत्वाद् जगत्कारणत्वमिति नानुमीयते । किन्तु ब्रह्म जगत्कर्तृ तदेकदेशवेदकर्तृत्वात् । यो यदेकदेशकर्ता स तत्सर्वकर्ता । यथा पटैकदेशकर्ता कुविन्दः पटकर्ता इत्यनुमीयते । न चात्रोक्तदोष इत्याह **एकदेशेति** । **अति-प्रसङ्गादिति** । कुविन्दकुलालादेरपि विश्वकर्तृत्वापत्तेरित्ययमर्थो भाष्ये हिशब्दसूचित इत्यर्थः । तथा च कुलालादौ हेतोर्व्यभिचार इति भावः ।

**अयं** वेदकारणत्वम्, हेतुशब्दापेक्षया पुंलिङ्गत्वम् । अशक्या सृष्टिर्यस्येति अशक्यसृष्टिः, तस्य । 'कर्तुः' इत्यत्र "तृतीयादिषु भाषितपुंस्कम्" इति पक्षे नुमभावः । **इति सम्भावनाहेतु-**

**रयमिति** । वेदकारणत्वमित्यर्थः । वाक्यान्तरत्वात् पुनः 'अयम्' इति । **यथा सहस्रेणेति** । एकस्मिन्नेव मुहूर्तेऽनेन शतं पद्यानि रचितानीत्युक्ते असम्भावनाशङ्कायां यदा तेनैव पुरुषेण रचितानि सहस्रं पद्यानि पश्यति तदा सम्भवत्येवानेन शतं पद्यानि रचितानीति सहस्रेणाधिकेनाल्पस्य शतस्य सम्भावना यथा तथेत्यर्थः । न चैवं प्रकृते सम्भावनोपपद्यत इति भावः ।

"न हि विचित्र" इति भाष्यभावमाह **न च समुदायेति** । 'सृज्यत्वे' इति भाष्यमनूद्य तत्र योग्यतया प्राप्तं योजयंस्तदर्थमाह **सृज्यत्वे वेदस्येति** । यदुक्तम् "अनाकाङ्क्षिताभिधानात् 'शास्त्रयोनित्वात्' इति सूत्रमसङ्गतम्" इति, तन्न । पूर्वसूत्रे प्रतीतस्य सार्वज्ञस्य स्फुटीकरणार्थं शास्त्रयोनिसूत्रमिति पक्षेऽनाकाङ्क्षिताभिधानाभावादिति शङ्कां परिहरदुत्तरभाष्यमवतारयति **जगत्कारणत्वोक्त्येति** । उपादानापरोक्षज्ञानाभावे कारणत्वमेव नोपपद्यत इति तदुक्त्याऽर्थात् सार्वज्ञ्यं प्रतीतमित्यर्थः । **तत्र** अर्थलब्धसर्वज्ञत्वे । **अनुवर्तते** न हि वेदकारणत्वं जगत्कारणत्वे हेतुरिति पूर्वभाष्यात् । नन्वशेषार्थप्रतिपादकवेदकारणत्वं कथं न सार्वज्ञ्यं साधयेत् ? अर्थं बुद्ध्वा वाक्यरचयितृत्वस्य कारणशब्दार्थत्वादित्यत आह **अबुद्धिपूर्वमिति** ॥ **अङ्गीकारादिति** । "निःश्वसितमेतद् यद् ऋग्वेदः" (बृ. ४.४.१०) इति श्रुतिर्वेदानां ब्रह्मणोऽबुद्धिपूर्वमुत्पन्नत्वमाहेत्यबुद्धिपूर्वत्वाङ्गीकारात्, अर्थं बुद्ध्वा शब्दरचयितृत्वरूपं वेदकारणत्वं नास्तीति न तस्य तत्र हेतुत्वं युक्तमित्यर्थः ।

दूषणान्तरपरत्वेनोत्तरभाष्यमवतारयति **किञ्चेति** । **अर्थादपीति** । वेदादिसकलगर्भस्य विचित्रस्य **जगतः स्रष्टा** उपादानापरोक्षज्ञानवानेव । अन्यथा सृष्टिरेव न युक्ता इत्यन्यथाऽनुपपत्तिबलादपीत्यर्थः। "आनुमानिकमपि....." (ब्र.सू. १.४.१) इत्यादाविवात्रापिशब्द एवार्थ इति **आहुः** । असङ्गतिः शास्त्रयोनिसूत्रे वेदकारणत्वाभिधानस्य । "शास्त्रं योनिर्यस्य" इति प्राक् सूत्रार्थस्य भाषितत्वादाह **उपसंहरतीति** । **तस्मात्** तत्पुरुषपक्षस्यासङ्गतत्वापत्त्याऽयुक्तत्वादिति भाष्यार्थः । **इति शेष इति** । "वेदप्रमाणकत्वमेव इत्यनन्तरम्" इति शेषः । **तानि चेत्यादिनोक्तमिति** । "तानि चाक्षराणि नित्यानि" इत्यादिनोपपादितमक्षराणां नित्यत्वमित्यर्थः । वर्णानित्यत्वे प्रमाणाभावात्, बाधकतयोक्तानाम् अन्यथाव्याख्यातत्वेन बाधकाभावाच्चेति 'अतः' इति भाष्यार्थः । यदर्थमक्षरनित्यत्वं साधितं तत्फलमाह **तथा चेति** । **व्यत्ययः** ब्रह्मशब्दस्याक्षरार्थत्वम्, अक्षरशब्दस्य ब्रह्मार्थत्वमिति व्यत्यासः । **इति परामर्शेति** । "तस्मात् सर्वगतं ब्रह्म नित्यम्" इति श्लोके तच्छब्देन परामृश्यमानाप्रतीतेरित्यर्थः । (भाष्ये) **परम्परया यज्ञाभिव्यङ्ग्यमिति** । यज्ञेन पर्जन्यः, पर्जन्येनान्नम्, अन्नेन भूतानि, भूतैर्वक्ष्यमाणरीत्याऽक्षराणि, अक्षरेभ्यो ब्रह्माभिव्यङ्ग्यमिति परम्परया यज्ञाभिव्यङ्ग्यं ब्रह्मेति भाष्यार्थः । 'प्रतिष्ठितम्' इति पदमनूद्य तत्र शेषं पूरयति **प्रतिष्ठितमिति** ।

तेन "ब्रह्मणो यज्ञप्रतिष्ठितत्वं यज्ञाभिव्यङ्ग्यमिति कथम् ? स्वतः सिद्धत्वाद्" इति चोद्यं परिहृतम् । यज्ञे ब्रह्मणः प्रतिष्ठितत्वात् तत्करणे ब्रह्मप्रतिमानिर्माणं भवतीति भाव इति भावप्रदीपिका ॥ १५ ॥

**गीता**

## एवं प्रवर्तितं चक्रं नानुवर्तयतीह यः ।
## अघायुरिन्द्रियारामो मोघं पार्थ स जीवति ॥ १६ ॥

***वि०वि०***— तदेवं जगच्चक्रं यो नानुवर्तयति स तद्विनाशकत्वादघायुः । पापनिमित्तमेवायुर्यस्य सोऽघायुः । इन्द्रियाभिमानेन विषयेषु रतिमान् । मोघं व्यर्थमेव जीवति ॥

***वा०ल०***— चक्रम् अनादिकालमारभ्य परिवर्तमानं पुण्यचक्रम् ॥

***सा०सं०***— **एवं** पुरातनैः **प्रवर्तितं** भगवतैव वा प्राणिनामिष्टसिद्ध्ये प्रवर्तितम् । जग**च्चक्रम्** । **इह** लोके । **यो नानुवर्तयति** कर्म न करोतीति यावत् । विश्वस्य चक्रेऽन्तर्भावात् कर्माकरणेन चक्राप्रवृत्तौ चक्रविनाशकत्वेन विश्वहन्तृत्वात् स **अघायुः** । तादर्थ्यात् ताच्छब्द्यम् । अघनिमित्तमायुर्यस्य स तथा । **इन्द्रियारामः** इन्द्रियैर्विषयेषु रतिमान् । हे **पार्थ** ! व्यर्थमेव **जीवति** नरके मज्जतीत्यर्थः । यज्ञदानतपोरूपत्रिविधकर्मणां गृहस्थानामिव ब्रह्मचर्याद्याश्रमत्रयस्यापि विद्यादानाभयदानस्वभोक्तव्यान्नदानस्य च, तथाऽध्ययनप्रवचनध्यानादिरूपवाचिकमानसिकयज्ञस्य, तथा कृच्छ्रचान्द्रायणादितपसः सत्वेन तेषामपि चक्रप्रवर्तनसम्भवो ज्ञेयः । उक्तं हि 'वाचिको मानसो यज्ञो न्यासिनां तु विशेषतः' इत्यादि (नारदीये) ॥

***अ०प्र०***— हे पार्थ[१], इह एवं[२], प्रवर्तितम्[४], चक्रम्[५], यः[६], न अनुवर्तयति[७], सः[८], अघायुः[९], इन्द्रियारामः, मोघम्, जीवतीत्यन्वयः ।

हे पार्थ ![१], इह = इदानीम्[२], एवं = यस्मादेवं परमेश्वरेणैव भूतानां पुरुषार्थसिद्ध्ये कर्मादिचक्रं प्रवर्तितं तस्मादेवं पुरातनैः[३], प्रवर्तितं = परमेश्वरवाक्यभूतात् वेदाख्यात् ब्रह्मणः पुरुषाणां कर्मणि प्रवृत्तिः, ततः कर्मनिष्पत्तिः, ततोऽन्नं, ततो भूतानि, भूतानां च पुनस्तथैव कर्मप्रवृत्तिरित्येवं प्रवर्तितम्[४], चक्रम् = एतज्जगच्चक्रम्[५], यः = पुरुषः[६], नानुवर्तयति = नानुतिष्ठति यज्ञादिद्वारा कर्म न करोति[७]; सः = जगच्चक्रविनाशकत्वात्[८], अघायुः = अघं पापरूपं अघनिमित्तं वा आयुर्यस्य सः[९], यतः इन्द्रियारामः = इन्द्रियैः विषयेष्वेव रमते न त्वीश्वराराधनार्थे कर्मणि[१०], अतः मोघं =

व्यर्थं पूर्वपुण्यजं मानुष्यं दुर्लभं प्राप्य तत्रापि चेत्पापं करोति यः तस्य जन्मस्यावरादि जन्मतोऽपि निरर्थकमिति मोघं[११], स जीवतीत्यर्थः । तस्माच्चक्रमकुर्वाणः वृथैव जीवतीत्याह ॥

*त्रि०वि०*— सदाचारस्मृति, तद्विवरणरूप-अस्मत्कृत-आह्निकपद्धत्युक्तप्रकारेण, ब्राह्ममुहूर्तादारभ्य पुनः ब्राह्मकालपर्यन्तं (सूर्योदयात्प्रहरपूर्वं) सदाचरणचक्रस्य प्रवर्तकाप्रवर्तकयोः स्तुतिनिन्दापरमिदमेव पद्यम् । तत्र स्तुतौ, ना, इति अमोघं, इति पदच्छेदः ॥ अघसाधनजीवनेन्द्रियेषु न रमतेऽसौ तथेति, अपृथक्पदतृतीयचरणार्थः, निन्दायां तु प्रसिद्ध एव ॥ १६ ॥

**भाष्यम्**

**तानि च अक्षराणि भूताभिव्यङ्ग्यानीति चक्रम् । तदेतत् जगच्चक्रं यो नानुवर्तयति स तद्विनाशकत्वादघायुः । पापनिमित्तमेव यस्यायुः सोऽघायुः ॥ १६ ॥**

*प०टी०*— 'एवं प्रवर्तितम्' इति श्लोकं व्याचष्टे **तदेतदिति** ॥

*न०टी०*—उक्तोपयोगस्य प्रकृतोपयोगं दर्शयन् श्लोकं व्याचष्टे **तदेतदिति** । पापस्य निमित्तम्, पापं निमित्तमस्येति चेत्यर्थः ॥

*प्र०दी०*— नन्वत्र कार्यकारणपरम्परैवोक्ता, न चक्रम् । तत्कथमुच्यते ''एवं प्रवर्तितं चक्रं'' इति तत्राह— **तानि चेति** । तानि वेदाख्यानि । चक्राप्रवृत्तौ कथमघाऽयुष्ट्वादिकमित्यतो व्याचष्टे— **तदेतदिति** । आयुषोऽघत्वाभावात्कथमघायुरित्यत आह— **पापेति** । तादर्थ्यात्ताच्छब्द्यमित्यर्थः ॥

*भा०दी०*— उत्तरश्लोकसङ्गतिभाष्यमवतारयितुं परमतमाह **एवमित्यादिना** । **इत्युक्तमिति** । अन्नादित्यादिश्लोकैरित्यर्थः । 'न कर्मणामनारम्भादि'त्यादेस्तात्पर्यार्थोक्तिः कर्माकरणे हानिरिति सहयज्ञा इत्यादेः भावार्थोक्तिं तत्करणे च लाभ इति 'दर्शनस्पर्शसम्भाषाद्यत्सुखं जायते नृणाम् । आरामः स तु विज्ञेयः सुखं कामक्षयादिति' पञ्चमे वक्ष्यमाणवचनविसंवादायाह **परेतीति** । परत्वस्यापि रतिपदार्थान्तर्गतेर्बाधकमाह **तथात्व इति** । परत्वस्य रतिपदार्थान्तर्भूतत्वे परदर्शनित्युक्त्यैव स्वात्माख्यजीवदर्शनसुखस्य निरासप्राप्त्युत्तरभाष्ये परमात्मदर्शनादीत्यादिनात्मपदस्य जीवपरत्वोक्तमनिराकरणं च व्यर्थं स्यात् । न केवलं वक्ष्यमाणाभिमानं विसंवाद इति चार्थः । अन्यत्रेत्यत्रावधिमाह **यद्दर्शनित्यादि** । तज्जनकमित्यत्र तच्छब्दार्थमाह **तज्जनकं तृप्तेर्जनकमिति** । **आत्मनीति** । आत्मविषयकदर्शनजन्यसुखं यस्येत्यर्थः । **आत्मन इति** । विषयविषयीभाव-

सम्बन्धः । षष्ठ्यर्थः इति भावः । **विरोधादिति** । विषयजन्यसुखस्य विषयेषु तृष्णाहेतुत्वेनालं बुद्ध्यावहेतुत्वादिति भावः । चशब्दो हेतावित्युक्तं तस्यान्वयं दर्शयति **अतो न दोष इति** । नन्वित्यादिना शङ्कितदोषो नेत्यर्थः । **एतेनेति** । आत्मरतावसम्प्रज्ञातसमाधिस्थत्वमेव कारणं नान्यदित्यर्थस्य विवक्षिततत्वेनेत्यर्थः । **असामर्थ्यादिति** । तृप्तपदेनाकाङ्क्षाराहित्यादित्यर्थः । तदेव व्यनक्ति **अन्यत्र इति** । आत्मन इत्यस्यावधिवाचित्वादिति भावः । **प्रकरणलब्धस्येति** । भगवत्प्रीतिमात्रोद्देशेन कर्मानुष्ठानचोदनस्य प्रकृतत्वेन तृप्तिपदोक्तालंबुद्धिशब्दितविरागस्य विषयतया भगवतोऽन्यस्यैव प्रकरणप्राप्तेरिति भावः । **पूर्वविशेषणेति** । आत्मरतिरेव न त्वन्यत्र रतिमा-नित्युक्तविशेषणविरोधाद्वा यं त्विति प्रमाणान्तरविरोधाच्चेत्यर्थः । **पूरणेति** । पूरणगुणसुहितार्थसद-व्ययतमसमानाधिकरणेनेति द्वितीयाध्यायद्वितीयपादे सूत्रम् । द्वन्द्वैकवद्भावेनैकवचनम् । अर्थशब्दः प्रत्येकमन्वेति । पूरणार्थेन गुणार्थेन सुहितार्थेन तृप्यर्थकेन च शब्देन तथा सत्संज्ञकशत्रन्तेन सत्संज्ञकशानजन्तेनाव्ययेन तव्यप्रत्ययान्तेन समानाधिकरणशब्देन षष्ठ्यन्त न समस्यत इति सूत्रार्थः । शास्त्राणामवमः बालकायाः श्लौक्यं फलानां तृप्तेः । ब्राह्मणस्य कुर्वन् ब्राह्मणस्य कुर्वाणः । ब्राह्मणस्य कृत्वा ब्राह्मणस्य कर्तव्यं राज्ञः पाटलिपुत्रस्य करस्येति क्रमादुदाहरणानि । तथा च प्रकृते सुहितार्थकेन तृप्तपदेन समासो निषिद्ध इत्यर्थः ।

***भा०र०***— **अत्र** "अन्नाद् भवन्ति" इत्यादौ । उच्चारणध्वनिद्वारा भूतानां वेदाक्षराभिव्यञ्जक-त्वात् "भूताभिव्यङ्ग्यानि" इति भाष्यम् । **तद्विनाशकत्वात्** जगच्चक्रविनाशकत्वेन विश्वहन्तृ-त्वादिति भाष्यार्थः । **तादर्थ्यादिति** । आयुषोऽघार्थत्वात् पापफलकत्वात् पापवाचकाघशब्देन विशेषणमुपपद्यत इति ताच्छब्द्यम् । स शब्दो यस्य तत् तच्छब्दं, तस्य भावस्ताच्छब्द्यम् । तच्छब्दार्थत्वमित्यर्थः ॥ १६ ॥

***गीताक्षरार्थस्तु***— जगच्चक्रप्रवर्तनार्थत्वाच्च कर्म कर्तव्यमिति 'अन्नात्' इत्यादित्रिश्लोक्यो-च्यते । भुक्ताल्लोहितरेतःपरिणताद् **अन्नाद् भूतानि** सशरीरा जीवा **भवन्ति** । **पर्जन्याद्** आदित्याद् वृष्टिद्वारा **अन्नस्य सम्भवः** उत्पत्तिः । **पर्जन्यः** मेघचक्राभिमान्यादित्यो **यज्ञाद्** भवति । यज्ञे त्यज्यमानाद्धविषः यजमानदत्ताद् आदित्यस्य बलोपचयाद् उपचारेण "यज्ञाद् भवति पर्जन्यः" इत्युच्यते । **यज्ञः** देवतोद्देशेन द्रव्यपरित्यागात्मा ज्योतिष्टोमादिः । **कर्म** यज्ञाङ्गभूतयजमानादिक्रिया **समुद्भवः** उत्पादकं **यस्य स** तथा ॥ १४ ॥

**कर्म ब्रह्मोद्भवं** परब्रह्मजन्यं **विद्धि** जानीहि । पर**ब्रह्म अक्षरसमुद्भवं** वेदाक्षराभिव्यङ्ग्यम् । तानि चाक्षराणि भूताभिव्यङ्ग्यानीति शेषोक्त्या चक्रं ग्राह्यम् । **तस्माद्** उक्तपरम्परया यज्ञाभि-

व्यङ्ग्यत्वात् **सर्वगतम्** अपि **ब्रह्म नित्यं यज्ञे प्रतिष्ठितम्** । इत्युच्यत इति शेषः । एवं च भगवतो यज्ञे प्रतिष्ठितत्वाद् यज्ञानुष्ठानेन चक्रप्रवर्तने भूतस्थितिहेतुत्वनिमित्तसुकृतमिव भगवदभि-व्यक्तिनिमित्तं च सुकृतं भवतीत्यवश्यं कर्म कार्यम् ॥ १५ ॥

**एवं** पुरातनैर्भगवतैव वा प्राणिनामिष्टसिद्धये **प्रवर्तितं जगच्चक्रम् इह** अधिकृतलोके **यो नानुवर्तयति** नानुतिष्ठतीति यावत्, **सः अघायुः** तादर्थ्यात् ताच्छब्द्यम् । विश्वस्य चक्रेऽन्तर्भावात्, कर्माकरणेन चक्राप्रवर्तनाद्, विश्वविनाशकतया विश्वहन्तृत्वाद् अघनिमित्तम् **आयुः** जीवनमस्येति तथा । **इन्द्रियारामः** इन्द्रियैरारामो रमणं विषयेषु यस्य स तथा । इन्द्रियैः आ समन्ताद् रामो रमणं विषयेषु यस्य स तथेति वा । **हे पार्थ मोघं वृथा जीवति** स्वजीवनं नरकपातहेतुं वहतीति । संन्यासिनामपि तात्पर्ये यज्ञदानाद्यस्तीत्युक्तत्वान्न आश्रमान्तरविरोधः ॥ १६ ॥

**गीतातात्पर्यनिर्णयः**

**"जननात्परसस्यादेः पर्जन्यो मेघसन्ततिः ।**
**स यज्ञात्कर्मणः सोऽपि समस्तं कर्म केशवात् ।**
**न नित्योऽप्यक्षरततिरूपाद्वाक्याद्धि गम्यते ।**
**वाक्यमुच्चार्यते भूतैस्तान्यन्नात्तच्च मेघतः ।**
**तस्मात्सर्वगतो विष्णुर्नित्यं यज्ञे प्रतिष्ठितः ।**
**एवं प्रवर्तितं चक्रं नानुवर्तयतीह यः ।**
**स पापो विश्वहन्तृत्वान्नरके मज्जति ध्रुवम् ॥**

***प्रका०***— इतोऽपि स्वस्ववर्णाश्रमविहितं यज्ञादिकं कर्म अवश्यं कर्तव्यमित्येतद् द्रुढयन् "अन्नाद्भवन्ती"त्यादेरर्थमाह **जननादित्यादिना पुराणवचनेन** । "एवं प्रवर्तितमि"त्यनेन यज्ञा-द्यकुर्वतश्चक्ररूपविश्वहन्तृत्वान्नरकमज्जनमुक्तम् ।

***न्या०दी०***— कर्म कर्तव्यमित्यत्र हेत्वन्तरमुच्यते **अन्नादिति** । अत्र कथमन्नस्य पर्जन्या-द्देवविशेषादुत्पत्तिः । कथं च तस्य यज्ञादुत्पत्तिः । कथं चान्नादिति परम्पराया एवोक्तत्वात् चक्रमित्युच्यत इत्याशङ्कां परिहर्तुं ब्रह्माक्षरशब्दयोरन्यार्थकल्पनां च निराकर्तुं स्मृत्यैव व्याचष्टे **जननादिति** । परं जन्यं यस्यासौ तथोक्तः ॥ **यज्ञादिति** । यज्ञसमाराधितदेवताया भवतीत्यर्थः । **यज्ञो** देवतोद्देशेन द्रव्यपरित्यागः । **कर्म** तदितरक्रिया । वाक्याज्जायते । कथं नित्यो जायते ? गम्यते

अवगम्यत इत्यर्थः । वेदेन यथावदवगत एवेश्वरः सत्कर्म कारयतीति भावः । यत एवं परम्परया यज्ञाभिव्यङ्ग्यस्तस्मात् । भगवतो यज्ञे प्रतिष्ठितत्वाद्यज्ञानुष्ठानेन चक्रप्रवृत्तौ भगवदभिव्यक्तिनिमित्तं च सुकृतं भवति, न केवलं भूतस्थितिहेतुत्वनिमित्तमिति भावः । **चक्रं नानुवर्तयतीति** । कर्म न करोतीत्यर्थः ।

*भा०दी०*— **हेत्वन्तरमिति** । सहयज्ञा इत्यादिश्लोकचतुष्टयोक्तार्थवादरूपहेतुः चक्रप्रवर्तकत्वरूपहेत्वन्तरमित्यर्थः ॥ **अन्यार्थकल्पनां चेति** । ब्रह्माक्षरशब्दयोर्वेदपरब्रह्मार्थताकल्पनमित्यर्थः । स्मृत्युक्तं योगं शब्दारूढं दर्शयति **परमिति** । उत्तममित्यर्थः । परपदान्तलोपो निरुक्तत्वादिति भावः ॥

**गीतातात्पर्यनिर्णयः**

**वाचिको मानसो यज्ञो न्यासिनां तु विशेषतः ।**
**वनस्थस्याक्रतुर्यज्ञः क्रत्वादिर्ग्रहिणोऽखिलः ।**
**शुश्रूषाद्यात्मको यज्ञो विहितो ब्रह्मचारिणः ।**
**विद्याऽभयादिदानं च सर्वेषामपि सम्मतम् ।**
**गृहिणो वित्तदानं तु वनस्थस्यान्नपूर्वकम् ।**
**सर्वैः कार्यं तपो घोरमिति सर्वे त्रिकर्मिणः ॥" इति नारदीये ।**

*प्रका०*— तत्र कस्य को यज्ञः किं दानम् इत्यपेक्षायामुच्यते **वाचिक इत्यादि** । अक्रतुर्यज्ञ इत्यस्याग्निहोत्रादियज्ञो ज्योतिष्टोमादिव्यतिरिक्त इत्यर्थः । गृहिणो वित्तदानादिकं च देयं न वित्तनियम इत्युच्यते **गृहिण इत्यनेन** ।

*न्या०दी०*— विश्वस्य चक्रान्तर्भावात् कर्माकरणेन चक्राप्रवृत्तौ विश्वहन्तृत्वं चेत् गार्हस्थ्येतराश्रमाननुष्ठानं प्रसज्येत । कर्मणां यज्ञदानतपोरूपेण त्रैविध्यादाश्रमान्तरे च यज्ञाद्यभावादित्यत आह **वाचिक इति** ॥ **वाचिकः** स्वाध्यायादिः । **मानसो** ध्यानादिः । **विशेषत इति** ॥ सर्वसाधारण्येऽपि अन्येषामन्येऽपि सन्त्येषामयमेवेत्यर्थः । अन्येषां यज्ञान्तरमाह **वनस्थस्येति** ॥ अक्रतुः पश्वालम्भनहीनः । शुश्रूषाद्यात्मक इत्यादिपदेनाग्निपूजा । विद्याभयादीत्यादिपदेन स्वभोक्तव्यान्नदानम् । अन्नपूर्वकं विद्याभयादिदानम् । स्वभोक्तव्यादधिकमापाद्यान्नदानमिह विवक्षितम् । अन्नं तु मूलफलादि ।

**गीतातात्पर्यनिर्णयः**

**ब्रह्माक्षरशब्दार्थयोर्व्यत्यासे "तस्मात्सर्वगतं ब्रह्म" इति प्रत्यभिज्ञाविरोधः चक्रकाऽप्रवेशश्च ॥ १४-१६ ॥**

*प्रका०*— "कर्म ब्रह्मोद्भवम्" इत्यत्र ब्रह्मशब्देन विष्णुरुच्यते न वेदः । तस्मात्सर्वगतं ब्रह्म नित्यं यज्ञे प्रतिष्ठितमित्युपरितनवाक्ये विष्णोः ब्रह्मणः प्रत्यभिज्ञानात् । वेदपक्षे अनया प्रत्यभिज्ञया विरोधः स्यात् । "ब्रह्माक्षरसमुद्भवमि"त्यत्र अक्षरशब्देन वर्णात्मकत्वेन प्रसिद्धो वेद उच्यते, न विष्णुः । वेदस्य भूतैः प्राणिभिरुच्चार्यमाणत्वेन चक्रकप्रवेशः स्यात् । विष्णुपक्षे चक्रकाऽप्रवेशादित्याह **ब्रह्मेति** ॥

*न्या०दी०*— 'ब्रह्माक्षरसमुद्भवम्' इत्यत्र ब्रह्मपदेन वेदोऽक्षरपदेन ब्रह्मोच्यत इत्यपव्याख्यानं हेत्वन्तरेण प्रत्याख्याति **ब्रह्मेति** ॥ यद्यत्र ब्रह्मपदेन वेदोऽक्षरपदेन ब्रह्मोच्यते तर्हि उपरि ब्रह्मणः "तस्मात्सर्वगतं ब्रह्म" इति ब्रह्मपदेन प्रत्यभिज्ञा न स्यात् । यत्पदेन यन्न प्रकृतं तस्य तत्पदेन कारणविशेषं विना परामर्शादर्शनात् । न च तत्र वेदपरामर्शः । तस्य यज्ञे प्रतिष्ठितत्वोक्तेरनुपयुक्तत्वादिति भावः । दोषान्तरं चाह **चक्रेति** ॥ वेदात् कर्मणामुत्पत्त्यभावाद्ब्रह्मणो वेदस्योत्पत्त्यभावात् भूतेभ्यो ब्रह्मणो जननाभावाद् अर्थान्तरकल्पने वेदादेश्चक्राप्रवेशः स्यात् । व्यक्त्यर्थाङ्गीकारे बहूनां पदानाममुख्यार्थतापात इति भावः ॥

*भा०दी०*— **हेत्वन्तरेणेति** । व्याख्यानरूपस्मृतिविरोधापेक्षया प्रत्यभिज्ञाविरोधरूपहेत्वन्तरेणेत्यर्थः ॥ **अनुपयुक्तत्वादिति** । स्वपक्षे तूक्त उपयोग इति भावः ॥ **उत्पत्त्यभावादिति** । वेदस्य नित्यत्वादिति भावः ॥ **भूतेभ्य इति** । चक्रसिद्ध्यर्थमक्षरं भूतोद्भावमिति वाच्यम् । न हि अक्षरशब्दितं ब्रह्म भूतैरुत्पद्यत इत्यर्थः । **अर्थान्तरकल्पन इति** । परमेश्वरवाक्यभूतात् वेदाख्यात् ब्रह्मणः पुरुषाणां कर्मणि प्रवृत्तिः । ततः कर्मनिष्पत्तिः । ततः पर्जन्यः । ततोऽन्नम् । ततो भूतानि । भूतानां च कर्मप्रवृत्तिरित्येवं कल्पन इत्यर्थः । आदिपदेन परब्रह्मग्रहः । ननु अक्षरं भूतसम्भवमित्येवास्तु । सम्भवशब्देन व्यक्तिर्गृह्यतामित्यत आह **व्यक्त्यर्थेति** ॥

**गीता**

**यस्त्वात्मरतिरेव स्यादात्मतृप्तश्च मानवः ।**
**आत्मन्येव च सन्तुष्टस्तस्य कार्यं न विद्यते ॥ १७ ॥**

अवगम्यत इत्यर्थः । वेदेन यथावदवगत एवेश्वरः सत्कर्म कारयतीति भावः । यत एवं परम्परया यज्ञाभिव्यङ्ग्यस्तस्मात् । भगवतो यज्ञे प्रतिष्ठितत्वाद्यज्ञानुष्ठानेन चक्रप्रवृत्तौ भगवदभिव्यक्तिनिमित्तं च सुकृतं भवति, न केवलं भूतस्थितिहेतुत्वनिमित्तमिति भावः । **चक्रं नानुवर्तयतीति** । कर्म न करोतीत्यर्थः ।

***भा०दी०*— हेत्वन्तरमिति** । सहयज्ञा इत्यादिश्लोकचतुष्टयोक्तार्थवादरूपहेतुः चक्रप्रवर्तकत्वरूपहेत्वन्तरमित्यर्थः ॥ **अन्यार्थकल्पनां चेति** । ब्रह्माक्षरशब्दयोर्वेदपरब्रह्मार्थताकल्पनमित्यर्थः । स्मृत्युक्तं योगं शब्दारूढं दर्शयति **परमिति** । उत्तममित्यर्थः । परपदान्तलोपो निरुक्तत्वादिति भावः ॥

**गीतातात्पर्यनिर्णयः**

**वाचिको मानसो यज्ञो न्यासिनां तु विशेषतः ।**
**वनस्थस्याक्रतुर्यज्ञः क्रत्वादिर्ग्रहिणोऽखिलः ।**
**शुश्रूषाद्यात्मको यज्ञो विहितो ब्रह्मचारिणः ।**
**विद्याऽभयादिदानं च सर्वेषामपि सम्मतम् ।**
**गृहिणो वित्तदानं तु वनस्थस्यान्नपूर्वकम् ।**
**सर्वैः कार्यं तपो घोरमिति सर्वे त्रिकर्मिणः ॥" इति नारदीये ।**

***प्रका०*—** तत्र कस्य को यज्ञः किं दानम् इत्यपेक्षायामुच्यते **वाचिक इत्यादि** । अक्रतुर्यज्ञ इत्यस्याग्निहोत्रादियज्ञो ज्योतिष्टोमादिव्यतिरिक्त इत्यर्थः । गृहिणो वित्तदानादिकं च देयं न वित्तनियम इत्युच्यते **गृहिण इत्यनेन** ।

***न्या०दी०*—** विश्वस्य चक्रान्तर्भावात् कर्माकरणेन चक्राप्रवृत्तौ विश्वहन्तृत्वं चेत् गार्हस्थ्येतराश्रमाननुष्ठानं प्रसज्येत । कर्मणां यज्ञदानतपोरूपेण त्रैविद्यादाश्रमान्तरे च यज्ञाद्यभावादित्यत आह **वाचिक इति** ॥ **वाचिकः** स्वाध्यायादिः । **मानसो** ध्यानादिः । **विशेषत इति** ॥ सर्वसाधारण्येऽपि अन्येषामन्येऽपि सन्त्येषामयमेवेत्यर्थः । अन्येषां यज्ञान्तरमाह **वनस्थस्येति** ॥ अक्रतुः पश्वालम्भनहीनः । शुश्रूषाद्यात्मक इत्यादिपदेनाग्निपूजा । विद्याभयादीत्यादिपदेन स्वभोक्तव्यान्नदानम् । अन्नपूर्वकं विद्याभयादिदानम् । स्वभोक्तव्यादधिकमापाद्यान्नदानमिह विवक्षितम् । अन्नं तु मूलफलादि ।

**गीतातात्पर्यनिर्णयः**

**ब्रह्माक्षरशब्दार्थयोर्व्यत्यासे "तस्मात्सर्वगतं ब्रह्म" इति प्रत्यभिज्ञाविरोधः चक्रकाऽप्रवेशश्च ॥ १४-१६ ॥**

*प्रका०*— "कर्म ब्रह्मोद्भवम्" इत्यत्र ब्रह्मशब्देन विष्णुरुच्यते न वेदः । तस्मात्सर्वगतं ब्रह्म नित्यं यज्ञे प्रतिष्ठितमित्युपरितनवाक्ये विष्णोः ब्रह्मणः प्रत्यभिज्ञानात् । वेदपक्षे अनया प्रत्यभिज्ञया विरोधः स्यात् । "ब्रह्माक्षरसमुद्भवमि"त्यत्र अक्षरशब्देन वर्णात्मकत्वेन प्रसिद्धो वेद उच्यते, न विष्णुः । वेदस्य भूतैः प्राणिभिरुच्चार्यमाणत्वेन चक्रकप्रवेशः स्यात् । विष्णुपक्षे चक्रकाऽप्रवेशादित्याह **ब्रह्मेति** ॥

*न्या०दी०*— 'ब्रह्माक्षरसमुद्भवम्' इत्यत्र ब्रह्मपदेन वेदोऽक्षरपदेन ब्रह्मोच्यत इत्यपव्याख्यानं हेत्वन्तरेण प्रत्याख्याति **ब्रह्मेति** ॥ यद्यत्र ब्रह्मपदेन वेदोऽक्षरपदेन ब्रह्मोच्यते तर्हि उपरि ब्रह्मणः "तस्मात्सर्वगतं ब्रह्म" इति ब्रह्मपदेन प्रत्यभिज्ञा न स्यात् । यत्पदेन यन्न प्रकृतं तस्य तत्पदेन कारणविशेषं विना परामर्शादर्शनात् । न च तत्र वेदपरामर्शः । तस्य यज्ञे प्रतिष्ठितत्वोक्तेरनुपयुक्तत्वादिति भावः । दोषान्तरं चाह **चक्रेति** ॥ वेदात् कर्मणामुत्पत्त्यभावाद्ब्रह्मणो वेदस्योत्पत्त्यभावात् भूतेभ्यो ब्रह्मणो जननाभावाद् अर्थान्तरकल्पने वेदादेश्चक्राप्रवेशः स्यात् । व्यत्त्यर्थाङ्गीकारे बहूनां पदानाममुख्यार्थतापात इति भावः ॥

*भा०दी०*— **हेत्वन्तरेणेति** । व्याख्यानरूपस्मृतिविरोधापेक्षया प्रत्यभिज्ञाविरोधरूपहेत्वन्तरेणेत्यर्थः ॥ **अनुपयुक्तत्वादिति** । स्वपक्षे तूक्त उपयोग इति भावः ॥ **उत्पत्त्यभावादिति** । वेदस्य नित्यत्वादिति भावः ॥ **भूतेभ्य इति** । चक्रसिद्ध्यर्थमक्षरं भूतोद्भावमिति वाच्यम् । न हि अक्षरशब्दितं ब्रह्म भूतैरुत्पद्यत इत्यर्थः । **अर्थान्तरकल्पन इति** । परमेश्वरवाक्यभूतात् वेदाख्यात् ब्रह्मणः पुरुषाणां कर्मणि प्रवृत्तिः । ततः कर्मनिष्पत्तिः । ततः पर्जन्यः । ततोऽन्नम् । ततो भूतानि । भूतानां च कर्मप्रवृत्तिरित्येवं कल्पन इत्यर्थः । आदिपदेन परब्रह्मग्रहः । ननु अक्षरं भूतसम्भवमित्येवास्तु । सम्भवशब्देन व्यक्तिर्गृह्यतामित्यत आह **व्यत्त्यर्थेति** ॥

**गीता**

**यस्त्वात्मरतिरेव स्यादात्मतृप्तश्च मानवः ।**
**आत्मन्येव च सन्तुष्टस्तस्य कार्यं न विद्यते ॥ १७ ॥**

*वि०वि०*— यद्येवं कर्माकरणे हानिस्तत्करणे लाभस्तर्हि परमेश्वरेऽतीव मनःसमाधानमसम्प्रज्ञातसमाधिलक्षणं न कार्यं स्यात् । तत्र कर्मलोपस्यावश्यम्भावादित्यत आह **यस्त्विति** । यस्तु आत्मरतिः आत्मनस्तद्दर्शनेन रतिर्यस्य स आत्मरतिः । अत्र सर्वत्रात्मशब्दः परमात्मवाची । एवशब्देनान्यत्र रतिर्निरस्यते । सा चान्यत्रारतिः सर्वात्मनेत्याह **आत्मतृप्त इति** । आत्मना तृप्तोऽन्यत्र सर्वात्मनाऽलम्बुद्धिमान् । न केवलमात्मरत्याख्येन सुखेन; किन्तु, प्रसन्नेन परमात्मनैवेति दर्शयितुं आत्मग्रहणम् । केनालम्बुद्धिरित्याशङ्क्य पूर्वोक्तेनात्मरत्याख्येन सुखेनेत्याह **सन्तुष्ट इति** । सन्तोषाख्यात्मरतिः । केनाप्यजाता तादृशीत्यपेक्षायामसम्प्रज्ञातसमाधिलक्षणया परमात्मस्थित्येत्याह **आत्मन्येवेति** । तत्स्थ एव सन् सन्तुष्ट इत्यर्थः । नान्यत् किमपि सन्तोषकारणमित्यवधारणम् । ज्ञानिन एवासम्प्रज्ञातसमाधिर्भवतीति दर्शयितुं मानव इत्युक्तम् । 'मनु अवबोधने' इति स्मरणात् । तस्यासम्प्रज्ञातसमाधिस्थस्यैव कार्यं न विद्यत एव । उक्तं च—

'स्थितप्रज्ञस्यापि कार्यो देहादिर्दृश्यते यदा ।<br>स्वधर्मो मम तुष्ट्यर्थः सा हि सर्वैरपेक्षिता ॥' इति ॥

*वा०ल०*— 'यस्त्वात्मरतिरेव' इत्यत्र आत्मनि परमात्मनि रतिः रागो यस्य आत्मतृप्तः परमात्मध्यानेनान्यत्रालम्बुद्धिं प्राप्तः । आत्मन्येव सन्तुष्टः परमात्मदर्शनादेव सन्तोषं प्राप्तः असम्प्रज्ञातसमाधियोगस्थ इत्यर्थः । कार्यं बहिःकार्यम् ॥

*सा०सं०*— एवं 'न कर्मणामनारम्भात्' इत्यादिना 'सहयज्ञाः' इत्यादिना चोक्तदिशा कर्माकरणतत्करणयोर्हानिलाभौ चेत्, तर्हि परमेश्वरेऽसम्प्रज्ञातसमाधिरूपं मनःसमाधानमपि न कार्यं प्रसज्येत । तत्र कर्मलोपस्यावश्यकत्वादित्यत आह **यस्त्विति** । तुशब्दः समाधिस्थत्वविशेषसूचकः । यस्त्वसम्प्रज्ञातसमाधिस्थः **मानवः** अपरोक्षज्ञानी । मनुतेरवण् । **आत्मरतिरेव** । अत्रात्मशब्दः सर्वोऽपि परमात्मपरः । **आत्मनि** आत्मनो वा रतिमान् दर्शनजन्यसुखवान् । परमात्मविषयकदर्शनजन्यसुखवानेव न त्वन्यत्र रतिमानित्येवकारार्थः । भगवतोऽन्यत्र रतिराहित्यं न प्रायेणेति मन्तव्यम्, किन्तु सर्वात्मनेत्याह **आत्मतृप्त इति** । आत्मना तृप्तः परमात्मप्रसादेनैव । तदन्यत्र सर्वात्मनाऽलम्बुद्धिमानित्यर्थः । अन्यत्रालम्बुद्धिरपि भगवत्प्रसादायत्तेति भावः । किञ्च अतिशयितं सुखं दत्वा भगवानन्यत्र सर्वात्मनाऽलम्बुद्धिम् उत्पादयतीत्यतोऽन्यत्रालम्बुद्धौ हेतुतया प्रागुक्तरत्याख्यमेव सुखमाह **आत्मन्येव च सन्तुष्ट इति** । सम्यक् तुष्टिमान् **सन्तुष्टः** महासुखवानित्यर्थः । हेतुगर्भमिदम् । भगवद्दर्शननिमित्तकमहासुखत्त्वादन्यत्रालम्बुद्धिमानिति । भगवद्दर्शननिमित्तिकं महासुखं केन हेतुना स्यादित्यतः सन्तुष्टत्वे हेतुः **आत्मन्येवेति** । अधिकरण-

सप्तमी । आत्मनि स्थित एव सन् सन्तुष्ट इति । असम्प्रज्ञातसमाधिरूपयाऽऽत्मनि स्थित्यैव सन्तुष्टो न त्वन्येन केनापीत्येवकारार्थः । अत्र **मानव** इति उक्तिरपरोक्षिण एवासम्प्रज्ञातसमाधिरिति द्योतयितुम् । यस्त्वेवंरूपः **तस्य कार्यं** कर्तव्यं सन्ध्यावन्दनादिकं किमपि कर्म । **न विद्यते** ॥

*अ०प्र०*— तदेवं न कर्मणामनारम्भादित्यादिना ज्ञस्यान्तःकरणशुद्ध्यर्थं कर्मयोगमुक्त्वा ज्ञानिनो कर्मानुपयोगमाह **यस्त्विति** द्वाभ्याम् ।

यस्तु[१], मानवः[२], आत्मरतिरेव[३], स्यात्[४], आत्मतृप्तश्च[५], स्यात्[६], आत्मन्येव च[७], सन्तुष्टः स्यात्[८], तस्य कार्यं न विद्यते[११] इत्यन्वयः ।

यस्तु[१], मानवः = मनु ज्ञानमस्यास्तीति तथा । यद्वा मनोरयं स्वामीति वा मानवः[२], आत्मरतिरेव = आत्मनि परमात्मनि आत्मना वा रतिर्यस्य सः परमात्मज्ञानवानित्यर्थः । एवशब्देनान्यत्र रतिर्निरस्यते[३], एवं स्यात्[४], आत्मतृप्तश्च = आत्मना तत्प्रसादेन तृप्तः सर्वात्मना अलंबुद्धिमानित्यर्थः । रतिदर्शनादिजन्यं सुखं तृप्तिः अलम्बुद्धिः, न केवलमात्मरत्याख्यसुखेनान्यत्रालम्बुद्धिः किन्तु प्रसन्नेन परमात्मनैवेति दर्शयितुमात्मग्रहणं ततः । आत्मतृप्तश्च स्यात् आनन्दात्मन्येव तृप्तश्च स्यात्[७], आत्मन्येव तत्स्थ एवेति, सन् सन्तुष्टः स्यादित्यर्थः । तस्य तृप्तिजनकं सुखं सन्तोषः सन्तोषाख्यात्मतररतिरलम्बुद्धिकारणभूताः नान्यत्किमपि सन्तोषकारणमित्येवशब्दार्थः । यद्वा भोगापेक्षारहितः[८] । तस्य = तस्यैव यतः परमात्मनि निरतः परमात्मना तृप्तः परमात्मन्येव सन्तुष्टः तेन सर्वोऽपि कर्तव्यपुरुषार्थो कृतः तस्मात्तस्यैव[९], कार्यं = क्रियमाणकर्तव्यता[१०], न विद्यते = नास्तीत्यर्थः[११], अन्यस्य तु ज्ञानिनः कर्मास्ति ॥ १७ ॥

**भाष्यम्**

**तर्ह्यतीव मनःसमाधानमपि न कार्यमित्यत आह— यस्त्विति । रमणं = परदर्शनादिनिमित्तं सुखम् । तृप्तिः = अन्यत्र अलंबुद्धिः । सन्तोषः = तज्जनकं सुखम् । 'सन्तोषस्तृप्तिकारणम्' इत्यभिधानात् । परमात्मदर्शनादिनिमित्तं सुखं प्राप्तः । अन्यत्र सर्वात्मनाऽलम्बुद्धिं च । महच्च तत् सुखम् । तेनैवान्यत्र अलम्बुद्धिरिति दर्शयति— आत्मन्येव च सन्तुष्ट इति । तत्स्थ एव सन् सन्तुष्ट इत्यर्थः । नान्यत् किमपि सन्तोषकारणमित्यवधारणम् । आत्मना तृप्तः । न ह्यात्मन्यलम्बुद्धिर्युक्ता । तद्वाचित्वं च— "वयं तु न वितृप्याम उत्तमश्लोकविक्रमैः" इति प्रयोगात् सिद्धम् । अध्याहारस्त्वगतिका गतिः ।**

*प०टी०*— ननु यदि कर्माकरणेऽघायुष्ट्वं तर्हि नेश्वरेऽत्यन्तमनस्समाधानं कार्यम् । कर्मलोपापातादित्याशङ्क्य, उत्तरत्वेन श्लोकमवतारयति **तर्हीति** । रत्यादिशब्दान् सामान्यतो व्याचष्टे **रमणमिति** । 'तोष''रमण'शब्दयोरर्थभेदे प्रमाणमाह **सन्तोष इति** । तत्र 'आत्मरति' पदं व्याचष्टे **परमात्मेति** । 'आत्मरतिरेव' इत्यवधारणादन्यत्रालम्बुद्धिसिद्धेः किं द्वितीयविशेषणेन ? इत्यत आह **अन्यत्रेति** । किं निमित्तमन्यत्रालम्बुद्धेः ? इत्यतस्तृतीयपादमवतार्य व्याचष्टे **महच्चेति** । **तत्** इत्यात्मरत्याख्यम् । ननु 'तृप्ति'पदस्यान्यत्रालम्बुद्धिवाचित्वे कथम् 'आत्म'शब्देन समासः ? इत्यत आह **आत्मनेति** । न केवलमात्मरत्याऽन्यत्रालम्बुद्धिः, किन्तु तत्प्रसादादेवेत्यर्थः । प्रथमतृतीयात्मशब्दवत् मध्यमात्मशब्दोऽपि सप्तम्यन्तः किं न स्यात् ? इत्यत आह **न हीति** । 'तृप्ति'-शब्दस्यालम्बुद्धिवाचित्वे भवेदयुक्तिः । तदेव कुतः ? इत्यत आह **तद्वाचित्वं चेति** । उत्तमश्लोकविक्रमैः, तदन्यत्र न वितृप्याम इत्यर्थेनालम्बुद्धिवाचितेत्यत आह **अध्याहारस्त्विति** ।

*न०टी०*—नन्वेवं चेदसम्प्रज्ञातसमाधौ सत्यां तत्कालीनकर्मलोपेनाघायुष्ट्वप्रसङ्गात्, हरावतीव मनःसमाधानमपि न कार्यमित्याशङ्क्याह **तर्हीति** । तत्र तावत् 'तृप्ति''सन्तोष'शब्दयोरर्थभेदोऽप्यस्तीति सप्रमाणकं वदति । 'तृप्ति''सन्तोष' शब्दार्थानसाधारणानाह **रमणमित्यादिना** । स्वान्यमात्रे परशब्दप्रसिद्धेः, प्रस्तुते परः कः ? इत्यत आह **परमात्मेति** । ईषदलम्बुद्धावपि तृप्तिशब्दप्रयोगात् तद्व्यावृत्त्यर्थं योग्यं विशेषमाह **अन्यत्रेति** । अथ भगवदन्यत्र सर्वात्मनाऽलम्बुद्धौ किं कारणम् ? इत्याकाङ्क्षोत्तरत्वेन तृतीयपादमवतारयति **महदिति** । 'सं'शब्दव्याख्या महच्छब्दः । तदित्यात्मरत्याख्यं सुखम् । ननु यदात्मरत्याख्यमहत्सुखमन्यत्रालम्बुद्धिकारणम्, तत् केन हेतुना सिद्ध्यतीत्याकाङ्क्षोत्तरत्वेन 'आत्मन्येव' इति शब्दं योजयति **तत्स्थेति** । एतदेव विवृणोति **नान्यदिति** । तस्मिन्नेव श्रवणाद्यभ्यासलक्षणात् तत्स्थत्वादन्यद्दर्शनादिनिमित्तसन्तोषप्राप्तौ न कारणमित्यर्थः । न केवलं स्वकृततद्विषयश्रवणाद्यभ्यासरूपतत्स्थितत्वात् तद्दर्शनादिनिमित्तं सुखमन्यत्रालम्बुद्धिकारणं प्राप्नोति । किन्त्वनन्तप्रसादादेवेति भावेन 'आत्मतृप्त'पदं व्याचष्टे **आत्मनेति** । नन्वितरवन्मध्यात्मशब्देऽपि सप्तमी किं न स्यात् ? इत्यत आह **न हीति** । ननु 'तृप्ति'शब्दस्यालम्बुद्धिवाचित्वे सप्तम्ययुक्ता । तदेव कुतः ? इत्यत आह **तद्वाचित्वं चेति** । ननूत्तमश्लोकविक्रमैः श्रूयमाणैर्निमित्तैरन्यत्र न वितृप्याम इत्यध्याहारे सति नालम्बुद्धिवाचित्वं 'तृप्ति'शब्दस्येत्यत आह **अध्याहारस्त्विति** ।

*प्र०दी०*— एवमज्ञानिनः कर्म कर्तव्यमित्युक्तम् । इदानीं ज्ञानिनः कर्तव्याभावमाहेति परव्याख्यानमसदिति भावेन सङ्गतिमाह— **तर्हीति** । यद्येवं कर्माकरणे हानिस्तत्करणे लाभस्तर्ही-

त्यर्थः । परमेश्वरेऽतीवमनस्समाधानमसम्प्रज्ञातसमाधिरित्यर्थः । न कार्यं प्रसज्येतेति शेषः । तत्र कर्मलोपस्यावश्यंभावादिति भावः । अत्र रतितृप्तिसन्तोषशब्दांस्तावद्व्याचष्टे— **रमणमिति** । परेति स्वरूपकथनम् । न शब्दार्थान्तर्भूतम् । तथा च षष्ठमेऽभिधानं वक्ष्यते । तथात्वे आत्मशब्देन जीवनिराकरणं च व्यर्थं स्यात् । यद्दर्शनादिनिमित्तं सुखं ततोऽन्यत्र । तज्जनकं तृप्तेर्जनकम्' । तृप्तिकारणं सुखमिति शेषः । इदानीमात्मशब्दस्य जीवविषयत्वप्रतीतिनिरासार्थं 'आत्मरतिः' इति समस्तं पदं व्याख्याति— **परमात्मेति** । प्राप्त आत्मरतिरिति शेषः । अनेन आत्मनि रतिः यस्येति विग्रहः सूचितः । आत्मनो रतिः यस्येति वा । एवमुत्तरावप्यात्मशब्दौ परमात्मार्थौ ज्ञातव्यौ । नन्वेवं सति तृप्तिशब्दस्य परमात्मनोऽन्यत्रालम्बुद्धिरर्थः स्यात् । ततश्चेदं न वक्तव्यम् । 'आत्मरतिरेव' इत्यवधारणेनान्यरतिनिरासेन पौनरुक्त्यप्रसङ्गादित्यत आह— **अन्यत्रेति** । अलम्बुद्धिं च प्राप्तः तृप्तशब्देनोक्त इति शेषः । अलम्बुद्धिरिति पाठे तृप्तिशब्दार्थ इति शेषः । अवधारणेनैवान्यत्र रत्यभावे लब्धेऽपि सर्वात्मनाऽन्यत्रालम्बुद्धिं वक्तुं 'तृप्त' इति पुनर्वचनम् । अवधारणस्यान्यत्रालम्बुद्धि-मात्रद्योतनेन चरितार्थस्य 'सर्वात्मना' इत्यत्राप्रवृत्तेरिति भावः । ननु 'सन्तुष्ट' इत्यनेनालम्बुद्धिजनकं सुखं प्राप्त इत्युच्यत इत्युक्तम् । तत्किं विषयजन्यमुतात्मरत्याख्यम् । नाद्यः । विरोधात् । न द्वितीयः । तस्यात्मरतिशब्देनोक्ततया पुनरुक्तिप्रसङ्गात् । कथं च तस्यान्यत्रालम्बुद्धिजनकत्वमित्यत आह— **महच्चेति** । चशब्दो हेतौ । तदात्मरत्याख्यम् । प्रागुक्तमेव सुखं पुनरन्यत्रालम्बुद्धिकारण-त्वेनोच्यते । अतो न दोषः । तस्य च महत्त्वं संशब्देनोक्तम् । अतस्तत्कारणत्वं चोपपन्न-मित्यर्थः । आत्मरतिः सन्तोषशब्देन गृह्यते चेत्पुनरात्मनीति व्यर्थमित्यत आह— **तत्स्थ एवेति** । सन्तोषाख्यात्मरतिः केनास्य जायत इत्यपेक्षायामसम्प्रज्ञातसमाधिलक्षणया परमात्मनि स्थित्येति ज्ञापयितुं 'आत्मनि' इत्युक्तमित्यर्थः । अवधारणस्य प्रयोजनमाह— **नान्यदिति** । अन्यदसम्प्र-ज्ञातसमाधिरूपात् तत्स्थत्वात् । एतेनात्मरतिरेवेत्यवधारणेनास्य पुनरुक्तता परिहृता । नन्वात्मतृप्त इति कोऽयं समास इत्यत आह— **आत्मनेति** । न केवलेनात्मरत्याख्येन सुखेन किन्तु प्रसन्नेन परमात्मनैवेत्यर्थः । पञ्चमीसमासः कथं न स्यादिति चेन्न । असामर्थ्यात् । अन्यत्रेत्यनेन ह्यस्य सामर्थ्यम् । न तु तृप्तशब्दार्थेन । तृप्तशब्दार्थ एवान्यत्रार्थोऽन्तर्भूतोऽस्तीति चेन्न । तस्य प्रकरण-लब्धस्य तदन्तर्भावाभावात् । अन्यथा ''वयं तु न वितृप्यामः'' इत्यत्र ततोऽन्यत्रालम्बुद्धिं न प्राप्नुम इत्यर्थप्रसङ्गात् । अस्तु तर्हि सप्तमीसमास इति नेत्याह— **न हीति** । पूर्वविशेषणविरोधात् । प्रमाणान्तरविरोधाच्चेति भावः । स्यादयं दोषो यदि तृप्तिशब्दस्यालम्बुद्धिवाचित्वं स्यात् । तदेव कुत इत्यत आह— **तद्वाचित्वं चेति** । नन्वत्र तृप्तिशब्दः प्रीत्यर्थः । न चैवं सत्यर्थानुपपत्तिः ।

उत्तमश्लोकविक्रमैः श्रूयमाणैर्निमित्तैरन्यत्र प्रीतिं न प्राप्नुम इत्यध्याहारेणोपपत्तेरित्यत आह— **अध्याहारस्त्विति** । गत्यन्तररहिता गमनिका । अध्याहारो ह्यश्रुतशब्दकल्पनम् । तच्च कल्पकसद्भावे न दोषः । अन्यथा दोष एव । कल्पकं च गत्यन्तरराहित्यम् । अन्यथाऽनुपपत्तिरिति यावत् । अत्र त्वलम्बुद्ध्यर्थत्वे गृहीते विनाऽप्यध्याहारेण वाक्यार्थोपपत्तेरयुक्तोऽसाविति भावः । षष्ठीसमासस्तु 'पूरणगुणसुहितार्थ' इति प्रतिषिद्धः ।

*भा०दी०*— अत एव सुहितार्थेत्यन्तप्रतीक्षोक्तिः **उपपादितमिति** । 'किमासीत व्रजेत किमि'त्येतत्तात्पर्यवर्णनप्रस्तावे पूर्वाध्याय इत्यर्थः । **समासस्त्विति** । आत्मनि रतिर्यस्येत्यात्म-रतिसमासस्त्वित्यर्थः । रतिकर्तृत्वस्य समासलभ्यत्वात्समासस्त्वित्युक्तम् ।

ननु यो भुङ्क्ते इत्यादि दृष्टान्त इव यत्पतिते तद्गुण इत्यपि दृष्टान्तोऽस्ति । तथा च कथं निर्णय इत्यत आह **अयं भाव इति** । भाष्यकारस्येति योज्यम् । व्यवच्छेद्यं समकालमिति स्वसमानकालीनं व्यवछिनत्ति व्यावर्तयति । यत् तद्व्यवच्छेद्य समानकालभोजनं समानकालीनं व्यावर्तयतीति तद्विशेषणं पतनं तु स्वसमानकालीनमेवागुरुत्वं व्यावर्तयति । पतनस्य कादाचि-त्कत्वाद्गुरुत्वस्यान्यदपि सत्त्वादतस्तदुपलक्षणमित्यर्थः । **विशेषज्ञानेनेति** । यावत्कालमन्यव्यावृत्ति-बुद्धिहेतुत्वादित्यर्थः । यद्वा स्वप्रकारकधर्मिज्ञानहेतुत्वादित्यर्थः । **उप्रत्यय इति** । औणादिक इति भावः । **अणप्रत्यय इति** । तद्धिता (४-१-७६) इति वचनोक्तिबलादिति ज्ञेयम् । तथा च जगुणगुणजवादेशो णित्वात्तद्धितेष्वचामादेः इत्यादिवृद्धौ रूपमिति भावः । अणप्रत्यय इति 'उणादयो बहुलम्' (३-३-१) इत्युक्ते औणादिके कर्तर्यणुप्रत्यये णित्वादत उपधाया इति वृद्धौ मन्यत इति मनुत इति वा मानव इति रूपमिति भावः । **ऋष्यादिव्यावृत्तिरिति** । तेषामप्यसम्प्रज्ञातसमाधि-मत्त्वात् ज्ञानित्वाच्च तद्व्यावृत्तिरनिष्टेति भावः । तथा व्याख्याने च व्यर्थमेव मानवपदं यस्तु तस्येत्येतावता पूर्तेरित्याह **वैय्यर्थ्यं चेति** । कुत एवं व्याख्येत्यतो ज्ञापकमाह **अस्यैवेतीति** । प्रमाणवचने तस्यैवेत्यवधारणाद्विष्णुरेवात्र विवक्षिता न स्वात्मरतिः । तस्य कार्यान्तरसत्त्वादि इतिशब्दो यस्त्वितिश्लोकव्याख्यासमाप्तौ ॥ १७ ॥

**भाष्यम्**

**'आत्मरतिरेव' इत्यवधारणाद् असम्प्रज्ञातसमाधिस्थस्य एव कार्यं न विद्यते ॥**

"स्थितप्रज्ञस्यापि कार्यो देहादिर्दृश्यते यदा ।
स्वधर्मो मम तुष्ट्यर्थः सा हि सर्वैरपेक्षिता ॥

**इति वचनाच्च पञ्चरात्रे । अन्यदाऽन्यरतिरपीषत्सर्वस्य भवति । न च तत्र अलम्बुद्धिमात्रमुक्तम् । 'आत्मतृप्त' इति पृथगभिधानात् । कर्तृशब्दश्च कालावच्छेदे चायं प्रसिद्धः– "यो भुङ्क्ते स तु न ब्रूयात्" इत्यादौ । अतः असम्प्रज्ञातसमाधावेवैतत् । मानव इति ज्ञानिन एव असम्प्रज्ञातसमाधिर्भवतीति दर्शयति । 'मनु अवबोधने' इति धातोः । परमात्मरतिश्चात्र विवक्षिता । "विष्णावेव रतिर्यस्य क्रिया तस्यैव नास्ति हि ॥" इति वचनात् ॥ १७ ॥**

***प०टी०***— नन्वात्मरतेः कार्याभावे ज्ञानिमात्रस्य कार्याभावापात इत्यत आह **आत्मेति** । अत्रैव प्रमाणमाह **स्थितेति** । अवधारणेन कथमन्यनिरासः ? इत्यत आह **अन्यदेति** । नन्वन्यरतित्वेऽप्यन्यत्राप्यलम्बुद्धिमत्त्वादात्मरतिरेव सर्वोऽपि ज्ञानीत्यत आह **न चेति** । न चात्र कार्याभावायालम्बुद्धिमात्रमुक्तम् । तथा सतीषदलम्बुद्धेः प्रथमविशेषणेनैव सिद्धेः पृथगभिधानवैयर्थ्यम् । अतः सर्वात्मनाऽलम्बुद्धिमत एव कार्याभाव इत्यर्थः । ननु तथाऽपि यदाकदाचिदसम्प्रज्ञातसमाधीनां ज्ञानिनां न कार्यं कदापि । 'तत्काल एव' इत्यवच्छेदकशब्दाभावादित्यत आह **कर्तृशब्द इति** । आत्मरतिरेव इत्युक्तमुपसंहरति **अत इति** । 'मानव'पदं न देवादिव्यावृत्त्यर्थमित्याह **मानव इति** । अपरोक्षज्ञानशून्यानां कर्माभावो दूरोत्सारित इति ज्ञापनार्थमेतत् । आत्मपदेन जीव इत्यपव्याख्यां प्रत्याख्याति **परमात्मेति** ॥

***न०टी०***—ननु 'आत्मरति'शब्देन परमात्मदर्शननिमित्तं सुखम्, **आदि**शब्देन तत्स्मृतिनिमित्तं च सुखमुच्यते । तत्र सम्प्रज्ञातसमाधेः स्मृतिनिमित्तसुखसम्भवेन तस्यापि कार्याभाव इत्यत आह **आत्मेति** । एतदेव दृढयति **स्थितेति** । सम्प्रज्ञातसमाधेः स्थितप्रज्ञस्यापि कार्यमस्ति किमुत सम्प्रज्ञातसमाधिमात्रस्येत्यर्थः । ननु परमात्मानं ध्यायतो देहादिदर्शनेऽपि रत्यभावात् कथं तस्य न कार्यम् ? इत्यत आह **अन्यदेति** । ननु परमात्मानं ध्यायतोऽन्यत्रालम्बुद्धेर्विद्यमानत्वात् मनश्चापल्येनेषद्रत्यां सत्यामप्यसावात्मरतिरेवेत्युच्यते । अतो न कार्यं तस्येत्यत आह **न चेति** । ननु मा भूदवधारणमात्रविषयम्, किन्त्वात्मरतिविषयम् । तथाविधो यः सकृदात्मरतिरेव स्यात् तस्य कदाऽपि कार्यं न स्यात् । अत्र कालावच्छेदकशब्दाभावादित्यत आह **कर्तृशब्द इति** । तत्र यथा यावद्भुङ्क्ते तावदेव मौनम्, तद्वद्यावदात्मन्येव रमते तावदेव तस्य कार्यं नेत्यर्थः । उपसंहरति **अत**

**इति** । अपरोक्षज्ञानात् प्रागसम्प्रज्ञातसमाधिरेव नास्ति । अन्यथा विशेषणवैयर्थ्यं स्यादित्याह **मानव इति** । विषयान् परित्यज्य यः स्वात्मन्येव रमते तस्य कार्यं नेत्येतन्निरीश्वरसाङ्ख्यमतं निरस्यति **परमात्मेति** । न केवलमसम्प्रज्ञातसमाधिरेव विवक्षिताऽत्र, किन्तु परमात्मरतिश्चेत्यर्थः ॥

***प्र०दी०***— अपव्याख्यानं निराचष्टे— **आत्मरतिरेवेति** । न ज्ञानिमात्रस्येत्येवार्थः । इतोऽपि न ज्ञानिमात्रस्य कार्याभाव इत्याह— **स्थितप्रज्ञस्यापीति** । स्वधर्मः कार्य इति सम्बन्धः । 'आत्मरतिरेव' इत्यवधारणेऽपि कुतो न ज्ञानिमात्रविषयमेतदित्यत आह— **अन्यदेति** । अवधारणेन ह्यनात्मरतिर्व्यावृत्यते । असम्प्रज्ञातसमाधिकालादन्यदा सर्वस्य ज्ञानिनोऽपीषदन्यरतिरपि भवतीत्युपपादितम् । अतोऽसम्प्रज्ञातसमाधिस्थव्यतिरिक्तानां ज्ञानिनामप्यवधारणेन व्यावर्तितत्वान्न तद्विषयमेतदिति भावः । ननु ज्ञानिनामन्यरतौ विद्यमानायामपि तत्रालम्बुद्धिरप्यस्तीति 'आत्मरतिरेव' इत्यवधारणमुपपद्यत इत्यत आह— **न चेति** । तत्र श्लोके । तत्र कार्याभावे । प्रयोजकत्वेन आत्मनोऽन्यत्रालम्बुद्धिमात्रमल्पालम्बुद्धिः । रतिसहचरितालम्बुद्धिरिति यावत् । नोक्ता । किं तर्हि ? सर्वात्मनाऽलम्बुद्धिः । कुत इत्यत आह— **आत्मेति** । अवधारणेनान्यत्रालम्बुद्धौ लब्धायामपि यत्पृथक् 'आत्मतृप्त' इत्यभिधत्ते तेन सर्वात्मनाऽलम्बुद्धिरवधारणेनाभिप्रेतेति ज्ञायत इति प्रागुक्तम् । अतो ज्ञानिमात्रे नेदमुपपद्यत इति भावः ।

अस्त्वात्मरतिरेव इत्येतदसम्प्रज्ञातसमाधिस्थ एव सम्भवतीति । तथाऽपि "यत् पतति कदाचित् तद्गुरु" इतिवत् य एवंविधः कदाचित् तस्य कार्यं सर्वदा न विद्यत इत्येवं व्याख्याने ज्ञानिमात्रस्य कार्याभावः सेत्स्यति । न ह्यत्र यदैवं तदेति कालावच्छेदकशब्दोऽस्ति । आत्मरतिरिति समासस्तु रतेः कर्तारमेवाचष्ट इत्यत आह— **कर्तृशब्द इति** । अयं च, यदा तदेति रहितोऽपीत्यर्थः । आदिग्रहणेन "यो दारान् प्रतिगृह्णाति स गृही" इत्यादेः परिग्रहः । अयं भावः । "तस्य कार्यं न विद्यत" इत्युक्तेऽतिप्रसक्तौ सत्यामन्यव्यावर्तकं "यस्त्वात्मरतिरेव स्यात्" इत्यनेनोक्तम् । व्यावर्तकं च द्विविधं भवति । विशेषणमुपलक्षणं च । तत्र व्यवच्छेद्यसमानकालं विशेषणम् । यथा सिद्धान्त्युदाहृतं भोजनम् । अन्यथा तूपलक्षणम् । यथा पूर्वपक्ष्युदाहृतं पतनम् । तत्र विशेषणं मुख्यम् । विशेषज्ञानहेतुत्वात् । अन्यदमुख्यम् । वैपरीत्यात् । मुख्यामुख्ययोश्च मुख्ये सम्प्रत्ययः । न चात्र विशेषणत्वग्रहणे बाधकमस्ति । येनोपलक्षणमेतदिति प्रतीम इति । कर्तृशब्द इत्युक्तस्य फलमाह— **अत इति** । एतत्कार्यराहित्यम् । 'समाधावेव' इत्युक्त्या समानकालतां सूचयति ।

नन्वसम्प्रज्ञातसमाधिस्थस्य कार्याभावे व्याख्यायमाने कदाचिदपरोक्ष-ज्ञानरहितस्याप्यसम्प्रज्ञातसमाधिसम्भवात्कार्याभावप्रसङ्ग इति चेन्न । अपरोक्षज्ञानिन एवासम्प्रज्ञातसमाधिर्भवति, नान्य-

स्येत्यस्यार्थस्य 'मानव' इति पदेन भगवतैव दर्शितत्वादित्याह— **मानव इति** । मानव इति कथं ज्ञानिनो वाचकमित्यत आह— **मन्विति** । धातोः व्याख्यानादिति शेषः । अस्माद्धातोः भाव उप्रत्ययः । ततो मनुरवबोधः अस्यास्तीत्यर्थे, मनोरयमाश्रय इत्यर्थे वाऽणूप्रत्ययः । यद्वा धातोरेवाऽणूप्रत्ययः । मनुष्य इति व्याख्यायां ऋष्यादिव्यावृत्तिर्वैयर्थ्यं चापद्येत । आत्मशब्दस्याप्यन्यथाव्याख्यां निराकरोति— **परमात्मेति** । चशब्दोऽवधारणे । न स्वात्मरतिरित्यर्थः । तस्यैवेत्यवधारणात् ॥

*भा०र०*— **इति परव्याख्यानमिति** । तथा च सङ्करभाष्यम् "यज्ञार्थाद् (३.१९) इत्यादिना "मोघं पार्थ स जीवति" (३.१६) इत्यनेनाधिकृतस्यानात्मविदः कर्मानुष्ठाने बहु कारणमुक्तम् । तदकरणे दोषश्चोत्कीर्तितः । अथेदानीमात्मज्ञाननिष्ठानां तन्निष्ठाव्यतिरेकेण नान्यत् कर्तव्यमस्तीति 'यस्त्वात्मरतिः' इत्यनेन आह" इति ।

**असम्प्रज्ञातसमाधिः** बाह्यार्थज्ञानशून्यतया भगवति मनःप्रणिधानम् । तेन "निर्द्वन्द्वो नित्यसत्त्वस्थः" (२.४५) इति गीतायामेव कर्मकरणकाले भगवति मनोऽवस्थापनस्योक्तत्वात् कथमापादनमेवं कृतम् ? इति चोद्यं निरसनीयमित्युक्तं भवति । तथा च वक्ष्यति "असम्प्रज्ञातसमाधिस्थस्यैव" (३.१७) इति भाष्ये । **तत्र** असम्प्रतज्ञातसमाधौ क्रियमाणे । **अत्र** गीतायाम् । **रतितृप्तिसन्तोषशब्दानिति** । रतिशब्दः तृप्तसन्तुष्टशब्दप्रकृतिभूतौ चेत्यर्थः । परमात्मदर्शनादिनिमित्तं सुखं प्राप्त इत्यादिरूपेण आत्मरत्यादिशब्दार्थस्य वक्ष्यमाणत्वात् 'तावद्' इत्युक्तम् । अन्यथा "सन्तोषस्तृप्तिरापूर्तिः प्रीतिः पर्यायवाचकाः" इति "रतिः कामप्रियाप्रीत्योः" इति चाभिधानेन शब्दानां पुनरुक्तिः स्यादिति भावः । 'स्वरूपकथनम्' इत्येतत्कुतः ? इत्यत आह **तथा चेति** । "दर्शनस्पर्शसम्भाषाद् यत्सुखं जायते नृणाम् । आरामः स तु विज्ञेयः ॥ (नारदीये)" इत्यभिधाने दर्शनादिभेदग्रहमात्रग्रहणात् तन्निमित्तं सुखमेव रतिशब्दार्थो दर्शनादिकर्मतयाऽन्वितः, परन्तु तत्र परिचायकतयोक्त इत्यर्थः । परस्यापि शब्दार्थत्वे आत्मनि रतिर्यस्येति विग्रहे परस्यान्वयायोग इति भावः । "आरामः परदर्शनादिनिमित्तं सुखम्" (गी.भा. ५.२४) इति पञ्चमभाष्ये वक्ष्यमाणत्वाद् आरामशब्देन रमणपर्याया रतिरेव प्रतिपिपादयिषितेति न तद्भाष्यविसंवादशङ्काऽवकाशः ।

'पर' इत्यस्य रतिशब्दार्थान्तर्गतत्वे बाधकमप्याह **तथात्व इति** । सुखदर्शनादेरिव परस्यापि शब्दार्थत्वाय प्रवेशोऽङ्गीक्रियमाणे 'परमात्मदर्शनादि' इत्यग्रिमभाष्ये करिष्यमाणं जीवनिराकरणं व्यर्थं स्यात् । 'पर' इत्यनेनैव स्वाख्यजीवनिराकरणात् । असम्प्रज्ञातसमाधिस्थत्वेनान्यदर्शनप्रसक्तेरभावा-

चेति भावः । चशब्दस्य 'तथात्वे' इत्यनेन सम्बन्धः । न केवलं वक्ष्यमाणाभिधानविसंवाद इति चशब्द इति स्वस्थान एव चशब्दं योजयन्ति च । भाष्ये 'अन्यत्र' इत्यस्य प्रतियोग्याकाङ्क्षां पूरयति **यद्दर्शनेति** । 'तज्जनकम्' इत्यत्र तच्छब्देन सन्तोषग्रहणे स्वस्य स्वजनकत्वं विप्रतिषिद्धम् । परदर्शनादिनिमित्तसुखग्रहणे दूरस्थत्वम् । 'सन्तोषस्तृप्तिकारणम्' इत्यभिधानविसंवादश्च, इत्यत-स्तच्छब्दार्थमाह **तज्जनकं तृप्तेर्जनकमिति** । अभिधाने 'तृप्तिकारणम्' इत्यनन्तरं प्रकृतार्था-न्वयित्वाय शेषमाह **तृप्तिकारणमिति** । भाष्याभिधानयोर्भिन्नकर्तृकत्वाद् भाष्यस्थं सुखपदं नानुवर्तयितुं शक्यमिति टीकायां 'शेष' इत्युक्तम् । **जीवविषयत्वेति** । "आत्मा अर्क-चन्द्र-वात-अग्नि-जीवेषु परमात्मनि" इत्यभिधानाद् जीवोऽप्यात्मशब्दार्थः प्रतीयत इत्यर्थः । भाष्यस्य साकाङ्क्षत्वादाह **आत्मरतिरिति शेष इति** । **इति विग्रह इति** । "सप्तमीविशेषणे बहुव्रीहौ" इति ज्ञापकाद् व्यधि-करणपदोऽपि बहुव्रीहिरस्तीति "समानाधिकरणानां बहुव्रीहिरिष्यते" इति नाऽद्रियत इति भावः । आत्मविषयकदर्शनजन्या रतिर्यस्येति विग्रहनिष्कर्षः । **आत्मनो रतिर्यस्येति वेति** । 'आत्मनः' इति षष्ठ्या विषयविषयिभावरूपसम्बन्धार्थत्वाद् आत्मविषया रतिर्यस्येति विग्रह इत्यर्थः ।

भाष्ये निमित्तपदेन हेतोरभिधानाद् 'आत्मनः' इति हेतौ पञ्चमी । ततो रतिर्यस्येति वेति पञ्चम्यन्तेन बहुव्रीहिः । "सप्तमीविशेषणे बहुव्रीहौ" इत्यस्य सामान्यज्ञापकत्वादित्यपि **आहुः** । उत्तरौ "आत्मतृप्तः", "आत्मन्येव च सन्तुष्टः" इत्यत्र विद्यमानौ । **एवं सति** आत्मशब्दस्य परमात्मार्थत्वे । इष्टापत्तिरित्यत आह **ततश्चेति** । **इदम्** आत्मतृप्त इति विशेषणम् । उपपादयति **आत्मेति** । 'प्राप्तः' इति पूर्वभाष्यादनुवर्तत इति, तत्राकाङ्क्षितं पूरयति **प्राप्तस्तृप्तेति** । पुनरुक्ति-प्रसङ्गदोषं भाष्यभावव्यञ्जनेन परिहरति **अवधारणेनैवेति** । **इत्यत्र** एतदर्थप्रतिपादने ।

**तदिति** । अन्यत्रालम्बुद्धिजनकं सुखमित्यर्थः । **विरोधादिति** । विषयजन्यसुखस्य विषयेषु प्रत्युत अनलम्बुद्धिं प्रत्येव हेतुत्वेन विरोधादित्यर्थः । **तस्य** आत्मरत्याख्यस्य । **हेताविति** । "चश्चेदर्थे णकारे स्यादवधारणभेदयोः । पादस्य पूरणे हेतौ तुल्ययोगानुयोगयोः ॥" इत्यमरशेषाद् 'यस्माद्' इत्यर्थे वर्तत इत्यर्थः । **न दोषः** रूपविशेषावच्छिन्नत्वेन वक्तव्यतया न पुनरुक्तिदोष इत्यर्थः । 'कथं च' इत्युक्तं दोषमुद्धरति **तस्य चेति** । **संशब्देन** 'सन्तुष्टः' इत्यत्र संशब्देन । **तत्कारणत्वम्** अन्यत्रालम्बुद्धिकारणत्वम् । अनेन यस्मादात्मरत्याख्यं सुखं महत्, तस्मात् तस्यालम्बुद्धिजनकत्व-मुपपन्नम् । यस्माच्च तेनैवान्यत्रालम्बुद्धिरिति दर्शयति तस्मान्न पुनरुक्तिश्चेति भाष्ययोजना सूचिता । पुनरुक्तिपरिहारं भाष्यारूढमाह **सन्तोषेति** । **अवधारणस्य** 'आत्मन्येव'

इत्यवधारणार्थकैवशब्दस्येत्यर्थः । 'अन्यद्' इत्यत्र प्रतियोग्याकाङ्क्षायामाह **अन्यदसम्प्रज्ञातेति** । तत्स्थत्वात् परमात्मनि मनःप्रणिधानात् । **एतेनेति** । आत्मरतावसम्प्रज्ञातसमाधिस्थत्वमेव कारणं नान्यदित्यवधारणार्थस्य भाषणेनेत्यर्थः । **अस्य** 'आत्मन्येव' इत्येवशब्दस्य । 'आत्मरतिरेव' इत्यवधारणम् अन्यत्रालम्बुद्धिमात्रद्योतनेन चरितार्थम् । 'आत्मन्येव' इत्यवधारणं तु आत्मरता-वसम्प्रज्ञातसमाधेरन्यस्य हेतुत्वप्रतिषेधकमिति न तेनास्य पुनरुक्ततेत्यर्थः ।

**न केवलेनेति** । परमात्मदर्शनादिनिमित्तं हि सुखम् आत्मरतिः । तया चान्यत्रालम्बुद्धि-शब्दिता तृप्तिरिति केवलं तदसाधारणकारणिका न, किन्तु भगवत्प्रसादासाधारणकारणिका चेति वक्तुम् 'आत्मना' इति करणे तृतीयायाः "कर्तृकरणे कृता बहुलम्" इति समास इत्यर्थः । **पञ्चमी-समास इति** । 'चोरभीतः' इत्यादाविव अत्रापि "आत्मनः तृप्त आत्मतृप्तः" इति पञ्चमीसमासः कथं न स्यादित्यर्थः । असामर्थ्यमुपपादयति **अन्यत्रेत्यनेन हीति** । 'अन्यत्र' इत्येतदवधित्वेन 'आत्मनः' इत्येतदन्वेतीति तत्रैव समर्थं साकाङ्क्षं, न 'तृप्तः' इत्यनेनेति तेन न समासः । "समर्थः पदविधिः" इति शास्त्रादिति भावः । **तृप्तशब्दार्थेन** अलम्बुद्धिरूपेण । सामर्थ्यमित्यन्वयः । **तृप्तशब्दार्थ इति** । तृप्तिरन्यत्रालम्बुद्धिः तद्युक्तस्तृप्त इति तृप्तशब्दार्थे 'अन्यत्र' इति शब्द-स्यार्थोऽन्तर्गतः । अत आत्मशब्दोऽन्यत्रेत्यनेन न साकाङ्क्षः । किन्त्वन्तर्भावित तदर्थेन तृप्त-शब्देनैवेति पञ्चमीसमासोपपत्तिरिति शङ्कितुर्हृदयम् । **प्रकरणलब्धस्येति** । भगवत्प्रीतिमात्रोद्देशेन कर्मानुष्ठानचोदनस्य प्रकरणलब्धत्वेन तृप्तिपदार्थालम्बुद्धिशब्दितविरागस्य सविषयतया भगवतो-ऽन्यस्यैव तद्विषयं वक्तव्यमिति तस्य न पदार्थान्तर्भाव इति भावः । **अन्यथा** तृप्तशब्दार्थ एवान्यत्रार्थोऽन्तर्भूतोऽस्तीति पक्षे । "न वितृप्यामः" इत्यस्य "नालम्बुद्धिं प्राप्नुमः" इत्यर्थत्वे हि सामञ्जस्यम् । 'अन्यत्र' इत्यस्यापि तदर्थान्तर्गतत्वे भगवतोऽन्यत्रालम्बुद्धिं न प्राप्नुम इत्यर्थप्रसङ्गान्न तस्यान्तर्भावो युक्त इत्यर्थः ।

**सप्तमीसमास इति** । आत्मनि रतिर्यस्येति पूर्वत्र, "आत्मन्येव च सन्तुष्टः" इत्युत्तरत्र च सप्तमीदर्शनेन तत्साहचर्यादिति भावः । अयुक्तत्वमुपपादयति **पूर्वेति** । 'आत्मरतिरेव' इति विशे-षणेन भगवद्दर्शनादिजन्यसुखस्याभिहितत्वेन तस्मिन् सति तत्र भगवत्यलम्बुद्ध्यसम्भवादित्यर्थः । न हि कामुकस्य कामिनीदर्शनादिजन्यसुखे सति तत्रालम्बुद्धिर्दृष्टचरीति भावः ॥ **प्रमाणेति** । "वयं तु न वितृप्यामः" (भाग.१.१.१९), "को नाम तृप्येद् रसवित् कथायां महत्तमैकान्तपरायणस्य" (भाग.१.१८.१४), "भूयः कथय तृप्तिर्हि शृण्वतो नास्ति मेऽमृतम्" इत्यादिबहुप्रमाणविरोधाच्च इत्यर्थः । 'पूर्व' इत्यन्तरङ्गानुपपत्तिः, 'प्रमाण' इति बहिरङ्गानुपपत्तिश्चोद्घाटिता । **अयं दोषः** सप्तमी-

समासायुक्तिदोषः ॥ **प्रीत्यर्थ इति** । ''सन्तोषस्तृप्तिरापूर्तिः प्रीतिः'' (गी.ता.३.१७) इति तात्पर्योदाहृताभिधानादिति भावः । **एवं सति** उत्तमश्लोकविक्रमैः प्रीतिं न प्राप्नुम इत्यर्थाङ्गीकारे । **अर्थानुपपत्तिः** भगवद्विषयकप्रीतेरर्थनीयत्वादिति भावः । **अध्याहारेण** 'अन्यत्र' इति पदाध्याहारेण । 'अगतिका' इत्यस्यार्थो गत्यन्तररहितेति । 'गतिः' इत्यस्यार्थो **गमनिकेति** । अवतारिकेत्यर्थः । तृप्तिशब्दः प्रीत्यर्थ इति कृतचोद्यस्य कथमनेन परिहार इत्यतो भाष्यभावमाह **अध्याहारो हीति** ।

ननु कल्पकत्वं नाम प्रमापकत्वम् । तच्च प्रमाणधर्मः । कल्पकराहित्यं न प्रमाणम् । अभावरूपत्वादित्यत आह **अन्यथाऽनुपपत्तिरिति** । अलम्बुद्ध्यर्थत्वे सिद्धान्तरीत्या । **विनाऽपि** 'अन्यत्र' इति पदाध्याहारेण विनाऽपि । ''पृथग्विनानानाभिस्तृतीया'' इति तृतीया । **असौ** अध्याहारः । षष्ठीसमासस्तु 'आत्मतृप्तः' इत्यत्र । षष्ठी तु करणस्य शेषत्वविवक्षायामिति वैयाकरणाः । **पूरणेति** । ''पूरण-गुण-सुहितार्थ-सद्-अव्यय-तव्य-समानाधिकरणेन'' इति सूत्रेण पूरणाद्यर्थैः सदादिभिश्च षष्ठी न समस्यत इत्यर्थकेन सुहितार्थेन तृप्त्यर्थेन समासप्रतिषेधो व्याकरणशास्त्रोक्त इत्यर्थः । अत एव ''तृप्तानां तृप्तः'' इत्युदाहरणमिति भावः ।

*भा०र०*— **अपव्याख्यानमिति** । ''आत्मज्ञाननिष्ठानां कर्तव्याभावप्रतिपादनार्थोऽयं श्लोकः'' इति परकीयव्याख्यानमित्यर्थः । परव्याख्याननिरासकत्वस्फोरणाय आह **न ज्ञानीति** । एवार्थः ''असम्प्रज्ञातसमाधिस्थस्यैव'' इति भाष्यगतैवशब्दार्थ इत्यर्थः । ''अवधारणात्'' इति भाष्ये प्रमाणोपन्यासात् स्मृतिः परपक्षप्रतिक्षेपे प्रमाणान्तरमिति द्योतयितुमाह **इतोऽपीति** । अनेन भाष्ये चशब्दार्थो व्याख्यातः । 'कार्यः' इत्यस्य देहादिविशेषणत्वप्रतीतिं व्युदस्यन्नन्वयमाह **स्वधर्मः कार्य इति** । ''कृत्यानां कर्तरि वा'' इति स्मरणात् 'स्थितप्रज्ञस्यापि' इति भाष्ये षष्ठी । **देहादिः** देहेन्द्रियादिरित्यर्थः । **दृश्यते** तदा देहेन्द्रियादावभिमानो भवतीति यावत् । **सा हि** मम तुष्टिर्हि । **सर्वैः** मुमुक्षुभिः **अपेक्षिता** इति प्रमाणार्थः । असम्प्रज्ञातसमाधियोगिनोऽपि तदभावदशायां कार्यमस्तीत्युक्त्या ज्ञानिमात्रस्यासम्प्रज्ञातसमाध्यभावात् तेन सर्वेणापि कर्म कर्तव्यमित्यावेदनान्न परव्याख्यानं युक्तमिति भावः । **ज्ञानिमात्रविषयं** ज्ञानिमात्रस्य कर्माभावप्रतिपादनपरम् । **अनात्मरतिः** अनात्मनि रतिर्यस्य स पुरुषस्तथा । 'कालाद्' इति वदन् ''सर्व-एक-अन्य-किं-यद्-तदः काले दा'' इति शास्त्राद् अन्यशब्दात् काले दाप्रत्यय इति विभावयति । 'सर्वस्य' इत्यनन्तरं 'ज्ञानिनः' इति विशेष्यं संयोज्य तेन अपिशब्दस्य सम्बन्धः कार्य इति भावेनोक्तम् **सर्वस्य ज्ञानिनोऽपीति** । उपपादितं ''प्रारब्धकर्मणेषत्तिरोहितब्रह्मणो वासनया प्रायोऽल्पाभिसन्धिपूर्विका प्रवृत्तिः सम्भवति'' (गी.भा. २.५५) इत्यादिभाष्येण द्वितीयाध्याय इति शेषः । तद्विषयमेतद् ज्ञानिमात्रस्य कर्माभावप्रतिपादकम् 'आत्मरतिः' इति वचनमित्यर्थः ।

'तत्र' इति भाष्यपदमावर्त्य व्याचष्टे **तत्र श्लोके तत्र कार्याभाव इति** । भाष्ये मात्रशब्दोऽल्पार्थ इति भावेनोक्तम् **अल्पालम्बुद्धिरिति** । यद्यपि "सुप्प्रतिना मात्रार्थे" इति सूत्रवृत्तौ "मात्रा-स्तोकम्-अल्पमिति पर्यायः" इति स्त्रीलिङ्ग एव मात्राशब्दोऽल्पार्थ इत्युक्तम् । विश्वप्रकाशे च "मात्रा कर्णविभूषणे । अक्षरावयवे वृत्ते मानेऽल्पे च परिच्छदे" इति स्त्रीलिङ्ग एवाल्पार्थ इत्यभिहितम् । तथाऽपि "लिङ्गमशिष्यम् । लोकाश्रयत्वाल्लिङ्गस्य" इति भाष्यवचनान्नपुंसकत्वेऽप्यल्पार्थत्वमिति भावेनैवमुक्तमिति **आहुः** । **केचित्तु,** "मात्रं कार्त्स्न्येऽवधारणे" इत्यभिधानान्मात्रशब्दोऽवधारणार्थः । **अलम्बुद्धिमात्रम्** अलम्बुद्धिरेव केवलालम्बुद्धिरेव तृप्तिशब्देनोच्यते, न पुनरन्यरतिसहितालम्बुद्धिः । 'अल्पालम्बुद्धिः' इति तु तात्पर्यवर्णनम् । पूर्वपक्ष्यभिमतस्य "अन्यत्र रतौ विद्यमानायामपि तत्रालम्बुद्धिरप्यस्ति" इत्यस्यार्थस्य लाभाय भाष्यभावमाह **रतिसहचरितेति** । अन्यत्र रतिसहिता । 'नोक्तम्' इत्यस्य "बुद्धिशब्दापेक्षया स्त्रीलिङ्गेनानुवादो 'नोक्ता' इति" इति व्याचक्षते । **सर्वात्मनाऽलम्बुद्धिरिति** । विषयरतिं विना कृताऽलम्बुद्धिरित्यर्थः । यद्यप्यवधारणस्यान्यत्रालम्बुद्धिमात्रद्योतनेन चरितार्थस्य 'सर्वात्मना' इत्यत्राप्रवृत्तेरिति प्रागुक्तम् । तथाऽपि 'आत्मतृप्तः' इति पृथगभिधानोपोद्बलितस्यावधारणस्य 'सर्वात्मना' इत्यत्र प्रवृत्तिरुपपद्यत इति तात्पर्यान्न दोषः । अत एव 'अभिप्रेतेति' इत्याह । 'प्रागुक्तम्' इति वदनुक्तार्थस्मरणार्थत्वाद् अपौनरुक्त्यम् इत्यभिसन्धत्ते ।

**एवंविधः** असम्प्रज्ञातसमाधिस्थः इत्युक्तिसामानाधिकरण्याय "स सर्वदा कार्यं न कुर्यात्" इति वक्तव्येऽपि यत् "तस्य सर्वदा" इति वचनं तद् गीतासङ्गत्यर्थम् । नन्वात्मनि रममाणो ह्यात्मरतिरुच्यते । शानचा च रमणस्य वर्तमानकालावच्छिन्नत्वं बोध्यते । "लटः शतृशानचौ" इति शास्त्रात् । आरब्धापरिसमाप्तक्रियोपलक्षिते काले हि लडनुशिष्टः । तथा च "आत्मनि रतिर्यस्येत्यात्मरतिः" इति समासवृत्त्यैव कालावच्छेदो ज्ञायत इत्यत आह **आत्मरतिरिति समासस्त्विति** ॥ बहुव्रीहेरन्यपदार्थतात्पर्यकत्वाद् अन्यपदार्थं **रतेः कर्तारमेव** समासवृत्तिराचष्ट इत्यर्थः । न पुनः कालमपीत्येवकारार्थः रममाणशब्दस्योक्तभङ्ग्या कथञ्चित् कालावबोधकत्वेऽपि रतिशब्दस्य न तदवबोधकत्वम् । रमेः स्त्रियां क्तिनि भावे तस्य निष्पन्नत्वात् । आत्मशब्दस्य च भगवदर्थत्वात् । समासस्य चोक्तरीत्या सामर्थ्याभावात् "तस्य कार्यं न विद्यते" (३.१७) इत्यत्र न कालावगतिः सम्भवति । अतः पूर्वपक्ष्यभिमतव्याख्याने नानुपपत्तिरिति भावः । 'चायमि'त्यत्र अयं चेत्यन्वयः । तदर्थश्च **यदा तदेति रहितोऽपीति** । यदा तदेति शब्दरहितोऽपीत्यर्थः । **कर्तृशब्दः** 'भुङ्क्ते' इत्यत्र भोजनकर्तृवाचक आख्यातशब्दः । **कालावच्छेदे** भोजनकालावच्छिन्ने कर्तर्यपि

प्रसिद्ध इति शिष्टभाष्यार्थः "यदा तदा" इति शब्दाभावे कालावच्छेदबोधः कथम् ? इति कृत-चोद्यपरिहाराय भाष्यभावमाह **अयं भाव इति** ।

**अतिप्रसक्ताविति** । 'तस्य' इत्यस्य सर्वनामतया समाधिस्थ-असमाधिस्थसर्वज्ञानिपुरुष-ग्राहकत्वेन सर्वस्यापि कार्याभावप्रसक्तावित्यर्थः । "विशेषणमुपलक्षणं च" इत्यनन्तरमितिशब्दो-ऽध्याहार्यः । **व्यवच्छेद्यसमानकालम्— व्यवच्छेद्येन** इतरव्यावृत्ततया बोधनीयेन विशेष्येण **समानः कालो** यस्य तत् तथा । भोजनं च भोक्तारं देवदत्तम् अभोक्तुर्यज्ञदत्तादेरभोजनकालाव-च्छिन्नात् स्वात्मनश्च व्यावर्तयत् स्वप्रत्याय्यव्यावृत्त्यधिकरणदेवदत्तसमानकालमेवेति भवति विशे-षणमिति भावेनाह **यथा सिद्धान्त्युदाहृतमिति** । अन्यथा तु स्वप्रत्याय्यव्यावृत्त्यसमानकालत्वे । न तु व्यावर्तकमिति योज्यम् । **पतनमिति** । पतनस्य कादाचित्कत्वेन तस्य स्वप्रत्याय्यव्याव-त्त्यधिकरणगुरुपदार्थासमानकालत्वाद् उपलक्षणत्वमित्यर्थः ।

**तत्र** विशेषणोपलक्षणयोः कुत इत्यत आह **विशेषज्ञानहेतुत्वादिति** । स्वानधिकरणाधि-करणकव्यावृत्तिविलक्षणव्यावृत्तिलक्षणोऽतिशयो अत्र **विशेषः** । **तज्ज्ञानहेतुत्वाद्** मुख्यं विशे-षणम् । यथा "दण्डी देवदत्तः" इत्यत्र दण्डरूपं विशेषणम् । उपलक्षणं तु स्वानधिकरणेऽपि व्यावृत्तिज्ञानं जनयतीत्यमुख्यम् । "काकवद् देवदत्तगृहम्" इत्यत्रोपरि भ्राम्यतः काकस्योपलक्षणस्य स्वानधिकरणेऽपि देवदत्तगृहे यज्ञदत्तादिगृहव्यावृत्तिबोधकत्वमेवेति न तस्योक्तरूपविशेषज्ञानहेतुत्व-मित्यमुख्यत्वमेवेति भावः । स्वप्रत्याय्यव्यावृत्त्यधिकरणतावच्छेदकत्वे सति व्यावर्तकं विशेषणम् । अनेवम्भूतं व्यावर्तकमुपलक्षणम् । "दण्डी देवदत्तः" इत्यत्र दण्डप्रत्याय्यादण्डिव्यावृत्त्यधिकरणता पुरुषस्य दण्डेनावच्छिद्यते, न पुरुषत्वेन । अतिव्याप्तेः । "काकवद् देवदत्तगृहम्" इत्यत्र काक-प्रत्याय्यगृहनिष्ठव्यावृत्त्यधिकरणता न काकेनावच्छिद्यते । तदभावेऽपि व्यावृत्तिप्रतीतेः । "किन्तु संस्थानविशेषवत्त्वादिना" इति वदन् मणिकारोऽपि विशेषणोपलक्षणस्वरूपं व्यवस्थापयन्नुक्तहेतु-भावाभावाभ्यां मुख्यत्वामुख्यत्वे अभिसन्धत्ते ।

**अत्र** 'यस्त्वात्मरतिः' इत्यत्र । **विशेषणत्वग्रहणे** रतेः पुरुषविशेषणत्वग्रहणे । **एतत्** 'आत्मरतिः' इत्येतद् व्यावर्तकम् । इत्ययं भाव इत्यन्वयः । कर्तृशब्द इत्युक्तस्य नेदं फलम् । तत्र कालावच्छेदकशब्दसद्भावानभिधानादित्यत आह **समाधावेवेत्युक्त्येति** । कार्याभावस्य समाध्यधि-करणकत्वानुपपत्तेः समाधिकाल एवेति विवक्षायां समाधिकार्याभावयोरेककालत्वं ज्ञायत इत्यर्थः ।

भाष्ये ज्ञानिपदेनापरोक्षज्ञानी ग्राह्यः । मुख्ये कार्यसम्प्रत्ययात् । एवशब्देनापरोक्षज्ञान्यन्यो व्यावर्त्यत इति भावेनाह **अपरोक्षेत्यादि** । ननु मनुधातुरवबोधनेऽर्थे वर्तत इत्यर्थकस्य "मनु

अवबोधने'' इति वाक्यस्य धातुत्वायोगाद् भाष्ये कथं 'धातोः' इत्युक्तिः ? इत्यत आह **धातो-र्व्याख्यानादिति**। 'धातोः' इत्यनन्तरं 'व्याख्यानात्' इति भाष्ये शेषपूरणे नोक्तशङ्काऽवकाश इति भावः। एवं व्याख्यानेऽपि मानवपदेन कथं ज्ञानिनो लाभः ? इत्यतस्तल्लाभप्रकारं दर्शयितुमाह **अस्मादिति**। **भावे** शुद्धधात्वर्थेऽभिधेये। उप्रत्ययः। ''भृ-मृ-शी-तृ-चरि-त्सरि-तनि-धनि-मि-मस्जिभ्य उः'' इति वर्तमाने ''शॄ-स्वृ-स्निहि-त्रपि-असि-वसि-हनि-क्लिदि-बन्धि-मनिभ्यश्च'' इति सूत्रेण मनेः कर्तरि विधीयमानोऽपि बाहुलकाद् भावे औणादिक उप्रत्यय उत्पादनीय इत्यर्थः। **ततः** उप्रत्ययनिष्पत्त्यनन्तरम्। ''कृत्तद्धितसमासाश्च'' इति प्रातिपदिकत्वे सोरुत्पत्तौ मनुः = अवबोध इत्यर्थः। **अणप्रत्यय इति**। 'तद्धिताः' इति बहुवचनज्ञापितः। यद्वा, सोऽस्यास्तीत्याद्ये मत्वर्थे 'शेषे' इति शैषिकोऽण्प्रत्ययः। द्वितीये 'तस्येदम्' इत्यण्प्रत्यय इत्यर्थः। 'आश्रयः' इत्युक्तिः सौत्रषष्ठ्याश्रयाश्रयिभावसम्बन्धार्थेति दर्शयितुम्। तथा च मनुशब्दात् तद्धितेऽण्प्रत्यये ''ओर्गुणः'' इति गुणे ''एचोऽयवायावः'' इत्यवादेशे णित्त्वात् ''तद्धितेष्वचामादेः'' इत्यादिवृद्धौ 'मानवः' इति रूपमिति भावः।

कृत्-तद्धितप्रत्ययद्वयकल्पनानुशयादाह **यद्वेति**। मनुते = अवबुध्यते इति कर्तरि ''उणादयो बहुलम्'' इति बहुलग्रहणज्ञापित औणादिकेष्वण्प्रत्यये णित्त्वात् ''अत उपधायाः'' इति वृद्धौ 'मानवः' इति रूपे तस्य ज्ञान्यर्थकत्वमिति भावः। मानवपदस्य स्वोक्तार्थस्थेम्ने यदुक्तं सङ्करेण ''मानवो मनुष्यः'' इति तद् दूषयति **मनुष्य इति व्याख्यायामिति**। ऋषिगन्धर्वादीनामपि असम्प्रज्ञातसमाधिसत्त्वेन तेषामपि सङ्ग्राह्यत्वं वक्तव्यम्। परपक्षे च तद्व्यावृत्तिरापद्येत। सा च अनुचिता। मानवपदस्य व्यर्थता चापद्येत। ''यस्त्वात्मरतिस्तस्य कार्यं न विद्यते'' इत्येतावतैव वाक्यार्थपर्यवसानादिति भावः। **आत्मशब्दस्यापीति**। न केवलं ''ज्ञानिनः कर्तव्याभावमाहेति'' श्लोकस्य तात्पर्यं निराकृतवान्। नापि मानव इति पदस्यान्यथा व्याख्यानं मनु अवबोधन इति योगं वदन्, अपि त्वात्मशब्दस्यापीत्यर्थः। यद्यपि ''परमात्मदर्शनादिनिमित्तं सुखं प्राप्तः आत्मरतिः'' इति भाष्य एव आत्मशब्दः परमात्मपरो व्याख्यातः। तथाऽपि तदर्थस्य स्मारणाय पुनः आत्मशब्द-स्तात्पर्यद्योतनाय, प्रमाणोपन्यासाय च परमात्मार्थ इत्युक्तमिति। अवधारणव्यावर्त्यमाह **न स्वात्मेति**। कुत एवं व्याख्यानम् ? इत्यतो ज्ञापकमाह **तस्यैवेत्यवधारणादिति**। ''विष्णावेव रतिर्यस्य क्रिया तस्यैव नास्ति हि'' इति वचने तस्यैव क्रिया सन्ध्यावन्दनाग्निहोत्रादिरूपा स्ववर्णा-श्रमोचिता नास्ति। अन्यस्य तु स्वात्मरतस्यापि विद्यत एवेत्यावेदनाद् आत्मशब्दस्य विष्णवर्थ-त्वमेव युक्तम्, न स्वात्मार्थत्वमिति भावः। इतिशब्दः 'यस्तु' इति श्लोकव्याख्यानसमाप्तौ ॥१७॥

गीता

**नैव तस्य कृतेनार्थो नाकृतेनेह कश्चन ।**
**न चास्य सर्वभूतेषु कश्चिदर्थव्यपाश्रयः ॥ १८ ॥**

***वि०वि०***— नन्वसम्प्रज्ञातसमाधिस्थस्यापि कथं कार्याभावः । कर्मकृतिकाले त्वयाऽहमुद्बोधनीय इति कश्चित्प्रत्युक्त्वा समाहितस्तेन योगशास्त्रोदितोपायैरुद्बोधितः कर्म करिष्यतीत्यत आह **नैवेति** । तस्यासम्प्रज्ञातसमाधिस्थस्य समाधिं विहाय कृतेन कर्मणाऽऽत्मरत्यधिकस्तत्समो वाऽर्थो नास्ति । मा भूद्यज्ञादिकरणार्थमुत्थानम् । नित्यनैमित्तिकाकरणे प्रत्यवायप्राप्तेस्तदर्थं तु स्यादित्यत आह **नाकृतेनेति** । अकृतेन सन्ध्यावन्दनाद्यकरणेन प्रत्यवायो नास्ति । तथापि गुरुदेवतापूजाकरणाकरणयोरर्थप्रत्यवायौ स्यातामेव । अतस्तत्सन्निधिप्राप्तावुत्थानमावश्यकमेवेत्यत आह **नचेति** । अस्य असम्प्रज्ञातसमाधेरुत्थितस्य । सर्वभूतेषु गुर्वादिषु अर्थस्य व्यपाश्रयः प्राप्तिः पूजादिर्येन गुर्वादिदर्शनादिव्यापारेण भवति स व्यापारश्च कश्चिन्नास्ति । गुर्वादिपूजायाः करणमात्मरतितुल्यफलहेतुर्न भवतीत्यर्थः । एवमकरणमप्यनर्थहेतुर्न भवतीति द्रष्टव्यम् ।

अथवा, कर्म कर्तव्यमित्यत्र युक्त्यन्तरमाह **यस्त्विति** । तृप्तिसन्तोषशब्दयोः पर्यायत्वेऽपि 'परमात्मना तृप्तः', 'परमात्मनि तृप्तः' इति विशेषः ।

यद्वा—

'रतिरानन्द उद्दिष्टस्तृप्तिस्तु कृतकृत्यता ।
प्रीतिस्तु विविधः स्नेहः कर्मजो निज एव च ॥'

इत्यभिधानादर्थभेदः । प्रीतिः सन्तोषः । तथा च एवंलक्षणकस्य मुक्तस्य कार्यं न विद्यत इत्यर्थः । तदुक्तम्—

'विष्णुप्रसादाद्रतिमांस्तृप्तो विष्णुप्रसादतः ।
विष्णावेवातितृप्तश्च मुक्तोऽसौ विध्यगोचरः ॥'

इति । ननु 'कृष्णो मुक्तैरिज्यते वीतमोहैः' इत्यादिलिङ्गात् मुक्तस्यापि कर्म कर्तव्यमेवेत्यत आह **नैवेति** । स्वेच्छयैव करणं न फलापेक्षया विधिबद्धत्वेन वेति भावः ॥

***वा०ल०***— 'नैव तस्य कृतेनार्थो' इत्यत्र इह असम्प्रज्ञातसमाधियोगदशायाम् अकृतेन कर्माकरणेन अनर्थो न । अन्यदा कर्मकरणेऽनर्थो भवत्येवेति भावः ॥

***सा०सं०***— ननु कर्मकरणाकरणयोर्लाभहानी चेत् तर्हि समाधिर्न कार्यः प्रसज्येतेति चोदिते, समाधिस्थस्य कार्यं न विद्यत इत्युत्तरं कस्मादुक्तम् । कर्मकृतिकाले त्वयाऽहमुद्बोधनीय इति कश्चित्

प्रत्युक्त्वा, समाधौ स्थितः सन् तेन योगशास्त्रोक्तैरुपायैरुद्बोधितः कर्म करोतीत्येवोत्तरं कुतो नोक्तमित्यत आह **नैवेति** । **तस्य** असम्प्रज्ञातसमाधिस्थस्य । समाधिं विना **इह कृतेन** यज्ञादिकर्मणाऽऽत्मरत्याधिकस्तत्समो वाऽर्थः पुमर्थो नास्ति । ननु यज्ञादिकरणार्थम् उत्थानाभावेऽपि नित्यनैमित्तिककर्माकरणे प्रत्यवायात् तत्करणार्थं समाधित उद्बोधनम् आवश्यकमित्यत आह **नाकृतेनेति** । **तस्य** समाधिस्थस्य । **अकृतेन** कर्मणा सन्ध्यावन्दनादितत्तत्कालानुष्ठेयकर्माभावेन । **कश्चन** दोष इति शेषः । **नास्ति** । ननु समाधिस्थस्याल्पस्य यज्ञादेरनुष्ठाने फलाभावेऽपि सन्ध्याद्यकृतौ प्रत्यवायाभावेऽपि गुरुदेवतादिषु पूजाकरणाकरणयोरर्थप्रत्यवायौ स्यातामेव । अतस्तत्सन्निधानप्राप्तौ उद्बोधनमावश्यकमित्यत आह **न चेति** । अस्यासम्प्रज्ञातसमाधिस्थस्य । **सर्वभूतेषु** । विषयसप्तमीयम् । **अर्थव्यपाश्रयः** अर्थस्य व्यपाश्रयः प्राप्तिः, येन दर्शनसम्भाषणपूजनादिव्यापारेण भवति सोऽर्थव्यपाश्रय इति व्यधिकरणबहुव्रीहिः । गुर्वादिविषयकदर्शनसम्भाषणवन्दनादिव्यापारः, पुमर्थप्राप्तिहेतुभूतः समाधिस्थस्य नास्तीत्यर्थः । चशब्दः पूर्वार्धोक्तसमुच्चये । गुर्वादिविषयव्यापारेणाप्यात्मरतितुल्यं सुखं न लभ्यत इत्यभिप्रायः । एवं तत्पूजाद्यकरणमपि समाधिस्थस्य नानर्थप्राप्तिहेतुरित्युपलक्ष्यते ।

यद्वा, न केवलं चक्रप्रवर्तकत्वेन भूतस्थितिहेतुत्वात् कर्म कर्तव्यम् । किन्तु मुक्तस्यैवाकर्मत्वादमुक्तेनावश्यं कर्म कार्यमिति तस्मादित्यनेन वक्तुमकर्मत्वं मुक्तस्यैवेत्याह **यस्त्विति** । **यस्तु मानवः** प्राप्तज्ञानफलो मुक्तः । आत्मरतिः आत्मना परमात्मना रतिः अभिव्यक्तस्वरूपानन्दो यस्य सः, तथा । आत्मना परमात्मना तृप्तः कृतकृत्यः **आत्मतृप्तः** आत्मन्येव च सन्तुष्टः प्रीतिमान् ।

यद्वा, तृप्तिसन्तोषशब्दयोः प्रीतिरूपैकार्थत्वेऽप्यात्मना तृप्तः प्रीतिमान् आत्मन्येव च सन्तुष्टः इत्येतावताऽर्थभेदो ध्येयः । **तस्य तु** तस्यैवेति तुशब्दोऽत्र योज्यः । मुक्तस्यैव **कार्यं न विद्यते** । ननु 'कृष्णो मुक्तैरिज्यते वीतमोहैः' इत्युक्तेर्मुक्तस्यापि कर्म कर्तव्यमित्यत आह **नैवेति** । प्राग्वदेवार्थः । स्वेच्छयैव करणं विधिबद्धत्वेन । न वा फलापेक्षया, तस्यैव फलरूपत्वेन फलान्तराभावादिति भावः ॥

*अ०प्र०*— तत्र हेतुमाह **नेति** ।

तस्य[१], कृतेन[२], अर्थः[३], नैव[४], अकृतेन[५], इह[६], कश्चन[७], न चैव[८], एतादृशस्यास्य[९], सर्वभूतेषु[१०], कश्चित्[११], अर्थव्यपाश्रयः[१२], न चास्तीत्यर्थः ।

तस्य = असम्प्रज्ञातसमाधिस्थस्य समाधिं विहाय[१], कृतेन = कर्मणा यज्ञादिना[२], अर्थः = पुण्यं नास्ति । यद्वा आत्मरत्या तत्समोऽर्थः सुखरूपो नैव = नास्ति किमुताधिकः[४], अकृतेन = सन्ध्यावन्दनादि अकरणेन[५], इह = अस्मिन्नर्थे[६], कश्चन = कोऽपि प्रत्यवायः पापं वा[७], न चैव = अस्ति, निरहङ्कारत्वाद्विधिनिषेधातीतत्वात्, मोक्षे देवकृतविघ्नासम्भवात्, तत्परिहारार्थं कर्मभिः देवाः सेव्या इत्याशङ्क्योक्तम्[८], एतादृशस्य = अस्य असम्प्रज्ञातसमाधिं विहायोत्थितस्य पुंसः[९], सर्वभूतेषु = ब्रह्मादिस्थावरान्तेषु यद्वा गुर्वादिषु[१०], कश्चिदपि[११], अर्थव्यपाश्रयः = आश्रय एव व्यपाश्रयः अर्थस्य व्यपाश्रयः तथा[१२], न चास्ति अर्थमोक्षे आश्रयणीयो अस्य नास्तीत्यर्थः । विघ्नाभावस्य श्रुत्यैवोक्तत्वात्, पूर्वप्राप्तरत्याख्यसुखापेक्षया अनधिकफलं हेतुत्वान्न गुर्वादिपूजादिकं कार्यमिति भावः । एवं गुर्वादिपूजाऽकरणमपि अनर्थहेतुर्न भवतीति द्रष्टव्यम् ॥ १८ ॥

**भाष्यम्**

**तस्य 'कर्मकाले वक्तव्योऽहम्' इति कश्चित् प्रत्युक्त्वा तत्कृतावात्मरत्यधिकः समो वार्थो नास्ति । न च सन्ध्याद्यकृतौ कश्चिद्दोषोऽस्ति । न चैतदपहाय सर्वभूतेषु कश्चित्प्रयोजनाश्रयः । अर्थो येन दर्शनादिना भवति सोऽर्थव्यपाश्रयः । ज्ञानमात्रेण यद्यपि प्रत्यवायो न भवति तदर्जुनस्यापि सममिति । न तस्य कर्मोपदेशोपयोग्येतद्भवति । ईषत्प्रारब्धसूचकं च तद्भवति । महच्चेद् वृत्रहत्यादिवत् ॥ १८ ॥**

***प०टी०*—** ज्ञानिनोऽपि कर्मकरणेनानन्दवृद्धेरसम्प्रज्ञातसमाधिनाऽपि तदनुष्ठेयमित्याशङ्क्य उत्तरत्वेनोत्तरश्लोकं व्याचष्टे **तस्येति** । सर्वभूतानि गुर्वादीनि । प्रयोजनाश्रयो 'व्यापारः' इति शेषः । ज्ञानिमात्रस्य विकर्मणा प्रत्यवायाभावात् कथञ्चित् तद्विषयं श्लोकद्वयं किं न स्यात् ? इत्यत आह **ज्ञानमात्रेणेति** । प्रत्यवायाभावेऽपि तत्प्रतिनिधिरस्त्येवेत्याह **ईषदिति** ॥

***न०टी०*—**ननु कथं तस्य कार्यं न विद्यते ? करणे मुक्तावानन्दवृद्धिरकरणे च तदभावः प्रत्यवायो वाऽऽनन्दह्रासकर इति । अतोऽसावसम्प्रज्ञातसमाधिप्राग्विवक्षिता स्यात् । 'कर्मकालोऽयमिति त्वयाऽहं वक्तव्यः' इति कञ्चित्प्रत्युक्त्वा समाधिं कुर्वंस्तद्वचनादुत्थाय कर्म कुर्यादित्याशङ्क्योत्तरत्वेनोत्तरार्धं च व्याचष्टे **तस्येति** । 'कश्चन' इति पदं 'कृतेनार्थः' इत्यत्राप्यभिकृष्य व्याचष्टे **अधिकः समो वेति** । आत्मरतेर्वाऽऽत्मरत्या वा यावत्प्रयोजनम्, तदधिकं तत्समं वा न कर्मणेत्यर्थः । न कश्चिदित्यानन्दह्रासकरो नरकाद्यापादकश्च नेत्यर्थः । यथाऽन्येषु कर्मसु गुर्वागति-

रुत्थानकारणम्, तदपि नासम्प्राज्ञतसमाधेरिति भावेनोत्तरार्थं व्याचष्टे **न चेति** । कश्चित् 'व्यापारः' इति शेषः । नन्वपरोक्षज्ञानिमात्रस्य प्रत्यवायाभावात्, मुक्तेश्च सिद्धत्वात्, श्लोकद्वयमिदं कथञ्चित् तद्विषयमेव स्यात् । नासम्प्रज्ञातसमाधिविषयमित्यत आह **ज्ञानेति** । यद्यपीत्यस्यार्थं प्रकटयति **ईषदित्यादिना** । **तदिति** । ज्ञानिकृतविकर्मापीत्यर्थः ॥

***प्र०दी०***— यद्ययं कार्याभावो न ज्ञानिमात्रस्य । किन्त्वसम्प्रज्ञातसमाधिस्थस्यैव । तर्हि ''नैव तस्य कृतेनार्थो'' इत्युत्तरं वाक्यं न सङ्गच्छते । असम्प्रज्ञातसमाधेः करणस्यैवाभावेन तत्प्रयोजनाभावकथनस्यायोगात् । ज्ञानिनस्तु करणसम्भवेन तत्प्रयोजनप्रतिषेधस्योपपत्तेरिति चेन्न । तर्ह्यतीव मनस्समाधानमपि न कार्यमित्याक्षेपस्य ''तस्य कार्यं न विद्यत'' इत्युत्तरं कस्मादुक्तम् । कर्मकृतिकाले त्वयाऽहमुद्बोधनीय इति कश्चित्प्रत्युक्तः समाहितः तेन योगशास्त्रोदितोपायैरुद्बोधितः कर्म करोतीति कुतो नोक्तमित्याशङ्कानिरासायेदमेवमुच्यत इत्यभिप्रेत्य व्याचष्टे— **तस्येति** । तस्य असम्प्रज्ञातसमाधिस्थस्य । अर्थो नास्तीति सम्बन्धः । उत्तवोद्बोधितस्येति शेषः । एवं तर्हि ''तस्यैव महत्सुखत्वात्'' इत्याद्युक्तविरोध इत्यत उक्तम्— **आत्मेति** । समो वाऽऽत्मरत्या । समप्रतिषेधः कैमुत्यार्थः । न तु समव्ययफलं कर्मानुष्ठीयते ।

नन्वत्र कश्चनेत्यस्य विशेष्याकाङ्क्षायां सन्निधानादर्थ इति सम्बध्यते । तथा चेदमयुक्तम् । न हि कर्माकरणेऽर्थप्राप्तिरस्ति । येन प्रतिषेधः सङ्गच्छेत । अथ सन्निधानादपि योग्यतया बलवत्त्वात्कश्चन दोष इत्यध्याह्रियते । तथाप्यश्वमेधाद्यकृतौ प्रत्यवायाप्राप्तेः प्रतिषेधोऽसङ्गत एवेत्यतो 'नाकृतेम' इत्येतद्व्याचष्टे— **न चेति** । मा भूद्यज्ञादिकरणार्थमुत्थानम् । नित्यनैमित्तिकाकरणे प्रत्यवायप्राप्तेः तदर्थं तु स्यादित्याशङ्कानिरासार्थमेतत् । सन्ध्येति तत्कालेऽनुष्ठेयं कर्मोच्यते ।

माभूदल्पस्य यज्ञादेरनुष्ठाने प्रयोजनाभावः, सन्ध्याद्यकृतौ प्रत्यवायश्च । तथाऽपि गुरुदेवतादिपूजाकरणाकरणयोरर्थप्रत्यवायौ स्यातामेव । अतस्तत्सन्निधिप्राप्तावुत्थानमावश्यकमेवेत्याशङ्कानिरासार्थं 'न चास्ये'त्युक्तम् । तदयुक्तम् । उक्तविरोधादेवेत्यतो व्याचष्टे— **न चैतदिति** । एतदसम्प्रज्ञातसमाधानम् । अपहाय उत्थितस्येति शेषः । अपहायेत्यनेन गुर्वादिपूजायामाधिक्यं निषेधति । आधिक्यस्यैव पूर्वत्यागोपयोगित्वात् । सर्वभूतेषु गुर्वादिषु । नन्वर्थव्यपाश्रयः प्रयोजनप्राप्तिः । तथा च सर्वभूतेभ्य इति स्यादित्यत आह— **अर्थ इति** । अनेनार्थस्य व्यपाश्रयः प्राप्तिर्येन दर्शनादिना व्यापारेण भवतीति व्यधिकरणो बहुव्रीहिरयमित्युक्तं भवति । तथा च दर्शनादेर्विषया गुर्वादय इति सप्तम्युपपत्तिः । अनेनानर्थव्यपाश्रयोऽप्युपलक्ष्यते । स्यादेतत् । किमनेनायासेन । ज्ञानिमात्रविषयमेतत्किं न स्यात् । ज्ञानमात्रेण प्रत्यवायाभावात् । तत्राप्यस्यार्थस्य सम्भवात् ।

अवधारणादेश्चोपचरितार्थसम्भवादित्यत आह— **ज्ञानेति** । तज्ज्ञानमात्रम् । इतिशब्दो हेतौ । एतत्कार्याभाववचनम् । प्रत्युत विरोधीति हृदयम् । "प्रत्यवायो न भवति" इत्यङ्गीकृत्यैवोक्तम् । वस्तुतस्तु ज्ञानिनोऽप्यस्ति प्रतिषिद्धकरणादिनाऽनिष्टप्राप्तिरित्याह— **ईषदिति** । सूचिते च तदैव चित्तखेदः । उपलक्षणं चैतत् । मुक्तावानन्दह्रास इत्यपि द्रष्टव्यम् । तथा विहितकरणेनानन्द-वृद्धिरपीति ॥

*भा०दी०*— क्त्वाश्रुतिनिर्वाहाय समानकर्तृकक्रियान्तरमाह **उद्बोधितस्येति शेष इति** । **एवं तर्हीति** । कर्मकृतावर्थो नास्तीति पक्षे यदा ते मोहकलिलमिति श्लोके 'तदा गन्तासि निर्वेदं श्रोतव्यस्य श्रुतस्य चे'त्यस्य निर्वेदं नितरां लाभं न तु वैराग्यमिति व्याख्यावसरे तस्यैव भगव-च्छ्रवणादिकर्मण एव न्यहत्सुखत्वातदेव ज्ञानिनाऽप्यवश्यं कार्यमित्युक्तेस्तद्विरोध इत्यर्थः । बुद्ध्या विभज्यानुषङ्गेणान्वयमाह **समो वात्मरत्येति** । अप्रसक्तदोषनिरासायाह **समप्रतिषेध इति** । अप्रसक्तिमेवाह **न तु समेति** । व्ययपदं दृष्टान्तार्थम् । **उक्तविरोधादिति** । मा भूदल्पस्येत्यादि-नोक्तविरोधादित्यर्थः । ल्यबन्तनिर्वाहाय समानकक्रियान्तरमाह **उत्थितस्येति शेष इति** । **इति स्यादिति** । प्रयोजनावाप्तौ तेषामवधित्वप्राप्तेरिनि भावः । पुल्लिङ्गनिर्वाहायोक्तम् । **व्यापारेणेति** । **इत्यप्युपलक्ष्यन्ते इति** । गुरुदेवताविषयकदर्शनस्पर्शनवन्दनपूजादिव्यापारः कश्चिदपि अर्थप्राप्तिहेतुर्न भवति । तथा तत्कारणाभावोऽप्यनर्थव्यपाश्रयप्रत्यवायप्राप्तिहेतुर्न भवतीत्युपलक्षणीयमित्यर्थः । **तत्राप्यस्यार्थस्येति** । ज्ञानिमात्रेऽपि कार्यं न विद्यते इत्यादिनोक्तार्थस्येत्यर्थः । आत्मरतिरेवे-त्यवधारणादसम्प्रज्ञातसमाधिस्थस्यैवेत्युक्तस्य गतिमाह **अवधारणादेश्चेति** । आदिपदेनात्मतृप्त्या 'आत्मन्येव च सन्तुष्ट' इत्यस्य ग्रहणम् ॥

*भा०र०*— **अयम्** "तस्य कार्यं न विद्यते" इत्यत्रोक्तः । "यदीयं कार्याभावोक्तिः" इत्यपि क्वचित् पाठः । असङ्गतिमुपपादयति **असम्प्रज्ञातेति** । **करणस्य** कर्मानुष्ठानस्य । **तत्प्रयो-जनेति** । कर्मकरणप्रयोजनेत्यर्थः । एवं सिद्धान्तं दूषयित्वा पूर्वपक्षी स्वमते तत्सङ्गतिं दर्शयति **ज्ञानिनस्त्विति** । "इति चेत्, न" इत्यनन्तरं "यतः" इति शेषः । तेन "पञ्चम्यभावात् नेति साध्यान्वयानुपपत्तिः" इति चोद्यं परास्तम् । **कर्मकृतिकाले** सन्ध्यावन्दन-श्रवण-मननादि-कर्मानु-ष्ठानसमये । **समाहितः** समाधिं प्राप्तः । **तेन** वचनकर्मणा पुरुषेण । भेरीताडनादिनाऽपि बाह्य-प्रज्ञाऽभावे ह्यसम्प्रज्ञातसमाधिस्थत्वमिति कथं तस्योद्बोधः ? इत्यत उक्तम् **योगशास्त्रोदितो-पायैरिति** । अवयवविशेषस्पर्शादिः समाधिस्थस्याप्युद्बोधोपाय इति योगशास्त्र एवाभिधानात् तदुक्तोपायैः सम्भवत्युद्बोध इति भावः । **इदमेवमिति** । **इदं** समाधानम् **एवं** करणादौ प्रयोजनं नास्तीति प्रकारेणोच्यत इत्यर्थः ।

यद्वा इदं "नैव तस्य" इति वाक्यम् । **एवं** "तत्कृतावात्मरत्यधिकः समो वाऽर्थो नास्ति" इति भाष्यभाषितप्रकारेणोच्यत इति व्याख्येयम् । **व्याचष्टे** "नैव तस्य कृतेनार्थः" इति श्लोकमिति शेषः । समानकर्तृकत्वनिर्वाहाय आह **उद्बुद्धस्येति शेष इति** । 'उद्बोधितस्य' इत्यपि क्वचित् पाठः । **उक्तम्** 'तत्कृतौ' इति यथाश्रुतभाष्ये । समानकर्तृकत्वसम्भवेऽपि उक्त्वा समाहितस्य कर्मानुष्ठानमेव न सम्भवतीत्यन्यथाऽनुपपत्त्याऽध्याहारः कृतः । **एवं तर्हि** असम्प्रज्ञातसमाधिस्थस्यार्थो नास्तीति पक्षे । **इत्युक्तविरोध इति** । ज्ञानिकृतश्रवणध्यानादेः फलमस्तीति "तस्यैव महत्सुखत्वात् तेषाम्" (गी.भा.२.५२) इति द्वितीयाध्यायभाष्योक्तविरोधः । अत्र फलाभावकथनादित्यर्थः । 'आत्मरत्यधिकः' इत्यस्य समासत्वेन आत्मरतिशब्दस्य समपदेनान्वयायोगात् तत्र प्रतियोग्याकाङ्क्षायामाह **समो वाऽऽत्मरत्येति** । ननु "अधिकस्य पूर्वपरित्यागोपयोगित्वात्" इति वक्ष्यमाणरीत्याऽधिकफलनिषेधः समाध्यपरित्यागे हेतुरस्तु । समफलनिषेधस्तु न प्रयोजनवानित्यत आह **समप्रतिषेध इति** । समप्रयोजनमेव नास्ति । अधिकं तन्नास्तीति किमु वक्तव्यम् ? इति कैमुत्यप्रदर्शनार्थ इत्यर्थः । समफलस्य पूर्वपरित्यागहेतुत्वमेव किं न स्याद् ? इत्यत आह **न त्विति** । पूर्वं परित्यज्य तत्समफलं कर्मानुष्ठेयं न तु भवति । पूर्वफलहानेनैतदनुष्ठानेऽपि समव्ययफलत्वात् । तस्य च "व्यसनानि दुरन्तानि समव्ययफलानि च । अशक्यानि च वस्तूनि नाऽरभेत विचक्षणः" इति प्रेक्षावतोऽनुचितत्वात् । ततश्च समफलस्य पूर्वत्यागाप्रयोजकत्वान्न तन्निषेधो युक्त इति भावः । तुशब्दो हिशब्दार्थः । व्ययपदं च दृष्टान्तार्थमिति वा ।

**इदम्** अर्थशब्दसम्बन्धेन योजनम् । अत्र हेतुमाह **न हीति** । हिशब्दो हेतौ । **सन्निधानादपीति** । "आनन्तर्यमचोदना" (मी.सू. ३.१.२४) इति पूर्वतन्त्राधिकरणे दर्शपूर्णमासयोः "हस्तावनेनिक्ते । उलपराजिं स्तृणाति" इति श्रुतम् । ज्योतिष्टोमे च "मुष्टीकरोति । वाचं यच्छति । दीक्षितमावेदयति" इति श्रुतम् । तत्र हस्तप्रक्षालनम् आस्तरणमात्राङ्गम् । मुष्टीकरणवाग्यमौ च दीक्षितावेदनमात्राङ्गम् उत करिष्यमाणसर्वकर्माङ्गम् इति सन्दिह्य सन्निधानलक्षणक्रमप्रमाणेन हस्तावनेजनम् अनन्तरश्रुतोलपराज्यास्तरणमात्राङ्गम् । तथा मुष्टीकरणवाग्यमने च सन्निधानाद् दीक्षितावेदनमात्राङ्गमिति पूर्वपक्षं प्रापय्य लिङ्गप्रकरणाभ्यां प्रामाणिकसर्वकर्माङ्गत्वयोग्यताऽवगमाद् योग्यतारूपलिङ्गेन सन्निधिबाधेन करिष्यमाणसर्वकर्माङ्गमेव हस्तप्रक्षालनादीति सिद्धान्तितम् । तथा चात्राप्यर्थशब्दस्य सन्निहितत्वेऽपि तस्येहान्वयायोगस्याप्रसक्तप्रतिषेधापत्तिरूपबाधकेन सिद्धौ अबाधितान्वयप्रतियोगिसमर्पकस्य दोषशब्दाध्याहारस्य अन्वयप्रमापकत्वरूपयोग्यताबलादत्र न्याय्यत्वम् । उक्तं च चन्द्रिकायाम्—

"सन्निकृष्टमयोग्यं चेद् योग्यं दूरेऽपि संस्थितम् ।
गृह्यते सन्निधानाद्धि योग्यतैव बलीयसी ॥" (ता.चं.१.३.६.अधि.) इति ।

ततो दोषशब्दोऽध्याहर्तव्य इति भावः । **प्रत्यवायाप्राप्तेरिति** । नित्याकरणस्यैव प्रत्यवाय-हेतुत्वादिति भावः । तथाऽपि प्रतिषेधोऽसङ्गत एवेति सम्बन्धः ।

**तदर्थं** नित्यनैमित्तिककरणार्थम् । **तु स्यात्** 'उत्थानम्' इति वर्तते । **एतत्** "**नाकृतेनेह कश्चन**" इति गीतावाक्यम् । सम्यग् ध्यायन्त्यस्यां वेलायाम् इति सन्ध्या । सम्पूर्वाद् ध्यै = चिन्तायाम् इत्यतोऽधिकरणे 'आतश्चोपसर्गे' इत्यङ् इति कोशादौ सन्ध्याशब्दस्य कालविशे-षार्थत्वोक्तेः, कालस्य च करणाप्रसक्त्या 'सन्ध्याद्यकृतौ' इति कथम् ? इत्यतः सन्ध्याशब्देन लक्षणया कर्म ग्राह्यमित्याह **सन्ध्येति तत्काल इति** । अनेन लक्षणाबीजं सम्बन्ध उक्तः । **उच्यते** प्रतिपाद्यत इत्यर्थः ।

गीतामवतारयन् "न चैतदपहाय" इति भाष्यमवतारयति **मा भूदिति** । **अल्पस्य** अल्प-फलस्य । **प्रयोजनाभावः** आत्मरत्यधिकप्रयोजनाभावः । **प्रत्यवायश्च** मा भूत् । **तत्सन्निधीति** । गुरुदेवतासन्निधीत्यर्थः । **उक्तविरोधात्** "अर्थप्रत्यवायौ स्याताम्" इत्युक्तविरोधात् । 'एतद्' इति नपुंसकलिङ्गं निर्वोढुमाह **असम्प्रज्ञातेति** । 'अपहाय' इत्यस्य समानकर्तृकक्रियाऽन्तरम् अन्वयं समर्पयितुमध्याहरति **उत्थितस्येति** । आधिक्यनिषेधे किं निमित्तम् ? इत्यत आह **आधिक्य-स्यैवेति** । "गुरुदेवतापूजाकरणयोरर्थप्रत्यवायौ स्याताम्" इति कृतचोद्यस्य परिहाराय 'सर्वभूतेषु' इति भाष्यार्थमाह **गुर्वादिष्विति** । **इति स्यादिति** । "पुत्रात् प्रमोदो जायते" इत्यादाविवात्रापि पञ्चमी श्रूयेत, न सप्तमीत्यर्थः । **अनेन** भाष्येण **अर्थस्य** प्रयोजनस्य । पुल्लिङ्गघटनाय आह **व्यापारेणेति** । तथा च भावप्रदीपिका— "**व्यापार इति शेषः**" **इति** । **व्यधिकरण इति** । "सप्तमी-विशेषणे बहुव्रीहौ" इति ज्ञापकात् "समानाधिकरणानां बहुव्रीहिः" इतीष्टिः नातीव आदर्तव्येति भावः । 'सर्वभूतेभ्यः' इति स्याद् ? इति चोद्यं परिहरति **तथा च दर्शनादेरिति** । 'सर्वभूतेषु' इति विषयसप्तमीत्यर्थः । "गुरुदेवतापूजाद्यकरणे प्रत्यवायः स्याद्" इति चोद्यं परिहर्तुम् उक्तमुपलक्षणं मन्तव्यमित्याह **अनर्थेति** ।

**स्यादेतत्** एतच्चोद्यं तु स्यादित्यर्थः । तद् दर्शयति **किमनेनेति** । **एतत्** 'यस्त्वात्मरतिरेव' इत्यादिश्लोकद्वयम् । **ज्ञानमात्रेण** अपरोक्षज्ञानमात्रेण । **प्रत्यवायाभावादिति** । ज्ञानेन "तदधि-गम उत्तरपूर्वाघयोरश्लेषविनाशौ" (ब्र.सू. ४-१-१३) इति सूत्रे उत्तराघाश्लेषोक्तेरिति भावः ।

**अस्यार्थस्य** "तस्य कार्यं न विद्यते" इत्युक्तार्थस्य, "नाकृतेनेह कश्चन" इत्युक्तार्थस्य च । 'आत्मरतिरेव' इत्यवधारणाद् असम्प्रज्ञातसमाधिस्थस्यैव कार्यं न विद्यत इति भाष्यमप्यन्यथयति **अवधारणादेरिति** । **अवधारणम्** आत्मरतिरेवेत्येवशब्दः । आदिपदेन आत्मतृप्तत्वम् आत्मन्येव सन्तुष्टत्वं च गृह्यते । "स्थितप्रज्ञस्यापि कार्यो देहादिः" इति प्रमाणं वा ग्राह्यम् । **उपचरितार्थत्वेति** । आत्मरतिरिव ज्ञान्यपि न कर्म कुर्यादित्यवधारणस्य । स्थितप्रज्ञवत् स्थितस्य ज्ञानिनोऽप्यस्ति कर्म, किमु वक्तव्यम् अज्ञानिनोऽस्तीत्येवमुपचरितार्थत्वसम्भवादित्यर्थः । 'तद्' इति भाष्यपदमनूद्यार्थमाह **तज्ज्ञानमात्रमिति** । **इति शब्द इति** । "इति हेतुप्रकरणप्रकारादिसमाप्तिषु" (अमरे) इत्यभिधानादिति भावः । 'तस्य' इति भाष्यस्य अर्जुनस्येत्यर्थः । **कार्याभाववचनं** "तस्य कार्यं न विद्यते" (३.१७) इति कार्याभावप्रतिपादकं गीतावचनम् । **विरोधि** कर्मोपदेशविरोधि ।

**प्रतिषिद्धकरणादिनेति** । अत्र प्रतिषिद्धकर्माण्यष्टविधानि । क्षुद्रपापानि, पापानि, उपपातकानि, पातकानि, महापातकानि, सुमहापातकानि, स्वतिमहापातकानि, स्वतिमहत्तमपातकानीत्येकादशतात्पर्यरीत्या (भाग.ता. ११.१४.३०) ज्ञातव्यानि । तत्र च क्षुद्रपापादिचतुष्टयेन ज्ञानिनामपि मानुषादीनामेवानिष्टप्राप्तिः ।

> "ह्रासोऽपि मानुषादीनामानन्दस्य विकर्मणा ।
> भवेन्मुक्तौ विशेषेण स्वोच्चानामपराधतः ॥"

(अनु.३.४.४.अधि.७) (१४१२-१३ श्लो.)

> "वृद्धिह्रासौ विमुक्तिगौ । नृणाम्" (३.७)

इत्याद्यणुभाष्याद्युक्तेः । न पुनर्देवानामपि । "देवानामल्पेन विकर्मणा न किञ्चिद्धीयते" इति सुधोक्तेः (अनु. ३.४.४. अधि.) । महापातकादिचतुष्टयेऽपि महापातकसुमहापातकयोरेवानिष्टापादकत्वम् । स्वतिमहापातकस्य स्वतिमहत्तमपातकस्य च "तत्पराणां तु पापानां फलमन्धन्तमः स्मृतम् ।" (धर्मतत्त्वे) इति तमस्साधनत्वावेदनान्मुक्तियोग्येष्वप्रसक्तेः । अर्जुनश्च ज्ञान्युत्तमः । तत्र महापातकं वृत्रहत्यादिरूपं भाष्ये तच्छब्देनोक्तं विकर्म ईषत्प्रारब्धानर्थसूचकम् इत्यनिष्टप्राप्तिरिति कैमुत्याद् ज्ञानिमात्रस्यापि ज्ञानोत्तरविकर्मणाऽनिष्टप्राप्तिरस्तीत्यर्थः । विहिताकरणम् आदिपदार्थः । वृत्रहत्यादिवन्महापातकं चेत् तद् विकर्म ईषत्प्रारब्धानर्थसूचकं च भवतीति भाष्यार्थः स्पष्ट इति नोक्तः । अत्र सूचकत्वं नाम प्रारब्धभाव्यमहाऽनर्थानुमापकत्वे सति नान्तरीयचित्तखेदादिकारकत्वम्

अभिमतम् । "विषादनं यथा" इति निर्णये, "व्रणहेतुर्यथा रणः" इति तात्पर्ये च विषादनरणयोः दृष्टान्तत्वहेतुत्वयोरुक्तेरिति **आहुः** ।

ननु वृत्रहत्यादिरूपमहापातकस्य ईषत्प्रारब्धानर्थसूचकत्वमस्तु । तथाऽपि कथमनिष्टप्राप्तिः ? न हि सूचनमेवानिष्टम्, अदुःखरूपत्वादित्यत आह **सूचिते चेति** । तात्कालिकचित्तखेदो वृत्र-हत्यादिरूपविकर्मजन्य इत्यस्त्येवानिष्टप्राप्तिरित्यर्थः ।

वृत्रहत्यादिना चाशुचित्वासम्भाष्यत्वादिरैहिकः, नरकादिरामुष्मिकोऽनर्थश्च न भवतीति सूच-यितुं 'चित्त' इत्युक्तम् । अन्यथा खेदस्य चित्ताविनाभावेन व्यभिचाराभावात् चित्तपदानर्थक्यं स्यादिति **आहुः** ।

ननु महतो विकर्मणस्तात्कालिकचित्तखेदहेतुत्वम् उक्तम् अयुक्तम् ।

"ज्ञानादिव्यक्तिरव्यक्तिः सुखदुःखादिकं तथा ।
सुदृष्टब्रह्मतत्त्वानां भवत्यारब्धकर्मणा ॥" (ब्रह्मवैवर्ते)

इति प्रथमतात्पर्यवचने (भाग.ता. १.१५.२ श्लो.) खेदशब्दितदुःखस्य प्रारब्धकर्मफलत्वावेदनादिति चेन्न । ज्ञानोत्तरभाविदुःखानुभवः प्रारब्धपापफलमित्युत्सर्गः । अपवादसद्भावे साधनान्तरेणापि तदनुभवः सम्भवतीत्यङ्गीकारे विरोधाभावात् । आरब्धकर्मणैवेत्यवधारणाभावाच्च । प्रमाणे तथा-शब्दस्य समुच्चयार्थस्य आरब्धकर्मणा, तथाऽन्येनापि साधनेन ज्ञानोत्तरभाविना वृत्रहत्यादिरूप-महापातकेन दुःखादिकं भवतीत्यन्वयसम्भवाच्च । अन्यथा ज्ञानोत्तरकाले समनुष्ठितस्य काम्यस्य पुण्यस्य स्वातन्त्र्येण फलसाधनत्वाभ्युपगमो न युक्तः स्यात् । उक्तं च तात्पर्यनिर्णये (म.भा. ता.नि.११.१५०) कर्णस्य वालिमारणरूपमहापातकदोषेण सहस्रवर्मनामकासुरदूषितत्वम् । **केचित्तु,** सुखदुःखादिकं आरब्धफलमिति वचने प्रारब्धकर्मणः साक्षात् परम्परया दुःखादिहेतुत्वमभिप्रेतम् । एवञ्च प्रारब्धकर्मणा वृत्रहत्यादिरूपमहापातकम्, तेन च तात्कालिकचित्तखेदः असुरदूषितत्वम् इत्यादिफलमिति प्रारब्धकर्मणः प्रयोजकत्वेनापि तृतीयोपपत्तिरिति न तद्विरोध इति **आहुः** ।

नन्वेवमपि

धर्मवृद्ध्यर्थमेवैतत् पापमासीच्छचीपतेः ॥
न हि लोकावनं पापं त्रैलोक्येशस्य वज्रिणः ।
वृत्रं हत्वा महानासेत्यादिवेदपदं च यत् ॥
क्वचित् पापं च पुण्यानां वृद्धये भवति स्फुटम् ।
वृत्रहत्या यथेन्द्रस्य जाता पुण्यस्य वृद्धये ॥"(म.भा.ता.नि.२२.३३०-३३२)

इति तात्पर्यनिर्णये महेन्द्रस्य वृत्रहत्या पुण्याभिवृद्धिद्वारा महाफलहेतुरित्यावेदनेन कथम् अनर्थहेतुत्वमुक्तमिति चेन्न । महातिशयापादिकाया अपि वृत्रहत्यायाः तात्कालिकचित्तखेदरूपानिष्टापादकत्वेऽपि उक्तप्रमाणाविरोधाद् महासुखोत्पत्तिनान्तरीयकदुःखस्य भोजनादौ श्रमादेरिव, सन्ध्यार्घ्यप्रदानस्य महाफलहेतुत्वेऽपि पापत्वस्येव च वृत्रहत्यादेः किञ्चित्पापरूपत्वं युक्तम् । श्रूयते च जलाञ्जलिरूपार्घ्यप्रदानस्य "तेन पाप्मानमवधून्वन्ति" इति पापत्वम् । अत एव निर्णये पापशब्दाभ्यासः । "न हि लोकावनम्" इत्यत्र सयुक्तिकं पापत्वस्य वर्णनम्, प्रत्युत महत्त्वापादकश्रुत्युदाहरणं चोपपद्यते । भागवते च—

"स वाजिमेधेन यथोदितेन वितायमानेन मरीचिमिश्रैः ।
इष्ट्वापि यज्ञं पुरुषं पुराणमिन्द्रो महानास विधूतपापः ॥" (६.१३.२१)

इति वृत्रहत्याया ईषदनिष्टापादकत्वेन पापरूपत्वमुक्तम् । उक्तश्च तत्रैव

"ह्रीमन्तं हत्यया तप्तं निर्वृतिर्नामुमाविशत् ।" (भाग. ६.१३.११)

इति चित्तखेदः । यद्यपि

"श्रेष्ठापराधान्नान्यदोषस्य लेपस्तेजीयसां निर्णयोऽयं हि शास्त्रे ।"

(म.भा.ता.नि. १०.१५८)

इति निर्णये देवानां श्रेष्ठापराधादन्यदोषस्य लेपो नास्तीत्युक्तत्वेन इह वृत्रहत्यया नानिष्टप्राप्तिः शक्याऽङ्गीकर्तुम् । तथाऽपि तत्र लेपशब्दस्य मुक्तौ प्रसक्तानन्दाभावरूपह्रासार्थत्वाभावेऽप्यैहिकतात्कालिकेषच्चित्तखेदरूपानिष्टार्थकत्वाभ्युपगमेऽपि न विरोधः ।

**केचित्तु** तमोयोग्यवृत्रहत्यायाः सर्वात्मनाऽनिष्टप्रसञ्जकत्वं नास्तीति "न हि लोकावनं पापम्" "वृत्रं हत्वा महानास" (म.भा.ता.नि. २२.३३१) इत्यादितात्पर्यनिर्णयादिवाक्यप्रवृत्तिः । तत्रैव पापत्वोक्तिस्तु लोकदृष्ट्या पापवदवभासमानत्वेनैव । गीताभाष्यभागवतादिवाक्यप्रवृत्तिस्तु वैष्णववृत्रहत्याविषया । वृत्रद्वैविध्यं च "पापात्माऽसौ वैष्णवस्त्वष्टृजातः" (ऋ.भा.२अ.२२३ श्लो.) इति ऋग्भाष्यटीकादौ स्फुटमित्याहुः ।

ननु भाष्ये ब्रह्महत्यादिरूपमहापातकस्यैव फलमुक्तम् । महच्छब्दप्रयोगात् । तथा च तदनुसारेण "ज्ञानिनो महापातकेनानिष्टप्राप्तिरस्ति" इत्येवावतारयितव्ये कथं "प्रतिषिद्धकरणादिना" इत्युक्तम् ? इत्यत आह **उपलक्षणं चैतदिति** । वृत्रहत्यादिरूपमहापातकम् "ईषत्प्रारब्धानर्थसूचकम्" इति भाष्यम् उत्तमापराधरूपसुमहापातकादिना ततोऽप्यनर्थस्य मानान्तरेणावगतत्वाद् उपलक्षणमित्यर्थः । कोऽसावुक्ताद् 'अधिकोऽनर्थः' इत्यत आह **मुक्तावानन्देति** । ज्ञानिषु

मानुषादीनां क्लृप्तस्याप्यानन्दस्य ह्रासः अनभिव्यक्तिः । देवानां तु सुमहापातकादिरूपविकर्मणा स्वोत्तमापराधाख्येन प्राप्तव्यस्यैवानन्दादिगुणस्य ह्रासः । "स्वयोग्यपरिपूर्तये यावत् साधनमनुष्ठेयं ततोऽतिरिक्तेन साधनेनानुष्ठितेन यथाऽनन्दादिकं प्रसक्तं तस्याभावो भवति । यथा चन्द्रसुग्रीवयोः" इति सुधायां (अनु. ३.४.४.अधि.) स्पष्टम् । तथा चोक्तं पञ्चमतात्पर्ये (भाग.ता. ५.६.५. श्लो.)—

"अशुभाभावजोन्नाहो महाधीकारिणामपि ।
अशुभे कृते न भवति ......................।।" (ब्रह्माण्डे) इति ।
"देवानां नाशुभाद् ह्रासः" (ब्रह्माण्डे)

इति पञ्चमतात्पर्यमपि ज्ञानोत्तरकाले कृतेनाशुभकर्मणा क्लृप्तस्य हानिर्नास्तीत्येवंपरमिति न तद्विरोधः । तथा च सुधा "यस्य देवस्य यावद्गुणत्वं क्लृप्तं तस्य तु कथञ्चन केनापि विकर्मणा हानिर्न भवति" (अनु.३.४.४.अधि.) इति ।

एवमस्य श्लोकस्य ज्ञानिमात्रविषयत्वे 'नाकृतेन' इत्यंशोऽनुपपन्न इत्युक्त्वा "नैव तस्य कृतेनार्थः" इत्यंशोऽप्ययुक्त इति भावेन भाष्य उपलक्षणीयान्तरमाह **तथेति** ।

"ऋष्युत्तमा देवताश्च विमुक्तौ परिनिष्ठिताः ।
तथाऽप्यधिकसौख्याय यतन्ते शुभकर्मसु ॥
आनन्दो ह्रसतेऽकार्याच्छुभं कृत्वाऽभिवर्धते ॥" (ब्रह्माण्डे)

इति तात्पर्यादिवचनात् (भाग.ता. ५.६.५ श्लो.)

"देवानां नाशुभाद् ह्रासः शुभात् काचित् सुखोन्नतिः ॥" (ब्रह्माण्डे)

इति वचनं स्वयोग्यपूर्त्यर्थसाधनातिरिक्तशुभस्य क्लृप्ताधिकसुखोन्नतिसाधनत्वाभावपरमिति न तद्विरोध इति भावः । **इति** द्रष्टव्यमित्यन्वयः । देवानामानन्दवृद्धिः समुद्रतरलोपमा । मानुषादीनां तु यावत्स्वरूपाभिव्यक्तिरिति विवेकोऽन्यतोऽवसेयः । **केचित्तु** 'ईषत्' इत्यादिभाष्यम् अर्जुनमधिकृत्य प्रवृत्तमपि टीकायां ज्ञानिमात्रविषयतया व्याख्यानात् तदनुसारेण 'मुक्तावानन्दह्रासः' इति 'आनन्दवृद्धिः' इति च टीकावाक्यं मानुषमात्रविषयम् । "वृद्धिह्रासौ विमुक्तिगौ । नृणाम्" (अणु.भा. ३.७), "अल्पाधिकारिणां तत्र ह्रासोऽपि भवति ध्रुवम्" (ब्रह्माण्डे) इति वचनादित्याहुः ॥ १८ ॥

**गीताश्लोकद्वयाक्षरार्थस्तु**— यद्येवं कर्माकरणे हानिस्तत्करणे च लाभः, तर्ह्यसम्प्रज्ञातसमाधिरूपं परमेश्वरेऽतीवमनस्समाधानमपि न कार्यं प्रसज्येत । तदनुष्ठाने कर्मलोपावश्यम्भावादित्यत उच्यते **यस्त्विति** । तुशब्दः समाधिस्थत्वविशेषसूचनार्थः । **यः** असम्प्रज्ञातसमाधियुक्तो

**मानवः** अपरोक्षज्ञानी **आत्मरतिरेव** परमात्मविषयकदर्शनादिनिमित्तसुखवान् नान्यत्र रतिमान् इति एवार्थः । भगवतोऽन्यत्र रतिराहित्यं न प्रायेण । किन्तु सर्वात्मनेत्याह **आत्मतृप्त इति** । **आत्मना** परमात्मप्रसादेनैवान्यत्र सर्वात्मनाऽलम्बुद्धिमान् । केनाऽलम्बुद्धिः ? इत्याशङ्क्य पूर्वोक्तात्मरत्याख्य-सुखेनेति वक्तुमुक्तम् **सन्तुष्ट इति** । सम्यक् तुष्टिः केन जाता ? इत्यपेक्षायाम् असम्प्रज्ञातसमाधि-लक्षणया परमात्मनि स्थित्या इति ज्ञापयितुम् 'आत्मनि' इत्युक्तम् । आत्मनि स्थित्यैव तुष्टः, न पुनरन्येन इति एवशब्दः । य एवंविशेषणः **तस्य कार्यं** कर्तव्यं सन्ध्यावन्दनादिरूपं नित्यं नैमित्तिकं **न विद्यते** ॥ १७ ॥

ननु अतीव मनस्समाधानम् असम्प्रज्ञातसमाधिरूपमपि न कार्यम् । तत्र कर्म लोपावश्य-म्भावाद् इत्याक्षेपस्य "तस्य कार्यं न विद्यते" (३.१७) इत्युत्तरं कस्मादुक्तम् ?" कर्मकृतिकाले त्वयाऽहमुद्बोधनीयः" इति कश्चित् प्रत्युक्त्वा समाहितः, तेन योगशास्त्रोदितोपायैरुद्बोधितः कर्म करोतीत्येव कुतो नोक्तम् ? इत्याशङ्कानिरासार्थमुक्तम् **नैवेति** । **तस्य** असम्प्रज्ञातसमाधिस्थस्य समाधिं विना **इह कृतेन** यज्ञादिकर्मणा आत्मरत्यधिकः **अर्थः** पुरुषार्थो नास्ति, यदुद्देशेन समाधि-विरमः स्यात् । मा भूद् यज्ञादिकरणार्थमुत्थानम्, नित्यनैमित्तिकाकरणे प्रत्यवायप्राप्तेः, तदर्थे तु स्यादित्याशङ्का निरस्यते **नाकृतेनेति** । **तस्य** समाधिस्थस्य **अकृतेन** सन्ध्यावन्दनादिरूपतत्त-त्कालानुष्ठेयकर्माभावेन **कश्चन** योग्यतया 'दोषः' इत्यध्याहारः, नास्ति । मा भूदल्पस्य यज्ञादे-रनुष्ठाने प्रयोजनाभावः, सन्ध्याद्यकृतौ प्रत्यवायश्च । तथाऽपि गुरुदेवतादिपूजाकरणाकरणयोरर्थ-प्रत्यवायौ स्यातामेव । ततस्तत्सन्निधौ तत्पूजार्थम् उत्थानमावश्यकमेवेत्यत उक्तम् **न चास्येति** । **सर्वभूतेषु** गुर्वादिषु । विषयसप्तमीयम् । अर्थस्य **व्यपाश्रयः** प्राप्तिर्येन दर्शनसम्भाषणपूजनादि-व्यापारेण स व्यापारः **अर्थव्यपाश्रयः** । गुर्वादिविषयकदर्शनादिव्यापारः समाध्यपेक्षयाऽधिक-प्रयोजनहेतुर्नास्ति । अधिकलाभे पूर्वं त्यजन्ति प्रेक्षावन्तः । एवं गुरुदेवतापूजाद्यकरणमप्यसम्प्रज्ञात-समाधिस्थस्यैव नानर्थप्राप्तिहेतुरित्युपलक्षणीयमिति ॥ १८ ॥

**गीतातात्पर्यनिर्णयः**

**तृप्तिसन्तोषशब्दयोः पर्यायत्वेऽपि परमात्मना तृप्तः परमात्मनि तृप्त इति विशेषः ।**

*न्या०दी०*— कर्म कर्तव्यमित्यत्र युक्त्यन्तरमुच्यते **यस्त्विति** ॥ तत्र "सन्तोषस्तृप्ति-रापूर्तिः" इत्यादेः तृप्तिसन्तोषशब्दयोरेकार्थत्वात् 'आत्मतृप्तः' इत्युक्तत्वात् "आत्मन्येव च सन्तुष्टः" इति पुनरुक्तिरित्यत आह **तृप्तीति** ॥ विशेषोऽर्थ इति शेषः ।

**गीतातात्पर्यनिर्णयः**

"विष्णुप्रसादाद्रतिमांस्तृप्तो विष्णुप्रसादतः ।
विष्णावेवातितृप्तश्च मुक्तोऽसौ विध्यगोचरः ॥" इत्याग्नेये ।

*न्या०दी०*— कुत एवमर्थकल्पनेत्यतः श्लोकं स्मृत्यैव व्याचष्टे **विष्ण्विति** ॥

**गीतातात्पर्यनिर्णयः**

"रतिरानन्द उद्दिष्टस्तृप्तिस्तु कृतकृत्यता ।
प्रीतिस्तु द्विविधः स्नेहः कर्मजो निज एव च ॥"

—इति शब्दनिर्णये ।

*प्रका०*— यस्त्वित्येतं श्लोकं व्याचष्टे **तृप्तीत्यादिना** । उपकारजः स्नेहः **कर्मजः** ॥

*न्या०दी०*— एवं तृप्तिसन्तोषशब्दयोरेवार्थभेदाच्च न पुनरुक्तिरिति भावेन तयोरर्थभेदे प्रमाणमाह **रतिरिति** ॥ **आनन्दः** स्वरूपभूतः । **कर्मजः** उपकारादिजातः ।

*भा०दी०*— **अर्थभेदाच्चेति** । कृतकृत्यत्वप्रीतिरूपार्थभेदाच्चेत्यर्थः ।

**गीतातात्पर्यनिर्णयः**

"सन्तोषस्तृप्तिरापूर्तिः प्रीतिः पर्यायवाचकाः ॥"

—इत्यभिधाने ॥ १७-१८ ॥

*न्या०दी०*— रतितृप्तिप्रीतिशब्दानां भिन्नार्थत्वे किमायातं तृप्तिसन्तोषशब्दयोरर्थभेदे इत्यतः प्रीतिसन्तोषशब्दयोः पर्यायत्वात् तृप्तिसन्तोषशब्दयोरर्थभेदे इत्यतः प्रीतिसन्तोषशब्दयोः पर्यायत्वात् तृप्तिप्रीतिशब्दयोरर्थभेदे तृप्तिसन्तोषशब्दयोरर्थभेदः सिद्ध एवेति भावेन तत्पर्यायत्वे प्रमाणमाह **सन्तोष इति** ॥ **पर्यायवाचकाः** पर्यायेण वाचकाः ॥

**गीता**

**तस्मादसक्तः सततं कार्यं कर्म समाचार ।**
**असक्तो ह्याचरन् कर्म परमाप्नोति पूरुषः ॥ १९ ॥**

*वि०वि०*— ततः किमित्यपेक्षायां यस्मादसम्प्रज्ञातसमाधिस्थस्य मुक्तस्य वा कार्यं नास्ति, तस्मादतादृशत्वात् ज्ञान्यपि त्वं कार्यं वर्णाश्रमोचितं कर्म समाचरेत्याह **तस्मादिति** । ननु जिज्ञासोर्ज्ञानिनश्च कर्मणा प्रयोजनाभावात् कार्याभावः किं न स्यादित्यत आह **असक्त इति** । जिज्ञासुरसक्तः कर्माचरन्नेव ज्ञानद्वारा परं ब्रह्म प्राप्नोति । ज्ञानी तु कर्माऽऽचरन् परमातिशयितमानन्दं प्राप्नोति । अतो मुक्तासम्प्रज्ञातसमाधिस्थव्यतिरिक्तस्य कर्मणा फलसद्भावादस्त्येव कार्यमिति भावः ॥

*सा०सं०*— **तस्माद**सम्प्रज्ञातसमाधिस्थस्य वा मुक्तस्यैव वाऽकर्मत्वेन त्वादृशेनावश्यं कर्मणः कर्तव्यत्वात् । **असक्तः** फलस्नेहरहितः सन् । **कार्यम्** अवश्यकर्तव्यं **कर्म** । **सततं समाचर** भगवत्पूजात्वेनानुतिष्ठ । ननु मुक्तस्य कर्मणा प्रयोजनाभावात् यथा कार्याभावः, एवं मुमुक्षोरपि कर्मणा फलाभावात् कार्याभावः किं न स्यादित्यत आह **असक्त इति** । **पुरुषः असक्तः कर्माचरन्नेव** ज्ञानद्वारा **परमाप्नोति हि** यस्मात्, तस्मात् मुक्तसमाधिस्थाभ्यामन्यस्य कर्मणा फलसत्वादस्त्येव कार्यमिति भावः ॥

*अ०प्र०*— तस्मादेवंभूतस्य ज्ञानिन एव कर्मानुपयोगो नान्यस्य तस्मात् त्वं कर्म कुर्वित्याह **तस्मादिति** ।

हि = यस्मात्[१], असक्तः[२], कर्म[३], आचरन् सन्[४], परं[५], पुरुषं[६], आप्नोति[७], तस्मात्[८], असक्तः सततम्[९], कार्यं[१०], कर्म[११], सततम्[१२], समाचर[१३] इत्यन्वयः ।

हि = यस्मात्[१], असक्तः = जिज्ञासुः[२], कर्म आचरन् सन्[४], परं = मोक्षं परमात्मानं वा चित्तशुद्धित्वात् ज्ञानद्वारा[५], पुरुषं = पूर्णानन्दं श्रीविष्णवाख्यम्[६], आप्नोति[७], तस्मात्[८], असक्तः = कर्म आचरन्नेव त्वं फलसङ्गरहितो भूत्वा[९], सततं = निरन्तरं[१०], कार्यं = अवश्यकर्तव्यतयोदितं स्ववर्णाश्रमोचितं नित्यनैमित्तिकं कर्म युद्धादि कर्म[११], समाचर = सम्यगाचर[१३], ज्ञानिनोऽपि कर्म कार्यमिति भावः ॥ १९ ॥

**भाष्यम्**

**यतोऽसम्प्रज्ञातसमाधेरेव कार्याभावः तस्मात् कर्म समाचार ॥ १९ ॥**

*प०टी०*— उत्तरश्लोकं परामृष्टहेतुप्रदर्शनपूर्वकं व्याचष्टे **यत इति** ॥

*न०टी०*—असम्प्रज्ञातसमधिविषयत्वे तु श्लोकद्वयस्यार्जुनं प्रति कर्मोपदेशोपयोगित्वं दर्शयन्नेवोत्तरं श्लोकं व्याचष्टे **यत इति** ॥

*प्र०दी०*— 'तस्मादसक्त' इति परामर्शविषयो न प्रतीयते । तं दर्शयन् व्याख्याति— **यत इति** । त्वं चेदानीमसम्प्रज्ञातसमाधिर्न भवसीति शेषः । कर्मणोऽवश्यकर्तव्यत्वेऽसम्प्रज्ञातसमाधि-विलोपप्रसङ्गान्नेदमवश्यं कर्तव्यमित्यतः अहमपि न कुर्यामिति परिचोदनायामसम्प्रज्ञातसमाधिस्थ-प्रतिबन्दीं मोचयितुं तस्य वैलक्षण्यमुक्त्वा तत्फलमिदमुच्यत इति नासङ्गतिः ॥

*भा०दी०*— ननु कर्मकृतावकृतौ धार्मानर्थौ न स्त इत्युक्त्वा पुनरत्र कर्म समाचरेत्युक्तिर्न सङ्गतेति शङ्कां निराह **कर्मणोऽवश्यकर्तव्यत्व इत्यादिना** । **परिचोदनायामिति** । अर्जुनेन कृतायामिति योज्यम् । **उक्त्वेति** । यस्त्वित्यादिश्लोकद्वयेनेति योज्यम् ॥

*भा०र०*— **इति परामर्शेति** । इति गीतायां तच्छब्दपरामर्शविषय इत्यर्थः । पूर्वश्लोकद्वये "तस्य कार्यं न विद्यते" (३.१७), "नैव तस्य कृतेनार्थः" (३.१८) इति कर्मणोऽकर्तव्यत्व-मभिधाय, इह तत्कर्तव्यत्ववचनम् असङ्गतमित्याशङ्क्य भाष्ये शेषमाह **त्वं चेदानीमिति** । एवं सति असङ्गतिपरिहारप्रकारं मूलावतारप्रदर्शनव्याजेनाह **कर्मण इति** । **परिचोदनायाम्** अर्जुनेन कृतायाम् । **वैलक्षण्यम्** असम्प्रज्ञातसमाधिस्थत्वाभावरूपम् । **तत्फलं** वैलक्षण्योक्तिफलम् । इदं "कर्म समाचर" इतिकर्तव्याचरणम् ॥

यतोऽसम्प्रज्ञातसमाधेरेव कर्तव्याभावः, त्वं चेदानीमसम्प्रज्ञातसमाधिस्थो न भवसि, **तस्मा-दसक्तः** फलस्नेहरहितः । जिज्ञासोर्ज्ञानिनश्च कर्मणा प्रयोजनाभावात् कार्याभावः स्यादित्यत उक्तम् **असक्त इति** । जिज्ञासुः **असक्तः** पुरुषः **कर्माऽचरन्नेव** ज्ञानद्वारा **परं** ब्रह्म **आप्नोति** । ज्ञानी तु कर्माऽचरन् **परं** परिपूर्णम् आनन्दम् आनन्दवृद्धिं प्राप्नोति । अतोऽसम्प्रज्ञातसमाधिस्थविलक्षणेन कर्म फलभावात् कार्यमिति **गीताक्षरार्थः** ॥ १९ ॥

**गीतातात्पर्यनिर्णयः**

**यस्मादमुक्तस्य कार्यमस्त्येव तस्मादसक्तः । असक्त आचरन्नेव यस्मा-त्परमाप्नोति ।**

*प्रका०*— तस्मादित्येतं श्लोकं व्याचष्टे **यस्मादिति** । "तस्य कार्यं न विद्यत" इत्यधस्तन-वाक्येन मुक्तस्यैव कार्यं न विद्यत इत्युच्यते ।

*न्या०दी०*— ननु मुक्तस्य कार्यं न विद्यत इत्युक्त्वा "तस्मादसक्तः" इत्युच्यते । तत्र कर्मकरणे हेतोरनुक्तत्वात् "तस्मात्" इति किं परामृश्यत इत्यत आह **यस्मादिति** ॥ यथा मुक्तस्य

प्रयोजनाभावात् कार्याभावः एवं मुमुक्षोरपि कर्मणा प्रयोजनाभावात् कार्याभावः किं न स्यादित्यत उच्यते **असक्त इति** ॥ तत्र कर्मणैव मोक्षप्राप्तिरुच्यत इत्यन्यथाप्रतीतिनिरासाय तद्व्याचष्टे **असक्त इति** ॥ कर्माऽचरन्नेवेत्येवार्थो न तु कर्मैवाचरन्निति भावः । तस्मादमुक्तस्य कर्मणा फलसद्भावा-दस्त्येव तस्य कार्यमिति वाक्यशेषः ।

*भा०दी०*— कर्मैवाचरन्नित्यर्थाभिप्रायेणाह **कर्मणैव मोक्षेत्यादिना** ॥

**गीतातात्पर्यनिर्णयः**

**मुक्तस्यैव कार्यं नास्तीत्येवकारार्थोऽपि यस्त्विति तुशब्देनावगतः ।**

*न्या०दी०*— नन्वमुक्तस्य कार्यमस्तीत्यनुक्तत्वात् कथं तस्मादिति तत्परामर्शः स्यादिति चेन्न । मुक्तस्यैव कार्यं नास्तीत्युक्त्याऽमुक्तस्य कार्यमस्तीति प्राप्तत्वात् । ननु मुक्तस्यैव कार्यं नास्तीत्येवकाराभावात् कथममुक्तस्य कार्यसद्भावप्राप्तिरित्यत आह **मुक्तस्यैवेति** । एवकाराभावेऽपि तदर्थावधारणस्य तुशब्देनावगतत्वात् तेनामुक्तस्य कार्यसद्भावः प्राप्यत इति भावः ।

*भा०दी०*— **उक्तत्वादिति** । सहयज्ञा इत्यादि न कर्मयोगेन योगिनामित्यादिना वेति भावः ।

**गीतातात्पर्यनिर्णयः**

**"तस्मात् कर्म समाचरेत्" इत्युपसंहारविरोधश्चान्यथा ।**

*न्या०दी०*— केचित्तु 'यस्तु' इति वाक्यं ज्ञानिमात्रविषयतया व्याकुर्वते । न तद् युक्तम् । "यस्त्वेवात्मरतो मुक्तो", "विष्णुप्रसादाद्रतिमान्" इत्यादिस्मृत्या मुक्तिविषयतया गृहीतत्वात् ज्ञानिनामपि कार्यसद्भावस्योक्तत्वाच्चेत्यभिप्रेत्य दोषान्तरं चाह **तस्मादिति** ॥ यद्यत्र ज्ञानिमात्रस्य कार्याभावोऽभिप्रेतः स्यात् तर्ह्यर्जुनं प्रति 'तस्मादसक्तः' इत्युपसंहारवाक्ये कर्मविधानं विरुद्धं स्यात् । तस्यापि ज्ञानित्वादिति भावः ।

**गीतातात्पर्यनिर्णयः**

**"ब्रह्मनिष्ठा ब्रह्मरता ब्रह्मज्ञानसुतर्पिताः ।<br>पाण्डवानां च मुक्तानामन्तरं किञ्चिदेव हि ॥"**

**इति भविष्यत्पर्ववचनाच्च नार्जुनस्यामुख्याधिकारिता ।**

*प्रका०*— नन्वस्य बद्धस्य कार्याभावे "कर्म समाचरे"त्युपरितनवाक्यविरोधः स्यात् । न च ज्ञानानधिकारित्वादर्जुनः कर्मणि न युज्यत इत्यत आह **ब्रह्मेति** ।

*न्या०दी०*— अर्जुनस्य ज्ञानित्वे प्रमाणाभावेनाज्ञत्वात् कर्माधिकारित्वमेव । अतः तं प्रति कर्मविधानं न विरुद्धमित्यत आह **ब्रह्मेति** ॥ ये तेषामिति योज्यम् ।

*भा०दी०*— पूर्वोत्तरार्धयोः सङ्गतत्वाय आह **तेषामिति योज्यमिति** ॥

**गीतातात्पर्यनिर्णयः**

**आत्मरतिरेव स्यादित्येवशब्देन मुक्तानामेभ्यो विशेषो दर्शितः । एषां कदाचिद्दुःखाभासस्यापि भावात् ॥ १९ ॥**

*प्रका०*— "यस्त्वात्मरतिरेव स्यात्" इत्युक्तलक्षणस्य पाण्डवादिष्वपि सम्भवात् "तस्य कार्यं न विद्यत" इत्यतः तद्विषयं किं न स्यादित्यत आह **आत्मरतिरिति** ॥

*न्या०दी०*— मुक्तविषयत्वेऽप्यस्यार्जुनं प्रति कर्मविधानं विरुद्धम् । पाण्डवानामेतद्वचनबलात् ब्रह्मरतत्वादिमुक्तलक्षणवत्तया मुक्तसाम्यादित्यत आह **आत्मेति** ॥ न पाण्डवानां मुक्तानां चातिसाम्यम् । 'आत्मरतिरेव' इति मुक्तानामरतिव्यावर्तकैवशब्देन पाण्डवेभ्यो विशेषप्रतीतेरित्यर्थः । मुक्तानां दुःखाभावेऽपि कथं पाण्डवेभ्यो विशेष इत्यत आह **एषामिति** ॥

**गीता**

**कर्मणैव हि संसिद्धिमास्थिता जनकादयः ।**
**लोकसङ्ग्रहमेवापि सम्पश्यन्कर्तुमर्हसि ॥ २० ॥**

*वि०वि०*— ननु ज्ञानादेव मोक्षसिद्धेः कथम् 'असक्त आचरन्नेव परमाप्नोति' इत्युक्तमित्याशङ्क्याफलार्थत्वेन विहितस्य कर्मणः कर्तव्यतायामाचारः प्रमाणमस्तीत्याह **कर्मणैवेति** । कर्मणा सह कर्म कुर्वन्त एव । सिद्धिं मोक्षम् । आस्थिताः ।

'सहैव कर्मणा सिद्धिमास्थिता जनकादयः ।
ज्ञाननिष्ठा अपि ततः कुर्युर्वर्णाश्रमोचितम् ॥'

इति वचनात् । यद्वा, कर्मणा करणेन परम्परया सिद्धिं मोक्षम्, ज्ञानम् वाऽऽस्थिता इत्यर्थः ।

अथवा, **'तमेवं विद्वान्'** इत्यादिनिरवकाशश्रुत्यादिविरोधात् श्रुत्यादेर्ज्ञानाभावे मोक्षाभाव इत्येवम्परत्वात् ज्ञानप्राधान्यपरत्वाच्च संसारनिवृत्तिसुखवृद्धिलक्षणे मोक्षे साहित्यमुपपद्यते । एतदपेक्षयैव ज्ञानकर्मसमुच्चयवादाः । इतोऽपि कर्म कर्तव्यमित्याह **लोकसंग्रहमिति** । न केवलमानन्दातिशयः, किन्तु; लोकसङ्ग्रहणमपि प्रयोजनं सम्पश्यन् कर्म कर्तुमर्हसि । लोकसङ्ग्रहोऽज्ञजनस्य कर्मणि प्रवर्तनम् । तस्य भगवत्प्रीतिः प्रयोजनम् । तदुक्तम् —

'अज्ञानां ज्ञानदं कर्म ज्ञानिनां लोकसङ्ग्रहात् ।
अद्धैव तुष्टिदं मह्यं सा मुक्तानन्दपूर्तिदा ॥' इति ॥

***सा०सं०***— ननु ज्ञानादेव मोक्षसिद्धेः कथम् "असक्तो ह्याचरन्नेव" इत्युच्यत इत्यतो मुक्तावानन्दातिशयार्थं विहितकर्मणोऽवश्यकर्तव्यतायां ज्ञानिनामाचारमपि प्रमाणयति **कर्मणैवेति** । सहयोगे तृतीया । **जनकादयो** जनकप्रियव्रतादयो ज्ञानिनः । **कर्मणैव** कर्मसहिता एव कर्म कुर्वन्त एव । **संसिद्धिं** सम्पूर्णमोक्षम् । **आस्थिताः** प्राप्ताः । ज्ञानमात्रात् मुक्तिसिद्धावपि तत्रानन्दातिशयार्थं कर्म कुर्वन्तीत्यर्थः । तृतीयायाः करणार्थत्वेऽपि कर्मणा करणेन संसिद्धिं मोक्षमाप्ता इत्यर्थः । 'लाङ्गलेन जीवामः' इतिवत् ज्ञानद्वारकत्वाभिप्रायं करणत्वमिति ।

यद्वा, **संसिद्धिं** ज्ञानम् । **कर्मणा** प्राप्ता इत्यर्थः । न केवलं ज्ञानिनामाचारात् कर्म कर्तव्यम्, किं त्वीश्वरप्रीतिद्वारा मुक्तिहेतुलोकसङ्ग्रहार्थत्वाच्च कर्म कार्यमित्याह **लोकेति** । लोकानामज्ञजनानां कर्मणि प्रवृत्तिरूपं **सङ्ग्रहमेवापि** । न केवलं ज्ञान्याचारमित्यपेरर्थः । एवकारस्तु तिष्ठतु तावत् कर्मकरणेऽन्यो हेतुरित्यर्थसूचकः । **सम्पश्यन् कर्म कर्तुमर्हसि** । जनस्य कर्मणि प्रवर्तनेन भगवत्प्रीतिः । तथा च मोक्षे सुखातिशय इति ज्ञेयम् । तदुक्तम्—

"अज्ञानां ज्ञानदं कर्म ज्ञानिनां लोकसङ्ग्रहात् ।
अद्धैव तुष्टिदं मह्यं सा मुक्तानन्दपूर्तिदा ॥" इति (कृष्णसंहितायाम्) ॥

***अ०प्र०***— सदाचारं प्रमाणयति **कर्मेति** ।

जनकादयः[१], कर्मणैव सह[२], संसिद्धिम्[३], हि[४], आस्थिता[५], एवं लोकसङ्ग्रहमपि[६], सम्पश्यन्[७], इहलोककर्मकर्तुं[८], अर्हसि[९] ।

हि = यस्मात्[४], जनकादयः = ज्ञाननिष्ठापि[१], कर्मणैव सह = कर्मणा सहैव वर्तमानाः शुद्धसत्त्वाः सन्तः कर्म कुर्वन्त एव[२], संसिद्धिं = मोक्षं सम्यग्ज्ञानं वा[३], आस्थिताः = कर्मणां करणेन परम्परया सिद्धिं प्राप्ताः यद्वा कर्मणा ज्ञानं प्राप्ताः[५], एवं लोकसङ्ग्रहमपि = लोकसङ्ग्रहो नाम

जनस्य कर्मणि प्रवर्तनं तत्कथं ज्ञानिनां सद्धर्मे कृते जनः सर्वोऽपि कर्म करिष्यति अन्यथा ज्ञानिदृष्टान्तेन अज्ञोऽपि कर्म त्यजेत् एवं लोकरक्षणमपि प्रयोजनत्वेन च भगवत्प्रीतिर्भवति तदर्थमपि[६], सम्पश्यन् = प्रयोजनं पश्यन्[७], इह लोके कर्म कर्तुं[८], अर्हसि = योग्योऽसि ॥

**भाष्यम्**

आचारोऽप्यस्तीत्याह— कर्मणैवेति । कर्मणा सह, कर्म कुर्वन्त एवेत्यर्थः । कर्म कृत्वैव । ततो ज्ञानं प्राप्य वा । न तु ज्ञानं विना । प्रसिद्धं हि तेषां ज्ञानित्वं भारतादिषु ।"तमेव विद्वानमृत इह भवति" इत्यादिश्रुतिभ्यश्च । अत्रापि कर्मणां ज्ञानसाधनत्वोक्तेश्च "बुद्धियुक्तः" इति । गत्यन्तरं च "नान्यः पन्था" इत्यस्य नास्ति । इतरेषां ज्ञानद्वाराऽप्यविरोधः । यत्र च तीर्थाद्येव मुक्तिसाधनमुच्यते—

"ब्रह्मज्ञानेन वा मुक्तिः प्रयागमरणेन वा ।
अथवा स्नानमात्रेण गोमत्यां कृष्णसन्निधौ ॥'

इत्यादौ, तत्र पापादिमुक्तिः । स्तुतिपरता च । तत्रापि हि कुत्रचिद् ब्रह्मज्ञानसाधनत्वमेव उच्यते अन्यथा मुक्तिं निषिध्य—

"ब्रह्मज्ञानं विना मुक्तिः न कथञ्चिदपीष्यते ।
प्रयागादेस्तु या मुक्तिः ज्ञानोपायत्वमेव हि ॥ इत्यादौ ।

न च तीर्थस्तुतिवाक्यानि तत्प्रस्तावेऽप्युक्तं ज्ञाननियमं घ्नन्ति । यथा कश्चिद् दक्षं भृत्यं प्रत्युक्तानि "अयमेव हि राजा किं राज्ञा" इत्यादीनि । यथाऽऽह भगवान्—

"यानि तीर्थादिवाक्यानि कर्मादिविषयाणि च ।
स्तावकान्येव तानि स्युरज्ञानां मोहकानि वा ।
भवेन्मोक्षस्तु मद्दृष्टेर्नान्यतस्तु कथञ्चन ॥

—इति नारदीये ।

अतः अपरोक्षज्ञानादेव मोक्षः । कर्म तु तत्साधनमेव ॥ २० ॥

**प०टी०**— हेत्वन्तरेण कर्मविधायकप्रघट्टकमवतारयति **आचारोऽपीति** । ननु ज्ञानान्मोक्षं वदता भगवता कथं कर्मणो मोक्षसाधनत्वमुच्यते ? इत्यत आह **कर्मणेति** । तृतीयायाः सहार्थत्वेऽवधारणान्वयः क्व ? इत्यत आह **कर्मेति** । करणार्थेऽपि तृतीया युक्तेत्याह **कर्मेति** । 'केवलकर्मणैव मोक्षं प्राप्ताः' इत्यर्थः किं न स्यात् ? इत्यत आह **न त्विति** । जनकादीनां ज्ञानित्वेन प्रसिद्धेर्न तेषां केवलकर्मणा मुक्तिरित्यर्थः । श्रुतिविरोधाच्च नायमर्थ इत्याह **तमेवमिति** । 'तमेवं विद्वान्' इत्यादिवत् 'अपाम सोमम्' इति श्रुतयोऽर्थान्तरेऽपि सन्तीत्यत आह **गत्यन्तर-मिति** । ननु ज्ञानविकल्पेन यत्र तीर्थस्नानादेरेव मोक्षसाधनत्वमुच्यते तत्र न ज्ञानसाधनार्थता युक्तेत्यत आह **यत्र चेति** । कुत इयं व्यवस्था ? इत्यत आह **तत्रापीति** । नन्वेतद्वचनेनैव तस्य बाधः किं न स्यात् ? इत्यत आह **न चेति** । इत्यादीनि 'न भृत्यत्वं घ्नन्ति' इति शेषः । लौकिकवाक्यवत्स्तावकमेतद्वाक्यमित्यत्र प्रमाणमाह **यथेति** । उपसंहरति **अत इति** ॥

**न०टी०**—इतोऽप्यसम्प्राज्ञातसमाधेरेव कार्याभावो न तु ज्ञानिमात्राणाम् । तेषामपि कर्मा-चरणदर्शनादिति भावेनोत्तरं प्रघट्टकमवतारयति **आचार इति** । यतो हि ज्ञाननिष्ठा अपि जनकादयः कर्म कुर्वन्ति लोकसङ्ग्रहाय, लोकसङ्ग्रहेण च भगवत्तुष्ट्या मुक्तावानन्दवृद्धिः, अतः सिद्धत्वान्मुक्तेः ज्ञाननिष्ठस्य मम न कर्मफलमिति न मन्तव्यम् । सर्वथा स्वप्रयोजनाभावस्तु भगवत एव सदा स्वत एवाप्तकामस्य । तथाऽप्यसौ जगद्रक्षादिकर्मणि प्रवर्तते । अतस्तदिच्छानुसारिणाऽऽधिकारिकेण कर्म विशेषतः कर्तव्यम्, युद्धादिकमपीति भावः । ननु न कर्मैव मुक्तिसाधनं प्रतीयते । तत्कथं ज्ञानिनां कर्माप्यनुष्ठेयमिति वर्ण्यते ? इत्याशङ्क्य सहार्थेयं तृतीया न करणार्थेति तावदाह **कर्मणा सहैवेति** । तर्ह्यवधारणान्वयः क्व ? इत्यत आह **कर्म कुर्वन्त एवेति** । ज्ञाननिष्ठा अपि कर्मणा सहैव मुक्तिं गता इति कर्म कुर्वन्त एव, न तु परित्यज्येत्यर्थः । ज्ञानकरणत्वात् कर्मणः, करणे वेयं तृतीया, न साक्षात् मोक्षकरणत्वेनेत्याह **कर्म कृत्वेति** । ज्ञानित्वे जनकादीनामियं व्यवस्था स्यात् । तदेव कुतः ? इत्यत आह **प्रसिद्धं हीति** । श्रुतिविरोधश्चान्यथेत्याह **तमिति** । न केवल-मन्यथाश्रुतिविरोधः, किन्तूक्तविरोधश्चेत्याह **अत्रेति** । 'कर्मजं बुद्धियुक्ता हि फलं त्यक्त्वा' इत्यत्र । ननु भगवत्पक्षेऽपि 'अपाम सोमममृता अभूम' इत्यादिविरोध इत्यत आह **गत्यन्तरं चेति** । ननु यत्र तीर्थस्नानादेर्ब्रह्मज्ञानेन सह विकल्पः श्रूयते मुक्तिसाधनत्वे, कथं तत्र ज्ञानाङ्गत्वम् ? इत्यत आह **यत्र चेति** । ननु विकल्पोक्तितः तुल्यबलत्वावगते, कथं पुरुषबुध्याऽन्यतरजघन्यता ? इत्याशङ्क्य, वचनादेवेयं व्यवस्थेत्याह **तत्रापि हीति** । पापमुक्तिद्वारा ज्ञानोपायत्वात् प्रसस्तं तीर्थस्नानादी-त्यर्थः । ननु यत् तीर्थस्नानादेर्मोक्षसाधनत्ववचनम्, तेन तस्य यज्ज्ञानसाधनत्वोक्त्या ज्ञानस्यैव

मोक्षसाधनत्ववचनम्, तस्य बाधः किं न स्यात् ? अविशेषादित्यत आह **न चेति** । यदि ज्ञानतीर्थस्नानादिकयोः तत्तत्प्रस्तावे मोक्षसाधनत्वमुच्यते, तर्ह्येव तयोर्वचनयोः कथञ्चिदविशेषः शङ्क्येत । न तु तीर्थस्नानादिप्रस्तावेऽपि ज्ञानस्यैव मोक्षसाधनत्वोक्तावित्यर्थः । अत एव तानि लौकिकवाक्यवत् स्तावकान्येव, मोहकानि चेत्याह **यथेति** । भगवद्दर्शनमेव मोक्षसाधनम् । तीर्थस्नानादेर्मुक्तिसाधनत्ववचनमुक्तप्रकारेण स्तावकं मोहकं वेत्येतद्भगवद्वाक्येनापि स्थापयति **यथाऽऽहेति** । उपसंहरति **अत इति** ॥

***प्र०दी०***— कर्मण एव मुक्तिसाधनत्वमुच्यत इत्यन्यथाप्रतीतिनिरासाय 'कर्मणैव हि' इत्यस्य तात्पर्यं तावदाह— **आचारोऽपीति** । विहितस्य कर्मणः कर्तव्यतायां प्रमाणमिति शेषः । अपिः पूर्वोक्तहेतुसमुच्चये । कर्मण एव मोक्षकारणत्वं तृतीययोच्यत इति प्रतीतिनिरासाय व्याचष्टे— **कर्मणेति** ।

नन्वेवं सहयोगे तृतीयायां व्याख्यायमानायां जनकादयः कर्मणा सहैव मुक्तिमास्थिता इति वाक्यार्थः स्यात् । न चायं युक्तः । "पुत्रेण सहैवागतः पिता" इत्यत्र यथा पुत्रस्याप्यागमनान्वयः प्रतीयते, तथा कर्मणोऽपि मुक्तिमास्थितत्वप्रसङ्गादित्यत आह— **कर्मेति** । यद्यपि श्रूयमाणक्रियायां सहयोगो नोपपद्यते । तथाप्यध्याहृतावान्तरक्रियायामुपपद्यत एव । ततश्च यथा "सहैव दशभिः पुत्रैर्भारं वहति गर्दभी" इत्यत्र दशभिः पुत्रैः सहैव वर्तमानाप्येकैव भारं वहतीत्यर्थः । तथाऽत्रापि कर्मणा सहैव वर्तमानाः कर्म कुर्वन्त एव इत्यर्थ उपपद्यत इति भावः । द्विविधं हि सहयोगमभिप्रेत्य समासविधौ पाणिनिरपि विशेषणमभाणीत् "तेन सहेति तुल्ययोग" इति । कर्मसाहित्यं च मुक्तावानन्दवृद्ध्यर्थमिति ज्ञातव्यम् । उपपदविभक्तेः कारकविभक्तिर्बलीयसीति चेत्सत्यम् । वक्ष्यमाणबाधात्तत्परिग्रहोपपत्तेः । अथवा करणे तृतीया । तथापि 'लाङ्गलेन वयं जीवाम' इतिवत्पारम्पर्येण कर्मणो मुक्तौ कारणत्वमित्याह— **कर्मेति** । सिद्धिमास्थिता इति वेत्यर्थः । सिद्धिशब्दो ज्ञानार्थः । वेत्यस्याप्युपलक्षणमेतत् ।

यथा प्रतीतार्थः किं न स्यादित्यत आह— **न त्विति** । ज्ञानं विना केवलेन कर्मणा जनकादयः सिद्धिं गता इत्यर्थस्तु नेत्यर्थः । कुत इत्यत आह— **प्रसिद्धं हीति** । हिशब्दो हेतौ । अस्तु तेषां ज्ञानित्वम् । मुक्तौ तु कर्मैव कारणमित्यत आह— **तमेवमिति** । अत्रापि गीतायामपि । "कर्मजं बुद्धियुक्ता हि" इत्यादावित्यर्थः । प्राग्ज्ञानाज्ज्ञानसाधनं पश्चान्मुक्तिसाधनमिति समुच्चयवादिनां मतम् । न तु केवलकर्मवादिनाम् । न चात्र प्रमाणमप्यस्ति । ननु यथा मोक्षस्य

ज्ञानसाध्यत्वे 'तमेवं' इत्याद्यागमाः सन्ति, तथा कर्मसाध्यत्वेऽपि 'अपाम सोमं' इत्यादयोऽपि विद्यन्ते । तत्कथं निर्णय इत्यतः सावकाशत्वनिरवकाशत्वबलादित्याह— **गत्यन्तरं चेति** । ज्ञानद्वारेति व्याख्यानेऽपीत्यर्थः । ननु कर्मवाक्यान्यपि 'ब्रह्मज्ञानेन वा' इत्यादीनि निरवकाशानि सन्ति । तत्र ब्रह्मज्ञानसमकक्ष्यतया तीर्थस्नानादेरुक्तत्वेनोक्त-व्याख्यानायोगात् । अतः पुनरनिर्णय एवेत्याशङ्क्य तेषामपि सावकाशत्वमाह— **यत्रेति** । **तीर्थादीति** । तत्स्नानादीत्यर्थः । पापादिमुक्तिः मुक्तिशब्दार्थ इत्यर्थः । न चात्र सर्वत्र मुक्तिशब्द एवास्ति । संसारमुक्तिरित्यादेरपि सम्भवात् । अतो गत्यन्तरमाह— **स्तुतीति** । प्रशस्तत्वोपलक्षणेत्यर्थः । प्रशस्तत्वसादृश्येन गौणी वा । दुष्टजन-मोहनार्थत्वस्याप्युपलक्षणमेतत् । कुत एतत्कल्प्यत इत्यत आह— **तत्रापीति** । यत्र तीर्थस्नानादिकं मुक्तिसाधनमुच्यते तत्रैव प्रस्तावे । साधनत्वं तीर्थस्नानादीनाम् । अन्यथा ज्ञानं विना । या मुक्तिः । यन्मुक्तिसाधनत्वम् । वाक्यत्वाविशेषात् 'ब्रह्मज्ञानेन वा' इत्यादिभिरेव 'ब्रह्मज्ञानं विना' इत्यादीनां बाधः किं न स्यादित्यत आह— **न चेति** । असाधारणसाधारणप्रसङ्गोक्तत्वादिनेति भावः । अत्र दृष्टान्तमाह— **यथेति** । इत्यादीनि ''नायं राजा किन्तु तद्भृत्य एव'' इत्यादीनि तत्प्रस्तावेऽप्युक्तानि न निघ्नन्तीति शेषः । आगमसिद्धा चेयं व्यवस्थेत्याह— **यथेति** । मद्दृष्टे-रित्येतदर्थप्रतिपत्त्यर्थं भगवानित्युक्तिः । **तीर्थादिवाक्यानीति** । तीर्थक्षेत्रवासादीनां मोक्षसाधनत्व-वाक्यानीत्यर्थः । कर्मेति यज्ञादेर्ग्रहणम् । आदिपदेन ध्यानादेः सङ्ग्रहः । पूर्ववदर्थः । अज्ञानां सम्य-ग्ज्ञानायोग्यानाम् । उपसंहरति— **अत इति** ॥

***भा०दी०*— पूर्वोक्तहेत्विति** । तस्मादिति श्लोकोक्तहेत्वित्यर्थः । **श्रूयमाणक्रियायामिति** । संसिद्धिशब्दितमुक्तिप्राप्तिरूपक्रियायामित्यर्थः । **अध्याहृतेति** । वर्तमानत्वरूपान्तरक्रियायामित्यर्थः । 'सहयुक्तेऽप्रधान' इत्यत्र सहयोगः प्रधानक्रियायामेवं द्वेधा विवक्षित इत्यत्र ज्ञापकमाह **द्विविधं हीत्यादिना** । कुत्र विशेषणमवादीदित्यत आह 'तेन सहेति तुल्ययोग' इतीति । द्वितीयाध्याय-द्वितीयपादे तेन सहेति बहुव्रीहिसमासविधायकं सूत्रं तुल्ययोगः समानसम्बन्धः सहेत्येतच्छब्दरूपं तुल्ययोगे वर्तमानेति तृतीयान्तेन समस्यते 'सपुत्र आगत' इति । तुल्ययोग इति किं सहैव दशभिः पुत्रैरित्यादौ सपुत्रा गर्दभीति न भवति अवस्थानक्रियायामेव ...........स्वहनक्रियायां सहभावा-भावादिति वृत्त्यादावुक्तेरतस्तुल्ययोग इति विशेषणं वदन् पाणिनिः अत ............ त्तसहयोग इत्यभिप्रैतीति भावः । ननु कर्मणां मुक्त्यहेतुत्वेन सहिताः सन्तः संसिद्धिमास्थिताः इत्युक्तिः कथमित्यत ......... विवशहेतुत्वेनेत्याह **कर्मसाहित्यं चेति** । **उपपदेति** । 'सहयुक्त' इति सूत्रोक्त तृतीया सहेत्युपपदप्रयुक्तां सहपदाप्रयोगे .... व्येत्यतो ..... प्राप्ततृतीयाया अप्युपपदविभक्तित्वात् ।

'कर्तृकरणयोस्तृतीया' इति करणार्थतृतीया तु कारणकविभक्तिः । स तु ............. पीत्यर्थः । **वक्ष्यमाणेति** । तमेवमित्यादिनेति भावः । इति वेति शब्दात्पूर्वं भाष्यशेषमाह **सिद्धिमार्गस्थिता इति** । .... पारम्पर्यं व्यक्तीकृतं भवति । सिद्धिशब्दः गीतास्थ इत्यर्थः । **एतदिति** । कर्मकृत्वे-तीत्यादि भाष्यमित्यर्थः । तथा च कर्मणो ज्ञानमाप्ता इत्येव गीतार्थ इति भावः । यथा प्रतीति-कर्मणा मुक्तिहेतुत्वरूप इत्यर्थः । **कर्मजमिति** । 'कर्मजं बुद्धियुक्ता हि फलं त्यक्त्वा मनीषिण' इति पूर्वाध्याये कर्मजं त्यक्त्वा निष्कामनया कृत कर्माणीश्वराय समर्प्य बुद्धियुक्ताः ज्ञानिनो मनीषिणो परोक्षज्ञानिनश्च सन्तो जन्मबन्धविनिर्मुक्ता इत्याद्युक्तेरिति भावः ।

ननु कर्मजमित्यत्र कर्मणो ज्ञानोपायत्वमुक्तमिह तु ज्ञानिनोऽपि कर्म कुर्वत एव । संसिद्धिं गता इत्युक्ताज्ञानकर्मसमुच्चय उच्यते । तथा च पूर्वोत्तरविरोधः । कर्मणां मुक्तिहेतुत्वाबादिमतापकरणं चायुक्तमित्यत आह **प्राग्ज्ञानमिति** । **मुक्तीति** । मुक्त्यैकदेशानन्दवृद्धिसाधनमिति ज्ञानसाधनम् । तत् सम्पूर्णमुक्तिसाधनमिति समुच्चयवादिनां सर्वस्यापि ज्ञानिनो ज्ञानिनश्च कर्मावश्यकमिति वादिना-मस्माकं न तु केवलकर्मवादिनामनन्तमतस्तन्निरासो युक्त इत्यर्थः । न केवलं तमेवेत्याश्रुतिविरोध इत्याह **न चात्रेति** । ज्ञानं विना कृतकर्मणो मुक्तिहेतुत्वेत्यर्थः । **गौणी वेति** । मुक्तिर्यथा प्रशस्ता तथा स्नानादिना जायमानफले प्रशस्तत्वगुणायोगाद्गौणी मुक्तिस्तुतिरित्यर्थः । यद्वा मुक्तिसाधनं ज्ञानं प्रशस्तं तथा तीर्थस्नानादीनि प्रशस्तानीति गौणीवृत्तिरित्यर्थः । अन्यथेत्यनुवादो ज्ञानं विनेति व्याख्यावचनगतपदानुवादेनार्थमाह **या मुक्तिरिति** । **असाधारण इति** । असाधारणप्रस्तावोक्तम् । साधारणप्रसङ्गोक्तः ज्ञाननियमबाध इत्यर्थः । प्राग्विवृतमेतत् पूर्वाध्यायेऽन्योत्कर्षनिरासप्रस्तावे । **पूर्ववदर्थ इति** । प्रशस्तत्वसादृश्येन गौणीवृत्तिर्व्याख्येत्यर्थः ॥

***भा०र०*— अपिरिति** । 'आचारोऽपि' इति भाष्यगतापिशब्दः विहितस्य कर्मणः कर्तव्यत्वे स्तुत्याद्यात्मकार्थवादः, "जगच्चक्रप्रवर्तकत्वरूपहेत्वन्तरं च" इति 'सहयज्ञाः' (३.१०) इति "अन्नाद् भवन्ति भूतानि" (३.१४) इत्यादिना चोक्तं यद्धेतुद्वयं तत्समुच्चये वर्तत इत्यर्थः । 'अपि-शब्दः' इति वाच्येऽपि 'अपिः' इत्युक्तिः "अपिः पदार्थ-सम्भावन-अन्ववसर्ग-गर्हा-समुच्चयेषु" इति पाणिनिवचनम् अपिशब्दः समुच्चये वर्तत इत्यत्र प्रमाणमिति दर्शयितुम् । तेन च "अपि-शब्दस्याव्ययत्वात् 'अव्ययादाप्सुपः' इति सुपो लुकि 'अपि' इत्येव निर्देष्टव्यम्" इति चोद्यं परि-हृतम् । शब्दपरस्वरूपत्वेऽव्ययत्वाभावात् । अत एव "अपिः पदार्थ" इत्यादि पाणिन्युक्तिरिति । **तृतीययोच्यत इति** । "कर्तृकरणयोस्तृतीया" इति स्मरणादिति भावः । **सहयोग इति** । सह-शब्दयोग इत्यर्थः । 'सहयुक्तेऽप्रधाने' सहार्थेन युक्तेऽप्रधाने तृतीयाविभक्तिर्भवतीति पाणिनीयवचनं

मनसि निधायैवमुक्तम् । यद्यप्यत्र सहशब्दो न गीतायामस्ति । तथाऽपि "विनाऽपि सहशब्देन तृतीया भवति 'वृद्धो यूना' इति निपातनात्" इति वृत्तिवचनाद् भवत्येवात्र तृतीयेति भावः । संसिद्धिपदार्थोक्तिः **मुक्तिमिति** ।

**आगमनान्वय इति** । पितुरागमनक्रियाऽन्वयः शाब्दः । पुत्रस्य तु सहार्थान्यथाऽनुपपत्त्येति हरदत्तवचनाद् आगमनक्रियाऽन्वयोऽप्रधानत्वाद् आर्थ इति भावः । 'नन्वेवम्' इति कृतचोद्यमनूद्य परिहरति **यद्यपीत्यादिना** । **श्रूयमाणक्रियायाम्** 'आस्थिताः' इति शब्दोपस्थापितास्थानक्रियायाम् । **अध्याहृतावान्तरक्रियायामिति** । 'वर्तमाना' इत्यध्याहृतावान्तरक्रियायाम्, **उपपद्यते** कर्मणा सहयोगः । अवान्तरक्रियामध्याहृत्य दर्शयति **सहैव वर्तमाना इति** । अत्र भाष्यं तात्पर्यरूपमिति भावेन तद् घटयति **कर्म कुर्वन्त एवेतीति** । "सहयुक्तेऽप्रधाने" इत्यत्र सहयोगः श्रूयमाणक्रियायाम् अवान्तरक्रियायां चान्वेतीत्येतत् पाणिनिसंमत्याऽप्याह **द्विधाऽपि सहयोगमिति** । "द्विविधं हि" इत्यपि क्वचित् पाठः । **अभाणीत्** अवादीत् ।

**केचित्तु,** प्रथमप्रतीतार्थत्यागपूर्वकं गृहीतत्वम् अध्याहृतत्वमत्र विवक्षितम् । सहशब्दबोध्याया अध्याहारायोगात् । अश्रुतपदकल्पनं ह्यध्याहारः । वर्तमानक्रिया चात्र तादृशीति । तस्यामुपपद्यत एवान्वय इत्यर्थः । प्रकृतं दर्शयति **ततश्चेति** । **सहैव वर्तमानाऽपीति** । वर्तमानैरेव दशभिः पुत्रैर्भारं वहतीत्यर्थो वक्तव्यः । "विद्यमानैरेव पुत्रैर्भारं वहतीत्यर्थः" इति वृत्तिकारवचनात् । "कर्मणा सहैव" इत्यत्रापि वर्तमानेन कर्मणेत्यर्थः । तस्य तात्पर्यकथनरूपं "कर्म कुर्वन्तः" इति भाष्यमिति ।

अयमिह 'यद्यपि' इत्यादिघट्टस्य निर्गलितोऽत्यर्थः । सहशब्दो ह्यर्थद्वये वर्तते । तत्र 'तुल्ययोगः' एकोऽर्थः । "तुल्ययोगे वर्तमानम्" इति वृत्तिवचनात् । विद्यमानशब्दितं 'वर्तमानत्वम्' परोऽर्थः । "विद्यमानतावाची सहशब्दः" इति कौस्तुभकारवचनात् । तथा च प्रकृते यद्यपि सहशब्दस्तुल्ययोगार्थो न भवति । "कर्मणो मुक्तिमास्थितत्वप्रसङ्गः इत्युक्तदोषात् । तथाऽपि वर्तमानक्रियाघटितवर्तमानतार्थः सम्भवत्येव । ततश्च यथा "सहैव दशभिः" इत्यत्र वर्तमानेष्वेव पुत्रेषु स्वयमेकैव भारं वहतीत्यर्थः, तथा **कर्मणा वर्तमानेन** कर्मणि वर्तमान एवेत्यर्थः सम्पद्यते । अतो नोक्तदोषावकाशः । भाष्यमप्युक्तार्थतात्पर्यकमिति । सहशब्दस्यार्थद्वयवाचित्वे पाणिनीयमुपष्टम्भकं दर्शयति **द्विविधं हीति** । उक्तार्थयोर्द्वयोरपि सहशब्दवाच्यत्वमस्तीत्यभिप्रेत्येत्यर्थः । **समासविधौ** समासविधिप्रकरणे । विशेषणं सहशब्दस्य क ? इत्यत आह **तेन सहेति तुल्ययोग इतीति** । सहेति पदं तुल्ययोगे वर्तमानं तृतीयान्तेन समस्यते स बहुव्रीहिः । सपुत्र आगतः । "तुल्ययोगे

वर्तमानम्'' इति विशेषणात् । ''सहैव दशभिः पुत्रैर्भारं वहति गर्दभी'' इत्यत्र 'सपुत्रा' इति न समास इति सूत्रं व्याख्यातं वृत्तौ । तथा च '' 'तेन सह' इति 'तुल्ययोगे' इति विशिंषन् पाणिनिस्तस्य तुल्ययोगं वर्तमानतां चार्थमभिसन्धत्त इति ज्ञायत इति विभावितं भवति'' इति **व्याचक्षते** ।

ननु सहयोगतृतीयया व्याख्यातया करणतृतीयात्वाभावेन कर्मण एव मोक्षसाधनत्वमिति प्रातीतिकार्थायोगे ''कर्मणा सह कर्म कुर्वन्त एव'' इति भाष्ये तत्साहित्योक्तिः किमर्था ? इत्यत आह **कर्मसाहित्यं च मुक्तावानन्दवृद्ध्यर्थमिति** । तथा चोक्तं द्वितीये ''ज्ञानेनाविद्यायां निवृत्तायामशेषानिष्टनिवृत्तिः भवति । स्वरूपसुखं च बहुतरं व्यज्यते । न तु सर्वम् । ज्ञानोत्तरम् अनुष्ठितेन निवृत्तकर्मणा प्रसन्नः परमेश्वरो मुक्तौ विषयानुत्पाद्य तद्भोगेन ज्ञानानभिव्यक्तमपि स्वरूपसुखं व्यक्तीकरोति'' (प्र.दी. २.५०) इति । न चैवं समुच्चयवादापत्तिः । विनाऽपि कर्म मोक्षस्वरूपसिद्धेः । कर्म तु ज्ञानसाध्ये फलेऽतिशयमात्रमादधाति । तदुक्तं ''सहकारित्वेन च'' (ब्र.सू. ३-४-३३) इति सूत्रभाष्ये—

''सर्वदुःखनिवृत्तिस्तु ज्ञानिनो निश्चितैव हि ।
उपासया कर्मभिश्च भक्त्या चाऽऽनन्दचित्रता ॥'' (बृहत्तन्त्रे) इति ।

इयमेवाऽऽनन्दवृद्धिर्नाम यज्ज्ञानानभिव्यक्तमपि स्वरूपसुखवैचित्र्यं ज्ञानोत्तरकर्मप्रयोज्यमिति । इममेवार्थम् अभिप्रेत्य ''मुक्तेर्ज्ञानकर्मसमुच्चयसाध्यत्वं चोच्यते'' (प्र.दी. २.५०) इति द्वितीयटीका-वाक्यं प्रवृत्तम् । समुच्चयवादिनां तु ज्ञानकर्मणोरुभयोरपि मोक्षस्वरूपनिष्पादकत्वं समप्राधान्येन, दर्शपूर्णमासयोः समुच्चितयोरेव स्वर्गसाधनत्वमिवेति पन्थाः । स तु न सिद्धान्त्यभिमत इति भावेन तत्त्वप्रकाशिकायां स्तुत्यधिकरणे ''न चैवं समुच्चयवादापत्तिः'' इति स पक्षः प्रतिक्षिप्त इति न तद्विरोधः । ननु कर्मणामाशुतरविनाशितया कथं मुक्तावत्स्थानम् ? येनोत्तरकालानुष्ठितकर्मणां विषयोपभोगव्यङ्ग्यसुखातिशयोपयोगित्वमिति चेन्न । शुद्धभागवतधर्मप्रसन्नपरमेश्वरस्याऽऽनन्दवृद्धि-हेतुत्वाङ्गीकारात् । तदुक्तम् ''निवृत्तकर्मणा प्रसन्नः परमेश्वरः'' (प्र.दी. २.५०) इति । छान्दोग्य-भाष्यटीकायामपि ''कर्मणाम् आशुतरविनाशित्वेऽपि तज्जातभगवत्प्रसादस्य नित्यत्वेन न तस्य कर्म क्षीयते'' इत्युक्तम् ।

ननु ''कर्मणा संसिद्धिमास्थिताः'' इत्यत्र तृतीया ''सहयुक्तेऽप्रधाने'' इति शास्त्रप्राप्ता, न पुनः ''कर्तृकरणयोस्तृतीया'' इति शास्त्रप्राप्तेति भाषितम् । तदयुक्तम् । करणतृतीयायाः सहयोगतृतीया-

ऽपेक्षया बलवत्त्वाद् इति भावेन शङ्कते **उपपदविभक्तेरिति**। उपोच्चारितं पदमुपपदम्, तन्निमित्ता या विभक्तिः सा **उपपदविभक्तिः**। ततोऽपि **कारकविभक्तिः** कारकवाचिविभक्तिर्बलीयसी। प्रधानभूतक्रियासम्बन्धस्यान्तरङ्गत्वात्। अन्तरङ्गस्य च बहिरङ्गात् प्राबल्यं "देवेभ्यो नमः" इत्यत्रोपपदविभक्तेश्चतुर्थ्याः कारकविभक्तिर्द्वितीया बलवतीति "नमस्करोति देवान्" इत्येव युक्तमिति वैयाकरणैरुक्तत्वाद्, इहापि 'कर्मणा' इति तृतीया करण एव व्याख्यातव्या, न सहयोग इति भावः।

**वक्ष्यमाणेति**। "न तु ज्ञानं विना" (गी.भा. ३.२०) इत्यादिना श्रुत्यादिबलात् कर्मणो मोक्षसाधनत्वं नास्तीति वक्ष्यते— तद्बाधितत्वात् करणतृतीयाऽनादरेण सहयोगतृतीयापरिग्रहस्यैवोपपन्नत्वादित्यर्थः। भाष्ये वाशब्दश्रवणादाह **अथवेति**। **तृतीया** 'अस्तु' इति शेषः। 'अस्तु वा' इत्यपि पाठो दृश्यते। एवञ्च "उपपदविभक्तेः कारकविभक्तिर्बलीयसी" इति वचनमनुसृतमेव भवतीति भावः। **लाङ्गलेनेति**। तत्र **लाङ्गलस्य** हलस्य जीवने पारम्पर्येण करणत्वमस्तीति यथा कारकविभक्तिस्तृतीया, तथेहापि "कर्मणा ज्ञानमातनोति ज्ञानेनामृतीभवति" इति श्रुतेः पारम्पर्येण करणेऽपि युक्ता कारकविभक्तिरित्यर्थः। "प्राप्य" इति भाष्यस्य "संसिद्धिमास्थिताः" इति मूलेन अन्वये ल्यबुपपत्तिरिति भावेनाह **सिद्धिमिति**। संसिद्धिमित्यर्थः।

"अत्रापि कर्मणां ज्ञानसाधनत्वोक्तेश्च" इत्यग्रिमभाष्यसूचितगत्यन्तरमप्यत्र द्रष्टव्यमित्याह **सिद्धिशब्द इति**। **एतत्** "कर्म कृत्वैव ततो ज्ञानं प्राप्येति वा" इति भाष्यम्। "कर्मणैव हि संसिद्धिम्" इत्यत्र सिद्धिशब्देन ज्ञानमर्थतया ग्राह्यमिति व्याख्यानान्तरस्याप्युपलक्षणम्। तथा च न पारम्पर्याश्रयणमपीति भावः।

**यथा प्रतीतेति**। "कर्मैव मुक्तिसाधनम्" इति प्रातीतिकोऽर्थ इत्यर्थः। "ज्ञानं विना" इति भाष्यार्थः **केवलेन कर्मणेति**। तुशब्दं व्यत्यस्य योजयति **इत्यर्थस्त्विति**। ननु जनकादीनां ज्ञानित्वे सिद्धे स्यादियं व्यवस्था। तदेव कुतः ? इत्यत आह— प्रसिद्धं हीति भाष्यावतारमभिप्रेत्य तत्र हिशब्दार्थमाह **प्रसिद्धं हीतीति**। तेन "भाष्ये प्रसिद्धपदसद्भावात् तदर्थकहिशब्दस्य नातीव प्रयोजनम्" इति चोद्यं निरस्तं भवति। तथा च भावप्रदीपिका "जनकादीनां ज्ञानित्वेन प्रसिद्धेः" इति। गीतायामपि स्थलविशेषप्रदर्शनाय भाष्ये 'बुद्धियुक्ताः' (२.५१) इत्युक्तम्। स्फुटत्वाय तत्पूर्वपदं पठति **कर्मजमिति**। "योगः कर्मसु कौशलम्" (२.५०) इति पूर्ववाक्ये **कर्मसु** कर्मणां मध्ये फलस्नेहरहितं भगवदर्पणेन क्रियमाणं कर्मसु कौशलमुच्यते। स एव योगो नाम। अतः फलस्नेहरहितकर्मैव ज्ञानोपाय इत्युक्तम्। तदेव ज्ञानसाधनम्, ज्ञानफलं च। विपरीतं तु 'कर्मजम्' इति श्लोकः। "कर्मजं फलं त्यक्त्वा" इत्युपलक्षणम्। कर्मजफलसङ्कल्पत्यागादिपूर्वकं

भगवदर्पणबुद्ध्या कर्मानुष्ठानरूपं योगमास्थाय **बुद्धियुक्ताः** सम्यक्शास्त्रजनितभगवज्ज्ञानयुक्ताः इति ज्ञानसाधनं कर्मयोग इत्युक्तं भवति । ततश्च **मनीषिणः** अपरोक्षज्ञानिनो भूत्वा **जन्मबन्धविनिर्मुक्ता अनामयं पदं गच्छन्ति** इति ज्ञानफलं विवृतम् । अत्र च श्लोके कर्मणो ज्ञानसाधनत्वस्योक्तत्वात् केवलकर्मणैव जनकादयो मुक्तिमास्थिता इति न युक्तमिति भाष्यार्थ इति भावः । भाष्य इतिशब्द आद्यर्थः इति भावेनोक्तम् 'इत्यादौ' इति । टीकारीत्या सिद्धिशब्दस्य ज्ञानार्थत्वे "स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः" (१८.४६), "सर्वं कर्माखिलं पार्थ ज्ञाने परिसमाप्यते" (४.३३) इत्यादिगीतावचनमादिपदार्थः ।

ननु **कर्मणा सह** कर्म कुर्वन्त एव मुक्तिमास्थिता इति भाष्ये कर्मणो मुक्तिहेतुत्वस्य, जनकादीनां ज्ञानित्वस्योक्त्या समुच्चयवादाभ्युपगमात् कथं कर्मणो मोक्षहेतुत्वं "ज्ञानसाधनत्वोक्तेश्च" इति प्रतिक्षिप्यते ? कथञ्च कर्मणो मोक्षहेतुत्ववादनिरासः ? इत्यत आह **प्रागिति** । अपरोक्षज्ञानोत्पत्तेः पूर्वमनुष्ठितानि निवृत्तकर्माण्यपरोक्षज्ञानसाधनानि । ततः पश्चादनुष्ठितानि तु मुक्तावानन्दवृद्ध्यर्थानीति ज्ञानकर्मसमुच्चयवादिनां सिद्धान्तिनां मतम् । न चैवंविधं केवलकर्मणो मोक्षहेतुत्वं वदतां परेषां मतम् । अतो न पूर्वोत्तरविरोधः, नापि परमतनिरासोऽनुपपन्न इति भावः ।

न केवलं "तमेवं विद्वानमृत इह भवति नान्यः पन्था अयनाय विद्यते" इत्यादिश्रुतिविरोधः, किं नामोक्तार्थे प्रमाणाभावश्चेत्याह **न चात्रेति** । ज्ञानं विना कृतकर्मणो मुक्तिहेतुत्वम्, अत इत्यर्थ इति तु **स्वामिनः** ।

**केचित्तु,** ज्ञानात्पूर्वमनुष्ठितं कर्म ज्ञानसाधनम् । ततो न "कर्मजं बुद्धियुक्ताः" (२.५१) इत्यादिवाक्यविरोधः । ज्ञानोत्तरं च कर्म मोक्षसाधनम् । ततश्च न "तमेवं विद्वान्" इत्यादिश्रुतिविरोधः । "यस्य प्रसादात् परमार्तिरूपादस्मात् संसारान्मुच्यते नापरेण" इति श्रुतिबलेन प्रसादस्यैव मोक्षसाधनत्वमिति मते "विद्वानमृतो भवति" इति श्रुतिव्याख्यानवत् इहापि तद्व्याख्यानसम्भवात् । तस्मात् कर्मणा जनकादयो मुक्तिमास्थिता इत्यभ्युपगमे न कश्चिद्दोष इति चेत् अत्र वक्तव्यम् । किं ज्ञानोत्तरं कर्म ज्ञानसमुच्चितं सन्मोक्षसाधनमङ्गीक्रियते ? किंवा केवलमेव ? इति विकल्प्य आद्ये अपसिद्धान्त इत्याह **प्राग् ज्ञानादिति** । इदं ह्यस्माकं मतम् । न परेषाम् । तैरपि समुच्चयाङ्गीकारेऽपसिद्धान्त इति भावः । द्वितीयं निराकरोति **न चात्रेति** । प्रसादस्य मोक्षसाधनत्वे "यस्य प्रसादात्" इतिवत् अत्रापि केवलकर्मणो मुक्तिहेतुत्ववादेऽपि प्रमाणाभावान्नासौ पक्षो ग्राह्य इति भाव इति व्याचक्षते ।

**इत्यादयः** "अमृता अभूम इत्यादय आगमाः । **बलात्** 'निर्णयः' इत्यनुवर्तते । 'ज्ञानद्वारा' इत्यनन्तरम् 'अपि' इत्यतःपूर्वं शेषमाह **इति व्याख्यान इति** । "नान्यः पन्था" इति वाक्यम् अन्यस्य मोक्षसाधनत्वं प्रतिषेधज्ज्ञानस्यैव तत्त्वं वक्तीति निरवकाशम् । प्रकारान्तरेण व्याख्याना-योगात् । "अपाम सोमममृता अभूम" इत्यादिवाक्यानि तु ज्योतिष्टोमादिरूपं कर्म ज्ञानद्वारा मुक्ति-कारणमिति व्याख्यानमर्हन्ति । मानान्तरविरोधाभावात् । "कर्मणा ज्ञानमातनोति । ज्ञानेनामृती-भवति" इति मानानुगुण्याच्चेति तानि सावकाशानि । सावकाशनिरवकाशयोश्च मानयोर्निरवकाशं बलवदिति दीक्षणीयादिमन्त्राङ्गतयाऽवगतेन "यावत्या वाचा कामयीत तावत्या दीक्षणीयायामनु-ब्रूयात्" इति वाक्यविहितेन निरवकाशेन स्वरेण "यत्किञ्चित् प्राचीनमग्नीषोमीयात् तेनोपांशु चरन्ति" इति वाक्यविहितोपांशुत्वस्य सावकाशस्य बाधं वदद्भिर्मीमांसकैर्वर्णितम् (टुप्टीका ९.१.२५ सू.) इति भावः । असेवितस्य तीर्थादिर्मुक्तिहेतुत्वायोगात्, 'स्नानमात्रेण' इति भाषणाच्चाह **तत्स्नानादीति** । तीर्थस्नानादीत्यर्थः । आदिपदेन पान-सेवन-क्षेत्रवासादेर्ग्रहणम् । 'पापादि' इत्यत्र आदिपदेन पापजन्यनरकादिभोगग्रहः । **मुक्तिशब्दार्थः** "ब्रह्मज्ञानेन वा मुक्तिः" इत्यत्र विद्यमान-मुक्तिशब्दार्थः, न पुनरविद्यानिवृत्तिरित्यर्थः । **सर्वत्र** तीर्थस्नान-क्षेत्रवासादेर्मोक्षहेतुत्वप्रतिपादनपरेषु पुराणादिषु । **संसारेति** । संसारपदावरुद्धमुक्तिशब्दार्थे पापादेः प्रतियोगित्वेनावरोधायोगादिति भावः । **गत्यन्तरमपीति** । "न केवलं पापादिमुक्तिर्मुक्तिशब्दार्थः" इत्युक्ता गतिरित्यपिपदार्थः । अनेन भाष्ये चशब्दो व्याख्यातः ।

ननु शब्दस्य हि त्रिविधा वृत्तिः । अभिधा गौणी लक्षणा चेति । अत्र चशब्दस्य स्तुतिपरत्वे का वृत्तिरभिमता ? येन तत्परत्वं ज्ञातव्यमित्यत आह **प्रशस्तत्वोपलक्षणेति** । गुणवत्त्वेन सङ्कीर्तनं स्तुतिः । सा च प्रशस्तस्यैव वस्तुनो भवति नापरस्य । तथा च **सा** स्तुतिः **परा** लक्षणया वृत्त्या प्रतिपाद्या यस्य शब्दस्य स **स्तुतिपरः** । तस्य भावस्तथेति भाष्यार्थ इत्यर्थः । तथा च यत्र तीर्थस्तुतिपरेषु "गोमत्यां स्नानेन मुक्तिर्भवति" इत्यादिवाक्येषु तीर्थस्नानादेरपि ब्रह्मज्ञानसमानकक्ष्यतया मुक्तिसाधनत्वं तृतीयाश्रुत्याऽवगम्यते । तत्र मुक्तेः परमपुरुषार्थतया प्रशस्तफलत्वेन मुक्तिपदेनैव प्रशस्तफलमात्रं लक्षणया बोध्यते । तीर्थस्नानं मुक्तिसाधनमिति प्रतीतान्वयस्य "नान्यः पन्था अयनाय विद्यते" (तै.आ. ३.१२), "दृष्ट्वैव तं मुच्यते नापरेण" (कौशि. श्रु.), "विद्यैव तु निर्धारणात्" (ब्र. सू. ३-३-४८) इत्यादिशास्त्रविरुद्धत्वेनानुपपत्तेः । सामान्यविशेषभावस्य सम्बन्धस्य लक्षणाबीजस्य विद्यमानत्वात् । एवञ्च प्रशस्तफलसाधनतया शास्त्रबोधितं तीर्थस्नानाद्यपि प्रशस्तमिति तस्य स्तुतिरधिगन्तव्येति भाष्यभाव इत्याशयः ।

अत्र **केचित्** एवमादिस्थलेषु वाक्यानामेव लक्षणया प्राशस्त्यसमर्पकत्वम् । न च वाक्ये वृत्तिमात्रं दुर्लभमिति कुतस्तत्र लक्षणा ? इति वाच्यम् । "कर्मजं बुद्धियुक्ता हि" (२.५१) इति गीताभाष्यटीकायां पूर्वाध्याये "योगश्च कर्मजं फलं त्यक्त्वेत्यनेन समग्रो योगो लक्षितः" इति, तत्रैव "यत्र स्तुतिस्तत्र शिवभक्तानां स्तुतिपरत्वमेव" (गी.भा. २.७२) इति भाष्यटीकायां "लक्षणयेति शेषः" इति, द्वादशाध्याये च "ध्यानात् कर्मफलत्यागः" (१२.१२) इति गीताभाष्यटीकायां "त्यागस्य प्रशस्तत्वमेवानेन लक्ष्यते" इति चासकृदावेदितत्वेन वाक्येऽपि वृत्तेरभ्युपगन्तव्यत्वात् । ततश्च 'प्रशस्तत्वोपलक्षणा' इत्यस्य रुच्युत्पादनाय तीर्थस्नानादेः प्राशस्त्यम् अर्थवादवाक्येन लक्षणावृत्त्या प्रतिपाद्यत इत्यर्थोऽवगन्तव्यः । नन्वर्थवादवाक्ये नैकस्य पदस्य लक्षणा । विनिगमकाभावेन नियमनायोगात् । नापि वाक्ये । तस्य शक्त्यभावेन लक्षणाबीजशक्यसम्बन्धायोगादिति चेन्न । यावदर्थसम्बन्धो लक्ष्येऽस्ति तावदर्थप्रतिपादकशब्दसमुदायस्य लक्षणास्वीकारात् । न चैवं वाक्यमेव लक्षकमित्युक्तप्रायं स्यादिति वाच्यम् । इष्टापत्तेः । उक्तटीकावाक्यानां तज्ज्ञापकत्वात् । न च वाक्ये शक्त्यभावदोषः । यतो निराकाङ्क्षाणि पदान्येव वाक्यम्, न पुनर्घटादिरिवार्थान्तरम् । पदानां चान्योन्यसमभिव्याहाराद् अस्त्येव विशेषान्वये शक्तिः । एवञ्च "प्रयागमरणेन वा" इत्यादिवाक्ये मुक्तिसाधनत्वरूपवाक्यार्थस्य शक्यत्वात् तत्समानाधिकरणे प्राशस्त्ये लक्षणोपपत्तिः । न चैवं "वचनलिङ्गानुमा हि सा" इति कर्मनिर्णयविरोधः । तस्य तात्पर्यवृत्तिरन्या नास्तीत्येवम्परत्वेन वाक्यलक्षणानिषेधकत्वाभावात् । अत एव तट्टीकायां "न तात्पर्यवृत्तिरन्या सिद्ध्यति" इत्युपसंहृतम् । किञ्च न वयमनुमानप्रकारं निषेधयामः । किन्तु सुधाद्युक्तां वाक्यलक्षणामङ्गीकृत्य तदुपपादनं कुर्म इति को विरोधः ? न चैवं सत्यर्थवादजन्यप्राशस्त्यबोधे शक्यसम्बन्धरूपस्य मुक्तिसाधनत्वसामानाधिकरण्यस्य भानप्रसङ्गः, लाक्षणिकशाब्दबोधस्थले शक्यसम्बन्धस्य भाननियमादिति वाच्यम् । पदमात्रलक्षणावादिभिस्तन्नियमाङ्गीकारेऽपि वाक्यलक्षणाऽभ्युपगमवादे तन्नियमास्वीकारात् । अत एव मीमांसकैरप्यर्थवादगतपदानाम् अध्ययनविध्यापादितपुरुषार्थपर्यवसायित्वनिर्वाहाय दृष्टार्थत्वे सम्भवत्यदृष्टार्थत्वाश्रयणायोगाद् विध्यपेक्षितप्राशस्त्यसमर्पणद्वारैव पुरुषार्थपर्यवसायित्वं वाच्यम् । प्राशस्त्यं च न तन्मुख्यार्थ इति तस्य लक्षणयैव तदर्थत्वं वाच्यम् । तथा च प्राशस्त्यसमर्पणार्थं तद्गतानां सर्वेषामपि पदानां लक्षणाऽऽश्रयणीयेत्यङ्गीकृतमिति, इहाप्युदाहृतवाक्यगतानां सर्वेषामपि तन्न्यायेनैव लक्षणाश्रयणं युक्तमिति वदन्ति ।

**अत्राहुः** यत् तावदुक्तम् "अर्थवादवाक्यगतेषु विनिगमनाविरहात् सर्वेष्वपि पदेषु लक्षणा" इति । तन्न । अर्थवादेष्वपि प्रथमोपस्थिततत्त्वरूपनियामकसत्त्वेन तादृशस्यैकस्यैव पदस्य लक्षणे-

त्यभ्युपगमे बाधकाभावात् । तदितरपदानां प्राशस्त्यलक्षणाकल्पनोपयोगिगुणोपस्थापकत्वेन पुरुषार्थ-पर्यवसायित्वनिर्वाहसम्भवाच्च दृष्टान्तासम्प्रतिपत्तेः । अन्यथा "किञ्चिदेव पदं स्तौति" इत्यादि-वार्तिकविरोधात् । न चैवं "वायुर्वै क्षेपिष्ठा देवता" इत्यादौ वायुपदस्यैव प्राथमिकत्वेन प्राशस्त्य-लक्षकत्वापत्त्या "वायुदेवता प्रशस्ता" इति वाक्यार्थलाभो न स्यादिति वाच्यम् । लक्षणया प्राश-स्त्यस्येव शक्त्या वायुपदेनैव वायोरुपस्थितिसम्भवात् । न चैवं युगपद्वृत्तिद्वयविरोधः । "गङ्गायां मीनघोषौ" इत्यत्रेवैवंविधवाक्येऽपि तात्पर्यसत्त्वेन युगपद्वृत्तिद्वयाश्रयणोपपत्तेः । तात्पर्याभावस्थल एव युगपद्वृत्तिद्वयाश्रयणस्य दोषत्वात् । न च "गङ्गायां मीनघोषौ" इत्यत्रापि गङ्गापदेन अजह-ल्लक्षणयैव गङ्गातीरयोरुभयोरप्युपस्थितिसम्भवान्न तदर्थं विरुद्धवृत्तिद्वयाश्रयणमिति वाच्यम् । तथा सति शक्यलक्ष्यार्थोभयसाधारणधर्मप्रकारकप्रतीत्यापत्त्या "गङ्गायां मीनः तीरे घोषः" इति वाक्या-र्थलाभाभावप्रसङ्गात् । अत एव "काकेभ्यो दधि रक्ष्यताम्" इति वाक्याद् "दध्युपघातकेभ्यो दधि रक्ष्यताम्" इत्येव दध्युपघातकत्वरूपसामान्यधर्मप्रकारिकैव वाक्यार्थधीः ।

किञ्चार्थवादगतानां सर्वेषामपि पदानां लक्षणाऽऽश्रयणेऽतिगौरवम् इत्येकस्यैव पदस्य तदा-श्रयणं लघु । न चानेकपदानाम् अनेकलक्षणाऽङ्गीकारस्य बहुगौरवग्रस्तत्वेऽपि तावत्पदसमुदाया-त्मकवाक्यस्यैकस्यैव लक्षणाऽऽश्रयणान्नोक्तदोष इति वाच्यम् । उक्तरीत्यैकस्यैव पदस्य लक्षणा-ऽऽश्रयणे लाघवात् । तावन्मात्रेण विवक्षितफलसिद्धेः । समुदायस्यैकत्वेऽपि समुदायिनां पदानां विनिगमनाविरहेण तद्द्वारेणैव तत्र लक्षणाया आश्रयणीयत्वात् पदानां लक्षणाश्रयणे गौरवं दुर्वारम् । किञ्च शक्यसम्बन्धो वा तं निमित्तीकृत्य वृत्तिर्वा लक्षणा, न तु पदार्थान्तरम् । क्लृप्तहान्या-द्यापत्तेः । न हि वाक्यस्य पदवत् क्वचिच्छक्तिरस्ति, येन तत्सम्बन्धो लक्षणा स्यात् । किञ्च शक्तिरूपमुख्यवृत्तिमत्त्वेन क्लृप्त एव पदे वृत्त्यन्तरकल्पनं न्याय्यम् । न त्वतथाभूतवाक्येऽपि तत्कल्पनम् । एतेन "अर्धमन्तर्वेदि अर्धं बहिर्वेदि" इति वाक्ये मीमांसकानां (मी.भा. ३.७.१३) लक्षणाऽभ्युपगमः प्रत्यूढः । "अर्धमन्तर्गृहमर्धं बहिर्गृहम्" इति लौकिकवाक्येऽर्धस्यान्तस्स्थत्वे सत्यर्धस्य बहिःष्ठत्वेन वाक्यार्थेन अन्तरालप्रदेशस्य आक्षेपलभ्यत्ववद् उदाहृतवैदिकवाक्येऽपि तेनान्तरालाक्षेपसम्भवेन तल्लाभाय लक्षणाश्रयणस्याकर्तव्यत्वात् । अनन्यलभ्यस्यैव शब्दार्थत्व-स्वीकारौचित्यादिति । प्रपञ्चस्तु वाग्वैखर्यां विजयीन्द्रतीर्थश्रीमच्चरणैर्वाक्यलक्षणाऽभावपक्षे कृतो-ऽनुसन्धेयः । यानि च टीकावाक्यान्युदाहृतानि तान्यप्यस्मदुक्तरीत्या वाक्यगतपदलक्षणापराणि व्याख्यातव्यानि । अत एव "प्रशस्तत्वसादृश्येन गौणी वा" (प्र.दी. ३.२०) इति टीकायां पदगतं वृत्त्यन्तरमेवोक्तम् । तत्रापि वाक्ये गौणी वृत्तिरिति त्वलौकिकम् । अत एव च "लक्षणा पदमात्र-निष्ठा वृत्तित्वात् शक्तिवत्" इति तार्किका अनुमिमते । एतत्प्रपञ्चस्तु मणिसारे ।

टीकावाक्येषु यथार्हं पदान्येव लक्षकाणि । तथा हि । ''कर्मजं फलं त्यक्त्वेत्यनेन समग्रो योगो लक्षित इति भावः'' इति टीकायां त्यजिप्रकृत्या फलत्यागलक्षणाङ्गवाचिन्या इतराङ्गलक्षणद्वारा तदङ्गी योगो लक्षितलक्षणया प्रतिपाद्यते, तथा ''शीतोष्णसुखदुःखदा'' (२.१४) इत्यत्र शीतोष्ण-शब्दाभ्यां सकलविषयोपलक्षकाभ्यां तत्साक्षात्कारो लक्षितलक्षणया प्रतिपाद्यते । तथा चोक्तं तत्र टीकायां ''शीतोष्णशब्दौ सकलविषयोपलक्षकौ । विषयोक्त्या च तत्साक्षात्कारो लक्षितः'' इति । यद्वा ''हिरण्यपाणिमूतये सवितारमुपह्वये'' इत्यत्र पाणिशब्देन भगवतो रूपमेवोपलक्ष्यत इति ''रूपं नारायणस्यैव पाणिशब्दोपलक्षितम्'' इति तद्भाष्यटीकयोरुक्तत्वाद्, अत्राप्यङ्गवाचिन्या त्यजिप्रकृत्या अङ्गी योगो लक्षणया गृहीत इत्यर्थः । यच्च द्वितीयाध्यायान्ते ''लक्षणयेति शेषः'' (प्र.दी. २.७२) इति वाक्यमुदाहृतं, तदपि यथा प्राशस्त्यलक्षकं तथा तत्रैव व्याख्यातमस्माभिः । शिवशब्द एव लक्षणया शिवभक्तपर इत्यप्याहुः । ''प्रशस्तत्वोपलक्षणेत्यर्थः'' (प्र.दी. ३.२०) इति टीकावाक्यं च यथा वाक्यलक्षणेत्यत्र न ज्ञापकं तथा व्याख्यातमेवेति न क्वापि वाक्यस्य लक्षणावृत्तिरिति ।

**अन्ये तु** गुणिनिष्ठगुणाभिधानरूपस्तुतेरत्रानुपलम्भेन मुख्यार्थालाभादाह **प्रशस्तत्वोपलक्ष-णेति** । मुक्तिपदस्य प्रशस्तत्वे लक्षणेत्यर्थः । सिद्धान्ते लक्षणागौण्योर्गौण्या ज्यायस्त्वस्य ''पूर्वायोगे परग्रहः'' (अनु.१.४. श्लो.३४०) इत्यनुव्याख्यानसुधयोर्व्यवस्थापनात् तत्परत्वेन भाष्य-स्यार्थान्तरमाह **प्रशस्तत्वसादृश्येनेति** । **गौणी वा** ''वृत्तिः मुक्तिपदस्य'' इति शेषः । यथा ''अपाम सोमममृता अभूम'' इत्यत्रामृतपदेन गौण्या वृत्त्या स्वर्गो गृह्यते, तथा तीर्थस्नानादितो मुक्तिरित्यत्रापि मुक्तिपदेन तत्सदृशं स्वर्गादिरूपं ब्रह्मज्ञानरूपं वा फलं गौण्या वृत्त्या गृह्यते । मुक्त्या स्वर्गादेः सादृश्यं च प्रशस्तत्वरूपं विवक्षितमित्यर्थ इति व्याचक्षते ।

''अज्ञानां मोहकानि वा'' (गी.भा. ३.२०) इति भाषयिष्यमाणत्वादाह **दुष्टजनेति** । तथा च बृहद्भाष्ये ''दानतीर्थादिभिर्मुक्तिस्तत्त्वज्ञानं विनाऽपि हि'' (३.५) इत्याद्युक्त्वा ''सर्वं मोहार्थमुद्दिष्टम्'' इत्युक्तम् । **एतत्** ''तीर्थस्नानादितो मुक्तिरित्यत्र मुक्तिशब्दस्य पापादितो मुक्तिर्विवक्षिता, प्रशस्तत्व-लक्षणा वा, प्रशस्तत्वसादृश्येन गौणी वा वृत्तिरभिमता'' इत्येतत् कुतो हेतोर्लभ्यत इत्यर्थः । 'तत्र' इत्यस्य परामृश्यमानं दर्शयितुमुक्तम् **यत्र तीर्थेति** । अपिशब्द 'एवार्थः' इति भावेनोक्तम् **तत्रैव प्रस्ताव इति** । 'ब्रह्मज्ञानसाधनत्वम्' इत्यत्र शेषमाह **साधनत्वं तीर्थेति** । 'अन्यथा' इत्यनूद्य अर्थमाह **अन्यथा ज्ञानं विनेति** । 'कथञ्चित्' इति भाष्यस्य केनापि प्रकारेण, कर्मादिनेत्यर्थः । **प्रयागादेः** प्रयागमरणतीर्थस्नानादेः । 'या मुक्तिः' इत्यनुवादः 'यन्मुक्तिसाधनत्वम्' इति व्याख्या । तेन 'ज्ञानोपायत्वमेव हि' इति सुघटितं भवति । **तत्प्रस्तावे** तीर्थस्नानस्तुतिप्रस्तावेऽप्युक्तो यो **ज्ञाननियमः** ज्ञानस्यैव मोक्षसाधनत्वनियमः ।

"न घ्नन्ति" इत्यर्थे नियामकं दर्शयति **असाधारणेति**। तदधिकृत्यैव प्रशंसया प्रवृत्तः प्रसङ्गः **असाधारणः**। अन्यप्रस्तावेऽन्यस्वरूपनिरूपणं **साधारणप्रसङ्गः**। अत्र च तीर्थस्नानादिस्तुति-प्रस्तावे "प्रयागादेस्तु या मुक्तिर्ज्ञानोपायत्वमेव हि" इति यद् ज्ञानस्यैव मोक्षहेतुत्वमापद्यते तन्नियमो न विहन्यते। साधारणप्रसङ्गोक्तस्य बलवत्त्वादित्यर्थः। **अत्रेति**। "साधारणप्रसङ्गोक्तस्य प्राबल्यम्" इत्यत्र लौकिकं दृष्टान्तमाहेत्यर्थः। "किं राज्ञेत्यादीनि" इति भाष्यानन्तरं प्रकृतार्थान्वयाय वाक्य-मध्याहरति **नायं राजा किन्तु भृत्य एवेत्यादीनीति**। **तत्प्रस्तावे** भृत्यस्य राजत्वेन स्तवन-प्रस्तावे। **'उक्तानि'** इति द्वितीयाबहुवचनान्तम्। तेन यथा भाष्योक्ताः भृत्यस्य राजत्वाध्यारोपणेन "अयमेव राजा, किं राज्ञा" इत्यादिस्तुतिपदसन्दर्भाः "नायं राजा किन्तु भृत्य एव" इत्यादि-वाक्यबोध्यान् अराजत्वभृत्यत्वादीन् अर्थान् **न घ्नन्ति** न बाधन्ते, तथा तीर्थस्तुतिवाक्यानि तत्प्रस्तावेऽप्युक्तज्ञाननियमं न निघ्नन्तीति भाष्ययोजने "स्तुतिवाक्यमेव स्वरूपकथनस्य बाधकं किं न स्याद् ?" इति चोद्यमपास्तमित्युक्तं भवति। तथा च "यानि तीर्थादिवाक्यानि" इत्येता-वताऽपि विवक्षितार्थसिद्धेः 'भगवान्' इत्युक्तिप्रयोजनमाह **मद्दृष्टेरिति**। "भवेन्मोक्षस्तु मद्दृष्टेर्नान्य-तस्तु कथञ्चन" इत्येतद्वाक्यशेषेऽस्मच्छब्दार्थः कः ? इति जिज्ञासायां भगवानेवेति प्रतिपत्त्यर्थं भाष्ये 'भगवान्' इत्युक्तमित्यर्थः।

'तीर्थादि' इत्यत्र तीर्थशब्देन तत्स्नानम्, आदिशब्देन क्षेत्रवासप्रयागमरणादीनि ग्राह्याणीति भावेन भाष्यार्थमाह **तीर्थेति**। "कर्मादिविषयाणि च" इत्येतद्भाष्यार्थमाह **कर्मेतीति**। **यज्ञादेः** "यज्ञदानतपःकर्म" (१८.५) इति गीतोक्तयज्ञदानतपोरूपत्रिकस्य **ग्रहणम्**। **ध्यानादेः** ध्यान-मननश्रवणादेरादिपदेन ग्रहणमित्यर्थः। तेन "निवृत्तकर्मण एवोपासनायज्ञादिरूपेणानेकविधत्वाद् यज्ञादिवद् ध्यानादेरपि कर्मत्वेन कर्मपदेनैव ध्यानतीर्थस्नानादेर्लभसम्भवात् 'यानि तीर्थादिवाक्यानि कर्मादिविषयाणि च' इति पृथगुक्तिरप्रयोजना" इति चोद्यानवकाशः। विवक्षाविशेषेण द्वयोरपि ग्रहणाशयात्। **पूर्ववदर्थ इति**। यज्ञदानतपसां ध्यानादीनां मोक्षसाधनत्वप्रतिपादनपराणि वाक्या-नीति "यानि तीर्थादिवाक्यानि" इत्यत्रेवार्थो ज्ञातव्य इत्यर्थः। 'स्तावकानि' इत्यस्य 'प्रशस्त-त्वोपलक्षणा' इति पूर्ववदर्थ इत्यपि आहुः। मुमुक्षूणामप्यज्ञत्वात् कथं तान् प्रति मोहकानि ? इत्यतो यथावद् व्याचष्टे **अज्ञानामिति**। जानन्तीति ज्ञाः। तद्विरुद्धा **अज्ञाः** सम्यग्ज्ञानायोग्याः। तेषाम् इत्यज्ञपदं व्याख्यातव्यमिति भावः। कुत एवं कल्पना ? इत्यतो भाष्यम् **भवेदिति**। एकः तुशब्दो 'यस्माद्' इत्यर्थे। अपरः 'एव' इत्यर्थे। यस्मात् मद्दर्शनादेव मोक्षो, न **अन्यतः** तीर्थादिः कर्मादिर्वा न कथञ्चन, तस्मादिति भगवद्वाक्याद् उक्तव्यवस्थेति तदर्थः। **उपसंहरति** कर्म ज्ञानसाधनमेव, ज्ञानमेव च मोक्षसाधनमिति प्रकृतमर्थम् ॥ २० ॥

***गीताक्षरार्थस्तु***— विहितस्य कर्मणः सर्वथा कर्तव्यतायां ज्ञानिनामाचारोऽपि प्रमाणमित्युच्यते **कर्मणैव हीति** । **जनकप्रियव्रतादयः कर्मणैव** । सहयोगलक्षणा तृतीया । **कर्मणा सहैव** कर्म कुर्वन्त एव । **संसिद्धिम् आस्थिताः** प्राप्ताः ज्ञानेनैव मोक्ष आपादनीये कर्म तत्रातिशयाय महानुभावाः कुर्वन्तीति भावः । "करणे तृतीया" इत्यभ्युपगमेऽपि "लाङ्गलेन वयं जीवामः" इतिवत् पारम्पर्येण कर्मणो मुक्तौ कारणत्वं द्रष्टव्यम् । अथवा **संसिद्धिं** समीचीनं ज्ञानं प्राप्ता इति व्याख्येयम् । "कर्मणा ज्ञानमातनोति" इति श्रुतेः न केवलं महदाचारात् कर्म कर्तव्यम्, किन्तु ईश्वरप्रीतिद्वारा मुक्तिप्रयोजकलोकसङ्ग्रहार्थत्वाच्चेत्युच्यते **लोकेति** । **लोकानां** कर्मणि प्रवर्तनरूपं **सङ्ग्रहं सम्पश्यन्** कर्म **कर्तुमर्हसि** । न केवलं ज्ञान्याचारम् इत्यपेरर्थः । एवकारस्तु तिष्ठतु तावत् कर्मकरणेऽन्यो हेतुरित्यर्थसूचकः । साधुजनस्य कर्मणि प्रवर्तनेन भगवत्प्रीतिद्वारा मोक्षेऽतिशयोऽस्ति । तथा चोक्तम्—

"अज्ञानां ज्ञानदं कर्म ज्ञानिना लोकसङ्ग्रहात् ।
अद्धैव तुष्टिदं मह्यं सा मुक्तानन्दपूर्तिदा ॥"

(कृष्णसंहितायाम्) इति ॥ २० ॥

**गीता**

## यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः ।
## स यत्प्रमाणं कुरुते लोकस्तदनुवर्तते ॥ २१ ॥

***वि०वि०***— कथं कर्मकरणेन लोकसङ्ग्रह इत्यत आह **यद्यदिति** । श्रेष्ठो यद्यदाचरति इतरः प्राकृतजनोऽपि तत्तदेवाचरति । स श्रेष्ठो यद्वाक्यादिकं प्रमाणं कुरुते ज्ञापयति । यद्वा, यत्प्रमाणं लौकिकं वैदिकं वा कर्म कुरुते लोकोऽपि तदेवानुसरति ॥

***वा०ल०***— 'स यत्प्रमाणं कुरुते' इत्यत्र सः श्रेष्ठः यत् कर्म प्रमाणं प्रमीयत इति प्रमाणम्, प्रामाणिकमिति कुरुते ॥

***सा०सं०***— कथं कर्मकरणेन लोकसङ्ग्रह इत्यत आह **यद्यदिति** । **श्रेष्ठो** महात्मा । **यत् प्रमाणं कुरुते** यद्वाक्यादिकं प्रमाणं सदपि लोके प्रमाणत्वेनानवगतं प्रमाणतया ज्ञापयतीत्यर्थः । यद्वा, यत्प्रमाणमित्येकं पदम् । बहुव्रीहिः । यत्प्रमाणं लौकिकं वैदिकं वा कर्म कुरुते **तदेव लोकोऽनुवर्तते** अनुसरति ॥

***अ०प्र०***— कर्मकरणे लोकसङ्ग्रहो यथा स्यात् तथा आह **यद्यदिति** ।

श्रेष्ठः[१], यद्यदाचरति[२], इतरो जनः[३], तत्तदेव[४], आचरति[५], । शेषान्वयो क्रमेण । (सः[६], यत्[७], प्रमाणं[८], कुरुते[९], लोकः[१०], तदनु[११], वर्तते[१२]) श्रेष्टः = ज्ञानी[१], यद्यदाचरति[२], इतरो जनः = प्राकृतो जनोऽपि[३], तत्तदेव[४], आचरति[५], सः = श्रेष्ठो जनः[६], यत्प्रमाणं कुरुते = यद्वाक्यादिकं कर्म शास्त्रं निवृत्तिशास्त्रं वा मन्यते[७], प्रमाणतया ज्ञापयति, यद्वा यस्याचारस्य सः प्रमाणं तं तथा च यत्प्रमाणमूलकं लौकिकवैदिकं वा आचारं कुरुते इत्यर्थः । लोकः = लोकोऽपि[८], तदनु = तत्कृतमेव[९], वर्तते = अनुसरति[१०] ॥ २१ ॥

**गीता**

## न मे पार्थास्ति कर्तव्यं त्रिषु लोकेषु किञ्चन ।
## नानवाप्तमवाप्तव्यं वर्त एव च कर्मणि ॥ २२ ॥

***वि०वि०***— किञ्च प्रयोजनमात्ररहितेनापि मया केवलानुग्रहस्वभावेन लोकसङ्ग्रहार्थं कर्म क्रियते । मोक्षे आनन्दवृद्धिप्रयोजनवता ज्ञानिना तत्कर्म कर्तव्यमिति किमु वक्तव्यमित्याशयेनाह **न म इति त्रिभिः** । हे पार्थ मे कर्तव्यं नास्ति यतः त्रिष्वपि लोकेषु प्रागप्राप्तं पश्चात् प्राप्तव्यं किमपि नास्ति । तथापि कर्मणि वर्त एव कर्म करोम्येव ॥

***वा०ल०***— 'नानवाप्तमवाप्तव्यम्' इत्यत्र अनवाप्तं प्रागवाप्तं प्राप्तं न भवतीति अनवाप्तम्, अवाप्तव्यं उपरि प्राप्तव्यञ्च फलं न । अत एव कर्तव्यं कर्मापि न ॥

***सा०सं०***— किञ्च प्रयोजनमात्रहीनेनापि मया केवलानुग्रहेण लोकसङ्ग्रहार्थं कर्म क्रियते । मुक्तावानन्दवृद्धिप्रयोजनवता ज्ञानिना तत्कर्तव्यमिति किं वाच्यमिति भावेनाह **न म इत्यादि त्रिभिः** । हे **पार्थ ! मे किञ्चन कर्तव्यं नास्ति** । यतः **त्रिषु लोकेषु** प्रागप्राप्तं पश्चात् प्राप्तव्यं नास्ति । तथाऽपि **कर्मणि वर्त एव** । कर्म करोम्येव ॥

***अ०प्र०***— अत्राहमेव दृष्टान्त इत्याह **न म** इति त्रिभिः । तत्र **न मेति** ।

हे पार्थ[१], मे[२], कर्तव्यम्[३], नास्ति[४], यतः त्रिष्वपि लोकेषु[५], अनवाप्तं सत्[६], अवाप्तव्यम्[७], किञ्चन नास्ति[८], तथापि कर्मणि[९], वर्ते एव[१०] इत्यन्वयः ।

हे पार्थ ![१], लीलाविग्रहस्य मे = मम[२], कर्तव्यं[३], नास्ति[४], यतः त्रिष्वपि लोकेषु[५], अनवाप्तं सत् = अप्राप्यं सत्[६], अवाप्तव्यं प्राप्यम्[७], किञ्चिन्नास्ति[८], तथापि कर्मणि[९], वर्ते एव = कर्म

***गीताक्षरार्थस्तु***— विहितस्य कर्मणः सर्वथा कर्तव्यतायां ज्ञानिनामाचारोऽपि प्रमाणमित्युच्यते **कर्मणैव हीति** । **जनकप्रियव्रतादयः कर्मणैव** । सहयोगलक्षणा तृतीया । **कर्मणा सहैव** कर्म कुर्वन्त एव । **संसिद्धिम् आस्थिताः** प्राप्ताः ज्ञानेनैव मोक्ष आपादनीये कर्म तत्रातिशयाय महानुभावाः कुर्वन्तीति भावः । "करणे तृतीया" इत्यभ्युपगमेऽपि "लाङ्गलेन वयं जीवामः" इतिवत् पारम्पर्येण कर्मणो मुक्तौ कारणत्वं द्रष्टव्यम् । अथवा **संसिद्धिं** समीचीनं ज्ञानं प्राप्ता इति व्याख्येयम् । "कर्मणा ज्ञानमातनोति" इति श्रुतेः न केवलं महदाचारात् कर्म कर्तव्यम्, किन्तु ईश्वरप्रीतिद्वारा मुक्तिप्रयोजकलोकसङ्ग्रहार्थत्वाच्चेत्युच्यते **लोकेति** । **लोकानां** कर्मणि प्रवर्तनरूपं **सङ्ग्रहं सम्पश्यन्** कर्म **कर्तुमर्हसि** । न केवलं ज्ञान्याचारम् इत्यपेरर्थः । एवकारस्तु तिष्ठतु तावत् कर्मकरणेऽन्यो हेतुरित्यर्थसूचकः । साधुजनस्य कर्मणि प्रवर्तनेन भगवत्प्रीतिद्वारा मोक्षेऽतिशयोऽस्ति । तथा चोक्तम्—

"अज्ञानां ज्ञानदं कर्म ज्ञानिना लोकसङ्ग्रहात् ।
अद्धैव तुष्टिदं मह्यं सा मुक्तानन्दपूर्तिदा ॥"

(कृष्णसंहितायाम्) इति ॥ २० ॥

**गीता**

## यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः ।
## स यत्प्रमाणं कुरुते लोकस्तदनुवर्तते ॥ २१ ॥

***वि०वि०***— कथं कर्मकरणेन लोकसङ्ग्रह इत्यत आह **यद्यदिति** । श्रेष्ठो यद्यदाचरति इतरः प्राकृतजनोऽपि तत्तदेवाचरति । स श्रेष्ठो यद्वाक्यादिकं प्रमाणं कुरुते ज्ञापयति । यद्वा, यत्प्रमाणं लौकिकं वैदिकं वा कर्म कुरुते लोकोऽपि तदेवानुसरति ॥

***वा०ल०***— 'स यत्प्रमाणं कुरुते' इत्यत्र सः श्रेष्ठः यत् कर्म प्रमाणं प्रमीयत इति प्रमाणम्, प्रामाणिकमिति कुरुते ॥

***सा०सं०***— कथं कर्मकरणेन लोकसङ्ग्रह इत्यत आह **यद्यदिति** । **श्रेष्ठो** महात्मा । **यत् प्रमाणं कुरुते** यद्वाक्यादिकं प्रमाणं सदपि लोके प्रमाणत्वेनानवगतं प्रमाणतया ज्ञापयतीत्यर्थः । यद्वा, यत्प्रमाणमित्येकं पदम् । बहुव्रीहिः । यत्प्रमाणं लौकिकं वैदिकं वा कर्म कुरुते **तदेव लोकोऽनुवर्तते** अनुसरति ॥

***अ०प्र०***— कर्मकरणे लोकसङ्ग्रहो यथा स्यात् तथा आह **यद्यदिति** ।

श्रेष्ठः[१], यद्यदाचरति[२], इतरो जनः[३], तत्तदेव[४], आचरति[५], । शेषान्वयो क्रमेण । (सः[६], यत्[७], प्रमाणं[८], कुरुते[९], लोकः[१०], तदनु[११], वर्तते[१२]) श्रेष्ठः = ज्ञानी[१], यद्यदाचरति[२], इतरो जनः = प्राकृतो जनोऽपि[३], तत्तदेव[४], आचरति[५], सः = श्रेष्ठो जनः[६], यत्प्रमाणं कुरुते = यद्वाक्यादिकं कर्म शास्त्रं निवृत्तिशास्त्रं वा मन्यते[७], प्रमाणतया ज्ञापयति, यद्वा यस्याचारस्य सः प्रमाणं तं तथा च यत्प्रमाणमूलकं लौकिकवैदिकं वा आचारं कुरुते इत्यर्थः । लोकः = लोकोऽपि[८], तदनु = तत्कृतमेव[९], वर्तते = अनुसरति[१०] ॥ २१ ॥

**गीता**

# न मे पार्थास्ति कर्तव्यं त्रिषु लोकेषु किञ्चन ।
# नानवाप्तमवाप्तव्यं वर्त एव च कर्मणि ॥ २२ ॥

***वि०वि०***— किञ्च प्रयोजनमात्ररहितेनापि मया केवलानुग्रहस्वभावेन लोकसङ्ग्रहार्थं कर्म क्रियते । मोक्षे आनन्दवृद्धिप्रयोजनवता ज्ञानिना तत्कर्म कर्तव्यमिति किमु वक्तव्यमित्याशयेनाह **न म इति त्रिभिः** । हे पार्थ मे कर्तव्यं नास्ति यतः त्रिष्वपि लोकेषु प्रागप्राप्तं पश्चात् प्राप्तव्यं किमपि नास्ति । तथापि कर्मणि वर्त एव कर्म करोम्येव ॥

***वा०ल०***— 'नानवाप्तमवाप्तव्यम्' इत्यत्र अनवाप्तं प्रागवाप्तं प्राप्तं न भवतीति अनवाप्तम्, अवाप्तव्यं उपरि प्राप्तव्यञ्च फलं न । अत एव कर्तव्यं कर्मापि न ॥

***सा०सं०***— किञ्च प्रयोजनमात्रहीनेनापि मया केवलानुग्रहेण लोकसङ्ग्रहार्थं कर्म क्रियते । मुक्तावानन्दवृद्धिप्रयोजनवता ज्ञानिना तत्कर्तव्यमिति किं वाच्यमिति भावेनाह **न म इत्यादि त्रिभिः** । हे **पार्थ ! मे किञ्चन कर्तव्यं नास्ति** । यतः **त्रिषु लोकेषु** प्रागप्राप्तं पश्चात् प्राप्तव्यं नास्ति । तथाऽपि **कर्मणि वर्त एव** । कर्म करोम्येव ॥

***अ०प्र०***— अत्राहमेव दृष्टान्त इत्याह **न म** इति त्रिभिः । तत्र **न मेति** ।

हे पार्थ[१], मे[२], कर्तव्यम्[३], नास्ति[४], यतः त्रिष्वपि लोकेषु[५], अनवाप्तं सत्[६], अवाप्तव्यम्[७], किञ्चन नास्ति[८], तथापि कर्मणि[९], वर्ते एव[१०] इत्यन्वयः ।

हे पार्थ ![१], लीलाविग्रहस्य मे = मम[२], कर्तव्यं[३], नास्ति[४], यतः त्रिष्वपि लोकेषु[५], अनवाप्तं सत् = अप्राप्यं सत्[६], अवाप्तव्यं प्राप्यम्[७], किञ्चिन्नास्ति[८], तथापि कर्मणि[९], वर्ते एव = कर्म

करोम्येव[१०], प्रयोजनमात्ररहितेनापि मया केवलानुग्रहस्वभावेन लोकसङ्ग्रहार्थं कर्म क्रियते । त्वया युद्धादिकर्मकरणे किं च वक्तव्यमित्यर्थः ॥ २२ ॥

**गीता**

## यदि ह्यहं न वर्तेयं जातु कर्मण्यतन्द्रितः ।
## मम वर्त्मानुवर्तन्ते मनुष्याः पार्थ सर्वशः ॥ २३ ॥

***वि०वि०***— यदि ह्यहं जातु कदाचित् अतन्द्रितोऽनलसः कर्मणि न वर्तेयम् । कर्म न कुर्याम्, तर्हि ममैव वर्त्म मार्गं मनुष्या अनुवर्तन्ते अनुसरेयुः ॥

***सा०सं०***— **यदि ह्यहं जातु** कदाचित् । **अतन्द्रितो**ऽनलसः । **कर्मणि न वर्तेयं** न कर्म कुर्याम् । तर्हि **मम वर्त्म** मार्गं कर्माकरणरूपम् । **मनुष्याः सर्वशः** सर्वेऽपि । **अनुवर्तन्ते** अनुसरेयुः । मद्दृष्टान्तेन कर्म न कुर्युरित्यर्थः ॥

***अ०प्र०***— अकरणे लोकस्य नाशं दर्शयति **यदीति** ।

हे पार्थ ![१], यदि अहं[२], सर्वशः[३], जातु[४], अतन्द्रितः सन्[५], कर्मणि[६], न वर्तेयं[७], तर्हि[८], मनुष्याः[९], मम वर्त्म[१०], अनुवर्तन्तेत्यन्वयः ।

हे पार्थ ![१], यद्यहम्[२], सर्वशः = सर्वप्रकारैः[३], जातु = कदाचित्[४], अतन्द्रितः सन् = अनलसः आलस्यशून्यः सन्[५], कर्मणि[६], न वर्तेयम् = तर्हि कर्म नानुष्ठेयं कर्म न कुर्यां[७], तर्हि[८], मनुष्याः[९], मम वर्त्म मम मार्गं अनुवर्तन्ते अनुवर्तेरन् अनुसरेयुरित्यर्थः ॥ २३ ॥

**गीता**

## उत्सीदेयुरिमे लोका न कुर्यां कर्म चेदहम् ।
## सङ्करस्य च कर्ता स्यामुपहन्यामिमाः प्रजाः ॥ २४ ॥

***वि०वि०***— ततश्च लोका उत्सीदेयुः कर्मलोपेन भ्रंश्येयुः, ततश्च यो वर्णसङ्करो भवेत् तस्याप्यहमेव कर्ता स्यां भवेयम् । एवमहमेव प्रजाः उपहन्याम् उपहतवान् स्याम् । अतो मया कर्म क्रियते । तथा लोकसङ्ग्रहार्थं भवद्भिर्धैरपि कर्म कर्तव्यमेव । उक्तं च—

'ममैव केवलं नास्ति केनाप्यर्थस्तथाऽप्यहम् ।
कर्मकृल्लोकरक्षायै तस्मात्कुर्वीत मत्परः ॥' इति ॥

*वा०ल०*— 'सङ्करस्य च कर्ता स्याम्' इत्यत्र सङ्करस्य जातिसङ्करस्य ॥

*सा०सं०*— ततः को दोष इत्यत उच्यते । **अहं चेत् कर्म न कुर्यां** तदा **इमे लोकाः । उत्सीदेयुः** नश्येयुः । कर्मलोपेन नरकं प्राप्नुयुः । किञ्च कर्मलोपे सति ब्रह्मक्षत्रादि-वर्णविवेको न स्यात् । अतो **वर्णसङ्करस्य** च **कर्ता स्यां** भवेयम् एवमहमेव प्रजाः । **उपहन्यां** हतवान् भवेयम् ॥

*अ०प्र०*— ततः किमत आह **उत्सीदेयुरिति** ।

यद्यहं[१], कर्म[२], न कुर्यां[३], चेत् तर्हि[४], इमे लोकाः[६], उत्सीदेयुः[७], सङ्करस्य च अहमेव[८], कर्ता स्याम्[९], एवमहमेव इमाः[१०], प्रजाः[११], उपहन्यां[१२], इति अन्वयः ।

यद्यहं कर्म न कुर्यां चेत् तर्हि[४], मद्दृष्टान्तेन कर्म अकृत्वा कर्माकरणजन्यपापेन इमे लोकाः = पुरोवर्तिजनाः[६], उत्सीदेयुः = कर्मलोपेन भ्रश्येयुः[७], यद्वा मां दृष्ट्वा उत्सीदेयुः = कर्म त्यजेयुः[७], सङ्करस्य च अहमेव कर्ता स्यां = ततश्च कर्मनाशाद्यो वर्णसङ्करो भवेत् तस्याप्यहमेव कर्ता स्यां भवेयम्[९], एवमहमेव इमाः प्रजाः उपहन्यां = नरकादिदुःखदानेन हन्ता स्यां यद्वा मलिनीकुर्याम्[१२] ॥ तदुक्तम्—

"ममैव केवलं नास्ति केनाप्यर्थ तथाऽप्यहम् ।
कर्मकृल्लोकरक्षायै तस्मात् कुर्वीत मत्परः ॥" ॥ २४ ॥

**गीता**

## सक्ताः कर्मण्यविद्वांसो यथा कुर्वन्ति भारत ।
## कुर्याद्विद्वांस्तथाऽसक्तश्चिकीर्षुर्लोकसङ्ग्रहम् ॥ २५ ॥

*वि०वि०*— नन्वज्ञेनेव ज्ञानिनामपि कर्म कार्यं चेद्विद्वदविद्वत्कर्मणोः को विशेष इत्यत आह **सक्ता इति** । असक्तः फलाकाङ्क्षारहितः । सक्त्यसक्तिपूर्वकत्वेन विशेष इत्यर्थः ॥

*सा०सं०*— ननु अज्ञवदाग्रहेण ज्ञानिनाऽपि कर्म कार्यं चेद्विद्वदविद्वत्कर्मणोरविशेषप्रसङ्ग इत्यत आह **सक्ता इति** । हे भारत । **अविद्वांसो**ऽज्ञाः । **कर्मणि सक्ताः** अभिनिविष्टाः फलेच्छावन्तः सन्तः । **यथा कर्म कुर्वन्ति तथा विद्वान्** ज्ञान्यपि । **असक्तः** फलेच्छाहीनः सन् । **लोकसङ्ग्रहं चिकीर्षुः** कर्म कुर्यादित्यर्थः । सक्त्यसक्तिपूर्वकत्वेन कर्मानुष्ठानं तयोर्विशेष इति भावः ॥

*अ०प्र०*— तस्मादात्मविदाऽपि लोकसङ्ग्रहार्थं तत्कृपया कर्म कार्यमित्युपसंहरति **सक्ताः कर्मणीति** ।

हे भारत ![1], अविद्वांसः[2], कर्मणि[3], सक्ताः सन्तः[4], यथा कर्म[6], कुर्वन्ति[7], तथा लोकसङ्ग्रहम्[8], चिकीर्षुः[9], विद्वानपि असक्तः सन्[10], कर्म[11], कुर्यात्[12] इत्यन्वयः ।

हे भारत ![1], अविद्वांसः = अज्ञाः[2], कर्मणि सक्ताः सन्तः = कर्मफलाकाङ्क्षिणः सन्तः कर्मफलाभिनिविष्टाः[4], यथा कर्म[6], कुर्वन्ति[7], तथा लोकसङ्ग्रहजनस्य कर्मणि प्रवर्तनं चिकीर्षुः = कर्तुमिच्छुः[9], विद्वानपि अफलाकाङ्क्षी[10], असक्तः सन् = कर्मफलेषु असक्तः सन्[11], कर्म कुर्यात् ॥ २५ ॥

**गीता**

**न बुद्धिभेदं जनयेदज्ञानां कर्मसङ्गिनाम् ।**
**जोषयेत्सर्वकर्माणि विद्वान्युक्तः समाचरन् ॥ २६ ॥**

*वि०वि०*— अयोग्यानां कर्मणि सङ्गं जनयितुमपि कर्म कर्तव्यमित्याह **न बुद्धिभेदमिति** । अज्ञानां भगवत्स्वरूपमजानतां कर्मसु सक्तानाम् । बुद्धेर्भेदं विपर्यासं न जनयेत् । कर्मणः सकाशात् बुद्धिचालनं न कुर्यात् । विद्वान् कर्माण्यकुर्वन् ज्ञानमात्रनिष्ठश्चेत् अयोग्यानामपि ज्ञानमार्गाश्रयप्रसङ्गात्तेषां ज्ञानमार्गप्रवर्तकोऽपि स्वयमेव स्यात् । तच्च निषिद्धम् । अतो विद्वान् सावधानो भूत्वा स्वयमाचरन् कर्माणि सेवयेत् । अज्ञैः कर्माणि कारयेदित्यर्थः ॥

*वा०ल०*— जोषयेत् कर्मसु प्रीतिं जनयेत् । 'जुषी प्रीतिसेवनयोः' इति धातुः ॥

*सा०सं०*— अज्ञानां कर्मणि सक्तिं जनयितुमपि ज्ञानिना कर्म कार्यमित्याह **न बुद्धीति** । **अज्ञानां** भगवत्स्वरूपमजानताम् । **कर्मसङ्गिनां** कर्माभिनिवेशिनाम् । **बुद्धेर्भेदं** विपर्यासम् । **न जनयेत्** कर्मानुष्ठानाद्बुद्धेश्चालनं न कुर्यात् । **विद्वान् युक्तो** भगवति मनोयोगवान् । तत्पूजात्वेनेति यावत् । **कर्म समाचरन् सर्वकर्माणि जोषयेत्** सेवयेत् । अज्ञानिति शेषः ॥

*अ०प्र०*— ननु कृपया तत्त्वज्ञानमेवोपदेष्टुं युक्तं नेत्याह **न बुद्धिभेदमिति** ।

विद्वान्[1], युक्तो भूत्वा[2], कर्म समाचरन्[3], सर्वकर्माणि[4], जोषयेत्[5], अज्ञानां[6], अत एव कर्मसङ्गिनां[7], बुद्धिभेदम्[8], न जनयेत्[9] इत्यन्वयः ।

विद्वान् = ज्ञानी[1], युक्तो भूत्वा = ईश्वरे मनो युक्तो भूत्वा अवहितो भूत्वा[2], कर्म समाचरन् = स्वयं कर्माचरन्[3], सर्वकर्माणि[4], जोषयेत् = सेवयेत् यद्वा कर्माणि कारयेत्[5], अज्ञानां

भगवत्स्वरूपमजानानां[६], अत एव कर्मसङ्गिनां = कर्मसु स्नेहवताम्[७], बुद्धिभेदं = बुद्धेर्विपर्यासं अन्यथात्वं वा[८], न जनयेत् = कर्मणः सकाशाद्बुद्धिचालनं न कुर्यात्[९], अयोग्यानां कर्मसङ्ग-जनयितुमपि विदुषा कर्म कार्यं बुद्धिचालने कृते सति कर्म सुश्रद्धानिवृत्तेर्ज्ञानस्य चानुत्पत्तेः एषामुभयत्र भ्रंशः स्यादिति भावः ॥ २६ ॥

**भाष्यम्**

**स यत् वाक्यादिकं प्रमाणीकुरुते, यदुक्तप्रकारेण तिष्ठति इत्यर्थः । ॥ २१–२६ ॥**

***प०टी०***— 'स यत्प्रमाणं कुरुते' इति कथं पूर्वसिद्धप्रमाणस्यान्यकृतत्वमित्यत आह **स इति** ॥

***न०टी०***—ननु कथं वाक्यादिप्रामाण्यमन्यतः ? इत्याशङ्क्य, 'स यत्प्रमाणं कुरुते' इत्यस्य तात्पर्यार्थं कथयति **स यदिति** । एवं तावज्ज्ञानाङ्गत्वेन कर्म विधाय, तस्याबन्धकत्वं विधाय, यज्ञार्थं मुक्तसङ्गः समाचरेदित्यविद्वत्कर्मणः सकाशात् भेदो यः प्रस्तुतः, तमिदानीं प्रकटयतीति भावेनोत्तरं श्लोकचतुष्टयमवतार्य व्याचष्टे **विद्वदविदुषोरिति** ॥

***प्र०दी०***— ''स यत्प्रमाणं कुरुते'' इत्यत्र यच्छब्देन प्रमाणमप्रमाणं वा विवक्षितम् । आद्ये प्रमाणं कुरुत इत्ययुक्तम् । स्थितस्य करणाभावात् । द्वितीयेऽप्येवमेव । अशक्यत्वादित्यत आह— **स इति** । प्रमाणमेव सद्यद्वाक्यादिकं लोके प्रमाणतयाऽनवगतं तत्प्रमाणतया ज्ञापयतीत्यर्थः । यद्वा एकमेवेदं पदम् । यत्प्रमाणकं लौकिकं वैदिकं वा कर्म कुरुत इत्यनेनाभिप्रायेण तात्पर्यार्थमाह— **यदुक्तेति** ॥

***भा०दी०***— यत्प्रमाणमिति बहुव्रीहिरित्युपेत्याह **यत्प्रमाणकमिति** । **एवमेवेति** । करणा-भाव इत्यर्थः ॥

***भा०र०***— **स्थितस्येति** । निवृत्तपटत्वस्य पुनः पटत्वकरणादर्शनादित्यर्थः । **द्वितीय इति** । अप्रमाणं प्रमाणं कुरुत इति पक्षेऽप्युक्तप्रकारेणायुक्तत्वमेवेत्यर्थः । तत्र हेतुः **अशक्य-त्वादिति** । न हि काकं हंसीकर्तुं कोऽपि शक्नोतीति भावः । आद्यपक्षमेवाङ्गीकृत्य तत्रोक्तदूषणं भाष्यगताभूततद्भावार्थकच्विप्रत्ययभावोक्त्योद्धरति **प्रमाणमेव सदिति** । 'यदुक्त' इति भाष्यं ''स यत् प्रमाणं कुरुते'' इत्यस्य प्रकारान्तरेण तात्पर्यं वर्णयितुं प्रवृत्तमिति भावेनाह **यद्वेति** । **एक-**

**मिति** । **यद्** वाक्यादिकं प्रमाणं यस्मिन् कर्मणि तद् 'यत्प्रमाणम्' इति बहुव्रीहिगर्भमेकं पदमित्यर्थः । तद् विशदयति **यत्प्रमाणकमिति** । **तात्पर्येति** । यत्प्रमाणोक्तप्रकारेण श्रेष्ठस्तिष्ठतीत्येतत् "स यत् प्रमाणं कुरुते" इत्यस्य तात्पर्यरूपमित्यर्थः ॥ २१-२६ ॥

***गीताक्षरार्थस्तु***— कथं ज्ञानिना कृतेन लोकः सङ्गृहीतः स्याद् ? इत्यत उच्यते **यद्यदिति** । **श्रेष्ठो** ज्ञानी । **इतरः** अज्ञानी । **स श्रेष्ठो यत् प्रमाणं** प्रमाणमेव सद् यद्वाक्यादिकं लोकेन प्रमाणतयाऽनवगतं तत् **प्रमाणीकुरुते** प्रमाणतया ज्ञापयतीति यावत् । यद्वा यद् वाक्यादिकं प्रमाणं यस्मिंस्तद् **यत्प्रमाणकं** लौकिकं वैदिकं वा कर्म कुरुते । यत्प्रमाणोक्तप्रकारेण ज्ञानी तिष्ठतीति यावत् । **लोकस्तदनुवर्तते** तदेव प्रमाणमिति ज्ञात्वा तदुक्तप्रकारेणानुतिष्ठतीति ॥ २१ ॥

इतः परा पञ्चश्लोक्यतिरोहितार्थत्वाद् भाष्यकृता न व्याख्याता । तत्रापि "सक्ताः कर्मणि" इति "न बुद्धिभेदम्" इति च द्विश्लोकी "सक्ताः कर्मणीत्यादिनोक्तत्वात्" इति टीकायां सङ्क्षेपेणोक्तार्था च । **ततश्चैवमक्षरार्थः**— किञ्च प्रयोजनमात्ररहितेन केवललोकानुग्रहस्वभावेन लोकसङ्ग्रहाय मयाऽपि कर्म क्रियते, मोक्षे आनन्दाभिवृद्धिप्रयोजनवता ज्ञानिना तत् कर्तव्यमिति किं वक्तव्यम् ? इत्याशयेन "न मे पार्थ" इत्यादि त्रिश्लोकी प्रवृत्ता । **अनवाप्तं** प्रागप्राप्तम् । तथाऽपि **कर्मणि वर्ते** कर्म करोमि ॥ २२ ॥

**जातु** कदाचित् **अतन्द्रितः** अनलसः **वर्त्म** मार्गं **सर्वशः** सर्वैः प्रकारैः **अनुवर्तन्ते** अनुसरेयुः ॥ २३ ॥

तथा च को दोषः ? इति चेत् उच्यते । **अहं चेत् कर्म न कुर्यां** तदा **लोका उत्सीदेयुः** विनश्येयुः । लोकस्थितिहेतुकर्मविलोपात् । किञ्च कर्मविलोपे ब्राह्मणक्षत्रियादिवर्णविवेको न स्यादिति **सङ्करस्य कर्ता स्याम्** । ततश्च **प्रजा उपहन्याम्** उपहतवान् भवेयम् ॥ २४ ॥

ज्ञानिनामपि कर्म कार्यं चेद् अज्ञवत् तर्हि विद्वदविद्वत्कर्मणोरविशेषः स्यादित्यत उच्यते **सक्ता इति** । **कर्मणि** कर्मफले **सक्ताः** इच्छावन्तः **विद्वान्** ज्ञान्यपि असक्तः फलेच्छारहितः **लोकसङ्ग्रहं** लोकस्यापथगमननिवर्तनं **चिकीर्षुः** कर्म कुर्याद् इति सक्त्यसक्ती तयोर्विशेष इति विभाव्यते ॥ २५ ॥

सम्यग्ज्ञानायोग्यानां कर्मण्यभिनिवेशं जनयितुमपि ज्ञानिना कर्म कार्यमित्युच्यते **न बुद्धिभेदमिति** । **अज्ञानां** भगवत्स्वरूपज्ञानायोग्यानां अत एव कर्मण्यासङ्गवतां **बुद्धिभेदं बुद्धेः** कर्तव्यमेव कर्म, भोक्तव्यं च तत्फलमिति निश्चयरूपायाः **भेदः** भेदनं चालनं तत् **न जनयेत्** । विद्वान् कर्मा-

ण्यकुर्वन् ज्ञानमात्रनिष्ठश्चेद् अज्ञानामपि ज्ञानमार्गाश्रयप्रसङ्गः । "यद्यदाचरति" (३.२१) इत्युक्तेः । तेषां तत्र प्रवेशनं शास्त्रनिषिद्धम् । ततो **विद्वान् युक्तः** भगवदर्पणादिरूपयोगसम्पन्नः सन् **कर्माणि जोषयेत्** सेवयेत् । अज्ञैः कर्माणि कारयेदिति ॥ २६ ॥

**गीतातात्पर्यनिर्णयः**

**"सहैव कर्मणा सिद्धिमास्थिता जनकादयः ।**
**ज्ञाननिष्ठा अपि ततः कार्यं वर्णाश्रमोचितम् ॥" इति च ।**

**"अज्ञानां ज्ञानदं कर्म ज्ञानिनां लोकसङ्ग्रहात् ।**
**अद्धैव तुष्टिदं मह्यं सा मुक्तानन्दपूर्तिदा ॥" ॥ २०-२१ ॥**

*प्रका०*— कर्मणैवेत्यादेरर्थमाह **सहैवेत्यादिना** । कर्मापरित्यज्यैव ज्ञानेन सिद्धिमास्थिता जनकादयः । न तु कर्मपरित्यज्येत्यर्थः ॥

*न्या०दी०*— ननु ज्ञानादेव मोक्षसिद्धेः कथमसक्तः कर्माऽऽचरन्नेव परमाप्नोतीत्युक्तमित्यत उच्यते **कर्मणैवेति** ॥ तत्र कर्मणैव मोक्ष उच्यत इत्यन्यथाप्रतीतिनिरासाय तत्स्मृत्यैव व्याचष्टे **सहैवेति** ॥ कार्यं कर्म ज्ञानिनामपीति शेषः । कर्म कर्तव्यमित्यत्र हेत्वन्तरमुच्यते **लोकेति** ॥ तत्र लोकसङ्ग्रहसम्भवेऽपि तेन प्रयोजनाभावात् कथं ज्ञानिनो लोकसङ्ग्रहार्थं कर्म विधीयत इत्यतो लोकेत्यादिश्लोकान् स्मृत्यैव व्याचष्टे **अज्ञानमिति** ॥ **सा तुष्टिः** ॥

*भा०दी०*— **हेत्वन्तरमुच्यत इति** । आचारापेक्षया लोकसङ्ग्रहरूपहेत्वन्तरमित्यर्थः । इत्यस्येत्यस्येति द्वयमपि समानाधिकरणम् ॥

**गीतातात्पर्यनिर्णयः**

**"ममैव केवलं नास्ति केनाप्यर्थस्तथाऽप्यहम् ।**
**कर्मकृल्लोकरक्षायै तस्मात् कुर्वीत मत्परः ॥"**
**—इति कृष्णसंहितायाम् ॥ २० ॥**

*न्या०दी०*— किञ्च प्रयोजनमात्ररहितेनापि मया केवलानुग्रहेण लोकसङ्ग्रहार्थं कर्म क्रियते, अतो मुक्तावानन्दवृद्धिप्रयोजनवता ज्ञानिना तत्कर्तव्यमिति किं वक्तव्यमित्युक्तं "न मे पार्थ" इति । अस्यार्थो **ममैवेति** ॥

**गीतातात्पर्यनिर्णयः**

"रक्षया वाऽथ सृष्ट्या वा संहृत्यादेर्न तु क्वचित् ।
अर्थो विष्णोस्तथाऽप्येष स्वभावात् सर्वकर्मकृत् ।
मत्तो नृत्तादिकं यद्वत् कुर्यात् सुखविशेषतः ।
परमानन्दरूपत्वात् कुर्याद्विष्णुस्तथैव तु ॥"

—इति बर्कश्रुतिः ॥ २२-२६ ॥

*न्या०दी०*— नन्वीश्वरः प्रयोजनाभावेऽपि लोकरक्षादि करोतीति न युज्यते । प्रयोजनाभावे प्रवृत्त्ययोगादित्याशङ्कां श्रुत्यैव परिहरति **रक्षयेति** ॥ प्रयोजनाभावेऽपीश्वरस्य तत्कर्तृत्वस्वभाववत्त्वात् रक्षादिकर्मकरणं युक्तमित्यर्थः । ननु तादृशस्वभावत्वेन प्रवृत्तिरचेतनेष्वेव दृष्टा । यथा दहनपवनादीनां प्रयोजनं विना स्वभावादेव दहनगमनादिप्रवृत्तिः । चेतनप्रवृत्तेः प्रयोजनहीनाया अदर्शनात् कथमीश्वरस्यापि प्रयोजनानुद्देशेन प्रवृत्तिरित्यत आह **मत्त** इति ॥

**गीता**

**प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्वशः ।**
**अहङ्कारविमूढात्मा कर्ताऽहमिति मन्यते ॥ २७ ॥**

*वि०वि०*— श्लोकद्वयार्थं श्लोकत्रयेण प्रपञ्चयति **प्रकृतेरित्यादिना** ।

'क्वचित्स्वभावः प्रकृतिः क्वचिच्च त्रिगुणात्मिका ।
क्वचित् प्रकृष्टकर्तृत्वात् भगवान् प्रकृतिर्हरिः ॥'

इत्यभिधानात् । अत्र त्रितयमपि गृह्यते । प्रकृतेर्गुणैर्विष्णोरिच्छादिभिः स्वतन्त्रैः जीवस्वभावस्योत्तममध्यमाधमस्यानुगुणैः सम्यक् मिथ्याज्ञानादिभिर्निमित्तैः सत्त्वादिभिरुपादानैः । तथा प्रकृतेः सम्बन्धिभिस्तद्विकारैस्तदुपसर्जनैर्वा देहेन्द्रियादिभिः क्रियमाणानि सर्वाणि कर्माणि, अहं कर्ता स्वातन्त्र्येण कर्तुं शीलं ममास्तीत्यहङ्कारविमूढबुद्धिर्मन्यते ॥

*सा०सं०*— ज्ञान्यज्ञानिनोः सक्ता इत्यादिश्लोकद्वयोक्तं कर्मानुष्ठानवैलक्षण्यं प्रपञ्चयति **प्रकृतेः** इत्यादिश्लोकत्रयेण । अत्र प्रकृतिशब्देन जीवस्वभावेश्वरजडप्रकृतयो ग्राह्याः । **प्रकृतेः** प्रकृष्टकृतिमत्त्वहेतुना प्रकृतिपदवाच्यस्य हरेः गुणैरिच्छाज्ञानप्रयत्नादिरूपगुणैर्धर्मैः स्वतन्त्रैः । तथा **प्रकृतेः** उत्तममध्यमाधमरूपजीवराशिस्वभावस्य **गुणैः** अनुगुणैः तत्त्वज्ञानमिश्रज्ञानमिथ्याज्ञानादिरूपधर्मै-

रीशाधीनैः । तथा **प्रकृतेः** जडप्रकृतेः सम्बन्धिभिः **गुणैः**स्तत्कार्यभूतैः सत्त्वरजस्तमोगुणैः, **प्रकृतेः** विकारभूतैर्देहेन्द्रियान्तःकरणरूपगुणैः । **क्रियमाणानि कर्माणि** साधुकर्ममिश्रकर्मासाधुकर्माणि प्रति, **अहङ्कारविमूढात्मा** सन् **कर्ताऽहं** स्वतन्त्रकर्ताऽहमिति मन्यते । ईश्वरः स्वतन्त्रकर्ता सन् स्वज्ञानेच्छादिना स्वाधीनकर्ता त्रिविधजीवस्वभावमनुसृत्य प्रकृतिविकारजीवकरणैः प्रकृतिकार्य-सत्त्वादिगुणरूपोपादानकारणेन कर्म कारयति । तत्क्रियमाणकर्मणामहमेव स्वतन्त्रकर्तेत्यात्मानमज्ञो जनो मन्यत इत्यर्थः ॥

***अ०प्र०***— न तु विदुषामपि चेत् कर्म कर्तव्यं तर्हि विद्वदविदुषोः को विशेष इत्याशङ्क्य उभयोर्विशेषं दर्शयति **प्रकृतेरिति** द्वाभ्याम् ।

अहङ्कारविमूढात्मा[१], प्रकृतेः[२], गुणैः[३], सर्वशः[४], क्रियमाणानि[५], यानि कर्माणि[६], तानि अहमेव[७], कर्ता[८], इति[९], मन्यते[१०] इत्यन्वयः ।

अहङ्कारविमूढात्मा = अहङ्कारेण जीवपरमात्मनोरैक्यभावेन विमूढो आत्मा बुद्धिः यस्य सः तथा[१], प्रकृतेः = विष्णोः; तदुक्तम्—

"क्वचित्स्वभावः प्रकृतिः क्वचिच्च त्रिगुणात्मिका ।
क्वचित्प्रकृष्टकर्तृत्वाद्भगवान् प्रकृतिर्हरिः ॥"

अत्र तृतीयमपि गृह्यते[२], गुणैः = इच्छादिभिः स्वतन्त्रैर्गुणैः तथा जीवस्य स्वभावस्य उत्तममध्यमाधमरूपस्य गुणैः सम्यक् मिश्रमिथ्याज्ञानादिभिः निमित्तैः तथा जडप्रकृतेर्गुणैः सत्त्वा-दिभिरुपादानैः तथा प्रकृतैर्गुणैः प्रकृत्यपेक्षया प्रधानैः, तत्सम्बन्धिभिः तद्विकारैर्वा देहेन्द्रियादिभिः[३], सर्वशः = सर्वप्रकारेण यद्वा सर्वाणि[४], क्रियमाणानि[५], यानि कर्माणि[६], तान्यहमेव[७], कर्ता = अहमेव करोमीति स्वातन्त्र्येण कर्तुं शीलं ममास्ति[८], इति मन्यते = एवं जानाति[९,१०], ईश्वरादीनां अनेकविधकर्तृत्वात् ज्ञानी यत इत्यर्थः ॥ २७ ॥

**भाष्यम्**

**विद्वदविद्वदुषोः कर्मभेदमाह— प्रकृतेरिति । प्रकृतेर्गुणैरिन्द्रियादिभिः । प्रकृतिमपेक्ष्य गुणभूतानि हि तानि । तत्सम्बन्धीनि च । न हि प्रतिबिम्बस्य क्रिया ॥ २७ ॥**

***प०टी०***— महत्तत्त्वाद्यपेक्षयाऽपि गुणभूतानि किं विशिष्याभिधीयते प्राकृतगुणत्वमिति ? तत्राह **तदिति** । **सम्बन्धः** उपचयः । कथं कर्ताऽहमिति मन्तुर्मूढत्वम् ? इत्यत आह **न हीति** ॥

*न०टी०*—सत्वादिशङ्कापनोदाय **प्रकृतेर्गुणैरिति** । ननु कथमिन्द्रियाणां गुणत्वम् ? इत्याशङ्क्य, तदुपसर्जनत्वात् गुरुणोतिर्यैस्ते (?) गुणा इति निरुक्त्या चेति भावेनाह **प्रकृतिमिति** । **निरुक्तिगैः** इति वक्ष्यति । ननु गुणत्वमेव निरुक्त्या प्रतीयते न प्रकृतिगुणत्वमित्यत आह **तत्सम्बन्धीनीति** । प्राकृतभूतैरुपचीयमानत्वात् प्रकृतिसम्बन्धित्वम् । एतेनैतदपि प्रत्युक्तम् । यदन्यत्प्रतीयते – ब्रह्मकरणत्वात् ब्रह्मगुणत्वमेवेन्द्रियाणां जीवापेक्षया प्रियमाणत्वात् जीवगुणत्वमेव वा, न प्रकृतिगुणत्वमिति । उक्तप्रकारेण प्रकृतिगुणत्वस्यापि सम्भवात् । ननु प्रत्यक्षं जीवकर्तृत्वम् । कथं मोहः ? इत्यत आह **न हीति** । स्वतन्त्रकर्तृत्वज्ञानमेव मोहः, विकारकर्तृत्वज्ञानं वा जीवस्य, न परतन्त्रकर्तृत्वज्ञानम् । प्रतिबिम्बे बिम्बाधीनकर्तृत्वदर्शनादिति भावः ॥

*प्र०दी०*— "प्रकृतेः क्रियमाणानि" इति श्लोकद्वयस्य सङ्गतेरस्फुटत्वात्तात्पर्यमाह— **विद्वदिति** । यथायोगं सम्बन्धो न यथाक्रमम् । कर्मभेदं कर्मवैलक्षण्यम् । प्रपञ्चयतीत्यर्थः । "सक्ताः कर्मणि" इत्यादिनोक्तत्वात् । व्यवहितत्वादन्वयं दर्शयन् गुणशब्दस्यानेकार्थत्वाद्विवक्षितमर्थमाह— **प्रकृतेरिति** । आदिपदेन शरीरमनसोर्ग्रहणम् । कथमिन्द्रियादीनां द्रव्याणां प्रकृतिगुणत्वमित्यत आह— **प्रकृतिमिति** । गुणभूतान्यप्रधानानि । प्रकारान्तरेण व्याचष्टे– **तदिति** । प्रकृतिकार्याणि चेत्यर्थः । गुणशब्दः कार्यार्थ इत्युक्तं भवति । ननु जीवस्यापि कर्तृत्वात् "अहङ्कारविमूढात्मा कर्ताहमिति मन्यते" इति कथमुच्यत इत्यत आह– **न हीति** । स्वातन्त्र्येणेति शेषः ॥

*भा०दी०*— **अस्फुटत्वादिति** । प्राक्तनश्लोकद्वयार्थप्रपञ्चरूपतया स्फुटत्वादित्यर्थः । प्रपञ्चयतीति कुतो व्याख्येत्यत आह **सक्ता इति** । जीवेश्वरेति गीतायां प्रकृतिपदेन जीवस्वभावेश्वरजडप्रकृतिरूपत्रयोऽर्था विवक्षिताः । तथा च प्रकृतेर्जीवस्य स्वावरापेक्षयेश्वरायत्तस्य तन्त्रकर्तृककर्मप्रकृतेमधिक्रियारूपं कर्मेति कर्मणां भेदः जीव तथा प्रकृतेर्जीवस्वभावस्य गुणाद्यगुणानीन्द्रियाणि । प्रकृतेरीश्वरस्य ........... प्रकृतेर्गुणाः सत्त्वादिति गुणशब्दितेन्द्रियादीनां भेदं गीतातात्पर्यरूपं ग्रन्थान्तराद्यस्मात्स्वतन्त्रकर्तृत्वं ..................................मित्यादिरूपादित्यर्थः ॥

*भा०र०*— **सङ्गतेरिति** । "सक्ताः कर्मणि" (३.२५) इति, "न बुद्धिभेदम्" (३.२६) इति चानन्तरातीतश्लोकद्वयोक्तार्थस्य प्रपञ्चनार्था उत्तरश्लोकद्वयीति सङ्गतेरित्यर्थः । "श्लोकद्वयस्यास्फुटत्वाद्" इति बहुकोशेषु पाठः । "श्लोकत्रयस्य तात्पर्यमाह" इति वक्तव्येऽपि तृतीयस्याज्ञानिज्ञानिविषयस्यात्रैवार्थे पर्यवसन्नतया न पृथगर्थान्तरप्रत्यायकत्वमिति भावेन 'श्लोकद्वयस्य' इत्युक्तम् । गीतायां "प्रकृतेः क्रियमाणानि" इत्यत्र 'विमूढात्मा' इत्यज्ञकर्मणः 'तत्त्ववित्तु' इति च ज्ञानिकर्म-

वैलक्षण्यस्य प्रतीत्या 'विद्वदविदुषोः' भाषितक्रमो न विवक्षित इत्याह **यथायोगमिति** । **यथा-सम्भवमित्यर्थः** । 'आह' इत्यनुक्तार्थवचनमेव किं न स्याद् ? इत्यत आह **सक्ता इति** । "सक्ताः कर्मणि", "न बुद्धिभेदम्" इति श्लोकद्वयेनोक्तत्वाद् 'आह' इत्यस्य 'प्रपञ्चयति' इत्येवार्थ इत्यर्थः ।

**अनेकार्थत्वादिति** । "शब्दाद्या इन्द्रियाद्याश्च" इति वक्ष्यमाणाभिधाने तथोक्तेरिति भावः । बहुवचनोपपत्त्यर्थमिन्द्रियशब्देन सम्भवग्रहणस्यापि मनसः कुरुपाण्डवन्यायेन पृथग्ग्रहणं कृतम् **शरीरमनसोरिति** । दृश्यते च "मनः सर्वेन्द्रियाणि च" (आथ. १.३.३) इति पृथग्ग्रहणम् । अनेन "इन्द्रियाणामिन्द्रियत्वेन क्रोडीकरणे इन्द्रियमादिर्येषु प्रकृतिगुणेषु इन्द्रियशरीरमनस्सु तैरिन्द्रि-यादिभिः" इति विग्रहोऽभिमत इति भाति । गुणत्वाभाव उपपत्तिप्रदर्शनाय 'द्रव्याणाम्' इत्युक्तम् । द्रव्यत्वगुणत्वयोरेकत्रावस्थानायोगादिति भावः । **अप्रधानानि** ज्ञातव्यानि । भाष्ये हिशब्दो 'यस्माद्' इत्यर्थे । यतोऽत्राप्रधानान्येव गुणशब्देन विवक्षितानि, न पुनर्वैशेषिकाद्यभिमतरूपरसादीनि, तस्मादेकत्र द्रव्यत्वगुणत्वयोर्दण्ड इव सामानाधिकरण्यमुपपद्यत इति भावः ।

**प्रकारान्तरेणेति** । अप्रधानत्वापेक्षया प्रकारान्तरेण कार्यत्वेनेत्यर्थः । नन्विन्द्रियादीनां प्रकृतिं प्रत्यप्रधानत्वं प्रकृत्युपचितत्वेनैव वक्तव्यम् । तत्सम्बन्धित्वं च तदेव वक्तव्यमिति कथं प्रकारभेद इति चेत् प्रकृत्या कार्ये निष्पादनीये इन्द्रियादीनाम् उपसर्जनत्वापरपर्यायम् अप्रधानत्वं गुणत्वं विवक्षितम् । तत्सम्बन्धित्वं तु प्रकृतिकार्यत्वम् इति भेदात् 'प्रकारान्तरेण' इत्युक्तमिति **आहुः** । गुणत्वं परमाणुरूपादौ कार्यत्वं विनाऽप्यस्तीति गुणत्वादन्यत् कार्यत्वं घटादिसाधारणमिति विव-क्षितमिति द्रष्टव्यम् । "प्रकृतेरुपचीयमानत्ववत् प्रकृतिसम्बन्धित्वम्" इति **प्राचीनटीका** । **भाव-प्रदीपिकायां** तु "महत्तत्त्वाद्यपेक्षयाऽपि गुणभूतानीन्द्रियाणीति किं विशिष्याभिधीयते प्रकृतिं प्रति गुणभूतानि ? इत्यत आह **तत्सम्बन्धीनीति** ॥" इतीदं भाष्यमवतारितम् । 'गुणशब्दः' इत्यतः पूर्वम् 'अनेन' इति पूरणीयम् । प्रकृतेर्गुणैः कार्यभूतैरित्यनेनैव देहेन्द्रियान्तःकरणानां विशेष्यभूतानां योग्यतया तत्सम्बन्ध इति 'इन्द्रियादिभिः' इति भाष्यं प्रवृत्तमिति हृदयम् । **कर्तृत्वात्** कर्तृत्वेनानु-भवसिद्धत्वात् । **कथमिति** । कर्तृत्वावबोधस्य मिथ्याज्ञानरूपत्वमयुक्तमित्यर्थः ।

प्रतिबिम्बभूतस्यापि जीवस्य "स हि बिम्बाधीनक्रिययैव क्रियावान्" (गी.भा. २.१९) इति द्वितीये भाष्यकृतैव क्रियावत्त्वाभिधानादत्र कथं क्रियाप्रतिषेध इति शङ्कां शेषोक्त्या परिहरति **स्वातन्त्र्येणेति** ॥ २७ ॥

**गीता**

## तत्त्ववित्तु महाबाहो गुणकर्मविभागयोः ।
## गुणा गुणेषु वर्तन्त इति मत्वा न सज्जते ॥ २८ ॥

*वि०वि०*— प्रकृतेर्गुणानां विभागस्योक्तलक्षणस्य कर्मणां विभागस्य च पराधीनकर्तृत्वादिरूपस्य च तत्त्वं जानंस्तु गुणा विष्णोरिच्छादयो गुणेषु स्वाभाविकेषु जीवस्य कामादिषु प्रेरकत्वेन वर्तन्ते । तदनुसारेण च गुणाः इन्द्रियादीनि गुणेषु विषयेषु वर्तन्ते । ईश्वर एव स्वेच्छादिभिर्जीवगुणान् निमित्तीकृत्य त्रिगुणविकारात्मकं कर्म इन्द्रियादीनां विषयैः संसर्गं च करोति । मम स्वातन्त्र्यं क्वापि नास्तीति मन्वानो न सज्जते ॥

*वा०ल०*— 'तत्त्ववित् तु महाबाहो' इत्यत्र गुणकर्मविभागयोः तत्त्ववित् इति सम्बन्धः । गुणाः सत्त्वादिगुणाः । गुणेषु स्वकार्यभूतेषु सात्त्विकराजसतामसकार्येषु ॥

*सा०सं०*— एवमविद्वान् करोति चेत् विद्वान् कथमित्यत आह **तत्त्वविदिति** । **गुणकर्मविभागयोः** गुणानामिच्छादिभगवद्गुणानाम्, सत्त्वादिप्रकृतिगुणानाम्, प्रकृतिविकारतया प्रकृत्युपसर्जनभूतचक्षुरादीन्द्रियशरीरमनसां चान्योन्यमुक्तविधया विभागस्य । तथा कर्म च स्वतन्त्रभगवत्कर्तृकम्, तदायत्तजीवकर्तृकम्, विकाररूपप्रकृतिकर्तृकं चेति कर्मविभागस्य । **तत्त्ववित् तु** तत्त्वज्ञानी तु । **गुणा** भगवदिच्छादयः । **गुणेषु** जीवस्वभावकर्मादिषु प्रेरकत्वेन **वर्तन्ते** । भगवदिच्छाद्यनुसारेण च गुणा इन्द्रियाणि गुणेषु शब्दादिविषयेषु वर्तन्ते । अतो जीवस्य न क्वापि स्वातन्त्र्यमिति **मत्वा न सज्जते** । स्वात्मनः कर्तृत्वाभिमानेन संसारमग्नो न भवतीत्यर्थः ॥

*अ०प्र०*— हे महाबाहो ![१], गुणकर्मविभागयोः[२], तत्त्ववित्[३], स तु[४], गुणाः[५], गुणेषु[६], वर्न्तते[७], इति मत्वा[८], न सज्जते इत्यन्वयः ।

हे महाबाहो ![१], गुणकर्मविभागयोः = नाहं गुणात्मक इति गुणेभ्य आत्मनो विभागः न मे कर्माणीति कर्मभ्योऽप्यात्मनो विभागः तयोः गुणकर्मविभागयोः; यद्वा प्रकृतेः ईश्वरजीवजडानां गुणानामिच्छादीनां विभागस्य उक्तचातुर्विधलक्षणभेदस्य तथा कर्मणां कर्तृत्वात् विभागस्य भेदस्य ईश्वरे स्वतन्त्रकर्तृत्वं जीवस्य पराधीनकर्तृत्वं जडानां विकारिकर्तृत्वं इत्येवं-रूपस्य वर्णभेदस्य च यः विभागः सः गुणकर्मविभागः तयोः गुणकर्मविभागयोः[२], तत्त्ववित् = यः तत्त्वं स्वरूपं ज्ञानं वेत्ति स तत्त्ववित्[३], स तु = पुमान्[४], गुणाः = विष्णोरिच्छादयः[५], गुणेषु = स्वाभाविकेषु जीवस्य कामादिषु[६], वर्तन्ते = प्रेरकत्वेन प्रवर्तन्ते[७], इति मत्वा नाहमिति मत्वा[८], न सज्जते = कर्तृत्वा-

मिनिवेशनं न करोति कर्मादौ स्नेहवान्न भवति[६], तर्हि किं करोतीत्यत्र ईश्वर एव स्वेच्छादिभिः जीवं गुणान्निमित्तीकृत्य इन्द्रियादीनां विषयैस्सह संसर्गत्रिगुणात्मकं कर्म च करोति न मम क्वापि स्वातन्त्र्यमस्तीति विषयभोगं कुर्वन्नपि अस्तु वा ममैवेत्युदास्त इति भावः ॥ २८ ॥

**भाष्यम्**

**कर्मभेदस्य गुणभेदस्य च तत्त्ववित् । गुणा इन्द्रियादीनि । गुणेषु विषयेषु ॥ २८ ॥**

***प०टी०***— द्वितीयं व्याचष्टे **कर्मेति** । 'मुख्यतः परमात्मनः कर्म, अस्वतन्त्रः जीवः' इति कर्मविभागः । 'इन्द्रियाणि मुख्यतः परमात्मकरणानि, जीवस्यामुख्यतः' इति गुणविभागः ॥

***न०टी०***— द्वितीयं व्याचष्टे **कर्मभेदस्येति** । स्वतन्त्रकर्तृत्वं विष्णोरेव, तदधीनस्वतन्त्रकर्तृत्वं स्वावरापेक्षयैव जीवस्य, विकारलक्षणमेव कर्तृत्वं प्रकृतेः – इति कर्मभेदः । ब्रह्मादीनां सर्वेषामिन्द्रियाणि शरीरं च भगवतैव प्रयोज्यानीति तस्यैव गुणाभूतानि, भगवतैव क्वचिज्जीवापेक्षयाऽपि प्रयोज्यन्त इति जीवानामपि गुणभूतानि, तान्येव प्रकृत्युपचितानीति प्रकृतेरपि गुणभूतानि – इति गुणभेदः । एवमनयोः तत्त्वविद्भगवतैव प्रेरिता इन्द्रियादिगुणास्तदधीनेषु शब्दादिगुणेषु प्रवर्तन्त इति मत्वा न सक्तः स्यादिति भावः ॥

***प्र०दी०***— गुणानां कर्मणां चान्योन्यं यो विभागस्तस्मिन्वक्तव्ये एकवचनेनालम् । कथं द्विवचनम् । केन वाऽस्यान्वय इति शङ्कां विभागशब्दस्यार्थं वदन् परिहरति— **कर्मेति** । जीवेश्वरप्रकृतिलक्षणसम्बन्धिभेदात्कर्मणामिन्द्रियादीनां च भेदोऽत्र विवक्षितो ग्रन्थान्तरादवगन्तव्यः । 'गुणाः गुणेषु' इति पदद्वयस्य विवक्षितमर्थमाह— **गुणा इति** ॥

***भा०र०***— **अस्य** 'गुणकर्मविभागयोः' इत्यस्य । ननु गुणकर्मविभागयोस्तत्त्वज्ञानी **गुणा** इन्द्रियाणि **गुणेषु** विषयेषु प्रवर्तन्त इति मत्वा नाभिमानवान् भवतीति गीतायाम् इन्द्रियकर्मविभागज्ञानस्याभिमानाभावं प्रति प्रयोजकत्वमुक्तमयुक्तम् । प्रत्यक्षं सप्तविधम्— साक्षिषडिन्द्रियभेदेन । उत्क्षेपण-अपक्षेपण-आकुञ्चन-प्रसारण-गमनभेदात् कर्म पञ्चविधम् इत्युक्तेन्द्रियकर्मविभागज्ञानवतोऽभिमानाभावादर्शनादित्यत आह **जीवेश्वरेति** । गुणकर्मविभागशब्देन नोक्तो विभागो विवक्ष्यते । किन्तु स्वतन्त्रकर्तृत्वं विष्णोरेव । तदधीनस्वतन्त्रकर्तृत्वं स्वावरापेक्षयैव जीवस्य । विकारलक्षणमेव कर्तृत्वं प्रकृतेरिति कर्मभेदः । ब्रह्मादीनां सर्वेषां जीवानाम् इन्द्रियाणां शरीरं च भगवतैव प्रयोज्यानीति भगवत एव गुणभूतानि । भगवतैव क्वचिज्जीवापेक्षयाऽपि प्रयोज्यन्त इति जीवानामपि

गुणभूतानि । तान्येव प्रकृत्युपचितानीति प्रकृतेरपि गुणभूतानीति गुणभेदः, इत्येवं गुणकर्मविभागयोस्तत्त्वविदिति **प्राचीनटीकारीत्या** गुणकर्मविभाग एव विवक्ष्यते । तथा च भगवतैव प्रेरिता इन्द्रियादिगुणाः तदधीनेषु शब्दादिगुणेषु वर्तन्त इति मत्वा न सज्जते । इन्द्रियेषु स्वातन्त्र्येणेश्वरस्वामिकत्वाज्ञाने ममैवैतानि करणानीति मिथ्यामतिरूपेन्द्रियाभिमानवान् भवति । कर्मणि च स्वातन्त्र्येणेश्वरकर्तृकत्वज्ञाने सति स्वस्य स्वातन्त्र्याभिमानवान्न भवति । विप्रतिषेधात् । तत एवंविधगुणकर्मविभागज्ञानवान् इन्द्रियेषु शोभनाध्यासनिमित्तकस्नेहरूपाभिमानवान् कर्माभिमानवांश्च न भवतीति भावेन तत्र प्रमाणं दर्शयितुमुक्तम् **ग्रन्थान्तरादिति** ।

> "यस्मात् स्वतन्त्रकर्तृत्वं विष्णोरेव न चान्यगम् ।
> तदधीनस्वतन्त्रत्वं स्वावरापेक्षयैव तु ॥
> जीवस्य विकृतिर्नाम कर्तृत्वं जडसंश्रयम् ।
> पुमान् दोग्धाऽथ गौर्दोग्ध्री स्तनो दोग्धेतिवत् क्रमात् ॥" (ब्रह्मतर्के)

इति गीतातात्पर्यनिर्णयाख्यग्रन्थान्तराद् (३-२७-३५) इत्यर्थः । एतेन "विभागे वक्तव्ये एकवचनेनालम्" इत्यपि निरस्तम् । जीवादिप्रतिसम्बन्धिभेदेन गुणानां कर्मणां च विभागानां द्वैराश्येन द्विवचनोपपत्तेः । तदाह "कर्मणामिन्द्रियादीनां च भेदः" इति । केन चास्यान्वयः ? इति शङ्काऽपि "कर्मभेदस्य, गुणभेदस्य च तत्त्ववित्" इत्यन्वयप्रदर्शनेन भाष्य एव परिहृतेति । **विवक्षितमिति** । तस्य नानार्थत्वादिति भावः । **इन्द्रियादीनि** इन्द्रियशरीरमनांसि । **विषयेषु** शब्दादिष्विति भाष्यार्थः ॥ २८ ॥

**गीता**

## प्रकृतेर्गुणसम्मूढाः सज्जन्ते गुणकर्मसु ।
## तानकृत्स्नविदो मन्दान् कृत्स्नविन्न विचालयेत् ॥ २९ ॥

***वि०वि०***— प्रकृतेर्गुणैः सम्मूढाः तथा प्रकृतेर्गुणेष्विन्द्रियादिषु च सम्मूढा अभिमानिनः तत एव गुणकर्मसु विषयेषु कर्मसु च सज्जन्ते । तान् अकृत्स्नविदः प्रकृतेर्गुणविभागज्ञानशून्यान्, मन्दान् ज्ञानेऽयोग्यान्, स्वयं कृत्स्नं समस्तान् विद्वान् न विचालयेत् । कर्मसु सङ्गं त्याजयित्वा सन्मार्गे न प्रवर्तयेदिति । 'शब्दाद्या इन्द्रियाद्याश्च सत्त्वाद्याश्च शुभानि च । अप्रधानानि च गुणा निगद्यन्ते निरुक्तिगैः ॥' इत्यभिधानात् गुणशब्दस्यानेकार्थत्वं सिद्धम् ॥

***सा०सं०***— स्वात्मनः स्वतन्त्रकर्तृतां मन्यमाना अविद्वांसो ज्ञानिना बोधनीया इत्यत आह **प्रकृतेरिति** । **प्रकृतेः** ईश्वरस्य । इच्छादिगुणैः कर्तृभूतैः । **प्रकृतेर्जडस्य** कार्यभूतसत्त्वादिगुणैर्निमितैः । प्रकृतेर्जडस्य विकारभूतगुणेष्विन्द्रियेषु । **सम्मूढाः** ममैवैतानि करणानि इति तेषु स्वातन्त्र्याभिमानिनः । अत एव **गुणकर्मसु** गुणेषु शब्दादिविषयेषु । **सज्जन्ते** स्नेहातिशयवन्तो भवन्ति, स्वकर्मसु च सज्जन्ते । स्वातन्त्र्यभ्रमवन्तो ये **तानकृत्स्नविदः** गुणकर्मविभागाज्ञान् । **मन्दान्** अयोग्यजनान् । स्वयं **कृत्स्नवित्** ज्ञानी । **न विचालयेत्** । गुणकर्मसु सङ्गं त्याजयित्वा सन्मार्गे न प्रवर्तयेदित्यर्थः । 'शब्दाद्या इन्द्रियाद्याश्च सत्त्वाद्याश्च शुभानि च' इत्यादेर्गुणशब्दोऽनेकार्थो ध्येयः ॥

***अ०प्र०***— न बुद्धिभेदं जनयेदित्युक्तमुपसंहरति **प्रकृतेरिति** ।

प्रकृतेर्गुणसम्मूढाः सन्तो[१], गुणकर्मसु[२], सज्जन्ते[३], तान्[४], अकृत्स्नविदाः[५], अत एव मन्दान्[६], कृत्स्नवित्[७], न विचालयेदित्यन्वयः ।

प्रकृतेर्गुणसम्मूढाः = प्रकृतेः गुणैः सत्त्वादिभिः सम्मूढाः सन्तो = ये पुनःपुनरज्ञानिनः यद्वा प्रकृतेर्गुणेषु इन्द्रियादिषु ममैवैतानि स्वातन्त्र्येण करणानि इति मिथ्याज्ञानरूपाभिमानवतः तत एव सम्मूढाः सन्तः[१], गुणकर्मसु = गुणेषु इन्द्रियादिषु तत्तत्कर्मसु च यद्वा गुणेषु विषयेषु कर्मसु च वर्णादिषु च[२], सज्जन्ते = वयं कुर्म इति स्नेहवन्तो भवन्ति[३], तान्[४], अकृत्स्नविदाः = ईश्वरादीनां गुणकर्मणां विभागस्य यत् ज्ञानं तच्छून्यान्[५], अत एव मन्दान् = ज्ञाने अयोग्यान्[६], स्वयं कृत्स्नवित् = पूर्वोक्तप्रकृत्यादिकं जानन् ज्ञानी[७], न विचालयेत् = कर्मसु सङ्गं त्याजयित्वा सन्मार्गे न प्रवर्तयेदित्यर्थः ॥ २९ ॥

**भाष्यम्**

**प्रकृतेर्गुणेषु इन्द्रियादिषु सम्मूढाः । इन्द्रियाद्यभिमानाद् हि विषयादिसङ्गः । गुणकर्मसु विषयेषु कर्मसु च—**

**"शब्दाद्या इन्द्रियाद्याश्च सत्त्वाद्याश्च शुभानि च ।**
**अप्रधानानि च गुणा निगद्यन्ते निरुक्तिगैः ॥"**

**—इति अभिधानात् ॥**

**सत्त्वाद्यङ्गीकारे, 'गुणा गुणेषु' इत्ययुक्तं स्यात् ॥ २९ ॥**

*प०टी०*— तृतीयं व्याचष्टे **प्रकृतेरिति** । 'गुण'शब्दस्येन्द्रियार्थत्वे प्रमाणमाह **शब्दाद्या इति** । 'गुण'शब्देन सत्वादिगुणत्रयं सर्वत्र किं न स्यात् ? इत्यत आह **सत्त्वादीति** ॥

*न०टी०*—तृतीयं व्याचष्टे **प्रकृतेर्गुणेष्विति** । इन्द्रियादीनां गुणत्वे प्रमाणमाह **शब्दाद्या इति** । सत्त्वादीनामेव गुणत्वाङ्गीकारे दूषणमाह **सत्त्वेति** । न हि सत्त्वादिगुणानामेव कर्तृकर्मभावः । गुणशब्दस्येन्द्रियादौ लक्षणा चेत् स एव दोषः । अतो यथाभिधानमिन्द्रियादयोऽत्र गुणशब्दार्था इति भावः ॥

*प्र०दी०*— 'प्रकृतेर्गुणसम्मूढाः' इत्यत्र गुणशब्दस्य विवक्षितमर्थं वदन् विग्रहं च दर्शयति— **प्रकृतेरिति** । नित्यसापेक्षत्वाद्गुणशब्दस्य नासामर्थ्यमिति प्रदर्शनाय प्रकृतेरित्यनुवादः । देवदत्तस्य गुरुकुलमिति यथा । 'प्रकृतेर्गुणसम्मूढत्वात्सज्जन्ते गुणकर्मसु' इति हेतुहेतुमद्भावोऽत्र विवक्षितः । अन्यथा वैयर्थ्यापत्तेः । तमुपपादयति— **इन्द्रियादीति** । अभिमानः ममैवैतानि स्वातन्त्र्येण करणानीति भ्रमः । 'विषयादि' इत्युक्त्या गुणशब्दोऽत्र विषयार्थ इति दर्शयति । आदिशब्देन कर्मग्रहणम् । विषयेषु सङ्गः स्नेहादिः । कर्मसु स्वातन्त्र्यभ्रमः । 'गुणानां कर्मसु' इति केनचिद्व्याख्यातम् । तदसदिति भावेन द्वन्द्वोऽयमिति दर्शयति— **गुणेति** । द्वन्द्वपरिग्रहेऽधिकार्थलाभात् । अनेन 'विषयादि' इत्येतदपि समर्थितं भवति । गुणशब्दस्योक्तानेकार्थत्वं कुत इत्यत आह— **शब्दाद्या इति** । निरुच्यत इति निरुक्तिः शब्दार्थः । निरुक्तिं गच्छन्त्यवगच्छन्तीति निरुक्तिगाः । अस्तु गुणशब्दस्यानेकेष्वर्थेषु शक्तिः । तथापि विवक्षाऽत्रैकस्यैवार्थस्य युक्ता । अन्यथा 'न ह्येकशब्देन' इत्युक्तविरोधात् । शब्दो हि यमर्थमादौ स्मारितवान् स एवार्थो बुद्धौ सन्निहितः पुनरुच्चरितेन स्मारयितुं युक्तः । तथा चात्र सर्वत्र सत्त्वादय एव ग्राह्याः । तद्ग्रहणे शब्दादीनामपि तदात्मकानां ग्रहणसम्भवादित्यत आह— **सत्त्वादीति** । कर्तृत्वाधारत्वयोरेकत्र विरोधादिति भावः । तदात्मकानामिन्द्रियाणामुपलक्षणे वृथा प्रयासः । अनयैवानुपपत्त्या अनेकार्थग्रहणोपपत्तेः ॥

*भा०दी०*— **अनेनेति** । गुणकर्मस्स्वित्यत्र द्वन्द्वव्याख्यानेनादिपदं कर्मार्थकमिति व्याख्यातमित्यर्थः । .............. ब्दार्थज्ञा इत्यर्थः । **इत्युक्तविरोधादिति** । ब्रह्माक्षरसमुद्भवमित्येतद्व्याख्यावसरे न ह्येकशब्देन निरुक्ते न द्विरुक्ते ................ न द्वयं कुत्रचिदुच्यत इत्युक्तविरोधादित्यर्थः । **कर्तृत्वाधारत्वयोरिति** । वर्तन्त इत्युक्तवर्तनक्रियाकर्तृत्वस्य गुणेष्वित्युक्त ........स्यैकत्र सत्त्वादिगुणेषु विरोधादिति भावः । **उपलक्षण इति** । गुण इत्यनेनेति योज्यम् ॥

*भा०र०*— ननु 'प्रकृतेर्गुणसम्मूढाः' इत्यत्र प्रकृतिपदसापेक्षस्य गुणसम्मूढपदस्य समासो न युक्तः । सापेक्षस्यासमर्थत्वात् । "समर्थः पदविधिः" इति पदसम्बन्धविधेः समर्थाश्रितत्वस्मरणा-

दित्याशङ्क्य अत्र समासं समर्थयमानो भाष्ये मूलस्थस्य 'प्रकृतेः' इति पदस्यानुवादे प्रयोजनं दर्शयति **नित्यसापेक्षत्वादिति** । सापेक्षस्याप्यसामर्थ्यं नास्तीत्यत्र वैयाकरणाभिमतमुदाहरणं दर्शयति **देवदत्तस्येति** । अत्र कुलेनैव देवदत्तशब्दोत्तरषष्ठ्यर्थस्यान्वयः, न पुनर्गुरुणा । देवदत्तस्य सम्बन्धस्तूपस्थितगुरुद्वारक एव षष्ठ्यर्थः, न तु तदितरः । उक्तं च—

"समुदायेन सम्बन्धो येषां गुरुकुलादिना ।
संस्पृश्यावयवांस्ते तु युज्यन्ते तद्वता सह ॥" इति ।

अथवा ससम्बन्धिकपदार्थस्यैकदेशत्वेऽपि सम्भवत्येव विशेषेणान्वयः । 'चैत्रनप्ता' इत्यादौ तथा दर्शनात् । 'नप्ता' इत्यस्य 'पुत्रपुत्रः' इत्यर्थकत्वात् । उक्तं च—

"सम्बन्धिशब्दः सापेक्षो नित्यं सर्वः समस्यते ।
स्वार्थवत् सा व्यपेक्षाऽत्र वृत्तावपि न हीयते ॥" इति ।

अयमेव समर्थसूत्रमञ्जर्यामुक्तोऽर्थः शब्दकौस्तुभे प्रपञ्चितः । अत्र च नित्यसापेक्षत्वं नाम ससम्बन्धिकत्वं विवक्षितमिति तद्वदेव समासोपपत्तिरित्यर्थज्ञापनाय भाष्ये तत्पदानुवाद इति ।

हेत्वर्थगर्भं विशेषणमिति भावेनाह **प्रकृतेर्गुणसम्मूढत्वादिति** । **अन्यथा** हेतुहेतुमद्भावाविवक्षायाम् । **वैयर्थ्यापत्तेः** "प्रकृतेर्गुणेषु सम्मूढाः" इति विशेषणस्य । ये गुणकर्मसु सज्जन्ते तानकृत्स्नविदो मन्दान्न विचालयेद् बुध इति पूर्णत्वादिति भावः । **तं** हेतुहेतुमद्भावम् । 'इन्द्रियादि' इति भाष्यगतादिपदेन शरीरमनसोर्ग्रहणम् । श्रोत्रादीन्द्रियाभिमानिदेवानां शब्दादिविषयसङ्गप्रसङ्ग इत्यतोऽत्र विवक्षितं संसारमज्जनानुकूलमभिमानं निरूपयति **अभिमान इति** । देवानां तु भगवदधीनतया नियमनं कुर्वतामपि मिथ्यामतेरभावान्न जीवसंसारमग्नत्वापत्तिरिति भावः । **आदिशब्देन** 'विषयादि' इत्यत्र आदिशब्देन । **विषयेषु** शब्दादीन्द्रियार्थेषु । 'स्नेहादिः' इत्यत्र आदिपदेनारित्वादिभ्रमनिमित्तको द्वेषो ग्राह्यः । **कर्मसु** क्रियारूपेषु । मयैवैतानि कर्माणि निष्पाद्यन्ते न पुनरन्योऽत्र कर्ताऽस्तीति स्वातन्त्र्यभ्रम एव सङ्गशब्दार्थ इत्यर्थः । अस्वकर्तृके स्वकर्तृकत्वाध्यासस्यापि सङ्गरूपत्वादिति भावः ।

प्रकृतेर्गुणैः सम्यङ्मूढाः सज्जन्ते गुणानां कर्मस्विति भाषणादाह **केनचिदिति** । परव्याख्यानस्यासत्त्वे हेतुमाह **द्वन्द्वेति** । **अधिकेति** । सङ्गाधिकरणस्य नानात्वलाभादित्यर्थः । **अनेन** द्वन्द्वपरिग्रहेण । **इत्येतद्** 'विषयादिसङ्गः' इति पूर्वभाष्य आदिपदं कर्मार्थकतया व्याख्यातमित्यर्थः । एतेन "इन्द्रियाद्यभिमानाद्धि विषयसङ्गः" इत्यनेनैव संसारनिमग्नत्ववर्णनसम्भवाद् आदिपदस्य न

प्रयोजनमिति चोद्यं परिहृतम् । तदिदमुक्तम् **समर्थितमिति** । **शब्दाद्या इतीति** । शब्द आद्यो येषां स्पर्शरूपरसगन्धानां विषयाणां ते तथोक्ताः, इन्द्रियमाद्यं येषु गुणेष्विन्द्रियशरीरमनोरूपेषु तथोक्ताः, **सत्त्वाद्याः** सत्त्वरजस्तमांसि, **शुभानि** सौख्य-सौशील्य-सौकुमार्यादीनि, **अप्रधानानि** च, **गुणाः** गुणशब्दार्थाः इति भाष्यार्थस्यातिरोहितत्वान्निरुक्तिगैरित्येतद् व्याकुर्वन् निष्पूर्वाद् "वच=परिभाषणे" इत्यतः कर्मणि बाहुलकात् क्तिनि निरुक्तिशब्दो निष्पन्न इति तदर्थमाह **निरुच्यत इतीति** । 'निरुक्तिगाः' इत्यत्र निरुक्तिशब्दोपपदाद् गमेः कर्तरि "अन्यत्रापि दृश्यते" इति डप्रत्ययः, तैः । 'शब्दार्थतत्त्वविद्भिः' इति शेषः । 'निगद्यन्ते' इति भाष्येणान्वयः ।

**विवक्षा** ग्राह्यत्वेनाभिप्रायविषयता । एकस्यैवार्थस्य ग्राह्यत्वाभावे बाधकमाह **अन्यथेति** । **इत्युक्तेति** । "ब्रह्माक्षरसमुद्भवम्" (३.१५) इत्येतदर्थवर्णनप्रस्तावे "न ह्येकशब्देन द्विरुक्तेन भेदश्रुतिं विना वस्तुद्वयं कुत्रचिदुच्यते" इत्युक्तविरोधादित्यर्थः । एकशब्देन वस्तुद्वयग्रहणे को दोष इत्यतस्तद्भाष्ये हिशब्दसूचितां युक्तिमाह **शब्दो हीति** । एवं बाधकमुक्त्वा साधकमप्याह **शब्दो हीति** । स एवार्थः स्मारयितुं युक्त इत्यत्रोपपत्तिकथनम् **बुद्धौ सन्निहित इति** । हेत्वर्थगर्भमेतदित्यपि **आहुः** ।

ननु गुणशब्दस्य सत्त्वादिगुणमात्रार्थत्वे शब्दादिविषयस्य कथमत्र ग्रहणम् ? इत्यत आह **तद्ग्रहण इति** । **तदात्मकानां** तत्परिणामानाम् । अयुक्तत्वमुपपादयति **कर्तृत्वेति** । 'वर्तन्ते' इत्याख्यातोपात्तक्रियायां स्वतन्त्रो हि कर्तेति न तस्याधारत्वमुपपद्यते । न हि क्रियाऽऽधारोऽधिकरणम् । किं नाम ? कर्तृकर्मणोः क्रियाऽऽश्रयणयोर्धारणक्रियां प्रति य आधारस्तत्कारकम् । तथैव वृत्त्युक्तस्य युक्तिपादीयसुधायामनुवादात् । एवञ्च क्रियाश्रयभूतस्य तत्र स्वतन्त्रस्य कर्तुर्य आधारस्तदेवाधिकरणमिति गुणशब्देन क्रियाकर्तुरभिधानेन तस्यैव पुनस्तेनैव गुणशब्देन सप्तम्यन्तेन आधारत्वेनाप्यभिधानं विप्रतिषिद्धमिति "गुणा गुणेषु" इत्ययुक्तमिति भाष्यभाव इत्यर्थः । तेन "क्रियायां स्वतन्त्रस्य क्रियां प्रत्याधारत्वरूपम् अधिकरणत्वं कुलालादौ सुप्रसिद्धमिति कथं कर्तृत्वाधारत्वयोर्विरोधः ?" इति चोद्यं परिहृतं भवति । "आधारोऽधिकरणम्" इत्यत्र क्रियाश्रयाधारस्याधिकरणत्वेन व्याख्यानात् ।

ननु गुणशब्देन सत्त्वादयो मुख्यवृत्त्या ग्राह्याः । तदात्मकानीन्द्रियाणि तु लक्षणया गृह्यन्ते । तथा च **गुणाः** गुणात्मकानीन्द्रियाणि **गुणेषु** सत्त्वादिगुणात्मकेषु शब्दादिषु वर्तन्त इत्यर्थाङ्गीकारे कर्तृत्वाधारत्वयोरेकत्र विरोध इत्युक्तदोषानवकाश इत्यत आह **तदात्मकानामिति** । इन्द्रियादीनां शब्दादीनां च प्रमाणप्रमितेष्वप्यनेकेष्वर्थेष्वेकस्यैव ग्रहणं न्याय्यमित्यनेकमुख्यार्थग्रहणाद् बिभ्यत् परः

कथं नाम लक्षणामङ्गीकुर्यादिति तस्यैकमुख्यार्थग्रहणप्रयासोऽपेक्षामात्रे पर्यवस्येदित्यर्थः । यदुक्तं शङ्काग्रन्थे "अन्यथा न ह्येकशब्देनेत्युक्तविरोधात्" इत्यनेकार्थग्रहणे दूषणं तदुद्धरति **अनयैवेति** । "असति हि बाधके न ह्येकशब्देन द्विरुक्तेन वस्तुद्वयं कुत्रचिदुच्यते" इति भाषितम् । अस्ति चात्र गुणशब्दस्यैकार्थग्रहणे कर्तृत्वाधारत्वयोरेकत्र विरोध इत्युक्तं बाधकमिति युक्तं प्रमाणप्राप्तानेकार्थ-ग्रहणमिति नोक्तदोषः । अत एव तत्र भाष्ये "**भेदश्रुतिम्** अनेकार्थग्रहणप्रमाणं विना" (गी.भा. ३.१५) इत्युक्तमिति भावः ॥ २९ ॥

"**प्रकृतेः क्रियमाणानि**" **इत्यादित्रिश्लोक्यक्षरार्थस्तु**— अत्र हि, 'सक्ताः' इत्यादिश्लोक-द्वयोक्तमविदुषो विदुषश्च कर्मवैलक्षण्यं प्रपञ्चते ।

"क्वचित्स्वभावः प्रकृतिः क्वचिच्च त्रिगुणात्मिका ।
क्वचित् प्रकृष्टकर्तृत्वात् भगवान् प्रकृतिर्हरिः ॥" (शब्दनिर्णये)

इति वचनाद् ईश्वर-जीवस्वभाव-जडप्रकृतिरूपम् अर्थत्रयमपि प्रकृतिशब्दार्थः । "शब्दाद्या इन्द्रियाद्याश्च" इति भाष्योक्तप्रमाणेन गुणशब्देनापीशेच्छादयो जीवराशिसम्यग्ज्ञानादयः प्रकृतिं जडरूपां प्रत्यप्रधानभूताः, कार्यभूता वा सत्त्वरजस्तमोगुणाः, देहेन्द्रियान्तःकरणानि, शब्दादि-विषयाश्च, गृह्यन्ते । **प्रकृतेर्गुणैः** हरेरिच्छादिभिः स्वतन्त्रैः, **प्रकृतेः** उत्तममध्यमाधमजीवराशि-स्वभावस्य **गुणैः** तत्त्वज्ञान-मिश्रज्ञान-मिथ्याज्ञानरूपधर्मैः ईशाधीनैः, **प्रकृतेः** कार्यभूतैः सत्त्वा-दिभिः प्रकृतेरुपसर्जनभूतैर्देहेन्द्रियान्तःकरणरूपगुणैर्वा **क्रियमाणानि कर्माणि** प्रति **अहङ्कार-विमूढात्मा** अहङ्कारशब्देन महत्तत्त्वकार्यं तामसाहङ्कारो गृह्यते । तेन आवृतमनाः पुरुषः **अहं कर्ता** स्वतन्त्रः कर्तेति मन्यत इत्यविद्वत्कर्मोक्तम् ॥ २७ ॥

**गुणकर्मविभागयोस्तत्त्ववित्तु** ब्रह्मादीनां सर्वेषां जीवानाम् इन्द्रियाणि शरीरं च भगवते-वेच्छया प्रयोज्यानीति भगवत एव गुणभूतानि, भगवतैव क्वचिज्जीवापेक्षयाऽपि प्रयोज्यन्त इति जीवानामपि गुणभूतानि, तान्येव प्रकृत्युपचितानीति प्रकृतेरपि गुणभूतानीति गुणभेदः । स्वतन्त्र-कर्तृत्वं विष्णोरेव, तदधीनस्वतन्त्रकर्तृत्वं स्वावरापेक्षयैव जीवस्य, विकारलक्षणमेव कर्तृत्वं प्रकृतेः, इत्येवंरूपयोर्गुणकर्मविभागयोर्याथार्थ्यं विजानन् विद्वांस्तु **गुणाः** भगवदधीनानीन्द्रियादीनि **गुणेषु** शब्दादिविषयेषु **वर्तन्ते** । न पुनर्जीवस्य क्वापि स्वातन्त्र्यम् **इति मत्त्वा न सज्जते** स्वात्मनः कर्तृत्वाभिमानेन संसारमग्नो न भवतीति विद्वत्कर्मोक्तम् ॥ २८ ॥

स्वात्मनः स्वतन्त्रकर्तृतां मन्यमाना अविद्वांसो विदुषा बोधनीयाः किं न स्युः ? इत्यत उच्यते **प्रकृतेरिति** । गुणैः पूर्ववदर्थः । ममैवैतानि स्वातन्त्र्येण करणानीति भ्रमरूपाभिमानोपहत-

मनसः, अत एव **गुणेषु कर्मसु च** शब्दादिषु क्रियासु च **सज्जन्ते** स्नेहस्वातन्त्र्यभ्रमवन्तो भवन्ति ये **तान् अकृत्स्नविदः** गुणकर्मविभागाज्ञान् अयोग्यजनान् स्वयं **कृत्स्नविद्** विद्वान् **न विचालयेत्** गुणकर्मसु सङ्गं त्याजयित्वा सन्मार्गे न प्रवर्तयेदिति ॥ २९ ॥

**गीता**

## मयि सर्वाणि कर्माणि संन्यस्याध्यात्मचेतसा ।
## निराशीर्निर्ममो भूत्वा युध्यस्व विगतज्वरः ॥ ३० ॥

***वि०वि०***— एवं विद्वदविद्वत्कर्मभेदमभिधाय गुणान्तरविधानपूर्वकं विदुषः कर्म विधत्ते **मयीति** । आत्मानं मामधिकृत्य यच्चेतस्तदध्यात्मचेतः । सर्वाधिके परमात्मनि मयि चेत इति वा, तेन । सर्वाणि कर्माणि भ्रान्त्या स्वस्मिन्नध्यारोपितानि, भगवानेव सर्वाणि कर्माणि करोति, तत्पूजेति च मय्येव संन्यस्य विसृज्य । निराशीः विष्णुभक्तिज्ञानतृप्तिव्यतिरिक्तकामरहितः । निर्ममः 'अहं करोमि', 'ममेदं कर्म' इति भावशून्यः । विगतज्वरः त्यक्तशोकश्च भूत्वा युध्यस्व । उक्तं च–

'नाहं कर्ता हरिः कर्ता तत्पूजा कर्म चाखिलम् ।
तथापि मत्कृता पूजा तत्प्रसादेन नान्यथा ॥
तद्भक्तिस्तत्फलं मह्यं तत्प्रसादः पुनः पुनः ।
कर्मन्यासो हरावेवं विष्णोस्तृप्तिकरः सदा ॥' इति ॥ ३० ॥

***सा०सं०***— एवमद्वित्कर्मणो विद्वत्कर्मणोऽनभिमानेनानुष्ठानरूपवैलक्षण्यमुक्त्वा, इदानीं तवापि ज्ञानित्वात् तथैवानुष्ठेयं कर्मेत्याह **मयीति** । **अध्यात्मचेतसा** आत्मानं परमात्मानं मामधिकृत्य स्थितमध्यात्मम्, अध्यात्मं च तत् चेतश्च तदध्यात्मचेतः, तेनेति वा । अधि अधिकम्, स चासावात्मा चाध्यात्मा । अध्यात्मनि चेतोऽध्यात्मचेतः, तेनेति वा । सर्वाधिकपरमात्मभूतमन्निष्ठमनसा । **निराशीः** विष्णुभक्तिज्ञानाद्यन्यकामरहितः । **निर्ममः** कर्मण्यहमेव स्वातन्त्र्येण करोमीति स्वतन्त्रकर्तृताऽभिमानहीनो **भूत्वा** । **सर्वाणि कर्माणि मयि संन्यस्य** भगवान् कृष्ण एव मयि स्थित्वा सर्वकर्माणि करोतीति ज्ञात्वा । तानि च श्रीकृष्णपूजारूपाणीति मयि समर्प्य **विगतज्वरः** त्यक्तशोकः सन् **युध्यस्वेति** । तदुक्तम्— 'नाहं कर्ता हरिः कर्ता तत्पूजा कर्म चाखिलम्' इत्यादि (ब्रह्मतर्के) ॥

***अ०प्र०***— तदेवं तत्त्वविदापि कर्म कर्तव्यम् । त्वं तु नाद्यापि तत्त्वंवित् अतः कर्म कुर्वित्याह **मयि सर्वाणीति** ।

सर्वाणि[1], कर्माणि[2], मयि[3], संन्यस्य[4], अध्यात्मचेतसा[5], निराशीः त्वं[6], अत एव निर्ममो भूत्वा[7], विगतज्वरश्च भूत्वा[8], युध्यस्वेत्यन्वयः ।

सर्वाणि = भगवानेव सर्वाणि कर्माणि = करोतीति बुद्ध्या तत्पूजेयमिति बुद्ध्या[1], कर्माणि = स्वस्मिन्नेव अविद्यमानतया प्रतीयमानानि कर्माणि[2], मयि = मय्येव[3], संन्यस्य = समर्प्य[4], अध्यात्मचेतसा = आत्मानमधिकृत्य यच्चेतः तदध्यात्मचेतः सर्वाधिके परमात्मनि चेत इति वा यद्वा अन्तर्याम्यधीनोऽहं करोमीति चेतसा दृष्ट्या भ्रान्त्या वा[5], निराशीः = निष्कामः तद्भक्तिर्ज्ञानतृप्तिव्यतिरिक्तकामरहितो वा एतादृशस्त्वं[6], अत एव निर्ममो भूत्वा = मत्पूजासाधनं मदर्थं इदं कर्म इत्येवं ममताशून्यश्च भूत्वा यद्वा अहं करोमि ममेदं कर्मेति भावनाशून्यः[7], विगतज्वरश्च भूत्वा त्यक्तशोकश्च भूत्वा[8] युध्यस्वेत्यर्थः ॥

**भाष्यम्**

**अतः सर्वाणि कर्माणि मय्येव संन्यस्य, भ्रान्त्या जीवेऽध्यारोपितानि मय्येव विसृज्य भगवानेव सर्वाणि कर्माणि करोतीति, मत्पूजेति च । आत्मानं मामधिकृत्य यच्चेतस्तदध्यात्मचेतः । संन्यासस्तु भगवान् करोतीति । निर्ममत्वं नाहं करोमीति ॥ ३० ॥**

***प०टी०***— चतुर्थं व्याचष्टे **भ्रान्त्येति** । आरोपितानां संन्यासः कीदृशः ? इत्यत आह **भगवानिति** । संन्यासश्च परमेश्वपरिचित्तत एव भवतीत्याह **आत्मानमिति** । 'संन्यास' 'निर्मम'-शब्दयोरर्थभेदमाह **संन्यासस्त्विति** ॥

***न०टी०***—चतुर्थं व्याचष्टे **अत इति** । यतः स्वतन्त्रकर्म विष्णोरेव, तं प्रत्येव गुणभूतानीन्द्रियाणीत्यादिविदेव न सक्तः स्यात्, अतस्तस्मिन्नेव सर्वाणि कर्माणि संन्यस्य युद्धयस्वेत्यर्थः । **अतः**शब्दोक्तहेतुविशेषज्ञानात् स्वकृतं कर्म भगवत्येव समर्प्येत्यपि प्रतीतिः स्यात् । तां व्यावर्तयति **भ्रान्तित इति** । ननु जीवापरोपितत्वे कर्मणां कथं विसर्गः ? स्वीयस्यैव विसर्जनीयत्वादित्याशङ्क्य, यत्प्रकृतान्येतानि तत्कृतत्वज्ञानमेवैतेषां विसर्ग इति भावेनाह **भगवानिति** । अनेनैव कर्मणां स्वरूपेणारोपितत्वं प्रत्युक्तम् । प्रकारान्तरेणापि भगवति कर्मविसर्गमाह **मत्पूजेति** । मत्कृतान्येवैतानि कर्माणीत्येतदेवारोपितं जीवे । न तु मयि भगवता क्रियन्त इत्येतत् । अतः तत्प्रसादेनात्मनि प्राप्तकर्मणां तत्पूजात्वेनार्पणं युक्तमिति भावः । परमात्मानमधिकृत्य यच्चेतः, तस्य सर्वोत्तमत्वसर्व-

नियामकत्वादिज्ञानम्, तेन तत्र सर्वकर्मसंन्यासो घटत इति भावेनाह **आत्मानमिति** । संन्यास-निर्ममत्वयोर्भेदमाह **संन्यासस्त्विति** ॥

*प्र०दी०*— 'मयि सर्वाणि' इत्यस्य सङ्गतिं दर्शयति— **अत इति** । यतो विद्वत्कर्मैवंविधं, त्वं च विद्वानस्यतः । ननु संन्यासो विसर्गः । स च स्वकीयस्य भवति । न च जीवस्य कर्माणि सन्तीत्युक्तम् । तत्कथं तेषां विसर्गो विधीयत इत्यत आह– **भ्रान्त्येति** । कर्मणां परमेश्वरे संन्यासो नाम तदात्मकत्वज्ञानमिति कश्चित् । तदसत् । अशब्दत्वादप्रामाणिकत्वात्प्रमाणविरुद्धत्वा-च्चेति भावेन स्वपक्षे तदभिप्रायमाह— **भगवानेवेति** । इति ज्ञात्वेति शेषः । प्रकारान्तरं चाह— **मदिति** । इति समर्पणं च कर्मणां मयि संन्यास इति शेषः । कर्माणि परमेश्वरात्मकत्वं प्रतिपद्य तत्प्राप्तये कल्प्यन्त इत्यध्यात्मचेतसेति व्याख्यानमशाब्दमिति भावेन व्याचष्टे— **आत्मानमिति** । अनेनाव्ययीभावगर्भः कर्मधारय इत्युक्तं भवति । अस्य 'निराशीः' इत्यनेनान्वयः । परमात्म-लाभेनेतराशारहित इत्यर्थः । ननु निर्ममत्वं न मम कर्माणि सन्तीति ज्ञानम् । तच्च ''मयि सर्वाणि कर्माणि संन्यस्य'' इत्यनेन गतार्थमित्यतो द्वयोर्भेदमाह— **संन्यासस्त्विति** । उभयत्रेतिशब्दात्परं ज्ञानमिति शेषः ॥

*भा०दी०*— **इत्युक्तमिति** । प्रकृतेरिति श्लोकभाष्ये ...हि प्रतिबिम्बस्य कृत्या-दिनोक्तमित्यर्थः ॥

*भा०र०*— **एवंविधं** गुणकर्मविभागज्ञानपूर्वमनुष्ठेयत्वाद् अविद्वत्कर्मविलक्षणमित्यर्थः । 'विसृज्य' इति भाषणादाह **विसर्ग इति** ।

**इत्युक्तं** ''न हि प्रतिबिम्बस्य क्रिया'' (गी.भा. ३.२७) इत्यत्रेति शेषः । **तेषां** कर्मणाम् । **भ्रान्त्या** सर्वकर्मस्वहमेव कर्तेति स्वातन्त्र्यभ्रमेण । **अध्यारोपितानि** स्वामीयत्वेनाभिमतानीति भाष्यपदार्थः । **प्रमाणेति** । कर्मणां जडत्वेन भगवत्तादात्म्यस्य ''नेति नेति'' इत्यादिप्रमाणविरुद्ध-त्वादित्यर्थः । **तदभिप्रायं** संन्यासशब्दाभिप्रायम् । भाष्यगतम् 'इति'पदमनूद्यानन्तरम् अध्याहार्यमाह **इति ज्ञात्वेति शेष इति** । तथा च 'संन्यस्य', 'विसृज्य' इत्येतद् भगवानेव मयि स्थित्वा सर्वाणि कर्माणि करोतीति ज्ञात्वेति तात्पर्यतो व्याख्यातं भवतीति भावः । 'युध्यस्व' इति मूलेनान्वयः । 'इति' इत्यनूद्य शेषमाह **इति समर्पणं चेति** ।

**प्रतिपद्य** प्राप्य । **तत्प्राप्तये** परमेश्वरप्राप्तये । **व्याचष्टे** अध्यात्मचेतःपदम् । **अनेन** ''आत्मानं माम्'' इति भाष्येण । **अव्ययीभावगर्भ इति** । आत्मनीत्यध्यात्ममिति विभक्त्यर्थेऽव्ययीभावः ।

'अनश्च' इति समासान्तष्टच् । "नस्तद्धिते" इति टिलोपः । "नाव्ययीभावादतोऽम् त्वपञ्चम्याः" इत्यम्भावः । ततोऽध्यात्मं च तत् चेतश्चेति कर्मधारय इत्यर्थः । न चाधिकरणशक्तिप्रधानस्याध्यात्मशब्दस्य कथं चेतश्शब्देन सामान्याधिकरण्यमिति वाच्यम् । शोभनं **प्रातः** प्रातस्तनकर्मास्य सुप्रातरित्यत्र बहुव्रीहौ प्रातश्शब्दस्य तत्कालकर्मलक्षकत्वेन सामानाधिकरण्यवद् अध्यात्मशब्दस्य अध्यात्मविषयकत्वलक्षकत्वेन सामानाधिकरण्यसम्भवात् । लक्ष्यार्थप्रदर्शनायैव भाष्ये 'आत्मानमधिकृत्य' इति विग्रहो दर्शितः । ल्यपो निर्वाहाय वर्तमानमित्यध्याहारे लक्ष्यार्थलाभ इति युक्त एव कर्मधारय इति । **अस्य** 'अध्यात्मचेतसा' इत्यस्य । एवमन्वयेन लब्धमर्थमाह **परमात्मेति** । परमात्मरूपमहाविषयलाभेनातिफल्गुविषयाभिलाषरहित इति "अध्यात्मचेतसा निराशीः" इत्यस्यार्थो बोद्धव्य इत्यर्थः ।

ममतावाची ममशब्दो विभक्तिप्रतिरूपकमव्ययमिति "पितुर्यत्पुत्रो मम कस्य" इति ऋग्भाष्यटीकायामुक्तम् । तथा चामरशेषे 'ममत्ववाक्' इत्यत्र "ममेत्यव्ययं ममत्वं वक्ति" इति हरिदीक्षितः । ततस्त्वप्रत्यये निर्गतं ममत्वं ममैवैतानि कर्माणीत्यभिमानो यस्मात् स निर्मम इति "निरादयः क्रान्ताद्यर्थे पञ्चम्या" इति समास इति तदर्थमाह **निर्ममत्वमिति** । **द्वयोः** संन्यासनिर्ममत्वयोः । **उभयत्रेति** । "भगवान् कर्माणि करोतीति ज्ञानम्" संन्यासः । निर्ममत्वं "नाहं करोमीति ज्ञानम्" इत्युभयत्र शेषः । तथा चार्थभेदान्न गतार्थताशङ्केति भावः ॥ ३० ॥

***गीताक्षरार्थस्तु***— यतो विद्वत्कर्मैवंविधं, त्वं च विद्वानसि, अतः **सर्वाणि** वर्णाश्रमोचितानि कर्माणि नित्यनैमित्तिकानि **मयि** वासुदेवे **संन्यस्य** भ्रान्तितो जीवेऽध्यारोपितानि भगवानेव तु सर्वाणि कर्माणि करोतीति भगवत्पूजात्मकानि चेति ज्ञात्वा विसृज्य समर्प्येति यावत् । **अध्यात्मचेतसा** परमात्मविषयकेण मनसा **निराशीः** परमात्मलाभेनेतराशारहितः **निर्ममः** नाहं कर्माणि करोमि मम कर्माणि न सन्तीति ज्ञानवांश्च **भूत्वा** इति विधेये कर्मणि गुणविधानम् । **विगतज्वरः** त्यक्तशोको **युध्यस्व** इति ॥ ३० ॥

**गीता**

## ये मे मतमिदं नित्यमनुतिष्ठन्ति मानवाः ।
## श्रद्धावन्तोऽनसूयन्तो मुच्यन्ते तेऽपि कर्मभिः ॥ ३१ ॥

***सा०सं०***— विद्वांस एवं कर्म कुर्वन्तीत्येतावता मयाऽप्युक्तविधया कार्यमिति कुत इत्यतः स्वोक्तस्य करणेऽकरणे च फलमाह **ये म** इत्यादि श्लोकद्वयेन । **ये मानवाः श्रद्धावन्तः**

नियामकत्वादिज्ञानम्, तेन तत्र सर्वकर्मसंन्यासो घटत इति भावेनाह **आत्मानमिति** । संन्यास-निर्ममत्वयोर्भेदमाह **संन्यासस्त्विति** ॥

*प्र०दी०*— 'मयि सर्वाणि' इत्यस्य सङ्गतिं दर्शयति— **अत इति** । यतो विद्वत्कर्मैवंविधं, त्वं च विद्वानस्यतः । ननु संन्यासो विसर्गः । स च स्वकीयस्य भवति । न च जीवस्य कर्माणि सन्तीत्युक्तम् । तत्कथं तेषां विसर्गो विधीयत इत्यत आह– **भ्रान्त्येति** । कर्मणां परमेश्वरे संन्यासो नाम तदात्मकत्वज्ञानमिति कश्चित् । तदसत् । अशब्दत्वादप्रामाणिकत्वात्प्रमाणविरुद्धत्वा-च्चेति भावेन स्वपक्षे तदभिप्रायमाह— **भगवानेवेति** । इति ज्ञात्वेति शेषः । प्रकारान्तरं चाह— **मदिति** । इति समर्पणं च कर्मणां मयि संन्यास इति शेषः । कर्माणि परमेश्वरात्मकत्वं प्रतिपद्य तत्प्राप्तये कल्प्यन्त इत्यध्यात्मचेतसेति व्याख्यानमशाब्दमिति भावेन व्याचष्टे— **आत्मानमिति** । अनेनाव्ययीभावगर्भः कर्मधारय इत्युक्तं भवति । अस्य 'निराशीः' इत्यनेनान्वयः । परमात्म-लाभेनेतराशारहित इत्यर्थः । ननु निर्ममत्वं न मम कर्माणि सन्तीति ज्ञानम् । तच्च "मयि सर्वाणि कर्माणि संन्यस्य" इत्यनेन गतार्थमित्यतो द्वयोर्भेदमाह— **संन्यासस्त्विति** । उभयत्रेतिशब्दात्परं ज्ञानमिति शेषः ॥

*भा०दी०*— **इत्युक्तमिति** । प्रकृतेरिति श्लोकभाष्ये ...हि प्रतिबिम्बस्य कृत्या-दिनोक्तमित्यर्थः ॥

*भा०र०*— **एवंविधं** गुणकर्मविभागज्ञानपूर्वमनुष्ठेयत्वाद् अविद्वत्कर्मविलक्षणमित्यर्थः । 'विसृज्य' इति भाषणादाह **विसर्ग इति** ।

**इत्युक्तं** "न हि प्रतिबिम्बस्य क्रिया" (गी.भा. ३.२७) इत्यत्रेति शेषः । **तेषां** कर्मणाम् । **भ्रान्त्या** सर्वकर्मस्वहमेव कर्तेति स्वातन्त्र्यभ्रमेण । **अध्यारोपितानि** स्वामीयत्वेनाभिमतानीति भाष्यपदार्थः । **प्रमाणेति** । कर्मणां जडत्वेन भगवत्तादात्म्यस्य "नेति नेति" इत्यादिप्रमाणविरुद्ध-त्वादित्यर्थः । **तदभिप्रायं** संन्यासशब्दाभिप्रायम् । भाष्यगतम् 'इति'पदमनूद्यानन्तरम् अध्याहार्यमाह **इति ज्ञात्वेति शेष इति** । तथा च 'संन्यस्य', 'विसृज्य' इत्येतद् भगवानेव मयि स्थित्वा सर्वाणि कर्माणि करोतीति ज्ञात्वेति तात्पर्यतो व्याख्यातं भवतीति भावः । 'युध्यस्व' इति मूलेनान्वयः । 'इति' इत्यनूद्य शेषमाह **इति समर्पणं चेति** ।

**प्रतिपद्य** प्राप्य । **तत्प्राप्तये** परमेश्वरप्राप्तये । **व्याचष्टे** अध्यात्मचेतःपदम् । **अनेन** "आत्मानं माम्" इति भाष्येण । **अव्ययीभावगर्भ इति** । आत्मनीत्यध्यात्ममिति विभक्त्यर्थेऽव्ययीभावः ।

'अनश्च' इति समासान्तष्टच् । "नस्तद्धिते" इति टिलोपः । "नाव्ययीभावादतोऽम् त्वपञ्चम्याः" इत्यम्भावः । ततोऽध्यात्मं च तत् चेतश्चेति कर्मधारय इत्यर्थः । न चाधिकरणशक्तिप्रधानस्याध्यात्मशब्दस्य कथं चेतश्शब्देन सामान्याधिकरण्यमिति वाच्यम् । शोभनं **प्रातः** प्रातस्तनकर्मास्य सुप्रातरित्यत्र बहुव्रीहौ प्रातश्शब्दस्य तत्कालकर्मलक्षकत्वेन सामानाधिकरण्यवद् अध्यात्मशब्दस्य अध्यात्मविषयकत्वलक्षकत्वेन सामानाधिकरण्यसम्भवात् । लक्ष्यार्थप्रदर्शनायैव भाष्ये 'आत्मानमधिकृत्य' इति विग्रहो दर्शितः । ल्यपो निर्वाहाय वर्तमानमित्यध्याहारे लक्ष्यार्थलाभ इति युक्त एव कर्मधारय इति । **अस्य** 'अध्यात्मचेतसा' इत्यस्य । एवमन्वयेन लब्धमर्थमाह **परमात्मेति** । परमात्मरूपमहाविषयलाभेनातिफल्गुविषयाभिलाषरहित इति "अध्यात्मचेतसा निराशीः" इत्यस्यार्थो बोद्धव्य इत्यर्थः ।

ममतावाची ममशब्दो विभक्तिप्रतिरूपकमव्ययमिति "पितुर्यत्पुत्रो मम कस्य" इति ऋग्भाष्यटीकायामुक्तम् । तथा चामरशेषे 'ममत्ववाक्' इत्यत्र "ममेत्यव्ययं ममत्वं वक्ति" इति हरिदीक्षितः । ततस्त्वप्रत्यये निर्गतं ममत्वं ममैवैतानि कर्माणीत्यभिमानो यस्मात् स निर्मम इति "निरादयः क्रान्ताद्यर्थे पञ्चम्या" इति समास इति तदर्थमाह **निर्ममत्वमिति** । **द्वयोः** संन्यासनिर्ममत्वयोः । **उभयत्रेति** । "भगवान् कर्माणि करोतीति ज्ञानम्" संन्यासः । निर्ममत्वं "नाहं करोमीति ज्ञानम्" इत्युभयत्र शेषः । तथा चार्थभेदान्न गतार्थताशङ्केति भावः ॥ ३० ॥

***गीताक्षरार्थस्तु***— यतो विद्वत्कर्मैवंविधं, त्वं च विद्वानसि, अतः **सर्वाणि** वर्णाश्रमोचितानि कर्माणि नित्यनैमित्तिकानि **मयि** वासुदेवे **संन्यस्य** भ्रान्तितो जीवेऽध्यारोपितानि भगवानेव तु सर्वाणि कर्माणि करोतीति भगवत्पूजात्मकानि चेति ज्ञात्वा विसृज्य समर्प्येति यावत् । **अध्यात्मचेतसा** परमात्मविषयकेण मनसा **निराशीः** परमात्मलाभेनेतराशारहितः **निर्ममः** नाहं कर्माणि करोमि मम कर्माणि न सन्तीति ज्ञानवांश्च **भूत्वा** इति विधेये कर्मणि गुणविधानम् । **विगतज्वरः** त्यक्तशोको **युध्यस्व** इति ॥ ३० ॥

**गीता**

# ये मे मतमिदं नित्यमनुतिष्ठन्ति मानवाः ।
# श्रद्धावन्तोऽनसूयन्तो मुच्यन्ते तेऽपि कर्मभिः ॥ ३१ ॥

***सा०सं०***— विद्वांस एवं कर्म कुर्वन्तीत्येतावता मयाऽप्युक्तविधया कार्यमिति कुत इत्यतः स्वोक्तस्य करणेऽकरणे च फलमाह **ये म** इत्यादि श्लोकद्वयेन । **ये मानवाः श्रद्धावन्तः**

मद्वाक्येष्वास्तिक्यबुद्धिमन्तः, **अनसूयन्तः** कष्टे कर्मणि प्रवर्तयतीति मयि दोषदृष्टिमकुर्वन्तः सन्तः, **इदं** पूर्वोक्तश्लोकोक्तरीत्या कर्मानुष्ठानरूपम् । **मे मतं नित्यमनुतिष्ठन्ति तेऽपि कर्मभिर्निवृत्त**-कर्मभिः । **मुच्यन्ते,** ज्ञानद्वारेति योज्यम् । किमुतापरोक्षज्ञानिनो मुच्यन्त इति कैमुत्यसूचनार्थोऽपिशब्दः । एतत्सूचनं च प्रासङ्गिकं ध्येयम् ॥

***अ०प्र०***— एवं कर्मानुष्ठाने गुणमाह **ये मे मतमिति** ।

श्रद्धावन्तः[१], अनुसूयन्तश्च[२], ये[३], मानवाः[४], इदं[५], मे[६], मतम्[७], नित्यं[८], अनुतिष्ठन्ति[९], तेऽपि[१०], कर्मभिः[११], मुच्यन्ते इत्यन्वयः ।

मद्वाक्ये श्रद्धावन्तः = अनेन मम प्रयोजनमिति आस्तिक्यबुद्धिः श्रद्धा तद्वन्तः[१], अनसूयन्तश्च = दुःखात्मके कर्मणि प्रवर्तयतीति दोषदृष्टिरसूया तत् शून्याः यद्वा सज्जनेषु दोषदृष्टिं अकुर्वन्तश्च[२], ये मानवाः[४], इदं मे मतं = मदीयं मम सम्मतम्[७], नित्यं[८], अनुतिष्ठन्ति = कुर्वन्ति[९], तेऽपि शनैः शनैः[१०], कर्मभिः = निवृत्तकर्मभिर्ज्ञानद्वारान्युच्यन्ते[११], अपरोक्षज्ञानिनः मुच्यन्ते इति किं वक्तव्यम् ॥ ३१ ॥

**गीता**

## ये त्वेतदभ्यसूयन्तो नानुतिष्ठन्ति मे मतम् ।
## सर्वज्ञानविमूढांस्तान्विद्धि नष्टानचेतसः ॥ ३२ ॥

***वि०वि०***— किं विद्वांस एव कुर्वतीत्येतावता मया कार्यमित्याशङ्क्य स्वोक्तकरणाकरणयोः फलमाह **ये मे इति द्वाभ्याम्** । 'तेऽपि कर्मभिर्मुच्यन्त' इत्यनेन कर्मणः पृथक्साधनत्वं नोच्यते । ये त्वेवं निवृत्तकर्माणस्तेऽपि ज्ञानद्वारा मुच्यन्ते । किमु अपरोक्षज्ञानिन इति । उक्तं च—

'निवृत्तादीनि कर्माणि ह्यपरोक्षेशदृष्टये ।
अपरोक्षेशदृष्टिस्तु मुक्तौ किञ्चिन्न मार्गते ॥
सर्वं तदन्तराधाय मुक्तये साधनं भवेत् ।
न किञ्चिदन्तराधाय निर्वाणायापरोक्षदृक् ॥' इति ॥

***सा०सं०***— **ये तु** एतत् **मे मतम् अभ्यसूयन्तः** कष्टं कर्मेति दोषदृष्टिमन्तः सन्तः । **नानुतिष्ठन्ति तान्** । **अचेतसः** विवेकशून्यान् । अत एव ज्ञातव्य सर्वज्ञानविषये **विमूढान्** विशेषेण मिथ्याज्ञानिनः । अत एव **नष्टान्** नरकाद्यनर्थभाजो **विद्धि** जानीहि ॥

*अ०प्र०*— विपक्षे दोषमाह **ये त्वेतदिति** ।

ये तु[१], एतत्[२], मे[३], मतम्[४], अभ्यसूयन्तः[५], नानुतिष्ठन्ति[६], तान्[७], अचेतसः[८], सर्वज्ञानविमूढान्[९], नष्टान्[१०], विद्धीत्यन्वयः ।

ये तु[१], एतत्[२], मे मतम् = ईश्वरार्थं कर्म कर्तव्यमित्यनुशासनम्[४], अभ्यसूयन्तः = एतत् क्लेशात्मकमिति बुद्ध्या द्विषन्तः कर्म[५], नानुतिष्ठन्ति = न कुर्वन्ति[६], तान् अचेतसः = अविवेकिनः विवेकशून्यान्[८], अत एव सर्वज्ञानविमूढान् = सर्वज्ञेयविषयकमिथ्याज्ञानयुक्तान्; यद्वा सर्वस्मिन् कर्मब्रह्मविषये यज्ज्ञानं तत्र विमूढान्[९], अत एव नष्टान् = नरकयोग्यान्[१०], विद्धि[११] ॥

**भाष्यम्**

**फलमाह— ये मे इति । ये त्वेवं निवृत्तकर्मिणस्तेऽपि मुच्यन्ते ज्ञानद्वारा । किमु अपरोक्षज्ञानिनः ? न तु साधनान्तरमुच्यते—**

> **"निवृत्तादीनि कर्माणि ह्यपरोक्षेशदृष्टये ।**
> **अपरोक्षेशदृष्टिस्तु मुक्तौ किञ्चिन्न मार्गते ॥**
> **सर्वं तदन्तराधाय मुक्तये साधनं भवेत् ।**
> **न किञ्चिदन्तराधाय निर्वाणायापरोक्षदृक् ॥"**

**—इति नारायणाष्टाक्षरकल्पे ।**

**अत एव समुच्चयनियमोऽपि निराकृतः ॥ ३१-३२ ॥**

*प०टी०*— संन्यासकर्मणः फलस्य ज्ञानद्वारा मोक्षाख्यस्य प्रसिद्धत्वेऽपि तद्दार्ढ्याय वाचा वक्तीत्यभिप्रायेणाह **फलमिति** । ज्ञानिनो मुच्यन्ते निवृत्तकर्मिणोऽपीत्यर्थान्तरभ्रान्तिं निराकर्तुं यथावद्व्याचष्टे **ये त्विति** । अर्थान्तरं किं न स्यात् ? इत्यत आह **न त्विति** । **आदि**पदात् स्वपदपार्थानीन्द्रादिकर्माणि निवृत्तादीनान्त्ये । तदेव विव्रियते **सर्वं तदिति** । तत्सर्वं निवृत्तकर्मादि भगवद्दृष्टिमन्तराधाय । ननु केवलकर्मणो मोक्षहेतुत्वाभावेऽपि ज्ञानसमुच्चितस्य किं न स्यात् ? इत्यत आह **अत एवेति** । निवृत्तादीनि इति प्रमाणात् एव ॥ ३१-३२ ॥

*न०टी०*—एवंविधैः कर्मभिः न स्वर्गादिरूपपुष्पमात्रावाप्तिः, नापि प्रत्यवायपरिहारमात्रम् । किन्तु ज्ञानद्वारा फलं भवति कैवल्यमिति भावेनोत्तरश्लोकमवतार्य व्याचष्टे **फलमिति** । ननु किं द्वारभूतेन ज्ञानेन ? साधनान्तरमेव कर्म किं न स्यात् ? अपिशब्दबलात् । तथा चान्ये वदन्ति—

'मोक्षार्थी न प्रवर्तेत तत्र काम्यनिषिद्धयोः ।
नित्यनैमित्तिके कुर्यात् प्रत्यवायजिहासया ।।' इति ।

इत्याशङ्क्यापिशब्दः कैमुत्यन्यायसूचको, न तु ज्ञानमिव कर्मापि मुक्तिसाधनमित्येतदर्थक-मित्येतत्सप्रमाणकमाह **ये त्वेवमिति** । **आदि**पदेन स्वस्वपदकामाधिकारिकध्रुवाद्यनुष्ठितं तपआदि कर्म । ननु मा भून्मुक्तौ साधनान्तरं कर्म ज्ञानात् । समुच्चयनियमस्तु तयोः स्यादेव । ज्ञानिनो-ऽप्यर्जुनस्य कर्मविधानादित्याशङ्क्य, एतदस्मादेव वचनात् सोऽपि निराकृत इत्याह **अत एवेति** । ज्ञानिनोऽपि कर्मविधिर्मुक्तावानन्दवृद्धय एव । ज्ञानं तूत्पन्नं विनाऽपि कर्म मुक्तिं ददात्येवेति न समुच्चयनियम इत्यर्थः ।।

*प्र०दी०*— अन्यथाप्रतीतिं निराकर्तुं तावदुत्तरश्लोकद्वयप्रतिपाद्यमाह— **फलमिति** । किं विद्वांस एवं कुर्वन्तीत्येतावता मया कार्यमित्याशङ्क्य स्वोक्तकरणाकरणयोः फलमाहेत्यर्थः । मुच्यन्ते तेऽपि कर्मभिरित्यपिशब्देन ज्ञानमिव निवृत्तं कर्मापि मोक्षसाधनमुच्यत इत्यन्यथाप्रतीतिनिरासाय व्याचष्टे— **ये त्विति** । कैमुत्यद्योतनार्थोऽपिशब्दो न समुच्चयार्थ इत्यर्थः । प्रासङ्गिकं चैतत् । समुच्चये यद्यपिशब्दः स च द्वेधा । ज्ञानमिव कर्मापि पृथक्साधनम् । ज्ञानकर्मसमुच्चय एवेति । अत्राद्यं पक्षं निराकरोति— **न त्विति** । निष्कामत्वादिनाऽनुष्ठितानि यज्ञादीनि निवृत्तानि । आदिपदेन नित्यनैमित्तिकानां ग्रहणम् । अपरोक्षा च सा ईशदृष्टिश्च । तादर्थ्ये चतुर्थी । मुक्तो मुक्तिसाधने । किञ्चित्सहकारि । कर्मापि मुक्तिसाधनमित्यत उक्तं— **सर्वमिति** । तत्सर्वं निवृत्ता-दिकम् । अन्तरा मध्ये । ज्ञानमाधाय मुक्तये । मुक्तेः । 'अहल्यायै जार' इत्यादि यथा, साक्षा-त्साधनत्वेन श्रुतमपि कर्म यथा व्यवहितं जातं किं ज्ञानमपि तथा नेत्युक्तं— **न किञ्चिदिति** । द्वितीयमपि प्रकारमतिदेशेन निराचष्टे— **अत एवेति** । ''अपरोक्षेशदृष्टिस्तु मुक्तौ किञ्चिन्न मार्गते'' इत्युक्तत्वादेवेत्यर्थः ।।

*भा०दी०*— कर्मणैवेत्यादावेव कर्मज्ञानद्वारा मोक्षोपायो न साक्षादिसमर्थनात्पुनरिह मुच्यत इत्यादि किमर्थमुच्यत इत्यत आह **प्रासङ्गिकमिति** । कर्मणैव हीत्यादिना विद्वांसोऽपि कर्म कुर्वन्तीत्युक्तौ तावता मया कुतः कार्यमिति शङ्कायां करणाकरणयोः फलोक्तेः प्रसङ्गप्राप्तत्वादिति भावः । कैमुत्यद्योतितं प्रमेयं प्रासङ्गिकमिति चार्थः । **इत्यादि यथेति** । अहल्याया इति विपरिणामो यथा न वा अरेपत्युः कामयेत्यादौ कामेनेति यथा मुक्त इत्यस्य मुक्तेरिति विपरिणाम इत्यर्थः ।।

*भा०र०*— **अन्यथाप्रतीतिं** 'कर्मभिर्मुच्यन्ते' इति कर्मणां मोक्षसाधनत्वमुच्यत इत्यन्यथा-प्रतीतिम् । **निराकर्तुं** ''न तु साधनान्तरमुच्यते'' इत्युपरितनभाष्येण । **श्लोकद्वयप्रतिपाद्यम्**

एवंविधैः कर्मभिर्न स्वर्गादिरूपपुष्पमात्रावाप्तिः, नापि प्रत्यवायपरिहारमात्रं फलम् । किन्तु ज्ञानद्वारा कैवल्यमेवेति प्राचीनटीकोक्तं श्लोकद्वयनिर्गलितार्थमित्यर्थः । इममर्थं सूचयन् भाष्यं परिष्करोति **किं विद्वांस इति** । तेऽपि निवृत्तकर्मानुतिष्ठन्तोऽपि मुच्यन्त इत्युक्तौ कर्मापि मोक्षसाधनमिति सिद्ध्यतीति भावेन 'अपिशब्दबलात्' इति प्राचीनटीकोक्तमेवाह **अपिशब्देनेति** । यद्बलाद् अन्यथा-प्रतीतिस्तमन्यथयति **कैमुत्येति** । निवृत्तकर्माणोऽपि मुच्यन्ते, किम्वपरोक्षज्ञानिन इति कैमुतिक-न्यायसूचनार्थः, न तु ज्ञानमिव कर्मापि मोक्षसाधनमिति कर्मणः साधनत्वसमुच्चयार्थ इत्यर्थः । ननु नात्र कैमुत्यं द्योतनीयम् । विदुषा निवृत्तं कर्म कर्तव्यं फलवत्त्वादित्येतावत्युक्तेऽपि कर्माऽवश्यक-मिति स्वमतसिद्धिरित्यत आह **प्रासङ्गिकमिति** । महाफलहेतुत्वात् कर्म कर्तव्यमिति भगवन्मतम् । तत्र ज्ञानस्य महाफलहेतुत्वं शास्त्रसिद्धमिति कथं कर्म तद्धेतुरिति शङ्कायां कर्मिणोऽपि मुच्यन्ते किमु ज्ञानिन इत्येतदप्युक्तशङ्कां परिहर्तुं प्रसङ्गागतत्वादुक्तमित्यर्थः ।

भाष्ये "तेऽपि मुच्यन्ते किम्वपरोक्षज्ञानिनः" इत्युक्त्यैव गीतागतापिशब्दार्थकैमुत्यसूचन-सम्भवात् 'ज्ञानद्वारा' इति न वक्तव्यम् । "कर्मणैव हि संसिद्धिम्" (३.२०) इत्यत्रैव कर्म ज्ञानद्वारैव मोक्षसाधनम् इत्यर्थस्य समर्थितत्वाच्च । अत एव "न तु समाधानान्तरमुच्यते, न तु निवृत्तादीनि" इत्याद्यपि न वक्तव्यमित्यत आह **प्रासङ्गिकमिति** । **एतत्** "ज्ञानद्वारा न तु साधनान्तरमुच्यते" इत्यादिभाष्यं प्रसङ्गप्राप्तस्य कर्मणो मोक्षसाधनत्वस्य समर्थनार्थमित्यर्थ इत्यप्याहुः । एतदपरोक्ष-ज्ञानस्य प्राधान्यमित्यर्थः इति **केचित्** । समुच्चय एवापिशब्दार्थः किं न स्याद् ? इत्याशङ्क्य तद्दूषणपरं भाष्यमवतारयति **समुच्चये यदीति** । 'तर्हि' इति शेषः । **स च** समुच्चयः । **द्वेधा** निरू-पणीयः । **पृथगिति** । स्वर्गे ज्योतिष्टोमाद् अग्निहोत्रमिव पृथगित्यर्थः ॥ **ज्ञानकर्मसमुच्चय इति** । स्वर्गे दर्शपौर्णमासौ समप्राधान्येन यथा साधनम्, तथा ज्ञानं कर्म च समप्राधान्येन मोक्षे साधन-मिति समुच्चय इत्यर्थः ।

ननु साधनान्तरं नोच्यत इत्येतत् कुतः ? कर्मणामपि मोक्षसाधनत्वस्य तत्र तत्र श्रवणा-दित्यतः कर्मणो मोक्षसाधनत्ववचनगतिं वर्णयत् प्रमाणमुच्यते भाष्ये **निवृत्तादीनीति** । तत्र निवृत्तकर्मशब्दस्य विवक्षितमर्थमाह **निष्कामत्वादिनेति** । **निष्कामत्वं** फलस्नेहराहित्यम् । आदि-शब्देनेश्वरप्रीत्युद्देश्यकत्वादि ग्राह्यम् । **यज्ञादीनि** यदकरणे प्रत्यवायाभावः, यानि चानिमित्ते-ऽप्यनुष्ठेयानि, तानीष्टिपश्वादीनि तत्तत्फलविशेषसाधनतया विहितान्यपि फलमनभिसन्धायेश्वरप्रीत्यु-द्देशेनानुष्ठितानि च तान्यत्र निवृत्तशब्देन विवक्षितानीत्यर्थः । 'यज्ञादि' इत्यादिशब्देनोक्तविध-

दानादिग्रहः । 'निवृत्तादीनि' इत्यत्र आदिशब्दार्थमाह **आदिपदेनेति** । **प्राचीनटीकायां** तु "आदिपदेन स्वस्वपदकामाधिकारिकदेवाद्यनुष्ठितं तपआदि कर्म गृह्यते" इत्युक्तम् । अपरोक्षत्वम् अव्यवधानादीशविशेषणमिति भ्रमं वारयंश्चतुर्थ्यर्थमाह **अपरोक्षेति** । "तादर्थ्ये चतुर्थी वक्तव्या" इति वचनात् "मुक्तये हरिभजनम्" इतिवच्चतुर्थीविभक्तिरित्यर्थः । **मुक्तिसाधने** मुक्तिनिष्पादने । 'किञ्चिद्' इत्यनुवादः । 'सहकारि' इति व्याख्यानम् । **निवृत्तादिकं** निष्कामत्वादिनाऽनुष्ठितं यज्ञादि नित्यनैमित्तिकं कर्म । **मध्ये** स्वमुक्त्योर्मध्ये । **ज्ञानं** भगवत्साक्षात्कारम् । **आधाय** द्वारीकृत्य । ज्ञानात् पूर्वमनुष्ठितं निवृत्तकर्म ज्ञानं जनयित्वा मोक्षप्रयोजकं भवतीति कर्मणो मोक्षहेतुत्वोक्तिगतिकथनपरं भाष्यवचनमिति भावः ।

ननु प्रापकशास्त्राभावात् कथं 'मुक्तये' इति चतुर्थी ? प्रत्युत साध्यसाधनभावनिबन्धना षष्ठ्येव युक्ता इत्यतः छान्दसत्वादियं चतुर्थी षष्ठ्यर्थे व्याख्यातव्येति सोदाहरणमाह **मुक्तये मुक्तेरिति** । यथा "अहल्यायै जार", "या खर्वेण पिबति तस्यै खर्वः प्रजायै गोपीथाय" इत्यादौ षष्ठ्यां वक्तव्यायामपि "षष्ठ्यर्थे चतुर्थी वक्तव्या" इति वचनाच्चतुर्थीविभक्तिरुच्यते तथाऽत्रापीत्यर्थः ।

**किञ्चित्** निवृत्तादिकम् । अन्तराधाय । **निर्वाणाय** मुक्तेः । "साधनं भवति" इत्यनुवर्तने ल्यबुपपत्तिः । **द्वितीयमपि** ज्ञानकर्मसमुच्चय एवेति द्वितीयमपि । स च द्वेधेति प्रकारद्वयेन व्याख्यानात् प्रकारमित्युक्तम् । पक्षमित्यर्थः । ज्ञानं कर्म विना न मोक्षं साधयितुं समर्थम् । कर्म तु न ज्ञानं विना तथेति ज्ञानकर्मणोरर्थसमुच्चयनियमः सोऽपि । न केवलं कर्म पृथक् साधनमिति पक्ष इत्यपिशब्द इति भाष्यार्थः ॥

***गीताक्षरार्थस्तु***— किं विद्वांस एवं कुर्वन्तीत्येतावता मया कार्यम् ? इत्याशङ्क्य स्वोक्तकरणाकरणयोः फलमुच्यते "ये मे मतम्" इति श्लोकद्वयेन । **ये** मानवाः **इदं** पूर्वोक्तं कर्म आवश्यकमिति **मे मतं** सिद्धान्तं **श्रद्धावन्तः** अनेन मम प्रयोजनमस्तीति बुद्धिमन्तः **अनसूयन्तः** कष्टे कर्मणि किमिति प्रवर्तयतीति दोषदृष्टिमकुर्वन्तः सन्तः **अनुतिष्ठन्ति** अनुवर्तन्ते **तेऽपि कर्मभिः** स्वयमनुष्ठितैर्वर्णाश्रमधर्मैर्ज्ञानद्वारा **मुच्यन्ते** । किम्वपरोक्षज्ञानिन इति कैमुत्यं द्योतयितुमपिशब्दः । ॥ ३१ ॥

**ये तु** पुनः **एतत् मम मतं अभ्यसूयन्तो** नानुवर्तन्ते **तान् अचेतसः** विवेकशून्यान् अत एव सर्वविषयमिथ्याज्ञानिनः **नष्टान्** स्वात्मनाशभाजः विजानीहीति ॥ ३२ ॥

**गीता**

## सदृशं चेष्टते स्वस्याः प्रकृतेर्ज्ञानवानपि ।
## प्रकृतिं यान्ति भूतानि निग्रहः किं करिष्यति ॥ ३३ ॥

***वि०वि०***— यदि श्रद्धयाऽसूयां विना त्वन्मतानुष्ठाने मोक्षः, अन्यथा तु अज्ञानात् मिथ्याज्ञानाच्च नाशस्तर्हि ते मतं किमिति नानुतिष्ठति लोक इत्यत आह **सदृशमिति** । यद्वा, 'मन्दान् न विचालयेत्' इत्ययोग्यानां तत्वबोधनं न कार्यमित्युक्तं तत्र हेतुमाह **सदृशमिति** । ज्ञानवानपि स्वस्याः प्रकृतेः रागादिस्वभावस्य सदृशमनुगुणमेव चेष्टते किमुताज्ञः । यतो भूतानि प्राणिनः प्रकृतिं स्वभावं यान्ति अनुसरन्ति । तथा चेन्द्रियाणां निग्रहो ज्ञानिभिः क्रियमाणो बहुबोधो वा किं करिष्यति ॥

***वा०ल०***— 'सदृशं चेष्टते यस्याः' इत्यत्र ज्ञानवानपि यस्याः प्रकृतेः सदृशं प्रकृतिगुणानुसारेणेत्यर्थः । चेष्टते कर्माणि कुरुते । जातावेकवचनम् । तानि भूतानि तामेव प्रकृतिं यान्ति । सात्त्विकाः सत्कर्मकरणात् पुनः पुनः सात्त्विका एव भवन्ति । एवमन्यत्रापि । निग्रहः जनापवादः किं करिष्यति ॥

***सा०सं०***— यदि त्वन्मतानुष्ठाने मोक्षोऽन्यथा तु नाशः, तर्हि ते मतं किमिति लोको नानुतिष्ठतीत्यत आह **सदृशमिति** । प्रकृतिशब्दोऽत्र पूर्वसंस्कारार्थः सन् तत्कार्यरागद्वेषोपलक्षकः । **ज्ञानवानपि** मन्मतकरणाकरणयोरिष्टानिष्टज्ञानवानपि । **स्वस्याः प्रकृतेः** स्वकीयपूर्वसंस्कारकार्यरागद्वेषयोः **सदृशमनुगुणमेव** । **चेष्टते** कर्म करोति । किमुताज्ञ इत्यपेरर्थः । ननु मनोनिग्रहे स्वभावानुगतचेष्टोपरतिः स्यादित्यत आह **प्रकृतिमिति** । **प्रकृतिं** स्वभावम् । **यान्ति** प्राणिनः । तत्र मनो**निग्रहः किं करिष्यति** न किमपीत्यर्थः । तदुक्तम्—

'बुध्वाऽप्यसौ यतो नित्यं स्वभावानुगचेष्टितः ।
स्वभावं यान्ति भूतानि निग्रहः किं करिष्यति ॥' (प्रकाशसंहितायाम्) इति ।

यद्वा, 'मन्द्मन् न विचालयेत्' इत्ययोग्यषु तत्त्वबोधो न कार्य इत्युक्तम्, तत्कुत इत्यत आह **सदृशमिति** । प्रागिवार्थः । तत्त्वोपदेशेनोत्पन्नज्ञानवानपि स्वभावानुगुणचेष्टावानेव भवति, न तूपदेशजन्यज्ञानानुरूपचेष्टावानपि भवति । अतस्तत्र तत्त्वोपदेशो व्यर्थ इति भावः ॥

***अ०प्र०***— ननु तर्हि महाफलत्वादिन्द्रियाणि निगृह्य निष्कामाः सन्तः सर्वेऽपि स्वधर्ममेव किं नानुतिष्ठन्ति, तत्राह **सदृशमिति** ।

ज्ञानवानपि[१], स्वस्याः प्रकृतेः[२], सदृशं[३], चेष्टते[४], यस्माद्भूतानि[५], प्रकृतिम्[६], यान्ति[७], तस्मात् निग्रहः[८], किं करिष्यति[९] इत्यन्वयः ।

ज्ञानवानपि[१], स्वस्याः स्वकीयायाः प्रकृतेः प्राचीनसंस्काराधीनप्रकृतिः स्वकीयपूर्वसंस्कार-रागादिस्वभावस्य[२], सदृशं = अनुरूपं गुणदोषरूपम्[३], चेष्टते = कर्म करोति, अज्ञः चेष्टत इति किं वक्तव्यम्[४], यस्मात् भूतानि = सर्वेऽपि प्राणिनः यद्वा किमुत अज्ञानतो भूतानि[५], प्रकृतिं = पूर्वसंस्कारादि स्वभावम्[६], यान्ति = अनुवर्तन्ते[७], तस्मात् = एवं च सति, निग्रहः = इन्द्रियस्य निग्रहः, त्वमेवं कुर्विति ज्ञापनपूर्वकनिग्रहो वा, संस्कारस्य बलवत्वात् प्रकृतेर्बलिष्ठत्वाच्च[८], किं करिष्यति[९] ॥ तदुक्तम् —

बुद्ध्याप्यसौ यतो नित्यं स्वभावानुगचेष्टितः ।
स्वभावं यान्ति भूतानि निग्रहः किं करिष्यति ॥ ३३ ॥

**भाष्यम्**

**एवं चेत् किमिति ते मतं नानुतिष्ठन्ति लोका इत्यत आह— सदृशमिति । प्रकृतिः पूर्वसंस्कारः ॥ ३३ ॥**

***प०टी०*** — ननु यदि त्वन्मतानुष्ठाने मोक्षो वैपरीत्ये नाशः, तर्हि त्वमन्तं कुतः सर्वेऽपि नानुतिष्ठन्ति ? अतः प्रशंसामात्रमेतदित्याशङ्क्य, उत्तरत्वेन श्लोकमवतार्य व्याचष्टे एवमिति ॥

***न०टी०*** — ननूक्तलक्षणं कर्म, ज्ञानद्वारा मुक्तिसाधकत्वादवश्यानुष्ठेयमन्यथाऽनर्थोऽपि चेत्, किमिति सर्वो जनस्ते मतं नानुतिष्ठन्ति ? अतः स्वमतप्रशंसामात्रमेतदिति भावेनाशङ्क्य, तत्परिहारत्वेनोत्तरं श्लोकमवतार्य व्याचष्टे **एवं चेदिति** । पूर्वसंस्कारादेव प्रवर्तते । न तु फललोभादनर्थभयाद्वा निगृहीत इति भावः ॥

***प्र०दी०*** — सदृशमिति श्लोकस्य सङ्गतिर्न प्रतीयते । अतस्तामाह— **एवं चेदिति** । यदि त्वन्मतानुष्ठाने मोक्षोऽन्यथा नाश इत्यर्थः । मूलप्रकृतेरेकत्वात्कथं 'स्वस्याः' इति प्रातिस्विकत्वमुच्यत इत्यत आह— **प्रकृतिरिति** । तत्कार्यौ रागद्वेषावुपलक्ष्येते ॥

***भा०दी०*** — ये म इत्यादि श्लोकद्वयार्थमनुवदति **यदीति** । रागद्वेषयोरेव स्वरूपसतोः सर्वचेष्टां हेतुत्वाद्युत्तरश्लोकानुसाराच्चाह **तत्कार्यौ रागद्वेषाविति** । एवं तर्हीति निग्रहस्य कार्याक्षमत्व इत्यर्थः ॥

*भा०र०*— "एवं चेत्" इति भाष्यम् अनन्तरातीतश्लोकद्वयार्थानुवादरूपमिति दर्शयति **यदीति** । ननु "प्रकृतिं स्वात्मसंश्लिष्टाम्", "अजे द्वे प्रकृती दुष्टे नृषु प्रातिस्विकं स्थिते" इति भागवततात्पर्यवचने प्रकृतेः प्रातिस्विकत्वावगमात् कथं स्वकीयत्वाक्षेप इत्यत उक्तम् **मूलेति** । दुष्टप्रकृतेः प्रातिस्विकत्वेऽपि मूलप्रकृतेरेकत्वाद् युज्यते शङ्का इति । पूर्वसंस्कारस्यापि साक्षाच्चेष्टकत्वासम्भवात् "रागद्वेषौ व्यवस्थितौ । तयोर्न वशमागच्छेत्" (३.३४) इति वक्ष्यमाणानुरोधाच्चाह **तत्कार्याविति** । संस्कारशब्दितप्रकृतिकार्याविति लक्षणाबीजसम्बन्धोक्तिः ।

*गीताक्षरार्थस्तु*— यदि त्वन्मतानुष्ठाने मोक्षोऽन्यथा नाशः, तर्हि किमिति ते मतं नानुतिष्ठति लोक इत्यत उच्यते **सदृशमिति** । **प्रकृतेः** पूर्वसंस्कारस्य तत्कार्यरागद्वेषयोरिति यावत् । **सदृशम्** अनुगुणं यथा तथा **चेष्टते** कर्म करोति । **ज्ञानवानपि** भगवन्मतकरणाकरणयोरिष्टानिष्टज्ञानवानपि, किमु अज्ञ इत्यपिशब्दः । मनोनिग्रहे स्वभावानुगचेष्टोपरतिः स्यादित्यत उक्तम् **प्रकृतिं** स्वभावमिति । **भूतानि** प्राणिनः । तथा च मनआदीन्द्रियनिग्रहः **किं करिष्यति** ? न स्वभावानुगुणव्यापारोपरतिं प्रति कारणमिति ॥ ३३ ॥

**गीता**

## इन्द्रियस्येन्द्रियस्यार्थे रागद्वेषौ व्यवस्थितौ ।
## तयोर्न वशमागच्छेत्तौ ह्यस्य परिपन्थिनौ ॥ ३४ ॥

*वि०वि०*— ननु स्वभावस्य बलवत्वे 'मयि सर्वाणि' इति विधानं फलकथनं च व्यर्थमित्यत आह **इन्द्रियस्येति** । अर्थे स्वस्वविषये परिपन्थिनौ शत्रू । रागद्वेषग्रहणं लोभमोहादेरप्युपलक्षणम् । निग्रहात् सद्यः प्रयोजनाभावेऽपि अतिप्रयत्नेन फलस्य भावित्वाच्छक्तितो निग्रहः कार्य इत्याशयः । तदुक्तम्—

'संस्कारो बलवानेष ब्रह्माद्या अपि तद्वशाः ।
तथापि सोऽन्यथाकर्तुं शक्यतेऽतिप्रयत्नतः ॥'

इति । एतच्च योग्यजनविषयम् । अयोग्यानां दुःस्वभावस्य कदाऽपि विपर्ययाभावादिति बोद्धव्यम् ॥

*वा०ल०*— इन्द्रियार्थेषु अगम्यगमनादिदुर्विषयेषु सन्ध्यावन्दनादिसद्विषयेषु च, रागद्वेषौ दुर्विषये रागः सद्विषये द्वेषश्च, व्यवस्थितौ अविद्याकामकर्मवशात् नियतौ, हरिविषयकविद्यया मूलीभूताविद्यां निरस्य तयोर्न वशमागच्छेत् इति योजना ॥

***सा०सं०***— यदि सर्वाणि भूतानि स्वभावानुगुणमेव चेष्टन्ते निग्रहोऽकिञ्चित्करः, तर्हि 'मयि सर्वाणि' इत्यत्र इतिकर्तव्यतापूर्वं कर्मविधानं 'ये मे मतम्' इत्यादिना तस्य फलोक्तिश्च व्यर्थेत्यत आह **इन्द्रियस्येति** । जात्येकवचनम् । इन्द्रियाणां चक्षुरादीनामर्थेषु रूपादिषु, इन्द्रियाणां **रागद्वेषौ** अनुकूले रागः प्रतिकूले द्वेषश्चेत्येवं रागद्वेषौ । **व्यवस्थितौ** अवश्यम्भाविनौ । लोभमोहमद-मत्सराणामुपलक्षणम् । प्राधान्याद्द्वयोरेवोक्तिः । तदनुरूपा च प्राणिनां चेष्टेति निग्रहोऽकिञ्चित्करो यद्यपि, तथाऽपि **तयोः** रागद्वेषयोः रागादिषड्वर्ग**वशम्** । **न गच्छेत्** । न प्राप्नुयात् । कुतः ? **हि** यस्मात् । **अस्य** श्रेयोऽर्थिनः । **तौ परिपन्थिनौ** श्रेयोविघातकौ पापहेतू च, अत इत्यर्थः । निग्रहात् सद्यःफलाभावेऽप्यतिप्रयत्नवतो भवत्येव फलमिति भावः । उक्तं हि 'संस्कारो बलवानेव' इत्यादि । एतच्च योग्यजनविषयं ध्येयम् ॥

***अ०प्र०***— ननु एवं प्रकृत्यधीनैव चेत्पुरुषस्य प्रकृतिरस्तर्हि विधिनिषेधवैय्यर्थ्यं प्राप्तमित्याशङ्क्याह **इन्द्रियस्येति** ।

अत्र श्लोकक्रमेणैवान्वयः स्पष्टः । इन्द्रियस्येन्द्रियस्येति विविक्षया प्रत्येकं सर्वेषामिन्द्रियाणामित्युक्तम् । तथा च सर्वेषां इन्द्रियाणां अर्थे स्वविषये[1], रागद्वेषौ = अनुकूले रागः प्रतिकूले द्वेषः, तत्संस्कारानुसारेण रागद्वेषौ[2], व्यवस्थितौ = अवश्यंभाविनौ[3], तयोः वशं न आगच्छेत् = ततश्च तदनुरूपप्रकृतिरिति भूतानां प्रकृतिः तथापि तयोः रागद्वेषयोः वशवर्ती न भवेत्[4-7], हि = यस्मात् इति शास्त्रेण नियम्यते हि यस्मात्[8], तौ = रागद्वेषौ[9], अस्य = मुमुक्षोः[10], परिपन्थिनौ = विरोधिनौ किन्तु प्रतिपक्षौ[11], इति भावः । अल्पनिग्रहात्सद्यः प्रयोजनाभावेऽपि अतिप्रयत्नेन कालान्तरे फलस्यापि भावित्वात् शक्तितो निग्रहः कार्य इत्याशयः । तदुक्तम्—

"संस्कारो बलवानेव ब्रह्माद्या अपि तद्वशाः ।
तथापि साऽन्यथाकर्तुं शक्यतेति प्रयत्नतः ॥" इति योग्यजनविषयम् ॥

**भाष्यम्**

**तथाऽपि शक्तितो निग्रहः कार्यः । निग्रहात् सद्यः प्रयोजनाभावेऽपि भवत्येवातिप्रयत्नत इत्याशयवान् आह— इन्द्रियस्येति । तथा ह्युक्तम्–**

**"संस्कारो बलवानेव ब्रह्माद्या अपि तद्वशाः ।**
**तथाऽपि सोऽन्यथाकर्तुं शक्यतेऽतिप्रयत्नतः ॥"**

**—इति ॥ ३४ ॥**

***प०टी०***— ननु यदि पूर्वसंस्कारादेव प्रवृत्तिर्न फलेच्छया, स च संस्कारश्चेद्बलवान्, तर्हि व्यर्थः पुरुषप्रयत्न इत्याशङ्क्य, उत्तरश्लोकमवतारयति **तथाऽपीति**। श्लोकद्वयार्थे प्रमाणमाह **संस्कार इति**॥

***न०टी०***—ननु यदि निग्रहस्य पूर्वसंस्कारानुसारिप्रवृत्यन्यथाकरणसामर्थ्याभावः। तर्हि स्वोक्तकरणाकरणयोरर्थानर्थादिकथनादिवैयर्थ्यं स्यादित्याशङ्क्य, तत्परिहारायोत्तरं श्लोकमवतार्य व्याचष्टे **तथाऽपीति**। श्लोकद्वयोक्तार्थे प्रमाणमाह **तथा हीति**। अतो येऽतिप्रयत्नेन निगृहीतेन्द्रियास्त एव मे मतमनुतिष्ठन्तीत्यर्थः॥

***प्र०दी०***— 'इन्द्रियस्य' इत्यस्य सङ्गतिमाह— **तथाऽपीति**। एवं तर्हि 'मयि सर्वाणि' इति विधानं, फलकथनं च व्यर्थमित्याशङ्क्येति भावः। यद्यपि "प्रकृतिं यान्ति भूतानि" इति निग्रहोऽकिञ्चित्करस्तथापि व्याहतमेतदुच्यत इत्यत उक्तं— **निग्रहादिति**। निग्रहादित्याद्याशयवान् तथापीत्याहेति योजना। अत्राऽऽगमसम्मतिमाह— **तथा हीति**॥

***भा०दी०***— **व्याहतमेतदिति**। तथापि निग्रहस्य अकिञ्चित्करत्वेऽपि शक्तितो निग्रहः कार्य इत्येतद्व्याहतं निग्रहस्याकिञ्चित्करत्वे तदकरणस्यैव युक्तत्वादिति भावः। **निग्रहादित्याद्याशयवानिति**। एतेन निग्रहस्य कालान्तरे किञ्चित्करत्वोक्तेर्न व्याहतिरिति भावः॥

***भा०र०***— **एवं तर्हि** "प्रकृतिं यान्ति भूतानि" (३.३३) इति प्राणिमात्रस्य पूर्वसंस्कारशब्दितस्वभावानुगचेष्टकत्वे।

**विधानं** संन्याससयुद्धादिस्वविहितकर्मणः। **फलकथनं** "ये मे मतम्" (३.३१) इत्यादिना। स्वयमस्वातन्त्र्यादिति भावः। 'तथाऽपि' इति भाष्यं संयोजयति **यद्यपीति**। **व्याहतमेतदिति**। शक्तितो निग्रहः कार्य इत्येतत् "निग्रहः किं करिष्यति" (३.३३) इत्यनेन विप्रतिषिद्धमित्यर्थः। अकिञ्चित्करत्वेनाकर्तव्यतया सिद्धस्य कर्तव्यत्वाभिधानं कथं न व्याहतमिति भावः। **अन्ये तु** "किं करिष्यति" इत्यनेन "तयोर्न वशमागच्छेत्" इत्येतद् व्याहतमित्यर्थ इत्यप्याहुः। व्याहतिपरिहाराय भाष्यं योजयति **निग्रहादित्याशयवानिति**। निग्रहात् स्वसंस्कारानुगचेष्टस्य जन्तोः सद्यः प्रयोजनादर्शनेऽपि भवत्येवातिप्रयत्नान्निग्रहाभ्यासस्य संस्कारशक्तिशैथिल्यापादकत्वेन कालान्तरे प्रयोजनमित्याशयवान् तथाऽपि निग्रहः कर्तव्य इत्याहेति योजने व्याहतिः परिहृता भवतीति भावः। **अत्र** मनोनिग्रहस्यातिप्रयत्नापादितस्य प्रकृतिशक्तिविघटकत्वमस्तीत्यत्र। 'सदृशम्' इत्यादिश्लोकद्वयार्थे प्रमाणमाह **तथाहीति तु प्राचीनटीका**। यद्यपि प्राणिनः प्रकृतिशब्दितसंस्कार-

परतन्त्राः, तथाऽपि 'संस्कारः' इति तत्कार्यभूतौ रागद्वेषौ लक्षणया ग्राह्यौ । **ब्रह्माद्याः** अतद्गुण-संविज्ञानबहुव्रीहिणा रुद्राद्या देवा **यद्यपि तद्वशाः** कामक्रोधनियामकदैत्यदूषिताः कदाचित्, **तथाऽपि स** संस्कारः **अतिप्रयत्नतः** भगवत्प्रसादसम्पादनानुकूलान्महाप्रयत्नाद् **अन्यथाकर्तुं** परिभावयितुं शक्य इति प्रमाणार्थः । एतच्च योग्यजनविषयम् । अयोग्यानां दुस्स्वभावस्य कदाऽपि विपर्यासाभावादिति **विवृतिकृतः** ॥ ३४ ॥

***गीताक्षरार्थस्तु***— यद्यपि प्रकृतिं यान्ति भूतानीति निग्रहोऽकिञ्चित्करः, तथाऽपि शक्तितो निग्रहः कार्य इत्युच्यते **इन्द्रियस्येति** । **इन्द्रियस्येन्द्रियस्य** सर्वेन्द्रियाणाम् **अर्थे** शब्दादिरूपे विषये इष्टे **रागः** अनिष्टे **द्वेष** इत्येवं प्रतीन्द्रियार्थं रागद्वेषाववश्यम्भाविनौ । प्राधान्याद् द्वयोरुक्तिः । द्वेषशब्दो मदमात्सर्याद्युपलक्षणमिति वक्ष्यति । षड्वर्ग**वशं** तदधीनतां **न गच्छेत्** । कुतः ? यतः **तौ** श्रेयोऽर्थिनः पुंसः **परिपन्थिनौ** श्रेयोविघ्नकर्तारौ अत इति ॥ ३४ ॥

**गीता**

## श्रेयान् स्वधर्मो विगुणः परधर्मात्स्वनुष्ठितात् ।
## स्वधर्मे निधनं श्रेयः परधर्मो भयावहः ॥ ३५ ॥

***वि०वि०***— यद्यपि कर्म कर्तव्यम् । तथाप्युग्रमवर्जनीयरागद्वेषं युद्धाख्यं कर्म किमर्थं कार्यमित्यत आह **श्रेयानिति** । विगुणः अंगहीनोऽपि । स्वधर्मः स्वनुष्ठितात् सर्वाङ्गसाकल्येन कृतात् । परधर्मादपि श्रेयान् अधिकतरः । कुतः । स्वधर्मे युद्धादौ प्रवर्तमानस्य निधनमपि श्रेष्ठम् । परस्य धर्मस्तु भयावहः निषिद्धत्वादनर्थप्रापक इति ॥

***वा०ल०***— 'श्रेयान् स्वधर्मो' इत्यत्र स्वनुष्ठितात् परधर्मात् शान्त्यादिब्राह्मणधर्मात् विगुणः किञ्चिदङ्गविकलः स्वधर्मः युद्धादिक्षत्रियधर्मः । एवमन्यत्रापि योज्यम् ॥

***सा०सं०***— 'ज्यायसी चेत्' इत्यत्रार्जुनेन कर्मैव न कार्यम् । तत्रापि नरकाद्यनर्थहेतु-रागद्वेषोपेततया घोरं युद्धाख्यं कर्म तु नैव कार्यमिति कृताक्षेपद्वयमध्ये प्राथमिको 'लोकेऽस्मिन्' इत्यादिनोत्तरितः । द्वितीयस्तु, अधुना 'युद्ध्यस्व विगतज्वरः', 'तयोर्न वशमागच्छेत्' इत्याद्युक्त्या स्मारितः सन् परिह्रियते **श्रेयानिति** । **स्वधर्मः** स्ववर्णाश्रमोचितो धर्मः । **विगुणः** अङ्गहीनो-ऽपि । **स्वनुष्ठितात्** सर्वाङ्गसाकल्येन कृतात् । **परधर्मात्** अन्यवर्णाश्रमोचितधर्मादपि । श्रेया-नधिकतरः । कुतः, **स्वधर्मे** युद्धादौ । **निधन**मपि **श्रेयः** श्रेष्ठतरम् । **परधर्मः** वर्णाश्रमान्तर-धर्मस्तु । **भयावहः** निषिद्धत्वादनर्थप्रापको यतोऽत इत्यर्थः ॥

***अ०प्र०***— तदेवं स्वाभाविकी यश्वादिसदृशीं वृत्तिं त्यक्त्वा धर्मे प्रवर्तितव्यमित्युक्तं तर्हि स्वधर्मस्य युद्धादेर्दुःखरूपस्य यथावद्वक्तुमशक्यत्वात् परधर्मस्य च अहिंसादेः सुकरत्वात् धर्मत्वा-विशेषाच्च तत्र प्रवर्तितुमिच्छन्तं प्रत्याह **श्रेयानिति** ।

विगुणोऽपि[१], स्वधर्मः[२], सु अनुष्ठितात्[३], परधर्मात्[४], श्रेयान्[५], शेषं क्रमेण ।

विगुणोऽपि = किञ्चिदङ्गहीनोऽपि[१], स्वधर्मः[२], स्वनुष्ठितात् = सकलाङ्गपूर्णात् अङ्गसाकल्येन कृताद्वा[३], परधर्मादपि[४], श्रेयान् = अधिकः प्रशस्ततरः[५], कुतः स्वधर्मयुद्धादौ प्रवृत्तमानस्य[६], निधनमपि[७], श्रेयः = विहितत्वेन सफलत्वेन स्वर्गादिप्रापकत्वात् श्रेष्ठम्[८], परधर्मस्तु स्ववर्णा-श्रमाविहितधर्मस्तु[९], भयावहः = निषिद्धत्वेन अनर्थनरकप्रापकत्वात् भयङ्कर इत्यर्थः । तस्मात् स्वधर्मयुद्धं मा त्याक्षीरित्यर्थः ॥ ३५ ॥

**भाष्यम्**

## तथाऽप्युग्रं युद्धकर्मेत्यत आह— श्रेयानिति ॥ ३५ ॥

***प०टी०***— ननु ममाधिकारिकत्वात् युद्धस्य ज्ञानसाधनत्वेऽपि, न तत्र मां नियोजय । तत्र रागाङ्गद्वेषसम्भवात्, अतोऽज्ञानसम्भवात् । अतो ज्ञानसाधनसमावेशत्व एव नियोजयेत्या-शङ्क्य, श्लोकमवतारयति **तथाऽपीति** । ननु पापप्रेरकं भगवन्तं देवांश्च जानन्नर्जुनः कथं तं पृच्छति ? इत्यत आह **बहव इति** । क्रोधादयः इत्यनेन पूर्वश्लोकोक्तं 'द्वेष'पदमन्योपलक्षकमित्युक्तं भवति ॥

***न०टी०***—ननु मा भूद्बहूनां भगवन्मताननुष्ठानान्यथानुपपत्त्या 'ये मे' इत्यादिवाक्ययोः तन्मतप्रशंसामात्रपरत्वम् । किन्तु तन्मतानुष्ठानाननुष्ठानादिना भाविफलसङ्कीर्तनात्मकत्वमेव । तथाऽप्युग्रत्वाद्युद्धकर्मणः स्यातामेव रागद्वेषौ तत्कर्तुः । द्वेषशब्दस्तु लोभादीनामप्युपलक्षकः । अतो 'युद्धयस्व' इत्युक्त्वा 'तयोर्न वशमागच्छेत्' इति कथमुच्यते ? इति भावेनाशङ्क्य, तत्परिहारायोत्तरं श्लोकमवतारयति **तथाऽपीति** ॥

***प्र०दी०***— श्रेयानित्यस्य सङ्गतिमाह— **तथापीति** । 'ज्यायसी चेत्' इत्यत्र द्वावाक्षेपा-वर्जुनेन कृतौ । तत्राद्यो 'लोकेऽस्मिन्' इत्यादिना परिहृतः । इदानीं 'युध्यस्व विगतज्वरः', 'तयोर्न वशमागच्छेत्' इत्युक्त्या स्मारितं द्वितीयमाक्षेपमाशङ्क्य परिहरतीत्यर्थः । यद्यपि कर्म कर्तव्यम् । तथाप्युग्रमवर्जनीयरागद्वेषम् । न कुर्यामिति शेषः ॥

*भा०दी०*— **तथापीति** । तात्कालिककिञ्चित्करत्वाभावेऽपीत्यर्थः । **द्वावाक्षेपाविति** । यत्याश्रमधर्मेषु शमदमादिषु नियोजनं विना काम्यकर्मसु किमर्थं नियोजसीत्येकः । तत्रापि नरकहेतुकामक्रोधादिभिरूपे ते घोरे युद्धाख्यकर्मणि नियोजनमयुक्तमिति द्वितीय इति द्वावित्युक्तम् । उग्रमित्यनुवादः । **अवर्जनीयेत्यादि** व्याख्या ॥

*भा०र०*— **द्वाविति** । "कर्मणि किमिति नियोजयसि" इत्येकः । "घोरे" इति द्वितीय इति द्वावित्यर्थः । **स्मारितमिति** । "युध्यस्व" (३.३०) इति युद्धाख्यं कर्म विदधासि । "तयोर्न वशमागच्छेत्" (३.३४) इति निषेधसि च । विप्रतिषिद्धमेतत् । युद्धे कामक्रोधयोरवर्जनीयत्वात् । ततोऽवर्जनीयकामक्रोधत्वेन घोरे युद्धाख्ये कर्मणि मन्नियोजनमयुक्तमिति स्मारितमित्यर्थः । 'तथाऽपि' इति भाष्यं संयोजयति **यद्यपीति** । 'उग्रम्' इत्यनूद्यार्थमाह **अवर्जनीयेति** । 'युद्धकर्म' इत्यनन्तरं शेषमाह **न कुर्यामिति** ॥ ३५ ॥

*गीताक्षरार्थस्तु*— यद्यपि कर्म कर्तव्यम्, तथाऽप्यवर्जनीयरागद्वेषतया घोरं युद्धाख्यं कर्म न कुर्याम् इत्यर्जुनाक्षेपः परिह्रियते **श्रेयानिति** । स्ववर्णाश्रमोचितो धर्मः **स्वधर्मः विगुणः** अल्पाङ्ग-हीनोऽपि **स्वनुष्ठितात्** सर्वाङ्गसाकल्येन कृतात् **परधर्मात्** चतुर्थाश्रमं स्वीकृत्य तद्धर्मनिष्ठो भवेत्येव नियोक्तव्योऽहम् इत्यभिमताद् अन्यवर्णाश्रमोचितधर्मात् **श्रेयान्** प्रशस्ततरः । कुतः ? **स्वधर्मे** युद्धादौ प्रवर्तमानस्य **निधनं** मरणमपि **श्रेयस्करम्** । **परधर्मः** वर्णान्तराश्रमान्तरधर्मस्तु **भयावहः** निषिद्धत्वादनर्थप्रापको यत इति ॥ ३५ ॥

### गीतातात्पर्यनिर्णयः

**"नाहं कर्ता हरिः कर्ता तत्पूजा कर्म चाखिलम् ।**
**तथाऽपि मत्कृता पूजा तत्प्रसादेन नान्यथा ॥**

*प्रका०*— "मयि सर्वाणी"त्येतद्विवरणपूर्वकं "प्रकृतेः क्रियमाणानी"त्यादेरर्थमाह **नाहं कर्तेत्यादिना** ।

*न्या०दी०*— अज्ञवदाग्रहेण ज्ञानिनामपि कर्म कार्यं चेत् विद्वदविद्वत्कर्मणोरविशेषप्रसङ्ग इत्यतः 'सक्ताः' इति सक्त्यसक्तिपूर्वकत्वविशेष उक्तः प्रपञ्च्यते "प्रकृतेरि"ति ॥ विद्वदविद्वत्कर्म-विशेषमुक्त्वा विद्वत्कर्मकरणं विधीयते 'मयि' इति । तत्र कर्माणि संन्यस्य युध्यस्वेति व्याहतमित्यतः तत्स्मृत्यैव व्याचष्टे **नाहमिति** ॥ "नाहं कर्ता" इति निर्ममत्वम् । "हरिः कर्ता तत्पूजा कर्म चाखिलम्" इति हरौ कर्मन्यासः । हरिरेव कर्ता चेत् कथं तत्पूजेत्यादिनिरूपणं युक्तमित्यत आह

**तथापीति** ।। यद्यपि हरिरेव कर्ता, तथापि तत्प्रेरणेनैव ममापि कर्तृत्वात् तत्पूजेत्यादिनिरूपणं युक्तमिति भावः ।

*भा०दी०*— **सत्त्यसक्तिपूर्वकत्वविशेष उक्त इति** । सक्ता इति श्लोक इति ज्ञेयम् । संन्यस्येत्यस्य त्यक्त्वेत्यर्थं मत्वाऽऽह **व्याहतमिति** ।। **निर्ममत्वमिति** । नाहं कर्तेत्यनेन निर्ममत्वं व्याख्यातमित्यर्थः । मत्कृता पूजेत्यनन्तरं शेषमाह **तत्पूजेत्यादिनिरूपणं युक्तमिति** ।

**गीतातात्पर्यनिर्णयः**

**तद्भक्तिस्तत्फलं मह्यं तत्प्रसादः पुनः पुनः ।**
**कर्मन्यासो हरावेवं विष्णोस्तृप्तिकरः सदा ।।**

*न्या०दी०*— **तद्भक्तिरिति** । निराशीस्त्वम् । तत्फलं पूजाफलम् । कर्मन्यासो निर्ममत्वादियुक्तः विष्णोस्तृप्तिकर इत्यनेन "ये मे मतम्" इत्यादेस्तात्पर्यमुक्तं भवति ।

*भा०दी०*— **तद्भक्तिरित्यनेन** निराशीस्त्वं व्याख्यातमित्यर्थः । कर्मन्यास इत्यस्य विशेषणमाह निर्ममत्वनिराशीस्त्वयुक्त इति ।।

**गीतातात्पर्यनिर्णयः**

**यस्मात्स्वतन्त्रकर्तृत्वं विष्णोरेव न चान्यगम् ।**
**तदधीनं स्वतन्त्रत्वं स्वावरापेक्षयैव तु ।।**

*न्या०दी०*— एवं निर्ममत्वादियुक्तेन हरौ कर्मन्यासेन कुतो विष्णोस्तृप्तिरित्यत आह **यस्मादिति** ।। यस्मादेवमर्थस्थितिः तस्मात्तथा भावनं विष्णोस्तृप्तिकरं भवत्येव । यथार्थज्ञानप्रियत्वाद्विष्णोरिति भावः ।

**गीतातात्पर्यनिर्णयः**

**जीवस्य विकृतिर्नाम कर्तृत्वं जडसंश्रयम् ।**
**पुमान् दोग्धा च गौर्दोग्ध्री स्तनो दोग्धेतिवत् क्रमात् ।।"**

*न्या०दी०*— स्वतन्त्रकर्तृत्वमेव कर्तृत्वम्, अतः कथं जीवादेः कर्तृतोच्यत इत्यतः परतन्त्रादिकर्तरि कर्तृशब्दप्रयोगं दर्शयति **पुमानिति** ।।

**गीतातात्पर्यनिर्णयः**

**इति ब्रह्मतर्कवचनादीश्वरजीवप्रकृत्यादीनां कर्तृत्वमकर्तृत्वं च विभागेन ज्ञातव्यं सर्वत्र ।**

*प्रका०*— **अकर्तृत्वं च विभागेन ज्ञातव्यम्** । **सर्वत्र** इत्यनेन इदमुच्यते ।

*न्या०दी०*— ननु क्वचिदीश्वर एव कर्ता न जीवादिरित्युच्यते । क्वचिज्जीव एव कर्ता नेश्वरादिरिति । क्वचिच्च प्रकृतिरेव कर्त्री नेश्वरादिरिति । अतः कथमीश्वर एव कर्ता, नाहम्, अहं तु तदधीनकर्तेति कर्मन्यासाद्युपपद्यत इत्यत आह **इतीति** ।। यत्रेश्वरादीनां कर्तृत्वमुच्यते तत्रेश्वरस्य स्वतन्त्रकर्तृत्वमित्यादि विभागेनैव ज्ञातव्यम् । यत्रेश्वरादीनामकर्तृत्वमुच्यते तत्रेश्वरस्य परतन्त्र-कर्तृत्वमस्वकीयं नास्तीत्यादि विभागेनैव ज्ञातव्यम्, न तु यत्र कर्तृत्वमुच्यते तत्र सर्वेषां स्वतन्त्र-कर्तृत्वमेव । यत्राकर्तृत्वमुच्यते तत्र सर्वेषां सर्वथा कर्तृत्वराहित्वं ज्ञातव्यम् । स्वतन्त्रकर्तृत्वं विष्णो-रेवेत्यादिवचनादेवेत्यर्थः ।

*भा०दी०*— **इत्यादि विभागेनेति** । यत्र जीवस्यैव कर्तृत्वमुच्यते तत्र पराधीनकर्तृत्वं, यत्र प्रकृतेरेव कर्तृत्वमुच्यते "कार्यते ह्यवशः कर्म सर्वैः प्रकृतिजैर्गुणैरि"त्यादौ तत्र विकाररूपकर्तृत्वमिति ध्येयमित्यर्थः । **नास्तीत्यादि विभागेनेति** । यत्र जीवस्याकर्तृत्वमुच्यते कर्तृत्वं न कर्माणि इत्यादौ तत्र स्वकीयं स्वतन्त्रकर्तृत्वं नास्ति, यत्र तु प्रकृतेः कर्तृत्वं नेत्युच्यते तत्र ज्ञानेच्छापूर्वककर्तृत्वं नास्तीत्येवंरूपेण ज्ञेयमित्यर्थः ।

**गीतातात्पर्यनिर्णयः**

**"क्वचित्स्वभावः प्रकृतिः क्वचिच्च त्रिगुणात्मिका ।**
**क्वचित्प्रकृष्टकर्तृत्वात् भगवान् प्रकृतिर्हरिः ।।"**

**—इति शब्दनिर्णये ।**

*प्रका०*— यत्कृतकं तदीश्वरकर्तृत्ववचनं जीवकर्तृत्वप्रकृतिकर्तृत्वराहित्याभिप्रायम् । क्वचि-ज्जीवस्य कर्तृत्ववचनं तदीश्वरकर्तृत्वसाहित्याभिप्रायमित्यादि ।

*न्या०दी०*— 'प्रकृतेः' इत्यादि व्याकरिष्यन् तत्रस्थप्रकृतिशब्दादीन् स्वभावादिपरतया व्याख्यातुं तदर्थत्वे प्रमाणं तावदाह **क्वचिदिति** ।। स्वभावो जीवस्य । मयीत्यादिवाक्यव्याख्यान-

रूपाया 'यस्मात्स्वतन्त्रकर्तृत्वम्' इत्यादिस्मृतेः 'प्रकृतेः' इत्यादिवाक्यव्याख्यानोपयोगित्वात् व्यत्यासेन व्याख्यानम् ।

*भा०दी०*— 'प्रकृतेरि'त्यादिव्याख्यानपरं 'स्वभावत' इत्यादिस्मृत्यनन्तरं 'यस्मादिति' स्मृतिः पठनीया । व्याख्येयगीतावाक्यानुसारादित्यत आह **मयीत्यादीत्यादिना** ॥ **उपयोगित्वादिति** । यस्मादिति स्मृत्युक्तत्रिविधकर्तृत्वस्य प्रकृतेरिति वाक्येऽभिमतत्वादिति भावः ।

**गीतातात्पर्यनिर्णयः**

**"स्वभावतस्त्रिधा जीवा उत्तमाधममध्यमाः ।**
**उत्तमास्तत्र देवाद्या मर्त्यमध्यास्तु मध्यमाः ॥**

*न्या०दी०*— प्रकृतेरित्यादावीश्वरादित्रयस्य कर्तृत्वाभिधानात् पुनर्जीवस्याकर्तृत्वाभिधानात् कर्तृत्वादिविभागस्य स्मृतावुक्तत्वात् प्रकृतेरित्याद्यन्यथाप्रतीतिनिरासाय स्मृत्यैव व्याचष्टे **स्वभावत इति** ॥ अत्र 'स्वभावतः' इत्यादि साक्षाद्व्याख्यानाय पीठिकारचनम् ।

*भा०दी०*— व्याख्यानोपयोगं व्यनक्ति **प्रकृतेरित्यादाविति** । अहंकारेत्युत्तरार्धेनेति योज्यम् । इत्यादीत्यस्य पीठिकारचनमित्यन्वयः । "कार्यते ह्यवशः कर्मे"त्यादिना साक्षाद्व्याख्यानायेत्यर्थः ।

**गीतातात्पर्यनिर्णयः**

**अधमा असुराद्याश्च नैषामस्त्यन्यथा भवः ।**
**शरीरमात्रान्यथात्वे स्वजातिं पुनरेष्यति ॥**
**उत्तमा मुक्तियोग्यास्तु सृतियोग्यास्तु मध्यमाः ।**
**अपरेऽन्धतमोयोग्याः प्राप्तिः साधनपूर्तितः ॥**

*न्या०दी०*— देवादीनामन्यथाभावसद्भावात् कथं देवत्वादिः स्वभाव इत्यत आह **नैषामिति** ॥ जयादीनामन्यथाभावदर्शनात् कथं नास्तीत्यत आह **शरीरेति** ॥ देवत्वादेः स्वाभाविकत्वेऽपि देवा एवोत्तमा इत्यादि कुत इत्यत आह **उत्तमा इति** ॥ फलस्योत्तमत्वादिना देवादीनामुत्तमत्वादिसिद्धिरिति भावः । देवादीनां मुक्त्यादियोग्यत्वे किमर्थं ते संसारे वर्तन्त इत्यत आह **प्राप्तिरिति** ॥ स्वयोग्यफलस्येति शेषः ।

*भा०दी०*— **जयादीनां** जयविजयादीनां हिरण्याक्षरावणादित्वादिरूपेणान्यथाभावदर्शनादित्यर्थः ॥

**गीतातात्पर्यनिर्णयः**

**पूर्त्यभावेन सर्वेषामनादिः संसृतिः स्मृता ।**
**नैव पूर्तिश्च सर्वेषां नित्यकालहरीच्छया ॥**

*न्या०दी०*— **पूर्त्यभावेन** साधनस्येति शेषः । साधनपूर्तितः प्राप्तिश्चेत् नित्यं संसारानुवृत्तिर्न स्यात् । अनादित्वात् संसारस्य इतः पूर्वमेव साधनपूर्तिसम्भवेन सर्वचेतनानां परिसमाप्तेरित्यत आह **नैवेति** ॥ नित्यकाले संसारोऽनुवर्ततामिति हरीच्छया अनादिमान् यद्यपीति शेषः ।

**गीतातात्पर्यनिर्णयः**

**अतोऽनुवर्तते नित्यं संसारोऽयमनादिमान् ।**
**अतोऽधमानां जीवानां मिथ्याज्ञानादयोऽखिलाः ।**
**स्वाभाविकगुणा ज्ञेया मध्यमर्त्येषु मिश्रिताः ।**
**तत्त्वज्ञानं विष्णुभक्तिरित्याद्या देवतादिषु ॥**

*न्या०दी०*— स्वभावतस्त्रिधा जीवाश्चेत् किं तत इत्यत आह **अत इति** ॥ देवत्वादेः स्वाभाविकत्वात् तदनुसारिगुणाश्च स्वाभाविका इत्यर्थः । **मिश्रिताः** स्वाभाविका इत्यादि योज्यम् ।

*भा०दी०*— **मिश्रिता इति** । स्वाभाविकतत्त्वज्ञानमिथ्याज्ञानोभयरूपा गुणा इत्यर्थः ॥ **इत्यादि योज्यमिति** । तत्त्वज्ञानं स्वाभाविकं, भक्तिः स्वाभाविकीत्येवं योज्यमित्यर्थः ॥

**गीतातात्पर्यनिर्णयः**

**कार्यते ह्यवशः कर्म सर्वैस्तैः प्राकृतैर्गुणैः ।**
**स्वाभाविकगुणानेतान् हेतुं कृत्वैव विष्णुना ।**
**कर्मसु क्रियमाणेषु कर्ताऽहमिति मूढधीः ।**

*न्या०दी०*— ततश्च किमित्यत आह **कार्यत इति** ॥ **अवशः** विष्णुवशः । **प्राकृतैः** स्वाभाविकैः । किञ्चात इत्यत आह **स्वाभाविकेति** ॥ अनेन अविद्वत्कर्माभिधायकस्य 'प्रकृतेः' इत्यस्यार्थ उक्तो भवति ॥ **स्वाभाविकगुणान् हेतुं कृत्वेति** । यस्योत्तमगुणास्तानपेक्ष्य सत्कर्म कारयतीत्यादि । **विष्णुना** विष्णोरिच्छादिगुणैः । अनेन प्रकृतेर्गुणैरित्यस्यार्थद्वयमुक्तं भवति । उपादानतया सत्त्वादयः प्रकृतिगुणाश्चात्राभिमताः । कर्ता स्वातन्त्र्येणेति शेषः ।

*भा०दी०*— **ततश्चेति** । मिथ्याज्ञानादिगुणानां स्वाभाविकत्वतश्चेत्यर्थः ॥ **किञ्चात इति** । अतश्च किमित्यर्थः ॥ **इत्यादीति** । यस्य मध्यमगुणास्तानपेक्ष्य सदसत्कर्मणी कारयति यस्याधमा गुणास्तानपेक्ष्य असत्कर्म कारयतीत्यर्थः । **विष्णुनेत्यनुवादः विष्णोरित्यादिव्याख्या** ॥

**गीतातात्पर्यनिर्णयः**

**मन्यते तत्त्वविद्विष्णोर्गुणा इच्छादयस्तु ये ।**
**स्वाभाविकेषु जीवस्य कामाद्येषु सदैव तु ।**
**प्रेरकत्वेन वर्तन्ते स्वातन्त्र्यं मम न क्वचित् ।**
**इति मत्वा न सक्तः स्यात् प्रीतोऽस्य भवति प्रभुः ॥**

*न्या०दी०*— एवमविद्वान् करोति चेत् कथं विद्वानित्यत आह **तत्त्वेति** ॥ अनेन तत्त्व-विदित्यस्यार्थ उक्तो भवति ।

**गीतातात्पर्यनिर्णयः**

**स्वभावगुणसम्मूढा ज्ञानादिगुणवत्तरम् ।**
**स्वातन्त्र्येणैव कर्तारं चात्मानं प्रतिजानते ।**
**तान् गुणान् कर्म तच्चैव विष्ण्वधीनं न ते विदुः ॥**

*न्या०दी०*— अविदुषामहङ्कारे को हेतुरित्यत आह **स्वभावेति** ॥ स्वभावगुणानामुत्तमत्वे तेष्वपरप्रेरिता एवैत इति सम्मूढाः । मिश्रादित्वे तैः सम्मूढाः । ज्ञानादिगुणसद्भावे ज्ञानादिगुणवत्तरं स्वातन्त्र्येण प्रतिजानत इति योज्यम् । अभावे स एव दोषः । तान् गुणान् विष्ण्वधीनान्न विदुः सद्भावे । अभावे न सन्तीति न विदुरिति ज्ञेयम् ।

*भा०दी०*— तैः **सम्मूढा इति** । मिश्रगुणैः सम्मूढाः ॥ **अभाव इति** । ज्ञानादेरिति योज्यम् । विपरिणामेनार्थमाह **विष्ण्वधीनानिति** ॥

**गीतातात्पर्यनिर्णयः**

**तेष्वयोग्येषु तत्त्वज्ञस्तत्त्वं नातिप्रकाशयेत् ।**
**वदेद्विवादरूपेण नोपदेशात्मना क्वचित् ।**
**सभ्यरूपेण वा ब्रूयात् पृष्टेऽव्यक्तिकृदेव वा ।**

*प्रका०*— पृष्टेऽव्यक्तिकृदित्यस्यातिव्यतिकृत् यथाऽस्योक्तं न भवेत् तथा ब्रूयादित्यन्वयः ॥

*न्या०दी०*— ते ज्ञानिना बोध्यन्तामित्यत आह **तेष्विति** ॥ अयोग्याश्चेन्न प्रकाशयेत्, अन्यथा परीक्ष्य प्रकाशयेदिति भावः ॥ **अव्यक्तिकृदिति** ॥ स्ववचनं यथा तत्त्वव्यक्तिकृन्न भवेत् तथेत्यर्थः । अनेन प्रकृतेरिति व्याख्यातं भवति ।

**गीतातात्पर्यनिर्णयः**

**बुद्ध्वाऽप्यसौ यतो नित्यं स्वभावानुगचेष्टितः ॥**
**स्वभावं यान्ति भूतानि निग्रहः किं करिष्यति ॥"**

**—इत्यादि प्रकाशसंहितायाम् ॥ ३५ ॥**

*न्या०दी०*— मन्दानित्यस्यार्थोऽयोग्येष्विति । अयोग्येषु तत्त्वं कुतो न वक्तव्यमित्यत आह **बुद्ध्वेति** ॥ मनोनिग्रहे स्वभावानुगतचेष्टोपरतिः स्यादित्यत आह **स्वभावमिति** ॥ एतेन सद्दशमिति व्याख्यातं भवति ॥

*भा०दी०*— **स्वभावेति** । स्वभावानुगतिचेष्टिताया उपरतिरित्यर्थः ॥

**गीता**

## अर्जुन उवाच—

**अथ केन प्रयुक्तोऽयं पापं चरति पूरुषः ।**
**अनिच्छन्नपि वार्ष्णेय बलादिव नियोजितः ॥ ३६ ॥**

*वि०वि०*— बहवः प्रवर्तका रागादय उक्ताः । तेषु बलवन्तं प्रति महान्तं यत्नं करिष्यामीति भावेन प्रसङ्गाद्रागादिषु बलवन्तं ज्ञातुमर्जुन उवाच **अथ केनेति** । हे वृष्णिकुलोत्पन्न ! अयं पुरुषः पापं कर्तुमनिच्छन्नमपि बलान्नियोजित इव पापं चरति । स केन प्रयुक्तः प्रेरितश्चरति इति प्रश्नः । अथेत्यर्थान्तरम् । यद्वा, परमेश्वराद्देवेभ्यश्चानन्तरमित्यर्थः । प्रकृतेः क्रियमाणानीत्यादिना तेषामपि प्रेरकत्वस्योक्तत्वात् । ईश्वरादिव्यतिरिक्तोऽशुभप्रेरकः शत्रुरूपो मया जेतव्यो बलवान्क इत्याशयः ॥

*सा०सं०*— 'तयोर्न वशमागच्छेत्' इत्यत्रातिप्रयत्नवतः पापहेत्वरिषड्वर्गजयः शक्य इत्युक्तम् । तेषु को बलवान् ? तं महाप्रयत्नेन जेष्यामीति भावेन पृच्छति **अथेति** । मयि संन्यस्य

कर्माणि, इत्यादावुक्तसेतिकर्तव्यताककर्मकर्तव्यतारूपप्रकृतप्रमेये पापहेतुप्रश्नोऽनुपयुक्तः । तथाऽपि 'तयोर्न वशम्' इत्यर्धे कामाद्यरिषड्वर्गस्य पापहेतुत्वोक्त्या स्मारितस्तेषु प्रबलपापहेतुप्रश्नोऽयं प्रासङ्गिक इति भावेन गीताकृता प्रकृतादर्थादर्थान्तरद्योतकोऽथशब्दः प्रयुक्तः ।

यद्वा 'प्रकृतेः क्रियमाणानि' इत्यत्रेश्वरस्य सर्वप्रेरकत्वोक्त्या तत्प्रेरकत्वस्य पार्थस्य देवत्वेन, देवानां प्रेरकत्वस्य च ज्ञाततया तत्र प्रश्नायोगात्, 'इन्द्रियस्य' इत्यत्र रागशब्दितकामाद्यरिषड्वर्गस्य प्रवर्तकत्वोक्त्या परमेश्वरात् देवजाताच्च, अथानन्तरं कामादिषट्सु बलवत्प्रश्नोऽयमिति द्योतनादानन्तर्यवाची एवायमथशब्दः । तथा चायमर्थः— **अथ** परमेश्वराद्देवेभ्यश्चानन्तरम् । **अयं पुरुषः** पापाचारम् **अनिच्छन्नपि बलान्नियोजित इव पापं चरति** । स कामादिषु **केन** बलवता **प्रयुक्तः** प्रेरितश्चरति । हे **वार्ष्णेय** वृष्णिकुलोद्भव इति ॥

***अ०प्र०***— तयोर्न वशमागच्छेदित्युक्तम् । तदेतदशक्यं मन्वानः अर्जुन उवाच **अथ केनेति** ।

अथ[१], हे वार्ष्णेय[२], अयं[३], पुरुषः[३], बलात्[४], नियोजित इव[५], अनिच्छन्नपि[६], पापं[७], चरति[८], सः केन प्रयुक्तः पापं चरति तं वदेत्यन्वयः ।

अथ[१], हे वार्ष्णेय = वृष्णिवंशे अवतीर्णो वार्ष्णेयः सम्बुद्धौ हे वार्ष्णेय[२], अयं = पुरुषः[३], बलात् = बलात्कारेण[४], नियोजित इव = प्रेरित इव[५], पापं कर्तुमनिच्छन्नपि[६], पापं[७], चरति = करोति[८], सः केन प्रयुक्तः पापं चरति तं वद । यद्वा ईश्वराद्देवेभ्यश्चानन्तरं केन प्रयुक्त इति प्रकृतेः क्रियमाणानीत्यत्र तेषामपि प्रेरकत्वस्योक्तत्वात् ईश्वरादिभिन्ना अशुभप्रेरका हि शत्रवो मया जेतव्याः तत्र बलवान् शत्रुः कः इत्याशयः ॥ ३६ ॥

**भाष्यम्**

**बहवः कर्मकारणाः सन्ति । क्रोधादयः कामश्च । तत्र को बलवानिति पृच्छति— अथेति । अथेत्यर्थान्तरम् । "तयोर्न वशमागच्छेत्" इति प्रश्नप्रापकम् ॥ ३६ ॥**

***प०टी०***— 'अथ'शब्दस्य विवक्षितार्थमाह **अथेति** । प्रकरणान्तरस्य का सङ्गतिः ? इत्यत आह **तयोरिति** ॥

***न०टी०***— शुभाशुभयोः प्रवर्तकमीश्वरं ब्रह्मादींश्च जानात्येवार्जुनः । केवलाशुभप्रवर्तकानपि बहून् जानाति भगवतोक्तान् क्रोधादीन् कामं च । अतस्तत्र बलवन्तमेव पृच्छतीत्याह **बहव इति** । प्रकरणविच्छेदज्ञापकः 'अथ'शब्द इत्याह **अथेति** । प्रकरणान्तरसङ्गतिबीजमाह **तयोरिति** ॥

***प्र०दी०***— 'अथ केन' इत्यर्जुनप्रश्नोऽनुपपन्नः । 'तौ ह्यस्य परिपन्थिनौ' इति रागद्वेषयोः परिपन्थित्वस्योक्तत्वात् । न हि पापप्रयोजकत्वादन्यद्रागादेः पुरुषपरिपन्थित्वमित्यतः प्रश्नाभिप्रायमाह— **बहव इति** । कारणशब्दः करोतेर्ण्यन्तात्करणे ल्युडन्तः । स च त्रिलिङ्गः । 'अयमनुमानः' इति भाष्ये प्रयोगात् । अथवा 'ण्यासश्रन्थो युच्' (३-३-१०७) इति करणे युच् । अयं च स्त्रीलिङ्गः । बहव इत्यपि स्त्रीलिङ्ग एव । ''वोतो गुणवचनात्'' (४-१-४४) इति विकल्पविधानात् । कर्मेति पापं विवक्षितम् । द्वयोरेवोक्तत्वात्कथं बहव इत्यनुवाद इत्यत आह— **क्रोधादय इति** । पूर्वं भगवता द्वेषशब्देन मदमत्सरादयोऽप्युपलक्षिताः । अरिषड्वर्गप्रसिद्धेः तदेतद्विदित्वैवमनुवदतीति भावः । रागशब्देन कामः, द्वेषशब्देन क्रोधादयश्च त्वयोक्ता इत्यर्थः । अस्य प्रश्नस्य प्रकृते क उपयोग इत्यत आह— **अथेति** । नास्य प्रकृतेन हेतुहेतुमद्भावादिलक्षणा सङ्गतिरिति स्वयमेव सूचितमित्यर्थः । 'अथ' इति शब्देनार्थान्तरमिदमिति सूच्यते । तर्ह्यसङ्गतं न प्रष्टव्यमित्यतः सङ्गत्यन्तराभावेऽपि प्रासङ्गिकी सङ्गतिरस्तीत्याशयवान् प्रसङ्गं दर्शयति— **तयोरिति** । तत्रापि यो बलवांस्तं प्रति महान्तं यत्नं करिष्यामीति भावेन प्रश्नो युक्त एवेति भावः ॥

***भा०दी०***— ननु परिपन्थिनोरुक्त्वा कथं पापप्रयोजकत्वलाभ इत्यत आह **न हीति** । **ण्यन्तात्करणे ल्युडिति** । कृधातोः स्वार्थे णिङ्प्रत्यये 'अचो ञ्णिणि'ति वृद्धौ कारीति रूपे सति ततः 'करणाधिकरणयोरि'ति करोत्यनेनेति करणे ल्युट्प्रत्यये आद्येनानुबन्धयोर्लोपे 'युवोरनाकावि'-त्यनादेशे 'वृषाभ्यामि'ति णत्वे 'णेरनिटी'ति णिलोपे कारण इति रूपमिति भावः । ल्युडन्तस्य कथं पुल्लिङ्गतेत्यत आह **स चेति** । नपुंसकपूर्वत्र प्रकृतं करणाधिकरणयोरित्यत्र नानुवर्तत इति इत्यादावुक्तेरिति भावः । प्रयोगं तदज्ञापकमाह **अयमिति** । यद्यपि 'भूवादयो धातव' इति सूत्रे कोऽसावनुमानो नामेति भाष्यवाक्यं तथाप्ययमित्यर्थानुवादः । कारणा इति स्त्री .............. **अथवेति** । करोतेर्ण्यन्तादिति अनुवर्तते । ण्यास इति ण्यन्ताद्धातोः । आस उपवेशन इत्यस्माच्च स्त्रियां युच्प्रत्ययः । ........ देवक्रिया ध्येया । अयं च युजन्तश्च स्त्रीलिङ्ग एवेत्यर्थः । तृतीयाध्यायतृतीयपादे कर्मव्यतिहारेणि ..... स्त्रियामिति प्रकृत .......... ... विधानादिति भावः । बध्न इति भाव्यमित्यत आह **वातो इति** । उवर्णा ताद्गुणवचनाच्छब्दात् । स्त्रियां ङीप् भवतीत्युक्ते ......... बहव इति रूपमिति भावः । **द्वयोरेवेति** । प्रश्नप्रसञ्जकपूर्वश्लोके तयोरिति रागद्वेषयोरेवोक्तत्वादित्यर्थः । **त्वयेति** । ...........त्यर्थः ॥

*भा०र०*— परिपन्थित्वोक्तावपि पापाचरणप्रयोजकप्रश्नः कथमनुपपन्न इत्यत आह **न हि इति** । "हेतुर्ना कारणं बीजं निदानं त्वादिकारणम्" इत्यमरे कारणशब्दस्य क्लीबत्वाभिधानात् कथमत्र 'कारणाः' इति पुल्लिङ्गत्वमित्यत आह **कारणशब्द इति** । **करोतेरिति** । डु कृञ् = करण इति धातोर्णिच्प्रत्यये, "अतो ञ्णिति" इति वृद्धौ 'कारि' इति रूपे, ततः "करणाधिकरणयोश्च" इति कार्यते एभिरिति करणे ल्युटि, "युवोरनाकौ" इति युकारस्यानादेशे, "अट्कुप्वाङ्नुम्" इति णत्वे "णेरनिटि" इति णिलोपे च, "कृत्तद्धित" इति प्रातिपादिकत्वेन जसि च, 'कारणाः' इति रूपम् । पापनिष्पत्तिप्रयोजका इति तदर्थ इति भावः । ततोऽपि कथं पुल्लिङ्गत्वमित्यत आह **स चेति** । "करणाधिकरणयोर्ल्युट् च" इति करणेऽधिकरणे च विहितो यो ल्युट्प्रत्ययः तदन्तशब्दः परवल्लिङ्गो भवतीति लिङ्गानुशासने स्मरणात्, तद्वृत्तौ इध्मः प्रवृश्च्यतेऽनेनेतीध्मप्रव्रश्चनः परशुः । इध्मप्रव्रश्चनी छुरिका । इध्मप्रव्रश्चनं शस्त्रमिति लिङ्गत्रयोदाहरणात् । "भावे ल्युट्, स नपुंसके । अन्यत्र त्वभिधेयवशादनियतलिङ्गः" इति कैयटवचनाच्चेति भावः । "यदनान्तमकर्तरि" इत्यमरवचनमपि कर्तृपदं कारकमात्रोपलक्षकम् । कारकव्यतिरिक्ते भावमात्रे विहितम् अनान्तं नपुंसकलिङ्गं भवति" इति हरिदीक्षितेन व्याख्यातमिति न तेनापि नपुंसकत्वं शङ्काऽर्हम् । उदाहृतं च तेनैव "इध्मप्रव्रश्चनः पलाशशातनः" इति ।

ननु शास्त्रसद्भावेऽपि न पुंलिङ्गत्वमभ्युपगन्तुं शक्यम् । प्रयोगाभावात् । भावे वा तस्याभियुक्तप्रयोगत्वनिर्णयायोगात् । अत एव "वृन्दारका दैवतानि पुंसि वा" इत्यनुशासने सत्यपि न दैवतशब्दः पुंलिङ्गः स्वीक्रियते । "प्रयोगशरणा हि वैयाकरणाः" इत्यतोऽभियुक्तप्रयोगं दर्शयति **अयमनुमान इति** । "कोऽसावनुमानो नाम" इति "भूवादयः" इति सूत्रे महाभाष्ये पुंलिङ्गस्य प्रयोगादित्यर्थः । अयमिति तु "स चायं त्रिलिङ्गः" इति पूर्वेणैवान्वितम् । अयमित्येतदसावित्यस्यार्थानुवाद इत्यपि **आहुः** । "श्रुतिः प्रत्यक्षमैतिह्यमनुमानश्चतुष्टयम्" इति वैदिकप्रयोगानुदाहरणं तु "सुप्तिङुपग्रहलिङ्गनराणाम्" इति व्यत्ययशास्त्रेण छन्दसि लिङ्गव्यत्यय इति यः कोऽपि परिहर्तुमुत्सहेतापीत्यभिप्रायेण ।

नन्वस्तु यत्र प्रयोग उपलभ्यते तत्र त्रिलिङ्गत्वम् । हेतुवाचिकारणशब्दस्तु नपुंसकलिङ्ग एव । "कारणं करणे हेतुवधयोश्च नपुंसकम्" इति विशेषोक्तेः, "कारणं हेतुवधयोः" इति कविदर्पणवचनात्, "क्लीबं तु कारणं हेतौ" इति केशववचनाच्च । लिङ्गानुशासनं तु हेत्वर्थकारणशब्दव्यतिरिक्तशब्दविषयम् । महाभाष्यप्रयोगश्च मन्यतेर्घञि निष्पादितः कैयटे । घञन्तश्च । "घञबन्तश्च पुंसि" इति लिङ्गानुशासने पुंलिङ्गोऽनुशिष्टः । अयं च ल्युडन्तो व्याख्यात इत्यनुशयादाह

**अथवेति** । ण्यन्तेभ्यो धातुभ्यः, आस=उपवेशने, 'श्रन्थ=विमोचनहर्षणयोरि'त्येताभ्यां च, स्त्रियां युच्प्रत्ययो भवतीति सूत्रेण करोतेर्ण्यन्तात् करणे युच्प्रत्यये, अनादेशे च कारणेति रूपमित्यर्थः । उदाहृतं च वृत्तिकृता कारणा हारणा आसना श्रन्थना इति । एतावांस्तु विशेषः । उदाहृताः शब्दा भावार्थकयुच्प्रत्ययान्ताः । अयं तु करणार्थकयुजन्त इति । तदिदमुक्तम् **करणे युजिति** ।

एवमपि कारणशब्दस्य कथमनपुंसकत्वमित्यत आह **अयं चेति** । युच्प्रत्ययान्तश्च सर्वोऽपि शब्दः स्त्रीलिङ्गः । "स्त्रियां क्तिन्" इत्यतः स्त्रियामित्यनुवृत्तेरित्यर्थः । तर्हि 'बह्वयः' इति भाषणं स्यात् न तु 'बहवः' इति । तत्राह **बहव इत्यपीति** । 'शब्दः' इति शेषः । **वोत इति** । गुण-वचनादुकारान्तात् प्रातिपदिकात् स्त्रियां वा ङीष् भवति । पट्वी पटुः मृद्वी मृदुरिति सूत्रार्थः । **यत्त्वत्र** 'बह्वादिभ्यः' इत्यनन्तरसूत्रे बह्वादिभ्यः स्त्रियां वा ङीष् भवति । बह्वयः बहवः इति बहुशब्दादेव ङीषो विकल्पेन विहितत्वात्, "बह्वादिभ्यश्चेति विकल्पविधानात्" इति वक्तव्यम्, न तु "वोत इति" इति । तन्न । बहुशब्दो गुणवचन एव । तस्येह पाठ उत्तरार्थ इति वृत्तिकारवचनेन बहुशब्दस्य गुणवचनत्वादेव ङीषो वाच्यत्वात् । 'बह्वादिभ्यः' इत्यत्र बहुशब्दग्रहणं न कर्तव्यमिति मनोरमायां प्रत्याख्यानाच्च । अतो 'वोतः' इत्येव युक्तम् ।

ननु 'बहवः' इत्यादिभाष्यम् अर्जुनप्रश्नस्याभिप्रायवर्णनार्थं प्रवृत्तम् । प्रश्नवाक्ये च "केन प्रयुक्तः पापं चरति" इति पापप्रयोजकमेवावगम्यते । अतः 'पापकारणाः' इति भाषणीयमित्यत आह **कर्मेति पापमिति** । **द्वयोरेव** "रागद्वेषौ व्यवस्थितौ" इति रागद्वेषयोरेव । **मदमत्सरादयः** मदमत्सरलोभमोहाः । लक्षणायां बीजमाह **अरीति** । "षड्वर्गनिग्रहनिरस्तसमस्तदोषाः" द्वादश-स्तोत्रम् (७-४), "यतो वसन्ते सह षट् सपत्नाः" (भाग. ५.१.१७) इत्यादौ कामक्रोधादिरूप-षड्वर्गस्याप्यरित्वापरपर्यायपरिपन्थित्वप्रसिद्धेः अत्र द्वयोरेवोक्तः परिपन्थित्वान्वयोऽनुपपन्न इत्यन्व-यानुपपत्त्या षड्वर्गगतत्वसम्बन्धेन च युक्तमुपलक्षणमिति भावः ।

**अनुवदति** अर्जुनः । अनुक्तस्य कथमनुवादः ? इत्यत आह **रागशब्देनेति** । **द्वेषशब्देन इति** । अयं भावः रागद्वेषशब्दयोर्द्वयोरपि न लक्षकत्वम् । एकेनैव लक्षणोपपत्तेः । रागशब्दे लक्षणाऽस्त्विति न युक्तम् । प्रथमोपस्थितत्वात् । अत एकस्यैव लक्षकत्वे वाच्ये चरम-श्रुतद्वेषशब्दस्यैव तद् युक्तम् । अत एव मीमांसकैः "यजमानः प्रस्तरः" इत्यत्र प्रस्तरशब्द एव अमुख्यवृत्तिरङ्गीकृता तत्सिद्धिपेटिकायाम् । गीतायां प्रथमस्यापि रागशब्दितकामस्य भाष्ये क्रोधा-द्यनन्तरमुपादानं तु पापप्रयोजकेषु सर्वेष्वपि प्राबल्याभिप्रायेण । न चैवं "को बलवान्" इति प्रश्नानुपपत्तिः, कामप्राबल्यस्य निश्चिततत्वादिति वाच्यम् । कामे प्राबल्यं ज्ञातवानस्मि । त्वं तु ब्रूषे

क्रोधादयोऽपि काम इव पापप्रयोजका इति । तत्र केन प्रयुक्तः पापं चरति ? इति प्राप्त-लोकसन्देहव्यावर्तनाय, स्वयं ज्ञातस्यापि दार्ढ्याय च, प्रश्नकरणोपपत्तेरिति ।

**प्रकृते** "मयि संन्यस्य कर्माणि (३.३०) इत्यादावुक्तसेतिकर्तव्यताकवर्णाश्रमकर्मकर्तव्यतारूपे "श्रेयान् स्वधर्मो विगुणः परधर्मो भयावहः" (३.३५) इति वाक्योक्ते **प्रमेये** । **क उपयोगः** कथ-मेकवाक्यत्वम् । सङ्गतेरभावादिति शङ्कितुर्हृदयम् । 'अथ' इति भाष्ये 'अथेत्येतदर्थान्तरम्' इति कथं सामानाधिकरण्यम् ? इत्याशङ्क्य शेषमाह **अथेतिशब्देनेति** । 'इति'शब्दात् परतः 'शब्देन' इति, 'अर्थान्तरम्' इत्यनन्तरं 'सूच्यते' इति शेषे नोक्तशङ्काऽवकाश इति भावः । सङ्गत्यन्तराभावेऽपि प्रासङ्गिकमात्रप्रश्नेऽतिप्रसङ्ग इत्यत आह **तत्रापीति** । "तयोर्न वशमागच्छेत्" (३.३४) इत्यत्र यौ द्वौ प्रस्तुतौ **तत्रापि** तयोरपीत्यर्थः ॥ ३६ ॥

***गीताक्षरार्थस्तु***— "रागद्वेषौ व्यवस्थितौ" (३.३४) इत्यत्र रागशब्देन कामो द्वेषशब्देन क्रोधादयश्च बहवः पापहेतवः सन्तीति त्वयोक्तम् । तत्रापि यो बलवान् पापहेतुस्तं प्रति परिभवाय महान्तं प्रयत्नं करिष्यामीति भावेन प्रसङ्गसङ्गत्या को बलवानिति पृच्छ्यते **अथेति** । अथशब्देन अर्थान्तरमेतदिति सूच्यते । **अयं पुरुषः** पापम् **अनिच्छन्नपि** इत्यास्तिककामुकविशेषणम् । राज्ञा **बलान्नियोजितो** भृत्य इव पापं चरन् कामादिषु **केन** बलवता **प्रयुक्तः** प्रेरितः **चरति**, तं ब्रूहि । वृष्णिशब्दात् 'द्व्यचः' इति ढकि वार्ष्णेय वृष्णिकुलोद्भव इति सम्बुद्धिरिति ॥ ३६ ॥

**गीतातात्पर्यनिर्णयः**

## परमेश्वराद्देवेभ्यश्चार्वाक्तनं प्रेरकं पृच्छति अथ केनेति ॥ ३६ ॥

***न्या०दी०***— "तयोर्न वशमागच्छेत्" इत्युक्ते पृच्छ्यते 'अथ' इति । तत्र 'प्रकृतेः' इत्यादौ भगवतः प्रेरकत्वस्योक्तत्वात्, स्वयं देवत्वेन देवानां प्रेरकत्वस्यापि ज्ञातत्वात्, 'इन्द्रियस्य' इति कामाद्यधमानां प्रेरकाणां च कथितत्वात् सिद्धप्रश्नोऽयमित्यत आह **परमेश्वरादिति** ॥ अर्वाक्तनं बलवन्तमिति शेषः । प्रश्नवाक्ये नैतदुच्यत इत्यत आह **अथेति** ॥ आनन्तर्यवाचिनाऽथशब्देन परमेश्वराद्देवेभ्यश्चानन्तरमित्यर्थो ज्ञायत इति भावः ॥

***भा०दी०***— प्रश्नकरणे प्रसक्तिं दर्शयति **तयोरित्यादिना** ॥ **उक्तत्वादिति** । प्रकृष्टकृति-मत्त्वहेतुना हरेरपि प्रकृतिशब्दार्थत्वोक्तेरिति भावः । सिद्धप्रश्नत्वनिरासायाह **इति शेष इति** ॥ **नैतदिति** । कामाद्यधमप्रेरकेष्वेव बलवत्प्रेरकप्रश्नो न तूत्तममध्यमप्रेरकेश्वरदेवेष्वित्येतदित्यर्थः ॥

**गीता**

## श्रीभगवानुवाच—

**काम एष क्रोध एष रजोगुणसमुद्भवः ।**
**महाशनो महापाप्मा विद्ध्येनमिह वैरिणम् ॥ ३७ ॥**

*वि०वि०*— काममूलत्वात्सर्वेषां स एव बलवानिति **भगवानुवाच– काम इति** । यस्त्वया पृष्टो बलवान्प्रवर्तकः स एष काम एव क्रोधोऽप्येष एव । तज्जन्यत्वात् 'कामात्क्रोधोऽभिजायत' इत्युक्तत्वात् । यत्रापि गुरुनिन्दादिनिमित्तः क्रोधस्तत्रापि भक्तिनिमित्ता निन्दा कामनिमित्त एव । रजोगुणात् समुद्भवतीति रजोगुणसमुद्भवः । महदशनं भोग्यं यस्य स महाशनः । महान् ब्रह्म-हत्यादिरूपः पाप्मा यस्मादिति महापाप्मा । इह जगति । एनं कामं मोक्षविरोधित्वाद्वैरिणं विद्धि ॥

*वा०ल०*— 'महाशनो' इत्यत्र अतिशयेन पुण्यश्रेणीमश्नातीति महाशनः ।

*सा०सं०*— काममूलत्वात् सर्वेषां स एव बलवानित्याह **काम एष इति** । **एष** त्वया पृष्टः पुरुषस्य पापेषु बलवान् प्रवर्तक इत्यनूद्य काम इति विधीयते । **एष कामः एष क्रोधः** । 'कामात् क्रोधोऽभिजायते' इत्युक्तेः कामजत्वात् क्रोधस्य कार्यकारणयोः 'गोभिः श्रीणीत मत्सरम्' इत्यादा-विवाभेदोपचारेणेयमुक्तिः । स च क्रोधो रजोगुणात् समुद्भवतीति स तथा । कामनिमित्तको रजो-गुणपरिणाम इत्यर्थः । क्रोध इत्युपलक्षणम् । तथा च कामनिवृत्तौ तन्मूलाः क्रोधादयः पापहेतवो निवर्तितुं शक्यन्त इति कामनिवृत्तावेवातिप्रयत्नः कार्य इति भावः । कामस्य यावदपेक्षितं दत्त्वा जेतव्यः स इत्यतः कामं विशिनष्टि । **महाशनः** महदशनं भोग्यं विषयो यस्य स तथा । महान् पाप्मा पापं ब्रह्महत्यादिरूपं यस्मात् स तथा । **इह** ऐहिकामुष्मिकपुरुषार्थविषये । **एनं** कामम् । **वैरिणं** नित्यमशुभेष्वेव प्रवर्तकतया मोक्षविरोधित्वात् शत्रुभूतम् । **विद्धि** जानीहि । कामाभिमानी कालनेमिर्ज्ञेयः ॥

*अ०प्र०*— अत्रोत्तरं श्रीभगवानुवाच **काम एष इति** ।

महाशनः[१], महापाप्मा[२], रजोगुणसमुद्भवः[३], एषः कामः[४], क्रोध एव[५], एनं[६], इह[७], वैरिणं[८], विद्धि[९] इत्यन्वयः ।

हे पार्थ ! त्वया बलवान् पापप्रवर्तको यः पृष्टः सः एषः काम एवेति बोधयति । महाशनः = महत् अशनं भोग्यं विषयो यस्य सः महाशनः दुष्पूर इत्यर्थः । महापाप्मा = महान् पाप्मा

ब्रह्महत्यादिरूपो यस्माद्भवतीति स तथा अतोऽत्युग्रः[२], रजोगुणसमुद्भवः = रजोगुणात् समुद्भवतीति तथा अनेन सत्त्वबुद्ध्या रजसि क्षयं नीते कामोऽपि जीर्यत इति सूचितम्[३], अतोऽत्युग्रः एषः काम एव[४], क्रोधोऽपि एष एव[५], जनकत्वात् केनचित् प्रतिहतात् कामात् क्रोधो जायते, कामात् क्रोधोऽभिजायते इत्युक्तत्वात् । तथाहि—

"ऋते कामं न कोपाद्या जायन्ते च कथञ्चनेति ॥"

एतादृशः कामः[५], एनं = एतादृशं कामं[६], इह = सज्जनविषये ज्ञानादिप्रतिबन्धात्[७], वैरिणं = मोक्षमार्गे बलवत् वैरिणं[८], विद्धि = जानीहि[९], काममूलत्वात् क्रोधादीनां स एव बलवान् वैरी अतोऽयं वक्ष्यमाणक्रमेण हन्तव्य इत्यर्थः ॥ ३७ ॥

**भाष्यम्**

**यस्तु बलवान् प्रवर्तकः सः एष कामः । क्रोधोऽप्येष एव । तज्जन्यत्वात् । 'कामात् क्रोधोऽभिजायते' इति ह्युक्तम् । यत्रापि गुरुनिन्दादिनिमित्तः क्रोधः तत्रापि भक्तिनिमित्ता निन्दा कामनिमित्त एव । ये त्वन्यथा वदन्ति ते सङ्करान्न सूक्ष्मं जानन्ति । उक्तं च "ऋते कामं न कोपाद्या जायन्ते हि कथञ्चन ॥" इति । महाशनः । महद्धि कामभोग्यम् । महाब्रह्महत्यादिकारणत्वात् महापाप्मा । सर्वपुरुषार्थविरोधित्वात् वैरी ॥ ३७ ॥**

***प०टी०***— प्रश्नाभिप्रायानुसारेणाह **यस्त्विति** । अपव्याख्यामपहसति **ये त्विति** । कामक्रोधयोरन्वयव्यतिरेकप्रमाणमाह **उक्तं चेति** । महाशनादिशब्दान् कामे घटयति **महाशन इति** ॥

***न०टी०***—उत्तरवाक्यमप्यशुभप्रेरकबलवत्प्रकाशकत्वेन व्याचष्टे **यस्त्विति** । ननूत्तरवाक्ये कामक्रोधयोरेकत्वमुच्यते । प्रश्नवाक्यं च साधारणम् । तथा ह्यन्ये वर्णयन्ति – काम एव केनचित्प्रतिहतः क्रोधत्वेन परिणमत इति । अतः कथं प्रश्नप्रतिवचनयोः पापप्रेरकबलवत्परता ? इत्यत आह **क्रोधोऽपीति** । आत्मैव पुरुष इतिवदौपचारिक इत्यर्थः । अन्यथोक्ते विरोध इत्याह **कामादिति** । ननु कामजत्वनियमे क्रोधस्य **क्रोधोऽप्येष एव** इत्युपचारोऽपि घटेत । तस्य निमित्तान्तरादप्युपपत्तेः स एव कुतः ? इत्यत आह **यत्रापीति** । भक्तिनिमित्तोऽयमनिन्दाकामः, तन्निमित्त एव क्रोध इत्यर्थः । अतोऽत्र कामक्रोधयोः सङ्कीर्तनत्वादन्यथावाद इत्याह **ये त्विति** । क्रोधादेः कामजत्वनियमे प्रमाणमाह **उक्तं चेति** । उत्तरार्धगतविशेषणानि कामे घटयति **महाशन इत्यादिना** ॥

*प्र०दी०*— बलवद्विषयश्चेत्प्रश्नस्तर्हि परिहारो न सङ्गच्छत इत्यतः परिहारं व्याचष्टे— **यस्त्विति** । प्रवर्तकः पापेषु पुरुषस्य त्वया पृष्ट इति शेषः । एवं योजनायां क्रोधस्यापि कामसाम्यं स्यात् । तथा चोत्तरत्र कामस्यैवानुवृत्तिर्विरुध्येतेत्यतः 'क्रोध एषः' इत्येतदन्यथा व्याचष्टे— **क्रोधोऽपीति** । काम एव किं मुख्यया वृत्त्या एवमुच्यते । नेति ब्रूमः । किन्तूपचारेणेति भावेनाह— **तदिति** । तदेव कुत इत्यत आह— **कामादिति** । नायमस्ति नियमः । यदा गुरुनिन्दाऽदिश्रवणे निन्दकाय क्रुध्यति तदा कामाभावेऽपि क्रोधोदयदर्शनादित्यत आह **यत्रापीति** । भक्तिनिमित्तश्चासौ अनिन्दाकामश्चेति विग्रहः । 'सङ्गात्सञ्जायते कामः' इत्येतद्दर्शयितुं 'भक्तिनिमित्ता' इत्युक्तम् । काम एव केनचित्प्रतिहतः क्रोधत्वेन परिणमत इति परेषां व्याख्यानं दूषयति— **ये त्विति** । एकान्तः-करणोपादानत्वलक्षणात् आनन्तर्यलक्षणाच्च सङ्करात् सूक्ष्मं कामक्रोधयोरत्यन्तभेदम् । न हि गुणो गुणस्योपादानम् । किन्तु निमित्तमेव । प्रागन्वये प्रमाणमुक्तम् । इदानीं व्यतिरेकेऽप्याह— **उक्तं चेति** । 'महाशनः' इति कामे दुर्घटत्वाद्गौणमित्याह— **महाशन इति** । भोग्यं विषयः । यस्मा-त्कामभोग्यं महत्तस्मादसौ 'महाशनः' इति हेरर्थः । 'काम एषः' इति पापकारणत्वेनोक्त्वा कथं 'महापाप्मा' इत्युच्यत इत्यतो न कर्मधारयोऽयम्, किन्तु महान् पाप्मा यस्मादिति बहुव्रीहिरिति भावेनाह— **महाब्रह्मेति** । महच्छब्दात्परतः पाप्मशब्दोऽध्याहार्यः । वधादिकर्तृत्वाभावात्कथं वैरीत्यत आह— **सर्वेति** । सर्वः सम्पूर्णः । पुरुषार्थो मोक्षः ॥

*भा०दी०*— **उत्तरत्रेति** । उत्तरार्धादाविति भावः । **एकेति** । एकं यदन्तःकरणं तदुपादान-त्वलक्षणादित्यर्थः । अपौनरुक्त्याह **प्रागिति** । इति ह्युक्तमित्यत्रेत्यर्थः । महाब्रह्महत्यादिहेतुत्वे महापाप्मत्वं कुत इत्यतो वा ब्रह्महत्यादेर्महत्वघटनाय चाह **महच्छब्दात्परत इत्यादि** । हि पुमर्थ-हेतुत्वानुभवात् कथं सर्वपुमर्थविरोधितेत्यत आह **सर्वः सम्पूर्ण इत्यादि** ॥

*भा०र०*— 'प्रवर्तकः' इत्यतः परं प्रकृतोपयोगाय भाष्ये शेषमाह **प्रवर्तक इति** । **एव-मिति** । पुरुषस्य पापे बलवान् प्रवर्तको यस्तु त्वया पृष्टः स एष काम इत्येवं परिहारवाक्य-योजनायामित्यर्थः । **उत्तरत्र** "महाशनो महापाप्मा" इत्युत्तरार्धादौ । **अनुवृत्तिः** बलवत्त्वेन । **मुख्यया वृत्त्या** क्रोधशब्दमुख्यवृत्त्या । **एवं** कामः क्रोध इति सामानाधिकरण्येनोच्यत इत्यर्थः । **तदेव** क्रोधस्य कामजन्यत्वमेव । **निन्दकाय क्रुध्यतीति** । "क्रुधद्रुहेर्ष्यासूयार्थानां यं प्रति कोपः" इति सम्प्रदानत्वे चतुर्थी । भक्तिनिमित्ता या अनिन्दा कामनिमित्त एवेत्यनन्वितम्, असङ्गतं चेत्यतो भाष्ये प्रकृतसङ्गतये विग्रहं दर्शयति **भक्तीति** । **सङ्गादिति** । "सङ्गस्तु गुणसम्प्रीतिः" (दशनि) इत्येकादशतात्पर्ये गुणसम्प्रीतिशब्दितसङ्गात् **कामः** अनिन्दाकामः इत्येतद् दर्शयितुमित्यर्थः । भक्तिनिमित्तो योऽयमनिन्दाकामस्तन्निमित्तक एव क्रोध इत्यर्थ इति भावः ।

सङ्करभाष्यमेवानुवदति **काम एव केनचिदिति** । विषयागतिविरोधिनेत्यर्थः । **सङ्करस्वरूपमाह एकेति** । "एकमेव ह्यन्तःकरणं कामक्रोधयोरुपादानम्" इति तदुपादानकत्वलक्षणादित्यर्थः । एकान्तःकरणोपादानकयोरपि सुखदुःखयोर्भेदस्य स्फुटप्रतिभासत्वादाह **आनन्तर्येति** । प्रतिहत-कामानन्तरत्वलक्षणादित्यर्थः । अत एव भागवते "ऊचुः सुहृत्तमदिदृक्षितभङ्ग ईषत् कामानुजेन सहसा तदुपप्लुताक्षाः" (भाग. ३.१६.३१) इति सनकादिक्रोधस्य प्रतिहतकामानुजत्वमुक्तम् । 'सूक्ष्मम्' इत्यतःपरं शेषमाह **सूक्ष्मं कामेति** । एकदीपोपादानयोर्ज्वालयोरिव कामक्रोधयोरपि **सूक्ष्मम्** अव्यक्तं भेदं न जानन्तीत्यर्थः । अन्यथापदेन सूचितम् एकद्रव्याश्रितयोर्गुणयोर्मध्य एकस्यापरोपादानत्वम् अयुक्तम् इति दूषणं स्फुटीकरोति **न हीति** ।

अनुपादानत्वे "क्रोधोऽप्येष एव" इति सामानाधिकरण्येन व्यवहारायोग इत्यत उक्तम् **किन्तु निमित्तमेवेति** । निमित्ततया तज्जन्यत्वमात्रेणोपचाराद् व्यवहार इति भावः । "कामात् क्रोधो-ऽभिजायते" (२.६२) इति प्रागेव प्रमाणोदाहरणेन कामस्य क्रोधं प्रति हेतुत्वमभिहितमिति पुनः किं तदुक्त्या ? इत्याशङ्कायामाह **प्रागिति** । "महाशन इति" (इत्यनन्तरं) विशेषणम् (इति शेष इति भावः) । **दुर्घटत्वादिति** । भोजनक्रियायाश्चेतन एव दृष्टत्वात् "भुञ्जान इन्द्रियाविष्टः" इति तात्पर्यवचनस्याप्यभिमानिचेतनविषयत्वादिति भावः । विषयानुभवो हि भोगः । तत्कर्म भोग्यम् । तथा च तदपि दुर्घटमेवेत्यत आह **भोग्यं विषय इति** ।

**पापकारणत्वेनेति** । केन पापं चरति ? इति प्रश्नोत्तरभूते "काम एषः" इति वाक्ये कामं पापकरणत्वेनोक्त्वा 'महापाप्मा' इति पापरूपत्वं कथमुच्यत इत्यर्थः । "अस्त्री पङ्कं पुमान् पाप्मा पापं किल्बिषकल्मषम्" (अमरकोशे) इत्यभिधानात् "महान् पाप्मा" इति पुंल्लिङ्गप्रयोगः । अयं च बहुव्रीहिर्भाष्ये कारणपदाभिप्रेत इति भावेन 'यस्माद्' इत्युक्तम् । कामस्याल्पब्रह्महत्यां प्रत्यपि कारणत्वात् कथं महत्त्वविशेषणम् । उक्तविग्रहाभिप्राये भाष्ये पाप्मपदमपि श्रूयेतेत्यत आह **महच्छब्दादिति** । कोऽयं महान् पाप्मा कामेन भवति ? इत्यतो भाष्ये ब्रह्महत्यादिरूप इति प्रदर्शयितुं 'महाब्रह्महत्यादि' इत्युक्तमिति नोक्तदोष इति भावः ।

ननु निषिद्धकामस्यैहिकफलहेतुत्वदर्शनात् स्वर्गादिकामस्य पारत्रिकफलत्वाच्च कथं सर्वपुरुषार्थ-विरोधित्वम् ? इत्यत आह **सर्वः सम्पूर्ण इति** । "सर्वं पूर्णमिहोच्यते" इति वचनात्, "सर्वं समस्तं विश्वं च अनन्तं पूर्णमेव च" (गी.भा. ११.१६) इत्येकादशाध्याये भाष्यमाणत्वाच्चेति भावः ॥ ३७ ॥

*प्र०दी०*— बलवद्विषयश्चेत्प्रश्नस्तर्हि परिहारो न सङ्गच्छत इत्यतः परिहारं व्याचष्टे— **यस्त्विति** । प्रवर्तकः पापेषु पुरुषस्य त्वया पृष्ट इति शेषः । एवं योजनायां क्रोधस्यापि कामसाम्यं स्यात् । तथा चोत्तरत्र कामस्यैवानुवृत्तिर्विरुध्येतेत्यतः 'क्रोध एषः' इत्येतदन्यथा व्याचष्टे— **क्रोधोऽपीति** । काम एव किं मुख्यया वृत्त्या एवमुच्यते । नेति ब्रूमः । किन्तूपचारेणेति भावेनाह— **तदिति** । तदेव कुत इत्यत आह— **कामादिति** । नायमस्ति नियमः । यदा गुरुनिन्दाऽदिश्रवणे निन्दकाय क्रुध्यति तदा कामाभावेऽपि क्रोधोदयदर्शनादित्यत आह **यत्रापीति** । भक्तिनिमित्तश्चासौ अनिन्दाकामश्चेति विग्रहः । 'सङ्गात्सञ्जायते कामः' इत्येतद्दर्शयितुं 'भक्तिनिमित्ता' इत्युक्तम् । काम एव केनचित्प्रतिहतः क्रोधत्वेन परिणमत इति परेषां व्याख्यानं दूषयति— **ये त्विति** । एकान्तः-करणोपादानत्वलक्षणात् आनन्तर्यलक्षणाच्च सङ्करात् सूक्ष्मं कामक्रोधयोरत्यन्तभेदम् । न हि गुणो गुणस्योपादानम् । किन्तु निमित्तमेव । प्रागन्वये प्रमाणमुक्तम् । इदानीं व्यतिरेकेऽप्याह— **उक्तं चेति** । 'महाशनः' इति कामे दुर्घटत्वाद्गौणमित्याह— **महाशन इति** । भोग्यं विषयः । यस्मात्कामभोग्यं महत्तस्मादसौ 'महाशनः' इति हेरर्थः । 'काम एषः' इति पापकारणत्वेनोक्त्वा कथं 'महापाप्मा' इत्युच्यत इत्यतो न कर्मधारयोऽयम्, किन्तु महान् पाप्मा यस्मादिति बहुव्रीहिरिति भावेनाह— **महाब्रह्मेति** । महच्छब्दात्परतः पाप्मशब्दोऽध्याहार्यः । वधादिकर्तृत्वाभावात्कथं वैरीत्यत आह— **सर्वेति** । सर्वः सम्पूर्णः । पुरुषार्थो मोक्षः ॥

*भा०दी०*— **उत्तरत्रेति** । उत्तरार्धादाविति भावः । **एकेति** । एकं यदन्तःकरणं तदुपादान-त्वलक्षणादित्यर्थः । अपौनरुक्त्याह **प्रागिति** । इति ह्युक्तमित्यत्रेत्यर्थः । महाब्रह्महत्यादिहेतुत्वे महापाप्मत्वं कुत इत्यतो वा ब्रह्महत्यादेर्महत्वघटनाय चाह **महच्छब्दात्परत इत्यादि** । हि पुमर्थ-हेतुत्वानुभवात् कथं सर्वपुमर्थविरोधितेत्यत आह **सर्वः सम्पूर्ण इत्यादि** ॥

*भा०र०*— 'प्रवर्तकः' इत्यतः परं प्रकृतोपयोगाय भाष्ये शेषमाह **प्रवर्तक इति** । **एव-मिति** । पुरुषस्य पापे बलवान् प्रवर्तको यस्तु त्वया पृष्टः स एष काम इत्येवं परिहारवाक्य-योजनायामित्यर्थः । **उत्तरत्र** "महाशनो महापाप्मा" इत्युत्तरार्धादौ । **अनुवृत्तिः** बलवत्त्वेन । **मुख्यया वृत्त्या** क्रोधशब्दमुख्यवृत्त्या । **एवं** कामः क्रोध इति सामानाधिकरण्येनोच्यत इत्यर्थः । **तदेव** क्रोधस्य कामजन्यत्वमेव । **निन्दकाय क्रुध्यतीति** । "क्रुधद्रुहेर्ष्यासूयार्थानां यं प्रति कोपः" इति सम्प्रदानत्वे चतुर्थी । भक्तिनिमित्ता या अनिन्दा कामनिमित्त एवेत्यनन्वितम्, असङ्गतं चेत्यतो भाष्ये प्रकृतसङ्गतये विग्रहं दर्शयति **भक्तीति** । **सङ्गादिति** । "सङ्गस्तु गुणसम्प्रीतिः" (दशनि) इत्येकादशतात्पर्ये गुणसम्प्रीतिशब्दितसङ्गात् **कामः** अनिन्दाकामः इत्येतद् दर्शयितुमित्यर्थः । भक्तिनिमित्तो योऽयमनिन्दाकामस्तन्निमित्तक एव क्रोध इत्यर्थ इति भावः ।

सङ्करभाष्यमेवानुवदति **काम एव केनचिदिति** । विषयागतिविरोधिनेत्यर्थः । **सङ्करस्वरूपमाह एकेति** । "एकमेव ह्यन्तःकरणं कामक्रोधयोरुपादानम्" इति तदुपादानकत्वलक्षणादित्यर्थः । एकान्तःकरणोपादानकयोरपि सुखदुःखयोर्भेदस्य स्फुटप्रतिभासत्वादाह **आनन्तर्येति** । प्रतिहत-कामानन्तरत्वलक्षणादित्यर्थः । अत एव भागवते "ऊचुः सुहृत्तमदिदृक्षितभङ्ग ईषत् कामानुजेन सहसा तदुपप्लुताक्षाः" (भाग. ३.१६.३१) इति सनकादिक्रोधस्य प्रतिहतकामानुजत्वमुक्तम् । 'सूक्ष्मम्' इत्यतःपरं शेषमाह **सूक्ष्मं कामेति** । एकदीपोपादानयोर्ज्वालयोरिव कामक्रोधयोरपि **सूक्ष्मम्** अव्यक्तं भेदं न जानन्तीत्यर्थः । अन्यथापदेन सूचितम् एकद्रव्याश्रितयोर्गुणयोर्मध्य एकस्यापरोपादानत्वम् अयुक्तम् इति दूषणं स्फुटीकरोति **न हीति** ।

अनुपादानत्वे "क्रोधोऽप्येष एव" इति सामानाधिकरण्येन व्यवहारायोग इत्यत उक्तम् **किन्तु निमित्तमेवेति** । निमित्ततया तज्जन्यत्वमात्रेणोपचाराद् व्यवहार इति भावः । "कामात् क्रोधोऽभिजायते" (२.६२) इति प्रागेव प्रमाणोदाहरणेन कामस्य क्रोधं प्रति हेतुत्वमभिहितमिति पुनः किं तदुक्त्या ? इत्याशङ्कायामाह **प्रागिति** । "महाशन इति" (इत्यनन्तरं) विशेषणम् (इति शेष इति भावः) । **दुर्घटत्वादिति** । भोजनक्रियायाश्चेतन एव दृष्टत्वात् "भुञ्जान इन्द्रियाविष्टः" इति तात्पर्यवचनस्याप्यभिमानिचेतनविषयत्वादिति भावः । विषयानुभवो हि भोगः । तत्कर्म भोग्यम् । तथा च तदपि दुर्घटमेवेत्यत आह **भोग्यं विषय इति** ।

**पापकारणत्वेनेति** । केन पापं चरति ? इति प्रश्नोत्तरभूते "काम एषः" इति वाक्ये कामं पापकरणत्वेनोक्त्वा 'महापाप्मा' इति पापरूपत्वं कथमुच्यत इत्यर्थः । "अस्त्री पङ्कं पुमान् पाप्मा पापं किल्बिषकल्मषम्" (अमरकोशे) इत्यभिधानात् "महान् पाप्मा" इति पुंलिङ्गप्रयोगः । अयं च बहुव्रीहिर्भाष्ये कारणपदाभिप्रेत इति भावेन 'यस्माद्' इत्युक्तम् । कामस्याल्पब्रह्महत्यां प्रत्यपि कारणत्वात् कथं महत्त्वविशेषणम् । उक्तविग्रहाभिप्राये भाष्ये पाप्मपदमपि श्रूयेतेत्यत आह **महच्छब्दादिति** । कोऽयं महान् पाप्मा कामेन भवति ? इत्यतो भाष्ये ब्रह्महत्यादिरूप इति प्रदर्शयितुं 'महाब्रह्महत्यादि' इत्युक्तमिति नोक्तदोष इति भावः ।

ननु निषिद्धकामस्यैहिकफलहेतुत्वदर्शनात् स्वर्गादिकामस्य पारत्रिकफलत्वाच्च कथं सर्वपुरुषार्थ-विरोधित्वम् ? इत्यत आह **सर्वः सम्पूर्ण इति** । "सर्वं पूर्णमिहोच्यते" इति वचनात्, "सर्वं समस्तं विश्वं च अनन्तं पूर्णमेव च" (गी.भा. ११.१६) इत्येकादशाध्याये भाष्यमाणत्वाच्चेति भावः ॥ ३७ ॥

*गीताक्षरार्थस्तु*— काममूलत्वात् सर्वेषां स एव बलवान् प्रवर्तक इति भगवानुवाच **काम इति**। यस्त्वया पुरुषस्य पापे प्रवर्तकः पृष्टः स **एष काम** एव। **क्रोधः** अप्युपचारेण **एष** एव। तज्जन्यत्वात्। ननु ज्ञानभक्त्यादिकामस्य मोक्षकामस्य च पापहेतुत्वं कथमुच्यते ? इत्यतः कामो विशिष्यते **रज इति**। रजश्च तद्गुणश्च तस्मात् समुद्भवतीति तथा। ज्ञानादिकामस्तु नैवंविध इति भावः। **महद् अशनं** भोग्यं विषयो यस्य स तथा। **महान्** ब्रह्महत्यादिरूपः **पाप्मा** पापं यस्मात् स तथा। इह जगति महापुरुषार्थभूतमोक्षविरोधितया **वैरिणमेनं** कामं **विद्धि** जानीहि इति ॥ ३७ ॥

**गीता**

## धूमेनाव्रियते वह्निर्यथाऽऽदर्शो मलेन च।
## यथोल्बेनावृतो गर्भस्तथा तेनेदमावृतम् ॥ ३८ ॥

*वि०वि०*— कथं कामो मोक्षविरोधीत्यत आह **धूमेनेति द्वाभ्याम्**। यच्च धूमेनाग्निरावृतः प्रकाशरूपोऽप्यन्यैर्न दृश्यते, तथेदं परमात्माख्यं वस्तु तेन कामेनावृतं स्वयं प्रकाशरूपमपि अन्यैर्न दृश्यते। यथाऽऽदर्शो मलेनाऽऽवृतो मुखाद्यभिव्यक्तिहेतुर्न भवति, तथेदमन्तःकरणमावृतं जीवेश्वराभिव्यक्तिहेतुर्न भवति। यथोल्बेन गर्भवेष्टनेन गर्भ आवृतो व्यापाराक्षमः, तथेदं जीवस्वरूपं कामेनावृतं नेश्वरादिज्ञाने क्षममित्यर्थः ॥

*वा०ल०*— 'यथोल्बेनावृतो गर्भः इत्यत्र उल्बेन जरायुणा। तेन कामेन इदं जगत् ॥

*सा०सं०*— अशुभप्रेरकेषु क्रोधाद्यभिमान्यसुरेषु कामः कथं बलवानित्यत आह **धूमेने**त्यादि श्लोकद्वयेन। **वह्निर्यथा धूमेन** आव्रियते, तथा तेन कामेन **इदम्** उत्तमजीवजातं किञ्चिदावृतम्। **यथा चादर्शो** दर्पणो **मलेनावृतः, तथेदं** मध्यमजीवजातं तेन कामेनाधिकमावृतम्। **यथा** च **गर्भ उल्बेन** गर्भवेष्टनचर्मणाऽऽ**व्रियते** आच्छाद्यते, तथेदमधमजीवजातं तेन कामेनात्यन्तमावृतम्। त्रिविधस्यापि जीवजातस्य यथायोग्यं यथावत्तया परापरतत्त्वज्ञानप्रतिबन्धकः काम इत्यर्थः।

यद्वा, **इदम्** इत्यनेन ईश्वरान्तःकरणजीवाख्यं वस्तुत्रयं ग्राह्यम्। **वह्निर्यथा धूमेनाव्रियते,** तथेश्वरो जीवगतकामेनावृतः। प्रकाशरूपोऽप्यग्निर्धूमेनावृतोऽन्यैर्यथा न दृश्यते, तथेश्वरः स्वयं सर्वं जानन्नपि नान्यैर्ज्ञायत इत्यर्थः। आदर्शो मलेनेवान्तःकरणं कामेनावृतम्। यथाऽऽदर्शो मलेनावृतो मुखाद्यभिव्यक्तिहेतुर्न भवति, तथा जीवान्तःकरणं कामावृतं सदीश्वरं जीवं वा न प्रकाशयतीत्यर्थः। **यथोल्बेनावृतो गर्भ**स्तथा कामेनावृतो जीवः, उल्बेन वेष्टितो गर्भो यथा व्यापाराक्षमस्तथा जीवोऽपि कामेनावृतो नेश्वरादिज्ञाने क्षम इत्यर्थः ॥

***अ०प्र०***— कामस्य वैरित्वं दर्शयति **धूमेनेति**।

यथा[१], धूमेन[२], वह्निः[३], आव्रियते[४], यथाऽऽदर्शः[५], मलेन च आव्रियते[६], यथा गर्भः[७], उल्बेन[८], आवृतः[९], तथा[१०], तेन[११], इदं[१२], आवृतम्[१३] इत्यन्वयः।

यथा[१], वह्निः[२], धूमेन सह तेजः आव्रियते आच्छाद्यते प्रकाशरूपोऽपि अन्यैर्न दृश्यते तथेदं परमाख्यं वस्तु तेन कामेन आवृतं स्वपरज्ञमपि अन्यैः, न दृश्यते[४], यथा आदर्शः = आगन्तुकेन मलेन च आव्रियते = आच्छाद्यते मुखाद्यभिव्यक्तिहेतुर्न भवति[६], यथा गर्भः उल्बेन गर्भविष्टनचर्मणा सर्वतो निरुध्य आवृतः सङ्कुचितः स्वव्यापाराक्षमो भवति[९], तथा प्रकारत्रयेणापि[१०], तेन कामेन[११], इदं जीवस्वरूपम्[१२], आवृतं = न ईश्वरादिज्ञाने क्षममित्यर्थः, अतः कामो ज्ञादिपुमर्थविरोधीत्यर्थः ॥ ३८ ॥

**भाष्यम्**

**कथं विरोधी सः ? इदमनेनावृतम् । यथा धूमेनाग्निरावृतः प्रकाशरूपोऽप्यन्येषां न सम्यगदर्शनाय तथा परमात्मा । यथाऽऽदर्शो मलेनावृतोऽन्याभिव्यक्तिहेतुर्न भवति । तथाऽन्तःकरणं परमात्मादेर्व्यक्तिहेतुर्न भवति कामेनावृतम् । यथोल्बेनावृत्य बद्धो भवति गर्भः तथा कामेन जीवः ॥ ३८ ॥**

***प०टी०***— महाशनत्वादेः प्रत्यक्षसिद्धत्वे पुरुषार्थविरोधित्वं कामस्य कथमिति ? तत्परिहारायोत्तरश्लोकं व्याचष्टे **इदमिति** ॥

***न०टी०***—कामस्य सर्वपुरुषार्थविरोधित्वप्रदर्शनायोत्तरं श्लोकद्वयमवतार्य व्याचष्टे **कथमित्यादिना**। यतः इदम् ईश्वरादिकम् अनेनावृतं कामेन, अतोऽयं विरोधीत्यर्थः । दृष्टान्तत्रयसाफल्यं दर्शयन्नेतदेव विवृणोति **यथा धूमेनेत्यादिना**। यथाऽग्निर्देवेन सम्यक् प्रतीयमानोऽपि तज्ज्वालादि धूमेनावृतोऽन्येषामेव सम्यङ् न प्रतीयते, तथा परमात्मा स्वात्मानं सम्यक् पश्यन्नपि जीवकामावृतः तेषामेव सम्यङ् न दृश्यते । यथाऽऽदर्शे मलेनावृते प्रतिबिम्बानाविर्भावान्न बिम्ब एतादृश इति प्रदर्शकोऽसौ, तथा कामयुतेऽन्तःकरणे प्रतिबिम्बभूतजीवज्ञानानाविर्भावान्न बिम्बभूतपरमात्मनः तत्सर्वकर्तृत्वादेश्च प्रदर्शकं तद्भवति । ध्यानकाले वा प्रतिबिम्बभूतस्य भगवद्वपुषः तद्वस्त्राभरणादेश्च । यथा जरायुणाऽऽवृतो बद्ध एव भवति गर्भः, न तु परमात्मैवान्येषामेव सम्यङ् न प्रकाशते, अपि तु स्वात्मानमपि सम्यङ्नानुभवति । तथैव जीवः कामेनावृतः । केचिदेवं प्रतीयमानं जीव-

परभेदमसहमानाः 'तेनेदम्' इत्यत्रेदंशब्देनोत्तरश्लोकोक्तं ज्ञानमेव परामृश्यत इति वर्णयन्ति । तत्पक्षे कामेनैकमेव ज्ञानमावृतमिति दृष्टान्तत्रयमनुपयुक्तमयुक्तं चावरणतारतम्यप्रदर्शनम् ॥

*प्र०दी०*— ननु प्रश्नस्योत्तरं जातं, किमुत्तरेणेत्यतः श्लोकद्वयस्य सङ्गतिमाह— **कथमिति** । सः कामः । 'कथं मोक्षस्य विरोधी' इति जिज्ञासायामाह धूमेनेत्यादीति शेषः । विवक्षितार्थस्या-स्फुटत्वाद्व्याख्याति— **इदमिति** । ईश्वरान्तःकरणजीवलक्षणं वस्तुत्रयम् । केन किमिवेत्या-काङ्क्षायामाद्यपादं व्याचष्टे— **यथेति** । परमात्मा कामेनावृतः । स्वयं सर्वज्ञोऽपि अन्यैर्न ज्ञायत इति शेषः । अन्यस्य मुखादेः । परमात्मादेरित्यादिपदेन जीवो गृह्यते । बन्धापेक्षयाऽऽवरणस्य समान-कर्तृकत्वम् । बद्धः सङ्कुचितः । व्यापाराक्षम इति यावत् । उल्बो गर्भवेष्टनम् । कामेनावृतो जीवो नेश्वरादिज्ञाने क्षम इत्यर्थः ॥

*भा०दी०*— आवृत्यबद्ध इत्यत्र ल्यबन्तस्य साधुत्वनिर्वाहायाह **बन्धापेक्षायेति** ॥

*भा०र०*— 'सः' इति भाष्यपदम् अनूद्यार्थमाह **स काम इति** । 'विरोधी' इत्यनन्तरम् "इति जिज्ञासायामाह धूमेनेत्यादि" इत्यन्तं शेषः । **विवक्षितार्थस्य** कामे महापुरुषार्थविरोधित्वस्य । 'इदम्' इत्यस्य मूलस्थस्य भाष्येऽनूदितस्यार्थः **ईश्वरेत्यादि** । वस्तुत्रयं 'आवृतम्' इति भाष्येणा-न्वयः । परमात्मनः कामेन आवृतत्वे जीवस्वरूपं जीवेनेव स्वात्माऽपि स्वयं न ज्ञायेतेत्यतो भाष्ये शेषमाह **स्वयं सर्वज्ञोऽपीति** । वह्निपदोपादानमहिम्ना अग्नेः स्वप्रकाशत्वमिव भगवतोऽपि स्वप्रका-शत्वं लभ्यत इतीयमुक्तिः । 'अन्याभिव्यक्ति' इत्यत्र "अन्यस्याभिव्यक्तिः अन्याभिव्यक्तिः" इति विग्रहाश्रयणेनान्यस्येत्यस्यार्थमाह **अन्यस्य मुखादेरिति** ।

ननूल्बकर्तृकावरणस्य गर्भकर्तृकभवनेन समानकर्तृकत्वाभावात् कथं भाष्ये 'आवृत्य' इति प्रयोगः ? इत्यत आह **बन्धापेक्षयेति** । उल्बेन स्वात्मानं स्वयमावृत्य बद्धो भवति गर्भ इत्यावरणबन्धयोरवान्तरक्रिययोः स्वयमेव कर्तेति युज्यते "समानकर्तृकयोः पूर्वकाले क्त्वा" इति क्त्वाप्रत्यये ल्यबिति भावः । **उल्बो गर्भवेष्टनमिति** । "गर्भाशयो जरायुश्च पुंस्युल्बं कललो-ऽस्त्रियाम्" (अमरकोशे) इत्यत्रास्त्रियामित्यस्याऽकर्षणार्थश्चकार इति वन्दिघटीये व्याख्यानात्, "कललो जरायुरुल्बः" इति पुंस्काण्डे रत्नकोशकारवचनात्, "अथोल्बं क्लीबं स्याद् गर्भाशयोऽथ तत् पुंस्याहामरदत्तोऽस्मिन्नर्थे" इति केशववचनात्, प्रमाणवचनाच्च पुंलिङ्गप्रयोगो युक्तः । **गर्भवेष्टनं** गर्भवेष्टनचर्म । 'कामेन' इत्यनन्तरम् 'आवृतः' इति शेषो भाष्ये । 'तथा' इत्यस्यार्थो **नेश्वरे-त्यादि** ॥ ३८ ॥

**गीता**

## आवृतं ज्ञानमेतेन ज्ञानिनो नित्यवैरिणा ।
## कामरूपेण कौन्तेय दुष्पूरेणानलेन च ॥ ३९ ॥

*वि०वि०*— एवं ज्ञेयज्ञानकरणज्ञातृप्रतिबन्धकोक्त्या ज्ञानोत्पत्तिप्रतिबन्धकत्वमुक्तम् । इदानीं कथञ्चिदुत्पन्नस्यापि शास्त्राज्ञानस्यापरोक्षज्ञानजननसामर्थ्यं कामेन प्रतिबद्ध्यत इत्याह **आवृतमिति** । ज्ञानिनोऽपि ज्ञानं कामेनावृतं किमु अल्पज्ञानिनः । कामरूपेण कामाख्येन । नित्यवैरिणा । दुष्पूरेण दुःखेन हि कामः पूर्यते । न हीन्द्रादिपदं सुखेन लभ्यते । न केवलं दुष्पूरेण, किं तर्हि । यद्यपीन्द्रादिपदं प्राप्तः पुनर्ब्रह्मादिपदमिच्छतीत्यलंबुद्धिर्नास्तीत्यनलेन । उक्तं च—

'ज्ञानस्य ब्रह्मणश्चाग्नेर्धूमो बुद्धेर्मलं तथा ।
आदर्शस्याथ जीवस्य गर्भस्योल्बो हि कामकः ॥'

इति । अथवा, उत्तममध्यमाधमजीवानां कामाभिमान्यसुरेणावृतत्वं तारतम्येनेत्यत्र दृष्टान्तत्रयम् । तदुक्तम्—

'अखिलप्रेरको विष्णुर्ब्रह्माद्यास्तदनन्तराः ।
अशुभा अशुभेष्वेव कामादेरभिमानिनः ॥

तत्र कामः कालनेमिः सर्वं धूममलोल्बवत् ।
शुभमध्याधमजनं क्रमादावृत्य तिष्ठति ॥' इति ॥

*सा०सं०*— एवं ज्ञेयस्येश्वरादेर्ज्ञानकरणस्य मनसो ज्ञातुर्जीवस्य प्रतिबन्धकः काम इत्युक्त्या ज्ञानोत्पत्तिप्रतिबन्धकत्वमुक्तम् । इदानीं शास्त्रतो जातमपि ज्ञानं स्वकार्यापरोक्षज्ञानाय न प्रभवतीत्याह **आवृतमिति** । **ज्ञानिनः** शास्त्रजनितज्ञानिनोऽपि । **ज्ञानं** कामावृतं भगवदपरोक्षज्ञानाय न प्रभवति । किमु गुरूपदेशमात्रजज्ञानवत इति सूचनाय **'ज्ञानिनः'** इत्युक्तम् । अन्यथा ज्ञानस्य ज्ञानिसम्बन्धाव्यभिचारात् 'ज्ञानिनः' इत्युक्तिर्व्यर्था स्यात् । केनावृतं ज्ञानमित्यत उक्तम् **कामरूपेणेति** । रूप्यते निरूप्यते अनेनेति रूपमाख्या, काम इति रूपमाख्या यस्य तेन **कामरूपेण** कामाख्येन । **नित्यवैरिणा** सदाऽपकारिणा । **दुष्पूरेण** दुःखेन पूरयितव्येन । केवलं न दुष्पूरः । किं **त्वनलेन** । न विद्यतेऽलं तृप्तिर्यस्य सोऽनलः । तेन । महतो भोगस्य विषयस्य प्राप्तावप्यधिकेच्छयाऽलम्बुद्धिहीनेनेत्यर्थः ॥

*अ०प्र०*— **आवृतमिति ।**

हे कौन्तेय ![१], ज्ञानिनोऽपि[२], ज्ञानं[३], दुष्पूरेण[४], अनलेन च[५], कामरूपेण[६], नित्यवैरिणा[७], एतेन कामेन[८], आवृतमित्यन्वयः ।

ज्ञानिनोऽपि[२], ज्ञानं = विवेकज्ञानं[३], दूष्पूरेण = दुःखेन पूरयितुं शक्येन, दुःखेन हि कामः पूर्यते न हीन्द्रादिपदादिरूपं काम्यं सुखेन लभ्यते[४], न केवलं दुष्पूरेण किन्तु अनलेन = पूर्वमपेक्षितैश्वर्यादिप्राप्तावपि तदधिकैश्वर्यादि आकाङ्क्षा भवतीति प्रसिद्धेः अलम्बुद्धिरहितेन[५], काम-रूपेण = कामाख्येन रूप्यते अनयेति रूपं आख्यातेन कामरूपेण[६], नित्यवैरिणा[७], एतेन कामेन पूर्वमुक्तेन कामेन इदं विवेकज्ञानं[८], आवृतमित्यन्वयप्रकारेणार्थः ।

अज्ञस्य खलु भोगसमये कामो दुःखहेतुरेव परिणामे तु वैरितां प्रपद्यते । ज्ञानिनः पुनस्तान् कालमप्यनर्थानुसन्धानात् दुःखहेतुरेवेति नित्यवैरिणेत्युक्तम् । किञ्च विषयैः पूर्यमाणोऽपि योगः दुष्पूरः आपूर्यमाणस्तु शोकसन्तापहेतुत्वादनलतुल्यः । अनेन सर्वान् प्रति नित्यवैरित्वमुक्तम् ॥

**भाष्यम्**

**शास्त्रतो जातमपि ज्ञानं परमात्माऽपरोक्ष्याय न प्रकाशते कामेनावृतं ज्ञानिनोऽपि । किमु अल्पज्ञानिनः ? कामरूपेण कामाख्येन नित्यवैरिणा । दुष्पूरेण । दुःखेन हि कामः पूर्यते । न हीन्द्रादिपदं सुखेन लभ्यते । यद्यपीन्द्रादिपदं प्राप्तं पुनर्ब्रह्मादिपदमिच्छतीत्यलम्बुद्धिर्नास्तीत्यनलः । उक्तं च— "ज्ञानस्य ब्रह्मणश्चाग्नेर्धूमो बुद्धेर्मलं तथा । आदर्शस्याथ जीवस्य गर्भस्योल्बो हि कामकः ॥" इति ॥ ३९ ॥**

*प०टी०*— ज्ञानप्रतिबन्धकश्चेत् कामः, तर्ह्युत्पन्नापरोक्षज्ञानानां च तेन बाध इत्याशङ्क्य, उत्तरश्लोकं व्याचष्टे **शास्त्रत इति** । ज्ञानिन एव न तु मूर्खस्येति यद्व्याख्यानं तत्प्रतीतिविरुद्ध-मित्यभिप्रायेण 'ज्ञानि'पदकृत्यमाह **ज्ञानिनोऽपीति** । अल्पज्ञानी लोकप्रवादोत्पन्नज्ञानः । कामितवद्रूपं यस्येति भ्रान्तिर्मा भूदित्याह **कामेति** । 'वैरिणम्' इत्युक्तवैचित्र्यमेवानूद्यते । अतो न पौनरुक्त्यमिति भावः । यं विषयं कामयति तेन तत्पूरणं कृत्वा ज्ञानसाधनसम्भवात् कथं नित्यवैरित्वम् ? इत्यत आह **दुष्पूरेणेति** । सुखेन कामपूरणं दृश्यत इत्यत आह **न हीति** । दुःखेनापि कामं प्रपूर्य ज्ञानं सम्भवतीत्यत आह **यद्यपीति** । हिरण्यकादिविषयमेतत् । 'धूमेनाव्रियते' इत्युक्तार्थे प्रमाणमाह **उक्तं चेति** । कामः ब्रह्माख्याग्नेः धूमः, बुद्धेरादर्शस्य मलम्, जीवाख्यगर्भस्योल्ब इत्यर्थः ।

***न०टी०*** — अतो न केवलं ज्ञानोत्पत्तिप्रतिबन्धकृत् कामः किन्तूत्पन्नज्ञानतिरस्कृदपीति भावेनोत्तरश्लोकं व्याचष्टे **शास्त्रत इति** । ज्ञानपदं किमर्थमिति चेत्, कैमुत्यनयप्रदर्शनार्थमिति ब्रूमः । कामनिरोधे हि द्विधा ज्ञानमुत्पद्यते । कस्यचिन्महालोके प्रवादात्, अस्ति विष्णुः सर्वेश इति श्रद्धासहितः । अन्यस्य तदपि शास्त्राद्विपुलीकृतम् । स एव ज्ञानीत्युच्यते लोके, नेतरः । तत्र कामावृतत्वे ज्ञानीत्युक्तस्य शास्त्रविपुलीकृतज्ञानमपि न हर्यपरोक्षापादकं किम्वितरस्याल्पज्ञानिनः ? लोकप्रवादमात्रजातमल्पज्ञानमित्यर्थः । अत्र कैमुत्यन्यायप्रदर्शनेन 'ज्ञानिन एव नित्यवैरिणा न मूर्खस्य' इति यदन्यथावर्णनं तदपि कैमुत्यन्यायपराहतमिति सूचयति । यः कामः कामं तिरस्कृत्य मुच्यमानस्य ज्ञानिनोऽपि नित्यवैरीत्युच्यते, किमुतासौ स्वभावमग्नस्य मूर्खस्य नित्यवैरीति । न चायं मम वैरीति मूर्खेणादाविदिते न तस्य नित्यवैरी कामः । न हि रोगिणां ममायं वैरीत्यविदितो चित्तस्य तात्कालिकेष्टापथ्यदो नावैरीत्युच्यते । कामो हि देवविशेषः एकः । जीवेच्छाऽपि द्विविधा मनोरूपाऽऽत्मरूपा च । न चैतत्त्रितयान्यतमरूपोऽयं प्रकृतः कामः । किन्तु स्वयं चान्यः कामाख्य इति भावेनाह **कामरूपेण कामाख्येनेति** । स च कालनेमिरिति सप्रमाणकमुक्तमन्यत्र । तत्कथम् ? इत्याकाङ्क्षायामाह **नित्यवैरिणेति** । न ह्येते त्रयः कैवल्यादिभाजां नित्यवैरिण इति भावः । ननु वैरिणमपि कामं काम्येन पूरयित्वा मोक्षाय यतेत, को विरोधः ? इत्याशङ्कापरिहारायोत्तरपदनूद्य व्याचष्टे **दुष्पूरेणेत्यादिना** । ननु सुखेनापि कामं पूरयन्तो दृश्यन्ते । अतः कथं दुष्पूरः ? इत्यत आह **न हीति** । नन्विन्द्रादिपदयोग्यानां स्वस्वपदकामस्य मुक्त्यविरोधित्वात्, दुःखेनापि तल्लाभे कथं कामस्य वैरित्वम् ? अयोग्यानां तु दुःखेनापि न लभ्यते । अतः कथमिदमुदाह्रियते ? उच्यते । अयोग्यानामेव हिरण्यकादीनां बलादिन्द्रपदलाभदर्शनात् । ननु दुर्लब्धेनापीन्द्रादिपदेन कामं पूरयित्वा मुक्तये यततां कामः किं करिष्यति ? इत्याशङ्कापरिहारत्वेनोत्तरं पदं व्याचष्टे **यद्यपीति** । न केवलं दृष्टान्तत्रयानुगुण्यात् दार्ष्टान्तिकेऽल्पाप्रियमाणभेदो युक्तिमात्रात्, किन्त्वागमादपीत्याह **उक्तं चेति** । ज्ञानाख्याग्नेर्ब्रह्माख्याग्नेश्चावरणे धूमवद्धूमः कामः । बुध्याख्यादर्शस्य मलवन्मलः कामः । जीवाख्यगर्भस्योल्बेव इति ज्ञातव्यम् । कप्रत्यः कुत्सनेन ॥

***प्र०दी०*** — एवं ज्ञेयज्ञानकारणज्ञातृप्रतिबन्धकत्वोक्त्या ज्ञानप्रतिबन्धकत्वमुक्तम् । 'आवृतं ज्ञानं' इत्यनेन पुनः किमुच्यत इत्यत आह— **शास्त्रत इति** । पूर्वं ज्ञानोत्पत्तिप्रतिबन्धकत्वमुक्तम् । इदानीं तु कथञ्चिज्जातमपि ज्ञानं न स्वकार्याय प्रभवतीत्युच्यते । अतो न पुनरुक्तिदोष इति भावः । 'कामकारेण चैक' इति वचनादपरोक्षज्ञानस्य मोक्षसाधने न केनापि प्रतिबन्ध इत्यत उक्तं— **शास्त्रत इति । परमात्माऽपरोक्ष्यायेति च** । न प्रकाशते न प्रभवति । 'ज्ञानिन' इति

व्यर्थम् । ज्ञानस्य ज्ञानिसम्बन्धाव्यभिचारादित्यत आह— **ज्ञानिनोऽपीति** । शास्त्रजनितज्ञानवतोऽपि । अल्पज्ञानिनः गुरूपदेशमात्रजनितज्ञानवतः । अपरे तु ज्ञानिनो नित्यवैरिणा । न मूर्खस्य । ज्ञानी हि नाशयिष्यामि काममिति यतते । मूर्खस्तु तमनुवर्तते इति वर्णयन्ति । तदनेनैव निरस्तम् । अपकारित्वं खल्वत्र वैरित्वं विवक्षितम् । तच्च ज्ञान्यपेक्षया मूर्खेऽधिकम् । न हि मूर्खस्तन्नानुसन्धत्त इत्येतावता तन्नास्ति । इच्छानुरूपं रूपं यस्यासौ कामरूप इत्युच्यते । न चैतत्कामेऽन्तःकरणधर्मे सम्भवतीत्यत आह— **कामेति** । रूप्यतेऽनयेति रूपमाख्याऽत्र विवक्षितेत्यर्थः । तर्हि विशेषणपदमिदं जातम् । किमस्य विशेष्यमित्यत आह— **नित्येति** । यो न पूरयितुं शक्यः स दुष्पूरः । कामस्तु विषयसम्पादनेन पूरयितुं शक्यः कथं दुष्पूर इत्यतोऽन्यथा व्याचष्टे— **दुष्पूरेणेति** । न नञर्थे दुश्शब्दः । किन्तु कृच्छ्रार्थ इत्यर्थः । तदुपपादयति— **न हीति** । कामविषयोपलक्षणमेतत् । ननु प्रज्वलनात्मकत्वात्क्रोधोऽनलो युक्तः । कामस्तु कथमनल इत्यतः सोपपत्तिकमन्यथा व्याचष्टे— **यद्यपीति** । इदमपि प्राप्तादाधिक्यस्योपलक्षणम् । श्लोकद्वयार्थे प्रमाणसम्मतिमाह **उक्तं चेति** । कामकः कुत्सितः कामः । ज्ञानस्य ब्रह्मणश्चाग्नेर्धूमः । तथा बुद्धेरन्तःकरणस्य । आदर्शस्य मलम् । अथ जीवस्य गर्भस्योल्ब इति सर्वत्र गूढोपमा । एतेनेदमित्युक्तस्य विवरणं द्वितीयश्लोक इति व्याख्यानमपाकृतं भवति ॥

*भा०दी०*— **इति वचनादिति** । ज्ञानपादे कामचारोऽप्यपरोक्षज्ञानिनोऽस्त्येव मोक्षप्रतिपादकसूत्रवचनादित्यर्थः । **मूर्खस्येति** । ज्ञानहीनस्येत्यर्थः । **अनेन इति** । ज्ञानिनोऽपीत्यादिकथनेनेत्यर्थः । कामो ज्ञानस्य ब्रह्मणश्चेति अग्नेर्धूम इति यथेति शेषः । बुद्धेरित्यनुवादोऽन्तःकरणस्येति व्याख्या । तथापदेन काम इत्यनुषज्यते । आदर्शस्य मलमिति यथेत्यत्रापि शेषः । उलबमित्यनन्तरमपि यथेति ध्येयम् । अत एवाह **सर्वत्र गूढोपमेति** । **एतेनेति** । ज्ञानिनोऽपीत्यादिकथनेन प्रमाणकथनेनेति वार्थः ॥

*भा०र०*— उत्तरश्लोकं सङ्गमयितुं वृत्तमनुवदति **एवमिति** । ज्ञेयं च ज्ञानकारणं च ज्ञाता चेति विग्रहः । **ज्ञेयं** भगवत्स्वरूपं, **ज्ञानकारणम्** अन्तःकरणं **ज्ञाता** जीव इति विवेकः । **पूर्वं** 'धूमेन' इति श्लोके । **अतः** विषयभेदात् । **इति वचनादिति** । न असत्प्रवृत्त्या कुण्ठितत्वेन ज्ञानस्य मोक्षसाधनत्वाभावः प्रसज्यते । यतो यथेष्टाचारेणापि ज्ञानिनो मोक्षमेके शाखिनः पठन्तीति सूत्रवचनाद् अपरोक्षज्ञानस्य मोक्षनिष्पादनेऽसत्प्रवृत्त्यादिना केनापि प्रतिबन्धो नास्तीत्यावेदनेन अत्र कथं कामेन प्रतिहतस्य स्वकार्याक्षमत्वमुच्यत इति शङ्काऽर्थः । **इति चेति** । उत्पन्नमपि ज्ञानं स्वकार्याक्षममित्युक्ते ज्ञानशब्देन शास्त्रजनितापरोक्षज्ञानमेवाभिप्रेतम् । 'स्वकार्य' इत्यत्रापि

कार्यशब्देन अपरोक्षज्ञानमेव विवक्षितमिति नोक्तसूत्रविरोध इति भावः । प्रकाशरूपं ज्ञानं प्रकाशत इत्ययुक्तमित्यतो व्याचष्टे **न प्रभवतीति** । न समर्थं भवतीत्यर्थः । **व्यर्थमिति** । "सम्भवव्यभिचाराभ्यां स्याद् विशेषणमर्थवत्" इति वचनादिति भावः । 'ज्ञानिनः' इति 'अल्पज्ञानिनः' इति च को विवक्ष्यत इति न ज्ञायते । अतः पदद्वयविवक्षितार्थं दर्शयति **शास्त्रेति** । शास्त्रश्रवणमननावृत्तिजनितज्ञानसम्पन्नस्येत्यर्थः । **गुरूपदेशमात्रेति** । श्रवणमात्रजनितज्ञानवत इत्यर्थः । श्रवणादिरूपः "विष्णुः सर्वेश्वर इति योऽयं सद्गुरूपदेशः" स उच्यते । गुरूपदेशमात्रमिति **केचित्** । लोकप्रवादमात्रजनितं ज्ञानमल्पज्ञानम् । तद्वत् इति तु **प्राचीनटीका** । अल्पज्ञानी लोकप्रवादोत्पन्नज्ञान इति **भावप्रदीपिका च** ।

**सङ्कर**भाष्यमर्थतोऽनुवदति **अपरे त्वित्यादि** । **न मूर्खस्य** अज्ञानिनः । **अनेन** कैमुत्यार्थत्ववर्णनेन । **अपकारित्वं** पुरुषार्थविरोधित्वम् । **ज्ञान्यपेक्षयेति** ।

"यैर्निश्चितं परत्वं तु विष्णोः प्रायो न वेदनाम् ।
ब्रह्महत्यादिभिरपि यान्त्याधिक्ये चिरं न तु ॥",
"मूर्खाः शूद्रसमा मताः",
"तेषामज्ञानजो दोषः सुमहान्"

इत्यादिवचनादिति भावः । ननु ज्ञानी "अनेनाहमनर्थे प्रयुक्तः" इत्यनुसन्धत्ते । मूर्खस्तु कामं मित्रमिव पश्यंस्तथा नानुसन्धत्त इति कथं तं प्रत्यधिकवैरी ? इत्यत आह **न हीति** । **तत्** अपकारित्वम् । 'कामरूपेण' इत्यत्र काम इच्छा तस्य रूपमिव रूपं यस्येत्यभिप्रेत्य तत्तात्पर्यमाह **इच्छाऽनुरूपमिति** । **एतद्** उक्तविधं कामरूपत्वम् । स्वरूपकामे मुक्तिदशायां सम्भवतीत्यत उक्तम् **अन्तःकरणधर्मे काम इति** । **रूप्यत इति** । करणे घञ्प्रत्यये रूपशब्देनात्र आख्या विवक्षिता । न पुनः स्वरूपमित्यर्थः । **न नञर्थ इति** । दुर्यवनं दुश्शकटमित्यादौ नञर्थेऽभावे दुश्शब्दप्रयोगदर्शनादिति भावः । कृच्छ्रार्थ इति वदन् "इषद्दुस्सुषु कृच्छ्राकृच्छ्रार्थेषु खल्" इति खल्प्रत्यय इत्यभिप्रैति । **तत्** कृच्छ्रेण पूर्यमाणत्वम् । कामविषयमात्रस्य प्रस्तुतत्वादाह **कामेति** । **एतत्** इन्द्रादिपदम् ।

नन्विन्द्रादिपदयोग्यानां स्वस्वपदकामो मुक्त्यविरोधीति दुःखेनापि तल्लाभे कथं कामस्य वैरित्वम् ? अयोग्यानां तु दुःखेनापि न तल्लभ्यत इति कथमिदमुदाह्रियते ? उच्यते— अयोग्यानामेव हिरण्यकादीनां बलाद् इन्द्रादिपदलाभः पुराणादिषु श्रुत इति तद्विषयमेवेदं वाक्यमिति **नरहरितीर्थश्रीमच्चरणाः** । **इदमपि** ब्रह्मादिपदमपि । "हिरण्यकादिविषयमेतत्" इति च **भाव-**

**प्रकाशिका । प्राचीनटीकायां** 'यद्यपि' इति भाष्यं दुर्लभेनापीन्द्रादिपदेन कामं पूरयित्वा मोक्षाय यतने कामः किं करिष्यति ? इत्याशङ्कापरिहारत्वेनोत्तरं पदं व्याचष्ट इत्यवतारितम् । यद्यपि दुःखेनेन्द्रादिपदं प्राप्तम् । तथाऽपि ततोऽधिकमिच्छति, न पुनरलम्बुद्धिमान् भवति कामीति न तस्य मोक्षयत्नो घटत इति तत्र भाष्यार्थो ज्ञातव्यः । 'अलम्' इति पर्याप्तिवाचि मान्तमव्ययम् । तस्माद् "अलमस्या अस्ति" इत्यर्थेऽर्शआद्यचि "अव्ययानां भमात्रे टिलोपः" षष्ठ्यर्थश्च विषयत्वम् । तेन अला = पर्याप्तिविषयबुद्धिरिति लभ्यते । ततो नञा बहुव्रीहौ 'अनलः' इति भाष्यं व्याख्येयम् । तेन 'कथमकारान्तत्वम्' इति निरस्तम् ।

कुत्सित इति वदन् 'कुत्सिते' (पा.सू.) इति कामशब्दात् कन्प्रत्यय इत्याचष्टे ।

'बुद्धेः' इत्यनुवादः । 'अन्तःकरणस्य' इति व्याख्या । तथाऽन्तःकरणमिति भाषणादिति भावः । **सर्वत्रेति** । अग्नेर्धूमो यथा, आदर्शस्य मलं यथा, गर्भस्योल्बो यथा, तथा ज्ञानस्य, ब्रह्मणः, अन्तःकरणस्य, जीवस्य च, काम आवरणमिति यथातथाशब्दाभावेऽपि तदर्थस्य गूढाभिप्रायगोचरत्वाद् **गूढोपमा** वाचकादिलुप्तोपमेत्यर्थः ।

**एतेन** प्रमाणोदाहरणेन । **इदमित्युक्तस्य** "तथा तेनेदमावृतम्" इत्यत्रेदंशब्देनोक्तस्य । **अपाकृतमिति** । कामेन ज्ञानमावृतमित्युक्त्यैव विवक्षितार्थलाभेन दृष्टान्तत्रयानुपयोगात्, आवरण-तारतम्यकथनायोगात्, प्रमाणे ब्रह्मादेरावृतत्ववर्णनायोगाच्चेति भावः ॥ ३९ ॥

**गीताश्लोकद्वयाक्षरार्थस्तु**— कामः कथं मोक्षविरोधीति जिज्ञासायामुच्यते **धूमेनेति । तेन** कामेन । **इदं** ईश्वर-अन्तःकरण-जीवलक्षणवस्तुत्रयम् ॥ ३८ ॥

पूर्वं ज्ञानोत्पत्तिप्रतिबन्धकत्वमुक्तं कामस्य । इदानीं तु कथञ्चित् शास्त्रश्रवणमननजनितमपि ज्ञानं कामोपहतं चेत्, नापरोक्षज्ञानरूपस्वकार्याय प्रभवतीत्युच्यते **आवृतमिति** । ज्ञानस्य ज्ञानि-सम्बन्धाव्यभिचारेऽपि 'ज्ञानिनः' इति वचनं शास्त्रजनितज्ञानवतोऽपि ज्ञानं कामावृतं चेत्, न स्वकार्यक्षमं, किमु वक्तव्यं गुरूपदेशमात्रजनितज्ञानवतः कार्यं प्रतिबध्नातीति कैमुत्यद्योतनार्थम् । एतच्छब्दार्थविवरणम् **कामरूपेण वैरिणेति** । कामाख्येन वैरिणा । **दुष्पूरेण** दुःखेन पूरणीयेन । नास्त्यलम्बुद्धिरनेन इति **अनलस्तेन** इति ॥ ३९ ॥

**गीता**

**इन्द्रियाणि मनोबुद्धिरस्याधिष्ठानमुच्यते ।**
**एतैर्विमोहयत्येषः ज्ञानमावृत्य देहिनम् ॥ ४० ॥**

*वि०वि०*— वधार्थं तत्र शत्रोः अधिष्ठानमाह **इन्द्रियाणीति** । इन्द्रियादीनि कामस्याधिष्ठानम् । एतैर्हि एष कामो ज्ञानमावृत्य देहिनं विमोहयति ॥

***सा०सं०***— यदर्थमर्जुनेन पापप्रवर्तकेषु बलवान् पृष्टोत्तरितश्च । तस्य बलवतः कामस्य शत्रोर्वधार्थमधिष्ठानमाह **इन्द्रियाणीति** । **अस्य** कामाख्यशत्रोः । **इन्द्रियाणि** चक्षुरादीनि, **मनो बुद्धिश्चाधिष्ठानम्** । प्राधान्यज्ञापनाय मनोबुद्ध्योः पृथगुक्तिः । अधिष्ठानतां व्यनक्ति **एतैरिति** । **एतैर्म**नोबुद्धीन्द्रियैर्विषयसंसृष्टैः । **एष** कामाख्यशत्रुः । **ज्ञानमावृत्य** ज्ञानजन्म प्रतिबध्येति वा, जातमपि ज्ञानं कार्याक्षमं कृत्वेति वाऽर्थः । **देहिनं** जीवम् । **विमोहयति** ॥

***अ०प्र०***— इदानीं तस्याधिष्ठानं कथयन् जयोपायमाह **इन्द्रियाणीति** द्वाभ्याम् ।

(हे भरतर्षभेत्युत्तरेण ।) यस्मादेषः कामः[१], एतैः[२], ज्ञानं[३], आवृत्य[४], देहिनम्[५], विमोहयति[६], तस्मादिन्द्रियाणि[७], मनः[८], बुद्धिश्च[९], अस्य[१०], अधिष्ठानं[११], उच्यते इत्यन्वयः ।

(हे भरतर्षभ !,) यस्मात् एषः कामः एतैः = इन्द्रियादि त्रिभिः दर्शनादिव्यापारवद्भिः स्वाश्रयभूतैः[२], ज्ञानं आवृत्य = विवेकज्ञानमावृत्य[४], देहिनम् = देहाभिमानिनं जीवं[५], विमोहयति[६], तस्मात् इन्द्रियाणि = विषयदर्शनश्रवणादिसमर्थानि[७], मनः = सङ्कल्पात्मकम्[८], बुद्धिः = अध्यवसायात्मिका बुद्धिश्च[९], अस्य अधिष्ठानं उच्यते । तत्कथम् ? एतत्त्रयमित्युक्ते विषयदर्शनश्रवणादिभिः सङ्कल्पेन च अध्यवसायेन च कामस्याविर्भावात्, इन्द्रियाणि च मनश्च बुद्धिश्च एतत्त्रयं अस्य कामस्य[१०], अधिष्ठानं आश्रयस्थानम्[११], उच्यते[१२], अर्जुनेन बलवान् शत्रुः पृष्टः तद्बोधार्थं शत्रोरधिष्ठानमुक्तमित्यर्थः ॥ ४० ॥

**भाष्यम्**

**वधार्थं शत्रोरधिष्ठानमाह— इन्द्रियाणीति । एतैर्ज्ञानमावृत्य बुद्ध्यादिभिर्हि विषयैः ज्ञानमावृतं भवति ॥ ४० ॥**

***प०टी०***— तत्पूरणेन तद्विरोधित्वं चेन्न परिह्रियते । कथं तर्हि तद्विरोधित्वपरिहारः ? इत्याशङ्क्य, उत्तरत्वेनोत्तरश्लोकमवतारयति **वधार्थमिति** । हन्तव्य एवाधिष्ठाननियमनेनेत्यर्थः । ज्ञानमावृत्यान्येनैतैर्विमोहयतीति मा भूदित्याह **एतैरिति** । कथमेतैर्ज्ञानावरणम् ? इत्यत आह **बुद्ध्यादिभिरिति** ॥

***न०टी०***—नन्नु पापप्रेरक एव पृष्टो न तदधिष्ठानम् । अतः किमर्थं तदुच्यते ? इत्याशङ्कां परिहरन्नुत्तरश्लोकमवतार्य व्याचष्टे **वधार्थमिति** । एतैर्विमोहयत्यन्येन ज्ञानमावृत्येति प्रतीतिर्मा भूदित्याह **एतैरिति** । कथमेतैर्ज्ञानावरणमित्यत आह **बुद्ध्यादिभिरिति** ॥

***प्र०दी०***— 'इन्द्रियाणि' इत्यादिकमपृष्टं किमर्थमुच्यत इत्यत आह— **वधार्थमिति** । एतदर्थमेव ह्यर्जुनेन बलवान् पृष्टः । क्रियाद्वयश्रवणात्कं प्रतीन्द्रियादीनां करणत्वमिति न प्रतीयते । सन्निधानाद्विमोहनं प्रतीत्यन्यथा च प्रतीयते । अत आह— **एतैरिति** । तदुपपादयति— **बुद्ध्या-दिभिरिति** । इन्द्रियादित्वेन उक्तानामपि बुद्ध्यादित्वेन ग्रहणं प्राधान्यक्रमज्ञापनार्थम् ॥

***भा०र०***— **एतदर्थमेव** वधार्थमेव । **क्रियाद्वयेति** । विमोहन-आवरणरूपक्रियाद्वयेत्यर्थः । अप्रतिपत्तिं व्याख्यानबीजम् अभिधाय, अन्यथाप्रतिपत्तिं च तद्बीजमाह **सन्निधानादिति** । **तद्** 'एतैर्ज्ञानमावृत्य' इत्युक्तम् उपपादयतीति इत्यर्थः । 'इन्द्रियाणि' इति मूल इन्द्रियाणामादित्वावगमाद् भाष्ये कथं 'बुद्ध्यादिभिः' इत्युच्यते ? इत्यतस्तात्पर्यमाह **इन्द्रियादित्वेनेति** । **प्राधान्येति** । "बुद्धिर्मन इन्द्रियाणि" इत्येवं प्राधान्यज्ञापनार्थमित्यर्थः ।

***गीताक्षरार्थस्तु***— यः कामः पापप्रवर्तकेषु बलवान् भगवतोक्तः तस्य शत्रोर्निग्रहायाधिष्ठान-मुच्यते **इन्द्रियाणीति** । **बुद्धिर्मन इन्द्रियाणि च अस्य** पापप्रवर्तकस्य कामस्य **अधिष्ठानम्** आश्रय **उच्यते** । **एतैः** हि **एष** कामो **ज्ञानमावृत्य** ज्ञानजन्म प्रतिबध्य उत्पन्नं च ज्ञानं कार्याक्षमं कृत्वा **देहिनं विमोहयति** इति ॥ ४० ॥

**गीता**

## तस्मात्त्वमिन्द्रियाण्यादौ नियम्य भरतर्षभ ।
## पाप्मानं प्रजहि ह्येनं ज्ञानविज्ञाननाशनम् ॥ ४१ ॥

***वि०वि०***— हताधिष्ठानस्य शत्रोर्नाश्यत्वात् कामहनने इन्द्रियनिग्रह उपाय इत्याह **तस्मादिति** ॥

***वा०ल०***— 'पाप्मानं प्रजहि' इत्यत्र एनं सुहृत्सु रागापरपर्यायं कामम् ॥

***सा०सं०***— **हि** यस्मात् । हे **भरतर्षभ** । **त्वमिन्द्रियाण्यादौ नियम्य** विषयसङ्गता-न्यकृत्वा, सङ्गतत्वे वा मनोबुद्ध्योर्विषयस्पर्शमकृत्वा तयोर्विषयसंस्पर्शेऽपि क्षोभमप्राप्येति वाऽर्थः ।

ज्ञानविज्ञानयोर्नाशनं यस्मात् **पाप्मानं** पापहेतुम् । **एनं कामम्** । **प्रजहि** हतं कुरु । हृताधिष्ठानो हि शत्रुर्नाशयितुं शक्य इति प्रसिद्धिद्योतको हिशब्दः । इन्द्रियजयः कामहननोपाय इति भावः ॥

***अ०प्र०***— यस्मादेवं, तस्मादिति । हृताधिष्ठानस्य शत्रोः नाशस्य सौलभ्यात् कामहननेन्द्रियनिग्रहः उपायः इत्याह **तस्मादिति** ।

हे भरतर्षभ ![1], तस्मात्[2], त्वम्[3], आदौ[4], इन्द्रियाणि[5], नियम्य[6], ज्ञानविज्ञाननाशनम्[7], अत एव पाप्मानम्[8], एनं हि कामशत्रुम्[10], जहि[11] ॥

हे भरतर्षभ ![1], यस्मादेवं तस्मात्[2], त्वं[3], आदौ = विमोहात्पूर्वमेव[4], इन्द्रियाणि = मनो बुद्धिश्च[5], नियम्य[6], ज्ञानविज्ञाननाशनं = आत्मविषयं शास्त्राचार्योपदेशिकं वा उपदेशमात्रजन्यं वा विज्ञानं शास्त्रीयं शास्त्रजन्यं निदिध्यासनं वा तयोर्ज्ञानविज्ञानयोर्नाशकं[7], अत एव पाप्मानं = पापरूपं[8], एनं कामशत्रुं[9], हि स्फुटं प्रजहि = घातय परित्यज[11], "विज्ञाय प्रज्ञां कुर्वीतेति" श्रुतेः ॥ ४१ ॥

**भाष्यम्**

## हृताधिष्ठानो हि शत्रुर्नश्यति ॥ ४१ ॥

***प्र०दी०***— तस्मात्त्वमितीन्द्रियाणां निग्रहः कामहननोपायतयोपदिश्यते— **हृतेति** । नश्यति नाशयितुं शक्यो भवति ॥

***प०टी०***— नन्विन्द्रियनियमनेन कथं पाप्मनोऽस्य वध उच्यते 'तस्मात्' इत्यनेन ? इत्यत आह **हृतेति** ॥

***न०टी०***—यत इन्द्रियाण्यधिष्ठानानि तस्य, अतस्तानि नियम्य, तं जहीतीन्द्रियनियमनस्य तद्वधहेतुत्वमुच्यते । तत्कथम् ? इत्यत आह **हृताधिष्ठानो हीति** ॥

***भा०उ०***— अधिष्ठानानाम् आहृतिमात्रेण शत्रुनाशे तन्नाशोपायतया वक्ष्यमाणज्ञानाख्यायुधोपदेशवैयर्थ्यम् इत्यतो 'नश्यति' इत्यस्य तात्पर्यमाह **नश्यति नाशयितुं शक्यो भवतीति** ॥

***गीताक्षरार्थस्तु***— यस्मादेवं विमोहयति कामः **तस्मात् पाप्मानं** ब्रह्महत्यादिपापहेतुं **ज्ञानं** गुरूपदेशमात्रजनितं **विज्ञानं** शास्त्रजनितं ज्ञानं च नाशयतीति कर्तरि ल्युः ल्युड् वा । ज्ञानविज्ञानयोर्नाशनं नाशो यस्मादिति बहुव्रीहिर्वा । तम् **एनम्** अन्वादेश एनादेशः । **कामं प्रजहि** परित्यज्य । हृताधिष्ठानो हि शत्रुर्नाशयितुं शक्यो भवतीत्युपपत्तिसूचको हिशब्द इति **स्वामिनः** । इन्द्रियजयः कामहननोपाय इति ॥ ४१ ॥

**गीतातात्पर्यनिर्णयः**

**''अखिलप्रेरको विष्णुर्ब्रह्माद्यास्तदवान्तराः ।**
**असुरा अशुभेष्वेव कामादेरभिमानिनः ।**
**तत्र कामः कालनेमिः सर्वं धूममलोल्बवत् ।**
**शुभमध्याधमजनं क्रमादावृत्य तिष्ठति ।**
**महाशनस्य तस्येदं नालं तेनानलोऽग्निवत् ।**
**भुञ्जान इन्द्रियाविष्टो ज्ञानास्त्रेणैव दह्यते ॥'' —इति ब्रह्मतर्के ।**

***न्या०दी०***— ''काम एषः'' इत्यादिपरिहारवाक्यं उक्तार्थेऽपि संवादरूपस्मृत्यैव व्याचष्टे **अखिलेति** ॥ **तत्रेति** 'कामः' इत्यस्य व्याख्यानम् । कामः प्रबल इति योज्यम् । 'अशुभेषु' इत्यनेनैव 'वैरिणम्' इत्येतद्व्याख्यातं भवति । कथं कामोऽशुभप्रेरकेषु प्रबल इत्यत आह **सर्वमिति** ॥ अग्न्यादर्शगर्भान् यथा धूमाद्यावृणोति तथेत्यर्थः ॥ **क्रमादिति** । शुभजनं धूमोऽग्निमिव किञ्चिदावृणोतीत्यादि द्रष्टव्यम् । कामश्च तदपेक्षितं दत्त्वा जेतव्य इत्यत आह **महाशनस्येति** ॥ महदपि दीयतामित्यत आह **तस्येति** ॥ अनेन 'धूमेन' इत्यादि व्याख्यातं भवति । तर्हि कथं जेतव्य इत्यतस्तदधिष्ठानं तावदाह **भुञ्जान इति** ॥ एतेन 'इन्द्रियाणि' इत्यस्यार्थ उक्तो भवति ।

***भा०दी०***— **उक्तार्थेऽपीति** । परमेश्वरादित्याद्युक्तार्थेऽपीत्यपिशब्दः । श्लोकव्याख्यानसमुच्चयेऽपिशब्दः ॥ **काम इत्यस्येति** । परिहारश्लोकस्येत्यर्थः । **इत्यादीति** । आदिशब्दाद्दर्पणे मलं कल्मषं यथाऽधिकमावृणोति अधमं जनं गर्भमुल्बमिव अत्यन्तमावृणोतीति द्रष्टव्यमित्यर्थः ।

**गीतातात्पर्यनिर्णयः**

**ज्ञानावरणरूपेणेदमावृणोतीत्यावृतं ज्ञानमिति पुनराह । न केवलं दुष्पूरो नालमिति मन्यते चेत्यनलः ।**

**''अग्नेरप्यनलः कामो यन्नालमिति मन्यते ॥'' इति च ॥ ३७ - ४१ ॥**

***न्या०दी०***— अस्त्विदमधिष्ठानं, किमायुधं तद्वधायेत्यत आह **ज्ञानेति** ॥ अनेन 'इन्द्रियाणि' इत्यादेस्तात्पर्यमुक्तं भवति । ननु 'धूमेन' इति कामस्य सर्वावरणत्वमुक्तं, तत्पुनः किमर्थम् 'आवृतं' इत्युच्यत इत्यत आह **ज्ञानेति** ॥ पूर्वं ज्ञानोत्पत्तिप्रतिबन्धकत्वेनाऽवरणत्वं कामस्योक्तम्, इदानीं तूत्पन्नज्ञानस्यापरोक्षज्ञानसाधनत्वप्रतिबन्धकतया आवरणत्वमुच्यते । अतो न पौनरुक्त्यमिति

भावः । 'दुष्पूरेणानलेन' इति पुनरुक्तमित्यत आह **न केवलमिति** ।। कामो नालमिति मन्यते चेति कुत इत्यत आह **अग्नेरिति** ।।

*भा०दी०*— **इन्द्रियाणीत्यादेरिति** । इत्यादेः श्लोकद्वयस्येत्यर्थः ।।

**गीता**

## इन्द्रियाणि पराण्याहुरिन्द्रियेभ्यः परं मनः ।
## मनसस्तु परा बुद्धिर्यो बुद्धेः परतस्तु सः ।। ४२ ।।

*वि०वि०*— शत्रुहनने आयुधरूपं ज्ञानं वक्तुं ज्ञेयमाह **इन्द्रियाणीति** । शारीरात् इन्द्रियाणि पराणि उत्कृष्टानि । न केवलं बुद्धेः परः, किन्तु; 'अव्यक्तात्पुरुषः पर' इति श्रुत्युक्तप्रकारेणाव्यक्तादपि परः ।।

*वा०ल०*— इन्द्रियाभिमानिदेवानां यथायोग्यमुत्तमज्ञाने, सर्वनियामकतया सर्वोत्तमहरेर्ज्ञाने च सन्तुष्टास्ते ज्ञाताः देवाः पुनरिन्द्रियाणि इतस्ततो न प्रचारयन्तीति भावेन देवतातारतम्यमाह **इन्द्रियाणि पराण्याहुः** इत्यादिना ।।

*सा०सं०*— शत्रुहनने आयुधरूपं ज्ञानम् 'एवं बुद्धेः' इत्युत्तरश्लोके वक्तुं ज्ञानविषयमाह **इन्द्रियाणीति** । शरीरेन्द्रियाणि **पराणि** उत्कृष्टानीत्यर्थः । 'इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः' इत्यध्याहारेण योजना ध्येया । तथा 'यो बुद्धेः परतस्तु सः' इत्यत्र 'बुद्धेरात्मा महान् परः । महतः परमव्यक्तं योऽव्यक्तात् परतस्तु सः' इत्यपि ध्येयम् । स परमात्मेत्यर्थः । 'इन्द्रियेभ्यः परा ह्यर्था' इत्यादि काठकश्रुतेः (३-१०) । अस्यार्थस्तु—

'देवेभ्य इन्द्रियात्मभ्यो ज्यायांसोऽर्थाभिमानिनः ।
सोमवित्तपसूर्यापा अश्व्यग्नीन्द्रेन्द्रसूनवः ।।
यमो दक्षश्चेन्द्रियेशाः सौपर्णी वारुणी तथा ।
उमेति चार्थमानिन्यस्तिस्रो द्विद्व्येकदेवताः ।।
मनोभिमानिनो रुद्रवीन्द्रशेषास्त्रयोऽपि तु ।
ते श्रेष्ठा अर्थाभिमानिभ्यस्तेभ्यो बुद्धिः सरस्वती ।।
तस्या ब्रह्मा महानात्मा ततोऽव्यक्ताभिधा रमा ।
तस्यास्तु पुरुषो विष्णुः पूर्णत्वान्नैव तत्समः ।।'

इत्यादि काठकभाष्यात्, तथा 'सर्वेभ्यः प्रवराः देवाः' इत्यादि तात्पर्यवाक्याच्चावसेयः ।।

*अ०प्र०*— यत्र चित्तप्रणिधानेनेन्द्रियाणि नियन्तुं शक्यन्ते तदा क्षेत्रज्ञस्वरूप-देहादिभ्यो विविच्य दर्शयति **इन्द्रियाणीति** ।

शत्रुहनने आयुधरूपं ज्ञानं वक्तुं ज्ञानस्य ज्ञेयसापेक्षत्वात् ज्ञेयमाह । हे भरतर्षभ ! इन्द्रियाणि[१], पराणि[२], आहुः[३], शेषान्वयः स्पष्टः ।

हे भरतर्षभ ! इन्द्रियाणि = अथ शरीरादिभ्यो ग्राह्येभ्यः इन्द्रियाणि[१], पराणि = श्रेष्ठानि उत्कृष्टानि वा[२], आहुः = सूक्ष्मत्वात् प्रकाशकत्वाच्च अत एतद्व्यतिरिक्तत्वमेवार्थादुक्तं भवति[३], इन्द्रियेभ्यः[४], सङ्कल्पात्मकं मनः[५], परं = श्रेष्ठं तत्प्रवर्तकत्वात्[६], तु पुनः मनसः[७], बुद्धिः = निश्चयात्मिका बुद्धिः[८], परा = श्रेष्ठा[९], यः[१०], बुद्धेः[११], परतः अस्ति[१२], सः ज्ञेयः = न केवलं ज्ञेयो हरिः बुद्धेः परत एव, किन्तु "अव्यक्तात्पुरुषः पर" इति श्रुत्युक्तप्रकारेण अव्यक्तादिपरः ॥ ४२ ॥

**भाष्यम्**

**शत्रुहनन आयुधरूपं ज्ञानं वक्तुं ज्ञेयमाह— इन्द्रियाणीति । 'असङ्गज्ञाना-सिमादाय तरतिपारम्' इति ह्युक्तम् । शरीरादिन्द्रियाणि पराणि उत्कृष्टानि । न केवलं बुद्धेः परः । श्रुत्युक्तप्रकारेणाव्यक्तादपि । "अव्यक्तात्पुरुषः परः" इति हि श्रुतिः । न च तत्रतत्रोक्तैकदेशज्ञानमात्रेण भवति मुक्तिः । सार्वत्रिकगुणोपसंहारो हि भगवता गुणोपसंहारपादेऽभिहितः । "आनन्दादयः प्रधानस्य" इत्यादिना । तथा च अन्यत्र—**

**"अपौरुषेयवेदेषु विष्णुवेदेषु चैव हि ।**
**सर्वत्र ये गुणाः प्रोक्ताः सम्प्रदायगताश्च ये ॥**
**सर्वैस्तैः सह विज्ञाय ये पश्यन्ति परं हरिम् ।**
**तेषामेव भवेन्मुक्तिर्नान्यथा तु कथञ्चन ॥"**

**—इति गारुडे ॥**

**तस्मादव्यक्तादपि परत्वेन ज्ञेयः । न चात्र जीव उच्यते । "रसोऽप्यस्य परं दृष्ट्वा निवर्तते" इत्युक्तत्वात् ॥ ४२ ॥**

*प०टी०*— असर्वोत्तमत्वज्ञानादपि कामादिजयेन मोक्ष इति शङ्का मा भूदित्याह **न केवलमिति** । ननु भगवतः सर्वोत्तमत्वेऽपि बुद्धिपरत्वज्ञानादेव केषाञ्चिन्मोक्षः किं न स्यात् ?

इत्यत आह **न चेति** । बुद्धेः परत्वेन जीव उच्यते कामनिवृत्त्यर्थमित्यपव्याख्यां दूषयति **न चेति** । अतः परमात्मज्ञानम् इत्यनेन न जीवो नापि कामस्थानमुच्यत इत्युक्तं भवति । कामस्थित्युक्तेन सङ्गत-त्वात्, 'इन्द्रियाणि मनो बुद्धिः' इत्युक्तत्वाच्चेति ॥ ४२ ॥

***न०टी०***—प्रकटमप्युत्तरश्लोकप्रतिपाद्यमपव्याख्यातिरोहितं प्रकाशयति **शत्रुहनन इति** । इन्द्रियाद्यभिमानीन्द्रादितारतम्यपूर्वकपरमपुरुषहरिज्ञानं हि कामादिशत्रुनाशकम् । ज्ञानस्यायुधरूपेण कामादिशत्रुनाशकत्वे प्रमाणाह **असङ्गेति** । इन्द्रियाणि पराणि कस्मात् ? इत्याशङ्कायामाह **शरीरादिति** । बुद्धेः सकाशात् परत्वज्ञानस्यैव संसारनिवृत्तिहेतुत्वोक्तेः, तावदेव भगवतः परत्वम्, न तु सर्वोत्तमत्वमिति शङ्का मा भूत् । अव्यक्तादपि परत्वश्रुतेरिति भावेनाह **न केवलमिति** । का सा श्रुतिः ? इत्यत आह **अव्यक्तादिति** । ननु भवतु भगवतः सर्वोत्तमत्वम् । तथाऽपि मुक्तिरत्रोक्त-परिज्ञानमात्रेण किं न स्यात् ? इत्याशङ्का मा भूदित्येतत् सप्रमाणकमाह **न चेति** । अव्यक्तात् परत्वमप्यानन्दादिचतुष्टयान्तर्भूतमेव । न ह्यात्मशब्दोक्तसर्वस्वामित्वमप्यव्यक्तादवरस्य सम्भवति । **विष्णुवेदा** इतिहासपुराणाद्यास्तत्कृताः । यतोऽन्यथा मुक्तिर्न, अतोऽव्यक्तादिपरत्वेन ज्ञेय इत्याह **तस्मादिति** । अपव्याख्यानं दूषयति **न चेति** । तत्र तावन्मायी 'किमाश्रयः कामं जह्यादित्युच्यते' इति श्लोकमवतार्य सर्वदृश्येभ्यो बुध्यन्तेभ्योऽभ्यन्तरो यं च देहिनं कामो मोहयतीत्युक्तं स बुद्धे पर आत्मेति वर्णयति । तदितरस्तु कस्य सन्निधौ कामस्तिष्ठतीति दर्शयितुमाहेत्यवतार्य बुद्धेः परतः स इति काममेव परामृश्यते तस्य प्रकृतत्वादिति । तदुभयं चानेन निरस्तं भवति । तथा हि । **नात्र** बुद्धेः परत्वेन जीव उच्यते । चशब्दात् कामोऽपि नोच्यते । तथा यो बुद्धेः परः परमात्मा सोऽत्र जीवो **नोच्यते** जीवत्वेन नोच्यत इत्यपि **च**शब्दात् । तदेतत् साधयति **रसोऽपीति** । परमात्म-दर्शनादेव रसशब्दोक्तकामनिवृत्तेरुक्तत्वात् द्वितीयाध्याये, तत्पक्ष उक्तविरोध इत्यर्थः । न च जीवज्ञानात् जीवेशाभेदज्ञानात् कामज्ञानाद्वा कामनिवृत्तौ प्रमाणमस्ति । प्रत्युत परमात्मज्ञानं विना नान्यत्साधनात् तन्निवृत्तिरित्यत्र प्रमाणमाह **अविज्ञायेति** । यत एवमुक्तविरोधादिदूषणं जीवादि-ज्ञानात् कामनिवृत्तौ, अतः परमात्मज्ञानमेवात्र कामनिवर्तकं 'परं बुद्ध्वा' इत्यत्रोक्तमित्याह **अत इति** ॥

***प्र०दी०***— 'इन्द्रियाणि पराणि' इत्यस्य पूर्वेण सङ्गतिर्न दृश्यते । अत आह— **शत्रुहनन इति** । 'एवं बुद्धेः परं' इत्यनेन वक्तुम् । ज्ञानस्यात्राऽऽयुधत्वे प्रमाणमाह— **असङ्गेति** । असङ्गं वैराग्यसहितम् । **तराति पारम्** – पारम् अतितर । 'छन्दसि परेऽपि' (१-४-८१) इति वच-नात् । परत्वस्यावधिसापेक्षत्वात्कस्मादिन्द्रियाणि पराणीत्यत आह— **शरीरादिति** । सन्निधाना-

दिति भावः । किं परत्वमन्यत्वम् । नेत्याह— **उत्कृष्टानीति** । ''यो बुद्धेः परतस्तु सः'' इति परमात्मोच्यते । तस्य बुद्धेः परत्वे महताऽऽत्मना साम्यं स्यादित्यत आह— **न केवलमिति** । काऽसौ श्रुतिर्यद्बलादध्याहार इत्यत आह— **अव्यक्तादिति** । अस्तु भगवानव्यक्तादपि परः । तथाऽपि कामादिजयार्थं बुद्धेः परत्वेनैव ज्ञातेनालम् । किं प्रमाणान्तरसिद्धाध्याहारेणेत्यत आह— **न चेति** । कामादिजयो हि मुक्तिद्वारम् । न च मुक्तिरेकदेशज्ञानमात्रेण भवति । कुत इत्यत आह— **सार्वत्रिकेति** । तस्यान्यथाव्याख्यानेऽपि स्पष्टं प्रमाणमाह— **तथा चेति** । सर्वत्रैवेति सम्बन्धः । वेदाद्यनुक्ता अपि भगवत्सम्प्रदायगताः । तैः सह । तैः सहितम् । न च तत्रेत्युक्तमुपसंहरति— **तस्मादिति** ।

मायावादी तु ''यो बुद्धेः परतस्तु सः'' इत्यनेन जीव उच्यत इत्याह— तन्निराकरोति— **न चेति** । कुत इति चेत् 'एवं बुद्धेः परं' इत्येतज्ज्ञानस्य कामविनाशसाधनत्वोक्तेः, तस्याश्च भगवत्परिग्रहे घटनादन्यथाऽघटनादिति भावेनोभयत्र प्रमाणमाह— **रसोऽपीति** । न चात्रेत्युक्तमुपसंहरति— **अत इति** । भास्करस्तु कामोऽत्रोच्यत इत्याह । तदतीव मन्दम् । 'कामः सङ्कल्पः' इत्यादिश्रुतेस्तस्य मनोधर्मस्य तत्परत्वानुपपत्तेः पक्षद्वयेऽपि 'इन्द्रियाणि पराणि' इत्यादितारतम्योक्तेः न प्रयोजनमस्तीति ॥

***भा०दी०***— वक्तुमित्यस्य नेत्याकाङ्क्षायामाह **बुद्धेः परमित्यनेन वक्तुमिति** । **अतितरेति** । किञ्चित्प्रत्यक्षं वेतिकां नो भवेत्यर्थः । न रूपसर्गाः क्रियायोग इत्युक्तेरतीत्युपसर्गस्य तरेति क्रियातोऽतितरेति पूर्वनिर्देशेन भाव्ये कथं तरतीति पश्चान्निर्देश इत्यत आह **छन्दसपरेऽपीति** । छन्दोविषये उपसर्गाः परतो भवन्तीत्युक्तेर्न दोष इत्यर्थः । **सन्निधानादिति** । इन्द्रियाणीत्युक्तैव तदाश्रयतया शरीरस्य बुद्धौ सन्निहितत्वादित्यर्थः । **महतात्मनेति** । महत्तत्त्वाभिमानिना चतुर्मुखेनेत्यर्थः । **तस्यान्यथाव्याख्यानेऽपीति** । यत्र शाखायामानन्दा । यः प्रधानस्य ब्रह्मणो नोक्तः तत्र ते उपसंहर्तव्या इत्यादि व्याख्यानेऽपीत्यर्थः । **कामोऽत्रोच्यत इति** । बुद्धेः परतस्तु स इत्यत्रेत्यर्थः । **पक्षद्वयेऽपीति** । जीव इति पक्षे काम इति पक्षे चेत्यर्थः । इतिशब्दो मतद्वयदोषोक्तिसमाप्तौ । **शब्दबाह्यमिति** । संस्तभ्यशब्देनैकीभावार्थालाभादिति भावः ॥ ४२ ॥

***इति श्रीगीताभाष्यटीकायाः प्रमेयदीपिकायाः टिप्पण्यां***
***राघवेन्द्रयतिकृतायां भावदीपे तृतीयोऽध्यायः ॥***

***भा०र०***— 'वक्तुम्' इति भाष्ये केनेत्याकाङ्क्षायां शेषमाह **''एवं बुद्धेः परम्'' इत्यनेन इति** । **अत्र** कामरूपशत्रुहनने । ''असङ्गो ह्ययं पुरुषः'' इति सुप्रसिद्धासङ्गत्वस्य कथं ज्ञान-

विशेषणत्वम् ? इत्याशङ्क्य "असङ्गशस्त्रेण सङ्गराहित्यसहितेन ज्ञानेन" (गी.भा. १५.३) इति पञ्चदशाध्यायभाष्यविवक्षितमर्थमाह **असङ्गमिति** । न विद्यते सङ्गो विषयरागः, सामानाधिकरण्येन यस्य तद् असङ्गमिति भावेन तात्पर्यमाह **वैराग्यसहितमिति** । मत्वर्थीयोऽच्प्रत्ययो वा । **असङ्गम्** असङ्गवदित्यस्य तात्पर्यतोऽनुवादः **वैराग्यसहितमिति** । "असङ्गसहितं ज्ञानम् असङ्गम्" इति मध्यमपदलोपी समास इति भावेनेयमुक्तिरिति तु मन्दम् । 'असङ्गम्' इति टीकोक्त्ययोगात् । असङ्गसहितं ज्ञानमसङ्गज्ञानमित्येव वाच्यत्वात् ।

ननु "ते प्राग्धातोः" इति पूर्वं प्रयोक्तव्यत्वेन विहितस्यातेः कथं पश्चात् प्रयोगः ? इत्यत आह **छन्दसीति** । छन्दसि ते गत्युपसर्गाः पश्चादपि प्रयुक्ताः साधव इति पाणिनिवचनादित्यर्थः । भागवतवचनं च छन्दस्तुल्यमिति भावः ।

**सन्निधानादिति** । 'इन्द्रियाणि' इत्युक्त्यैव तदाश्रयतया शरीरस्य बुद्धौ सन्निधानादित्यर्थः ।

**महताऽत्मनेति** । "तेभ्यो बुद्धिस्सरस्वती । तस्या ब्रह्मा महानात्मा" (का.भा. १.७.१० श्लो.) इति काठकभाष्ये बुद्धिशब्दस्य सरस्वत्यर्थकत्वेन तत उत्तमत्वोक्तौ भगवतो महत्तत्त्वमानिना चतुर्मुखेण साम्यशङ्का स्यादित्यर्थः । "बुद्धेरात्मा महान् परः" इति श्रुत्यनुगमाय महताऽऽत्मनेत्युक्तम् **अध्याहार इति** । 'इन्द्रियेभ्यः' इत्यनन्तरं "परा अर्थाः, अर्थेभ्यः" इत्यध्याहारः, बुद्धेरित्यनन्तरं "आत्मा महान् परः । महतः परमव्यक्तम् अव्यक्तात्" इति चाध्याहार इत्यर्थः । न कामजयमात्रं फलम् । येनैकदेशज्ञानेनापि तज्जयः स्यादिति शङ्केत । किन्तु तद्द्वारा मुक्तिरिति भाष्योक्तमुपपादयति **कामादीति** ।

ननु "आनन्दादयः" (ब्र.सू. ३-३-१२) इति सूत्रेणाव्यक्तात् परत्वस्यापि भगवति ज्ञातव्यत्वं कथं प्रतीयत इति चोद्यम् अव्यक्तात् परत्वमप्यानन्दादिचतुष्टयान्तर्भूतमेव । आत्मपदोक्तसर्वस्वामित्वस्याप्यव्यक्तादवरेऽसम्भवादिति समाहितं प्राचीनटीकायाम् । नन्विदं सूत्रं "सर्वमुमुक्षुसाधारणान् गुणान् सङ्ख्यानिर्देशाभ्यां निर्णेतुं प्रवृत्तम् । निर्दोषत्वम्, आनन्दः, ज्ञानं, स्वामित्वं चेति चत्वारो न त्वधिकाः । सर्वमुमुक्षूणां तदधिकोपासनेऽसमर्थत्वात्" इति तत्त्वप्रकाशिकोक्तेः, न पुनः सर्वविदोक्तसर्वगुणोपसंहारमिति व्याख्यातुं शक्यत इत्यत आह **तस्येति** । "आनन्दादयः प्रधानस्य" इति सूत्रस्येत्यर्थः । तत्तद्गुणोपासकानां तद्गुणोपसंहारः, न तु सर्वेषां सर्वगुणोपसंहार इति व्याख्यानेऽपीत्यर्थ इति **केचित्** । "उपसंहारोऽर्थाभेदात्" (ब्र.सू. ३-३-६) इत्यादिसूत्रं मुखतोऽनुपादायैतत्सूत्रोपादानं सर्वमुमुक्षुसाधारणगुणोपासनप्रतिपादनपरत्वात् कृतमिति वेदितव्यम् । **तस्य** गीता-

वचनस्य । **अन्यथा व्याख्याने** "अध्याहारेण व्याख्याने" इति वाऽर्थ **इत्यप्याहुः** । 'विष्णुवेदेषु' इत्यत्र "विष्णुकृता इतिहासपुराणपञ्चरात्राद्या विष्णुवेदाः" इति **प्राचीनटीका** ।

"भारतं पञ्चरात्रं च मूलरामायणं तथा ।
तथा पुराणं भागवतं विष्णुवेदं इतीरितः ॥" (गी.भा. २.७२)

इति द्वितीयाध्यायभाष्यरीत्या भारतादयो वा । **वेदाद्यनुक्ताः** वेदविष्णुवेदाद्यनुक्ता अपि । 'विशेषतः' इति शेषः । तेन न "अनुक्तं पञ्चभिर्वेदैर्न वस्त्वस्ति कथञ्चन" इत्युक्तिविरोध इति परिहर्तव्यम् । वेदवैदिकाद्यनुक्तानां भगवतैव यः स्वगुणानां स्वप्रत्यक्षसिद्धानां ब्रह्मादीन् प्रत्युपदेशः क्रियते स भगवत्सम्प्रदायः, तदागताः । तैस्सह विज्ञाय विमृश्य हरिं पश्यन्तीत्युक्ते गुणानामपि विज्ञातृत्वं, ज्ञातृनिष्ठत्वं वा प्रतीयते । तदयुक्तं, प्रकृतानुपयुक्तं चेत्यतो विवक्षितमर्थमाह **तैरिति** । तैर्विशिष्ट-मित्यर्थः । **तस्मादितीति** । सार्वत्रिकगुणोपसंहारेण ज्ञातव्यत्वादित्यर्थः ।

"सः बुद्धेर्द्रष्टा परमात्मा" इति सङ्करभाष्यमर्थतोऽनुवदति **मायावादी त्विति** । **इति** उत्तर-श्लोकेन । एतज्ज्ञानस्य बुद्धिपरवस्तुज्ञानस्य । "बुद्ध्वा कामं जहि" इति श्रवणादाह **साधनत्वोक्ते-रिति** । **तस्याः** उक्तेः । **उभयत्र** घटनाघटनयोः । परमात्मज्ञानादेवास्याधिकारिणः रसशब्दोक्त-कामनिवृत्तेर्द्वितीये उक्तत्वात्, **मत्तः परम्** अन्यद् विषयजातम् **अविहाय** तत्रानुरक्तस्य **कामजयः कुतः** स्यादित्यत्रापि परमात्मज्ञानं विना नान्यसाधनात् तन्निवृत्तिरित्युक्तत्वाच्च न जीवोऽत्रोच्यत इत्यर्थः । **अतः** जीवग्रहणस्योक्तरीत्याऽनुपपन्नत्वात् । **अत्र** गीतायाम् । परमात्मज्ञानमेव काम-विनाशसाधनत्वेन विवक्षितमिति भाष्यार्थः स्फुटत्वान्नोक्तः । **कामोऽत्रोच्यत इति** । कस्य सन्निधौ कामस्तिष्ठति दर्शयितुमाहेत्यवतार्य "यो बुद्धेः परतस्तु सः" इति काम एव परामृश्यत इत्याहे-त्यर्थः । व्यक्तमेतत् **प्राचीनटीकायाम्** । 'मनोधर्मस्य' इति हेत्वर्थगर्भं विशेषणम् । **तत्परत्वा-नुपपत्तेः** मनःपरबुद्धिपरत्वानुपपत्तेः । **पक्षद्वयेऽपीति** । "जीव उच्यते" इति मायावादिपक्षे, "काम उच्यते" इति भास्करपक्षेऽपीत्यर्थः ॥ ४२ ॥

**गीता**

**एवं बुद्धेः परं बुद्ध्वा संस्तभ्यात्मानमात्मना ।
जहि शत्रुं महाबाहो कामरूपं दुरासदम् ॥ ४३ ॥**

*इति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे
कर्मयोगो नाम तृतीयोऽध्यायः ॥*

*वि०वि०*— इदानीं ज्ञानमाह **एवमिति** । आत्मानं मनः । आत्मना बुद्ध्या संस्तभ्य निश्चलं कृत्वा । दुरासदं दुःखेनाधर्षणीयं कामं जहि नाशय । 'इन्द्रियाणि पराणि' इत्यादाविन्द्रियादिदेवता विवक्ष्यन्ते ।

'सर्वेभ्यः प्रवरा देवा इन्द्राद्या इन्द्रियात्मकाः ।
तेभ्यो मनोभिमानी तु रुद्रस्तस्मात्सरस्वती ॥
बुध्यात्मिका ततो ब्रह्मा महानात्मा परः स्मृतः ।
अव्यक्तरूपा लक्ष्मीस्तु वरा तस्या हरिः स्वयम् ॥
न तत्समोऽधिको वेति ह्यानुपूर्वी प्रकीर्तिता ।
यथाक्रमप्रबोधेन नाश्याः कामादिशत्रवः ॥
प्राप्यते च परं स्थानं विष्णोरतुलमञ्जसा ॥' इति ।
'इन्द्रियेभ्यः परा ह्यर्था ह्यर्थेभ्यश्च परं मनः ।
मनसस्तु परा बुद्धिर्बुद्धेरात्मा महान्परः ॥
महतः परमव्यक्तमव्यक्तात्पुरुषः परः ।
पुरुषान्न परं किञ्चित् सा काष्ठा सा परा गतिः ॥'

इति श्रुतेः । न च 'इन्द्रियेभ्यः परा ह्यर्था', 'रुद्रोऽहङ्कृतिरूपक इत्यादिविरोधः ।

'सर्वाभिमानिनो देवाः सर्वेऽपि ह्युत्तरोत्तरम् ।
आधिक्यं वक्तुमेतेषां पृथक् स्थानमुदीर्यते ॥' इत्यादिवचनात् ॥ ४३ ॥

*॥ इति श्रीमद्भगवद्गीताविवृतौ श्रीमज्जयतीर्थशिष्य–विद्याधिराजभट्टोपाध्यायविरचितायां श्रीमन्मध्वमतानुवर्तिन्यां तृतीयोऽध्यायः ॥ ३ ॥*

*वा०ल०*— इन्द्रियाणि इन्द्रियाभिमानिबृहस्पतिसूर्यादिदैवतानि पराणि इतरदेवेभ्यः उत्तमानि । मनः चित्ताहङ्करादिरूपमनोभिमानिनो ब्रह्माद्याः । बुद्धिः विद्यास्फूर्तिसंविद्रूपबुद्ध्यभिमानिनी लक्ष्मीः । बुद्धेः परतः यो वर्तते स परमात्मा । सरस्वतीब्रह्मादिबुद्धेः परतः परस्य बुद्धिपरत्वं सुतरामस्तीति वा तदुक्तिः ।

*वा०ल०*— 'संस्तभ्यात्मानमात्मना' इत्यत्र आत्मना निरवधिकसर्वोत्तमेन परमात्मना । आत्मानम् अन्तःकरणम् ।

*॥ इति श्रीमद्भगवद्गीतालक्षालङ्कारे तृतीयोऽध्यायः ॥*

***न०टी०***—तत्रात्मशब्दयोर्जीवब्रह्मपरत्वेऽपि भेद एवार्थः । न हि स्तम्भनं नामैकीकरणम् । अतस्तयोरत्र विवक्षितमर्थमाह **आत्मानमिति** ॥

*॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितश्रीगीताभाष्यटीकायां श्रीनरहरितीर्थभट्टारककृतौ भावप्रकाशिकायां तृतीयोऽध्यायः ॥*

***प्र०दी०***— 'संस्तभ्यात्मानमात्मना' इत्यस्य जीवात्मानं परमात्मनैकीकृत्येति व्याख्यानं शब्दबाह्यमित्याशयवानात्मशब्दद्वयं व्याख्याति— **आत्मानमिति** ॥ ४३ ॥

*इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य श्रीमद्गीताभाष्यस्य टीकायां जयतीर्थमुनिविरचितायां प्रमेयदीपिकायां तृतीयोऽध्यायः ॥ ३ ॥*

***भा०र०***— **शब्दबाह्यमिति** । संस्तम्भनमित्युक्ते एकीकरणमित्यप्रतीतेरिति भावः ॥ ४३ ॥

***गीताक्षरार्थस्तु***— शत्रुहनन आयुधरूपं ज्ञानम् "एवं बुद्धेः" इत्युत्तरश्लोकेन वक्तुं ज्ञान-विषय उच्यते **इन्द्रियाणीति** । **इन्द्रियाणि** इन्द्रियाभिमानिनो देवान् **पराणि** शरीरादुत्कृष्टान् **आहुः** ज्ञानिनः । **इन्द्रियेभ्यः** अर्थाभिमानिनः परानाहुः । अर्थेभ्यश्च मनः मनोऽभिमानिदेवान् परानाहुः । **मनसस्तु बुद्धिः** सरस्वती **परा** । **बुद्धेस्तु आत्मा महान्** चतुर्मुखः **परः** । **महतः परमव्यक्तम्** । **अव्यक्तात्** श्रीतत्त्वाद् यः परतः परः स परमात्मा ज्ञातव्य इति । तथा च काठकभाष्ये—

"देवेभ्य इन्द्रियात्मभ्यो ज्यायांसोऽर्थाभिमानिनः ।
सोमवित्तपसूर्यापा अश्व्यग्नीन्द्रेन्द्रसूनवः ॥
यमो दक्षश्चेन्द्रियेशाः सौपर्णी वारुणी तथा ।
उमेति चार्थमानिन्यस्तिस्रो द्विद्व्येकदेवताः ॥
मनोऽभिमानिनो रुद्रवीन्द्रशेषास्त्रयोऽपि तु ।
ते श्रेष्ठा अर्थमानिभ्यस्तेभ्यो बुद्धिः सरस्वती ॥
तस्या ब्रह्मा महानात्मा ततोऽव्यक्ताभिधा रमा ।
तस्यास्तु पुरुषो विष्णुः पूर्णत्वान्नैव तत्समः ॥" इति ।

तात्पर्ये च—

"सर्वेभ्यः प्रवरा देवा इन्द्राद्या इन्द्रियात्मकाः ।
तेभ्यो मनोऽभिमानी तु रुद्रस्तस्मात् सरस्वती ॥

बुद्ध्यात्मिका ततो ब्रह्मा महानात्मा परः स्मृतः ।
अव्यक्तरूपा लक्ष्मीस्तु वरा चातो हरिः स्वयम् ॥
न तत्समोऽधिको वेति ह्यानुपूर्वी प्रकीर्तिता ।
यथाक्रमप्रबोधेन नाश्याः कामादिशत्रवः ॥" (गी.ता.३.४२) इति ॥४२॥

एवं तारतम्याङ्गत्वेन परमात्मनो ज्ञेयत्वमुक्त्वा तज्ज्ञानस्य कामजयोपायत्वमुच्यते **एवमिति** । एवम् इन्द्रियाणीत्युक्तदिशा । बुद्धेः, महतः अव्यक्ताच्च, पमात्मानं **परम्** उत्कृष्टं **बुद्ध्वा आत्मना** बुद्ध्या **आत्मानं** मनः **संस्तभ्य** सम्यक् स्तम्भयित्वा निश्चलं कृत्वा **दुरासदं** दुःखेन निष्पादनीयं **कामरूपं** कामाख्यं शत्रुं **जहि** । **हे महाबाहो** इति साभिप्रायं विशेषणमिति ॥ ४३ ॥

*॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितश्रीमद्भगवद्गीताभाष्यटीकाव्याख्यायां भावरत्नकोशाख्यायां श्रीमत्सूरीन्द्रतीर्थपूज्यपादशिष्यसुमतीन्द्रयतिविरचितायां तृतीयोध्यायः ॥ ३ ॥*

**गीतातात्पर्यनिर्णयः**

**"सर्वेभ्यः प्रवरा देवा इन्द्राद्या इन्द्रियात्मकाः ।
तेभ्यो मनोभिमानी तु रुद्रस्तस्मात्सरस्वती ।
बुद्ध्यात्मिका ततो ब्रह्मा महानात्मा परः स्मृतः ।
अव्यक्तरूपा लक्ष्मीश्च वराऽतोऽतो हरिः स्वयम् ।
न तत्समोऽधिको वेति ह्यानुपूर्वी प्रकीर्तिता ।
यथाक्रमप्रबोधेन नाश्याः कामादिशत्रवः ।
प्राप्यते च परं स्थानं विष्णोरतुलमञ्जसा ॥" इति च ।**

*प्रका०*— 'इन्द्रियाणी'त्यादेरर्थमाह **सर्वेभ्य इत्यादिना** ।

*न्या०दी०*— 'इन्द्रियाणि' इत्यत्र इन्द्रियादिमात्राज्जीवस्य परमत्वमुच्यते अथवा "इन्द्रियाणि मनो बुद्धिः" इत्यादिना इन्द्रियमनोबुद्धीनामुक्तं प्रपञ्च्यत इत्यन्यथाप्रतीतिनिरासाय तत्स्मृत्यैव व्याचष्टे **सर्वेभ्य इति** ॥ सर्वेभ्योऽर्थाद्यभिमानिभ्यः । "ततो ब्रह्मा" इत्यादि तु "बुद्धेरात्मा महान् परः । महतः परमव्यक्तम् अव्यक्तात् पुरुषः परः । पुरुषान्न परं किञ्चित्" इति श्रुतिव्याख्यानम् । परमात्मनोऽत्र बुद्धिपरत्वमात्रोक्तावप्यन्यत्रोक्तमत्र संयोज्यमिति ज्ञापयितुमुदाहृतम् ।

***सा०सं०***— एवं तारतम्यान्तगतत्वेन ज्ञेयमुक्त्वा तज्ज्ञानमाह **एवमिति** । **एवमुक्तदिशा** । **बुद्धेः** महतोऽव्यक्ताच्च । **परं बुद्ध्वा आत्मानं** मनः । **आत्मना** बुद्ध्या । **संस्तभ्य** निश्चलं कृत्वा । **दुरासदं** दुःखेनासादनीयम् । निवर्तनीयमिति यावत् । **कामरूपं शत्रुं जहि** हतं कुरु । हे **महाबाहो** इति ॥ ४३ ॥

*॥ इति श्रीमत्सर्वतन्त्रस्वतन्त्रश्रीसुधीन्द्रगुरुपादशिष्येण राघवेन्द्रेण कृते श्रीमद्गीतार्थसङ्ग्रहे तृतीयोऽध्यायः ॥*

***अ०प्र०***— हे महाबाहो[१], एवं[२], बुद्धेः[३], परं[४], आत्मानं[५], आत्मना[६], बुद्ध्या[७], संस्तभ्य[८], दुरासदं[९], कामरूपम्[१०], शत्रुं[११] जहीत्यन्वयः ।

हे महाबाहो ![१], एवं = प्रकारेण[२], बुद्धेः परं = बुद्धेरेव विषयेन्द्रियादिजन्या विक्रियाः एतादृशबुद्धेः परं यद्वा एवं बुद्ध्यादि अव्यक्तात् परं सर्वोत्कृष्टं हरिं बुद्ध्वा तज्ज्ञानेन बुद्ध्वेन[४], आत्मानं = मनः[५], आत्मना[६], बुद्ध्या = एवं भूतनिश्चयात्मकया बुद्ध्या[७], संस्तभ्य = निश्चलं कृत्वा[८], दुरासदं = दुःखेन आसादनीयं आधर्षणीयं वा दुर्विज्ञेयगतिमित्यर्थः[९], कामरूपं = कामाख्यम्[१०], शत्रुं[११], जहि = मारय = नाशयेत्यर्थः ॥ ४३ ॥

इन्द्रियाणीत्यादौ तद्देवता विवक्षिताः । तदुक्तम्—

> "सर्वेभ्यः प्रवरा देवा इन्द्राद्या इन्द्रियात्मकाः ।
> तेभ्यो मनोभिमानी तु रुद्रस्तस्मात् सरस्वती ॥ १ ॥
> बुद्ध्यात्मिका ततो ब्रह्मा महानात्मा परः स्मृतः ।
> अव्यक्तरूपा लक्ष्मी तु वरा चातो हरिः स्वयम् ॥ २ ॥
> न तत्समोऽधिको वेतीत्यानुपूर्वी प्रकीर्तिता ।
> यथा कामप्रबोधेन नाश्याः कामादिशत्रवः ।
> प्राप्यते च परं स्थानं विष्णोरतुलमञ्जसा ॥ ३ ॥" इति ॥

ननु

> "इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः ।
> मनसस्तु परा बुद्धिः बुद्धेरात्मा महान् परः ॥
> महतः परमव्यक्तमव्यक्तात्पुरुषः परः ।
> पुरुषान्न परं किञ्चित् सा काष्ठा सा परा गतिः ॥"

**गीतातात्पर्यनिर्णयः**

**न च "इन्द्रियेभ्यः परा ह्यर्था", "रुद्रोऽहङ्कृतिरूपक" इत्यादिविरोधः ।**

*प्रका०*— न च "इन्द्रियेभ्यः परा ह्यर्था" इति श्रुतिविरोधात् इन्द्रियाणि पराण्यर्थेभ्य, इत्येतन्न युज्यत इति वाच्यम् । अर्थशब्दवाच्यानामर्थाभिमानिनां देवानामिन्द्रियदेवेभ्यः इन्द्रादिभ्योऽधमानामुत्तमानां चोमासौपर्ण्यादीनां सद्भावेनैवास्यापि वस्तुनो मुख्यामुख्यतयोभयस्वामिकत्वसम्भवेन चाविरोधात् ।

*न्या०दी०*— यदुक्तमर्थाभिमानिभ्योऽपि इन्द्रियाभिमानिनामुत्तमत्वं, न तद्युक्तम् । "इन्द्रियेभ्यः परा ह्यर्थाः" इति श्रुतिविरोधात् । नापि रुद्रस्य मनोऽभिमानित्वं युक्तम् । "रुद्रोऽहङ्कृतिरूपकः" इति वाक्यविरोधात् । एवं सरस्वत्या बुद्ध्यभिमानित्वं च न युक्तम् । विज्ञानाभिमानित्वोक्तिविरोधादित्यत आह **न चेति** ॥

*भा०दी०*— आदिपदार्थमाह **एवं सरस्वत्या इति** ॥ **विज्ञानाभिमानित्वेनेति** ।

**गीतातात्पर्यनिर्णयः**

**"सर्वाभिमानिनो देवाः सर्वेऽपि ह्युत्तरोत्तरम् ।**
**आधिक्यं वक्तुमेतेषां पृथक्स्थानमुदीर्यते ।**
**आधिक्यक्रम एवात्र शास्त्रतात्पर्यमिष्यते ।**
**स्थानेषु त्ववरेषां च परे सन्ति न चेतरे ।**
**तथाऽपि पितुरर्थो यः पुत्रस्याप्युपचर्यते ।**
**अव्यक्तादिपदार्थानां सर्वे तदभिमानिनः ॥" इति च ।**

*न्या०दी०*— कुतो न विरोध इत्यत आह **सर्वेति** ॥ तर्हि श्रीरव्यक्तस्य, ब्रह्मा महत इत्यादि पृथगभिमन्यमानस्थानोक्तिः लक्ष्म्यादीनां शास्त्रेषु कथमित्यत आह **उत्तरेति** ॥ अव्यक्तादीनां क्रमेणाधिकत्वात् तदभिमानित्वोक्त्याभिमानिनामप्युत्तरोत्तराधिक्यं ज्ञापयितुं पृथगभिमन्यमानस्थानान्युच्यन्त इत्यर्थः । किमर्थमुत्तरोत्तराधिक्यं ज्ञाप्यमित्यत आह **आधिक्येति** ॥ सर्वेऽपि सर्वाभिमानिन इत्युक्तस्यापवादमाह **स्थानेष्विति** ॥ अधमानामुक्तेष्वभिमन्यमानस्थानेष्वभिमानित्वेनोत्तमा वर्तन्ते ।

न तु उत्तमाभिमन्यमानत्वेनोक्तस्थानेष्वधमा इत्यर्थः । एवं चेदव्यक्ताभिमानित्वं सरस्वत्यादीनां पुराणादौ कथमुच्यत इत्यत आह **तथापीति** ॥ उपचर्यते, यस्मादिति शेषः ।

*भा०दी०*— न चेतरदित्यस्यार्थो **न तूत्तमाभिमन्यमानत्वेनेत्यादि** ।

**गीतातात्पर्यनिर्णयः**

**"यत्र ह क्व च पुत्रस्य तत्पितुर्यत्र वा पितुस्तत् पुत्रस्येत्येतदुक्तं भवति" इत्यादि श्रुतेश्च ।**

*न्या०दी०*— अत्र श्रुतिं चाह **यत्रेति** ॥ यस्मिन् वस्तुनि पुत्रस्य स्वाम्यमस्ति तस्मिन् वस्तुनि पितुः स्वाम्यमस्त्येव । यस्मिन् वस्तुनि पितुः स्वाम्यमस्ति तस्मिन् पुत्रस्य स्वाम्यमुपचारेणास्तीत्येतत् तत्र आपा इति चोद्ये समाधानमुक्तं भवतीत्यर्थः । अनेनेन्द्रादिभ्य इन्द्रियाभिमानिभ्योऽधमानां उत्तमानां सौपर्ण्यादीनां चार्थाभिमानित्वात् सौपर्ण्यादिविवक्षया इन्द्रियेभ्योऽर्थानामुत्तमत्त्वं श्रुतिराह । इदं तु वाक्यं शिवसुतविवक्षयाऽर्थेभ्य इन्द्रियाणामुत्तमत्वं वक्तीत्यविरोधः । रुद्रादीनां च मनोऽहङ्काराद्यभिमानित्वादुभयोक्तेरविरोध इत्युक्तं भवति ।

*भा०दी०*— इत्येतदुक्तं भवतीत्यंशस्यार्थमाह **अस्तीत्येतदिति** ॥ **तदित्यस्य प्रतिपदं तत्रेति** । तस्यार्थ **आपा इति चोद्य इति** । ऐतरेये आपा इत्यापा इति खण्डे रमादेव्या देवानां आप इति नाम कथमिति कृतचोद्ये देवानां भगवत्पुत्रत्वात् पितुर्भगवत आप इति नामवाच्यत्वात् पुत्राणामपि तदेव नामेति समाधानमनेन वाक्येनोक्तं भवतीत्यर्थः ॥

*॥ इति श्रीमद्गीतातात्पर्यटीकाभावदीपे राघवेन्द्रयतिकृते तृतीयोऽध्यायः ॥*

**गीतातात्पर्यनिर्णयः**

**"बहुवाचिनां शब्दानां लिङ्गप्रकरणादिभिः ।**
**प्रवृत्तिहेतोश्चाधिक्यान्निर्णयोऽर्थेषु गम्यते ॥" इति शब्दनिर्णये ।**

*प्रका०*— न च बहूनामेकशब्दवाच्यत्वेऽत्रायं वाच्य इति निर्णयाभावः ।

*न्या०दी०*— ननु सर्वेऽपि सर्वाभिमानिनश्चेदव्यक्तादिशब्दार्थनिर्णयो न युज्यते । सर्वेषामप्यर्थतयाऽन्यतरापोहानुपपत्तेरित्याशङ्क्यां स्मृत्यैव परिहरति **बह्विति** ॥

इत्यादिश्रुतौ, इन्द्रियाभिमानिभ्यो अर्थाभिमानिनो उत्तमत्वमुक्तं गीतायां तद्वैपरीत्येनार्थाभिमानिभ्यः इन्द्रियाभिमानिनामुत्तमत्वमुक्तम् । अतो गीताश्रुत्योर्विरोध इति चेन्न ।

"सर्वाभिमानिनो देवा सर्वेऽपि ह्युत्तरोत्तरम् ।
आधिक्यं वक्तुमेतेषां पृथक्स्थानमुदीर्यते ॥

आधिक्यक्रम एवात्र शास्त्रतात्पर्यमिष्यते ।
स्थानेषु त्ववरौ तेषां परे सन्ति न चेतरे ।
तथापि पितुरर्थो यः पुत्रस्याप्युपचर्यते ॥"

इत्यादिवचनात् विरोधः परिहर्तव्यः । अस्यार्थः । यदि सर्वे देवाः सर्वतत्त्वाभिमानिनः तर्हि श्रीरव्यक्तस्य ब्रह्मा महत् इत्याद्युक्तिः कथमित्यत आह **उत्तरोत्तरमिति** । अव्यक्तादीनां क्रमेणाधिक्यात् तदभिमानित्वोक्त्या अभिमानिना उत्तरोत्तराधिक्यं ज्ञापयितुं पृथक् अभिमन्यमानस्थानान्युच्यन्ते इत्यर्थः । किमर्थमुत्तरोत्तराधिक्यं ज्ञाप्यत इत्यत आह **आधिक्येति** । सर्वे सर्वाभिमानिन इत्युक्तस्यापवादमाह **स्थानेष्विति** । अधमानामुक्तेष्वभिमन्यमानत्वेनोक्तेष्वधमाः सन्ति । पुत्रस्यार्थे पितुः स्वाम्यमस्त्येव पितुरर्थे पुत्रस्वाम्युपचारो यथा तद्वदत्रापि तत्त्वेषु तथापि प्रबलवाक्यान्निर्णयः कार्य इति । अतो गीतायां अर्थाद्यमुख्याभिमानिरुद्रसूनुभ्य इन्द्रादि इन्द्रियदेवानामुत्तमत्वमुक्तम् । श्रुतौ तु अर्थादिमुख्याभिमान्युमादीनां इन्द्रादि इन्द्रियदेवेभ्यः उत्तमत्वमुक्तम् । अतो नानयोर्विरोध इति ।

*श्रीमद्भगवद्गीतायां श्रीराघवेन्द्रयतिकृतविवरणानुसारेण अन्वयप्रकाशिकायां*
*कर्मयोगो नाम तृतीयोध्यायः ॥ ३ ॥*

**भाष्यम्**

**"अविज्ञाय परं मत्तो जयः कामस्य वै कुतः ॥" इति च । अतः परमात्मज्ञानमेवात्र विवक्षितम् । आत्मानं मनः । आत्मना बुद्ध्या ॥ ४३ ॥**

*इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमद्भगवद्गीताभाष्ये तृतीयोऽध्यायः ॥*

***प०टी०***— 'संस्तभ्यात्मानमात्मना' इति व्याचष्टे **आत्मानमिति** । इन्द्रियादिजयेन कामवधसम्भवान्न तदर्थं युद्धं त्यजेतेत्यभिप्रायः ॥ ४३ ॥

*॥ इति श्रीपद्मनाभतीर्थभट्टारकविरचितश्रीमद्भगवद्गीताभाष्यभावदीपिकायां तृतीयोऽध्यायः ॥*

**गीतातात्पर्यनिर्णयः**

"लिङ्गादिसाम्यं यत्र स्यात् प्रयोगाधिक्यमेव तु ।
निर्णायकं भवेत् तत्र तेन स्यात् सुबहुश्रुतः ॥"

—इति ब्रह्मतर्के ॥ ४२-४३ ॥

*इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमद्भगवद्गीतातात्पर्यनिर्णये तृतीयोऽध्यायः ॥*

*प्रका०*— लिङ्गप्रकरणादिना तन्निर्णयसम्भवात् । लिङ्गादिसाम्ये यत्र बहुशः प्रयोगः शब्दस्य स एवार्थो ग्राह्यः । न त्वबहुप्रयोगवानित्यर्थः ॥

*इति श्रीमदानन्दतीर्थभगवत्पादविरचितस्य श्रीमद्गीतातात्पर्यनिर्णयस्य प्रकाशिकायां पद्मनाभतीर्थविरचितायां तृतीयोऽध्यायः ॥*

*न्या०दी०*— क्वचिल्लिङ्गप्रकरणादिसाम्ये कथं निर्णय इत्याशङ्कां च स्मृत्यैव परिहरति लिङ्गेति ॥ ४२ ॥

*इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य श्रीमद्भगवद्गीतातात्पर्यनिर्णयस्य टीकायां जयतीर्थमुनिविरचितायां न्यायदीपिकायां तृतीयोऽध्यायः समाप्तः ॥*

★ ★ ★

**इति तृतीयोऽध्यायः ॥**

★ ★ ★

॥ श्रीः ॥

॥ श्रीवेदव्यासाय नमः ॥

॥ श्रीमदानन्दतीर्थगुरुभ्यो नमः ॥

# श्रीमद्-भगवद्गीता

## अथ चतुर्थोऽध्यायः

गीता

**श्रीभगवानुवाच—**

**इमं विवस्वते योगं प्रोक्तवानहमव्ययम् ।**
**विवस्वान् मनवे प्राह मनुरिक्ष्वाकवेऽब्रवीत् ॥ १ ॥**

*वि०वि०*— उक्तयोर्ज्ञानकर्मणोरुभयोर्विस्तारात्मकोऽयमध्यायः । ततो बुद्धेः परस्य माहात्म्यं कर्मभेदो ज्ञानमाहात्म्यं चोच्यते । उक्तकर्मयोगे रुचिजननाय पूर्वानुष्ठितोऽयं धर्म इति भगवानुवाच **इममिति त्रिभिः** ॥

*सा०सं०*— पूर्वाध्याये 'नियतं कुरु कर्म त्वम्' (३-८) इत्यादिना किञ्चिद्विवृतस्य निवृत्त-कर्मणः, तथा 'यो बुद्धेः परतस्तु सः' (३-४२) इत्यादिना तारतम्यान्तगत्वेनोक्तविष्णोस्तज्ज्ञानस्य च विस्तरेण निरूपणमत्राध्याये क्रियते । 'एवं ज्ञात्वा कृतं कर्म' (४-१५) इत्यतः प्राक्तनग्रन्थेन बुद्धेः परस्य विष्णोर्माहात्म्यमुच्यते । 'श्रेयान् द्रव्यमयाद्यज्ञात्' (४-३३) इत्यतः पूर्वेण निवृत्तस्य कर्मणोऽन्यस्माद्भेदः, निवृत्तकर्मण्येवोपासनया यज्ञादिरूपेण भेद इत्येवं कर्मविस्तारोक्तिः । शेषेण ज्ञानमाहात्म्योक्तिरिति विवेकः ।

'मयि सर्वाणि' (३-३०) इत्युक्तनिवृत्तकर्मलक्षणज्ञानोपायानुष्ठानाननुष्ठानाभ्यां 'ये मे मतम्' (३-३१) इत्यादिना अर्थानर्थयोरुक्त्या अवश्यमनुष्ठेयमित्युक्तम् । पुनरस्तदनुष्ठाने रुच्युत्पादनाय पूर्वानुष्ठितश्चायं धर्म इत्याह **इममित्यादि** त्रयेण । अव्ययफलत्वात् **अव्ययम्** । **इमं योगं** 'मयि

सर्वाणि' (३-३०) इत्यनेनोक्तम् । निवृत्तकर्मलक्षणं ज्ञानोपायम्, **विवस्वते** आदित्याय । स च स्वपुत्राय **मनवे** श्राद्धदेवाय । स च **मनुः** स्वपुत्रायेक्ष्**वाकवे** ॥ १ ॥

***अ०प्र०***— पूर्वाध्यायद्वयोक्तज्ञानकर्मयोगयोः विशेषविस्तरात्मकोऽयं चतुर्थोऽध्यायः । बुद्धेः परस्य हरेर्माहात्म्यं कर्मभेदो ज्ञानमाहात्म्यं चोच्यते क्रमेण । तत्रादौ मयि सर्वाणीत्यत्रोक्त कर्मयोगरुचिजननाय पूर्वैरनुष्ठितो यद्धर्म इत्याह **इममिति** त्रिभिः ।

हे परन्तप !, अहं [१], पुरा अव्ययं[२], इमं[३], योगं[४], विवस्वते[५], प्रोक्तवान्[६], विवस्वान्[७], मनवे[८], प्राह[९] मनुः[१०] इक्ष्वाकवे[११], अब्रवीत्[१२] इत्यन्वयः ।

हे परन्तप ! लीलाविग्रहोऽहं[१], पुरा अव्ययं = अव्ययफलत्वादव्ययं बहुलान्तरस्थमित्यर्थः[२], इमं योगं = अयं योगोपायः[४], विवस्वते = विव-स्वदाख्यसूर्याय[५], प्रोक्तवान् = कथितवान्[६], स च विवस्वान्[७], मनवे = आत्मपुत्राय श्राद्धदेवाय[८], प्राह[९], स च मनुः[१०], इक्ष्वाकवे = स्वपुत्राय[११], अब्रवीत् = कथितवान्[१२], अन्येऽपि राजानो ऋषयश्च स्वपित्रादिभिः इक्ष्वाकुप्रभृतिभिः प्रोक्तमिमं योगं जानन्ति ज्ञात्वा च तेन अनुष्ठितवन्त इति विशेषः ॥ १ ॥

**गीता**

## एवं परम्पराप्राप्तमिमं राजर्षयो विदुः ।
## स कालेनेह महता योगो नष्टः परन्तप ॥ २ ॥

***सा०सं०***— राजानश्च ऋषयश्चेति वा, **राजर्षयो** राजश्रेष्ठाः निमिप्रभृतयः, स्वपित्रिक्ष्वाकु-प्रभृतिभिः, **विदुः** इति वा । अत्र प्रवचनवेदनशब्दैः विवस्वदादीनामनुष्ठानमप्युपलक्ष्यम् । अद्य-तनानामज्ञाने कारणमाह **स इति** । हे **परन्तप !** शत्रुतापन, **स** च **योगः महता कालेन, इह** लोके । **नष्टः** अदर्शनं गतः ॥

***अ०प्र०***— हे परन्तप ![१], राजर्षयः[२], एवं[३], परम्पराप्राप्तम्[४], इमं योगम्[५], विदुः[६], स योगः[८], इह[९], महता[१०], कालेन[११], नष्टः[१२] इत्यन्वयः ।

हे परन्तप ![१], राजर्षयः = राजानश्च ऋषयश्च अन्येऽपि राजानो निमिमुख्याः स्वपित्रादिभिः इक्ष्वाकुप्रभृतिभिः प्रोक्तोपायं राजर्षयः[२], एवं परम्पराप्राप्तं = एवं शिष्यप्रशिष्यप्रवर्धमानपरम्परया विस्तृतं[४], इमं योगं[५], विदुः = जानन्ति[६], ज्ञात्वा च ते तमनुतिष्ठवन्त इति विशेषः[७], स योगः[८], इह = लोके[९], महता कालेन = कालवशात्[१०], नष्टः = लुप्तः विच्छिन्नसम्प्रदायो जातः[१२] ॥

**गीता**

## स एवायं मया तेऽद्य योगः प्रोक्तः पुरातनः । भक्तोऽसि मे सखा चेति रहस्यं ह्येतदुत्तमम् ॥ ३ ॥

***सा०सं०***— कुतः प्रोक्त इत्यत उक्तं **भक्तोऽसीत्यादि** । हिशब्दो हेतौ । भक्तत्वादिहेतुना हि यः । **ते प्रोक्तो**ऽत एव रहस्यम् उत्तमं चेति । **हि** यतो **रहस्यम् उत्तमं** चातो भक्तत्वात् **ते प्रोक्तः** अवश्यानुष्ठानायेति वा । 'कर्मणैव हि संसिद्धिम्' (३-२०) इत्यत्र गृहस्थधर्मस्त्वया न त्याज्य इत्यत्र जनकादिज्ञान्याचार उक्तः । अत्र तु निवृत्तकर्मानुष्ठाने महदाचारः प्रमाणत्वेनोच्यत इति न तेन गतार्थत्वं शङ्क्यम् ॥

***अ०प्र०***— हे परन्तप !, मया[१], पुरातनः[२], स एवायं[३], योगः[४], अद्य[५], ते[६], प्रोक्तः[७], हि = यस्मात्[८], त्वं मे[९], भक्तोऽसि[१०], सखा चासि[११], इति हेतोः[१२], एतत् उत्तमं रहस्यं प्रोक्तं[१४] इत्यन्वयः ।

हे परन्तप !, मया = सर्वज्ञेन[१], पुरातनः = प्रवाहरूपेण सनातनः[२], स एवायं योगः[४], विच्छिन्ने सम्प्रदाये सति पुनः अद्य[५], ते = तुभ्यं[६], प्रोक्तः = उक्तः[७], हि = यस्मात् वेदान्तवेद्य त्वं[८], मे भक्तोऽसि[१०], सखा चासि[११], इति हेतोः[१२], एतत् = इदं[१३], उत्तमं = सर्वोत्कृष्टं[१४], रहस्यं = गोप्यं प्रोक्तमित्यन्वयः । तद्रहस्यमपि तवोक्तमित्यर्थः । अन्यतोऽन्यस्मै नोच्यते एतादृशं तवोक्तमित्यभिप्रायः ॥ ३ ॥

**भाष्यम्**

**बुद्धेः परस्य माहात्म्यं कर्मभेदो ज्ञानमाहात्म्यं चोच्यतेऽस्मिन् अध्याये । पूर्वानुष्ठितश्चायं धर्म इत्याह— इममिति ॥ १ - ३ ॥**

***प०टी०***— अध्यायप्रतिपाद्यं दर्शयति **बुद्धेरिति** । 'एवं ज्ञात्वा' इतिपर्यन्तं भगवन्महिमोच्यते । तदारभ्य 'श्रेयान्' इति कर्मभेदः । पश्चाज्ज्ञानमाहात्म्यम् । प्रघट्टकभेदप्रदर्शनार्थमेतत् । साक्षादर्थस्तु 'पूर्वोक्तयोर्ज्ञानकर्मणोर्विशेषविस्तारात्मकोऽयमध्यायः' इति । तत्र 'त्रैगुण्यविषया वेदाः' इत्युक्तयोगे रुचिजननार्थत्वपरतयाऽऽद्यश्लोकानवतारयति **पूर्वेति** । ''विवस्वते दक्षं प्रविश्य प्रोक्तवान्'' इति ध्येयम् ॥

***न०टी०***—पूर्वाध्यायसङ्गतिं दर्शयन्नेव तदध्यायप्रतिपाद्यमाह **बुद्धेरित्यादिना** । प्रघट्टकभेदप्रदर्शनार्थमेतद्भाष्यम् । अन्यथाऽर्थभेदादध्यायभेदापत्तेः । अर्थैक्यं तूक्तज्ञानकर्मविशेषविस्तारात्मक-

त्वेन ज्ञातव्यम् । तथा ह्युत्तरप्रस्थाने - उक्तयोर्ज्ञानकर्मणोः' इत्यादि । एतदर्थमेवात्र भगवन्महिमोच्यते । तथा हि मध्यमषट्काद्ये - 'साधनं प्राधान्येनोक्तमतीतैरध्यायैः' इति । 'योगे त्विमाम्' इत्यादिनाऽध्यायद्वयेन योऽयं परमैकान्तधर्म उक्तः स पूर्वैः ब्रह्मादिभिरप्यनुष्ठितः । अतस्त्वयाऽप्यादरेणानुष्ठेय इति भावेनाद्यप्रघट्टकमवतारयति **पूर्वेति** । तथा हि मोक्षधर्मे—

'नूनमेकान्तधर्मोऽयं श्रेष्ठो नारायणप्रियः' ।
'केनैष धर्मः कथितो देवेन ऋषिणाऽपि वा' ।

वैशम्पायनः—

'समुपद्येष्वनीकेषु कुरुपाण्डवयोर्मृधे ।
अर्जुने विमनस्के वै गीता भगवतोदिता' ।
एतमर्थं महाराज पृष्टः पार्थेन नारदः' ।
'यथाऽनुकथितस्तत्र नारदेन तथा श्रुणु ।'

इत्यारभ्य,

'यदिदं सप्तमं जन्म पद्मजं ब्रह्मणो नृप ।
तत्रैष धर्मः कथितः स्वयं नारायणेन ह ।
पितामहाय शुद्धाय युगादौ लोकधारिणे ।
पितामहश्च दक्षाय धर्ममेतं पुरा ददौ ।
ततो ज्येष्ठे च दौहित्रे प्रादाद्दक्षो नृपोत्तम ॥
आदित्ये सवितुर्ज्येष्ठे विवस्वान् जगृहे ततः ।
त्रेतायुगादौ च ततो विवस्वान् मनवे ददौ ॥
मनुश्च लोकभूत्यर्थं सुतायेक्ष्वाकवे ददौ ।
इक्ष्वाकुणा तु कथितो प्राप्य लोकानवस्थितः ॥
गमिष्यति क्षयान्ते च पुनर्नारायणं नृप ।'
'एवमेष महाधर्म आद्यो राजन् सनातनः ॥
दुर्विज्ञेयो दुष्करश्च सात्वतैर्धार्यते सदा ।
धर्मज्ञानेन चैतेन सुप्रयुक्तेन कर्मणा ॥
अहिंसाधर्मयुक्तेन प्रीयते हरिरीश्वरः ॥' इति ।

दक्षस्य दुहितरो बह्वय इत्यादित्य इत्यदितिश्रुतेः । अदितिश्रुतावपि बहव इति । सवितुर्ज्येष्ठ इति । स च विवस्वान् ततो दक्षात् जगृहे । एवं च दक्षस्थोऽहं विवस्वते प्रोक्तवानित्यविरोधः । इक्ष्वाकुणा कथितो व्याप्यावस्थित एव किञ्चित कालं नष्टः । अनन्तरं **च**शब्दात् कृष्णाभ्यां पाण्डवाभ्यां कथितो लोकान् व्याप्य स्थित्वाऽन्ते नारायणं गमिष्यति ॥

*प्र०दी०*— उक्तयोर्ज्ञानकर्मणोरुभयोर्विशेषविस्तरात्मकोऽयमध्याय इति पूर्वसङ्गताध्यायार्थस्थिताविह प्रकरणभेदप्रतिपादनार्थमाह— **बुद्धेरिति** । 'एवं ज्ञात्वा' इत्यतः प्राक्तनेन ग्रन्थेन बुद्धेः परस्य विष्णोर्माहात्म्यमुच्यते । आद्यस्य प्रकरणस्य पूर्वेण सङ्गतिं सूचयितुं बुद्धेः परस्येत्युक्तम् । 'श्रेयान्' इत्यतः पूर्वेण कर्मभेदः । निवृत्तस्य कर्मणोऽन्यस्माद्भेदः । निवृत्त एव कर्मण्युपासनायज्ञादिरूपेण वा भेदः । ज्ञानमाहात्म्यं शेषेणेति । ''इमं विवस्वते योगं'' इत्युपदेशपरम्पराकथनं प्रकृतानुपयुक्तमित्यतस्तात्पर्यमाह— **पूर्वैति** । पूर्वैरनुष्ठितः । ये मे मतमित्युक्तेन हेतुना सहास्य समुच्चयार्थश्चशब्दः । अयं धर्मः 'मयि सर्वाणि' इत्यनेनोक्तः । योगशब्दोऽप्यनेन व्याख्यातः । न केवलमुपदेशपरम्पराऽत्रोच्यते । [१]तच्चेतोऽपि त्वयाऽनुष्ठेयमिति प्रतिपादनार्थमिति भावः । ''कर्मणैव हि संसिद्धिं'' इत्यनेनैतद्गतार्थमिति चेन्न । गृहस्थकर्म त्वया न त्याज्यमित्यस्योपपादनायाचारस्य तत्रोक्तत्वात् । अत्र तु निवृत्तधर्मानुष्ठाने सदाचारस्योच्यमानत्वात् । अत एव तत्राऽऽचार इत्येवोक्तम् । इह तु 'अयं धर्म' इति । 'लोकेऽस्मिन् द्विविधा' इत्यत्रोक्तस्य 'कर्मणैव' इत्याद्युदाहरणमुक्तमिति तत्रापि न दोषः ॥

*भा०दी०*— गीतातात्पर्योक्तमाह **उक्तयोरिति** । एवं बुद्धेः परं बुध्वेत्यनेन निर............ कर्मत्वमित्यादिना चोक्तयोर्ज्ञानकर्मणोरित्यर्थः । कर्मभेदेत्यनूद्य तस्य द्वेधार्थमाह **कर्मभेद इत्यादिना** । उप............ यज्ञादिरूपेणेत्यर्थः । इत्युक्तेरहेतुना 'नियतं कुरु कर्म त्वमि'त्यादिनोक्तकर्मावश्यं कर्तव्यमि........ मध्ये कर्मणो ज्ञान .............. रूपहेतुना पूर्वैरनुष्ठितरूपहेतोः समुच्चयार्थ इत्यर्थः । **योगशब्द इति** । गीतार्थस्य इह ....... केवलतात्पर्यक.............. गीतायामुपदेशं परम्परोक्तावप्यनुमित इत्युक्तैर्लभप्रकारतदभिप्रायमाह **न केवलमिति** । एतेन चशब्दस्यार्थान्तर- ........... तद्गीतार्थमिति । इमं विवस्वत इत्यादिनोपलक्षणया महद्भिरनुष्ठितत्वकथनं गतार्थं तत्रापि जनकाद्यनुष्ठानस्यैवो............... ..............॥

*भा०र०*— उक्तार्थसङ्गतत्वेनैतदध्यायप्रतिपाद्यमर्थं दर्शयत् तात्पर्यमनुवदति **उक्तयोरिति** । ''ज्ञानकर्मणोर्मध्येऽन्यतरस्य'' इति प्रतीतिनिरासाय 'उभयोः' इत्युक्तम् । ''एवं बुद्धेः परम्'' (३.४३) इति ज्ञानस्य ''नियतं कुरु कर्म त्वम्'' (३.८) इति कर्मणश्चातीताध्याये उक्तत्वात्

त्वेन ज्ञातव्यम् । तथा ह्युत्तरप्रस्थाने - उक्तयोर्ज्ञानकर्मणोः' इत्यादि । एतदर्थमेवात्र भगवन्महिमोच्यते । तथा हि मध्यमषट्काद्ये - 'साधनं प्राधान्येनोक्तमतीतैरध्यायैः' इति । 'योगे त्विमाम्' इत्यादिनाऽध्यायद्वयेन योऽयं परमैकान्तधर्म उक्तः स पूर्वैः ब्रह्मादिभिरप्यनुष्ठितः । अतस्त्वयाऽप्यादरेणानुष्ठेय इति भावेनाद्यप्रघट्टकमवतारयति **पूर्वैरिति** । तथा हि मोक्षधर्मे—

'नूनमेकान्तधर्मोऽयं श्रेष्ठो नारायणप्रियः' ।
'केनैष धर्मः कथितो देवेन ऋषिणाऽपि वा' ।

वैशम्पायनः—

'समुपद्येष्वनीकेषु कुरुपाण्डवयोर्मृधे ।
अर्जुने विमनस्के वै गीता भगवतोदिता' ।
एतमर्थं महाराज पृष्टः पार्थेन नारदः' ।
'यथाऽनुकथितस्तत्र नारदेन तथा श्रुणु ।'

इत्यारभ्य,

'यदिदं सप्तमं जन्म पद्मजं ब्रह्मणो नृप ।
तत्रैष धर्मः कथितः स्वयं नारायणेन ह ।
पितामहाय शुद्धाय युगादौ लोकधारिणे ।
पितामहश्च दक्षाय धर्ममेतं पुरा ददौ ।
ततो ज्येष्ठे च दौहित्रे प्रादाद्दक्षो नृपोत्तम ॥
आदित्ये सवितुर्ज्येष्ठे विवस्वान् जगृहे ततः ।
त्रेतायुगादौ च ततो विवस्वान् मनवे ददौ ॥
मनुश्च लोकभूत्यर्थं सुतायेक्ष्वाकवे ददौ ।
इक्ष्वाकुणा तु कथितो प्राप्य लोकानवस्थितः ॥
गमिष्यति क्षयान्ते च पुनर्नारायणं नृप ।'
'एवमेष महाधर्म आद्यो राजन् सनातनः ॥
दुर्विज्ञेयो दुष्करश्च सात्वतैर्धार्यते सदा ।
धर्मज्ञानेन चैतेन सुप्रयुक्तेन कर्मणा ॥
अहिंसाधर्मयुक्तेन प्रीयते हरिरीश्वरः ॥' इति ।

दक्षस्य दुहितरो बह्व्य इत्यादित्य इत्यदितिश्रुतेः । अदितिश्रुतावपि बहव इति । सवितुर्ज्येष्ठ इति । स च विवस्वान् ततो दक्षात् जगृहे । एवं च दक्षस्योऽहं विवस्वते प्रोक्तवानित्यविरोधः । इक्ष्वाकुणा कथितो व्याप्यावस्थित एव किञ्चित् कालं नष्टः । अनन्तरं **चशब्दात्** कृष्णाभ्यां पाण्डवाभ्यां कथितो लोकान् व्याप्य स्थित्वाऽन्ते नारायणं गमिष्यति ॥

*प्र०दी०*— उक्तयोर्ज्ञानकर्मणोरुभयोर्विशेषविस्तरात्मकोऽयमध्याय इति पूर्वसङ्गताध्यायार्थस्थिताविह प्रकरणभेदप्रतिपादनार्थमाह— **बुद्धेरिति** । 'एवं ज्ञात्वा' इत्यतः प्राक्तनेन ग्रन्थेन बुद्धेः परस्य विष्णोर्माहात्म्यमुच्यते । आद्यस्य प्रकरणस्य पूर्वेण सङ्गतिं सूचयितुं बुद्धेः परस्येत्युक्तम् । 'श्रेयान्' इत्यतः पूर्वेण कर्मभेदः । निवृत्तस्य कर्मणोऽन्यस्माद्भेदः । निवृत्त एव कर्मण्युपासनायज्ञादिरूपेण वा भेदः । ज्ञानमाहात्म्यं शेषेणेति । "इमं विवस्वते योगं" इत्युपदेशपरम्पराकथनं प्रकृतानुपयुक्तमित्यतस्तात्पर्यमाह— **पूर्वेति** । पूर्वैरनुष्ठितः । ये मे मतमित्युक्तेन हेतुना सहास्य समुच्चयार्थश्चशब्दः । अयं धर्मः 'मयि सर्वाणि' इत्यनेनोक्तः । योगशब्दोऽप्यनेन व्याख्यातः । न केवलमुपदेशपरम्पराऽत्रोच्यते । [1]तच्चेतोऽपि त्वयाऽनुष्ठेयमिति प्रतिपादनार्थमिति भावः । "कर्मणैव हि संसिद्धिं" इत्यनेनैतद्गतार्थमिति चेन्न । गृहस्थकर्म त्वया न त्याज्यमित्यस्योपपादनायाचारस्य तत्रोक्तत्वात् । अत्र तु निवृत्तधर्मानुष्ठाने सदाचारस्योच्यमानत्वात् । अत एव तत्राऽऽचार इत्येवोक्तम् । इह तु 'अयं धर्म' इति । 'लोकेऽस्मिन् द्विविधा' इत्यत्रोक्तस्य 'कर्मणैव' इत्याद्युदाहरणमुक्तमिति तत्रापि न दोषः ॥

*भा०दी०*— गीतातात्पर्योक्तमाह **उक्तयोरिति** । एवं बुद्धेः परं बुध्वेत्यनेन निर............ कर्मत्वमित्यादिना चोक्तयोर्ज्ञानकर्मणोरित्यर्थः । कर्मभेदेत्यनूद्य तस्य द्वेधार्थमाह **कर्मभेद इत्यादिना** । उप............ यज्ञादिरूपेणेत्यर्थः । इत्युक्तेरहेतुना 'नियतं कुरु कर्म त्वमि'त्यादिनोक्तकर्मावश्यं कर्तव्यमि........ मध्ये कर्मणो ज्ञान ............. रूपहेतुना पूर्वैरनुष्ठितरूपहेतोः समुच्चयार्थ इत्यर्थः । **योगशब्द इति** । गीतार्थस्थ इह ....... केवलतात्पर्यक............. गीतायामुपदेशं परम्परोक्तावप्यनुमित इत्युक्तैर्लभप्रकारतदभिप्रायमाह **न केवलमिति** । एतेन चशब्दस्यार्थान्तर- ........... तद्गीतार्थमिति । इमं विवस्वत इत्यादिनोपलक्षणया महद्भिरनुष्ठितत्वकथनं गतार्थं तत्रापि जनकाद्यनुष्ठानस्यैवो............... ..............॥

*भा०र०*— उक्तार्थसङ्गतत्वेनैतदध्यायप्रतिपाद्यमर्थं दर्शयत् तात्पर्यमनुवदति **उक्तयोरिति** । "ज्ञानकर्मणोर्मध्येऽन्यतरस्य" इति प्रतीतिनिरासाय 'उभयोः' इत्युक्तम् । "एवं बुद्धेः परम्" (३.४३) इति ज्ञानस्य "नियतं कुरु कर्म त्वम्" (३.८) इति कर्मणश्चातीताध्याये उक्तत्वात्

किमनेन ? इत्यतो 'विशेष' इत्युक्तम् । **स्थितौ** अवमर्शेनैतदर्थनिर्णीतौ । अध्यायार्थप्रतिपादन-परमिव प्रतीयमानं भाष्यम् अन्यथाऽवतारयति **इहेति** ॥ प्रकरणभेदमात्रप्रतिपादनपरं भाष्यं, न पुनरध्यायप्रतिपाद्यार्थोक्तिपरम्, अर्थभेदेन वाक्यभेदापत्तेरिति भावः । परमाहात्म्यम्, कर्मभेदः, ज्ञानमाहात्म्यम् इति प्रमेयत्रयमपि प्रघट्टकभेदेनोच्यत इत्येतद् विवेकेन दर्शयति **एवं ज्ञात्वे-तीत्यादिना** । 'परस्य' इत्यनन्तरं शेषोक्तिः **विष्णोरिति** । **आद्यस्य** विष्णुमाहात्म्यप्रतिपादन-परस्य । **श्रेयानितीति** । "एवं ज्ञात्वा (४.१५) इत्यारभ्य" इत्युपस्कर्तव्यम् । **अन्यस्मात्** प्रवृत्त-लक्षणात् । "दैवमेवापरे" (४.२५) इत्यादिना निवृत्तकर्मावान्तरभेदाभिधानादाह **निवृत्त एवेति** । यज्ञादेः फलानभिसन्धाने निवृत्तत्वं ज्ञातव्यम् ।

"पूर्वमनुष्ठितम्" इति भाष्ययोजने कर्त्राकाङ्क्षा न शाम्यति । भूतार्थकप्रत्ययेनैवास्यार्थस्य लाभाच्च नातीव प्रयोजनं पूर्वशब्दस्य इत्यतो व्याचष्टे **पूर्वैरिति** । **इत्युक्तेनेति** । कर्मकरणाकरणयो-रिष्टानिष्टप्राप्तिपरिहारलक्षणेनेत्यर्थः । **अनेन** 'धर्मः' इति भाष्येण । न केवलं तात्पर्यवर्णनम् इति 'अपि'शब्दः । 'प्रकृतानुपयुक्तम्' इति कृतचोद्यं 'अनुष्ठित' इति भाष्यभावोक्त्या परिहारति **न केवलमिति** । तेषां विवस्वदादीनाम् । **ततोऽपि** पूर्वैरनुष्ठितत्वादपि । **गतार्थमिति** । "आचारो-ऽप्यस्तीत्याह" (गी.भा. ३.२०) इति तत्र भाषणात्, अत्रापि "पूर्वानुष्ठितश्चायमित्याह" इति आचारस्यैव प्रमाणस्योपन्यासादिति भावः । **अत्र त्विति** । यद्यप्युभयत्राप्याचारेणैव हेतुना कर्मणो-ऽनुष्ठेयत्वं साध्यत इत्यविवादम् । तथाऽपि पूर्वं गृहस्थकर्मत्वं पक्षतावच्छेदकीकृत्य तस्याचारेणानु-ष्ठेयत्वं साधितम् । अत्र पुनः निवृत्तधर्मत्वम् । न च गृहस्थधर्मत्व-निवृत्तधर्मत्वयोरभेदः शङ्क-नीयः । काम्ये कर्मणि प्रणवजपादौ चोभयोः परस्परपरिहारेण वृत्तेः । तथा च न गतार्थत्वमिति तात्पर्यम् । उक्तव्यवस्था कुतः ? इत्यत उपष्टम्भकमाह **अत एवेति** । एवं भेदस्याभिसंहितत्वा-देवेत्यर्थः । ननु "लोकेऽस्मिन् द्विविधा निष्ठा पुरा प्रोक्ता मयाऽनघ" (३.३) इत्यत्र "कर्मयोगेन योगिनाम्" इत्याचारस्याप्युक्तत्वात् "कर्मणैव" (३.२०) इत्यस्य तेन गतार्थत्वम् इति शङ्कां पुन-रुक्तिपरिहारप्रसक्त्या परिहरति **लोकेऽस्मिन्निति** । **उदाहरणमिति** । के ते कर्मयोगिनः ? इत्याका-ङ्क्षायां 'जनकादयस्ते' इत्युदाहरणमुक्तम् इति तत्रापि न पुनरुक्तिदोष इत्यर्थः ॥ १-३ ॥

***गीताक्षरार्थस्तु***— उक्तयोर्ज्ञानकर्मणोरुभयोर्विशेषविस्तारात्मकोऽयमध्याय इति सङ्गतिः । तत्रापि "एवं ज्ञात्वा" (४.१५) इत्यतः प्राक्तनेन प्रकरणेन विष्णुमाहात्म्यमुच्यते । 'श्रेयान्' (४.३३) इत्यतःपूर्वेण प्रघट्टकेन निवृत्तस्य कर्मणः प्रवृत्ताद्भेदः, उपासना-यज्ञादिरूपेण वा भेदः । ज्ञानि-माहात्म्यं शेषेण, इति विवेकः । "मयि सर्वाणि कर्माणि" (३.३०) इत्यत्रोक्तनिवृत्तधर्मानुष्ठान-

लक्षणकर्मयोगे रुचिजननाय पूर्वानुष्ठितोऽयं धर्म इत्युच्यते **इमम्** इत्यादित्रिश्लोक्या । **अव्ययम्** अव्ययफलम् । **इमम्** उक्तरूपं निवृत्तधर्मलक्षणं **योगं** ज्ञानोपायरूपं धर्मं **विवस्वते** आदित्यायाहं दक्षमधिष्ठाय **प्रोक्तवान्** व्याख्यानरूपेणोपदिष्टवान् ।

अत्रायं विवेको नरहरितीर्थश्रीमच्चरणैर्विभावितः । तथा हि मोक्षधर्मे—

"नूनमेकान्तधर्मोऽयं श्रेयान्नारायणप्रियः । (म.भा., शान्तिपर्व ३५८.४)

केनैष धर्मः कथितो देवेन ऋषिणाऽपि वा । (म.भा., शान्तिपर्व ३५८.६)

वैशम्पायनः—

समुपोढेष्वनीकेषु कुरुपाण्डवयोर्मृधे ।
अर्जुने विमनस्के वै गीता भगवतोदिता । स्वयम् । (शान्तिपर्व ३५८.८)

एतदर्थं महाराज पृष्टः पार्थेन नारदः ।
ऋषिमध्ये महाभाग शृण्वतोः कृष्णभीमयोः ॥ (शान्तिपर्व ३५८.११)

गुरुणा च मयाऽप्येष कथितो नृपसत्तम ।
यथावत्कथितं तत्र नारदेन तथा शृणु ॥" (शान्तिपर्व ३५८.१२)

इत्याद्यारभ्य

"यदिदं सप्तमं जन्म पद्मजं ब्रह्मणो नृप ।
तत्रैष धर्मः कथितः स्वयं नारायणेन ह ॥ (शान्तिपर्व ३५८.४८)

पितामहाय शुद्धाय युगादौ लोककारिणे ।
पितामहश्च दक्षाय धर्ममेतं पुरा ददौ ॥ (शान्तिपर्व ३५८.४९)

ततो ज्येष्ठे तु दौहित्रे प्रादाद्दक्षो नृपोत्तम ।
आदित्ये सवितुर्ज्येष्ठे विवस्वान् जगृहे ततः ॥ (शान्तिपर्व ३५८.५०)

त्रेतायुगादौ च ततो विवस्वान्मनवे ददौ ।
मनुश्च लोकभूत्यर्थं सुतायेक्ष्वाकवे ददौ ॥ (शान्तिपर्व ३५८.५१)

इक्ष्वाकुणा च कथितो व्याप्य लोकानवस्थितः ।
गमिष्यति क्षयान्ते च पुनर्नारायणं नृप ॥ (शान्तिपर्व ३५८.५२)

एवमेष महान् धर्म आद्यो राजन् सनातनः ।
दुर्विज्ञेयो दुष्करश्च सात्त्वतैर्धार्यते सदा ॥ (शान्तिपर्व ३५८.५५)
धर्मज्ञानेन वै तेन सुप्रयुक्तेन कर्मणा ।
अहिंसाधर्मयुक्तेन प्रीयते हरिरीश्वरः ॥'' (शान्तिपर्व ३५८.५६) इति ।

''दक्षस्य दुहितरो बह्व्यः'' इत्यदितेरपि सुता बहव इति 'सवितुर्ज्येष्ठे' इत्युपपद्यते । स च विवस्वान् दक्षाज्जगृह इत्यर्थः । एवं च दक्षस्थोऽहं विवस्वते प्रोक्तवान् इत्यविरोधः । इक्ष्वाकुणा कथितो व्याप्यावस्थितत्वान्नष्टः । अनन्तरं चशब्दात् कृष्णाभ्यां पाण्डवाभ्यां कथितो लोकान् व्याप्य स्थिते नारायणं गमिष्यतीति मोक्षधर्मे गताऽऽनुपूर्वी नोपनिबद्धा । किन्तूपयुक्तो भागो गृहीत इति न क्षुद्रोपद्रवः । तथा च भावप्रदीपिकाऽपि ''विवस्वतेऽहं दक्षं प्रविश्य प्रोक्तवानिति'' इति । विवस्वान् **मनवे** श्राद्धदेवाय प्राह, मनुरिक्ष्वाकवेऽब्रवीत् ॥ १ ॥

**इमं** धर्मं **राजर्षयः** मान्धातृसगराम्बरीषप्रभृतयो राजसत्तमा विदुः, अनुष्ठितवन्तश्च । **स** योगो **महता** दीर्घेण कालेन **इह** लोके **नष्टः** अदर्शनं गतः । **परन्तप** परे विपक्षाः, तान् शौर्यतेजोगभस्तिभिः भानुरिव तापयतीति, तथा, उक्तशत्रुतापनेति सम्बोधनम् ॥ २ ॥

**स एव** एवमदर्शनं गतः **पुरातनः** सनातनः **अयं** योगः । **भक्तोऽसि मे सखा च** असि इति **ते** तुभ्यं **प्रोक्तः** व्याख्यातः । **एतत्** प्रवचनं रहस्यमुत्तमं चेति ॥ ३ ॥

**गीतातात्पर्यनिर्णयः**

**उक्तयोर्ज्ञानकर्मणोरुभयोर्विशेषविस्तरात्मकोऽयमध्यायः ।**

***न्या०दी०***— उक्तार्थसङ्गतत्वेन एतदध्यायप्रतिपाद्यमर्थं दर्शयति **उक्तयोरिति** ॥ ज्ञानकर्मणोर्मध्ये अन्यतरस्येति प्रतीतिनिरासाय उभयोरित्युक्तम् । कर्मणोऽतीताध्याये विवृतत्वात् किमनेनेत्यतो विशेषेत्युक्तम् ।

***भा०दी०***— **विवृतत्वादिति** । ''न कर्मणामनारम्भात्'' इत्यादिना कर्माकरणं विनिन्द्य ''नियतं कुरु कर्मे''त्यादिना विवृतत्वादित्यर्थः ॥

**गीतातात्पर्यनिर्णयः**

**''ब्रह्मरुद्रेन्द्रसूर्याणां यद्दत्तं विष्णुना पुरा ।**
**पञ्चरात्रात्मकं ज्ञानं व्यासोऽदात् पाण्डवेषु तत् ।**

**तेषामेवावतारेषु सेनामध्येऽर्जुनाय च ।**
**प्रादाद्गीतेति निर्दिष्टं सङ्क्षेपेणायुयुत्सवे ॥**

*प्रका०*— 'उक्तयोः' इत्यनेन एतदध्याये निपाद्यमुक्त्वा इममित्यादेरर्थमाह **ब्रह्मेत्यादिना** । **तेषां** ब्रह्मादीनाम् ॥

*न्या०दी०*— उक्तकर्मयोगे रुचिजननाय पूर्वानुष्ठितोऽयं धर्म इत्युच्यते 'इममि'ति । तत्तात्पर्यं स्मृत्यैवाह **ब्रह्मेति** ॥

**गीतातात्पर्यनिर्णयः**

**यथा कुर्वन्ति कर्माणि यथा जानन्ति देवताः ।**
**सर्वे कार्तयुगाश्चैव नृपाश्च मनुपूर्वकाः ।**
**ज्ञातव्यं चैव कर्तव्यं यथा सर्वैर्मुमुक्षुभिः ।**
**त्रैतादित्रिषु जातैश्च गीतायां तदुदाहृतम् ।**
**पाण्डवाद्याः क्षेमकान्ताः करिष्यन्ति च जानते ।**
**तथैव तेन गीताया नास्ति शास्त्रं समं क्वचित् ॥**

*न्या०दी०*— गीता पञ्चरात्रसङ्क्षेपश्चेत् तर्हि तस्याः सर्वोत्तमशास्त्रत्वहानिरित्यतः शब्दत एव सङ्क्षेपो नार्थत इत्याह **यथेति** ॥

*भा०दी०*— अर्थसङ्क्षेपं बुद्ध्वा शङ्कते **पञ्चरात्रसङ्क्षेपश्चेदिति** ॥

**गीतातात्पर्यनिर्णयः**

**वेदार्थपूर्वकं ज्ञेयं पञ्चरात्रं यतोऽखिलम् ।**
**तत्सङ्क्षेपश्च गीतेयं तस्मान्नास्याः समं क्वचित् ॥"**

**—इति ब्रह्मवैवर्ते ॥ १-३ ॥**

*न्या०दी०*— सर्वपञ्चरात्रार्थत्वे गीतायाः पञ्चरात्रादधमत्वमात्रं मास्तु । तावता सर्वशास्त्रोत्तमत्वं कथमित्यत आह **वेदेति** ॥ सर्वशास्त्रेभ्योऽतिशयेन वेदार्थपूरकपञ्चरात्राशेषार्थत्वेन गीतायाः सर्वशास्त्रोत्तमत्वं युक्तमिति भावः ॥

**गीता**

## अर्जुन उवाच—

**अपरं भवतो जन्म परं जन्म विवस्वतः ।**
**कथमेतद्विजानीयां त्वमादौ प्रोक्तवानिति ॥ ४ ॥**

*वि०वि०*— 'मयि सर्वाणि' इत्युक्तं भगवन्माहात्म्यम् आदितो ज्ञातुमर्जुन उवाच **अपरमिति** । **अपरं** पश्चात्तनम् । **परं** पूर्वकालीनम् ॥

*बा०ल०*— 'अपरं भवतो' इत्यत्र अपरम् अल्पकालीनम्, त्वदवतारस्य इदानीं जातत्वात् । परं बहुकालीनम्, सूर्यस्यादौ सृष्टत्वात् ॥

*सा०सं०*— 'मयि सर्वाणि' (३-३०) इत्यत्र हरेः पूज्यत्वम्, अर्जुनस्य पूजकत्वमित्युक्तम् । तथा तस्यैव स्वतन्त्रकर्तृत्वमन्यस्य तदधीनकर्तृत्वमुक्तम् । एवं च पूज्यपूजकत्वादिना तत्राभिप्रेतं जीवेश्वरभेदं प्रमाणेन ज्ञातुं पृच्छति **अपरमित्यादिना** । एवं च 'न त्वेवाहम्' (२-१२) इत्यादिना सर्वप्रकारेणोत्पत्तिनाशराहित्यं भगवतः श्रुतवान् कथमेवम् । **अपरं** पश्चात्तनम् । **भवतो जन्मेति** पृच्छतीति चोद्यानवकाशः ॥

*अ०प्र०*— भगवता विवस्वन्तं प्रतियोगोपदेशासम्भवं पश्यन् अर्जुन उवाच **अपरमिति** ।

हे वार्ष्णेय !, भवतो[१], जन्म[२], अपरं[३], विवस्वतः[४], जन्म परम्[६], एतत्[७], त्वं[८], आदौ[९], प्रोक्तवानिति[१०], अहं कथं[११], विजानीयाम्[१२] इत्यन्वयः ।

हे वार्ष्णेय !, भवतः = तव[१], जन्म[२], अपरं = अतीतबहुकालान्तरे जातं पश्चात्कालीनमर्वाचीनं वा[३], विवस्वतः[४], जन्म[५], परं = पूर्वकालीनं इति स्थिते[६], एतत् = पूर्वकथावृत्तं[७], त्वं = आदौ, प्रोक्तवानिति = आदौ त्वयोक्तमिति[१०], अहं कथं विजानीयां = ज्ञातुं शक्नुयां कथं मया ज्ञातव्यमित्यर्थः ॥ ४ ॥

**गीता**

## श्रीभगवानुवाच—

**बहूनि मे व्यतीतानि जन्मानि तव चार्जुन ।**
**तान्यहं वेद सर्वाणि न त्वं वेत्थ परन्तप ॥ ५ ॥**

***वि०वि०***— रूपान्तरेण मया सूर्याय प्रोक्तमित्याशयवान् भगवानुवाच **बहूनीति** ॥

***सा०सं०***— अत एव विदितप्रश्नाभिप्रायो भगवान् 'तव च' इति 'न त्वं वेत्थ' इति पराक्त्वाज्ञत्वयोरुक्तिं कृतवान् । अन्यथा 'बहूनि मे व्यतीतानि जन्मानि' इत्येतावता प्रश्नपरिहारात् **तव च** इत्याद्युक्तिर्व्यर्था स्यादिति ज्ञेयम् ॥ ५ ॥

***अ०प्र०***— हे अर्जुन ![१], मे[२], तव च[३], बहूनि[४], जन्मानि[५], व्यतीतानि[६], हे परन्तप[७], अहं[८], तानि[९], सर्वाणि[१०], वेद[११], त्वं तु न वेत्थ इत्यन्वयः ।

हे अर्जुन ![१], मे = मम, तव च[३], बहूनि = अनन्तानन्तानि[४], जन्मानि[५], व्यतीतानि = व्यतिक्रान्तानि[६], हे परन्तप ! = हे शत्रुतापन[७], अहं[८], तानि = गतानि स्वकीयानि लोक-विलक्षणानि यस्मिन् यस्मिन् समये यद्यद्रूपेणावतीर्णः तानि[९], सर्वाणि जन्मानि = अवताराणि[१०], वेद = सर्वज्ञस्सर्वसाक्षी अलुप्तविद्याशक्तित्वात्, वेद = जानामि[११], त्वं तु = अविद्यावृतत्वात्[१२], न वेत्थ = न जानीषे इत्यर्थः । अत एव त्वदादिजीवानां ईश्वरस्य च पूज्य-पूजकत्व-स्वामि-सेवकत्वलक्षणो भेदो युक्त एवेति भावः ॥ ५ ॥

**भाष्यम्**

**'मयि सर्वाणि' इत्युक्तं तन्माहात्म्यमादितो ज्ञातुं पृच्छति— अपरमिति** ॥ ॥ ४ ॥ ५ ॥

***प०टी०***— अर्जुनज्ञानित्वाविरोधेन तत्प्रश्नाभिप्रायमाह **मयीति** । **माहात्म्यं** सर्वकर्तृत्वादि ॥

***न०टी०***—भगवतोऽप्यनित्यदेहित्वबुद्ध्याऽर्जुनः पृच्छतीति शङ्कानिवृत्तये तत्प्रश्नतात्पर्यमाह **मयीति** । 'मयि सर्वाणि कर्माणि' इति सर्वकर्तृत्वम्, 'अध्यात्मचेतसा' इति सर्वपरमत्वं चोक्त-मित्यर्थः ॥

***प्र०दी०***— ननु 'न त्वेवाहं' इत्यादिना सर्वप्रकारेणोत्पत्तिनाशराहित्यमुक्तं भगवतः । तच्छ्रुत्वा कथं 'अपरं' इति पृच्छतीत्यत आह— **मयीति** । तन्माहात्म्यमित्युपलक्षणम् । आदितः प्रमितिकारणतः । 'मयि सर्वाणि' इत्यत्र परमेश्वरस्य माहात्म्यं पूज्यत्वादिलक्षणमुक्तम् । अर्जुनस्य च पूजकत्वादिकम् । तमिममीश्वरजीवयोः पूज्यपूजकत्वादिना भगवताऽङ्गीकृतं भेदं प्रमाणेन ज्ञातुमेवं पृच्छतीत्यर्थः । अत एव ज्ञाताशयो भगवान् 'तव च', 'न त्वं वेत्थ' इति परिहरति । अन्यथा-ऽनुपयुक्तं तन्न वक्तव्यमेव ॥

***भा०दी०***— ननु लोकेऽस्मिन्निति श्लोके 'कर्मयोगेन योगिनामि'त्युक्तेः । तेन कर्मणैवेत्यस्य पौनरुक्त्यमित्यत आह लोके सि.......... कर्म इत्याकाङ्क्षायामेते जनकादयस्त इत्युक्तमित्यर्थः । **सर्वप्रकारेणेति** । शब्दपावकादि नानाप्रकारेणेत्यर्थः । यद्वा स्वरूपे ........ कूटस्थत्वेन चेत्यर्थः । **तन्न वक्तव्यमिति** । बहूनीत्यादिना नैकप्रश्नपरिहारस्य पूर्तेस्तान्यहं वेदेत्यादिना तज्ज्ञत्वतदज्ञत्वयोर्भेदज्ञापनाभिप्रायाभावे वक्तव्यता न स्यादित्यर्थः ॥

***भा०र०***— **तन्माहात्म्यम्** ईश्वरमाहात्म्यम् । **उपलक्षणम्** "जीवपूजकत्वादेः, तल्लभ्यभेदस्य च" इति शेषः । भगवन्माहात्म्यस्यानादित्वात् कथम् 'आदितः' इति कारणपूर्वं ज्ञास्यामीति प्रश्नः ? इत्यत आदिशब्दस्य विवक्षितमर्थमाह **आदित इति** । धातूनामनेकार्थत्वाद् **"आदीयते** प्रमीयते अनेन" इत्यादिः । "उपसर्गे घोः किः" इति किप्रत्ययः । "आद्यादिभ्यः" इति वार्तिकात् तसिरिति भावः ।

**आदितः** कारणत इत्येवार्थः, योग्यतया प्रमितिलाभ इत्यपि **आहुः** । 'पूज्यत्वादि' इत्यत्र कर्मस्वातन्त्र्यम् आदिपदार्थः । भगवानेव सर्वकर्माणि करोति, तत्पूजेति चानुसन्धानं संन्यास इति तत्र (गी.भा. ३.३०) भाषणादिति भावः । उपलक्षणीयं दर्शयति **अर्जुनस्य चेति** । आदिपदेन अस्वातन्त्र्यं गृह्यते । **एवं पृच्छति** न पुनरीश्वरस्योत्पत्त्यादिराहित्यमजानन् । प्रमाणप्रश्न एवायमित्यत्र ज्ञापकमाह **अत एवेति** । यत एवं भेदप्रमाणप्रश्नोऽयम् अत एवेत्यर्थः । "तव च" इत्यत्र न केवलं मम, किन्तु तव चेति प्रत्यक्त्वपराक्त्वेन प्राप्तं भेदं प्रतिज्ञाय "तान्यहं वेद, न त्वं वेत्थ" इति तद्धेतुत्वेन ज्ञानाज्ञानरूपभेदकधर्म एव परिहारे भगवतोक्त इति भावः । **अनुपयुक्तमिति** । विवस्वदाद्यपेक्षया तव कथं प्राचीनत्वम् ? इति प्रश्नस्य "बहूनि मे" इत्युक्त्यैव परिहृतत्वात् "तव च", "न त्वं वेत्सि" इत्येतत् प्रकृतानुपयुक्तमिति न वक्तव्यमित्यर्थः ॥ ४-५ ॥

***गीताक्षरार्थस्तु***— "मयि सर्वाणि" (३.३०) इत्यत्र परमेश्वरस्य पूज्यत्वादिकम् अर्जुनस्य पूजकत्वादिकं कथितम् । तमिमम् ईश्वरजीवयोः पूज्यपूजकत्वादिना भगवताऽङ्गीकृतभेदं प्रमाणेन ज्ञातुमर्जुनेन पृच्छ्यते **अपरमिति** । **अपरम्** अर्वाग् वसुदेवस्य गृहे **भवतो जन्म विवस्वत** आदित्यस्य **परं** प्राचीनं **तत्** कथमेतद् विजानीयाम् "अविरुद्धार्थतया यत्त्वमादाविमं योगं प्रोक्तवान्" इति ॥ ४ ॥

इमं प्रश्नं ज्ञाताशयो भगवान् परिहर्तुमुवाच **बहूनीति** । स्पष्टोऽर्थः । अत्र च प्रत्यक्त्वपराक्त्वयोः, ज्ञत्वाज्ञत्वयोश्च भेदे प्रमाणत्वमुक्तं भवतीति ॥ ५ ॥

**गीतातात्पर्यनिर्णयः**

**"जानन्तोऽपि विशेषार्थज्ञानाय स्थापनाय वा ।**
**पृच्छन्ति साधवो यस्मात् तेन पृच्छसि पार्थिव ॥"**

**इत्याग्नेयवचनान्नार्जुनो भगवन्तं न जानाति ॥ ४-५ ॥**

*प्रका०*— 'अपरमि'ति अर्जुनवचनाभिप्रेतार्थमाह **जानन्तोऽपीत्यादिना** ॥

*न्या०दी०*— इदानीन्तनत्वाद्भगवतो विवस्वतः प्राचीनत्वात् कथं तदुपदेष्टृत्वमिति पृच्छति **अपरमिति** । तत्रार्जुनस्य भगवदज्ञानित्वप्रतीतेः प्रागुक्तानुपपत्तिरित्यत आह **जानन्तोऽपीति** ॥ नैवं प्रश्नेनार्जुनो भगवन्तमनादिनित्यं न जानातीति कल्प्यम् । जानन्तोऽपीति वचनात् प्रश्नस्य विशेषज्ञानाद्यर्थत्वोपपत्तेः इति भावः । **स्थापनाय** ज्ञातस्य दृढीकरणाय ॥

*भा०दी०*— **प्रागुक्तानुपपत्तिरिति** । साक्षादिन्द्रावतारमुत्तमाधिकारिणमात्मनः प्रियतम-मर्जुनमित्यनेनोक्तस्य तथा पार्थानामतिरोधानं ज्ञानं सुस्थिरतां गतमित्युक्तस्य ज्ञानित्वस्य चानुप-पत्तिरित्यर्थः ॥

**गीता**

**अजोऽपि सन्नव्ययात्मा भूतानामीश्वरोऽपि सन् ।**
**प्रकृतिं स्वामधिष्ठाय सम्भवाम्यात्ममायया ॥ ६ ॥**

*वि०वि०*— जन्मान्यतीतानि चेत्तर्हि न जननमरणराहित्यं भगवतः स्यात् । तथा चाविनाशीत्युक्तविरोधः स्यादित्यत आह **अजोपीति** । उत्पत्तिरहितोऽपि सन्, अव्ययः आत्मा देहो यस्येत्यव्ययात्माऽपि सन्, भूतानामीश्वरोऽपि सन् सम्भवामि । स्वरूपतो देहतश्चानादिनित्यस्य सम्भवः कथमुच्यते । व्याहतत्वात् इत्यत उक्तं **प्रकृतिमिति** । प्रकृत्या जातान् वसुदेवादीन् अधिष्ठाय प्रादुर्भवामि । तेन निमित्तेन प्रकृतिमधिष्ठाय प्रकृत्युपादानां भ्रान्तिमाश्रित्य सम्भवामि । भ्रमतां भ्रमति क्षितिरितिवत् सम्भूतोऽयमिति जनानां भ्रमविषयो भवामीत्यर्थः । यदि मातापितृ-सम्बन्धोऽङ्गीकृतः, तर्हि तन्निमित्तं दुःखादिकमपि प्रसज्येतेत्यत उक्तं **स्वामिति** । स्वकीयां भगव-दधीनामित्यर्थः । कुतस्तव जीवविलक्षणं जन्मेत्यत उक्तम् **आत्ममाययेति** । आत्मज्ञानेन सर्वज्ञ-त्वादित्यर्थः । 'केतुः केतश्चितिश्चित्तं मतिः क्रतुर्मनीषा माया' इति ह्यभिधानम् । यद्वा, प्रकृतिशब्देन भ्रमनिमित्तमुक्तम् । प्रकृतिवाचिनैव मायाशब्देन भ्रान्त्युपादानमुच्यत इति भेदः । उक्तं च—

***भा०दी०***— ननु लोकेऽस्मिन्निति श्लोके 'कर्मयोगेन योगिनामि'त्युक्तेः । तेन कर्मणैवेत्यस्य पौनरुक्त्यमित्यत आह लोके सि.......... कर्म इत्याकाङ्क्षायामेते जनकादयस्त इत्युक्तमित्यर्थः । **सर्वप्रकारेणेति** । शब्दपावकादि नानाप्रकारेणेत्यर्थः । यद्वा स्वरूपे ........ कूटस्थत्वेन चेत्यर्थः । **तन्न वक्तव्यमिति** । बहूनीत्यादिना नैकप्रश्नपरिहारस्य पूर्तेस्तान्यहं वेदेत्यादिना तज्ज्ञत्वतदज्ञत्वयोर्भेदज्ञापनाभिप्रायाभावे वक्तव्यता न स्यादित्यर्थः ॥

***भा०र०***— **तन्माहात्म्यम्** ईश्वरमाहात्म्यम् । **उपलक्षणम्** "जीवपूजकत्वादेः, तल्लभ्यभेदस्य च" इति शेषः । भगवन्माहात्म्यस्यानादित्वात् कथम् 'आदितः' इति कारणपूर्वं ज्ञास्यामीति प्रश्नः ? इत्यत आदिशब्दस्य विवक्षितमर्थमाह **आदित इति** । धातूनामनेकार्थत्वाद् "**आदीयते** प्रमीयते अनेन" इत्यादिः । "उपसर्गे घोः किः" इति किप्रत्ययः । "आद्यादिभ्यः" इति वार्तिकात् तसिरिति भावः ।

**आदितः** कारणत इत्येवार्थः, योग्यतया प्रमितिलाभ इत्यपि **आहुः** । 'पूज्यत्वादि' इत्यत्र कर्मस्वातन्त्र्यम् आदिपदार्थः । भगवानेव सर्वकर्माणि करोति, तत्पूजेति चानुसन्धानं संन्यास इति तत्र (गी.भा. ३.३०) भाषणादिति भावः । उपलक्षणीयं दर्शयति **अर्जुनस्य चेति** । आदिपदेन अस्वातन्त्र्यं गृह्यते । **एवं पृच्छति** न पुनरीश्वरस्योत्पत्त्यादिराहित्यमजानन् । प्रमाणप्रश्न एवायमित्यत्र ज्ञापकमाह **अत एवेति** । यत एवं भेदप्रमाणप्रश्नोऽयम् अत एवेत्यर्थः । "तव च" इत्यत्र न केवलं मम, किन्तु तव चेति प्रत्यक्त्वपराक्त्वेन प्राप्तं भेदं प्रतिज्ञाय "तान्यहं वेद, न त्वं वेत्थ" इति तद्धेतुत्वेन ज्ञानाज्ञानरूपभेदकधर्म एव परिहारे भगवतोक्त इति भावः । **अनुपयुक्तमिति** । विवस्वदाद्यपेक्षया तव कथं प्राचीनत्वम् ? इति प्रश्नस्य "बहूनि मे" इत्युक्त्यैव परिहृतत्वात् "तव च", "न त्वं वेत्सि" इत्येतत् प्रकृतानुपयुक्तमिति न वक्तव्यमित्यर्थः ॥ ४-५ ॥

***गीताक्षरार्थस्तु***— "मयि सर्वाणि" (३.३०) इत्यत्र परमेश्वरस्य पूज्यत्वादिकम् अर्जुनस्य पूजकत्वादिकं कथितम् । तमिमम् ईश्वरजीवयोः पूज्यपूजकत्वादिना भगवताऽङ्गीकृतभेदं प्रमाणेन ज्ञातुमर्जुनेन पृच्छ्यते **अपरमिति** । **अपरम्** अर्वाग् वसुदेवस्य गृहे **भवतो जन्म विवस्वत** आदित्यस्य **परं** प्राचीनं **तत्** कथमेतद् विजानीयाम् "अविरुद्धार्थतया यत्त्वमादाविमं योगं प्रोक्तवान्" इति ॥ ४ ॥

इमं प्रश्नं ज्ञाताशयो भगवान् परिहर्तुमुवाच **बहूनीति** । स्पष्टोऽर्थः । अत्र च प्रत्यक्त्वपराक्त्वयोः, ज्ञत्वाज्ञत्वयोश्च भेदे प्रमाणत्वमुक्तं भवतीति ॥ ५ ॥

**गीतातात्पर्यनिर्णयः**

**"जानन्तोऽपि विशेषार्थज्ञानाय स्थापनाय वा ।**
**पृच्छन्ति साधवो यस्मात् तेन पृच्छसि पार्थिव ॥"**
**इत्याग्नेयवचनान्नार्जुनो भगवन्तं न जानाति ॥ ४-५ ॥**

*प्रका०*— 'अपरमि'ति अर्जुनवचनाभिप्रेतार्थमाह **जानन्तोऽपीत्यादिना** ॥

*न्या०दी०*— इदानीन्तनत्वाद्भगवतो विवस्वतः प्राचीनत्वात् कथं तदुपदेष्टृत्वमिति पृच्छति **अपरमिति** । तत्रार्जुनस्य भगवदज्ञानित्वप्रतीतेः प्रागुक्तानुपपत्तिरित्यत आह **जानन्तोऽपीति** ॥ नैवं प्रश्नेनार्जुनो भगवन्तमनादिनित्यं न जानातीति कल्प्यम् । जानन्तोऽपीति वचनात् प्रश्नस्य विशेषज्ञानाद्यर्थत्वोपपत्तेः इति भावः । **स्थापनाय** ज्ञातस्य दृढीकरणाय ॥

*भा०दी०*— **प्रागुक्तानुपपत्तिरिति** । साक्षादिन्द्रावतारमुत्तमाधिकारिणमात्मनः प्रियतम-मर्जुनमित्यनेनोक्तस्य तथा पार्थानामतिरोधानं ज्ञानं सुस्थिरतां गतमित्युक्तस्य ज्ञानित्वस्य चानुप-पत्तिरित्यर्थः ॥

**गीता**

**अजोऽपि सन्नव्ययात्मा भूतानामीश्वरोऽपि सन् ।**
**प्रकृतिं स्वामधिष्ठाय सम्भवाम्यात्ममायया ॥ ६ ॥**

*वि०वि०*— जन्मान्यतीतानि चेत्तर्हि न जननमरणराहित्यं भगवतः स्यात् । तथा चावि-नाशीत्युक्तविरोधः स्यादित्यत आह **अजोपीति** । उत्पत्तिरहितोऽपि सन्, अव्ययः आत्मा देहो यस्येत्यव्ययात्माऽपि सन्, भूतानामीश्वरोऽपि सन् सम्भवामि । स्वरूपतो देहतश्चानादिनित्यस्य सम्भवः कथमुच्यते । व्याहतत्वात् इत्यत उक्तं **प्रकृतिमिति** । प्रकृत्या जातान् वसुदेवादीन् अधिष्ठाय प्रादुर्भवामि । तेन निमित्तेन प्रकृतिमधिष्ठाय प्रकृत्युपादानां भ्रान्तिमाश्रित्य सम्भवामि । भ्रमतां भ्रमति क्षितिरितिवत् सम्भूतोऽयमिति जनानां भ्रमविषयो भवामीत्यर्थः । यदि मातापितृ-सम्बन्धोऽङ्गीकृतः, तर्हि तन्निमित्तं दुःखादिकमपि प्रसज्येतेत्यत उक्तं **स्वामिति** । स्वकीयां भगव-दधीनामित्यर्थः । कुतस्तव जीवविलक्षणं जन्मेत्यत उक्तम् **आत्ममाययेति** । आत्मज्ञानेन सर्वज्ञ-त्वादित्यर्थः । 'केतुः केतश्चितिश्चित्तं मतिः क्रतुर्मनीषा माया' इति ह्यभिधानम् । यद्वा, प्रकृतिशब्देन भ्रमनिमित्तमुक्तम् । प्रकृतिवाचिनैव मायाशब्देन भ्रान्त्युपादानमुच्यत इति भेदः । उक्तं च—

'महदादेश्च या माता श्रीर्भूमिरिति कल्पिता ।
विमोहिका च दुर्गाख्या ताभिर्विष्णुरजोऽपि हि ॥
जातवत् प्रथते ह्यात्मचिद्बलान्मूढचेतसाम्' ॥ इति ।

अथवा, परप्रेरणया अवतारादिकमिति शङ्का निवार्यते । आत्ममायया स्वेच्छयेत्यर्थः ।

'महामायेत्यविद्येति नियतिर्मोहिनीति च ।
प्रकृतिर्वासनेत्येवं तवेच्छानन्त कथ्यते ॥'

इति वचनात् । पूर्णकामस्यावतारे किं प्रयोजनमित्यत उक्तम् **प्रकृतिमिति** । स्वभावमित्यर्थः । स्वस्वरूपमितिवदुपचारत्वशङ्कानिवृत्यर्थं पुनः स्वशब्दः ।

'स्रष्टृत्वादिस्वभावत्वात् स्वेच्छया विष्णुरव्ययः ।
सृष्ट्यादिकं करोत्यद्धा स्वयं च बहुधा भवेत् ॥' इति श्रुतेः ॥

***वा०ल०***— 'प्रकृतिं स्वामधिष्ठाय' इत्यत्र प्रकृतिं सच्चिदानन्दस्वभावम् । आत्ममायया स्वेच्छया । 'जन्म कर्म च मे दिव्यमेवं यो वेत्ति तत्त्वतः । त्यक्त्वा देहं पुनर्जन्म नैति' इति वक्ष्यमाणत्वात् मायया स्वेच्छयैव । पुनर्जन्म नैतीति फलोक्तेः, दिव्यमिति जन्मकर्मणोर्विशेषणाच्च हरेर्नलोकवज्जन्म । जन्मज्ञानेन जन्मनाशायोगात् । किन्त्ववतार एव ॥

***सा०सं०***— जन्मान्यतीतानि चेत् तर्हि न जननमरणराहित्यमीश्वरत्वं वा तव स्यात् । तथा च 'अविनाशि तु' इत्युक्तविरोध इत्यत आह **अजोऽपीति** । देहतोऽप्युत्पत्तिहीनोऽपि । अव्ययोऽविनाशी आत्मा स्वरूपं देहश्च यस्य सो**ऽव्ययात्मा** सन्नपि । **भूतानामीश्वरः सन्न**पि **सम्भवामी**त्यन्वयः । स्वरूपतो देहतश्चानादिनित्यस्य कथं जनिरित्यत उक्तं **प्रकृतिमधिष्ठायेति** । **प्रकृति**शब्दः प्राकृतपरः । प्राकृतान् प्रकृतिजान् वसुदेवादीन् । अधिष्ठाय अनुप्रविश्य । **आत्ममायया** स्वेच्छया, स्वज्ञानेन वा । **सम्भवामि** प्रादुर्भवामि । अतो जात इति लोकस्य भ्रान्तो व्यवहार इति भावः ।

यद्वा, **स्वां** स्वकीयां मदधीनाम् । **प्रकृतिं** तमोरूपाम् । **अधिष्ठाय** आश्रित्य । **सम्भवामि** सम्भूतो जात इति भ्रमविषयो भवामि लोकस्येत्यर्थः । स्वाधीनप्रकृत्या वसुदेवादिदेहान् निर्माय, तेष्वनुप्रविश्य प्रादुर्भवकरणे किं प्रयोजनमित्यतोऽप्युक्तम् **स्वां प्रकृतिदमधिष्ठायेति** । स्वस्वभावमनुसृत्य **सम्भवामी**ति । देवस्यैष स्वभाव एव न प्रयोजनापेक्षेति भावः । एतेन जीवजन्मविलक्षणजन्मवत्त्वाद्धरेः पूज्यत्वादिना जीवभेद उपपादित इति ज्ञेयम् ॥

*अ०प्र०*— नन्वनादेस्तव कुतो जन्म अविनाशिनश्च कथं पुनः पुनर्जन्मानि येन बहूनि व्यतीतानीत्युच्यते । ईश्वरस्य तव पुण्यपापविहीनस्य कथं जीववज्जन्मेत्यत आह **अजोऽपीति** ।

इत्यन्तश्लोकद्वयस्यावतारिका । अजोऽपि सन्[१], भूतानां ईश्वरोऽपि सन्[२], अव्ययात्मा अहं[३], स्वां[४], प्रकृतिं[४], अधिष्ठाय[५], आत्ममायया[६], सम्भवामि[७] ।

अजोऽपि सन् = उत्पत्तिरहितोऽपि सन्[१], भूतानां ईश्वरोऽपि = कर्म-पारतन्त्र्यरहितोऽपि सन्[२], अव्ययात्मा = अव्ययः आत्मा देहो यस्य स तथा सन् अहं[३], स्वां = मदाधारां[४], प्रकृतिं = शुद्धसत्त्वात्मिकां[४], अधिष्ठाय[५], आत्ममायया = आत्मज्ञानेन[६], सम्भवामि = सम्यक् प्रत्युत ज्ञानबलवीर्यादिशक्त्यैव भवामि दृग्गोचरतया प्रादुर्भवामीत्यर्थः ।

यद्वा **प्रकृतिं स्वामधिष्ठायेति** । प्रकृतेः भ्रमनिमित्तत्वमुच्यते । आत्ममाययेत्यनेन आत्माधीनप्रकृत्या सम्भवामीति प्रतीयत इति भ्रमोपादानत्वं प्रकृतेरुच्यते । तदुक्तम्—

> "महदादेस्तु मायायाः श्रीर्भूमिरिति कल्पिता ।
> विमोहिता च दुर्गाख्या ताभिर्विष्णोरजोऽपि हि ।
> जातवत्प्रथितैर्ह्यात्मा चिद्बलान्मूढचेतसाम् ॥"

यद्वा—

> "स्रष्टृत्वादिस्वभावत्वात् स्वेच्छया विष्णुरव्ययः ।
> सृष्ट्यादिकं करोत्यद्धा स्वयं च बहुधा भवेत् ॥
> देवस्यैष स्वभावोऽयमाप्तकामस्य का स्पृहा ।
> 'न प्रयोजनवत्वात्' तु 'लोकवत्तु लीलाकैवल्यम्' ।
> क्रीडतो बालकस्यैव क्रीडां तस्य निशामये ॥"

इत्यादिना स्वां प्रकृतिं स्वस्वभावं अनुसृत्य आत्ममायया स्वेच्छयैव प्रादुर्भवामि । स्वप्रयोजनानुसारेण परप्रेरणया वा न जीववज्जन्मेत्यर्थः । स्वस्वरूपमित्यत्रैवोपचारत्वनिवृत्त्यर्थं स्वामीत्युक्तम् ।

> "महामायेत्यविद्येति नियतिर्मोहिनीति च ।
> प्रकृतिर्वासनेत्येवं तवेच्छाऽनन्त कथ्यते ॥"

इत्यनेन मायेच्छेति व्याख्येयम् । ज्ञानानन्दाद्यनन्तगुणस्वभावं अविहायेच्छयैवावतरामि न तु लीलाविग्रहेण । अवतारोऽपि ज्ञानादिस्वरूप इति व्याख्येयम् । इमं विवस्वतो योगमित्यारभ्योक्तार्थे प्रमाणम्—

"ब्रह्मरुद्रेन्द्रपूर्वाणां यदुक्तं ब्रह्मणा पुरा ।
पञ्चरात्रात्मकं ज्ञानं व्यासोऽदात्पाण्डवेषु तत् ।
तेषामेवावतारेषु सेनामध्येऽर्जुनाय च ॥ कृष्ण इति शेषः ।
प्रादाद्गीतेति निर्दिष्टं सङ्क्षेपेण युयुत्सवे ॥
यथा कुर्वन्ति कर्माणि यथा जानन्ति देवताः ।
सर्वे कार्तयुगाश्चैव नृपाश्च मनुपूर्वकाः ॥
ज्ञातव्यं चैव कर्तव्यं यथा सर्वैर्मुमुक्षुभिः ।
त्रेतादि त्रिषु जातैश्च गीतायां तदुदाहृतम् ॥
पाण्डवाद्या क्षेमकान्ता करिष्यन्ति च जानते ।
तथैव तेन गीतायाः नास्ति शास्त्रसमं क्वचित् ॥
वेदार्थपूर्वकं ज्ञेयं पञ्चरात्रप्रपञ्चितम् ।
तत्सङ्क्षेपश्च गीतेयं तस्मान्नास्याः समं क्वचित् ॥"

अस्यायमर्थः— गीतायाः पञ्चरात्रसङ्क्षेपत्वमपि शब्दत एव नार्थत इत्याह **तथेति** । सर्वपञ्चरात्रार्थवत्त्वे गीतायाः सर्वशास्त्रोत्तमत्वं इत्यत आह **वेदेति** । सर्वशास्त्रेभ्योऽतिशयेन वेदार्थरूपकं पञ्चरात्राशेषार्थवत्त्वेन गीतायाः सर्वशास्त्रोत्तमत्वं युक्तमिति जानन्तोऽपि विशेषार्थज्ञानाय स्थापनाय च पृच्छन्ति । साधवो यस्मात् तेन पृच्छसि पाण्डवेति वचनात् ज्ञान्येवार्जुनो विशेषज्ञानाय पृच्छतीत्यपि ज्ञेयम् ॥ ६ ॥

**भाष्यम्**

**न तर्ह्यनादिर्भवानित्यत आह— अजोऽपीति । अव्यय आत्मा देहोऽपीत्यव्ययात्मा । "अनन्तं विश्वतोमुखम्" इति हि रूपविशेषणम् उत्तरत्र । "एतन्नानावताराणां निधानं बीजमव्ययम्" इति च । 'जगृहे' इति तु व्यक्तिः । युक्तयस्तूक्ताः । आत्माऽनादित्वं तु सर्वसमम् । कथमनादिनित्यस्य जनिः ? प्रकृतिं स्वामधिष्ठाय । प्रकृत्या जातेषु वसुदेवादिषु । तथैव तेषां जात इव प्रतीयत इत्यर्थः । न तु स्वतन्त्रामधिष्ठायेत्याह— स्वामिति । "द्रव्यं कर्म च" इति ह्युक्तम् । सा हि तत्रोक्ता । ततः सर्वसृष्टेः । आत्ममायया आत्मज्ञानेन । प्रकृतेः पृथगभिधानात् । "केतुः केतश्चितिश्चित्तं मतिः क्रतुः मनीषा माया" इति ह्यभि-**

**धानम् । सृष्टिकारणया तेषां शरीरादि सृष्ट्वा विमोहिकया अजात एव जात इव प्रतीयते वा । उक्तं च—**

**"महदादेस्तु माता या श्रीर्भूमिरिति कल्पिता ।**
**विमोहिका च दुर्गाख्या ताभिर्विष्णुरजोऽपि हि ।**
**जातवत् प्रथते ह्यात्मचिद्बलान्मूढचेतसाम् ॥" —इति ॥**

**ईश्वरः ईशेभ्योऽपि वरः । तच्चोक्तम्—**

**"ईशेभ्यो ब्रह्मरुद्रश्रीशेषादिभ्यो यतो भवान् ।**
**वरोऽत ईश्वराख्या ते मुख्या नान्यस्य कस्यचित् ॥"**

**—इति ब्रह्मवैवर्ते ॥**

**"समर्थ ईश इत्युक्तः तद्वरत्वात् त्वमीश्वरः ॥"**

**—इति च ॥ ६ ॥**

***प०टी०***— यदि पूर्वजन्मनि विवस्वते प्रोक्तवानसि तर्हि तवानादित्वं न स्यात् ज्ञानं जातिस्मरणवदित्याशङ्कोत्तरत्वेन श्लोकमवतारयति **न तर्हीति** । नन्वनादित्वं जीवानामप्यस्त्यतः को विशेषो हरेः ? इत्यत आह **अव्यय इति** । ननु देहानादित्वस्य युक्तिविरुद्धत्वात् कथमयं भगवदभिप्रायः ? इत्यत आह **अनन्तमिति** । भगवतैव हरिदेहानाद्यन्तत्वोक्तेरयं तदभिप्रायो भवत्येवेत्यर्थः । ननु भगवतैव 'जगृहे पौरुषं रूपम्' इति भगवद्देहस्योत्पत्तिरुक्तेत्यत आह **जगृह इति** । कुतो व्यक्तिः ? उत्पत्तिरेव न कुतः ? इत्यत आह **युक्तय इति** । इतश्च नेश्वरदेहस्योत्पत्तिमत्त्वमाह **आत्मेति** । यदीश्वरोऽप्युत्पन्नदेहवान्, तर्हि न तस्य जीववैलक्षण्यम् । स्वरूपनित्यत्वस्य सर्वजीवेष्वपि साम्यात् । न च गुणान्तरे वैषम्यम् । उत्पत्तिमरणादिमतो गुणान्तरस्यासम्भवादित्यर्थः । ननु यदि भगवान् स्वरूपतो देहतश्चानादिः, कथं तर्हि जनिः ? इत्याशङ्क्याह **कथमिति** । 'भ्रमतां भ्रमति क्षितिः' इति न्यायात् स्वयं प्रकृत्या जातत्वात् भगवन्तमपि प्राकृतं पश्यतीत्यर्थः । वसुदेवादिवत् प्रकृतिसम्बन्ध एव तव कुतो न ? इत्यत आह **न त्विति** । प्रकृतेर्भगवदधीनत्वाच्च सा(ऽ)बन्धकी, किन्तु अविद्यमानबन्धमेव तेषां दर्शयतीत्यर्थः । प्रकृतेर्हर्यधीनत्वे प्रमाणमाह **द्रव्यमिति** । नात्र प्रकृतिः श्रूयत इत्यत आह **सा हीति** । द्रव्यपदेनेत्यर्थः । द्रव्यपदेन पृथिव्यादिकं किं न स्यात् ? इत्यत आह **तत इति** । सर्वकारणगणने पठितत्वात् द्रव्यपदेन प्रकृतिरेव । तस्या

एव सर्वकारणत्वादित्यर्थः । यथा वसुदेवादयो विद्यमानजननीं तव पश्यन्ति तथा सा तवापि भ्रमोत्पादिका न वा ? इति शङ्कायामाह **आत्मेति** । 'माया'शब्दस्य प्रकृतौ रूढत्वात् कथमेतद्व्याख्यानम् ? इत्यत आह **प्रकृतेरिति** । 'माया'पदेन ज्ञानं कुतः ? इत्यत आह **केतुरिति** । अस्तु वा 'माया'शब्दः प्रकृतिवाची । तथाऽपि नार्थपुनरुक्तिरिति भावेनाह **सृष्टीति** । अर्थद्वये प्रमाणमाह **उक्तं चेति** । ननु ब्रह्मादीनामविद्यमानं वश्यप्रकृतित्वं तव कथम् ? इत्यत आह **ईशेभ्य इति** ॥

*न०टी०*—यदि जातिस्मरणवत् जन्मान्तरानुभूतस्मृतिमात्रेणोत्तरं भगवतः, तर्ह्यनादित्वं न स्यादिति भावेनाशङ्क्य, एतत्परिहाराय तदुत्तरं श्लोकमवतार्य व्याचष्टे **न तर्हीति** । नन्वात्मस्वरूपाजत्वं जीवानामप्यस्ति, अतः को विशेषः सर्वेशस्य ? इत्याशङ्क्य, परिहारायोत्तरं पदं व्याचष्टे **अव्यय आत्मेति** । ननु देहस्याविनश्वरत्वमनुमानविरुद्धम् । अतः कथं भगवत्सम्मतं स्यात् ? इत्यत आह **अनन्तमिति** । भगवतैव भगवद्रूपस्यानन्तत्वेन विशेष्यमाणत्वात् न तस्याव्ययत्वं भगवदसम्मतम् । न च देहित्वाद्विनाशित्वम् । किन्त्वनन्तत्वेनानुक्तत्वादेवेति भावः । भागवतेऽपि भगवतैव भगवद्रूपस्याप्यव्ययत्वेनैव विशेषितत्वाच्च न तस्याप्यव्ययत्वं भगवदसम्मतमित्याह **एतदिति** । ननु तत्रैव 'पौरुषं रूपम्' इति तस्य ग्रहणोक्तेर्ग्रहणं च त्यागशिरस्कमेव । अतः कथमव्ययता तस्य ? इत्यत आह **जगृह इतीति** । व्यक्तिरेव नोत्पत्तिरित्यत्र का युक्तिः ? इत्यत आह **युक्तयस्त्विति** । द्वितीयाध्यायान्ते विस्तारेणोक्तत्वात् नेह प्रपञ्च्यत इति भावः । अन्ये तु भगवत्यप्यात्मन एवानादित्वं वर्णयन्ति । न तु तद्देहस्य तद्दूषयति **आत्मेति** । तत्पक्षे जीवेभ्यो विशेषो न स्यादीश्वरस्येति भावः । अत्र केचित्— वश्यप्रकृतित्वात् देहोपादानसंन्यासावीशस्य स्वेच्छयैवेति जीवेभ्यो विशेषं वर्णयन्ति । तदयुक्तम् । अनुपचरितस्वतन्त्रो हि वश्यप्रकृतिः । न चासौ जडादिनित्यदेहानिच्छति, अनाद्यनन्तापरिमिततज्ज्ञानानन्दादिसान्द्रदेहं विना । देहस्येच्छया देहसृष्ट्याद्यपि चिन्त्यम् । 'अनन्तं विश्वतोमुखम्' इत्याद्यनन्तवेदेतिहासादिविरोधश्च तत्पक्षे । भवत्त्वेवमनादिनित्यत्वं तद्देहस्यापि । तथाविधस्य कीदृशी जनिः ? इति भावेनाशङ्क्य, तदुत्तरत्वेनोत्तरार्धं व्याचष्टे **कथमिति** । प्राकृतदेहवतामेव जात इव प्रतीयत इति व्याख्यायाः 'भ्रमतां भ्रमति क्षितिः' इत्यादिवत् 'सम्भवामि' इत्युक्तेऽपि न विरोध इत्युक्तं भवति । न चैवं वसुदेवादीनामिव भगवतोऽपि देहकर्ता, तदधीनत्वादिति भावेन विशेषणमवतारयति **न त्विति** । ननु वशीकृताशेषचेतनायाः प्रकृतेर्भगवद्वशत्वे किं मानम् ? इत्यत आह **द्रव्यमिति** । ननु द्रव्यादेर्भगवद्वशत्वप्रतिपादकवाक्यं प्रकृतेर्भगवद्वशत्वे कथमुदाहृतम् ? इत्यत आह **सा हीति** । प्रकृतिर्हि **तत्रोक्ता** 'द्रव्य'शब्देनेत्यर्थः । ननु पृथिव्यादिकमेव द्रव्यपदोक्तं किं न स्यात् ? इत्यत आह **तत इति** । सर्वस्रष्टृणां

भगवद्वशत्वप्रतिपादकं ह्येतद्वाक्यम् । न हि पृथिव्यादिभिः महदादिसृष्टिरिति भावः । ननु प्रकृत्या जातानां भगवति जातवत् बुद्धिश्चेत् ब्रह्मादीनामपि सा किं न स्यात् ? इत्याशङ्क्य परिहारत्वेनान्त्यपदं व्याचष्टे **आत्मेति** । **भगवज्ज्ञानेनेति** । भगवदिच्छयैव केचिज्ज्ञातवत् पश्यन्ति भगवन्तमित्यर्थः ।

'.........................................मायया ।
लक्ष्म्या वशगया लोको विष्णुनैव विमोहितः ।'

इति ह्यन्यत्र । **आत्मचिद्बलान्मूढचेतसाम्** इत्यत्रापि वक्ष्यति । न चायं मायाशब्दः प्रकृतावित्याह **प्रकृतेरिति** । तस्य ज्ञानवाचित्वे प्रमाणमाह **केतुरिति** । भवतु चायं मायाशब्दः प्रकृतावपि । तथाऽपि नार्थपुनरुक्तिरित्येतत् सप्रमाणकमाह **सृष्टीति** । **आत्मचिद्बलादित्येतत्** मायाशब्दस्याद्यव्याख्याने प्रमाणम् । ईशनशीलानामपि रमाविधिहरादीनां पराधीनविशेषास्यादिजननादिदर्शनात्, नायमीश्वरशब्द ईशनशीलवाची, किन्त्वीशवाचीत्येतत् सप्रमाणकमाह **ईश्वर इत्यादिना** । अकारलोपश्छान्दसः ॥

***प्र०दी०*— प्रश्नस्य परिहृतत्वात् 'अजोऽपि' इति किमर्थमित्यत आह— **न तर्हि इति** । यदि जन्मानि व्यतीतानि तर्हीत्यर्थः । अनादिर्देहतोऽपि । उपलक्षणं चैतत् । मरणरहितः, सर्वभूतानामीश्वरश्चेत्यपि द्रष्टव्यम् । तथा चोक्तविरोध इति भावः । ननु देहतोऽप्यनादित्वादेराक्षेपेऽजत्वादिमात्रं कथमुच्यत इत्यतः 'अव्ययात्मा' इत्येतत्तावद्देहतोऽप्यविनाशमाचष्टे । तत्साहचर्यात् 'अजोऽपि' इत्येतदपि तथैव व्याख्येयमिति भावेनाह— **अव्यय इति** । अपिपदात्परं 'अस्य' इत्यध्याहार्यम् । स्यादेवं व्याख्यानं यदि भगवद्विग्रहस्याप्यव्ययत्वं गीताचार्यस्याभिमतं स्यात् । तदेव कुत इत्यत आह— **अनन्तमिति** । इति च रूपविशेषणमिति वर्तते । एवं तर्हि कथं तत्रैव 'जगृहे पौरुषं रूपं' इति रूपग्रहणमुच्यते । गृहीतस्य च त्यागो नियत एवेत्यत आह— **जगृह इति** । व्यक्तिरुच्यत इति शेषः । कुत एवं कल्प्यत इत्यत आह— **युक्तय इति** । युज्यत एभिरिति युक्तयः प्रमाणानि । असम्भावनापरिहारार्था अचिन्त्यशक्तित्वाद्या युक्तयो वा । उक्ता द्वितीये । अस्तु भगवद्विग्रहस्याप्यव्ययत्वम् । अत्र तु स्वरूपस्यैवोच्यत इति किं न स्यादित्यत आह— **आत्मेति** । आत्मनः स्वरूपस्वविग्रहस्याप्यव्ययत्वोपपादनेनाजत्वमपि साहचर्यात्तस्यैवेति यो अभिप्रायः तं प्रकटयितुमव्ययत्वमुपक्रम्य अनादित्वमित्युक्तम् । सर्वसमं जीवानामप्यस्ति । अतस्तद्विषय आक्षेपः परिहारो वा न सम्भवतीति भावः । आत्मशब्दोऽप्यन्यथा व्यर्थः । अस्मत्पक्षे स्वरूपदेहयोरुपादानार्थः । अत एव 'देहोऽपि' इत्युक्तम् । एवं तर्हि 'प्रकृतिं स्वामधिष्ठाय' इति कथमुक्तमित्यतः

एव सर्वकारणत्वादित्यर्थः । यथा वसुदेवादयो विद्यमानजननीं तव पश्यन्ति तथा सा तवापि भ्रमोत्पादिका न वा ? इति शङ्कायामाह **आत्मेति** । 'माया'शब्दस्य प्रकृतौ रूढत्वात् कथमेतद्व्याख्यानम् ? इत्यत आह **प्रकृतेरिति** । 'माया'पदेन ज्ञानं कुतः ? इत्यत आह **केतुरिति** । अस्तु वा 'माया'शब्दः प्रकृतिवाची । तथाऽपि नार्थपुनरुक्तिरिति भावेनाह **सृष्टीति** । अर्थद्वये प्रमाणमाह **उक्तं चेति** । ननु ब्रह्मादीनामविद्यमानं वश्यप्रकृतित्वं तव कथम् ? इत्यत आह **ईशेभ्य इति** ॥

***न०टी०***—यदि जातिस्मरणवत् जन्मान्तरानुभूतस्मृतिमात्रेणोत्तरं भगवतः, तर्ह्यनादित्वं न स्यादिति भावेनाशङ्क्य, एतत्परिहाराय तदुत्तरं श्लोकमवतार्य व्याचष्टे **न तर्हीति** । नन्वात्मस्वरूपाजत्वं जीवानामप्यस्ति, अतः को विशेषः सर्वेशस्य ? इत्याशङ्क्य, परिहारायोत्तरं पदं व्याचष्टे **अव्यय आत्मेति** । ननु देहस्याविनश्वरत्वमनुमानविरुद्धम् । अतः कथं भगवत्सम्मतं स्यात् ? इत्यत आह **अनन्तमिति** । भगवतैव भगवद्रूपस्यानन्तत्वेन विशेष्यमाणत्वात् न तस्याव्ययत्वं भगवदसम्मतम् । न च देहित्वाद्विनाशित्वम् । किन्त्वनन्तत्वेनानुक्तत्वादेवेति भावः । भागवतेऽपि भगवतैव भगवद्रूपस्याप्यव्ययत्वेनैव विशेषितत्वाच्च न तस्याप्यव्ययत्वं भगवदसम्मतमित्याह **एतदिति** । ननु तत्रैव 'पौरुषं रूपम्' इति तस्य ग्रहणोक्तेर्ग्रहणं च त्यागशिरस्कमेव । अतः कथमव्ययता तस्य ? इत्यत आह **जगृह इतीति** । व्यक्तिरेव नोत्पत्तिरित्यत्र का युक्तिः ? इत्यत आह **युक्तयस्त्विति** । द्वितीयाध्यायान्ते विस्तारेणोक्तत्वात् नेह प्रपञ्च्यत इति भावः । अन्ये तु भगवत्यप्यात्मन एवानादित्वं वर्णयन्ति । न तु तद्देहस्य तद्दूषयति **आत्मेति** । तत्पक्षे जीवेभ्यो विशेषो न स्यादीश्वरस्येति भावः । अत्र केचित्— वश्यप्रकृतित्वात् देहोपादानसंन्यासावीशस्य स्वेच्छयैवेति जीवेभ्यो विशेषं वर्णयन्ति । तदयुक्तम् । अनुपचरितस्वतन्त्रो हि वश्यप्रकृतिः । न चासौ जडादिनित्यदेहानिच्छति, अनाद्यनन्तापरिमिततज्ज्ञानानन्दादिसान्द्रदेहं विना । देहस्येच्छया देहसृष्ट्याद्यपि चिन्त्यम् । 'अनन्तं विश्वतोमुखम्' इत्याद्यनन्तवेदेतिहासादिविरोधश्च तत्पक्षे । भवत्त्वेवमनादिनित्यत्वं तद्देहस्यापि । तथाविधस्य कीदृशी जनिः ? इति भावेनाशङ्क्य, तदुत्तरत्वेनोत्तरार्धं व्याचष्टे **कथमिति** । प्राकृतदेहवतामेव जात इव प्रतीयत इति व्याख्यायाः 'भ्रमतां भ्रमति क्षितिः' इत्यादिवत् 'सम्भवामि' इत्युक्तेऽपि न विरोध इत्युक्तं भवति । न चैवं वसुदेवादीनामिव भगवतोऽपि देहकर्ता, तदधीनत्वादिति भावेन विशेषणमवतारयति **न त्विति** । ननु वशीकृताशेषचेतनायाः प्रकृतेर्भगवद्वशत्वे किं मानम् ? इत्यत आह **द्रव्यमिति** । ननु द्रव्यादेर्भगवद्वशत्वप्रतिपादकवाक्यं प्रकृतेर्भगवद्वशत्वे कथमुदाहृतम् ? इत्यत आह **सा हीति** । प्रकृतिर्हि **तत्रोक्ता** 'द्रव्य'शब्देनेत्यर्थः । ननु पृथिव्यादिकमेव द्रव्यपदोक्तं किं न स्यात् ? इत्यत आह **तत इति** । सर्वस्रष्टृणां

भगवद्वशत्वप्रतिपादकं ह्येतद्वाक्यम् । न हि पृथिव्यादिभिः महदादिसृष्टिरिति भावः । ननु प्रकृत्या जातानां भगवति जातवत् बुद्धिश्चेत् ब्रह्मादीनामपि सा किं न स्यात् ? इत्याशङ्क्य परिहारत्वेनान्त्यपदं व्याचष्टे **आत्मेति** । **भगवज्ज्ञानेनेति** । भगवदिच्छयैव केचिज्ज्ञातवत् पश्यन्ति भगवन्तमित्यर्थः ।

'.........................................मायया ।
लक्ष्म्या वशगया लोको विष्णुनैव विमोहितः ।'

इति ह्यन्यत्र । **आत्मचिद्बलान्मूढचेतसाम्** इत्यत्रापि वक्ष्यति । न चायं मायाशब्दः प्रकृतावित्याह **प्रकृतेरिति** । तस्य ज्ञानवाचित्वे प्रमाणमाह **केतुरिति** । भवतु चायं मायाशब्दः प्रकृतावपि । तथाऽपि नार्थपुनरुक्तिरित्येतत् सप्रमाणकमाह **सृष्टीति** । **आत्मचिद्बलादित्येतत्** मायाशब्दस्याद्यव्याख्याने प्रमाणम् । ईशनशीलानामपि रमाविधिहरादीनां पराधीनविशेषात्यादिजननादिदर्शनात्, नायमीश्वरशब्द ईशनशीलवाची, किन्त्वीशवाचीत्येतत् सप्रमाणकमाह **ईश्वर इत्यादिना** । अकारलोपश्छान्दसः ॥

***प्र०दी०*—** प्रश्नस्य परिहृतत्वात् 'अजोऽपि' इति किमर्थमित्यत आह— **न तर्हि इति** । यदि जन्मानि व्यतीतानि तर्हीत्यर्थः । अनादिर्देहतोऽपि । उपलक्षणं चैतत् । मरणरहितः, सर्वभूतानामीश्वरश्चेत्यपि द्रष्टव्यम् । तथा चोक्तविरोध इति भावः । ननु देहतोऽप्यनादित्वादेराक्षेपेऽजत्वादिमात्रं कथमुच्यत इत्यतः 'अव्ययात्मा' इत्येतत्तावद्देहतोऽप्यविनाशमाचष्टे । तत्साहचर्यात् 'अजोऽपि' इत्येतदपि तथैव व्याख्येयमिति भावेनाह— **अव्यय इति** । अपिपदात्परं 'अस्य' इत्यध्याहार्यम् । स्यादेवं व्याख्यानं यदि भगवद्विग्रहस्याप्यव्ययत्वं गीताचार्यस्याभिमतं स्यात् । तदेव कुत इत्यत आह— **अनन्तमिति** । इति च रूपविशेषणमिति वर्तते । एवं तर्हि कथं तत्रैव 'जगृहे पौरुषं रूपं' इति रूपग्रहणमुच्यते । गृहीतस्य च त्यागो नियत एवेत्यत आह— **जगृह इति** । व्यक्तिरुच्यत इति शेषः । कुत एवं कल्प्यत इत्यत आह— **युक्तय इति** । युज्यत एभिरिति युक्तयः प्रमाणानि । असम्भावनापरिहारार्था अचिन्त्यशक्तित्वाद्या युक्तयो वा । उक्ता द्वितीये । अस्तु भगवद्विग्रहस्याप्यव्ययत्वम् । अत्र तु स्वरूपस्यैवोच्यत इति किं न स्यादित्यत आह— **आत्मेति** । आत्मनः स्वरूपस्वविग्रहस्याप्यव्ययत्वोपपादनेनाजत्वमपि साहचर्यात्तस्यैवेति यो अभिप्रायः तं प्रकटयितुमव्ययत्वमुपक्रम्य अनादित्वमित्युक्तम् । सर्वसमं जीवानामप्यस्ति । अतस्तद्विषय आक्षेपः परिहारो वा न सम्भवतीति भावः । आत्मशब्दोऽप्यन्यथा व्यर्थः । अस्मत्पक्षे स्वरूपदेहयोरुपादानार्थः । अत एव 'देहोऽपि' इत्युक्तम् । एवं तर्हि 'प्रकृतिं स्वामधिष्ठाय' इति कथमुक्तमित्यतः

तदन्यथा व्याख्यातुमाह— **कथमिति** । स्वरूपतो देहतश्चानादिनित्यस्य 'सम्भवामि' इति जनिः कथमुच्यते । व्याहतत्वादित्यत आहेति शेषः । 'अधिष्ठाय' इत्यतःपरं इतिशब्दश्च । कथमनेन परिहार इत्यतो व्याचष्टे— **प्रकृत्येति** । वसुदेवादिषु प्रादुर्भूतत्वादिति शेषः । अनेन जन्मभ्रान्तेर्निमित्तमुक्तम् । यथोक्तं 'स्त्रीपुंप्रसङ्गात्' इत्यादि । भ्रान्तेरुपादानमाह— **तयैवेति** । तमोरूपया । यदि मातापितृसम्बन्धोऽङ्गीकृतस्तर्हि तन्निमित्तदुःखादिकमपि प्रसज्यत इत्याशङ्कानिरासाय स्वामिति पदं व्याख्याति— **न त्विति** । प्रकृतेर्भगवदधीनत्वं कुत इत्यत आह— **द्रव्यमिति** । अत्र वाक्ये प्रकृतिर्न श्रूयत इत्यत आह— **सा हीति** । द्रव्यपदेनेति शेषः । तस्यात्र प्रकृतिवाचित्वं कुत इत्यत आह— **तत इति** । सर्वसृष्टिकारणानि ह्यत्र निर्दिश्यन्ते । तच्च प्रकृतेरेव सम्भवति । न पृथिव्यादेरित्यर्थः । आत्ममाययाऽत्माविद्ययेति प्रतीतिनिरासाय आह— **आत्मेति** । कुतो हेतोरेवं जीवविलक्षणं ते जन्मेत्याशङ्कानिरासार्थमेतत् । अन्यथाप्रतीतिरप्यनेन परिहृता । सर्वज्ञस्याविद्याऽयोगात् । प्रकृतिरत्र माया किं न स्यादित्यत आह— **प्रकृतेरिति** । मायाशब्दस्य ज्ञानवाचित्वं कुत इत्यत आह— **केतुरिति** । "इति प्रज्ञाया नामधेयानि" इति वाक्यशेषात् ।

प्राक् 'प्रकृतिं स्वामधिष्ठाय' इत्यनेनैव भ्रमनिमित्तत्वमुपादानत्वं च प्रकृतेरुक्तमिति मायाशब्दो न प्रकृतिवाची । पुनरुक्तिप्रसङ्गादित्युक्तम् । इदानीं तस्य निमित्तमात्रपरत्वे मायाशब्दस्य प्रकृत्यर्थतायामपि न दोषः । उपादानार्थत्वादिति भावेनाह— **सृष्टीति** । प्रकृत्येति शेषः । तेषां वसुदेवादीनाम् । सृष्ट्वा तत्र प्रादुर्भूतः । विमोहिकया मायाख्यया । अत्रागमसम्मतिमाह— **उक्तं चेति** । आत्मचिद्बलादजात एव । नन्वीशनशीलानामपि ब्रह्मादीनामुत्पत्तिमरणदर्शनेन विरोधाभावात् "ईश्वरोऽपि सम्भवामि" इति कथमुच्यत इत्यतः 'स्थेशभासपिसकसो वरच्' (३-२-१७५) इत्येतद्विहायान्यथा व्याचष्टे— **ईश्वर इति** । कुत एतदित्यत आह— **ईशेभ्य इति** । एतदागमबलादेव समासाकारलोपावनुमन्तव्यौ । अजत्वादेः सम्भवेन शाब्दो व्याघातोऽस्य तु व्याख्येति ज्ञापनाय क्रममुल्लङ्घ्य व्याख्यातम् ॥

***भा०दी०***— गीतोक्ताव्ययात्मादिपदानुरोधेनाह **उपलक्षणं चैतदिति** । **उक्तेति** । नत्वेवाहमित्यादिनोक्तेत्यर्थः । **अनन्तमितीति** । भाष्ये उत्तरत्रेत्यत्रस्यैकादशाध्याये 'दर्शयामास पार्थाय परमं रूपमव्ययमि'ति पूर्वत्र रूपस्यानन्तं विश्वतोमुखं दर्शयामासेति देशकालगुणैरनन्तमित्यनन्तत्वविशेषणोक्त्या निग्रहस्याव्ययत्वं ज्ञायते तथा प्रथमस्कन्धे तृतीये जगृहस्यैवेत्यर्थयति **जगृहे पौरुषं रूपमिति** । पूर्वत्र प्रकृतरूपस्याव्ययमिति च विशेषणमुक्तमित्यर्थः । **द्वितीय इति** । द्वितीयाध्यायान्त्यभागेन च तद्ब्रह्मणो शरीरत्वादेः । तत्कल्पमित्यादिनेति भावः । आत्मानादित्वमित्यत्र

आत्मपदं षष्ठ्यन्तत्वेनानूद्यार्थमाह **आत्मन इति** । **तस्यैवेति** । निग्रहस्यैवेत्यर्थः । **योऽभिप्राय इति** । गीताचार्यस्येत्यनुषङ्गः । **आक्षेप इति** । न तर्ह्यनादिभवानित्याक्षेप इत्यर्थः । **अत एवेति** । आत्मपदे स्वरूपस्याप्यभिमतत्वादेव भाष्यस्वरूपसमुच्चयार्थं देहोऽपीत्युक्तं प्रागित्यर्थः । **यथोक्तमिति** । भारततात्पर्यदशमे 'स्त्रीपुंप्रसङ्गात्परतो यतो हरिः प्रादुर्भवत्येष विमोहयन् जनम् । अतो मलोत्थोऽयमिति स्म मन्यते जनोऽशुभः पूर्णगुणैकविग्रहमि'ति जन्मभ्रान्तेर्निमित्तमुक्त-मित्यर्थः । **तमोरूपयेति** । अनाविद्यारूपयेत्यर्थः । **तस्यात्रेति** । द्रव्यं कर्म चेति वचने द्रव्य-पदस्येत्यर्थः । **अत्र निर्दिश्यत इति** । द्रव्यं कर्म चेत्यत्रेत्यर्थः । द्वितीयस्कन्धदशमे द्रव्यं कर्म चेत्युक्तो नानात्वमन्विच्छन् योगतल्पात्समुत्थितः वीर्यं हिरणमयं देवो मायया व्यसृजत् त्रिधे-त्युक्तेरिति भावः । **अने(ने)ति** । उक्तशङ्कानिरासार्थं प्रवृत्तत्वेनेति वा आत्मज्ञानेनेति व्याख्यानेनेति भावार्थः । **निमित्तमात्रपरत्वे इति** । हरेर्जन्मभ्रान्तेरिति योज्यम् । **उपादानेति** । तमोरूपो-पादानार्थत्वादित्यर्थः । भ्रान्तेरिति शेषः । 'सृष्टिकारणाये'ति स्त्रीलिङ्गनिर्वाहाय विशेष्यमाह **प्रकृत्येति शेष इति** । ल्युतस्य नपुंसकत्वेऽप्यत्र स्त्रीलिङ्गोक्ते ........................... बहवः कर्मकारण इत्यत्रोक्तदिशा ध्येय इति भावः । अजोऽपीत्यस्यार्थो **अजात एवेति** । वरच्प्रत्ययस्य 'आके-स्तच्छीलधर्मतत्साधुकारिषु' इति सूत्रादनुवृत्तिः । ताच्छील्यार्थो विधानादीशनशीलानामीश्वर-शब्दार्थोऽनूदितः इत्यपेरर्थः । ष्ठागतिनिवृत्तौ स्थावर ईश ऐश्वर्ये ईश्वरः भासृ दीप्तौ तास्वरि । स्वरगतौ येश्वरः कः स्वल्प इति ..........नित्युक्तम् । स्थाप्र................. ल्यार्थक तृच्प्रत्यया-न्तत्वं विहायेत्यर्थः ।

ननु पञ्चमीभयेनेति पञ्चम्यन्तस्य भयेनैव चोराद्भयं चोरभयमित्यादावेव सा ...................
इत्यत आह **ईशेभ्यो वर इति** । विग्रहे चेशवर इति भाव्यम् । कथं शकारस्थाकारलोप इत्यत आह **एतदागमबलादेवेति** । ........... नन्तरमीश्वरपदव्याख्याने तात्पर्यमाह **अजत्वादेरिति** । **सम्भवेनेति** । सम्भवामीत्युक्तसम्भवशब्दितजन्मना जत्वा......................व्याघातः । अस्य तु ईश्वरपदोक्तब्रह्मरुद्रादीशशब्दितसमर्थेभ्योऽपि परत्वस्य तु यो यं निवारणेति समर्थः । स न तद्वानिति व्यास्यातिशक्तस्येश्वरस्य कथं जन्मादीति व्याघातो अनुमेय इत्यजादिपदव्याख्यानन्तरमेवाव्याख्याय पश्चाद्व्याख्यातमित्यर्थः ॥

*भा०र०*— चेतनमात्रसाधारणतया प्रमितस्यानादित्वस्य कथं भगवत्याक्षेपः ? इत्यतः 'अनादिः' इति भाष्ये शेषमाह **अनादिर्देहतोऽपीति** । 'अजोऽपि' इत्यत्र देहस्याप्यनादित्वोक्ते-स्तद्व्यावर्त्येयं शङ्का । विशेषणद्वयव्यावर्त्यां शङ्कां दर्शयितुमाह **उपलक्षणमिति** । ''ईश्वरश्च न''

तदन्यथा व्याख्यातुमाह— **कथमिति** । स्वरूपतो देहतश्चानादिनित्यस्य 'सम्भवामि' इति जनिः कथमुच्यते । व्याहतत्वादित्यत आहेति शेषः । 'अधिष्ठाय' इत्यतःपरं इतिशब्दश्च । कथमनेन परिहार इत्यतो व्याचष्टे— **प्रकृत्येति** । वसुदेवादिषु प्रादुर्भूतत्वादिति शेषः । अनेन जन्मभ्रान्ते-र्निमित्तमुक्तम् । यथोक्तं 'स्त्रीपुंप्रसङ्गात्' इत्यादि । भ्रान्तेरुपादानमाह— **तयैवेति** । तमो-रूपया । यदि मातापितृसम्बन्धोऽङ्गीकृतस्तर्हि तन्निमित्तदुःखादिकमपि प्रसज्यत इत्याशङ्कानिरासाय स्वामिति पदं व्याख्याति— **न त्विति** । प्रकृतेर्भगवदधीनत्वं कुत इत्यत आह— **द्रव्यमिति** । अत्र वाक्ये प्रकृतिर्न श्रूयत इत्यत आह— **सा हीति** । द्रव्यपदेनेति शेषः । तस्यात्र प्रकृतिवाचित्वं कुत इत्यत आह— **तत इति** । सर्वसृष्टिकारणानि ह्यत्र निर्दिश्यन्ते । तच्च प्रकृतेरेव सम्भवति । न पृथिव्यादेरित्यर्थः । आत्ममाययाऽत्माविद्ययेति प्रतीतिनिरासाय आह— **आत्मेति** । कुतो हेतोरेवं जीवविलक्षणं ते जन्मेत्याशङ्कानिरासार्थमेतत् । अन्यथाप्रतीतिरप्यनेन परिहृता । सर्वज्ञ-स्याविद्याऽयोगात् । प्रकृतिरत्र माया किं न स्यादित्यत आह— **प्रकृतेरिति** । मायाशब्दस्य ज्ञानवाचित्वं कुत इत्यत आह— **केतुरिति** । ''इति प्रज्ञाया नामधेयानि'' इति वाक्यशेषात् ।

प्राक् 'प्रकृतिं स्वामधिष्ठाय' इत्यनेनैव भ्रमनिमित्तत्वमुपादानत्वं च प्रकृतेरुक्तमिति मायाशब्दो न प्रकृतिवाची । पुनरुक्तिप्रसङ्गादित्युक्तम् । इदानीं तस्य निमित्तमात्रपरत्वे मायाशब्दस्य प्रकृत्यर्थ-तायामपि न दोषः । उपादानार्थत्वादिति भावेनाह— **सृष्टीति** । प्रकृत्येति शेषः । तेषां वसुदेवा-दीनाम् । सृष्ट्वा तत्र प्रादुर्भूतः । विमोहिकया मायाख्यया । अत्रागमसम्मतिमाह— **उक्तं चेति** । आत्मचिद्बलादजात एव । नन्वीशनशीलानामपि ब्रह्मादीनामुत्पत्तिमरणदर्शनेन विरोधाभावात् ''ईश्वरोऽपि सम्भवामि'' इति कथमुच्यत इत्यतः 'स्थेशभासपिसकसो वरच्' (३-२-१७५) इत्येतद्विहायान्यथा व्याचष्टे— **ईश्वर इति** । कुत एतदित्यत आह— **ईशेभ्य इति** । एतदागम-बलादेव समासाकारलोपावनुमन्तव्यौ । अजत्वादेः सम्भवेन शाब्दो व्याघातोऽस्य तु व्यास्येति ज्ञापनाय क्रममुल्लङ्घ्य व्याख्यातम् ॥

***भा०दी०***— गीतोक्ताव्ययात्मादिपदानुरोधेनाह **उपलक्षणं चैतदिति** । **उक्तेति** । नत्वेवाह-मित्यादिनोक्तेत्यर्थः । **अनन्तमितीति** । भाष्ये उत्तरत्रेत्यत्रस्यैकादशाध्याये 'दर्शयामास पार्थाय परमं रूपमव्ययमि'ति पूर्वत्र रूपस्यानन्तं विश्वतोमुखं दर्शयामासेति देशकालगुणैरनन्तमित्यनन्तत्व-विशेषणोक्त्या निग्रहस्याव्ययत्वं ज्ञायते तथा प्रथमस्कन्धे तृतीये जगृहस्यैवेत्यर्थयति **जगृहे पौरुषं रूपमिति** । पूर्वत्र प्रकृतरूपस्याव्ययमिति च विशेषणमुक्तमित्यर्थः । **द्वितीय इति** । द्वितीया-ध्यायान्त्यभागेन च तद्ब्रह्मणो शरीरत्वादेः । तत्कल्पमित्यादिनेति भावः । आत्मानादित्वमित्यत्र

आत्मपदं षष्ठ्यन्तत्वेननानूद्यार्थमाह **आत्मन इति** । **तस्यैवेति** । निग्रहस्यैवेत्यर्थः । **योऽभिप्राय इति** । गीताचार्यस्येत्यनुषङ्गः । **आक्षेप इति** । न तर्ह्यनादिभवानित्याक्षेप इत्यर्थः । **अत एवेति** । आत्मपदे स्वरूपस्याप्यभिमतत्वादेव माध्यस्वरूपसमुच्चयार्थं देहोऽपीत्युक्तं प्रागित्यर्थः । **यथोक्तमिति** । भारततात्पर्यदशमे 'स्त्रीपुंप्रसङ्गात्परतो यतो हरिः प्रादुर्भवत्येष विमोहयन् जनम् । अतो मलोत्थोऽयमिति स्म मन्यते जनोऽशुभः पूर्णगुणैकविग्रहमि'ति जन्मभ्रान्तेर्निमित्तमुक्तमित्यर्थः । **तमोरूपयेति** । अनाविद्यारूपयेत्यर्थः । **तस्यात्रेति** । द्रव्यं कर्म चेति वचने द्रव्यपदस्येत्यर्थः । **अत्र निर्दिश्यत इति** । द्रव्यं कर्म चेत्यत्रेत्यर्थः । द्वितीयस्कन्धदशमे द्रव्यं कर्म चेत्युक्तो नानात्वमन्विच्छन् योगतल्पात्समुत्थितः वीर्यं हिरण्मयं देवो मायया व्यसृजत् त्रिधेत्युक्तेरिति भावः । **अने(ने)ति** । उक्तशङ्कानिरासार्थं प्रवृत्तत्वेनेति वा आत्मज्ञानेनेति व्याख्यानेनेति भावार्थः । **निमित्तमात्रपरत्वे इति** । हरेर्जन्मभ्रान्तेरिति योज्यम् । **उपादानेति** । तमोरूपोपादानार्थत्वादित्यर्थः । भ्रान्तेरिति शेषः । 'सृष्टिकारणाये'ति स्त्रीलिङ्गनिर्वाहाय विशेष्यमाह **प्रकृत्येति शेष इति** । ल्युतस्य नपुंसकत्वेऽप्यत्र स्त्रीलिङ्गोक्ते ........................ बहवः कर्मकारण इत्यत्रोक्तदिशा ध्येय इति भावः । अजोऽपीत्यस्यार्थो **अजात एवेति** । वरच्प्रत्ययस्य 'आकेस्तच्छीलधर्मतत्साधुकारिषु' इति सूत्रादनुवृत्तिः । ताच्छील्यार्थो विधानादीशनशीलानामीश्वरशब्दार्थोऽनूदितः इत्यपेरर्थः । ष्ठागतिनिवृत्तौ स्थावर ईश ऐश्वर्ये ईश्वरः भासृ दीप्तौ तास्वरि । स्वरगतौ येश्वरः कः स्वल्प इति ..........नित्युक्तम् । स्थाप्र................. ल्यार्थक तृच्प्रत्ययान्तत्वं विहायेत्यर्थः ।

ननु पञ्चमीभयेनेति पञ्चम्यन्तस्य भयेनैव चोराद्भयं चोरभयमित्यादावेव सा .................... इत्यत आह **ईशेभ्यो वर इति** । विग्रहे चेशवर इति भाव्यम् । कथं शकारस्थाकारलोप इत्यत आह **एतदागमबलादेवेति** । ........... नन्तरमीश्वरपदव्याख्याने तात्पर्यमाह **अजत्वादेरिति** । **सम्भवेनेति** । सम्भवामीत्युक्तसम्भवशब्दितजन्मना जत्वा......................व्याघातः । अस्य तु ईश्वरपदोक्तब्रह्मरुद्रादीशशब्दितसमर्थेभ्योऽपि परत्वस्य तु यो यं निवारणेति समर्थः । स न तद्वानिति व्याख्यातिशक्तस्येश्वरस्य कथं जन्मादीति व्याघातो अनुमेय इत्यजादिपदव्याख्यानन्तरमेवाव्याख्याय पश्चाद्व्याख्यातमित्यर्थः ॥

*भा०र०*— चेतनमात्रसाधारणतया प्रमितस्यानादित्वस्य कथं भगवत्याक्षेपः ? इत्यतः 'अनादिः' इति भाष्ये शेषमाह **अनादिर्देहतोऽपीति** । 'अजोऽपि' इत्यत्र देहस्याप्यनादित्वोक्तेस्तद्व्यावर्त्येयं शङ्का । विशेषणद्वयव्यावर्त्यां शङ्कां दर्शयितुमाह **उपलक्षणमिति** । "ईश्वरश्च न"

इति भाष्येणान्वयः । अनादिर्मरणरहितो भूतानामीश्वरश्च न स्याद् इत्यत्रेष्टापत्तिमाशङ्क्याह **तथा चेति** । "न त्वेवाहम्" (२.१२), "नासतो विद्यते भावः" (२.१६), "अविनाशि तु तद्विद्धि" (२.१७) इत्यादिनाऽनादिनित्यत्वस्य, "न मे पार्थास्ति कर्तव्यम्" (३.२२), "नानवाप्तमवाप्तव्यम्" (३.२२) इत्यादिनेश्वरत्वस्य चोक्तत्वात् तद्विरोधः स्यादित्यर्थः । 'अनादित्वादेः' इत्यत्र आदिपदेनानन्तरत्वम् । **अजत्वादिमात्रं** स्वरूपतो जन्ममरणाभावः । **देहत इति** । "आत्मा देहे धृतौ बुद्धौ" इत्यभिधानादिति भावः । **तत्साहचर्यात्** देहतोऽप्यविनाशावेदकाव्ययात्मपदसाहचर्यात् । बहुव्रीहित्वस्य सुबोधत्वायाह **अस्येत्यध्याहार्यमिति** । **एवं** व्याख्यानम् अस्य देहोऽप्यव्यय इति भाषणम् । **विग्रहस्यापि** न केवलं स्वरूपस्येत्यपिशब्दः । **कुतः** प्रमाणात् ।

**अनन्तमितीति** । एकादशाध्याये "सर्वाश्चर्यमयं देवमनन्तं विश्वतोमुखम्" (११.११) इति 'अनन्तम्' इति देशकालगुणापरिच्छिन्नत्वेन विशेषणात् देहस्य कालापरिच्छेदलक्षणमव्ययत्वं विज्ञायते । तत्र 'देवम्' इति भगवत एवाव्ययत्वमुच्यत इति न वक्तव्यम् । 'देवम्' इति रूपस्य ग्रहणादिति भावेनोक्तम् **रूपेति** । "मम देहे गुडाकेश यच्चान्यद्द्रष्टुमिच्छसि" (११.७), "अपश्यद्देवदेवस्य शरीरे पाण्डवस्तदा" (११.१३), "पश्यामि देवांस्तव देव देहे" (११.१५) इत्यत्राभिहितस्य देहस्यैव "दर्शयामास पार्थाय परमं रूपमैश्वरम्" (११.९) इति रूपशब्देनावमर्शेन देहस्यैवाव्ययत्वमुक्तं भवतीति विमर्शसूचनाय हिशब्द इति भाष्यार्थः । तथा च "स्वभावाकृति सौन्दर्यवपुः सुश्लोकशब्दयोः रूपम्" इति नैघण्टुकाः । **प्राचीनटीकायां** तु "भगवद्विग्रहो विनश्वरः विग्रहत्वाद् देवदत्तदेहवत्" इत्यनुमानविरुद्धं देहस्यानन्तत्वमित्याशङ्क्योक्तम् **अनन्तमिति** । भगवतैव भगवद्विग्रहस्यानन्तत्वेन विशेष्यमाणत्वात् न तस्याव्ययत्वं भगवदसम्मतम् । अनुमानं तु अनन्तत्वेनानुक्तत्वरूपोपाधिदूषितमिति भाव इति व्याख्यातम् । "इति च" इति भाष्यस्यान्वयं दर्शयति **इति चेति** । **वर्तते इति** । पूर्वभाष्यादनुवर्त्य भाष्यं योजनीयमित्यर्थः । तथा हि । भागवतेऽपि भगवतैव भगवद्रूपस्याव्ययत्वविशेषणाच्च नास्य भगवदसम्मतत्वमिति भावेनोक्तम् **एतदिति** । "पश्यन्त्यदो रूपमदभ्रचक्षुषः" (भाग. १.३.४) इति यत्र क्षीरार्णवशायिपद्मनाभाभिधं रूपं प्रकृतमेतत् । मत्स्यादीनामवताराणां बीजं व्यञ्जकम् । अन्ततोऽत्र सर्वावतारा निधीयन्ते एकीक्रियन्त इति निधानम् । न व्येतीत्यव्ययम् । यस्य पद्मनाभस्यांशांशेन सामर्थ्यैकदेशेन देवतिर्यङ्नरादयः सृज्यन्ते इत्यत्राव्ययमिति रूपं विशेषितमिति भगवद्विग्रहस्याप्यव्ययत्वं भगवदभिप्रेतमेवेति ।

**एवं तर्हि** भगवद्विग्रहस्याप्यव्ययत्वाभिप्राये । **तत्रैव** भागवत एव ।

"जगृहे पौरुषं रूपं भगवान्महदादिभिः ।
सम्भूतं षोडशकलमादौ लोकसिसृक्षया ॥" (भाग. १.३.१)

इति रूपग्रहणमुच्यत इत्यर्थः । ननु रूपग्रहणोक्तावप्यव्ययत्वस्य को विरोधः ? इत्यत आह **गृहीतस्येति** । ग्रहणस्य त्यागशिरस्कत्वादिति भावेनोक्तम् **नियत इति** । तथा च तस्याव्ययत्वं दुर्लभमिति भावः । **उच्यत इति** । तथा च पूर्वम् अविद्यमानग्रहणाभावान्नोक्तचोद्यावकाश इति भावः । प्रमाणशब्दापेक्षया 'एभिः' इत्युक्तम्, आभिरित्यर्थः । तेन भगवतो जन्माभावे "न चायं राघवाज्जातो न चापि जमदग्नितः" (पाद्मे) इत्याद्यागमानामुदाहृतत्वाद् 'युक्तयः' इति कथमुच्यते ? इति शङ्काऽनवकाशः । रूढिप्राबल्यमनुरुन्धान आह **असम्भावनेति** । "नित्यः सर्वगतः स्थाणुः" (२.२४) इत्यत्र स्थाणुत्वेक्षितृत्वयोरसम्भावनापरिहारार्थाः, अचिन्त्यशक्तित्व-उभयविधवाक्यान्यथाऽनुपपत्तिरूपे युक्ती उक्ते, तथा अध्यायान्ते "यत्र परावरभेदोऽवगम्यते" (गी. भा. २.७२) इत्युक्तपरावरत्वे अचिन्त्यशक्तिः पदार्थवैचित्र्यं चेति युक्ती उक्ते इत्यर्थः । अत्र च 'जगृहे' इति वाक्ये व्यक्तिरेव ग्रहणशब्दार्थः, नान्यः । "अनन्तं विश्वतोमुखम्" (११.११) इति वाक्यस्यान्यथाऽनुपपत्तेः । न चेश्वरे विग्रहव्यक्तिरसम्भाविनी । अचिन्त्यशक्तेः न चान्यत्रादृष्ट्याऽपलापः । भूतचतुष्टयस्य पृथिवीत्वादृष्टेः पृथिव्या अपि पृथिवीत्वाभावप्रसङ्गात् । न च "अनन्तं विश्वतोमुखम्" (११.११) "निधानं बीजमव्ययम्" (भाग. १.३.५) इति वाक्यमुपचरितार्थं स्तुतिर्वेति शङ्क्यम् । ईश्वरेऽचिन्त्यशक्त्यैव मुख्यार्थोपपत्तावुपचारादिकल्पनाया अनुचितत्वादिति भाष्याभिप्राय इति भावः । 'उक्ता' इत्यनूद्य शेषमाह **उक्ता इति** ।

**उच्यते** अव्ययत्वम् । आत्मनोऽनादित्वम् आत्मानादित्वमित्यत्र आत्मशब्दार्थमाह **आत्मन इति** । देहतोऽप्यनादित्वादेराक्षेपे अजत्वादिमात्रं कथमुच्यते ? इति कृतचोद्यस्य 'अजोऽपि' इत्यत्र देहतोऽप्यजत्वं विवक्षितमिति परिहारं भाष्यारूढं कर्तुम्, प्रस्तुतत्वाद् 'आत्माव्ययत्वम्' इति भाषणीये यद् 'आत्मानादित्वम्' इति भाषितं तत्प्रयोजनमाह **विग्रहस्यापीति** । **तस्यैव** विग्रहस्यैव । **अभिप्रायः** गीताचार्यस्य । अत्र तु स्वरूपस्यैवोच्यते इति किन्न स्याद् ? इति चोद्यं परिहरति **अत इति** । **तद्विषयः** स्वरूपानादित्वविषयः । **आक्षेपः** "न तर्ह्यनादिर्भवान्" (गी.भा.४.६) इत्याक्षेपः । स्वयं दूषणान्तरमाह **आत्मशब्दोऽपीति** । **अन्यथा** आक्षेपस्य स्वरूपानादित्वविषयत्वे । न केवलं स्वरूपानादित्वं सर्वजीवानामप्यस्तीत्युक्तदोष इत्यपिशब्दः । **इत्युक्तम्** 'अव्यय आत्मा देहोऽपी'ति भाष्ये ।

**स्वरूपतो देहतश्चेति** । 'अजोऽपि' इति स्वरूपतो देहतश्चाजत्वम्, 'अव्ययात्मा' इति स्वरूपतो देहतश्च नित्यत्वमुक्तम्, इत्यनादिनित्यत्वं लभ्यत इत्यर्थः । **व्याहतत्वादिति** । अजस्य जनिरस्ति, अव्ययदेहस्य देहग्रहणरूपजनिरस्तीत्यस्य विप्रतिषिद्धत्वादित्यर्थः । अनादित्वस्य जन्मना

सह परस्परविरहरूपत्वरूपो व्याघातः । भावगतनित्यत्वस्य तूत्सर्गतः परस्परविरहरूपत्वरूपो विरोधोऽस्तीति भावेन अनादिनित्यत्वस्य जन्युक्त्या व्याघात इत्यपि **आहुः । इति शब्दश्च** 'शेषः' इत्यनुषज्यते । **निमित्तम्** प्रकृत्या जातेषु वसुदेवदशरथादिषु प्रादुर्भाव एव जन्मभ्रमस्य निमित्त-मित्यर्थः । अत्र सम्मतिमाह **यथोक्तमिति** ।

> "स्त्रीपुंप्रसङ्गात् परतो यतो हरिः प्रादुर्भवत्येष विमोहयन् जनम् ।
> अतो मलोत्थोऽयमिति स्म मन्यते जनोऽशुभः पूर्णगुणैकविग्रहम् ।" (१०.५०)

इति भारततात्पर्यनिर्णये स्त्रीपुंप्रसङ्गत् पश्चादेव **जनं** प्राकृतं विमोहयन्, 'लक्षणहेत्वोः' इति शतृ-प्रत्ययः । विमोहयितुं प्रादुर्भवति यतः, अतो मलोत्थदेह इत्यशुभो जनो भ्रमतीति भ्रान्तेर्निमित्त-मयुक्तमित्यर्थः ।

**उपादानमिति** । "एतत्सर्वं मन एव" (छा.३.६.९) इति श्रुतेर्मनसो भ्रान्तिं प्रत्युपादान-त्वेऽपि तमोगुणात्मकप्रकृत्यवलम्बनेनैव तद् उपादानमिति भावेनेयमुक्तिः । "प्रमादमोहौ तमसो भवतोऽज्ञानमेव च" (१४.१७) इति गीतां मनसि निधायाह **तमोरूपयेति** । 'दुःखादिकम्' इत्यत्रादिपदेन तन्निमित्तनीचतादिग्रहः । **अत्र वाक्ये** "द्रव्यं कर्म च कालश्च स्वभावो जीव एव च । यदनुग्रहतः सन्ति न सन्ति यदुपेक्षया ॥" (भाग. २.५.१४) इति वाक्ये । **सा** इति प्रकृति-र्भाष्ये । **तस्य** द्रव्यपदस्य । **निर्दिश्यन्ते** "द्रव्यं कर्म च कालश्च" इति पदैः । तत्र कालः कर्माणि सर्वसृष्टिकारणानि । तत्साहचर्याद् द्रव्यमपि तथाभूतमेव ग्राह्यम् । तच्च सर्वकारणत्वं न द्रव्येषु प्रकृतेरन्यस्य पृथिव्यादेः सम्भवति । अतो द्रव्यपदेन प्रकृतिरेवात्र वाक्ये वक्तव्येति भावः । 'प्रकृतेरेव' इत्यतःपरं 'मुख्यतः' इति शेषः । अनेन "द्रव्यशब्देन प्रकृत्यादि तत्त्वमुच्यते" (अनुव्या. १.१३) इति सुधाविरोधो नेति मन्तव्यम् । **एतत्** 'आत्ममायया' इति वचनम् । **अनेन** आत्म-ज्ञानेनेति व्याख्यानेन । **किन्न स्यादिति** । "मायां तु प्रकृतिं विद्यात्" (श्वेताश्व.उ. ४.१०) इति वचनादिति भावः । अत्र वाक्ये ज्ञानं न श्रूयते इत्यत आह **इति प्रज्ञाया इति** ।

**तस्य** प्रकृतिपदस्य । 'निमित्त' इति हरेर्जन्मभ्रान्तेरिति योज्यम् । 'सृष्टिकारणया' इति भाष्ये करोतेर्ण्यन्तात्करणे "ण्यासश्रन्थो युच्" इति युच्प्रत्यये तस्य 'स्त्रियाम्' इत्यधिकारविहितत्वात् स्त्रीलिङ्गत्वमिति ज्ञातव्यम् । **तत्र प्रादुर्भूत** इति तु शेषोक्तिः । **मायाख्यया** 'प्रकृत्या' इत्यनुवर्त-नीयम् । भाष्ये **महदादेः** महदाद्यभिमानिनः । 'आत्मचिद्बलाद्' इत्यस्य 'अजोऽपि' इत्यनेनान्वय इत्याह **आत्मेति** । अपिरवधारणार्थ इति भावः । अनेन प्रकृतिशब्देन श्रीभूम्यभिमन्यमानप्रकृतिः

गृह्यते । मायाशब्देन तु दुर्गाभिमन्यमाना प्रकृतिरिति विभावितं भवति । तच्छीलकर्त्रर्थकवरजन्तत्वमाश्रित्य चोदयति **नन्वीशनशीलानामिति** । **स्थेशेति** । ष्ठा = गतिनिवृत्तौ, ईश = ऐश्वर्ये, भासृ = दीप्तौ, पिसृ पेसृ = गतौ, कस = गतावित्येतेभ्यो धातुभ्यो वरच्प्रत्ययो भवति । स्थावरः । ईश्वरः । भास्वरः । पेस्वरः । कस्वरः । इति सूत्रार्थोदाहरणानि । **एतद्विहाय** ईशधातोर्वरजिति शास्त्रं विहाय । ननु "पञ्चमी भयेन" इति सूत्रे वरशब्दाभावात् कथं पञ्चमीसमासः ? उक्तविग्रहे 'ईशवरः' इति च निर्देशः स्यादित्यत आह **एतदिति** । 'पञ्चमी' इति योगविभागात्समासः, ईशशब्दगताकारलोपश्च पृषोदरादित्वाद् आगमानुमत्या कल्पनीयावित्यर्थः ।

ननु 'अव्ययात्मा' इति पदव्याख्यानानन्तरमेवेश्वरपदं व्याख्यातव्यम् । क्रमप्राप्तत्वात् । मध्ये द्वितीयार्धं व्याख्यायैतद्व्याख्यानं किन्निमित्तम् ? इत्यत आह **अजत्वादेरिति** । आदिपदेनाव्ययात्मत्वं ग्राह्यम् । तच्चाव्ययात्मत्वरूपं नित्यत्वं वेदेषु पञ्चाशद्वर्णेषु अव्याकृताकाश इव "कूटस्थतया आद्यन्तशून्यत्वं नित्यत्वम्" (तत्त्व.सं. ८ श्लो.) इति तत्त्वसङ्ख्यानटीकोक्तरीत्या विवक्षितम् । अत एव भाष्येऽन्तशून्यत्वं स्फुटप्रतिभासमिति भावेन 'आत्मानादित्वम्' इत्युक्तम् । एवं चाजत्वस्याव्ययात्मत्वस्य च 'सम्भवामि' इति पदोपस्थापितसम्भवशब्दितजन्मना पदयोः परस्परविरहरूपार्थप्रतिपादकतया शाब्दो व्याघातः । **अस्य** ईश्वरपदोक्तश्रीब्रह्मरुद्राद् ईशशब्दितसमर्थोत्तमत्वस्य तु सम्भवे परस्परविरहव्याप्तत्वरूप एव व्याघातः । यत्रेश्वरत्वं तत्र सम्भवाभावः । यत्र सम्भवः तत्रेश्वरत्वाभाव इति व्याप्तेः । ईश्वरः जन्ममरणादिशून्यः तज्जिहासुत्वे सति तत्त्यागे शक्यत्वात् । यो यन्निवारणे समर्थः स तद्धातेति व्याप्तेर्वेति साक्षात्परम्परया च विरोध इति वैलक्षण्यं ज्ञापयितुं पश्चाद् ईश्वरपदं व्याख्यातमिति सप्रयोजनमेव क्रमोल्लङ्घनमिति भावः । अनेन "ईशनशीलानां श्रीब्रह्मादीनाम् उत्पत्तिमरणदर्शनेन विरोधाभावाद् 'ईश्वरोऽपि सम्भवामि' इति कथम् ?" इति चोद्यं निरस्तम् । ईश्वरभगवति जननादिदोषराहित्यस्य व्याप्तिसिद्धत्वाद् इतीममर्थं द्योतयितुम् अजत्वस्य स्वशब्देन ग्रहणम्, अव्ययात्मत्वस्य त्वादिशब्देनेति ज्ञातव्यम् ।

**केचित्तु** 'अजत्वादेः' इत्यत्र आदिपदेन "अजोऽपि सन्" इत्यत्र सत्पदोक्तं सत्त्वं गृह्यते । सत्त्वं च सद्भावो विद्यमानत्वम् । "सद्भावे साधुभावे च सदित्येव प्रयुज्यते" (१७.२६) इति वचनात् । "सत्प्रशस्ते विद्यमाने सत्याभ्यर्हितसाधुषु" इति कोशाच्च । तथा च **सन्नपि** विद्यमानोऽपि **सम्भवामि** इत्युक्तेः सत्त्वसम्भवयोरस्ति शाब्दो व्याघातः । असतः सत्तासम्बन्धस्यैव सम्भवशब्दितजनित्वाभ्युपगमात् । ईश्वरत्वस्य तु व्याप्त्या व्याघात उक्तरीत्या व्याख्येयः । एतदभिप्रायेणैव 'सन्' इति द्विरुक्तम् । एकस्य 'विद्यमानः' इत्यर्थः, अपरस्य 'भवन्' इत्यर्थ इति पदद्वयं स्वरसमित्याहुः ।

अन्ये तु आदिपदेनाव्ययत्वग्रहणे तस्य सम्भवेन शब्दव्याघातो नास्तीति मन्यमानाः **आदीयते** उपादीयते व्याख्यायत इत्यादिः । अजत्वं चासावादिश्चेति कर्मधारयः । ततश्चाजत्वादेरित्यस्य अजत्वरूपव्याख्यानवतो अजशब्दस्येत्यर्थः पर्यवस्यतीति तस्य सम्भवेन शाब्दो व्याघातः । ईश्वर-पदस्य तु व्यास्त्या इति ज्ञापनायेत्यर्थ इत्याहुः ॥ ६ ॥

***गीताक्षरार्थस्तु***— जन्मान्यतीतानि चेत्, तर्हि न जननमरणराहित्यम् ईश्वरत्वं वा भवतः स्यात् । तथा च "न त्वेवाहम्" (२.१२), "अविनाशि तु तद्विद्धि" (२.१७) इत्युक्तविरोध इत्यत उच्यते **अजोऽपीति** । स्वरूपतो देहतश्च जननरहितोऽपि **अव्ययः** अविनाशी **आत्मा** देहो यस्यासौ **अव्ययात्मा** सन्नपि **ये भूतानाम् ईशाः** श्रीब्रह्मरुद्राद्याः तेभ्यो **वरोऽपि** सन् **सम्भ-वामि** । स्वरूपतो देहतश्चानादिनित्यस्य सम्भवः कथम् ? व्याहतत्वाद् इत्ययुक्तम् । **प्रकृतिम्** प्रकृतिजातान् वसुदेवादीन् **अधिष्ठाय** अनुप्रविश्य **सम्भवामि** इति । कुतो हेतोरेवं जीवविलक्षणं ते जन्म ? इत्याशङ्कानिरासार्थमुक्तम् **आत्ममाययेति** । **आत्ममायया** आत्मज्ञानेनाजोऽपि सम्भवामि, इत्यतो लोकस्य जात इति भ्रमः । भ्रमतां "भ्रमति क्षितिः", इति यथा । यदि मातापितृसम्बन्धो-ऽङ्गीकृतस्तर्हि तन्निमित्तं दुःखादिकमपि प्रसज्यत इत्यत उक्तम् **स्वामिति** । स्वकीयां स्वाधीना-मित्यर्थः । स्वाधीनप्रकृत्या वसुदेवादिदेहान् निर्माय तान् अनुप्रविश्य प्रादुर्भवामीत्यतो लोको मां जनिमन्तं जानातीति भावः । नन्ववतरसि चेत् प्रयोजनेन भाव्यम् । तथा च "नानवाप्तम्" (३.२२) इत्युक्तविरोध इत्याशङ्कापरिहाराय प्रयोजनाभावेऽप्यवतारादिकं तादृशस्वभावत्वाद्युज्यत इति भावेनोक्तम् **प्रकृतिमिति** । **स्वां प्रकृतिं** स्वस्वभावम् **अधिष्ठाय सम्भवामि** । स्वस्वरूप-मितिवद् उपचारत्वशङ्कानिरासार्थं 'स्वाम्' इत्युक्तम् ॥ ६ ॥

**गीता**

## यदा यदा हि धर्मस्य ग्लानिर्भवति भारत ।
## अभ्युत्थानमधर्मस्य तदाऽऽत्मानं सृजाम्यहम् ॥ ७ ॥

***वि०वि०***— किञ्च स्वप्रयोजनाभावेऽपि दयालुतया भगवतः परप्रयोजनार्थमवतारादिकं युज्यत इत्यभिप्रेत्य परप्रयोजनापेक्षाकालं दर्शयन् परप्रयोजनविशेषं दर्शयति **यदेति द्वाभ्याम्** ॥

***सा०सं०***— किञ्च स्वप्रयोजनाभावेऽपि लोकापेक्षितधर्माधर्मस्थापनोत्सादनाद्यर्थमवतार इति सम्भवकालोक्तिपूर्वकमाह **यदेत्यादि** श्लोकद्वयेन ॥

*अ०प्र०*— कदा सम्भवतीत्यपेक्षायां आह **यदा यदेति** ।

हे भारत ![१], अहं हीति निश्चयेन, यदा धर्मोऽधर्मो भवति[२], धर्मस्य ग्लानिः = हानिः[३], यदा अधर्मस्य[४], अभ्युत्थानं = उत्पत्तिः[५], भवति[६], तदा आत्मानं सृजामि = साकारः सन् अवतरामि[७] ॥ ७ ॥

**गीता**

## परित्राणाय साधूनां विनाशाय च दुष्कृताम् ।
## धर्मसंस्थापनार्थाय सम्भवामि युगे युगे ॥ ८ ॥

*वि०वि०*— **युगे युग इति** । धर्महान्यधर्मवृद्धिकाल इत्यर्थः । स्वभावादेव जन्मना परित्राणादि भगवान् करोति नाशक्त्येति द्रष्टव्यम् ॥

*सा०सं०*— **युगे युग** इति । धर्महान्यधर्मवृद्धिकाल इत्यर्थः । अवतारं विना साधुपरित्राणादिसम्भवेऽपि लीलयैवावतारद्वारा परित्राणादिकं स्वभावादेव तस्येति ज्ञेयम् ॥

*अ०प्र०*— किमर्थमित्यपेक्षायामाह **परित्राणायेति** ।

हे भारत ! अहं, युगे युगे[१], साधूनां[२], परित्राणाय[३], दुष्कृतां[४], विनाशाय च[५], एवं धर्मसंस्थापनार्थाय[६], सम्भवामि[७] ।

हे भारत ! अहं युगे युगे = तत्तदवसरे धर्महानि-अधर्मवृद्धिकाले साधूनां = धर्मनिष्ठास्साधवः तेषां धर्मवर्तिनां साधूनां[२], परित्राणाय = संरक्षणाय[३], दुष्कृतां = दुष्टं कर्म कुर्वन्तीति दुष्कृताः दैत्याः तेषां[४], विनाशाय च = वधाय च[५], एवं धर्मसंस्थापनार्थाय = एवं साधूनां रक्षणेन च दैत्यानां वधेन च स्वधर्मं स्थिरीकर्तुं[६], सम्भवामि = अवतरामीत्यर्थः । मूलरूपेणैव परित्राणादिकं कर्तुं शक्तोऽपि भगवान् लीलया स्वभावादेव अवतीर्य भक्तरक्षणादिकं करोतीति ज्ञातव्यम् । न चैवं दुष्टनिग्रहं कुर्वतोऽपि नैर्घृण्यं शङ्कनीयम् । यथा चाहुः—

"ताडने ताडने मातुर्नाकारुण्यं यथाऽर्भके ।
तद्वदेव महेशस्य नियन्तुर्गुणदोषयोः ॥" इति वचनात् ।

अतो भगवतो वैषम्यं नास्तीत्यर्थः ॥ ८ ॥

भाष्यम्

**न जन्मनैव परित्राणादिकं कार्यमिति नियमः । तथापि लीलया स्वभावेन च यथेष्टचारी । तथा ह्युक्तम्— "देवस्यैष स्वभावोऽयम्", "ॐ लोकवत्तु लीला-कैवल्यम् ॐ" (२-१-३४), "क्रीडतो बालकस्येव चेष्टामस्य निशामय", "अरि-भयादिव स्वयं पुराद् व्यवात्सीद् यदनन्तवीर्यः", "पूर्णोऽयमस्यात्र न किञ्चिदाप्यं तथाऽपि सर्वाः कुरुते प्रवृत्तीः । अतो विरुद्धेषु इमं वदन्ति परावरज्ञा मुनयः प्रशान्ताः ॥" इत्यादि ऋग्वेदखिलेषु ॥ ७ - ८ ॥**

***प०टी०***— ननु साधुपरित्राणादि कर्तुं यदि परमात्मनो जन्म, तर्हि जन्याभावे कर्तुमशक्तिः स्यात् । तत्फलस्य पूर्वमभावेनापूर्णता चेत्यत आह **न चेति** । यद्यपि जन्म विना परित्राणादौ समर्थस्तथाऽपि लीलया प्रादुर्भूत्वैव करोति । नापि तेन फलमस्ति, किन्तु स्वभावेनैव करोतीत्यर्थः । अत्रैव प्रमाणान्याह **तथा हीति** । **विरुद्धेषुं** विरुद्धेच्छम् ॥

***न०टी०***—उत्तरश्लोकद्वयस्य पूर्वसङ्गतेः व्याख्यानस्य सुगमत्वात् तदुद्भवाशङ्कामेवापाकरोति **न जन्मनेत्यादिना** । साधुपरित्राणादिप्रयोजनाय 'सम्भवामि' इति वदन्नपि, सम्भवं विना परित्राणादि कर्तुं न शक्नोतीति नाशङ्कनीयम् । अनन्तवीर्यत्वात् । तथाऽपि इच्छयैव जन्मानुकुर्वन् स्वावतारादि करोति । न चान्यथापि कर्तुं समर्थस्य किं जन्मानुकरणादिक्लेशेनेति वाच्यम् । लीलयैव तदनुकरणात् । न चेतरवदालस्यादिपरिहाराय भगवतो जन्माद्यनुकरणलीलेति वाच्यम् । तस्याल-स्यादिदोषाभावात् । अतः स्वभावादेव लीलया यथावशं चरतीत्यर्थः । अस्मिन्नेवार्थे प्रमाणमाह **तथा हीति** । एतादृशी हि बालवच्चेष्टा याऽरिभयादिव पुराद्विवासाद्या । न चारिभयं तस्यानन्त-वीर्यत्वात् । पूर्णकामोऽयं देवः । अत एवास्य न किञ्चिदाप्यमस्ति । आसाद्यमिष्टमपनोद्यमनिष्टं च नास्तीत्यर्थः । तथाऽपीष्टानिष्टप्राप्तिपरिहारार्थाः प्रवृत्तीः करोति । अत इमं विरुद्धेच्छं वदन्ति । अतोऽयं देवस्य स्वभावः, योऽयम् आ समन्तादिच्छया जगत उत्पत्त्यादिप्रणयनव्यापारः । स एव च तल्लीलाकेवलभावः स चान्येषां सुखदुःखमध्यसम्प्राप्त्यै भवतीत्यनवद्यम् ॥

***प्र०दी०***— "परित्राणाय साधूनां" इति साधुपरित्राणादिकं भगवदवतारस्य प्रयोजनमुक्तम् । तत्र किं जन्मनैव परित्राणादिकं कार्यमिति नियम इत्यपेक्षायामाह— **नेति** । जन्मना विनाऽपि कर्तुं समर्थत्वादिति भावः । तर्हि किमर्थं जन्मेत्यत आह— **तथाऽपीति** । यथेष्टचारी इच्छयैव तथा चरति । तथेच्छैव किमर्थेत्यत उक्तं— ***लीलयेति*** । लीलाऽप्यालस्यपरिहाराद्यर्था न भवती-

त्युक्तम् । **स्वभावेन चेति** । अत्रैव प्रमाणान्याह— **तथा हीति** । अयमेषः इयमिच्छा । अत्र प्रवृत्तिषु । विरुद्धेषु लोकविपरीतेच्छम् ॥

***भा०दी०***— तदुक्तं 'सर्वधर्मोपपत्तेश्चे'त्यत्र ईश्वरः सदा त्यक्तसमस्तजननमरणादिति शेषः । तज्जिहासुत्वे सति तत्र शक्तत्वादित्यादि । एष इत्येतच्छब्दरूपं न भवति किन्तु इषु इच्छाया-मित्यतः भावे घञ्प्रत्ययान्तो; अतो न पौनरुक्त्यमित्याह **अयमेष इयमिच्छेतीति** । अत्र न किञ्चिदाप्यमित्यत्र पदानुवादार्थमाह **प्रवृत्तिष्विति** । इच्छतेर्भावे कुप्रत्यये इति भावेनाह **विरु-द्धेच्छुमिति** ॥

***भा०र०***— किञ्च स्वप्रयोजनाभावेऽपि परप्रयोजनोद्देशेन सम्भवो युज्यत इत्यभिप्रेत्य तस्य कालः प्रयोजनविशेषश्चोच्यते **यदा यदा इति** द्वाभ्याम् । **धर्मस्य** वर्णाश्रमोचितलक्षणस्य **ग्लानिः** हानिः । **अधर्मस्य** श्रुतिस्मृतिप्रतिषिद्धाचरणस्य **अभ्युत्थानम्** उद्भवः **तदाऽऽत्मानं सृजामि** तस्मिन् कालेऽहम् अवतरामीति यावत् ॥

***भा०र०***— 'परित्राणादिकम्' इत्यत्र पापकारिनाशनं धर्मसंस्थापनं वा आदिपदार्थः । तादर्थ्ये चतुर्थीति भावेनोक्तम् **प्रयोजनमिति** । कुतो नियमः ? इत्यतो भाष्यभावमाह **जन्मना विनेति** । अनेन "यद्यपि जन्म विनापि त्राणादौ समर्थत्वात् जन्मनैव तत्कार्यमिति नियमो नास्ति । तथाऽपि" इति भाष्ययोजनोक्ता भवति । **तर्हि** यदि जन्मना विना कर्तुं समर्थस्तर्हि । **इच्छयैवेति** । अनेन "इषु = इच्छायाम्" इत्यतो भावे निष्ठा । इष्टमनतिक्रम्य यथेष्टं चरितुं शीलमस्येति यथेष्टचारीति भाष्यार्थं उक्तो भवति । 'परिहाराद्यर्था' इत्यत्राप्राप्तसुखावाप्तिरादिपदार्थः । "एषोऽयम्" इति पद-द्वयम् एतद्-इदंशब्दरूपमिति पुनरुक्तिरित्यत आह **अयमेष इति** । "इषु = इच्छायाम्" इत्यतो भावे घञि 'एषः' इति रूपमित्यर्थे भेदान्नोक्तदोष इति भावः । मत्तादेर्नृत्तगानादिक्रिया यथा तथेश-स्यापि सृष्टिपालनादिक्रिया । लीलायाः **कैवल्यं** केवलं प्रयोजनं विना कृता लीलेव । प्रयोजना-भावेऽपि सुखोद्रेकात्, स्वभावादेव भगवतो विश्वसृष्टिपालनादिक्रियेति ब्रह्मसूत्रार्थः ।

भाष्ये **चेष्टां** साधुजनपरित्राणादिरूपां **निशामय** पश्य । **स्वयम्** आत्मना स्वेच्छयैव पुराद् विवासमकरोत् । तच्चारिभयादिवादर्शयत् । कुतः ? यतोऽनन्तवीर्य इति । अत्र भगवतः प्रवृत्ति-रिच्छामात्रेति विभाव्यते । तथा च **प्राचीनटीका** एतादृशी भगवच्चेष्टा या अरिभयादिव पुराद् व्यवात्सीत् । न चारिभयं तस्यास्ति । अनन्तवीर्यत्वादिति । भाष्यस्थम् 'अत्र' इतिपदमनूद्यार्थमाह **अत्रेति** । **प्रवृत्तिषु** अर्जुनत्राणादिरूपासु । 'प्रवृत्तिः' इत्युपरिश्रवणादिति भावः । भाष्ये— **अयं**

देवः **पूर्णः** पूर्णकामः, अत एव **अस्य न किञ्चिदाप्यमस्ति** । आप्यमिष्टम् अपनोद्यमनिष्टं च नास्ति । तथाऽपीष्टानिष्टप्राप्तिपरिहारार्थाः **प्रवृत्तीः कुरुते** करोति । इतरपदार्थः **प्राचीनटीकातः** अवधेयः । इच्छतेभवि कुप्रत्यये इषुशब्द इच्छावाचीति भावेनाह **विरुद्धेषुमिति** ॥ ८ ॥

***गीताक्षरार्थस्तु***— **परित्राणाय** परिरक्षणाय । **दुष्कृतां** पापकारिणां **विनाशाय च** । किञ्च **धर्मसंस्थापनार्थाय** च धर्मस्य सम्यग् व्यवस्थापनलक्षणप्रयोजनाय **युगेयुगे** वीप्सायां द्विर्वचनम् । धर्महान्यधर्मवृद्धिकाले इति ॥ ८ ॥

### गीतातात्पर्यनिर्णयः

**आत्ममायया आत्मेच्छया । प्रकृतिं स्वामधिष्ठाय स्वभावम् । ''देवस्यैष स्वभावोऽयम्'' इत्यादिश्रुतेश्च ।**

*प्रका०*— प्रकृतिमित्येतद्व्याचष्टे **आत्मेत्यादिना** । अस्यार्थः ''भोगार्थं सृष्टिरित्यन्ये क्रीडार्थमिति चापरे । देवस्यैष स्वभावोऽयमाप्यकामस्य का स्पृहा'' इति श्रुत्या बहुधाऽवतरणात् सज्जनप्रवर्धनं दुर्जनसंहरणादिकं विष्णोः स्वभावकृतमेवावसीयते । ''प्रकृतिं स्वामधिष्ठायेति'' स्वशब्देन विशेषणात् प्रकृतिशब्दोऽत्र स्वभावस्य वाचको न प्रधानस्य ।

*न्या०दी०*— जन्मान्यतीतानि चेत् तर्हि न जननमरणराहित्यं भवतः । तथाच ''अविनाशि तु'' इत्युक्तविरोध इत्यत उच्यते **अजोऽपीति** ॥ तत्र ''आत्ममायया'' इत्येतदज्ञानवशादित्यन्यथा-प्रतीतिनिरासाय व्याचष्टे **आत्मेति** ॥ नात्रात्ममाययेत्यज्ञानवशादित्युच्यते । सर्वमानविरोधात् । अपि तु अवतारे परप्रेरणानिवारणाय महामायेत्यादिना मायापदोदितस्वेच्छानिबन्धनत्वमेवोच्यत इत्यर्थः । ''प्रकृतिं स्वामधिष्ठाय'' इत्येतत् प्राकृतशरीरलाभेनेत्यन्यथाप्रतीतिनिरासायानूद्य प्रकृतिपदं व्याचष्टे **प्रकृतिमिति** ॥ नात्र प्रकृतशरीरलाभोऽभिधीयते । श्रुत्यादिविरोधस्योक्तत्वात् । किन्तु ''अवतरसि चेत् प्रयोजनेन भाव्यम् । तथा च नानावाप्तमित्युक्तविरोधः'' इत्याशङ्कापरिहाराय प्रयोजनाभावे-ऽप्यवतारादिकं तादृशस्वभावत्वाद्युज्यत इत्येवोच्यत इति भावः । भवेदयमर्थो यदि हरेरवतारादि-प्रयोजनं विना स्वभावादेवेति सिद्धं स्यात् तदेव कुत इत्यत आह **देवस्येति** ॥ स स्वभावश्च अयं देव एव न तु ततो भिन्न इत्यर्थः ।

*भा०दी०*— **भवत** इति षष्ठ्यन्तम् । तवेत्यर्थः ॥ **श्रुत्यादिविरोधस्योक्तत्वादिति** । द्वितीये 'अन्तवन्त इम' इत्येतद्व्याख्यावसरे उक्तत्वादित्यर्थः । यद्वा 'नैनं छिन्दन्ती'त्यादिव्याख्या-

वसरे सदेह इत्याद्युदाहरणादिति भावः । एष सृष्ट्यादीच्छारूपो व्यापारो देवस्य स्वभाव इत्यर्थमुपेत्य अयमित्यस्यार्थमाह **स स्वभावश्चायं देव एवेत्यादि** ॥

**गीतातात्पर्यनिर्णयः**

**अत एव स्वशब्देन विशेषणं "प्रकृतिं स्वामवष्टभ्य" इत्यादिषु । "मयाऽध्यक्षेण प्रकृतिः" इत्यादिषु तु न स्वशब्दः । "प्रकृतिं विद्धि मे पराम्" इत्यादिषु सम्बन्धित्वेन प्रतीतेरन्या ।**

***प्रका०***— "मयाऽध्यक्षेण प्रकृतिः प्रकृतिं विद्धि मे पराम्" इत्यादिषु तु स्वशब्दविशेषणाभावात् न प्रकृतिशब्दः स्वभाववचनः मे प्रकृतिमिति सम्बन्धित्वेन प्रतीतेश्च । "प्रकृतिं स्वाम्" इत्यत्रत्य स्वशब्दः स्वरूपवाची न स्वकीयवाची ।

***न्या०दी०***— अस्तु विष्णोः स्वभावादेव व्यापारः । तथाप्यत्र प्रकृतिपदं कुतः स्वभाववाचीत्यत आह **अत एवेति** ॥ यतोऽत्र प्रकृतिपदं स्वभाववाच्यत एव स्वामिति विशेषणं प्रयुक्तम् । केवलमन्यार्थत्वे स्वाधीनत्वस्य ममेत्यसाधारणशब्देनाभिधानं विना उभयसाधारणमेतन्न स्यादित्यर्थः । एतमेव न्यायमन्यत्राप्यतिदिशति **प्रकृतिमिति** ॥ इत्यादिषु च स्वशब्देन विशेषणमत एवेत्यर्थः । यदि प्रकृतिपदं स्वभाववाचि तर्हि "मयाऽध्यक्षेण प्रकृतिः", "प्रकृतिं विद्धि" इत्यत्रापि किं स्वभाववाचीत्यपेक्षायामाह **मयेति** ॥ अतः स्वभावादन्यैव तत्र प्रकृतिरिति शेषः । अन्यत्वे हेत्वन्तरं चाह **प्रकृतिमिति** ॥ अत्र आदिपदेन "मया" इत्यस्य सङ्ग्रहः । 'मयाऽध्यक्षेण' इत्यत्र अधीनतया सम्बन्धित्वप्रतीतेः 'प्रकृतिं' इत्यत्र 'मे' इति षष्ठ्या सम्बन्धित्वप्रतीतेश्चेति योज्यम् ।

***भा०दी०***— **अन्यार्थत्व इति** । प्रसिद्धप्रकृतिमात्रार्थत्व इत्यर्थः । नानिष्टमिति पदविभागः ।

**गीतातात्पर्यनिर्णयः**

**अत्र तु स्वशब्दः स्वरूपवाची । स्वभाव इत्यत्रापि स्वाख्यो भावः स्वभावः । भावशब्दस्तु सम्बन्ध्याशङ्कानिवृत्तये ।**

***प्रका०***— यथा **स्वभाव** इत्यत्रत्य स्वशब्दः स्वाख्यो भावः स्वभावः इति समासात् स्वशब्दः स्वकीयेऽपि वर्तमानो भावशब्दविशेषितस्तु स्वरूपवाच्येव । अतश्च स्वभाववाचनप्रकृतिशब्दस्य स्वशब्दविशेषितत्वे स्वस्वरूपमितिवत् स्वस्वभाव इत्यर्थो भवति । तत्र न स्वशब्द-

विशेषणस्य वैयर्थ्यमाशङ्क्यम् स्वभावशब्दस्योपचारेण स्वरूपशब्दवत् स्वकीयेऽपि प्रवृत्तिसम्भवात् । निवृत्त्यर्थत्वेनोपपत्तेः । मम पुत्रोऽयं मत्स्वभाव इति मत्स्वरूपमित्युपचरितव्य इति व्यवहारात् ।

*न्या०दी०*— सम्बन्धित्वेन प्रतीतेरन्या चेदत्रापि स्वामिति सम्बन्धित्वेन प्रतीतेरन्या स्यादित्यत आह **अत्रेति** ।। भवेदिदं यदि स्वशब्दः सम्बन्धवाच्येव स्यात् । न चैवम् । अत्र स्वशब्दस्य मुख्यतः स्वरूपवाचीति भावः । स्वशब्दस्य स्वरूपवाचित्वं कुत्र दृष्टमित्यतः स्वभावपदगतस्वशब्दस्य तद्दृष्टमिति भावेनाह **स्वभाव इति** ।। स्वभावपदगतस्य स्वेति शब्दस्यान्यत्वमात्रापादने नानिष्टम् । अर्थद्वयाङ्गीकारात् । अन्यैवेत्यापादनमयुक्तम् । स्वशब्दस्य स्वरूपवाचित्वस्यापि भावेन 'मे' इतिवदितराव्यावर्तकत्वादिति भावः । ननु स्वभावस्य स्वरूपत्वमयुक्तम् । स्वस्य भावो हि स्वभाव इत्यत आह **स्वभाव इति** ।। रूढिबलेनेदमेव निर्वचनं, नान्यदिति भावः । स्वभावपदगतस्वशब्दस्य स्वरूपवाचित्वे तेनैव पूर्तेः भावशब्दो व्यर्थ इत्यत आह **भावेति** ।। यदि स्वशब्दमात्रं प्रयुज्यते तदा स्वशब्दस्य स्वीयेऽपि प्रयोगात् तदाशङ्का स्यात् । तां निवारयितुं भावशब्दः प्रयुज्यते । भावशब्दयुक्तस्वशब्दस्य स्वरूप एव प्रतीतिजनकत्वादिति भावः ।

**गीतातात्पर्यनिर्णयः**

**स्वस्वभाव इति तु स्वस्वरूपमितिवदुपचारत्वाशङ्कां निवर्तयति ।**

*न्या०दी०*— नन्वत्र प्रकृतिपदं स्वभाववाचकं चेत् तर्हि स्वां प्रकृतिमित्युक्ते स्वस्वभावमित्युक्तं भवति । स्वशब्दद्वयं च स्वरूपवाचीत्युक्तम् । तथाच पुनरुक्तिरित्यत आह **स्वेति** ।। यथा अस्वरूपेऽप्युपचारेण स्वरूपपदप्रवृत्तेस्तत्परिहाराय स्वस्वरूपमित्युच्यते । न च तत्र स्वरूपवाचिस्वशब्दद्वयसद्भावेऽपि पुनरुक्तिदोषः । एवमस्वभावेऽप्युपचारेण स्वभावपदप्रवृत्तेस्तदाशङ्कानिवारणाय स्वस्वभाव इत्युच्यते । अतो न पुनरुक्तिदोष इत्यर्थः ।

**गीतातात्पर्यनिर्णयः**

**"स्रष्टृत्वादिस्वभावत्वात् स्वेच्छया विष्णुरव्ययः ।**
**सृष्ट्यादिकं करोत्यद्धा स्वयं च बहुधा भवेत् ॥"**

**—इति नारायणश्रुतिः ॥ ६-८ ॥**

*प्रका०*— स्वभावमवलम्ब्यैव विष्णुरित्येतत् श्रुत्यन्तरेण दृढयति **स्रष्टृत्वादीति** ।

*न्या०दी०*— अजोऽपीति श्लोकत्रयं श्रुत्यैव व्याचष्टे **स्रष्टृत्वादीति** ।।

**गीता**

## जन्म कर्म च मे दिव्यमेवं यो वेत्ति तत्त्वतः ।
## त्यक्त्वा देहं पुनर्जन्म नैति मामेति सोऽर्जुन ॥ ९ ॥

***वि०वि०***— एवं स्वस्य स्वभावादेवावतारादिव्यापारमुक्त्वा तज्ज्ञानफलमाह **जन्मेति** । एवम् उक्तप्रकारेण । दिव्यम् अलौकिकम् । मे जन्म कर्म च । तत्वतो वेत्ति यः स देहं त्यक्त्वा पुनर्जन्म नैति न प्राप्नोति । किन्तु मामेति । एकदेशज्ञानेन मुक्तिवचनं योग्यगुणज्ञानोपलक्षणार्थम् ।

'येषां गुणानां ज्ञानेन मुक्तिरुक्ता पृथक् पृथक् ।
वेदेषु चेतिहासेषु सा तु तेषां समुच्चयात् ॥

***सा०सं०***— एवं स्वभावादेवावतारादिस्वव्यापारमुक्त्वा तज्ज्ञानफलमाह **जन्मेति** । **एवम्** उक्तप्रकारेण । **दिव्यम्** अलौकिकम् । **मे जन्म कर्म च तत्त्वतो** यथावत्तया । **यो वेत्ति** स ज्ञानी । **देहं त्यक्त्वा पुनर्जन्म** । **नैति** न प्राप्नोति । किन्तु **मामेति** । अत्र जन्मकर्मरूपैकदेशज्ञानेन मुक्त्युक्तिर्योग्यगुणज्ञानोपलक्षणार्था ज्ञेया ॥

***अ०प्र०***— एवंविधानामीश्वरजन्मकर्मणां ज्ञाने फलमाह **जन्मकर्मेति** ।

हे अर्जुन ![१], यः[२], एवं[३], मे[४], दिव्यं[५], 'जन्म[६], कर्म च[७], तत्त्वतः[८], वेत्ति[९], सः[१०], देहं[११], त्यक्त्वा[१२], पुनर्जन्म[१३], न[१४], इति[१५], किन्तु मामेवं[१६], एति इत्यन्वयः ।

हे अर्जुन ![१], यः = पुरुषः[२], एवं = उक्तरीत्या[३], मे = मम[४], दिव्यं = अलौकिकं व्यवहारातीतं[५], जन्म = स्वेच्छाकृतावतारं[६], कर्म च = अक्रियत्वेन परित्राणादिपालनरूपं कर्म च[७], तत्त्वतः = परानुग्रहार्थमेवेति निश्चयेन[८], वेत्ति = जानाति[९], सः = पुरुषः[१०], देहं = देहाभिमानं लिङ्गदेहं[११], त्यक्त्वा[१२], पुनर्जन्म नैति[१५], किन्तु मामेव[१६], एति = प्राप्नोति । अत्र एकदेशज्ञानेन मुक्तिकथनं तु स्वस्वयोग्यगुणज्ञानोपलक्षणार्थः ॥ ९ ॥

**भाष्यम्**

पृथङ्मुक्त्युक्तिः सर्वज्ञाननियमदर्शनार्थम्, न तु तावन्मात्रेण मुक्तिरित्युक्तम् ।

"वेदाद्युक्तं तु सर्वं यो ज्ञात्वोपास्ते सदा हि माम् ।
तस्यैव दर्शनपथं यामि नान्यस्य कस्यचित् ॥"

—इत्युक्तेश्च महाकौर्मे ।

**अत्रोक्तस्यैतज्ज्ञात्वैव जन्म नैतीति गतिः । इतरवाक्यानां नान्या गतिः । 'नान्यस्य कस्यचित्' इति विशेषणात् । 'तत्त्वतः' इति विशेषणाच्च सर्वज्ञानमापतति । यत्रैवं भवति तत्र तत्त्वत इति विशेषणेन न विरोधः ।**

**उक्तं च—**

**"एकं च तत्त्वतो ज्ञातुं विना सर्वज्ञतां नरः ।**
**न समर्थो महेन्द्रोऽपि तस्मात्सर्वत्र जिज्ञसेत् ॥"**

**—इति स्कान्दे ॥ ९ ॥**

*प०टी०*— यद्यपि 'जन्म कर्म' इतीश्वरे जन्मादिज्ञानमात्रेण मुक्तिः श्रूयते । तथाऽपि सा न तावन्मात्रेणेत्याह **पृथगिति** । एतावन्मात्रेणापि मोक्षः किं न स्यात् ? इत्यत आह **न त्विति** । इतश्च नैकदेशज्ञानान्मोक्ष इत्याह **वेदेति** । ननु वचनत्वाविशेषात् कुतोऽस्य जन्म कर्म चेत्यस्य बाधः ? इत्यत आह **अत्रेति** । कौर्मवाक्यस्यापि केषाञ्चिदेवमिति गतिः किं न स्यात् ? इत्यत आह **नान्यस्येति** । इतश्च सर्वज्ञानेनैव मोक्ष इत्याह **तत्त्वत इति** । एतमेव न्यायमन्यत्रातिदिशति **यत्रेति** । 'तत्त्वतः' इति विशेषणे कथं सर्वज्ञानापातः ? इत्यत आह **उक्तं चेति** ॥

*न०टी०*— ननूक्तलक्षणजन्मकर्मज्ञानमात्रेण मुक्तिश्चेत् 'नान्यः पन्था अयनाय विद्यते' इत्यादिश्रुतिविरोध इत्यत आह **पृथगिति** । एतदपि ज्ञात्वैव मुक्तिरित्येवार्थो, नत्वेतदेव ज्ञात्वेत्युक्तं गताध्याये । इतोऽपि नैकदेशज्ञानमात्रेण मुक्तिः । किन्तु सर्ववेदाद्युक्तपरमात्मस्वरूपं ज्ञात्वा, उपास्य, दृष्ट्वैवेति भावेन प्रमाणमाह **वेदादिति** । ननूभयोरपि प्रामाण्याविशेषात्, 'जन्म कर्म च' इत्यस्यानुसारेणान्येषां गतिः किं न स्यात् ? इत्यत आह **अत्रोक्तस्येति** । इतोऽपि नैकदेशज्ञानमात्रेण मुच्यत इत्याह **तत्त्वत इति** । यत्रयत्रैकदेशज्ञाने मुक्तिरुच्यते तत्रतत्र तत्त्वत इति विशेषणे सति न विरोध इत्याह **यत्रैवमिति** । तत्त्वत इति विशेषणे सर्वज्ञानं कथमापतति ? इत्यत आह **उक्तं चेति** ॥

*प्र०दी०*— जन्म कर्म चेति भगवज्जन्मादिज्ञानमात्रेण मुक्तिरुच्यत इति प्रतीतिनिरासायाह— **पृथगिति** । एकदेशज्ञानेनेत्यर्थः । दर्शनार्थमुपलक्षणार्थम् । यथाप्रतीतार्थः किं न स्यादित्यत आह— **न त्विति** । उक्तं तृतीये । प्रमाणान्तरं चाह— **वेदादीति** । वाक्यत्वाविशेषादेतस्य गीताबाधकत्वं कुत इत्यतः सावकाशत्वनिरवकाशत्वाभ्यामित्याह— **अत्रेति** । अयोगव्यवच्छेदमात्रपरत्वमित्यर्थः । एतच्च पूर्वोक्तादर्थान्तरमिति ज्ञेयम् । इतरवाक्यान्यधिकारिविशेषापेक्षया साव-

काशानीति कुतो नान्या गतिरित्यत आह— **नेति** । विशेषणात्पक्षान्तरव्यवच्छेदात् । इतोऽप्यत्र सर्वज्ञानमङ्गीकार्यमित्याह— **तत्त्वत इति** । आपततीत्यनेनाऽर्थापत्तिमभिप्रैति । एतमेव न्यायमन्यत्राप्यतिदिशति— **यत्रेति** । एवं भवति सर्वज्ञाने प्रमितेऽप्येकदेशज्ञानोक्तिर्भवति । तत्त्वतो ज्ञानं कुतस्सार्वज्ञमाक्षिपतीत्यत आह— **उक्तं चेति** । जिज्ञसेत् जिज्ञासेत । अन्यत्रापि— "एको भावः तत्त्वतो येन दृष्टः सर्वे भावाः तत्वतस्तेन दृष्टाः" इति । सर्वत्र सार्वज्ञं यथाशक्ति विवक्षितमिति ध्येयम् ॥

***भा०दी०*— तृतीय इति** । तृतीयाध्यायान्त्यभागेन तत्र तत्रोक्तैकदेशज्ञानमात्रेण भवति । मुक्तिरित्यादिनेति भावः । **प्रागुक्तादिति** । उपलक्षणार्थमित्युक्तादित्यर्थः । 'ज्ञाश्रुस्मृदृशां सन' इत्यात्मनेपदोक्तेर्जिज्ञसेदिति छान्दस प्रयोग इति भावेनाह **जिज्ञसेत् जिज्ञासेतेति** । **अन्यत्रापीति** । एकस्य तत्त्वतो ज्ञाने सर्वज्ञानं भवति इत्येतत् युक्तमित्यर्थः ॥

***भा०र०*— प्रतीतीति** । सार्वत्रिकगुणोपसंहारस्य स्थितत्वात् सा निरसनीयेति भावः । पृथक्छब्दस्य नात्र 'वैलक्षण्यम्' अर्थः । मुक्तेस्तदधिकारिणामप्यत्र वैलक्षण्यानभिधानादित्यत आह **एतदेशेति** । पूर्वाध्याये तत्र तत्रैकदेशज्ञानमात्रेण भवति मुक्तिरिति भाषणात् पृथक्शब्द एकदेशार्थो व्याख्यातव्य इति भावः । एकदेशज्ञानेन मुक्त्युक्तेः सर्वज्ञाननियमदर्शनार्थत्वायोगादाह **दर्शनार्थमुपलक्षणार्थमिति** । एकदेशग्रहणम् इतरगुणोपलक्षणार्थमित्यर्थः । **तृतीये** "अपौरुषेयवेदेषु विष्णुवेदेषु चैव हि । सर्वत्र ये गुणाः प्रोक्ताः" (गी.भा.३.४२,४३) इति तृतीयाध्यायान्ते । 'दर्शनपथम्' इत्यत्र भाष्ये "ऋक्पूरब्धू:पथामानक्षे" इति समासान्तप्रत्यय इत्यकारान्तत्वं युक्तम् । **सावकाशत्वनिरवकाशत्वाभ्यामिति** । निरवकाशेन सावकाशबाधः "यावत्या वाचा कामयीत तावत्या वाचा दीक्षणीयायामनुब्रूयाद्" इत्यत्र पूर्वतन्त्रे (९.१.२ अधि.) व्यवस्थापित इति भावः । "ज्ञात्वैव जन्म नैति" इत्युक्तेऽपि जन्मादिज्ञानमेव मोक्षसाधनमित्युक्तं स्यात् । तच्चायुक्तम् । गुणपूर्णत्वज्ञानापादितप्रसादस्यैव तत्साधनत्वस्थितेरित्यत आह **अयोगेति** । एवकारो ह्ययोगव्यवच्छेदे, अन्ययोगव्यवच्छेदे, अत्यन्तायोगव्यवच्छेदे च वर्तते । अयं च भाष्यस्थैवकारः, मोक्षे जनयितव्ये जन्मादिज्ञानायोगो नास्तीत्ययोगव्यवच्छेदार्थः, न त्वन्ययोगव्यवच्छेदार्थ इत्यर्थः ।

ननु मोक्षे जन्मादिज्ञानायोगव्यवच्छेदे कृतेऽपि तन्नियम एवोक्तः स्यात् । तथा च "नियमदर्शनार्थम्" इति ग्रन्थेन पुनरुक्तिरित्यत आह **एतच्चेति** । पूर्वत्रोपलक्षणतया सर्वज्ञाननियम उक्तः । अत्र तु जन्मादिज्ञानं मोक्षहेतुरेवेति नियम उच्यत इत्यर्थभेदो ज्ञातव्य इति न पुनरुक्तिरिति भावः । **इतरवाक्यानि** "वेदाद्युक्तं तु सर्वं यः" इत्यादीनि । **अधिकारिविशेषो** ब्रह्मादिः ।

नीलोत्पलमित्यत्र नैल्यस्येव "नान्यस्य कस्यचिद्" इत्यस्य व्यावर्तकत्वाभावाद् विवक्षितार्थमाह **पक्षान्तरेति** । अधिकारिविशेषविषयत्वेन सावकाशत्वसम्पादनं पक्षान्तरम् । अत्र "जन्म कर्म च" इत्यत्र । **अर्थापत्तिं** 'तत्त्वतः' इति विशेषणान्यथाऽनुपपत्त्या तदुपपादकसर्वज्ञानबुद्धिम् । **एतम्** 'तत्त्वतः' इति विशेषणे सर्वज्ञानमङ्गीकार्यमिति न्यायम् । 'तत्त्वतः' इति विशेषणमात्रेण कुतः सर्वज्ञानापातः ? इत्यर्थः । 'सर्वज्ञानम्' इति भाष्यस्य एकस्मिन् वस्तुनि तत्तद्गुणकर्मेतरवैलक्षण्यवत्तया ज्ञातव्ये तत्तद्गुणकर्मादिज्ञानं वैलक्षण्यबोधस्य विचित्रप्रतियोगिज्ञानप्रयोज्यत्वेन तथा तथा तत्तज्ज्ञानं चाभ्युपगन्तव्यमिति सार्वज्ञ्यमित्यर्थ **इत्याहुः** ।

ननु "ज्ञा-श्रु-स्मृ-दृशां सनः" इति सन्नन्तधातोरात्मनेपदमनुष्ठितम् । तत्कथमत्र परस्मैपदम् ? इत्याशङ्क्य छन्दस्त्वादुपपद्यत इति भावेनाह **जिज्ञसेत् जिज्ञासेतेति** । धातोराकारस्य ह्रस्वता च छन्दस्त्वेनैव निर्वोढव्येति भावः । भाष्ये "सार्वज्ञाभावे तत्त्वतो ज्ञानाभावः" इति व्यतिरेकप्रमाणमुक्तम् । "तत्त्वज्ञाने सति सार्वज्ञ्यम्" इत्यन्वयेऽपि स्वयं प्रमाणं दर्शयति **अन्यत्रापीति** । **भावः** पदार्थः । नन्वेवं सार्वज्ञस्यावश्यकत्वे मनुष्याणामुपासनाऽभावप्रसङ्गः । तेषां सर्वगुणोपसंहारादावसमर्थत्वाद् इत्यत आह **सर्वत्रेति** । सर्वाधिकारिष्वित्यर्थः । **यथाशक्तीति** । मानुषेणापि स्वयोग्यं सर्वं सम्यगुपसंहृत्यैव ज्ञानमापाद्यमिति भावः ॥ ९ ॥

***गीताक्षरार्थस्तु***— एवं स्वभावादेवावतारादिस्वव्यापारमुक्त्वा तज्ज्ञाने फलमुच्यते **जन्मेति** । **एवम्** उक्तप्रकारेण **दिव्यं** लोकविलक्षणं मे जन्म प्रादुर्भावरूपं **कर्म** साधुपरित्राणादि । उपलक्षणमेतत् । स्वस्वयोग्यान् गुणान् । **यो वेत्ति स देहं** त्यक्त्वा **पुनर्जन्म नैति** पुनरुद्भवं न गच्छति, किन्तु **मामेति** । यद्वा जन्म कर्म च ज्ञात्वैव जन्म नैतीत्ययोगव्यवच्छेदपरत्वेन व्याख्येयमिति ॥ ९ ॥

**गीतातात्पर्यनिर्णयः**

**"येषां गुणानां ज्ञानेन मुक्तिरुक्ता पृथक् पृथक् ।**
**वेदेषु चेतिहासेषु सा तु तेषां समुच्चयात् ।**
**एवमेव शमादीनां नान्यथा तु कथञ्चन ॥"**

**इति ब्रह्मवैवर्तवचनात् "जन्म कर्म च" इत्यादिषु न तावन्मात्रेण मोक्षः ॥**

॥ ९ ॥

*प्रका०*— "जन्म कर्म च मे दिव्यम्" इत्यत्रैतदप्यवश्यं ज्ञातव्यम् । मुक्त्यर्थमित्युच्यते । न त्वेतावन्मात्रज्ञानेन मुक्तिरिति । भगवद्गुणान्तरज्ञानस्य मुक्तिसाधनत्ववचनानर्थक्यापातात् । यथा शमदमादीनां ज्ञानाङ्गानां समुच्चयेन भाव्यं न त्वेकेऽलमित्येतदाह **येषामिति** ॥

*न्या०दी०*— एवं स्वभावादेवावतारादिव्यापारमुक्त्वा तज्ज्ञानफलमुच्यते **जन्मेति** । तत्रेश्वरजन्मकर्मज्ञानमात्रेण मोक्षो भवतीत्यन्यथाप्रतीतिं निराचष्टे **येषामिति** ॥ समुच्चयादेव भवतीति ज्ञातव्यमिति शेषः । शमादीनां समुच्चयादेव ज्ञानं भवतीति ज्ञातव्यम् । पृथक्पृथग्ज्ञानसाधनत्वोक्तावपीत्यर्थः । उक्तो ग्राह्य इति शेषः ॥ ९ ॥

**गीता**

## वीतरागभयक्रोधा मन्मया मामुपाश्रिताः ।
## बहवो ज्ञानतपसा पूता मद्भावमागताः ॥ १० ॥

*वि०वि०*— जन्मकर्मादिज्ञानश्रद्धाया उत्पादनार्थं सन्ति च तथा मुक्ता इत्याह **वीतेति** । मन्मयाः मत्प्रचुराः । सर्वत्र मां विना किञ्चिदपश्यन्तः । मामुपाश्रिताः सन्तः स्वयोग्योपासनाविषयगुणविशिष्टभगवज्ज्ञानाख्येनैव तपसा पूताः । दग्धकर्माणः मयि भावं सायुज्यादिलक्षणां स्थितिमापुः ॥

*वा०ल०*— **मन्मयाः** मत्प्रधानाः । **मद्भावं** मयि भक्तिम् ॥

*सा०सं०*— एवं ज्ञात्वा मुक्ताः सन्ति किमित्यतः सन्तीत्याह **वीतरागेति** । तज्ज्ञानस्य मुक्तिहेतुत्वं कुत इत्यतो वाऽऽह **वीतेति** । अपगतरागभयक्रोधाः । **मन्मयाः** मत्प्रधानाः । अहमेव प्रधान इति जानन्त इति यावत् । यद्वा, **मन्मया** मत्प्रचुराः । मामेव सर्वभूतेषु सत्ताप्रतीत्यादिप्रदं जानन्त इति यावत् । **मामुपाश्रिताः** मदेकशरणाः । **बहवो** ज्ञानाख्यतपसा ज्ञानेन, तपसा चेति वा, **पूताः** दग्धकर्माणः । **मद्भावं** मयि सायुज्यलक्षणं भावं स्थितिम् । **आगताः** प्राप्ताः ॥

*अ०प्र०*— कथं जन्मकर्मज्ञानेन त्वत्प्राप्तिः स्यादित्यत आह **वीतरागेति** ।

वीतरागभयक्रोधाः[१], मन्मयाः[२], मामुपाश्रिताः[३], ज्ञानतपसा पूताः[४], बहवः[५], मद्भावं[६], आगताः[७] ।

वीतरागभयक्रोधाः = अहं शुद्धसत्त्वावतारैः धर्मपरिपालनं करोमीति मदीयं परमकारुणिकत्वं ज्ञात्वा वीताः विगताः रागभयक्रोधा येभ्यस्ते तथा[१], सर्ववस्तुषु मां विना किञ्चित्सत्तादिकं न

पश्यन्ति किन्तु मदधीनमेव तत्पश्यन्तीत्यर्थः एतादृशा मन्मया[२], मामुपाश्रिताः = यज्ञादिना मद्भजनादिभक्त्या मां एव उपाश्रिताः[३], ज्ञानतपसा पूताः = मत्प्रसादेन मदेकनिष्ठं यज्ज्ञानं तपश्च तत्परिपाकहेतुः स्वधर्मः तयोर्द्वन्द्वैकवद्भावः तेन ज्ञानतपसा पूताः शुद्धाः निरस्ताज्ञानतत्कार्यमलाः यद्वा ज्ञानेन च आलोचनेन च स्वयोग्योपासनया तज्जन्यस्वयोग्यगुणविशिष्टब्रह्मज्ञानेन च पूताः दग्धकर्माणः सन्तः[४], बहवः = न तु अधुनैव प्रवृत्तोऽयं भक्तिमार्गमित्यर्थः, देवाद्याः[५], मद्भावं[६], आगताः मत्सायुज्यप्राप्ताः, यद्वा मद्भावमपि भावं सायुज्यलक्षणस्थितिं, मे भाव इव भावः सारूप्यं वा मया सह भावं सामीप्यं वा, मे लोके भावं स्थितिं सालोक्यं वा यथायोग्यमद्भावं आगताः सन्ति ॥

**भाष्यम्**

**सन्ति च तथा मुक्ता इत्याह— वीतरागेति । मन्मयाः मत्प्रचुराः । सर्वत्र मां विना न किञ्चित् पश्यन्तीत्यर्थः ॥ १० ॥**

***प०टी०***— एतज्ज्ञानेन मुक्तजातस्य प्रत्यक्षसिद्धत्वेनात्र श्रद्धधस्वेत्यभिप्रायेणोत्तरश्लोकमवतारयति **सन्तीति** । 'मन्मय'पदमन्यथाप्रतीतिनिरासाय व्याचष्टे **मन्मया इति** । मन्मया इति कथं भगवत्प्राचुर्यं तेषाम् ? इत्यत आह **सर्वत्रेति** । सर्वत्र नियामकत्वेन हरिरेव स्थित इति जानन्तीत्यर्थः ॥

***न०टी०***—तत्त्वतो भगवज्जन्म कर्म च ज्ञात्वा बहवो मुक्ताः । अतोऽस्मिन्नादरः साधने कर्तव्य इति भावेनोत्तरं श्लोकमवतार्य व्याचष्टे **सन्ति चेति** । सर्वेषु पदार्थेषु स्थितं हरिं विनाऽन्यं न पश्यन्तीत्यर्थः ॥

***प्र०दी०***— किं च उत्तरश्लोकेऽधिकानुवादान्नात्रैतावन्मात्रं विवक्षितमिति भावेन तत्तात्पर्यमाह— **सन्ति चेति** । तथोक्तज्ञानेन । आह श्रद्धोत्पादनार्थमिति शेषः । मन्मया मदात्मका इति प्रतीतिनिरासार्थमाह— **मन्मया इति** । सर्वेषां भगवान् प्रचुरः । को विशेषो ज्ञानिनामित्यत आह— **सर्वत्रेति** । सर्वेषु पदार्थेषु । किञ्चित्सत्तादिकम् । मदायत्तमेव सर्वं पश्यन्तीत्यर्थः ॥

***भा०दी०***— **तथे**त्यनुवादः । **उक्तज्ञानेने**ति व्याख्या । स्वयोग्यसर्वज्ञानेनेत्यत आह **इत्यनुवादेन** । तत्र शेषमाह **आहेति** ॥

***भा०र०***— अधिकानुवादात् "मन्मया मामुपाश्रिताः" इति जन्मकर्मज्ञानमात्रापेक्षया अधिकस्य मोक्षसाधकत्वेनानुसङ्कीर्तनात् । **अत्र** "जन्म कर्म" (४.९) इति श्लोके । **एतावन्मात्रं** जन्म-

कर्मज्ञानमात्रम् । 'तथा' इत्यनूद्यार्थमाह **तथेति** । स्वयोग्यसर्वज्ञानेनेत्यर्थः । **मदात्मका इति** । मयट् तादात्म्यार्थे इति प्रत्येतुर्हृदयम् **प्रचुर इति** । प्रधानभूत इत्यर्थः । अनेन "मयट् प्राचुर्यार्थः" इत्युक्तं भवति । **सत्तादिकं** सत्ताप्रवृत्त्यादिकम् । पदार्थेषु मां विना सत्तादिकं न पश्यन्तीत्यस्य तात्पर्यमाह **मदायत्तमेवेति** ॥ १० ॥

*गीताक्षरार्थस्तु*— एवंविधज्ञानेन मोक्षोऽस्तीत्यत्र श्रद्धोत्पादनार्थमुच्यते **वीतरागेति** । **वीतः** विगतः **रागो** विषयाभिलाषः, **भयं** मरणादेः, **क्रोधश्च** येभ्यस्ते **तथोक्ताः** । **मन्मया** मत्प्रचुराः सर्वपदार्थेषु सत्तादिकं मदायत्तमेव जानन्त इति यावत् । **मामुपाश्रिताः** मदेकशरणाः । मद्भजन-परायणा इत्यर्थः । स्वयोग्योपासनाविषयगुणविशिष्टभगवज्**ज्ञानस्य तपसा पूताः** दग्धाशुभकर्माणः **बहवो** ज्ञानिनः **मद्भावं** मयि सत्तां सायुज्यलक्षणां स्थितिम् अष्टमे वक्ष्यमाणरीत्या मद्वद्भावं वा **आगताः** । 'गत्यर्थाकर्मक' इत्यादिना कर्तरि क्तः, प्राप्तवन्तः सन्तीति ॥ १० ॥

**गीतातात्पर्यनिर्णयः**

**"मयं प्रधानमुद्दिष्टं प्राधान्यं यैर्हरेर्मतम् ।**
**भगवन्मयास्ते विज्ञेयास्ते मुच्यन्ते न चापरे ॥" इति च ।**

**मयि भावो मद्भावः ॥ १० ॥**

*प्रका०*— 'वीतरागे'त्यत्र 'मन्मया', 'मद्भावम्' इत्येतत्पदद्वयं व्याचष्टे **मयमित्यादिना** ॥

*न्या०दी०*— एतज्ज्ञानत्वस्य मोक्षसाधनत्वं कुत इत्यत उच्यते **वीतेति** । तत्र 'मन्मयाः', 'मद्भावमागताः' इत्येतदन्यथाप्रतीतिनिरासाय स्मृत्यैव व्याचष्टे **मयमिति** ॥ यद्यपि भगवान् प्रधानो येषां ते भगवन्मया इति साक्षादर्थः तथापि सर्वेषां भगवान् प्रधानो भवति । ज्ञानिनां को विशेष इत्यतः "प्राधान्यं यैर्हरेर्मतम्" इत्युक्तम् । "मद्भावमागताः" इत्यस्यार्थः "ते मुच्यन्ते" इति । मद्भावपदं कथं मोक्षवाचकमित्यत आह **मयीति** ॥ **मयि भावः** सायुज्यादिः ॥

**गीता**

## ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहम् ।
## मम वर्त्मानुवर्तन्ते मनुष्याः पार्थ सर्वशः ॥ ११ ॥

*वि०वि०*— त्रैविद्यानामपि मोक्षसद्भावात् को विशेषः त्वामुपाश्रितानामित्यत आह **यथेति** । ये यथा मामुपासते तांस्तथैव तदनुसारिफलदानरूपेणाहं भजामि । अतो मम सेवानुसारेण

फलदत्वात् । सेवायाश्च वैषम्यान्न ज्ञानिनां त्रैविद्यानां च फलसाम्यमिति भावः । त्रैविद्यानामन्य-देवतायाजित्वात् कथमुच्यते मां प्रपद्यन्त इत्यत आह **ममेति** ॥

***वा०ल०***— 'तांस्तथैव भजाम्यहम्' इत्यत्र भजामि फलदानेनानुगृह्णामि ।

***सा०सं०***— ननु सामान्यतो विष्णुं सर्वोत्तमं ज्ञात्वा, अन्यदेवताः पितॄंश्च इष्ट्वाऽन्ते तत्कर्म विष्णौ समर्पयन्ति ये त्रैविद्याः, तेषामपि मोक्षश्चेत् को विशेषस्त्वामुपाश्रितानामित्यतो, न ज्ञानिनां त्रैविद्यानां च फलसाम्यम् । तत्तत्सेवानुसारेणैव मोक्षस्वर्गरूपभिन्नफलदानात्, सेवायाश्च वैषम्यादितो न वैषम्यादिदोष इति भावेनाह **ये यथेति** । **ये** ज्ञानिनः त्रैविद्या वा । **यथा** येन प्रकारेण मोक्षेच्छया मद्यजनप्रकारेण, स्वर्गादीच्छया अन्यदेवतायजनप्रकारेण । **मां प्रपद्यन्ते तांस्तथैव** तत्तद्भजनानुसारेण । **अहं भजामि** मोक्षस्वर्गफलदानेन सेवे । न गुणभावेनेत्यर्थः । फलतारतम्यहेतुरयम् । ज्ञानिभ्यः त्रैविद्यानां सेवायां विशेषः किंप्रकार इत्यत आह **ममेति** । हे **पार्थ ! सर्वशः** सर्वे ज्ञानिनः त्रैविद्याश्च । **मनुष्या मम वर्त्मानुवर्तन्ते** । मम मत्कर्मकर्तृत्वात् तद्यागीयहविरादि-भोक्तृत्वात् मम वर्त्मानुवर्तिन एव सर्व इत्यर्थः ॥

***अ०प्र०***— ननु तर्हि त्वय्यपि किं वैषम्यमस्ति यस्मादेवं त्वदेकशरणानामिवात्मवत् भावं ददामि नान्येषां सकामानामित्यत आह **ये यथेति** ।

हे पार्थ ![१], यथा[२], मां[३], प्रपद्यन्ते[४], अहं[५], तथैव[६], तान्[७], भजामि[८], सर्वशः[९], मनुष्याः[१०], मम वर्त्म[११], अनुवर्तन्ते[१२] इत्यन्वयः ।

हे पार्थ ![१], ये जनाः यथा = येन प्रकारेण सकामतया निष्कामतया वा[२], मां[३], प्रपद्यन्ते = भजन्ति[४], अहं[५], तथैव = सेवानुसारतदपेक्षितफलदानेन[६], तान् = सेवमानान्[७], भजामि = अनु-गृह्णामि निष्कामतया सेवमानानां ज्ञानिनां मोक्षं ददामि; स्वर्गादिकामनया भजमानानां कामितं स्वर्गादिकं ददामि एवं सेवायाः वैषम्यात् सेवानुसारेण फलदातृत्वान्न मम वैषम्यमिति भावः, न तु सकामाः मां विहाय इन्द्रादीनेव भजन्ति तानहमुपेक्ष्यमिति मन्तव्यम्, यतः[८], सर्वशः = सर्वप्रकारैः[९], मनुष्याः इन्द्रादिसेवका अपि[१०], मम वर्त्म = मम मार्गं मदीयभजनमार्गं[११], अनुवर्न्तते = कुर्वन्ति[१२], यद्वा सर्वशः मनुष्याः सर्वे ज्ञानिनः त्रैविद्याश्च मम वर्त्म = मम मार्गमेव अनुवर्तन्ते अनुसरन्ति ॥

**भाष्यम्**

**न च मद्भजनमात्रेण मुक्तिर्भवत्यन्यदेवतादिरूपेण । तथापि सर्वेषां आनु-रूप्येण फलं ददामीत्याह— ये यथेति । भजामि = सेवयामि फलदानेन, न तु**

**गुणभावेन । कथमयं विशेष इत्यत आह— मम वर्त्मेति । अन्यदेवता यजन्तोऽपि मम वर्त्मैवानुवर्तन्ते । सर्वकर्मकर्तृत्वाद्भोक्तृत्वाच्च मम । 'येऽप्यन्यदेवताभक्ताः' इति वक्ष्यति । "यो देवानां नामधा एक एव" इति हि श्रुतिः । भगवानेव च तत्र अभिधीयते । "अजस्य नाभावध्येकमर्पितं" इत्यादि लिङ्गात् ॥ ११ ॥**

***प०टी०***— ननु यदि त्वद्भजनेन मुक्तिः, तर्हि देवतान्तरमिष्ट्वा त्वदर्पणेनापि भवति फलान्तरमित्याकाङ्क्षोत्तरत्वेनोत्तरं श्लोकमवतारयति **न चेति** । 'भजामि' इति पदमन्यथाप्रतीतिनिरासाय व्याचष्टे **सेवयामीति** । नन्वन्यदेवतायाजिभ्यो भवान् फलदातेत्ययं विशेषः कुतः ? इत्याशङ्क्य, उत्तरत्वेन श्लोकमवतार्य व्याचष्टे **कथमिति** । यतोऽहमेव कर्मकर्ता, अतो यजमानहस्तेन मां प्रत्येव कारयामि, तस्य चाहं भोक्ता, अतो मम वर्त्मैवानुवर्तन्ते, अतस्तेभ्यः फलदातेत्यर्थः । न चैतावता पलप्राप्तिरवैष्णवानां शङ्क्या । भगवानेव मया कारयति, स एव भोक्तेति भावाभावादिति । ननु वैष्णवयागभोक्तैव हरिः, अन्यदैवत्ययागभोक्ताऽपीति कुतो भगवदभिप्रायः ? इत्यत आह **येऽपि इति** । नन्विन्द्रादिनामभिः प्रदत्ताहुतिभोक्ता हरिश्चेन्मन्त्राप्रामाण्यमित्यत आह **य इति** । एतच्छ्रुत्युक्तोऽपि विष्णुः कुत इत्यत आह **भगवानिति** ॥

***न०टी०***—येषामेतादृषज्ञानं नास्ति, किन्तु सामान्यतः सर्वदेवोत्तमो विष्णुरिति ज्ञात्वा, अन्यदेवानपीष्ट्वा, अन्ते विष्णौ समर्पयन्ति तेषां का गतिः ? इत्याकाङ्क्षोत्तरत्वेन उत्तरश्लोकार्धमवतार्य व्याचष्टे **न चेति** । एवंविधाधिकारिभिरन्यदेवताद्युद्दिष्टमपि हविर्भगवान् भुङ्क्त इत्येतदेवान्यदेवतादिरूपेण तद्भजनम् । न च सेवकस्य गुणभावदर्शनादस्यापि स स्यादित्याशङ्कनीयम् । सर्वप्रमाणविरोधात् इति भावेनाह **सेवयामीति** । अन्यदेवतायाजिनामपि भगवानेव फलद इत्ययं विशेषः कथम् ? इत्याकाङ्क्षोत्तरत्वेन उत्तरश्लोकमवतार्य व्याचष्टे **कथमिति** । अन्यदेवता यजन्तोऽपि हि द्विविधा भगवन्मार्गमनुवर्तन्ते । बिम्बभूतस्य भगवतः सर्वकर्मकर्तृत्वात् तदनुकुर्वन्तः तत्प्रतिबिम्बरूपिणोऽन्यदेवतायाजिनः तद्वर्त्मैवानुवर्तन्ते, तेषामेव कर्मणां सिद्धिमुत्पत्तिं काङ्क्षन्तः । तथा भगवत एव सर्वदेवताहविर्भोक्तृत्वादन्यदेवतोद्देशेन हविस्त्यजन्तोऽपि तद्वर्त्मैवानुवर्तन्त इति भावः । ननु देवतान्तरोद्दिष्टहविषां भगवानेव भोक्तेत्येतत् कथं भगवत्सम्मतं स्यात् ? इत्यत आह **येऽपीति** । नन्विन्द्रादिनामभिरुद्दिश्य त्यक्तानां भगवत्प्रोक्तौ कथं मन्त्रप्रामाण्यम् ? इत्यत आह **यो देवानामिति** । स च सर्वदेवतानामवाच्यः कः ? इत्याकाङ्क्षायां लिङ्गबलात् पद्मनाभ एवेत्याह **भगवानिति** ॥

*प्र०दी०*— 'ये यथा' इति वाक्यं न प्रकृतेन साक्षात्सङ्गतम् । अतस्तत्सङ्गमयितुं मध्ये शङ्कान्तरं निराकरोति— **न चेति** । मामुपाश्रिता मद्भावमागता इत्युक्त्या अन्यदेवतादिरूपेण मद्भजनमात्रेण त्रैविद्यानामपि मुक्तिर्भवतीति नाऽऽशङ्कनीयमित्यर्थः । विष्णुं सामान्यतः सर्वोत्तमं ज्ञात्वाऽन्यदेवताः पितॄंश्चेष्ट्वाऽन्ते विष्णौ समर्पणमन्यदेवतादिरूपेण भगवद्भजनम् । उपपत्तिं तूत्तरत्र वक्ष्यामीति भगवतोऽभिप्रायः । तत्किं त्रैविद्यानां त्वद्भजनं निरर्थकमेवेत्यत आह— **तथाऽपीति** । यद्यपि न मुक्तिं ददामि । तथाऽपि तदभिप्रेतं स्वर्गादिकं ददामीति शेषः । एवं तर्हि ज्ञानिभ्यो मुक्तिं त्रैविद्येभ्योऽल्पफलं ददद्विषमो भगवान् स्यादित्याशङ्कानिरासार्थत्वेनोत्तरवाक्यं सङ्गमयन्नाह— **सर्वेषामिति** । आनुरूप्येण सेवानुसारेण । सर्वेषां ज्ञानिनां त्रैविद्यानां चेति चतुर्थ्यर्थे षष्ठी । तथैव भजामीत्येतदन्यथाप्रतीतिनिरासाय व्याचष्टे— **सेवयामीति** । 'बहुलमेतन्निदर्शनं' इति वचनात्स्वार्थे णिच् । 'मम वर्त्म' इत्यस्य सङ्गत्यप्रतीतेस्तामाह— **कथमिति** । यः फलतारतम्ये हेतुरयं ज्ञानिभ्यस्त्रैविद्यानां सेवायां विशेषः कथम् । किं प्रकार इत्यर्थः । कथमनेनैतच्छङ्कापरिहार इत्यतो व्याचष्टे— **अन्येति** । न केवलं ज्ञानिनः । किन्त्वन्यदेवता यजन्तोऽपि । त्रैविद्या इति यावत् । किं तत्सर्वेषां त्वद्वर्त्मानुवर्तनमित्यत आह— **सर्वेति** । भोक्तृत्वाद्धविरादीनाम् । एतद्द्वयमेव भगवद्वर्त्मानुवर्तनम् । तथा व्यवहारे निमित्तत्वात्पञ्चमी । इदमुक्तं भवति । अहमेव सर्वयज्ञानां भोक्ता च प्रेरकश्च । तदेतज्ज्ञात्वा भागवता निष्कामा मामेव यजन्ते । त्रैविद्यास्त्वेतत्तत्वतोऽजानानाः कर्मणां सिद्धिं काङ्क्षन्तोऽन्यदेवता यजन्ते । एवं सेवाविशेषाद्युक्तं फलतारतम्यमिति । कुत इदं भगवतोऽभिप्रेतमित्यत आह— **येऽपीति** । अनेन श्लोकद्वयमुपात्तम् । तत्र च स्पष्टमेषोऽर्थः प्रतीयते । नन्विन्द्रादिनामवद्भिर्मन्त्रैर्दत्तं हविरादिकं कथं भगवान् भुङ्क्ते । भगवतस्सर्वनामवत्त्वेन मन्त्राणां तत्परत्वादिति भावेनाह— **य इति** । ननु विश्वकर्मा एवमुच्यत इत्यत आह— **भगवानेवेति** । तत्र चेति सम्बन्धः । अनेन भगवतः सर्वयज्ञादिभोक्तृत्वे बाधकं परिहृतम् ॥

*भा०दी०*— **उपपत्तिं तूत्तरत्र वक्ष्यामीति** । त्रैविद्यानां मुक्तिर्नेत्यर्थे 'त्रैविद्या मां सोमपा' इत्यादौ 'येऽप्यन्यदेवता भक्ता' इत्यादौ च नवमे सम्यक् भगवज्ज्ञानाभावस्वर्गादिप्रार्थनाविधिपूर्वकं यजनाद्युपपत्तिं वक्ष्यामीत्यर्थः । चातुर्वर्ण्यमित्यत्र टीकोक्तदिशा वेति ज्ञेयम् । **चतुर्थ्यर्थे षष्ठीति** । ददातीति दानयोगे सम्प्रदानत्वप्राप्त्या सर्वेभ्य इति भाव्यमित्यतो व्यत्ययेन तदर्थ एव षष्ठीत्यर्थः । सेवे इति वक्तव्ये सेवयामीति कथं प्रयोग इत्यत आह **बहुलमिति** । 'सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्व च वर्मवर्णचूर्ण चुरादिभ्यो णिजि'ति स्वार्थिकणिज्विधायकसूत्रस्य चुरादिधातुगणपाठेन बहुलमेतन्निदर्शनं एतत् । चुरादीत्यत्रादिपदोक्तधातूनां प्रदर्शनं बहुलं ध्येयमन्येऽपि धातव

प्रयोगवशात् ध्येया इत्युक्तवचनादित्यर्थः । तथा च 'णिचश्च' इति सूत्रेण णिजन्तस्य कर्त्रभिप्राय एव क्रियाफले आत्मनेपदविधानात् परस्मैपदं च साध्विति भावः । ...................... त्मानु-वर्तनमिति प्रश्ने सर्वकर्म-कर्तृत्वमित्यादि प्रथमान्तमेव वाच्यम् । न पञ्चम्यन्तमित्यतः सत्यमिति भावेनाह............... कथमित्यत्र तथेति मम वर्त्मज्ञा एत इति व्यवहारे मत्स्वामिकयज्ञकर्तृत्व-मद्भोज्यहविराद्युपेतयज्ञकर्तृत्वयोर्निमितिस........................क्षन्त इत्येतदर्थमाह **त्रैविद्या इति** । **अनेनेति** । कर्मेत्यादिना इति वक्ष्यतीति प्रतीकग्रहणेनेति वार्थः । 'अहं हि सर्वयज्ञार्थः ........... ......न्यदेवते'ति च श्लोकद्वयं नवमाध्यायस्थमुपात्तमित्यर्थः । इति सम्बन्ध इति चशब्दस्येति योज्यम् । **अनेनेति** । श्रुत्युदाहरणा...नन्विन्द्रादिनामवद्भिरित्यादिना शङ्कितं बाधकं परिहृत-मित्यर्थः ॥

*भा०र०*— **प्रकृतेन** उक्तज्ञानेन मोक्षोऽस्तीति पूर्वश्लोकप्रकृतार्थेन । शङ्काबीजमाह **मामुपा-श्रिता इति** । **त्रैविद्यानामिति** । तिस्रो विद्या ऋग्यजुस्सामलक्षणाः येषां ते त्रिविद्याः त एव त्रैविद्याः । प्रज्ञादित्वात्स्वार्थेऽण् । यद्वा त्रिविधा विद्यास्त्रिविद्याः । ता अधीयते विदन्ति वेति "तदधीते तद्वेद" इत्यणप्रत्यये त्रैविद्याः, तेषां वेदत्रयापातार्थविदामित्यर्थः । भगवद्भजनस्य कथ-मन्यदेवताभजनरूपत्वम् ? इति शङ्कां भाष्यभावोक्तिव्याजेनापनुदन् ऋगादिवेदवेदिनां कथं न मुक्तिः ? इति चोद्यं च त्रैविद्यस्वरूपविवरणेन परिहरति **विष्णुमिति** । देवपित्रादिषु स्थित्वा यज्ञ-भोक्ता सर्वकर्मकर्ता च विष्णुरेवेत्यनुसन्धानव्यावृत्तये 'सामान्यतः' इत्युक्तम् । **नाशङ्कनीयमिति** । साध्यसाधने को हेतुः ? इत्यत आह **उपपत्तिमिति** । त्रैविद्यानामन्यदेवतायाजित्वाद्, अतिशयित-भक्तिज्ञानाभावात्, कामनावत्त्वात्, सर्वदा मत्स्मरणमदुद्देशादियोगाभावाद्, अविधिपूर्वकं यष्टृत्वाच्चेति उपपत्तिं नवमे "त्रैविद्या मां सोमपा" (९.२०) इत्यादिना वक्ष्यामीति **भगवतो** गीताचार्यस्याभि-प्राय इत्यर्थः । यद्वा यस्माद् अहमेव चातुर्वर्ण्यस्य कर्ता, त्रैविद्याश्च तदन्तर्भूताः, तस्मात् स्वपितरं मां परित्यज्यान्यदेवता यजन्तः कथं महाफलभाजो भवेयुरित्युपपत्तिम् **उत्तरत्र** "चातुर्वर्ण्यं मया" (४.१३) इति श्लोके वक्ष्यामीत्यर्थः ।

**केचित्तु उत्तरत्र** "ये यथा माम्" (४.११) इत्यत्र **उपपत्तिं** सेवावैलक्षण्यरूपामित्यर्थ इत्याहुः । मैवम् । "ये यथा" इति श्लोकावतार एव मध्ये भाष्यकारेण शङ्कनाद् भाष्यकारस्यैवेयं शङ्का, न गीताकारस्येति तु चोद्यमात्रम् । "उपपत्तिं वक्ष्यामि" इति टीकायामाशङ्कायाः कृष्णाभि-प्रेतत्वविभावनादिति **अपरे** । **स्वर्गादिकमिति** । तेन "त्वद्भजनं निरर्थकमेव किम् ? इति चोद्यं समाहितम् । आनुरूप्यं सप्रतियोगिकमित्यतस्तद्दर्शयन् तदर्थमाह **सेवाऽनुसारेणेति** । 'सर्वेषाम्'

इत्यनुवादः । 'ज्ञानिनाम्' इति व्याख्या । 'ददामि' इति दानक्रियायोगात् "कर्मणा यमभिप्रैति स सम्प्रदानम्" इति सम्प्रदानत्वे, सम्प्रदाने चतुर्थीविभक्तौ 'सर्वेभ्यः' इति स्यादित्यत आह **चतुर्थ्यर्थे षष्ठीति** । "चतुर्थ्यर्थे बहुलं छन्दसि" इति सूत्रादिति भावः । **अन्यथाप्रतीतीति** । "राजानं भृत्य इव तानहं सेवे" इत्यन्यथाप्रतीतीत्यर्थः ।

ननु 'सेवयामि' इत्यस्य हेतुमण्णिजन्तत्वेन 'भजामि' इत्येतदर्थत्वानुपपत्तिः । स्वार्थे णिजन्तत्वे न शास्त्रमित्यत आह **बहुलमिति** । "सत्याप-पाश-रूप-वीणा-तूल-श्लोक-सेना-लोम-त्वच-वर्ण-चूर्ण-चुरादिभ्यो णिच्" इति स्वार्थे णिज्विधायकसूत्रे चुरादिधातुगणपाठे बहुलमेतन्निदर्शनम् । एतत् चुरादीत्यत्रादिपदोक्तधातूनां प्रदर्शनं बहुलं ज्ञेयम् । एवमन्येऽपि धातवः प्रयोगवशात्स्वार्थ-णिजन्ता वेदितव्या इति वचनाद् अत्र स्वार्थणिचि 'णिचश्च' इति कर्त्रभिप्राय एव क्रियाफले आत्मनेपदविधानाद् अत्र सेवाफलस्य स्वात्मगामित्वाद् 'भजामि' इत्यस्य 'सेवयामि' इति परस्मै-पदिना युक्तं व्याख्यानमिति भावः । यद्वा आधुनिकनवगणीपठितेभ्योऽपि क्वचित्स्वार्थे णिच् "रामो राज्यमची-करद्" इति । तथाऽनन्तधातुदर्शनं तु बहुलमित्यर्थ इति बहुलमेतदित्यन्तगणसूत्रं व्याख्याय "श्वेताश्व-अश्वतर-गालोडित-आह्वरकाणाम् अश्व-तर-इत-कलोपश्च" इत्यत्र "णिङ् अङ्गात् निरसने" इत्यतो णिङ्" इति नानुवर्तयन्ति । किन्तु णिचमेवानुवर्तयन्ति । तेन परस्मै-पदमपि तन्मते भवति । श्वेतयति अश्वयतीति व्याकुर्वन् । तथा चात्रापि भौवादिकस्य "सेवृ = सेवने" इत्यस्य णिचि उक्तरीत्या परस्मैपदं चोपपद्यत इति 'सेवयामि' इति भाष्यप्रयोगो युक्त इति भावः ।

**गुणभावेन** अप्रधानभावेनेति भाष्यार्थः । **फलतारतम्यहेतुः** "त्रैविद्यानां मोक्षाभावः, भाग-वतानां मोक्षोऽपि" इति तारतम्यहेतुः । 'ज्ञानिभ्यः' इति पञ्चमी । भागवता अप्यन्यदेवता भगव-त्परिवारतया यजन्तीति तद्व्यावर्तनायोक्तम् **त्रैविद्या इति यावदिति** । 'भोक्तृत्वाद्' इति भाष्यमनूद्य शेषमाह **भोक्तृत्वादिति** । किं तत्सर्वेषां त्वद्वर्त्मानुवर्तनमिति प्रश्नोत्तरत्वसिद्ध्यर्थमाह **एतद्द्वय-मेवेति** । मम सर्वकर्तृत्वं सर्वयज्ञसम्बन्धिहविरादिभोक्तृत्वमित्येतद्द्वयमेव भगवद्वर्त्म । तदनुसन्धानं भगवद्वर्त्मानुवर्तनमित्यावृत्त्य टीकावाक्यं व्याख्येयम् । तेन भगवन्निष्ठयज्ञभोक्तृत्वादिधर्मद्वयस्य त्रैविद्यनिष्ठानुवर्तनरूपत्वं कथम् ? इति चोद्यं परिहृतं भवति । एतदनुरोधेनैव किं त्वद्वर्त्म ? यत् त्वद्वर्त्मानुवर्तनं सर्वेषामिति प्रश्नवाक्यमपि व्याख्येयम् । **केचित्तु** अनुवर्तनशब्दोऽनुवर्तनीयार्थः । "कृत्यल्युटो बहुलम्" इति कर्मणि ल्युटि अनुवर्तनशब्दनिष्पत्तेः । गमनिकागतोऽप्यनुवर्तनशब्द एवमेव व्याख्यातव्यः । न चोभयत्रानुवर्तनशब्दो व्यर्थ इति वाच्यम् । प्रश्ने किं त्वद्वर्त्म यत्

सर्वेषामनुवर्तनीयमित्यसङ्गतिपरिहारार्थत्वात् । प्रत्युत्तरवाक्ये च "सूर्य एकाकी चरति" इतिवत् प्रश्नानुवादार्थत्वादिति व्याचक्षते । ननु "किं त्वद्वर्त्म" इत्याकाङ्क्षायाः सर्वकर्मकर्तृत्वं सर्वयज्ञ-भोक्तृत्वं चेति प्रथमयैव निवृत्तेर्भाष्ये पञ्चमीप्रयोगो न युक्त इत्यत आह **तथा व्यवहार इति** । एतद्द्वयमेव भगवद्वर्त्मेति व्यवहारे निमित्तत्वात् गुणाद् 'विभाषागुणेऽस्त्रियाम्" इति पञ्चमीविभक्ति-रित्यर्थः ।

"ननु फलतारतम्यहेतुः सेवाविशेषः किंप्रकारकः ?" इति शङ्कायाः कथमनेन परिहारः ? इत्यत आह **इदमुक्तमिति** । **एतत्** सर्वयज्ञानां भोक्ता प्रेरकश्चेत्येतत् । "काङ्क्षन्तः कर्मणां सिद्धिं यजन्त इह देवताः" (४.१२) इत्येतद् अर्थतोऽनुवदति **कर्मणामिति** । **सिद्धिं** फलनिष्पत्तिम् । **इति** इदमुक्तमित्यन्वयः । **अभिप्रेतम्** "इति विज्ञायते" इति शेषः । 'येऽपि' इति श्लोके त्रैविद्या-स्त्वेतत् तत्त्वतो अजानाना इत्यादिप्रमेयानुपलम्भादाह **अनेन श्लोकद्वयमिति** । येऽप्यन्यदेवताभक्ता इति प्रतीकोपादानेन ।

"येऽप्यन्यदेवताभक्ता यजन्ते श्रद्धयाऽन्विताः ।
तेऽपि मामेव कौन्तेय यजन्त्यविधिपूर्वकम् ॥
अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च ।
न तु मामभिजानन्ति तत्त्वेनातश्च्यवन्ति ते ॥" (९.२३,२४)

इति श्लोकद्वयमुपात्तं वेदितव्यम् । तत्र च भागवतानां त्रैविद्यानाम् "अहमेव सर्वयज्ञानाम्" इत्यादि-नोक्तः सेवाविशेषः स्पष्टं यथा भवति तथा तव मे प्रतीयत इत्यर्थः । **कथमिति** । इन्द्रादिनाम्नां तत्तद्देवतास्वेव प्रसिद्धत्वादिति भावः । उत्तरमाह **भगवतः सर्वनामवत्त्वेनेति** । देवानां यानि वाचकानि इन्द्रादिनामानि तेषां धारकः सकलदेवनाम्नां परममुख्यवृत्त्या भगवानेव वाच्य इति श्रुत्यर्थः । तथा चेन्द्रादिनामघटितैर्मन्त्रैर्दत्तमपि हविर्भगवान् भुङ्क्त इत्येतदुपपद्यत एवेति । **एव-मिति** । "देवानां नामधा" इत्येवमित्यर्थः । विश्वकर्मसूक्तत्वाद्, विश्वकर्मश्रुतिबलाच्चेति भावः । चशब्दस्याभिधेयसमुच्चायकत्वे प्रस्तुतार्थालाभात् व्यत्यस्यान्वयं दर्शयति **तत्र चेति सम्बन्ध इति** । न केवलं विष्णुसूक्तादावित्यर्थः । विश्वकर्मश्रुतौ सत्यामपि कुतो भगवत्परत्वम् ? इत्यत उक्तं भाष्ये **अजस्येति** । पद्मनाभत्वलिङ्गादयं विष्णुरेव । उत्सर्गतो लिङ्गाच्छ्रुतेः प्राबल्येऽपि निरवकाश-लिङ्गेन सावकाशाया विश्वकर्मश्रुतेरन्तराकाशाधिकरणन्यायेन बाधसम्भवात् । सूक्तस्य ज्योतिरधि-करण(ब्र.सू.१.१.१०)न्यायेन विष्णुपरत्वसम्भवाच्चेति भावः । तथा च न्यायविवरणे "श्रुतिसन्देहे-ऽनन्यथासिद्धलिङ्गेन निर्णयोपपत्तेः" (१.१.२०.७ अ.) इति नाभ्यर्पितं पद्मादन्यत् किं न स्यात् ?

पद्मनाभो वा हरेरन्यः किन्न स्याद् ? इति चेन्न । प्रसिद्धिबाधापत्तेः । ''अजस्य नाभाविति यस्य नाभेः'' (स्कान्दे) इति वचनविरोधापाताच्चेति । **अनेन** श्रुत्याद्यभिधानेन । **बाधकं** ''नन्विन्द्रादिनामवद्भिः'' इत्यादिनाऽऽशङ्कितम् ॥ ११ ॥

**गीता**

## काङ्क्षन्तः कर्मणां सिद्धिं यजन्त इह देवताः ।
## क्षिप्रं हि मानुषे लोके सिद्धिर्भवति कर्मजा ॥ १२ ॥

***वि०वि०***— अन्यदेवता यजन्तोऽपि कर्मणां सिद्धिं काङ्क्षन्तोऽपि मम वर्त्मानुवर्तन्ते इत्यर्थः । कर्मफलकाङ्क्षित्वेऽपि कुतस्त्वन्मार्गानुवर्तनमित्यत आह **क्षिप्रं हीति** । यस्मात् कर्मजा सिद्धिः क्षिप्रं भवति तस्मान्मम वर्त्मानुवर्तन्त इति बोद्धव्यम् । मद्वार्त्माननुवर्तने च कर्मफलं न स्यादिति । तदुक्तम्—

'अन्यदैवतपूजाऽपि यस्मिन्नन्ते समर्पिता ।
स्वर्गादिफलहेतुः स्यान्नान्यथा तं भजेद्धरिम् ॥' इति ॥

***सा०सं०***— एतावान् विशेषः । अहमेव सर्वयज्ञानां भोक्ता प्रेरकश्च । तदेतज्ज्ञात्वा भागवताः निष्कामाः मामेव यजन्ते । त्रैविद्यास्ते तत्तत्त्वमजानानाः **कर्मणां सिद्धिं काङ्क्षन्तः**, अन्य**देवता इह यजन्त** इति । ननु 'मम वर्त्मानुवर्तन्ते' इति यत्सर्वकर्मकर्तृत्वं सर्वकर्मभोक्तृत्वं चोक्तम्, तत्र सर्वकर्मकर्तृत्वं जीवानामस्वातन्त्र्यदर्शनात् सिद्धम् । यज्ञादिभोक्तृत्वं कुतो मानात् ज्ञेयमित्यत आह **क्षिप्रं हीति** । यस्मात् **मानुषे लोके कर्मजा सिद्धिः** कर्मजं फलम् । **क्षिप्रं** शीघ्रं **भवति** । तस्मात् **मम वर्त्मानुवर्तन्ते,** सर्वयज्ञभोक्तेति यावत् । नान्यथा । 'तस्मात् ते धनसनयः', (छां.१-७-६) 'फलमत उपपत्तेः' (३-२-३९) इति श्रुतिसूत्रादिना हरेरेव फलदातृत्वादिति भावः ।

यद्वा, त्रैविद्यानामन्यदेवतायाजित्वात् कथमुच्यते मां प्रपद्यन्त इत्यतः **इह लोके** । अन्यदेवता **यजन्तः**, यज्ञकर्मणां **सिद्धिं काङ्क्षन्तः, सर्वशो** मनुष्यास्त्रैविद्या अन्ते मयि तत्कर्मसमर्पणेन **मम वर्त्मानुवर्तन्ते** वैष्णवमार्गमेव अनुसृता भवन्ति । कुत एतत् । हि यस्मात् । **कर्मजा सिद्धिः** । इह **लोके क्षिप्रं** भवति अत इति । अन्यथा तन्न स्यादिति भावः ॥

***अ०प्र०***— इन्द्रादिरूपेणापि ममैव सेव्यत्वात् तर्हि मोक्षार्थमेव किमिति सर्वे न भजन्ति इति । अत्राह **काङ्क्षन्त इति** ।

हि = यस्मात्[१], मनुष्यलोके[२], कर्मजा[३], सिद्धिः[४], क्षिप्रं[५], भवति[६], तस्मात् प्रायशः इह = इहलोके[७], कर्मणां[८], सिद्धिं[९], काङ्क्षन्तः[१०], देवताः[११], भजन्ते[१२] इत्यन्वयः ।

न तु साक्षान्मामेव भजन्तीत्यर्थः । हि = यस्मात्[१], मानुषे लोके इह = मनुष्यलोके[२], कर्मजा = कर्मजन्यं पुत्रादिकं कर्मणा जाता कर्मजा वा[३], सिद्धिः = फलं कर्मफलं[४], क्षिप्रं = शीघ्रं[५], भवति = प्रत्यक्षोपलब्धं भवति[६], तस्मात्प्रायशः, इहलोके = मनुष्यलोके कर्मैव फलसूचकमिति भावः[७], कर्मणां सिद्धिं = स्वर्गादिफलं[९], काङ्क्षन्तः सन्तः[१०], देवताः = इन्द्रादिदेवताः[११], एवं भजन्ते[१२], न तु साक्षान्मामेव भजन्तीत्यर्थः ॥ ननु ज्ञानफलं कैवल्यं ज्ञानस्य दुष्प्रापकत्वात्, तस्मादेव हरेः सर्वसारभोक्तृत्वं सिद्धम् ॥ १२ ॥

**भाष्यम्**

**कुतो मम वर्त्मानुवर्तन्ते ? क्षिप्रं हि । अत एव हि फलप्राप्तिः । 'तस्मात्ते धनसनयः' इति हि श्रुतिः ॥ १२ ॥**

***प०टी०***— ननु सर्वकर्तृत्वाद्भोक्तृत्वाच्च 'मम वर्त्मानुवर्तन्ते, इत्युक्तम् । तत्कुतो ज्ञायते ? इत्याशङ्कोत्तरत्वेनोत्तरश्लोकं व्याचष्टे **कुत इति** । यतो भगवानेव भोक्ता, तत एव हि फलप्राप्तिः । नान्यथा सा स्यात् । अतः फलप्राप्तिदर्शनादहमेव भोक्तेति ज्ञायत इत्यर्थः । ननु राजादिभ्योऽपि सेवितेभ्यः फलं लभ्यते । अतः कथं भगवत एव फलदातृत्वम् ? इत्यत आह **तस्मादिति** ॥

***न०टी०***—नन्वस्तु सर्वदेवतानामवाच्यत्वं विष्णोः, तथाऽपि भागवतकर्तृकेष्वेव यागेषु सर्वदेवतानामभिः भगवानीड्यः स्यात् । त्रैविद्यकर्तृकेष्विन्द्रादय एव किं न स्युः ? इति भावेनाशङ्क्य, तदुत्तरत्वेनोत्तरमवतार्य व्याचष्टे **कुत इति** ॥ न हि देवतादिवन्मनुष्यजनिश्चिरकालेन फलं साधयति । यदि कस्मिंश्चिद्यागे न गृह्णीयाद्धविर्भगवान् तर्हि तस्य फलं न स्यात् । न हि भगवद्भजनं विना फलमिति भावः । ननु वीणागानादिवद्यागादितुष्टा इन्द्रादय एव फलदाः स्युः, किं तत्र भगवता ? इत्यत आह **तस्मादिति** । वीणायामपि राजाद्यक्षिस्थं हरिमेव गायन्ति । अत एव ततो धनं लभन्ते नान्यथा । तद्वदिन्द्रादिनामभिरिष्टाद्भगवत एव यथायोग्यं फलं लभन्ते, त्रैविद्या भागवताश्चेति भावः ॥

***प्र०दी०***— साधकं तु प्रमाणं पृच्छति । **कुत इति** । "मम वर्त्मानुवर्तन्ते" इति यत्सर्वयज्ञादिभोक्तृत्वं भगवत उक्तं तत्कुतः प्रमाणाज्ज्ञायत इत्यर्थः । सर्वकर्तृत्वं तु जीवानामस्वातन्त्र्यदर्शनात्सिद्धम् । इत्यत आहेति शेषः । हीत्यतः परमितिशब्दश्च । किमनेन प्रमाणमुक्तमित्यत

आह— **अत एवेति** । कर्मजा सिद्धिः । फलप्राप्तिस्तावत् क्षिप्रं प्रत्यक्षोपलभ्याऽस्ति । सा चाऽत एव कर्मणां भगवता भुक्तत्वादेव हि युज्यते । नान्यथेत्यर्थः । इन्द्रादिभ्योऽपि फलप्राप्त्यु-पपत्तेरुपक्षीणाऽर्थापत्तिरित्यत आह— **अत एव हीति** । भगवत एव । अत्र हीति सूचितं प्रमाणमाह— **तस्मादिति** । **धनसनयः** धनलाभवन्तः ॥

***भा०दी०***— **इति यदिति** । इत्यनेन यत्सर्वज्ञादिभोक्तृत्वमुक्तमित्यर्थः ॥

***भा०र०***— **इति** अत्र वाक्ये **यत्सर्वयज्ञादिभोक्तृत्वं** "मम वर्त्म" इत्यनेनोक्तमित्यर्थः । भगवतः सर्वकर्मकर्तृत्वं सर्वयज्ञभोक्तृत्वं च मम वर्त्मेति विवक्षितम् । तत्र सर्वयज्ञभोक्तृत्वे प्रमाण-प्रश्नवत् सर्वकर्मकर्तृत्वे कुतो न प्रमाणप्रश्नः ? इत्यत आह **सर्वकर्तृत्वं चेति** । 'भगवतः' इति शेषः । कुत इत्यनन्तरं शेषमाह **इत्यत इति** । **इतिशब्दश्च** शेषः । 'फलप्राप्तिः' इति भाष्यं कस्यार्थः ? इत्यतः सिद्धिशब्दार्थ इति वक्तुमाह **कर्मजेति** । "अत एव" इत्यनूद्यार्थमाह **साचात एवेति** । **नान्यथेति** । तथा चार्थापत्तिः प्रमाणमिति भावः । **उपक्षीणा** अन्यथोपपन्ना । **भगवत एव** न त्विन्द्रादिभ्य इति पञ्चमी । **अत्र** भगवत एव फलप्राप्तिरित्यत्र । **हीति सूचितं** "क्षिप्रं हि" इति गीतायां हिशब्देन सङ्क्षिप्योक्तम् । **धनेति** । धनस्य सनिर्येषामिति व्यधिकरणो बहुव्रीहिः । यद्वा "षण = सम्भक्तौ" इत्यस्य भावे रूपं 'सनः' इति । ततो मत्वर्थीय इकारस्तद्धितः । विचित्रा हि तद्धितगतिः धनशब्दश्च प्रत्यक्षोपलभ्यफलमात्रोपलक्षणार्थ इति भावः । तथा च **प्राचीनटीका** । वन्दिगानादितुष्टाद् राजादेर्यथा वन्दी धनं लभते तथा यागादितुष्टादिन्द्रादेरेव यजमानः फलं लभताम्, किं भगवता ? इत्याशङ्क्याह **तस्मादिति** । वीणायामपि राजाद्यन्तःस्थं हरिमेव गायन्ति । अत एव ततो धनं लभन्ते । नान्यथा । तद्वत् इन्द्रादिनामभिरिष्टाद्भगवत एव फलं लभन्त इति ॥ १२ ॥

***गीताक्षरार्थस्तु***— त्रैविद्यानामपि मोक्षसद्भावात् को विशेषस्त्वामुपाश्रितानाम् ? इत्यत उच्यते **ये यथेति** । **ये** भागवताः त्रैविद्या वा **यथा** येन प्रकारेण सर्वकर्मकर्तृत्वेन सर्वयज्ञभोक्तृत्वेन च विष्णुं सामान्यतः सर्वोत्तमं ज्ञात्वा देवताः पितॄंश्चेष्ट्वाऽन्ते विष्णौ समर्पणमित्यनेन वा प्रकारेण मां प्रपद्यन्ते, **तान्** तत्तत्फलदानेन **भजामि** सेवे अनुगृह्णामीति यावत् । नैतावता सर्वेषां फलसाम्यम् । भागवतानां मोक्षदानात् त्रैविद्यानां स्वर्गमात्रदानात् । एवं तर्हि भागवतेभ्यो मुक्तिं, त्रैविद्येभ्योऽल्पं सुखं ददद्विषमो भगवान् स्यादिति चेन्न । सेवानुसारेण फलदातृत्वात्, सेवायाश्च फलतारतम्यहेतु-विशेषशालित्वात् । ज्ञानिसेवाऽपेक्षया त्रैविद्यसेवायां विशेषः किंप्रकारः यः फलतारतम्यस्य हेतुः ? इत्यत उच्यते **ममेति** । **सर्वशः** सर्वे भागवताः त्रैविद्याश्च मनुष्याः । मम वर्त्म सर्वकर्मकर्तृत्वं सर्वयज्ञभोक्तृत्वं च **अनुवर्तन्ते** अनुसरन्ति ॥ ११ ॥

तत्राप्यस्ति विशेष इत्युच्यते **काङ्क्षन्त इति** । अहमेव सर्वयज्ञानां भोक्ता च प्रेरकश्च । तदेतज्ज्ञात्वा भागवता निष्कामा मामेव यजन्ते । त्रैविद्यास्त्वेतत् तत्त्वतोऽजानानाः कर्मणां **सिद्धिं** फलप्राप्तिं **काङ्क्षन्तः** अपेक्षमाणाः अन्यदेवता यजन्ते । अन्ते भगवदर्पणं च कुर्वन्ति । एवं सेवायां विशेषसद्भावाद् युक्तं फलतारतम्यमिति ।

इदमत्र विवेक्तव्यम् । भागवतानां भगवद्वर्त्मानुवर्तनं सर्वकर्मकर्तृत्व-प्रेरकत्व-सर्वयज्ञभोक्तृत्वाद्यनुसन्धानपूर्वकं कर्माद्यनुष्ठानं, त्रैविद्यानां तु नोक्तानुसन्धानेन यजनं, किन्तु फलाकाङ्क्षावशाद् अन्यदेवतायजनम् अन्ते भगवदर्पणमात्रम् । इदमेव तेषां भगवद्वर्त्मानुवर्तनम् । अतो भागवतानां मोक्षः, इतरेषां स्वर्गाद्येवेति । तथा चोत्तरप्रस्थाने अन्यदेवतायाजिनामप्यन्ते भगवत्समर्पणेन वैष्णवमार्गानुवर्तनेनैव सम्यक् फलं भवति ।

"अन्यदेवतापूजाऽपि यस्मिन्नन्ते समर्पिता ।
स्वर्गादिफलहेतुः स्यान्नान्यथा तं हरिं भजेत् ॥" (आग्नेये) इति ।

ननु "मम वर्त्म" इति भगवतः सर्वकर्मकर्तृत्वं सर्वयज्ञादिभोक्तृत्वं चोक्तम् । तत्र सर्वकर्मकर्तृत्वं जीवानाम् अस्वातन्त्र्यदर्शनाद्भगवत एव सिद्धम् । सर्वयज्ञभोक्तृत्वं कुतः प्रमाणाज्ज्ञेयम् ? इत्यत उक्तम् **क्षिप्रं हीति** । **कर्मजा सिद्धिः** कर्मजफलप्राप्तिस्तावत् **क्षिप्रं** प्रत्यक्षोपलभ्याऽस्ति । सा च कर्मणां भगवता भुक्तत्वादेव हि युज्यते, नान्यथा । इन्द्रादिभ्योऽपि प्राप्यमाणफलसिद्धिरन्ततो भगवदधीनैवेत्यर्थापत्तिरुक्तेऽर्थे प्रमाणमिति ॥ १२ ॥

**गीतातात्पर्यनिर्णयः**

**तथैव भजामि । तदनुसारिफलदानरूपेण । अन्यदेवतायाजिनामपि मत्समर्पणेन वैष्णवमार्गानुवर्तनेनैव सम्यक् फलं भवति ।**

**"अन्यदैवतपूजाऽपि यस्मिन्नन्ते समर्पिता ।**
**स्वर्गादिफलहेतुः स्यान्नान्यथा तं भजेद्धरिम् ॥"**

**—इत्याग्नेये ॥ ११-१२ ॥**

*प्रका०*— 'ये यथे'त्यादेरर्थमाह **तथैवेत्यादिना** ॥

*न्या०दी०*— त्रैविद्यानामपि मोक्षसद्भावात् को विशेषस्त्वामुपाश्रितानामित्यत उच्यते "ये यथा" इति । तत्र नमन्तं नमतीत्याद्यन्यथाप्रतीतिनिरासायाऽऽह **तथैवेति** ॥ न ज्ञानिनां त्रैविद्यानां

च फलसाम्यम् । सेवानुसारेणैव मम फलदत्वात् । सेवायाश्च वैषम्यादिति भावः । त्रैविद्यानामन्य-देवतायाजित्वात् कथमुच्यते तां प्रपद्यन्त इतीत्यतो देवता यजन्तो यदि कर्मणां सिद्धिमाकाङ्क्षन्तो भवन्ति तर्हि मम वर्त्मानुवर्तन्त एव । अन्यथा कर्मफलाभावादित्युच्यते **मम इति** । तत्र त्रैविद्या अपि चेद्भगवद्वर्त्मानुवर्तन्ते तर्हि भागवतत्रैविद्यभेदो न स्यादित्यतः श्लोकं व्याचष्टे **अन्येति** ।। मत्समर्पणेन अन्त इति शेषः । अत्र स्मृतिसंमतिं चाह **अन्येति** ।।

*भा०दी०*— मत्समर्पणेनेत्येतदनुवादपूर्वं अन्तपदाध्याहारमाह **मत्समर्पणेन अन्त इति शेष इति** ।।

**गीता**

## चातुर्वर्ण्यं मया सृष्टं गुणकर्मविभागशः ।
## तस्य कर्तारमपि मां विद्ध्यकर्तारमव्ययम् ।। १३ ।।

*वि०वि०*— भगवद्भजनं विना कुतो न तत्फलमित्यतस्तस्य पितृत्वादिना विशिष्टत्वात् तत्त्यागेनान्यदेवता यजन्तः कथं महाफलभाजो भवेयुरित्याशयेनाह **चातुर्वर्ण्यमिति** । राजस-सात्त्विकेषु सात्त्विको ब्राह्मणः । सत्त्वमधिकं यतो रजसस्तद्वान् क्षत्रियः । समसत्त्वरजोवान् वैश्यः । रजोऽपेक्षयाऽधिकतमोवान् शूद्रः । चतुर्वर्णसमुदायः । सात्त्विको ब्राह्मणः । सात्त्विकराजसः क्षत्रियः । राजसतामसो वैश्यः । तामसः शूद्रः—

'सत्त्वसत्त्वाधिकरजो रजोभिस्तमसा तथा ।
वर्णा विभक्ताश्चत्वारः सात्त्विका एव वैष्णवाः ।।'

इति गुणविभागः । कर्मविभागः 'शमो दमः' इत्यादिना वक्ष्यते । यथा भगवान् सर्वकर्ता एवं भवतोऽप्यन्यः कर्ताऽस्ति किमित्यपेक्षायामाह **तस्येति** । तस्य चातुर्वर्ण्यस्य कर्तारम् । जीववत् तवापि कर्मलेपः स्यादित्यतः कर्मलेपाभावं वक्तुं हेतुं तावदाह **तस्येति** । कर्तारमपि मां जीवविलक्षणकर्तृत्वादकर्तारं विद्धि । उक्तं च—

'अप्रयत्नात् स्वतन्त्रत्वात् फलानां च विवर्जनात् ।
क्रियायां च स्वरूपत्वादकर्तेति च तं विदुः ।।' इति ।।

*वा०ल०*— 'विद्ध्यकर्तारम्' इत्यत्र अकर्तारम् अकर्तृवत् कर्मलेपरहितम् ।।

*सा०सं०*— भगवद्भजनं विना कुतो न फलमित्यतो वा, ज्ञानिनामिव त्रैविद्यानामपि कुतो न महाफलमित्यतो वा, तस्य पितृत्वात् पितरं परित्यज्यान्यदेवतायाजिनां फलप्राप्तिरेव नास्ति, कुतो

महाफलप्राप्तिरिति भावेनाह **चातुर्वर्ण्यमिति** । चत्वारो वर्णाश्चातुर्वण्यम् । 'चतुर्वर्णादिभ्यः स्वार्थ उपसङ्ख्यानम्' इत्युक्तेः स्वार्थे ष्यञ् ।

यद्वा, चतुर्णां वर्णानां समूहश्चातुर्वण्यम् । 'विचित्रा हि तद्धितगतिः' इति समूहार्थे ष्यञ् । **गुणकर्मविभागशः** सत्त्वादिगुणविभागेन कर्मविभागेन च चातुर्वर्ण्यं चतुवर्णसङ्घो **मया सृष्टः** । जनाः सात्त्विकसात्त्विका राजससात्त्विकास्तामससात्त्विकाश्चेति त्रिविधाः । तत्र राजससात्त्विकाना-मत्र ग्रहणम् । 'राजसास्तु नरा विप्राः' इत्यष्टादशतात्पर्योक्तेः । 'सात्त्विको ब्राह्मणः' इत्याद्येत-द्भाष्योक्तेश्च । तथा च अतिसत्त्वाधिकरजोगुणयुक्तः ब्राह्मणाः । किञ्चित् सत्त्वाधिकरजोगुणयुक्ताः क्षत्रियाः । तमोऽपेक्षयाऽधिकं समसत्त्वं यद्रजस्तद्युक्ता वैश्याः । रजोऽपेक्षयाऽधिकतम उपेतः, तमोपेक्षयाऽधिकसत्त्वोपेतश्च शूद्र इति गुणविभागकृतो ब्राह्मणादिवर्णः । ब्राह्मणादियोग्यकर्म-विभागस्तु अष्टादशाध्याये 'शमो दमः' (१८-४२) इत्यादिश्लोकत्रयेण वक्ष्यते ।

ननु यथा भवान् सर्वस्य कर्ता तथा तवाप्यन्यः कर्ताऽस्ति किमित्यत आह **तस्येति** । **तस्य** चातुर्वर्ण्यस्य । **अव्ययं कर्तारं मां विद्धि** । तथा **अकर्तारमपि** कर्त्रन्तरहीनमपि । **विद्धि** मेऽन्यः कर्ता नास्तीत्यपि विद्धीत्यर्थः ।

***सा०सं०***— यद्वा, यदि त्वया चत्वारो वर्णाः सृष्टाः, तर्हि कर्तृत्वाज्जीववत् तवापि कर्मलेपः स्यादित्यतः कर्मलेपाभावं 'न माम्' इत्यादिना वक्तुं लेपाभावे हेतुं तावदाह **तस्येति** । **तस्य कर्तारमपि** । **मां** जीविलक्षणम् । अकर्तृत्वात् **अकर्तारं** कर्तृत्वहीनम् । **विद्धि** इति ॥

***अ०प्र०***— ननु च केचित्सकामतया प्रवर्तन्ते केचिन्निष्कामतयेति कर्मवैचित्र्यं तत्कर्तृणां ब्राह्मणादीनां उत्तममध्यमादिवैचित्र्यं कुर्वतः तव कथं वैषम्यं नास्तीत्याह **चातुर्वर्ण्यमिति** ।

मया[१], गुणकर्मविभागशः[२], चातुर्वर्ण्यं[३], सृष्टं[४], तस्य कर्तारं[५], मां[६], अकर्तारमपि[७], अव्ययं विद्धि इत्यन्वयः ।

मया = मयैव; मयाऽधिष्ठितया प्रकृत्या वा[१], गुणकर्मविभागशः = गुणानां कर्मणां च विभागः यद्वा गुणानां सत्त्वादीनां कर्मणां शम-शौर्य-कृषि-वाणिज्य-परिचर्यादीनां च विभागः, यद्वा सत्त्वादिगुणविभागैः कर्मविभागः चतुर्वर्णोचितकर्मविभागशः[२], चातुर्वर्ण्यं = चत्वारो वर्णा एव चातुर्वर्ण्यं ब्राह्मणादि चतुर्वर्णसमुदायः[३], सृष्टं = उत्पादितं इति सत्यं[४], तस्य कर्तारं = वर्णानां कर्मणां मदधिष्ठिततया प्रकृत्या सृष्टत्वात् मां तस्य कर्तारमित्यज्ञाः प्रवदन्ति । तथाप्येवं चातुर्वर्ण्यस्य फलतो कर्तारमेव[५], मां[६], अकर्तारं क्रियायां अभिनिवेशाभावात्[७], अव्ययं = आसक्तिराहित्येन च रहितं[८], विद्धि = जानीहि[१०] ॥

तदुक्तम्—

"अप्रयत्नात् स्वतन्त्रत्वात् फलानां च विवर्जनात् ।
क्रियायाश्च स्वरूपत्वादकर्तेति च तद्विदुः ॥" इति ॥

तथा—

कर्ताऽपि भगवान्विष्णुः अकर्तेति च कथ्यते ।
तस्य कर्ता यतो नान्यः स्वतन्त्रत्वात् परात्मनः ॥ इति ॥

कर्तृशून्यं अत एव अव्ययमिति व्याख्येयम् ॥ १३ ॥

**भाष्यम्**

**अहमेव हि कर्तेत्याह— चातुर्वर्ण्यमिति । चतुर्वर्णसमुदायः । सात्त्विको हि ब्राह्मणः । सात्त्विकराजसः क्षत्रियः । राजसतामसो वैश्यः । तामसः शूद्र इति गुणविभागः । कर्मविभागस्तु 'शमो दम' इत्यादिना वक्ष्यते । क्रियायाः वैलक्षण्यात् कर्ताऽप्यकर्ता । तथा हि श्रुतिः 'विश्वकर्मा विमनाः' इत्यादि । 'तनुर्विद्या क्रिया कृतिः' इत्यादि च । साधितं चैतत्पुरस्तात् ॥ १३ ॥**

***प०टी०***— यत्पूर्वं सर्वकर्मकर्तृत्वं भगवतोऽभिप्रेतं तत्परतयोत्तरश्लोकमवतार्य व्याचष्टे **अहमेवेति** । 'गुणकर्मविभागशः' इत्युक्तौ गुणकर्मविभागौ दर्शयति **सात्त्विक इति** । 'कर्तारम्' इत्येतदविरोधेन व्याचष्टे **क्रियायामिति** । कथं क्रियायां वैलक्षण्यम् ? इत्यतः तत्प्रकारद्वयेनाह **तथा हीति** । ननु क्रियाया मायिकत्वात् कर्ताऽप्यकर्तेत्यर्थः किं न स्यात् ? इत्यत आह **साधितं चेति** । **एतत्** क्रियादेरमायिकत्वम् ॥

***न०टी०***—न चाश्चर्यं भगवतः सर्वकर्तृत्वं सर्वयज्ञभोक्तृत्वम्, तत एव हेतोः सर्वकर्मफलदत्वं च । यतः स एव सर्वकर्मिणां स्रष्टेति भावेनोत्तरश्लोकमवतार्य व्याचष्टे **अहमेवेति** । समुदाय-समुदायिनोरत्यन्तभेदाभावात् **चतुर्वर्णसमुदायः** 'चातुवर्ण्यम्' इति विवरणं युज्यते । न च समुदायस्यावस्तुत्वं पटस्याप्यवस्तुत्वापत्तेरिति भावः । तत्र तावत् सत्त्वादिगुणत्रयविभागेन चतुर्वर्णोत्पत्तिं दर्शयति **सात्त्विक इत्यादिना** । निर्देशप्राथम्याद्रजोगुणादपि सत्त्वमधिकं क्षत्रिये । तत एव हेतोर्वैश्ये रजोऽधिकं तमसः । रजसस्तमोऽधिकमित्येव तामसः शूद्र उच्यते । न तु सत्त्वादपीति भावः । कर्मविभागस्योपरि भगवतैव वक्ष्यमाणत्वात् न सोऽस्माभिरत्र कथित इति भावेनाह **कर्मेति** । अत्र केचित् 'अकर्तारम्' इति पदभ्रान्ताः सर्वविदाद्युक्तं भगवत्सर्वकर्तृत्वं मिथ्येति

वर्णयन्ति । तत्पक्षे वेदादिविरोधं सूचयन्नेव तद्व्याचष्टे **क्रियायामिति** । सर्वकर्तुर्भगवतः क्रिया-वैलक्षण्यं श्रुत्या दर्शयति **तथा हीति** । मनसोऽभिनिवेशराहित्यं विमनस्त्वम् । विमनसोऽपि या क्रिया सेतरक्रियाविलक्षणेत्यर्थः । अनेन वेदविरोधः सूचितः तत्पक्षे । जगत्कर्तुः क्रियावैलक्षण्यं प्रकारान्तरेण प्रदर्शयद्वाक्यमुदाहरति **तनुरिति** । तदाकृतिरेव तत्क्रियेति देवदत्तादेरिव भिन्नक्रिया-भावात् कर्ताऽप्यकर्तोच्यत इति भावः । अनेन पुराणविरोधः सूचितस्तत्पक्षे । भगवतः कर्तृत्वादि-कर्मयाथार्थ्यस्य द्वितीयाध्याये साधितत्वान्नेह प्रपञ्च्यत इति भावेनाह **साधितं चेति** ॥

*प्र०दी०*— 'चातुर्वर्ण्यं' इत्यस्य सङ्गतिं सूचयंस्तात्पर्यमाह— **अहमेव हीति** । यस्मादहमेव चातुर्वर्ण्यस्य कर्ता त्रैविद्याश्च तदन्तर्भूतास्तस्मात्स्वपितरं मां परित्यज्याऽन्यदेवता यजन्तः कथं महाफलभाजो भवेयुरित्याहेत्यर्थः । ''विचित्रा हि तद्धितगतिः'' इति वचनादतिरिक्तार्थसम्भवे ''चतुर्वर्णादिभ्यः स्वार्थ उपसङ्ख्यानं'' इति नाऽऽदरणीयमिति भावेनाह— **चतुर्वर्णेति** । वर्णा-श्चत्वारो गुणास्त्रयः । तत्कथं तेषु गुणविभाग इत्यत आह— **सात्त्विक इति** । राजसस्थसात्त्विके-ष्वेवायं विभाग इति ज्ञातव्यम् । निर्देशप्राथम्यात् क्षत्रिये रजसः सत्त्वमधिकम् । तत एव वैश्ये तमसो रजः । तच्च समसत्वयुतम् । रजोऽपेक्षया तमोऽधिकं शूद्र इत्यसौ तामसः । सत्त्वं तु तमसो-ऽप्यधिकम् । कर्मविभागः कीदृश इत्यत आह— **कर्मेति** ।

यदि चातुर्वर्ण्यं त्वया सृष्टं तर्हि कर्तृत्वात्तवापि जीववत्कर्मलेपः प्रसज्यत इत्यतः कर्मलेपाभावं वक्तुं हेतुस्तावदुच्यते— **तस्येति** । तदेतद्व्याहतमित्यत आह— **क्रियायामिति** । कथं वैलक्षण्य-मित्यतः श्रुत्यैव दर्शयति— **तथा हीति** । विश्वकर्माऽपि विमनाः तत्राभिनिवेशरहित इत्यर्थः । प्रकारान्तरेण वैलक्षण्यं पुराणेन दर्शयति— **तनुरिति** । क्रियाया मिथ्यात्वात्कर्ताऽप्यकर्तेति पर-व्याख्यां प्रत्याख्याति— **साधितं चेति** । एतत्क्रियायाः सत्यत्वम् । पुरस्ताद्द्वितीये ॥

*भा०दी०*— **इति वचनादिति** । भाष्यकारीयवचनादित्यर्थः । **अतिरिक्तेति** । स्वार्थादन्य-समूहार्थत्वसम्भव इत्यर्थः । **इति नादरणीयमिति** । आद्यपादे 'गुणवचनब्राह्मणादिभ्यः ष्यञ्' इति सूत्रे वार्तिकोक्तं स्वार्थे ष्यञ् उपसङ्ख्यानं नादरणीयमित्यर्थः । 'राजसानां मध्ये सात्त्विका एव भागवता विप्रादय' इत्याद्यष्टादशाध्यायतात्पर्यानुरोधेन 'राजसास्तु नरास्तत्र विप्रा राजससात्त्विका' इत्यादि तात्पर्यानुरोधेन वा आह **राजसानां मध्य इति निर्देशेति** । सात्त्विकराजसेति भाष्ये सात्त्विकपदस्य प्रथमं निर्देशादित्यर्थः । संज्ञाप्रमाणत्वादितिवदयं निर्देशो ज्ञेयः । सात्त्विकाः स्वल्प-राजसाः क्षत्रियाः सत्त्वराजसा इत्यादि मानानुरोधादाह **क्षत्रिया इत्यादि** । अत एव भाष्ये रजः-पदस्य निर्देशप्राथम्यादेवेत्यर्थः । **राज इति** । अधिकमित्यनुषङ्गः । व्यक्तमेतत्सर्वमन्तिमाध्याय-

तात्पर्ये । **कर्मेतीति** । ब्राह्मणादिवर्णचतुष्टयकर्मविभागस्तु अष्टादशे अध्याये शमो दम इत्यादि श्लोकत्रयेण वक्ष्यतीत्यर्थः । **तनुरितीति** । भाष्ये विद्याक्रिययोः तन्वाकृतिपदाभ्यां भगवत्स्वरूपत्वोक्त्या च वैलक्षण्यं क्रियाया इत्यर्थः । **द्वितीय इति** । स्थाणुत्वेऽप्यैक्षतेत्याद्यविरुद्धमीश्वरस्येत्यारभ्य स्वरूपत्वान्न मायामयमित्युक्तमित्यन्तेनेति भावः ॥

*भा०र०*— ननु समुदायेऽभिधेये ष्यञोऽविधानात्कथं चतुर्वर्णसमुदाय इति भाषणम् ? इत्यत आह **विचित्रेति** । **अतिरिक्तेति** । स्वार्थातिरिक्तेत्यर्थः । प्रत्ययानां प्रकृत्यर्थातिरिक्तार्थ एवानुशासनं भूम्ना दृश्यते । अयं च ष्यञ्प्रत्ययः प्रातिपदिकार्थातिरिक्ते समुत्पादयितुं युक्तः । सम्भवात् । प्रातिपदिके एव तदुत्पादनं नातीव चतुरस्रमिति युक्तः समुदायार्थः प्रत्यय इति भाष्यभाव इत्याशयः । **प्राचीनटीकायां तु** समुदायसमुदायिनोरत्यन्तभेदाभावात् "चतुर्वर्णा एव चातुर्वर्ण्यम्" इति स्वार्थिकष्यञ्प्रत्यय एव "चतुर्वर्णसमुदायश्चातुर्वर्ण्यम्" इति विवृत इत्युक्तम् । "चत्वारश्च ते वर्णाश्च" इति भाष्ये विशेषणसमासोऽयं न द्विगुरिति न ङीप् "राजसास्तु नरास्तत्र विप्रा राजससात्त्विकाः" (१८.४०) इत्यष्टादशाध्यायतात्पर्यनिर्णयोदाहृतप्रमाणं राजसानां मध्ये सात्त्विका एव भागवता विप्रादय इति तत्रत्यभगवत्पादीयवचनं चानुरुन्धान एतद्भाष्यनिष्कर्षमाह **राजसस्थसात्त्विकेष्वेवेति** ।

जीवास्त्रिविधाः । सात्त्विका राजसास्तामसाश्चेति । तत्र राजसा अपि त्रिविधाः । राजससात्त्विका राजसराजसा राजसतामसाश्चेति । तत्रापि ये राजससात्त्विकास्तेष्वित्यर्थः । 'राजससात्त्विकेषु' इति वक्तव्येऽपि 'राजसस्थ' इति वचनं तद् राजसस्थसात्त्विकेष्वेव शुद्धसात्त्विका इत्युत्तरप्रस्थानमनुसन्धापयितुम् । एवकारेण राजसस्थसात्त्विकेभ्योऽन्यत्रैवं विभागाभावं सूचयति । **निर्देशेति** ॥ 'सात्त्विकराजसः' इति भाष्ये सात्त्विकशब्दस्य प्रथमं निर्देशादित्यर्थः । 'रजसः' इति पञ्चमी । रजोऽपेक्षयेत्यर्थः । **तत एव** राजसतामस इति निर्देशप्राथम्यादेव । **रजः** अधिकम् । **तच्च** रजः **समसत्त्वयुतं** स्वसमसत्त्वगुणेन **युक्तं** वैश्ये इति ज्ञातव्यमित्यर्थः । "तामसः शूद्रः" इति भाष्यं रजसस्तमोऽधिकमित्येतावता तामसः शूद्र उच्यते, न तु सत्त्वादपीति **प्राचीनटीकां** हृदि कृत्वा विवृणोति **रजोऽपेक्षयेति** । **तमसोऽप्यधिकं** 'शूद्रे' इति वर्तते । एतदेव प्रमेयं सप्रपञ्चं राजसस्थसात्त्विकेष्वेव शुद्धसात्त्विकाः, किञ्चिद्रजोयुक्तसात्त्विकाः, समरजोयुक्तसात्त्विकाः, सत्त्वात् किञ्चिदूनतमोयुक्तसात्त्विका इति वर्णभेदः । सत्त्वप्रधानत्वाद् एतानारभ्योत्तरोत्तरं सर्वेऽपि मोक्षयोग्या इति तात्पर्यनिर्णयात् । राजससात्त्विकेषु "विप्रा राजससात्त्विकाः" इत्यादेः "राजससात्त्विकानारभ्य हिरण्यगर्भावसानाः सर्वेऽपि हि मोक्षयोग्याः । गुणान्तरापेक्षयैषु सत्त्वाधिक्यात् । मोक्षयोग्यता

भागवतानामेव । अतो राजससात्त्विकादयः सर्वेऽपि भागवता एव'' इत्यन्तात् तट्टीकाग्रन्थाच्चावसेयम् ।

अत्र भाष्यटीकयोरुक्तमुपलक्षणम् । ये नित्यत्रैविद्या राजसराजसास्तेऽपि ग्राह्याः । ते च

''त्रैविद्यमात्रा विष्णोर्ये सर्वाधिक्ये ससंशयाः ।
अन्याधिक्यं न मन्यन्ते श्रीशाद्राजसराजसाः ॥

सत्त्वाधिको मोक्षयोग्यो योग्योऽन्धतमसस्तथा ।
तम उत्तरो रजो भूयान् समो वा सृतिपात्रकः ॥'' (गी.ता.१८.४०) इति ।

तात्पर्यनिर्णये । राजससात्त्विकान् उक्त्वा राजसराजसादीनाह **त्रैविद्येति** । कालतो भागवतान् जायमानान् व्यवच्छिनत्ति **त्रैविद्यमात्रा इति** । सर्वाधिक्ये सर्वप्रकारेणाधिक्य इति गमयितव्यमिति । सत्त्वाधिको राजससात्त्विकादिः, तम उत्तरो नराधमादिः, रजोभूयान् त्रैविध्यः, सम एकप्रकारगुणत्रयोऽज्ञ इति च टीकाग्रन्थे चोक्तेः । एवमेतेषां ग्रहणेन ''यस्मादहमेव चातुर्वर्ण्यस्य कर्ता, त्रैविद्याश्च तदन्तर्भूताः'' इति पूर्वटीकावाक्येन विरोधः परिहृतो भवति । **केचित्तु** राजससात्त्विकेष्विव राजसराजसेषु त्रैविद्येष्वपि योनिभेदकृत औपाधिको वर्णविभागोऽस्ति । भाष्योक्तश्च स्वाभाविकः । अयं त्वौपाधिकः । यथोक्तम् ''योनिभेदकृतो भेदो ज्ञेय औपाधिकस्त्वयम्'' इति । योनिभेदकृतत्वं च ब्राह्मणयोनिजो ब्राह्मणः इत्यादिरूपेण द्रष्टव्यम् । 'राजसस्थसात्त्विकेष्वेव' इति टीकायामेवकारः स्वाभाविकतद्व्यवच्छेदार्थः । तथा च चातुर्वर्ण्यस्याहमेव कर्तेत्यत्र स्वाभाविकौपाधिकोभयविधमपि चातुर्वर्ण्यमपि ग्राह्यम् । तत्र च त्रैविद्यानामन्तर्भावात् ''त्रैविद्याश्च तदन्तर्भूताः'' इति टीकावाक्येन न विरोधशङ्काऽवकाश इति **आहुः** । ''शमो दमः'' (१८.४२) इत्यादिना श्लोकत्रयेणाष्टादशाध्याये वक्ष्यत इति भाष्यार्थः ।

**वक्तुं** ''न माम्'' इत्यनेन । **तदेतत्** 'कर्तारम्', 'अकर्तारम्' इति पदद्वयम् । अभिनिवेशरहित इत्यत्र ''येन तत्प्राप्तिपर्यन्तं मनसो विक्षेपः सोऽभिनिवेशः'' इत्यभिनिवेशस्वरूपमग्रे (गी.भा.प्र.दी. ४.१४) वक्ष्यति । जीवस्य त्वस्त्यभिनिवेश इति न तद्दृष्टान्तेन भगवति कर्मलेपः शङ्क्यत इति भावः । **पुराणेन** भागवतवाक्येन । व्याख्यातमेतद्द्वितीये (गी.भा. २.२४) । अनेन वाक्येन विद्याक्रिययोस्तन्वाकृतिपदाभ्यां भगवत्स्वरूपत्वावेदनेन वैलक्षण्यं भगवत्क्रियाया इति भावः । ''मायासंव्यवहारेण तस्य कर्तारमपि सन्तं मां परमार्थतो विद्ध्यकर्तारमिति सङ्करभाष्यमर्थतोऽनुवदति **क्रियाया मिथ्यात्वादिति** । **द्वितीय इति** । ''नित्यः सर्वगतः स्थाणुरचलोऽयं सनातनः''

(२.२४) इति गीताव्याख्याऽवसरे स्वरूपत्वान्न मायामयम् । ''अतश्च न मायामयं सर्वमित्यादिना'' इति शेषः ॥ १३ ॥

**गीता**

## न मां कर्माणि लिम्पन्ति न मे कर्मफले स्पृहा ।
## इति मां योऽभिजानाति कर्मभिर्न स बध्यते ॥ १४ ॥

*वि०वि०*— ततः किमित्यत आह **न मामिति** । इतश्च न लिम्पतीत्याह **न माम् इति** । स्पृहाऽभिनिवेशः । इच्छामात्रं त्वस्ति । तदुक्तम्—

'आकाङ्क्षन्नपि देवोऽसौ नेच्छते लोकवत् परः ।
न ह्याग्रहस्तस्य विष्णोर्ज्ञानं कामो हि तस्य तु ॥'

इति । यस्यालिप्तत्वं जानन्नपि सर्वकर्मलेपान्मुच्यते, 'न मां कर्माणि लिम्पन्ति' इति किं वर्णनीयमित्याशयेनाह **इतीति** । प्रकरणात् सिद्धेऽपि पुनर्मामिति विशेषणं जीवाभेदनिवृत्त्यर्थम् ॥

*वा०ल०*— तदेव विवेचयति— **न मां कर्माणि लिम्पन्ति इति** ॥

*सा०सं०*— ततः किमित्यत आह **न मामिति** । जीवविलक्षणक्रियावत्त्वेनाकर्तृत्वात् । **मां कर्माणि न लिम्पन्ति** । किञ्च जीवानां कर्मलेपेऽभिनिवेशो हेतुः, नच मेऽसावस्तीत्याह **न मे कर्मफले स्पृहेति** । फलप्राप्तिपर्यन्तं मनोविक्षेपशब्दितोऽभिनिवेशः **कर्मफले मे नास्ति** । अतोऽपि न लिम्पन्ति कर्माणीत्यर्थः । कैमुत्येनापि स्वस्य कर्मालेपमाह **इतीति** । कर्मलेपो मे नास्ति तत्फले स्पृहाऽपि नेत्येवं **मां योऽभिजानाति सोऽपि कर्मभिर्न बध्यते** । किम्वहमिति । 'इति योऽभिजानाति' इति वाच्ये 'माम्' इति पुनर्वचनं स्वस्य ईश्वराभेदाभिप्रायेण । स्वात्मानमुद्दिश्य 'न मां कर्माणि लिम्पन्ति' इत्यादि यो जानाति जीवाभेदप्रतीतिनिरासाय । मां योऽभिजानाति न स्वात्मानमिति ॥

*अ०प्र०*— तदेव दर्शयन्नाह **न मां इति** ।

हे पार्थ !, मां[१], कर्माणि[२], न लिपन्ति[३], मे[४], कर्मफले[५], स्पृहा न च यः[८], मां[९], इति[१०], अभिजानाति[११], सः[१२], कर्मभिः[१३], न बध्यते इत्यन्वयः ।

हे पार्थ !, मां कर्माणि = विश्वसृष्ट्यादीन्यपि कर्माणि[२], न लिम्पन्ति = असक्तं न कुर्वन्ति निरहङ्कारत्वात् न कर्मलेपः, कर्मफले स्पृहाभावाच्च[३], मे = मम[४], कर्मफले[५], स्पृहा[६], न च[७], यद्वा

अभिनिवेशो नास्तीत्यतोऽपि येन कर्मलेपः परार्थं फलेच्छासत्त्वेऽपि न तत्राग्रहरूपो निवेशः फलप्राप्तिपर्यन्तं मनसो विक्षेपो येन भवति सोऽभिनिवेशः आग्रह इत्यर्थः ।

तदुक्तम्—

आकाङ्क्षन्नपि देवेशो नेच्छते लोकवत्परः ।
न ह्याग्रहस्य विष्णोर्ज्ञानकं मोहितस्य तु ॥ इति ॥

यस्यालेपं जानन्नपि कर्मलेपाद्विमुच्यते । तं कर्माणि न लिम्पन्तीति किं वाच्यमित्याह[८], इति मां[९,१०], योऽभिजानाति यतः कर्मफले स्पृहाराहित्येन मां योऽभिजानाति[११] सः कर्मभिः न बध्यते = मम निर्लेपत्वकारणं निरहङ्कारत्व-निःस्पृहत्वादिकं जानतः तस्यापि अहङ्कारादिशैथिल्यात् सोऽपि कर्मभिर्न बध्यते ॥

**भाष्यम्**

**अत एव न मां कर्माणि लिम्पन्ति । इतश्च न लिम्पन्तीत्याह— न मे कर्मफले स्पृहा । इच्छामात्रं त्वस्ति । न तु तत्राभिनिवेशः । तच्चोक्तम्—**

**"आकाङ्क्षन्नपि देवोऽसौ नेच्छते लोकवत्परः ।**
**न ह्याग्रहस्तस्य विष्णोर्ज्ञानं कामो हि तस्य तु ॥" इति ॥**

**न च केचिन्मुक्ता भवन्तीति क्रमेण सर्वमुक्तिः । तथा हि श्रुतिः—**

**"ज्ञात्वा तमे मे मनसा हृदा च**
**भूयो न मृत्युमुपयाति विद्वान् ॥" इति ।**
**"कथं वा इत्यनन्ता इत्यनन्तवदिति होवाच ॥"**

**—इति ॥ १४ ॥**

***प०टी०***— ननु चातुर्वर्ण्यकर्ता चेद्भगवान्, तर्हि तस्य महत्कर्मलेपः स्यादित्यत आह **अत एवेति** । मनोऽभिनिवेशाभावादेवेत्यर्थः । इतश्च न कर्मलेपो ममेत्यर्थं श्लोकमवतारयति **इतश्चेति** । ननु कथं भगवतो न फलेच्छा ? 'स्रक्ष्ये हि चेतनगणान्' इति फलेच्छादर्शनादित्यत आह **इच्छामात्रमिति** । ममेदं फलं स्यादित्याग्रहोऽभिनिवेशः । एतस्मिन्नेवार्थे प्रमाणमाह **आकाङ्क्ष-न्निति** । ननु यदि भगवज्जन्मादिज्ञानान्मोक्षः, सन्ति च तथा मुक्ताः, तर्हि गतकालस्यानन्तत्वात्

प्रतिकल्पमेकैकमुक्तावप्यशेषजीवसमाप्तिरित्याशङ्क्य श्रुत्या परिहरति **न चेति** । यदि तं ज्ञात्वा भूयो न मृत्युरिति पक्षः कथं तर्हीति दृश्यमानप्रकारेणानन्तानन्त्याद्यपीति प्रश्ने, अनन्तवत् इति परिहारः । यथा परमात्मनोऽनन्तरूपाणि तथा तत्प्रतिबिम्बजीवानामानन्त्यमित्यर्थः । अतीतवत्सरवासरादिवदानन्त्येऽपि विशेषोऽस्त्येव ॥

*न०टी०*—ननु यदि परमार्थतः कर्ता भगवान् सर्वस्यापि चातुर्वर्ण्यस्य, तर्हि किञ्चित्कर्तृभ्यो जीवेभ्योऽतिशयेनैव लिप्येतैतैः कर्मभिः । अतः कथं तस्येशत्वम् ? इत्याशङ्क्य, परिहारत्वेनोत्तरं श्लोकं व्याचष्टे **अत एवेति** । यत एवं सर्वकर्मिणां, सर्वकर्मणां तत्फलानां चानभिनिवेशादेव कर्ता हरिः, **अतः** सर्वेशत्वात् **एव न** तं **कर्माणि लिम्पन्ति** । न तु कर्तृत्वाद्यपारमार्थिकत्वनिश्चयादित्यर्थः । इतोऽपि न भगवतः कर्मलेपः तदपारमार्थिकत्वनिश्चयात् किन्त्वाप्तकामत्वेन निःस्पृहत्वादेवेत्याह **इतश्चेति** । ननु भगवान् चातुर्वर्ण्यं सर्वं वा जगत् प्रविश्य विहर्तुं हि तत् ससर्ज । सा विहृतिर्जगत्सुखदुःखमध्यसम्प्राप्तयेऽस्तु नाम । तथाऽपि सा विहारेच्छा कर्मफलेच्छैव । अतः कथं न तस्य कर्मफलस्पृहा ? इत्यत आह **इच्छामात्रं त्विति** । आप्तकामत्वाविरोधित्वान्नेच्छामात्रास्तित्वे कश्चिद्दोषः, अपि तु गुण एवेति भावः । कुतोऽयं विशेषः ? इत्यत आह **तच्चेति** । उत्तरार्धस्य यदपव्याख्यानम् - 'एवं योऽन्योऽपि मामात्मत्वेनाभिजानाति तत्स्वाधीनदेहारम्भककर्माणि' इति । तत्र 'आत्मत्वेन' इति पदाध्याहारस्यायोगात्, अनुपयोगाच्चेति स्पष्टत्वान्न तद्दूषणमुद्भावितम् । यदलिप्तत्वज्ञान्यपि कर्मलेपात् मुच्यते, न तं कर्माणि लिम्पन्तीति किमु वर्णनीयमिति व्याख्यानमविस्पष्टत्वान्न कृतम् । नन्वेक एव जीवः प्रतिबिम्बरूपः । तदज्ञानपरिकल्पितमेव चतुर्वर्णादिजडाजडात्मकं विश्वम् । न तु कश्चित् परमार्थतः कर्ता विश्वस्य । तस्येदानीमपि नाहं कर्ता न मे कर्मफलस्पृहा इत्यापरोक्ष्येणात्मनो बिम्बैक्याज्ञानादेवेदं विश्वं प्रतीयते । येषां तु पक्षे परमार्थत एव परेशात् स्वातन्त्र्यादिसकलकल्याणगुणगणाकरात् मुखबाहूपद्भ्यश्चातुर्वर्ण्याद्यनेकविभेदं विश्वमुत्पद्यते तत्तथात्वज्ञानादेव च मुक्तिर्जीवानाम्, तेषां पक्षेऽस्मत्पक्षे वेतपुराः न कस्यापि मुक्तिरिति न । किन्तु यदा केचित् ज्ञानिनस्तदा ते मुक्ता भवन्ति, तदनन्तरं च केचिदिति । एवं सति क्रमेण सर्वमुक्तिः स्यात् । तथा सत्यनादितोऽतीतस्यैव कालस्यानन्त्यादेतद्दिनपर्यन्तं विश्वं न प्रवर्तेतेति भावेनाशङ्क्य परिहरति **न चेति** । इतिशब्दो हेत्वर्थः । केचिन्मुक्ता भवन्तीत्यस्माद्धेतोर्न सर्वमुक्तिराशङ्कनीया । अनन्तत्वाज्जीवानामिति भावः । वेदोऽपीमं प्रश्नं परिहरतीत्याह । '**तं** परमात्मानम् **एवं** उक्तप्रकारेण **मनसा** ज्ञानेन **हृदा** प्रेम्णा च दृष्ट्वा **पुनर्मृत्युं नोपयाति विद्वान्**' इति वदन्ति वैदिकाः । 'तर्ह्यनन्ताः संसारिणः कथं दृश्यन्ते ? किन्त्वितःपूर्वमेव सर्वमुक्तिः स्यात्' इति

प्रश्नाशयः । **इतिशब्दः** प्रश्नसमाप्तौ । **अनन्तवदिति होवाच** इति परिहारः । यथा हि बिम्बभूतो भगवाननन्तसङ्ख्यस्तद्वत् तत्प्रतिबिम्बभूतजीवोऽपीत्यर्थः । 'रूपं रूपं प्रतिरूपो बभूव' इत्यादिश्रुतेः । न चातीतकालानन्त्यात् जीवानन्त्येऽपि सर्वमुक्तिः स्यादिति वाच्यम् । जीवानामेकैकराशेरेव मिलितातीतानागतकालक्षणेभ्योऽप्यनन्तगुणितत्वोक्तेर्वत्सश्रुतौ ॥

*प्र०दी०*— अपव्याख्यानस्य दूषणान्तरं सूचयन् क्रियावैलक्षण्यकथनस्य का सङ्गतिरित्यत उत्तरेण सङ्गतिमाह— **अत एवेति** । एवशब्देनास्मद्व्याख्यान एव हेतुहेतुमद्भावो युज्यते न परव्याख्यान इति सूचयति । जीवानां कर्मलेपेऽभिनिवेशादिकं कारणं तदस्य नास्तीति । मिथ्यात्वं तु जीवक्रियाणामपि समानमिति । तेषामपि लेपाभावे किमाश्रय आक्षेपः स्यात् । ज्ञानेन विशेष इति चेन्न । तस्याश्रवणात् । लेपनिवारणं च व्यर्थम् । तस्यापि मिथ्यात्वेन ज्ञातव्यत्वात् । हेतुहेतुमतोरुक्तत्वात् 'न मे कर्म' इति किमर्थमित्यत आह— **इतश्चेति** । नन्वात्मार्थं भगवतः फलस्पृहाभावेऽपि परार्थमस्त्येव । तत्कथमेवमुच्यत इत्यत आह— **इच्छेति** । तत्र कर्मफले । येन तत्प्राप्तिपर्यन्तं मनसो विक्षेपः सोऽभिनिवेशः । अत्र प्रमाणमाह— **तच्चेति** । 'व्यत्ययो बहुलं' इति व्यत्ययः ।

ज्ञानं ज्ञानमिव । 'इति मां' इत्येवं ज्ञानिनो मुक्तिः फलमुच्यते । सा च वर्तमानप्रत्ययेन । प्राक् च भूतप्रत्ययेन 'मद्भावमागता' इति । तत्रैकजीववादिनामाक्षेपमुद्भाव्य प्रतिषेधति— **न चेति** । केचिदिदानीं मुक्ता भवन्ति, केचिद्भूता इति पक्षेऽतीत एव काले क्रमेण सर्वमुक्तिः स्यात् । तथा चेदानीं संसारानुपलम्भः स्यादिति न शङ्कनीयम् । कस्मात् । यतः श्रुतिरेवैवमाशङ्क्य पर्यहार्षीदित्याह— **तथा हीति** । हृदा बुद्ध्या च । इत्येतत्कथं वै युज्यते । उक्ताऽऽक्षेपादिति शङ्कायां 'अनन्ता जीवाः' इत्युत्तरम् । ननु कालोऽप्यनन्तोऽत इत्यस्योत्तरं 'अनन्तवत्' इति । यथा भगवान् कालक्षणेभ्योऽप्यतिशयेनानन्तः तथाऽनन्ताः । कुतः ? इति होवाच श्रुत्यन्तरमिति ॥

*भा०दी०*— **अत एवेतीति** । लोकविलक्षणक्रियावत्वादेवेत्यर्थस्य स्पष्टत्वादेवकारमात्रार्थमाह **एवशब्देनेति** । युज्यत इत्याद्युक्तं व्यनक्ति **जीवानामिति** । **आक्षेप इति** । चातुर्वर्ण्यं त्वया सृष्टं चेत्तर्हि कर्तृत्वाज्जीववत्तवापि कर्मलोपः प्रसज्यत इत्यर्जुनकृताक्षेपः । किमाश्रयः कं दृष्ट्वा तमाश्रित्य प्रवर्तेत येन तस्येत्याद्युत्तरार्धे परिहारो घटतेत्यर्थः । नन्वीश्वरस्य क्रियाणां मिथ्यात्वज्ञानादलेपो जीवस्य तु तदभावाल्लेप इति शङ्कते **ज्ञानेनेति** । लेप इति जीवस्य मिथ्यात्वाज्ञानाल्लेपे सति निवारणं च व्यर्थं अलेपार्थं मिथ्यात्वज्ञानस्यैव सम्पाद्यत्वादित्यर्थः । **हेतुहेतुमतोरिति** । अकर्तारमित्यभिनिवेशाभावरूपहेतोर्न मे कर्माणि लिम्पन्तीत्यनेन साध्यस्य चोक्तत्वादित्यर्थः ।

नन्विषु इच्छायामित्यस्य परस्मैपदत्वादिच्छत इति कथमित्यत आह **व्यत्यय इति** । यद्यपि तृतीयाद्यपादे शबादिविकरणोक्तिप्रस्तावे 'व्यत्ययो बहुलमि'ति सूत्रं तस्य च वृत्ती यथा अथ-शब्दादयो विकरणाः विहिताः तेषां छन्दसि विषये बहुलं व्यत्ययो भवतीत्यर्थ उक्तः । तथापि प्रवृत्तावेव अलं ग्रहणं सर्वव्यभिचारनियमार्थं सुप्तिङुपग्रहलिङ्गनराणां कालहच्स्वरकर्तृयणं च । व्यत्ययमिच्छति शास्त्रकृदेषां सोऽपि च सिध्यति बाहुलकेनेत्यप्यु............ ग्रहशब्दितपरस्मैपद-स्यात्मनेपदत्वेन व्यत्यय इत्यर्थः । काङ्क्षन्नित्यत्र काङ्क्षिवसिमक्षिकाङ्क्षायामिति परस्मैपदे प्रोक्त....... पादोऽनुपपत्तिशङ्केति तदर्थमयं समाधिरिति न मन्तव्यम् । **ज्ञान**मित्यनुवादः **ज्ञानमिवे**ति व्याख्या । यथा ज्ञानप्रमैकरूपं न तु भ्रम..थाकामोऽपि इच्छारूपमेव न त्वभिनिवेशरूपमित्यर्थः । **फलमुच्यत इति** । गीतायामिति योज्यम् । **आगता इति** । भूतप्रत्ययेन मुक्तिः फलमित्यत इति योजना । भाष्यमित्युपलक्षणं मत्वाह **केचिद्भूता इति** । मुक्ता भूतामित्यर्थः । **इति होवाचे**त्यत्र कर्त्राकाङ्क्षा-................तरमिति । कर्मकरणमिति सप्तम्यन्तम् ॥

*भा०र०*— **क्रियावैलक्षण्यकथनस्येति** । तस्य कर्तारमपि मां क्रियायां वैलक्षण्यादकर्तारं विद्धीत्युक्तक्रियावैलक्षण्यकथनस्येत्यर्थः । "अत एव" इति भाष्ये **अतो** लोकविलक्षणक्रियात्वाद् इत्यस्यातिरोहितत्वाद् एवकारतात्पर्यमाह **एवशब्देनेति** । **प्राचीनटीकायां** तु यत एवं सर्वकर्मणां तत्फलानां चानभिनिवेशादेव कर्ता हरिः अतः सर्वेशत्वादेव "न मां कर्माणि लिम्पन्ति" न तु कर्तृत्वाद्यपारमार्थिकत्वनिश्चयादित्यर्थ इत्युक्तम् । **अस्मद्व्याख्याने** क्रियायां वैलक्षण्यात् कर्ता-प्यकर्तेति व्याख्याने । अत्र हेतुहेतुमद्भावमुपपादयति **जीवानामिति** । 'अभिनिवेशादिकम्' इत्यत्र आदिशब्देन क्रियाया अस्वरूपत्वं ग्राह्यम् । भागवती तु क्रिया स्वरूपमेव, "क्रिया कृतिः" इत्युक्तेरिति ज्ञातव्यम् । इतिशब्दस्य "इति सूचयति" इत्यन्वयः । परव्याख्याने हेतुहेतुमद्भाव-योगमुपपादयति **मिथ्यात्वं त्विति** । तथा च क्रियाया मिथ्यात्वाद् अकर्ता भगवानित्यनुमानस्य जीवे व्यभिचार इति भावः । साध्यस्यापि सत्त्वान्न व्यभिचार इत्याशङ्क्याह **तेषामपीति** । **आक्षेप इति** । यदि चातुर्वर्ण्यं त्वया सृष्टं तर्हि कर्तृत्वाज्जीववत् तवापि कर्मलेपः प्रसज्येतेति अर्जुनस्य **आक्षेपः किमाश्रयः** कं दृष्टान्तमवलम्ब्य प्रवर्तेत । येन 'तस्य' इत्युत्तरार्धे परिहारो घटेतेति भावः । व्यावहारिकं लेपमाश्रित्य हेतुहेतुमद्भावायोग उक्तः । परमार्थतो लेपाभावेन परमते आक्षेपा-नुपपत्तिरियमुद्भावितेति न कश्चिद्दोषः ।

**केचित्तु** 'समानम्' इत्यत्रत्येतिशब्दस्य सूचयतीत्यन्वयः । एवं भाष्यगतैवशब्दसूचितं दूषण-मभिधाय स्वयं दोषान्तरमाह **तेषामपीति** । "मिथ्यात्वं तु" इति पूर्वोक्तमत्रापि हेतुत्वेन सम्ब-

ध्यते । चातुर्वर्ण्यकर्तृत्वात्तवापि लेपः स्यादित्याक्षेपो न युक्तः । क्रियामिथ्यात्वेन जीवानामपि लेपाभावे निराश्रयत्वादिति भाव इति व्याचक्षते । ननु क्रियामिथ्यात्वे समानेऽपि तत्त्वेन ज्ञाना-भावाज्जीवानां लेपः । ईश्वरस्य तु तद्भावालेपः । तथा च जीवदृष्टान्तसमाश्रयणेन आक्षेपः सेत्स्य-तीति शङ्कते **ज्ञानेनेति** । तर्हि तस्य कर्तारमपि मां क्रियामिथ्यात्वज्ञानवन्तं मां विद्धीति वक्त-व्यम् । न चैवं गीतायां श्रूयत इत्याह **तस्येति** । प्रत्युत 'अकर्तारम्' इत्येव हि श्रूयत इति भावः । एवं "तस्य कर्तारम्" इति गीतावाक्यमसमञ्जसं परपक्ष इत्यभिधाय "न मां कर्माणि" इति वाक्यमसङ्गतमित्याह **लेपनिवारणं चेति** । **तस्य** लेपस्य । न केवलं क्रियाया इत्यपिशब्दः । **मिथ्यात्वेन** प्रकारेण **ज्ञातव्यत्वात्** ज्ञातव्यतयाऽभिधातव्यत्वात् ।

इदमुक्तं भवति । यथा 'विद्ध्यकर्तारम्' इत्यत्र क्रियामिथ्यात्वं मुमुक्षुं प्रति ज्ञातव्यतया-ऽभिधीयत इति तवाभिमानः, तथा 'विद्ध्यलेपम्' इति लेपमिथ्यात्वमपि ज्ञातव्यतया वक्तव्यम् । मोक्षसाधनत्वाविशेषात् "न मां कर्माणि लिम्पन्ति" (४.१४) इति कर्मलेपाभावमात्रकथनमप्रयो-जनम् । अन्यथा क्रियामिथ्यात्वस्याप्यवक्तव्यत्वापातादिति । **हेतुहेतुमतोरिति** । "तस्य कर्तारमपि मां विद्ध्यकर्तारम्" (४.१३) इत्यत्राभिनिवेशाभावरूपहेतोः, "न मां कर्माणि लिम्पन्ति" इति हेतु-मच्छब्दितसाध्यस्य चोक्तत्वादित्यर्थः । **'इतश्च'** इति भाष्यस्य आप्तकामत्वेन कर्मफलस्पृहाऽभावा-च्चेत्यर्थः । 'स्पृहा' इत्यनन्तरं 'इति'शब्दो भाष्येऽध्याहार्यः । **अस्त्येवेति** । "स्रक्ष्ये हि चेतनगणान् सुखदुःखमध्यसम्प्राप्तये तनुभृताम्" इति भारततात्पर्यनिर्णये (१.५) तथोक्तेरिति भावः । आप्त-कामत्वाविरोधीच्छामात्रसद्भावो न दोषाय, अपि तु गुणायैवेति भाष्यभावः स्फुटत्वान्नोक्तः । हेतु-द्वयस्यैकरूपत्वाद्भाष्ये 'इतश्च' इति चशब्दायोग इत्यतोऽभिनिवेशशब्दार्थमाह **येनेति** । **अत्र** भगवत उक्तरूपाभिनिवेशाभावे ।

ननु 'इच्छते' इति कथमात्मनेपदम् ? "इषु = इच्छायाम्" इति धातोर्नित्यपरस्मैपदित्वा-दित्यत आह **व्यत्यय इति** । यद्यपीदं सूत्रं यथायथं विकरणप्रत्यया विहिताः तेषां छन्दसि विषये बहुलं व्यत्ययो भवति । व्यतिगमनं व्यत्ययः विषयान्तरे विधानम् । बहुलग्रहणं सर्वविधिव्यभि-चारार्थमिति व्याख्यातमिति नात्मनेपदविधानरूपत्वमस्य । तथापि तत्रैव सूत्रे

सुप्-तिङ्-उपग्रह-लिङ्ग-नराणां काल-हल्-अच्-स्वर-कर्तृ-यङां च ।
व्यत्ययमिच्छति शास्त्रकृदेषां सोऽपि च सिद्ध्यति बाहुलकेन ॥

इति वार्तिकवचने उपग्रहशब्दितपरस्मैपदस्यात्मनेपदत्वेन व्यत्ययोऽत्र द्रष्टव्य इति भावेनेयमुक्तिः । पुराणवचनस्यापि छन्दस्तुल्यतया छन्दस्त्वमभिमतमिति 'छन्दसि' इत्यनुवृत्तावपि न दोषः ।

**आग्रह** उक्तरूपोऽभिनिवेश इति भाष्यार्थः । ननु "ज्ञानं कामः" इति ज्ञानकामयोस्तादात्म्यमुच्यमानम् अयुक्तमनुपयुक्तं चेत्यत आह **ज्ञानं ज्ञानमिवेति** । यथा विष्णोर्ज्ञानं न मिथ्याप्रत्ययरूपम्, तथा काम इच्छारूपोऽपि नाभिनिवेशात्मक इत्यर्थः । "परत्र परशब्दः प्रयुज्यमानोऽन्तरेणापि वतिं वत्यर्थं गमयति" इति शाब्दिकवचनात् ज्ञानतुल्यत्ववचनस्य च कामेऽनाग्रहरूपत्वप्रतिपत्त्यर्थत्वादिति भावः । **मुक्तिः फलमिति** । कर्मबन्धविमोचनस्यैव मुक्तिरूपफलत्वादिति भावः । **सा च** मुक्तिः । वर्तमानप्रत्ययेन 'बाध्यते' इति लटा । **प्राक्** पूर्वश्लोके 'मद्भावमागताः' इति भूतार्थकनिष्ठाप्रत्ययेन च । 'उच्यते' इत्यस्ति ।

**एकजीववादिनामाक्षेपमिति** । ते ह्येवं मुक्तसंसारिव्यवस्थामाक्षिपन्ति । यदि बहवो जीवास्तेषु केचिन्मुच्यन्ते केचित्संसरन्तीत्येतदेव युक्तं स्यात्, न चैवम् । तथा सत्यैकैकमाषापचये माषराश्यपचयक्रमेण, एकैकस्य जीवस्यापवर्गे अनादौ काले सर्वेषां संसारिणां समाप्तिः स्यात् । ततश्च इदानीं संसारोपलम्भो न स्यात् । तस्मादेक एव जीवः । स चेदानीमपि संसरति, न तु कश्चिन्मुक्तोऽस्ति । "शुको मुक्तः" इत्यादयस्त्वर्थवादाः प्ररोचनार्था इति "इदानीं मुक्ता भवन्ति" इति कथम् ? क्तप्रत्ययस्य भूतार्थत्वेनानन्वयादिति चेन्न । भवन्तीति वर्तमानार्थप्रत्ययानुरोधेन निष्ठाप्रत्ययस्यापि वर्तमानार्थत्वात् । "धातुसम्बन्धे प्रत्ययाः" इति सूत्रे अग्निष्टोमयाज्यस्य पुत्रो जनिता, कृतः कटः, श्वो भविता इत्युदाहृत्य 'अग्निष्टोमयाजी' इति भूतकालः, 'जनिता' इति भविष्यकालेनापि सम्बध्यते इति वृत्तिकृता "अयथाकालाश्रयिप्रत्ययाः साधवो भवन्ति" इत्युक्तत्वात् "केचिन्मुच्यन्ते" इति क्रमेण सर्वमुक्तेरिति भाषितुं शक्येऽपि यत् 'मुक्ताः' इति निष्ठाप्रत्ययान्तग्रहणं तत्तात्पर्यम् **केचिद्भूता इति** । मुक्ता निष्पन्ना इत्यर्थः । **इति पक्ष इति** । सत्यस्वाभाविकबहुजीववादमभ्युपगम्य केचिन्मुक्ताः केचिन्मुच्यन्त इति पक्ष इत्यर्थः । 'मुक्तिः' इत्यनन्तरं भाष्ये शेषमाह **स्यात्, तथा चेत्यादि** । अनेन एकजीववादिनामाक्षेपोऽपि किञ्चिद्विवृतो भवति ।

**पर्यहार्षीत्** परिहृतवती । "मनसा हृदा च" इति पुनरुक्तम् । "स्वान्तं हृन्मानसं मनः" (अमरः) इत्यभिधानादिति वा "चन्द्रमा मनो भूत्वा हृदयं प्रविशद्" (ऐ.उ. २.३.२) इति श्रुत्या हृदयस्य मनोधिष्ठानत्वावेदनेन "हृदा ज्ञात्वा" इति कथं ज्ञानकरणत्वोक्तिरित्यतः **हृदा बुद्ध्या चेति** । **प्राचीनटीकायां तु "मनसा** ज्ञानेन ज्ञात्वा **हृदा दृष्ट्वा** अपरोक्षीकृत्य च" इत्युक्तम् । **मृत्युं** मृत्युशिरस्कं संसारम् इत्यनन्तरम् 'एतद्' इति, "कथं वा" इत्यनन्तरं 'युज्यते' इति, 'उक्ताक्षेपाद्' इत्यनन्तरं 'शङ्कायाः' इति 'अनन्ताः' इत्यनन्तरं 'जीवाः' इति च शेषोक्तिः । **अतः**

अनन्ततयोक्तजीवेभ्यः । कालस्यानन्तत्वात् तत्र कदाचित्सर्वमुक्तावुक्तदोषः स्यादिति भावः । श्रुतिशेषमवतारयति **कुत इति** । 'उवाच' इत्यत्र कर्त्राकाङ्क्षां पूरयति **श्रुत्यन्तरमिति** । सप्रपञ्चमेवोपपादितं "न संसारिणां समाप्तिरस्मत्पक्षे" इत्यादिविष्णुतत्त्वनिर्णयतट्टीकयोः ॥ १४ ॥

*गीताक्षरार्थस्तु*— "ये यथा माम्" इति त्रैविद्यानां न महाफलं मोक्ष इत्युक्तम् । तत्कुतः ? यतोऽहं चातुर्वर्ण्यस्य कर्ता, त्रैविद्याश्च तदन्तर्भूताः । तस्मात् स्वपितरं मां परित्यज्यान्यदेवता यजन्तः कथं महाफलभाजो भवेयुः ? इति भावेनोच्यते **चातुर्वर्ण्यमिति** । चतुर्वर्णसमुदायः **गुणकर्मविभागशः** सत्त्वादिगुणविभागेन शमदमादिकर्मविभागेन च **मया सृष्टम्** । ब्राह्मणक्षत्रियादयो मया सृष्टाः । यदि चातुर्वर्ण्यं त्वया सृष्टं तर्हि कर्तृत्वाज्जीववत् तवापि कर्मलेपः प्रसज्येतेत्यतः कर्मलेपाभावं "न मां कर्माणि" इत्यनेन वक्तुं हेतुस्तावदुच्यते **तस्येति** । **तस्य** चातुर्वर्ण्यस्य **कर्तारमपि** मां जीवविलक्षणकर्तृत्वाद् **अकर्तारं विद्धि** ॥ १३ ॥

ततः किम् ? इत्यत उक्तम् **न मामिति** । 'माम्' इति जीवविलक्षणकर्तारमित्युक्त्या जीवानां कर्मलेपेऽभिनिवेशादिकं कारणम्, मम तु तन्नास्तीति न मम कर्मलेपावकाश इत्युक्तं भवति । इतश्च न लिम्पन्ति– यतो **न मे कर्मफले स्पृहा** । एवं ज्ञानिनो मुक्तिः फलमुच्यते **इतीति** । न भगवतः कर्मलेपः, नापि फले स्पृहेत्येवंप्रकारेण **मां योऽभिजानाति स कर्मभिर्न बध्यते** स कर्मबन्धविनिर्मुक्तो भवतीति ॥ १४ ॥

**गीता**

## एवं ज्ञात्वा कृतं कर्म पूर्वैरपि मुमुक्षुभिः ।
## कुरु कर्मैव तस्मात् त्वं पूर्वैः पूर्वतरं कृतम् ॥ १५ ॥

*वि०वि०*— एवं ज्ञात्वा यदि ज्ञानी कर्मभिर्न बध्यते तर्हि ममापि ज्ञानित्वेन कर्मबन्धाभावात् कथं कर्मविधानमित्याशङ्क्य ज्ञानिनामप्यधिकमोक्षाकाङ्क्षायां कर्मकरणे आचारोप्यस्तीत्याह **एवमिति** । पूर्वतरं ततोऽपि पूर्वैः कृतत्वेन पूर्वभावीत्यर्थः ॥

*सा०सं०*— यदि ज्ञानी कर्मभिर्न बध्यते तर्हि ममापि ज्ञानित्वात् कर्मबन्धाभावरूपमुक्तिसत्वात् कथं कर्मविधानमित्यतो ज्ञानिनामप्यधिकमोक्षाकाङ्क्षया कर्मकरणे आचारोऽप्यस्तीत्याह **एवमिति** । प्राक् जनकादीनां विवस्वदादीनां च विद्यमानमपि ज्ञानित्वं भगवतो न विवक्षितम् । अत्र तु विवक्षितमिति न तेन पौनरुक्त्यं शङ्क्यम् । **पूर्वैर्मुमुक्षुभिः** । 'आकेः तच्छीलतद्धर्म-

तत्साधुकारिषु' इति तत्साधुकारिण्युप्रत्ययः । अधिकमोक्षेच्छावद्भिः । **एवम्** उक्तप्रकारेण । हरिं **ज्ञात्वाऽपि कर्म कृतम्** । **तस्मात् त्वमपि पूर्वैः कृतं पूर्वतरं** ततोऽपि पूर्वभावि । **कर्म कुर्विति** ॥

***अ०प्र०***— ये यथा मां प्रपद्यन्ते इत्यादिभिश्चतुर्भिः श्लोकैः प्रासङ्गिकमीश्वरस्य वैषम्यं परिहृत्य पूर्वोक्तमेव कर्मयोगं प्रपञ्चयितुमनुस्मारयति **एवमिति** ।

यस्मात् पूर्वैरपि[१], मुमुक्षुभिः[२], एवं ज्ञात्वा[३], पूर्वैः पूर्वतरं कृतं[४], कर्म[५], कृतं[५], तस्मात् त्वं[६], कर्मैव कुरु[८] ।

यस्मात्कारणात् पूर्वैरपि = त्वत्प्राक्कालीनैः देवर्षिराजभिः जनकादिभिरपि[१], मुमुक्षुभिः = विशेषमोक्षेच्छाशीलैः[२], एवं ज्ञात्वा = अहङ्कारादिराहित्येन सर्वकर्तृत्वं निर्लेपत्वकारणनिरहङ्कारत्व-निःस्पृहत्वादिकं विष्णोर्ज्ञात्वा[३], पूर्वैः पूर्वतरं कृतं = पूर्वैः देवादिभिः पूर्वतरं युगान्तरेष्वपि कृतं[४], कर्म कृतं[५], तस्मात् त्वं = प्रथमं[६], कर्मैव कुरु[८], सफलत्वात् ॥ १५ ॥

**भाष्यम्**

**एवं ज्ञात्वाऽपि कर्मकरण आचारोऽप्यस्तीत्याह— एवमिति । पूर्वतरं कर्म पूर्वभावीत्यर्थः ॥ १५ ॥**

***प०टी०***— ननु यद्येवं ज्ञानादेव मोक्षः, तर्हि मुमुक्षुरहं किमिति कर्मकर्ता ? इति पूर्वोक्तं विस्मृत्य माचोदयेत्यभिप्रायेणोत्तरश्लोकमवतार्य व्याचष्टे **एवमिति** ॥

***न०टी०***— ननु 'अजोऽपि' इत्युक्तलक्षणपरब्रह्मतत्त्वापरोक्षज्ञान्येवार्जुनो मुमुक्षुश्च, इन्द्रावतारत्वात् । 'नैव देवपदं प्राप्ता ब्रह्मदर्शनवर्जिताः 'इत्यादिश्रुतेः । अतः कथं 'स एवायं मया तेऽद्य योगः प्रोक्तः' इति भगवताऽत्युत्तमकर्मयोग उपदिश्यते ? इत्याशङ्कां सूचयन् तत्परिहारत्वेनोत्तरं श्लोकमवतार्य व्याचष्टे **एवमिति** । भवतु मुमुक्षुरपरोक्षज्ञानी च । तथाऽपि ज्ञानाङ्गत्वेन तत्पूर्वमवश्यम्भावि यत्कर्म, यज्ज्ञात्वाऽपि कुर्वेव । न तूष्णीं तिष्ठ । फलेऽतिशायकत्वात् तस्य । न ह्यन्यथा पूर्वे मुमुक्षवो ज्ञात्वाऽपि कर्म कुर्वन्तीत्यर्थः ॥

***प्र०दी०***— ननु 'एवं ज्ञात्वा' इति पुनरुक्तम् । कर्मकरण आचारस्य प्रागेवोक्तत्वादित्यत आह— **एवमिति** । यदि ज्ञानी कर्मभिर्न बध्यते तर्हि ममापि ज्ञानित्वेन कर्मबन्धाभावात्कथं कर्मविधानमित्याशङ्क्य ज्ञानिनामप्यधिकमोक्षाकाङ्क्षायां कर्मकरण आचारोऽत्रोच्यते । प्राक् तु

जनकादीनां विवस्वदादीनां च विद्यमानमपि ज्ञानित्वं भगवता न विवक्षितमिति भावः । अत एव भाष्यकारेण तत्र 'कर्म कृत्वैव' इत्याद्युक्तम् । न हि ज्ञानिनां कर्म ज्ञानद्वारा मुक्तिहेतुः । मुमुक्षुभिरिति तत्साधुकारिण्युप्रत्ययः । 'पूर्वैः कृतं' इत्यनेनैव पूर्वतरत्वस्योक्तत्वात्पुनरुक्तिरित्यत आह— **पूर्वतरमिति** । तैरपि ततोऽपि पूर्वभावि कृतमित्यर्थः । कर्मणः क्षणिकत्वात्कथं तदेव कर्तव्यमित्यतो वा इदमुक्तम् । पूर्वमिव भवतीति पूर्वभावि । अत एव कर्मेत्यनुवादः ॥

*भा०दी०*— **उक्तत्वादिति** । इमं विवस्वत इत्यादिनेति भावः । इति मामित्यादि पूर्णश्लोकोत्तरार्धानुवादाय .......त्यादि । **अत एवेति** । ज्ञानित्वस्याविवक्षितत्वादेवेत्यर्थः । तस्य विवक्षायां तु 'कर्माकरणेऽप्यनियमः सर्वेषामि'ति सूत्रोक्तदिशा मुक्तिसिद्धेः । **कर्मकृत्वैवेति** । कर्मकरणनियमोक्तिर्न स्यादिति भावः । कर्मकृत्वैवेत्युक्त्या कथं ज्ञानित्वाविवक्षालाभ इत्यत आह **न हीति** । एवं कर्मकृत्वैवेति नियमोक्तिर्घटितेति वाक्यशेषः । यद्वा ज्ञानिकृतमपि ज्ञानद्वारस्तु मुक्तिहेतुः कुतोऽधिकमोक्षहेतुत्वकल्पनेत्यत आह **न हीति** । हिशब्देनानन्दवृद्धिहेतुत्वे प्रमाणप्रसिद्धिं सूचयति । नन्वेवं गीतायां आनन्दवृद्धिकामैरिति वक्तव्यम्, न मुमुक्षुभिरित्यत आह **तत्साधुकारिण्युप्रत्यय इति** । तृतीयस्य द्वितीयपादे 'आक्वेस्तच्छीलतद्धर्मतत्साधुकारिष्वि'धिकारे 'सनाशंसभिक्ष उः' इति सूत्रेण सनन्तस्य साधुरित्यर्थः । उप्रत्ययोक्तेरत्र साधुमोक्षेच्छाकारिभिरित्यर्थे उप्रत्यय इत्यर्थः । साधुत्वं च सातिशयमेवेति भावः । **पूर्वमेवेति** । तत्सजातीयमिति भावः । **अत एव** लक्षणकत्वसूचनेन सजातीयग्रहणार्थत्वादेवेत्यर्थः ॥

*भा०र०*— **प्रागेवेति** । "कर्मणैव हि संसिद्धिम्" (३.२०) इत्यस्य आचारोऽप्यस्तीत्यवतारितत्वात् निवृत्तकर्मकरणेऽपि "इमं विवस्वते योगम्" (४.१) इत्यादिनाऽऽचारस्योक्तत्वादित्यर्थः । प्रागुक्ताचारवैलक्षण्यं दर्शयति **प्राप्त्विति** । जनकादीनाम् जनकप्रियव्रतादीनाम् । **विवस्वदादीनां च विद्यमानमपीति** । तथा चोक्तं "प्रसिद्धं हि तेषां ज्ञानित्वं भारतादिषु" (गी.भा. ३.२०) इति तृतीयभाष्य इत्यर्थः । गीताचार्येण न विवक्षितमित्यत्रोपष्टम्भकमाह **अत एवेति** । जनकविवस्वदादीनां ज्ञानित्वस्याविवक्षितत्वादेव, "कर्म कृत्वैव ततो ज्ञानं प्राप्य" (गी.भा. ३.२०) इति, "पूर्वानुष्ठितश्चायं धर्मः" (गी.भा. ४.१-३) इति चोक्तमित्यर्थः । अनेनापि कथं ज्ञानित्वाविवक्षालाभः ? इत्यत आह **न हीति** । **ज्ञानिनां** निष्पन्नज्ञानानां ज्ञाननिष्पादनद्वारा कर्म मोक्षहेतुरित्यमञ्जुलमित्यर्थः । ननु कथम् "अधिकमोक्षाकाङ्क्षया" इत्युक्तम् ? गीतायां 'मुमुक्षुभिः' इत्येव श्रवणेन तद्बोधकपदाभावादित्यत आह **मुमुक्षुभिरिति** । **तत्साधुकारिणीति** । "आक्वेस्तच्छीलतद्धर्मतत्साधुकारिषु" इत्यधिकारे "सनाशंसभिक्ष उः" इति सूत्रेण सन्नन्तान्मुचेरुप्रत्ययो

विहितः । स च साधुकारिणि कर्तरि भवति । यो धात्वर्थं साधु करोति स साधुकारी । मोक्षेच्छा चात्र धात्वर्थः । तस्याः साधुत्वं च मोक्षगतानन्दातिशयविषयकत्वातिरिक्तं नास्तीति उप्रत्ययेनैवाधिकमोक्षाकाङ्क्षा लभ्यत इति भावः । **ततोऽपि पूर्वभावि** इत्यनेन तरबर्थ उक्तः । **तदेव** पूर्वैः कृतमेव । उक्तचोद्यापनोदाय भाष्ये व्युत्पत्तिं दर्शयति **पूर्वमिवेति** । **अत एव** पूर्वसादृश्यज्ञापनरूपप्रयोजनवत्त्वादेव । अन्यथा 'कर्म' इति गीतानुवादो भाष्ये नातीव प्रयोजनवानिति भावः ॥

***गीताक्षरार्थस्तु***— यदि ज्ञानी कर्मभिर्न बध्यते तर्हि ममापि ज्ञानित्वेन कर्मबन्धाभावात् कथं कर्मविधानम् ? इत्याशङ्क्य ज्ञानिनामप्यधिकमोक्षाकाङ्क्षया कर्मकरणे आचारोऽत्रोच्यते **एवमिति** । **एवं ज्ञात्वा पूर्वैः** जनकविवस्वदादिभिः **कर्म** निवृत्तं कृतम् । **मुमुक्षुभिः** इति मोक्षेऽप्यानन्दातिशयाकाङ्क्षिभिरित्यर्थः । **तस्मात्त्वमपि पूर्वैः कृतं पूर्वतरं** ततोऽपि पूर्वभावि कर्म कुरु । कर्मणः क्षणिकत्वात् कथं तदेव कर्तव्यम् ? इति चेन्न । पूर्वानुष्ठितकर्मसदृशकर्मानुष्ठानविधाने तात्पर्याद् एवशब्दः, न तु फलाभिसन्धिमित्यर्थे । कुर्वे वा, न तु ज्ञानित्वान्ममेति नाकरणं शङ्कनीयमित्यर्थे वेति ॥ १५ ॥

**गीता**

## किं कर्म किमकर्मेति कवयोऽप्यत्र मोहिताः ।
## तत्ते कर्म प्रवक्ष्यामि यज्ज्ञात्वा मोक्ष्यसेऽशुभात् ॥ १६ ॥

***वि०वि०***— 'कर्म कुरु' इत्युक्तम् । तस्य कर्मणो जिज्ञासाजननार्थं दुर्विज्ञेयत्वं वदन् प्रकर्षेण वक्तुं प्रतिजानीते **किं कर्मेति** । अकर्मशब्देन कर्माभावो विरुद्धकर्म चोच्यते । अकर्मादिकं हेयत्त्वेन ज्ञेयम् । अत उपादेयत्त्वेन कर्मणः प्राधान्यात् 'तत्ते कर्म' इत्याह । यद्वा, 'ते कर्म' इत्यत्र अकर्मेति पदच्छेदः । **अशुभात्** कर्मबन्धनात् ॥

***वा०ल०***— 'किं कर्म' इत्यत्र कर्म स्वेन कर्तव्यं कर्म । अकर्म अयोग्यतया कस्यचिदकर्तव्यं पुण्यकर्म ॥

***सा०सं०***— 'कुरु' इति कर्तव्यतयोक्तकर्मस्वरूपं वक्तुं तत्र जिज्ञासाजननाय कर्मणो दुर्ज्ञेयत्वमाह **किमिति** । **अकर्म**पदेन कर्माभावो विरुद्धकर्म च ग्राह्यम् । **अत्र** कर्मविषये । **कवयोऽपि मोहिताः** विभ्रमवन्तः । तर्हि किं तत्स्वरूपं ब्रूहीत्यत आह **तदिति** । **तस्मात्** कवीनामपि मोहविषयत्वादिति वा, यत्कर्तव्यत्वादिनोक्तं तत्कर्मेति वा । ते जिज्ञासवे । **प्रवक्ष्यामि** । **यज्ज्ञात्वा**-

**ऽशुभात्** कर्मबन्धनात् । **मोक्ष्यसे** तत् कर्मेति वा । 'कर्म प्रवक्ष्यामि' इत्यकर्मविकर्मणोरप्युपलक्षणम् । अनुष्ठेयतया प्राधान्यात् 'कर्म' इत्येवोक्तम् । यद्वा, **तेऽकर्म** इत्यत्राकारप्रश्लेषेणाकर्मेत्यपि पदच्छेदो ज्ञेयः ॥ १६ ॥

***अ०प्र०***— तच्च कर्म तत्त्वविद्भिः सह विचार्य कर्तव्यं न लोकपरम्परामात्रेणेत्यत आह **किं कर्मेति** ।

कवयोऽपि किं कर्म[२], किं अकर्म[२], इत्यत्र[३], मोहिताः[४], तत्कर्म[५], ते[६], प्रवक्ष्यामि[७], यत् ज्ञात्वा[८], अशुभात्[९], मोक्षसे[१०] इत्यन्वयः ।

कवयोऽपि = विवेकिनोऽपि कवीनामेतत् प्रश्नोत्तरं न लभ्यते किमु अज्ञानामिति भावः[१], किं कर्म = कीदृशं करणं[२], किं अकर्म = कीदृशं कर्माकरणम्[३], इत्यत्र अस्मिन्नर्थे मोहिताः भवन्ति[४], तत्कर्म = तादृशं कर्म अकर्म च कर्म उपलक्षणमेतत्[५], अत्र अकर्मपदेन विकर्मापि ग्राह्यम् । तयोर्विरोधार्थत्वात् विकर्म कर्मविरुद्धं निषिद्धमित्यर्थः । काम्यकर्मणोऽपि निषिद्धे एवान्तर्भावः बन्धकत्वात् । ते = तुभ्यमहं[६], प्रवक्ष्यामि = अकर्म विकर्म च प्रकर्षेण वक्ष्यामि । अकर्मादिकं ज्ञात्वा हेयमेव । कर्म तु ज्ञात्वा कार्यमेव । अतो उपायत्वेन कर्मणः प्राधान्यात् स्वशब्देन ग्रहणमितरयोरुपलक्षणत्वेनेति ज्ञेयम् । अतो यत् ज्ञात्वा अनुष्ठाय[८], अशुभात् = संसारात्[९], मोक्षसे = मुक्तो भविष्यसि[१०], यद्वा, तत्ते कर्म तत्ते अकर्म इत्यनुवृत्त्या पदच्छेदः कार्यः, अकर्मपदेन कर्माभावनिषिद्धयोर्ग्रहणम् । यत् कर्मादिकं अशुभात् पापात् न केवलं कर्मादि ज्ञानात् मोक्षः, अपि तु तत् ज्ञात्वैव मोक्षो न अज्ञात्वेत्याह ।

तदुक्तम्—

> "अज्ञात्वा भगवान् कस्य कर्माकर्मविकर्मकम् ।
> दर्शनं याति हि मुने कुतो मुक्तिश्च तद्विना ॥" इति ॥ १६ ॥

**भाष्यम्**

**"कर्म कुरु" इत्युक्तम् । तस्य कर्मणो दुर्विज्ञेयत्वमाह सम्यग्वक्तुम्— किं कर्मेति ॥ १६ ॥**

***प०टी०***— स्ववक्ष्यमाणे जिज्ञासोत्पत्त्यै तस्य दुर्ज्ञेयत्वमाहेत्युत्तरश्लोकमवतारयति **कर्मेति** । 'अकर्म'पदेन विकर्मोपलक्षणम् । "तत् ते(ऽ)कर्म" इत्यत्र 'कर्म' 'अकर्म' इति पदच्छेदः । तत्रापि 'अकर्म'पदं विकर्मोपलक्षकम् ॥

***न०टी०***—कर्तव्यस्य दुर्विज्ञेयत्वोक्तौ सम्यगेव सतां तज्जिज्ञासा भवति । ततस्तदुक्तावती-वानुभवमारोहतीति भावेनोत्तरश्लोकमवतारयति **कर्मेति** । ते कर्माकर्मणी प्रवक्ष्यामीति ज्ञातव्यम् । उभयोरपि प्रकृतत्वादुभयथाऽपि पदसम्भवात् ॥

***प्र०दी०***— 'किं कर्म' इत्यस्य सङ्गतिर्न प्रतीयते । अत आह— **कर्मेति** । तस्य कर्तव्य-तयोक्तस्य । किमर्थम् ? सम्यग्वक्तुम् । एतदेव सम्यग्वचनं यज्जिज्ञासवे कथनम् । जिज्ञासा च दुर्विज्ञेयत्वोक्तौ भवतीति भावः । अत एव प्रकर्षेण वक्ष्यामीत्याह । ननूत्तरश्लोके विकर्मणोऽपि गृहीतत्वादिहाप्यकर्मशब्दस्तदुपलक्षणार्थ इति स्थिते कर्मादीनामिति वक्तव्यम् । 'कर्मण' इति कथम् । अनुष्ठेयत्वात् । अकर्मादिकं हि हेयतया ज्ञेयम् । अत एव ''तत्ते कर्म प्रवक्ष्यामि'' इत्याह— तत्राप्यकर्मादिरुपलक्षणात् ॥

***भा०दी०***— सम्यग्वचनत्वं वक्ष्यमाणस्य व्यनक्ति **एतदेवेति** । एतच्छब्दार्थं व्यनक्ति **यदिति** । **इत्याहेति** । कृष्ण इत्यर्थः । **इति वक्तव्यमिति** । भाष्य इति योज्यम् । समाधिमाह **अनुष्ठेयत्वादिति** । कर्मण इत्यनुषङ्गः । **अत एवेति** । अनुष्ठेयतया प्राधान्यादेवेत्यर्थः । हेयतया ज्ञातव्यस्यापि वक्तव्यतयाऽनुक्तिर्दोषायेत्यत आह **तत्रापीति** । कर्म प्रवक्ष्यामीत्यत्रेत्यर्थः । विकर्मा कर्मणी प्रोक्तप्राये इति वक्ष्यमाणत्वात् । यद्वा तस्य कर्मण इति भाष्येऽपीत्यर्थः ॥

***भा०र०***— 'सम्यग्' इति भाष्यमवतारयति **किमर्थमिति** । दुर्विज्ञेयत्वोक्त्या सम्यग्वचनं कथं सिद्ध्यतीत्यत उपपादयति **एतदेवेति** । **अत एव** सम्यग्वचनस्याभिप्रेतत्वादेव । **आह** गीता-चार्यः । तस्य कर्मणो दुर्विज्ञेयत्वमिति भाष्ये शङ्कते **ननूत्तरश्लोक इति** । **''कर्मणो ह्यपि बोद्धव्यम्''** (४.१७) इति उपरितनश्लोक इत्यर्थः । **इहापि** ''किं कर्म किमकर्म'' इति व्याचि-ख्यासितश्लोकेऽपि । **तदुपलक्षणार्थः** विकर्मोपलक्षणार्थः । 'स्थिते' इत्यनन्तरं ''त्रयाणामपि अभि-प्रेतत्वाद्'' इति, 'कथम्' इत्यनन्तरम् ''इति चेन्नैवम्'' इति च संयोज्यम् । तर्ह्यकर्मादिः कर्मण इवानुष्ठेयत्वाभावात् तन्न वक्तव्यमेवापद्येत इत्यत आह **अकर्मादिकं हीति** । **अत एव** अनुष्ठेयत्वेन प्राधान्यादेव । ननु ''तत्ते कर्म'' इत्यत्र कर्मपदस्य त्रितयपरत्वे सिद्धे हि स्वशब्देन कर्मग्रहणम् अनुष्ठेयत्वाभिप्रायेणेत्युपष्टम्भकं स्यात् । तदेव कुतः ? कर्मपदस्य कर्ममात्रपरत्वसम्भवादित्यत आह **तत्रापीति** । ''तत्ते कर्म'' इत्यत्रापि । **उपलक्षणात्** 'कर्मपदेन' इति शेषः । अन्यथाऽत्र 'अकर्म' इति, उत्तरत्र ''बोद्धव्यं च विकर्मण अकर्मणश्च'' इत्यकर्मविकर्मोक्त्ययोगः । उक्तयोरेकाप्रवचना-योगात्, अप्रतिज्ञातविकर्मोक्त्यसाङ्गत्याच्चेति भावः ॥ १६ ॥

**गीतातात्पर्यनिर्णयः**

**"सत्त्वसत्त्वाधिकरजोरजोभिस्तमसा तथा ।**
**वर्णा विभक्ताश्चत्वारः सात्त्विका एव वैष्णवाः ॥" इति च ।**

*प्रका०*— 'चातुर्वर्ण्यम्' इत्येतं श्लोकं व्याचष्टे **सत्त्वेत्यादिना** । अस्यार्थः— उत्सर्गेण सत्त्वे सत्त्वाधिकरज आदिगुणभेदेन "शमो दमस्तपः शौचं क्षान्तिरार्जवमेव चे"त्याद्युक्तकर्मभेदेन च ब्राह्मणाद्याश्चत्वारो वर्णाः विष्णुसृष्टाः तत्र शूद्रो वा अन्यो वा विष्णुभक्तश्चेत् सात्त्विक एव । ब्राह्मणादिरप्यवैष्णवश्चेत् तामस एव ।

*न्या०दी०*— भगवद्भजनं विना कुतो न फलमित्यतस्तस्य पितृत्वाद्युज्यत इत्युच्यते 'चातुर्वर्ण्य' इति । अत्र गुणानां त्रित्वात् कथं चातुर्वर्ण्यस्य गुणविभाग इत्याशङ्कां स्मृत्यैव परिहरति **सत्त्वेति** ॥ राजससात्त्विकेषु सात्त्विको ब्राह्मणः । सत्त्वमधिकं यतो रजसस्तद्वान् क्षत्रियः । समसत्त्वरजोवान् वैश्यः । रजोऽपेक्षयाऽधिकतमोवान् शूद्र इत्यर्थः । अनेन सत्त्वप्रधानत्वं ब्राह्मणादीनामुक्तम् । तस्यापवादमाह **सात्त्विका एवेति** ॥ वैष्णवा एव सात्त्विकाः सत्त्वप्रधानाः । न ब्राह्मणत्वादिप्रयुक्तं सात्त्विकत्वादीत्यर्थः ।

*भा०दी०*— "राजसास्तु नरास्तत्र विप्रा" इत्यन्तिमाध्यायतात्पर्यानुरोधादाह **राजससात्त्विकेष्विति** ॥

**गीतातात्पर्यनिर्णयः**

**कर्मविभागं "शमो दमः" इत्यादिना वक्ष्यति ।**
**"वैष्णवाः सात्त्विका एव तामसा एव चापरे ।**
**दौर्लभ्यसुलभत्वेन तेषां वर्णादिभिन्नता ॥" इति च ।**

*प्रका०*— एतदेव स्पष्टयते **वैष्णवाः सात्त्विका** इत्यनेन । अर्थतश्चाधमवर्णादिषु राजसत्वादिवचनं न तु अवैष्णवानां दुर्लभत्वाभिप्रायम् । उत्तमवर्णाश्रमिषु सात्त्विकत्ववचनं तत्र वैष्णवानां सुलभत्वाभिप्रायमित्यवगन्तव्यम् । शमादिकं ब्राह्मणस्य शौर्यादिकं क्षत्रियस्येत्यादिकमप्यौत्सर्गिकम् । ब्राह्मणवच्छमादेः स्वतस्तु ब्राह्मणकर्मवशाद्वर्णान्तरत्वेन जातेष्वप्युपलम्भात् । अतश्च ब्राह्मणादीनामेतानि लक्षणानीत्यवगन्तव्यम् । विष्णुभक्त्यादेर्ब्राह्मणवद्वर्णान्तरेऽप्युपलब्धावपि तत्तत्तारतम्यात् वर्णेषु स्वाभाविकभेदसिद्धिः । चातुर्वर्ण्यस्य कर्तारं मां विद्धि न त्वन्यानिति जीवाभेदनिवृत्तिः ॥

***न्या०दी०***— कर्मविभागः कीदृश इत्यत आह **कर्मेति** ॥ यदि वैष्णवा एव सात्त्विकास्तर्हि ब्राह्मणाः सात्त्विकाः इत्याद्युक्तिः किंनिमित्तेत्याशङ्कां स्मृत्यैव परिहरति **वैष्णवा इति** ॥ अपरे द्वेषिणः । वैष्णवानां शूद्रादिषु दौर्लभ्यात् ब्राह्मणादिषु सौलभ्यात् ब्राह्मणा एव सात्त्विका इत्यादि-रूपेण सात्त्विकत्वादीनां वर्णाश्रमभेदेन भिन्नतोच्यत इत्यर्थः ।

**गीतातात्पर्यनिर्णयः**

**"स्वाभाविको ब्राह्मणादिः शमाद्यैरेव भिद्यते ।**
**योनिभेदकृतो भेदो ज्ञेय औपाधिकस्त्वयम् ॥**

***न्या०दी०***— यथा सात्त्विकत्वादिकं न वर्णमात्रलक्षणं तथा शमादिकमपि न वर्णमात्र-लक्षणम् । किन्तु स्वाभाविकवर्णलक्षणमित्यत्र स्मृतिमाह **स्वाभाविक इति** ॥ नन्वस्वाभाविकं ब्राह्मणत्वादिकं कीदृशमित्यत आह **योनीति** ॥ **अयम्** इति प्रसिद्धः ।

***भा०दी०***— **न वर्णमात्रलक्षणमिति** । किन्तु सात्त्विकत्वं वैष्णवलक्षणं तामसत्त्वं भगव-द्वेषिलक्षणमिति योज्यम् ॥

**गीतातात्पर्यनिर्णयः**

**विष्णुभक्तिश्चानुगता सर्ववर्णेषु विश्पतिम् ।**
**आरभ्य हीयतेऽथापि भेदः स्वाभाविकस्ततः ॥" इति नारदीये ।**

***न्या०दी०***— स्वाभाविकब्राह्मणस्यैव शमादिकम् । स्वाभाविकक्षत्रियस्यैव शौर्यादीत्या-द्युक्तम् । तत्रापवादमाह **विष्ण्विति** ॥ शमपदोदिता विष्णुभक्तिः न केवलं ब्राह्मणस्यैव, अपि तु सर्ववर्णेष्वनुगतेत्यर्थः । उपलक्षणं चैतत् । दमादिकमप्येवं द्रष्टव्यम् । क्षत्रिये शमवति राष्ट्रविप्लवः स्यादित्यतो नायं शमः प्रसिद्धः । अपि तु विष्णुभक्तिरिति शम इति वक्तव्ये तदर्थ एवोक्तः । शमादीनां क्षत्रियादिष्वपि सद्भावे कथमयं ब्राह्मणोऽयं नेति स्वाभाविकवर्णभेदज्ञानमित्यत आह **विश्पतिमिति** ॥ ब्राह्मणे शमादीनां बाहुल्यात् क्षत्रियादिषु क्रमेणाबहुलत्वात् शमादीनां बाहुल्या-बाहुल्यतोऽयं ब्राह्मणोऽयं नेति स्वाभाविको वर्णभेदो ज्ञातव्य इत्यर्थः ।

***भा०दी०***— **स्वाभाविकेति** । स्वरूपतो यो ब्राह्मणादिर्न तु योनिकृत इत्यर्थः ॥ **प्रसिद्ध इति** । सर्वव्यापारोपशमरूपो वा भगवदेकनिष्ठतारूपो वेत्यर्थः । तर्हि क इत्यत आह **अपि तु विष्णुभक्तिरिति** ॥

**गीतातात्पर्यनिर्णयः**

"कर्ताऽपि भगवान्विष्णुरकर्तेति च कथ्यते ।
तस्य कर्ता यतो नान्यः स्वतन्त्रत्वात् परात्मनः ॥" इति च ।

अपिशब्दो गुणसमुच्चयार्थः । कर्ता मे नास्तीत्यपि विद्धीति ।

*न्या०दी०*— यथा भवान् सर्वस्य कर्ता एवं भवतोऽप्यन्यः कर्ताऽस्ति किमित्यपेक्षायामुच्यते **तस्येति** । तत्र कर्तारमप्यकर्तारं विद्धि, कर्तृत्वमायिकत्वादित्यन्यथाप्रतीतिनिरासाय स्मृत्यैव व्याचष्टे **कर्तेति** ॥ एवंविधकर्तृत्वाकर्तृत्वयोरविरुद्धत्वात् कर्तार-मप्यकर्तारं विद्धीत्यत्रापिशब्दो व्यर्थ इत्यत आह **अपीति** ॥ तत्प्रकारं दर्शयति **कर्तेति** ॥

*भा०दी०*— **एवंविधेति** । भिन्नाधिकरणकर्तृत्वाकर्तृत्वयोरित्यर्थः ॥

**गीतातात्पर्यनिर्णयः**

जीवाभेदनिवृत्त्यर्थं मामिति विशेषणम् ॥ १३-१६ ॥

*न्या०दी०*— सर्वकर्तृत्वे भगवतः कर्मलेपः स्यादित्यत उच्यते **न मामिति** । तत्र मामित्यस्य सिद्धत्वात् "इति माम्" इति पुनरस्मच्छब्दः किमर्थ इत्यत आह **जीवेति** ॥ स्वस्येश्वराभेदाभि-प्रायेण स्वात्मानमुद्दिश्य "न मां कर्माणि लिम्पन्ति" इत्यादि यो जानातीत्यन्यथाप्रतीतिः स्यात् । तन्निराकरणार्थम् इति मां योऽभिजानाति, न स्वात्मानमिति भावेन मामिति विशेषणं प्रयुक्त-मित्यर्थः ॥

*भा०दी०*— मामित्यनुक्तौ कथमभेदशङ्का, तदुक्तौ तु कथं तन्निरास इत्यतो द्वयमपि व्यनक्ति **स्वस्येत्यादिना** ॥

**गीता**

**कर्मणो ह्यपि बोद्धव्यं बोद्धव्यं च विकर्मणः ।**
**अकर्मणश्च बोद्धव्यं गहना कर्मणो गतिः ॥ १७ ॥**

*वि०वि०*— न केवलं 'तज्ज्ञात्वा मोक्ष्यस' अपि तु ज्ञात्वैवेत्याशयेनाह **कर्मण इति** । पूर्वश्लोकात् कर्माकर्मग्रहणमनुवर्तते । कर्मादिपदाध्याहारो वा । कर्मणो विविच्य विकर्मादि बोद्ध-व्यम् । विकर्मणो विविच्य कर्मादि बोद्धव्यम् । अकर्मणश्च विविच्य कर्मादि बोद्धव्यमित्यर्थः ।

अथवा, प्रतिज्ञातं कर्मादिस्वरूपमनेनोच्यते । 'कर्मणः' इत्यादौ न हि पृथक्पदं द्रष्टव्यम् । असमानपदस्य रेफोत्तरस्य नस्य णत्वम्। 'ब्रह्मण इन्द्रोपयाहि' इत्यादौ दृष्टम् । ततश्च कर्मादिकमस्मदीयमस्मदधीनमेवेति बोद्धव्यमित्यर्थः । 'नः' इति बहुवचनेन जीवाधीनत्वं निवारयति । एकस्य बोध्दुरबोध्दृत्वादीश्वरवद्बहुरूपत्वादमुख्यत्वादिति । न च शापादिना कवयोऽप्यत्र मोहिताः, अशक्यं तज्ज्ञातुमित्याह **गहनेति** ॥

***वा०ल०***— 'कर्मणो ह्यपि बोद्धव्यम्' इत्यत्र कर्मणः स्वस्वविहितकर्मणः, बोद्धव्यम् अवस्थानं बोद्धव्यम् । विकर्मणः विरुद्धपापकर्मणः । अकर्मणः पुण्यत्वेऽपि स्वायोग्यतया कैश्चिदकर्तव्यकर्मणः, यथा संन्यासिनां यज्ञादिकम् ॥

***सा०सं०***— कर्मादिस्वरूपज्ञानमावश्यकमिति भावेनाह **कर्मणो हीति** । पूर्वस्मात् कर्माकर्मपदयोरनुवृत्तिः । **कर्मणः** सकाशादकर्म कर्माकरणं विरुद्धकर्म च विविच्य **बोद्धव्यम्** । **विकर्मणो** निषिद्धकर्मणश्च **कमाकर्म च** विविच्य बोद्धव्यम् । अकर्मणश्च कर्म विकर्म च विविच्य बोद्धव्यम् । कुत इत्यत आह **गहनेति** । पूर्वत्र दुर्ज्ञेयत्वोक्तावपि तच्छापादिप्रबलनिमित्तं न भवति । किन्तु स्वभावत एवेति वक्तुम् 'गहना कर्मणो गतिः' इति पुनर्वचनम् ।

यद्वा, 'कर्म प्रवक्ष्यामि' इति प्रतिज्ञातं कर्मादिस्वरूपमाह **कर्मणो हीति** । अत्र 'कर्म नः' इति 'विकर्म न' इति 'अकर्म न' इति पदविभागः । 'ब्रह्माण इन्द्रोपयाहि विद्वान्' इत्यत्र ब्रह्माण इत्यस्येव भिन्नपदस्यापि न इत्यस्य रेफोत्तरस्य णत्वं ध्येयम् । तेन 'रषाभ्यां नो णः समानपदे' (८-४-२) इत्युक्तावपि छान्दसं णत्वमत्र ध्येयम् । **कर्म** नो **मत्तो** भवतीति । **विकर्म अकर्म च नो** मत्तो भवतीत्येवंयोजना । कर्मादिस्वरूपं न स्वतन्त्रम्, किन्तु भगवदधीनं बोद्धव्यमित्यर्थः । 'न' इति बहुवचनं बहुरूपत्वात् । एवंरूपेण कर्मस्वरूपज्ञानं दुःशकमित्याह **गहनेति** । एतच्च हेतुरधिकादरजननायोक्तम् ॥

***अ०प्र०***— ननु कर्मदिहव्यापारात्मकं अकर्म च तदव्यापारात्मकं इति प्रसिद्धः अतः कथमुच्यते कवयोऽप्यत्र मोहिताः इति तत्राह **कर्मण इति** ।

हि = यस्मात्[१], कर्मणः[२], बोद्धव्यं[३], विकर्मणश्चापि बोद्धव्यं[४], अकर्मणश्च बोद्धव्यमस्ति तस्मात्[७], कर्मणो गतिः[८], गहना[९] इत्यन्वयः ।

हे पार्थ ! हीति निश्चये, यस्मादिति वा, कर्मणः = विहितव्यापारस्य[२], बोद्धव्यं = देहादिव्यापारात्मकं कर्म बोद्धव्यमस्ति[३], विकर्मणश्चापि बोद्धव्यमस्ति[४], अकर्मणश्च = अव्यापारस्यातत्वं

बोद्धव्यमस्ति[७], तस्मात् कर्मण इत्युपलक्षणार्थं, कर्माकर्मविकर्मणां गतिः = तत्त्वं[८], गहना = दुर्विज्ञेयमित्यर्थः[९], यद्वा कर्मणः विकर्मणः अकर्मणः इत्यत्र कर्मणः विकर्मणः इति पदपदच्छेदः कार्यः, ततश्च कर्मादिकं नः अस्माकं अस्मदीयमदधीनमेवेति बोद्धव्यं व्यक्तितो बहूनां कर्मदीनां बहुरूपैः रक्षणादिकं हरिः करोतीति भावेन इति बहुवचनम् । कर्मादि सत्तादौ हर्यधीनत्वेन ज्ञान-मन्येषां दुर्लभमिति भावः ॥ १७ ॥

### भाष्यम्

**न केवलं तज्ज्ञात्वा मोक्ष्यसे, ज्ञात्वैव इत्याशयवानाह— कर्मण इति । तच्चोक्तम्—**

**"अज्ञात्वा भगवान् कस्य कर्माकर्मविकर्मकम् ।**
**दर्शनं याति हि मुने कुतो मुक्तिश्च तद्विना ॥" इति ।**

**अकर्म कर्माकरणम् । कर्माकर्मान्यद् विकर्म । निषिद्धकर्म । बन्धकत्वात् । ततो विविच्य कर्मादि बोद्धव्यमित्यादि । न च शापादिना कवयोऽप्यत्र मोहिताः । अशक्यं चैतज्ज्ञातुमित्याह— गहनेति ॥ १७ ॥**

*प०टी०*— ननु कथं भगवज्ज्ञानं विना कर्मादिज्ञानमात्रेण मोक्षः ? इत्याशङ्क्य, उत्तर-त्वेनोत्तरश्लोकमवतारयति **न केवलमिति** । न भगवज्ज्ञानं विना मोक्ष उच्यते । किन्तु मोक्षार्थं कर्मादिकमपि बोद्धव्यमित्युच्यत इत्यर्थः । तर्हि किं ज्ञानसमुच्चयेन कर्मादिज्ञानमावश्यकं मोक्षा-येति ? नेत्याह **तच्चेति** । कर्मस्वरूपस्य भगवतैव चिन्तितस्य मत(?)त्वाकर्मादिस्वरूपमाह **अकर्मेति** । कर्माकर्मान्यस्य विकर्मत्वं कथम् ? इत्यत आह **निषिद्धमिति** । ननु कर्माकर्मान्यत् काम्यमपि भवति । तत्कथं निषिद्धम् ? इत्यत आह **बन्धकत्वादिति** । श्लोकान्वयस्य दुर्घटत्वात् तं दर्शयति **तत इति** । ततो विकर्मणः कर्माकर्म विविच्य बोद्धव्यमिति द्वितीयपादान्वयः । आदि-पदात् कर्मणः सकाशाद्विविच्य विकर्माकर्म बोद्धव्यम् । अकर्मणः कर्म विकर्म चेति विविच्य बोद्धव्यमिति प्रथमतृतीयपादान्वयः सूचितः । ननु यदि कर्मादिस्वरूपे कवयो मोहिताः । तर्हि शापादिनैवेत्याशङ्कां परिहर्तुमुत्तरपादं व्याचक्षाणोऽवतारयति **न चेति** ॥

*न०टी०*—ननु कर्मादिज्ञानमपि कस्यचिन्मुक्तिसाधनं चेत्, 'नान्यः पन्था अयनाय' इत्यादिश्रुतिविरोध इत्याशङ्क्य, श्रुतिविरोधमुत्तरश्लोकव्याख्यया परिहरिष्यन् कर्मादिज्ञानं विना न कस्यापि मुक्तिरिति भावेन तावन्निरन्तरं श्लोकमवतार्य तत्र प्रमाणमाह **न केवलमित्यादिना** । अत्र

केचित् विकर्माकर्मशब्दयोः प्रतिषिद्धमेवार्थमाहुः । तद्व्युदासाय यतयोरर्थभेदमाह **अकर्मेत्यादिना** । श्रुत्या विहिताकाम्यानुष्ठानं कर्म । 'कुरु कर्म' इत्यादिनाऽत्राकाम्यस्यैव प्रस्तुतत्वात् । कर्माकरणमकर्म । ताभ्यामन्यत् सर्वमपि विकर्म, बन्धकत्वात् । बन्धस्यानिष्टत्वात्, इष्टसाधनस्यैव विधेयत्वादिति भावः । अध्याहारादिक्लेशपरिहारार्थमन्वयं च सूचयति **तत इति** । कर्माकर्मान्यद्विकर्मेति यदुक्तं ततो विकर्मणो विविच्य कर्माकर्म च बोद्धव्यम् । न चात्र 'कर्माकर्म च' इत्यध्याहारः । 'तत् ते (ऽ) कर्म' इति प्रकृतत्वादुभयोरपि । अनेन 'बोद्धव्यं च विकर्मणः' इत्यस्यार्थो दर्शितः । इतरयोरर्थप्रदर्शनाय **आदिशब्दश्चरमः** । तथाहि— कर्मणो विविच्याकर्म विकर्म च बोद्धव्यम् । 'तत् तेऽकर्म' इत्यत्राकरणीयत्वेन विकर्मणोऽप्यकर्मशब्दोक्तत्वेन प्रस्तुतत्वान्न तस्याप्यध्याहारः । एवमकर्मणो विविच्य कर्म विकर्म बोद्धव्यमित्यर्थः । कवीनां मोहश्चेत्, शापादिरेव कारणमित्याशङ्कां परिहर्तुमन्त्यपादमवतारयति **न चेति** ॥

***प्र०दी०***— ननु ''यज्ज्ञात्वा मोक्ष्यसेऽशुभात्'' इत्यनेनैव कर्मादिस्वरूपं मुमुक्षुणा ज्ञातव्यमिति लब्धम् । तत्किमर्थं 'कर्मणो हि' इत्याद्युच्यत इत्यत आह— **न केवलमिति** । तत्कर्मादिकम् । सिद्धे सत्यारम्भो नियमार्थ इति भावः । अत्रैव प्रमाणमाह— **तच्चेति** । दर्शनापेक्षया समानकर्तृत्वात् त्त्वानिर्देशः । कर्मशब्दार्थो भगवतैव वक्ष्यते । अकर्मविकर्मशब्दार्थावाह— **अकर्मेति** । किं तद्विकर्मेत्यत आह— **निषिद्धमिति** । एवं चेत्कामाद्युपेतस्य कुत्रान्तर्भाव इति चेद्विकर्मणीति ब्रूमः । कथं तस्य निषिद्धत्वमित्यत आह— **बन्धकत्वादिति** । अस्त्वेवं शब्दार्थः । योजना तु कथमित्यतो लाघवार्थं द्वितीयपादयोजनां तावदाह— **तत इति** । ततः विकर्मणः । कर्मादि कर्माकर्म च । इत्यादीत्यनेनाद्यतृतीयपादयोजनां सूचयति । कर्मणो विविच्य विकर्मादि बोद्धव्यम् । अकर्मणश्च विविच्य कर्मादि बोद्धव्यमिति । ननु ''कवयोऽप्यत्र मोहिताः'' इत्यनेन कर्मादेर्दुर्ज्ञेयत्वमुक्तम् । तत्पुनः किमर्थमुच्यत इत्यत आह— **न चेति** । ज्ञातुं स्वभावेनेति शेषः । एतच्च श्रोतुरधिकादरजननार्थमिति ज्ञेयम् ॥ १७ ॥

***भा०दी०***— **दर्शनापेक्षयेति** । यातीत्युक्तक्रियां प्रति हरेः कर्तृत्वे दर्शनस्य ज्ञात्येत्युक्ताज्ञानस्य च जीवैककर्तृत्वात्समानकर्तृकयोः पूर्वे कालिके त्त्वा श्रुत्युपपत्तिरित्यर्थः । कर्मादिकमज्ञात्वा भगवन्तं कः पश्यतीति यावत् । **वक्ष्यन्त इति** । कर्मणीत्यादावित्यर्थः । **लाघवार्थमिति** । तत इत्यनेन प्रागुक्तविकर्मपरामर्शादिति भावः । श्रोतुरधिकादरेति शापादिना दुर्गेयत्वे शापादिहीनानां सुज्ञेयत्वप्राप्त्या जिज्ञासां नोदियात् । स्वभावत एव दुर्ज्ञेयत्वोक्तौ जिज्ञासोदयद्वारा श्रोतुरधिकारो भवतीति । 'गहना कर्मणो गतिरित्युक्तमि'त्यर्थः ॥

*भा०र०*— **कर्मादिस्वरूपं** कर्माकर्मविकर्मस्वरूपम् । कर्मणोऽनुष्ठेयतया ज्ञातव्यत्वम् । अकर्मविकर्मणोः हेयतया तत्त्वमिति विवेकः । 'तद्' इत्यनूद्यार्थमाह **तत् कर्मादिकमिति** । ननु 'याति' इत्युक्तक्रियायाः अज्ञानसमानकर्तृकत्वाभावात् कथम् 'अज्ञात्वा' इति क्त्वाप्रत्ययनिर्देशः ? "समानकर्तृकयोः पूर्वकाले क्त्वा" इति स्मरणादित्यत आह **दर्शनापेक्षयेति** । अज्ञानदर्शनयो-र्जीवरूपैककर्तृकत्वाद् युक्तः क्त्वानिर्देश इत्यर्थः । भाष्ये 'विकर्मकम्' इति स्वार्थे कन्प्रत्ययः । दर्शनमेव किमर्थमापादनीयम् ? इत्यत उक्तं भाष्ये **कुत इति** । **तद्विना** दर्शनं विना **मुक्तिः कुतः** कस्मात्साधनाद्भवेदित्यर्थः । प्रथमप्राप्तकर्मशब्दार्थानुक्तौ बीजमाह **कर्मशब्दार्थ इति** । **वक्ष्यते** इत्यनन्तरम् 'इतिशब्दः' अध्याहार्यः । "कर्मण्यकर्म यः पश्येद्" (४.१८) इत्यत्र वक्ष्यत इति हेतोरित्यर्थः । भाष्ये नञ अभावे व्युत्पन्नत्वात् कर्माकरणमिति, विशब्दो विलक्षणार्थ इति भावेन कर्माकर्मान्यद्विकर्मेति चोक्तम् । **एवं चेत्** निषिद्धस्यैव ग्रहणं यदि तर्हि । **कामाद्युपेतस्य** काम-क्रोधसंवलितस्य । **कथमिति** । "विकर्म निषिद्धम्" इत्युक्तत्वात् काम्यस्य श्येनादेश्च "ज्योतिष्टोमेन स्वर्गकामो यजेत", "श्येनेनाभिचरन् यजेत" इत्यादिवेदविहितत्वाद् वेदविरुद्धस्यैव निषिद्धत्वादिति भावः ।

**बन्धकत्वादितीति** । काम्यादेरपि बन्धकत्वाविशेषात् युक्तो निषिद्धान्तर्भाव इति गीताभाष्य-योरतदनुक्तिः नेति भावः । **शब्दार्थः** अकर्मादिशब्दार्थः । **लाघवार्थमिति** । निषिद्धकर्मणः प्रकृत-त्वात् 'ततः' इति तत्परामर्शसौकर्यलाघवार्थमित्यर्थः । 'सूचयति' इत्युक्तमेव दर्शयति **कर्मणो विविच्येति** । **विकर्मादि** विकर्म अकर्म च । **कर्मादि** कर्म विकर्म च । **उच्यते** 'गहना' इत्यनेन । उक्तपुनरुक्तिपरिहारायाह **स्वभावेनेति शेष इति** । 'कवयोऽप्यत्र' (४.१६) इति दुर्विज्ञेयत्वे उक्ते तस्य शापप्रतिषिद्धाचरणादिनाऽन्यथासिद्धिशङ्कायाम् इह स्वभावेनैव दुर्विज्ञेयत्वमस्येति वक्तुं 'गहना' इत्युक्तमिति न पुनरुक्तिरिति भावः । "अशक्यं च" इति भाष्ये चशब्द एवार्थः । **एतच्च** स्वभावेनैव दुर्विज्ञेयत्ववचनं च । **अधिकेति** । दुर्विज्ञेयत्वं शापादिना चेद्भवति तर्ह्यप्राप्तशापानां सुज्ञेयत्वं स्यादिति न तत्र तादृशो जिज्ञासाऽऽदरः स्यात् यादृशः स्वभावेनैव दुर्विज्ञेयत्वोक्तौ भवतीति तदर्थमेव 'गहना कर्मणो गतिरि'त्यवोचदित्यर्थः ॥ १७ ॥

**गीतातात्पर्यनिर्णयः**

**कर्मापि न मत्तः इति बोद्धव्यमित्यादि ॥ १७ ॥**

*प्रका०*— कर्मण इत्येतद्व्याचष्टे **कर्मेति** । ब्राह्मण इन्द्रोपयाहीतिवत् पदान्तरस्य रेफोत्तरस्य नकारस्य णत्वं युज्यते ॥

*न्या०दी०*— "तत्ते कर्म प्रवक्ष्यामि" इति प्रतिज्ञातमुच्यते **कर्मणः इति** । तद्दुर्गमार्थत्वाद्व्याचष्टे **कर्मेति** ॥ मत्त एव भवतीति बोद्धव्यम् । असमानपदस्थस्य रेफोत्तरस्य नस्य णत्वं दृष्टं "ब्रह्म ण इन्द्र उपयाहि विद्वान्" इत्यादौ । आदिपदेन "बोद्धव्यं च" इत्यादेरपि पूर्ववद्योजनां सूचयति ॥

*भा०दी०*— ननु "रषाभ्यां नो णः समानपदे" इति सूत्रे समानपदे एकस्मिन्नेव पदे रेफषकाराभ्यां परस्य नस्य णत्वं भवतीत्युक्तेरिह च कर्मशब्दनशब्दयोरेकपदस्थत्वाभावात् कथं णत्वमित्यत आह **असमानपदस्थस्येति** । हे इन्द्र नो ब्रह्म उपयाहीत्यत्र ब्रह्मपदात्परस्य नस्य णत्वं दृष्टम् । तद्वदत्रेत्यर्थः । छान्दसं णत्वमिति भावः ॥ **इत्यादेरिति** । द्वितीयपादादेरपि विकर्म णः नः मत्तः भवतीत्यादिरूपेणेत्यर्थः ॥ १७ ॥

**गीता**

**कर्मण्यकर्म यः पश्येदकर्मणि च कर्म यः ।**
**स बुद्धिमान्मनुष्येषु स युक्तः कृत्स्नकर्मकृत् ॥ १८ ॥**

*वि०वि०*— कर्मादिस्वरूपं प्रपञ्चयन्नेव तद्बोधं स्तौति **कर्मणीति** । यः कर्मणि क्रियमाणे सति । अकर्म विष्णोरेव कर्म सदाऽहं चित्प्रतिबिम्बः स्वातन्त्र्येण न किञ्चित्करोमीति स्वस्य कर्माभावं पश्येत् । अकर्मणि सुप्त्यादावकरणावस्थायां कर्म परमेश्वरः सर्वदा सर्वसृष्ट्यादि करोतीति परमेश्वरस्य कर्म यः पश्येत् ।

अथवा, कर इति शब्दः कर्मवाची । सोऽस्मिन् विषयीकारित्वेन । प्रतिष्ठित इति कर्म जीवः । तद्विपरीतत्वादकर्मेश्वरः ।

'करोस्मिन् मीयत इति कर्म जीव उदाहृतः ।
विधिशब्देनामितत्वादकर्म भगवान् हरिः ॥'

इतिवचनात् । ततश्च कर्मणि । जीवे अस्वातन्त्र्यादकर्म कर्माभावं यः पश्येत् । अकर्मणि विष्णौ स्वातन्त्र्यात्कर्म यः पश्येदित्यर्थः । अनेन भगवतः परानपेक्षया कर्तृत्वं जीवस्य तदधीनकर्तृत्वं च ज्ञात्वा तदर्थेन वर्णाश्रमविहितानुष्ठानं कर्म, तदकरणमकर्म, तद्विपरीतकरणं विकर्मेत्युक्तं भवति । एवं पश्यति स बुद्धिमान् ज्ञानी स एव योगेन युक्तः । सर्वाकरणात्स एव कृत्स्नकर्मकृत् । स्वयोग्यकृत्स्नकर्मफलस्य मोक्षस्य नियतत्वात् ॥

***वा०ल०***— अत्र विशेषमाह— **कर्मण्यकर्म यः पश्येदिति** । कर्मणि सत्यवचनादि-कर्मणि अकर्म सतामपाये सति इदमकर्तव्यं कर्मेति यः पश्येत् । तथा अकर्मणि व्रतवता स्वेना-कर्तव्ये श्राद्धभोजनादिकर्मणि कर्म 'अष्टौ तान्यव्रतघ्नानि' इति वचनात् गुर्वाज्ञया मयेदं कर्तव्यं कर्मेति च यः पश्येत् स बुद्धिमानिति योजना । पूर्वश्लोके वर्णाश्रमविभेदेन कर्माकर्मणोर्विभागो दर्शितः । अस्मिन् श्लोके आपद्धर्मतया कर्माकर्मणोर्विभाग इति विशेषः । अस्यातिसूक्ष्मधर्मत्वात् फलमाह— **स बुद्धिमानिति** ॥

***सा०सं०***— कर्मादिस्वरूपं प्रपञ्चयंस्तद्बोधं स्तौति **कर्मणीति** । वर्णाश्रमोचित**कर्मणि** क्रियमाणे सति, **अकर्म** कर्माभावं स्वस्य **यः पश्येत्** । भगवानेव कर्ता नाहं स्वतन्त्रः, किन्तु तद-धीनकर्तृशक्तिकः सन् करोमीति यः पश्येदित्यर्थः । **अकर्मणि** जीवकर्तृककर्मकरणहीने सुस्यदौ । जीवस्य कर्माकरणावस्थायामिति यावत् । **कर्म** यः पश्येत् । जीवव्यापारस्य भावे, अभावे च सदा भगवानेव महदादि स्वप्नादौ गजादि करोतीति पश्येदित्यर्थः । अनेन हरेः परानपेक्षया कर्तृत्वं स्वस्य तदधीनकर्तृत्वं ज्ञात्वा वर्णाश्रमविहितानुष्ठानं कर्मेत्युक्तं भवति । एतेन कर्माकरणमकर्म, निषिद्धं कर्म विकर्मेत्युत्युक्तप्रायम् । कर्मादिबोधं स्तौति **स इति** । य एवं पश्येत् **स बुद्धिमान्** ज्ञानी । प्रशं-सायां मतुप् । **स** एव **युक्तः** ज्ञानोपायवान् । **स** एव **कृत्स्नकर्मकृत्** । स्वयोग्यकृत्स्नकर्मफलस्य ज्ञानस्य मोक्षस्य प्राप्तप्रायत्वादिति भावः ।

यद्वा, करश्शब्दः सकारान्तः कर्मविधिवाची, तेन मीयते विषयीक्रियते इति कर्म । उपपदस्य टिलोपो मातेः कनिन् प्रत्ययः । 'करोऽस्मिन् मीयत इति कर्म जीव उदाहृतः' (नारदीये) इति निर्व-चनात् । विधिबद्धत्वात् कर्मशब्दार्थो जीवः । कर्मविधेस्तत्फलस्य चाभावादकर्मपदेनेश्वरो ग्राह्यः । तथा च **कर्मणि** विधिबद्धे जीवे । अस्वातन्त्र्याद्धेतोः **अकर्म** कर्माभावम् । **यः पश्येत्** । तथाऽ**कर्मणि** विष्णौ । **कर्म** यः पश्येत् सर्वकर्मकर्तृत्वात् तदीयमेव सर्वकर्मेति पश्येत् । **स बुद्धिमान्** ज्ञानीत्येवं प्राग्वदेव स्तुतिपरताऽर्धस्य ध्येया ॥

***अ०प्र०***— तदेव कर्मादीनां दुर्विज्ञेयत्वं दर्शयन्नाह **कर्मणीति** ।

यः[१], कर्मणि[२], अकर्म पश्येत्[४], यः अकर्मणि च[६], कर्म पश्येत्[९], सः मनुष्येषु बुद्धिमान्[१०], स एव[१२], युक्तः[१३], कृत्स्नकर्मकृदित्यन्वयः ।

यः = पुरुषः[१], कर्मणि = परमेश्वराराधनत्वलक्षणे कर्मणि विषये कर्मेदं न भवतीति यद्वा कर्मणि क्रियमाणे सति अस्य विष्णोरेव कर्मेति[२], अकर्म पश्येत्[४], यः = पुरुषः[५], अकर्मणि च[६], कर्म पश्येत्[९], मम कर्म नास्ति विष्णोरेव स्वातन्त्र्येण कर्तृत्वं मम तु प्रतिबिम्बत्वेन न स्वातन्त्र्येण

कर्मकर्तृत्वं, इति स्वस्य कर्माभावं पश्येत् तथा अकर्मणि जीवकर्मरहिते सुप्तादौ काले कर्म परमेश्वरस्येति शेषः, परमेश्वरः सर्वदा जीवव्यापाराभावकाले सर्वसृष्ट्यादिकं करोतीति यः पश्येत् अथवा कर इति शब्दः, कर्मवाची सोऽस्मिन्मीयते विषयीकारित्वेन प्रतिष्ठित इति कर्म जीवः तद्वैपरीत्यात् अकर्म ईश्वरः । तदुक्तम्—

करोस्मिन् मीयत इति कर्म जीव उदाहृतः ।
विधिशब्देनातीतत्वादकर्म भगवान् हरिः ॥

तथा चाह— ''अहरहः सन्ध्यामुपासीते''त्यादि विधिविषयत्वेन कर्मशब्दवाच्ये जीवे अकर्म स्वातन्त्र्येण कर्मभावं यः पश्येत् तथा अकर्मणि विधि-अविषयत्वेन अकर्मशब्दवाच्ये विष्णौ कर्मस्वातन्त्र्येण कर्म, भावं यः पश्येत् । तथा अकर्मणि विधि-अविषयत्वेन अकर्मशब्दवाच्ये विष्णौ कर्मस्वातन्त्र्येण कर्म कर्तृत्वं यः पश्येदित्यर्थः । अनेन भगवतः परानपेक्षया कर्तृत्वं, जीवस्य तु तदधीनकर्तृत्वं ज्ञात्वा भगवत्पूजार्थत्वेन वर्णाश्रमविहितानुष्ठानं कर्म तदकरणं कर्म उभयविपरीतं निषिद्धं काम्यं च कर्म विकर्मेत्युक्तं भवति । एवं यः पश्यति[७], सः पुरुषः, मनुष्येषु कर्मकुर्वाणेषु सर्वेषु मनुष्येषु[८], बुद्धिमान् पण्डितः व्यवसायात्मिका बुद्धिमत्वात् श्रेष्ठः न पामरः ॥

तत्र हेतुः । कृत्स्नकर्मकृत् कृत्स्नानि कर्माणि यदृच्छाप्राप्तानि आहारादीनि कर्माणि कुर्वन्नपि सः युक्त एव योगेन युक्तः तेन कर्मणा ज्ञानयोगावाप्तेः अकर्तात्मज्ञानेन समाधिष्ठ एव, अस्यैव कर्मणो योगत्वात् । स एव कृत्स्नकर्मकृत् सर्वकर्माऽकरणेऽपि स्वयोग्यस्य कृत्स्नकर्मफललक्षणमोक्षस्य नियतत्वात्, कृत्स्नकर्मकृदिति श्रूयते, यद्वा अर्थान्तरम् । अकर्मणि विहिताकरणे कर्म यः पश्येत् प्रत्यवायापादकत्वेन बन्धहेतुत्वात् बुद्धिमान् स एव कृत्स्नकर्मकर्ता सर्वतः सम्प्लुतोदकस्थानीये तस्मिन् कर्मणि सर्वकर्मफलानामन्तर्भूतत्वात् तदेवमारुरुक्षोः कर्मयोगाधिकारावस्थायां न कर्मणामनारम्भादित्यादिनोक्त एव कर्मयोगः स्फुटीकृतः तत्प्रपञ्चरूपत्वाच्चास्य प्रकरणस्य न पौनरुक्तिदोषः । अनेनैव योगारूढावस्थायां यस्त्वात्मरतिरेव स्यादित्यादिना यः कर्मानुपयोग उक्तः, तस्याप्यर्थात् प्रपञ्चीकृतो वेदितव्यः । यदा आरुरुक्षोरपि कर्म बन्धकं न भवति तदा आरूढस्य कुतो बन्धकं स्यादित्यत्रापि श्लोको योज्यते, यद्वा कर्मणि देहेन्द्रियादिव्यापारे वर्तमानोऽप्यात्मनो देहादिव्यतिरेकानुभवेन, अकर्म स्वाभाविकं नैष्कर्म्यमेव यः पश्येत्, तथा अकर्मणि च ज्ञानरहिते दुःखबुद्ध्या कर्मत्यागे कर्म यः पश्येत् तस्य प्रतिबन्धकत्वेन मिथ्याचारत्वात् । अनेनैव ज्ञानिनः स्वभावापन्नं कलञ्जभक्षणादिकं न दोषः । अज्ञस्य तु रागतः कृतं दोष इति विकर्मणोऽपि तत्त्वं निरूपितं द्रष्टव्यम् ॥ १८ ॥

### भाष्यम्

**कर्मादिस्वरूपमाह— कर्मणीति । कर्मणि क्रियमाणे सति अकर्म यः पश्येत् विष्णोरेव कर्म नाहं चित्प्रतिबिम्बः किञ्चित् करोमीति । अकर्मणि सुप्त्यादावकरणावस्थायां परमेश्वरस्य कर्म यः पश्यति अयमेव परमेश्वरः सर्वदा सर्वसृष्ट्यादि करोति इति । स बुद्धिमान् ज्ञानी । स एव च युक्तः योगयुक्तः । सर्वाकरणात् स एव च कृत्स्नकर्मकृत् । कृत्स्नफलवत्त्वात् ॥ १८ ॥**

*प०टी०*— यत्कर्मादिकं वक्ष्य इत्युक्तं तदाहेत्युत्तरश्लोकमवतारयति **कर्मादीति** । कर्मणि क्रियमाणे इत्येतदेव विवृणोति **विष्णोरेवेति** । 'अकर्मणि' इत्येतद्द्वितीयपादार्थं विवृणोति **अयमेवेति** । सर्वकर्मकर्तृत्वं फलद्वारैव, न साक्षात्, सर्वकर्मकरणाभावाज्ज्ञानिन इत्याह **सर्वेति** । एतेन स्वातन्त्र्यं विहाय क्रियमाणं कर्मेत्युक्तं भवति । तत एव कर्मादि पूर्वोक्तरीत्यैव ज्ञातव्यम् ॥

*न०टी०*—यस्य कर्मादेः सम्यग्वचनाय दुर्विज्ञेयत्वमुक्त्वाऽतिविज्ञेयत्वमुक्तम्, तत्सम्यग्वचनपरत्वेनोत्तरं श्लोकमवतार्य व्याचष्टे **कर्मादीति** । विहिते **कर्मणि क्रियमाणेऽपि, अकर्म यः पश्येत्,** 'स्वस्य' इति शेषः । तथा हि तद्विवृणोति **विष्णोरेवेति** । न मे विष्णुवत् स्वतन्त्रं कर्म, प्रतिबिम्बत्वात् । अतः परिशेषात् बिम्बचेष्टैव मच्चेष्टेति भावः । न केवलं मम चेष्टैव विष्ण्वधीनेति जानन् बुद्धिमान्, किन्तु सर्वं तेनैव क्रियत इति जानन्नेवेति भावेनोत्तरपादं व्याचष्टे **अकर्मणीति** । कथमकर्मशब्दोक्तः सुप्त्यादिरित्यत उच्यते **अकरणावस्थायामिति** ।. **आदिशब्देन** स्वप्नप्रलयौ । तदेतद्विवृणोति **अयमेवेति** । **सर्वदा इति** । सुप्तिसन्ध्यप्रलयादौ सुप्तोत्थापनस्वप्नजाग्रत्वप्रपञ्चादिकमयमेव करोतीत्यर्थः । अत एव तादृशबुद्ध्याऽनुष्ठितं कर्मस्वरूप उक्ते सत्यकर्मविकर्मणोः स्वरूपं ज्ञातुं शक्यम् । **'अकर्म कर्माकरणम् । कर्माकर्मान्यद्विकर्म'** इत्युक्तत्वात् ॥

*प्र०दी०*— "कर्म प्रवक्ष्यामि" इति प्रतिज्ञातम् । कर्मादिप्रवचनं च क्वापि नोपलभ्यते । 'कर्मणि' इति श्लोकस्य यत्किञ्चिद्दर्शनस्तुतिरूपत्वादित्यत आह— **कर्मादीति** । यद्यप्ययं श्लोकोऽन्यथा प्रतीयते । तथाऽप्यविहितस्य स्तुत्ययोगाद्वाक्यभेदेन कर्मादिकं प्रतिपाद्य तत्स्तुतिः क्रियत इति भावः । कथमनेन तत्स्वरूपमुच्यत इत्यतो व्याचष्टे— **कर्मणीति** । वर्णाश्रमोचिते । अकर्म कर्माभावं स्वस्य । तद्विवृणोति— **विष्णोरेवेति** । 'चित्प्रतिबिम्ब' इत्यनेन तदधीनः करोमीत्यपि सूचयति । सुप्त्यादिकं कथमकर्मेत्यत उक्तम् **अकरणेति** । जीवापेक्षयेदम् । एतदपि विवृणोति— **अयमेवेति** । सर्वदा जीवव्यापाराभावे भावे च । सर्वस्य महदादेः स्वाप्नगजादेश्च । अनेन भगवतः

परानपेक्षया कर्तृत्वं स्वस्य तदधीनं च ज्ञात्वा वर्णाश्रमविहितानुष्ठानं कर्मेत्युक्तं भवति । अनेनैवोक्तलक्षणे विकर्माकर्मणी प्रोक्तप्राये । यः पश्येत् स बुद्धिमानिति कोऽर्थभेदः । कथं च स्तुतिरित्यत आह— **स इति** । ज्ञानिशब्दो हि पामरविलक्षणे प्रसिद्धः । मतुबादीनां प्रशंसार्थत्वात् । 'स युक्त' इत्येतत्स्तुतिर्यथा स्यात्तथा व्याचष्टे— **स एव चेति** । 'कृत्स्नकर्मकृत्' इत्येतन्मुख्ये बाधकं प्रदर्शयन् गौणं व्याख्याति— **सर्वेति** । सर्वस्याश्वमेधादेः । कृत्स्नकर्मणां फलस्य ज्ञानस्य मोक्षस्य च प्राप्तप्रायत्वादित्यर्थः ॥

*भा०दी०*— **वाक्यभेदेनेति** । यच्छब्दत्यागेन अनुवादकतया परं वाक्यमिति वाक्यभेदेनेत्यर्थः । **तदधीनमिति** । कर्तृत्वमित्यनुषङ्गः । **अनेनैवेति** । कर्मणीत्यादिना कर्मण्यकर्म पश्येदकर्मणि च कर्म पश्येदिति कर्मस्वरूपप्रतिपादकमेकं वाक्यं यच्छब्दद्वययोगेन कर्मस्वरूपकथनेनैव उक्तलक्षणे अकर्मककर्माकरणं कर्माकर्माकर्मान्यद्विकर्मनिषिद्धं कर्मेति प्राग्भाष्योक्तलक्षणे विकर्माकर्मणी प्रोक्तणये इत्यर्थः । **प्रशंसार्थत्वादिति** । 'भूम-निन्दाप्रशंसासु भवन्ति मतुबादय' इत्युक्तेरिति भावः । **मुख्य इति** । मुख्यार्थे अत्रापि वाक्यभेदे........... त्यागेन सर्व एते समारम्भाः कामसङ्कल्पवर्जिताः । तमेवमाहुरिति परं वाक्यमिति वाक्यभेदेनेत्यर्थः ॥

*भा०र०*— **प्रपञ्चनं** विस्तारेण स्वरूपनिरूपणम् । 'प्रवचनम्' इति क्वचित्पाठः । **यत्किञ्चिद्दर्शनेति** । "कर्मण्यकर्म यः पश्येदकर्मणि च कर्म पश्येद्" इति यत् कर्माकर्मदर्शनं प्रतीयते तत्स्तुतेरेवात्र "स बुद्धिमान्" इत्यादिनाऽभिधानादित्यर्थः । **अन्यथा** यत्किञ्चिद्दर्शनस्तुतिरूपत्वेन । **वाक्यभेदेनेति** । यच्छब्दद्वयपरित्यागेन "कर्मण्यकर्म पश्येद्", "अकर्मणि च कर्म पश्येद्" इति कर्मस्वरूपादिदर्शनविधिपरमेकं वाक्यम् । ततो "यो यश्चैवं पश्येद्" इत्यनुवादेन "स बुद्धिमान्" इत्यादिरूपस्तुतिपरम्, अपरं वाक्यमित्येवं वाक्यभेदेनेत्यर्थः । **तत्स्वरूपं** कर्मादिस्वरूपम् । 'क्रियते' इति कर्मव्यापारमात्रमिति **सङ्करः** । तदसदिति भावेन कर्म विशिनष्टि **वर्णाश्रमोचित इति** । व्यापारमात्रज्ञानस्य स्तवनायोगादिति भावः । "अकर्म कर्माकरणम्" इति भाष्यरीत्या वक्तव्येऽपि 'कर्माभावम्' इति वचनं 'कर्माकरणम्' इति भाष्येऽपि कर्मशब्देन कर्मकरणं, नञाऽभावश्च गृह्यते । तथा च तत्रापि कर्माभाव एव ज्ञातव्य इति विभावयितुम् । भगवतस्तदयोगादाह **स्वस्येति** । 'पश्येद्' इत्याख्यातोपात्तः कर्तैवात्र स्वशब्दार्थः । **तद्विवृणोतीति** । "तर्हि मिथ्यादृष्टित्वं स्यादित्यतः" इति शेषः । जीवे कर्तर्यनुभूयमाने कथं नाहं करोमीति दर्शनम् ? इत्यतो भाष्ये हेत्वर्थगर्भं विशेषणम् **चित्प्रतिबिम्ब इति** । न हि प्रतिबिम्बस्य क्रियेति भावः । एतद्विशेषणोपादानस्य प्रयोजनान्तरं च दर्शयति **चित्प्रतिबिम्ब इत्यनेनेति** । 'तदधीनः' इत्यनेन

कर्तृत्वानुभवः समर्थितो भवति । 'करोमि' इति भाष्यस्थेतिशब्दस्य "यः पश्येत्सः" इति वक्ष्यमाणेनान्वयः । सुप्त्यादावपीश्वरेण कर्मकरणात् कथमकरणावस्था सा ? इत्यत आह **जीवापेक्षयेति** । जीवकर्तृककरणाभावापेक्षयेदं भाष्यं योज्यमित्यर्थः । **जीवेति** । जीवव्यापाराभावकाले भावकाले चेत्यर्थः । काले 'दा' स्मरणात् । 'सर्वसृष्ट्यादि' इत्यत्र सर्वशब्दार्थमाह **सर्वस्येति** । महदादेः स्वाप्नगजादेश्चेति वदन् सुप्तिशब्देन भाष्ये स्वप्नः आदिशब्देन सृष्टिश्च ग्राह्येत्यभिसन्धत्ते । **प्राचीनटीकायां तु** आदिशब्देन स्वप्नलयौ ग्राह्यावित्युक्तम् ।

'कर्मादिस्वरूपमाह' इत्यवतारिकाभाष्यं घटयितुमाह **अनेनेति** । 'कर्मण्यकर्म' इत्यर्धेन **स्वस्य** कर्तुः जीवस्य **तदधीनं** भगवदधीनं च कर्तृत्वम् । ननु कर्मस्वरूपमात्रोक्तिर्लब्धा, नैतावतैवालम् । तत्ते कर्म प्रवक्ष्यामि" इत्यत्र विकर्माकर्मणोरपि प्रवचनीयत्वेन विवक्षितत्वात्, कर्मादिस्वरूपमिति भाष्ये आदिपदप्रयोगाच्च तत्स्वरूपस्यापि प्रवक्तव्यत्वादित्यत आह **अनेनैवेति** । कर्मस्वरूपकथनेनैवेत्यर्थः । **उक्तलक्षणे** कर्माकर्मान्यद्विकर्म, कर्माकरणमकर्मेति भाष्योक्तलक्षणे । "बोद्धव्यं च विकर्मणः, अकर्मणश्च बोद्धव्यम्" (४.१७) इति गीतामनुरुध्योक्तम् **विकर्माकर्मणीति** । भाष्ये तु विकर्मस्वरूपज्ञानस्य अकर्मज्ञानाधीनत्वाद् आदावकर्म लक्षितमित्यवधेयम् । आहत्य प्रोक्तत्वात् 'प्रोक्तप्राये' इत्युक्तम् । 'व्याख्याततुल्ये' इत्यर्थः । **कोऽर्थभेद इति** । दर्शनस्यापि बुद्धित्वादिति भावः । कोऽर्थभेद इति शङ्कां परिहरति **ज्ञानिशब्दो हीति** । कथं च स्तुतिरिति चोद्यं परिहर्तुमुक्तम् **मतुबादीनामिति** । गीतायां मतुप्प्रत्ययस्य भाष्ये इनिप्रत्ययस्य च "भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायने । संसर्गेऽस्तिविवक्षायां भवन्ति मतुबादयः" इति वैयाकरणवचनेन प्रशंसार्थत्वादित्यर्थः । 'मतुबादीनाम्' इत्यादिशब्देन लच्-इलच्-आदीनां मत्वर्थीयप्रत्ययानां ग्रहणम् । 'कर्मकृदित्येतद्' इत्यनन्तरम् 'स्तुतित्वसिद्धये' इति योज्यम् । **मुख्ये** सर्वकर्मकर्तृत्वरूपमुख्यार्थे । **कृत्स्नफलवत्त्वाद्** इत्यत्र 'कृत्स्न' इत्यनन्तरं 'कर्म' इति योज्यमिति भावेन तत्फलं तन्महाफलं च वदन् मतुपस्तात्पर्यमाह **कृत्स्नकर्मणामित्यादि** ॥ १८ ॥

***गीताक्षरार्थस्तु***— "कुरु कर्मैव तस्मात्त्वम्" (४.१५) इति कर्तव्यतयोक्तकर्मणः स्वरूपं सम्यग्वक्तुं तस्य दुर्विज्ञेयत्वमुच्यते **किं कर्म किमकर्मेति** । अकर्मशब्दो विकर्मणोऽप्युपलक्षणार्थः । **अत्र** कर्मादिविषये **कवयो** ज्ञानिनोऽपि मोहिताः । **तत्** तस्मात् कविमोहविषयत्वात् **ते** जिज्ञासवे **कर्म प्रवक्ष्यामि** प्रकर्षेण वक्ष्यामि व्याख्यास्यामि । अकर्मविकर्मणी अप्यत्र व्याख्यास्यमाने ग्राह्ये । तयोरपि हेयतया ज्ञेयत्वात् । कर्मणस्त्वनुष्ठेयत्वेन प्राधान्यात् स्वशब्देन ग्रहणम् । **यज्ज्ञात्वा अशुभाद्** अनर्थात्मकात् संसारात् **मोक्ष्यसे** ॥ १६ ॥

कर्मादिस्वरूपं ज्ञात्वैव मुच्यते नान्यथेत्यतः तत्स्वरूपज्ञानमावश्यकमिति भावेनोच्यते **कर्मणो हीति** । **कर्मणः** 'विविच्य' इति शेषः । **बोद्धव्यं** विकर्माकर्म च बोद्धव्यम्, विकर्मणश्च निषिद्ध-त्वात् । विविच्य कर्माकर्म च बोद्धव्यम् । **अकर्मणश्च** कर्माभावाद् विविच्य कर्म विकर्म च बोद्धव्यम् । कुत एवं विविच्य ज्ञातव्यमिति विधीयत इत्यत उक्तम् **गहनेति** । **कर्मणः** कर्मादेः **गतिः** स्थितिरिति यावत् । **गहना** दुर्विज्ञेया । ''कवयोऽप्यत्र मोहिताः'' इति दुर्विज्ञेयत्वोक्तावपि पुनरत्र तद्वचनं शापादिप्रबलकारणोपनिपातनिबन्धनं न दुर्विज्ञेयत्वं, किन्नाम ? स्वभावेनैवेति दर्शयितुम् । एतच्च श्रोतुरधिकादरजननार्थमिति ज्ञेयम् ॥ १७ ॥

एवं सर्वथा ज्ञातव्यं ''तत्ते कर्म प्रवक्ष्यामि'' (४.१६) इति प्रतिज्ञातं कर्मादिस्वरूपं प्रपञ्च्यते **कर्मणीति** । वर्णाश्रमोचिते कर्मणि क्रियमाणे सत्यपि स्वस्य **अकर्म** कर्माभावं पश्येत् । भगवानेव स्वतन्त्रः कर्ता, अहं तु तद्दत्तकर्तृशक्तिः सन् करोमीति जानीयात् । **अकर्मणि** न विद्यते जीवकर्तृकं कर्म यस्मिन् आदिसृष्टिकाले सन्ध्ये च तद् अकर्म, तस्मिन् **कर्म** भगवतः पश्येत् भगवानेवादिसृष्टौ महदादि, सन्ध्ये स्वाप्नं गजादिकं करोतीति जानीयादित्यर्थः । अनेन भगवतः परानपेक्षया कर्तृत्वं, स्वस्य तदधीनं च तज्ज्ञात्वा वर्णाश्रमविहितानुष्ठानं कर्मेति कर्मस्वरूपं व्याख्यातं भवति । एवं कर्मस्वरूपप्रवचनेनैव भाष्योक्तलक्षणे विकर्माकर्मणीति प्रोक्तप्राये । ''कर्मण्यकर्म यः पश्येदकर्मणि च कर्म यः'' इत्युक्तरूपकर्मादिस्वरूपज्ञानिनम् अनूद्य तस्य स्तवनं क्रियते **स बुद्धिमानित्यादि-वाक्यत्रयेण** । **स बुद्धिमान्** ज्ञानी प्रशंसायां मतुप् । **स एव युक्तः योगः** चित्तनिरोधः । ''योग-श्चित्तनिरोधः'' (गी.भा. २.६६) इति द्वितीये भाषणात्, युक्तः । स एव च कृत्स्नकर्मणां फलस्य ज्ञानस्य मोक्षस्य प्राप्तप्रायत्वाद्गौण्या वृत्त्या **कृत्स्नकर्मकृदिति** ॥ १८ ॥

**गीतातात्पर्यनिर्णयः**

**कर्मणि जीवे । अस्वातन्त्र्यादकर्म । कर्मविधिफलयोरभावात् अकर्मणि विष्णौ स्वातन्त्र्यात् सर्वकर्मकर्तृत्वम् ।**

*प्रका०*— उत्तरश्लोकं व्याचष्टे **कर्मणीत्यादिना** । कृत्स्नकर्माकरणे कृत्स्नकर्मकृत्यं कृत्स्न-फलवत्त्वादवगन्तव्यम् ॥

*न्या०दी०*— एतद्बोधनं स्तूयते 'कर्मणि' इति । तत्र पूर्वार्धे दुर्गमार्थत्वात् व्याचष्टे **कर्मणीति** ॥

**गीतातात्पर्यनिर्णयः**

**"करोऽस्मिन्मीयत इति कर्म जीव उदाहृतः ।**

**विधिशब्देनामितत्वात् अकर्म भगवान् हरिः ॥" इति नारदीये ।**

*न्या०दी०*— कर्मविधिफलयोरभावात् अकर्मेत्यनेन तद्भावाज्जीवः कर्मेति सूचितम् । जीवेश्वरयोरेवं व्युत्पत्त्या कर्माकर्मपदवाच्यत्वं कुत इत्यत आह **कर इति** ॥ **अमितत्वात्** अविषयीकृतत्वादित्यर्थः ।

**गीतातात्पर्यनिर्णयः**

**कर इति सकारान्तोऽदृष्टवाची । क्रियावाची वा । तदधीनत्वात् । प्रसिद्धश्च जीवे कर्मशब्दः पञ्चरात्रे । कृत्स्नफलवत्त्वात् कृत्स्नकर्मकृत् ॥ १८ ॥**

*न्या०दी०*— कोऽयं करो नामेत्यत आह **कर इति** ॥ करशब्दस्य हस्तादिवाचित्वमेव दृष्टं, नादृष्टादिवाचित्वमित्यत उक्तम् **सकारान्त इति** ॥ हस्तादिवाचिनोऽयं सकारान्तोऽन्य एवेति भावः । कर्मविधिवाची चेति द्रष्टव्यम् । अत एव कर्मविधीत्याद्युक्तम् । अनेन विधिशब्देनामितत्वम् अकर्मपदेन कथमुच्यत इति परास्तम् । अकर्तरि जीवे कथं करो मीयत इत्यत आह **तदिति** ॥ नाकर्तरि क्रियादर्शनं विरुद्धं, स्वातन्त्र्येणाकर्तृत्वेऽपि भगवदधीनकर्तृत्वादिति भावः । अत एव पूर्वमस्वातन्त्र्यादित्याद्युक्तम् । कर्मशब्दस्य जीवे विद्वद्रूढिं च दर्शयति **प्रसिद्धश्चेति** ॥ ननु ज्ञानिनः स्वातन्त्र्येण पारतन्त्र्येण वा कृत्स्नकर्माकरणात् कथं कृत्स्नकर्मकृत्त्वमुच्यत इत्यत आह **कृत्स्नेति** ॥ स्वयोग्याशेषकर्मफलमोक्षस्य नियतत्वादिति भावः ॥

*भा०दी०*— **सकारान्त इतीति** । करः कर्मविधिरस्मिन् जीवे मीयते विषयीक्रियते इत्यर्थे निरुक्तत्वादुपपदटिलोपः । 'माङ् मान' इत्यतः कनिन्नित्युक्तं भवति ॥ **अनेनेति** । करःशब्दस्य कर्मविधिवाचित्वकथनेनेत्यर्थः ॥ **करो मीयत इति** । कर्मविधिर्मीयते ज्ञायत इत्यर्थः ॥ १८ ॥

**गीता**

**यस्य सर्वे समारम्भाः कामसङ्कल्पवर्जिताः ।**

**ज्ञानाग्निदग्धकर्माणं तमाहुः पण्डितं बुधाः ॥ १९ ॥**

*वि०वि०*— न केवलं कर्तृत्वाभिमानत्यागेनैव कृत्स्नकर्मकर्तृत्वादि, अपि तु कामादित्यागेनापि भाव्यमित्याह **यस्येत्यादि श्लोकपञ्चकेन** । समारम्भाः आरभ्यमाणानि कर्माणि । कामः फलासङ्गः । सङ्कल्पः कर्मसङ्गः । ताभ्यां वर्जिताः । अत एव ज्ञानाग्निदग्धकर्माणम् ॥

**सा०सं०**— न केवलं कर्तृत्वाभिमानत्यागेन वर्णाश्रमोचितकृत्स्नकर्मकृत्त्वम् । किन्तु कामादिपरित्यागेनापि भाव्यमिति भावेन कर्मस्वरूपमेव प्रपञ्चयति **यस्येत्यादि**श्लोकपञ्चकेन । **यस्य** पुंसः । **सर्वे समारम्भाः** सर्वे कर्मोपक्रमाः । **कामसङ्कल्पवर्जिताः** । कामः फलेच्छा । अनेनेदं स्वर्गादि साधयिष्यामीति सङ्कल्पः । ताभ्यां हीनाः । **तं ज्ञानाग्निदग्धकर्माणं** हरेरेव स्वतन्त्र-कर्तृत्वं ज्ञात्वा पश्चात् स्वस्य स्वातन्त्र्येण कर्माभावज्ञानित्वं ज्ञानाग्निदग्धकर्मत्वं तादृशम् । **बुधाः** ज्ञानिनः । **पण्डितं** तत्त्वज्ञानिनम् । **आहुः** ॥

**अ०प्र०**— कर्मणीति श्रुत्यर्थाभ्यां यदुक्तमर्थद्वयं तदेव स्पष्टयति **यस्येत्यादि** पञ्चभिः ।

बुधाः[१], सर्वे समारम्भाः[२], कामसङ्कल्पवर्जिताः[३], यस्य भवन्ति[४], तं[५], ज्ञानाग्निदग्धकर्माणं[६], पण्डितं[७], आहुः[८] इत्यन्वयः ।

बुधाः = ईश्वरतत्त्वज्ञाः[१], सर्वे समारम्भाः = सम्यक् आरभ्यन्त इति समारम्भाः[२], कामसङ्कल्पवर्जिताः = कर्माणि काम्यन्त इति कामाः, यद्वा कर्माणि फलं मे भूयादिति फलसङ्गः कामः इदं करिष्यत इति स कर्मसङ्गः सङ्कल्पः ताभ्यां वर्जिताः, यद्वा आरूढावस्थायां तु कामः फलविषयः तदर्थमिदं कर्तव्यमिति कर्मविषयसङ्कल्पश्च ताभ्यां वर्जिताः[३], यस्य पुंसः भवन्ति[४], तं[५], ज्ञानाग्निदग्धकर्माणं यस्तैस्समारम्भैः शुद्धे चित्ते सति जातेन पूर्वोक्तकर्मादि-ज्ञानरूप-अग्निना दग्धानि अकर्मतां नीतानि कर्तृत्वादित्यागेन कर्मणां अबन्धकत्वमेव दग्धत्वं भर्जनबीजवत्कृतानि कर्माणि यस्य तं तथा[६], पण्डितं अपरोक्षज्ञानिनं[७], आहुः वदन्तीत्यर्थः ॥

**भाष्यम्**

**एतदेव प्रपञ्चयति— यस्येत्यादिना श्लोकपञ्चकेन । उक्तप्रकारेण ज्ञानाग्नि-दग्धकर्माणम् ॥ १९ ॥**

**प०टी०**— ननु कथं स्वातन्त्र्यमात्रं विना कृतं कर्म भवति, रागस्याप्यकर्तव्यत्वात् ? इत्यत आह **एतदेवेति** । नैतावदेव कर्म । उत्तरश्लोकैरपि रागाद्यभावसहितत्वेन कर्मैवोच्यत इत्यर्थः । किं तज्ज्ञानम् । कथं च तेन दग्धकर्मा भवति ? इत्यत आह **उक्तेति** ॥ १९ ॥

**न०टी०**—ननु, 'स्वातन्त्र्यं मन्यमानस्य रागाद्धर्मं च कुर्वतः । तन्निमित्तस्तु दोषः स्यात्' इत्यादौ स्वातन्त्र्याद्यभिमानिकृतकर्मण इव फलकामादिकृतकर्मणोऽपि दोषहेतुत्वोक्तेः कथमेतत् कर्मस्वरूपम् ? इत्याशङ्क्य, उत्तरश्लोकैरपि कर्मस्वरूपस्यैव विस्तार्यमाणत्वान्न विरोध इति भावेनाह **एतदेवेति** । यस्योक्तप्रकारेण भगवतः स्वतन्त्रसर्वकर्मकर्तृत्वादिज्ञानात्, आत्मनश्च तत्प्रतिबिम्ब-

भूतस्य केवलं तदायत्तचेष्टादिज्ञानात्, सर्वे समारम्भा अहं करिष्यामीति सङ्कल्पवर्जिताः, मत्कर्मणः फलं स्यादिति कामवर्जिताश्च, तं तेनैव ज्ञानेनैव दग्धकर्माणं बुधाः पण्डितं प्राहुरित्यभिप्रेत्याह **उक्तेति** ॥

*प्र०दी०*— ननु प्रतिज्ञातमुक्तम् । तत्किमुत्तरैः श्लोकैरित्यत आह— **एतदेवेति** । कर्मस्वरूपमेव । अनेनात्रापि वाक्यभेदेन कामादिवर्जनविषया स्तुतिः क्रियत इति सूचितम् । मिथ्यात्वज्ञानेन कर्मणामुपमर्दो ज्ञानाग्निदग्धकर्मत्वमिति व्याख्यानमसदिति भावेनाह— **उक्तेति** । परमेश्वरस्यैव कर्तृत्वं ज्ञात्वा स्वस्य स्वातन्त्र्येण कर्माभावज्ञानमेव ज्ञानाग्निदग्धकर्मत्वमित्यर्थः ॥

*भा०र०*— **प्रतिज्ञातं** कर्मस्वरूपम् । 'कर्मणि' (४.१८) इत्यत्र कर्मादिस्वरूपज्ञानं विधाय "स बुद्धिमान्" इति तस्य स्तुतिः कृता । अस्य च तद्विवरणपरत्वे विधिरूपत्वं स्तुतिरूपत्वं चोपलभ्येत । न चैवम् । तस्य "तं पण्डितमाहुः" इत्यनुवादमात्रोपलम्भादित्यत आह **अनेनात्रापीति** । 'एतदेव' इति भाष्येण "यस्य सर्वे" इति श्लोकेऽपि यच्छब्दपरित्यागेन 'कार्या' इति पदाध्याहारेण च विधिवाक्यमेकम् । ततो "यस्य तम्" इति वाक्यान्तरम् । तेन च स्तुतिः क्रियत इति ज्ञातव्यमित्येवं वाक्यभेदेनोभयमप्यत्राभिप्रेतमिति सूचितमिति युक्तं तत्प्रपञ्चनरूपत्वमिति भावः । "कर्मादावकर्मादिदर्शनं ज्ञानम्" इति सङ्करभाष्यम् अर्थतोऽनुवदति । **मिथ्यात्वज्ञानेन इति** । उक्तमेव प्रकारं दर्शयति **परमेश्वरस्यैवेति** । 'स्वातन्त्र्येण' इत्यत्राप्यनुकर्षः । 'एव' इति परव्याख्यानमयुक्तम्, कर्मणां मिथ्यात्वे "कुरु कर्मैव तस्मात्त्वम्" (४.१५) इत्यादौ तद्विधानानुपपत्तेः । सर्वप्रमाणविरोधाच्चेति भावः । न चैवमस्यैव सङ्कल्पत्यागरूपत्वात् 'सङ्कल्पवर्जिताः' (४.१९) इत्यत्रोक्तमेवेदमपीति पुनरुक्तिरिति वाच्यम् । सङ्कल्पत्यागस्य स्वातन्त्र्येण कर्तृत्वभ्रमाभावरूपत्वात्, स्वातन्त्र्येण कर्माभावज्ञानस्य च तत्र स्वामित्वाभावज्ञानरूपत्वात्, तयोश्च महावैलक्षण्यादिति द्रष्टव्यम् । तथा च **प्राचीनटीका** । "अहं करोमि" इति भावना सङ्कल्प इति ॥१९॥

**गीता**

## त्यक्त्वा कर्मफलासङ्गं नित्यतृप्तो निराश्रयः ।
## कर्मण्याभिप्रवृत्तोऽपि नैव किञ्चित्करोति सः ॥ २० ॥

*वि०वि०*— न च कामसङ्कल्पाभावेनालं फले आसङ्गं स्नेहं च त्यक्त्वा । ज्ञानस्वरूपं पुनरप्याह **नित्यतृप्त इति** । नित्यतृप्तनिराश्रयेश्वरस्वरूपोऽस्मीति ज्ञानवान् । अनिराश्रयो वा भगवदाश्रयत्वात् ॥

***सा०सं०***— कामसङ्कल्पवर्जितत्वमात्रेण न कर्मस्वरूपं पूर्णम् । किन्तु कर्मफलस्नेहत्यागेनापि भाव्यमिति आह **त्यक्त्वेति** । कर्मणि फले चासङ्गं स्नेहं च **त्यक्त्वा** । **नित्यतृप्तो निराश्रयः** नित्य-तृप्तनिराश्रयभगवत्सरूपोऽस्मीति ज्ञानवान् । **कर्मण्यभिप्रवृत्तोऽपि स नैव किञ्चित् करोति** । स्वातन्त्र्याभावात् । **अनिराश्रय** इति वा पदविभागः । भगवदाश्रयत्वादनिराश्रय इत्यर्थः ॥

***अ०प्र०***— किञ्च, **त्यक्त्वेति** ।

नित्यतृप्तः[१], निराश्रयः[२], सः[३], कर्मफलासङ्गम्[४], त्यक्त्वा[५], कर्मणि[६], अभिप्रवृत्तोऽपि[७], किञ्चित्[८], नैव करोति[१०] इत्यन्वयः ।

नित्यतृप्तः = नित्ये निजानन्दे ब्रह्मणि तृप्तः, अत एव निराश्रयः = योगक्षेमार्थं आश्रणीय-रहितः; यद्वा अनिराश्रयः ब्रह्माश्रयः अतद्भावे सामानाधिकरण्यं सारूप्यं गमयतीति न्यायात् नित्यत्वनिराश्रयेश्वरप्रतिबिम्बोऽस्मीति ज्ञानवान् एवंभूतो यः[२], सः[३], कर्मफलासङ्गं त्यक्त्वा कर्मणि तत्फले वा सक्तिं त्यक्त्वा[५], कर्मणि स्वाभाविके विहिते कर्मणि[६], अभिप्रवृत्तोऽपि = अभितः प्रवृत्तोऽपि तस्य कर्म अकर्मतां आपद्यते इति कृत्वा अभिप्रवृत्तोऽपि[७], किञ्चित्किमपि[८], नैव करोतीत्यर्थः ॥ २० ॥

### भाष्यम्

**न च कामसङ्कल्पाभावेनालम् । असङ्गं स्नेहं च त्यक्त्वा । ज्ञानस्वरूपमाह पुनः नित्यतृप्त इति । नित्यतृप्तनिराश्रयेश्वरसरूपोऽहमस्मीति तथाविधः ॥२०॥**

***प०टी०***— 'ममेदं फलं स्यात्, अहं कर्ता' इति कामसङ्कल्पौ विहाय, कृतं कर्मेत्युक्तम् । अथाप्यस्तीत्याह **न चेति** । ननु किमिति कामसङ्कल्पसंश्रयास्तज्जा (?) इत्यत आह **ज्ञानेति** । नित्यतृप्तनिराश्रयेश्वरसरूपत्वेन स्वस्यापि तादृशत्वाद्व्यर्थौ कामासङ्गौ प्रतिबिम्बत्वेनाकर्तृत्वानु-सङ्कल्पोऽपि कार्य इत्यर्थः ॥

***न०टी०***—स्वारोपिताहङ्कारनिमित्तफलकामत्यागात्, स्वस्येश्वराधीनत्वादियाथार्थ्यज्ञानाच्च न कर्माणि बध्नन्तीत्युक्तम् । तत्र तावत् त्यागे विशेषमाह **न चेति** । फलकामाभावेऽपि यदि फले स्नेहः स्यात्, तथाऽपि बध्नन्ति कर्माणीति सोऽपि त्याज्य इत्यर्थः । ज्ञानेऽपि विशेषमाह **ज्ञानस्वरूप-मिति** । न केवलं चित्प्रतिबिम्बत्वात् चित्त्वमात्रमस्य । किन्तु नित्यतृप्तनिराश्रयेश्वरप्रतिबिम्बत्वात् स्वयं च नित्यतृप्तः । अत एव निराश्रयश्च अतृप्तो ह्यन्यानाश्रयति । युक्ताश्च बिम्बधर्माः प्रतिबिम्बे इत्युक्तत्वात् । संसारे तु तृप्त्यादेरभिभूतत्वात् अन्यकामादिरपि भवति ॥

*प्र०दी०*— "यस्य सर्वे समारम्भाः कामसङ्कल्पवर्जिताः" इत्यनेन यदुक्तं तदेव "त्यक्त्वा कर्मफलाऽसङ्गं" इत्यनेनोच्यते । सङ्कल्पो हि कर्माऽसङ्गः । कामश्च फलाऽसङ्ग इत्यतः सङ्गति-पूर्वमन्यथा व्याचष्टे— **न चेति** । नैतावता कर्मस्वरूपं सम्पूर्णमित्यर्थः । किं तर्हीत्यध्याहारः । "ननु नित्यतृप्तो निराश्रय" इति साध्योऽर्थः । स कथं साधने निवेश्यत इत्यत आह— **ज्ञानेति** । 'कर्मण्यकर्म' इत्यपेक्षया पुनरिति । मिथ्याज्ञानमेतदित्यतोऽभिप्रायमाह— **नित्येति** । इति हेतोरहमपि तथाविधः । किन्त्वविद्यया तथा न प्रतीयत इति जानन्नित्यर्थः ॥

*भा०दी०*— **इत्यपेक्षयेति** । .......... दा हरिरेव कर्ता अहं तु तदधीनकर्तेति कर्मणीति श्लोके यद्ज्ञानस्वरूपत्वमुक्तं तदपेक्षयान्यथापि ज्ञानस्वरूप-................ त्युक्तमित्यर्थः । **मिथ्या-ज्ञानमेतदिति** । नित्यवृत्तत्वादिज्ञानमित्यर्थः । भाष्यस्थेतिशब्दानुवादेनार्थमाह **इति हेतोरिति** । ........... नेत्य..त्वादिधर्मोपेत इत्यर्थः । तर्हीदानीं कुतः स धर्मो नोपलभ्यत इति भावेन किं त्विति प्रश्ने उत्तरम् **अविद्ययेत्यादि** ॥

*भा०र०*— कर्म च फलं च कर्मफले, तयोरासङ्गः कर्मफलासङ्ग इत्यभिप्रेत्य पुनरुक्तिमुप-पादयति **सङ्कल्पो हीति** । कर्मासङ्गः "कर्माहं करोमि" इत्यध्यवसायः । **फलासङ्गः** "कर्मफलं मम स्याद्" इत्यभिलाषः । 'कामसङ्कल्पाभावेन' इति पूर्वश्लोकार्थानुवादादाह **सङ्गतिपूर्वमिति** । 'अलम्' इत्यस्यार्थः 'सम्पूर्णम्' इति । **किं तर्हीति** । 'अलमित्यनन्तरम्' इति शेषः । 'आसङ्गम्' इत्यनूद्य 'स्नेहम्' इति व्याख्यानं भाष्ये । तत्र स्नेहः आसक्तिः प्रीतिः । स च कामादन्य एव । "सङ्गात् सञ्जायते कामः" (२.६२) इति भगवतैव तयोः कार्यकारणभावस्योक्तत्वात् । तथा च पूर्वोक्तमेवात्रोच्यत इति न चोद्यावकाश इति भाष्यभावः स्फुटत्वान्नोक्तः । अत एवान्यथा व्याचष्ट इत्येवोक्तम् । **प्राचीनटीकायामपि** फलकामाभावेऽपि यदि फले स्नेहः स्यात्, तथापि बध्नन्त्येव कर्माणीति सोऽपि त्याज्य इति कामस्नेहौ पृथगभिहितौ । **साध्य इति** कर्मज्ञानफलरूपोऽर्थः । **साधने** कामादित्यागरूपसाधनवर्गे । **स कथं निवेश्यते** सहोच्यत इत्यर्थः । **इत्यपेक्षया पुन-रितीति** । विष्णोरेव कर्म, नाहं चित्प्रतिबिम्बः किञ्चित्करोमीति पश्येदिति "कर्मण्यकर्म" (४.१८) इत्यत्र यज्ज्ञानस्वरूपमुक्तं तदपेक्षया "नित्यतृप्तनिराश्रयेश्वरसरूप" इतीत्थंभावान्तराभिधानाय पुन-र्ज्ञानस्वरूपमुच्यत इति भावेन भाष्ये पुनरुक्तमित्यर्थः । **मिथ्येति** । संसारे तृप्त्यादिकमेव नास्ति । नित्यतृप्त्यादिस्तु सुतरामिति तद्बोधो मिथ्याज्ञानमेवेत्यर्थः । भाष्यस्थेतिशब्दम् अनूद्य तदर्थमाह **इति हेतोरिति** । **तथाविधः** नित्यतृप्त्यादिधर्मोपेतः । "युक्ताश्च बिम्बधर्माः प्रतिबिम्बे" (गी.भा. २.२४) इत्युक्तत्वादिति भावः । तर्हीदानीं स धर्मः कुतो नोपलभ्यते ? इति पृच्छति **किन्त्विति** । उत्तरमाह **अविद्ययेति** ॥ २० ॥

गीता

**निराशीर्यतचित्तात्मा त्यक्तसर्वपरिग्रहः ।**
**शारीरं केवलं कर्म कुर्वन्नाप्नोति किल्बिषम् ॥ २१ ॥**

***वि०वि०***— कामादित्यागोपायमाह **निराशीरिति** । आत्मा मनः । यतचित्तमना भूत्वा । निराशीः त्यक्तसर्वपरिग्रहश्च भवति । परिग्रहत्यागोऽनभिमानम् । तथा ह्युक्तम्—

'सुसुखं बत जीवामि यस्य मे नास्ति किञ्चन ।
मिथिलायां प्रदीप्तायां न मे दह्यति किञ्चन ॥'

इति । ननु उक्तोपायेन यस्त्यक्तकामादिः सर्वकर्मण्यभितः सर्वतः प्रवृत्तौ नैव किञ्चित्करोतीत्येतद्विरुद्धमित्याशङ्क्य तस्याभिप्रायमाह **नाप्नोति किल्बिषमिति** । कर्मफलसङ्गाभावात् तन्निबन्धनदोषराहित्यमेव सेन्द्रियशरीरनिर्वर्त्यकर्मकारिणोऽकर्तृत्वमिति भावः ॥

***वा०ल०***— 'निराशीर्यतचित्तात्मा' इत्यत्र आत्मपदेन प्रयत्नः कथ्यते । शारीरं शरीरयात्रामात्रोपयुक्तं कर्म कुर्वन् किल्बिषं नाप्नोति इति योजना ॥

***सा०सं०***— कामसङ्कल्पादित्यागोपायमाह **निराशीरिति** । आत्मा मनः । यतौ नियतौ चित्तात्मनौ यस्य स **यतचित्तात्मा** भूत्वा । **निराशीः** निष्कामः । **त्यक्तसर्वपरिग्रहश्च** भवतीत्यर्थः । मनोनिग्रहेणैव कामादित्याग इति भावः । परिग्रहत्यागो नाम देहेन्द्रियादिपरिग्रहे अभिमानत्यागो ज्ञेयः । **केवलं शारीरं** शरीरयात्रार्थम् ।

यद्वा, **केवलं** कामादिरहितम् । **शारीरं** शरीरेन्द्रियादिकरणकम् । **कर्म कुर्वन् किल्बिषं** कर्मबन्धनम् । **नाप्नोति** । 'नैव किञ्चित्करोति' इति प्रागुक्तस्य कर्मणां मिथ्यात्वादिति विपरीतभ्रमस्य निरासाय 'नाप्नोति किल्बिषम्' इति तदभिप्रायोऽत्र गौण्या वृत्त्या वर्णितः ॥

***अ०प्र०***— किञ्च, **निराशीति** ।

यतचित्तात्मा[१], अत एव निराशीः[२], त्यक्तसर्वपरिग्रहः[३], सन्, केवलं[४], शारीरं[५], कर्म[६], कुर्वन्नपि[७], किल्बिषं नाप्नोति इत्यन्वयः ।

यतचित्तात्मा = यतौ नियमितौ चित्तात्मानौ = बुद्धिमनसी यस्य सः यतं = नियमितं चित्तं आत्मा च शरीरं यस्य तथा[१], अत एव निराशीः = फलादिकामरहितो भवेत्[२], त्यक्तसर्वपरिग्रहः = त्यक्ताः सर्वे परिग्रहाः देहादयो यस्य सः तत्त्यागो नाम तदभिमानाभावः सन्[३], तदुक्तम्—

"ससुखं बत जीवामि यस्य मे नास्ति किञ्चन ।
मिथिलायां प्रदीप्तायां न मे किञ्चिन्न दह्यति ॥" (इति)

केवलं[४], शरीरं = शरीरजन्यं तद्धारकं वा यद्वा शरीरमात्रनिवृत्तिकर्तृत्वाभिनिवेशरहितं वा[५], कर्म[६], कुर्वन्नपि[७], किल्बिषं = तज्जन्यपापरूपबन्धनम्[८], कामाद्यभावात् नाप्नोति न प्राप्नोतीत्यर्थः । योगारूढपक्षे शरीरनिर्वाहमात्रोपयोगि स्वाभाविकं भिक्षाटनादि कुर्वन्नपि किल्बिषं विहिताकरणनिमित्तं दोषं नाप्नोतीति, अनेन 'कर्मण्यभिप्रवृत्तोऽपि नैव किञ्चित्करोति सः' इति व्याहृतोक्तेः भावः उक्तो भवतीति ॥ २१ ॥

**भाष्यम्**

**कामादित्यागोपायमाह— निराशीरिति । यतचित्तात्मा भूत्वा निराशीरित्यर्थः । आत्मा मनः । परिग्रहत्यागोऽनभिमानम् । 'नैव किञ्चित् करोति' इत्यस्याभिप्रायमाह— नाप्नोति किल्बिषमिति ॥ २१ ॥**

***प०टी०***— ननु त्याज्यमेव कामादि, तथाऽपि केनोपायेन त्यज्यते ? इत्याशङ्क्य, उत्तरश्लोकमवतार्य व्याचष्टे **कामादीति** । 'आत्म'शब्देन मन एव, न सेन्द्रियो देह इत्याह **आत्मेति** । नन्वयं कामत्यागोपाय एवोच्यते न सङ्कल्पत्यागोपाय इत्यत आह **परिग्रहेति** । तथाऽपि स्मरणकारणचित्तनिग्रहे कामो नोदेति । सङ्कल्पात्मकमनोजये सङ्कल्पत्यागो भवतीत्यर्थः । ननु प्रवृत्तोऽपि न करोतीति विरुद्धमित्याशङ्क्योत्तरत्वेनोत्तरपदमवतारयति **नैवेति** ॥

***न०टी०***—तत्त्यागोपायपरतयैतत् तृतीयं श्लोकमवतारयति **कामादीति** । निराशीस्त्वं त्यक्तकामता । तत्र यतचित्तात्मत्वं साधनमिति भावेन योजयति **यतेति** । नात्रात्मशब्देन सेन्द्रियो देह उच्यते । मनोनिरोधेनैव तन्निरोधसिद्धेः । अतो मन एवेति भावेनाह **आत्मेति** । ननु परिग्रहत्यागस्य कामादित्यागोपायत्वे परिग्रहिणां कामाद्युपहतिः स्यादित्यत आह **परीति** । तथा हि मोक्षधर्मे जनकवाक्यम्—

'ससुखं बत जीवामि यस्य मे नास्ति किञ्चन ।
मिथिलायां प्रदीप्तायां न मे दह्यति किञ्चन ॥' इति ।

ननूक्तोपायेन यस्त्यक्तकामादिः स कर्मण्यभितः सर्वतः, सर्वस्मिन् विहिते कर्मणि प्रवृत्तोऽपि नैव किञ्चित् करोतीत्यतिविरुद्धमित्याशङ्कापरिहारत्वेन श्लोकशेषं व्याचष्टे **नैवेति** ।

द्विविधं हि कर्मफलम् । फलकामकर्माहङ्कारादिनिमत्तदोषात्मकं 'सर्वारम्भा हि दोषेण' इत्यादावुदितम्, सुकर्मजनितगुणात्मकं च । एवं सति यः सर्वमपि विहितं कर्म केवलं शारीरमेव करोति सेन्द्रियशरीरमात्रनिर्वर्त्यं न तु 'अहं करिष्ये', 'अत एव तत्फलं मे स्यात्', 'तदपि प्रियं मम' इति मनसि निरूढम्, स फलकामकर्माहङ्कारादिनिमित्तकिल्बिषं नाप्नोति । किन्तु सुकर्मजनितगुणमेवेति नैव किञ्चित्करोतीत्यर्थः ॥

*प्र०दी०*— कामवर्जितत्वमेव 'निराशीः' इत्यनेनोच्यत इत्यत आह— **कामादीति** । आदिपदेन सङ्कल्पादिपरिग्रहः । कथमित्यतो योजयति— **यतेति** । निराशीः त्यक्तसर्वपरिग्रहश्च भवतीति शेषः । सेन्द्रियं शरीरमात्मेत्यसत् । अन्तःकरणवृत्तिनियमेनैव तन्नियमसिद्धेरिति भावेनाह— **आत्मेति** । ननु परिग्रहो देहादिः । तत्त्यागः कथं साधकस्येत्यत आह— **परिग्रहेति** । अनभिमानमिति स्थितिरित्यादि क्रियाविशेषणम् । अर्थाभावेऽव्ययीभावो वाऽयम् । अभिमानाभाव इत्यर्थः । पूर्वश्लोके ''कर्मण्यभिप्रवृत्तोऽपि नैव किञ्चित्करोतीति कर्मणां मिथ्यात्वज्ञानात्'' इति व्याख्यानमसत् । अत्र श्लोकेऽन्यथा तदभिप्रायस्य वर्णितत्वादिति भावेनाह— **नैवेति** । गौण्या वृत्त्येदमभिप्रायकथनमित्यवधेयम् ॥

*भा०दी०*— **सङ्कल्पादिपरिग्रहः** । सङ्कल्पफलस्नेहयोर्ग्रहणमित्यर्थः । **कथमिति** । त्यागोपायोक्तिः कथमित्यर्थः । नपुंसकनिर्वाहायाह **स्थितिरित्यादीति** । भाष्ये स्थितिर्दर्शनं श्रवणमाघ्राणमित्यादि क्रियाध्याहारः अनभिमानं यथा भवति तथा देहादौ स्थितिः चक्षुरादिना रूपादिदर्शनादिकमित्यर्थः । द्वितीयाध्यायान्त्यपादे नपुंसकमित्यधिकारेऽव्ययीभावश्चेति सूत्रे क्रियाविशेषणानां चेति वार्तिके क्रियाविशेषणस्य नपुंसकैकवद्भावयोरुक्तेरत्र नपुंसकत्वं साध्विति क्रियानध्याहारेणैव समाधिमाह **अर्थाभाव इति** । अव्ययं विभक्तिसमीपसमृद्धिवृध्यर्थाभावेत्यादिसूत्रेणार्थाभावे यदव्ययं तत्सुबन्तेन समस्यते सोऽव्ययीभाव इत्युक्तेर्विवादाभावोऽविवादमित्यादाविवाभिमानाभावोऽनभिमानमित्यर्थः । **गौण्या वृत्त्येति** । कर्माकरणस्यैव कर्मकरणस्यापि फलानिष्पादकत्वगुणयोगाद्गौण्या वृत्त्या न किञ्चित्करोतीत्यस्य न किञ्चित्किल्बिषरूपं तत्फलमाप्नोत्येवमभिप्रायकथनं कृष्णस्येत्यर्थः ॥

*भा०र०*— कामना आशासनमित्यनर्थान्तरत्वादाह **कामेति** । 'सङ्कल्पादि' इत्यादिपदेन स्नेहः ग्राह्यः । **कथमिति** । 'निराशीः' इत्यादेः कामादित्यागोपायत्वोक्तित्वं कथमित्यर्थः । 'निराशीः' इत्यनूद्यानन्तरं शेषमाह **त्यक्तेति** । ''आत्मा बाह्यः कार्यकारणसङ्घातः'' इति **सङ्करभाष्यमर्थतो**ऽनुवदति **सेन्द्रियमिति** । परेणापि ''चित्तम् अन्तःकरणम्'' इति भाषणादुक्तम् **अन्तःकरणेति** ।

**तन्नियमसिद्धेः** शरीरनियमसिद्धेः । नन्वत्र पक्षे "चित्तं च **आत्मा** मनश्च तौ । यतौ चित्तात्मानौ येन स यतचित्तात्मा" इति हि व्युत्पत्तिरभिमता । तथा च पुनरुक्तिः स्यात् । चित्तमनःशब्दयोः पर्याय-स्मरणादिति चेन्न । विषयस्मरणकारणचित्तनियमने कामो नोदेति । सङ्कल्पात्मकमनोनियमने सङ्कल्पत्यागो भवतीति भावप्रदीपिकायां स्फुटमर्थभेदाभिधानात् । "चित्तं तु चेतो हृदयम्" (अमरे) इत्यभिधानं तु तत्र विशेषाविवक्षया प्रवृत्तमिति । नन्वभिमानशब्दस्तावत्पुंलिङ्गः । अभिपूर्वान्मन - ज्ञान इत्यतो घञि निष्पन्नत्वात् । तथाऽमरः "गर्वोऽभिमानोऽहङ्कारः" इति । अभिमानशब्दस्य नञ्समासे नञ्तत्पुरुषस्यापि पुंस्त्वमेव । "परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः" इत्यनुशासनात् । तत्कथम् 'अनभिमानम्' इति क्लीबत्वम् ? इत्यत आह **अनभिमानमितीति** । क्रियाविशेषणस्य च "क्रिया-विशेषणानां च" इति वार्तिके नपुंसकत्वानुशासनाद् युक्तं भाष्यमिति भावः । क्रियैव नात्र श्रूयते, यद्विशेषणत्वेन क्लीबत्वम् इत्यत उक्तम् **स्थितिरित्यादीति** । आदिपदेन चक्षुषा दर्शनम्, श्रोत्रेण श्रवणमित्यादिरूपेण समस्तेन्द्रियव्यापारभूतदृष्टिश्रुत्यादिग्रहणम् । 'अध्याहृत' इत्युपस्कर्तव्यम् ।

नन्वेवं सति "नास्त्यभिमानो यस्मिन् कर्मणि तद्यथा तथा" इति बहुव्रीहिरङ्गीकृतः स्यात् । अन्यथा क्रियाविशेषणत्वानिर्वाहात् । तथा च वर्तिपदार्थप्रधानसमासपरित्यागेन अन्यपदार्थप्रधान-समासाभ्युपगमो दोषः । 'स्थितिः' इत्यादि अश्रुतक्रियाकल्पनम् । "परिग्रहत्यागोऽनभिमानम्" इति श्रुतसामानाधिकरण्यभङ्गश्चेत्यनुशयादाह **अर्थाभाव इति** । "अव्ययं विभक्ति-समीप-समृद्धि-व्यृद्धि-अर्थाभाव" इत्यादिसूत्रेण अर्थाभावे वर्तमानस्य नञाख्याव्ययस्य अभिमानपदेन अव्ययी-भावसमासे "कृत्तद्धितसमासाश्च" इति समासत्वेन प्रातिपदिकत्वात् सुबुत्पत्तौ तस्य "नाव्ययी-भावादतोऽम्त्व-पञ्चम्याः" इति लुक्प्रतिषेधेन अमादेशे "अव्ययीभावश्च" इति नपुंसकत्वे च 'अनभिमानम्' इति रूपे अभिमानाभाव इत्यर्थः सम्पद्यते । देहादिरूपपरिग्रहे सत्यपि तदभिमानाभाव एव परिग्रहत्याग इति विवक्षित इति न कोऽपि दोष इति भावः । तथा च **प्राचीनटीका** । तथा हि मोक्षधर्मे जनकवाक्यम्—

सुसुखं बत जीवामि यस्य मे नास्ति किञ्चन ।
मिथिलायां प्रदीप्तायां न मे किञ्चन दह्यते ॥ इति । (म.भा.शा.मो.१७६.५६)

"निष्क्रियात्मदर्शनसम्पन्नत्वान्नैव किञ्चित्करोति सः" इति **सङ्करभाष्यं** तात्पर्यतोऽनुवदति **कर्मणां मिथ्यात्वज्ञानादिति** । ननु "नैव किञ्चित्करोति" (४.२०) इत्यस्य "कुर्वन् नाप्नोति किल्बिषम्" इत्येतत् कथं तात्पर्यकथनरूपम् ? 'नैव' इति कर्ममात्रकरणप्रतिषेधेन "कुर्वन् नाप्नोति" इति किल्बिषप्राप्तिप्रतिषेधेन च तयोर्भिन्नार्थत्वप्रतीतेरित्यत आह **गौण्या वृत्त्येति** । "नैव किञ्चित्

करोति" इत्यत्र सर्वथा कर्ममात्रमकुर्वतो विकर्माकरणेन यथा किल्बिषाप्राप्तिः, तथा शारीरं केवलं कर्म कुर्वतो नैव किल्बिषप्राप्तिरिति किल्बिषाप्राप्तिलक्षणगुणयोगाद् गौणीवृत्तिरिष्टा। तथा च "नैव किञ्चित्करोति" इत्यस्य "नैव किल्बिषमाप्नोति" इति तात्पर्यकथनं युक्तमित्यर्थः।

**प्राचीनटीकायां तु** ननूक्तोपायेन यस्त्यक्तकामादिः स कर्मणि **अभितः** सर्वतः सर्वस्मिन् विहिते प्रवृत्तोऽपि नैव किञ्चित्करोतीत्यतिविरुद्धम् इत्याशङ्कापरिहारत्वेन श्लोकशेषं व्याचष्टे **नैवेति**। द्विविधं कर्मफलम्। फलकामकर्माहङ्कारादिनिमित्तदोषात्मकम् "सर्वारम्भा हि दोषेण" (१८.४८) इत्यादावुदितं, सुकर्मजनितगुणात्मकं चेति। एवं सति यः सर्वमपि विहितं **केवलं शारीरम्** एव करोति सेन्द्रियशरीरमात्रनिर्वर्त्यं "न त्वहं करिष्ये", "अत एव न तत्फलं मम स्यात्", "तदपि प्रियं मम" इति मनसि निरूढं भावयति, स फलकामकर्माहङ्कारादिनिमित्तकिल्बिषं नाप्नोति। किन्तु सुकर्मजनितगुणमेवेति "नैव किञ्चित्करोति" इत्यस्यार्थ इति, नैव किञ्चित्करोतीत्यस्याभिप्रायमाह "नाप्नोति किल्बिषमिति" इति भाष्यं व्याख्यातम्॥ २१॥

### गीता

## यदृच्छालाभसन्तुष्टो द्वन्द्वातीतो विमत्सरः।
## समः सिद्धावसिद्धौ च कृत्वाऽपि न निबद्ध्यते॥ २२॥

*वि०वि०*— कामाद्यहङ्कारत्यागाद्युपायभूतयतचित्तात्मवतो लक्षणमाह **यदृच्छेति**। कथं द्वन्द्वातीतत्वमित्यत आह **सम इति**॥

*सा०सं०*— यतचित्तात्मा कीदृश इत्यतस्तस्य लक्षणमाह **यदृच्छेति**। अप्रयत्नलब्धेन तृप्तिमान्। सुखदुःखलाभालाभादिद्वन्द्वान्यतीतो **द्वन्द्वातीतः**। **विमत्सरः** स्वानधीनत्वनिमित्त-मनःखेदहीनः। द्वन्द्वातीतत्वं किं प्रकारमिति जिज्ञासायां तद्विवृणोति **सम इत्यादिना**। सिद्ध्य-सिद्ध्योरुत्सेकानुत्सेकहीनत्वरूपसमत्वमेव द्वन्द्वातीतत्वमित्यर्थः। एवंविधः **कर्म कृत्वाऽपि** तेन **न निबध्यत** इति। यदृच्छालाभसन्तुष्टत्वादिकं यतचित्तात्मनो लक्षणमित्युक्तं भवति॥

*अ०प्र०*— किञ्च, **यदृच्छेति**।

यदृच्छालाभसन्तुष्टः[१], द्वन्द्वातीतः[२], विमत्सरः[३], सिद्धौ[४], असिद्धौ च समः[५], एवंभूतो यः सः कृत्वाऽपि[६], न निबद्ध्यते[७] इत्यन्वयः।

यदृच्छालाभसन्तुष्टः = अप्रार्थितोपस्थितो लाभो अयाञ्चया प्राप्तलाभः यदृच्छालाभः, तेन सन्तुष्टः[१], द्वन्द्वातीतः = शीतोष्णादीन्यतीतः अतिक्रान्तः तत्सहनशील इत्यर्थः[२], विमत्सरः =

अप्रीतिशून्यः निर्वैरो वा[३], सिद्धौ असिद्धौ च समः = दैवात् यदृच्छालाभस्यापि प्राप्तौ अप्राप्तावपि समः हर्षविषादशून्यः[४,५], एवंभूतो यः सः कृत्वापि = पूर्वोत्तरभूमिकयोः यथायथं विहितं स्वाभाविकं वा कर्म कृत्वापि[६], न निबद्ध्यते = बन्धनं न प्राप्नोति[७] ॥ २२ ॥

### भाष्यम्

**यतचित्तात्मनो लक्षणमाह— यदृच्छालाभेति । कथं द्वन्द्वातीतत्वमित्यत आह— समः सिद्धाविति ॥ २२ ॥**

***प०टी०***— यतचित्तात्मैव कीदृशो येन कामादिक्षयः ? इत्याशङ्क्य, उत्तरं श्लोकमवतारयति **यतेति** । कामाद्यभावे कथं चित्त्वम् ? अतो द्वन्द्वत्यागो युक्त इत्याशङ्क्य, तृतीयपादमवतारयति कथमिति । न साक्षाद्द्वन्द्वत्यागः, किन्तु सिद्ध्यसिद्ध्योर्दुःखदोषाभाव एवेत्यर्थः ॥

***न०टी०***—ननूत्तरश्लोके 'कर्मण्यकर्म' इति श्लोकार्थलेशस्याप्यप्रतीतेः कथं तत्प्रपञ्चात्मकत्वम् ? इत्यत आह **यतेति** । 'कर्मण्यकर्म' इति श्लोकोक्तो यः कर्माहङ्कारादिः, तदुपायभूतयतचित्तात्मकत्वलक्षणोक्तेस्तत्प्रपञ्चात्मकत्वमिति भावः । ननु कामक्रोधादिराहित्यं द्वन्द्वातीतत्वम् । तत्र कामाभावे घटादिवज्जडत्वापत्तेः न कस्यापि कामत्यागः । क्रोधोऽपि न सर्वात्मना त्यक्तुं शक्यः । कामादेव क्रोधदर्शनात् । 'कामं दहन्ति कृतिनो ननु रोषदृष्ट्या' इति वचनादिति भावेनाशङ्कते **कथमिति** । तामाशङ्कां 'द्वन्द्वातीत' पदं व्याचक्षाणो भगवानेव परिहरतीति भावेन तृतीयं पादमवतारयति **आहेति** । यथा यदृच्छया यत्किञ्चिदाहारादिसिद्धौ नाधिकं वाञ्छति, नाल्पदातारं कुप्यति । तथा कदाचिदाहारादेरसिद्धावपि नान्यतो वाञ्छति, अदातारं च न कुप्यतीत्येतदेव च द्वन्द्वातीतत्वम् । न तु सर्वथा कामक्रोधादिराहित्यमिति भावः ॥

***प्र०दी०***— कामादिवर्जने यदृच्छालाभसन्तुष्टत्वादिकमर्थात्सिद्धम् । तत्किमर्थमुच्यत इत्यत आह— **यतेति** । द्वन्द्वातीत इत्युक्तमेव ''समस्सिद्धावसिद्धौ च'' इत्यनेनोच्यत इत्यत आह— **कथमिति** । किम्प्रकारमित्यर्थः । इति जिज्ञासायामिति शेषः । व्याख्यानव्याख्येयत्वेन न पुनरुक्तिदोष इत्यर्थः ॥

***भा०दी०***— **न पुनरुक्तीति** । पदविभागः ॥

***भा०र०***— 'कामादिवर्जने' इत्यत्रादिपदेन सङ्कल्पफलस्नेहौ ग्राह्यौ । **यततीति** । यतचित्तात्मा भूत्वा निराशीस्त्यक्तसर्वपरिग्रहश्च भवतीत्युक्तम् (४.२०) । तत्र चित्तात्मनियमनस्यान्तरत्वेन तत्त्वं

केन लक्षणेन ज्ञातव्यम् ? इति जिज्ञासायां यदृच्छालाभसन्तुष्टः" इत्यादिना तस्य लक्षणमत्रोच्यत इत्यर्थवदेव तद्वचनमिति भावः । **उच्यत** इत्यनन्तरम् "इति पुनरुक्तिः" इति शेषः । अनेन पुनरुक्तिदोषः कथं परिहृतः ? इत्यत आह **व्याख्यानेति** । 'द्वन्द्वातीतः' इति व्याख्येयम्, "समः सिद्धावसिद्धौ च" इति व्याख्यानमित्यभ्युपगमे पुनरुक्तिदोषो नेत्यर्थ इति भावः । **प्राचीनटीकायां तु** कामक्रोधादिराहित्यं द्वन्द्वातीतत्वम् । तत्र कामाभावे घटादिवज्जडतापत्तेर्न कस्यापि कामत्यागः । क्रोधोऽपि न सर्वात्मना त्यक्तुं शक्यः । कामादेव क्रोधदर्शनात् । "कामं दहन्ति कृतिनो ननु रोषदृष्ट्या" (भाग. २.७.७) इति वचनादिति भावेन शङ्कते **कथमिति** । इमामाशङ्कां द्वन्द्वातीतपदं व्याचक्षाणो भगवानेव परिहरतीति भावेन तृतीयपादमवतारयति **आहेति** । यथा यदृच्छया यत्किञ्चिदाहारादिसिद्धौ नाधिकं वाञ्छति नाल्पदातारं कुप्यति, तथा कदाचिदाहारादेरसिद्धावपि नान्यद्वाञ्छति अदातारं च न कुप्यतीत्येतदेव द्वन्द्वातीतत्वम्, न तु सर्वथा कामक्रोधादिराहित्यमिति भाव इति 'कथम्' इत्यादिभाष्यं व्याख्यातम् ॥ २२ ॥

**गीता**

## गतसङ्गस्य मुक्तस्य ज्ञानावस्थितचेतसः ।
## यज्ञायाचरतः कर्म समग्रं प्रविलीयते ॥ २३ ॥

***वि०वि०***— उपसंहरति **गतसङ्गस्येति** । गतसङ्गस्य फलस्नेहरहितस्य स्वातन्त्र्याभिमानाच्छरीराभिमानाद्वा मुक्तस्य । मुक्तसदृशस्य वा । ज्ञानावस्थितचेतसः परमेश्वरज्ञाननिष्ठचित्तस्य । यज्ञाय भगवते । आचरतः कर्म समग्रं प्रविलीयते बन्धकं न भवति । उक्तं च—

'एवं नृणां क्रिया योगाः सर्वे संसृतिहेतवः ।
त एवात्मविनाशाय कल्पन्ते कल्पिताः परे ॥' इति ॥

***वा०ल०***— 'समग्रं प्रविलीयते' इत्यत्र समग्रं पापं प्रविलीयते ॥

***सा०सं०***— विक्षिप्य प्रागुक्तं पिण्डीकृत्य दर्शयति **गतसङ्गस्येति** । **गतसङ्गस्य** फलस्नेहरहितस्य । **मुक्तस्य** देहाद्यभिमानहीनस्य । स्वातन्त्र्याभिमानहीनस्येति वा । **ज्ञानावस्थितचेतसः** विष्णुज्ञानेऽभिनिविष्टचित्तस्य । **यज्ञाय** विष्णवे, तत्प्रीत्यर्थम् । **कर्माचरतः** कुर्वतः । **कर्म प्रविलीयते** बन्धकं न भवतीत्यर्थः । 'यस्य' इत्यादिना यत्कामादिवर्जनमुक्तं तत् 'गतसङ्गस्य' इत्यनेन, 'त्यक्तसर्वपरिग्रहः' इत्येतत् 'मुक्तस्य' इत्यनेन, 'कर्मण्यकर्म' इति 'नित्यतृप्तः' इति च 'ज्ञानावस्थितचेतसः' इत्यनेन पिण्डीकृत्य प्रदर्शितं ध्येयम् ॥ २३ ॥

***अ०प्र०***— गतसङ्गस्य निष्कामतया फलादि स्नेहरहितस्य[1], मुक्तस्य रागादिभिः स्वातन्त्र्याभिमानदेहाद्यभिमानाच्च मुक्तस्य[2], ज्ञानावस्थितचेतसः = ज्ञाने अवस्थितं चेतो यस्य सः तथा पूर्वोक्तरीत्या ब्रह्मानन्दनिष्ठचित्तस्य[3], यज्ञाय[4], कर्म[5], आचरतः[6], भगवत्पूजार्थं कर्म = विहितं कर्म आचरतः = कुर्वाणस्य[7], एवंभूतो यः तस्य समग्रं कर्म[8], प्रविलीयते = नश्यति अकर्मभावमापद्यते बन्धकं न भवतीत्यर्थः[9], आरूढयोगपक्षे यज्ञायेति यज्ञसंरक्षणार्थं लोकसङ्ग्रहार्थमेव कर्म कुर्वत इत्यर्थः ।

"एवं नृणां क्रियायोगाः सर्वे संसृतिहेतवः । त एवाद्य विनाशाय कल्पन्ते कल्पिताः परम् ॥" परमात्मनि समर्पिताः कर्मयोगाः आत्मनां स्वेषां कर्मणां विनाशाय समर्थाः कर्मबन्धनाशकाः भवन्तीत्यर्थः ॥ २३ ॥

**भाष्यम्**

**उपसंहरति— गतसङ्गस्येति । गतसङ्गस्य = फलस्नेहरहितस्य । मुक्तस्य = शरीराद्यनभिमानिनः । ज्ञानावस्थितचेतसः = परमेश्वरज्ञानिनः ॥ २३ ॥**

***प०टी०***— नोत्तरश्लोकस्य गतार्थतादोष इत्याह **उपसंहरतीति** । श्लोकं व्याचष्टे **गतेति** ॥

***न०टी०***— न चोत्तरश्लोकस्य 'यस्य' इत्यादिना गतार्थता । उक्तार्थसङ्ग्रहात्मकत्वेनोपसंहाररूपत्वात् । 'अतः'शब्दाद्यभावेऽप्युपसंहारपरोऽयं श्लोक इति भावेनाह **उपेति** । 'यज्ञाय' भगवते कुर्वतः 'कर्म' सह पूर्वोत्तराघाभ्यां प्रलीयते । यदनादिकर्म यावन्मोक्षं तत्सर्वं न बध्नातीत्यर्थः ।

'एवं नृणां क्रियायोगाः सर्वे संसृतिहेतवः ।
त एवात्मविनाशाय कल्प्यन्ते कल्पिताः परे ॥'

इत्यादेः, इति भाष्यशेषः ॥

***प्र०दी०***— यदुक्तं कामादिवर्जनं तदेव 'गतसङ्गस्य' इत्यनेनोच्यते । 'त्यक्तसर्वपरिग्रह' इत्येतत् 'मुक्तस्य' इत्यनेन, 'कर्मणि' इति 'नित्यतृप्त' इति च 'ज्ञानावस्थितचेतस' इत्यनेन । अतः पुनरुक्तिरित्यत आह— **उपसंहरतीति** । विक्षिप्तं पिण्डीकरोतीत्यर्थः । गतसङ्गस्येति विषयसापेक्षम् । अतस्तत्प्रदर्शनेन व्याख्याति— **गतेति** । 'मुक्तस्य' इत्येतत्साधके घटयति— **मुक्तस्येति** । अनेनाभिमानान्मुक्तस्येति वा मुक्तसदृशस्येति वा व्याख्यातं भवति । ज्ञानस्य विषयसापेक्षत्वात् तं प्रदर्शयन् व्याचष्टे— **ज्ञानेति** । आत्मज्ञानस्याप्युपलक्षणमेतत् ॥

***भा०दी०*— साधक इति** । साधनानुष्ठानकर्मणीत्यर्थः । **आत्मज्ञानस्यापीति** । भगवत्प्रतिबिम्बत्वादिना स्वस्वरूपज्ञानिन इत्यर्थः ॥

***भा०र०*— यदुक्तमिति** । "यस्य सर्वे समारम्भाः कामसङ्कल्पवर्जिताः" (४.१९) इत्यत्र, इति शेषः । 'मुक्तस्येत्यनेन' इत्यत्र 'ज्ञानावस्थितचेतसः इत्यनेन च' इत्यत्र च 'उच्यते' इत्यनुवर्तते । 'नित्यतृप्तः' (४.२०) इत्यस्य नित्यतृप्तेश्वरसरूपोऽस्मीति जानन्निति व्याख्यानात् पुनरुक्तिरिति द्रष्टव्यम् । ननु ज्ञानावस्थितचेतस्त्वस्य 'ब्रह्मार्पणम्' (४.२४) इत्यनेन स्पष्टीकरणात् कथमनेनोपसंहार इत्युच्यते ? इत्यत आह **विक्षिप्तमिति** । **इति** अनेनोक्तं कामादिविषयसापेक्षमिति । किंविषयः कामः ? किंविषयकश्च स्नेहः ? इति तयोर्विषयनिरूप्यत्वादिति भावः । भाष्ये स्नेहशब्देन कामोऽपि ग्राह्यः । 'यदुक्तं कामादिवर्जनम्' इति टीकायां सङ्गपदार्थत्वेन कामस्यापि ग्रहणादित्यवधेयम् । 'गतसङ्गस्य' इत्यादौ मोक्षस्य साधको विशेष्यते । मुक्तपदं तु सिद्धवाचीति साधकविशेषणं कथं स्यात् ? इति शङ्कां परिहर्तुमाह **मुक्तस्येत्येतदिति** । 'स्वातन्त्र्याभिमानान्मुक्तस्य' इति तात्पर्यं हृदि कृत्वाऽऽह **अनेनाभिमानादिति** । भाष्ये "मुक्तस्य शरीराद्यभिमानाद्" इति वक्तुं शक्येऽपि 'शरीराद्यनभिमानिनः' इति षष्ठीश्रवणस्वारस्यानुरोधादाह **मुक्तसदृशस्येति** । **वेति** । मुक्तो हि शरीराद्यभिमानशून्यः । साधकोऽपि तथाभावान्मुक्तपदेन ग्राह्य इति भावेन भाष्ये षष्ठीति भावः । **ज्ञानस्येति** । ज्ञानेऽवस्थितम् अभिनिविष्टं चेतो यस्य स तथा, तस्येत्यत्र ज्ञानस्येत्यर्थः । 'परमेश्वरज्ञानिनः' इति तु फलितप्रदर्शनम् । परमेश्वरस्य सर्वकर्मकर्तृत्वस्वातन्त्र्यज्ञानिन इति तदर्थ इति भावः । ननु नित्यतृप्तनिराश्रयेश्वरस(स्व)रूपोऽस्मीति जानन् तथाविध इति जीवज्ञानस्याप्युक्तत्वात् कथं परमेश्वरज्ञानमात्रग्रहणम् ? इत्यत आह **आत्मज्ञानस्यापीति** । उक्तरूपजीवज्ञानस्यापीत्यर्थः ॥ २३ ॥

***गीताक्षरार्थस्तु*—** "कर्मण्यकर्म यः पश्येद्" (४.१८) इत्यत्रोक्तं कर्मस्वरूपमेव प्रपञ्च्यते **यस्येत्यादिश्लोकपञ्चकेन** । समारभ्यन्त इति **समारम्भाः** कर्माणि **कामसङ्कल्पवर्जिताः कामः** फलेच्छा । "अहं करिष्यामि" इति भावना **सङ्कल्पः, ताभ्यां वर्जिताः** । 'कार्याः' इति शेषः । ततः **यस्य** सर्वे समारम्भाः कामसङ्कल्पवर्जिताः **तं** परमेश्वरस्यैव कर्तृत्वं ज्ञात्वा स्वस्य स्वातन्त्र्येण कर्माभावं जानन्तं **ज्ञानाग्निदग्धकर्माणम्** उक्तलक्षणज्ञानमेवाग्निः, तेन दग्धानि कर्माणि मोक्षविरोधीनि यस्य तम्, अत एव **पण्डितम् आहुः** तत्त्वज्ञा इति योज्यम् ॥ १९ ॥

कामसङ्कल्पहीनतामात्रेण न कर्मस्वरूपं परिपूर्णम्, किं तर्हि ? कर्मफलस्नेहत्यागेनापि भाव्यमित्युच्यते **त्यक्त्वेति** । **कर्मफले आसङ्गं** स्नेहं च **त्यक्त्वा नित्यतृप्तो निराश्रयः** नित्यतृप्त-

निराश्रयेश्वरस(स्व)रूपोऽस्मीति जानन् तथोच्यते । **स कर्मण्यभिप्रवृत्तोऽपि नैव किञ्चित्करोति** इत्यस्य कर्म कुर्वन् नाप्नोति किल्बिषमिति भगवानेव तात्पर्यं वक्ष्यति ॥ २० ॥

कामसङ्कल्पस्नेहत्यागोपाय उच्यते **निराशीरिति** । **यतौ** नियतौ **चित्तात्मानौ** चित्तमनसी येन स तथाविधो भूत्वा **निराशीः** निर्गता आशिषो यस्मात् स तथा, **त्यक्ताः सर्वे परिग्रहाः** देहेन्द्रियादिरूपा येन स तथा त्यक्तदेहाद्यभिमान इत्यर्थः । स च 'भवति' इति शेषः । स **केवलं शारीरमेव कर्म कुर्वन्** । कोऽर्थः ? सेन्द्रियशरीरमात्रनिर्वर्त्यम्, "न त्वहं करिष्ये", "अत एव न मम तत्फलं स्यात्", "तदपि प्रियं मम" इति मनसि भावयित्वा कर्म कुर्वन्नपि **किल्बिषं** कामकर्माहङ्कारादिनिमित्तपापं नाप्नोति । अनेन " 'कर्मण्यभिप्रवृत्तोऽपि नैव किञ्चित् करोति' (४.२०) इत्येतदतिविरुद्धम्" इत्यपि चोद्यं परिहृतम् । कर्मफलसङ्गाभावात् तन्निबन्धनदोषराहित्यमेव सेन्द्रियशरीरनिर्वर्त्यकर्मकारिणोऽप्यकर्तृत्वमेवेति तात्पर्यात् ॥ २१ ॥

यतचित्तात्मनो लक्षणमुच्यते **यदृच्छेति** । भगवदिच्छाप्राप्तेन लाभेन **तुष्टिमान्** तृप्तिमान् सुखदुःखशीतोष्णादि**द्वन्द्वान्यतीतः विमत्सरः** स्वानधीनत्वनिमित्तचित्ततोदहीनः । किंप्रकारं द्वन्द्वातीतत्वम् ? इति जिज्ञासायां व्याख्यायते **सम इति** । विषयसिद्ध्यसिद्ध्योरुत्सेकहीनत्वमेव तदिति । एवंविधः कर्म **कृत्वाऽपि न निबध्यते** कर्मपाशेन ॥ २२ ॥

विक्षिप्तं क्रोडीक्रियते **गतसङ्गस्येति** । फलसङ्गादिरहितस्य **मुक्तस्य** अभिमानान्मुक्तस्य, शरीराद्यनभिमानसाम्यान्मुक्तसदृशस्य वा **ज्ञानावस्थितचेतसः** भगवद्विषयज्ञानाभिनिविष्टचित्तस्य नित्यतृप्तनिराश्रयेश्वरस(स्व)रूपोऽस्मीति भगवत्प्रतिबिम्बत्वावबोधनिष्ठमानसस्येति वा **यज्ञाय** भगवते तत्प्रीत्यर्थम् **आचरतः** कुर्वतः **कर्म** सह पूर्वोत्तराभ्यां यदनादि यच्च यावन्मोक्षं तत् **समग्रं** सर्वं **प्रविलीयते** प्रलीनं भवति । नं बन्धकं भवतीत्यर्थः । तदुक्तम्—

"एवं नृणां क्रियायोगाः सर्वे संसृतिहेतवः ।
त एवात्मविमोक्षाय कल्प्यन्ते कल्पिताः परे ॥" इति ।

इत्युत्तरार्धः **प्राचीनटीकायां** व्याख्यातः । अत्र च "यदुक्तं कामादिवर्जनम्" तदेव 'गतसङ्गस्य' (४.२३) इत्यनेन, 'त्यक्तसर्वपरिग्रहः' (४.२१) इत्येतद् 'मुक्तः' इत्यनेन, 'कर्मण्यकर्म' (४.१८) इति 'नित्यतृप्तः' (४.२०) इति च 'ज्ञानावस्थितचेतसः' इत्यनेन चोच्यते इति विक्षिप्तक्रोडीकरणं द्रष्टव्यमिति ॥ २३ ॥

**गीतातात्पर्यनिर्णयः**

**अनिराश्रयो भगवदाश्रयत्वात् ।**

*प्रका०*— "नित्यतृप्तो निराश्रय" इत्यत्र निराश्रयो न भवतीत्याह **अनिराश्रय इति** ॥

*न्या०दी०*— न केवलं कर्तृत्वाभिमानपरित्यागेन कृत्स्नकर्मकृत्त्वादि । अपि तु कामादि-परित्यागेनापि भाव्यमित्युच्यते **यस्य** इत्यादिपञ्चश्लोकेन । तत्र निराश्रय इत्यन्यथा पदविभाग-प्रतीतिनिरासायाह **अनिराश्रय इति** ॥ प्रतीतप्रकारेणैव पदविभागः किं न स्यादित्यत आह **भगवदिति** ॥ ज्ञानिनोऽपि भगवदाश्रयत्वेन "अज्ञानां ज्ञानिनां चैव" इत्यादावुक्तत्वात् निरा-श्रयत्वानुपपत्तेर्न प्रतीतप्रकारेण पदविभाग इत्यर्थः ।

*भा०दी०*— भाष्योक्तदिशा श्लोकावतारिकामाह **न केवलमिति** । **अज्ञानां ज्ञानिनां चैवे-त्यादाविति** । "अज्ञानां ज्ञानिनां चैव मुक्तानां शरणं हरिरि"त्यादौ द्वितीयाध्याये तात्पर्ये ॥

**गीतातात्पर्यनिर्णयः**

**मुक्तस्य स्वातन्त्र्याभिमानात् ॥ १९-२३ ॥**

*प्रका०*— "गतसङ्गस्य मुक्तस्ये"त्यत्र बद्धस्यापि मुक्तत्वमभिमानत्यागेनावगन्तव्यम् ॥

*न्या०दी०*— नन्वत्र ज्ञानिनः शरीरसम्बन्धसद्भावात् कथं मुक्तत्वमुच्यत इत्यत आह **मुक्तस्येति** ॥

**गीता**

**ब्रह्मार्पणं ब्रह्म हविर्ब्रह्माग्नौ ब्रह्मणा हुतम् ।**
**ब्रह्मैव तेन गन्तव्यं ब्रह्मकर्मसमाधिना ॥ २४ ॥**

*वि०वि०*— कीदृशं परमेश्वरज्ञानम्, कथं वाऽभिमानत्यागः, किं यज्ञार्थमित्यत आह **ब्रह्मार्पणमिति** । अर्प्यतेऽनेनेत्यर्पणं जुह्वादि, ब्रह्म, हविर्ब्रह्म, ब्रह्मण्येवाग्नौ ब्रह्मणा कर्त्रा हुतम् । तेन ब्रह्मैव गन्तव्यं प्राप्यं समाधिना सह कर्मापि ब्रह्मेत्यर्थः । तदधीनत्वेन सर्वं ब्रह्मेत्युच्यते । न तु तत्स्वरूपत्वेन । तदुक्तम्—

'त्वदधीनं यतः सर्वमतः सर्वं भवानिति ।
वदन्ति मुनयः सर्वे न तु सर्वस्वरूपतः ॥' इति ।

अथवा, ब्रह्मण्यर्पणं, ब्रह्मणो हविः, ब्रह्मणोऽग्नौ, ब्रह्मणः कर्म, समाधिना सह समाधिरपि तदधीन इत्यर्थः । अनेन सर्वस्य ब्रह्माधीनत्वेन ब्रह्मणः स्वातन्त्र्यज्ञानं भगवज्ज्ञानं स्वस्यास्वातन्त्र्यज्ञानम्, अभिमानत्यागः ब्रह्मार्पणं यज्ञार्थत्वमित्युक्तं भवति ॥

***वा०ल०***— 'ब्रह्मार्पणम्' इत्यत्र कृतपुण्यस्य ब्रह्मण्येवार्पणं ब्रह्मार्पणम् । ब्रह्मणः सम्बन्धि हविः ब्रह्महविः । ब्रह्मणः अग्निः ब्रह्माग्निः तस्मिन् । ब्रह्मणा ब्रह्मप्रेरितेन यजमानाख्यब्राह्मणेन हुतम् । ब्रह्मण्येवार्पणं कार्यम्, हविषि अग्नौ च ब्रह्मणः सन्निधानं स्मर्तव्यम् । 'न ऋते त्वत्क्रियते किञ्चन' इति श्रुतेः । ब्रह्मप्रेरितेनैव मया होमः कृत इति च ध्येयम् । एवं ब्रह्मकर्मसमाधिना ब्रह्मण्येव कर्मविषयकचित्तसमाधानवता, तेन यजमानेन, अन्ते ब्रह्मैव गन्तव्यं भवतीति योजना । मोक्षदशायामपि गन्तव्यस्य ब्रह्मणो गन्तुर्जीवस्य च गम्यगन्तृभावेन भेदकथनात् ब्रह्मणा हुतमित्यत्र सांसरिकजीवस्याभेदकथनं पूर्वोत्तरविरुद्धम् । जडभूतार्पणक्रियायाः, जडस्य हविषः, जडभूताग्नेश्च 'ब्रह्मैवार्पणं', 'ब्रह्मैव हविः' इत्यादिनैक्यकथनं पूर्वोत्तरविरुद्धं स्वमतविरुद्धञ्च ॥

***सा०सं०***— एवं 'तत्ते कर्म प्रवक्ष्यामि' इति प्रतिज्ञातं कर्मस्वरूपं सङ्क्षेपविस्ताराभ्यां प्रतिपाद्य 'गतसङ्गस्य' इत्यनेनोपसंहृत्य, अधुना ज्ञानावस्थितचेतस्त्वं स्पष्टयति **ब्रह्मेति** । अर्प्यते समर्प्यतेऽनेनेति **अर्पणं** दर्वीपिठरादि । अर्पणहविरग्नीनां ब्रह्माभेद उच्यते । ब्रह्म च तदर्पणं चेत्यादिव्युत्पत्तेः । तथा समाधिना सह सहितं कर्म चाग्निहोत्रादि ब्रह्मेति कर्मसमाध्योरपि । तथा **ब्रह्मणा हुतमि**त्यत्रापि प्रायपाठाद्ब्रह्मैव हुतमिति होमस्यापि ब्रह्माभेदः । स तु, अर्पणादिसत्ताप्रतीत्यादेर्ब्रह्माधीनत्वाभिप्रायेण । 'त्वदधीनं यतः सर्वमतः सर्वो मतो भवान्' (पाद्मे) इत्यादेः । 'इति मां योऽभिजानाति' इति श्लोकान्ते शेषः । 'तेनैव ब्रह्म गन्तव्यम्' इत्यन्वयः । एतेन ज्ञानावस्थितचेतःपदोक्तं परमेश्वरज्ञानमेवंरूपमिति स्पष्टीकृतं भवति ।

यद्वा, **ब्रह्मणा हुतमि**ति असामानाधिकरण्यनिर्देशप्रायपाठात्, ब्रह्मणि **अर्पणम्,** ब्रह्मणो **हविः**, ब्रह्मणो**ऽग्नौ,** ब्रह्मणः कर्म **ब्रह्मकर्म,** न केवलं कर्ममात्रं ब्रह्मणः किन्तु **समाधिना** सहितं कर्म ब्रह्मण इत्यर्थः । अर्पणादिकं सर्वं तत्स्वामिकमिति यो जानाति **तेन** ब्रह्म **गन्तव्यमि**ति योजना । एतेन प्राङ्मुक्तपदेनोक्तस्वातन्त्र्याभिमानत्यागः कर्माङ्गमुक्तः स कुत्र कार्यः । त्यक्तस्वातन्त्र्याभिमानं च, वस्तु किमधीनं ज्ञेयम्, यज्ञायेत्युक्तयज्ञार्थत्वं च किमिति शङ्कात्रयं निरस्तम् । हविरादौ स्वातन्त्र्याभिमानत्यागब्रह्माधीनत्वयोर्विष्ण्वर्पणमेव यज्ञार्थत्वमित्यस्य चात्र प्रतीतेरिति ॥

***अ०प्र०***— अर्पणं[१], ब्रह्म[२], हविर्ब्रह्म[३], ब्रह्मणा[४], ब्रह्माग्नौ[५], हुतं ब्रह्म[६], ब्रह्मकर्मसमाधिना[७], तेन[८], ब्रह्मैव[९], गन्तव्यं[१०] इत्यन्वयः ।

अर्पणं = अर्प्यते क्षिप्यते हविरादिरनेनेत्यर्पणं स्रुवादिसमर्पणक्रिया वा [१], ब्रह्म = ब्रह्माधीनमेव अत्रार्पणादिकं ब्रह्माधीनसत्ताप्रतीतिप्रवर्तकत्वात् ब्रह्मेत्युच्यते, न तु तत्स्वरूपकत्वात् । तदुक्तम्—

"त्वदधीनं यतः सर्वमतः सर्वं भवानिति ।
वदन्ति मुनयः सर्वे न तु तस्य स्वरूपवान् ॥"

स्वरूपाधीनेन स्वरूपवानिति, सर्वं तत्प्रज्ञानेत्रमित्यादि तथा चायमर्थः[२], हविर्ब्रह्म = घृतादिकं ब्रह्माधीनमेव[३], ब्रह्मणा = ब्राह्मणादिना कर्त्रा[४], (ब्रह्माग्नौ) = ब्रह्माधीनाग्नौ[५], हुतं ब्रह्म[६], हुतं ब्रह्म = होम ब्रह्माधीनमेव अग्निश्च कर्तव्यक्रिया च ब्रह्माधीनमेवेत्यर्थः[६], ब्रह्मकर्मसमाधिना = तेन ब्रह्मणि कर्मसमाधिः तेन तथा ब्रह्मणि कर्मात्मिका समाधिः चित्तैकाग्र्यता यस्य[७], तेन पुरुषेण[८], ब्रह्मैव गन्तव्यं = प्राप्यं[९-१०], न तु फलान्तरमित्यर्थः । यद्वा समस्तानि इमानि पदानि— ब्रह्मणि अर्पणं ब्रह्मार्पणं, ब्रह्मणो हविः ब्रह्महविः, ब्रह्मणो अग्निः ब्रह्माग्निः तस्मिन्, ब्रह्मणः कर्म ब्रह्मकर्म समाधिना सह समाधिरपि तदधीना इत्यर्थः ।

"एकः स्वतन्त्रो भगवान् तदीयं त्वन्यदुच्यते" इति वचनात् ।

सर्वस्य ब्रह्माधीनत्वेन तस्य स्वातन्त्र्यज्ञानमेव ब्रह्मज्ञानं, स्वात्मनो स्वातन्त्र्यज्ञानमभिमान-त्यागः, ब्रह्मणि समर्पणमेव यज्ञार्थत्वमित्येतदनेनोक्तं भवति । तेन ब्रह्मैव प्राप्यमित्यर्थः ।

तदेवं परमेश्वराराधनलक्षणं कर्म ज्ञानहेतुत्वेन बन्धकाभावादकर्मैव आरूढावस्थायां तु अकर्म आत्मज्ञानबाधितत्वात् स्वाभाविकमपि कर्म कर्मैव इति कर्मण्यकर्म यः पश्येदित्यनेनोक्तः कर्मप्रविलयः प्रपञ्चितः । इदानीं कर्माकर्मैवेति सर्वेषु च ब्रह्मैवानुस्यूतं पश्यतः कर्मप्रविलयमाह **ब्रह्मार्पणमिति** ॥ २४ ॥

**भाष्यम्**

**ज्ञानावस्थितचेतस्त्वं स्पष्टयति— ब्रह्मार्पणमिति । सर्वमेतद् ब्रह्मेत्यु-च्यते । तदधीनसत्ताप्रतीतित्वात् । न तु तत्स्वरूपत्वात् । उक्तं हि—**

**"त्वदधीनं यतस्सर्वमतस्सर्वो भवानिति ।**
**वदन्ति मुनयस्सर्वे न तु सर्वस्वरूपतः ॥" —इति पाद्मे ॥**

**"सर्वं तत्प्रज्ञानेत्रं" इति च । "एतं ह्येव बह्वृचा" इत्यादि च । समाधिना सह ब्रह्मैव कर्म ॥ २४ ॥**

***प०टी०***— यत्सामान्यतो भगवतो सर्वकर्तृत्वाख्यज्ञानमुक्तं तत्प्रपञ्चकत्वेनोत्तरश्लोकमवतारयति **ज्ञानेति** । ननु कथं सर्वब्रह्मैक्यमुच्यते ? इत्यत आह **सर्वमिति** । साक्षादैक्यं कुतो न स्यात् ? इत्यत आह **उक्तं हीति** । ब्रह्मणः कर्म समाधीस्य तेनेति भ्रमो मा भूदित्याह **समाधिनेति** ॥

***न०टी०***—न हि मही प्राप्य भगवच्चरणारविन्दस्नेहं विनाऽल्पफलस्वर्गादिस्नेहं त्यजति । तथा शरीरतत्क्रियादेर्भगवदधीनत्वज्ञानं विनाऽहंममताभिमानहानिस्तत्रेति गतसङ्गस्य मुक्तस्य यत् परमेश्वरज्ञानित्वमर्थात् प्रतीयते तदतिस्फुटं करोतीत्याह **ज्ञानेति** । तदधीनत्वमेव कर्मादिर्ब्रह्मत्वं वेदेतिहासाद्युक्तम् । न तद्विवर्तत्वेन तत्प्रमाणत्वेन वा । नापि तद्व्यतिरेकेणाभावः । तथैव पुराणे व्याख्यातत्वादित्याह **सर्वमिति** । सर्वस्य ब्रह्मनेतृकत्वब्रह्माधारत्वश्रुतेश्च न ब्रह्मत्वमितिहासाद्यर्थ इत्याह **सर्वं तदिति** । 'एतं ह्येव बह्वृचा' इत्यारभ्य कथ्यमानशंसनादौ कर्मणि, द्यावापृथिव्यादौ सर्वस्मिन्नियामकत्वादिरूपेणान्तर्गतस्य भगवत एव परब्रह्मत्वावधारणाच्च, न कर्मादिर्ब्रह्मत्वं वेदाद्यर्थ इति भावेनाह **एतमिति** । 'ब्रह्माख्ये कर्मणि समाधिर्यस्य' इत्यन्ये । तत्पक्षे समाधेः ब्रह्माधीनत्वं नोक्तं स्यादिति तद्व्युदासार्थमाह **समाधिनेति** ॥

***प्र०दी०***— ननु कर्मस्वरूपं प्रतिज्ञाय सङ्क्षेपविस्तराभ्यां प्रतिपाद्योपसंहृतम् । किमिदं 'ब्रह्मार्पणं' इत्यनेनोच्यत इत्यत आह— **ज्ञानावस्थितेति** । एतेन 'इति यो जानाति' इत्यध्याहारोऽत्र सूचितो भवति । अत्रार्पणादेर्ब्रह्मस्वरूपत्वमुच्यत इत्यन्यथाप्रतीतिनिरासायाह— **सर्वमिति** । प्रज्ञा ब्रह्म नेत्रं नेतृ यस्य तत्तथोक्तम् । एतं हीत्यनेन सर्वान्तर्यामित्वमुच्यते । ब्रह्मकर्म ब्रह्मविषयः समाधिर्यस्यासौ तथोक्त इति व्याख्यानं प्रक्रमविरुद्धमिति भावेनान्यथा व्याख्याति— **समाधिनेति** । समाधिरपि ब्रह्मेत्यर्थः ॥

***भा०दी०***— **प्रतिज्ञायेति** । 'किं कर्मे'ति श्लोके कर्म प्रवक्ष्यामीति प्रतिज्ञाय 'कर्मण्यकर्मे'ति श्लोके सङ्क्षेपेण 'यस्ये'त्यादि श्लोकचतुष्टये विस्तरेण प्रतिपाद्य पञ्चमे 'गत सङ्गस्ये'त्यत्रोपसंहृतमित्यर्थः । **इत्यध्याहारोऽत्रेति** । अत्र श्लोक इति भावः । कर्मशब्दः कर्मकारकपरः सन्निषपर्यायः बहुव्रीहिश्च समास इति भावेनोक्तं **ब्रह्मकर्म ब्रह्मविषय इति** । **प्रक्रमेति** । ब्रह्मार्पणमित्यादावर्पणादेर्ब्रह्माभेदेनोपक्रमादिहाभेदानुक्तौ उपक्रमविरोध इत्यर्थः ॥

***भा०र०***— **प्रतिज्ञाय** "कर्म प्रवक्ष्यामि" (४.१६) इत्यनेन । **सङ्क्षेपविस्तराभ्यां** 'कर्मण्यकर्म' (४.१८) इति सङ्क्षेपः । "यस्य सर्वे समारम्भाः" (४.१९) इति पञ्चश्लोक्या विस्तार इति

अर्पणं = अर्प्यते क्षिप्यते हविरादिरनेनेत्यर्पणं स्रुवादिसमर्पणक्रिया वा [१], ब्रह्म = ब्रह्माधीनमेव अत्रार्पणादिकं ब्रह्माधीनसत्ताप्रतीतिप्रवर्तकत्वात् ब्रह्मेत्युच्यते, न तु तत्स्वरूपकत्वात् । तदुक्तम्—

"त्वदधीनं यतः सर्वमतः सर्वं भवानिति ।
वदन्ति मुनयः सर्वे न तु तस्य स्वरूपवान् ॥"

स्वरूपाधीनेन स्वरूपवानिति, सर्वं तत्प्रज्ञानेत्रमित्यादि तथा चायमर्थः[२], हविर्ब्रह्म = घृतादिकं ब्रह्माधीनमेव[३], ब्रह्मणा = ब्राह्मणादिना कर्त्रा[४], (ब्रह्माग्नौ) = ब्रह्माधीनाग्नौ[५], हुतं ब्रह्म[६], हुतं ब्रह्म = होम ब्रह्माधीनमेव अग्निश्च कर्तव्यक्रिया च ब्रह्माधीनमेवेत्यर्थः[६], ब्रह्मकर्मसमाधिना = तेन ब्रह्मणि कर्मसमाधिः तेन तथा ब्रह्मणि कर्मात्मिका समाधिः चित्तैकाग्र्यता यस्य[७], तेन पुरुषेण[८], ब्रह्मैव गन्तव्यं = प्राप्यं[९-१०], न तु फलान्तरमित्यर्थः । यद्वा समस्तानि इमानि पदानि— ब्रह्मणि अर्पणं ब्रह्मार्पणं, ब्रह्मणो हविः ब्रह्महविः, ब्रह्मणो अग्निः ब्रह्माग्निः तस्मिन्, ब्रह्मणः कर्म ब्रह्मकर्म समाधिना सह समाधिरपि तदधीना इत्यर्थः ।

"एकः स्वतन्त्रो भगवान् तदीयं त्वन्यदुच्यते" इति वचनात् ।

सर्वस्य ब्रह्माधीनत्वेन तस्य स्वातन्त्र्यज्ञानमेव ब्रह्मज्ञानं, स्वात्मनो स्वातन्त्र्यज्ञानमभिमान-त्यागः, ब्रह्मणि समर्पणमेव यज्ञार्थत्वमित्येतदनेनोक्तं भवति । तेन ब्रह्मैव प्राप्यमित्यर्थः ।

तदेवं परमेश्वराराधनलक्षणं कर्म ज्ञानहेतुत्वेन बन्धकाभावादकर्मैव आरूढावस्थायां तु अकर्म आत्मज्ञानबाधितत्वात् स्वाभाविकमपि कर्म कर्मैव इति कर्मण्यकर्म यः पश्येदित्यनेनोक्तः कर्मप्रविलयः प्रपञ्चितः । इदानीं कर्माकर्मैवेति सर्वेषु च ब्रह्मैवानुस्यूतं पश्यतः कर्मप्रविलयमाह **ब्रह्मार्पणमिति** ॥ २४ ॥

**भाष्यम्**

**ज्ञानावस्थितचेतस्त्वं स्पष्टयति— ब्रह्मार्पणमिति । सर्वमेतद् ब्रह्मेत्यु-च्यते । तदधीनसत्ताप्रतीतित्वात् । न तु तत्स्वरूपत्वात् । उक्तं हि—**

**"त्वदधीनं यतस्सर्वमतस्सर्वो भवानिति ।**
**वदन्ति मुनयस्सर्वे न तु सर्वस्वरूपतः ॥" —इति पाद्मे ॥**

**"सर्वं तत्प्रज्ञानेत्रं" इति च । "एतं ह्येव बह्वृचा" इत्यादि च । समाधिना सह ब्रह्मैव कर्म ॥ २४ ॥**

***प०टी०***— यत्सामान्यतो भगवतो सर्वकर्तृत्वाख्यज्ञानमुक्तं तत्प्रपञ्चकत्वेनोत्तरश्लोकमवतारयति **ज्ञानेति** । ननु कथं सर्वब्रह्मैक्यमुच्यते ? इत्यत आह **सर्वमिति** । साक्षादैक्यं कुतो न स्यात् ? इत्यत आह **उक्तं हीति** । ब्रह्मणः कर्म समाधीरस्य तेनेति भ्रमो मा भूदित्याह **समाधिनेति** ॥

***न०टी०***—न हि महीं प्राप्य भगवच्चरणारविन्दस्नेहं विनाऽल्पफलस्वर्गादिस्नेहं त्यजति । तथा शरीरतत्क्रियादेर्भगवदधीनत्वज्ञानं विनाऽहंममताभिमानहानिस्तत्रेति गतसङ्गस्य मुक्तस्य यत् परमेश्वरज्ञानित्वमर्थात् प्रतीयते तदतिस्फुटं करोतीत्याह **ज्ञानेति** । तदधीनत्वमेव कर्मादेर्ब्रह्मत्वं वेदेतिहासाद्युक्तम् । न तद्विवर्तत्वेन तत्प्रमाणत्वेन वा । नापि तद्व्यतिरेकेणाभावः । तथैव पुराणे व्याख्यातत्वादित्याह **सर्वमिति** । सर्वस्य ब्रह्मनेतृकत्वब्रह्माधारत्वश्रुतेश्च न ब्रह्मत्वमितिहासाद्यर्थ इत्याह **सर्वं तदिति** । 'एतं ह्येव बह्वृचा' इत्यारभ्य कथ्यमानशंसनादौ कर्मणि, द्यावापृथिव्यादौ सर्वस्मिन्नियामकत्वादिरूपेणान्तर्गतस्य भगवत एव परब्रह्मत्वावधारणाच्च, न कर्मादेर्ब्रह्मत्वं वेदाद्यर्थ इति भावेनाह **एतमिति** । 'ब्रह्माख्ये कर्मणि समाधिर्यस्य' इत्यन्ये । तत्पक्षे समाधेः ब्रह्माधीनत्वं नोक्तं स्यादिति तद्व्युदासार्थमाह **समाधिनेति** ॥

***प्र०दी०***— ननु कर्मस्वरूपं प्रतिज्ञाय सङ्क्षेपविस्तराभ्यां प्रतिपाद्योपसंहृतम् । किमिदं 'ब्रह्मार्पणं' इत्यनेनोच्यत इत्यत आह— **ज्ञानावस्थितेति** । एतेन 'इति यो जानाति' इत्यध्याहारोऽत्र सूचितो भवति । अत्रार्पणादेर्ब्रह्मस्वरूपत्वमुच्यत इत्यन्यथाप्रतीतिनिरासायाह— **सर्वमिति** । प्रज्ञा ब्रह्म नेत्रं नेतृ यस्य तत्तथोक्तम् । एतं हीत्यनेन सर्वान्तर्यामित्वमुच्यते । ब्रह्मकर्म ब्रह्मविषयः समाधिर्यस्यासौ तथोक्त इति व्याख्यानं प्रक्रमविरुद्धमिति भावेनान्यथा व्याख्याति— **समाधिनेति** । समाधिरपि ब्रह्मेत्यर्थः ॥

***भा०दी०***— **प्रतिज्ञायेति** । 'किं कर्मे'ति श्लोके कर्म प्रवक्ष्यामीति प्रतिज्ञाय 'कर्मण्यकर्मे'ति श्लोके सङ्क्षेपेण 'यस्ये'त्यादि श्लोकचतुष्टये विस्तरेण प्रतिपाद्य पञ्चमे 'गत सङ्गस्ये'त्यत्रोपसंहृतमित्यर्थः । **इत्यध्याहारोऽत्रेति** । अत्र श्लोक इति भावः । कर्मशब्दः कर्मकारकपरः सन्विषपर्यायः बहुव्रीहिश्च समास इति भावेनोक्तं **ब्रह्मकर्म ब्रह्मविषय इति** । **प्रक्रमेति** । ब्रह्मार्पणमित्यादावर्पणादेर्ब्रह्माभेदेनोपक्रमादिहाभेदानुक्तौ उपक्रमविरोध इत्यर्थः ॥

***भा०र०***— **प्रतिज्ञाय** "कर्म प्रवक्ष्यामि" (४.१६) इत्यनेन । **सङ्क्षेपविस्तराभ्यां** 'कर्मण्यकर्म' (४.१८) इति सङ्क्षेपः । "यस्य सर्वे समारम्भाः" (४.१९) इति पञ्चश्लोक्या विस्तार इति

विवेकः । **उपसंहृतं** 'गतसङ्गस्य' इत्यनेन । **एतेनेति** । 'ज्ञानावस्थितचेतस्त्वम्' इति गमनिका-भाष्येण । तच्छब्दश्रवणात् 'यच्छब्दः', ज्ञानपदोपादानाद् 'जानाति' इति शब्दश्चात्र श्लोकेऽध्याहर्तव्य इति सूचयतीत्यर्थः । इति यो जानाति तेन ब्रह्म गन्तव्यमिति सम्बन्ध इति भावः । **अर्पणादेरिति** । अर्प्यते समर्प्यते अनेनेति **अर्पणं** जुह्वादि । आदिशब्देन हविरादि ग्राह्यम्, तस्येत्यर्थः । तदधीने सत्ताप्रतीती यस्य तस्य भावस्तत्त्वं तस्मात् । **न तु तत्स्वरूपत्वात्** परिणामत्वात् तद्विवर्तत्वाद्वेति भाष्ये तच्छब्देन ब्रह्म गृह्यत इति स्फुटत्वान्नोक्तम् **कुत इति** । ब्रह्मस्वरूपमिति धीः कुतोऽन्यथाप्रतीतिरित्यर्थः । **सर्वस्य भगवदधीनत्व इति** । यद्यपि स्मृतौ 'त्वदधीनम्' इत्युक्तम् । तथापि तत्र हेतुत्वेनोक्तत्वात् तदसिद्धिशङ्कायामिदं प्रमाणं प्रवर्तत इति भावः । **नेत्रं नेत्रिति** । नयतेः कर्तरि ष्ट्रन् प्रत्यय इति भावः ।

**सर्वान्तर्यामित्वमिति** । "एतमस्यामेतं दिव्येतम्" इत्यारभ्य "सर्वेषु भूतेष्वेतमेव ब्रह्मेत्याचक्षते" (ऐत.२.८.३.७) इत्यन्तेन द्यावापृथिव्यादिष्ववस्थितेर्नियमार्थत्वात् सर्वान्तर्यामित्वं भगवत उच्यते । ब्रह्मशब्दश्रवणात् । तथा च सूत्रं "सर्वत्र प्रसिद्धोपदेशाद्" (ब्र.सू. १.२.१) इतीति भावः । यद्यप्येतदधिकरणसुधायाम् अन्तर्याम्यधिकरणे पृथिव्यादिषु स्थितेर्वक्ष्यमाणत्वात् नेदमारम्भणीयमित्याशङ्क्य, अत्र शक्तिप्रेरकत्वेन, तत्र तत्सत्तादिप्रदत्वेन तत्तदन्तर्गतत्वमुच्यत इत्यन्तर्यामित्वं तदधिकरणप्रमेयमित्युक्तम् । तथाप्यत्रान्तर्यामित्वं शक्तिप्रेरकत्वमेव विवक्षितमिति न दोषः । "ब्रह्मैव कर्म यस्यासौ ब्रह्मकर्मा" इति विग्रहमभिप्रेत्य तदर्थमाह **ब्रह्मकर्मा ब्रह्मविषय इति** । **प्रक्रमेति** । 'ब्रह्मार्पणम्' इत्यादावर्पणं ब्रह्म हविर्ब्रह्मेत्यभेदपरत्वेन व्याख्यानात् ब्रह्मकर्मसमाधिनेत्यत्र समाधेर्ब्रह्मकर्मकत्वेन व्याख्यानमभेदोक्तिप्रक्रमविरुद्धं परपक्ष इत्यर्थः । **कर्म** अग्निहोत्रादि । **समाधिना** ब्रह्मणि मनःप्रणिधानेन । "सह ब्रह्मैव" इति भाष्ये समाधिना सहेत्यस्य भावमाह **समाधिरपीति** । **ब्रह्मैव** ब्रह्माधीन एव । तथा च तात्पर्ये "समाधिना सह समाधिरपि तदधीन इत्यर्थः" इति ॥ २४ ॥

***गीताक्षरार्थस्तु***— ज्ञानावस्थितचेतस्त्वं स्पष्ट्यते **ब्रह्मेति** । **अर्पणं** समर्पणक्रिया । करणे ल्युट् । जुह्वादि वा । **ब्रह्म** भगवदधीनम् । **हविः ब्रह्म** तदधीनम् । **ब्रह्माग्नौ** ब्रह्माधीनाग्नौ **ब्रह्मणा** ब्रह्माधीनेन कर्त्रा **हुतं** समाधिना सह **कर्म** अग्निहोत्रादि च **ब्रह्मैव** तदधीनमेव "इति यो जानाति" इति शेषः । अनेन ज्ञानावस्थितचेतस्त्वं स्पष्टीकृतं भवति । आपादनीयमेवैवंविधं ज्ञानमिति तत्र, तात्पर्यद्योतनाय ब्रह्मैव **तेन** ज्ञानिना **गन्तव्यम्** आप्यम् इति फलमुच्यत इति ॥ २४ ॥

**गीतातात्पर्यनिर्णयः**

**कथमभिमानत्यागः ? ब्रह्मार्पणमित्यादि । ब्रह्मण्यर्पणं ब्रह्मार्पणम् । ब्रह्मणो हविः । ब्रह्मणोऽग्नौ । ब्रह्मणः कर्म समाधिना सह । समाधिरपि तदधीन इत्यर्थः ।**

**"एकः स्वतन्त्रो भगवांस्तदीयं त्वन्यदुच्यते ॥"**

**—इति भारते ॥ २४ ॥**

*प्रका०*— अभिमानत्यागप्रकारं दर्शयति **ब्रह्मेत्यादिना** । 'ब्रह्मार्पण'मित्येतच्छ्लोकस्योक्त-मर्थं स्फुटयति **एक इति** ॥

*न्या०दी०*— ननु कुत्र स्वातन्त्र्याभिमानत्यागो विवक्षितः ? तस्य चार्थस्य स्वातन्त्र्यायोगात् किमधीनत्वं ज्ञातव्यम् ? किञ्च यज्ञार्थत्वमिति पृच्छति **कथमिति** । तत्परिहारायोत्तरप्रघट्टक-मवतारयति **ब्रह्मेति** ॥ अत्रार्पणादीनां ब्रह्मैक्यमुच्यते, नाभिमानपरित्यागप्रकार इत्यन्यथाप्रतीति-निरासायाह **ब्रह्मणीति** ॥ प्रतीतार्थ एव किं न स्यादित्यतः स्वोक्तार्थे स्मृतिसम्मतिमाह **एक इति** ॥ अनेन हविरादिषु स्वस्य स्वातन्त्र्यमनिरूप्य ब्रह्माधीनतां ज्ञात्वा होमादिकरणं स्वातन्त्र्या-भिमानपरित्यागः । ब्रह्मार्पणं तु यज्ञार्थत्वमित्युक्तं भवति ॥

*भा०दी०*— **तस्य चार्थस्येति** । स्वातन्त्र्याभिमानविषयस्यार्थस्येत्यर्थः ॥ **अनिरूप्येति** । अविज्ञाप्येत्यर्थः । अविज्ञायेति चार्थः ॥

**गीता**

**दैवमेवापरे यज्ञं योगिनः पर्युपासते ।**
**ब्रह्माग्नावपरे यज्ञं यज्ञेनैवोपजुह्वति ॥ २५ ॥**

*वि०वि०*— एतत्प्रपञ्चनपूर्वकमाश्रमचतुष्टयस्यापि यज्ञोऽस्तीति ज्ञापयितुं यज्ञभेदानाह **देवमित्यादिना** । दैवं भगवन्तम् । यज्ञमिति क्रियाविशेषणम् । भगवदुपासनमेव यतीनां यज्ञ इत्यर्थः । यद्वा, स्वरूपमेवानन्दादि हविः स्वयमेवाग्निर्भगवान् भुङ्क्त इति यज्ञः। यज्ञं सन्तं विष्णुमुपासते विष्णुरेव यज्ञः । तस्य तथोपासनं यज्ञकरणमित्युक्तं भवति । उक्तं च—

'तेनैव तं पूजयेद्वा विहितैर्वाऽन्यसाधनैः ।
स एव विष्णोर्यज्ञः स्यान्मानसो वाऽथ बाह्यकः ॥'

इति । **ब्रह्मण्यग्नौ यज्ञं** भगवन्तं प्रसिद्धेन **यज्ञेनोपजुव्हति** । 'यथा दध्ना जुहोति' इत्यत्र दधिप्रक्षेपेण होमनिष्पत्तिस्तथाऽत्रापि यत्रार्पणेनेत्यर्थः । यद्वा, क्रियायज्ञं यज्ञेन विष्णुना हेतुना सर्वं तदधीनमिति ज्ञात्वा **समर्पयन्ति** ॥

***वा०ल०***— 'दैवमेवापरे यज्ञम्' इत्यत्र दैवं केवलं देवसम्बन्धियज्ञमेव ज्ञानरूपयज्ञमेव । ब्रह्माग्नौ ब्रह्मसम्बन्धिनि तेजोरूपाग्नौ यज्ञं यज्ञनामकपरमात्मानं यज्ञेन कर्मरूपयज्ञेन उपजुह्वति ।

***सा०सं०***— पूर्वं भगवदधीनकर्तृत्वानुसन्धानपूर्वं तत्प्रीत्युद्देशेन वर्णाश्रमविहितानुष्ठानं कर्मेति सामान्यतः कर्मस्वरूपमुक्तम् । तद्यज्ञादिभेदभिन्नमित्याह **दैवमिति** । **दैवं** विष्णुम् । **यज्ञं** यथा भवति तथाऽऽ**परे** केचन । **योगिनो** यतयः । **पर्युपासते** । यज्ञपदमत्रोपासनरूपक्रियाविशेषणम् । दैवमेवेत्येवकारोऽपि क्रिययैवान्वेति । भगवदुपासनमेव यज्ञतयाऽनुतिष्ठन्ति केचिद्यतय इत्यर्थः । एतेन 'अयज्ञस्य' इत्यादिना यज्ञादिहीनस्य 'नायं लोकोऽस्ति' इति वक्ष्यमाणतया यत्याश्रम-विलोपप्रसङ्ग इति शङ्का निरस्ता । तेषामपि भगवदुपासनारूपयज्ञसत्वादिति ।

यद्वा, **दैवं** यज्ञमिति सामानाधिकरण्यम् । यज्ञरूपं भगवन्तं **योगिनः पर्युपासते** यज्ञत्वे-नोपासते । तेषां तथोपासनमेव यज्ञ इति भावः । भगवतः स्वानन्दरूपहविर्भोक्तृत्वात् स्वस्यैवा-ग्निरूपत्वाच्चेति ज्ञेयम् । **ब्रह्माग्नौ** ब्रह्माख्याग्नौ । **यज्ञेन** अग्निहोत्रादियज्ञेन । **यज्ञं** भगवन्तं प्रति **जुह्वति** ।

यद्वा, **ब्रह्माग्नौ** यज्ञमग्निहोत्रादिकम् । **यज्ञेनैव** यज्ञनामकेन भगवता निमित्तेन । **जुह्वति** समर्पयन्ति । सर्वं यज्ञनामकविष्ण्वधीनं ज्ञात्वा स्वस्य स्वातन्त्र्याभिमानत्यागेन कृतं कर्म विष्णौ समर्पयन्तीति यावत् । 'यज्ञेनैव' इत्यग्रे सर्वत्रान्वेति ॥

***अ०प्र०***— तदेवं सर्वत्र ब्रह्माधीनत्वं लक्षणं ज्ञानं सर्वयज्ञोपायप्राप्यत्वात् सर्वे यज्ञेभ्यः श्रेष्ठमित्येवं स्तोतुमधिकारभेदेन ज्ञानोपायभूतान् बहून् यज्ञानाह दैवमित्यादिभिरष्टभिः । तत्रादौ **दैवमिति** ।

अपरे[१], योगिनः[२], दैवमेव[३], यज्ञं[४], पर्युपासते[५], अपरे[६], ब्रह्माग्नौ[७], यज्ञेनैव[८], यज्ञं[९], उपजुह्वति[१०] इत्यन्वयः ।

अपरे[१], योगिनः = कर्मयोगिनः[२], दैवं देवाः यस्मिन् तद्दैवं देवा इन्द्रवरुणादय इत्यन्तेन यस्मिन् तद्दैवम्[३], यज्ञं[४], पर्युपासते = श्रद्धयाऽनुतिष्ठन्ति, यद्वा अपरे योगिनो यतयः दैवं विष्णुं यज्ञं यथा तथा पर्युपासते[५], परमहंसानां भगवदुपासनमेव यज्ञेत्यर्थः । यद्वा स्वयमेवाग्न्यन्तर्यामी भगवान् हविरूपं स्वरूपानन्दं भुङ्क्त इति भगवान् यज्ञेत्युच्यते, तथा च यज्ञं सन्तं दैवमुपासते विष्णुरेव यज्ञ

इति विष्णोर्यज्ञत्वेनोपासनमेव तेषां यज्ञ इति भावः, 'तेनैव तं पूजयेद्वा विहितैर्वान्यसाधनैः । स एव विष्णोर्यज्ञः स्यात् मानसो वाऽथ बाह्यकृदि'ति[५], अपरे = ज्ञानयोगिनः[६], ब्रह्माग्नौ ब्रह्मरूपे अग्नौ[७], यज्ञेनैव = ब्रह्मार्पणमित्युक्तप्रकारेण उपायभूतयज्ञेनैव[८], यज्ञं उपजुह्वति = यज्ञादिसर्वकर्माणि अविलापयन्तीत्यर्थः[९-१०], सोऽयं ज्ञानयज्ञः यद्वा अपरे च गृहस्थाद्याः ब्रह्मरूपाग्नौ यज्ञं विष्णुं प्रति यज्ञेन पञ्चमहायज्ञादिना उपजुह्वति, यथा दध्ना जुहोति इत्यत्राग्नौ दध्यर्पणेन होमो भवति तथा स्वकृतस्य प्रसिद्धयज्ञस्य ब्रह्माग्नौ ब्रह्मोद्दिश्य समर्पणेन होमरूपो परोऽपि यज्ञो भवतीत्यर्थः । यद्वा यज्ञेन हरिणा तन्निमित्तेन तत्प्रेरणयेति यावत्, यज्ञः = द्रव्यत्यागं कुर्वन्ति, यज्ञशब्दवाच्यं युद्धादिकर्म वा, अग्न्यादिगते तस्मिन्नेव तमुद्दिश्य तत्प्रेरणयैव हविस्त्यागादिकं करोमीति ज्ञात्वा कृत्वा तस्मिन्नेवार्पयतीत्यर्थः ॥ २५ ॥

**गीतातात्पर्यनिर्णयः**

**दैवं विष्णुमेव यज्ञ इत्युपासते । स्वभोग्यत्वात् स्वयमेव यज्ञः । ब्रह्माख्याग्नौ क्रियायज्ञं तेनैव यज्ञाख्येन विष्णुना समर्पयन्ति ॥ २५ ॥**

*प्रका०*— दैवमित्यादेरेव बहुविधा यज्ञा वितता इत्यस्यार्थमाह **दैवं विष्णुमित्यादिना** ।

*न्या०दी०*— तत्प्रपञ्च्यते **दैवमित्यादिना** ॥ तत्र पूर्वार्धे कस्यचिद्देवस्योपासनमेवोच्यते न तु ब्रह्मार्पणबुद्ध्या यजनम् । अतो नायमर्धः पूर्वसङ्गत इत्यत आह **दैवमिति** ॥ भगवन्तं यज्ञ इत्युपासत इत्यनेन भगवानेव यज्ञः, तस्य तथोपासनमेव यज्ञकरणमित्युक्तं भवति । कथं भगवतो यज्ञत्वम् ? येन तथोपासनं यज्ञकरणं स्यादित्यत आह **स्वेति** ॥ स्वरूपमेवानन्दादिहविः स्वयमेवाग्निर्भगवान् भुङ्क्ते, अतोऽयं, यज्ञ इत्यर्थः । 'ब्रह्माग्नौ' इत्येतदुर्गमार्थत्वात् पूर्वसङ्गतत्वेन व्याचष्टे **ब्रह्मेति** ॥ यज्ञाख्येनेत्यस्य सर्वं तदधीनं ज्ञात्वेत्यर्थः ॥

*भा०दी०*— **तत्प्रपञ्च्यत इति** । यज्ञार्थमुक्तरूपहोमाद्याचरणमित्यर्थः ॥ **पूर्वसङ्गत इति** । प्रपञ्चरूपपूर्वसङ्गतिमापन्नेत्यर्थः ॥ **पूर्वसङ्गतत्वेनेति** । यज्ञभेदोक्तिपरत्वेनेत्यर्थः । यद्वा ब्रह्मार्पणमिति पूर्वसङ्गतत्वेनेत्यर्थः । एवमग्रेऽपि ॥ २५ ॥

**गीता**

**श्रोत्रादीनीन्द्रियाण्यन्ये संयमाग्निषु जुह्वति ।**
**शब्दादीन्विषयानन्य इन्द्रियाग्निषु जुह्वति ॥ २६ ॥**

***वि०वि०***— तत्पूजात्वेन प्रत्याहारात् श्रोत्रादिनिग्रहं कुर्वन्ति । तत्पूजात्वेन विषयान् भुंक्ते ॥

***वा०ल०***— प्रधानत्वात् प्राङ्निर्दिष्टज्ञानयज्ञमेव प्रपञ्चयति **श्रोत्रादीनि** इत्यादिभिः । संयमाग्निषु विषयतृष्णासंयमनाख्याग्निषु । दिने दिने क्रियमाणत्वाद्बहुवचनम् । इन्द्रियाग्निषु इन्द्रियनियमनाख्याग्निषु । इन्द्रियाणां नियमने सति शब्दादिविषयाणां हुतान्नवदकिञ्चित्करणत्वात् जुह्वतीत्युक्तम् । विषयतृष्णाभावे इन्द्रियाण्यबाधकानि, इन्द्रियनियमने विषयाश्चाबाधका भवन्तीति भावः ॥

***सा०सं०***— **अन्ये** योगिनः । **श्रोत्रादीनि** ज्ञानेन्द्रियाणि । **संयमाग्निषु जुह्वति** । भगवत्पूजात्वेनेन्द्रियनियमनं कुर्वन्ति । प्रत्याहारादिना सर्वं यज्ञाख्यहर्यधीनं, न क्वचिदपि स्वातन्त्र्यमिति ज्ञात्वेत्यर्थः । एतदपि ब्रह्मार्पणरूपमेव विवक्षितम् । एवमग्रेऽपि । अत एव वक्ष्यति 'एवं बहुविधा यज्ञाः' इति ज्ञेयम् । **अन्ये** योगिनः । **शब्दादीन्** शब्दस्पर्शरूपरसगन्धान् । **विषयान्** श्रोत्रादीन् । इन्द्रियाख्याग्निषु **जुह्वति** । यज्ञेनैव यज्ञाधीनं ज्ञात्वा स्वस्वातन्त्र्याभिमानत्यागेन भगवत्पूजात्वेन विषयान् भुञ्जत इत्यर्थः ॥

***अ०प्र०***— अन्वयः स्पष्टः । अन्ये = नैष्ठिकब्रह्मचारिणः[१], श्रोत्रादीनि[२], इन्द्रियाणि[३], विषयेभ्यः प्रत्याहृत्य निरुध्य संयमाग्निषु तत्तदिन्द्रियसन्नियमनाख्ये अग्निषु[४], जुह्वति = प्रविलापयन्ति संयमप्रधानाः तिष्ठन्ति[५] । हरिपूजात्मकयज्ञभावनया इन्द्रियनियमनं कुर्वन्तीत्यर्थः[५] । अन्ये = गृहस्थाः[६], शब्दादीन् विषयान्[८], इन्द्रियाग्निषु इन्द्रियाण्येव अग्नयः तेषु तथा[९], जुह्वति कामाहङ्कारादिशून्याः विषयभोगसमयेऽप्यनासक्ताः सन्तो दैवादयत्नलब्धविषयान् हविष्यत्वेन ज्ञात्वा इन्द्रियाण्यग्नित्वेन ध्यात्वा श्रीहरिपूजात्मकयज्ञभावनया निषिद्धभोगं कुर्वन्तीत्यर्थः ॥ २६ ॥

**भाष्यम्**

**यज्ञभेदानाह— दैवमित्यादिना । दैवं भगवन्तम् । स एव तेषां यज्ञः । भगवदुपासनम् । यज्ञमिति क्रियाविशेषणम् । नान्यत् तेषामस्ति यतीनां केषाञ्चित् । यज्ञं भगवन्तम् । "यज्ञेन यज्ञम्", "यज्ञो विष्णुर्देवता" इत्यादि श्रुतिभ्यः । यज्ञेन प्रसिद्धेनैव । यज्ञं प्रति यज्ञेन जुह्वतीति सर्वत्र समं "तं यज्ञं" इत्यादौ । उक्तं च—**

**विष्णुं रुद्रेण पशुना ब्रह्मा ज्येष्ठेन सूनुना ।**
**अयजन्मानसे यज्ञे पितरं प्रपितामहः ॥ इति ॥ २५-२६ ॥**

*प०टी०*— कर्मणः सत्कर्मप्रकारमुक्त्वा तत्स्वरूपप्रदर्शनपरतयोत्तरप्रघट्टकमवतारयति **यज्ञेति**। अत्र 'यज्ञ'शब्देन त्रिविधमपि कर्म। 'तपोयज्ञाः' इत्यादिनेतरयोर्यज्ञान्तर्भावात्। देव्या विशेषोऽयं यज्ञ इति भ्रान्तिर्मा भूदित्याह **दैवमिति**। ननु यदि भगवन्तमुपासत इत्यर्थः, तर्हि यज्ञो नोक्तः स्यादित्यत आह **स एवेति**। स एव इति कः ? इत्यत आह **भगवदिति**। तर्ह्यत्र 'यज्ञ'शब्दान्वयः कथम् ? इत्यत आह **यज्ञमिति**। 'एव'कारार्थमाह **नान्यदिति**। मखे प्रसिद्धोऽपि 'यज्ञ'शब्दो द्वितीयान्तो भगवत्परः प्रयोगबलात्, तृतीयान्तो च मख एवेत्याह **यज्ञमिति**। द्वितीयान्त 'यज्ञ'शब्दस्य क्वान्वयः ? इत्यत आह **यज्ञमिति**। सर्वत्रेत्युत्तरहोमेषु। तत्र दृष्टान्तमाह **तमिति**। 'यथा' इति शेषः। तथाऽपि यज्ञं भगवन्तमित्यर्थः कुतः ? इत्यत आह **उक्तं चेति**॥

*न०टी०*—'कुरु कर्म' इत्युक्त्वा, तस्य कर्मणः स्वरूपमभिहितं 'कर्मणि' इत्यादिना। तदपि यज्ञदानाद्यात्मकम् तत्रायज्ञस्यायं परं च लोकः सुखवासो न भवतीति ज्ञापयितुं, सर्वाश्रमियोग्यान् यज्ञविशेषानाहेत्यभिप्रायेणोत्तरं प्रघट्टकमवतारयति **यज्ञभेदानिति**। 'दैव' शब्दस्येष्टत्वाचित्वात् 'देवा इत्यन्ते यस्मिन् यज्ञे स दैवयज्ञः' इत्यन्यैर्व्याख्यातत्वाच्च, पक्षद्वयप्रतीतावत्र भगवद्विवक्षितं दैव-शब्दार्थं तावदाह **दैवमिति**। ननु यदि दैवशब्दोक्तं भगवन्तमुपासत इति वाक्यार्थः, न तु दैवाख्यं यज्ञं कुर्वत इति, तर्हि कथं यज्ञभेदा उच्यन्तेऽस्मिन् प्रघट्टके ? इत्यत आह **स एवेति**। ननु 'सः' इत्यनेन भगवत्तदुपासनयोर्मध्ये किं परामृश्यते ? इत्यत आह **भगवदुपासनमिति**। नन्व-स्मिन् पक्षे कथं यज्ञशब्दान्वयः ? इत्यत आह **यज्ञमिति**। उपासनं यथा यज्ञो भवति तथोपासत इत्यर्थः। 'एव'कारार्थमाह **नान्यदिति**। षष्ठे चैतद्विस्तारयिष्यति। 'दैव'शब्दस्य यज्ञविशेषत्वे एवकारो व्यर्थः स्यात्। पितृयज्ञादेरपि तैरेव क्रियमाणत्वात्। यज्ञस्याध्वरे प्रसिद्धत्वेऽप्युत्तरार्ध-गतप्रथमयज्ञशब्दो भगवद्विषय एवेत्येतत् सप्रमाणकमाह **यज्ञमिति**। द्वितीयस्त्वध्वर एवेत्याह **यज्ञेनेति**। 'दध्ना जुहोति' इत्यादिवत् 'यज्ञेन जुहोति' इति दधिप्रक्षेपेण होमोत्पत्तिवद्यज्ञार्पणेन होमोत्पत्तेरित्यर्थः। एतेनैतदपि प्रत्युक्तम्। यदाहुरन्ये 'यज्ञाख्यं स्वात्मानं यज्ञाख्येन स्वात्मनैव ब्रह्माख्याग्नौ प्रक्षिपन् सोऽयं ज्ञानयज्ञः' इति। तत्पक्षे जीवब्रह्मणोराधाराधेयादेर्मिथ्यात्वेनैव न ज्ञानयज्ञः स्यात्। न च तयोरेकत्वचिन्तनं होमम्। अश्रुतकल्पनाप्रसङ्गात्। होमबुद्ध्यनुत्पत्तेश्चेत्येषा दिक्। ननु प्रथमयज्ञशब्दस्य हरिविषयत्वे कथमत्रान्वयः ? इत्याशङ्क्य, 'तं यज्ञम्' इत्यादाविव 'यज्ञं प्रति जुह्वति' इति स्थानचतुष्टयेऽप्यन्वयसम्भवादिति भावेनाह **यज्ञं प्रतीति**। **तं पुरुषं** पशुं, **यज्ञं** भगवन्तं प्रति **बर्हिषि** यज्ञे **प्रौक्षन्** इत्यर्थः। 'तं यज्ञम्' इत्यस्योक्तार्थत्वे प्रमाणमाह **उक्तं चेति**॥

*प्र०दी०*— उत्तरप्रकरणप्रतिपाद्यं बुद्ध्यारोहार्थमाह— **यज्ञेति** । सामान्यतः कर्मस्वरूपमुक्तम् । तच्च यज्ञादिभेदभिन्नम् । तत्र 'नायं लोकोऽस्ति' इति वक्ष्यति । तदनुपपन्नम् । यत्याश्रमविलोपप्रसङ्गादित्याशङ्कानिरासार्थमिति शेषः । अत्र ''दैवं देवविषयं'' इति व्याख्यानमसत् । 'द्रव्ययज्ञ' इत्यस्य पुनरुक्तत्वादिति भावेनाह— **दैवमिति** । एवं तर्हि केचिद्भगवन्तमुपासत इत्युक्तं स्यात् । तथा च नेयं यज्ञोक्तिरित्यत आह— **स एवेति** । स इति परामृष्टं दर्शयति— **भगवदिति** । भगवदुपासनस्य यज्ञत्वमिह कथं लभ्यत इत्यत आह— **यज्ञमिति** । भगवदित्यादिकं क्रियाविशेषणत्वप्रदर्शनार्थमेकमेव वाक्यम् । साधनं परित्यज्य धात्वर्थमात्रस्य विशेषणं हि क्रियाविशेषणम् । अवधारणार्थं दर्शयति— **नान्यदिति** । अन्यद्भगवदुपासनात् । अनेनैवशब्दो भिन्नक्रम इत्युक्तं भवति । दैवमेवोपासते नान्यदिति तु प्रकृतासङ्गतम् । केषाञ्चित्परमहंसानाम् । अन्येषां बाह्यकर्मणोऽपि भावात् । यद्वा केषाञ्चिदित्यस्यैव व्याख्यानं— **यतीनामिति** । ब्रह्माग्नावित्यस्य ''आत्मानमात्मनैव मनसा वा ब्रह्मणैकीभावयन्ति'' इति व्याख्यानमसदिति भावेन 'यज्ञं' इत्येतद्व्याचष्टे— **यज्ञमिति** । भगवतो यज्ञशब्दार्थत्वं कुत इत्यत आह— **यज्ञेनेति** । यज्ञेनेत्यस्यार्थमाह— **यज्ञेनेति** । एवशब्देनापव्याख्यानं निराकरोति । एवं चेद्यज्ञमित्यस्य कथमन्वय इत्यत आह— **यज्ञमिति** । एतद्व्याख्यानमन्यत्रातिदिशति— **इति सर्वत्रेति** । अतिप्रसङ्गनिवारणाय सर्वत्रेत्युक्तं विवृणोति— **तमिति** । एवं तर्ह्यग्रतो जातं तं पुरुषं यज्ञं भगवन्तं प्रति बर्हिषि प्रौक्षन्नित्यर्थः स्यात् । स च निर्मूल इत्यत आह— **उक्तं चेति** ॥

*भा०दी०*— **कर्मस्वरूपमुक्तमिति** । भगवदधीनकर्तृत्वानुसन्धानपूर्वं तत्प्रीत्युद्देशेन वर्णाश्रमविहितानुष्ठानं कर्मेति सामान्यतः कर्मस्वरूपं कर्मणीत्यादिनोक्तमित्यर्थः । **वक्ष्यतीति** । अत्रैवाध्याये इति योज्यम् । **इत्यस्य पुनरुक्तत्वादिति** । द्रव्ययज्ञस्यापि देवतोद्देशेन द्रव्यत्यागरूपतया देवविषयत्वादिति भावः । **क्रियाविशेषणत्वेति** । भगवदुपासनरूपक्रियां प्रति यज्ञमित्यस्य ............... नार्थम् । अत एव यज्ञमिति नपुंसकम् । नन्वेवं भगवन्तमुपासते यज्ञं यथा तथेति वक्तव्ये भगवदुपासनमिति ............. आह । **साधनमिति** । लिङादिप्रत्ययोत्पत्तौ यत्साधनं कर्तृकर्मादि तत्त्यागेनेत्यर्थः । अत एवमनुवादः क्रियत इति । ........................ **अवधारणेति** । दैव-मेवेत्येवकारार्थमित्यर्थः । **भिन्नक्रम इति** । **उपासत** इत्यत्रोपासनरूपधात्वर्थेनान्वयः । भगवदुपा........... कुर्वन्ति । **नान्यदिति** । भिन्नक्रम इत्यर्थः । **अन्येषामिति** । यतिभ्य इति योज्यम् । यतीनामित्यतः केषाञ्चिदित्येतद्भिन्न.........................मानाधिकरण्येन व्याचष्टे **यद्वेति** ॥

*भा०र०*— यज्ञभेदवचनस्य का सङ्गतिः ? इति शङ्कां परिहर्तुं भाष्ये शेषमाह **सामान्यत इत्यादि** । सङ्क्षेपविस्तराभ्यां कर्मत्वेन रूपेण कर्मस्वरूपं "कर्मण्यकर्म" (४.१८) इत्यदिनोक्त-मित्यर्थः । **तत्र** यज्ञादिषु यज्ञविषये । **यत्याद्याश्रमेति** । तत्र यतीनां निष्क्रियत्वात्, वनस्थानां प्रायेण तत्समानधर्मत्वादिति भावः । **देवविषयं** देवोद्देश्यकम् । **पुनरुक्तत्वादिति** । देवतोद्देशेन द्रव्यपरित्यागस्यैव द्रव्ययज्ञशब्दार्थत्वेन पुनरुक्तिप्रसङ्गादित्यर्थः । देवशब्दात् प्रज्ञादिलक्षणे स्वार्थेऽणि दैवशब्दः देवार्थः । देवश्च "द्योतनाद्विजयात्कान्त्याः स्तुत्या व्यवहृतेरपि । गत्या रत्या च देवा-ख्यम्" (ऋ.भा. १.१.११) इति ऋग्भाष्यरीत्या भगवानेवेति 'दैवं भगवन्तम्" इत्युक्तं भाष्ये । 'अपरे' इत्यस्यार्थानुवादः **केचिदिति** । **इह** "दैवमेवापरे यज्ञम्" इत्यत्र । **क्रियाविशेषणत्वेति** । "भगवदुपासनं यज्ञम्" इति भगवदुपासनरूपक्रियाविशेषणत्वं 'यज्ञम्' इत्यस्य प्रदर्शयितुं एकमेव वाक्यं भाष्ये द्रष्टव्यम् । एकवाक्यत्वाभावे कस्याः क्रियायाः इदं विशेषणमिति मन्दाः व्याकुलाः स्युरिति भावः । एकवाक्यत्वे क्रियाविशेषणत्वं प्रदर्शितं भवतीत्युपपादयति **साधनमिति** । तिङाद्युत्पत्तौ यत् **साधनं** कर्तृकर्मादि तत् परित्यज्य यद् धात्वर्थमात्रस्य विशेषणं विज्ञायते तद्धि क्रियाविशेषणमित्यर्थः । अत एव नपुंसकत्वमपीति भावः । तिङाद्युत्पत्तौ कर्त्रादेः साधनत्वं च "लः कर्मणि च भावे चाकर्मकेभ्यः" इति शास्त्रसिद्धमिति द्रष्टव्यम् ।

**अवधारणार्थं** "दैवमेव" इति गीतागतावधारणार्थकैवकारान्वयो भाष्ये "स एव" इति दर्शितः, तदर्थमाहेत्यर्थः । तत्फलं दर्शयति **अनेनेति** । **भिन्नक्रमः** "पर्युपासत एव" इत्यत्र बुद्ध्या विविक्तेन धात्वर्थेन सम्बन्धः । भगवदुपासनमेव यज्ञतया कुर्वन्ति नान्यदिति फलितमिति भावः । यथाश्रुतान्वये बाधकाभावान्नैतावान् आयास आश्रयणीय इत्यतोऽत्र बाधकमाह **दैवमेवेति** । यति-शब्देनान्यर्थाप्रतीतेः 'केषाञ्चिद्' इति विशेषणं व्यर्थमित्यत आह **परमहंसानामिति** । कुटीचक-बहूदक-हंस-परमहंसभेदेन यतीनां चातुर्विध्याद् बहूदकादिव्यावृत्तयतिग्रहणाय विशेषणमिति भावः । तद्व्यावृत्तिः किन्निबन्धना ? इत्यत आह **अन्येषामिति** । हंसादीनां त्रयाणाम् । **बाह्यकर्मण इति** । तथा च तात्पर्यनिर्णये—

तत्रस्थाः शुद्धसत्त्वास्तु परहंसाः प्रकीर्तिताः ।
हंसो बहूदः कुटिको वनस्थो नैष्ठिको गृही ।
क्रमाद्रजोऽधिका बाह्यकर्मैषामधिकं यतः ॥ (गी.ता. १८.४०) इति ।

तत्र न्यायदीपिकायाम्— परमहंसाः शिखायज्ञोपवीतहीनाः एकदण्डिनः । यज्ञोपवीतवानेक-दण्डः शिखारहितो हंसः । त्रिदण्डी शिखायज्ञोपवीतवान् ग्रामैकरात्रिर्बहूदः । त्रिदण्डी शिखायज्ञोप-

वीतवान् यावज्जीवं पुत्रदत्तान्नः कुटिक इत्युक्त्वा हंसादिषु कर्मबाहुल्यक्रमोऽन्यतो द्रष्टव्य इत्युक्तम् । तद्विवरणं कृतं विजयीन्द्रतीर्थश्रीमच्चरणैः तत्त्वमाणिक्यपेटिकायां यतिलिङ्गसमर्थनवादे इति । सर्वं क्रमेण बाह्यजलाञ्जलिप्रदानादिकर्मबाहुल्यादिकं ततोऽवसेयम् ।

"यतीनां केषाञ्चिद्" इत्यत्र व्याख्यानव्याख्येयत्वाभ्युपगमेन पक्षान्तरमाह **यद्वेति** । 'नान्यद्' इति भाष्ये नपुंसकत्वं तु सामान्यत्वात् । **केचित्तु** "स एव तेषां यज्ञः" इत्यस्य पर्युपासीना एव यज्ञवन्त इत्यर्थपर्यवसानेन **अन्येषां** परमहंसेतरेषां यज्ञो नास्तीत्यर्थस्य सिद्धेः, तदर्थतया "केषाञ्चिद्" इति विशेषणं नातीव प्रयोजनमावहतीत्यनुशयेनाह **यद्वेति** । 'अपरे' इति गीतोक्तविशेषणं 'केषाञ्चिद्' इति तात्पर्यतो व्याख्यातम् । के ते ? इत्याकाङ्क्षापूरकस्य 'योगिनः' इत्यस्य तु 'यतीनाम्' इति तात्पर्यमित्यस्त्येव प्रयोजनमिति भाव इति व्याचक्षते ।

"ब्रह्म च तदग्निश्च ब्रह्माग्निः । होमाधिकरणत्वविवक्षायां ब्रह्माग्नौ **यज्ञम्** आत्मानं परमार्थतः परमेव ब्रह्म सन्तं **यज्ञेन** आत्मना बुद्ध्याद्युपाधिसंयुक्तत्वरूपोक्तलक्षणेन" इत्यादिसङ्करभाष्यमर्थतोऽनुवदति **ब्रह्माग्निवित्यस्येत्यादि** । **इत्यस्य** ब्रह्माग्नावित्यर्थस्य परव्याख्यानस्यासत्त्वं भाष्यारूढमित्याह **एवशब्देनेति** । विष्णुयज्ञयोः यज्ञशब्दार्थत्वे श्रुतिप्रसिद्धलक्षणप्रमाणवत् सोपाधिकात्ममनसोः तदर्थत्वे प्रमाणाभावाद्, जीवब्रह्मैक्यस्य सर्वप्रमाणविरुद्धत्वाच्चेति निराकरोतीति भावः । **यज्ञमित्यस्येति** । द्वितीयान्तयज्ञशब्दस्य भगवदर्थत्वे तस्य कथमन्वयः ? इत्यर्थः । **एतद्व्याख्यानं** प्रतिशब्दसंयोजनेन व्याख्यानम् **अतिप्रसङ्गेति** । 'सर्वत्र' इत्युक्तौ "अग्ने यं यज्ञमध्वरम्" (ऋ. १अ. १अ.१व.) इत्यादावपि तथात्वापत्तेरतिप्रसङ्गः । तन्निवारणार्थमुक्तं विवृणोतीत्यर्थः । "तं यज्ञं बर्हिषि प्रौक्षन् पुरुषं जातमग्रतः" (ऋ. ८ अ. ४ अ. १८ व) इति अर्धर्चस्यार्थं वदन्नेवोत्तरभाष्यमवतारयति **एवं तर्हीति** । **आग्रतो जातं** ज्येष्ठपुत्रं रुद्रम् । विष्णुं रुद्रेणेति स्मृतौ "ब्रह्मणः प्रथमे कल्पे शिवः प्रथमजः स्मृतः" (ब्रह्माण्डे) इति वचनाद् रुद्रो ब्रह्मणः प्रथमकल्पे ज्येष्ठः पुत्र इति ज्ञातव्यम् । तेन "अथर्वाय ज्येष्ठपुत्राय प्राह" (आ. १.१.१) इति श्रुतिविसंवादशङ्काऽनवकाशः । "मनोर्वैवस्वतस्यादावथर्वा ब्रह्मणोऽजनि । सनकाद्यास्तु वाराहे" (ब्रह्माण्डे) इत्याथर्वणभाष्ये (१.१.१) व्यवस्थापनात् ॥ २५-२६ ॥

**गीतातात्पर्यनिर्णयः**

**तत्पूजात्वेन श्रोत्रादिसंयमं कुर्वन्ति । तत्पूजात्वेन विषयान् भुञ्जते ॥ ॥ २६ ॥**

*न्या०दी०*— ननु 'श्रोत्रादीनि' इत्यादौ श्रोत्रादिहविषः संयमाख्याग्न्यादौ होम एव उच्यते, न तु तस्य ब्रह्मार्पणम् । अतो नैतत्पूर्वसङ्गतमित्यत आह **तदिति** ।। अत्रापि ब्रह्मार्पणस्य ''एवं बहुविधाः'' इति वक्ष्यमाणपर्यालोचनया विवक्षितत्वावगमात् नासङ्गतिरिति भावः ।। २६ ।।

**गीता**

## सर्वाणीन्द्रियकर्माणि प्राणकर्माणि चापरे ।
## आत्मसंयमयोगाग्नौ जुह्वति ज्ञानदीपिते ।। २७ ।।

*वि०वि०*— तत्पूजात्वेनैवेन्द्रियादिव्यापारान् । आत्मनो मनसः । आत्मसंयमाख्यो योग उपायः स एवाग्निस्तस्मिन् जुह्वति । विष्णवधीनत्वज्ञानं सर्वत्रावश्यकम् ।।

*बा०ल०*— सर्वाणीन्द्रियकर्माणि इन्द्रियव्यापारात् । प्राणकर्माणि श्वासोच्छ्वासादि व्यापारान् । आत्मसंयमयोगाग्नौ, आत्मनः चित्तस्य आत्मनि परमात्मन्येव संयमयोगः सम्यङ्नियमनाख्यध्यानयोगः स एवाग्निः तस्मिन् । परमात्मनो निदिध्यासने क्रियमाणे सति बाह्येन्द्रियाणां प्राणायामादिना निरोधं कुर्वन्तीति भावः ।।

*सा०सं०*— **अपरे** योगिनः । **सर्वाणीन्द्रियकर्माणि** वाक्पाणिपादपायूपस्थरूपकर्मेन्द्रियव्यापारान् । तथा **प्राणकर्माणि** प्राणापानादिव्यापारांश्च । **आत्मसंयमयोगाग्नौ** जुह्वति । आत्मनो मनसो यः संयमः स एव योग उपायः । स एवाग्निः । **ज्ञानदीपिते** तत्र । **जुह्वति** यज्ञेनैव भगवदधीनताज्ञानपूर्वं स्वातन्त्र्याभिमानत्यागेन मनो निगृह्य कर्मेन्द्रियादिव्यापारान् भगवत्पूजात्वेन नियच्छन्तीत्यर्थः ।।

*अ०प्र०*— **सर्वाणीति** ।

अपरे[१], सर्वाणि[२], इन्द्रियकर्माणि[३], प्राणकर्माणि च[४], ज्ञानदीपिते सति[५], आत्मसंयमयोगाग्नौ[६], जुह्वति[७] ।

अपरे = ध्याननिष्ठाः[१], सर्वाणि इन्द्रियकर्माणि = श्रोत्रादिज्ञानेन्द्रियकर्माणि श्रवणादीनि वागादिकर्मेन्द्रियकर्माणि व्यवहारादीनि एतानि सर्वाणि[२-३], प्राणकर्माणि च = प्राणानां दशानां कर्माणि च; कानि ? — (१-५) प्राणादि प्रसिद्धानि पञ्च, (६) नागः, (७) कूर्मः (८) कृकलः, (९) देवदत्तः, (१०) धनञ्जयः, एवंरूपाणि प्राणकर्माणि च[४], ज्ञानदीपिते सति = ध्येयविषयकेन ज्ञानेन प्रज्वलिते सति[५], आत्मसंयमयोगाग्नौ = आत्मनो मनसः संयमः एकाग्रता = ध्यानैकाग्र्यं

स एव योगो उपायः स एव अग्निः तस्मिन् ज्ञानाग्नौ[१], जुह्वति ज्ञाने ध्येयं सम्यक् ज्ञात्वा तस्मिन् मनः संयम्य तानि सर्वाणि तत्तदिन्द्रियादिकर्माणि हरिपूजात्वेन उपरमन्तीत्यर्थः । तदुक्तम्—

"यथा यथा सदाभ्यासान्मनसः स्थिरता भवेत् ।
वायुवाक् पायुदृष्टीनां स्थिरतां च तथा तथा ॥" —इति वचनात् ॥ २७ ॥

**भाष्यम्**

**आत्मसंयमाख्योपायाग्नौ** ॥ २७ ॥

***प॰टी॰***— 'आत्मसंयम....' इत्यप्रतीतिं निराचष्टे **आत्मेति** ॥ २७ ॥

***न॰टी॰***—**आत्मा** अन्तःकरणम् । तस्य संयमे सतीन्द्रियादिसंयमो भवतीति तस्योपायतेति भावः ॥

***प्र॰दी॰***— 'आत्मसंयम' इत्येतद्दुर्गमार्थत्वाद्व्याख्याति— **आत्मेति** । आत्मनो मनसः । आत्मसंयमाख्यो य उपायः स एवाग्निः ॥

***भा॰र॰***— आत्मनः संयम आत्मसंयमः, स चासौ योग इति विग्रहमभिप्रेत्यात्मशब्दार्थमाह **आत्मनो मनस इति** । **य उपाय इति** । गीतागतयोगशब्दार्थो य उपाय इतीति भावः । विवृतं च **प्राचीनटीकायाम्** आत्मनोऽन्तःकरणस्य संयमे सति इन्द्रियादिसंयमो भवतीति तस्योपायतेति ॥ २७ ॥

**गीता**

**द्रव्ययज्ञास्तपोयज्ञा योगयज्ञास्तथाऽपरे ।**
**स्वाध्यायज्ञानयज्ञाश्च यतयः संशितव्रताः ॥ २८ ॥**

***वि॰वि॰***— द्रव्यं जुह्वतीति द्रव्ययज्ञाः । तपः परमेश्वरार्पणबुध्या तत्र जुह्वतीति तपोयज्ञाः । एवं योगयज्ञाः, स्वाध्याययज्ञाः ज्ञानयज्ञाश्च । यतयः प्रयतमानाः । सम्यक् शितं तीक्ष्णं व्रतं येषां ते संशितव्रताः ॥

***सा॰सं॰***— **अपरे द्रव्ययज्ञाः** द्रव्यस्य याजकाः । कर्त्रर्थोऽयं यज्ञशब्दः । **तपोयज्ञाः** कृच्छ्रचान्द्रायणादितपो हर्यर्पणबुद्ध्या हरौ जुह्वतीति तपोयज्ञाः । भगवत्पूजात्वेन ध्यानं कुर्वन्तीति **योगयज्ञाः** । विष्णुपूजात्वेन स्वाध्यायमधीयत इति **स्वाध्याययज्ञाः** । यज्ञेनैवेति सर्वत्रान्वेत्युक्तं

तदर्थः प्राग्वत् । ज्ञानयज्ञाः भगवत्पूजात्वेन श्रवणादि कुर्वन्तीति । **संशितव्रताः** तीक्ष्णव्रताः । **यतयो** यत्नशीलाः ॥

***अ०प्र०***— अपरे[१], द्रव्ययज्ञाः[२], अपरे यत्नयः[३], तपोयज्ञाः[४], तथा परे[५], योगयज्ञाः[६], अपरे संशितव्रताः[७], स्वाध्यायज्ञानयज्ञाश्च[८], एते सर्वे यज्ञक्षपितकल्मषाः सन्तः ब्रह्म यान्तीति तृतीयेनान्वयः इत्यन्वयः ।

अपरे = धनिकाः[१], द्रव्ययज्ञाः = द्रव्यदानमेव यज्ञो येषां ते द्रव्ययज्ञाः[२], यतयः = प्रयत्न-शीलाः[३], तपोयज्ञाः = कृच्छ्रचान्द्रायणादि तप एव यज्ञो येषां ते तपोयज्ञाः[४], तथाऽपरे योगिनः[५], योगयज्ञाः = योगश्चित्तवृत्तिनिरोधलक्षणः समाधिः स एव यज्ञो येषां ते योगयज्ञाः[६], अपरे संशितव्रताः = सम्यक् शितं निशितं तीक्ष्णं कृतं व्रतं यैस्ते संशितव्रताः[७], स्वाध्यायज्ञानयज्ञाश्च = स्वाध्यायेन वेदेन श्रवणमननादिना यत् तदर्थज्ञानं स एव यज्ञो येषां ते स्वाध्याययज्ञाः । अथवा वेदपाठयज्ञाः तदर्थज्ञानयज्ञाश्चेति द्विविधाः । ज्ञानस्य यज्ञाः ज्ञानयज्ञाः द्रव्यं घृतादि तपःकृच्छ्रादिह-विरूपं तप आदिकं ब्रह्मरूपाग्नौ तत्पूजार्थं जुहोमि तदर्पणं करोमीति तदर्पणे एवं होमबुद्धिः कार्या हि । एवं योगादौ ज्ञेयं[८], एते यज्ञक्षपितकल्मषाः सन्तः ब्रह्म यान्तीति तृतीयेण अन्वयः ॥२८॥

**भाष्यम्**

**द्रव्यं जुह्वतीति द्रव्ययज्ञाः । तपः परमेश्वरार्पणबुद्ध्या तत्र जुह्वतीति तपोयज्ञाः इत्यादि । इदं तपो हविः । एतद् ब्रह्माग्नौ जुहोमि तत्पूजार्थमिति होमः । तदर्पण एव च होमबुद्धिः ॥ २८ ॥**

***प०टी०***— यथैतेषु यज्ञशब्दप्रत्ययौ स्यातां तथा द्रव्ययज्ञादीन् प्रदर्शयति । होमप्रकारमाह **इदमिति** । ननु तपश्चरणाद्येव तपोयज्ञादि, नेश्वरार्पणमित्यत आह **तदिति** । ननु तपश्चरणाद्येव तपोयज्ञादि, नेश्वरार्पणमित्यत आह **तदिति** । न चरणमात्रेण होमबुद्धिर्भवतीत्यर्थः ॥

***न०टी०***—यथैतेषु यज्ञशब्दप्रत्ययौ स्याताम्, तथैतान् द्रव्ययज्ञादीन् निरूपयति **द्रव्य-मित्यादिना** । **द्रव्यं** सोमादि । न तापसा एव तपोयज्ञाः । किन्तु वक्ष्यमाणप्रकारेण तद्भगवत्यर्पित एवेति भावेनाह **तप इति** । **आदिशब्देन** योगं परमेश्वरार्पणबुध्या परमेश्वरे जुह्वतीति योगयज्ञा इत्यादि । एतदेव विवृणोति **इदमित्यादिना** । **तस्य** तस्य तपसो ब्रह्मंण्यर्पणे सत्येव होमबुद्धिः, न तु तपश्चरणमात्रे सतीत्यर्थः ॥

***प्र०दी०***— ननु द्रव्यं यज्ञो न भवति । तत्कथं बहुव्रीहिः । तत्पुरुषत्वे च कथं पुरुषसामानाधिकरण्यमित्यत आह— **द्रव्यमिति** । अनेन नायं यज्ञशब्दो भावार्थः । किन्तु कर्त्रर्थः । तथा च द्रव्यस्य यज्ञा याजका इत्युक्तं भवति । एतदाशङ्कापरिहारायैव 'तपोयज्ञाः' इत्येतदप्येवमेव व्याचष्टे– **तप इति** । तत्र परमेश्वरे । 'योगयज्ञाः' इत्यादिकमप्येवमेव व्याख्येयमिति दर्शयति— **इत्यादि इति** । तपसो होमः । [1]तपश्चरणमेव तपोयज्ञः किं न स्यादित्यत आह— **तदर्पण एवेति** । अनेनैव प्रकारेण यज्ञत्वसम्पादनम् । नान्यथेत्यर्थः ॥

***भा०दी०***— **तत्पुरुषस्त्व इति** । द्रव्याणां यज्ञ इत्येव तत्पुरुषत्व इत्यर्थः । एतदाशङ्कापरिहाराय ..................षामिति बहुव्रीहित्वे तत्पुरुषत्वे च प्रागुक्तदोष इति शङ्कापरिहाराय इत्यर्थः । **एवमेवेति** । यज्ञशब्दस्य कर्त्रर्थ .................... ॥

***भा०र०***— द्रव्यं सोम-पशु-पुरोडाशादि । **बहुव्रीहिः** "द्रव्यं यज्ञो येषाम्" इति बहुव्रीहिः । **तत्पुरुषत्वे** "द्रव्याणां यज्ञः" इति षष्ठीतत्पुरुषत्वे । **पुरुषसामानाधिकरण्यमिति** । विशेष्यसमर्पक-यतिपदोक्तपुरुषसामानाधिकरण्यमित्यर्थः । **अनेन** 'जुह्वति' इति कर्त्रर्थकाख्यात-प्रयोगेण । **कर्त्रर्थ इति** । यद्यपि "यज-याच-यत-विच्छ-प्रच्छ-रक्षो नङ्" इति यजतेर्नङ्प्रत्ययो विहितः । स च 'भावे', "अकर्तरि च कारके" इत्यधिकाराद् भावे कर्तृवर्जितेऽन्यस्मिन् कारके च भवन् न कर्तरि । तथाऽपि "कृत्यल्युटो बहुलम्" इत्यतो बहुलग्रहणाद् अन्यत्रापि कृतः प्राप्तिम् अत्यन्तं व्यभिचरन्तीति वृत्तिकारवचनात् कर्तर्यपि नङ्प्रत्ययो नायुक्त इति भावेनेयमुक्तिरिति द्रष्टव्यम् । **इत्युक्तं भवतीति** । तथा चोक्तरीत्या तत्पुरुषत्वेऽपि पुरुषसामानाधिकरण्यमुपपन्नमिति भावः ।

नन्वेवं चेद् द्रव्यं यजन्तीति द्रव्ययज्ञाः, तपो यजन्तीति तपोयज्ञा इत्यादि भाषितव्यम् । न पुनः 'जुह्वति' इति चेन्न । देवतां यजतीत्यत्र देवताया उद्देश्यत्वावगमाद् अत्रापि द्रव्यस्योद्देश्यत्वस्य शङ्का स्यात् । तच्चात्र न विज्ञातव्यम्, यजनसाधनत्वमात्रं ज्ञातव्यम् । तच्च जुह्वतीत्युक्तौ लभ्यते । अतो द्रव्यं जुह्वतीत्युक्तौ न तच्छङ्का । गीयते चात्र प्रकरणे 'जुह्वति' इति पदाभ्यासः । तस्य च ददतीत्यर्थः प्रतीयते इत्यभिप्रायेण तथा भाषणात् । 'जुह्वति' इत्यस्यैव 'यजन्ति' इत्यर्थकत्वाच्च । अत एव 'इदं तपो हविः एतद्ब्रह्माग्नौ जुहोमि । तत्पूजार्थमिति होमः" इति होमस्य यज्ञत्वं वक्ष्यतीति । **एतदाशङ्केति** । "तपो यज्ञो न भवति । तत्कथं बहुव्रीहिः ? तत्पुरुषत्वे च कथं पुरुषसामान्याधिकरण्यम् ?" इत्याशङ्केत्यर्थः । **एवमेवेति** ॥ तपसो याजकास्तपोयज्ञा इतिवत् योगं परमेश्वरार्पणबुद्ध्या परमेश्वरे जुह्वतीति योगयज्ञाः । स्वाध्यायं भगवत्पूजा-

त्वेनाधीयानाः स्वाध्याययज्ञाः । भगवत्पूजात्वेन श्रवणादि कृत्वा तत्रार्पयन्तः ज्ञानयज्ञा इत्येव-मेवार्थः । **तपसो होमः कथमिति** । "तपो जुह्वति" इति तपसो होम उक्तः । स कथम् ? अद्रव्यरूपत्वेन तेन तन्निवर्तनायोगादिति शङ्कितुर्हृदयम् । तस्य तपसो ब्रह्मण्यर्पणे सत्येव होमबुद्धिः, न तु तपश्चरणमात्रे सतीत्यर्थ इति तदर्पण एव च होमबुद्धिरिति भाष्यं व्याख्यातं **प्राचीनटीका-यामिति** तत्तात्पर्यमाह **अनेनैव इति** । होमबुद्धिविषयत्वेनैवेत्यर्थः । **अन्यथा** तपश्चरणत्वेन ॥२८॥

**गीता**

## अपाने जुह्वति प्राणं प्राणेऽपानं तथाऽपरे ।
## प्राणापानगती रुद्ध्वा प्राणायामपरायणाः ॥ २९ ॥

***वि०वि०***— अपरे प्राणनियमनतत्पराः । प्राणापानगती रुध्वा । प्राणमपाने जुह्वति । अपानं च प्राणे । कुम्भकस्था एव भवन्तीत्यर्थः ॥

***वा०ल०***— 'अपाने जुह्वति प्राणम्' इत्यत्र अपरे योगिनः । दक्षिणनासापुटेन श्वासवायोः रेचके क्रियमाणे सति, अपानवायोरप्यूर्ध्वमाकर्षणेन श्वासे निलीयमानत्वात्, प्राणे अपानं जुह्वती-त्युक्तम् । वामनासापुटेनोर्ध्वश्वासाख्यप्राणवायोः पूरणे सति, अधोगमनेनापानवायौ निलीयमानत्वात् अपाने प्राणं जुह्वतीत्युक्तम् । पाठक्रमादर्थक्रमस्य ज्यायस्त्वादेवं योजना । तदनन्तरं कुम्भकेन प्राणापानगती रुद्ध्वा प्राणायामपरायणाः प्राणायामाख्यमहायज्ञपरायणा भवन्तीति योजना ॥

***सा०सं०***— **अपरे प्राणायामपरायणाः प्राणापानगती रुद्ध्वा** निरुद्ध्य । **अपाने प्राणं जुह्वति** तत्र प्रवेशयन्ति । **प्राणे चापानं जुह्वति** कुम्भकस्था एवेत्यर्थः ॥

***अ०प्र०***— अपरे[१], प्राणायामपरायणाः[२], प्राणापानगती रुद्ध्वा[३], प्राणं[४], अपाने[५], जुह्वति[६], तथा अपानं[७], प्राणे जुह्वति[८], एते सर्वे यज्ञक्षपितकल्मषः सन्तः सनातनं ब्रह्म यान्तीति उत्तरेणान्वयः ।

अपरे[१], प्राणायामपरायणाः = पूरक-रेचक-कुम्भकैः प्राणनियमनतत्पराः योगिनः[२], प्राणा-पानगती रुद्ध्वा = कुम्भकेन प्राणापानयोः ऊर्ध्वाधोगती रुद्ध्वा निरुध्य[३], प्राणं = ऊर्ध्वप्रवृत्ति-पूरकेन[४], अपाने = अधो प्रवृत्तौ[५], जुह्वति = पूरककाले प्राणं अपानेन एकीकुर्वन्ति[६], तथा अपानं = तथा रेचककाले तं अपानं[७], प्राणे जुह्वति = तयोः परस्परं होमं कृत्वा कुम्भकस्था एव भवन्तीत्यर्थः ॥ २९ ॥

**भाष्यम्**

**अपरे प्राणायामपरायणाः प्राणमपाने जुह्वति, अपानं च प्राणे। कुम्भकस्था एव भवन्तीत्यर्थः ॥ २९ ॥**

***प०टी०***— 'अपरे' इत्युक्तं यज्ञं दर्शयति **अपर इति** ॥

***न०टी०***— 'अपाने' इत्यादिश्लोकस्य पूरणरेचककुम्भकपरत्वेन यदपव्याख्यानम्, तन्निराकुर्वन् यथार्थमाह **अपर इति । येऽपरे प्राणायामपरायणाः** ते प्राणापानगती रुध्वा, रेचनपूरणे हित्वा, प्राणापानावितरेतरयोः जुह्वति । अस्यायं फलितार्थः **'कुम्भकस्थाः'** इत्युत्तरार्धोक्तम् ॥

***प्र०दी०***— "अपाने जुह्वति" इत्येतत्पूरकरेचककुम्भकपरतया केचिद्व्याचक्षते । तदसत् । अध्याहारादिप्रसङ्गात् । पूरकरेचकयोः कुम्भकार्थत्वेन पृथक्प्राणायामत्वाभावाच्चेति भावेन कुम्भकमात्रपरतया योजयति— **अपर इति** । परायणा इत्यतःपरं "प्राणापानगती रुद्ध्वा" इति द्रष्टव्यम् । अभिप्रायमाह— **कुम्भकस्था एवेति** । एवशब्देनापव्याख्यानं व्यावर्तयति ॥

***भा०दी०***— **अध्याहारादीति** । 'अपरेऽयाने प्राणं जुह्वति अपरे रेचकाः प्राणेऽपानं जुह्वति अपरे कुम्भरस्थाः प्राणापानगती रुद्ध्वा ........................ भवन्ती'त्यध्याहारा वृत्त्योर्वाक्यभेदस्य च प्रसङ्गादित्यर्थः ॥

***भा०र०***— "**अपाने** अपानवृत्तौ **प्राणं** प्राणवृत्तिं **जुह्वति** प्रक्षिपन्ति । पूरकाख्यं प्राणायामं कुर्वन्तीत्यर्थः । **प्राणेऽपानं तथाऽपरे जुह्वति** रेचकाख्यं प्राणायामं कुर्वन्ति । **प्राणापानगती रुद्ध्वा** । मुखनासिकाभ्यां वायोर्निर्गमनं प्राणस्य गतिः । तद्विपर्ययेणाधो गमनमपानस्य गतिः । एवंविधे प्राणापानगती निरुध्य **प्राणायामपरायणाः** प्राणायामतत्परा **भवन्ति** कुम्भकाख्यं प्राणायामं कुर्वन्तीत्यर्थः" इति सङ्करभाष्यमर्थतोऽनुवदति **अपाने जुह्वतीत्येतदिति** । 'पद्यम्' इति योज्यम् । **अध्याहारादीति** । 'प्राणायामपरायणाः' इत्यत्र वाक्यपरिसमाप्तये 'भवन्ति' इति पदाध्याहारः । आदिपदेन केचित्पूरकस्थाः, केचिद्रेचकस्थाः, केचित्तु कुम्भकस्था इति वाक्यभेदो गृह्यते । स्वव्याख्याने एकवाक्यतां घटयितुमाह **इत्यतःपरमिति** । प्राणापानगती रुद्ध्वा रेचनपूरणे हि प्राणापानौ इतरेतरयोर्जुह्वतीति व्याख्यातं **प्राचीनटीकायाम्** । **अभिप्रायमिति** । अपरे प्राणायामपरायणाः प्राणापानगती रुद्ध्वा प्राणम् अपाने जुह्वति, अपानं च प्राण इत्यस्याभिप्रायमित्यर्थः । परपक्षे स्वोक्तदूषणं भाष्यारूढमित्याह **एवशब्देनेति** ॥ २९ ॥

**गीता**

# अपरे नियताऽऽहाराः प्राणान् प्राणेषु जुह्वति ।
# सर्वेऽप्येते यज्ञविदो यज्ञक्षपितकल्मषाः ॥ ३० ॥

***वि०वि०***— नियताहारत्वेनेन्द्रियेषु तद्वृत्तिसङ्कोचात् प्राणान् प्राणेषु जुह्वति । 'यदस्याल्पाशनं तेन प्राणाः प्राणेषु वै हुताः' इति वचनात् । 'यच्छेद्वाङ्मनसी प्राज्ञः' इत्यादि श्रुत्युक्तप्रकारेण अवराणामिन्द्रियदेवतानामुत्तमेन्द्रियदेवतानियतत्वचिन्तनं तु, इन्द्रियाणामिन्द्रियेषु होमः । अस्मिन् पक्षे नियताहारा इति पृथग्यज्ञो ज्ञातव्यः । एवं यज्ञभेदान् ज्ञात्वा अनुतिष्ठतां फलमाह **सर्वेऽपीति** ॥

***वा०ल०***— अपरे संयमाग्नौ इन्द्रियहोमासक्ता नूतनयोगिनः, नियताहारः सन्तः देहं शोषयित्वा, प्राणान् इन्द्रियगणान्, प्राणेषु श्वासवायुषु जुह्वति । त्वगस्थिमात्रावयवा भूत्वा श्वासमात्रं मुञ्चन्तस्तिष्ठन्तीति भावः ॥

***सा०सं०***— **अपरे नियताहाराः** सन्तः, **प्राणान्** इन्द्रियाणि श्रोत्रादीन्द्रियवृत्तीः । **प्राणेषु** इन्द्रियेषु । **जुह्वति** सङ्कुचितवृत्तीन् प्राणान् कुर्वन्ति । नियताहारत्वेनेन्द्रियाणां शक्तिह्रासादिति भावः । यद्वा, **प्राणान्** वागादीन्द्रियदेवान् मनःप्रभृत्युत्तमदेवताधीनान् ध्यायन्तीत्यर्थः । अस्मिन् पक्षे भगवत्पूजात्वेन नियताहारः पृथग्यज्ञो ज्ञातव्यः । तान् स्तौति **सर्वेऽप्येत इति** । **यज्ञविदः** यज्ञज्ञाः । **यज्ञक्षपितकल्मषाः** यज्ञानुष्ठाननाशितपापाः ॥

***अ०प्र०***— अन्वयो श्लोकक्रमेण ॥ अपरे = योगिनः[१], नियताऽऽहाराः = आहारसङ्कोचमभ्यस्यतः यद्वा अभ्यसन्तः[२], प्राणान् = नियताऽऽहारत्वेन शुष्यमानान् इन्द्रियप्राणान् इन्द्रियव्यापारान्[३], प्राणेषु = इन्द्रियेषु[४], जुह्वति = निराहारेण शुष्यमाणेन्द्रियवृत्तीनां इन्द्रियाग्निषु होमं हरिपूजात्वेन भावयन्तीत्यर्थः । कुम्भके हि सर्वे प्राणाः एकी भवन्ति,

> "द्वौ भागौ पूरयेदन्नैः तोयेनैकं प्रपूरयेत् ।
> मारुतस्य प्रसारार्थं चतुर्थमवशेषयेत् ।
> यदस्याल्पाशनं तेन प्राणाः प्राणेषु वै हुताः ॥"

इत्यादिनोक्ताः नियताहाराः एते यज्ञविदः सर्वेऽपि, यज्ञक्षपितकल्मषाः सन्तः = यज्ञैः क्षपितं कल्मषं येषां ते तथा यज्ञं कृत्वा स्वकृतयज्ञैः क्षपितं नाशितं कल्मषं पापं येषां ते तथा नाशितपापाः सन्तः इत्यन्वयः । अथोत्तरेण श्लोकेन— तत्तद्यज्ञानन्तरं अवशिष्टं अत एव अमृतं भुञ्जानाः सनातनं वेदवेद्यं ब्रह्म यान्तीत्युत्तरेणान्वयः ॥ ३० ॥

**गीता**

## यज्ञशिष्टामृतभुजो यान्ति ब्रह्म सनातनम् ।
## नायं लोकोऽस्त्ययज्ञस्य कुतोऽन्यः कुरुसत्तम ॥ ३१ ॥

***वि०वि०***— यज्ञाकरणे दोषमाह **नायमिति** । अयमल्पसुखोऽपि मनुष्यलोकः अयज्ञस्य यज्ञानुष्ठानशून्यस्य नास्ति कुतोऽन्यः स्वर्गादिः अतो यज्ञाः सर्वथा कर्तव्या इत्यर्थः ॥

***बा०ल०***— एतेषु यज्ञेषु कृतेषु सत्सु शिष्टं यत् पुण्यवैराग्यज्ञानादि तदेव अमृतम्, मोक्षसाधनत्वात् । 'नायं लोकोऽस्त्ययज्ञस्य' इत्यत्र अयज्ञस्य उक्तबहुविधयज्ञेष्वेकेनापि यज्ञेन रहितस्य । अत्रापि सर्वजननिन्द्यत्वादयं लोको नास्तीत्युक्तम् ॥

***सा०सं०***— एवं यज्ञभेदान् ज्ञात्वाताननुष्ठतामननुतिष्ठतां च फलभेदमाह **यज्ञेति** । यज्ञे देवतायै दत्तहविःशेषोऽमृतमुच्यते, तद्भुजः । यज्ञानुष्ठातार इति यावत् । **सनातनम्** अनादि-नित्यम् । **ब्रह्म यान्ति** प्राप्नुवन्ति । **अयज्ञस्य** तु, **अयं लोकः** अल्पसुखोऽपि मानुषो लोको **नास्ति** । **कुतोऽन्यः** स्वर्गादिः । अतो यज्ञाः सर्वथा कार्या इति भावः ॥

***अ०प्र०***— तदकरणे दोषमाह **यज्ञेति** ।

हे कुरुसत्तम !, यज्ञशिष्टाऽमृतभुजः[१], सनातनं[२], ब्रह्म[३], यान्ति[४], अयज्ञस्य[५], अयं लोकः[६], नास्ति[७], अन्यपरलोकः[८], कुतः[९] इत्यन्वयः ।

हे कुरुसत्तम !, यज्ञशिष्टाऽमृतभुजः तत्तद्यज्ञानन्तरं अवशिष्टं अत एव अमृतं भुञ्जानाः[१], सनातनं = वेदवेद्यं[२], ब्रह्म = विष्णवाख्यं[३], यान्ति = प्राप्नुवन्ति[४], अयज्ञस्य = यज्ञानुष्ठानशून्यस्य[५], अयं लोकः = अयमल्पसुखोऽपि मनुष्यलोकः[६], नास्ति[७], अन्यः = परलोकः[८], कुतः ? = सुतरां नास्ति[९], अतो यज्ञाः सर्वथा कर्तव्याः इत्यर्थः ॥ ३१ ॥

**भाष्यम्**

**नियताहारत्वेनैव प्राणशोषात्प्राणान् प्राणेषु जुह्वति । "यच्छेद्वाङ्मनसि प्राज्ञः तद्यच्छेज्ज्ञान आत्मनि" इत्यादि श्रुत्युक्तप्रकारेण वा । अन्यदपि ग्रन्थान्तरे सिद्धम्—**

**"यदस्याल्पाशनं तेन प्राणाः प्राणेषु वै हुताः" इति ॥ ३० ॥ ३१ ॥**

***प०टी०***— 'अपरे नियाताहाराः' इत्युक्त... योयं यद्वैधि...सप्रमाणकं दर्शयति **नियतेति** ॥

***न०टी०***—तत्रैव तद्धोमं घटयति **नियताहारत्वेनेति** । यथास्थितानामपीन्द्रियाणां नियताहारत्वे सत्यग्नौ हुताहुतीवच्छोषदर्शनात् तेष्वेव तेषां होम इति भावः । यद्वा, मनआदिषु वागादिहोम उत्तरार्धोक्त इत्याह **यच्छेदिति** । नन्वविरोधात् श्रुतत्वाच्च, एवमेव व्याख्यानं किं न स्यात् ? इत्यत आह **अन्यदिति** ॥

***प्र०दी०***— ''अपरे नियत'' इत्यत्र प्राणानां प्राणेषु कीदृशो होमः । नियताहारत्वस्य कथमत्रोपयोग इत्यत आह— **नियतेति** । प्राणशोषादिन्द्रियवृत्तीनां वृत्तिमत्स्विन्द्रियेषु सङ्कोचात् । जुह्वति 'इत्युच्यत' इति शेषः । एवशब्देन श्रोत्रादीनीत्यतो भेदं दर्शयति । तत्र प्रत्याहारेणात्र नियताहारत्वेनैवेति । 'प्राणान्' इत्यादिकं प्रकारान्तरेण व्याख्याति— **यच्छेदिति** । वाक् वाचम् । मनसी मनसि । यच्छेत् तन्नियतां ध्यायेत् । अवराणामिन्द्रियदेवतानामुत्तमेन्द्रियदेवतानियतत्वचिन्तनं प्रकारार्थः । वा प्राणानां प्राणेषु होम इति शेषः । अस्मिन् पक्षे नियताहारा इति पृथग्यज्ञो ज्ञातव्यः । इदमेवास्तु व्याख्यानम् । श्रौतत्वात् । किं पूर्वेणेत्यत आह– **अन्यदपीति** ॥

***भा०दी०***— **श्रोत्रादीनीत्यत इति** । पूर्वोक्तश्लोकादित्यर्थः । भाष्यस्थवापदमनूद्य तदनन्तरं शेषमाह **वा प्राणानामित्यादि** ॥

***भा०र०***— **कीदृश इति** । तप आदेर्भगवत्यर्पणस्य होमत्वमिव इह प्राणेषु प्राणार्पणायोगात् किंप्रकारोऽसौ ? इति प्रश्नाभिप्रायः । **नियताहारत्वस्येति** । यद्यपि ''नात्यश्नतस्तु योगोऽस्ति न चैकान्तमनश्नतः'' (६.१६) तथापि ''द्वौ भागौ पूरयेदन्नैः तोयेनैकं प्रपूरयेत् । मारुतस्य प्रचारार्थं चतुर्थमवशेषयेद्'' इति स्मृत्यभिमतं यन्नियताहारत्वं तस्येत्यर्थः । एतादृशेन नियताहारत्वेन कथं प्राणशोषः ? इत्यतः शोषशब्दार्थं विवक्षितमाह **प्राणशोषादिति** । अनेन कीदृशो होम इत्येतत्समाहितम् । 'जुह्वति' इति भाष्यमनूद्य शेषमाह **जुह्वतीति** । **प्रत्याहारेण** प्राणानां प्राणेषु होम उक्तः । **नियताहारत्वेनैव** होम उच्यते । **इत्यादिकं** ''प्राणान् प्राणेषु जुह्वति'' इत्येतत् । वाक्शब्दाद्द्वितीयायाः प्रथमा । द्वितीयाया अलुग्वा । मनश्शब्दात्सप्तम्या दीर्घत्वं च छान्दसमित्यभिप्रेत्य व्याचष्टे **वाग्वाचमिति** । अन्यथा 'वाङ्मनसे' इति निर्देशः स्यात् । 'तद्यच्छेद्' इत्याद्ययोगश्चेति भावः । ''यम=उपरमे'' इत्यतो लिङि 'यच्छेद्' इति रूपमिति तदनूद्य प्रकृतिप्रत्यययोरर्थमाह **तन्नियतां ध्यायेदिति** । मनोनियतां चिन्तयेदित्यर्थः । तथा च तत्त्वप्रदीपिका ''वाचं मनसि यच्छेदित्यर्थः'' इति । **प्रकारार्थः** भाष्योक्तप्रकारपदार्थः । तथा च काठकं भाष्यम् ''तस्मा-

द्रागात्मिका देवीरुमाद्यास्तु शिवादिषु'' (काठ.भा. १.७.१०) इत्यादि । भाष्यगतं वाशब्दमनूद्य ततः शेषमाह **वेति** । **अस्मिन् पक्षे** ''मनआदिषु वागादीनां होमः'' इति पक्षे । **पृथग्यज्ञः** आहार-नियमोऽपि भगवत्यर्पितश्चेत् तपोयज्ञ इवायमपि पृथग्यज्ञो ज्ञातव्य इत्यर्थः । **श्रौतत्वात्** ''यच्छेद्वाङ्मनसी'' (काठ. १.७.१३) इति श्रुतिसिद्धत्वात् । **पूर्वेण** नियताहारत्वेनैवेत्यादिरूपेण । **अन्यदपि** पूर्वमपि, अल्पाशनं शास्त्रनियताहार इति भाष्यार्थः ॥ ३०-३१ ॥

**गीतातात्पर्यनिर्णयः**

तत्पूजात्वेनेन्द्रियादिसंयमं कुर्वन्ति । यज्ञेनैवेति सर्वत्राप्यन्वीयते ।

''तेनैव तं पूजयेद्वा विहितैर्वाऽन्यसाधनैः ।
स एव विष्णोर्यज्ञः स्यान्मानसो वा सबाह्यकः ॥''

—इति ब्रह्मवैवर्ते ॥ २७-३१ ॥

*न्या०दी०*— **इन्द्रियादिसंयममिति** ॥ कर्मेन्द्रियाणां प्राणापानादीनां च संयममित्यर्थः । नन्वत्र क्रियायज्ञ एव यज्ञेनैवेत्यभिमानत्यागोक्तेः कथं दैवमित्यादि पूर्वसङ्गतमित्यत आह **यज्ञेनैव इति** ॥ स्वयमेव यज्ञ इत्याद्यपूर्वार्थोऽयं कुत इत्यत आह **तेनैवेति** ॥

**गीता**

**एवं बहुविधा यज्ञा वितता ब्रह्मणो मुखे ।**
**कर्मजान्विद्धि तान्सर्वानेवं ज्ञात्वा विमोक्ष्यसे ॥ ३२ ॥**

*वि०वि०*— उक्तान् यज्ञभेदानुपसंहरति **एवमिति** । 'श्रोत्रादीनि' इत्यादिष्वीज्यानुक्तेरीज्योऽन्य इति शङ्का स्यात् । तां वारयति **वितता ब्रह्मणो मुख इति** । ब्रह्मणः परमात्मनः मुखे वितता इति सर्वयज्ञभोक्तृत्वाद्विष्णवाख्यं ब्रह्मैव यज्ञैरीज्यत इत्यर्थः । यद्येवमनेके यज्ञास्तर्हि ज्ञानादियज्ञेनैवालं किं कर्मात्मकेन युद्धेनेत्यत आह **कर्मजानिति** । मानसिकवाचिककायिककर्मजानित्यर्थः । ततः किमित्यत आह **एवमिति** । यदि सर्वेऽपि यज्ञाः कर्मजा इति जानासि तर्हि, ततो विशेषाभावात् स्वविहितयुद्धादिकं करिष्यसि । ततो मुक्तो भविष्यसि । कर्मजत्वेन ज्ञानाभावे युद्धादिकं परित्यज्य मोक्षार्थं ज्ञानादिकमेवानुतिष्ठतो भवतो विहितातिक्रमादनर्थ एव स्यान्न मोक्ष इत्याशयः । 'विमोक्षसे' इति पाठे सन्नन्तान्मुचः कर्म कर्तरि ।

यद्वा, मोक्षे कर्मीभूतस्येवात्मनः कर्तृत्वात्, एवं ज्ञात्वा यदि सर्वेऽपि यज्ञाः कर्मजा इति जानासि तर्हि तानि युद्धादीनि स्वविहितानि कर्माणि कृत्वैव मोक्षसे संसारादात्मानं मोक्तुं इच्छसि । सर्वेषां कर्मजत्वज्ञाने तवैव मोक्षार्थं युद्धादिकं कर्तव्यमितीच्छा भविष्यतीत्यर्थः ॥

*सा०सं०*— उक्तान् कर्मभेदानुपसंहरति **एवमिति । एवं** 'दैवमेव' इत्यादिना श्लोकषट्केनोक्त-दिशा मानसिकवाचिककायिकभेदेन बहुप्रकारा यज्ञाः । **ब्रह्मणो** हरेः । **मुखे वितता** विस्तृताः । तस्य सर्वयज्ञभोक्तृत्वात् । 'अहं हि सर्वयज्ञानां भोक्ता' (९-२४) इत्यादेः । 'श्रोत्रादीनि' इत्यादिनोक्ते-न्द्रियनियमनादिरूपयज्ञेषु तदाराध्यस्यानुक्तेर्ब्रह्मणोऽन्यस्तदाराध्य इति शङ्कानिरासाय 'ब्रह्मणो मुखे वितताः' इत्युक्तम् ।

ननु यज्ञानां बहुविधत्वे ज्ञानयज्ञादिनैवालं किं कर्मात्मकेन युद्धेनेत्यत आह **कर्मजानिति । तान्** प्रागुक्तान् । **सर्वान् यज्ञान् । कर्मजान्** कर्मरूपान् । विद्धि जानीहि । मानसिकवाचनिककायिककर्मजान् विद्धीति वाऽर्थः । ततः किमित्यत आह **एवमिति** । मानसिकवाचिकादिसर्वयज्ञाः कर्मात्मका इति जानासि चेत् तर्हि युद्धादिस्वविहितकर्माणि कृत्वैव **विमोक्ष्यसे** । संसारादात्मानं मोक्तु(मोचयितु)-मिच्छसि । सर्वेषां कर्मजत्वज्ञाने सति मोक्षार्थं युद्धादिकं कर्तव्यमिति तवैवेच्छाभविष्यतीत्यर्थः । सर्वेषां कर्मजत्वज्ञाने सति मोक्षार्थं युद्धादिकं कर्तव्यमिति तवैवेच्छा भविष्यतीत्यर्थः । सर्वेषां यज्ञत्वे ज्ञानो-पासनस्वाध्यायाद्यकर्मरूपयज्ञेनैव भगवत्प्रीतिसिद्धेः किं कर्मात्मकयुद्धेनेति पार्थाभिप्रायस्येदमुत्तरम् **ज्ञात्वेति** । तस्यायं भावः । युद्धं हित्वा मोक्षार्थं यदुपासनादिकं करिष्यसि तदपि कर्मात्मकमेव । तथा च युद्धत्यागे विहितधर्मत्याग एव कृतः स्यात् । न तु कर्मत्यागः । अत एवं जानतः तव विहितं युद्धादिकं न त्याज्यमिति । एवमभिप्रायाभावे 'कर्मजान्' इत्यर्धस्य प्रकृतानुपयोगः स्यात् ।

ननु सत्यमेवम् । अथाप्ययमर्थो लृडन्तशब्देन कथं लभ्यते इति चेत् । नायं लृडन्तः, किन्तु 'मुच्लृ मोक्षणे' इत्यतः सन्नतात् कर्मकर्तरि लट्प्रत्यये सति 'विमोक्ष्यस' इति रूपम् । यद्यपि "धातोः कर्मणः" (३-१-७) इति सन्प्रत्यये 'सन् यङोः' (६-१-९) इति द्विर्वचने 'हलन्ताच्च' (१-२-१०) इति सनः कित्वेन गुणाभावे च मुमुक्ष्येति भाव्यम् । तथाऽपि गुणाभ्यासलोपौ छान्दसावित्युपेत्य सन्नन्ता-न्मोक्षशब्दात् 'वर्तमाने लट्' (३-२-१२३) इति लट्प्रत्यये, तस्य सिबादेशे, 'कर्मवत् कर्मणा तुल्यक्रियः' (३-१-८७) इति सूत्रेण कर्तुः कर्मवद्भावे 'कर्मकारकनिमित्तयगात्मनेपदचिण्वद्भावादि-कार्याणि लभते' इत्युक्तेर्यकि सति, अतो लोपे मोक्ष्यस इति रूपसिद्धिर्ज्ञेया । लृडन्तत्वपक्षे त्वयमर्थः । सर्वेषां कर्मजत्वं ज्ञात्वा तान्यनुष्ठाय मुक्तो भविष्यसीति ॥

*अ०प्र०*— ज्ञानयज्ञं स्तोतुं उक्तयज्ञानुपसंहरति **एवमिति** ।

हे कुरुसत्तम ! एवं[1], बहुविधाः[2], यज्ञाः[3], ब्रह्मणो मुखे[4], वितताः[5], तान् सर्वान्[7], कर्मजान्[8], विद्धि[9], एवं ज्ञात्वा[10], त्वं[11], विमोक्ष्यसे[12] इत्यन्वयः ।

हे कुरुसत्तम ! एवं[1], बहुविधाः[2], यज्ञाः[3], ब्रह्मणः = वेदस्य मुखे[4], वितताः = विस्तृताः तद्योग्या इति यावत् वेदेन साक्षात् विहिता इत्यर्थः[5] । तथापि तान् सर्वान्[7], कर्मजान् = वाङ्मनः-कायकर्मजनितान् आत्मरूपसंस्पर्शान्[8], विद्धि = जानीहि[9] । एवं ज्ञात्वा = आत्मनः कर्मगोचरत्वात् ज्ञाननिष्ठः सन्[10], त्वं[11], विमोक्षसे = संसारात् विमुक्तो भविष्यसि । तदुक्तम्—

"सर्वयज्ञैः परं ब्रह्म याज्यं विष्णवाख्यमव्ययम् ॥" इति ॥ ३२ ॥

**भाष्यम्**

**ब्रह्मणः = परमात्मनो मुखे । "अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च" इति वक्ष्यति । मानसवाचिककायिककर्मजा एव हि ते सर्वे । एवं ज्ञात्वा तानि कर्माणि कृत्वा विमोक्ष्यसे । युद्धं परित्यज्य यन्मोक्षार्थं करिष्यसि तदपि कर्म । अतो विहितं न त्याज्यमिति भावः ॥ ३२ ॥**

***प०टी०***— 'ब्रह्मणो वेदस्य' इत्यपव्याख्यानमेवेति भावेनाह **ब्रह्मण इति** । विष्णोः सर्व-यज्ञभोक्तृत्वस्य भगवदनभिमतत्वात् कथमर्थः ? इत्यत आह **अहं हीति** । नन्वेवं नानाविध-यज्ञसद्भावे कर्मात्मकयोगं विहायैव यागान्तरे नियोजयेत्याशङ्कोत्तरत्वेन 'कर्मजान्' इति श्लोकं व्याचष्टे **मानसेति** ॥

***न०टी०***—'नन्वहं मुमुक्षुरन्यदैवत्यज्योतिष्टोमादियज्ञं कथं करिष्यामि ?' इति भ्रान्त्या स्वविहितो यज्ञो न त्याज्य इति सूचनाय यदुक्तं भगवता परब्रह्मण एव सर्वयज्ञभोक्तृत्वम् 'एवं बहुविधा यज्ञा वितता ब्रह्मणो मुखे' इति । तदन्यैराच्छादितं - 'ब्रह्मणो वेदस्य वेदसिद्धा एव च ते यज्ञाः' इति । अतः पुनर्भगवद्भावप्रकाशाय ब्रह्मशब्दार्थमाह **ब्रह्मण इति** । कथमयं भावो भगवतः ? इत्यत आह **अहं हीति** । ननु भवतु सर्वो यज्ञो विष्णुदैवत्यः । तथाऽपि 'सर्वारम्भा हि दोषेण धूमेनाग्निरिवावृताः' इति सर्वकर्मणां दोषावृतत्वोक्तेर्न कर्मात्मकं युद्धाश्वमेधादियज्ञं करोमि, किन्त्वकर्मात्मकं ज्ञानादियज्ञमित्याशङ्कापरिहारत्वेनोत्तरार्धं व्याचष्टे **मानसेति** । नन्वत्र **तानि कर्माणि कृत्वा** इत्ययमंशः कथमागच्छति ? इत्यत आह **युद्धमिति** ॥

***प्र०दी०***— "ब्रह्मणो मुखे वितताः" इत्यस्य वेदे प्रतिपादिता इति व्याख्यानमसत् । मुखशब्दवैयर्थ्यादित्यभिप्रायेणाह— **ब्रह्मण इति** । परमात्मनः सर्वयज्ञभोक्तृत्वं कुतो भगवत्सम्मत-

मित्यत आह— **अहं हीति** । उपासनादीनां कर्मजत्वाभावात्कथं ''कर्मजान् विद्धि तान् सर्वान्'' इत्युक्तमित्यत आह— **मानसेति** । अत्र 'विमोक्ष्यसे' इति सन्नन्तान्मुचः कर्मकर्तरि लट् । तस्य प्रकृतोपयुक्ततयार्थमाह— **एवमिति** । एवं ज्ञात्वा यदि सर्वेऽपि यज्ञाः कर्मजा इति जानासि तर्हि तानि युद्धादीनि स्वविहितानि कर्माणि कृत्वैव विमोक्ष्यसे । संसारादात्मनं मोक्तुमिच्छसि । सर्वेषां कर्मजत्वज्ञाने तवैव मोक्षार्थं युद्धादिकं कर्तव्यमितीच्छा भविष्यतीत्यर्थः । तत्कथमित्यत आह— **युद्धमिति** । यद्येवमनेके यज्ञाः तर्हि किं कर्मात्मकेन युद्धेन । उपासनादिनैवाहं कृती स्यामित्यर्जुनस्य हार्दं ज्ञात्वा भगवतेदमुक्तम् । अस्यायं भावः । मोक्षार्थं यदुपासनादिकं युद्धं परित्यज्य करिष्यसि तदपि कर्म । तथा च त्वया विहितातिक्रम एव कृतः स्यात् । न तु कर्मत्यागः । अत एवं जानतस्तव विहितं युद्धादिकं न त्याज्यमिति बुद्धिर्भविष्यतीत्यर्थः । विमोक्ष्यसे इति लडन्तत्वपक्षेऽयमर्थः । किं सर्वयज्ञानां कर्मजत्वज्ञानमात्रेण मोक्षः । तथा च 'कुरु कर्मैव' इति विधानं व्यर्थमित्यत आह— **एवमिति** । 'कर्मजान् विद्धि' इत्यनेन कथमर्जुनस्य शङ्कायाः परिहार इत्यत आह— **युद्धमिति** ॥

*भा०दी०*— **इति व्याख्यानमसदिति** । कुत इत्यतो ब्रह्मशब्दस्य वेदार्थकत्वे ब्रह्मणि वेदे वितता इत्येतावता पूर्तेरिति भावे हेतुमाह **मुखेति** । सनन्तान्मुच इति । मुच्लृ मोक्षण इत्यतः ''धातोः कर्मण समानकर्तृकादिछायां वे''ति सन्प्रत्यये 'सन्यङोरि'ति द्विर्वचन'हलन्ताच्चे'ति सनः कित्वेन गुणाभावे च मुमुक्षेति भाव्यम् । तथापि गुणाभ्यासलोपौ छान्दसावित्युपेत्य अनन्तामोक्षशब्दात् 'वर्तमाने लङि'ति पठितस्य सिबादेशे 'कर्मवत्कर्मणा तुल्यक्रियः' इति तृतीयाद्यपादीयसूत्रे 'कर्तरि शबि'त्यतः प्रथमान्तं कर्तृपदमनुवर्त्य कर्मणा तुल्यक्रियकर्मकारकक्रियाया तुल्यक्रियः कर्ता कर्मवद्भवति कर्मकारकनिमित्त आत्मनेपदि चिण्वाद्भावादि कार्याणि लभत इत्युक्तम् । **यदीत्यादि** । **(आ)शङ्काया इति** । किं सर्वं यज्ञानामिति पूर्वोक्तशङ्काया इत्यर्थः ॥

*वा०र०*— ''**ब्रह्मणो** वेदस्य **मुखे** द्वारे, वेदद्वारेणावगम्यमाना ब्रह्मणो मुखे वितता उच्यन्ते'' इति **सङ्कर**भाष्यमर्थतोऽनुवदति **ब्रह्मण इति** । **मुखशब्देति** । उक्तार्थत्वे ''ब्रह्मणा वितताः'' इत्येव विन्यासापत्तेरिति भावः । ''भगवदुपासनं यज्ञः'' इत्युक्तत्वादुक्तम् **उपासनेति** । आदिपदेन तपोज्ञानादीनां ग्रहणम् । **अत्र** श्लोके । **सन्नन्तान्मुच इति** । ''धातोः कर्मणः समानकर्तृत्वादिच्छायां वा'' इति ''मुच्लृ=मोक्षणे'' इति धातोरिच्छार्थे सनि ''मुचोऽकर्मकस्य गुणो वा'' इति सन्नन्तस्य पक्षे गुणः । ''अत्र लोपोऽभ्यासस्य'' इत्यभ्यासलोपः । ततः सन्नन्तधात्वर्थकर्मणः कर्तृत्वविवक्षायां

"कर्मवत् कर्मणा तुल्यक्रियः" इति तस्य कर्मवद्भावेन कर्मार्थकलट्प्रत्यययोगात्मनेपदादिकार्यम् । सति चैवं 'विमोक्ष्यसे' इति रूपमिति भावः । "एवं ज्ञात्वा" इति भाष्यपदमनूद्य तस्य प्रकृतोपयोग्यर्थवर्णनपरत्वमुपपादयति **एवं ज्ञात्वा यदीति** । **इदमुक्तम्** "कर्मजान् विद्धि तान् सर्वान्", "एवं ज्ञात्वा विमोक्ष्यसे" इतीदमुक्तम् । **तस्यायं भाव इति** । "एवं ज्ञात्वा" इत्यादि 'भावः' इत्यन्तं भाष्यं भावकथनरूपमित्यर्थः । तद्विशदयति **मोक्षार्थमित्यादि** । **लृडन्तत्वपक्ष इति** । मुचेर्भविष्यदर्थे लृटि, स्वरितेत्त्वेन आत्मनेपदे, थासःसेभावे, 'स्यतासी' इति स्यत्वे, पुगन्तलक्षणे गुणे, "चोः कुः" इति कुत्वे, षत्वे च 'विमोक्ष्यसे' इति लृडन्तत्वपक्ष इत्यर्थः । वाढमिति गूढाभिसन्धौ दोषमाह **तथा चेति** । तथा सतीत्यर्थः । व्यर्थम् 'आपद्येत' इति शेषः । **अर्जुनशङ्कायाः** "यद्येवमनेके यज्ञास्तर्हि" इति अर्जुनकृतशङ्कायाः ॥ ३२ ॥

***दैवमेवेत्यष्टश्लोक्या अक्षरार्थस्तु***— सामान्यतः कर्मस्वरूपमुक्तम् । तच्च यज्ञादिभेदभिन्नम् । तत्र "नायं लोकोऽस्त्ययज्ञस्य" (४.३१) इति वक्ष्यति । तदनुपपन्नम् । यत्याद्याश्रमविलोपशङ्काप्रसङ्गाद् इत्याशङ्कानिरासाय यज्ञभेदा उच्यन्ते **दैवमेवेत्यादिना** । **अपरे** केचिद् **योगिनो** यतयः **दैवं** विष्णुं **यज्ञं** यथा भवति तथा **पर्युपासते** । भगवदुपासनमेव यतीनां यज्ञो नान्य इति न यत्याश्रमविलोपप्रसङ्ग इति भावः । **अपरे** अन्ये ब्रह्माख्याग्नौ प्रसिद्धेनाग्निहोत्रादिरूपेण **यज्ञं** भगवन्तं प्रति जुह्वति । अग्निहोत्रादिकं भगवत्प्रीत्युद्देशेनानुष्ठाय तत्र समर्पयन्तीति यावत् ॥ २५ ॥

**अन्ये** योगिनः **श्रोत्रादीनि ज्ञानेन्द्रियाणि संयमाग्निषु** प्रतीन्द्रियं संयमो भिद्यत इति बहुवचनम् । संयमा एवाग्नयः, तेषु **जुह्वति** । प्रत्याहारेण भगवत्पूजात्वेनैवेन्द्रियसंयमनं कुर्वन्ति । **अन्ये** योगिनः शब्दादीन् शब्दस्पर्शरूपरसगन्धान् **श्रोत्रादीन्द्रियाख्याग्निषु जुह्वति** । भगवत्पूजात्वेन विषयान् इन्द्रियैर्भुञ्जत इत्यर्थः ॥ २६ ॥

अपरे योगिनः **सर्वाणीन्द्रियकर्माणि** वाक्-पाणि-पाद-पायु-उपस्थशब्दितकर्मेन्द्रियव्यापारान् **प्राणकर्माणि** प्राणापानादिव्यापारांश्च **आत्मसंयमयोगाग्नौ आत्मनो** मनसः **संयमो** निग्रहशब्दितो **योग** उपायः स एव **अग्निः** तस्मिन् **ज्ञानदीपिते जुह्वति** । भगवदधीनताज्ञानपूर्वकं स्वातन्त्र्याभिमानत्यागेन मनो निगृह्य कर्मेन्द्रियव्यापारान् भगवत्पूजात्वेन नियच्छन्तीत्यर्थः ॥ २७ ॥

**अपरे द्रव्ययज्ञाः** द्रव्यस्य याजकाः । तपः परमेश्वरार्पणबुद्ध्या तत्र जुह्वतीति **तपोयज्ञाः** । **योगं** ध्यानं परमेश्वरार्पणबुद्ध्या तत्र जुह्वतीति **योगयज्ञाः** । स्वाध्यायं विष्णुपूजात्वेनाधीयते इति **स्वाध्याययज्ञाः** । भगवत्पूजात्वेन श्रवणाद्यनुष्ठाय ज्ञानमापादयन्तीति **ज्ञानयज्ञाः** । **शंसितव्रताः** सुतीक्ष्णव्रताः **यतयो** यतनशीलाः केचन सन्ति ॥ २८ ॥

**अपरे प्राणायामपरायणाः** प्राणायामतत्पराः **प्राणापानगती रुद्ध्वा** रेचनपूरणे हित्वा प्राणम् अपाने जुह्वति, अपानं च प्राणे, प्राणापाने इतरेतरयोर्जुह्वति कुम्भकस्था एव भवन्तीति तात्पर्यार्थः ॥ २९ ॥

**अपरे नियताहाराः** सन्तः **प्राणान्** श्रोत्रादीन्द्रियवृत्तीः **प्राणेषु** वृत्तिमत्स्विन्द्रियेषु **जुह्वति** सङ्कोचयन्ति । आहारनियमापादितेन्द्रियशक्तिह्रासः केषाञ्चिद् यज्ञ इति भावः । यद्वा **प्राणान्** वागादीन्द्रियदेवताः **प्राणेषु** मनोऽभिमान्याद्युत्तमदेवतासु **जुह्वति** । अवराणाम् इन्द्रियदेवतानाम् उत्तमेन्द्रियदेवतानियतत्वेन चिन्तनं होम इत्यर्थः । अस्मिन् पक्षे 'नियताहाराः' इति पृथग्यज्ञो ज्ञातव्यः । उक्तार्थे रुचिजननाय स्तवनं क्रियते । **यज्ञविदो** यज्ञविशेषज्ञाः **यज्ञक्षपितकल्मषाः** यज्ञानुष्ठानविनाशितपापाः **सर्वेऽपीति** ॥ ३० ॥

उक्तयज्ञकरणे महाफलं तदभावे अनर्थश्चोच्यते **यज्ञशिष्टेति** । **यज्ञेषु** देवतायै दत्तं यद्धविः **तच्छेषो** अत्रामृतम्, **तद्भुजः** यथोक्तान् यज्ञान् अनुतिष्ठन्त इति यावत् । **सनातनं** वेदप्रतिपाद्यं चिरन्तनं वा **ब्रह्म यान्ति** प्राप्नुवन्ति । **अयज्ञस्य** यथोक्तानां यज्ञानामेकोऽपि यज्ञो यस्य नास्ति सोऽयम् अयज्ञः, तस्य **अयं लोकः** अल्पसुखो मानुषो लोकः **नास्ति** । **कुतः अन्यः** स्वर्गादिः विशिष्टसाधनसाध्यः ? हे **कुरुसत्तम** इत्यर्जुनसम्बोधनम् ॥ ३१ ॥

उक्तयज्ञभेदा उपसंह्रियन्ते **एवं बहुविधा इति** । **एवं** 'दैवमेव' इत्याद्युक्तदिशा बहुप्रकारा **यज्ञा ब्रह्मणः** परमात्मनो **मुखे वितताः** । बहुविधानामपि यज्ञानां भगवानेव भोक्तेति यावत् । "अहं हि सर्वयज्ञानां भोक्ता" (९.२४) इति हि वक्ष्यति । इदं च 'श्रोत्रादीनि' इत्यादिष्विज्यानुक्तेरिति कोऽन्य इति शङ्कां निवर्तयितुमुक्तम् । उक्तं च प्रस्थानान्तरे "सर्वयज्ञैः परं ब्रह्म याज्यं विष्णवाख्यमव्ययम्" (गी.ता. ४.३२) इति । यद्येवमनेके यज्ञाः तर्हि ज्ञानादिनैवालम्, किं कर्मात्मकयज्ञेन ? इत्यत उक्तम् **कर्मजानिति** । उपासनादीनां कर्मजत्वाभावात् कथं "कर्मजान् विद्धि तान् सर्वान्" इत्युच्यते ? इति चेन्न । मानस-वाचिक-कायिककर्मजत्वाद् उपासनादि-सर्वयज्ञानामित्यर्थात् । यद्येवमनेके यज्ञास्तर्हि किं कर्मात्मकेन युद्धेन ? उपासनादिनैवाहं कृती स्याम् इत्यर्जुनस्य हार्दं ज्ञात्वा हि भगवतोक्तं **कर्मजान् तान् सर्वान् एवं ज्ञात्वा विमोक्ष्यस इति** । तस्यायं भावः । मोक्षार्थं यदुपासनादिकं युद्धं परित्यज्य करिष्यसि तदेतदपि कर्म । तथा च त्वया विहितातिक्रम एव कृतः स्यात्, न तु कर्मत्यागः । अत एवं जानतस्तव युद्धादिकं स्वविहितं न त्याज्यमिति बुद्धिर्भविष्यति । तथा च **विमोक्ष्यसे** संसारादात्मानं मोक्तुमिच्छसि । सर्वेषां कर्मजत्वज्ञाने तत्रैव मोक्षार्थं युद्धादिकं कर्तव्यमितीच्छा भविष्यतीति । 'विमोक्ष्यसे' इति

सन्नन्तान्मुचेः कर्मकर्तरि लडन्तत्वमाश्रित्यायमर्थ उक्तः । लृडन्तत्वपक्षे त्वयमर्थः । किं सर्वयज्ञानां कर्मजत्वज्ञानमात्रेण मोक्षः ? तर्हि "कुरु कर्मैव" (४.१५) इति विधानं व्यर्थमापद्येत, इत्यत उक्तम् **एवमिति** । **एवं ज्ञात्वा** युद्धादिस्वविहितकर्माणि कृत्वा **विमोक्ष्यसे** मुक्तो भविष्यसीति ॥३२॥

**गीतातात्पर्यनिर्णयः**

'श्रोत्रादीनि' इत्यादिषु इज्यानुक्तेरिज्योऽन्य इति शङ्कां निवारयति **वितता ब्रह्मणो मुखे** इति ।

"सर्वयज्ञैः परब्रह्म याज्यं विष्ण्वाख्यमव्ययम् ॥" इति च ॥ ३२ ॥

*न्या०दी०*— "ब्रह्मणो मुखे" इत्यस्य वेदादावित्यन्यथाप्रतीतिनिरासाय आह **श्रोत्रेति** ॥ इति शङ्का स्यात् तामिति शेषः । प्रतीत एवार्थः किं न स्यादित्यत उक्तार्थे स्मृतिसम्मतिमाह **सर्वेति** ॥

**गीता**

**श्रेयान्द्रव्यमयाद्यज्ञाज्ज्ञानयज्ञः परन्तप ।**
**सर्वं कर्माखिलं पार्थ ज्ञाने परिसमाप्यते ॥ ३३ ॥**

*वि०वि०*— उक्तेषु यज्ञेषु को यज्ञः श्रेष्ठ इति जिज्ञासायामाह **श्रेयानिति** । 'द्रव्यमयात्' इति यज्ञान्तराणामप्युपलक्षणार्थं श्रेष्ठत्वे हेतुः **सर्वमिति** । सर्वं कर्म अखिलं 'तां ध्यायेद्वषट् करिष्यन्' इत्याद्युपासनाद्यङ्गसहितं ज्ञाने ज्ञानोत्पत्तौ । परिसमाप्यते उपक्षीणं भवति । ज्ञानफलमेवेत्यर्थः ।

अथवा, आसमन्तात् खिलं अल्पं ज्ञाने जाते परिसमाप्यते पूर्यते ज्ञानिना कृतमल्पमपि कर्म सम्पूर्णफलं भवतीत्यर्थः । उक्तं च—

'अल्पमात्रकृतो धर्मो भवेज्ज्ञानवतो महान् ।
महानपि कृतो धर्मो ह्यज्ञानान्निष्फलो भवेत् ॥' इति ॥

*वा०ल०*— 'सर्वं कर्माखिलं पार्थ' इत्यत्र अखिलम् अनिष्टम् ॥

*सा०सं०*— उक्तयज्ञेषु को यज्ञः श्रेष्ठ इति जिज्ञासायामाह **श्रेयानिति** । **द्रव्यमयात्** इति प्रागुक्तयज्ञान्तराणामुपलक्षणम् । देवतोद्देशेन द्रव्यत्यागादिरूपाद्यज्ञाद्भगवज्ज्ञानसम्पादनरूपो **यज्ञः श्रेयान्** श्रेष्ठः । कुत इत्यत उक्तं **सर्वमिति** । **अखिलं** खिलं सशेषं न भवतीत्यखिलम् । 'समुद्रं मनसा ध्यायीत' इत्यादि कर्मसमृद्ध्यर्थोपासनाद्यङ्गसहितं **सर्वं कर्म ज्ञाने परिसमाप्यते** पूर्यते । ज्ञाने जाते

ज्ञानलक्षणफलेन सफलं भवतीत्यर्थः । यद्वा, **आखिलमिति** विभागः । आ समन्तात् खिलमल्पमत्यल्पमपि । **सर्वं कर्मज्ञाने जाते परिसमाप्यते** फलवद्भवतीत्यर्थः ॥

***अ०प्र०***— ज्ञानयज्ञस्तु श्रेष्ठ इत्याह **श्रेयानिति** ।

हे परन्तप ![१], द्रव्यमयात्[२], सर्वयज्ञात्[३], ज्ञानयज्ञः[४], श्रेयान्[५], हे पार्थ[६], अखिलं[७], कर्म[८], ज्ञाने[९], परिसमाप्यते[१०] इत्यन्वयः ।

हे परन्तप ![१], **द्रव्यमयात्** = अनात्मव्यापारजन्य अन्नादिरूपव्यापारजन्यात् । उपलक्षणमेतत् । एतादृश द्रव्यमयात्[२], सर्वयज्ञात् = सर्वेभ्यो यज्ञेभ्यो देवादियज्ञात्[३], ज्ञानयज्ञः[४], श्रेयान् = श्रेष्ठः[५], हे पार्थ ![६], अखिलं कर्म = सशेषं न भवतीत्यखिलं फलसहितं स्वविहितम्[७], यज्ञादि कर्म[८], ज्ञाने = ज्ञानोत्पत्तौ[९], परिसमाप्यते = अन्तर्भवति सम्पूर्णं भवति[१०], ज्ञानैकफलकमित्यर्थः । यद्यपि ज्ञानस्य मनोव्यापाराधीनत्वमस्त्येव तथाप्यात्मस्वरूपस्य ज्ञानस्य मनःपरिणामे अभिव्यक्तिमात्रम्, न तु तज्जन्यत्वमिति द्रव्यमयाद्विशेषः, यद्वा आखिलमिति पदच्छेदः आसमन्तात् खिलं अल्पं ज्ञाने जाते परिसमाप्यते पूर्यते । समाप्तिशब्दोऽत्र पूर्तिवाची, स्वतोऽल्पफलमपि कर्म ज्ञानिकृतं चेत् सम्पूर्णं फलं भवतीत्यर्थः । तदुक्तम्—

"अल्पमात्रकृतो धर्मो भवेज्ज्ञानवतो महान् ।
महानपि कृतो धर्मो ह्यज्ञानान्निष्फलो भवेत् ॥" ॥ ३३ ॥

**भाष्यम्**

**अखिलं उपासनाद्यङ्गयुक्तम् । ज्ञानफलमेवेत्यर्थः ॥ ३३ ॥**

***प०टी०***— 'सर्व'शब्दागतार्थतया 'अखिल'शब्दार्थमाह **अखिलमिति** ॥

***न०टी०***—सर्वपदागतार्थत्वेनाखिलपदार्थमाह **अखिलमिति** । 'तां ध्यात्वा वषट्करिष्यन्' इत्यादिवचनादस्ति कर्माङ्गमप्युपासनम् । तदादिभिरङ्गैर्युक्तमखिलमित्यर्थः । 'ज्ञाने परिसमाप्यते' इत्यस्यार्थमाह **ज्ञानफलमेवेति** । ज्ञानं फलं यस्य तत् ज्ञानफलम् । द्रव्ययज्ञादि सर्वं कर्म स्वस्वाङ्गजातयुक्तं यदि ज्ञानं जनयति तर्ह्येव तत्पूर्णं नान्यथेत्यर्थः ॥

***प्र०दी०***— सर्वं कर्मेत्युक्तत्वात् 'अखिलं' इति पुनरुक्तिरित्यत आह— **अखिलमिति** । कर्मसमृद्धचर्थान्युपासनानि वेद एवोच्यन्ते । खिलं सशेषं न भवतीत्यखिलमित्यर्थः । 'ज्ञाने परिसमाप्यते' इत्यस्य ज्ञाने जाते न कर्म कार्यमित्यन्यथाप्रतीतिनिरासाय तात्पर्यमाह— **ज्ञानेति** । परिसमाप्तिः सम्पूर्णता सफलता । सा च ज्ञाने सतीति सन्निधानाज्ज्ञानलक्षणेनैव फलेनेति भावः ॥

*भा०दी०*— कर्मसाध्यत्वादुपासनायाः कथं कर्माङ्गत्वमित्यत आह **कर्मसमृद्धीति** । उद्गीथमुपासीतेत्यादिना वेद एवोच्यन्त इत्यर्थः ॥

*भा०र०*— ननूपासनायाः कर्मसाध्यत्वात् कथं कर्म प्रत्यङ्गत्वमुच्यते ? इत्यत आह **कर्मसमृद्ध्यर्थानीति** । कर्मणां सम्पूर्णफलावाप्त्यर्थान्यपि कानिचिदुपासनानि वेद एव उच्यन्त इति तेषां कर्माङ्गत्वमुपपद्यत इति भाष्ये तथोक्तमिति भावः । तथा च **प्राचीनटीकायां** "ध्यात्वा वषट्करिष्यन्" इत्यादिवचनादस्ति कर्माङ्गमुपासनमिति । "ओमित्येतदक्षरमुद्गीथमुपासीत" (छा. १.१.१) इत्युपासनाविधिप्रकरणे "एषो एव समृद्धिर्यदनुज्ञा समर्धयिता ह वै कामानां भवति" (छा.१.१.४) इत्युद्गीथोपासनादीनां कर्मसमृद्ध्यर्थत्वस्य छान्दोग्येऽवगमात् कर्मसमृद्ध्यर्थान्युपासनादीनीत्युक्तमित्यपि **आहुः** । अपौनरुक्त्याय भाष्यार्थमाह **खिलमिति** । **सशेषम्** अननुष्ठिताङ्गम् । **तात्पर्यं** "ज्ञाने परिसमाप्यते" इति पादस्येति पूर्वेणान्वयः । 'परिसमाप्यते' इत्यत्र प्रकृत्यर्थः **परिसमाप्तिरिति** । "समाप्तविद्यान् धनुषि श्रेष्ठान् यान् सप्त मन्यसे" (गी.ता. ४.३३) इतिवत् समाप्ति-शब्दोऽत्र पूर्तिवाचीति प्रस्थानान्तरं हृदि कृत्वाऽऽह **सम्पूर्णतेति** । सम्पूर्णता साङ्गता चेद् 'अखिलम्' इत्यनेन गतार्थतेत्यतो विवक्षितमर्थमाह **सफलतेति** । ज्ञानस्य फलत्वस्फोरणाय 'सति' इत्युक्तम् । ज्ञानलक्षणेनैव फलेन सा सफलतेति सम्बन्धः । ज्ञानं फलं यस्य तज्ज्ञानफलम् । द्रव्ययज्ञादि सर्वं कर्म स्वस्वाङ्गजातयुक्तं यदि ज्ञानं जनयति तर्ह्येव तत्परिपूर्णं नान्यथेत्यर्थ इति **प्राचीनटीकायाम्** । भाष्यार्थस्य स्फुटत्वादत्र भावमात्रमुक्तम् ॥ ३३ ॥

**गीतातात्पर्यनिर्णयः**

**सर्वं कर्म अखिलम् आ समन्ताद् अल्पं ज्ञाने परिसमाप्यते । ज्ञाने जाते पूर्यते ।**

**"समाप्तविद्यान् धनुषि श्रेष्ठान् यान् सप्त मन्यसे ॥"**

**इतिवत् समाप्तिशब्दोऽत्र पूर्तिवाची । "ज्ञानासिनाऽत्मनः । छित्त्वैनं संशयं योगमातिष्ठोत्तिष्ठ" इति पुनर्योगकथनात् ॥ ३३ ॥**

*प्रका०*— न च "सर्वं कर्मे"त्येतत् ज्ञानिनः कर्मनिवृत्तिं वक्ति । ज्ञाने परिसमाप्यते इति ज्ञाने सति कर्म सम्पूर्यत इत्यर्थोपपत्तेः । सर्वं बहुलं खिलमल्पं वा कर्म ज्ञानेन सम्पूर्णं फलं भवति इत्यर्थः । समाप्तिशब्दश्च सम्पूर्तौ दृष्ट इत्याह **समाप्तेति** । धनुषि धनुर्विषये समाप्तविद्यान् कृष्ण-

युधिष्ठिर-भीम-अर्जुन-नकुल-सहदेव-सात्यकीन् यान् सप्त मन्यसे इति धृतराष्ट्रं प्रति सञ्जय-वचनमुद्योगपर्वगतम् । ज्ञानिना कर्मानुष्ठेयमित्येतदध्यायशेषेण दर्शयति **ज्ञानासिनेति** । "तस्माद् अज्ञानसम्भूतं हृत्स्थं ज्ञानासिनाऽऽत्मनः । छित्त्वैनं संशयं योगमातिष्ठोत्तिष्ठ भारते"ति ज्ञानिनः पुनः कर्म विधीयते । न हि ज्ञानाभावे ज्ञानासिना संशयच्छेदो युज्यत इत्यर्थः ॥

*न्या०दी०*— द्रव्यमयाद्यज्ञात् ज्ञानयज्ञस्योत्तमत्वे हेतुरुच्यते **सर्वमिति** । तत्र सर्वाखिल-शब्दयोरेकार्थत्वप्रतीतेः ज्ञानानन्तरं कर्म नास्तीन्यथाप्रतीतेश्च निरासायाह **सर्वमिति** ॥ **पूर्यते** सफलं भवतीत्याशयः । समाप्तिशब्दस्य पूर्तिवाचित्वादर्शनात् कथमत्र पूर्तिवाचित्वमित्यत आह **समाप्तेति** ॥ धनुर्विद्याविषये सम्पूर्णविद्यान् कृष्णसात्यकियुक्तपञ्च-पाण्डवान् सप्त श्रेष्ठान् मन्यस इत्युद्योगपर्वणि धृतराष्ट्रं प्रति सञ्जयवचनम् । अस्तु पूर्ताविपि समाप्तिशब्दप्रयोगः । तथाप्यत्र पूर्तिवाचित्वं कुतः ? प्रतीतार्थ एव किं न स्यादित्यत आह ज्ञानेति ॥ पुनर्योगकथनात् ज्ञाना-नन्तरमपि कर्मानुष्ठानकथनात् ॥

*भा०दी०*— धनुषीत्येतद्विषयसप्तमी विद्योपलक्षणमिति भावेनाह **धनुर्विद्याविषय इति** ॥ **प्रतीत एवार्थ इति** । ज्ञानानन्तरं कर्म नैवेत्येवंरूपः ॥ ३३ ॥

**गीता**

**तद्विद्धि प्रणिपातेन परिप्रश्नेन सेवया ।**
**उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिनः ॥ ३४ ॥**

*वि०वि०*— कर्मणो ज्ञानमधिकमित्युक्त्वा तद्वेदनं सम्पादयेत्याह **तदिति** । दण्डप्रणामादिना प्रपन्नस्य गुरूपदेशो ज्ञानसाधनम् । भगवतैवोपदिष्टत्वादुपदेक्ष्यमाणत्वाच्च स एवात्रानेकरूपः परोक्षतया निर्दिश्यते । अर्जुनस्य ज्ञानित्वादुत्पन्नज्ञानतिरोभावनिवृत्त्यर्थमुपदेशः ॥

*वा०ल०*— 'तद्विद्धि प्रणिपातेन' इत्यत्र तत् ज्ञानम् ॥

*सा०सं०*— कर्मणो ज्ञानमधिकमित्युक्त्वा तत्सम्पादयेत्याह **तदिति** । तस्माज्ज्ञानस्या-धिकत्वात्, कर्मणां ज्ञानेनैव फलवत्त्वादिति वा । **तत्त्वदर्शिनो** ज्ञानिनः । **प्रणिपातेन** त्वत्कृतवन्दनेन । त्वत्**सेवया** त्वत्कृत**परिप्रश्नेन** च । ते तुभ्यम् । **ज्ञानं** ज्ञानजनकं शास्त्रम् । **उपदेक्ष्यन्ति** । तेभ्यः तज्ज्ञातव्यमर्थं **विद्धि** जानीहि । 'तत्' इत्यस्यावृत्तिः । अर्जुनस्य ज्ञानित्वेऽपि ज्ञानतिरोभावनिवृत्त्यर्थं विद्धीत्युक्तिः । पार्थं प्रति ज्ञानोपदेशार्थमेव कृष्णस्य प्रवृत्तत्वात् । 'न त्वेवाहम्' (२-१२) इत्यादिना

सङ्क्षेपेणोपदिष्टत्वात् । 'ज्ञानं तेऽहं सविज्ञानम्' (७-२) इत्यादिना विस्तरेणोपदेक्ष्यमाणत्वात् तदविरोधायोपदेक्ष्यन्तीत्यस्योपदेक्ष्याम इत्यर्थो ज्ञेयः ॥

***अ०प्र०***— एवम्भूतपरमात्मज्ञाने साधनमाह **तद्विद्धीति** ।

हे पार्थ !, यस्माज्ज्ञानमप्राप्यं तस्मात्, तत्[१], ज्ञानं[२], विद्धि = प्राप्नुहि[२], तत्र हेतुः— तत्त्वदर्शिनः[३], ज्ञानिनः[४], ते[५], प्रणिपातेन[६], सेवया[७], परिप्रश्नेन[८], ज्ञानं[९], उपदेक्ष्यन्तीत्यन्वयः ।

तद्विद्धि = तज्ज्ञानं[१] प्राप्नुहि[२], तत्र हेतुः— तत्त्वदर्शिनः[३], ज्ञानिनः[४], तत्त्वापरोक्षवन्तः अपरोक्षानुभवसम्पन्नाः[३], मदादिज्ञानिनः? शास्त्रज्ञाः[४], ते = तुभ्यम्[५], प्रणिपातेन ज्ञानिनां दण्डवद्भूमौ नमस्कारेण[६], सेवया = शुश्रूषया च[७], परिप्रश्नेन कुतोऽयं मम संसारः कथं वा निवर्तते इति परिप्रश्नेन[८], ज्ञानं = ईप्सितं ज्ञातव्यं तत्त्वज्ञानं[९], उपदेक्ष्यन्ति = उपदेशेन सम्पादयिष्यन्ति[१०], अत्रार्जुनस्य ज्ञानोपदेष्टा कृष्ण एवानेकरूपः परोक्षतया निर्दिश्यते ॥ ३४ ॥

**भाष्यम्**

**इदानीमपि ज्ञान्येव । तथाऽप्यभिभवान्मोहः । मा तूक्ता ॥ ३४ ॥**

***प०टी०***— 'उपदेक्ष्यन्ति' इत्यनेनार्जुनो(ऽ)ज्ञानीति शङ्क्यमित्यत आह **इदानीमिति** । तर्हि 'न पुनर्मोहं यास्यसि' इति कथं मोहः ? इत्यत आह **तथाऽपीति** । अर्जुनस्य ज्ञानित्वे सिद्धे भवेन्मोहस्याभिभवनिमित्तत्वकल्पनम् । तदेव कुतः ? इत्यत आह **मा त्विति** ॥

***न०टी०***—न च 'तद्विद्धि' इत्यादिनाऽर्जुनस्याज्ञानिता शङ्कनीयेत्याह **इदानीमिति** । तत्र प्रमाणं द्वितीयाध्याय उक्तमित्याह **मा त्विति** ॥

***प्र०दी०***— 'तद्विद्धि' इत्युक्तत्वादिदानीमर्जुनो न जानातीति प्रतीतिं निवारयति— **इदानीमपीति** । तद्विद्धीत्यधिकज्ञानार्थमुक्तमिति भावः । ज्ञानी चेत्तर्हि 'यज्ज्ञात्वा' इति तस्य मोहः कथमुच्यत इत्यत आह— **तथाऽपीति** । अभिभवाज्ज्ञानस्य । अर्जुनस्य ज्ञानित्वे सिद्धे भवेदेतत् । तत्रैव किं प्रमाणमित्यत आह— **मा त्विति** ॥

***भा०दी०***— **मा त्वितीति** । अर्जुनस्य ज्ञानित्वे प्रमाणं तु द्वितीये नरांशे इन्द्रश्चेत्यादिनोक्त इति भाष्यार्थः ॥

*भा०र०*— **इत्युक्तत्वादिति** । लोटोक्तत्वात्, लोटश्च वर्तमानार्थत्वाभावादिति भावः । **मा त्वितीति** । प्रमाणं तूक्तम् । "नरांश इन्द्रश्च पार्थार्ष्टिषेण" (गी.भा. २.४७) इत्यादिज्ञानिगणनाच्चेति द्वितीयाध्याय इति शेष इति भाष्यार्थो द्रष्टव्य इति हृदयम् ॥ ३४ ॥

**गीतातात्पर्यनिर्णयः**

**"ज्ञानं तेऽहं सविज्ञानम्" इति वक्ष्यमाणत्वात् स्वयमेवोपदेक्ष्यति ॥ ३४ ॥**

*न्या०दी०*— ज्ञानस्य कर्मणोऽधिकत्वमुक्त्वा तदापादनं विधीयते 'तदि'ति । तत्र स्वयं ज्ञानोपदेशायैव प्रवृत्तत्वात् "न त्वेवाहम्" इति ज्ञानस्योपदिष्टत्वाच्च कथम् "उपदेक्ष्यन्ति ते ज्ञानम्" इत्युच्यत इत्यत आह **ज्ञानमिति** ॥ उपदेक्ष्यन्तीति निश्चितत्वाभिप्रायेण । परोक्षतयोप-देक्ष्याम इत्येवोच्यमानत्वात् न ज्ञानोपदेशार्थं प्रवृत्तत्वविरोधः । न च ज्ञानस्योपदिष्टत्वविरोधः । सङ्क्षेपेणोपदिष्टत्वेऽपि "ज्ञानं तेऽहं" इत्यादिना पुनरुपदेक्ष्यमाणत्वादिति भावः ॥

*भा०दी०*— **उक्त्वेति** । श्रेयान् द्रव्यमयाद्यज्ञादित्यनेनोक्त्वेत्यर्थः ॥ ३४ ॥

**गीता**

# यज्ज्ञात्वा न पुनर्मोहमेवं यास्यसि पाण्डव ।
# येन भूतान्यशेषेण द्रक्ष्यस्यात्मन्यथो मयि ॥ ३५ ॥

*वि०वि०*— मदुपदेशानन्तरं ज्ञानस्य तिरोभावो न भविष्यति, तेनाशेषतत्वार्थावगतिश्च भवतीत्याह **यदिति** । येन ज्ञानेन मय्यात्मनि नियामके सति सर्वाणि भूतानि । अशेषेण कार्त्स्न्येन । अथो तस्मात् मोहनाशात् द्रक्ष्यसि ।

यद्वा, आत्मनि व्याप्ते मयि अथो तस्माद्व्याप्तत्वादेव द्रक्ष्यसीत्यर्थः ॥

*वा०ल०*— 'येन भूतान्यशेषेण' इत्यत्र येन ज्ञानेन । अथो अनन्तरम् । आत्मनि परमात्मनि मयि भूतानि द्रक्ष्यसि ॥

*सा०सं०*— स्वेनोपदेक्ष्यमाणं ज्ञानं स्तौति भगवान् **यज्ज्ञात्वेति** । **यत्** मया वक्ष्यमाणम् । **ज्ञात्वा पुनः एवमाद्याध्यायोक्तदिशा** बन्धुविषय**मोहं न यास्यसि** । हे **पाण्डव** ! **येन** ज्ञानेन । **अथो** मोहनाशाद्धेतोः । **आत्मनि** सर्वान्तर्यामिणि **मयि** । **भूतान्यशेषेण द्रक्ष्यसि** मदाधारत्वेन सर्वभूतानि तिष्ठन्तीति द्रक्ष्यसीत्यर्थः । यद्वा, **आत्मनि** सर्वत्र व्याप्ते मयि । **अथो** व्याप्तत्वादेव । **सर्वभूतान्यशेषेण द्रक्ष्यसि** । **येन** ज्ञानेन तद्विद्धि तज्ज्ञानविषयं जानीहीति । विद्धि प्राप्नुहीति वाऽन्वयः ॥

*अ०प्र०*— ज्ञानफलं सार्धैस्त्रिभिः **यज्ज्ञात्वेति** ।

हे पाण्डव ![१], यत् ज्ञानं[२], ज्ञात्वा[३], पुनः[४], एवं[५], मोहं[६], न यास्यसि[८], अथ[९], येन[१०], भूतानि[११], आत्मनि[१२], मयि[१३], अशेषेण[१४], द्रक्ष्यसि[१५] इति अन्वयः ।

हे पाण्डव ![१], यत् ज्ञानं[२], ज्ञात्वा = प्राप्य[३], एवं = बन्धुस्नेहरूपं[४], पुनः मोहं बन्धु-वधादिनिमित्तं पुनः मोहं[५], न यास्यसि = न प्राप्स्यसि[८], विशेषार्थावगतिश्च भविष्यतीति भावः । अथ = मोहनाशात्[९], येन = ज्ञानेन[१०], भूतानि = पितृपुत्रादीनि प्राकृतानि[११], आत्मनि = सर्वा-धारभूते[१२], मयि = परमात्मनि[१३], अशेषेण = आधेयत्वेन[१४], द्रक्ष्यसि पश्यसीति भावः । सर्व-स्वामिनि सर्वाधारभूते मयि सशरीराणि आधेयत्वेन पश्यसीत्यर्थः ॥ ३५ ॥

**भाष्यम्**

**येन ज्ञानेन मय्यात्मभूते सर्वभूतानि अथो तस्मादेव मोहनाशात् पश्यसि ॥**
**॥ ३५ ॥**

*प०टी०*— येन मोहेन मयि त्वयि च भूतानि पश्यसीत्यथशब्दो मन्त्रभ्रान्तिं पराकर्तुं 'येन भूतानि' इति श्लोकशेषं व्याचष्टे **येनेति** ॥

*न०टी०*—'यत्' इत्यादिश्लोकोत्तरार्धं व्याचष्टे **येनेति** । आत्मनीत्युक्ते त्वयीति शङ्का स्यात् । तद्व्यावृत्त्यर्थं 'मयि' इति । न च त्वदादिवदहं परिच्छिन्न इत्येतदर्थम् 'आत्मनि' इति । एतदेवाह **मय्यात्मभूत इति** ॥

*प्र०दी०*— "येन भूतानि" इत्यस्य येन मोहेन सर्वाणि भूतान्यात्मनि स्वस्मिन् अथो मयि च द्रक्ष्यसीत्यन्यथाप्रतीतिनिरासार्थमाह— **येनेति** । आत्मभूते सर्वान्तर्यामिणि । द्रक्ष्यसीत्येत-त्पश्यसीति व्याख्यातमिदानीमपि ज्ञान्येवेति ज्ञापयितुम् ॥

*भा०र०*— "यज्ज्ञात्वा न पुनर्मोहम्" इति प्रकृतो मोहो यच्छब्देन विशेष्यत इति भावेन उक्तम् **येन मोहेनेति** । "**अथो** अपि" इति **सङ्केण** भाषणादाह **अथो मयि चेति** । 'आत्मनि' इत्युक्ते 'त्वयि' इति शङ्का स्यात् । तद्व्यावृत्त्यर्थम् **मयीति** । न च त्वदादिरिवाहं परिच्छिन्न इति ज्ञापयितुम् 'आत्मनि' इत्युक्तमित्यभिप्रेत्याह "**मय्यात्मभूत इति**" इति भाष्यावतारस्य प्राचीन-टीकातः अवगमात् तदर्थमाह **आत्मभूते सर्वान्तर्यामिणीति** । ननु 'द्रक्ष्यसि' इत्यत्र व्यत्यय-माश्रित्य भविष्यदर्थकलृटः 'पश्यसि' इति वर्तमानार्थकलटा व्याख्यानं किमर्थम् ? इत्यत आह **द्रक्ष्यसीत्येतदिति** । **इति ज्ञापयितुमिति** । व्याख्यानमिति सम्बन्धः ॥ ३५ ॥

***श्रेयानित्यादि त्रिश्लोक्या अयमक्षरार्थः***— उक्तेषु यज्ञेषु को यज्ञः श्रेष्ठ इति जिज्ञासायां ज्ञानयज्ञः इति स्तुत्योच्यते **श्रेयानिति** । **द्रव्यमयादिति** । उक्तसर्वयज्ञोपलक्षणम् । द्रव्यसाधन-साध्याद् उक्तयज्ञसमुदायादिति यावत् । **ज्ञानयज्ञः** भगवज्ज्ञानसम्पादनरूपो यज्ञः । **श्रेयान्** प्रशस्ततरः । हे **परन्तप** इति सम्बोधनम् । श्रेयस्त्वहेतुरुच्यते **सर्वमिति** । **अखिलं** "समुद्रं मनसा ध्यायीत", "वायुं मनसा ध्यायेद्" इत्यादि कर्मसमृद्ध्यर्थकोपासनाद्यङ्गयुक्तं **सर्वं कर्म ज्ञाने** समुत्पन्ने **परिसमाप्यते** सम्पूर्यते । ज्ञानलक्षणेनैव फलेन फलवद्भवतीत्यर्थः ॥ ३३ ॥

ज्ञानस्य कर्मणोऽधिकत्वमुक्त्वा तदापादानं विधीयते **तदिति** । **ज्ञानिनः** परोक्षतत्त्वनिश्चय-वन्तः । **तत्त्वदर्शिनः** अपरोक्षज्ञानिनः **प्रणिपातेन** दण्डप्रणामेन **सेवया** शुश्रूषया **परिप्रश्नेन** च प्रसन्नाः **ते** तुभ्यं **ज्ञानं** ज्ञानजनकं शास्त्रम् **उपदेक्ष्यन्ति**, ततो वेदितव्यं **विद्धि** जानीहि । अर्जुनस्येदानीं ज्ञानित्वेऽपि 'विद्धि' इत्यधिकज्ञानित्वमुक्तम् । ननु पार्थं प्रति ज्ञानोपदेशायैव कृष्णस्य प्रवृत्तत्वात् "न त्वेवाहम्" (२.१२) इति ज्ञानस्योपदिष्टत्वाच्च कथम् "उपदेक्ष्यन्ति ते ज्ञानम्" इत्युच्यत इति चेत् उच्यते 'उपदेक्ष्यन्ति' इति निश्चितत्वाभिप्रायेण परोक्ष्यतयोपदेक्ष्यामीत्युच्य-मानत्वात् न ज्ञानोपदेशार्थं प्रवृत्तत्वविरोधः । न च ज्ञानस्योपदिष्टत्वविरोधः । सङ्क्षेपेणोपदिष्टत्वेऽपि "ज्ञानं तेऽहम्" (७.२) इत्यादिना पुनरुपदेक्ष्यमाणत्वात् न किञ्चिदप्यनुपपन्नमित्युत्तरप्रस्थाने स्फुट-मिति ॥ ३४ ॥

ज्ञानं स्तूयते **यदिति** । **यत्** मया वक्ष्यमाणं **ज्ञात्वा पुनः** आद्याध्यायोक्तदिशा बन्धुविषय**मोहं न यास्यसि** । हे **पाण्डव येन** ज्ञानेन **अथो** मोहनाशाद्धेतोः **आत्मनि** सर्वान्तर्यामिणि **मयि सर्वभूतानि अविशेषेण** कात्स्न्र्येन **द्रक्ष्यसि** मदाधारतया सर्वाणि भूतानि तिष्ठन्तीति दर्शनवान् भविष्यसि । 'पश्यसि' इति भाष्यस्य तात्पर्यमुक्तं टीकायाम् । तद्विद्धीत्यन्वय इति ॥ ३५ ॥

**गीता**

# अपि चेदसि पापेभ्यः सर्वेभ्यः पापकृत्तमः ।
# सर्वं ज्ञानप्लवेनैव वृजिनं सन्तरिष्यसि ॥ ३६ ॥

*वि०वि०*— कारणभूतं ज्ञानं पुनस्तौति **अपि चेत्यादिश्लोकत्रयेण** । पापेभ्यः पापकृद्भ्योऽपि । पापकृत्तमः अतिशयेन पापकृत्तमः, अतिशयेन पापकारी असि चेत् तथापि सर्वं वृजिनं पापम् । ज्ञानप्लवेन ज्ञानाख्येन योगेनैव सम्यक् तरिष्यसि ॥

***सा०सं०***— 'येन' इति करणतया निर्दिष्टं ज्ञानमेव स्तौति पुनः **अपि चेदसीत्यादि**त्रयेण । **सर्वेभ्यः पापेभ्यः** पापकृद्भ्योऽपि । **पापकृत्तमश्चेदसि** अतिशयेन पापकारी चेदसीति यावत् । तथाऽपि **सर्वं वृजिनं ज्ञानप्लवेनैव** ज्ञानाख्यनावा । **सन्तरिष्यसि** । पापादतिक्रान्तो भविष्यसीत्यर्थः ॥

***अ०प्र०***— किञ्च, **अपि चेदिति** ।

हे पार्थ ![१], सर्वेभ्योऽपि[२], पापेभ्यः[३], पापकृत्तमः[४], त्वमसि[५], चेत्[६], तथाऽपि सर्वं[७], शेषान्वयः स्पष्टः ।

सर्वेभ्योऽपि[२], पापेभ्यः = पापकारिभ्यः[३], पापकृत्तमः = यद्यतिशयेन पापकारी[४], त्वमसि चेत् तथाऽपि[६], सर्वं = पापसमुद्रं[७], ज्ञानप्लवेनैव = ज्ञानाख्यप्लवेन ज्ञानरूपेन वा तेनैव[८], वृजिनं = पापसमुद्रं[९], सन्तरिष्यसि = सम्यगनायासेन तरिष्यसि[१०], इत्यर्थः ॥ ३६ ॥

**गीता**

## यथैधांसि समिद्धोऽग्निर्भस्मसात्कुरुतेऽर्जुन ।
## ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथा ॥ ३७ ॥

***वि०वि०***— एधांसि दारूणि । समिद्धः प्रदीप्तः । भस्मसात् भस्मीभूतानि । सर्वाणि प्रारब्धव्यतिरिक्तानि ।

'कर्माणि क्षपयेद्विष्णुरप्रारब्धानि विद्यया ।
प्रारब्धानि तु भोगेन क्षपयेत्स्वपदं नयन् ॥' इति वचनात् ॥

***सा०सं०***— **यथा एधांसि दारूणि समिद्धः** प्रदीप्तः । **अग्निः भस्मसात् कुरुते** । **तथा** ज्ञानाख्योऽग्निः **सर्वकर्माण्य**प्रारब्धानि **भस्मसात् कुरुते** । अतः प्रशस्तं ज्ञानमिति ॥

***अ०प्र०***— समुद्रवत्स्थितस्यैव पापस्यापि लङ्घनमात्रं न तु पापस्य नाश इति भ्रान्तिं दृष्टान्तेन निवारयन्नाह **यथेति** ।

हे अर्जुन ![१], समिद्धः[२], अग्निः[३], एधांसि[३], यथा[४], भस्मसात्[५], कुरुते[६], तथा[७], ज्ञानाग्निः[८], सर्वकर्मणि[९], भस्मसात्[१०], कुरुते[११] इत्यन्वयः ।

हे अर्जुन ![१], समिद्धः = प्रदीप्तः अग्निः[२], एधांसि = काष्ठानि[३], यथा भस्मसात्कुरुते = यथा भस्मीभावं करोति नयति[६], तथा ज्ञानाग्निः = ज्ञानरूपोऽग्निः[८], सर्वकर्माणि = प्रारब्धव्यतिरिक्तानि सर्वाणि कर्माणि[९], भस्मसात्कुरुते = भस्मीभूतानि करोति[१०-११] । तदुक्तम्—

"कर्माणि क्षपयेद्विष्णुरप्रारब्धानि विद्यया ।
प्रारब्धानि तु भोगेन क्षपयेत् स्वपदं नयेत् ॥"

इति वचनेभ्यः ॥ ३७ ॥

**गीता**

**न हि ज्ञानेन सदृशं पवित्रमिह विद्यते ।**
**तत्स्वयं योगसंसिद्धः कालेनात्मनि विन्दति ॥ ३८ ॥**

***वि०वि०***— तज्ज्ञानं योगसंसिद्धः सिद्धोपायः कालेन बहुना विन्दति प्राप्नोति ॥ ३८ ॥

***सा०सं०***— इह लोके । **ज्ञानेन सदृशं पवित्रं न हि विद्यते** । तत् ज्ञानम् । **स्वयं योगसंसिद्धः** योगविषये सम्यक् सिद्धिमान्, संसिद्धज्ञानोपायः सन् । **कालेन** बहुना । **आत्मनि** । **विन्दति** प्राप्नोति ॥

***अ०प्र०***— हे अर्जुन !, इह[१], पवित्रं[२], ज्ञानेन[३], सदृशं[४], हि यतः[५], न विद्यते[६], अतस्तर्हि तत्[७], आत्मनि[८], कालेन[९], योगसंसिद्धः[१०], स्वयं विदन्तीत्यन्वयः ।

हे अर्जुन ! इह = तयोः योगादिषु तप आदिषु मध्ये[१], पवित्रं = शुद्धिकरम्[२], ज्ञानेन सदृशं = ज्ञानतुल्यं[३-४], हि = यतः[५], न विद्यते = नास्त्येव[६], अतस्तर्हि सर्वेऽपि नात्मज्ञानं कुतो नाभ्यसन्त इत्यत आह **तदिति** उत्तरार्धेन । तत् परमात्मज्ञानं[७], आत्मनि = विषये[८], कालेन = महता कालेन[९], योगसंसिद्धः = कर्मसंसिद्धः कर्मयोगेन संसिद्धः योग्यतां प्राप्तः सन्[१०], स्वयमेव अनायासेन[११], विदन्ति = लभते[१२], न तु कर्मयोगयोगं विनेत्यर्थः ॥ ३८ ॥

**भाष्यम्**

**करणभूतं ज्ञानं स्तौति पुनः श्लोकत्रयेण ॥ ३६-३८ ॥**

***प०टी०***— 'येन' इत्यनेन ज्ञानग्रहणे तदुत्तरश्लोकस्वारस्यं स्यात्, नान्यथेति भावेनाह **करणेति** ॥

***न०टी०***— 'अपि चेदसि' इत्यादेरर्थमाह **करणभूतमिति** । 'श्रेयान् इत्यादिश्लोकत्रयेणापि ज्ञानमेव स्तुतमिति सूचयति पुनःशब्देन । स्तुतिप्रकारभेदात् त्रिकविभागः ॥

***प्र०दी०***— 'येन' इति ज्ञानस्यैव निर्देश इति स्थापयन् 'अपि च' इत्यादेः प्रतिपाद्यमाह— **करणेति** । येनेति करणतया निर्दिष्टमित्यर्थः । 'श्रेयान्' इत्याद्यपेक्षया **पुनरिति** ॥

***भा०दी०***— **इत्याद्यपेक्ष इति** । श्रेयान् द्रव्यमयादित्यादिना ज्ञानस्य स्तुतत्वादपि चेदसी-त्यादि श्लोकेऽत्र पुनस्तवनं क्रिय इति तदपेक्षया पुनःशब्द इत्यर्थः ॥

***भा०र०***— **इति स्थापयन्निति** । उत्तरत्रिश्लोक्यामपि ज्ञानपदश्रवणादिति भावः । **येनेति** । **करणतयेति** । कर्तृकरणयोस्तृतीयास्मरणात् 'येन' इति तृतीयया करणतया निर्दिष्टं ज्ञानं स्तौतीति भाष्यार्थ इत्यर्थः । **श्रेयानित्याद्यपेक्षयेति** । "श्रेयान् द्रव्यमयाद्" (४.३३) इत्यादिना ज्ञान-स्तवनस्यैव अर्थतो लब्धत्वाद् 'यद्' (४.३५) इति साक्षात्स्तवनाच्च । "अपि चेदसि" इति श्लोक-त्रये स्तवनमेव पुनः क्रियत इति तदपेक्षया पुनःशब्दः इत्यर्थः ॥ ३६-३८ ॥

***अपि चेदसीति श्लोकत्रय्या अक्षरार्थस्तु***— 'येन' इति करणतया निर्दिष्टं ज्ञानं श्लोकत्रयेण स्तूयते । **पापेभ्यः** पापकृद्भ्यः । अतिशयेन पापकृत् **पापकृत्तमोऽसि चेदपि सर्वं वृजिनं** पापार्णवं **ज्ञानाख्यप्लवेनैव,** न त्वितरेण कर्मादिसाधनेन **सम्यक् तरिष्यसि** ॥ ३६ ॥

ज्ञानस्य पापनाशकत्वं दृष्टान्तेन प्रत्याय्यते **यथेति** । **एधांसि** काष्ठानि **समिद्धः** अतिदीप्तः **अग्निः** यथा **भस्मसात्कुरुते** भस्मीभूतानि कुरुते, **तथा ज्ञानाग्निः** ज्ञानाख्याग्निः **सर्वकर्माणि** पापानि **भस्मसात्कुरुते** निर्मूलयति । तथा च सूत्रम् "तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ" (ब्र.सू. ४.१.१३) इति ॥ ३७ ॥

**इह** पापनिवर्तकेषु **ज्ञानेन सदृशं पवित्रं** पावनं शोधकं **न हि विद्यते** । **तद्** ज्ञानं **स्वयं योगसंसिद्धः** योगविषये सम्यक् सिद्धिमान् संसिद्धज्ञानोपायः सन् कालेन बहूनां जन्मनामन्ते ज्ञान-वान् "निःशेषगतदोषाणां बहुभिर्जन्मभिः पुनः । स्यादापरोक्ष्यं हि हरेः" (अनु.३.४.४. अधि. ९ १५०२ श्लो.) इत्युक्तदिशा सुबहुना । **आत्मनि** भगवद्विषये स्वस्मिन्वा **विन्दति** लभत इति । ॥ ३८ ॥

**गीता**

**श्रद्धावाँल्लभते ज्ञानं मत्परः संयतेन्द्रियः ।**
**ज्ञानं लब्ध्वा परां शान्तिमचिरेणाधिगच्छति ॥ ३९ ॥**

*वि०वि०*— ज्ञानस्यान्तरङ्गसाधनमाह **श्रद्धावानिति** । आस्तिक्यबुद्धिमान् तदैकनिष्ठो जितेन्द्रियश्च ज्ञानं लभते । ज्ञानफलमाह **ज्ञानमिति** । शान्तिं मोक्षम् ॥

*वा०ल०*— 'तत्परः' इत्यत्र तत्परः ज्ञानपरः ॥

*॥ इति श्रीमद्भगवद्गीतालक्षालङ्कारे चतुर्थोऽध्यायः ॥*

*सा०सं०*— एवं ज्ञानं प्रशस्य तस्यान्तरङ्गसाधनं फलं चाह **श्रद्धावानिति** । आस्तिक्यबुद्धिमान् । **मत्परो** मदेकनिष्ठः । **संयतेन्द्रियो** जितन्द्रियश्च **ज्ञानं लभते** । **ज्ञानं लब्ध्वा परां शान्तिं** मोक्षम् । **अचिरेण** अविलम्बेन । **अधिगच्छति** प्राप्नोति, असति प्रारब्धे । सति तु तस्मिन् तद्भोगानन्तरमिति ॥

*अ०प्र०*— तत्र हेतुमाह **श्रद्धावानिति** ।

श्रद्धावान्[१], अत एव मत्परः[२], संयतेन्द्रियः[३], ज्ञानं[४], लभते[५], स एवं पूर्वोक्तज्ञानं लब्ध्वा[६], परां[७], शान्तिं[८], अचिरेण[९], अधिगच्छतीत्यन्वयः ।

श्रद्धावान् = गुरूपदिष्टेऽर्थे आस्तिक्यबुद्धिमान्[१], अत एव मत्परः = मदेकनिष्ठः[२], संयतेन्द्रियश्च = संयतानि नियमितानि इन्द्रियाणि यस्य स तथा[३], ज्ञानं = तत् पूर्वोक्तज्ञानं[४], लभते = प्राप्नोति नान्यः[५], सः एवं पूर्वोक्तज्ञानं यतः श्रद्धादिसम्पत्त्या ज्ञानलाभात् प्राक् कर्मयोगे एव शुद्धार्थमनुष्ठेयः । ज्ञानलाभानन्तरं तु तस्य न किञ्चित् कृत्यमस्तीत्याह । ज्ञानं लब्ध्वा तु स एव पूर्वोक्तज्ञानं लब्ध्वा[६], परां = उत्कृष्टां[७], शान्तिं = मोक्षं[८], अचिरेण = शीघ्रमेव[९], अधिगच्छति = प्राप्नोतीत्यर्थः ॥ ४० ॥

**गीता**

## अज्ञश्चाश्रद्दधानश्च संशयात्मा विनश्यति ।
## नायं लोकोऽस्ति न परो न सुखं संशयात्मनः ॥ ४० ॥

*वि०वि०*— ज्ञानतत्साधनाभावे तद्विरोधे चानिष्टमाह **अज्ञश्चेति** ॥

*सा०सं०*— ज्ञानतत्साधनयोरभावे तद्विरोधिविपरीतज्ञानादौ चानिष्टमाह **अज्ञश्चेति** । नञोऽभावविरोधरूपार्थद्वयं ध्येयम् । तत्त्वविषय**संशयात्मा** च **विनश्यति** । नरकं प्रतिपद्यते । किञ्च संशयात्मनः । **अयं** मानुषो **लोकः** । **परः** स्वर्गादिर्वा **नास्ति** । किं बहुना **सुखं** नास्तीत्यर्थः ॥

***अ०प्र०***— ज्ञानसाधनाभावे तद्विरोधिनि च अनिष्टं वक्ष्यते **अज्ञ इति** । किञ्च ज्ञानाधिकारिणमुक्त्वा तद्विपरीतमनधिकारिणमाह **अज्ञश्चेति** ।

पूर्वार्धमन्वयः श्लोकक्रमेण ।। (अज्ञश्च[१], अश्रद्दधानश्च[२], संशयात्मा[३], विनश्यति[४]), संशयात्मनः[५], अयं[६], लोकः[७], नास्ति[८], परलोकोऽपि[९], नास्ति[१०], सुखं च[११], नास्तीत्यन्वयः ।

अज्ञः = गुरूपदिष्टार्थानभिज्ञः[१], कथञ्चिज्ज्ञाने जातेऽपि अश्रद्दधानश्च = श्रद्धारहितश्च[२], संशयात्मा = जातायामपि श्रद्धायां ममेदं सिद्धेद्वा न चेति संशयाऽऽक्रान्तचित्तश्च संशयात्मा[३], विनश्यति = स्वार्थात् भ्रश्यति[४], एतेषु त्रिष्वपि संशयात्मा सर्वथा नश्यति यतः तस्य संशयात्मनः[५], अयं लोकः नास्ति[८], कुतः ? धनाद्यर्जनधर्माद्यर्जनविवाहाद्यसिद्धः[८], परलोकोऽपि[९], नास्ति संशयेन तत्साधनधर्मस्याप्यनिष्पत्तेः[१०], सुखं च नास्ति संशयेनैव भोगस्याप्यसम्भवात्[१२], अस्य कर्माणि निबध्नन्तीत्यर्थः ।। ४० ।।

**गीतातात्पर्यनिर्णयः**

**आत्मनि व्याप्ते मयि । अथो तस्माद्व्याप्तत्वादेव ।। ३५-४० ।।**

***प्रका०***— "ज्ञानं तेऽहं सविज्ञानमिदं वक्ष्यामी"त्यनेन "उपदेक्ष्यन्ति ते ज्ञानमि"त्येतन्निश्शङ्कं कृत्वा "यद्ज्ञात्वा न पुनर्मोहमेवं यास्यसि पाण्डव । येन भूतान्यशेषेण द्रक्ष्यस्यात्मन्यथो मयि" इत्यस्यार्थमाह **आत्मनीति** । आत्मशब्दः आततत्वयोगेन व्याप्तत्ववाची । व्याप्तत्वादेव मम भूताधारत्वं युज्यत इत्यस्य **अथो** इत्यनेन समर्थनात् ।।

***न्या०दी०***— ज्ञानं स्तूयते 'यत्' इति । तत्र स्वस्मिन्, मयि चेत्यन्यथाप्रतीतिनिरासायाह **आत्मनीति** ।। ईश्वरमन्तरेण सर्वभूताधारत्वस्यान्यत्रानुपपत्तेर्न प्रतीत एवार्थ इत्यर्थः । एवं चेत् 'अथो' इति समुच्चयवाची शब्दो व्यर्थ इत्यत आह **अथो इति** ।।

***भा०दी०***— अथो इति पदं समुच्चयार्थमिति भ्रान्त्याऽऽह **एवं चेदिति** ।।

**गीता**

**योगसंन्यस्तकर्माणं ज्ञानसञ्छिन्नसंशयम् ।**
**आत्मवन्तं न कर्माणि निबध्नन्ति धनञ्जय ।। ४१ ।।**

*वि०वि०*— ज्ञानसाधनमनुवदन् ज्ञानफलं प्रपञ्चयति **योगेति** । योगेन विष्णौ समर्पितं कर्म येन स तथा तम् । ज्ञानेन छिन्नः संशयो येन स तथा, तम् । आत्मवन्तं परमात्मभक्तम् । कर्माणि न निबध्नन्ति ॥

*सा०सं०*— ज्ञानसाधनमनुवदन् ज्ञानफलं प्रपञ्चयति **योगेति** । भगवति मनोयोगेन तस्मिन् सन्यस्तं समर्पितं कर्म येन तं **योगसंन्यस्तकर्माणम्** । ज्ञानेन छिन्नसंशयम् । **आत्मवन्तं** परमात्मभक्तम् । हे **धनञ्जय कर्माणि न निबध्नन्ति** । मुक्तो भवतीत्यर्थः ॥

*अ०प्र०*— अध्यायद्वयोक्तां पूर्वापरभूमिकां पदेन कर्मज्ञानमयीं द्विविधां ब्रह्मनिष्ठामुपसंहरति **योगेति** द्वाभ्याम् । तत्र **योगेति** ।

हे धनञ्जय ![१], कर्माणि[२], योगसंन्यस्तकर्माणं[३], ज्ञानसञ्छिन्नसंशयम्[४], अत एव आत्मवन्तम्[५], न निबध्नन्तीत्यन्वयः ।

हे धनञ्जय ![१], कर्माणि = अनिष्टानि यद्वा लोकसङ्ग्रहार्थानि स्वाभाविकानि वा तानि कर्माणि[२], योगसंन्यस्तकर्माणं = परमेश्वराराधनरूपेण योगेन तस्मिन् संन्यस्तानि समर्पितानि कर्माणि येन तं तथा[३], सफलैः, यद्वा कामत्यागादिरूपयोगेन विष्णौ समर्पितं कर्म येन तं कर्माणि, ज्ञानसञ्छिन्नसंशयं = ज्ञानेन सम्यक् च्छिन्नः संशयो येन तम्, यद्वा अकर्तात्मबोधेन संशयो देहाद्यभिमानलक्षणो यस्य तं च । आत्मवन्तं अप्रमादिनं परमात्मभक्तं वा । कर्माणि अनिष्टानि न निबध्नन्ति ॥ ४१ ॥

**गीता**

## तस्मादज्ञानसम्भूतं हृत्स्थं ज्ञानासिनाऽऽत्मनः ।
## छित्त्वैनं संशयं योगमातिष्ठोत्तिष्ठ भारत ॥ ४२ ॥

*॥ इति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे ज्ञानयोगो नाम चतुर्थोऽध्यायः ॥*

*वि०वि०*— एवमुपपादितं कर्मणः कर्तव्यत्वमुपसंहरति **तस्मादिति** । अज्ञानजं हृत्स्थम् आत्मनः संशयं ज्ञानाख्येन खड्गेन छित्वा, योगमातिष्ठ युद्धायोत्तिष्ठेति ॥

*॥ इति श्रीमद्भगवद्गीयाविवृतौ श्रीमज्जयतीर्थशिष्य–विद्याधिराजभट्टोपाध्यायविरचितायां श्रीमन्मध्वमतानुवर्तिन्यां चतुर्थोऽध्यायः ॥ ४ ॥*

***सा०सं०*—** उपपादितं कर्मणः कर्तव्यत्वमुपसंहरति **तस्मादिति** । ज्ञानोपायानुष्ठानाननु-ष्ठानयोरर्थानर्थवत्वात् **अज्ञानसम्भूतं** हृद्गतम् **आत्मनः संशयम्** । **ज्ञानासिना** ज्ञानाख्यखड्गेन । **छित्वा, योगं** ज्ञानोपायं कर्म । अनुतिष्ठ कुरु । हे **भारत उत्तिष्ठ** उद्युक्तो भवेति ॥

*॥ इति श्रीमत्सर्वतन्त्रस्वतन्त्रश्रीसुधीन्द्रगुरुपादशिष्येण राघवेन्द्रेण कृते श्रीमद्गीतार्थसङ्ग्रहे चतुर्थोऽध्यायः ॥*

***अ०प्र०*—** यस्मादेवं **तस्मादिति** ।

हे भारत ![१], यस्मादेवं तस्मात्[२], अज्ञानसम्भूतं[३], हृत्स्थं[४], आत्मनः[५], एनं[६], संशयं[७], ज्ञानासिना[८], छित्त्वा[९], योगं[१०], आतिष्ठ[११], युद्धाय[१२], उत्तिष्ठेत्यन्वयः ।

हे भारत ![१], यस्मादेवं तस्मात्[२], अज्ञानसम्भूतं = अज्ञानेन सम्भूतम् । यद्वा अधिष्ठान-याथात्म्याज्ञानजन्यं[३], हृत्स्थं = हृदि स्थितं[४], एनं = शोकादिनिमित्तं यद्वा युद्धादिविषयम्[५], संशयम्[६], आत्मनः परमात्मनः[७], ज्ञानाऽसिना = ज्ञानाख्यखड्गेन; यद्वा देहजीवप्रकृतिपुरुष-विवेकखड्गेन[८], छित्त्वा = छेदयित्वा[९], योगं = कर्मयोगं[१०], आतिष्ठ = आश्रय[११], प्रथमं प्रस्तुताय युद्धाय[१२], उत्तिष्ठ[१३] । हे भारत इति क्षत्रियत्वेन युद्धस्य धर्मत्वं दर्शितम् ॥ ४२ ॥

*॥ इति गीतासाराख्यसङ्ग्रहे अन्वयप्रकाशिकायां चतुर्थोऽध्यायः ॥ ४ ॥*

**भाष्यम्**

## तत्साधनं विरोधिफलं च तदुत्तरैरुक्त्वोपसंहरति ॥ ३९-४२ ॥

*इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमद्गीताभाष्ये चतुर्थोऽध्यायः ॥*

***प०टी०*—** उत्तरश्लोकचतुष्टयमवतारयति **तदिति** । 'श्रद्धावान्' इत्यादि ज्ञानसाधनशान्ति-मृच्छति । 'योगसन्न्यस्त' इति ज्ञानफले । 'अज्ञश्च' इत्यादिज्ञानविरोधेन 'विनश्यति' इत्यादि तत्फलम् । 'तस्मात्' इत्युपसंहारः ॥

*॥ इति श्रीपद्मनाभतीर्थभट्टारकविरचित श्रीमद्भगवद्गीताभाष्य-भावप्रदीपिकायां चतुर्थोऽध्यायः ॥*

***न०टी०***—उत्तरश्लोकत्रयस्य सैकस्यार्थमाह **तत्साधनमिति** । ज्ञानसाधनं, ज्ञानविरोधि, ज्ञानतद्विरोधिनोः फलं च । तत्र विरोधिफलं विनाशादि । ज्ञानफलं बन्धपरिहारोऽप्रतिहतविष्णुनिष्ठ-बुद्धेः सुखरूपिणी ॥

*॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितश्रीगीताभाष्यटीकायां श्रीनरहरितीर्थभट्टारककृतौ भावप्रकाशिकायां चतुर्थोऽध्यायः ॥*

***प्र०दी०***— उत्तरश्लोकत्रयस्य सङ्कीर्णार्थत्वादेकोक्त्यैव तात्पर्यमुक्त्वा 'तस्मात्' इति चतुर्थस्य प्रतिपाद्यमाह— **तदिति** । तस्य ज्ञानस्य साधनमन्तरङ्गं श्रद्धादिकम् । विरोध्यज्ञानादिकम् । ज्ञानस्य फलं परशान्त्यादिकम् । विरोधिनः फलं विनाशादिकमिति ॥

*इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य श्रीमद्गीताभाष्यस्य टीकायां जयतीर्थमुनिविरचितायां प्रमेयदीपिकायां चतुर्थोऽध्यायः ॥ ४ ॥*

***भा०दी०***— फलं पदं तत्पदपरामृष्टज्ञानेन विरोधिपदोक्ताज्ञानेन वान्वेतीति भावेनाह **ज्ञानस्य फलमित्यादिना** ॥

*इति श्रीगीताभाष्यटीकायाः प्रमेयदीपिकायाः टिप्पण्यां राघवेन्द्रयतिकृतायां भावदीपे चतुर्थोऽध्यायः ॥*

***भा०र०***— **सङ्कीर्णार्थत्वादिति** । ज्ञानसाधनतत्फलयोः, अज्ञानतत्फलयोश्च संवलनेनोक्त-त्वादित्यर्थः । **प्रतिपाद्यम्** उपसंहारत्वरूपम् । "ज्ञानसाधनं ज्ञानविरोधि ज्ञानतद्विरोधिनोः फलम्" इति **प्राचीनटीकां** मनसि निधायाह **तस्येत्यादि** । प्रणिपातादेः ज्ञानसाधनस्याभिहितत्वात् किमत्राभिधातव्यम् ? इत्यत उक्तम् **अन्तरङ्गमिति** । अत्यावश्यकमित्यर्थः । 'श्रद्धादिकम्' इत्यत्रादिशब्देन ज्ञानासक्तीन्द्रियसंयमग्रहणम् । **अज्ञानादिकमिति** । 'अज्ञश्च' इत्यत्रोक्तम् अज्ञान-अश्रद्धा-संशयरूपं ज्ञानविरोधि विवक्षितमित्यर्थः । 'परशान्त्यादिकम्' इत्यत्र आदिपदेन कर्मबन्ध-परिहारो ग्राह्यः । 'विरोधिफलम्' इत्यैकपद्याश्रयणेनाह **विरोधिनः फलं विनाशादिकमिति** । **ज्ञानविरोधिनः** अज्ञानादेः । **विनाशादिकं विनाशो** नरकप्राप्तिः । आदिपदेन मानुषलोकस्वर्ग-लोकसुखाभावग्रहः ॥ ३९-४२ ॥

***श्रद्धावानित्यादिश्लोकचतुष्टयस्यायमक्षरार्थस्तु***— ज्ञानं स्तुत्वा तस्यान्तरङ्गसाधनं फलं चोच्यते **श्रद्धावानिति** । अत्रोक्तमस्ति । अनेन मम प्रयोजनमस्तीत्यास्तिक्यबुद्धिमान् **तत्परः**

ज्ञानलब्ध्युपायासक्तः **संयतेन्द्रियः** संयतानि विषयेभ्यः सम्यङ्निवर्तितानीन्द्रियाणि यस्य स तथा । स च ज्ञानं लभते । एवम्भूतं **ज्ञानं लब्ध्वा परां शान्तिम्** अखिलक्लेशनिवृत्तिविशिष्ट-परमानन्दलक्षणमोक्षं **अचिरेणाधिगच्छति** असति प्रारब्धे, सति तु तस्मिन् तद्भोगसमनन्तरमेवेति शास्त्रान्तरसिद्धम् ॥ ३९ ॥

***भा०र०***— ज्ञानाभावे विपरीतज्ञानादौ च सति अनिष्टमुच्यते **अज्ञश्चेति** । **अज्ञो** ज्ञानहीनो विपरीतज्ञानश्च **अश्रद्दधानः** आस्तिक्यबुद्धिशून्यः । **संशयात्मा** तत्त्वविषये संशययुक्तमानसः । **विनश्यति** नरकं प्रतिपद्यते । विपरीतज्ञानी चेत्, तमः प्राप्नोतीति स्वरूपनाश एव व्याख्येयः । अज्ञाश्रद्दधानयोर्नरकप्राप्तिरेव । **संशयात्मनस्तु अयं लोकः** मानुषो लोकः **न परः** स्वर्गादिर्वा नास्ति, किं बहुना सुखमेव नास्ति ॥ ४० ॥

ज्ञानसाधनानुवादपूर्वं ज्ञानफलमुच्यते **योगेति** । **योगेन** भगवानेव सर्वाणि कर्माणि करोतीति तत्पूजैवेति तस्मिन् **संन्यस्तानि कर्माणि येन तं** तथा **ज्ञानेन** तत्त्वावधारणेन **संच्छिन्नः संशयः** तत्त्वविषयकः **येन** तथा, **आत्मवन्तं** स्वामितया परमात्मवन्तं परमात्मभक्तम् । अनेन "आत्मा जीवश्चेत् स्वसम्बन्धोक्तिरयुक्ता अनुपयुक्ता च । परमात्मा चेत् सर्वेषामपि तद्वत्त्वसाम्यात् को विशेषो ज्ञानिनः ?" इति शङ्का निरस्ता । एवंविधं हे **धनञ्जय कर्माणि न निबध्नन्ति** ॥ ॥ ४१ ॥

एवमुपपादितं कर्मणः कर्तव्यत्वमुपसंह्रियते **तस्मादिति** । ज्ञानोपायानुष्ठानाननुष्ठानयोरर्थानर्थवत्त्वाद् **अज्ञानेन** अधिष्ठानयाथात्म्याज्ञानेन **सम्भूतम्** उत्पन्नं **हृत्स्थं** हृदयगतं आत्मनः संशयं **ज्ञानासिना** ज्ञानाख्यखड्गेन **छित्त्वा** परिहृत्य **योगं** ज्ञानोपायं कर्म **आतिष्ठ** कुरु । हे **भारत उत्तिष्ठ** । क्षत्रियस्य तव ज्ञानोपायभूतं कर्म युद्धमेवेति तत्रोद्युक्तो भव । स्वकर्मणा भगवन्तमभ्यर्च्य तं परितोषय इति ॥ ४२ ॥

श्रीमद्गीताभाष्यटीकाचतुर्थाध्यायसेवया ।
गुणिनः परितुष्यन्तु गुणग्रहणभूषणाः ॥

*॥ इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमत्सूरीन्द्रतीर्थपूज्यपादशिष्येण सुमतीन्द्रयतिना विरचितायां प्रमेयदीपिकाव्याख्यायां भावरत्नसमाख्यायां चतुर्थोऽध्यायः ॥*

**गीतातात्पर्यनिर्णयः**

**आत्मवन्तं परमात्मभक्तम् ॥ ४१-४२ ॥**

*॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते*
*श्रीमद्भगवद्गीतातात्पर्यनिर्णये*
*चतुर्थोऽध्यायः ॥*

*प्रका०*— "आत्मवन्तं न कर्माणि निबध्नन्ती"त्यत्रात्मवच्छब्दार्थमाह **परमात्मभक्तमिति** ॥

*इति श्रीमदानन्दतीर्थभगवत्पादविरचितस्य श्रीमद्गीतातात्पर्यनिर्णयस्य प्रकाशिकायां*
*पद्मनाभतीर्थविरचितायां चतुर्थोऽध्यायः ॥*

*न्या०दी०*— ज्ञानफलमुच्यते **योग इति** । तत्र 'आत्मवन्तं' इत्यात्मा जीवश्चेत् स्वसम्बन्धोक्तिरयुक्ताऽनुपयुक्ता च । परमात्मा चेत् सर्वेषामपि तद्वत्त्वसाम्यात् को विशेषो ज्ञानिन इत्यत आह **आत्मेति** ॥ ४१-४२ ॥

*इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य*
*श्रीमद्भगवद्गीतातात्पर्यनिर्णयस्य टीकायां*
*जयतीर्थमुनिविरचितायां न्यायदीपिकायां*
*चतुर्थोऽध्यायः समाप्तः ॥*

*भा०दी०*— **तद्वत्त्वेति** । परमात्मवत्त्वसाम्यादित्यर्थः । हरेः सर्वान्तर्यामित्वादिति भावः ॥

*॥ इति श्रीमद्गीतातात्पर्यटीकाभावदीपे राघवेन्द्रयतिकृते चतुर्थोऽध्यायः ॥*

★ ★ ★

॥ श्रीः ॥

॥ श्रीवेदव्यासाय नमः ॥

॥ श्रीमदानन्दतीर्थगुरुभ्यो नमः ॥

# श्रीमद्-भगवद्गीता

## अथ पञ्चमोऽध्यायः

**गीता**

**अर्जुन उवाच—**

**संन्यासं कर्मणां कृष्ण पुनर्योगं च शंससि ।**
**यच्छ्रेय एतयोरेकं तन्मे ब्रूहि सुनिश्चितम् ॥ १ ॥**

*वि०वि०*— निरूपितः पूर्वं समुचितः कर्मयोगः । स च योगसंन्यासभेदेन द्विविधः । तस्य द्विविधस्य योगस्य स्वरूपं सङ्क्षेपेण 'कुरु कर्माणि', 'सङ्गं त्यक्त्वा' इत्यादौ उक्तम् । तदेवास्मिन्नध्याये प्रपञ्च्यते । तत्रार्जुन उवाच **संन्यासमिति** । 'यदृच्छालाभसन्तुष्टः' इत्यादिना संन्यासं कामादिवर्जनलक्षणं शंससि, 'कुरु कर्म' इति कर्मयोगं च शंससि । एतयोरुक्तलक्षणयोः संन्यास-कर्मयोगयोर्मध्ये यच्छ्रेयोऽधिकं तदेकं मम सुनिश्चितं यथा स्यात्तथा ब्रूहि ।

अयं भावः । संन्यासस्याधिकत्वे तमेव गृहीष्यामि किं तद्विरोधिना रागादियुक्तेन युद्धाख्येनाधिकेनापि कर्मयोगेनेति । अथवा 'योगसंन्यस्तकर्माणम्' इत्यादिना संन्यासाश्रमं शंससि । 'योगमातिष्ठ' इत्यादिना गृहस्थाश्रमम् । एतयोर्मध्ये यच्छ्रेयस्तद्ब्रूहि । उभयोरेकेनैवानुष्ठातुमशक्यत्वादन्यतरपरित्यागेनान्यतरग्रहणे श्रेयस एव ग्राह्यत्वादिति प्रश्नाभिप्रायः ॥

*सा०सं०*— 'योगस्थः कुरु कर्माणि सङ्गं त्यक्त्वा' (२-४८) इत्यादिना द्वितीये सङ्क्षेपेणोक्तस्य तृतीयादौ विशेषतः स्पष्टीकृतस्य फलकामनादित्यागेनेश्वरार्पणबुद्ध्या वर्णाश्रमविहितकर्मानुष्ठानरूपस्य कर्मयोगस्य यदंशद्वयं कामादिवर्जनरूपं उक्तरूपकर्मानुष्ठानाख्यं चेति तदंशद्वयरूपं तृतीयोक्तमत्राध्याये प्रपञ्चयते **संन्यासमिति** । पूर्वाध्याये 'यदृच्छालाभसन्तुष्टः' (४-२२) इत्यादिना

कामादिवर्जनरूपं **संन्यासम्**, 'कुरु कर्मैव तस्मात् त्वं पूर्वैः पूर्वतरं कृतम्' इत्यादिना वर्णाश्रम-विहितकर्मणां **योगम्**, ईश्वरार्पणबुद्ध्याऽनुष्ठानरूपं कर्मयोगं **च**, हे **कृष्ण शंससि** कथयसि । एतयोरुक्तलक्षणयोः संन्यासकर्मयोगयोः । **यच्छ्रेयः** अधिकं भवति । **तदेकं मे** मम **सुनिश्चितं ब्रूहि** । संन्यासस्याधिकत्वे तमेव ग्रहिष्यामि, किं तद्विरोधिना कामद्वेषादियुतेन युद्धाख्यकर्मयोगेनेति भावः ।

यद्वा, पूर्वत्र 'योगसंन्यस्तकर्माणम्' (४-४१) इत्यादौ पठितः संन्यासशब्दो यत्याश्रमविषयः, 'योगमातिष्ठ' (४-४२) इत्यादौ श्रुतो योगशब्दो गृहिविषय इति प्रकल्प्य, यतीनां सर्वकर्मत्यागेन ज्ञानमात्राधिकारित्वात्, गृहिणां च ज्ञानत्यागेन कर्ममात्राधिकारित्वात्, तयोरेकपुन्निष्ठत्वं न युक्तम्, इति भावेन योगसंन्यासयोर्मध्ये यच्छ्रेयः, तदेकं ग्रहिष्यामीति भावेन तयोर्मध्ये श्रेयः पृच्छति **संन्यासमिति** । **कर्मणां संन्यासं** यत्याश्रमम् । 'संन्यस्तकर्माणम्' (४-४१) इत्यनेन **शंससि** । **पुनः कर्मणां योगम्**, अनुष्ठानलक्षणं गृहस्थाश्रमं च 'योगमातिष्ठोत्तिष्ठ' (४-४२) इत्यनेन शंससि । एतयोर्यत्याश्रमगृहस्थाश्रमयोः । शिष्टं प्राग्वत् ।

एतेनास्याध्यायस्य तृतीयोक्तकर्मयोगप्रपञ्चपरत्वेनास्याध्यायस्य तदानन्तर्यं स्यादिति निर-स्तम् । योजनाद्वयेऽपि पूर्वाध्यायोक्तोपजीवनेनैव प्रश्नस्योत्थानेन चतुर्थानन्तर्यस्योचिततत्वादिति ॥

*अ०प्र०*— चतुर्थान्ते अज्ञानसम्भूतं संशयं ज्ञानासिना छित्त्वा कर्मयोगमातिष्ठेत्युक्तम् । तत्र पूर्वापरविरोधं मत्वा अर्जुन उवाच **संन्यासमिति** ।

फलकामनादित्यागेनेश्वरार्पणबुद्ध्या वर्णाश्रमविहितकर्मानुष्ठानलक्षणः कर्मयोगः पूर्वं निरूपितः, द्वितीयश्चायं कर्मयोगः— कामादिवर्जनं, ईश्वरार्पणबुद्ध्या कर्मानुष्ठानं चेति । तत्राद्यं संन्यास-शब्देनोच्यते, द्वितीयमुपचारेण कर्मयोगशब्देनोच्यते, तस्य द्विविधस्यापि स्वरूपं "कुरु कर्माणि", "सङ्गं त्यक्त्वा" इत्यादौ उक्तम् । संन्यासयोगरूपद्विविधयोगं स्वरूपं विवृणोति ।

हे कृष्ण ![१], कर्मणां[२], संन्यासं कथयसि[३], पुनः[४], योगं च[५], शंससि[६], हि[७], एतयोः[८], एकं[९], यत्[१०], श्रेयः[११], स्यात् तत्[१२], मे[१३], सुनिश्चितम्[१४], ब्रूहि[१५] इत्यन्वयः ।

हे कृष्ण ! = नियमनादिना सकललोककर्षणात् कृष्ण ![१],

यतः कर्षसि देवेश नियम्य सकलं जगत् ।
अतो वदन्ति मुनयः कृष्णं त्वां ब्रह्मवादिनः ॥[१],

कर्मणां = 'यदृच्छालाभसन्तुष्टे'ति 'यस्त्वात्मरतिरेव स्यादि'त्यादिना, 'सर्वं कर्माखिलं पार्थे'-त्यादिना च ज्ञानिनः कर्मणां[२], संन्यासं = कर्मादिवर्जनलक्षणं कथयसि[३], पुनः योगं च शंससि[६],

ज्ञानासिना संशयं छित्त्वा योगमातिष्ठेति कुरु कर्मेति च, पुनः योगं च शंससि = अतिशयेन वर्णयसि[६], हि = एतयोः एकं[९], यस्मात् उक्तलक्षणयोः संन्यासकर्मयोगयोः संन्यासः कर्मयोगश्च विरुद्धस्वरूपत्वात् एकस्यैव एकदैवमनुष्ठातुमसम्भवतः। तस्मादेतयोर्मध्ये एकस्मिन् अनुष्ठातव्येति[८], मे मम[१०], यत् श्रेयः यदधिकं मोक्षसाधनाय सुलभं स्यात्[१२], तदेकं[१३], सुनिश्चितं = साधनाय सौलभ्येन निश्चितं यथा स्यात्तथा[१४], ब्रूहि = आज्ञापयेत्यर्थः। अस्यायम्भावः— यदि संन्यासोऽधिकः स्यात् तर्हि संन्यासस्य युद्धं रागादिमत्वात् विरोधी। युद्धादि कर्मयोगं परित्यज्य कामादित्यागरूपः संन्यास एव कार्यः, किं वैगुण्यमङ्गीकृत्यापि युद्धं विधीयते इति। अथवाऽयं भावः— योगसंन्यस्तकर्माणमित्यादिना कर्मणां संन्यासकर्मत्यागेन ज्ञानमात्राधिकाररूपं यत्याश्रमं शंससि 'योगमातिष्ठ' इत्यादिना कर्मणां योगं ज्ञानत्यागेन कर्ममात्राधिकाररूपं गृहस्थाश्रमं च पुनः शंससि, यस्मात् तस्मात् तयोर्मध्ये यच्छ्रेयः तत् ब्रूहि, उभयोरपि कर्तृत्वेन विहितत्वात्। एकेनैव पुंसा एकदैवानुष्ठातुमशक्यत्वात्। अन्यतरपरित्यागेन अन्यतरग्रहणे च श्रेयस एव ग्राह्यत्वात् इति प्रश्नाशयः॥ १॥

**भाष्यम्**

**तृतीयाध्यायोक्तमेव कर्मयोगं प्रपञ्चयत्यनेनाध्यायेन। "यदृच्छालाभसन्तुष्ट" इत्यादिना संन्यासम्। "कुरु कर्मैव" इत्यादिना कर्मयोगं च। नियमनादिना सकललोककर्षणात् कृष्णः। तच्चोक्तम्—**

**"यतः कर्षसि देवेश नियम्य सकलं जगत्।**
**अतो वदन्ति मुनयः कृष्णं त्वां ब्रह्मवादिनः॥"**

**—इति महाकौर्मे॥**

**संन्यासशब्दार्थं भगवानेव वक्ष्यति। अयं प्रश्नाभिप्रायः— यदि संन्यासः श्रेयोऽधिकः स्यात् तर्हि संन्यासस्यैतद् विरोधि युद्धमिति॥ १॥**

***प०टी०***— एतदध्यायप्रतिपाद्यार्थं दर्शयति **तृतीयेति**। संन्यासं कर्मयोगं च शंससीति कुत्रोक्तमनुवदति ? इत्यत आह **यदृच्छेति**। ज्ञानेन तलीलय (?) विवरणात्मकत्वस्याध्यायस्य चतुर्थत्वं स्यात्। न तदानन्तर्यमिति निरस्तम्। योगसंन्यासकारयितृत्वात् तयोः श्रेयो जानात्येव भगवानित्यभिप्रायेण प्रयुक्त'कृष्ण'शब्दार्थमाह **नियमनादिना**। 'संन्यास'शब्देन यत्याश्रमः

इत्यपव्याख्यां दूषयितुमाह **संन्यासेति** । ननु यदि 'संन्यास'शब्देन द्वन्द्वत्यागोऽर्जुनाभिमतः, तर्हि योगसंन्यासयोरैकाधिकरण्याविरोधात् कथं विरोधाभिप्रायेण प्रश्नः ? इत्यत आह **अयमिति** ॥

*न०टी०*— नन्वाद्यं षट्कं प्राधान्येन साधनपरम् । मोक्षसाधनं ज्ञानम्, तत्साधनं च कर्म सम्यगेवोक्तमतीताध्यायैः । अतः किं पञ्चमेन ? इत्याकाङ्क्षायामाह **तृतीयेति** । ननु तृतीयसङ्गत-स्याध्यायस्य चतुर्थानन्तर्ये को हेतुः ? इत्याकाङ्क्षां परिहरन्नेवाद्यं श्लोकं व्याख्यातुमुपक्रमते **यदृच्छेति** । 'यदृच्छालाभ.........' इत्यादिचतुर्थाध्यायोक्तकर्मसंन्यासकर्मयोगविषयाकाङ्क्षोत्तरत्वेन तृतीयाध्यायोक्तप्रपञ्चात्मकत्वादस्य चतुर्थाध्यायानन्तर्यमिति भावः । न केवलं संन्यासं कर्मयोगं च शंससि, किन्तु कारयस्यपीति भावेन कृष्णेति सम्बोधितो भगवानर्जुनेनेत्यभिप्रायेण 'कृष्ण'शब्दार्थं सप्रमाणकमाह **नियमनादिनेति** । द्वन्द्वत्याग एवात्र संन्यासः, न माय्युक्तप्रकारेण निष्क्रिय-परमात्माऽहमिति ज्ञानेन शास्त्रीयसर्वकर्मप्रहाणमिति भावेनाह **संन्यासशब्दार्थमिति** । ननु यदि द्वन्द्वत्याग एवात्र संन्यासः, तर्हि संन्यासकर्मयोगयोरेकेनापि कर्तुं शक्यत्वात् तयोरन्यतरं मे ब्रूहीति प्रश्नोऽनुपपन्न इत्यत आह **अयमिति** । यदि कर्मयोगोऽधिकः स्यात् तर्ह्येव युद्धं विधीयेत, यदि तु संन्यासः न तर्हि तद्विधानं घटते । युद्धस्य कामक्रोधात्मकत्वात्, तत्त्यागात्मकत्वाच्च संन्यासस्येति भावः । अमुख्याधिकारिषु युद्धकरणकामक्रोधहानयोर्विरोधित्वेऽपि मुख्याधिकारिष्वविरोधात् **ईषद्विरोधि इति** ॥

*प्र०दी०*— पूर्वसङ्गतत्वेनैतदध्यायप्रतिपाद्यमाह— **तृतीयेति** ।

कर्मयोगो नाम कर्माणि कृत्वा तेषां ब्रह्मात्मकत्वज्ञानमिति कश्चित् । तद्व्यावर्तयितुमेव-शब्दः । फलकामनादित्यागेनेश्वरार्पणबुद्ध्या वर्णाश्रमविहितानुष्ठानमेव कर्मयोगोऽत्र प्रपञ्च्यते । तस्यैव पूर्वमुक्तत्वात् । नान्यः । तस्याप्रकृतत्वात् । द्व्यंशश्चायं कर्मयोगः । कर्मादिवर्जनमीश्वरार्पण-बुद्ध्या कर्मानुष्ठानं चेति । तत्राद्यं संन्यासशब्दोक्तम् । द्वितीयमुपचारेण कर्मयोगशब्दोक्तम् । तदभिप्रायेण योगसंन्यासयोर्लक्षणं स्पष्टयतीत्यन्यत्रोक्तमिति । संन्यासमित्यादिना कुत्रोक्तमर्जुनो-ऽनुवदतीत्यत आह— **यदृच्छेति** । कर्मयोगमिति वदता 'कर्मणां' इत्येतद्योगशब्देन सम्बध्यत इत्युक्तं भवति । तथा च कर्मणां संन्यासं त्यागमिति व्याख्यानमसदिति सूचितम् । शंससी-त्यन्वयः । चतुर्थाध्यायोक्तस्यार्थस्यैतदध्यायोत्थानबीजत्वात्तृतीयाध्यायप्रपञ्चनात्मकस्याप्यस्य चतुर्था-नन्तर्यं युक्तमित्यनेन ज्ञापितम् । कृष्णशब्दो वर्णविशेषमात्रवचनम् इति प्रतीतिनिरासायाह— **नियमनादिनेति** ।

नित्यनैमित्तिककाम्यनिषिद्धरूपसर्वकर्मपरित्यागः संन्यासशब्दार्थ इति व्याख्यानं दूषयति— **संन्यासेति** । 'ज्ञेयः स नित्यसंन्यासी' इति संन्यासशब्दस्य भगवतैवान्यथाव्याख्यातत्वात्तद्विरुद्धं परव्याख्यानमित्यर्थः । यदि सर्वकर्मपरित्यागो न संन्यासशब्दार्थः किन्तु द्वेषादिवर्जनमेव तर्हि तस्य योगेन विरोधाभावात् संन्यासयोगयोर्विरोधाभिप्रायेण श्रेयःप्रश्नोऽनुपपन्नः स्यादित्यत आह— **अयमिति** । अत्र श्रेय इति यथास्थितगीतापदमनूद्य संन्यासपदानुगुण्येनाधिक इति व्याख्यातम् । नन्वेतत् 'घोर' इति चोदितम् । 'श्रेयान्' इति परिहृतं च । सत्यम् । अत एवात्रेषदित्युक्तम् । अतस्तत्त्यक्त्वा संन्यास एव कर्तव्ये किं वैगुण्यमङ्गीकृत्यापि युद्धं विधीयत इत्याशयशेषः ॥

*भा०दी०*— **पूर्वमुक्तत्वादिति** । 'कर्मण्यकर्म यः पश्येदि'त्यादित्यर्थः । यद्वा 'यज्ञार्थात्कर्मणोऽन्यत्रे'त्यादिनोक्तत्वादित्यर्थः । गीतातात्पर्यविरोधं निराह **द्व्यंशश्च प्रोक्तत्वादियमित्यादिना** । **उपचारेणेति** । फलकामत्यागयुतस्यैव मुख्यतः कर्मयोगशब्दार्थत्वादिति भावः । भाष्ये काङ्क्षितं पूरयति **शंससीत्यन्वय इति** । **अन्यथाव्याख्यानादिति** । ............. इति योज्यम् । **नन्वेतदिति** । द्वेषादिवर्जनरूपसंन्यासो युद्धादिकर्मतोऽधिक इति द्वेषादियुतं युतं कार्यमित्येतत् घो.................... ये चोदितं 'श्रेयान् स्वधर्मो विगुण' इत्यादिना परिहृतं चेत्यर्थः ॥

*भा०र०*— एवशब्देन कस्यचिद्व्याख्याननिरासम् उपपादयति **फलकामनादित्यागेनेति** । **पूर्वमुक्तत्वादिति** । "यज्ञार्थात्कर्मणोऽन्यत्र" (३.९) इति "कर्मण्यकर्म यः पश्येद्" (४.१८) इति वा पूर्वमुक्तत्वादित्यर्थः । **नान्यः** "ब्रह्मात्मकत्वज्ञानं कर्मयोगः" इति परोक्तो न ग्राह्य इत्यर्थः । ननु पूर्वोक्तकर्मयोगप्रपञ्चनपरत्वोक्तौ "योगसंन्यासयोः लक्षणं स्पष्टयति" (गी.ता. ५.१) इति गीतातात्पर्यविरोधः इत्याशङ्कां परिहर्तुमाह **द्व्यंशश्चायमिति** । एतेन "संन्यासस्यापि प्रपञ्चनात् कर्मयोगमेव प्रपञ्चयतीति कथं भाषणम् ?" इत्यपि निरस्तम् । **उपचारेणेति** । फलकामनादिवर्जनविशिष्टस्यैव कर्मयोगशब्दमुख्यार्थत्वेऽपि, अत्र ज्ञानसाधनादिमुख्यनिष्ठगुणयोगाद् गौण्या वृत्त्येत्यर्थः । 'योग' इत्यादितात्पर्यवाक्यार्थस्तु— पूर्वं समुच्चितः कर्मयोगो निरूपितः । स च योगसंन्यासभेदेन द्विविधः । द्विविधयोश्च स्वरूपं सङ्क्षेपेण "कुरु कर्माणि सङ्गं त्यक्त्वा" (२.४८) इत्यादावुक्तम् । तदेवानेनाध्यायेन स्पष्टयतीति **न्यायदीपिकातो**ऽवसेयः । **इत्यादिना** "संन्यासं कर्मणां कृष्ण पुनर्योगं च शंससि" इत्यनेन । 'इत्यादिना' इत्यत्र 'वाक्येन' इति योज्यम् । संन्यासं कर्मयोगमिति भाष्यार्थः ।

"कर्मणां संन्यासमवोचत्" इति सङ्करेण भाषणादाह **इति व्याख्यानमिति** । "ज्ञेयस्स नित्यसंन्यासी" (५.३) इति संन्यासशब्दस्य भगवतैवान्यथा व्याख्यानादिति दूषणहेतोर्वक्ष्यमाण-

त्वादिति भावः । कर्मणः क्रियासापेक्षत्वादाह **शंससीत्यन्वय इति** । भाष्यगतसंन्यासयोगपदयोर्द्वितीयान्तयोर्गीतागतशंससिपदेनान्वय इत्यर्थः । ननु तृतीयाध्यायोक्तार्थप्रपञ्चनपरत्वेऽस्य तृतीयानन्तर्यमिति शङ्काऽपि, चतुर्थाध्यायगतस्य 'यदृच्छालाभ' (४.२२) इत्यादिवाक्यस्य ग्रहणेन परिहृतेत्याह **चतुर्थाध्यायेति** । उक्तवाक्यस्य पुरोवादस्याभावे 'संन्यासम्' इत्यादितदनुवादेन प्रश्नायोगेन नैतदध्यायोत्थानमिति, तस्याप्युपजीव्यत्वादिति भावः ।

**वर्णविशेषमात्रवचन इति** । 'कृषेर्वर्णे' इति नक्प्रत्ययान्तात् "कृष्णो वर्णोऽस्यास्ति" इति मतुपि, तस्य "गुणवचनेभ्यो मतुपो लुग् वक्तव्यः" इति लुकि कृष्णशब्दो वर्णविशेषवद्वचन एव भवति । अपि तु "नियमनादिना लोकान् कर्षतीति कृष्णः" इत्यपि व्युत्पत्तिर्ग्राह्येति भावः । न च वक्तव्यं गुणादौ वर्णेऽभिधेये एव नक्प्रत्ययः कृषेर्विहितः, न पुनरन्यत्र वाच्य इति । "विष्णुर्नारायणः कृष्णः" (अ.को.) इत्यत्र " कर्षत्यरीनिति कृष्णः, बाहुलकाद्वर्णं विनाऽपि 'कृषेर्नक्' " इति वैयाकरणैरेव व्याख्यानात् । अस्ति चात्र पौराणिकी निरुक्तिरिति । भाष्ये **नियमनं** स्वस्वव्यापारेषु प्रेरणम् । आदिशब्देन यथासम्भवं सत्ताप्रतीत्यादि ग्राह्यम् । न केवलं संन्यासं कर्मयोगं च शंससि, किन्तु कारयस्यपीति भावेन 'कृष्ण' इति सम्बोधितो भगवानर्जुनेनेति कृष्णशब्देन सम्बोधनेऽभिप्राय उक्तः ।

**प्राचीनटीकायाम्** "संन्यासम् = कर्मणां परित्यागम्" इति **सङ्करेण** भाषणादाह **नित्येति** । **अन्यथा** कामादिवर्जनरूपत्वेन । **तस्य** द्वेषादिवर्जनस्य । गीतायां श्रुतस्य श्रेयःपदस्य क्लीबत्वात् तदनुरोधेन 'अधिकम्' इति वक्तव्ये कथं पुंलिङ्गप्रयोगः ? इत्यतस्तं घटयति **अत्र श्रेय इतीति** । **व्याख्यातं** गीतापदम् । अथापि प्रश्नानुपपत्तिः ? इत्याशङ्क्य समाधत्ते **नन्वेतदिति** । "द्वेषादिवर्जनरूपसंन्यासो युद्धादिकर्मतोऽधिक इति द्वेषादियुतं युद्धादिकं न कार्यम्" इत्येतत् "तत्किं कर्मणि घोरे मां नियोजयसि" (३.१) इति शङ्कितम् । "श्रेयान् स्वधर्मो विगुणः परधर्मात् स्वनुष्ठिताद्" (३.३५) इत्यादिना परिहृतं चेत्यर्थः । **अत एव** एवमपि प्रश्नस्य घटनीयत्वादेव । **प्राचीनटीकायां तु** "अमुख्याधिकारिषु युद्धकरणे कामक्रोधादिप्रसक्त्या विरोधित्वेऽपि मुख्याधिकारिष्वविरोधाद् ईषदित्युक्तम्" इत्युक्तम् । **वैगुण्यमिति** । सर्वथा कामादिवर्जनस्य कर्मयोगाङ्गत्वाद्, युद्धे च तदसम्भवाद् अङ्गहैन्यमित्यर्थः ॥ १ ॥

**गीतातात्पर्यनिर्णयः**

**योगसंन्यासयोर्लक्षणं स्पष्टयत्यनेनाध्यायेन ।**

*न्या०दी०*— एतदध्यायप्रतिपाद्यमर्थं दर्शयति **योगेति** ॥ पूर्वं समुच्चितः कर्मयोगो निरूपितः । स च योगसंन्यासभेदेन द्विविधः । द्विविधयोश्च स्वरूपं सङ्क्षेपेण "कुरु कर्माणि", "सङ्गं त्यक्त्वा" इत्यादावुक्तम् । तदेव अनेनाध्यायेन स्पष्टयतीत्यर्थः ।

*भा०दी०*— **समुच्चित इति** । दलद्वययुक्तः कर्मयोगः "तत्ते कर्म प्रवक्ष्यामी"ति प्रतिज्ञाय "कर्मणो ह्यपी"त्यादिना निरूपित इत्यर्थः ॥ **योगेति** । भगवदर्पणबुद्ध्या कर्मानुष्ठानं योगः । कामवर्जनं संन्यासः ॥ **इत्यादावुक्तमिति** । "योगस्थः कुरु कर्माणि" इत्यादिना द्वितीयोक्तस्य तृतीयचतुर्थयोः प्रपञ्चनादित्यादावुक्तमित्युक्तम् ।

**गीतातात्पर्यनिर्णयः**

**योगसंन्यस्तकर्माणमित्यादौ न्यासशब्दः सर्वकर्मत्यागविषय इत्याशङ्क्य योगसंन्यासयोर्भिन्नपुन्निष्ठत्वाभिप्रायेण पृच्छति संन्यासमिति ॥ १ ॥**

*प्रका०*— एतदध्यायप्रतिपाद्यं दर्शयित्वा संन्यासमिति अर्जुनप्रश्नं विवृणोति **योगेति** ॥ १ ॥

*न्या०दी०*— प्रश्नवाक्यं साभिप्रायमवतारयति **योगेति** ॥ "योगसंन्यस्तकर्माणम्" इत्यादौ पठितो न्यासशब्दो यत्याश्रमविषयो 'योगमातिष्ठ' इत्यादौ श्रुतो योगशब्दो गृहस्थाश्रमविषय इति कल्पयित्वा यतीनां सर्वकर्मत्यागेन ज्ञानमात्राधिकारित्वात् गृहिणां ज्ञानपरित्यागेन कर्ममात्राधिकारित्वात् तयोरेकपुन्निष्ठत्वं न युज्यत इति भावेन योगसंन्यासयोर्मध्ये श्रेयः पृच्छति । उभयस्यापि कर्तव्यतया विहितत्वादेकेनैवानुष्ठातुमशक्यत्वात् अन्यतरपरित्यागेनान्यतरग्रहणे श्रेयस एव गाह्यत्वादिति भावः ॥

**गीता**

**श्रीभगवानुवाच—**

**संन्यासः कर्मयोगश्च निःश्रेयसकरावुभौ ।**
**तयोस्तु कर्मसंन्यासात् कर्मयोगो विशिष्यते ॥ २ ॥**

*वि०वि०*— श्रीभगवानुवाच **संन्यास इति** । द्वावपि निःश्रेयसकरौ । तत्रापि संन्यासात् योगो विशिष्टोऽतो न युद्धं त्वया त्याज्यमिति परिहारः । द्वितीये प्रश्नाभिप्राये तु संन्यासकर्मयोगावुभौ समुचितौ निःश्रेयसकरौ, तस्मात् द्वावप्यनुष्ठेयौ तत्रान्यतरश्रेयस्त्वप्रश्नोऽनर्थक एव । स्वरूपमात्रज्ञानार्थं प्रश्नश्चेद्योग एव विशिष्ट इति ॥

***सा०सं०***— संन्यासयोगशब्दौ न सर्वकर्मत्यागतदनुष्ठानलक्षणयतिगृहिपरौ । तथा च तयोरन्यतरश्रेयः प्रश्नो न युक्तः । किन्तु कामादिवर्जनकर्मानुष्ठानार्थकौ । तयोश्चैकपुंयोग्यत्वान्निःश्रेयसकरत्वाच्चानुष्ठेयत्वात्, अन्यतरश्रेष्ठत्वप्रश्नो व्यर्थ एव । अथ स्वरूपज्ञानमात्रार्थं प्रश्नश्चेद्योग एव श्रेष्ठ इति भावेन परिहारमाह **संन्यास इति** । **संन्यासः** कामादिवर्जनरूपः । **कर्मयोगो** भगवदर्पणबुद्ध्या कर्मानुष्ठानरूपश्च । **उभौ** समुच्चितौ सन्तौ । **निःश्रेयसकरौ** । **तयोस्तु** मध्ये **कर्मसन्यासात्** कर्मणि संन्यासः कर्मसन्यासः, कर्मानुष्ठानविषये यः कामक्रोधद्वेषादिवर्जनरूपसंन्यासः तस्मात् । भगवदर्पणबुद्ध्या कर्मानुष्ठानरूपो यः **कर्मयोगः** स तु **विशिष्यते** श्रेष्ठो भवति । 'द्वन्द्वत्यागात् तु संन्यासान्मत्पूजैव गरीयसी' इत्युक्तेः ॥

***अ०प्र०***— तत्रोत्तरं **संन्यास इति** । अयं भावः । न हि वेदान्तवेद्यात्मतत्त्वविदं कर्मयोगमहमुपदिशामि यतः पूर्वोक्तेन संन्यासेन विरोधः स्यात् । अपि तु देहात्माभिमानिनं त्वां बन्धुवधादिनिमित्तशोकमोहादिकृतं मनःसंशयं देहजीवात्मपरमात्मविवेकज्ञानासिना छित्त्वा परमात्मभक्तिज्ञानोपायभूतं कर्मयोगमातिष्ठेति आज्ञापयामि । कर्मयोगेन शुद्धचित्तस्य विष्णुः सर्वोत्तमः सर्वान्तर्यामी सर्वकर्तेति ज्ञाने जाते सति तत्परिपाकार्थं ज्ञाननिष्ठाङ्गत्वेन संन्यासः पूर्वमुक्तः । एवं सति अङ्गप्रधानयोः विकल्पयोगात् स्पष्टीकरोति **संन्यासः कर्मयोगश्चेति** ।

अथान्वयः— हे अर्जुन !, संन्यासः[1], कर्मयोगश्चेत्येतौ[2], उभावपि[3], निःश्रेयसकरौ[4], तयोस्तु[5], कर्मयोगः[6], कर्मसंन्यासात्[7], विशिष्यते[8] ।

संन्यासः कर्मयोगश्चेत्येतौ[2], उभावपि = द्वावपि[3], निःश्रेयसकरौ = मोक्षसाधकौ[4], तयोस्तु मध्ये[5], कर्मयोगः = विहितानुष्ठानरूपकर्मयोगः[6], कर्मसंन्यासात्सकाशात् = कर्मत्यागरूपसंन्यासात्सकाशात्[7], विशिष्यते श्रेष्ठो भवति[8], अतो युद्धं न त्याज्यमिति भावः । द्वितीयप्रश्नाऽऽशये तु संन्यासः कर्मयोगश्चेत्युभौ समुचितावेव मुक्तिसाधकौ यतो यौ द्वावपि अनुष्ठेयौ एकेन पुंसा तत्रान्यतरश्रेयस्त्वप्रश्नो व्यर्थ एव स्वरूपमात्रज्ञानार्थं प्रश्नश्चेत्यत्र कर्मसंन्यासात् कर्मयोगो विशिष्यत इति संन्यासस्य मोक्षसाधकत्वमुपपादयितुं संन्यासशब्दार्थं स्मारयति ॥ २ ॥

**भाष्यम्**

**नायं संन्यासो यत्याश्रमः— "द्वन्द्वत्यागात्तु संन्यासात् मत्पूजैव गरीयसी" इति वचनात् । "तानि वा एतान्यवराणि तपांसि, न्यास एवात्यरेचयत्" इति च ॥**

"संन्यासस्तु तुरीयो यो निष्क्रियाख्यः सधर्मकः ।
न तस्मादुत्तमो धर्मो लोके कश्चन विद्यते ।
तद्भक्तोऽपि हि यद्गच्छेत्तद्गृहस्थो न धार्मिकः ।
मद्भक्तिश्च विरक्तिस्तदधिकारो निगद्यते ।
यदाऽधिकारो भवति ब्रह्मचार्यपि प्रव्रजेत् ॥"

—इति नारदीये ॥

"ब्रह्मचर्यादेव प्रव्रजेत्", "यदहरेव विरजेत्" इति च ॥

"संन्यासे तु तुरीये वै प्रीतिर्मम गरीयसी ।
येषामत्राधिकारो न तेषां कर्मेति निश्चयः ॥"

—इत्यादेश्च ब्राह्मे ॥

**अतो नात्राश्रमः संन्यास उक्तः ॥ २ ॥**

***प०टी०***— नन्वेवं प्रश्नाभिप्रायकथनादपि वरं 'संन्यास'पदोक्तयत्याश्रम'योग'पदोक्तपारमहंस्ययोः किं वरमित्याभिप्रायकथनमित्यत आह **नायमिति** । अत्र संन्यासादपि योगस्याधिक्यमुच्यते । तच्च 'संन्यास'पदेन द्वन्द्वत्यागग्रहण एवोपपन्नं न यत्याश्रमग्रहणे, तस्य योगादुत्तमत्वात् । अतो नात्राश्रमसंन्यास इत्यभिप्रायेणाह **द्वन्द्व इति** ॥

***न०टी०***—नन्वेतत्प्रश्नपरिहारविषयौ द्वन्द्वत्यागकर्मयोगौ कस्मात् ? यत्याश्रमकर्मयोगौ किं न स्याताम् ? इत्याशङ्क्य, द्वन्द्वत्यागादेव संन्यासात् कर्मयोगस्याधिकवचनात्, यत्याश्रमात् गृहस्थादिकर्मणामाधानाग्निहोत्रादीनामवरत्ववचनाच्च, इति भावेनाह **नायमिति** । **यान्येतानि** आधानाग्निहोत्रादीनि **तपांसि तान्यवराणि वै न्यास एवात्यरेचयत्** अधिकोऽभवदित्यर्थः । 'एतत् खलु वाव तप इत्याहुः, यः स्वयं सन्ददाति' इति तपस्त्वेन श्रूयमाणदक्षिणादानपूर्वत्वात् तपस्त्वमाधानादीनाम् । ननु यत्याश्रमादपि संन्यासाद्वरः कर्मयोगः । संन्यासस्य निष्क्रियत्वात्, अनिष्टपरिहारमात्रत्वेनाल्पफलत्वात्, कर्मयोगासमर्थवृद्धान्धपङ्ग्वाद्यधिकारित्वाच्च । कर्मयोगस्य तु वेदाद्युक्तसर्वकर्मानुष्ठानलक्षणत्वात्, स्वर्गादिसर्वेष्टफलत्वात्, समर्थाधिकारित्वाच्च । अतो यत् संन्यासस्य कर्मयोगादाधिक्यवचनं वेदे तदुत्तमे वयस्यनुष्ठीयमानत्वेनोपचारमात्रमित्याशङ्कापरिहारत्वेन नारदीयवाक्यनुदाहरति **संन्यासस्त्विति** । कुटीचकात् **तुरीयो यः** पारमहंस्यलक्षणसंन्यासः स बाह्य-

कर्मसङ्कोचेन निष्क्रियाख्योऽपि स्वविहितासाधारणमहाधर्मत्वेन सधर्मकश्च । अतो क्रियत्वादक्रियत्वाद्वा न तस्य कर्मयोगादवरत्वम् । संन्यासिभक्तोऽपि धार्मिकगृहस्थप्राप्यान्महदिष्टं प्राप्नोति, किमुत संन्यासीति । नानिष्टपरिहारमात्रत्वेनाल्पफलत्वादवरत्वं संन्यासस्य । नापि कर्मयोगासमर्थाधिकारत्वेनावरत्वं संन्यासस्य । धर्ममात्रदुर्लभहरिभक्तीतरविरक्त्योः संन्यासाधिकारिविशेषत्वात् । अतो यदा हरिभक्तीतरविरक्ती भवतः तदा एव संन्यसेत् ब्रह्मचर्यादपि, न चरमे वयसीति नियमः । अतो यदुक्तं **न्यास एवात्यरेचयत्** इति तन्मुख्यमेव । नोत्तमे वयस्यनुष्ठीयमानत्वेन उपचारमात्रमित्यर्थः । हरिभक्तीतरविरक्त्योरेव संन्यासाधिकारिविशेषणत्वमित्येतच्छ्रुत्याऽपि समर्थयति **ब्रह्मचर्यादिति । विरजेदिति** । हरौ विशिष्टरागोऽन्यत्र विरागो भवेदित्यर्थः । अतः कर्मकरणासमर्थानामेव संन्यास इति मत्वा न तस्यावरत्वं कल्पनीयम् । भगवदतिप्रीतिविषयत्वात्, तदनधिकारिणामेव कर्मविधानाच्च, वरः संन्यासस्तुरीय इत्येतत् ब्रह्मपुराणवाक्येनाह **संन्यासेति** । यत एव श्रुतिपुराणयुक्तिभ्यः संन्यासस्याधिक्यं प्रतीयते तुरीयस्य, अतोऽत्र प्रश्नपरिहाराभ्यामवरत्वेनोक्तः संन्यासः न यत्याश्रम इत्युपसंहरति **अत इति** ॥

***प्र०दी०***— संन्यासमिति प्रश्नवाक्ये संन्यास इति परिहारवाक्ये च संन्यासयोगशब्दौ यतिगृहस्थाश्रमविषयावेव । तयोः सर्वकर्मत्यागतदनुष्ठानरूपत्वात् । 'ज्ञेय' इति वचनं तु न संन्यासशब्दव्याख्यानपरम् । किन्तु यो द्वेषादिवर्जितो गृही सोऽपि संन्यासी ज्ञातव्य इति स्तुतिपरमेवेत्यत आह— **नायमिति** । अयं परिहारवाक्यस्थः । प्रश्नवाक्यस्थस्य तात्पर्यनिर्णये तथाऽभ्युपगतत्वात् । योगश्च न गृहस्थाश्रम इत्यपि द्रष्टव्यम् । कुतो नेति चेत्, अत्र 'तयोस्तु' इति संन्यासात् कर्मयोगस्य विशिष्टत्ववचनात् । तस्य चास्मत्पक्ष एव सम्भवात् । अन्यत्रासम्भवादिति भावः । कुतो भवत्पक्षे सम्भव इत्यत आह— **द्वन्द्वेति** । मत्पूजा मदर्पणबुद्ध्या कर्मानुष्ठानम् । आश्रमार्थत्वे कुतोऽसम्भव इत्यत आह— **तानीति** । तान्याधानादीनि । अत्यरेचयत् (अत्यरिच्यत) अतिरिच्यते । इति वचनादिति वर्तते । न्यस्यतेऽस्मिन् सर्वमिति ब्रह्मैव न्यास इति कश्चित् । तदसत् । तपोऽपेक्षयोत्तमत्वाभिधानस्यासङ्गतत्वात् । उपायोपेयभावेन सङ्गतिरिति चेत्तर्हि तत्सिद्धौ लोकत एवोत्तमत्वसिद्धेरभिधानवैयर्थ्यात् ।

गृहस्थाश्रमाद्यत्याश्रमस्योत्तमत्वमयुक्तम् । गृहस्थाश्रमो हि सर्वधर्मोपपन्नः । तत्समर्थे मध्यमे वयस्यनुष्ठेयो महाफलश्च । यत्याश्रमस्तु निष्क्रियश्चरमे वयसि गृहस्थकर्मानधिकृतैरन्धपंग्वादिभिरनुष्ठेयोऽल्पफलश्चेति केचित् । तन्निरासार्थमाह— **संन्यासस्त्विति** । काम्यकर्मरहितत्वान्निष्क्रिया-

स्थ्योऽपि सधर्मकः । न केवलं सधर्मकः । किन्तु न तस्माद्यत्याश्रमानुष्ठेयाद्यतिभक्त्यापि यत्फलं प्राप्नुयान्न तत् सर्वैर्गृहस्थधर्मैरित्यर्थः । ब्रह्मचर्यादेव ब्रह्मचर्यं विसृज्यैव । विरजेत् विरक्तो भवेत् । 'तदहरेव प्रव्रजेत्' इति श्रुतिशेषः । कर्मेत्याश्रमान्तरम् । यदुक्तं नायमित्यादि तदुपसंहरति— **अत इति** । **अत्र** परिहारवाक्ये ॥

*भा०दी०*— **तात्पर्येति** । योगसंन्यस्तकर्माणमित्यादौ ............ तात्पर्यनिर्णये यतिपरत्वाभ्युपगमादित्यर्थः । **अस्मत्पक्षे एवेति** । कामादिवर्जनं संन्यासशब्दार्थभगवद........................ ष्ठानं कर्मयोग इति पक्ष एव् न तु गृहस्थयतिपरः संन्यासादिशब्द इति पक्ष इत्यर्थः । **इत्यनुवर्तत इति** । ................तो संन्यासशब्दितयतेरुत्कर्षस्य वचनसिद्धत्वाद्गीतायां तयोरित्यर्थे संन्यासात्कर्मयोगपदोक्तगार्हस्थस्योक्तादि ........... रुद्धेति भावः । ल्यब्लोपे पञ्चमीति भावेनाह **ब्रह्मचर्यं विसृज्यैवेति** ॥

*भा०र०*— **संन्यासमितीति** । "संन्यासं कर्मणां कृष्ण पुनर्योगं च शंससि" (५.१) इति प्रश्नवाक्ये, "संन्यासः कर्मयोगश्च निश्रेयसकरावुभौ" इति परिहारवाक्ये चेत्यर्थः । **तयोः** यतिगृहस्थाश्रमयोः । संन्यासशब्दस्य यत्याश्रमरूपसर्वकर्मत्यागपरत्वे भगवद्व्याख्यानविरोधः ? इत्याशङ्क्याह **ज्ञेय इति वचनं त्विति** । प्रश्नवाक्येऽपि तस्य सद्भावात् किं विशिष्याभिधीयते "अयं परिहारवाक्यस्थः" इति ? इत्यत आह **प्रश्नवाक्यस्थस्येति** । "संन्यासं कर्मणां कृष्ण" (५.१) इति प्रश्नवाक्यस्थसंन्यासशब्दस्य "योगसंन्यासयोर्भिन्नपुन्निष्ठत्वाभिप्रायेण पृच्छति" (गी.ता.५.१) इति तात्पर्यनिर्णयपर्यालोचनायां यत्याश्रमपरत्वेनाभ्युपगतत्वावेदनाद्, अत्र भाष्ये परिहारवाक्यस्थ एव संन्यासशब्दो न यत्याश्रमार्थ इत्युक्तमिति भावः । संन्यासयोगशब्दौ यतिगृहस्थाश्रमविषयावेवेति शङ्कनाद् भाष्ये कथमेकस्यैव प्रतिक्षेपः ? इत्याशङ्क्य 'नायम्' इति भाष्यमुपलक्षणमिति भावेनाह **योगश्चेति** । **अत्र** परिहारवाक्ये । **अस्मत्पक्ष एव** "भगवदर्पणबुद्ध्या कर्मानुष्ठानं कर्मयोगः" इति पक्ष एव । **अन्यत्र** गृहस्थयत्याश्रमविषयत्वे । प्रकृतासङ्गतिमाशङ्क्य भाष्यं व्याचष्टे **मत्पूजेति** । 'तानि' इत्यनुवादः, 'आधानादीनि' इति व्याख्या ।

"सत्यं परं परं सत्यम्" इत्यादिना नारायणानुवाके "सत्य-तपः-दम-शम-दान-धर्म-प्रजनन-अग्न्याधान-अग्निहोत्र-यज्ञ-मानस-संन्यासानां मध्ये सत्यादीनाम् आदित्वेन पाठेऽपि अग्न्याधान-अग्निहोत्र-यज्ञानामत्र ग्रहणं गृहस्थकर्मतोऽपि संन्यासस्य स्फुटमतिशयं द्योतयितुम् । गार्हस्थ्यसंन्यासयोः प्रस्तुतत्वात् सत्यादीनामुभयसाधारणत्वात्, "तस्मादग्नय आधातव्याः" (म.ना.उ.) इत्यग्न्याधानादेर्विशिष्य विधानाच्च "आधानादीनि" इत्युक्तम् । श्रुतिशेषार्थतपरस्त्वघटना

च "यान्येतानि आधानाग्निहोत्रादीनि तान्यवराणि वै" इति । "एतत्खलु वाव तप इत्याहुः य स्वं सन्ददाति" (कृ.य.का.६.प्र.१,अनु.६) (४१) इति यजुःसंहितावाक्योदाहरणपूर्वं तपस्त्वेन श्रूयमाणदक्षिणादानपूर्वत्वात् तपस्त्वमाधानादीनामिति **प्राचीनटीकायां** कृता ।

णिचः स्वार्थिकत्वम्, लङश्च "छन्दसि लुङ्लङ्लिटः" इति लडर्थत्वम् इत्यभिप्रेत्य व्याचष्टे **अत्यरेचयत् अतिरिच्यत इति** । अधिको भवतीत्यर्थः । "अधिकोऽभवद्" इति **प्राचीनटीकारीत्या** अत्रापि 'अत्यरिच्यत' इत्यपि भवति । "इति च" इति भाष्यपदमनूद्य तदन्वयायाह **इतीति** । **ब्रह्मैव न्यास इतीति** । "तानि वा एतान्यवराणि" (म.ना.उ.१६.१२) इति श्रुत्युक्तः संन्यासशब्दार्थ उक्तव्युत्पत्त्या ब्रह्मैव, इति न गृहस्थाश्रमापेक्षया संन्यासाश्रमस्यातिशयप्रतिपादनपरेयं श्रुतिरिति भावः । **उपायेति** । तपसो ब्रह्मप्राप्त्युपायत्वं तु "तपसा ब्रह्म विजिज्ञासस्व" (तै.उ.अ.३,मं.२) इत्यादिश्रुतिसिद्धमिति भावः । **तत्सिद्धौ** उपायोपेयभावसिद्धौ । **अभिधानवैयर्थ्यादिति** । "अप्राप्ते शास्त्रमर्थवद्" (मी.सू. ६.२.१८) इति हि प्रवाद इति भावः । एतच्च श्रुतौ तपःपदप्रयोजनकथनमिति **आहुः** ।

"गृहस्थाश्रमो हि" इत्यत्र 'हि'शब्दो 'यतः' इत्यर्थे । 'महाफलश्च' इति सम्बन्धः । तेन 'अयुक्तम्' इति साध्यान्वयो युक्तः । **तत्समर्थे** सर्वधर्माचरणसमर्थे । **वयसि** इत्यत्र वयः कालकृतशरीरावस्था । इदं च "न तस्मादुत्तमो धर्मः" (ना.पु.) इत्यादेर्व्यावर्त्यम् । "निष्क्रियाख्यः सधर्मकः" (ना.पु.) इत्यस्य व्यावर्त्यम् **यत्याश्रम इति** । "मद्भक्तिश्च विरक्तिः तदधिकारः" (ना.पु.) इत्यस्य व्यावर्त्यकथनम् **अन्धपंग्वादिभिरिति** । 'तद्भक्तोऽपि' इत्यस्य निवर्त्यम् **अल्पफलश्चेति** । 'निष्क्रियाख्यः', 'सधर्मकः' इत्येतयोर्विरोधं परिहर्तुमाह **काम्यकर्मरहितत्वादिति** । **सधर्मकः** तदुचितसर्वधर्मोपपन्नः । "संन्यासस्तु तुरीयः" (ना.पु.) इत्यस्य कुटीचकात् **तुरीयः संन्यासः** परमहंसलक्षण इति **प्राचीनटीका** । "न तस्माद्" इति भाष्यमवतारयति **न केवलमिति** । 'तस्मात्' इत्यस्यार्थः **यत्याश्रमानुष्ठेयादिति** । गृहस्थाश्रमाद् अल्पफलत्वं यद् उक्तं तद् व्युदसितुम् **तद्भक्तोऽपीति** । भाष्यतात्पर्यमाह **यतिभक्त्याऽपीति** । चरमे वयसि यत्याश्रम आपादनीय इत्येतद्दूषयितुम् 'मद्भक्तिश्च' इति भाष्यम् । हरिभक्ति-इतरविरक्त्योरेव संन्यासाधिकारिविशेषणत्वात् तत्सद्भावे ब्रह्मचारिणोऽपि प्रव्रजनावेदनान्न परोक्तं युक्तमिति तदर्थः ।

"हरिभक्ति-इतरविरक्त्योरेव संन्यासाधिकारिविशेषणत्वम्" इत्येतत् श्रुत्याऽपि समर्थयते 'ब्रह्मचर्यादेव' इति अवतारितं **प्राचीनटीकायाम्** । तत्र पञ्चमी ल्यब्लोपनिमित्तेत्याह **ब्रह्मचर्यं विसृज्येति** । 'प्रासादात्प्रेक्षते' इत्यत्र 'प्रासादमारुह्य' इति यथेति भावः । **प्रव्रजेत्** संन्यस्येत् ।

'यदहरेव' (जा.उ.४.१.) इति श्रुतौ 'कालाध्वनोरत्यन्तसंयोगे' इति द्वितीया । यस्मिन्नेवाहनी-त्यर्थः । तत्र 'विरजेत्' इत्यनूद्यार्थमाह **विरजेद्विरक्तो भवेदिति** । **प्राचीनटीकायां** तु **विरजेत्** हरौ विशिष्टरागः, अन्यत्र विगतरागो भवेदित्यर्थ उक्तः । **इति श्रुतिशेष इति** । तथा च हरिभक्ति-इतरविरक्तिसद्भावे संन्यासविधानान्न चरमे वयसीति नियम इति भावः ।

भगवदतिप्रीतिविषयत्वात् तदनधिकारिणामेव कर्मविधानाच्च "वरः संन्यासस्तुरीयः" इति पुराणवाक्येनाह **संन्यास इति** । "तुरीये पारमहंस्यलक्षणे" इति **प्राचीनटीकायाम्** अवतारितं वचनमिति । तत्र कर्मशब्दार्थं प्रकृतोपयुक्तमाह **कर्मेत्याश्रमान्तरमिति** । अन्य आश्रम आश्रमा-न्तरम् । मयूरव्यंसकादित्वात् समासः । गृहस्थाद्याश्रम इत्यर्थः । 'अतः' इति भाष्ये स्मृत्यादि-साधकसद्भावात्, गृहस्थाश्रमाद् यत्याश्रमस्योत्तमत्वमयुक्तम् इत्याद्युक्तबाधकाभावाच्चेत्यर्थः स्फुट इति भावेन, 'अत्र' इत्येतदेव व्याख्यातम् **परिहारवाक्य इति** । प्रश्नवाक्यस्थस्य तात्पर्यनिर्णये (गी.ता. ५.१) तथाऽभ्युपगतत्वादित्युक्तमेवेति भावः । अत्रोक्तः संन्यासो नाश्रम इति भाष्येऽन्वयः ॥२॥

**गीतातात्पर्यनिर्णयः**

**एकपुंयोग्यावेतौ तयोर्मध्ये योग एव विशिष्ट इति परिहाराभिप्रायः । उभौ समुच्चितौ ।**

**"संन्यासस्तु महाबाहो दुःखमाप्तुमयोगतः ॥"**

**—इति वक्ष्यमाणत्वात् ॥ २ ॥**

***प्रका०*—** संन्यास इत्येतद्भगवद्वचनं विवृणोति **एकेति** । अत्र उभावित्यनेन संन्यास-कर्मयोगयोः निःश्रेयसकरत्वमुच्यते । न त्वमिलितयोः । "संन्यासस्तु महाबाहो दुःखमाप्तुमयोगत" इत्युपरिश्रवणात् । योगरहितस्तु संन्यासो दुःखमाप्तुमेव भवति । न तु श्रेयस्कर इत्यर्थः ॥

***न्या०दी०*—** ननु योगसंन्यासयोर्मध्ये श्रेयोमात्र एवायं प्रश्नो, न तूक्तरीत्या विरोधाभि-प्रायेण । तथात्वे परिहाराभावादित्यतः परिहारवाक्याभिप्रायमाह **एकेति** ॥ उभयोरेकपुंयोग्यत्वात् निःश्रेयसकरत्वाच्च अनुष्ठेयत्वादन्यतरस्य श्रेष्ठत्वे प्रश्नो व्यर्थ एव । अथ स्वरूपज्ञानमात्रार्थः प्रश्नश्चे-द्योग एव विशिष्ट इति भावः । योगसंन्यासयोरेकपुंयोग्यत्वाभिधायकं पदमात्र न श्रूयत इत्यत-स्तत्पठित्वा व्याचष्टे **उभाविति** ॥ द्वावपि प्रत्येकं श्रेयस्करावित्यर्थः किं न स्यादित्यत आह **संन्यासस्त्विति** ॥ योगरहितसंन्यासस्य अनर्थकरत्वोक्तेः संन्यासरहितयोगस्यैव असम्भवात् समुच्चितयोरेव निःश्रेयसकरत्वम् उच्यते न प्रत्येकमिति भावः ॥

*भा०दी०*— पूर्वोत्तरगीतार्धयोरभिप्रायमाह **उभयोरिति** ॥ **अथ स्वरूपेति** । एतेन द्वयो- र्निःश्रेयसकरत्वमुक्त्वाऽन्यतरवैशेष्योक्तिरयुक्तेति निरस्तम् ॥ **असम्भवादिति** । भगवदर्पणबुद्ध्या- ऽनुष्ठानस्य कामादिवर्जनाभावे अयोगादित्यर्थः ॥ २ ॥

**गीता**

**ज्ञेयः स नित्यसंन्यासी यो न द्वेष्टि न काङ्क्षति ।**
**निर्द्वन्द्वो हि महाबाहो सुखं बन्धात् प्रमुच्यते ॥ ३ ॥**

*वि०वि०*— संन्यासस्य निःश्रेयसकरत्वं ज्ञापयितुं संन्यासशब्दार्थं स्मारयति **ज्ञेय इति** । स्मर्तव्य इत्यर्थः । व्याख्यानान्तरे तु कथं योगसंन्यासयोः समुच्चयो युज्यते यतिगृहस्थयोरधिकार- भेदादित्यत आह **ज्ञेय इति** । 'योगसंन्यस्तकर्माणम्' इत्यादौ द्वेषादिवर्जनमेव संन्यासोऽभिमतो न यत्याश्रम इति भावः । एवं 'योगमातिष्ठ' इत्यादौ भगवदर्पणादियोग एवाभिप्रेतो न गृहस्थाश्रम इत्यपि द्रष्टव्यम् । न च कामादिवर्जनस्य संन्यासशब्दार्थत्वे 'काम्यानां कर्मणां न्यासं संन्यासम्' इत्यनेन विरोधः । तेनापि सहितस्य सत्वात् । न च 'सर्वकर्मफलत्यागं प्राहुस्त्यागं विचक्षणाः' इति कामादिवर्जनस्य त्यागत्वेनोक्तत्वात्तद्विरोधः । कुरुपाण्डवन्यायेन संन्यासावान्तरभेदत्वात् त्याग- स्येति द्रष्टव्यम् ॥

*सा०सं०*— संन्यासशब्दो न यत्याश्रमपर इति भावेन तदर्थमाह **ज्ञेय इति** । यद्यपि 'यदृच्छालाभ..' इत्यादिनोक्तं कामादित्यागरूपं संन्यासं 'संन्यासं कर्मणाम्' इत्यनूद्यार्जुनेन प्रश्नस्य कृतत्वात्, अस्त्येव तस्य संन्यासशब्दार्थज्ञानम्, अतोऽसौ तं प्रति न वाच्यः । तथाऽपि संन्यासस्योक्तं निःश्रेयसकरत्वमुपपादयितुं ज्ञानमपि तदर्थं स्मारयत्यनेनेत्यदोषः । हे **महाबाहो ! यो** द्वेषाकाङ्क्षादिहीनः, काम्यकर्मत्यागी चेत्युपलक्ष्यते । **स नित्यसंन्यासी ज्ञेयः** स्मर्तव्यः । स एव **सुखं** यथा भवति तथा अनायासेन, **बन्धात् प्रमुच्यते** । हि प्रसिद्धमिति युद्धकर्म त्वया न त्याज्यमिति ॥

*अ०प्र०*— कुत इत्यपेक्षायां संन्यासित्वेन कर्मयोगिनं स्तुवन् श्रेष्ठत्वं दर्शयति **ज्ञेय इति** ।

हे महाबाहो ![१], यः[२], न द्वेष्टि[३], न काङ्क्षति[४], निर्द्वन्द्वश्च यः[५], सः[६], नित्यसंन्यासी[७], ज्ञेयः[८], स एव हि[९], सुखं[१०], बन्धात्[११], प्रमुच्यते इत्यन्वयः ।

हे महाबाहो ![१], यः पुरुषः[२], न द्वेष्टि = प्रारब्धवशात् दुःखं प्राप्तं चेत् न द्वेष्टि[३], न काङ्क्षति = अप्राप्तं नेच्छति । समस्तपदेन द्वेषकामाभ्यां हि नः[४], निर्द्वन्द्वश्च = रागद्वेषशीतोष्णसुखदुःखादीनि द्वन्द्वानि तच्छून्यः यद्वा अहं मदीयमिति देहस्मृतिः यस्यान्तःकरणादपगता सः निर्द्वन्द्वश्च[५], एतादृशो यः रागद्वेषादिराहित्येन परमेश्वरार्थं कर्माणि अनुतिष्ठति सः[६], नित्यसंन्यासी ज्ञेयः स एव नियमेन संन्यासी स्मर्तव्यः । यद्वा नित्यं कर्मानुष्ठानकालेऽपि संन्यासीत्येवं ज्ञेयः[८], स एव हि = हि यस्मान्निवृत्तान्तःकरणः तस्मात् निश्चयेन[९], सुखं यथा भवति तथा शुद्धचित्तो ज्ञानद्वारा अनायासेन[१०], बन्धात् = संसारात्[११], प्रमुच्यते = मुक्तो भवति ॥ ३ ॥

**भाष्यम्**

**संन्यासशब्दार्थमाह— ज्ञेय इति । संन्यासस्य निःश्रेयसकरत्वं ज्ञापयितुं तच्छब्दार्थं स्मारयति— ज्ञेय इति ॥ ३ ॥**

***प०टी०***— ननु कथं महाफलाच्छक्ताधिकारिविषयाद्गृहस्थाश्रमादल्पफलस्थविरोधिकारिकस्य ......यत्याश्रम एव विवक्षितः ? इत्यत आह **संन्यासस्येति** ॥

***न०टी०***—द्वन्द्वत्यागस्यैतत्संन्यासशब्दार्थत्वेनोच्यमानत्वाच्च न पूर्वोक्तसंन्यासो यत्याश्रम इति भावेनाह **संन्यासशब्दार्थमिति** । नन्वनेन यत्याश्रममेव संन्यासशब्दार्थत्वमर्जुनः पृच्छतीत्यवगम्यते । अन्यथा तं प्रति संन्यासशब्दार्थाभिधानवैयर्थ्यादित्यत आह **संन्यासस्येति** । द्वन्द्वत्यागलक्षणसंन्यासोऽर्जुनस्य प्रसिद्धोऽपि सुस्मरणार्थं भगवतोच्यत इत्यदोषः । तत्र स्मरणं चास्य संन्यासस्य निःश्रेयसकरत्वज्ञापनाय । द्वन्द्वत्यागस्यान्यत्र निःश्रेयसकरत्वप्रसिद्धेः 'द्वन्द्वातीतः कृत्वाऽपि न निबध्यते' इत्यादाविति भावः ॥

***प्र०दी०***— 'ज्ञेय' इत्यस्यापव्याख्यानं दूषयंस्तत्तात्पर्यमाह— **संन्यासेति** । अर्थान्तरस्याप्रतीतेरिति भावः । ननु 'यदृच्छालाभसन्तुष्ट' इत्यादिनोक्तं कामादिपरित्यागं संन्यासं कर्मणामित्यनूद्यार्जुनस्यायं प्रश्न इत्युक्तम् । ततश्च जानात्येवासौ संन्यासशब्दार्थमिति न तं प्रति स वक्तव्यः । तथा च पूर्वपक्ष्युत्प्रेक्षित एवास्यार्थ इत्यत आह— **संन्यासस्येति** । "संन्यासः कर्मयोगश्च निःश्रेयसकरावुभौ" इति यत्संन्यासस्य निःश्रेयसकरत्वमुक्तं तदुपपादयितुं ज्ञातमपि संन्यासशब्दार्थं स्मारयत्यनेन । द्वेषादिवर्जनं हि संन्यासः । तस्य निःश्रेयसकरत्वं श्रुत्यादिप्रसिद्धमेवेति । अतः संन्यासशब्दार्थकथन एव तात्पर्याभावान्नानुपपत्तिरित्यर्थः । ज्ञापकं चास्यार्थस्यास्तीत्याह— **ज्ञेय इतीति** । ज्ञेयः स्मर्तव्य इति ह्यनेनोक्तमित्यर्थः । योगस्य तु निःश्रेयसकरत्वमुत्तरवाक्य एव सेत्स्यति ॥ ३ ॥

***भा०दी०*— अपव्याख्यानमिति** । ............... .........पूर्वपक्ष्युत्प्रेक्षित एवेति ज्ञेय इति वचनं संन्यासशब्दव्याख्यानपरमित्यादिनोक्त इत्यर्थः । श्लोकतात्पर्यं व्यनक्ति ...... गीतास्थ हि शब्दार्थः । **श्रुत्यादिप्रसिद्धमेवेति** । **उत्तरवाक्य एवेति** । साङ्ख्ययोगावित्यत्रेत्यर्थः ॥

***भा०र०*— अपव्याख्यानमिति** । "ज्ञेय इति वचनं न संन्यासशब्दव्याख्यानपरम्, किन्तु 'यो द्वेषादिवर्जितो गृही सोऽपि संन्यासी ज्ञातव्यः' इति स्तुतिपरमेव" इत्यपव्याख्यानमित्यर्थः । तथा च **सङ्करः** ."यो न द्वेष्टि किञ्चिन्न काङ्क्षति दुःखं सुखं वा तत्साधनं च, एवंविधो यः स कर्मणि प्रवर्तमानोऽपि स नित्यसंन्यासी ज्ञातव्य इति स्तौति" इति अपव्याख्यानदूषणं भाष्य-भावोक्त्या व्यनक्ति **अर्थान्तरस्येति** । गृहस्थबोधकपदाभावेन परोक्तार्थस्याप्रतीतेरित्यर्थः । **तम्** अर्जुनं प्रति । **सः** संन्यासशब्दार्थो वक्तव्यः । "उच्यते योऽसौ ज्ञेयस्स नित्यसंन्यासी इति" इति योज्यम् । ततः किम् ? इत्यत उक्तम् **तथा चेति** । **पूर्वपक्ष्युत्प्रेक्षित इति** । "ज्ञेय इति वचनं तु" इत्यादिना **सङ्करेण** कल्पित एव । **अस्य** "ज्ञेय इति वचनस्य" अर्थ इत्यर्थः । 'ज्ञापयितुम्' इत्यस्य "ज्ञानं तं प्रेरयितुम्" इत्यर्थः । तत्र प्रेरणम् उपपादनमेवेत्याह **तदुपपादयितुमिति** । उपपत्तियुक्ततयाऽभिधातुमित्यर्थः । **अनेन** 'ज्ञेयः' इति वचनेन । काऽसावुपपत्तिः ? इत्यत आह **द्वेषादीति** । 'प्रसिद्धमेव' इति गीतागतहिशब्दार्थः । **नानुपपत्तिरिति** । "न तं प्रति स वक्तव्य इत्युक्तानुपपत्तिर्न" इत्यर्थः । **ज्ञेयः स्मर्तव्य इतीति** । अनेन भाष्ये यद् द्वितीयं "ज्ञेय इति" इति वाक्यं तद् ज्ञापकमेव, न तु गीताप्रतीकग्रहणमित्युक्तं भवति । नन्वेवमभिप्राये योगस्यापि निःश्रेयसकरत्वमत्र वक्तव्यम्, सन्नियोगशिष्टत्वात् ? इत्यत आह **योगस्य त्विति** । **उत्तरवाक्ये** "साङ्ख्ययोगौ पृथक्" (५.४) इति समनन्तरवाक्ये ॥ ३ ॥

***गीताश्लोकत्रयाक्षरार्थस्तु*—** "फलकामनादित्यागेनेश्वरार्पणबुद्ध्या स्ववर्णाश्रमविहितकर्मानु-ष्ठानमेव कर्मयोगः" इत्युक्तं तृतीये (३.९) । तदेवात्र प्रपञ्च्यत इति तावद् अध्यायप्रतिपा-द्योऽर्थः । द्व्यंशश्चायमुक्तः कर्मयोगः— कामादिवर्जनम्, ईश्वरार्पणबुद्ध्या कर्मानुष्ठानं चेति । तत्र "यदृच्छालाभसन्तुष्टः" (४.२२) इत्यादिनोक्तं संन्यासम् "कुरु कर्मैव तस्मात्त्वम्" (४.१५) इत्यादिनोक्तं योगं चानूद्य प्रशस्यतरबुभुत्सया अर्जुनेन प्रश्नः कृत इत्युच्यते **अर्जुन उवाच— संन्यासमिति** ॥ चतुर्थाध्यायोक्तार्थस्यैतदध्यायोत्थानबीजत्वात् तृतीयाध्यायोक्तार्थप्रपञ्चनात्मक-स्याप्यस्य चतुर्थाध्यायानन्तर्यं युक्तम् ।

संन्यासम् 'यदृच्छालाभसन्तुष्टः' (४.२२) इत्युक्तं कामादिवर्जनम्, **पुनः कर्मणां योगं** स्ववर्णाश्रमविहितानां तेषामनुष्ठानं च "कुरु कर्मैव तस्मात्त्वम्" (४.१५) इति **शंससि** । न केवलं

संन्यासं कर्मयोगं च शंससि, किन्तु कारयस्यपीति भावेन '**कृष्ण**' इति सम्बोधितो भगवानर्जुनेन । नियमनादिना सकललोककर्षणान्निमित्तात् कृष्णशब्दार्थगुणविशिष्ट **एतयोः** उक्तरूपयोः संन्यास-कर्मयोगयोः **यच्छ्रेयः** प्रशस्यतरम्, अधिकमिति यावत् । **तदेकं** "सामान्ये नपुंसकम्" । **मे** मम **सुनिश्चितं** यथा तथा **ब्रूहि** व्यक्तं वद । ननु द्वेषादिवर्जनमेव संन्यासशब्दार्थतया विवक्षितं चेत्, तर्हि तस्य योगेन विरोधाभावात् संन्यासयोगयोर्विरोधाभिप्रायेण श्रेयःप्रश्नोऽनुपपन्नः स्यादिति चेन्न । यदि संन्यासोऽधिकः स्यात् तर्हि संन्यासस्य ईषद्विरोधि युद्धमिति हेतोः तत् त्यक्त्वा संन्यास एव कर्तव्ये किं वैगुण्यमङ्गीकृत्यापि युद्धं विधीयत इति प्रश्नाशयात् ॥ १ ॥

अयं प्रश्नो भगवता परिह्रियते **श्रीभगवानुवाच— संन्यासः कर्मयोगश्चेति** । **संन्यासः** कामादिवर्जनरूपः कर्मयोगः भगवदर्पणबुद्ध्या कर्मानुष्ठानलक्षणश्चेति **उभौ** समुचितौ सन्तौ **निःश्रेयसकरौ** । 'अचतुरविचतुर' इत्यादिना निःश्रेयसशब्दो निपातितः । "कृञो हेतुताच्छील्यआनुलोम्येषु" इति करोतेस्ताच्छील्ये टः । मोक्षसाधनशीलौ । **तयोः** मध्ये कर्मणि संन्यासात् = कर्मानुष्ठानविषये कामद्वेषादिवर्जनरूपात् **कर्मसंन्यासात्** भगवदर्पणबुद्ध्या कर्मानुष्ठानलक्षणः **कर्मयोगो** विशिष्यते ।

यद्यपि प्रश्नपरिहारवाक्ययोः संन्यास-योगशब्दौ यति-गृहस्थाश्रमविषयौ प्रतीयेते । तयोरेव सर्वकर्मत्याग-तदनुष्ठानरूपत्वात् । न चैवं भगवतैव "ज्ञेयः स नित्यसंन्यासी" (५.३) इति द्वेषादिवर्जनं संन्यास इति वक्ष्यमाणं विरुध्यत इति वाच्यम् । "यो द्वेषादिवर्जितो गृही सोऽपि संन्यासी ज्ञातव्यः" इत्येवं स्तुतिरूपत्वेन तद्वाक्यस्य प्रतीतार्थाविरोधित्वात् । तथाऽपि नेमौ संन्यासयोगशब्दौ यतिगृहस्थाश्रमपरौ शक्यावङ्गीकर्तुम् । 'तयोस्तु' इति संन्यासात् कर्मयोगस्य विशिष्टत्ववचनात् । तस्य चास्मत्पक्ष एव सम्भवात्, अन्यत्रासम्भवात् । कुतो भवत्पक्षे सम्भवः ? इति चेत् "द्वन्द्वत्यागात्तु संन्यासात् मत्पूजैव गरीयसी" इति वचनादिति ब्रूमः । द्वेषादिवर्जनरूपात् संन्यासात् **मत्पूजा** मदर्पणबुद्ध्या कर्मानुष्ठानं गरीय इति वचनार्थः । आश्रमार्थत्वे कुतोऽसम्भव इति चेत् "तानि वा एतान्यवराणि तपांसि, न्यास एवात्यरेचयत्" इति (म.ना.उ.१६.१२) श्रुतौ गृहस्थाश्रमापेक्षया संन्यासस्यातिशयावेदनात् इत्यवेहीति ॥ २ ॥

"संन्यासः कर्मयोगश्च निःश्रेयसकरावुभौ" (५.२) इति यत् संन्यासस्य निःश्रेयसकरत्वमुक्तं तदुपपादयितुं ज्ञातमपि संन्यासशब्दार्थं स्मारयितुमुच्यते **ज्ञेय इति** । स्मर्तव्य इत्यर्थः । तेन "यदृच्छालाभसन्तुष्टः" (४.२२) इत्यादिनोक्तं कामादिपरित्यागम् "संन्यासं कर्मणाम्" (५.१) इत्यनूद्यार्जुनस्य प्रश्न इत्युक्तम् । ततश्च जानात्येवासौ संन्यासशब्दार्थम् इति न तं प्रति स वक्तव्यः

इति चोद्यं व्युदस्तम् । द्वेषादिवर्जनं हि संन्यासः । तस्य च निःश्रेयसकरत्वं श्रुत्यादिसिद्धमेवेति संन्यासस्य निःश्रेयसकरत्वोपपादनाय तच्छब्दार्थस्मरणे तात्पर्यात् । योगस्य तु निःश्रेयसकरत्वमुत्तरवाक्ये (५.४,५) एव सेत्स्यति । शिष्टं स्पष्टम् ॥ ३ ॥

**गीतातात्पर्यनिर्णयः**

**द्वेषादिवर्जनमेव संन्यासशब्दार्थो न यत्याश्रमोऽत्राभिप्रेत इत्याह ज्ञेय इति । न च "काम्यानां कर्मणां न्यासम्" इत्यनेन विरोधः । तेनापि सहितस्य न्यासत्वात् । न च त्यागस्य पृथग्वचनाद्विरोधः । कुरुपाण्डववन्न्यासावान्तरभेदत्वात् त्यागस्य ॥ ३ ॥**

*प्रका०*— ननु गार्हस्थ्यं त्यक्त्वा संन्यासः स्वीक्रियते । कथं तस्य कर्मयोगेन समुच्चय इत्यत आह **द्वेषादिति** । द्वेषरागादिवर्जनमात्रं न्यासशब्देन विवक्षितम् । "ज्ञेयं स नित्यसंन्यासी यो न द्वेष्टि न काङ्क्षति" इति वचनात् । तथा काम्यकर्मवर्जनं च न्यासशब्देन स्वीकर्तव्यम् । अन्यथा "काम्यानां कर्मणां न्यासं संन्यासं कवयो विदुरि"त्येतद्वचनविरोधः स्यादित्यर्थः । ननु सर्वकर्मफलत्यागं प्राहुस्त्यागमिति संन्यासः त्यागः पृथक् निर्दिष्टः । कथमसावत्र योगं न काङ्क्षतीति, सोऽपि संन्यासीति संन्यासेऽन्तर्भाव्यत इत्याशङ्क्याह **कुरुपाण्डववदिति** । यथा कुरुषु अन्तर्भूता अपि पाण्डवाः कुरुभ्यः पृथक् निर्दिश्यन्ते, एवं संन्यासे अन्तर्भूतोऽपि योगः पृथक् निर्दिष्टः ।

*न्या०दी०*— कथं योगसंन्यासयोः समुच्चयो युज्यते ? यतिगृहस्थयोरधिकारभेदादित्याशङ्कापरिहाराय श्लोकमवतारयति **द्वेषादीति** ॥ अत्र "संन्यस्तकर्माणम्" इत्यादौ । एवं "योगमातिष्ठ" इत्यादौ भगवदर्पणादियोग एवाभिप्रेतो न गृहस्थाश्रम इत्यपि द्रष्टव्यम् । ननु कथं द्वेषादिवर्जनस्य संन्यासत्वमत्रोच्यते ? "काम्यानां कर्मणां न्यासं संन्यासं कवयो विदुः" इति काम्यकर्मपरित्यागस्य संन्यासत्वाभिधायकवाक्यविरोधादित्यत आह **न चेति** ॥ भवेत्तद्विरोधो यद्यत्र द्वेषादिवर्जनमात्रं संन्यासत्वेन विवक्षितं स्यात् । नैतद् अस्ति । काम्यकर्मपरित्यागेनापि सहितस्य द्वेषादिवर्जनस्य संन्यासत्वेनाभिप्रेतत्वादित्यर्थः । कथमत्र काङ्क्षादिवर्जनस्य संन्यासत्वमुच्यते ? "सर्वकर्मफलत्यागं प्राहुस्त्यागं विचक्षणाः" इति तस्य त्यागत्वेनोक्तत्वात् । न च संन्यासत्यागयोरैक्यादविरोधः । "काम्यानां" इति श्लोके न्यासात् त्यागस्य पृथक्त्वेनोक्तेस्तद्विरोधादित्यत आह **न च इति** ॥ भवत्येवाकाङ्क्षादिवर्जनं न्यासः । न च तस्य त्यागत्वोक्तिविरोधः । न्यासत्यागयोरैक्यात् । न च पृथक्त्वोक्तिविरोधः । यथा खलु पाण्डवानां कुरुत्वेऽपि "सन्तानबीजं कुरुपाण्डवानाम्" इति

पृथगुक्तिर्युज्यते, पाण्डवानां कुर्ववान्तरभेदत्वेन कुरुपाण्डवानां साक्षादैक्याभावात्, एवं त्यागस्य न्यासत्वेऽपि न्यासावान्तरभेदत्वेन त्यागन्यासयोः साक्षादैक्याभावात् पृथग्वचनोपपत्तेरिति भावः । न्यासादिशब्दस्य यत्याद्याश्रमार्थत्वं गृहीत्वा तयोरधिकारभेदात् समावेशायोगो यश्चोदितोऽसौ न्यासादिशब्दस्य तदर्थत्वानङ्गीकारेण परिहृतः ॥

*भा०दी०*— **अत्रेत्यनुवादः संन्यस्तेत्यादि** व्याख्या । **त्यागस्य पृथक्त्वेनोक्तिरिति** । ''सर्वकर्मफलत्यागं प्राहुस्त्यागं विचक्षणा'' इत्यष्टादशोक्तेरित्यर्थः । **पृथगुक्तिरिति** दशमस्कन्धे ॥ ॥ ३ ॥

**गीता**

## साङ्ख्ययोगौ पृथग्बालाः प्रवदन्ति न पण्डिताः ।
## एकमप्यास्थितः सम्यगुभयोर्विन्दते फलम् ॥ ४ ॥

*वि०वि०*— ननु कामादिवर्जनस्य ज्ञानोत्पत्यनन्तरङ्गत्वेन, 'परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो निर्वेदमायात्' इत्यादिश्रुतिसिद्धत्वात् कर्मानुष्ठानस्य 'अग्निमुग्धो ह वै धूमतान्तः स्वर्लोकं न प्रतिजानाति' इत्यादिना निन्दितत्वात् कथं संन्यासाद्योगो वर इत्यत आह **साङ्ख्ययोगाविति** । ज्ञानकर्मयोगौ पृथक् साध्यसाधनभावहीनाविति बाला अविवेकिनो वदन्ति न तु पण्डिताः । अग्निमुग्ध इति तु काम्यकर्मविषयमिति भावः । योगस्य ज्ञानसाधनत्वे प्रमिते भवेदेतत् तदेव कथमित्यत आह **एकमपीति** ॥

*सा०सं०*— ननु 'न तस्य तत्त्वग्रहणाय साक्षात्' इति पञ्चमस्कंधस्थश्लोके विषयवैराग्याभावे ज्ञानानुत्पत्त्युक्त्या तत एव तदुत्पत्तिरिति लाभेन वैराग्यशब्दितकामादिसर्ववर्जनरूपसंन्यासो ज्ञानोत्पत्तावावश्यकत्वेनोक्त इति प्रतीयते । कर्मयोगस्तु ज्ञानविरोधित्वेनोक्तः । 'अग्निमुग्धा धूमतान्ता स्वं लोकं न विदन्ति ते' इत्येकादशस्कन्धे एकविंशत्यध्याये 'अग्निमुग्धो ह वै धूमतान्तः स्वलोकं न प्रतिजानाति' इति तैत्तरीये सञ्ज्ञानाख्यप्रश्नः कश्चिदनुवाके, अग्न्युपलक्षिते कर्मणि मुग्धः श्रेयस्करमेतदिति भ्रान्तः धूमतान्तो होमधूमेन ग्लानः स्वं लोकं स्वकीयमाश्रयं परमात्मानं न प्रतिजानातीति । तथा च कथं कर्मयोगात् संन्यासो वर इत्युच्यते, इत्यतः संन्यास इव कर्मयोगोऽपि ज्ञानोत्पत्तावावश्यक एवेत्याह कृष्णः । **साङ्ख्येति** । साङ्ख्यं ज्ञानं योगो भगवदर्पणबुद्ध्या कर्मानुष्ठानं तावुभौ । **बालाः** अविवेकिनः । **पृथक्** साध्यसाधनभावहीनौ । **प्रवदन्ति, न पण्डिताः** । योगस्य ज्ञानहेतुत्वं कुत इत्यत उच्यते **एकमपीति** । **एकमपि** ज्ञानमार्गं कर्ममार्गं वा, एकमपि । **सम्यगास्थितो**ऽनुतिष्ठन् । उभयोर्ज्ञानकर्मणोरुभयोरपि **फलं विन्दन्त** इत्यर्थः ॥

*अ०प्र०*— यस्मादेवमङ्गप्रधानत्वेनोभयोरवस्थाभेदेन क्रमसमुच्चयः अतो विकल्पमङ्गीकृत्योभयोः कः श्रेष्ठ इति प्रश्नो ज्ञानिनामेवोचितं विवेकिनामित्याह **साङ्ख्ययोगाविति** ।

बालाः[१], साङ्ख्ययोगौ[२], पृथगिति[३], वदन्ति[४], पण्डिताः न वदन्ति[५], अनयोरपि[६], एकं[७], सम्यक्[८], आस्थितः सन्[९], उभयोः[१०], फलं[११], विन्दते[१२] ।

बालाः = अज्ञाः अविवेकिनः[१], साङ्ख्ययोगौ = साङ्ख्यशब्देन ज्ञाननिष्ठवाचिना तदङ्गसंन्यासं लक्षयति संन्यासकर्मयोगौ, यद्वा ज्ञानयोगकर्मयोगौ एकफलौ सन्तौ[२], पृथगिति = स्वतन्त्रौ इति, यद्वा साध्यसाधनभावहीनौ इति[३], वदन्ति[४] । पण्डिताः = विवेकिनः तु न वदन्ति[५], तत्र हेतुः— अनयोरपि = साङ्ख्यं योगं वापि[६], एकं[७], सम्यक् साधनेन यः[८], आस्थितः = आश्रितः प्राप्तः सन्[९], सः उभयोः = साङ्ख्ययोगयोः[१०], फलं[११], विन्दते = प्राप्नोति[१२] । तथाहि—

कर्मयोगः सम्यगनुष्ठितः सन् शुद्धचित्तो भूत्वा ज्ञानद्वारा यदुभयोः फलं कैवल्यं तद्विदन्ति । संन्यासं सम्यगास्थितोऽपि पूर्वमनुष्ठितस्य कर्मयोगस्यापि परम्परया ज्ञानद्वारा यदुभयोः फलं कैवल्यं तद्विन्दतीति न पृथक्त्वमनयोरित्यर्थः ॥ ४ ॥

### भाष्यम्

**संन्यासो हि ज्ञानान्तरङ्गत्वेनोक्तः 'न तस्य तत्त्वग्रहणाय' इत्यादौ । अतः कथं सोऽवम इत्यत आह– साङ्ख्ययोगाविति । उभयोरप्यन्तरङ्गत्वेनाविरोधः । "अग्निमुग्धो ह वै धूमतान्तः स्वं लोकं न प्रत्यभिजानाति", "मा वः पदव्यः पितरस्मदाश्रिता या यज्ञशालासनधूमवर्त्मनाम्" इत्यादि तु काम्यकर्मविषयमिति भावः । ये त्वन्यथा वदन्ति ते बालाः ॥ ४ ॥**

*प०टी०*— ननु द्वन्द्वत्यागस्य ज्ञानान्तरङ्गत्वात् कथमसाववमः ? किन्तु तदुत्तम एवेत्याशङ्कोत्तरत्वेनोत्तरश्लोकमवतार्य व्याचष्टे **संन्यासो हीति** । साङ्ख्यं ज्ञानम्, कर्मयोगश्च पृथङ् न भवतः । कर्मयोगोऽपि ज्ञानान्तरङ्गम् । तथा च नासौ संन्यासादवमः । किन्तु भगवत्पूजारूपत्वेन केवलसंन्यासादधिक एवेत्यर्थः ॥

*न०टी०*—ननु यो गृहमेधसौख्यं हेयत्वेन न मन्यते, किन्तूपादेयत्वेन वाञ्छति, क्रुद्ध्यति च तद्विरोधिनः, तस्य च वरीयस्योऽपि वाचस्तत्त्वग्रहणाय न स्युः । यस्तु कामक्रोधविहीनः, तस्यैव तत्त्वग्रहणाय स्युरिति ज्ञानान्तरङ्गत्वेनोच्यमानत्वात् द्वन्द्वत्यागोऽपि संन्यासः कथं कर्मयोगादवरः स्यात् ? किन्तूत्तम इत्याशङ्क्य, एतत्परिहारायोत्तरं श्लोकमवतार्य व्याचष्टे **संन्यासो हीति** ।

योगस्यापि ज्ञानान्तरङ्गत्वान्न तस्य हीनत्वं द्वन्द्वत्यागात् । किन्तूत्तमत्वमेव भगवत्पूजात्मकत्वेनेति भावेनाह **उभयोरपीति** । ननु श्रुतिपुराणेषु योगशब्दोक्तयागादेः कर्मणः, साङ्ख्यशब्दोक्तज्ञानात् भिन्नमार्गत्वानुगमात् कथं योगस्य ज्ञानान्तरङ्गत्वम् ? इत्यत आह **अग्निमुग्ध इति** । काम्यकर्मैव निन्द्यते, नित्यकर्म तु ज्ञानान्तरङ्गमेवेत्यर्थः । ननु नित्यकर्मापि न ज्ञानान्तरङ्गम्, किन्तु केवलप्रत्यवायपरिहारार्थमिति केचित् । तान् प्रत्याह **ये त्विति** । 'विविदिषन्ति यज्ञेन' इत्यादिश्रुतितात्पर्यालोचनासामर्थ्यात् बालाः । ये त्वज्ञानिनामेव कर्मयोगो न ज्ञानिनामिति वदन्ति ते बालाः । 'यदेव विद्यया' इत्यादिश्रुतिसूत्रतात्पर्यार्थालोचनायामसामर्थ्यादिति भावः ॥

***प्र०दी०***— संन्यासं गृहीत्वा योगं त्यक्ष्यामीत्याशयेन द्वयोः श्रेयसि पृष्टे द्वावपि निःश्रेयसकरौ । तत्रापि संन्यासाद्योगो विशिष्टः । अतो न युद्धं त्वया त्याज्यमिति परिहारो जातः । किमर्थं 'सांख्ययोगौ' इत्युच्यत इत्यत आह— **संन्यासो हीति** । हिशब्दो हेतौ । ज्ञानान्तरङ्गत्वेन ज्ञानोत्पत्तावत्यावश्यकत्वेन । न तस्येत्यत्र विषयवैराग्याभावे ज्ञानानुत्पत्तिवचनेन तत एव तदुत्पत्तिरिति हि लभ्यते । एवं कर्मयोगस्तु ज्ञानविरोधित्वेनोक्तोऽग्निमुग्ध इत्यादावित्यपि ग्राह्यम् । अवमो योगात् । अनेन योगस्य निःश्रेयसकरत्वमप्याक्षिप्तम् ।

ननु साङ्ख्यं ज्ञानम् । योगः कर्म । तयोः कथमत्र पृथक्त्वाभाव उच्यते । कथं वाऽनेनोक्ताक्षेपपरिहार इत्यत आह— **उभयोरपीति** । न केवलं संन्यासस्य । किन्तु योगस्यापीत्युभयोरपि ज्ञानान्तरङ्गत्वान्नोक्तो विरोध इत्यर्थः । अनेन साङ्ख्ययोगौ पृथक्साध्यसाधनभावहीनाविति न पण्डिता मन्यन्त इत्येवं व्याख्यातं भवति ।

ननु श्रुतिपुराणाभ्यामेव कर्मणो ज्ञानविरोधित्वमुच्यत इत्युक्तम् । अतः कथमेवमभिधीयत इत्यत आह— **अग्नीति** । अग्न्युपलक्षिते कर्मणि मुग्धः श्रेयस्करमेतदिति भ्रान्तः । धूमतान्तो होमधूमेन ग्लानः । धूमता धूमादित्वमेवाऽन्तःपर्यवसानं यस्येति वा । स्वलोकं स्वीयमाश्रयम्, परमात्मानम् । यज्ञशालाऽऽसनेन धूमोपलक्षितमार्गवतां वः पदव्योऽस्मदाश्रिता नैवेत्यर्थः । नन्वकाम्यमपि नित्यं नैमित्तिकं च कर्म प्रत्यवायपरिहारार्थमेव । न ज्ञानान्तरङ्गमिति विद्वांस एव मन्यन्त इत्यत आह— **ये त्विति** । बाला अविवेकिनः ॥

***भा०दी०***— संन्यासः कर्मयोगश्चेति श्लोकार्थमनुवादव्याजेन व्यनक्ति **संन्यासमिति** । कामादिवर्जनमित्यर्थः । योगं भगवत्पूजात्वेन युद्धादिकर्मानुवैराग्यस्य ज्ञानान्तरङ्गत्वोक्तिलाभप्रकारं व्यनक्ति **न तस्येत्यत्रेति** । 'न तस्य तत्त्वग्रहणाय साक्षादि'ति भागवतश्लोकः । पूर्वत्र द्वितीये-

ऽध्याये व्याख्यातः । अतः शब्दार्थात्पूर्वं भाष्ये शेषमाह कर्मयोगस्त्वित्यादिनोक्तविरोध इति । एतेन भाष्ये न विरोध इति पदच्छेदः सूचितः । **पृथगित्यनुवादः** । **साध्येत्यादि** व्याख्या इत्युक्तमिति पूर्वभाष्ये अग्निमुग्ध इत्यादावित्यपि ग्राह्यमित्युक्तान्वादित्युक्तमित्युक्तम् । न प्रकृतोपयोग इति योगस्य ज्ञानहेतुत्वासिद्धेरिति भावः ॥

***भा०र०*— हिशब्दो हेताविति** । 'यतः' इत्यर्थे वर्तते । अतःशब्देन च तस्य सम्बन्ध इति भावः । **न तस्येत्यत्रेति** । "न तस्य तत्त्वग्रहणाय साक्षाद् वरीयसीरपि वाचः समासन् । स्वप्ने निरुक्त्या गृहमेधसौख्यं न यस्य हेयानुमितं स्वयं स्यात्" (भाग. ५.११.३) इति भागवते । ननु तत्र **स्वप्ने निरुक्त्या** स्वप्नप्रतीतार्थदृष्टान्तेन **गृहमेधसौख्यं** विषयसौख्यं हेयत्वेनानुमिनोति, तस्य **वरीयसीः** वरीयस्योऽपि वाचः तत्त्वग्रहणाय **नासन्** न स्युरिति विषयवैराग्याभावे ज्ञानानुत्पत्तिरेवावेद्यते, न पुनः संन्यासस्य ज्ञानान्तरङ्गत्वम्, इत्याशङ्क्य श्लोकं तात्पर्यतो व्याकुर्वन् तस्य ज्ञानान्तरङ्गत्वलाभप्रकारं दर्शयति **विषयेत्यादि** । **तत एव** तद्व्यतिरेकेण कार्यव्यतिरेकप्रतिपादकात् उक्तवचनादेव, वैराग्यादेवेति वा । **तदुत्पत्तिः** ज्ञानोत्पत्तिः । गीताभाष्ययोः 'उभयोः' इत्युक्तेर्गमनिकाभाष्येऽनुक्तमपि संयोज्यमित्याह **एवं कर्मयोगस्त्विति** ॥

"अतः स नावमः" इति भाषयितुं शक्येऽपि, 'कथम्' इत्युक्तेस्तात्पर्यं दर्शयति **अनेनेति** । 'कथम्' इति वचनेन । यत् "निःश्रेयसकरावुभौ" (५.२) इति कर्मयोगस्य निःश्रेयसकरत्वमुक्तं तद् अयुक्तम् । संन्यासस्य ज्ञानान्तरङ्गत्वेन तत उत्तमत्वे वाच्ये ज्ञानविरुद्धत्वेनोक्तस्य योगस्यावमत्वप्राप्तेरुचितत्वात् निःश्रेयसकरत्वमप्याक्षिप्तं भवतीत्यर्थः । न केवलं संन्यासस्य योगादवमत्वमयुक्तम्, योगस्य निःश्रेयसकरत्वमपि इति अपिशब्दः । समुच्चयान्तरस्याभावाद् अपिशब्दः परस्परसमुच्चयार्थ इति भावेनाह **न केवलमिति** । **विरोध इति** । ज्ञानं प्रत्यन्तरङ्गत्वाभावलक्षणः, निःश्रेयसकरत्वाभावलक्षणो वा विरोध इत्यर्थः । "ननु साङ्कर्यम्" इति कृतचोद्यं भाष्यतात्पर्यं वदन् निरसितुमाह **अनेनेति** । 'पृथक्' इत्यनुवादः, 'साध्यसाधनभावहीनौ' इति व्याख्यानम् ।

**इत्युक्तमिति** । "एवं कर्मयोगस्तु" इति वाक्ये । "अग्निमुग्ध इत्यादौ" इति आदिपदेन "मा वः पदव्यः" (भाग. ४.४.२१) इति भाष्योपात्तस्मृतेर्ग्रहणादेवमुक्तम् । **एवं** कर्मयोगस्य ज्ञानान्तरङ्गत्वमस्तीत्येवम् । "अग्नौ मुग्धोऽग्निमुग्धः" इति विग्रहमभिप्रेत्याग्निशब्दविवक्षितार्थमाह **अग्न्युपलक्षित इति** । "**मुह** = वैचित्त्ये" इति धातुव्याख्यानात् 'भ्रान्तः' इत्युक्तम् । अग्निशब्दसन्निधानाद् धूमशब्दो धूमविशेषार्थ इत्याह **होमेति** । "तमु = ग्लानौ" इति धातुव्याख्यानादाह **ग्लान इति** । 'धूमवर्त्मनाम्' (भाग. ४.४.२१) इति वचनानुरोधेन प्रकारान्तरेण व्याख्याति

**धूमादित्वमिति** । 'धूमादि' इति वदन् श्रुतौ धूमशब्दो "धूमो रात्रिस्तथा कृष्णः" (८.२५) इत्यादिशास्त्रोक्तस्वर्गादिपुनरावृत्तिमार्गोपलक्षकः इत्यभिप्रैति । **पर्यवसानमिति** । **प्राप्यमिति यावत्** । अत्र धूमादिभावश्च "तत्स्वाभाव्यापत्तिरुपपत्तेः" (ब्र.सू. ३.१.२४) इति सूत्रभाष्ये "धूमादिषु प्रविश्य तद्गतौ गतिः, तत्स्थितौ स्थितिः" इत्यादिरेव "तद्भावापत्तिः" (ब्र.सू.भा. ३.१.२४) इति व्याख्यानाद् धूमादिदेवताऽनुसारिगत्यादिमत्त्वमेवेति द्रष्टव्यम् ।

विवक्षितविशेष्याभिधानम् **परमात्मानमिति** । **यज्ञशालेति** । तथा चायमर्थः— "कदन्नतृप्तैरसुहृद्भिरीडिता अव्यक्तलिङ्गा अवधूतसेविताः" (भाग. ४.४.२१) इत्युत्तरार्धम् । इदं च दक्षप्रजेश्वरं प्रति सतीवचनं चतुर्थस्कन्धे । **हे पितः, यज्ञशालायां** याजमान्येन दीक्षालक्षणेन **धूमो** धूमादिलक्षणो **वर्त्म** मार्गो येषां ते तथोक्ताः तेषां **वो** युष्माकं **कदन्नतृप्तैः** पशुमांसलक्षणेनान्नेनालंबुद्धिं गतैः **असुहृद्भिः** पशुप्राणहारिभिः पुरुषैरीडिताः **पदव्यो** मार्गाः ता **अस्मदाश्रिताः** अस्माभिराश्रिताः **मा** मैव भवन्ति । कीदृश्यः ? इत्यत उक्तम् **अवधूतैः** सनकादियोगीन्द्रैः **सेविताः** अन्यैरज्ञातलक्षणा अर्चिरादिरूपा इति । एवं महादेवस्य तव च पृथङ्मार्गत्वान्न त्वन्निन्दया तस्य गुणहानिरित्यतो न तद्दूषणं तवोचितमिति भावः । **प्रत्यवायेति** । नोपतिष्ठति यः पूर्वां नोपास्ते यश्च पश्चिमाम् । स शूद्रवद्बहिष्कार्यः सर्वस्माद्द्विजकर्मणः" इत्यादिशास्त्रप्राप्तो यः सन्ध्याऽकरणे प्रत्यवायः तत्परिहारार्थमित्यर्थः । कथं तेषु बालत्वम् ? वृद्धत्वादेर्दर्शनात्, इत्यतो बालशब्दो गौण इति भावेनाह **बाला अविवेकिन इति** । "विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन" (बृ. ६.४.२२) इत्यादिश्रुतितात्पर्यालोचनासामर्थ्याद् विवेकशून्या इत्यर्थ इति **प्राचीनटीका** ॥४॥

**गीता**

## यत्साङ्ख्यैः प्राप्यते स्थानं तद्योगैरपि गम्यते ।
## एकं साङ्ख्यं च योगं च यः पश्यति स पश्यति ॥ ५ ॥

*वि०वि०*— तस्याभिप्रायमाह **यत्साङ्ख्यैरिति** । साङ्ख्यैर्ज्ञानिभिर्यत् स्थानं प्राप्यते तद्योगैः योगिभिरपि ज्ञानद्वारा गम्यते । एवं च साङ्ख्यं च योगं च । एकं साध्यसाधनभाववत् । यः पश्यति स ज्ञानीत्यर्थः । द्वितीयव्याख्याने योगसंन्यासशब्दयोराश्रमार्थत्वाभावाद्योगसंन्यासयोरधिकारभेदप्रयुक्तः समावेशायोगो निरस्तः । अथ असावधिकारभेदो न युज्यते इत्याह **साङ्ख्ययोगाविति** । बालास्तु संन्यासशब्देन यत्याश्रममेव स्वीकृत्य तत्स्थानामेव साङ्ख्यशब्दोदितज्ञानाधिकारो गृहस्थानामेव योगशब्दोदितकर्माधिकार इति मन्यन्ते । तन्न पण्डिता मन्यन्ते । कुतः । यस्मात्

ज्ञानमार्गं कर्ममार्गं वा सम्यगास्थितः । उभयोरपि फलं प्राप्नोति । तस्मात् ज्ञानिनां यतीनां कर्माप्यनुष्ठेयम् । कर्मिणामपि गृहस्थादीनां ज्ञातव्यो भगवान् । नहि ज्ञानं विना कर्मणः सम्यगनुष्ठानं भवति । आश्रमभेदस्तु कर्मसङ्कोचविकासापेक्ष इति श्लोकद्वयतात्पर्यार्थः ॥

***सा०सं०***— नन्वेतावता द्वयं किञ्चित्फलं प्रति स्वतन्त्रसाधनमित्युच्यते । योगस्य ज्ञानहेतुत्वं न प्राप्तमित्यतः, तदभिप्रायं स्वयमेव व्यनक्ति **यत् साङ्ख्यैरिति** । **साङ्ख्यै**र्ज्ञानिभिः । यत् **स्थानं** भगवत्स्वरूपलक्षणं **तद्योगै**ः । 'अर्श आद्यच्' प्रत्ययान्तावत्र साङ्ख्ययोगशब्दौ । कर्मयोगवद्भिरपि ज्ञानद्वारा गम्यत इत्यर्थः । तथा च **साङ्ख्यं च योगं च** । **एकं** साध्यसाधनभाववत् । **यः पश्यति** स पश्यति, स एव ज्ञानीत्यर्थः । संन्यासयोगयोर्द्वयोरपि ज्ञानहेतुत्वान्न कोऽपि विरोधः । 'अग्निमुग्धाः' इत्यादि तु काम्यकर्मविषयमिति भावः ।

यद्वा संन्यासयोगशब्दयोः समावेशायोगश्चोदितोऽसौ संन्यासयोगशब्दयोस्तदर्थत्वानङ्गीकारेण पूर्वश्लोके परिहृतः । अधुना संन्यासयोगयोरधिकारिभेदोऽपि न युज्यत इत्याह **साङ्ख्येति** । **बालाः** अविवेकिनः । **साङ्ख्ययोगौ** ज्ञानकर्मयोगौ । **पृथक्** भिन्नाधिकारिकौ, नैकत्र समाविष्टौ । यत्याश्रमिणां साङ्ख्यपदोक्तज्ञानाधिकार एव न कर्मणि, गृहिणां तु योगपदोक्तकर्माधिकार एव न ज्ञाने, इति **प्रवदन्ति** । ज्ञानमार्गं सम्यगास्थित एव ज्ञानफलं प्राप्नोति । कर्ममार्गं सम्यगास्थित एव कर्मफलं प्राप्नोतीति प्रवदन्तीति यावत् । **न पण्डिताः**, कुतः ज्ञानकर्ममार्गयोः **एकमपि सम्यगास्थितः उभयोः फलं विन्दते**, यतः, अतो न पण्डिता बाला इव प्रवदन्तीत्यर्थः । अत्र मार्गद्वयस्य सम्यक्त्वविशेषणात् कर्मणो ज्ञानसाहित्यम् । तेन विना सम्यगनुष्ठानासिद्धेः । कर्मणा विना सम्पूर्णानन्दहेतुत्वरूपसम्यक्त्वस्य ज्ञानेऽनुपपत्तेः तदर्थं तस्य कर्मसाहित्यमिति सूचितम् ।

ज्ञानैकगम्ययतिप्राप्यस्थानप्राप्तिसद्भावाच्च गृहिणां ज्ञानाधिकारोऽस्तीति स्पष्टं वदन्नुक्तमुपसंहरति **यदित्यादिना** । यतः साङ्ख्यैर्ज्ञानिभिर्यतिभिः प्राप्यं **स्थानं योगै**र्योगवद्भिर्गृहिभिर्गम्यते तस्मात् **साङ्ख्यं योगं चैकम्** एकाधिकरणकम् । कर्मिण्यपि गृहिणि ज्ञानम्, ज्ञानिन्यपि कर्म, इत्येवमेकत्र तयोः समावेशं **यः पश्यति स पश्यति** ज्ञानीत्यर्थः ॥

***अ०प्र०***— एतदेव स्फुटयति **यत्साङ्ख्यैरिति** ।

साङ्ख्यैः यत्स्थानं प्राप्यते[४], तत्स्थानं योगैरपि गम्यते[७], यश्च[८], साङ्ख्यं[९], योगं च[१०], एकं[११], पश्यति[१२], सः[१३], पश्यतीत्यन्वयः ।

साङ्ख्यैः = साङ्ख्यसाधनपरैः ज्ञाननिष्ठैः, यद्वा संन्यासिभिः यत्स्थानं = मोक्षाख्यम्[३], प्राप्यते = प्रकर्षेण साक्षादाप्यते[४], तत्स्थानं[५], योगैरपि = कर्मयोगसाधनशीलैः योगिभिरपि

ज्ञानद्वारेण[६], गम्यते = अवाप्यते सम्पश्यति[७], अतः कारणात् यश्च = पुरुषः[८], साङ्ख्यं[९], योगं च[१०], एकं = एकफलत्वेन साध्यसाधनभावोपेतं इति[११], पश्यति[१२], सः[१३], पश्यति[१४], उभयोरैक्यमिति ज्ञानी पश्यतीत्यर्थः ॥ ५ ॥

**भाष्यम्**

**'एकमपि' इत्यस्य अभिप्रायमाह— यत्साङ्ख्यैरिति । योगिभिरपि ज्ञानद्वारा ज्ञानफलं प्राप्यते इत्यर्थः ॥ ५ ॥**

***प०टी०***— एवमप्युत्तरार्धो योगस्य ज्ञानान्तरङ्गत्वं (?) कर्मण इत्याशङ्क्य, उत्तरश्लोक-मवतार्य व्याचष्टे **एकमिति** ॥

***न०टी०***—ननु यद्यपि ज्ञानमेकमास्थितः कर्मफलमपि विन्दते स्वर्गादिकं 'पुरुषार्थोऽतः-शब्दात्' इत्यादेः । तथाऽपि कर्मणो ज्ञानाङ्गत्वे किमायातमित्यत आह **एकमपीत्यस्येति** । यथा साङ्ख्यैः कर्मफलं प्राप्यते, तथा योगिभिरपि ज्ञानफलं प्राप्यते । तदपि ज्ञानद्वारा । 'नान्यः पन्था अयनाय विद्यते', 'कर्मणा ज्ञानमातनोति, ज्ञानेनामृती भवति' इत्यादिश्रुतेः । अतः कर्मणो ज्ञाना-न्तरङ्गत्वमित्यर्थः ॥

***प्र०दी०***— योगस्य ज्ञानसाधनत्वे प्रमिते भवेदेतत् । तदेव कथमित्यत उक्तम् । **एक-मपीति** । तदनुपपन्नम् । उभयोर्मध्ये सम्यगेकमप्यास्थितः फलं विन्दतीति हि योजनायां द्वयोः साफल्यमात्रमुच्यते । एकमपि सम्यगास्थित उभयोः फलं विन्दत इति पक्षे तु द्वयं किञ्चित् फलं प्रति स्वतन्त्रं साधनमित्युच्यते । पक्षद्वयेऽपि न प्रकृतोपयोग इत्यत आह— **एकमपीति** । एव-मनुपयोगेऽपि भगवानेव स्ववाक्याभिप्रायमाह स ग्राह्य इत्यर्थः । अनेनापि योगस्य ज्ञानसाधनत्वे किं प्रमाणमुक्तमित्यतो व्याचष्टे— **योगिभिरपीति** । ''तरति शोकमात्मवित्'' इत्यादिना यज्ज्ञानफलं मोक्षाख्यं प्रमितं तत्तावद्योगिभिरपि प्राप्यत इत्युच्यते 'अपाम सोमं' इत्यादिना । तत्र विचार्यम् । किं द्वयमपि स्वतन्त्रं मुक्तिसाधनमुत समुच्चितम् । अथ चैकं साक्षात् साधनमपरं तत्साधनत्वेनेति । न प्रथमद्वितीयौ । ''नान्यः पन्थाः'' इत्यादिविरोधात् । तृतीयेऽपि चिन्त्यं किं कस्य साधन-मिति । तत्र न तावज्ज्ञानं कर्मसाधनत्वेन मोक्षहेतुः । 'न किञ्चिदन्तराधाय' इत्यादिविरोधात् । अतः परिशेषाद्योगिभिरपि ज्ञानद्वारा ज्ञानफलं प्राप्यत इति सिद्ध्यति । तथा च योगस्य ज्ञान-साधनत्वं सिद्धमित्यर्थः । अत्र योगिभिरिति वदता योगशब्दो धर्मिणामुपलक्षकोऽर्शआद्यजन्तो वेति सूचितम् ॥

*भा०दी०*— **योगिभिरिति** । कर्मयोगवद्भिरित्यर्थः । **योगशब्द इति** । गीतास्थो योगैरिति शब्द इत्यर्थः ॥

*भा०र०*— भाष्यं घटयितुं गीतामवतारयति **योगस्येति** । 'उभयोः' इत्यस्य किम् एकशब्देनान्वय उत फलशब्देनेति विकल्पं मनसि निधाय आद्ये आह **उभयोर्मध्ये सम्यगेकमपीति** । द्वितीय आह **एकमपीति** । ''इति हि योजनायाम्'' इत्यत्र हिशब्दो 'यतः' इत्यर्थे वर्तमानो ''यत उभयोः'' इति । 'यत एकमपि' इति च सम्बध्यते । तेन 'तदुपपन्नम्' इति साध्ये हेतुरुक्तो भवति । 'पक्षद्वयेऽपि' इत्यतः पूर्वं 'तथा च' इति योज्यम् । **न प्रकृतोपयोग इति** । योगस्य ज्ञानसाधनत्वालाभादिति भावः । **एवमनुपयोगेऽपि** उक्तयोजनाद्वयप्रकारेणानुपयुक्ततया प्रतीयमानत्वेऽपि । 'आह' इत्याख्यातोपात्तकर्तारमाह **भगवानिति** ।

अनेनापि योगस्य ज्ञानसाधनत्वलाभप्रकारः कथमुक्तः ? इत्यतस्तत्परिष्करोति **तरतीति** । **अपाम सोममिति** । सोमपदोपलक्षितकर्मानुष्ठानेन अमृताः = मुक्ता अभूमेत्यर्थः । **द्वयं** ज्ञानं कर्म च । **स्वतन्त्रं** स्वर्गं प्रति ज्योतिष्टोमोऽग्निहोत्रं चेव । **समुच्चितं** दर्शपूर्णमासाविव परस्परसापेक्षम् । **प्रथमद्वितीयौ** स्वातन्त्र्यसमुच्चयपक्षौ । **तृतीये** एकं साक्षात्साधनम्, अपरं तत्साधनत्वेन साधनमिति पक्षे । **इत्यादीति** ......... । ''निर्वाणायापरोक्षदृक् । अपरोक्षेशदृष्टिस्तु मुक्तौ किञ्चिन्न मार्गते ॥ (ना.अ.क) इत्यादीत्यर्थः । गीतागतं 'योगैः' इति पदं 'योगिभिः' इति कथं व्याख्यातम् ? इत्यत आह **अत्रेति** । अच्प्रत्ययश्च मत्वर्थीयः, इति युक्तं 'योगिभिः' इति व्याख्यानमिति भावः ॥५॥

**गीतातात्पर्यनिर्णयः**

**बालास्तु न्यासशब्देन यत्याश्रममेव स्वीकृत्य तत्स्थानामेव साङ्ख्यशब्दोदितज्ञानाधिकारो गृहस्थानामेव योगशब्दोदितकर्माधिकार इति मन्यन्ते । तन्न पण्डिता मन्यन्ते ।**

*प्रका०*— साङ्ख्येत्यस्यार्थमाह **बाला इति** ।

*न्या०दी०*— अथासावधिकारभेदोऽपि न युज्यत इत्युच्यते **साङ्ख्य इति** । दुर्गमार्थत्वात् श्लोकं व्याचष्टे **बाला इति** ॥ ज्ञानमार्गं सम्यगास्थित एव ज्ञानफलं प्राप्नोति । कर्ममार्गं च सम्यगास्थित एव कर्मफलं प्राप्नोतीत्यर्थः ।

*भा०दी०*— अधिकारपदप्रयोगतात्पर्यमाह **ज्ञानमार्गमित्यादिना** ॥

**गीतातात्पर्यनिर्णयः**

**कुतः ? यस्मात् ज्ञानमार्गं कर्ममार्गं च सम्यगास्थित उभयोरपि फलं प्राप्नोति । तस्माज्ज्ञानिनां कर्माप्यनुष्ठेयम् । कर्मिणामपि गृहस्थानां ज्ञातव्यो भगवान् । न हि ज्ञानं विना कर्मणः सम्यगनुष्ठानं भवति ।**

***न्या०दी०***— ज्ञानैकगम्ययतिप्राप्यस्थानप्राप्तिसद्भावाच्च गृहिणां ज्ञानाधिकारोऽस्तीत्युक्त्वा उपसंह्रियते 'यत्' इति । तत्र ''एकं साङ्ख्यम्'' इत्युपसंहारवाक्ये ज्ञानकर्मणोरैक्यं किमर्थमुच्यत इत्यतो यथावद्व्याचष्टे **तस्मादिति** ।। **ज्ञानिनां** यतीनामिति शेषः । सम्य-क्कर्मानुष्ठानेनैव कर्मी कर्मफलं प्राप्नोति चेत्तथापि कुतस्तस्य ज्ञानमित्यत आह **न हीति** ।। एवं सम्यग्ज्ञानमार्गानुष्ठानेनैव ज्ञानफलं प्राप्नोति चेत्तथापि कुतो ज्ञानिनः कर्मेति शङ्कायां न हि कर्म विना ज्ञानमार्गस्य सम्यगनुष्ठानं भवति । सम्पूर्णफलसाधनत्वाभावादिति परिहारो द्रष्टव्यः ।

**गीतातात्पर्यनिर्णयः**

**''निष्कामं ज्ञानपूर्वं च निवृत्तमिह चोच्यते ।**<br>
**निवृत्तं सेवमानस्तु ब्रह्माभ्येति सनातनम् ।।**<br>
**बुद्ध्याऽविहिंसन्पुष्पैर्वा प्रणवेन समर्चयेत् ।**<br>
**वासुदेवात्मकं ब्रह्म मूलमन्त्रेण वा यतिः ।।**<br>
**मुक्तिरस्तीति नियमो ब्रह्मदृग्यस्य विद्यते ।**<br>
**तस्याप्यानन्दवृद्धिः स्याद्वैष्णवं कर्म कुर्वतः ।।**<br>
**कर्म ब्रह्मदृशा हीनं न मुख्यमिति कीर्तितम् ।**<br>
**तस्मात्कर्मेति तत्प्राहुर्यत्कृतं ब्रह्मदर्शिना ।।**

***प्रका०***— उक्तमर्थं प्रमाणैर्द्रढयति **निष्काममित्यादिना** ।।

***न्या०दी०***— अत्र स्मृतिसम्मतिं चाह **निष्काममिति** ।। अनेन कर्मिणां ज्ञानम् उच्यते । 'बुद्ध्या' इति ज्ञानिनां कर्म । 'मुक्तिः' इति उभयम् ।

***भा०दी०***— **अत्र स्मृतीति** । ज्ञानं विना न कर्मणः सम्यगनुष्ठानं कर्मणा विना ज्ञानस्य सम्पूर्णफलसाधनत्वाभाव इत्यत्रेत्यर्थः । यद्वा ज्ञानकर्मणोरन्योन्यसाहित्येनैव सम्यक्त्वमित्यस्मिन्नर्थ इत्यर्थः ।।

**गीतातात्पर्यनिर्णयः**

एतस्मान्न्यासिनां लोकं संयान्ति गृहिणोऽपि हि ।
ज्ञानमार्गः कर्ममार्ग इति भेदस्ततो न हि ।
तस्मादाश्रमभेदोऽयं कर्मसङ्कोचसम्भवः ।"

—इति व्यासस्मृतेः ॥ ४-५ ॥

*न्या०दी०*— कर्मिणां ज्ञानसद्भावे हेत्वन्तरमाह **एतस्मादिति** ॥ गृहिणामपि ज्ञानसद्भावादेवेत्यर्थः । अनेन "यत्साङ्ख्यैः" इति व्याख्यातं भवति । उभयोरपि ज्ञानकर्मसद्भावे कथमाश्रमभेद इत्यत आह **तस्मादिति** ॥ उभयोरप्युभयसद्भावस्य युक्त्यादिसिद्धत्वादिति भावः । सङ्कोचविकाससम्भवः ॥

*भा०दी०*— **युक्त्यादीति** । उभाभ्यां सम्पाद्यज्ञानकर्मणोः सम्यक्त्वान्यथानुपपत्तिरूपयुक्तिस्मृतिसिद्धत्वादित्यर्थः ॥ ४-५ ॥

**गीता**

**संन्यासस्तु महाबाहो दुःखमाप्तुमयोगतः ।**
**योगयुक्तो मुनिर्ब्रह्म न चिरेणाधिगच्छति ॥ ६ ॥**

*वि०वि०*— संन्यासाद्योगस्य वरत्वमन्वयव्यतिरेकाभ्यामुपपादयति **संन्यासस्त्विति** । अयोगतः योगं विना संन्यासो दुःखम् । कामजयादिजनितमाप्तुमेव न मोक्षादिप्राप्त्यर्थमिति व्यतिरेकः । यच्चाल्पफलं तन्महाफलस्य योगस्य पद्मरागस्येव तण्डुलमुष्टिः फलमेव न भवतीत्याशयः । मुनिः संन्यासी 'स हि लोके मुनिर्नाम यः कामक्रोधवर्जितः' इत्युक्तेः । योगयुक्तः सन्नचिरेण शीघ्रं ब्रह्माधिगच्छतीत्यन्वयः । व्याख्यानान्तरे तु समुचितयोरेव योगसंन्यासयोर्निःश्रेयसकरत्वमुक्तम् । तदन्वयव्यतिरेकाभ्यामुपपादयति । 'अयोगः' इति भावप्रधानो निर्देशः । योगरूपत्वं विनेत्यर्थः । उक्तं च—

'मोक्षोपायो योग इति तद्रूपो न्यास एव तु ।
विष्णवर्पिततया भद्रो नान्यो न्यासः कथञ्चन ॥'

इति । एवं च व्याख्यानद्वयेऽपि संन्यासस्य योगान्तर्भूतत्वं सिद्धम् ॥

**गीतातात्पर्यनिर्णयः**

**कुतः ? यस्मात् ज्ञानमार्गं कर्ममार्गं च सम्यगास्थित उभयोरपि फलं प्राप्नोति । तस्माज्ज्ञानिनां कर्माप्यनुष्ठेयम् । कर्मिणामपि गृहस्थानां ज्ञातव्यो भगवान् । न हि ज्ञानं विना कर्मणः सम्यगनुष्ठानं भवति ।**

*न्या०दी०*— ज्ञानैकगम्ययतिप्राप्यस्थानप्राप्तिसद्भावाच्च गृहिणां ज्ञानाधिकारोऽस्तीत्युक्त्वा उपसंह्रियते 'यत्' इति । तत्र "एकं साङ्ख्यम्" इत्युपसंहारवाक्ये ज्ञानकर्मणोरैक्यं किमर्थमुच्यत इत्यतो यथावद्व्याचष्टे **तस्मादिति** ।। **ज्ञानिनां** यतीनामिति शेषः । सम्य-क्कर्मानुष्ठानेनैव कर्मी कर्मफलं प्राप्नोति चेत्तथापि कुतस्तस्य ज्ञानमित्यत आह **न हीति** ।। एवं सम्यग्ज्ञानमार्गानुष्ठानेनैव ज्ञानफलं प्राप्नोति चेत्तथापि कुतो ज्ञानिनः कर्मेति शङ्कायां न हि कर्म विना ज्ञानमार्गस्य सम्यगनुष्ठानं भवति । सम्पूर्णफलसाधनत्वाभावादिति परिहारो द्रष्टव्यः ।

**गीतातात्पर्यनिर्णयः**

**"निष्कामं ज्ञानपूर्वं च निवृत्तमिह चोच्यते ।**
**निवृत्तं सेवमानस्तु ब्रह्माभ्येति सनातनम् ।।**
**बुद्ध्याऽविहिंसन्पुष्पैर्वा प्रणवेन समर्चयेत् ।**
**वासुदेवात्मकं ब्रह्म मूलमन्त्रेण वा यतिः ।।**
**मुक्तिरस्तीति नियमो ब्रह्मदृग्यस्य विद्यते ।**
**तस्याप्यानन्दवृद्धिः स्याद्वैष्णवं कर्म कुर्वतः ।।**
**कर्म ब्रह्मदृशा हीनं न मुख्यमिति कीर्तितम् ।**
**तस्मात्कर्मेति तत्प्राहुर्यत्कृतं ब्रह्मदर्शिना ।।**

*प्रका०*— उक्तमर्थं प्रमाणैर्द्रढयति **निष्काममित्यादिना** ।।

*न्या०दी०*— अत्र स्मृतिसम्मतिं चाह **निष्काममिति** ।। अनेन कर्मिणां ज्ञानम् उच्यते । 'बुद्ध्या' इति ज्ञानिनां कर्म । 'मुक्तिः' इति उभयम् ।

*भा०दी०*— **अत्र स्मृतीति** । ज्ञानं विना न कर्मणः सम्यगनुष्ठानं कर्मणा विना ज्ञानस्य सम्पूर्णफलसाधनत्वाभाव इत्यत्रेत्यर्थः । यद्वा ज्ञानकर्मणोरन्योन्यसाहित्येनैव सम्यक्त्वमित्यस्मिन्नर्थ इत्यर्थः ।।

**गीतातात्पर्यनिर्णयः**

**एतस्मान्न्यासिनां लोकं संयान्ति गृहिणोऽपि हि ।**
**ज्ञानमार्गः कर्ममार्ग इति भेदस्ततो न हि ।**
**तस्मादाश्रमभेदोऽयं कर्मसङ्कोचसम्भवः ।''**

**—इति व्यासस्मृतेः ॥ ४-५ ॥**

*न्या०दी०*— कर्मिणां ज्ञानसद्भावे हेत्वन्तरमाह **एतस्मादिति** ॥ गृहिणामपि ज्ञानसद्भावादेवेत्यर्थः । अनेन ''यत्साङ्ख्यैः'' इति व्याख्यातं भवति । उभयोरपि ज्ञानकर्मसद्भावे कथमाश्रमभेद इत्यत आह **तस्मादिति** ॥ उभयोरप्युभयसद्भावस्य युक्त्यादिसिद्धत्वादिति भावः । सङ्कोचविकाससम्भवः ॥

*भा०दी०*— **युक्त्यादीति** । उभाभ्यां सम्पाद्यज्ञानकर्मणोः सम्यक्त्वान्यथानुपपत्तिरूपयुक्तिस्मृतिसिद्धत्वादित्यर्थः ॥ ४-५ ॥

**गीता**

**संन्यासस्तु महाबाहो दुःखमाप्तुमयोगतः ।**
**योगयुक्तो मुनिर्ब्रह्म न चिरेणाधिगच्छति ॥ ६ ॥**

*वि०वि०*— संन्यासाद्योगस्य वरत्वमन्वयव्यतिरेकाभ्यामुपपादयति **संन्यासस्त्विति** । अयोगतः योगं विना संन्यासो दुःखम् । कामजयादिजनितमाप्तुमेव न मोक्षादिप्राप्त्यर्थमिति व्यतिरेकः । यच्चाल्पफलं तन्महाफलस्य योगस्य पद्मरागस्येव तण्डुलमुष्टिः फलमेव न भवतीत्याशयः । मुनिः संन्यासी 'स हि लोके मुनिर्नाम यः कामक्रोधवर्जितः' इत्युक्तेः । योगयुक्तः सन्नचिरेण शीघ्रं ब्रह्माधिगच्छतीत्यन्वयः । व्याख्यानान्तरे तु समुचितयोरेव योगसंन्यासयोर्निःश्रेयसकरत्वमुक्तम् । तदन्वयव्यतिरेकाभ्यामुपपादयति । 'अयोगः' इति भावप्रधानो निर्देशः । योगरूपत्वं विनेत्यर्थः । उक्तं च—

'मोक्षोपायो योग इति तद्रूपो न्यास एव तु ।
विष्णवर्पिततया भद्रो नान्यो न्यासः कथञ्चन ॥'

इति । एवं च व्याख्यानद्वयेऽपि संन्यासस्य योगान्तर्भूतत्वं सिद्धम् ॥

***वा०ल०***— 'संन्यासस्तु' इत्यत्र अयोगतः योगं विना यः संन्यासः स दुःखमाप्तुमेव, न सुखायेत्यर्थः । असाध्य इति भावः ॥

***सा०सं०***— पूर्वं 'ज्ञेयः' इत्यत्र स्वाभिमतसंन्यासशब्दार्थं स्मारयित्वा तस्य योगादवरत्वे ज्ञानान्तरङ्गत्वरूपं बाधकं 'यत् साङ्ख्यैः' इति श्लोकाभ्यां परिहृत्य, इदानीं तस्य योगादवरत्वे साधकमाह **संन्यासस्त्विति** । **अयोगतः** भगवदर्पणबुद्ध्या कर्मानुष्ठानरूपयोगाभावे । कामादि-वर्जनरूप**संन्यासस्तु दुःखमाप्तुमेव** परमपुमर्थहेतुत्वात् । स्वोचितकर्माननुष्ठानेन नरकप्राप्तेश्चेति भावः । तात्कालिकापमानादिकृतदुःखाभावस्त्वल्पत्वान्न फलमिति भावः । मुनिः संन्यासी । 'स हि लोके मुनिर्नाम यः कामक्रोधवर्जितः' इत्युक्तेः । **योगयुक्तो न चिरेण** शीघ्रम् । **ब्रह्माधि-गच्छती**त्यर्थः । एतेन योगाभावे पुमर्थहेतुत्वाभावः, सति तु तस्मिंस्तद्धेतुत्वं संन्यासस्येति योगस्य वरत्वे व्यतिरेकान्वयरूपं साधकमुक्तं भवति ।

यद्वा, योगसंन्यासयोः समुच्चितयोरेव निःश्रेयसकरत्वम्, 'उभौ' इत्यनेनोक्तम् । इदानीमसमुच्चये बाधकमाह **संन्यासस्त्विति** । कामादिवर्जनरूप**संन्यासस्तु, अयोगतः** । भावप्रधानम् । योग-रूपत्वाभावे केवलसंन्यासस्तु **दुःखमाप्तुमेव** विष्ण्वर्पितत्वादियोगरूपत्वं विना केवलकर्मत्यागो नरकफल एवेति भावः । योगरूपत्वं विना संन्यासस्यानर्थहेतुत्वमुक्त्वा योगरूपसंन्यासस्य मुक्ति-हेतुत्वमाह— **योगयुक्त इति** । **मुनिः** संन्यासी । संन्यासस्य योगावान्तरभेदत्वाद्योगरूपत्वोक्तिः । 'यं संन्यासमिति प्राहुर्योगं तं विद्धि' (६-२) इति वक्ष्यमाणगीतोक्तिरप्येतदभिप्राया । अतः **संन्यासः कर्मयोगश्चे**ति भेदोक्तिः कुरुपाण्डववन्न विरुद्धेति ज्ञेयम् ॥

***अ०प्र०***— यदि कर्मयोगोऽप्यन्ततः संन्यासेनैव ज्ञाननिष्ठस्तर्हि, आदित एव संन्यासः कर्तुं युक्त इति मन्वानं प्रत्याह **संन्यास** इति ।

हे महाबाहो ![१], संन्यासस्तु[२], अयोगतः[३], ब्रह्म प्राप्तुं[४], दुःखं[५], मुनिः[६], योगयुक्तः सन्[७], ब्रह्म[८], अचिरेण[९], अधिगच्छति[१०] इत्यन्वयः ।

हे महाबाहो ![१], संन्यासस्तु = ज्ञानं तु अत्र प्रथमायाः तृतीयार्थः तेन संन्यासेन ज्ञानेन[२], अयोगतः = कर्मयोगं विना[३], ब्रह्म, प्राप्तुं[४], दुःखं = कष्टतरं दुःखहेतुः अशक्य इत्यर्थः[५], यद्वा संन्यासस्तु ज्ञानं तु योगं विना प्राप्तुं कष्टतरम् ।

तदुक्तं गीतायां "क्लेशोधिकतरस्तेषामि"ति ।

"कृच्छ्रो महानिहभवाम्बुधिमप्लवेशाः
षड्वर्गनक्रमसुखेन तितीरिषन्ति" इति भागवते ।

"तथा मोक्षोपायो योग इति तद्रूपो न्यास एव तु ।
विष्ण्वर्पणं तथा भद्रो नान्यो न्यासः कथञ्चन ॥" इति वचनात् ।

योगयुक्तः = चित्तशुद्ध्याभावेन ज्ञाननिष्ठाया असम्भवात् अत्र चित्तशुद्धिरूपो योगः तेन योगेन चित्तशुद्ध्या युक्तः सन्, मुनिः संन्यासी नाम ज्ञानी भूत्वा, ब्रह्म अचिरेणैव, अधिगच्छति = अपरोक्षं जानाति, अतः चित्तशुद्धेः प्राक् कर्मयोग एव संन्यासाद्विशिष्यत इति पूर्वोक्तं सिद्धम् । तदुक्तम्—

प्रमादिनो बहिश्चित्ता पिशुना कलहोत्सुकाः ।
संन्यासिनोऽपि दृश्यन्ते दैवसन्दूषिताशयाः ॥" इति ॥ ६ ॥

**भाष्यम्**

**इतश्च संन्यासाद्योगो वर इत्याह— संन्यासस्त्विति । योगाभावे मोक्षादि-फलं न भवति । अतः कामजयादिदुःखमेव तस्य । मोक्षाद्येव हि फलम्; अन्यत् फलम् अल्पत्वाद् अफलमेवेति आशयः । तच्चोक्तम्—"विना मोक्षफलं यत्तु न तत्फलमुदीर्यते ॥" इति पाद्मे । यत्तु महाफलयोग्यं तस्याल्पं फलमेव न भवति । यथा पद्मरागस्य तण्डुलमुष्टिः । महाफलश्च योगयुक्तश्चेत् संन्यास इत्याह— योगयुक्त इति । मुनिः संन्यासी । तच्चोक्तम्— "स हि लोके मुनिर्नाम यः कामक्रोधवर्जितः ॥" इति ॥ ६ ॥**

***प०टी०***— अतिशयेन ज्ञानान्तरङ्गत्वाद्योगः संन्यासाधिक इत्युक्तम् । संन्यासस्य योगाभावे विफलत्वाच्चासौ वर इत्यर्थं श्लोकमवतारयति **इतश्चेति** । ननु कथं ज्ञानयोगसंन्यासस्य दुःखहेतु-त्वमुच्यते ? इत्यत आह **योगेति** । विफलत्वमेव दुःखसाधनत्वमित्यर्थः । ननु मोक्षाभावे फलान्तरसम्भवात् कथं संन्यासो विफलः ? इत्यत आह **मोक्षादीति** । तर्हि कृष्यादेरफलत्व-व्यवहारः किं न स्यात् ? इत्यत आह **यत्त्विति** । योगं व्यावहारिकेण फलासत्त्वात्, योग एवाधिक इत्युक्तम् । फलस्य तदन्वयित्वाच्चासावधिक इत्यर्थमुत्तरार्धमवतारयति **महाफलश्चेति** । अत्र योग-युक्तस्य मुनेः फलमुच्यते न संन्यासिन इत्यत आह **मुनिरिति** ॥

***न०टी०***— 'संन्यासः कर्मयोगश्च' इत्येतद्व्याख्याने द्वन्द्वत्यागात् तु संन्यासात् मत्पूजा इति वाक्योदाहरणेन भगवत्पूजात्मकत्वात् कर्मयोगः संन्यासाद्वर इत्युक्तम् । अधुनाऽनेन विना निःश्रेय-

कत्वाभावाच्च स तस्माद्वर इत्याह **इतश्चेति** । ननु निःश्रेयसकरयोरेव संन्यासकर्मयोगयोः कर्मयोगस्यातिनिःश्रेयसकरत्वमेव समर्थनीयम् । न तु संन्यासस्य दुःखहेतुत्वम् । पूर्वापरविरोधादित्याशङ्क्य तदेव समर्थ्यत इति भावेनाह **योगाभाव इति** । योगरहितसंन्यासस्य निष्फलत्वात् साधनानुष्ठानश्रम एवावशिष्यत इत्युच्यते । न तु नरकादिदुःखहेतुत्वम् । निष्फलत्वं च मोक्षादिमहाफलाभावादेव । न तु सर्वथा फलाभावादित्यर्थः । किञ्चित्फलहेतोरपि मुक्त्यहेतोरफलत्वोक्तिरयुक्तेत्यतः सप्रमाणकमाह **मोक्षादिति** । नन्वेवं तर्ह्यारोग्यहेतोरौषधादेरफलत्वोक्तिः किं न स्यात् ? इत्यत आह **यत्त्विति** । औषधादेर्मुक्तिहेतुत्वयोग्यताभावात् नातिप्रसङ्ग इति भावः । ननु योगरहितसंन्यासवत् सहितस्याप्यमुक्तिसाधनत्वे कथं साधनत्वं योगस्य तदुत्तमत्वम् ? इत्याशङ्कापरिहारत्वेनोत्तरार्धमवतार्य व्याचष्टे **महाफलश्चेति** । नन्वनेनैव योगयुक्तसंन्यासस्य मुक्तिसाधनत्वं नोच्यते । अत्र तद्वाचकपदाभावादित्याशङ्क्य, मुनिपदं तद्वाचकमित्येतत् सप्रमाणकमाह **मुनिरिति** ॥

***प्र०दी०***— 'संन्यासस्तु' इत्यस्य सङ्गतिमाह— **इतश्चेति** । ननु प्राक् संन्यासाद्योगस्य वरत्वे न कोऽपि हेतुरुक्तः । तत्कथमेवमुच्यते । मैवम् । संन्यासस्य योगावरत्वे बाधकं परिहृतम् । साधकमिदानीमुच्यते । बाधकाभावसहितमेव साधकं वस्तुनो व्यवस्थापकम् । तस्मादितश्चेति युक्तम् । पूर्वं संन्यासस्य निःश्रेयसकरत्वमुक्तम् । इदानीं कथं दुःखहेतुत्वमुच्यते । किंचानेन साधकमुक्तमित्यतो व्याचष्टे— **योगेति** । विष्ण्वर्पणबुद्ध्या कर्मकरणाभावे । संन्यासमात्रेणेति शेषः । आदिपदेन ज्ञानं गृह्यते । तस्य केवलसंन्यासिनः ।

योगाभावे संन्यासो निष्फल एवेत्येतन्न युज्यते । मोक्षाद्यभावे तात्कालिकापमानादिदुःखाभावादेर्भावादित्यत आह— **मोक्षादीति** । तत्र पुराणसम्मतिमाह— **तच्चेति** । ननु मोक्षफलाभावेऽपि धान्यादिनैव कृष्यादिकं सफलमित्युच्यते । तत्कथमेवमभिहितमित्यत उक्तं विवृणोति— **यत्त्विति** । महाफलं साधयितुं योगमित्यर्थः । मोक्षादिग्रहणं प्रकृतापेक्षयैव कृतमिति भावः । ननु संन्यासाद्योगस्य वरत्वमनेन साधितम् । तत्किमुत्तरार्धेनेत्यत आह— **महाफलश्चेति** । महत् फलं यस्मात् स तथोक्तः । योगाङ्गत्वेन संन्यासस्य ततोऽवरत्वं सिषाधयिषितम् । तच्चान्वयव्यतिरेकाभ्यां सिद्ध्यति । तत्र पूर्वार्धेन व्यतिरेकमुक्त्वाऽनेनान्वयमाचष्ट इति भावः । ननु योगोऽप्येवमेवेति चेत्सत्यम् । तथाऽपि चरमभावित्वेन विशेषः । नन्वत्र संन्यासवाचकं न श्रूयते । तत्कथमेवमुच्यत इत्यत आह— **मुनिरिति** । मुनिशब्दस्य कामादिवर्जनलक्षणसंन्यासवचनत्वं कुत इत्यत आह— **तच्चेति** ॥

*भा०दी०*— **बाधकमिति** । ज्ञानान्तरङ्गत्वरूपमित्यर्थः । **एवमेवेति** । यथा योगं विना कृतः संन्यासो न मोक्षहेतुस्तथा योगोऽपि तेन विना कृतो न महाफलहेतुरित्यर्थः । **चरमेति** । संन्यासापेक्षया चरमभावित्वाद् ज्ञानात् प्रभासितरगधनत्वात्ततोऽप्यस्यातिशय इति भावः ॥

*भा०र०*— समुच्चयहेत्वन्तरानुक्तेः चशब्दानुपपत्तिः ? इति शङ्कते **ननु प्रागिति** । एवमुच्यते 'इतश्च' इत्येवमुच्यते । **परिहृतमिति** । "संन्यासो हि ज्ञानान्तरङ्गत्वेनोक्तः (गी.भा. ५.४) इत्यत्र" इति शेषः । तथा च समुच्चयार्थत्वमित्याह **बाधकेति** । एवं च न केवलं बाधकाभावात् संन्यासाद्योगो वरः, अपि तर्हि साधकसद्भावाच्चेति युक्तम् एवं भाषणमित्यर्थः । **उक्तं** "संन्यासः कर्मयोगश्च" (५.२) इत्यत्र । **उच्यते** तथा च व्याहतिः । **किञ्चेति** । साधकं च 'संन्यासस्तु' इति वचनेन किमुक्तं भवतीत्यर्थः ।

**अपमानादिदुःखाभावादेरिति** । अपमानादिजनितदुःखाभावस्य, आदिपदगृहीतप्राकृतजनमानननिमित्तकसुखस्य च फलस्य सत्त्वादित्यर्थः । "बाह्यस्पर्शेष्वसक्तात्मा" (५.२१) इति गीताव्याख्याऽवसरे टीकायां संन्यासमात्रेण स्वस्वरूपसुखाविर्भावस्याप्यावेदितत्वाद् अत्रादिपदेन स्वरूपसुखसङ्ग्रह इत्यपि **आहुः** । **अत्र** अन्यत् = अपमानादिकृतदुःखाभावादिफलं न भवतीत्येतस्मिन्नर्थे । वचने "यस्य कस्यापि साधनस्य यत् फलत्वेनावगतं तत् तस्य फलं न भवति" इति कथं प्रतिषिध्यते ? इति शङ्कते **ननु मोक्षेति** । **उक्तम्** "अन्यत् फलम् अल्पत्वाद् अफलमेव" इत्यादावुक्तम् । "महाफलस्य योग्यं महाफलयोग्यम्" इति विग्रहमभिप्रेत्य तत्फलितमाह **महाफलमिति** । कृष्यादिकं तु मुक्त्यहेतुत्वात् न तद्योग्यमिति भावः । तर्हि वचने मोक्षपदस्य, भाष्ये मोक्षादिपदस्य चायोगः ? इत्यत आह **मोक्षादिग्रहणमिति** । **प्रकृतापेक्षया** योगयुक्तसंन्यासापेक्षया ।

**सिसाधयिषितं** साधयितुमिष्टम् । 'अन्वयव्यतिरेकाभ्याम्' इति वदन् केवलसंन्यासस्य दुःखफलकत्वेऽपि योगयुक्तस्य निःश्रेयसकरत्वमभिप्रेतम् इति न व्याहतिरित्यभिसन्धत्ते । **योगोऽप्येवमेवेति** । यथा "योगं विना संन्यासो निष्फलः", "सति च योगे सफलः" तथा "योगोऽपि संन्यासं विना निष्फलः", "सति च तस्मिन् सफलः" इत्यन्वयव्यतिरेकसाम्येन विनिगमकाभावात्, न योगाङ्गत्वं संन्यासस्येति भावः । **चरमेति** । कामादिवर्जनपूर्वकम् । ईश्वरार्पणबुद्ध्या स्ववर्णाश्रमविहितानुष्ठानं हि कर्मयोगः । तत्र कामादिवर्जनस्य पूर्वभावित्वात् तदनन्तरभाविनः कर्मानुष्ठानात्मनो योगस्य ज्ञानं प्रत्यव्यवहितसाधनत्वं "कर्मणा ज्ञानमातनोति" इति शास्त्रसिद्धमिति युक्तं संन्यासा-

पेक्षया तस्य प्राधान्यमिति भाव इति **स्वामिनः** । **संन्यासवचनत्वम्** उक्तलक्षणसंन्यासोपस्थापनद्वारा तद्वचनत्वम् । अत एव "यः कामक्रोधवर्जितः" इति भाष्यम् ॥ ६ ॥

***साङ्ख्ययोगावित्यादिश्लोकत्रयाक्षरार्थस्तु***— यदुक्तं "संन्यासं गृहीत्वा योगं त्यक्ष्यामि" इत्याशयेन द्वयोः श्रेयसि पृष्टे द्वावपि निःश्रेयसकरौ, तत्रापि संन्यासाद् योगो विशिष्टः । अतो युद्धं न त्वया त्याज्यमिति, तत्र संन्यसनस्य योगादवमत्वमुक्तम् । "न तस्य तत्त्वग्रहणाय" (भाग. ५.११.३) इति स्मृतौ विषयवैराग्याभावे ज्ञानानुत्पत्तिवचनेन तत एव तदुत्पत्तिरिति लब्ध्या तस्य ज्ञानोत्पत्तावत्यावश्यकत्वावेदनात् । कर्मयोगस्तु ज्ञानविरुद्धत्वेन 'अग्निमुग्धः' इति श्रुतावुक्तः, इति कथं योगाद् असाववमो भवेत् ?, कथं चैवंविधस्य निःश्रेयसकरत्वम् ? इत्याशङ्क्य संन्यास इव कर्मयोगोऽपि ज्ञानोत्पत्तावत्यावश्यक इत्युच्यते **साङ्ख्ययोगाविति** । **साङ्ख्यं** ज्ञानं **योगः** कर्म एतौ **पृथक्** साध्यसाधनभावहीनाविति न पण्डिता मन्यन्त इति ज्ञानं प्रत्यावश्यकत्वं योगस्योक्तम् । तत एव श्रेयस्करत्वं च । 'अग्निमुग्धः' इत्यादि तु काम्यकर्मविषयमिति भावः । अकाम्यमपि नित्यं नैमित्तिकं कर्म प्रत्यवायपरिहारार्थमेव, न ज्ञानान्तरङ्गमिति ये मन्यन्ते ते तु **बालाः** 'विविदिषन्ति' (बृ. ६.४.२२) इत्यादिश्रुतितात्पर्यालोचनासामर्थ्याद् अविवेकिनः । योगस्य ज्ञानसाधनत्वे प्रमिते भवेदेतत् । तदेव कथम् ? इत्यत उक्तम् **एकमपीति** ॥ ४ ॥

तत्र "उभयोर्मध्ये सम्यग् एकमप्यास्थितः फलं विन्दते" इति योजनायां द्वयोः साफल्यमात्रमुच्यते । "एकमपि सम्यगास्थितः उभयोः फलं विन्दते" इति पक्षे तु द्वयं किञ्चित्फलं प्रति स्वतन्त्रं साधनमुच्यते । पक्षद्वयेऽपि न योगस्य ज्ञानसाधनत्वे प्रमाणमुक्तम् ? इत्यतः 'एकमपि' इत्यस्याभिप्राय उच्यते **यत्साङ्ख्यैरिति** । "एकमपि सम्यगास्थित उभयोः = ज्ञानकर्मणोः फलं विन्दते" इत्यत्रेदमाकूतम् । "तरति शोकमात्मवित्" (छा. ७.१.१) इत्यादिना **यत्** ज्ञानफलं मोक्षस्थानं साङ्ख्यैः ज्ञानिभिराप्यं प्रमितम्, तत् तावद् **योगैः** योगिभिरपि प्राप्यमित्युच्यते— अपाम सोमम् (ऋ. ८.४८.३) इत्यादिना । तत्र विचार्यम्— किं ज्ञानं कर्म इति द्वयमपि स्वतन्त्रं मुक्तिसाधनम्, उत समुच्चितम् । अथवा एकं साक्षात्साधनम्, अपरं तत्साधनत्वेन परम्परयेति । न प्रथमद्वितीयौ । "नान्यः पन्थाः" (तै.आ. ३.१२) इत्यादिविरोधात् । तृतीयेऽपि चिन्त्यम्— "किं कस्य साधनम्" इति । तत्र न तावज्ज्ञानं कर्मसाधनत्वेन मोक्षहेतुः । "न किञ्चिदन्तराधाय" (ना.अ) इत्यादिविरोधात् । अतः परिशेषाद् योगेनापि ज्ञानद्वारा ज्ञानफलं प्राप्यत इति वक्तव्यमिति सिद्धम्— "योगस्य ज्ञानसाधनत्वम्" इति । अत्र साङ्ख्ययोगशब्दौ धर्मिणामुपलक्षकौ । अर्श

आद्यजन्तौ वा । अतः **साङ्ख्यं योगं चैकं** साध्यसाधनभावेनैकफलसाधनं **यः पश्यति सः** सम्यक् **पश्यति** ज्ञानी इति ॥ ५ ॥

संन्यासस्य योगादवरत्वे "न तस्य" (भाग. ५.११.३) इत्यादावावेदितं ज्ञानान्तरङ्गत्वं न स्यादिति बाधकं "साङ्ख्ययोगौ" (५.४) इत्यादिना परिहृत्य, इदानीं "संन्यासाद्योगो वरः" इत्यत्र साधकमुच्यते **संन्यासस्त्विति** । **अयोगतः** विष्णवर्पणबुद्ध्या कर्मकरणरूपयोगाभावे कामादि-वर्जनरूपः **संन्यासस्तु** दुःखमाप्तुमेव भवति, न पुनस्तेन किमपि निःश्रेयसम् । तात्कालिकापमाना-दिदुःखाभावस्तु अल्पत्वादफलमेवेत्याशयः । **योगयुक्तस्तु मुनिः** संन्यासी **न चिरेण** शीघ्रं **ब्रह्मा-धिगच्छति** जानाति प्राप्नोति च । अनेन योगाभावे संन्यासस्य न निःश्रेयसकरत्वम्, तत्सहितत्वे तत्त्वम् इति व्यतिरेकान्वयलक्षणं संन्यासस्यावरत्वे साधकमुक्तं भवतीति ॥ ६ ॥

**गीतातात्पर्यनिर्णयः**

**"मोक्षोपायो योग इति तद्रूपो न्यास एव तु ।**
**विष्णवर्पिततया भद्रो नान्यो न्यासः कथञ्चन ॥" इत्याग्नेये ।**

*प्रका०*— संन्यासस्त्वित्येतद्व्याचष्टे **मोक्ष इत्यादिना** ।

*न्या०दी०*— समुच्चितयोरेव योगसंन्यासयोर्निःश्रेयसकरत्वमुक्तम् । असमुच्चये बाधकमुच्यते **संन्यासस्त्विति** । तत्स्मृत्यैव व्याचष्टे **मोक्षेति** ॥ **योग इति** ॥ उच्यत इति शेषः । विष्णवर्पिततया तद्रूप इति सम्बन्धः । पादत्रयम् उत्तरार्धव्याख्यानम् । 'नान्यः' इति पूर्वार्धस्य ।

*भा०दी०*— **उत्तरार्धव्याख्यानमिति** ॥ 'मोक्षे'ति प्रथमपादेन 'योगपदार्थस्य योगयुक्तो मुनिरि'त्यस्य पादद्वयेन 'ब्रह्मे'त्यादेर्व्याख्यानं 'भद्र' इत्यनेन कृतमित्यर्थः ॥ **पूर्वार्धस्येति** । अन्यो न्यासः भद्रो नेत्युक्त्या तद्व्याख्यानं स्पष्टमेव ॥

**गीतातात्पर्यनिर्णयः**

**विष्णवर्पितत्वादियोगरूपत्वं विना केवलकर्मत्यागो नरकफल एव ।**

*न्या०दी०*— तद्विवृणोति **विष्ण्विति** ॥ आदिपदेन स्वोचितकर्मणां विष्णवर्पणादिकं न कार्यमिति बुद्ध्या कृतो नरकफल इति ज्ञातव्यम् ।

*भा०दी०*— **तदिति** । पूर्वार्धव्याख्यानमित्यर्थः । **न कार्यमिति** । बुद्ध्या कृतो योग इत्यर्थः ॥

**गीतातात्पर्यनिर्णयः**

**"यं संन्यासमिति प्राहुर्योगं तं विद्धि पाण्डव ॥"**

**इति वक्ष्यमाणत्वात् । योगविशेषत्वान्न्यासस्य पृथगुक्तिः ॥ ६ ॥**

*प्रका०*— संन्यासस्यायोगरूपत्वं निषिध्य योगरूपत्वमुत्तराध्यायगतवाक्येन योजयति **यं संन्यासमिति** । संन्यासस्य योगरूपत्वेऽपि क्वचित् पृथक् निर्देशो युज्यत इत्याह **योगविशेषत्वादिति** ॥

*न्या०दी०*— "अयोगतः" इति योगरूपत्वं विनेति किमर्थमुच्यते । योगं विनेत्येव किं न स्यादित्यत आह **यमिति** ॥ "यं संन्यासम्" इति योगसंन्यासयोरैक्यस्य वक्ष्यमाणत्वात् संन्यासस्य योगरूपत्वमेव वाच्यमित्यर्थः । योगसंन्यासयोरैक्ये "संन्यासः कर्मयोगश्च" इति पृथगुक्तिः कथमित्यत आह **योगेति** ॥ योगो न्यासश्चेत्येक एवार्थः । अपि तु न्यासो योगावान्तरभेदः । अतः कुरुपाण्डववत् पृथगुक्तिरुपपन्नेत्यर्थः ॥

*भा०दी०*— **वक्ष्यमाणत्वादिति** । उत्तराध्याय इति योज्यम् ॥

**गीता**

**योगयुक्तो विशुद्धात्मा विजितात्मा जितेन्द्रियः ।**
**सर्वभूतात्मभूतात्मा कुर्वन्नपि न लिप्यते ॥ ७ ॥**

*वि०वि०*— योगयुक्तसंन्यासस्य मोक्षार्थत्वं प्रपञ्चयति **योगयुक्त इति** । योगयुक्तः विशुद्धचित्तः । अत एव विजितात्मा विजितमनाः । जितेन्द्रियः । सर्वभूतानामादानकर्तृत्वादात्मभूतः परमात्मा सः स्वसमीपं प्रत्यादानादिकर्ता यस्य स सर्वभूतात्मभूतात्मा—

'यच्चाप्नोति यदादत्ते यच्चात्ति विषयानिह ।
यच्चास्य सन्ततो भावस्तस्मादात्मेति भण्यते ॥'

इति वचनात् । सर्वभूतात्मनि विष्णौ भूतः स्थितः आत्मा यस्य स इति वा । कर्माणि कुर्वन्नपि ॥

*वा०ल०*— 'सर्वभूतात्मभूतात्मा' इत्यत्र सर्वभूतानाम् आत्मा अन्तर्यामी नारायणः, तस्मिन् भूतः जातः आत्मा चित्तं यस्य स तथोक्तः ॥

*सा०सं०*— योगयुक्तसंन्यासस्य महाफलहेतुत्वं प्रपञ्चयति **योगेति** । प्रपञ्चनं च 'यो न द्वेष्टि' इत्यत्र उक्तद्वेषादिवर्जनरूपसंन्यासस्य पूर्वार्धे कारणोपन्यासेन **ब्रह्माधिगच्छती**ति प्रागुक्त-मुक्तिफलं प्रति, उत्तरार्धे ब्रह्मज्ञानरूपावान्तरफलोक्त्या चेति ध्येयम् । **योगयुक्तः** कर्मयोगयुक्तः । **विशुद्धात्मा** विशुद्धस्वभावः । अत एव विजितमनस्को जितेन्द्रियः । सर्वभूतात्मा सर्वभूताना-मादानादिकर्ता, स्वामीति यावत् । सर्वभूतात्मभूतः सर्वप्राणिनां स्वामिभूतः स एव स्वस्यात्मा आदानादिकर्ता स्वामी यस्य स **सर्वभूतात्मभूतात्मा** । ज्ञानोपलक्षणमेतत् । सर्वभूतात्मभूतात्मेति ज्ञानीत्यर्थः । **कुर्वन्नपि न लिप्यते** मुक्तो भवतीत्यर्थः । जितेन्द्रियत्वादिद्वेषादिवर्जनकारणं 'सर्व-स्वामी मम स्वामी' इति ज्ञानं ब्रह्माधिगतावान्तरफलमित्युक्तं भवति ।

यद्वा, 'योगयुक्तः' इत्यत्र भगवदर्पणबुद्ध्या कर्मानुष्ठानरूपो योग उक्तः । 'सर्व' इत्यादिना तु सर्वभूतात्मनि हरौ भूतमनाः स्थितमना इत्यर्थः ॥

*अ०प्र०*— कर्मयोगादिक्रमेण ब्रह्माधिगमे सत्यपि तदुपरितनेन कर्मणा बन्धः स्यादेवे-त्याशङ्क्याऽऽह **योगयुक्त इति** ।

अन्वयः स्पष्टः । योगयुक्तः = अत्र योगो नाम इन्द्रियनियमः तत्त्ववित् पुमान्[१], अत एव विशुद्धात्मा = विशुद्धः आत्मा चित्तं यस्य सः सत्त्वाधिष्ठितमना इत्यर्थः[२], अत एव विजितात्मा = विजितः आत्मा शरीरं येन[३], अत एव जितेन्द्रियः = जितानि इन्द्रियाणि येन तथा[४], ततश्च सर्वभूतात्मभूतात्मा = सर्वभूतानां आदानादिकर्तृत्वात् आप्तभूतो विष्णुः सर्वभूतात्मभूतः विष्णुः स एव आत्मा मे स्वसमीपप्रत्यादानादिकर्ता इति धीर्यस्य सः सर्वभूतात्मभूतात्मा यद्वा सर्वभूतात्मनि सर्वभूतान्तर्यामिणि विष्णौ भूतः स्थितः आत्मा मनो यस्य सः तथा ।

"आदानात् सर्वभूतानां विष्णुरात्मा प्रकीर्तितः ।
सर्वभूतात्मभूतात्मा तत्र भूतमनाः पुमान् ॥" इति[५],

भूतात्मा ईश्वरेच्छादिना इन्द्रियाणि स्वविषयेषु प्रवर्तन्त, इति धारयन् बुद्ध्या निश्चित्य कुर्वन्नपि लोकसङ्ग्रहार्थं स्वाभाविकं दर्शनादिकं कुर्वन्नपि अहं किञ्चिदपि न करोमि इति मन्यते सः[६], न लिप्यते = कर्तृत्वाभिमानान्न श्लिष्यते इति पूर्वेणान्वयः । न बध्यते = विष्णुनाथेष्वीरितानि मन आदीनि सर्वशः वर्ततेऽन्यो न स्वतन्त्र इति जानाति तत्त्ववित् ॥ ७ ॥

**गीतातात्पर्यनिर्णयः**

**"यं संन्यासमिति प्राहुर्योगं तं विद्धि पाण्डव ॥"**

**इति वक्ष्यमाणत्वात् । योगविशेषत्वान्न्यासस्य पृथगुक्तिः ॥ ६ ॥**

*प्रका०*— संन्यासस्यायोगरूपत्वं निषिध्य योगरूपत्वमुत्तराध्यायगतवाक्येन योजयति **यं संन्यासमिति** । संन्यासस्य योगरूपत्वेऽपि क्वचित् पृथक् निर्देशो युज्यत इत्याह **योगविशेषत्वादिति** ॥

*न्या०दी०*— "अयोगतः" इति योगरूपत्वं विनेति किमर्थमुच्यते । योगं विनेत्येव किं न स्यादित्यत आह **यमिति** ॥ "यं संन्यासम्" इति योगसंन्यासयोरैक्यस्य वक्ष्यमाणत्वात् संन्यासस्य योगरूपत्वमेव वाच्यमित्यर्थः । योगसंन्यासयोरैक्ये "संन्यासः कर्मयोगश्च" इति पृथगुक्तिः कथमित्यत आह **योगेति** ॥ योगो न्यासश्चेत्येक एवार्थः । अपि तु न्यासो योगावान्तरभेदः । अतः कुरुपाण्डववत् पृथगुक्तिरुपपन्नेत्यर्थः ॥

*भा०दी०*— **वक्ष्यमाणत्वादिति** । उत्तराध्याय इति योज्यम् ॥

**गीता**

**योगयुक्तो विशुद्धात्मा विजितात्मा जितेन्द्रियः ।**
**सर्वभूतात्मभूतात्मा कुर्वन्नपि न लिप्यते ॥ ७ ॥**

*वि०वि०*— योगयुक्तसंन्यासस्य मोक्षार्थत्वं प्रपञ्चयति **योगयुक्त इति** । योगयुक्तः विशुद्धचित्तः । अत एव विजितात्मा विजितमनाः । जितेन्द्रियः । सर्वभूतानामादानकर्तृत्वादात्मभूतः परमात्मा सः स्वसमीपं प्रत्यादानादिकर्ता यस्य स सर्वभूतात्मभूतात्मा—

'यच्चाप्नोति यदादत्ते यच्चात्ति विषयानिह ।
यच्चास्य सन्ततो भावस्तस्मादात्मेति भण्यते ॥'

इति वचनात् । सर्वभूतात्मनि विष्णौ भूतः स्थितः आत्मा यस्य स इति वा । कर्माणि कुर्वन्नपि ॥

*वा०ल०*— 'सर्वभूतात्मभूतात्मा' इत्यत्र सर्वभूतानाम् आत्मा अन्तर्यामी नारायणः, तस्मिन् भूतः जातः आत्मा चित्तं यस्य स तथोक्तः ॥

***सा०सं०***— योगयुक्तसंन्यासस्य महाफलहेतुत्वं प्रपञ्चयति **योगेति** । प्रपञ्चनं च 'यो न द्वेष्टि' इत्यत्र उक्तद्वेषादिवर्जनरूपसंन्यासस्य पूर्वार्धे कारणोपन्यासेन **ब्रह्माधिगच्छती**ति प्रागुक्त-मुक्तिफलं प्रति, उत्तरार्धे ब्रह्मज्ञानरूपावान्तरफलोक्त्या चेति ध्येयम् । **योगयुक्तः** कर्मयोगयुक्तः । **विशुद्धात्मा** विशुद्धस्वभावः । अत एव विजितमनस्को जितेन्द्रियः । सर्वभूतात्मा सर्वभूताना-मादानादिकर्ता, स्वामीति यावत् । सर्वभूतात्मभूतः सर्वप्राणिनां स्वामिभूतः स एव स्वस्यात्मा आदानादिकर्ता स्वामी यस्य स **सर्वभूतात्मभूतात्मा** । ज्ञानोपलक्षणमेतत् । सर्वभूतात्मभूतात्मेति ज्ञानीत्यर्थः । **कुर्वन्नपि न लिप्यते** मुक्तो भवतीत्यर्थः । जितेन्द्रियत्वादिद्वेषादिवर्जनकारणं 'सर्व-स्वामी मम स्वामी' इति ज्ञानं ब्रह्माधिगतावान्तरफलमित्युक्तं भवति ।

यद्वा, 'योगयुक्तः' इत्यत्र भगवदर्पणबुद्ध्या कर्मानुष्ठानरूपो योग उक्तः । 'सर्व' इत्यादिना तु सर्वभूतात्मनि हरौ भूतमनाः स्थितमना इत्यर्थः ॥

***अ०प्र०***— कर्मयोगादिक्रमेण ब्रह्माधिगमे सत्यपि तदुपरितनेन कर्मणा बन्धः स्यादेवे-त्याशङ्क्याऽऽह **योगयुक्त इति** ।

अन्वयः स्पष्टः । योगयुक्तः = अत्र योगो नाम इन्द्रियनियमः तत्त्ववित् पुमान्[1], अत एव विशुद्धात्मा = विशुद्धः आत्मा चित्तं यस्य सः सत्त्वाधिष्ठितमना इत्यर्थः[2], अत एव विजितात्मा = विजितः आत्मा शरीरं येन[3], अत एव जितेन्द्रियः = जितानि इन्द्रियाणि येन तथा[4], ततश्च सर्वभूतात्मभूतात्मा = सर्वभूतानां आदानादिकर्तृत्वात् आप्तभूतो विष्णुः सर्वभूतात्मभूतः विष्णुः स एव आत्मा मे स्वसमीपप्रत्यादानादिकर्ता इति धीर्यस्य सः सर्वभूतात्मभूतात्मा यद्वा सर्वभूतात्मनि सर्वभूतान्तर्यामिणि विष्णौ भूतः स्थितः आत्मा मनो यस्य सः तथा ।

"आदानात् सर्वभूतानां विष्णुरात्मा प्रकीर्तितः ।
सर्वभूतात्मभूतात्मा तत्र भूतमनाः पुमान् ॥" इति[5],

भूतात्मा ईश्वरेच्छादिना इन्द्रियाणि स्वविषयेषु प्रवर्तन्त, इति धारयन् बुद्ध्या निश्चित्य कुर्वन्नपि लोकसङ्ग्रहार्थं स्वाभाविकं दर्शनादिकं कुर्वन्नपि अहं किञ्चिदपि न करोमि इति मन्यते सः[6], न लिप्यते = कर्तृत्वाभिमानान्न श्लिष्यते इति पूर्वेणान्वयः । न बध्यते = विष्णुनाथेष्वीरितानि मन आदीनि सर्वशः वर्ततेऽन्यो न स्वतन्त्र इति जानाति तत्त्ववित् ॥ ७ ॥

भाष्यम्

**एतदेव प्रपञ्चयति— योगयुक्त इति । सर्वभूतात्मभूतः परमेश्वरः । 'यच्चाप्नोति' इत्यादेः । स आत्मभूतः स्वसमीपं प्रत्यादानादिकर्ता यस्य सः सर्वभूतात्मभूतात्मा ॥ ७ ॥**

*प०टी०*— ननु कथं योगयुक्तेन संन्यासेन मोक्षः ? इत्याशङ्क्योत्तरत्वेनोत्तरश्लोकमवतारयति **एतदेवेति** । 'सर्वभूतात्मभूतात्मा' पदमन्यथाप्रतीतिनिरासाय यथावद्व्याचष्टे **सर्वेति** । योगयुक्ततया कृतसंन्यासेन कर्मलेपाभावेन मोक्ष इत्यर्थः ॥

*न०टी०*—ननु कर्मैव योगः कर्मयोगः । कर्मणश्च बन्धकत्वात् कथं तद्युक्तः संन्यासी ब्रह्म गच्छति ? इत्याशङ्कापरिहारायोक्तप्रपञ्चात्मकत्वेनोत्तरं श्लोकमवतारयति **एतदेवेति** । यथावद्विष्णुं ज्ञात्वा, तदर्थत्वेन कर्मकरणमित्येतत् कर्मकरणमेव कर्मकौशलमेव योगः, न कर्ममात्रम् । अतस्तद्युक्तः संन्यासी कर्म कुर्वन्नपि न लिप्यत इति युक्तमेव । 'विशुद्धात्मा विजितात्मा जितेन्द्रियः' इति सन्न्यास्युच्यते । विशुद्धबुद्धित्वात् विजितमनाः । अत एव जितबाह्येन्द्रियश्च । अतः स कामक्रोधवर्जित इत्यर्थः । जीवपरमात्मैक्यस्य लाक्षणिकत्वात् सर्वप्रमाणविरुद्धत्वाच्च, 'सर्वभूतात्मभूतात्मा' इत्यस्य मुख्यार्थं सर्वप्रमाणानुकूलमाह **सर्वेति** ॥

*प्र०दी०*— प्रकृतप्रमेयस्य समाप्तत्वादुत्तरस्य वैयर्थ्यमाशङ्क्याह— **एतदेवेति** । योगयुक्तस्य संन्यासस्य महाफलत्वमेव । प्रपञ्चनं च 'यो न द्वेष्टि' इत्यत्रोक्तद्वेषादिवर्जनकारणोपन्यासेन 'ब्रह्माधिगच्छति' इत्युक्तब्रह्मज्ञानावान्तरफलोपन्यासेन चेति ज्ञातव्यम् ।

सर्वभूतात्मभूतात्मेत्यनेन जीवस्य परमात्मस्वरूपत्वमुच्यत इत्यन्यथाप्रतीतिनिरासायाह— **सर्वेति** । सर्वभूतानामात्मभूतः कथमित्यत उक्तम्— **यच्चेति** । एतन्निर्वचनमाश्रित्य न स्वरूपत्वमित्यर्थः । 'स आत्मभूतः' इति सर्वभूतात्मभूत इत्युक्तस्यानुवादः । स्वसमीपमित्यादिद्वितीयात्मशब्दस्यार्थः । एवं जानन्नत्र विवक्षितः ॥

*भा०दी०*— **कारणोपन्यासेनेति** । विशुद्धात्मत्वजितेन्द्रियत्वरूपकारणेत्यर्थः ॥

*भा०र०*— 'एतदेव' इत्यस्यार्थमाह **योगयुक्तस्येति** । उक्तस्य विस्तरेण वर्णनं हि प्रपञ्चनम् । तदस्ति प्रकृते इत्याह **प्रपञ्चनं चेति** । **कारणोपन्यासेनेति** । "विशुद्धात्मा विजितात्मा जितेन्द्रियः" इति यद् द्वेषादिवर्जने कारणं तदुपन्यासेनेत्यर्थः । तथा च **प्राचीनटीका "विशु-**

**द्धात्मा** विशुद्धबुद्धिः विशुद्धबुद्धित्वात् विजितमनाः । अत एव जितबाह्येन्द्रियः । अतो द्वेषादि-वर्जितः'' इति । अधिपूर्वस्य गच्छतेः ज्ञानेऽपि प्रसिद्धेरुक्तम् **ब्रह्मज्ञानेति** । **अवान्तरफलेति** । ''कुर्वन्नपि न लिप्यते'' इति सर्वकर्मलेपाभावरूपं यद् ज्ञानावान्तरफलं तदुपन्यासेनेत्यर्थः । मोक्ष-स्यैव महाफलत्वाद् 'अवान्तर' इत्युक्तम् । ''सर्वेषां ब्रह्मादीनां स्तम्बपर्यन्तानां भूतानाम् आत्मभूत आत्मा प्रत्यक्चेतनः यस्य सः सर्वभूतात्मभूतात्मा'' (शां.भा. ५.७) इति **सङ्करेण** भाषणादाह **सर्वभूतात्मभूतात्मेत्यनेनेति** । ''इत्यादेर्निर्वचनात्'' इति संयोज्य, तत्र पञ्चमी ल्यब्लोपनिमित्ते-त्यभिप्रायेणाह **एतन्निर्वचनमाश्रित्य इति** । ''यच्चाप्नोति यदादत्ते यच्चात्ति विषयानिह । यच्चास्य सन्ततो भावः तस्मादात्मेति भण्यते'' (म.भा.) इति वचनोक्तं निर्वचनमाश्रित्य सर्वभूतानाम् आदानादिकर्तृत्वेन निमित्तेन ''सर्वभूतानाम् आत्मभूतः'' इति परमेश्वरः प्रतिपत्तव्यः, न पुनः सर्व-भूतस्वरूपत्वमाश्रित्य तथेति ज्ञातव्यमित्यर्थः । बहुमानविरुद्धत्वात् जीवपरमात्मैक्यस्येति भावः । ''स आत्म....'' इत्यादि भाष्यं सङ्गमयति **स इत्यादि** । 'स्वसमीपम्' इत्यत्र स्वशब्दो भगवत्परो भाष्ये, न त्वेवंविधसर्वभूतात्मत्वस्य । सर्वसाधारणत्वात् कथं साधकस्यैव एतद्विशेषणम् ? इत्यत आह **एवं जानन्निति** । ''एवं ज्ञानवान्'' इति वक्तुं शक्येऽपि ''एवं जानन्'' इति वदन् ''इति जानन् हि तत्त्ववित्'' (अ.पु.) इति तात्पर्यनिर्णयोदाहृतवचनं (गी.ता. ५.९) न्यायसाम्याद् अत्राप्यनुसन्धातव्यमिति सूचयति । सर्वस्वामित्व-आत्मस्वामित्वप्रकारकभगवज्ज्ञानं च न साधा-रणमिति युक्तमेव साधकविशेषणमिति भावः ॥ ७ ॥

***गीताक्षरार्थस्तु***— योगयुक्तस्य संन्यासस्य महाफलत्वं यत् पूर्वश्लोकोक्तं तदेव विशुद्धात्म-त्वरूपकारणोपन्यासादिना प्रपञ्च्यते **योगयुक्त इति** । कर्मयोगयुक्तः, **विशुद्ध आत्मा** बुद्धिः यस्य सः तथा । अत एव **विजितः** वशीकृतः आत्मा मनः यस्य सः तथा, तत एव जितबाह्ये-न्द्रियः । सर्वेषां भूतानाम् आदानादिकर्तृत्वेन **आत्मत्वं** स्वामित्वं प्राप्तः सर्वभूतात्मभूतः भगवान्, स **आत्मा** स्वामी यस्य सः सर्वभूतात्मभूतात्मा, ''सर्वस्वामी मम स्वामी'' इति जानन् इति यावत् । **कुर्वन्नपि** सर्वाणि कर्माणि अनुतिष्ठन् अपि **कर्मभिः न लिप्यते** तत्कृतम् अशुभत्वादिकं न प्राप्नोतीति ॥ ७ ॥

**गीतातात्पर्यनिर्णयः**

**सर्वभूतात्मभूतात्मेति मुख्ययोगः ।**

**''आदानात् सर्वभूतानां विष्णुरात्मा प्रकीर्तितः ।**

**सर्वभूतात्मभूतात्मा तत्र भूतमनाः पुमान् ॥'' इति च ॥ ७ ॥**

भाष्यम्

**एतदेव प्रपञ्चयति— योगयुक्त इति । सर्वभूतात्मभूतः परमेश्वरः । 'यच्चाप्नोति' इत्यादेः । स आत्मभूतः स्वसमीपं प्रत्यादानादिकर्ता यस्य सः सर्वभूतात्मभूतात्मा ॥ ७ ॥**

*प०टी०*— ननु कथं योगयुक्तेन संन्यासेन मोक्षः ? इत्याशङ्क्योत्तरत्वेनोत्तरश्लोकमवतारयति **एतदेवेति** । 'सर्वभूतात्मभूतात्मा' पदमन्यथाप्रतीतिनिरासाय यथावद्व्याचष्टे **सर्वेति** । योगयुक्ततया कृतसंन्यासेन कर्मलेपाभावेन मोक्ष इत्यर्थः ॥

*न०टी०*—ननु कर्मैव योगः कर्मयोगः । कर्मणश्च बन्धकत्वात् कथं तद्युक्तः संन्यासी ब्रह्म गच्छति ? इत्याशङ्कापरिहारायोक्तप्रपञ्चात्मकत्वेनोत्तरं श्लोकमवतारयति **एतदेवेति** । यथावद्विष्णुं ज्ञात्वा, तदर्थत्वेन कर्मकरणमित्येतत् कर्मकरणमेव कर्मकौशलमेव योगः, न कर्ममात्रम् । अत-स्तद्युक्तः संन्यासी कर्म कुर्वन्नपि न लिप्यत इति युक्तमेव । 'विशुद्धात्मा विजितात्मा जितेन्द्रियः' इति सन्न्यास्युच्यते । विशुद्धबुद्धित्वात् विजितमनाः । अत एव जितबाह्येन्द्रियश्च । अतः स कामक्रोधवर्जित इत्यर्थः । जीवपरमात्मैक्यस्य लाक्षणिकत्वात् सर्वप्रमाणविरुद्धत्वाच्च, 'सर्वभूतात्म-भूतात्मा' इत्यस्य मुख्यार्थं सर्वप्रमाणानुकूलमाह **सर्वेति** ॥

*प्र०दी०*— प्रकृतप्रमेयस्य समाप्तत्वादुत्तरस्य वैयर्थ्यमाशङ्क्याह— **एतदेवेति** । योगयुक्तस्य संन्यासस्य महाफलत्वमेव । प्रपञ्चनं च 'यो न द्वेष्टि' इत्यत्रोक्तद्वेषादिवर्जनकारणोपन्यासेन 'ब्रह्मा-धिगच्छति' इत्युक्तब्रह्मज्ञानावान्तरफलोपन्यासेन चेति ज्ञातव्यम् ।

सर्वभूतात्मभूतात्मेत्यनेन जीवस्य परमात्मस्वरूपत्वमुच्यत इत्यन्यथाप्रतीतिनिरासायाह— **सर्वेति** । सर्वभूतानामात्मभूतः कथमित्यत उक्तम्— **यच्चेति** । एतन्निर्वचनमाश्रित्य न स्वरूपत्व-मित्यर्थः । 'स आत्मभूतः' इति सर्वभूतात्मभूत इत्युक्तस्यानुवादः । स्वसमीपमित्यादिद्वितीयात्म-शब्दस्यार्थः । एवं जानन्नत्र विवक्षितः ॥

*भा०दी०*— **कारणोपन्यासेनेति** । विशुद्धात्मत्वजितेन्द्रियत्वरूपकारणेत्यर्थः ॥

*भा०र०*— 'एतदेव' इत्यस्यार्थमाह **योगयुक्तस्येति** । उक्तस्य विस्तरेण वर्णनं हि प्रप-ञ्चनम् । तदस्ति प्रकृते इत्याह **प्रपञ्चनं चेति** । **कारणोपन्यासेनेति** । ''विशुद्धात्मा विजितात्मा जितेन्द्रियः'' इति यद् द्वेषादिवर्जने कारणं तदुपन्यासेनेत्यर्थः । तथा च **प्राचीनटीका ''विशु-**

**द्धात्मा** विशुद्धबुद्धिः विशुद्धबुद्धित्वात् विजितमनाः । अत एव जितबाह्येन्द्रियः । अतो द्वेषादि-वर्जितः'' इति । अधिपूर्वस्य गच्छतेः ज्ञानेऽपि प्रसिद्धेरुक्तम् **ब्रह्मज्ञानेति** । **अवान्तरफलेति** । ''कुर्वन्नपि न लिप्यते'' इति सर्वकर्मलेपाभावरूपं यद् ज्ञानावान्तरफलं तदुपन्यासेनेत्यर्थः । मोक्ष-स्यैव महाफलत्वाद् 'अवान्तर' इत्युक्तम् । ''सर्वेषां ब्रह्मादीनां स्तम्बपर्यन्तानां भूतानाम् आत्मभूत आत्मा प्रत्यक्चेतनः यस्य सः सर्वभूतात्मभूतात्मा'' (शां.भा. ५.७) इति **सङ्करेण** भाषणादाह **सर्वभूतात्मभूतात्मेत्यनेनेति** । ''इत्यादेर्निर्वचनात्'' इति संयोज्य, तत्र पञ्चमी ल्यब्लोपनिमित्ते-त्यभिप्रायेणाह **एतन्निर्वचनमाश्रित्य इति** । ''यच्चाप्नोति यदादत्ते यच्चात्ति विषयानिह । यच्चास्य सन्ततो भावः तस्मादात्मेति भण्यते'' (म.भा.) इति वचनोक्तं निर्वचनमाश्रित्य सर्वभूतानाम् आदानादिकर्तृत्वेन निमित्तेन ''सर्वभूतानाम् आत्मभूतः'' इति परमेश्वरः प्रतिपत्तव्यः, न पुनः सर्व-भूतस्वरूपत्वमाश्रित्य तथेति ज्ञातव्यमित्यर्थः । बहुमानविरुद्धत्वात् जीवपरमात्मैक्यस्येति भावः । ''स आत्म....'' इत्यादि भाष्यं सङ्गमयति **स इत्यादि** । 'स्वसमीपम्' इत्यत्र स्वशब्दो भगवत्परो भाष्ये, न त्वेवंविधसर्वभूतात्मत्वस्य । सर्वसाधारणत्वात् कथं साधकस्यैव एतद्विशेषणम् ? इत्यत आह **एवं जानन्निति** । ''एवं ज्ञानवान्'' इति वक्तुं शक्येऽपि ''एवं जानन्'' इति वदन् ''इति जानन् हि तत्त्ववित्'' (अ.पु.) इति तात्पर्यनिर्णयोदाहृतवचनं (गी.ता. ५.९) न्यायसाम्याद् अत्राप्यनुसन्धातव्यमिति सूचयति । सर्वस्वामित्व-आत्मस्वामित्वप्रकारकभगवज्ज्ञानं च न साधा-रणमिति युक्तमेव साधकविशेषणमिति भावः ॥ ७ ॥

***गीताक्षरार्थस्तु***— योगयुक्तस्य संन्यासस्य महाफलत्वं यत् पूर्वश्लोकोक्तं तदेव विशुद्धात्म-त्वरूपकारणोपन्यासादिना प्रपञ्च्यते **योगयुक्त इति** । कर्मयोगयुक्तः, **विशुद्ध आत्मा** बुद्धिः यस्य सः तथा । अत एव **विजितः** वशीकृतः आत्मा मनः यस्य सः तथा, तत एव जितबाह्ये-न्द्रियः । सर्वेषां भूतानाम् आदानादिकर्तृत्वेन **आत्मत्वं** स्वामित्वं प्राप्तः सर्वभूतात्मभूतः भगवान्, स **आत्मा** स्वामी यस्य सः सर्वभूतात्मभूतात्मा, ''सर्वस्वामी मम स्वामी'' इति जानन् इति यावत् । **कुर्वन्नपि** सर्वाणि कर्माणि अनुतिष्ठन् अपि **कर्मभिः न लिप्यते** तत्कृतम् अशुभत्वादिकं न प्राप्नोतीति ॥ ७ ॥

**गीतातात्पर्यनिर्णयः**

**सर्वभूतात्मभूतात्मेति मुख्ययोगः ।**

**''आदानात् सर्वभूतानां विष्णुरात्मा प्रकीर्तितः ।**

**सर्वभूतात्मभूतात्मा तत्र भूतमनाः पुमान् ॥'' इति च ॥ ७ ॥**

*प्रका०*— **मुख्ययोग**ः कर्मयोगाद्यपेक्षयेत्यवगन्तव्यम् ॥

*न्या०दी०*— योगरूपतां विना न्यासस्यानर्थसाधनत्वमुक्त्वा 'योगयुक्तः' इत्यनेन योगरूप-संन्यासस्योक्तं मोक्षसाधनत्वं प्रपञ्च्यते **योगयुक्त इति** ॥ तत्र योगसंन्यासयोरेव वक्तव्यत्वात् तयोश्च योगयुक्तादिपदैरुक्तत्वात् ''सर्वभूतात्मभूतात्मा'' इति किमुच्यत इत्यत आह **सर्वेति** ॥ अनेनापि योग एवोच्यत इति नासङ्गतिः । नापि योगयुक्तपदेन योगस्योक्तत्वात् वैय्यर्थ्यम् । योगयुक्तपदेन कर्मयोगस्योक्तत्वात्, अनेन ध्यानयोगस्योक्तत्वादिति भावः । अत्राधिकारिणः सर्वभूतैक्यमुच्यते । अतः कथमियं ध्यानयोगोक्तिरित्युच्यत इत्यतः स्मृत्यैव व्याचष्टे **आदानादिति** ॥ **भूतमनाः** स्थितमनाः ॥

**गीता**

## नैव किञ्चित्करोमीति युक्तो मन्येत तत्त्ववित् ।
## पश्यञ्छृण्वन्स्पृशञ्जिघ्रन्नश्नन्गच्छन्स्वपन् श्वसन् ॥ ८ ॥

*वा०ल०*— 'नैव किञ्चित्' इत्यत्र युक्तः योगयुक्तः तत्त्ववित् ज्ञानी किञ्चिदपि कर्म अहमेव करोमीति न मन्येत, किन्तु हरिप्रेरणयैव करोमीति चिन्तयेत् ।

*अ०प्र०*— कर्म कुर्वन्नपि न लिप्यत इत्येतद्विरुद्धमित्याशङ्क्य कर्तृत्वाभिमानाभावान्न विरुद्ध-मित्याह **नैवेति** द्वाभ्याम् ।

युक्तः[१], तत्त्ववित्[२], पश्यन्नादीनि निमिषन्नपीत्यन्तानि एतानि कर्माणि कुर्वन्नपि[१०], अहं किञ्चिदपि[११], नैव[१२], करोमीति[१३], मन्यते[१४] इत्यन्वयः ।

युक्तः = योगेन युक्तः[१], अत एव तत्त्ववित् = युक्तः क्रमेण तत्त्ववित् भूत्वा[२], पश्यन्, शृण्वन्, स्पृशन्, जिघ्रन्, अश्नन्, दर्शनश्रवणस्पर्शआघ्राणन-अशनानि चक्षुश्रोत्रत्वग्घ्राणरसनादिपञ्चानां पञ्चज्ञानेन्द्रियाणां व्यापाराः[७], तथा गच्छन् = गतिः पादयोः[८], स्वपन् = स्वापो बुद्धेः[९], श्वसन् = श्वासः प्राणस्य[१०], एतानि कर्माणि कुर्वन्नपि तदभिमानभूतानि इन्द्रियाणि इन्द्रियार्थेषु प्रवर्तन्ते इति धारयन् सन् इति उत्तरेणान्वयः । अहं किञ्चिदपि नैव करोमीति मन्यते[१४], इत्यर्थः ॥ ८ ॥

**गीता**

## प्रलपन्विसृजन्गृह्णन्नुन्मिषन्निमिषन्नपि ।
## इन्द्रियाणीन्द्रियार्थेषु वर्तन्त इति धारयन् ॥ ९ ॥

*वि०वि०*— योगरूपसंन्यासस्य मोक्षहेतुत्वमुक्तम् । तत्र संन्यासस्य योगरूपत्वं केन प्रकारेणेत्यतो यथा संन्यासस्य योगरूपत्वं तथा संन्यासं पुनः स्पष्टयति **नैव किञ्चिदित्यादि श्लोकद्वयेन** । परमेश्वरेच्छया इन्द्रियाणि विषयेषु वर्तन्त इति धारयन् स्वातन्त्र्याभावान्न किञ्चित्करोमीति मन्यते । उक्तं च—

'विष्णुनाऽर्थेष्वीरितानि मन आदीनि सर्वशः ।
वर्तन्तेऽन्यो न स्वतन्त्र इति जानाति तत्ववित् ॥' इति ॥

*वा०ल०*— 'इन्द्रियाणीन्द्रियार्थेषु' इत्यत्र इन्द्रियाणि हरिणा प्रेरितानीन्द्रियाणि ।

*सा०सं०*— 'ज्ञेयः' इत्यादिना 'विशुद्धात्मा' इत्यादिना च स्पष्टीकृतमपि संन्यासं सङ्कल्पत्यागोक्त्या पुनः स्पष्टयति **नैवेत्यादिश्लोकद्वयेन** । **युक्तः** कर्मयोगानुष्ठाता । **तत्त्ववित्** तत्त्वज्ञानी । दर्शनश्रवणस्पर्शनादिज्ञानेन्द्रियकर्मेन्द्रियव्यापारं कुर्वन्नपि **इन्द्रियाणीन्द्रियार्थेषु** हरीच्छया **वर्तन्त इति धारयन्** मनसाऽवमृशन् । स्वस्य स्वातन्त्र्याभावात्, **नैव किञ्चित् करोमीति मन्येते**त्यर्थः । सङ्कल्पत्यागोऽपि संन्यासशब्दार्थ इति भावः । संन्यासो योगरूपः सन् परमपुमर्थहेतुरित्युक्तम् । कथं तस्य योगरूपतेत्यतो वाऽऽह **नैवेति** । सर्वव्यापारं कुर्वन्नपीन्द्रियाणीशप्रेरितानि इन्द्रियार्थेषु वर्तन्ते, स एव स्वतन्त्रः, नैव किञ्चिदहं करोमीत्यनुसन्धानमेव द्वेषादिवर्जनरूपसंन्यासस्य योगरूपत्वं नामेति श्लोकद्वयतात्पर्यार्थः ॥

*अ०प्र०*— किञ्च, **प्रलपन्निति** ।

युक्तो तत्त्वविदिति पूर्वेणान्वयः । क्रमेण तत्त्ववित् प्रलपन् = प्रलापः वागिन्द्रियस्य[१], विसृजन् = विसर्गः पायूपस्थयोः[२], गृह्णन् = ग्रहणं हस्तयोः[३], उन्मिषन् निमिषन्नपि = उन्मेषनिमिषणे कूर्माख्यप्राणस्येति विवेकः[४-५], अपिशब्देन एवं एतानि कर्माणि कुर्वन्नपि लोकसङ्ग्रहार्थं स्वाभाविकं दर्शनादिकं कुर्वन् सन् अपि[६], इन्द्रियाणि = तदभिमानभूतानीन्द्रियाणि[७], इन्द्रियार्थेषु = विषयेषु[८], वर्तन्ते = प्रवर्तन्ते[९], इति धारयन् सन् = भूतान्तर्यामीश्वरः इच्छादिना इन्द्रियाणि स्वविषयेषु प्रवर्तन्त इति धारयन् बुद्ध्या निश्चित्य[१०], अहं किञ्चिदपि नैव करोमीति यः मन्यते इति पूर्वेणान्वयः । अथोत्तरेण अन्वयः— सः पापेन अभिमानत्यागात् न लिप्यते न बध्यते, तथोक्तम्—

विष्णुनार्थेष्वीरितानि मन आदीनि सर्वशः ।
वर्तन्तेऽन्योन्यतस्तत्र इति जानाति तत्त्ववित् ॥

तथा भागवते एकादशस्कन्धे—

देहं च नश्वरमवस्थितमुत्थितं वा सिद्धो न पश्यति यतोऽध्यगमत्स्वरूपम् ।
दैवादपेतमुत दैववशादपेतं वासो यथा परिगतं मदिरामदान्धः ॥

तथा—

देहोऽपि दैववशगः खलु कर्म यावत् स्वारम्भकं प्रति समीक्षत एव सासुः ।
तं सप्रपञ्चमधिरूढसमाधियोगः स्वाप्नं पुनर्न भजते प्रतिबुद्धवस्तु ॥

इत्यादिनोक्तं भवति ॥ ९ ॥

**भाष्यम्**

**संन्यासं स्पष्टयति पुनः श्लोकद्वयेन ॥ ८ ॥ ९ ॥**

***प०टी०***— न केवलं विवक्षितात्मत्वाद्येव संन्यासः, किन्तु सङ्कल्पत्यागोऽपीत्यभिप्रायेण श्लोकद्वयमवतारयति **संन्यासमिति** ॥

***न०टी०***—न केवलं द्वन्द्वत्यागः संन्यासः । किन्तु भगवत्प्रेरितेन्द्रियादिभिः क्रियमाणे कर्मणि 'अहं करोमि' इति सङ्कल्पत्यागरहित इति भावेन 'नैव' इत्यादिश्लोकद्वयमवतारयति **संन्यास-मिति** । 'विशुद्धात्मा' इत्यादिनेषत्स्पष्टितत्वात् **पुनः** इति । कामसङ्कल्पादिदोषरहितस्यैव विशुद्ध-बुद्धित्वात् ॥

***प्र०दी०***— "नैव किञ्चित्" इत्यादेः प्रतिपाद्यमाह— **संन्यासमिति** । ज्ञेय इत्यादिना विशुद्धात्मेत्यादिना च स्पष्टीकृतत्वात् 'पुनः' इति । स्पष्टनं च प्रागनुक्तसङ्कल्पत्यागस्याभिधानात् ॥

***भा०दी०***— **स्पष्टीकृतत्वादिति** । ज्ञेयः स नित्यसंन्यासीत्यत्र द्वेषादिवर्जनं संन्यासशब्दार्थ इति विशुद्धात्मेत्यादि तत्कारणोपन्यासेन च स्पष्टीकृतत्वादित्यर्थः ॥

***भा०र०***— **प्रागनुक्तेति** । 'ज्ञेयः' (५.३) इत्यत्र, 'विशुद्धात्मा' (५.७) इत्यत्र च अनुक्ते-त्यर्थः । **केचित्तु** संन्यासत्वेन रूपेण प्राग् अनुक्तस्य । कर्तृत्वाभिमानत्यागरूपसङ्कल्पत्यागस्य "नैव किञ्चित् करोमि" इत्यनेनाभिधानादित्यर्थः । तेन "कामसङ्कल्पवर्जिताः" (४.१९) इति पूर्वाध्याये कर्माङ्गत्वेन सङ्कल्पत्यागाभिधानेऽपि न दोष इत्याहुः ॥ ८-९ ॥

**गीताश्लोकद्वयाक्षरार्थस्तु**— 'ज्ञेयः' (५.३) इत्यादिना, 'विशुद्धात्मा' (५.७) इत्यादिना च स्पष्टीकृतोऽपि कर्मसंन्यासः प्राग् अनुक्तसङ्कल्पत्यागाभिधानेन पुनश्च स्पष्टीक्रियते । **युक्तः**

योगयुक्तः दर्शन-श्रवण-स्पर्शन-आघ्राणादिज्ञानेन्द्रियव्यापारान् गमनादिकर्मेन्द्रियचेष्टाश्च **कुर्वन्नपि** परमेश्वरेच्छया इन्द्रियाणि विषयेषु वर्तन्त इति मनसाऽवमृशन्, स्वस्य स्वातन्त्र्याभावात् "नैव किञ्चित् करोमि" इति मन्येत, त्यक्तसङ्कल्पो भवेदित्यर्थः । तथा च तत्त्वविदुच्यते । तथा च प्रस्थानान्तरे (गी.ता. ५.९)— "विष्णुनार्थेष्वीरितानि मन आदीनि सर्वशः । वर्तन्तेऽन्यो न स्वतन्त्र इति जानन् हि तत्त्ववित् ॥ (अ.पु.) इति ॥ ८-९ ॥

**गीतातात्पर्यनिर्णयः**

**यथा न्यासस्य योगरूपत्वं तथाऽऽह नैव किञ्चिदित्यादिना ।**

**"विष्णुनाऽर्थेष्वीरितानि मन आदीनि सर्वशः ।**
**वर्तन्तेऽन्यो न स्वतन्त्र इति जानन् हि तत्त्ववित् ॥"**

**—इति च ॥ ८-९ ॥**

*प्रका०*— **विष्णुना** इत्यनेन अभिमानत्यागरूपस्य न्यासस्य योगरूपत्वमुच्यते ॥

*न्या०दी०*— योगरूपसंन्यासस्य मोक्षहेतुत्वमुक्तम् । तत्र संन्यासस्य योगरूपत्वं केन प्रकारेणेत्यतः तत्परिहारत्वेन श्लोकद्वयमवतारयति 'यथे'ति ॥ तत्रेन्द्रियाणामेव स्वातन्त्र्येण कर्तृत्वमुच्यत इत्यन्यथाप्रतीतिनिरासाय स्मृत्यैव व्याचष्टे **विष्णुनेति** ॥

**गीता**

**ब्रह्मण्याधाय कर्माणि सङ्गं त्यक्त्वा करोति यः ।**
**लिप्यते न स पापेन पद्मपत्रमिवाम्भसा ॥ १० ॥**

*वि०वि०*— योगयुक्तसंन्यासवतो मुक्तिर्भवतीति नोपचार इति भावेन पुनः फलमाह **ब्रह्मणीति** । तत्पूजात्मकानि तत्कृतानि मम शुभार्थमिति ब्रह्मण्याधानम् । स्वातन्त्र्याभावापेक्षयैव जीवस्याकर्तृत्वम्—

'स्ववन्दनं यथा पित्रा कारितं शिशुकर्तृकम् ।
एवं पूजा विष्ण्वधीना भवेज्जीवकृतेत्यपि ॥' इति वचनात् ॥

*सा०सं०*— योगमपि किञ्चिद्विवृण्वन् संन्यासयोगाभ्यां युक्त एव कर्मणा न लिप्यत इति साधननियममाह **ब्रह्मणीति** । यद्यपि 'सन्यासस्तु' इत्यनेनैव संन्यासयोगौ मिलितावेव फलं साधयत

इति नियमो लब्ध एव, 'कुर्वन्नपि न लिप्यते' इति फलं चोक्तमेव । तथाऽपि संन्यासयोगौ मिलितावेव फलसाधनमिति नियमोक्तेरुपचारस्त्वनिवृत्त्यर्थं 'लिप्यते न स पापेन' इति पुनः फलोक्त्या नियमस्य फलसाधनताऽत्रोच्यत इत्यदोषः । **सङ्गं** फलकामनां **त्यक्त्वा ब्रह्मण्याधाय** मम शुभार्थं स्वपूजात्मकानि मया कारितानीत्यनुसन्धाय **कर्माणि यः करोति** भगवदधीन-कर्तृत्वशक्तिकः सन् करोति, **सोऽम्भसा पद्मपत्रमिव पापेन न लिप्यते** ज्ञानद्वारा मुक्तो भवतीत्यर्थः ॥

***अ०प्र०*— ब्रह्मणीति** ।

यः[1], कर्माणि[2], ब्रह्मणि[3], आधाय[4], सङ्गं[5], त्यक्त्वा[6], कर्म करोति[7], सः[8], पापेन[9], अम्भसा पद्मपत्रमिव[10], न लिप्यत इत्यन्वयः ।

यः[1], सर्वकर्माणि[2], ब्रह्मणि आधाय = समर्प्य तत्पूजात्मकानि तत्कृतानि मम शुभाद्यर्थानीति बुद्ध्या ईश्वरे समर्प्य[3-4], सङ्गं त्यक्त्वा = सङ्गं देहाभिमानं कर्मफलसङ्गं वा त्यक्त्वा[5-6], कर्म करोति[7], सः पापेन कर्तृत्वा-भिमानेन यद्वा बन्धहेतु तथा पापिष्ठेन पुण्यपापात्मकेन कर्मणा[9], अम्भसा पद्मपत्रमिव = पद्मपत्रं अम्भसिस्थितमपि अम्भसा न लिप्यते तद्वत्[10], असौ न लिप्यते[12], इत्यर्थः, स्वातन्त्र्यापेक्षया जीवस्य कर्तृत्वाभावः । तदुक्तम्—

स्ववन्दनं यथा पित्रा कारितं शिशुकर्तृकम् ।
एवं पूजा विष्णवधीना भवेज्जीवकृतेत्यपि ॥

कारितं शिशुनेति शेषः, शिशुकर्तृकं भवेदिति सम्बन्ध इति प्रमाणार्थः[10] ॥ १० ॥

**भाष्यम्**

**संन्यासयोगयुक्त एव च कर्मणा न लिप्यत इत्याह– ब्रह्मणीति । साधन-नियमस्योपचारत्वनिवृत्त्यर्थं पुनः पुनः फलकथनम् ॥ १० ॥**

***प०टी०*— उत्तरश्लोकमवतारयति **संन्यासेति** । 'योगयुक्तः' इत्यनेनैवास्य गतार्थत्वात् किमर्थमयं श्लोकः ? इत्यत आह **साधनेति** । योगेन विना न मोक्ष इत्युपचारः किं न स्यात् ? 'त्वां विना न मे जीवम्' इत्यादिवदिति चोद्यमनेन परिहृतमित्यर्थः ॥

***न०टी०*— कश्चिदेवमाह— 'नित्यनैमित्तिकं कर्म कुर्वन्नन्यत् परित्यजन् । मुच्यते संसृतेश्च' कामत्याग एव कर्मालेपहेतुः, न सङ्कल्पत्यागादिः इति । अन्यस्त्वन्यथा – 'निष्क्रियेण

परमात्मनैकीभावं पश्यत आत्मनः कर्माभावज्ञानात् सर्वकर्म – संन्यासाधिकार एव तस्य न किञ्चित् कर्तव्यम्' इति । तौ निराकर्तुमुत्तरं श्लोकमवतारयति **संन्यासेति** । संन्यासेन योगेन च युक्तः संन्यासयोगयुक्तः । स एव कर्मणा न लिप्यते । तद्रहितस्तु लिप्यते एव । नित्यनैमित्तिकं कर्म कुर्वन्, तथा निष्क्रियेण परमात्मनैकीभूतस्य मम सर्वकर्मसंन्यास एवाधिकारो न तु कर्मणीति यः कर्मयोगं जहाति, स तु सर्वकर्तुः परमात्मनो निष्क्रियत्वज्ञानदोषात्, स्वस्याल्पकर्तुः तेनाभेद-ज्ञानदोषात्, स्वविहितकर्मत्यागदोषाच्च नरक एव पततीति **चशब्दार्थः** । एवमेषः श्लोकत्रयार्थः सङ्ग्रहेणावगन्तव्यः । स्वतन्त्रं हि कर्तृत्वं च तदभावात् भगवत्तदस्य (?) तदायत्तसर्वचेष्टः नैवाहं किञ्चित् करोमि । भगवत्प्रेरितान्येव मनआदीन्द्रियाण्येवार्थेषु वर्तन्ते । अतः स एव कर्ता । भगवत्पूजात्मकानि च तानि कर्माणीत्युभयथाऽपि तस्मिन्नेव परे ब्रह्मणि कर्माण्याधाय स्वर्गादि-फलस्नेहं त्यक्त्वा, यः करोति स न लिप्यते । अन्यस्तु लिप्यत एवेति । नन्वेवं तर्हि 'विष्णुमित्र त्वदागमनं विनाऽस्मद्यज्ञो न सिद्ध्यति' इतिवत् संन्यासयोगौ विना कर्मालेपाख्यं कैवल्यं न सिद्ध्यतीति यः साधननियमः प्रतीयते, स चौपचारिकः किं न स्यात् ? ततश्च त्वदधीनसर्व-कर्मसंन्यास एवाधिकारो न कर्मयोग इत्याशङ्कामात्रं परिहरति **साधनेति** । फलमेव तात्पर्यलिङ्गम् । किं पुनस्तदभ्यासः ? तस्मान्मुख्य एव साधननियम इति भावः ॥

***प्र०दी०***— ननु 'योगयुक्त' इत्यनेन यत्संन्यासयोगयुक्तस्य कर्मालेपलक्षणं फलमुक्तं तदेव तस्य मुक्तस्य 'ब्रह्मण्याधाय' इति किमर्थं पुनरुच्यत इत्यत आह— **संन्यासेति** । प्रागुक्तस्यैव नियमोऽत्र क्रियते । सिद्धे सति आरम्भस्य नियमार्थत्वादिति भावः । योगविवरणं च किञ्चि-दधिकमिति चार्थः । ननु 'संन्यासस्तु' इत्यनेनैव संन्यासयोगौ मिलितावेव फलं साधयत इति नियमोऽपि लब्ध एव । तत्किमर्थमिदं संन्यासयोगयुक्तस्य ''कुर्वन्नपि न लिप्यते'', ''लिप्यते न स पापेन'' इति पुनः पुनः फलकथनमित्यत आह— **साधनेति** । साधननियमस्येति तदुक्ते-रित्यर्थः । संन्यासयोगौ मिलितावेव फलसाधनमिति नियमोक्तेरुपचारत्वमपि सम्भवति लोकवत् । तन्निवृत्त्यर्थमित्यर्थः ॥

***भा०दी०***— **तदुक्तेरिति** । साधननियमोक्तिरित्यर्थः । उभयसमुच्चयरूप इति सप्तम्यन्तम् ॥

***भा०र०***— **तस्य** संन्यासयोगयुक्तस्य । **इति किमर्थमिति** । **इति** ''श्लोके लिप्यते न स पापेन इत्यनेन'' इति शेषः । **प्रागुक्तस्यैव** ''योगयुक्तो विशुद्धात्मा'' (५.७) इति प्रागुक्तस्यैव संन्यासयोगस्य । ''इन् हन् पूषार्यम्णां शौ'' इत्यादौ सिद्धं वैयाकरणन्यायमाह **सिद्धे सतीति** । **योगविवरणमिति** । ''ब्रह्मण्याधाय कर्माणि'' (५.१०) इति कृतकर्मणां ''तत्पूजात्मकानि मम

शुभार्थम्'' इत्यनुसन्धानेन भगवति समर्पणोक्तेरिति भावः । **मिलितावेवेति** । उभयत्रान्वय-व्यतिरेकयोः तत्राभिप्रेतत्वादिति भावः । ननु उपचारो नाम गौणी वृत्तिः । स च शब्दधर्म एव । तत् कथं नियमे तच्छङ्का ? इत्यत आह **तदुक्तेरिति** । ''साधननियमोपचारत्वनिवृत्त्यर्थम्'' इति भाष्ये ''नियमस्य उपचारत्वनिवृत्त्यर्थम्'' इति विग्रह इति मनसि निधायैवमुक्तम् । उपचारत्व-गौणत्वमपि ॥ १० ॥

***गीताक्षरार्थस्तु***— ''योगयुक्तो विशुद्धात्मा'' (५.७) इत्यनेन यत् संन्यासयोगयुक्तस्य कर्मालेपलक्षणं फलमुक्तम्, तदेवं ''संन्यासयोगयुक्त एव कर्मणा न लिप्यते'' इति साधननियम-तात्पर्येण पुनरुच्यते । योगविवरणं च किञ्चिदधिकम् **ब्रह्मणीति** । ''तत्पूजात्मकानि मत्कृतानि मम शुभार्थम्'' इति **ब्रह्मणि कर्माणि आधाय** तत्र स्वातन्त्र्यमभिसन्धाय **सङ्गं** फलस्नेहं च त्यक्त्वा **यः करोति स पापेन न लिप्यते, पद्मपत्रमम्भसेवेति** । ननु ''संन्यासस्तु'' (५.६) इत्यनेनैव संन्यासयोगौ मिलितावेव फलं साधयत इति नियमोऽपि लब्ध एव, तत् किमर्थमिदं संन्यास-योगयुक्तस्य ''कुर्वन्नपि न लिप्यते'' (५.७) ''लिप्यते न स पापेन'' इति पुनः पुनः फलकथनमिति चेत् ? संन्यासयोगौ मिलितावेव फलसाधनमिति साधननियमोपचारत्वशङ्काव्युदासार्थमिति ब्रूम इत्याकरे स्फुटमिति ॥ १० ॥

**गीता**

# कायेन मनसा बुद्ध्या केवलैरिन्द्रियैरपि ।
# योगिनः कर्म कुर्वन्ति सङ्गं त्यक्त्वाऽऽत्मशुद्धये ॥ ११ ॥

***वि०वि०***— एवञ्च अस्त्याचार इत्याह **कायेनेति** । कायादिभिरिन्द्रियान्तैः केवलैः कामाह-ङ्काररहितैः स्नानध्यानादितत्त्वनिश्चयादिश्रवणकीर्तनादिकर्माणि सङ्गं फलस्नेहं त्यक्त्वा, आत्मनः चित्तस्य शुद्धये जीवस्यान्यथाकारपरित्यागेन स्वरूपाविर्भावाय च कुर्वन्ति ॥

***सा०सं०***— संन्यासयोगौ मिलितावेव फलहेतुरित्यत्राचारोऽस्तीत्याह **कायेनेति** । **देहेन** मनसा 'मनोबुद्धी तु द्वादश' इत्युक्तेर्बुद्धिरूपेन्द्रियेण **केवलैः** कामाहम्भावहीनैः स्वातन्त्र्याभिमान-रहितैर्वा । **इन्द्रियैर्योगिनो**ऽपि **सङ्गं त्यक्त्वा**ऽऽत्मनो मनसः शुद्धये । तत्र ज्ञानोत्पत्त्यर्थं पापालेपायेति वा, **कर्म कुर्वन्तीत्यर्थः** । पूर्वार्धेन संन्यासः, उत्तरार्धेन योगः । आत्मशुद्धय इति फलोक्तिः ॥

*अ०प्र०*— बन्धकत्वाभावमुक्त्वा मोक्षे हेतुत्वं सदाचारेण दर्शयति **कायेनेति** ।

योगिनः[१], आत्मशुद्धये[२], सङ्गम्[३], त्यक्त्वा[४], कायेन[५], मनसा[६], बुद्ध्या[७], केवलैः[८], इन्द्रियैरपि[९], कर्म[१०], कुर्वन्तीत्यन्वयः ।

योगिनः = योगोपायवन्तः[१], आत्मशुद्धये = चित्तशुद्धये[२], सङ्गं त्यक्त्वा = कर्मफलस्नेहं त्यक्त्वा[४], कायेन = स्नानादिना[५], मनसा = ध्यानादिना[६], बुद्ध्या = तत्त्वनिश्चयादिना[७], केवलैः = कर्माभिनिवेशरहितैः कामाहङ्काररहितैर्वा[८], इन्द्रियैरपि = ज्ञानेन्द्रिय-कर्मेन्द्रियदशकैरपि[९], कर्म = तत्तत्साध्यं स्नानध्यानतत्त्वनिश्चयश्रवणकीर्तनादिकं कर्म आत्माज्ञानजन्यदोषनाशार्थम्[१०] कुर्वन्ति = आचरन्ति[११] इत्यर्थः ॥ ११ ॥

**भाष्यम्**

## एवं च आचार इत्याह— कायेनेति ॥ ११ ॥

*प०टी०*— इतश्च युक्तावेव योगसंन्यासौ फलदौ, इतरत्यागे नेत्यभिप्रायेण उत्तरश्लोकमवतारयति **एवं चेति** ॥

*न०टी०*—तत्त्वदर्शिनामपि शुकादीनां संन्यासकर्मयोगयोराचरणदर्शनाच्च नैकतरोऽपि त्याज्य इति भावेनोत्तरं श्लोकमवतारयति **एवं चेति** । प्रसिद्धं हि तेषामपि स्वाश्रमोचितं मानसवाचकादिकं कर्म पुराणादिषु । 'केवलैः' कर्माहङ्कारादिरहितैः कायादिभिः, 'आत्मशुद्धये' संसारमोक्षायेत्यर्थः ॥

*प्र०दी०*— कायेनेत्यनेनापि संन्यासयोगयुक्तस्याऽऽत्मशुद्धिलक्षणः पापालेप उच्यत इत्यत आह— **एवं चेति** । उभयसमुच्चयरूप एवेत्यर्थः । अन्यत्र तात्पर्यान्न पुनरुक्तिरिति भावः । आचारकथनमपि नियमसमर्थनार्थमिति ज्ञातव्यम् ॥

*भा०र०*— चशब्द एवार्थ इति भावेनाह **उभयसमुच्चयरूप एवेति** । संन्यासयोगरूपोभयसमुच्चयरूप एव आचार इत्यर्थः । उक्तशङ्कां निरसितुं भाष्यभावमाह **अन्यत्रेति** । **अन्यत्र** आचारसद्भावे । आचारकथनस्य प्रयोजनमाह **आचारेति** । प्राक् संन्यासयोगमेलननियममात्रमुक्तम् । अत्रेदानीं तत्राचाररूपप्रमाणमुच्यते । तच्चोक्तनियमसमर्थनार्थमित्यर्थः ॥ ११ ॥

*गीताक्षरार्थस्तु*— "संन्यासयोगौ मिलितावेव महाफलहेतू" इत्यत्र तदुभयसमुच्चयानुष्ठानरूप एव आचारोऽस्तीत्युच्यते **कायेनेति** । **बुद्ध्या** "द्वादशैवेन्द्रियाण्याहुः मनोबुद्धी तु द्वादशे" (का.श्रु.) इति वचनाद् बुद्धिरूपेन्द्रियेण । "बुद्ध्यत अनया" (गी.भा. २.३९) इति बुद्धिः वागिति

द्वितीयभाष्यरीत्या बुद्धिः वाक् अत्र ग्राह्या । अत एव **प्राचीनटीकायां** प्रसिद्धं हि तेषामपि स्वाश्रमोचितं मानसवाचिकादिकं कर्मेति वाचकशब्दप्रयोग इत्यपि **आहुः** । **केवलैः** कामाहङ्कारादिहीनैः **इन्द्रियैः योगिनोऽपि** तत्त्वदर्शिनः शुक्रादयोऽपि **सङ्गं** फलस्नेहं च त्यक्त्वा **आत्मशुद्धये** मनसः पापालेपलक्षणफलाय, **प्राचीनटीकारीत्या** जीवस्यान्यथाकारपरित्यागेन स्वरूपाविर्भावरूपमुक्तय इति वा **कर्म** स्नान-सन्ध्यावन्दन-तत्त्वनिश्चयार्थश्रवण-कीर्तनादिरूपं कुर्वन्तीति ॥ ११ ॥

**गीता**

## युक्तः कर्मफलं त्यक्त्वा शान्तिमाप्नोति नैष्ठिकीम् ।
## अयुक्तः कामकारेण फले सक्तो निबद्ध्यते ॥ १२ ॥

***वि०वि०***— प्राक् संन्यासयोगौ मिलितावेव फलं साधयतो नान्यतरपरित्यागेनान्यतर इति नियमज्ञापनार्थं तयोः फलमुक्तम् । इदानीं तु तावेव मोक्षसाधनम्, न तु तदुभयत्यागेनान्यदिति नियमज्ञापनाय योगसंन्यासावतस्तदुभयाभावतश्च मुक्तिसंसारविस्तारलक्षणं फलमाह **युक्त इति** । युक्तो योगयुक्तः । नैष्ठिकीं स्वाभाविकीम्। कामकारेण कामकामतः प्रवृत्त्या ॥

***सा०सं०***— प्राक् 'संन्यासस्तु' इत्यादिना संन्यासयोगौ मिलितावेव फलं साधयतः, नान्यतरपरित्यागेनान्यतर इति नियमज्ञापनार्थं तयोः फलमुक्तम् 'ब्रह्माधिगच्छति', 'कुर्वन् न लिप्यते' इत्यादिना । इदानीं तु तावेव मोक्षसाधनं न तु तदुभयत्यागेनान्यदिति नियमज्ञापनाय योगसंन्यासवतस्तदुभयाभाववतश्च मुक्तिसंसारविस्तारलक्षणं फलमाह **युक्त इति** । **कर्मफलं त्यक्त्वा** इत्यनेन प्रागुक्तकामादिवर्जनरूपसंन्यासी ज्ञेयः । **युक्तः** भगवदर्पणबुद्ध्या कर्मानुष्ठानरूपयोगः । **नैष्ठिकीं** स्वाभाविकीम् । **शान्तिं** स्वरूपानन्दाविर्भावलक्षणां मुक्तिम् । **आप्नोति** । **अयुक्तः** योगहीनः । **कामकारेण** फलकामादिना कर्मानुष्ठानेन । संन्यासाभावेनेति यावत् । **फले** क्षुद्रफले । **सक्तो निबध्यते** नितरां संसारमनुभवतीत्यर्थः ॥

***अ०प्र०***— ननु तेनैव कर्मणा कश्चिन्मुच्यते कश्चिद्बध्यत इति का व्यवस्था कथमत आह **युक्त इति** ।

युक्तः[१], कर्मफलं[२], त्यक्त्वा[३], नैष्ठिकीम्[४], शान्तिं[५], आप्नोति[६], अयुक्तः[७], कामकारेण[८], फले सक्तः सन्[९], निबध्यते इत्यन्वयः ।

युक्तः = परमेश्वरैकनिष्ठः[१], कर्मफलं = कर्म कुर्वन् कर्मण्यं फलं त्यक्त्वा[३], नैष्ठिकीं = आत्यन्तिकीं यद्वा स्वाभाविकीम्[४], शान्तिं = मोक्षं[५], आप्नोति[६], अयुक्तस्तु = देहाभिमानयुक्तो

बहिर्मुखः[७], कामकारेण = कामनया कारणं कामकारः कामतः प्रवृत्तिः तया तेन कर्माणि कृत्वा[८], फले सक्तः सन् फलेषु कर्मफलेषु सक्तः आसक्तः सन्[९], निबध्यते = तैः कर्मफलरूपपाशैः निबध्यते बन्धं प्राप्नोति ॥ १२ ॥

**भाष्यम्**

**पुनर्युक्त्यादिनियमनार्थं युक्तायुक्तफलमाह— युक्त इति । युक्तः = योगयुक्तः ॥ १२ ॥**

***प०टी०*— न केवलं संन्यासयोगाभ्यां पुरुषार्थसिद्धेस्तौ कार्यौ । किन्त्वन्यथाऽनर्थाच्चेत्यभिप्रायेणोत्तरश्लोकमवतार्य व्याचष्टे **पुनरिति** । **युक्तिः** योगः । आदिपदेन संन्यासः कर्मफलं त्यक्त्वा इत्युक्तः । युक्तायुक्त इति युक्तसंन्यासस्यायुक्तसंन्यासिफलमित्यर्थः ॥

***न०टी०*—इतोऽपि संन्यासयोगावश्यानुष्ठेयौ नैव त्याज्यौ कथञ्चिदिति भावेनोत्तरश्लोकमवतारयति **पुनरिति** । **युक्तिः** योगः । **आदिशब्देन** संन्यासः 'कर्मफलं त्यक्त्वा' इत्युक्तः । तत्सहिता युक्तिः कार्येति **तयोर्नियमनम्** इत्यर्थः ॥

***प्र०दी०*— तथाऽपि 'युक्त' इत्येतत्पुनरुक्तमित्यत आह— **पुनरिति** । युक्तिः योगः । आदिपदेन संन्यासः । युक्तायुक्तेत्युपलक्षणम् । संन्यासस्य संन्यासीत्यपि ग्राह्यम् । प्राक् संन्यासयोगौ मिलितावेव फलं साधयतो नान्यतरपरित्यागेनान्यतर इति नियमज्ञापनार्थं तयोः फलमुक्तम् । इदानीं तु तावेव मोक्षसाधनं न तु तदुभयपरित्यागेनान्यदिति नियमज्ञापनाय योगसंन्यासवतः तदुभयाभाववतश्च मुक्तिसंसारविस्तारलक्षणं फलमाहेत्यर्थः । युक्तशब्दस्य सहिताद्यर्थनिवारणार्थमाह— **युक्त इति** ॥

***भा०र०*— **पुनरुक्तम्** 'संन्यासस्तु' (५.६) इत्यनेन । आदिपदेन संन्यासग्रहणानुसारेणाह **युक्तायुक्तेत्युपलक्षणमिति** । अनेन कथं पुनरुक्तिपरिहारः ? इत्यत आह **प्रागिति** । 'संन्यासस्तु' (५.६) इत्यादावित्यर्थः । **तयोः** संन्यासयोगयोः, **फलं** ब्रह्माधिगतिरूपं पापालेपरूपं च । **योगसंन्यासवतः** योगश्च संन्यासश्च तदुभयवतः । **'नैष्ठिकीम्'** इति शान्तिशब्दितमुक्तिविशेषणात् 'निबध्यते' इति 'नि'शब्दश्रवणाच्चाह **मुक्तिसंसारविस्तारलक्षणमिति** । **सहिताद्यर्थेति** । आदिपदेन न्याय्यलभ्यादिग्रहः । तथा च अमरः "युक्तमौपयिकं लभ्यं भजमानाभिनीतवत् । न्याय्यं च" इति ॥ १२ ॥

***गीताक्षरार्थस्तु***— प्राक् संन्यासयोगौ मिलितावेव फलं साधयतः, नान्यतरपरित्यागेनान्यतर इति नियमज्ञापनार्थं तयोः फलं "ब्रह्माधिगच्छति" (५.६), "कुर्वन्नपि न लिप्यते" (५.७) इत्यादिनोक्तम् । इदानीं तु "तावेव मोक्षसाधनम्, न तु तदुभयत्यागेनान्यत्" इति नियमज्ञापनाय योगसंन्यासवतः तदुभयाभाववतश्च मुक्तिसंसारविस्तारलक्षणं फलमुच्यते **युक्त इति** । **कर्मफलं** कर्मफलकामनां **त्यक्त्वा युक्तः** भगवदर्पणबुद्ध्या कर्मानुष्ठानरूपयोगयुक्तः, **नैष्ठिकीम्** "निष्ठोत्कर्षे व्यवस्थायां नाशेऽन्ते व्रतयाञ्चयोः । स्यान्निर्वहणनिष्पत्त्योः परमायां गतौ तथा" (के.को) इति कोशवचनात् **निष्ठा** उत्कर्षः परमा गतिर्वा, तस्यां भवां **नैष्ठिकीं शान्तिम्**, "सामर्थ्यबलदुर्गादिदेवतासु च कथ्यते । शक्तिः शान्तिस्तु कल्याणमारामः" इति दर्पणकोशात्, "शान्तिर्मोक्षोऽथ निर्वाणम्" इत्यभिधानाच्च, कल्याणशब्दितमोक्षम् **आप्नोति** । **अयुक्तः** योगहीनस्तु **कामकारेण** "कामकारेण चैके" (ब्र.सू. ३.४.१५) इति **सूत्रतत्त्वप्रदीपिकायाम्** "कामितकरणं कामकारः" इति व्याख्यानात्, कामितकरणेन कामप्रेरिततयेति यावत् । **फले** क्षुद्रफले स्वर्गादौ **सक्तो निबध्यत** इत्यत्र पूर्वार्धे योगसंन्यासवतो मुक्तिलक्षणफलोक्तिः । उत्तरार्धे तदुभयाभाववतः संसारविस्ताररूपं फलमभिहितमिति तावेव मोक्षसाधनम्, न तु तदुभयत्यागेनान्यदिति ॥ १२ ॥

**गीतातात्पर्यनिर्णयः**

**तत्पूजात्मकानि तत्कृतानि मम शुभार्थमिति ब्रह्मण्याधानम् । स्वातन्त्र्याभावापेक्षयैव जीवस्याकर्तृत्वम् ।**

***प्रका०***— ब्रह्मण्याधायेत्येतस्यार्थमाह **तत्पूजेत्यादिना** ।

***न्या०दी०***— योगरूपसंन्यासवतो मुक्तिर्भवतीति नोपचारमात्रमिति भावेन पुनः फलमुच्यते 'ब्रह्मणि' इति । तत्र कर्मणां ब्रह्मण्याधानं नाम अकरणमेवेत्यन्यथाप्रतीतिनिरासायाह **तत्पूजेति** ॥ आधानं कर्मणामिति शेषः । अन्यथा करोतीत्यस्य व्याघातादिति भावः । भवत्पक्षेऽपि यदि कर्माणि भगवत्कृतानि तर्हि जीवस्याकर्तृत्वं स्यात् । तथा च करोतीति व्याहतं स्यात् । मम शुभार्थमिति चासम्भवीत्यत आह **स्वातन्त्र्येति** ॥ कर्मणां भगवत्कृतत्वे जीवस्याकर्तृत्वं स्यादिति सत्यमेव । न च तावता जीवस्य कर्तृत्वफलसम्बन्धानुपपत्तिः । स्वातन्त्र्याभावविवक्षयैव अकर्तृत्वस्याभ्युपगतत्वेन भगवदधीनतया कर्तृत्वोपपत्तेरिति भावः ।

***भा०दी०***— **अन्यथेति** । आधानपदस्याकरणार्थत्वाङ्गीकार इत्यर्थः ॥

**गीतातात्पर्यनिर्णयः**

**"स्ववन्दनं यथा पित्रा कारितं शिशुकर्तृकम् ।**
**एवं पूजा विष्णवधीना भवेज्जीवकृतेत्यपि ॥" ॥ १०-१२ ॥**

***न्या०दी०***— अस्वतन्त्रत्वे च जीवस्य भगवत्पूजाकर्तृत्वं शुभयोगश्च न युज्यते । अस्वतन्त्रे कर्तृशब्दप्रयोगस्य फलसम्बन्धस्य च अदर्शनादित्याशङ्कां स्मृत्यैव परिहरति **स्ववन्दनमिति** ॥ कारितं शिशुनेति शेषः । शिशुकर्तृकं भवेदिति सम्बन्धः ॥

**गीता**

## सर्वकर्माणि मनसा संन्यस्यास्ते सुखं वशी ।
## नवद्वारे पुरे देही नैव कुर्वन्न कारयन् ॥ १३ ॥

***वि०वि०***— पुनः संन्यासशब्दार्थं स्पष्टयति **सर्वकर्माणीति** । मनसा सर्वकर्माणि संन्यस्य स्वातन्त्र्याभिमानं त्यक्त्वा वशी जितेन्द्रियः, अकुर्वन् न कारयन् एव चक्षुःश्रोत्रघ्राणयुग्ममुख-पायूपस्थलक्षणनवद्वारवति देहे सुखं यथाभवति तथाऽऽस्ते ॥

***वा०ल०***— 'सन्न्यस्यास्ते' इत्यत्र सन्न्यस्य हरौ समर्प्य ॥

***सा०सं०***— पूर्वं 'नैव किञ्चित्करोमि' इत्यादिना कर्तृत्वाभिमानत्यागेन संन्यासः विवृतः । अधुना कारयितृत्वाभिमानत्यागेन संन्यासशब्दार्थं स्पष्टयति **सर्वकर्माणीति** । यद्वा, प्राक् कर्माणि 'ब्रह्मण्याधाय यः करोति' इत्यत्र कर्मणां ब्रह्मण्याधानं नाम न कर्मणां स्वरूपेण त्यागोऽपि तु **सर्वकर्माणि मनसा संन्यस्य** भगवानेव स्वपूजात्मकानि मच्छुभार्थं मया कारयति, मम कर्तृता-शक्तिरपीशाधीनैव, इत्यनुसन्धायेत्येवंरूपमित्यर्थः । स्वरूपेण कर्माणि परित्यज्येत्यर्थपक्षे मनसेति व्यर्थमिति भावः । **वशी** जितेन्द्रियः । स्वातन्त्र्येण **नैव कुर्वन्, न कारयंश्च** । **नवद्वारे** चक्षुः-श्रोत्रघ्राणानां षड्द्वाराणि मुखं पायूपस्थे चेत्येवं नवद्वारवति **पुरे** देहे । **सुखं** यथा तथा **आस्ते** । कर्मलेपहीनो वर्तत इत्यर्थः ॥

***अ०प्र०***— एवं तावच्चित्तशुद्धिशून्यस्य संन्यासात् कर्म श्रेष्ठ इत्युक्तम् । इदानीं शुद्धचित्तस्य संन्यासः श्रेष्ठ इत्याह **सर्वकर्माणीति** ।

वशी[१], सर्वकर्माणि[२], मनसा[३], संन्यस्य[४], नवद्वारे[५], पुरे[६], देहीव[७], सुखं[८], आस्ते[९], नैव[१०], कुर्वन्[११], न कारयन्[१२], इति अन्वयः ।

वशी = जितचित्तः स्ववशेन्द्रियादिकः यद्वा सुखं भगवद्भक्तिः वशीभूतं यस्य स तथा[१], सर्वकर्माणि = विक्षेपकानीति मत्वा स्वातन्त्र्याभावेन कृत्वा भक्त्या सर्वकर्माणि[२], मनसा = विवेकयुक्तेन[३], संन्यस्य = परमेश्वरे समर्प्य[४], नवद्वारे = नेत्रे, नासिके, कर्णौ, मुखं चेति सप्त शिरोगतानि; अधो द्वे पायूपस्थरूपे इत्येव नवद्वाराणि यस्मिन् तस्मिन्[५], पुरे = पुरमिव पुरं मनः प्राणेन्द्रियाणां व्यवहारायाधिष्ठानत्वात् पुरं तस्मिन् पुरे[६], देहीव[७], सुखं[८], आस्ते देही प्राकृतजीव इव सुखं यथा भवति तथा भक्तिज्ञाननिष्ठः सन्[९], आस्ते = अतो नैव कुर्वन् आसीनोऽपि नास्ते कर्तृत्वाभिमानफलापेक्षां विना, मन आदि सर्वेन्द्रियैः यत्कृतं तदकृतमेव अहङ्काराभावात्[१०], न कारयन् ममकाराभावाच्च कारयितृत्वमपि न विद्यते अतो न कारयन् ॥ १३ ॥

**भाष्यम्**

**पुनः संन्यासशब्दार्थं स्पष्टयति— सर्वकर्माणीति । "मनसा" इति विशेषणात् अभिमानत्यागः ॥ १३ ॥**

***प०टी०***— ननु 'संन्यास'शब्देन कर्मत्याग एवोच्यते, 'कर्मसंन्यास' इत्यादिप्रयोगादित्येतत् कथं तस्य योगेन सहावस्थानम् ? इत्याशङ्कां परिहर्तुमुत्तरश्लोकमवतारयति **पुनरिति** । 'कर्मसंन्यास' इति प्रयोगेऽपि मनसैव कर्मत्यागाभिप्रायो न सर्वात्मनेत्यर्थः ॥

***न०टी०***—ननु 'तयोस्तु कर्मसंन्यासात्' इत्युक्तत्वान्न द्वन्द्वत्याग एव संन्यासः, किन्तु कर्मत्याग एव । कर्मत्यागिनस्तु कथं कर्मयोगादि ? इत्याशङ्कापरिहारत्वेनोत्तरं श्लोकमवतारयति **पुनरिति** । भवतु नाम कर्मत्याग एव संन्यासः । स च 'मनसा' इति विशेषणादभिमानत्याग एव । अतः संन्यासिनः कर्मयोगो न विरुद्ध्यते । देहेन्द्रियैः क्रियमाणेऽपि कर्मणि 'नाहं करोमि' इत्यभिमानत्यागसम्भवादिति भावः ॥

***प्र०दी०***— 'सर्वकर्माणि' इत्यस्य स्वरूपेण सर्वकर्मत्यागोऽर्थ इति प्रतीतिनिवारणाय प्रतिपाद्यमाह— **पुनरिति** । प्राक्कर्तृत्वाभिमानत्याग उक्त, इदानीं तु कारयितृत्वाभिमानत्यागोऽपीति स्पष्टनम् । स्वरूपेण सर्वकर्मत्यागोऽत्र उच्यत इत्येतन्निराचष्टे— **मनसेति** । अन्यथा तद्वयर्थं स्यादिति भावः ॥

***भा०र०***— **प्रागिति** "नैव किञ्चित्करोमि" (५.८) इत्यत्रेत्यर्थः । न 'कारयन्' इति गीतत्वादाह **इदानीं कारयितृत्वेति** । अनेन पूर्वं "नैव किञ्चित्करोमि" (५.८) इति कर्तृत्वा-

भिमानत्यागेन संन्यासोऽभिहितः । इदानीं तु कारयितृत्वाभिमानत्यागेनापि स एव स्पष्टीक्रियत इति भाष्यार्थ उक्तो भवति । **अन्यथा** स्वरूपेण कर्मत्याग एवोच्यत इति पक्षे । **तद्वैयर्थ्यम्** 'मनसा' इति विशेषणवैयर्थ्यम् । यत्त्वत्र **सङ्करभाष्ये** "**मनसा** विवेकबुद्ध्या कर्मादौ अकर्मत्वदर्शनेन" (शां.भा. ५.१३) इति, तत्तु कर्मणां मिथ्यात्वस्य सर्वानुभवविरुद्धत्वाद् अयुक्तम् । अतो मनसैव कर्मन्यासो नाम तत्र स्वातन्त्र्याभिमानत्याग एव, न तु स्वरूपत्यागोऽत्र व्याख्यातव्य इति भाष्यार्थ इति भावः ॥ १३ ॥

***गीताक्षरार्थस्तु***— प्राक् "नैव किञ्चित्करोमि" (५.८) इत्यत्र कर्तृत्वाभिमानत्यागेन संन्यासो विवृतः । इदानीं कारयितृत्वाभिमानत्यागेनापि स एव स्पष्टीक्रियते **सर्वकर्माणीति** । **मनसा सर्वकर्माणि संन्यस्य** भगवानेव स्वपूजात्मकानि मम शुभार्थं मम कर्तृत्वशक्तिं दत्त्वा कारयतीत्यनुसन्धाय **वशी** जितेन्द्रियः । स्वातन्त्र्येण **नैव कुर्वन्**, न कारयंश्च नवद्वारे नव द्वाराणि = चक्षुर्युगमम्, श्रोत्रयुगलम्, घ्राणयुगम्, मुखमेकमिति सप्त वै शीर्षण्याः प्राणाः प्रसिद्धाः, अर्वाग्द्वे मूत्रपुरीषविसर्गार्थे द्वारे पायूपस्थशब्दिते इति नवविधद्वारयुक्ते पुर इव **पुरे** आत्मस्वामिके देहे **सुखं** यथा तथा भगवत्प्रेरितानीन्द्रियाणि स्वस्वविषयेषु व्याप्रियन्त इति परिज्ञानात् सुखमनुभवन्नास्ते । तत्कृतलेपहीनो वर्तत इति ॥

**गीतातात्पर्यनिर्णयः**

**अतो मनसैव कर्मन्यासोऽस्वातन्त्र्यापेक्षया ॥ १३ ॥**

***प्रका०***— सर्वकर्माणीत्यस्यार्थमाह **अत इति** । मनसा सर्वकर्मन्यासो नाम परमेश्वर-प्रेरितत्वबुद्धिः, न तु कर्माकरणमित्यर्थः ॥

***न्या०दी०***— इतश्च कर्मणां ब्रह्मण्याधानं नाम तत्र स्वस्य स्वातन्त्र्याभिमानत्याग एव । न तु स्वरूपपरित्याग इत्याह **अत इति** ॥ "ब्रह्मण्याधाय कर्माणि" इति संन्यासो ह्युच्यते । तल्लक्षणं च "सर्वकर्माणि" इत्यनेन प्रपञ्च्यते । तत्र कर्मणां स्वरूपपरित्यागाभावादेव हि मनसैव त्यागो-ऽभिहितः । अतश्च नात्रापि कर्मणां स्वरूपत्यागोऽर्थ इति भावः । मनसैव त्यागाभिधाने कथं स्वरूपत्यागाभाव इत्यत आह **अस्वातन्त्र्येति** ॥ मनसैव कर्मन्यासो नाम स्वातन्त्र्याभिमान-परित्याग एव । न तु स्वरूपत्यागः । तथात्वे मनसेति विशेषणवैय्यर्थ्यादिति भावः ॥

***भा०दी०***— **सर्वकर्माणीत्यनेनेति** । उपरितनतृतीयश्लोकेनेत्यर्थः ॥ १३ ॥

**गीता**

## न कर्तृत्वं न कर्माणि लोकस्य सृजति प्रभुः ।
## न कर्मफलसंयोगं स्वभावस्तु प्रवर्तते ॥ १४ ॥

*वि०वि०*— ननु दर्शनादिकं कुर्वन्नेव किञ्चित्करोमीति मन्येतेत्ययुक्तम् । मिथ्याज्ञानस्य विप्रलम्भस्य वा प्रसङ्गादित्याशङ्कानिरासाय परमेश्वरप्रेरितः कुर्वन् कारयन्नपि स्वातन्त्र्येण न करोति न कारयति चेत्युच्यत इत्याह **न कर्तृत्वमिति** । जडमपेक्ष्य प्रभुः समर्थो जीवः लोकस्य कर्तृत्वं न सृजति न लोकेन कर्म कारयति स्वयं च कर्माणि न सृजति न करोतीत्यर्थः । कर्मणि स्वातन्त्र्यं न चेत् फले नास्तीति किं वाच्यमित्याह **नेति** । सृजतीत्यनुषङ्गः । तर्हि तस्य कर्मयोगे प्रवृत्तिर्न स्यादित्यत आह **स्वभावस्त्विति** । स्वः स्वतन्त्रः परमात्मा । 'स्वातन्त्र्यात्स्व इति प्रोक्त' इत्युक्तेः । तेनैव सदा स्वयं भवति भावयति चान्यानीति स्वभावः । तथा स्वतन्त्रं भावयति ध्यायतीति स्वभावः । स्वतन्त्रः परमात्मा । स एव मद्गतः स्वयं करोतीति नाहं स्वातन्त्र्येण किञ्चित् करोमि तत्प्रसादात् तदायत्तकर्मणैवाहं विहितकृदिति भावयन्नेव स्वविहितकर्मयोगे प्रवर्तत इति भावः ॥

*वा०ल०*— 'नवद्वारे पुरे' इत्यत्र देही जीवः स्वातन्त्र्येण कुर्वन् न, कारयन्नपि न । कर्तृत्वं स्वतन्त्रकर्तृत्वं लोकस्य न सृजति । स्वतन्त्रकर्माणि च न सृजति । कर्मफलसंयोगश्च स्वातन्त्र्येण न सृजतीति पूर्वेणान्वयः । स्वभावः, स्वतन्त्रेण हरिणा भावः चेष्टा यस्य स तथोक्तस्तु प्रवर्तते ॥

*सा०सं०*— ननु दर्शनादि कुर्वन् 'नैव करोमि इति मन्येत' इत्युक्तिरयुक्ता । तथात्वे मिथ्याज्ञानित्वप्रसङ्गादित्यतः स्वाभिप्रायमाह **नेति** । जडमपेक्ष्य **प्रभुः** समर्थो जीवः **लोकस्य कर्तृत्वं** लोकेन कर्म **न सृजति** न कारयति । स्वातन्त्र्येणेत्यर्थः । स्वयं च **कर्माणि न सृजति** न करोति । कर्मण्यस्वातन्त्र्ये फले सुतरां तदित्याह **न कर्मेति** । सृजतीत्यनुषङ्गः । कर्मफलप्राप्तिं लोकस्य न सृजति । लोकस्य फलप्राप्तिसम्पादने स्वस्य वा फलसम्पादने न स्वतन्त्र इत्यर्थः । स्वातन्त्र्याभावापेक्षया न करोमीति मन्येतेत्युक्तिरिति भावः ।

यद्वा, जीवस्य स्वतन्त्रकर्तृत्वाभावेऽपीश्वरदत्तं क्रियायां क्रियाजन्यादृष्टे कर्मफलप्राप्तौ चास्त्येव स्वातन्त्र्यम् । अतः कथं 'ब्रह्मण्याधाय कर्माणि' इति 'सर्वाणि कर्माणि संन्यस्य' इति चोक्तिरित्यत आह **नेति** । **प्रभुरीश्वरः** । जीवस्य **कर्तृत्वम्** अग्निहोत्रादिक्रियायां स्वातन्त्र्यम् । **न सृजति** न

प्रयच्छति । **कर्माणि** क्रियाजन्यादृष्टानि लोकस्य न सृजति । तेषु स्वातन्त्र्यं न प्रयच्छति । **कर्मफलसंयोगं** च लोकस्य **न सृजति** । फलप्राप्तावपि लोकस्य स्वातन्त्र्यं न प्रयच्छतीत्यर्थः ।

ननु क्रियायामदृष्टेषु फलसंयोगे च जीवस्य स्वातन्त्र्याभावे कथं क्रियादिनिष्पत्तिरित्यत आह **स्वभावस्त्विति** । स्वं स्वयमेव भवति । परानपेक्षं तिष्ठति । तथा स्वयमेव भावयति जगदुत्पादयतीति **स्वभावः** । स्वेति पदे उपपदे भवतेर्ण्यन्तात् कप्रत्ययः । स्वस्थितावन्यकरणे च परानपेक्षः स्वतन्त्रो भगवान् स्वभावशब्दार्थः । स एव च **प्रवर्तते** क्रियाकर्तृत्वे कर्मशब्दितादृष्टेषु फलसंयोगे च इति ध्येयम् । कदाऽपि कुत्रापि नान्यस्य स्वातन्त्र्यं ददाति । किन्तु सर्वत्र स्वयमेव प्रवर्तत इति भावः ॥

*अ०प्र०*— प्रभुः[१], लोकस्य[२], कर्तृत्वं[३], न सृजति[४], कर्माणि न सृजति[५], कर्मफलसंयोगं न सृजति[६], किन्तु[७], स्वभावः[८], प्रवर्तते[९], इति अन्वयः ।

प्रभुः = जडमपेक्ष्य समर्थो जीवः[१], लोकस्य = जीवलोकस्य[२], कर्तृत्वं[३], न सृजति = स्वान् लोको न कर्म कारयतीत्यर्थः[४], कर्माणि न सृजति = स्वयं कर्माणि न सृजति करोतीत्यर्थः ! एवं कर्मणि यदा स्वातन्त्र्याभावः तदा फलं स्वातन्त्र्यं नास्तीति वाच्यमित्याह न कर्म सृजति इति वर्तते[५], कर्मफलसंयोगं न सृजति = कर्मफलसंयोगः स्वस्य न सृजति कर्मजन्यफलसम्बन्धं स्वातन्त्र्येण न प्राप्नोतीत्यर्थः[६], एवं तर्हि तस्य कर्मयोगे प्रकृतिर्न स्यादित्यत आह **भाव इति** । स्वभावस्तु किन्तु "स्वभावः स्वः स्वतन्त्रः परमात्मा स्वातन्त्र्यात्स्व इति प्रोक्त" इत्युक्तेः, तेनैव सदा स्वयं भवति भावयति चान्यानिति स्वभावो जीवः । ईश्वरप्रेरितसंत्तादिमानेव प्रवर्तत इत्यर्थः । यद्वा स्वभावयति ध्यायति इति स्वभावः स्वश्चासौ भावश्चेति वा । स्वतन्त्रः परमात्मा ईश्वर एव मद्वतः स्वयं करोति नाहं स्वातन्त्र्येण किञ्चित्करोमि तत्प्रसादाय यत्कर्मणैवाहं विहितकृदिति भावयन्नेव स्वविहिते कर्मयोगे प्रवर्तत इति भावः ॥ १४ ॥

**गीता**

**नादत्ते कस्यचित्पापं न चैव सुकृतं विभुः ।**
**अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तवः ॥ १५ ॥**

*वि०वि०*— एवं प्रवर्तमानस्य फलमाह **नादत्त इति** । जडमपेक्ष्य विभुर्जीवो न कस्यापि कर्मणः फलं पापं पुण्यं वा आदत्ते । किमिति तर्हि स्वगतं स्वतन्त्रं स्वातन्त्र्याभावेऽपि परमात्म-

दत्तस्य कर्तृत्वस्य सद्भावात् कथं कर्मणां ब्रह्मण्याधानमित्यत आह **न कर्तृत्वमिति** । कर्माण्यदृष्टानि । क्रियायामदृष्टोत्पादने फले च स्वातन्त्र्यं लोकस्य न सृजति ईश्वरः । अत एव यथा राजा स्वपुत्रादिभ्यः स्वराज्यवित्तभोजिभ्योऽप्याधिपत्यादानाद्राज्यं न ददातीत्युच्यते तथा कर्मफलादिसंयोगिनोऽपि कर्तृत्वादिकं न सृजतीत्युच्यते । स्वयमेव भवति भावयति चेति स्वभावो भगवान् । स्वभावत्वात्स्वयमेव कर्तृत्वादिषु प्रवर्तते । स्वातन्त्र्यादेव विभुः ईश्वरः । कर्मफलं पापादिकम् । नादत्त इत्यादि व्याख्येयम् । तदुक्तम्—

> 'स्वातन्त्र्याद्भगवान्विष्णुः स्वभाव इति कीर्तितः ।
> तत्स्वातन्त्र्यं कदाप्येष नान्यस्य सृजति क्वचित् ॥
>
> स्वातन्त्र्यादेव पापादिसम्बन्धः कुर्वतोऽपि न ।
> अज्ञानावृतबुद्धित्वादीदृशं तं न जानते ॥' इति ।

स्वातन्त्र्याधानमेव कर्माधानमित्याशयः ॥

***वा०ल०***— पापपुण्ययोः प्रेरकोऽपि भगवान् न कस्यचित् पापमादत्ते, सुकृतञ्च नैवादत्ते । विभुः समर्थः । समर्थत्वादेव नादत्त इति भावः । ईदृशं ज्ञानं सर्वेषां कुतो न जायते इत्यत आह **अज्ञानेनावृतमिति** ।

***सा०सं०***— फलसंयोगे स्वातन्त्र्याभावं जीवस्य व्यनक्ति **नादत्त इति** । **विभुः** जडापेक्षया समर्थो जीवः । **कस्यचित्** दुराचारस्य सकाशात्, तज्जन्यं **पापं** स्वातन्त्र्येण **नादत्ते** । **सुकृतं** पुण्यं **च** स्वातन्त्र्येण **नैवादत्ते** । एवं क्रियायामदृष्टे च ज्ञेयम् ।

यद्वा, भगवत एव कर्तृत्वे कर्मलेपः स्यादित्यत आह **नादत्त इति** । **विभुः** स्वतन्त्र ईश्वरः । विभुत्वादेव **कस्यचित्** कर्मणः सकाशात् । **पापं सुकृतं वा नादत्त** इत्यर्थः । न पुण्यपापलेपवान् भवतीत्यर्थः । नन्वेवं सर्वत्र स्थित्वा स्वातन्त्र्येण कर्ता ईश्वरोऽस्ति चेत् कथं न दृश्यत इत्यत आह **अज्ञानेनेति** । तेनाज्ञानेनावृतबुद्धित्वेन । **मुह्यन्ति** भगवन्तं न जानन्ति ॥

***अ०प्र०***— विभुः[१], कस्यचित्[२], पापं[३], नादत्ते[४], सुकृते चैव नादत्ते[५], तर्हि जीवा केन मुह्यन्तीत्यत आह, अज्ञानेन[६], ज्ञानं[७], आवृतं[८], जन्तवः[९], तेन मुह्यन्ति[१०] इत्यन्वयः ।

विभुः = जडापेक्षया विभुर्जीवः[१], कस्यचित् = न कस्यापि[२], कर्मणः फलं पापकर्मणः फलं = पापं[३], नादत्ते[४], सुकृतं चैव नादत्ते = पुण्यकर्मणः फलं सुकृतं चैव नादत्ते[५], तर्हि किमिति स्वप्रेरकं स्वगतं तत्स्वतन्त्रमीश्वरं प्राणिनो न पश्यन्ति इत्यत आह **अज्ञानेनेति** । अज्ञानेन

जीवस्वरूपज्ञानमविद्यादिपदवाच्यं अज्ञानं तेन[६], ज्ञानं[७], आवृतं[८], जन्तवः = प्राणिनः[९], तेन कारणेन मुह्यन्ति = ईश्वरविषये वैचित्तिं प्राप्नुवन्ति[१०], अथवा— जीवानां स्वातन्त्र्याभावेऽपि परमात्मदत्तस्य कर्तृत्वस्य सद्भावात् कथं कर्मणां कथं ब्रह्मण्याधानमित्यत आह **न कर्तृत्वमिति** । प्रभुरीश्वरः लोकस्य कर्तृत्वं न सृजति कर्माणि अदृष्टानि च न सृजति कर्मफलसंयोगं च न सृजति यज्ञादि-क्रियायां तज्जन्यादृष्टतत्फले च जीवस्य स्वातन्त्र्यं न दद्यतीति भावः । यथा राजा लोके स्वराज्य-वित्तादिभोजिभ्योऽपि स्वपुत्रादिभ्यो आधिपत्यादानात् राज्यं न ददाति इत्युच्यते तथा क्रियाकर्मफलं सम्बन्धिनोऽपि लोकस्य स्वातन्त्र्यादानात् कर्तृत्वादिकं न सृजतीति उच्यते । स्वयमेव भवति भावयतीति वा स्वभावः, स्वतन्त्र ईश्वर एव कर्तृत्वादिषु प्रवर्तत तथा स्वातन्त्र्यादेव विभुरीश्वरः । कर्मफलं पापादिकं नादत्ते । जीवास्तु अज्ञानावृतिबुद्धिकत्वादीश्वरं न जानन्ति । स्वातन्त्र्याधानमेव कर्मणां ब्रह्मण्याधानमिति भावः । तदुक्तम्—

> "स्वातन्त्र्याद्भगवान्विष्णुः स्वभाव इति कीर्तितः ।
> तत्स्वातन्त्र्यं कदाप्येष नान्यस्य सृजति क्वचित् ॥
> स्वातन्त्र्यादेव पापादिसम्बन्धः कुर्वतोऽपि न ।
> अज्ञानावृतबुद्धित्वादीदृशं तं न जानते ॥"

इति नान्यस्य सृजति अपि तु स्वयमेव प्रवर्तत इति शेषः । ईश्वरस्येव स्वतन्त्रत्वे कर्मलेपः स्यादित्यत आह **स्वातन्त्र्यादेवेति** । एवं सर्वेषु स्थित्वा स्वातन्त्र्येण कर्तेश्वरोऽस्ति चेत्कथं न दृश्यत इत्यत आह **अज्ञानेति** । जना इति शेष इति प्रमाणार्थः ॥ १५ ॥

**भाष्यम्**

**न च करोति वस्तुत इत्याह— न कर्तृत्वमिति । प्रभुर्हि जीवो जडमपेक्ष्य ॥ १४ ॥ १५ ॥**

***प०टी०***— ननु कर्तृत्वकारयितृत्वयोः प्रत्यक्षसिद्धत्वेन यदि नैव करोमीत्यादि मन्यते तर्ह्यसावात्मनि विप्रलिप्सुरित्याशङ्कोत्तरत्वेनोत्तरश्लोकमवतारयति **न चेति** । करोति कारयति चेत्यर्थः । ननु जीवस्य कर्तृत्वाद्यभावे न तमुद्दिश्य विधिनिषेधौ स्यातामित्यत आह **प्रभुरिति** ॥

***न०टी०***—ननु यदि वचनदर्शनादिकर्मवत्येव नवद्वारे देहे 'नाहं वच्मि, न पश्यामि, न श्रावयामि शिष्यान्' इत्यभिमत्यैवाकुर्वन्न कारयंश्चास्ते । तर्ह्यसौ विप्रलम्भकः किं न स्यात् ?

इत्याशङ्कापरिहारत्वेनोत्तरं श्लोकद्वयमवतारयति **न चेति** । चशब्दान्न कारयति च । तथाहि । कर्माणि न सृजतीति न करोतीत्यर्थः । कर्तृत्वं लोकस्य न सृजतीति न कारयतीत्यर्थः । यत एवं न कर्ता न च कारयिता, अतः कर्मफलसंयोगं न कस्यापि सृजत स्वमन्यं च सुखदुःखाभ्यां न स्वयं संयोजयतीत्यर्थः । तथाऽपि न तस्य कर्मयोगे प्रवृत्यभावः शङ्कनीय इत्युच्यते **स्वभावस्त्विति** । स्वः स्वतन्त्रः परमात्मा । तेनैव सदा स्वयं भवति भावयति चान्यानिति स्वभावः संन्यासी । प्रतिबिम्बसत्ताक्रिययोर्बिम्बाधीनत्वात् । तुशब्दात् सर्वेषां स्वभावत्वेऽप्ययं जानन्नेव प्रवर्तत इति विशेषः । यद्वा स्वतन्त्रं भावयति ध्यायतीति स्वभावः । स्वतन्त्रः परमात्मैव सर्वं करोति, तेनैवाह विहितकृदित्युच्यते तत्प्रसादादिति भावयन्नेव स्वविहितकर्मयोगे प्रवर्तते । एवं ध्यायन् कर्तृत्वेन कारयितृत्वेन वा स्वविहितकर्मयोगे प्रवर्तमानो न कस्यापि पापं पुण्यं वाऽऽदत्ते । ननु यद्यात्मनः परः स्वतन्त्रोऽन्यः कर्ताऽस्ति, यत्कर्तृके कर्मणि 'अहं करोमि' इत्यभिमन्यते जीवः, तर्हि कथं तं सर्वे न पश्यन्ति ? इत्यत उच्यते **अज्ञानेनेति** ॥ इति श्लोकद्वयार्थः । नन्वेवं जीवपरमौ विविच्य, जीवकर्तृत्वस्यैव निषेधे प्रभुशब्दः कथं तत्रेत्यत आह **प्रभुर्हीति** । एतेन 'विभु'शब्दार्थोऽपि सोऽवगन्तव्यः । जडापेक्षया विशिष्टभवनत्वात् ॥ १४ ॥

*प्र०दी०*— ननु 'न कर्तृत्वं' इत्येतत्प्रागुक्तान्न विशिष्यत इत्यत आह— **न चेति** । दर्शनादिकं कुर्वन्नेव नैव किञ्चित्करोमीति मन्येतेत्युक्तम् । तर्हि मिथ्याज्ञानी प्रसज्येतेत्याशङ्का-निरासाय परमेश्वरप्रेरितः कुर्वन् कारयन्नपि वस्तुतः स्वातन्त्र्येण न करोति न कारयति चेत्यने-नाहेत्यर्थः । अस्य जीवविषयत्वे 'प्रभुः' इत्येतन्न सम्भवति इत्यत आह— **प्रभुर्हीति** । अनेन विभुरित्येतदुपपादितप्रायम् ॥ १४ ॥ १५ ॥

*भा०दी०*— **प्रागुक्तादिति** । नैव किञ्चित्करोमि इत्यादिना प्रागुक्तात् इत्यर्थः ॥ ॥ १४-१५ ॥

*भा०र०*— **प्रागुक्तात्** "नैव कुर्वन्न कारयन्" (५.१३) इति प्रागुक्तात् । "जीवलोकस्य कर्तृत्वं न सृजति" इत्यनेन कारयितृत्वस्य, "यः कर्माणि न सृजति" इति कर्तृत्वस्य च निषेधे "नैव कुर्वन्न कारयन्" (५.१३) इत्युक्तादधिकं नात्रोच्यत इति भावः । मन्येतेत्युक्तम् इत्यनन्तरं "तथा नैव कुर्वन्न कारयन् इत्यपि" इति संयोज्यम् । टीकायाम् 'इत्यादिशङ्का' इति आदिशब्द-प्रयोगात् "कुर्वन् कारयन्नपि" इत्यनुवादाच्चेति **केचित्** । 'वस्तुतः' इत्यस्य व्याख्यानम् **स्वात-न्त्र्येणेति** । भाष्यगतचशब्दसमुच्चेयमाह **न कारयति चेतीति** । भाष्ये **अपेक्ष्य** 'उच्यते' इति शेषः । हिशब्दश्चेतनत्वादियुक्तिसिद्धतां प्राभवस्याहेति व्याख्यानं द्रष्टव्यमिति भावः । **विभुरित्य-**

**पीति** । "पदं 'न चैवं सुकृतं विभुः' इत्युत्तरश्लोकस्थम्" इति शेषः । प्रभुशब्दस्याहत्यानुपादानात् 'प्रायम्' इत्युक्तम्, समानन्यायत्वादिति भावः ॥ १४-१५ ॥

***गीताक्षरार्थस्तु***— दर्शनादिकं कुर्वन्नेव "नैव किञ्चित्करोमि" (५.८) इति मन्येत इत्युक्तम्, "नैव कुर्वन् न कारयन्" (५.१३) इति च । तर्हि मिथ्याज्ञानी प्रसज्येत ? "न कारयन्" इति वदन् मिथ्यावादी । **प्राचीनटीकारीत्या** "विप्रलम्भकश्च स्यात्" इति शङ्कानिरासाय परमेश्वरप्रेरितः कुर्वन् कारयन्नपि स्वातन्त्र्येण न करोति न कारयति चेति प्रतीतिव्यवहारौ युक्ताविति भावेनेदमुच्यते **न कर्तृत्वमिति** । जडमपेक्ष्य **प्रभुः** इत्युच्यमानो जीवो **न कर्माणि सृजति** स्वातन्त्र्येण न करोति, **लोकस्य कर्तृत्वं न सृजति**, लोके न किमपि रथप्रासादादिकं स्वातन्त्र्येण कारयति । यत एवं न करोति न कारयति, अतः **कर्मफलसंयोगं** न कस्यापि सृजति । स्वात्मानं लोकं वा कर्मफलाभ्यां सुखदुःखाभ्यां न संयोजयति ।

एवं कर्तृत्वकर्मफलादेरभावे पुरुषो न कर्मयोगे प्रवर्तेत इति न शङ्कनीयमित्युच्यते **स्वभाव इति** । **स्वः** स्वतन्त्रः परमात्मा । तेनैव सदा स्वयं भवति भावयति चान्यानिति **स्वभावः** संन्यासी । प्रतिबिम्बसत्ताक्रिययोर्बिम्बाधीनत्वात् तुशब्दः । सर्वेषां स्वभावत्वेऽपि अयं स्वभावत्वं जानन्नेव प्रवर्तत इति विशेषार्थः । **स्वं** स्वतन्त्रं **भावयति** ध्यायतीति वा स्वभावः । स्वतन्त्रः परमात्मैव मद्गतः सर्वं करोति, नाहं स्वातन्त्र्येण किञ्चित्करोमि । तत्प्रसादायत्तकर्मणैवाहं विहित-कृदित्युच्यत इति भावयन्निति यावत् । स एव स्वविहितकर्मयोगे प्रवर्तते अनेन यदुक्तम् "जीवस्य कर्तृत्वफलसम्बन्धयोरभावे कर्मयोगे स न प्रवर्तेत" इति तन्निरस्तम् । स्वातन्त्र्याभावविवक्षयैवा-कर्तृत्वस्याभ्युपगतत्वेन भगवदधीनतया कर्तृत्वोपपत्त्या फलसम्बन्धस्य सम्भवेन तत्र प्रवृत्तेरनौ-चित्याभावादिति । तथा चोक्तम्—

> 'स्ववन्दनं यथा पित्रा कारितं शिशुकर्तृकम् ।
> एवं पूजा विष्ण्वधीना भवेज्जीवकृतेत्यपि ॥' (प्रवृत्ते) इति ।

अस्वतन्त्रेऽपि कर्तृशब्दप्रयोगः फलसम्बन्धश्चास्तीति, एवमक्षरयोजना **प्राचीनटीकायां** कृता ।

**गीताविवृतौ** तु जीवो लोकस्य कर्तृत्वं लोकेन कर्म न सृजति = न कारयति स्वातन्त्र्येणे-त्यर्थः । स्वयं च कर्माणि **न सृजति** न करोति । कर्मणि स्वातन्त्र्यं न चेत्, फले नास्तीति किमु वाच्यम् इत्युच्यते **न कर्मेति** । 'सृजतीत्यनुषङ्गः' इत्युक्त्वा चतुर्थपाद उक्तार्थ एव व्याख्यात इति ॥ १४ ॥

एवं ध्यायन् कर्तृत्वेन कारयितृत्वेन वा स्वविहितकर्मयोगे प्रवर्तमानः मानवः **कस्यापि पुण्यं पापं वा** नादत्ते । ननु यद्यात्मनः परः स्वतन्त्रोऽन्यः कर्ता अस्ति, तत्कर्तृके कर्मणि "अहं करोमि" इत्यभिमन्यते जीवः, तर्हि कथं तं न पश्यति ? इत्यत उक्तम् **अज्ञानेनेति** इति **प्राचीनटीकायां** 'नादत्ते' इति गीताक्षराणि व्याख्यातानि । जडापेक्षया विभुः समर्थो जीव इति पूर्वभाष्यादेव व्याख्यातप्रायं विभुपदम् । विवृतं च जडापेक्षया विशिष्टभवनत्वाद्विभुर्जीव इति । तत्रैव भावप्रदीपिकायां प्रभुविभुशब्दौ विधिनिषेधशास्त्रपरिवृतत्वेन जीवे प्रयुक्ताविति तत्पदप्रयोजनमुक्तम् । ॥ १५ ॥

**गीता**

## ज्ञानेन तु तदज्ञानं येषां नाशितमात्मनः ।
## तेषामादित्यवज्ज्ञानं प्रकाशयति तत्परम् ॥ १६ ॥

***वि०वि०***— ननु ज्ञानस्याज्ञानेनावृतत्वे सत्यज्ञानस्य नाशकान्तराभावात् ज्ञानार्थयोर्योग-संन्यासयोर्वैयर्थ्यमित्याशङ्क्य स्वरूपज्ञानमविद्यावृतं वृत्तिज्ञानं त्वविद्यां शिथिलयति प्रकाशयति च परब्रह्मेत्याह **ज्ञानेनेति** । आत्मनो भगवतो ज्ञाने आत्मनः परमेश्वरात् तत्प्रसादात् नाशितमिति वा सम्बधः । अंतःकरणवाचिना आत्मशब्देन ज्ञानशब्दयोः सम्बन्धे वृत्तिज्ञानमुक्तं भवति । तृती-यान्तज्ञानशब्देन परोक्षज्ञानमुच्यते । प्रथमान्तेन च साक्षात्कारः ॥

***वा०ल०***— 'प्रकाशयति तत्परम्' इत्यत्र परं उत्तमं तत् विष्णवाख्यं ब्रह्म ॥

***सा०सं०***— ननु ज्ञानस्याज्ञानावृतत्वे तेनाज्ञाननाशायोगात्, विनाशकान्तरस्य चाभावात्, ज्ञानार्थयोर्योगसंन्यासयोर्वैयर्थ्यमित्यत आह **ज्ञानेनेति** । द्विविधं हि ज्ञानम्, स्वरूपं वृत्तिरूपं चेति । यद्यपि स्वरूपज्ञानमज्ञानावृतं नाज्ञाननाशकम् । तथाऽप्यात्मनो भगवतो **ज्ञानेन** परोक्षवृत्तिज्ञानेन । **येषामज्ञानं नाशितं** शिथिलितम् । **तेषामेव ज्ञानं** भगवदपरोक्षज्ञानम् । **तत् परं** ब्रह्म । आदित्यवत् **प्रकाशयतीत्यर्थः** ॥

***अ०प्र०***— ज्ञानिनस्तु न मुह्यन्तीत्याह **ज्ञानेनेति** ।

आत्मनः[१], ज्ञानेन[२], येषां[३], तत्[४], अज्ञानं[५], नाशितम्[६], तेषां[७], तत् ज्ञानं[८], तत्परं[९], यथाऽऽदित्यस्तद्वत्[१०], प्रकाशयति[११] इति अन्वयः ।

आत्मनः ज्ञानेन = परमात्मविषयक भगवतः परोक्षज्ञानेन[२], येषां[३], तत्[४], अज्ञानं = वैषम्योपफलकस्वरूपज्ञानाच्छादकं अज्ञानं[५], नाशितं = नष्टप्रायं स्यात्[६], तेषां[७], तत् = अज्ञानं

नाशयित्वा आत्मविषयक शास्त्रजन्यश्रवणादिरूपं ज्ञानं ब्रह्मापरोक्षज्ञानं जनयति एतत् वृत्तिरूपं अपरोक्षज्ञानं[८], तत्परं = ब्रह्मपरिपूर्णं ईश्वररूपं, यथादित्यस्तद्वत् = यथा आदित्यस्तमो निरस्य समस्तवस्तुजातं प्रकाशयति तद्वत्[९], प्रकाशयति = विषयीकरोति ॥ १६ ॥

**भाष्यम्**

**ज्ञानमेव अज्ञाननाशकमित्याह— ज्ञानेनेति । प्रथमज्ञानं परोक्षम् ।** ॥ १६ ॥

*प०टी०*— नन्वज्ञानेन चेज्ज्ञानमावृतं किं तर्हि तन्निवर्तकम् ? न हि प्रकाशस्य तमसाऽऽवृतत्वे तन्निवर्तकमस्तीत्याशङ्कोत्तरत्वेनोत्तरश्लोकमवतारयति **ज्ञानमेवेति** । दीपस्तमो निवारयति, प्रकाशयति चार्थम् । तद्वदपरोक्षज्ञानं द्वयं करोतीत्यर्थो न भवतीत्यभिप्रायेणाह **प्रथमेति** । नन्वपरोक्षज्ञानादेव तत्त्वदृष्टेः, अपरोक्षज्ञानस्य च परोक्षज्ञानेन सम्भवात् किमर्थं तद्बुद्धित्वाद्युच्यते ? इत्यत आह **अपरोक्षेति** ॥

*न०टी०*—ननु ज्ञानस्याज्ञानावृतत्वे किमज्ञाननाशकं स्यात् ? इत्यत आह **ज्ञानमेवेति** । यथाऽऽदित्यस्तमो निवर्तयन्नेव धरामण्डलं प्रकाशयति, तथा पञ्चपर्वात्मकमज्ञानं निवर्तयदेवापरोक्षज्ञानं ब्रह्म प्रकाशयतीति न मन्तव्यम् । किन्तु परोक्षतत्त्वज्ञाननिवर्तितपञ्चपर्वाज्ञानस्यैवापरोक्षज्ञानमुदेतीति भावेनाह **प्रथमेति** ॥

*प्र०दी०*— ननु ज्ञानस्याज्ञाननाशकत्वमर्थप्रकाशकत्वं च प्रसिद्धमेव । तत्किमर्थमुच्यत इत्यत आह— **ज्ञानमेवेति** । 'अज्ञानेनावृतं ज्ञानं' इत्युक्तम् । एवं तर्हि तस्याविनाश एव स्यात् । तथा च न कदाचिद्ब्रह्मप्रकाशः । विनाशकान्तराङ्गीकारे च ज्ञानार्थयोः संन्यासयोगयोर्वैयर्थ्यमित्याशङ्क्य ज्ञानमेवाज्ञानस्य नाशकमतो नोक्तदोषः । किन्तु स्वरूपज्ञानमविद्ययाऽऽवृतम् । वृत्तिज्ञानं त्वविद्यां शिथिलयति ब्रह्म प्रकाशयति इत्येतदनेनाहेत्यर्थः ।

अत्र केचित् यथैक एवादित्योऽन्धकारं नाशयति भूमण्डलं च प्रकाशयति तथैकमेव ज्ञानमज्ञानं निवर्तयति परं च प्रकाशयतीति व्याचक्षते । तदसदिति भावेनाह— **प्रथमेति** । तृतीयान्तपदोक्तम् । द्वितीयमपरोक्षमिति शेषः । अन्यथा द्विर्ज्ञानग्रहणं व्यर्थं स्यादिति भावः ॥

*भा०र०*— **तत्किमर्थमुच्यत इति** । मानान्तराप्राप्तबोधार्थत्वाच्छब्दस्येति भावः । **अविनाश एवेति** । प्रकाशस्य तमसाऽऽवृतस्य तन्निवर्तकत्वादृष्टेर्ज्ञानस्याज्ञानावृतत्वेनाज्ञाननाशक-

त्वायोगादिति भावः । **विनाशकान्तरेति** । 'तस्याज्ञानस्य' इत्यनुवर्तते । **वैयर्थ्यमिति** । अङ्गीक्रियमाणाज्ञानविनाशके एव प्रवृत्तिविधानौचित्येन, संन्यासे योगे च प्रवृत्तिविधानफलमापद्येत इत्यर्थः । **उक्तदोषः** "अविनाश एव स्यात्" इत्युक्तदोषः । नन्वेवं सति "ज्ञाने सत्यज्ञाननिवृत्तिः", "आवरकाज्ञाननिवृत्तौ ज्ञानोदयः" इत्यन्योन्याश्रय इति शङ्कते **किन्त्विति** । ज्ञानं हि द्विविधम्– स्वरूपम्, मनोवृत्तिरूपं चेति । तत्र स्वरूपज्ञानमीश्वरविषयं नित्यं तदावरकाज्ञाननिवर्तकम् । मनोवृत्तिरूपं ज्ञानं प्रमाणजन्यमिति नोक्तदोषावकाश इत्याह **स्वरूपेत्यादि** ।

**तदसदितीति** । "शृणुयाद्यावदज्ञानं मतिर्यावदयुक्तता । ध्यानं च यावदीक्षा स्यात्" (ब्रह्माण्डे), "श्रुत्वा मत्वा तथा ध्यात्वा तदज्ञानविपर्ययौ । संशयं च पराणुद्य लभते ब्रह्मदर्शनम् ॥" (ब्र.त.) इत्यादिप्रमाणेषु अज्ञाननाशस्य श्रवणमननादिजन्यपरोक्षज्ञानकार्यत्वावेदनात् दर्शनशब्दितापरोक्षज्ञानस्य च ब्रह्मप्रकाशत्वावगमाच्चेति भावः । परामर्शस्थल इवात्र प्रथमत्वादेरसम्मतेराह **तृतीयेति** । 'ज्ञानेन' इति यत्तृतीयान्तं पदं तत्र प्रातिपदिकार्थभूतं ज्ञानमत्र परोक्षरूपं विवक्षितमिति भाष्यार्थ इत्यर्थः । **द्वितीयमिति** । 'तेषाम्' इत्युत्तरार्धे परप्रकाशरूपत्वेनोक्तम् अपरोक्षज्ञानमित्यर्थः । एवं ज्ञानद्वयानङ्गीकारे बाधकमाह **अन्यथेति** । अनेन "वृत्तिज्ञानमविद्यां शिथिलयति" इत्यत्र वृत्तिज्ञानमपि द्विविधम्– परोक्षमपरोक्षं चेति । तत्र परोक्षज्ञानम् अविद्यानाशकम् । अपरोक्षं तु परब्रह्म प्रकाशयतीति स्वाशय उद्घाटितो भवति । तथा च **प्राचीनटीका** परोक्षतत्त्वज्ञाननिवर्तित-पञ्चपर्वाज्ञानस्यैवापरोक्षज्ञानमुदेतीति ॥ १६ ॥

***गीताक्षरार्थस्तु***— "अज्ञानेनावृतं ज्ञानम्" (५.१५) इत्युक्तम् । एवं तर्हि तस्याविनाश एव स्यात् । तथा च न कदाचिद् ब्रह्मप्रकाशः । विनाशकान्तराङ्गीकारे च ज्ञानार्थयोः न्यासयोगयोः वैयर्थ्यमित्याशङ्क्य ज्ञानमेवाज्ञानस्य नाशकम् । अतो नोक्तदोषः । किन्तु स्वरूपज्ञानम् अविद्ययाऽऽवृतम् । वृत्तिज्ञानं तु अविद्यां शिथिलयति, ब्रह्म प्रकाशयति चेत्येतदुच्यते **ज्ञानेन त्विति** । **आत्मनो** भगवतो **ज्ञानेन** परोक्षतत्त्वनिश्चयरूपेण तत् "मुह्यन्ति जन्तवः" (५.१५) इत्युक्तम् **अज्ञानं नाशितम्** । किं ज्ञानस्यैवासौ महिमा ? नेत्युच्यते **आत्मन इति** । भगवत्प्रसादादित्यर्थः । तेषां = नाशिताज्ञानानाम् **ज्ञानम्** आत्मनस्साक्षात्कारः **परं तद्** ब्रह्म प्रकाशयतीति ॥१६॥

**गीता**

**तद्बुद्धयस्तदात्मानस्तन्निष्ठास्तत्परायणाः ।**
**गच्छन्त्यपुनरावृत्तिं ज्ञाननिर्धूतकल्मषाः ॥ १७ ॥**

***वि०वि०***— अपरोक्षज्ञानोत्पत्तौ ध्यानादिव्यवहितपरोक्षज्ञानं विना अन्यदप्यव्यवहितं साधनमाह **तद्बुद्धय इति** । न सकृद्भगवत्परोक्षज्ञानेन चरितार्थता, किन्तु पुनस्तत्र बुद्धिर्येषां ते तद्बुद्धयः । स आत्मा आदानादिकर्ता स्वामी वा येषां ते तदात्मानः । तस्मिन्निष्ठा स्थितिः । आपद्यपि तस्मादचलनं येषां ते तन्निष्ठाः । स एव परमायनं येषां ते तत्परायणाः । चक्षुराद्याश्रिता वयमिति ध्यायिन इत्यर्थः । एतच्च देवताविषयम् ।

'स्वोत्पत्त्यङ्गं तु देवानां विष्णोश्चिन्त्यं सदैव तु ।
तेषां तत्र प्रवेशो हि मुक्तिरित्युच्यते बुधैः ॥' इति वचनात् ।

यद्वा, स एव परो येषां ते तत्पराः । ते अयनं येषां ते गुर्वादित्वेन तत्परायणाः । ते च अपरोक्षज्ञाननिर्धूतपापा अपुनरावृत्तिलक्षणां मुक्तिं गच्छन्ति ॥

***सा०सं०***— अपरोक्षज्ञानाव्यवहितसाधनमाह **तद्बुद्धय इति** । न सकृत् परोक्षज्ञानेनालं किन्तु 'आवृत्तिरसकृदुपदेशात्' (४-१-१) इत्युक्तदिशा पुनः पुनस्तत्र हरौ बुद्धिर्येषां ते **तद्बुद्धयः** । स एव आत्मा आदानादिकर्ता स्वामी येषां ते **तदात्मानः** । **तन्निष्ठा**स्तस्मिन्नचञ्चलाः । स एव परमयनं येषां ते **तत्परायणाः** । तथा ज्ञानिनः सन्तः । अत एव च **ज्ञाननिर्धूतकल्मषाः** भगवदपरोक्ष-ज्ञानेन निर्धूतपाप्मानोऽ**पुनरावृत्तिं** मुक्तिम् । **गच्छन्ति** ॥

***अ०प्र०***— तद्बुद्ध्यादि पञ्च (तद्बुद्धयः, तदात्मानः, तन्निष्ठाः, तत्परायणाः, ज्ञाननिर्धूत-कल्मषाः एते पञ्च)[१], अपुनरावृत्तिं[६], गच्छन्तीत्यन्वयः ।

तद्बुद्धयः = न सकृत्परोक्षज्ञानेन कृतार्थता किन्तु पुनःपुनस्तत्रेश्वरे बुद्धिर्येषां ते तद्बुद्धयः । यद्वा, तस्मिन्नेव बुद्धिर्निश्चयात्मिका येषां ते तथा[१], तदात्मानः = तस्मिन्नेव आत्मा मनो येषां ते । यद्वा, य आत्मा स्वाम्यादानादिना कर्ता इति धीर्येषां ते तथा[२], तन्निष्ठाः = तत्र निष्ठा स्थितिरापद्यपि तस्मादचलनं येषां ते तथा । यद्वा, तस्मिन्नेव निष्ठा तात्पर्यं येषां ते तथा[३], तत्परायणाः = तदेव परं अयनं आश्रयो येषां ते तथा । यद्वा, स एव परमयनमाश्रयो इति धीमन्तस्तत्परायणाः ।

'स्वोत्पत्त्यङ्गं तु देवानां विष्णोश्चित्तं सदैव तत् ।
तेषां तत्र प्रवेशो हि मुक्तिरित्युच्यते बुधैः ॥'

वयं तदङ्गचक्षुराद्याश्रिता इति व्याख्यानं देवताविषयम् । यद्वा, स एव पर इति धीमन्तः तत्पराः गुर्वादयः ते अयनं आश्रयो इति धीमन्तस्तत्परायणाः[४], ज्ञाननिर्धूतकल्मषाः = ततश्च

तत्प्रसादलब्धेन परमात्मविषयकज्ञानेन निर्धूतं निरस्तं कल्मषं येषां ते तथा । यद्वा, ते च तद्बुद्धय इत्यादिसाधनजन्यापरोक्षज्ञानेन नष्टपापाः सन्ताः[५], अपुनरावृत्तिं = मोक्षं[६], गच्छन्ति = यान्ति आप्नुवन्ति । सर्वगतानां ईश्वररूपाणां निर्दोषत्वपूर्णत्वाभ्यां सम्यग्ज्ञानं चापरोक्षसाधनमित्याशयेन वक्ष्यति ॥ १७ ॥

**भाष्यम्**

**अपरोक्षज्ञानाव्यवहितसाधनमाह— तद्बुद्धय इति ॥ १७ ॥**

*प०टी०—* परोक्षज्ञानस्यापरोक्षज्ञानसाधनत्वेऽपि तद्बुद्धित्यादिकमन्तरङ्गसाधनतयोच्यत इत्यर्थः ॥

*न०टी०—*ननु परोक्षज्ञानोत्पन्नमपरोक्षज्ञानं सर्वकल्मषापनोदेनापुनरावर्तिं साधयत्येव । किं तत्र तद्बुद्धित्यादिसाधनान्तरेण ? इत्यत आह **अपरोक्षेति** । सत्यम्, मुक्तावपरोक्षज्ञानं विना नान्यत् साधनमिति । तदुत्पत्तौ तु ध्यानादिव्यवहितपरोक्षज्ञानं विनाऽन्यदप्यस्त्यव्यवहितं साधनं तद्बुद्धित्यादिकम् । तथा हि । न सकृद्भगवत्परोक्षज्ञानेन चरितार्थाः, किन्तु पुनः तत्र बुद्धिर्येषां ते तद्बुद्धयः । स आत्मा आदानकर्ता स्वामी येषां ते तदात्मानः । न चासौ स्वामीति बुद्धिरपरं गच्छति योषामापद्यपि, अनापदि वा प्रतीकादिषु ते तन्निष्ठाः । सममेतावत् देवदैवमनुष्ययोः । अथ देवानामेव । स एव परमयनं येषां ते तत्परायणाः । तच्चक्षुराद्याश्रिता वयमिति ध्यायिन इत्यर्थः । यद्वा, स देवः परो येषां ते तत्पराः, अयनं तेषां गुर्वादित्वेन ते तत्परायणाः । ते चापरोक्षज्ञानेन निर्धूतकल्मषाः निर्धूतपापाः, अपुनरावृत्तिं गच्छन्तीत्यर्थः ॥

*प्र०दी०—* तद्बुद्धित्वादिकं यद्यपुनरावृत्तिसाधनत्वेनोच्यते तदाऽपरोक्षज्ञानादेव मोक्ष इति गतः पक्षः । अथ तद्बुद्धयो ज्ञाननिर्धूतकल्मषा इति ज्ञानसाधनत्वेन । तदसत् । ज्ञानेनेति परोक्षज्ञानस्या-परोक्षज्ञानसाधनत्वेनोक्तत्वादित्यत आह— **अपरोक्षेति** । सत्यम् । परोक्षज्ञानमपरोक्षज्ञानस्य साधनम् । किन्तु व्यवहितम् । न हि श्रवणमननानन्तरमेवाऽपरोक्षज्ञानमुत्पद्यते । इदं च व्यवहित-साधनमाहेत्यर्थः ॥

*भा०र०—* **अपरोक्षज्ञानादेव मोक्ष इतीति** । " 'तमेवं विद्वानमृत इह भवति' (तै.आ. ३.१२) इत्यादिश्रुत्या, 'विद्यैव तु निर्धारणात्' (ब्र.सू. ३.३.४८) इत्यादि शास्त्रैश्च सिद्धः " इति शेषः । **ज्ञानसाधनत्वेन** 'तद्बुद्धित्वादिकमुच्यते' इति वर्तते । **परोक्षज्ञानस्येति** । "ज्ञानेन तु तद-ज्ञानम्" (५.१६) इत्यत्र "प्रथमज्ञानं परोक्षम्" (गी.भा. ५.१६) इत्यादिभाषणेन तस्यापरोक्षज्ञान-

साधनत्वस्योक्तत्वेन तद्विरोधापत्तेरित्यर्थः । इदं तद्बुद्धित्यादिकम् **अव्यवहितसाधनमिति** "निदिध्यासनरूपम्" इत्युपस्कर्तव्यम् । अत एव 'श्रवणमननानन्तरमेव' इत्युभयोरेवोक्तिः ॥ १७ ॥

*गीताक्षरार्थस्तु*— अपरोक्षज्ञानं प्रति परोक्षज्ञानरूपं व्यवहितं साधनमुक्तम् । इदानीं तत्प्रति अव्यवहितसाधनमुच्यते **तद्बुद्धय इति** । न सकृत् परोक्षज्ञानेन चरितार्थम्, किन्तु **तत्र बुद्धिर्येषां ते तद्बुद्धयः** । **स** भगवान् **आत्मा** स्वामी येषां ते **तदात्मानः** । **तन्निष्ठाः तस्मिन्** परमात्मनि **निष्ठा** मम स्वामीति बुद्धेरनापदि आपद्यप्यचलनं येषां ते तथोक्ताः । सममेतद्देवमनुष्ययोः । अथ देवानामेव विशेष उच्यते **तत्परायणा इति** । **स** एव भगवान् **परम् अयनं** येषां ते तथोक्ताः । "चक्षुराद्याश्रिता वयम्" इति ध्यायिन इत्यर्थः । यद्वा स एव परो येषां ते तत्पराः । ते अयनं येषां गुर्वादित्वेन ते तत्परायणाः । ते च अपरोक्ष**ज्ञानेन निर्धूतकल्मषाः** परिगतपापाः **अपुनरावृत्तिं** मुक्तिं **गच्छन्ति** इति **प्राचीनटीकातो**ऽप्यवसेयः ॥ १७ ॥

**गीतातात्पर्यनिर्णयः**

**यथा पितृदत्तं पालकत्वं राजपुत्राणाम्, एवं परमात्मदत्तं क्रियास्वातन्त्र्यलक्षणं कर्तृत्वम् । क्रियानिष्पन्नधर्मादिरूपकर्मणि स्वातन्त्र्यं च जीवानामप्यस्तीत्याशङ्कां परिहरति न कर्तृत्वमित्यादिना ।**

*न्या०दी०*— यदुक्तं जीवानां स्वातन्त्र्याभावापेक्षयैवाकर्तृत्वं, परतन्त्रकर्तृत्वं तु अस्त्येवेति न तद्युक्तम् । "न कर्तृत्वं" इत्युत्तरवाक्यविरोधादित्यत आह **यथेति** ॥ स्वतो जीवानां स्वतन्त्रकर्तृत्वाद्यभावेऽपि परमात्मदत्तं तदस्ति । अतः कथं ब्रह्मण्याधानमुच्यत इत्याशङ्कामेवात्र परिहरति । न तु जीवानां सर्वात्मना कर्तृत्वाभावं वक्तीति भावः । कर्मफलसंयोगे च स्वातन्त्र्यमित्यपि संयोज्यम् । अनेन "न कर्तृत्वं न कर्माणि" इति पौनरुक्त्यं च परिहृतम् ।

*भा०दी०*— **अनेनेति** । क्रियायामदृष्टे चेति कर्तृत्वकर्मशब्दयोरर्थभेदकथनेनेत्यर्थः । सर्वात्मनेत्यस्य पूर्वत्रोत्तरत्र चान्वयः ॥

**गीतातात्पर्यनिर्णयः**

**क्रियायामदृष्टोत्पादने फले च स्वातन्त्र्यं लोकस्य न सृजतीश्वर इत्यर्थः । अन्यथा लोकस्येति विशेषणं व्यर्थम् ।**

*प्रका०*— न कर्तृत्वमित्यादेर्निवर्त्यां शङ्कां यथेत्यादिना दर्शयित्वा अर्थमाह **क्रियायामित्यादिना** ।

*न्या०दी०*— नन्वत्र कर्तृत्वाद्यभाव एवोच्यते, न तु तत्रास्वातन्त्र्यम् । अतः कथमनेनैषा शङ्का परिहियत इत्यत आह **क्रियायामिति** ।। कर्तृत्वादिकं न सृजतीत्यस्य तत्र स्वातन्त्र्यं न सृजतीत्येवार्थः । अतो भवत्येतदाशङ्कापरिहार इत्यर्थः । नन्वत्रेश्वरस्यैव कर्तृत्वाद्यभाव उच्यत इति किं न स्यादित्यत आह **अन्यथेति** ।। यद्यत्रेश्वरस्यैव कर्तृत्वाद्यभाव उच्यते तदा लोकस्य कर्तृत्वादिकं न सृजतीति व्यर्थं स्यादित्यर्थः ।

**गीतातात्पर्यनिर्णयः**

**जनपदे निवसतां तद्वित्तभोजिनामप्याधिपत्यादानान्न दत्ता जनपदा राज्ञा स्वपुत्राणामितिवत् कर्मफलादिसंयोगिनामपि तत्स्वातन्त्र्यादानात् न सृजतीति युज्यते । स्वयमेव भवति भावयति चेति स्वभावो भगवान् । स्वभावत्वात् स्वयमेव कर्तृत्वादिषु प्रवर्तते ।**

*प्रका०*— **स्वयमेव भावयति,** न तूपाधिवशात् करोतीति स्वभावो विष्णुरित्यर्थः ।

*न्या०दी०*— यदुक्तं जीवस्य पारतन्त्र्येण कर्तृत्वाद्यस्तीति न तद्युक्तम् । कर्तृत्वादि ईश्वरो लोकस्य न सृजतीत्युक्तत्वात् । न च तत्र तस्य स्वातन्त्र्यं न सृजतीत्यर्थः । कर्तृत्वादिसद्भावेऽपि स्वातन्त्र्याप्रदानाभिप्रायेण कर्तृत्वादिकं न सृजतीत्येवंजातीयप्रयोगादर्शनादित्यत आह **जनपद इति** ।। यद्यत्र जीवानां सर्वात्मनेश्वरस्य च कर्तृत्वं न निषिद्ध्यते तर्हि ''स्वभावस्तु प्रवर्तते'' इति स्वभावादेव प्रवृत्तिकथनं न युज्यत इत्यत आह **स्वयमेवेति** ।। नात्र स्वभावपदेन प्रसिद्धस्वभावोऽभिधीयते । येनोक्तविरोधः । किन्तु स्वस्थितावन्यकरणे च परनिरपेक्षत्वाद्भगवानेवेत्यर्थः । प्रसिद्धपदपरित्यागेनाप्रसिद्धपदप्रयोगः किमर्थमित्यतो हेतुसूचनार्थमिति भावेन वाक्यार्थमाह **स्वभावत्वादिति** ।।

*भा०दी०*— **स्वभावत्वादितीति** । स्वस्थितावन्यकरणे च परानपेक्षत्वादित्यर्थः ।।

**गीतातात्पर्यनिर्णयः**

**''स्वातन्त्र्यात् भगवान् विष्णुः स्वभाव इति कीर्तितः ।**
**तत्स्वातन्त्र्यं कदाऽप्येष नान्यस्य सृजति क्वचित् ।।**
**स्वातन्त्र्यादेव पापादिसम्बन्धः कुर्वतोऽपि न ।**
**अज्ञानावृतबुद्धित्वादीदृशं तं न जानते ।।'' इति महावाराहे ।**

*न्या०दी०*— ननु किमर्थमेवमर्थान्तरं कल्पनीयम् ? जीवस्येवेश्वरस्य च कर्तृत्वादिकं नास्त्येव । विश्वप्रवृत्तिस्तु स्वभावादेवेत्यर्थः किं न स्यात् ? लोकस्येत्यस्य लोकविषय इत्यर्थोपपत्तेरित्यतः स्वोक्तार्थे स्मृतिसम्मतिमाह **स्वातन्त्र्यादिति** ॥ नान्यस्य सृजति । अपि तु स्वयमेव प्रवर्तत इति शेषः । ईश्वरस्यैव कर्तृत्वे कर्मलेपः स्यादित्यत आह **स्वातन्त्र्यादेवेति** ॥ अनेन 'नादत्ते' इत्यस्यार्थोऽप्युक्तो भवति । एवं सर्वेषु स्थित्वा स्वातन्त्र्येण कर्ता ईश्वरोऽस्ति चेत् कथं न दृश्यत इत्यत आह **अज्ञानेति** ॥ एतेन अज्ञानेति व्याख्यातं भवति ।

**गीतातात्पर्यनिर्णयः**

**"अहं सर्वस्य प्रभवः" ।, "तपाम्यहमहं वर्षं निगृह्णामि" ।**

**"पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च ।"**

**"न ऋते त्वत्क्रियते किञ्चनारे ।"**

**"देवस्यैष स्वभावोऽयम् ।"**

**"लोकवत्तु लीलाकैवल्यम् ।"**

**इत्यादेर्नास्यास्वाभाविकं कर्तृत्वमकर्तृत्वं वा । विपरीतप्रमाणाभावाच्च । अनिर्वाच्यनिरासादेव च निरस्तोऽयं पक्षः ।**

*प्रका०*— अत्र बहुप्रमाणविरोधमुद्भाव्य यद्दुर्दर्शनप्राप्तमस्वाभाविककर्तृत्वमकर्तृत्वं वा भगवतः तद्दूषयति अहं **सर्वस्येत्यादिना** । न च परेशस्य अस्वाभाविककर्तृत्वमित्यत्र प्रमाणमस्ति । अस्वाभाविककर्तृत्वमिति यत् सदसद्विलक्षणकर्तृत्वमभ्युपगतं मायावादिना तत्प्रागेव निरस्तमित्याह **अनिर्वाच्येति** ।

*न्या०दी०*— यदुक्तमीश्वरः स्वयमेव भावयतीति न तद्युक्तम् । तस्य कर्तृत्वाभावात् । तस्य कर्तृत्वसद्भावेऽपि तस्यास्वाभाविकत्वादित्यत आह **अहमिति** ॥ अहं सर्वस्येति वचनद्वयं कर्तृत्वसद्भावे मानम् । परास्येत्यादिकं कर्तृत्वस्य स्वाभाविकत्वे । त्वदृते दूरे समीपे वा किञ्चन केनापि न क्रियत इत्यर्थः । अत्र भगवदितरस्य कर्तृत्वाभावोक्त्या ईश्वरकर्तृत्वस्यापराधीनत्वसम्भवेन स्वाभाविकत्वमेवोच्यते । लोकवदित्यत्रापि फलाद्यपेक्षाऽभावेन कर्तृत्वोक्त्या तस्य स्वाभाविकत्वमेव उच्यते । इतश्च नेश्वरस्य अकर्तृत्वम् अस्वाभाविकं कर्तृत्वं चेत्याह **विपरीतेति** ॥ नन्वस्माभिरीश्वरस्य कर्तृत्वम् अस्वाभाविकपदेन अनिर्वाच्यमभिप्रेयते । न तु फलापेक्षं पराधीनं वा । अतो

नोदाहृतवचनविरोध इत्यत आह **अनिर्वाच्येति** ॥ ईश्वरस्य कर्तृत्वमनिर्वचनीयमिति पक्षो द्वितीयाध्यायेऽनिर्वाच्यवस्तुनो निरस्तत्वादेव निरस्तः । अतो न पुनरत्र निरसनीय इति भावः ।

**गीतातात्पर्यनिर्णयः**

**न च सर्वविशेषराहित्यवादिनां शून्यवादात् कश्चिद्विशेषः । न हि सर्वविशेषरहितमित्युक्ते तदस्तीति सिद्ध्यति । वाच्यत्वलक्ष्यत्वास्तित्वादीनामपि विशेषत्वात् ।**

*प्रका०*— तन्निर्विशेषमेव ब्रह्माऽस्त्वित्यत आह **न चेति** । सर्वविशेषरहितत्वेऽपि न शून्यतापत्तिः, ब्रह्मणोऽस्तित्वादिति वाच्यम् । अस्तित्वे, अस्तिशब्दवाच्यत्वे, अस्तिशब्दलक्ष्यत्वेऽपि सर्वविशेषरहितत्वभङ्गप्रसङ्गात् । अस्ति ब्रह्मेत्यादिशब्दानां पर्यायत्वदोषश्च स्यात् । ब्रह्मणो निर्विशेषत्वे अर्थविशेषाभावादित्याह **न हीति** ।

*न्या०दी०*— ननु ब्रह्मणः सर्वविशेषरहितत्वात् कथं परमार्थतः कर्तृत्वं स्यादित्यत आह **न चेति** ॥ भवेद्ब्रह्मणः कर्तृत्वस्य अपारमार्थिकत्वं, यदि तस्य सर्वविशेषराहित्यं स्यात् । न च तद्युज्यते । तथात्वे ब्रह्मणः शून्यत्वापत्त्या तदभ्युपगन्तॄणां शून्यवादित्वापातादिति भावः । सर्वविशेषरहितत्वेऽपि न ब्रह्मणः शून्यत्वापत्तिः, अस्तित्वादित्यत आह **न हीति** ॥ न भवेद्ब्रह्मणः शून्यत्वापत्तिः, यदि तस्यास्तित्वं सिध्येत् । न च तत्सिद्धिः । सर्वविशेषरहितमित्यङ्गीकारादिति भावः । सर्वविशेषरहितत्वेऽपि कुतोऽस्तित्वं न सिद्ध्यतीत्यत आह **वाच्यत्वेति** ॥ अस्तित्वे ब्रह्मणः अस्तित्वमस्तिशब्दवाच्यत्वं वा स्यात् । तस्य च विशेषत्वात् न तत्सर्वविशेषरहितस्य युज्यत इति भावः ।

*भा०दी०*— शेषमाह **भवेद् ब्रह्मण इति** ॥

**गीतातात्पर्यनिर्णयः**

**अन्यथा "अस्ति ब्रह्म" इत्यादीनां शब्दानामपि पर्यायत्वादयो दोषाः । व्यावर्त्यविशेषश्च व्यावृत्तविशेषनिबन्धन एव ।**

*प्रका०*— न च सत्त्वादिविशेषाभावेऽपि ब्रह्मणि असदादिव्यावृत्तिद्वारा लक्षणया (वा) असदादिशब्दप्रवृत्तिरिति वाच्यम् । सत्त्वादिविशेषनिबन्धनत्वात् असदादिव्यावृत्तेः । अन्यथा तद्व्यावर्तनवैय्यर्थ्यसम्भवात् । असतोऽपि असद्व्यावृत्तिप्रसङ्गाच्च । न च सर्वशब्दावाच्यस्य लक्षणा

दृष्टा । न चाशब्दस्याप्रामाणिकस्य ब्रह्मणः सत्त्वं वक्तुं शक्यते । अस्तित्वं तु शशविषाणवद् अप्रामाणिकस्य न सिद्ध्यति । न च सदसद्विलक्षणं किञ्चिद्वक्तुं शक्यते । तदाह **व्यावर्त्ये-त्यादिना** ।

*न्या०दी०*— भवेन्निर्विशेषत्वेऽस्तित्वासिद्धिः, यद्यस्तित्वं ब्रह्मणो विशेषतया अङ्गीक्रियते । नैतदस्ति । तस्य ब्रह्मस्वरूपमात्रं न तद्विशेषः तर्हि ब्रह्म ब्रह्मेतिवदस्ति ब्रह्मेत्यादिशब्दानां पर्यायत्वं स्यात् । ततश्च ''अस्ति ब्रह्मेति चेद्वेद'' (तै.उ.) इत्यादिसहप्रयोगानुपपत्तिः स्यात् । तथा चोपनिषदां पुनरुक्तिदोषेण उन्मत्तवाक्यवदनादरणीयत्वं स्यात् इति भावः । ब्रह्मण्यस्तित्वादि-विशेषाभावेऽपि आरोपितासत्त्वादिविशेषव्यावृत्तिकथनद्वारा अस्त्यादिपदानि तल्लक्षयन्ति । अतो न शब्दानां पर्यायत्वादीत्यत आह **व्यावर्त्येति** ॥ भवेदस्त्यादिपदानामपर्यायत्वं, यद्यस्त्यादिपदानि ब्रह्मणोऽसत्त्वादि व्यावर्तयन्ति । न च तद्युक्तम् । व्यावर्त्यासत्त्वादिविशेषव्यावृत्तेः व्यावृत्ततयाऽङ्गी-कृतब्रह्मगतास्तित्वादिविशेषनिबन्धनत्वात् । तेषां चानङ्गीकारात् । ब्रह्मण्यस्तित्वादिविशेषाभावेऽपि असत्त्वादिव्यावृत्तावसतोऽपि तद्व्यावृत्तिप्रसङ्गात् । गङ्गापदलक्ष्येऽपि तीरे गङ्गात्वाभावेऽपि अगङ्गा-त्वव्यावृत्तिप्रसङ्गादिति भावः ।

*भा०दी०*— **उपनिषदामिति** । सत्यं ज्ञानमनन्तमित्येवमादीनामित्यर्थः । व्यावृत्तेरित्यस्य निबन्धनत्वपदेनान्वयः ॥ **तद्व्यावृत्तिप्रसङ्गादिति** । असद्व्यावृत्तिप्रसङ्गादित्यर्थः ॥

**गीतातात्पर्यनिर्णयः**

## अन्यथा वैयर्थ्यमेव स्यात् ।

*न्या०दी०*— इतोऽप्यस्त्यादिपदानि अस्तित्वादिविशेषबोधकानि नेति न युक्तमित्याह **अन्यथेति** ॥ यद्यस्त्यादिपदानि न अस्तित्वादिब्रह्मविशेषबोधकानि तर्हि तेषां वैय्यर्थ्यमेव स्यात् । ब्रह्मजिज्ञासुं प्रति ब्रह्मकथनस्यैव सार्थक्यात् । ब्रह्मणश्च ब्रह्मपदादेव अवगतत्वात् । न चास-त्त्वादिव्यावृत्तिः प्रयोजनम् । तदसम्भवस्योक्तत्वात् । ब्रह्म कुतो व्यावृत्तमित्यजिज्ञासितत्वाच्च । अजिज्ञासितत्वेऽपि ब्रह्मण्यसत्त्वादिभ्रान्तिः निवार्यत इति चेन्न । विकल्पासहत्वात् । भ्रान्तिः किं प्रतीतेऽप्रतीते वा ब्रह्मणि भवेत् ? नाद्यः । ब्रह्मप्रतीतौ तन्मात्रस्य तत्त्वादेरपि प्रतीतत्वेन भ्रान्त्य-नवकाशात् । ब्रह्मप्रतीतावपि सत्त्वाद्यप्रतीतौ तन्मात्रत्वानुपपत्तेः । न द्वितीयः । अदृष्टकल्पना-प्रसङ्गादिति भावः ।

*भा०दी०*— **असम्भवस्योक्तत्वादिति** । व्यावर्त्यविशेषश्चेत्येतद्व्याख्यावसर इति भावः ॥

**गीतातात्पर्यनिर्णयः**

**न च सर्वशब्दवाच्यस्य लक्ष्यत्वम् ।**

*न्या०दी०*— इतश्च न अस्त्यादिपदैरसत्त्वादिव्यावृत्तिद्वारा ब्रह्म लक्ष्यम् । तस्य सर्वशब्दावाच्यत्वाङ्गीकारात् । शब्दवाच्यस्यैव लक्ष्यत्वदर्शनादित्याह **न चेति** ॥

**गीतातात्पर्यनिर्णयः**

**न च सर्वप्रमाणागोचरमस्तीत्यत्र किञ्चिन्मानम् ।**

*न्या०दी०*— अस्तित्वाङ्गीकारे ब्रह्मणः सविशेषत्वप्रसङ्गात् न तत्सिद्ध्यतीत्युक्तम् । इतोऽपि न ब्रह्मणोऽस्तित्वं सिद्ध्यतीत्याह **न चेति** ॥ न च तत्पक्षे ब्रह्मणोऽस्तित्वं सिद्ध्यति । तत्प्रमाणाभावात् । प्रमाणं विनाऽर्थसिद्धेः क्वाप्यदर्शनात् । प्रमाणकथने च सर्वप्रमाणागोचरत्वाङ्गीकारभङ्ग इति भावः ।

**गीतातात्पर्यनिर्णयः**

**नास्तित्वं तु सप्तमरसादिवददर्शनात्सिद्ध्यति ।**

*न्या०दी०*— यद्यस्तित्वे प्रमाणाभावात् न तत्सिद्ध्यतीत्युच्यते तर्हि ब्रह्मणो नास्तित्वमपि न सिद्ध्यति । तत्र प्रमाणाभावात् । तथा च न शून्यवादाविशेषापादनं ब्रह्मवादस्य युज्यत इत्यत आह **नास्तित्वमिति** ॥ ब्रह्मणो न नास्तित्वेऽस्माभिः पृथक् प्रमाणं वक्तव्यम् । तस्यास्तित्वप्रमाणाभावेनैव सिद्धेः । यथा खलु सप्तमरसाद्यस्तित्वे प्रमाणाभावात् नास्तित्वं सिद्ध्यति तथैवेत्यर्थः । अनेनानुपलब्धिलिङ्गकमनुमानं सूचितं भवति ।

*भा०दी०*— **अनेनेति** । नास्तित्वं त्वित्यादिभाष्येणेत्यर्थः । ब्रह्म नास्तित्ववत् केनापि प्रमाणेनास्तित्वानुपलम्भान्नरशृङ्गवदिति सूचितमित्यर्थः ॥

**गीतातात्पर्यनिर्णयः**

**स्वप्रकाशत्वं च नामानं सिद्ध्यति । स्वयम्प्रकाशत्वं च ततोऽतिरिक्तं चेद्विशेषाङ्गीकारः । न चेत्तदेव प्रमाणगोचरम् ।**

*प्रका०*— न च प्रमाणवेद्यस्यापि ब्रह्मणः स्वप्रकाशत्वेन सिद्धिरिति वाच्यम् । स्वप्रकाशस्यापि अप्रामाणिकस्यासिद्धेः । यदि तत्र प्रमाणमुच्यते, तर्हि तत्किं स्वप्रकाशत्वं ब्रह्मातिरिक्तम्

तत्स्वरूपं वा ब्रह्मातिरिक्तं चेत् स्वप्रकाशत्वधर्मसद्भावेन ब्रह्मणो निर्विशेषत्वभङ्गः स्यात् । ब्रह्मस्वरूपं चेत् स्वप्रकाशत्वं, तर्हि स्वप्रकाशत्वे प्रमाणवचनेन ब्रह्मणि प्रमाणमुक्तं स्यात् । ततस्तस्य अप्रमेयत्वभङ्गः स्यात् । न च वाच्यम् स्वप्रकाशादिशब्दैः परतः प्रकाशमानत्वमेव निरस्यते । न तु स्वप्रकाशत्वं नाम किञ्चिद्बोध्यते ब्रह्मण इति । परतः प्रकाशमानत्वाभावात् । स्वप्रकाशत्वस्याप्रामाणिकत्वेनाभावादप्रामाणिकत्वापत्तेः । तदेतदाह **स्वप्रकाशत्वमित्यादिना** ।

*न्या०दी०*— ननु प्रमाणावेद्यत्वेऽपि ब्रह्मणो न नास्तित्वं वाच्यम् । स्वप्रकाशतयैव तत्सिद्धेरिति चेन्न, विकल्पानुपपत्तेः । तथाहि— स्वप्रकाशत्वे ब्रह्मणः प्रमाणमस्ति न वा ? न तावद्द्वितीयः । प्रमाणाभावे तदसिद्धेरित्याह **स्वप्रकाशत्वं चेति** ॥ आद्ये स्वप्रकाशत्वं ब्रह्मातिरिक्तं तत्स्वरूपमेव वा ? प्रथमं दूषयति **स्वयंप्रकाशत्वमिति** ॥ यदि ब्रह्मणः स्वातिरिक्तं स्वयंप्रकाशत्वं प्रामाणिकं स्यात् तदा तस्य सविशेषत्वं प्रसज्यत इत्यर्थः । द्वितीयं दूषयति **न चेदिति** ॥ यदि स्वयंप्रकाशत्वं न ब्रह्मातिरिक्तं, किन्तु तत्स्वरूपमेव तर्हि स्वयंप्रकाशत्वे प्रमाणसद्भावाङ्गीकारे ब्रह्मैव प्रमाणगम्यमङ्गीकृतं स्यात् । तथा च अप्रमेयत्वभङ्ग इत्यर्थः ।

**गीतातात्पर्यनिर्णयः**

**तत्प्रमाणाभावे परप्रकाशत्वमात्रनिरासे स्वप्रकाशत्वे प्रमाणाभावादप्रकाशत्वमेव स्यात् ।**

*न्या०दी०*— न स्वप्रकाशपदेन स्वविषयप्रकाशत्वमुच्यते । येन तस्य ब्रह्मातिरिक्तत्वे ब्रह्मणः सविशेषत्वं स्यात् । किन्तु परप्रकाशत्वाभाव एवेत्यत आह **परेति** ॥ यदि स्वप्रकाशपदेन परप्रकाशनिरासमात्रमभिप्रेयते तर्हि ब्रह्मणः प्रकाशराहित्यमेव स्यात् । परप्रकाशस्यानभिमतत्वात् । स्वविषयप्रकाशत्वाख्यस्य स्वप्रकाशत्वस्योक्तरीत्या प्रमाणाभावेन, भावे च सविशेषत्वप्रमेयत्वप्राप्त्या निरस्तत्वादिति भावः ।

**गीतातात्पर्यनिर्णयः**

**अर्थतः सिद्धिरित्यर्थापत्तितः सिद्धिः तत्प्रमाणतः सिद्धिर्वा । उभयथाऽपि प्रमेयत्वमेव स्यात् । स्वप्रकाशशब्देन स्वमितत्वानङ्गीकारात् परमितत्वानङ्गीकाराच्चासिद्धिरेव ।**

*प्रका०*— ननु नासत्त्वमापादयितुं शक्यते ब्रह्मणः । सत्त्वादिधर्माभावेन सदादिशब्दैर्वाच्यत्वाभावेऽपि असदादिव्यावृत्ततया बोध्यमानस्यार्थाद्विद्यमानत्वस्य सिद्धेरित्यत आह **अर्थत इति** ।

*न्या०दी०*— तथापि न नास्तित्वं ब्रह्मणो वक्तुं शक्यते । "अस्ति ब्रह्म" इत्यादिश्रुत्या असत्त्वादिव्यावृत्तिद्वारा ब्रह्मणि लक्षितेऽर्थतस्तस्यास्तित्वसिद्धेरिति चेन्न । दूषितत्वात् । अभ्युपगम्याप्याह **अर्थत इति** ॥ **तत्प्रमाणत इति** ॥ अस्ति ब्रह्मेति श्रुतिप्रमाणत इत्यर्थः । यदुक्तं स्वप्रकाशत्वेन ब्रह्म सिद्ध्यतीति तद्व्याहतं चेत्याह **स्वप्रकाशेति** ॥ न स्वप्रकाशपदेन स्वविषयप्रकाशत्वमङ्गीक्रियते । किन्तु परप्रकाशत्वानङ्गीकारमात्रमेव । अतः स्वपरप्रकाशशून्यतया स्वप्रकाशत्वेन ब्रह्मणोऽसिद्धिरेव स्यान्न तु तेन तत्सिद्धिरित्यर्थः ।

*भा०दी०*— **दूषितत्वादिति** । सत्त्वादिधर्मबोधनं विना तद्विरोधीतरव्यावृत्तेः असम्भवेन ब्रह्मणः अवाच्यस्य लक्ष्यत्वायोगेन च दूषितत्वादित्यर्थः ।

**गीतातात्पर्यनिर्णयः**

**प्रकाश इत्युक्तेऽपि स्वमन्यं वा किञ्चित्प्रकाश्यं विना न दृष्ट एव भोजनादिवत् । कर्तृकर्मविरोधश्चानुभवविरुद्धः ।**

*न्या०दी०*— किञ्च भवेद् ब्रह्मणः स्वप्रकाशता यदि प्रकाशत्वमेव सम्भवेत् । न च तत्सम्भवति । ब्रह्माख्यप्रकाशस्य प्रकाश्यरहितत्वात् । न तावत् स्वयं प्रकाश्यम् । अनङ्गीकारात् । नाप्यन्यत् । तदभावात् । न च प्रकाश्यरहितप्रकाशरूपं ब्रह्मेति वाच्यम् । स्वमन्यं वा प्रकाश्यं विना प्रकाशस्यादृष्टत्वात् । यथा भोज्यरहितं भोजनं न दृष्टं तथैवेत्याह **प्रकाश इति** ॥ नन्वेकस्यां क्रियायामेकस्यैव कर्तृत्वं कर्मत्वं च विरुद्धम् । अतः कथं प्रकाश्यं विना प्रकाशो न दृष्ट इत्युच्यते । स्वस्यैव प्रकाश्यत्वे स्वयमेव प्रकाशयति प्रकाशते चेत्येकस्यैव कर्तृत्वकर्मत्वापत्तेरित्यत आह **कर्तृकर्मेति** ॥ मामहं जानामीत्येकस्यैवैकस्यां क्रियायां कर्तृत्वकर्मत्वानुभवात् नैकस्यां क्रियायां कर्तृकर्मणोरैक्यं विरुद्धमिति भावः ।

**गीतातात्पर्यनिर्णयः**

**ज्ञानं च ज्ञेयं ज्ञातारं च विना न दृष्टम् ।**

*न्या०दी०*— ननु प्रकाशो नाम द्रव्यम् । अतः कथं तस्य भोजनादिवत् कर्मापेक्षेत्याशङ्कां परिहरन् अधिकं च दोषमाह **ज्ञानं चेति** ॥ ब्रह्मणः प्रकाशत्वं नाम ज्ञानत्वमभ्युपगतम् । न च ज्ञानत्वं ब्रह्मणो युक्तम् । ज्ञातृज्ञेयरहितत्वात् । तद्रहितज्ञानस्यादृष्टत्वादित्यर्थः ।

**गीतातात्पर्यनिर्णयः**

**अतः शून्यवादान्न कश्चिद्विशेषः । अतोऽनन्तदोषदुष्टत्वादुपरम्यते ।**

*न्या०दी०*— उपसंहरति **अत इति** ॥ यतः सर्वविशेषरहितत्वेनाप्रमेयत्वेन च ब्रह्मणो न अस्तित्वं सिद्ध्यत्यत इत्यर्थः । भगवतः कर्तृत्वाभावादिनिराकरणमुपसंहरति **अत इति** ॥

*भा०दी०*— तदेव वाक्यं पुनः प्रकारान्तरेण अवतारयति **भगवतः कर्तृत्वाभावादीति** । दुष्टत्वादित्यस्य इति मतस्येत्यनेनान्वयः ॥

**गीतातात्पर्यनिर्णयः**

**"हरिः स्वभावतः कर्ता सर्वमन्यत् तदीरितम् ।**
**अतः सा कर्तृता तस्य न कदाचिद्विनश्यति ॥"**

**—इति पैङ्गिश्रुतिः ॥ १४-१७ ॥**

*न्या०दी०*— दुष्टत्वात् । कर्तृत्वं नास्ति, सद्भावे वाऽस्वाभाविकमिति मतस्य । पुनरीश्वरस्य स्वभावतः कर्तृत्वे श्रुतिं चाह **हरिरिति** ॥ १४-१७ ॥

**गीता**

**विद्याविनयसम्पन्ने ब्राह्मणे गवि हस्तिनि ।**
**शुनि चैव श्वपाके च पण्डिताः समदर्शिनः ॥ १८ ॥**

*वि०वि०*— परमेश्वरस्वरूपाणां सर्वत्र साम्यदर्शनं चापरोक्षज्ञानसाधनमित्याशयवानाह **विद्येति** । पण्डिताः परोक्षज्ञानिनः । 'पाण्डित्यमागमजज्ञानम्' इति वचनात् । ब्राह्मणादिषु स्थितं ब्रह्म समं पश्यन्तीति समदर्शिनः ॥

*वा०ल०*— 'विद्याविनयसम्पन्ने' इत्यत्र सप्तम्या निर्दिष्टेषु शुद्धाशुद्धेषु ज्ञान्यज्ञानिषु च एतेष्वधिकरणेषु समं नित्यशुद्धत्वसार्वज्ञादिगुणैः समानं परमात्मानं पश्यन्तीति समदर्शिनः । 'न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि' इति हि ब्रह्मसूत्रम् । "निर्दोषं हि समं ब्रह्म तस्माद्ब्रह्मणि ते स्थिताः" इत्युत्तरश्लोके कृष्णेनैव समपदस्य ब्रह्मपरतया व्याख्यातत्वाच्च । 'सर्वत्र साम्यं पश्यन्ति' इति येषामाशा तेषां समपदमेव विषमम् । तथा सति साम्यदर्शिन इति स्यात् । अनुभवविरुद्धं स्मृतिविरुद्धञ्च गोशुनोः साम्यदर्शनम् । शुनः स्पर्शे स्नानविधानात्, गोस्पर्शे पुण्यविधानात् । गवामिव पुण्यकाले शुनां दानाभावाच्च ॥

*सा०सं०*— परमेश्वररूपाणां सर्वत्र साम्यदर्शनं च अपरोक्षज्ञानसाधनमित्याशयवानाह **विद्येति** । **पण्डिताः** परोक्षज्ञानिनः । विद्याविनयसम्पन्नब्राह्मणादिषु विषमेषु स्थितं हरिम् । **समं**

गुणेषु दोषाभावे च समं तारतम्याभावं च पश्यन्तीति **समदर्शिन** इत्यर्थः । अस्य श्लोकस्य भगवद्विषयता 'निर्दोषं हि' इत्युत्तरवाक्यगम्या, अपरोक्षज्ञानहेतुता च प्रकरणगम्येति ज्ञेयम् ॥

*अ०प्र०*— कीदृशास्ते ज्ञानिनो ये अपुनरावृत्तिं गच्छन्तीत्यत्राह **विद्येति** ।

पण्डिताः[१], विद्याविनयसम्पन्नादि षट्सु (विद्याविनयसम्पन्ने, ब्राह्मणे, गवि, हस्तिनि, शुनि, श्वपाके)[७], समदर्शिनः[८] इत्यन्वयः ।

पण्डिताः = परोक्षज्ञानिनः 'पाण्डित्यमारामजन्यज्ञानमि'त्युक्तेः । यद्वा, विषमेष्वपि समं ब्रह्मैव द्रष्टुं शीलं येषां ते पण्डिताः[१], तत्र विद्याविनयसम्पन्ने = विद्याविनयाभ्यां युक्ते[२], ब्राह्मणे च[३], गवि हस्तिनि शुनि चैव[६], श्वपाके च = शुनः ये पचन्ति तस्मिन् चेति[७], कर्मणां वैषम्यं गवि हस्तिनि शुनि चेति ज्ञानिनो वैषम्यं दर्शितम् । समदर्शिनः = ब्राह्मणादिषु सर्वत्रस्थितं ब्रह्म समं तारतम्यहीनं पश्यतीति समदर्शी ते एव समदर्शिनः[८], इत्यर्थः ॥ १८ ॥

**भाष्यम्**

**परमेश्वरस्वरूपाणां सर्वत्र साम्यदर्शनं च परोक्षज्ञानसाधनमित्याशयवानाह**— विद्येति ॥ १८ ॥

*प०टी०*— उत्तरश्लोकद्वयं क्रमेणावतारयति **परमेश्वरेति** ॥

*न०टी०*—समदर्शनमप्यपरोक्षज्ञानद्वारेणैवापुनरावृत्तिसाधनम् । न तु साक्षादिति भावेनोत्तरश्लोकमवतारयति **परमेश्वरेति** । 'ब्राह्मणे गवि' इत्यधिकरणे सप्तमी । समदृष्टिविषयस्तु ततः ब्रह्मैव । 'निर्दोषं हि समं ब्रह्म' इति वक्ष्यति । न च तेषामेव ब्रह्मता । सर्वप्रमाणविरोधादिति भावः ॥

*प्र०दी०*— 'विद्याविनय' इत्यादिना प्रकृतानुपयुक्तमयुक्तं च कथमुच्यत इत्यत आह— **परमेश्वरेति** । सर्वत्र ब्राह्मणादिषु स्थितानाम् । सर्वत्र गुणेषु दोषाभावेषु वा । साम्यं तारतम्याभावः । तद्बुद्धित्वादिना सहास्य समुच्चयार्थश्चशब्दः । परमेश्वरविषयता 'निर्दोषं हि' इत्युत्तरवाक्यगम्या । अपरोक्षज्ञानसाधनता च प्रकरणगम्येत्यत 'आशयवान्' इत्युक्तम् । पण्डितशब्दस्तु परोक्षज्ञानवचनः । 'पाण्डित्यमागमज्ञानं' इति वचनात् ॥

*भा०दी०*— **प्रकृतानुपयुक्तमयुक्तं चेति** । अपरोक्षज्ञानहेतूक्तेः प्रकृतत्वात्तदनुपयोगिसर्वेषु साम्यदर्शनमयुक्तं च तत्तद्योग्यतानुरोधेन दर्शनस्यैव युक्तत्वादिति भावः । भेदव्याप्तसमत्वस्य प्रकृतेऽभावादाह **तारतम्याभाव इति** । **परमेश्वरविषयतेति** । साम्यदृष्टेरिति योज्यम् ॥ १८ ॥

*भा०र०*— **प्रकृतानुपयुक्तमिति** । संन्यास-योग-ज्ञानानाम् अन्यतमस्यानुक्तेः, अपरोक्षज्ञानाव्यवहितसाधनानुक्तेर्वेति भावः । **अयुक्तं चेति** । "ब्राह्मणादयः समाः" इति ज्ञानं हि समदर्शनम् । तदयुक्तमापादयितुम् । तेषां साम्याभावानुभवादिति भावः । "ब्राह्मणे गवि" इत्याद्यधिकरणसप्तमीति **प्राचीनटीकाऽनुरोधेन** भाष्यं व्याचक्षाणः शेषमाह **सर्वत्रेति** । अनध्याहारेण पक्षान्तरमाह **सर्वत्र गुणेष्विति** । ननु साम्यं नाम सादृश्यम् । तच्च तद्भिन्नत्वे सति तद्गतभूयोधर्मवत्त्वम् । न च परमेश्वररूपाणां भेदोऽस्ति । "न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि" (ब्र.सू. ३.२.११) इति प्रतिषेधात् । न चेश्वरीयगुणानां दोषाभावानां च परस्परसाम्यदर्शनमत्र विवक्षितम् । तेषामपि भेदव्याप्यसाम्यस्य "आ याहि समसद्गुणैः" इत्यादौ प्रतिक्षेपात् इत्यत आह **साम्यमिति** । **अस्य** साम्यदर्शनस्य ।

परमेश्वररूपाणां साम्यदर्शनम् अपरोक्षज्ञानसाधनमित्युक्तं भाष्ये । न चायमर्थः श्लोकाक्षरात्प्रतीयते ? इत्यत आह **परमेश्वरेति** । अस्य श्लोकस्य, साम्यदृष्टेर्वेति योज्यम् । **उत्तरवाक्यम्** अव्यवहितोत्तरश्लोकः । तद्बुद्धित्वादेरपरोक्षज्ञानाव्यवहितसाधनतायाः पूर्ववाक्ये (५.१७) प्रकृतत्वादाह **प्रकरणेति** । ननु "ये समदर्शिनस्ते पण्डिताः" इति वचनेनैव पाण्डित्यशब्दितापरोक्षज्ञानाव्यवहितसाधनत्वं साम्यदर्शनस्य तद्बुद्धित्वादेरिवाहत्योच्यत इति कथं तस्य प्रकरणगम्यत्वम् ? इत्यत आह **पण्डितशब्दस्त्विति** । नायं पण्डितशब्दोऽपरोक्षज्ञानिनमाह । प्रमाणेनागमजन्यपरोक्षज्ञान्यर्थत्वेन व्याख्यातत्वादिति भावः ॥ १८ ॥

**गीता**

**इहैव तैर्जितः सर्गो येषां साम्ये स्थितं मनः ।**
**निर्दोषं हि समं ब्रह्म तस्माद्ब्रह्मणि ते स्थिताः ॥ १९ ॥**

*वि०वि०*— तदेव स्तौति **इहैवेति** । येषां मनः परमेश्वररूपाणां साम्ये स्थितं तैरपीहास्मिन्नेव जन्मनि सर्गो जन्मादिरूपः संसारः परोक्षज्ञानाद्विजितः । समदर्शिन इति दृश्यत्त्वेनोक्तं वस्तु कथं समं भवेदित्यपेक्षायामाह **निर्दोषमिति** । उक्तं च—

'विषमेष्वपि जीवेषु समो विष्णुः सदैव तु ।
यत्तृणादिगतस्यापि गुणाः पूर्णा हरेः सदा ॥' इति हि ।

ते ज्ञानिनः संसारं जित्वा तस्माद्ब्रह्मणः तदनुग्रहात् ब्रह्मणि स्थिताः निर्दुःखानन्दात्मिकां स्वस्थितिं प्राप्ताः ॥

*वा०ल०*— 'येषां साम्ये स्थितम्' इत्यत्र साम्ये सार्वज्ञादिगुणैः सर्वत्र ब्रह्मणः साम्ये ॥

*सा०सं०*— समदर्शिनं स्तौति **इहैवेति** । येषां साम्ये मनः स्थितं **तैः** । **इहैवा**स्मिन्नेव जन्मनि । **सर्गो** जन्मादिरूपः संसारः । **जितः** । दृश्यत्वेनोक्तं समं वस्तु किं केन साम्यमित्यत आह **निर्दोषमिति** । **समं** वस्तु **ब्रह्म**, निर्दोषत्वेन च साम्यमित्युक्तं भवति । **तस्मात्** समतया सर्वत्र स्थितस्य ब्रह्मत्वात् । ते समदर्शिनः । **ब्रह्मणि स्थिता** एवेत्यर्थः । ब्रह्मज्ञानिन इति यावत् ॥

*अ०प्र०*— येषां[१], मनः[२], साम्ये[३], स्थितं[४], तैः[५], इहैव[६], सर्गः[७], जितः[८], हि = यस्मात्[९], निर्दोषं[१०], ब्रह्म[११], समं[१२], तस्मात्[१३], ते[१४], ब्रह्मणैव[१५], स्थिताः इत्यन्वयः ।

येषां मनः साम्ये स्थितं = सर्ववस्तुषु ईश्वररूपाणां गुणतः साम्ये स्थितं[४], तैः = पूर्वोक्तज्ञानिभिः[५], इहैव = इह जन्मनि जीवद्भिरेव[६], सर्गः = सृज्यत इति सर्गः जन्मादिरूपसंसारः[७], जितः = निरस्तः[८], तत्र हेतुः— हि = यस्मात्[९], ब्रह्म = पूर्णं[१०], समं = सम[११]मित्यर्थः ॥ तदुक्तम्—

'विषमेष्वपि जीवेषु समो विष्णुः सदैव तु ।
यत् तृणादिगतस्यापि गुणाः पूर्णा हरेः सदा ॥' इति पैङ्गिश्रुतिः ।

निर्दोषं च[१२], यतो निर्दोषत्वपूर्णत्वाभ्यां ब्रह्मैव समम् तस्मात्[१३], ते = समदर्शिनः[१४], ब्रह्मणि एव[१५], स्थिताः[१६], अतो तेषां सर्गजयो युक्त इति पूर्वेणान्वयः ॥ १९ ॥

**भाष्यम्**

## तदेव स्तौति— इहैवेति ॥ १९ ॥

*न०टी०*—ननु कथमपरोक्षज्ञानसाधनमेव साम्यज्ञानम् ? मुक्तिसाधनं किं न स्यात् ? 'तैर्जितः सर्गः' इति पुनःसर्जनाभावोक्तेरित्यत आह **तदेवेति** । अपरोक्षज्ञानद्वारा सर्गजयहेतुत्वाविरोधात् । अन्यथा 'दृष्ट्वैव तं मुच्यते' इत्यादिश्रुतिविरोधात् । न च 'पण्डिताः समदर्शिनः' इति दर्शनत्ववचनादिदमेवापरोक्षज्ञानमिति वाच्यम् । तथा सति स्वदेह एव ब्रह्मदर्शिनो मुक्तिः स्यादिति भावः ॥

*प्र०दी०*— ननूत्तरवाक्ये साम्यदर्शनं मुक्तिसाधनमेवोच्यते । तत्कथमुच्यतेऽपरोक्षज्ञानसाधनमिति । प्राग्ज्ञानिनोऽपि जन्मान्तरसद्भाव उक्तः । तत्कथमिहैवेति तद्देह एव मुक्तिरुक्तेत्यत आह— **तदेवेति** । स्तुतावधिकोक्तिः सम्भवतीति भावः ॥

*भा०दी०*— **मुक्तिसाधनमेवेति** । तैर्जितः सर्गो जन्मादिरित्यनेनेति भावः । कैमुत्येनाप्ययुक्तमाह **प्राग्ज्ञानिनोऽपीति** । 'एषा ब्राह्मी स्थितिः पार्थे'ति श्लोकव्याख्यानभाष्ये ज्ञानिनामपि सति प्रारब्धकर्मणि शरीरान्तरं युक्तमित्यादिनेति भावः ॥

*भा०र०*— **मुक्तिसाधनमिति** । 'तैर्जितस्सर्गः' इति सर्गशब्दितजन्माभावप्रतिपादनादिति भावः । "इति कथमुच्यते" इति सम्बन्धः । 'प्राक्' इत्याक्षेपान्तरम् । 'किञ्च' इति योज्यम् । "एषा ब्राह्मी स्थितिः पार्थः" (२.७२) इत्यत्र "ज्ञानिनामपि सति प्रारब्धकर्मणि शरीरान्तरं युक्तम्" (गी.भा. २.७२) इति द्वितीय इत्यर्थः । 'इहैव' इत्यस्यार्थः **तद्देह एवेति** । "न तु जन्मान्तरे" इत्येवकारार्थः । **तदेव** साम्यदर्शन**मेव, आहत्य मुक्तिसाधनमिति** । न तु जन्मान्तरे, किन्तु तस्मिन्नेव जन्मनि **मुक्तिमापादयतीति** च **स्तौतीति** भाष्यार्थ इति भावेनोक्तशङ्काद्वयं भाष्यभावोक्त्या परिहरति **स्तुताविति** । साम्यदर्शनम् अपरोक्षज्ञानद्वारैव मुक्तिहेतुः । "तमेवं विद्वानमृत इह भवति" (तै.आ.३.१२), "दृष्ट्वैव तं मुच्यते नापरेण (कौशि.श्रु.) इत्यादिश्रुत्या भगवदपरोक्षज्ञानाद् अन्यस्य साक्षान्मुक्तिसाधनत्वप्रतिषेधात् । एवं स्थितौ साम्यदर्शनस्य मुक्तिसाधनत्ववचनम्, 'इहैव' इति जन्मान्तरानपेक्षत्ववचनं च स्तुतिरूपम् । स्तवनं च तस्यात्यावश्यकतयाऽऽपादनीयत्वावेदनायेति भाष्यभाव इत्यर्थः ॥ १९ ॥

*गीताश्लोकद्वयाक्षरार्थस्तु*— परमेश्वररूपाणां सर्वत्र साम्यदर्शनं चापरोक्षज्ञानसाधनम् इत्याशयेनोच्यते **विद्येति** । **पण्डिताः** आगमजन्यपरोक्षतत्त्वनिश्चयवन्तः । श्रोत्रियब्राह्मणादिषु स्थितं ब्रह्म समं पश्यन्तीति **समदर्शिनः** ज्ञाननिर्धूतकल्मषाः गच्छन्त्यपुनरावृत्तिम् इति । "तस्माद्ब्रह्मणि स्थिताः" (५.१९) इत्युक्तवक्ष्यमाणवचनादुक्तार्थलाभः ॥ १८ ॥

साम्यदर्शनं सर्वथा सम्पादनीयमिति विभावयितुं स्तूयते **इहैवेति** । **येषाम्** अधिकारिणां **मनः साम्ये** नानास्थानस्थितानां भगवद्रूपाणां तारतम्याभावे स्थितं परिनिष्ठितं **तैः इह** अस्मिन्नेव देहे **सर्गो** जन्मादिरूपः संसारो **जितः** पराजितः विनाशित इति यावत् । स्तुतावधिकोक्तिः सम्भवतीति न क्षुद्रोपद्रवः । 'समदर्शिनः' इति दृश्यत्वेनोक्तं वस्तु कथं समम् ? किञ्च तत् ? इत्यत उक्तम् **निर्दोषं ब्रह्मेति** । सकलदोषाभाववत्तया सकलगुणवत्तया च **समम्**, तच्च ब्रह्म । तथा चोक्तम्—

विषमेष्वपि जीवेषु समो विष्णुः सदैव तु ।
यत्तृणादिगतस्यापि गुणाः पूर्णा हरेः सदा ॥ (पै.श्रु.) इति ।

**ते** चैवंविधाः समदर्शिनः । **तस्मात्** ब्रह्मणः, विष्णुप्रसादाद् एव **ब्रह्मणि स्थिताः** प्राप्तब्रह्मापरोक्षज्ञानाः निर्दुःखानन्दानुभवात्मिकां स्थितिं प्राप्ता इति वेति ॥ १९ ॥

**गीता**

## न प्रहृष्येत्प्रियं प्राप्य नोद्विजेत्प्राप्य चाप्रियम् ।
## स्थिरबुद्धिरसम्मूढो ब्रह्मविद्ब्रह्मणि स्थितः ॥ २० ॥

*वि०वि०*— संन्यसयोगज्ञानानि मिलित्वा प्रपञ्चयत्यध्यायशेषेण । सर्वत्र पुनःपुनरुक्तार्थ-प्रपञ्चनमनुक्तानां विशेषणानां सङ्ग्रहार्थमिति बोद्धव्यम् । तत्र संन्यासं प्रपञ्चयति **न प्रहृष्येदिति** ॥

*सा०सं०*— पुनः संन्यासं प्रपञ्चयति **न प्रहृष्येदिति** । **प्रियं** सुखसाधनं **प्राप्य न प्रहृष्येत्** हर्षं न प्राप्नुयात् । **अप्रियं च प्राप्य नोद्विजेत्** दुःखहेतुप्राप्तावपि उद्वेगरूपमनोऽधैर्यं न प्राप्नुयात् । तत्रोपायमाह **स्थिरबुद्धिरिति** । बुद्धेः स्थैर्ये हेतुर**सम्मूढ** इति । प्रियाप्रियप्रापणे लौकिको जन एव स्वतन्त्र इति मिथ्याज्ञानहीनस्तत्र हेतु**र्ब्रह्मविदि**ति । ब्रह्मैव स्वतन्त्रमिति विद्वान् नैतावताऽलं किन्तु **ब्रह्मणि स्थितः** । नित्यं ब्रह्मस्मृतिमानित्यर्थः । 'संन्यासस्तु' इत्यादिना संन्यासाद्योगस्याधि-क्योक्त्यर्थं योगहीनसंन्यासस्य, व्यर्थत्वं यदुक्तं तदयुक्तम् । कामाद्युपद्रवक्षये स्वरूपसुखाविर्भाव-सत्वादित्यतः, सत्यम्, तदेव सुखं भगवद्ध्यानरूपयोगे सति, अक्षयं भवतीति ॥

*अ०प्र०*— ब्रह्मप्राप्तस्य लक्षणत्वात् लक्षणमाह **नेति** ।

यः असम्मूढः[१], अत एव स्थिरबुद्धिः[२], ब्रह्मविद्भूत्वा[३], ब्रह्मणि स्थितः सन्[४], सः प्रियं प्राप्य[५], न प्रहृष्येत्[६], अप्रियं च[७], प्राप्य[८], नोद्विजेत्[९], इत्यन्वयः ।

असम्मूढः = निवृत्तमोहः[१], अत एव स्थिरबुद्धिः = निश्चितबुद्धिमान्[२], ब्रह्मविद्भूत्वा[३], ब्रह्मणि स्थितः सन्[४], प्रियं प्राप्य[५], न प्रहृष्येत् = न सन्तुष्यति - न प्रहृष्यति[६], अप्रियं च[७], प्राप्य[८], नोद्विजेत् = न उद्विजति - उद्वेगं नाप्नोति[९], न विषीदतीत्यर्थः ॥ २० ॥

**भाष्यम्**

### संन्यासयोगज्ञानानि मिलित्वा प्रपञ्चयत्यध्यायशेषेण ॥ २० ॥

*प०टी०*— अध्यायशेषेण ज्ञानिनः सर्वकर्मप्रहाणमुच्यत इत्यपव्याख्यानमेवेति ज्ञापयितु-मध्यायशेषार्थं दर्शयति **संन्यासेति** । संन्यासस्यादौ ग्रहणेन 'न प्रहृष्येत्' इति श्लोकसम्बन्धो-ऽप्युक्तो भवति ॥

*न०टी०*—अत्र केनचित् 'विद्याविनय' इत्यादिश्लोकयोः स्वोक्तजातिसङ्करे श्रुतिस्मृतिविरोध-माशङ्क्य तासां कर्मविषयत्वात्, अत्रेतःपरं सर्वकर्मस्मृतिविरोधसंन्यासस्योच्यमानत्वात् न विरोध इत्युक्तम् । तद्वचःशङ्कमानबुद्धीनां श्रीगीतानुयायिनां सुखप्रतिपत्त्यर्थमध्यायशेषमाह **संन्यासेति** ॥

*प्र०दी०*— अत्र कश्चिदाध्यायपरिसमाप्तेर्ज्ञानिनः कर्माभावः प्रतिपाद्यत इत्याह । अपरस्तु ज्ञानस्वरूपं तत्सहकारिसाधनं च प्रतिपाद्यत इति । तदुभयमसत् । अप्रतीतेरिति भावेनाध्यायशेष-प्रतिपाद्यमाह— **संन्यासेति** । मिलित्वा मेलयित्वा । शङ्कानुसारेणैव, न तु प्रकरणभेदेनेत्यर्थः । पुनरुक्तिपरिहारार्थं प्रपञ्चयतीत्युक्तम् । संन्यासस्यादौ ग्रहणेन 'न प्रहृष्येत्' इति संन्यासप्रपञ्चन-मिति सूचितम् ॥

*भा०र०*— "इदं तु सर्वकर्मसंन्यासिविषयं प्रस्तुतं "सर्वकर्माणि मनसा" (५.१३) इत्यारभ्य आ अध्यायपरिसमाप्तेः" (शां.भा. ५.१९) इति सङ्करभाषणम् अर्थतोऽनुवदति **अत्र कश्चिदिति** । **इति** 'आह' इत्यनुवर्तते । ननु भाष्ये त्त्वाश्रुतिनिर्वाहाय भगवान् मिलित्वा संन्यास-योग-ज्ञानानि प्रपञ्चयतीति वक्तव्यम् । तत्र केन मिलित्वा = संयुज्येत्याकाङ्क्षापूरणाय सन्निहितैः 'संन्यासादिभिः' इति वा, योग्यतया 'पुरुषान्तरेण' इति वा वाच्ये, तेषां प्रपञ्चनं प्रति कर्तृत्वाभावाद् बाधः ? इत्यत आह **मिलित्वेति** । संन्यास-योग-ज्ञानान्येव मेलने प्रपञ्चने च कर्म इति भाष्ये णिजन्तर्भावाङ्गी-कारान्नोक्तशङ्काऽवकाश इति भावः । संन्यास-योग-ज्ञानानां संवलनलक्षणमेलनस्याप्यत्रादर्शनादाह **शङ्काऽनुसारेणैवेति** ।

"प्राग् योगाभावे संन्यासवैयर्थ्यमुक्तं तदसत्" (प्र.दी. ५.२१) इति, "उत्तरश्लोके संन्या-सादि-त्रितयान्तर्गतं न किञ्चिदुच्यते" (प्र.दी.५. २२) इति, "ननु योगिनो ब्रह्माधिगतिः प्रागुक्ता, तत्किं पुनरुच्यते" (प्र.दी. ५.२४) इति च करिष्यमाणा या शङ्कास्तदनुसारेणैव प्रपञ्चनम् । न पुनः संन्यासप्रपञ्चनमादौ, ततो योगप्रपञ्चनम्, ततो ज्ञानप्रपञ्चनमिति प्रकरणभेदेन विस्तृत्य वर्णनमत्र क्रियत इति 'मेलयित्वा' इत्यस्य तात्पर्यार्थः । "न प्रहृष्येत्" इति संन्यासप्रपञ्चनं विधाय, "बाह्य-स्पर्शेषु (५.२१) इति योगाधिक्यस्पष्टनम्, पुनः संन्यासार्थम् "ये हि संस्पर्शजाः" (५.२२) इति कामभोगनिन्दनादिना संन्यासनिरूपणम् इत्यादिरूपेण कथनादिति भावः ।

**पुनरुक्तीति** । 'ज्ञेयः' (५.३) इत्यादिना 'विशुद्धात्मा' (५.७) इत्यादिना च स्पष्टीकृतत्वात्, "नैव किञ्चित्करोमि (५.८) इत्यादिश्लोकद्वयेन संन्यासं स्पष्टयति" (गी.भा. ५.८) इति भाषणेन पुनः स्पष्टीकृतत्वाद् "युक्तः कर्मफलम्" (५.१२) इत्यादिना योगस्य स्पष्टीकृतत्वात्, "तेषा-मादित्यवद् ज्ञानं प्रकाशयति" (५.१६) इति ज्ञानस्याप्युक्तत्वात्, पुनरुक्तिरिति शङ्कापरिहाराय **प्रपञ्चयति** ततोऽपि विस्तृत्य निरूपयतीत्यर्थ इति भाव इति सूचितमिति ॥ २० ॥

***तथाचायं गीताक्षरार्थस्तु***— "संन्यासः कर्मयोगश्च" (५.२) इत्यादिना प्रागुक्तः संन्यासः "नैव किञ्चित्करोमि" (५.८) इत्यादिना विवृतोऽपि पुनरिह प्रपञ्च्यते **न प्रहृष्येदिति** । **प्रियं प्राप्य**

**न प्रहृष्येत्** प्रहर्षं प्राप्नुयात् । **अप्रियं प्राप्य नोद्विजेत्** उद्वेगरूपमनोदौर्बल्यं न प्राप्नुयाच्च । तत्रोपायोक्तिः **स्थिरबुद्धिः स्थिरा** निर्विचिकित्सा बुद्धिर्यस्य स इति । बुद्धिस्थैर्यहेतुकथनम् **असम्मूढः** स्वात्मैव प्रियाप्रियप्राप्तौ स्वतन्त्र इति मिथ्याऽध्यवसायहीन इति । तदपि कुतः ? **ब्रह्मवित्** ब्रह्मैव प्रियाप्रियप्रापणे स्वतन्त्र इति विद्वान् । नैतावताऽलम्, किन्तु **ब्रह्मणि स्थितः** एकान्ततो ब्रह्मणि स्थितिमान् इति । पुनःपुनरुक्तार्थप्रपञ्चनम् अनुक्तविशेषणादिसङ्ग्रहाद्यर्थमिति **विवृतिकृतः** (विद्याधिराजतीर्थाः) ॥ २० ॥

**गीतातात्पर्यनिर्णयः**

**"विषमेष्वपि जीवेषु समो विष्णुः सदैव तु ।**
**यत्तृणादिगतस्यापि गुणाः पूर्णा हरेः सदा ॥"**

**—इति च ॥ १८-२० ॥**

*प्रका०*— तस्मादर्थापत्त्यादिवेद्यत्वाभावात् निर्विशेषत्वेन स्ववेद्यत्वाभावात् अनिवार्यमसत्त्वं मायिमते ब्रह्मणः । न च स्वेन स्वस्य वेद्यत्वे कर्तृकर्मविरोध इति वाच्यम् । मामहं जानामीत्यनुभवेन कर्तृकर्मविरोधस्य बाधितत्वात् । न च स्ववेद्यत्वाभावेऽपि वेदनरूपेण ब्रह्मास्तीति वाच्यम् । विषयरहितस्य वेदनस्याभावात् । भोजनवत् । न हि भोज्यरहितं भोजनं किञ्चिदस्ति । तथा निर्विषयं स्वप्रकाशज्ञानादिशब्दैर्वक्तुं न शक्यते । तदेतदाह **विषमेष्विति** ॥

*न्या०दी०*— 'ज्ञानेन' इति प्रकृतज्ञानस्य साधनान्तरमुच्यते 'विद्या' इति । तत्र न ब्राह्मणादिविषये समबुद्धित्वं विवक्षितम् । किन्तु तद्गतपरब्रह्मविषय एव । ब्राह्मणादीनां विषमत्वात् तद्गतब्रह्मण एव समत्वात् विपरीतज्ञानस्य च ज्ञानासाधनत्वादिति भावेन जीवानां वैषम्ये ब्रह्मणः साम्ये च प्रमाणमाह **विषमेष्विति** । अनेन "निर्दोषं हि समं ब्रह्म" इत्येतदपि व्याख्यातं भवति ॥

*भा०दी०*— **विपरीतज्ञानस्येति** । विषमेषु ब्राह्मणादिषु समत्वज्ञानस्येत्यर्थः ॥ २० ॥

**गीता**

**बाह्यस्पर्शेष्वसक्तात्मा विन्दत्यात्मनि यत्सुखम् ।**
**स ब्रह्मयोगयुक्तात्मा सुखमक्षयमश्नुते ॥ २१ ॥**

*वि०वि०*— पुनर्योगस्याधिक्यं संन्यासात्स्पष्टयति **बाह्यस्पर्शेष्विति** । कामरहित आत्मनि यत्सुखं विन्दति स एव ब्रह्मयोगयुक्तात्मा चेत् तदेवाक्षयं सुखं विन्दति । बह्मविषयो योगो

ब्रह्मयोगः । यद्यपि कामाद्युपद्रवक्षयेऽपि ईषत् तात्कालिकमात्मसुखं व्यज्यते, तथापि तस्य संसारनिवृत्तौ स्वरूपभूतस्याक्षयसुखस्याभिव्यक्तेः संन्यासाद्वरः कर्मयोग इत्युक्तं भवति ।

यद्वा, योगरूपसंन्यासस्य निःश्रेयसकरत्वमनेनोपपाद्यते । यदा संसारेऽपि परमात्मस्मरणाद्यल्पयोगयुक्तः संन्यासी सुखं विन्दति तदा ध्यानादिमहायोगयुक्तो मोक्षादिसुखं विन्दतीति किमु वक्तव्यमित्यर्थः ॥

***सा०सं०***— संन्यासाद्योगस्य पुनराधिक्यमाह **बाह्येति** । स्पृश्यन्त इति स्पर्शाः शब्दाद्याः । तेषां बाह्यत्वं श्रोत्राद्यविषयत्वसम्पादनं तथाकृतविषयेषु, असक्तमनस्कः । संन्यासीति यावत् । **आत्मनि** स्वरूपे । **यत्सुखं विन्दत्य**नुभवति । आत्मस्वरूपस्यापि न निर्विशेषत्वमिति ज्ञापनाय यत्सुखमित्येव वाच्ये, आत्मनीत्यप्युक्तिः । यदित्युक्तेस्तदिति लभ्यते । स **संन्यासी ब्रह्मयोगयुक्तात्मा** । ब्रह्मणि योगो ब्रह्मयोगः ध्यानम् । तद्युक्तात्मा तत्सुखं कामाद्युपद्रवक्षयरूपसंन्यासादाविर्भूतं **सुखम्** । **अक्षयं** पुनस्तिरोभावहीनमश्नुते प्राप्नोतीत्यर्थः ।

यद्वा, **योगयुक्तो मुनिर्ब्रह्म** इत्यादिना योगरूपसंन्यासस्य यन्निश्श्रेयस्करत्वमुक्तं तदुपपाद्यते **बाह्येति** । संसारेऽप्यात्मस्मरणरूपाल्पयोगयुक्तः संन्यासी सुखं विन्दति यदा, तदा ध्यानादिमहायोगादियुक्तमोक्षादिनिश्श्रेयसं विन्दतीति किमु वाच्यमित्यर्थः ॥

***अ०प्र०***— मोहनिवृत्त्या बुद्धिस्थैर्यहेतुमाह **बाह्यस्पर्शेष्विति** ।

बाह्यस्पर्शेष्वसक्तात्मा[१], आत्मनि[२], यत्सुखम्[३], विन्दति[४], स एव ब्रह्मयोगयुक्तात्मा[५], अक्षयं[६], सुखं[७], अश्नुते इत्यन्वयः ॥

बाह्याश्च ते स्पर्शाश्च बाह्यस्पर्शाः । स्पृशन्तीति स्पर्शाः शब्दादयो विषयाः । तेषु असक्तं न लिप्तं आत्मान्तःकरणं यस्य सः अस्निग्धमनाः कामरहित इति यावत्[१], आत्मनि = स्वस्मिन् अन्तःकरणे[२], यत्सुखं = यत् उपशमात्मकं सात्त्विकं सुखम्[३], तत् विन्दति = अभिव्यक्तं स्वरूपसुखं लभते[४], स एव ब्रह्मयोगयुक्तात्मा = स एव उपशमसुखं लब्ध्वा ब्रह्मविषयो योगो ब्रह्मयोगः तेन युक्तमनश्चेत्[६], अक्षयं सुखं = तदेवाक्षयं तिरोभावरहितं सुखम्[७], अश्नुते = प्राप्नोतीत्यर्थः ॥ २१ ॥

**भाष्यम्**

**पुनः योगस्याधिक्यं स्पष्टयति— बाह्यस्पर्शेष्विति । कामरहितः आत्मनि यत्सुखं विन्दति स एव ब्रह्मयोगयुक्तात्मा चेत् तदेवाक्षयं सुखं विन्दति ।**

**ब्रह्मविषयो योगो ब्रह्मयोगः । ध्यानादियुक्तस्यैवात्मसुखमक्षयम् । अन्यथा नेत्यर्थः ॥ २१ ॥**

***प०टी०***— "संन्यासस्तु महाबाहो" इत्युक्तस्य स्पष्टीकरणपरतयोत्तरश्लोकमवतार्य व्याचष्टे **पुनरिति** ॥

***न०टी०***—न केवलमितःपरमपि कर्मयोगमाचष्ट इत्येतावत् । किन्तु तस्याधिक्यं स्पष्टयति । अत इतःपरं सर्वकर्मबहिष्कृतानेवाधिकृत्य तेषां जातिसङ्करज्ञानं श्रेयःसाधनत्वेन उच्यत इति नाशङ्कनीयमिति भावेनाह **पुनरिति** । श्लोकेऽस्मिन् यत्तच्छब्दान्वयस्य दुर्गमत्वादन्वयमाह **कामेति** । **आत्मनि यत्सुखम्** आत्मधर्मत्वेनात्मस्वरूपभूतं सुखं स एव कामरहित एव । तदेव स्वरूपसुखमेव । ननु कामरहितोऽप्यहोरात्रादिकर्मयोगं ब्रह्मार्थत्वेन ब्रह्मयोगमनुतिष्ठन्नपि नाक्षयं सुखमनुभवति । तत्कथं ब्रह्मयोगयुक्तात्माऽक्षयं सुखं विन्दति ? इत्यत आह **ब्रह्मविषय इति** । तदपि स्पष्टयन् श्लोकतात्पर्यमाह **ध्यानादिति** । अक्षयात्मस्वरूपं तु सुखमप्यक्षयं तद्ध्यानसमाधिभ्यां भगवदापरोक्ष्याद्व्यज्यमानं तेन लब्धमित्युच्यते, तस्य मुक्तेः सिद्धत्वात् । यद्यपि कामाद्युपद्रवक्षयेऽपीषत् तात्कालिकमात्मसुखं व्यज्यते । तथाऽपि ध्यानादिकं विना संसारानिवृत्तेस्तस्य पुनरावृत्तत्वात् नाक्षयं सुखं तदित्यर्थः ॥

***प्र०दी०***— प्रकृतस्य संन्यासिन एवाक्षयसुखप्राप्तिरुच्यत इति परव्याख्यानमसदिति भावेन आह— **पुनरिति** । 'संन्यासस्तु' इत्यादिना प्रागुक्तत्वात्पुनरिति । आधिक्यं संन्यासात् । प्राग्योगाभावे संन्यासस्य वैयर्थ्यमुक्तम् । तदसत् । कामाद्युपद्रवक्षये स्वरूपसुखस्याविर्भावादित्याशङ्कानिराकरणात् स्पष्टनम् । नैतदत्र प्रतीयत इत्यतो व्याचष्टे— **कामेति** । बाह्यस्पर्शेष्वसक्तात्मेत्यस्यार्थः । **कामरहित इति** । आत्मस्वरूपस्यापि सुखस्य न निर्विशेषत्वमिति ज्ञापनाय 'आत्मनि' इत्युक्तम् । स एव कामरहित एव । तदेव आत्मसुखमेव । ब्रह्मणा योग इति प्रतीतिनिरासायाह— **ब्रह्मेति** । कथमनेन संन्यासाद्योगस्याधिक्यं स्पष्टीकृतमित्यतो ब्रह्मयोगशब्दार्थं विवृण्वन् तात्पर्यमाह— **ध्यानादीति** । ज्ञानद्वारेति शेषः । 'अक्षयं' पुनस्तिरोभावरहितम् । अन्यथा संन्यासमात्रेण । तिरोभावोपेतं त्वल्पत्वादफलमेवेत्युक्तमेव । व्याख्यानान्तरे तु बहूनां पदानां वैयर्थ्यमिति भावः ॥

***भा०दी०***— **वैय्यर्थ्यमुक्तमिति** । संन्यासस्त्वित्यत्र न निर्विषयत्वमिति । एतेन आत्मनीति विषयसप्तमीत्युक्तं भवति । **अन्यथेत्यनुवादः** । **संन्यासमात्रेण** इति व्याख्या । कामाद्युपद्रवक्षये

स्वरूपसुखाविर्भावसमत्वान्नेति...... कथमित्यत आह **तिरोभावेति** । **उक्तमेवेति** । संन्यासस्त्वि-त्येतद्व्याख्यावसरे उक्तमित्यर्थः । **व्याख्यानान्तरे त्विति** । ......................... न एवा-क्षयसुखमिति व्याख्याने तु बाह्यस्पर्शेष्वसक्तात्मा सुखमक्षयमश्नुत इत्ये.....-पत्तेरन्येषां दान्तं .......... अस्मन्मते तु कामाद्युपद्रवेत्यादिनोक्तशङ्कानिरासार्थतया सार्थक्यमिति भावः ॥

*भा०र०*— "ब्रह्मविद् ब्रह्मणि स्थितः" (५.२०) इति पूर्वश्लोके "अकर्मकृत् सर्वकर्म-संन्यासी" इति **सङ्करेण** भाषणादाह **प्रकृतस्य संन्यासिन इति** । परव्याख्यानस्यासत्त्वे बहूनां पदानां वैयर्थ्यं हेतुं वक्ष्यति । 'स्पष्टयति' इत्युक्तमुपपादयति **प्रागिति** । "संन्यासस्तु महाबाहो" (५.६) इत्यादावित्यर्थः । **आविर्भावात्** आविर्भावानुभावात् । **एतत्** स्पष्टनम् । **इत्यस्यार्थ इति** । स्पर्शशब्दितशब्दादिविषयेषु मनसः सक्तिर्हि कामः, तद्रहितः कामरहित इत्येकोऽर्थ इत्यर्थः । गीताभाष्ययोः 'आत्मनि' इत्युक्तेः प्रयोजनमाह **आत्मेति** । **इत्युक्तमिति** । तथा च सुखमात्रस्य विषयसम्बन्धवत्त्वात्, स्वरूपसुखे च विषयाभावात् सुखत्वमेव कथम् ? इति न चोद्यावकाशः । आत्मन एव विषयत्वात् । अत एव 'आत्मनि' इति विषयसप्तमीति भावः । "न निर्विशेषत्वम्" इति पाठे "आत्मनि सुखम्" इत्यात्मनो धर्मितया निर्देशेनात्माभिन्नस्यापि सुखस्य भेदप्रतिनिधिविशेषबलेनैव धर्मत्वेनोक्तिर्युक्तेति सूचनादिति भावः । सन्निधानादात्मपरत्वं तच्छब्दस्य न मन्तव्यमित्याह **स एवेति** । 'यत्'शब्दश्रवणात् 'तत्' इत्यध्याहृतं भाष्य इति भावेन तदर्थमाह **तदेवेति** ।

भाष्ये "ब्रह्मणो योगो ब्रह्मयोगः", षष्ठ्यर्थः सम्बन्धश्च विषयविषयिभावः । "ब्रह्मणि योगो ब्रह्मयोगः" इत्यङ्गीकारेऽपि, "घटे ज्ञानम्" इतिवत् तद्विषयत्वमेव लक्ष्यत इति भावेन 'ब्रह्मविषयः' इत्युक्तमिति मनसि निधाय तदवतारयति **ब्रह्मणेति** । गीतायां मध्यमपदलोपः समासः शाकपार्थि-वादिवत् विवक्षित इति भावेन 'ब्रह्मविषयः' इत्युक्तं भाष्य इत्यपि **आहुः** । 'ध्यानादि' इति भाष्ये आदिशब्देन समाधिर्गृह्यत इति **प्राचीनटीकायाम्** । 'अन्यथा' इत्यनुवादः 'संन्यासमात्रेण' इति व्याख्या । कामाद्युपद्रवक्षये स्वरूपस्याविर्भावोऽस्तीति शङ्कितम् । तत्रोत्तरमाह **तिरोभावोपेतं त्विति** । **उक्तमेवेति** । "संन्यासस्तु महाबाहो" (५.६) इत्येतद्व्याख्याऽवसरे "अन्यत् फलं त्वल्पत्वादफलमेव (गी.भा. ५.६) इत्याशय इत्युक्तमेवेत्यर्थः ।

अयं भावः । यद्यपि कामाद्युपद्रवक्षयेऽपीषत् तात्कालिकम् आत्मस्वरूपसुखमाविर्भवति । तथाऽपि संसारे कामादेः पुनरावृत्त्या आविर्भूतस्यापि तेन तिरोभावावश्यम्भावेनाल्पफलत्वमेवेति नाक्षयत्वम् । ध्यानसमाधिलक्षणेन मानसेन कर्मयोगेन तु भगवदपरोक्षज्ञानोदये संसारनिवृत्तौ

स्वरूपसुखस्याविर्भूतस्य तिरोधायकाभावाद् अक्षयत्वमिति । तथाविधात्मस्वरूपसुखलाभाय ध्यानादिकर्मयोग आवश्यक इति युक्तं तस्य संन्यासादाधिक्यमिति । **व्याख्यानान्तरे** ''प्रकृतस्य संन्यासिन एवाक्षयसुखप्राप्तिरुच्यते'' इति परव्याख्याने । ''बाह्यस्पर्शेष्वसक्तात्मा सुखमक्षयमश्नुते'' इत्येतावता पूर्तेः, ''विन्दन्त्यात्मनि यत्सुखम् । स ब्रह्मयोगयुक्तात्मा'' इति बहूनां पदानां वैयर्थ्यमित्यर्थः । अतः संन्यासात् कर्मयोगस्याधिक्यं स्पष्टयितुमेवायं श्लोक इति भाष्यकारीयं व्याख्यानमेव युक्तमिति ॥ २१ ॥

***गीताक्षरार्थस्तु***— 'संन्यासस्तु' (५.६) इत्यादिना प्रागुक्तमपि संन्यासाद्योगस्याधिक्यमत्र स्पष्टीक्रियते **बाह्यस्पर्शेष्विति** । स्पृश्यन्त इति स्पर्शाः शब्दादिविषयाः, तेषां बाह्यत्वं च श्रोत्रादीन्द्रियाविषयत्वापादनेन बहिष्कार्यत्वम् । वक्ष्यति च 'स्पर्शान्' (५.२७) इत्यत्र । **असक्तः आत्मा** अन्तःकरणं यस्य स तथा, कामरहितः संन्यासीति यावत् । आत्मनि स्वस्वरूपे स्वस्वरूपसविशेषाभिन्नधर्मतया **यत्सुखं** विन्दति लभते, **स** कामरहित एव **ब्रह्मयोगयुक्तात्मा** चेत् ब्रह्मविषयो **योगो** ध्यानसमाधिलक्षणः तद्युक्तान्तःकरणश्चेदिति ध्यानसमाधिलक्षणमानसकर्मयोगयुक्त इत्युच्यते । **अक्षयं** पुनस्तिरोभावरहितं **सुखमश्नुते** प्राप्नोति । भाष्ये 'विन्दति' इति तु 'अश्नुते' इत्यस्यार्थकथनं पुनरावृत्तस्यानुवाद इति ज्ञेयम् । प्राग्योगाभावे संन्यासवैयर्थ्यमुक्तम् । तदसत् । कामाद्युपद्रवक्षये स्वरूपसुखस्याविर्भावादित्याशङ्कानिराकरणात् स्पष्टनमिति ॥ २१ ॥

**गीता**

## ये हि संस्पर्शजा भोगा दुःखयोनय एव ते ।
## आद्यन्तवन्तः कौन्तेय न तेषु रमते बुधः ॥ २२ ॥

***वि०वि०***— संन्यासार्थं कामभोगं निन्दति **ये हीति**। संस्पर्शजाः विषयसम्बधसम्भवाः । दुःखकारणानि उत्पत्तिनाशवन्तः ॥

***वा०ल०***— 'ये हि संस्पर्शजा' इत्यत्र सम्यक् विषयस्पर्शेन जाताः संस्पर्शजाः ॥

***सा०सं०***— कामादिवर्जनरूपसंन्यासार्थं कामभोगं निन्दति **ये हीति** । **ये हि संस्पर्शजाः** विषयसम्बन्धसम्भूताः । **भोगाः** सुखानुभवाः । **ते दुःखयोनय एव** । कुत इत्यत उक्तम् **आद्यन्तवन्त इति** । उत्पत्तिविनाशवत्त्वादित्यर्थः । **बुधो** ज्ञानी । तेषु विषयभोगेषु । **न रमते** सक्तिं न करोतीत्यर्थः ॥

*अ०प्र०*— ननु प्रियविषयभोगानामपि निवृत्तेः कथं मोक्षः पुरुषार्थः स्यात्, तत्राह **ये हीति** ।

हे कौन्तेय ![१], ये[२], संस्पर्शजाः[३], भोगाः[४], दुःखयोनय एव[५], ते[६], आद्यन्तवन्तः[७], अतः[८], बुधः[९], तेषु[१०], न रमते[११] इत्यन्वयः ।

हे कौन्तेय ![१], ये[२], संस्पर्शजाः = संस्पृशन्त इति संस्पर्शाः विषयाः तेभ्यो जाताः संस्पर्शजाः । यद्वा, विषयेन्द्रियाणां सम्यक् स्पर्शेभ्यो जाताः भोगाः सुखाविर्भावाः[४], ये ते दुःखयोनय एव = वर्तमानकालेषु स्पर्धाऽऽसूयादिदोषग्रस्तत्वात् राजसत्वात् दुःखकारणान्येव । यद्वा, आध्यात्मिकादिदुःखात्मकानि जन्मानि येषु विषयभोगेषु भवन्ति[५-६], ते आद्यन्तवन्तः = आदिः – प्रभवः, अन्तः – विलयः, उभौ येषु स्त इति आद्यन्तवन्तः क्षणिकसुखाः[७], अतः = कारणात्[८], बुधः = विवेकी[९], तेषु = विषयभोगेषु[१०], न रमते[११], इति भावः ॥ २२ ॥

**भाष्यम्**

**संन्यासार्थं कामभोगं निन्दयति— ये हीति ॥ २२ ॥**

*प्र०दी०*— ननूत्तरश्लोके संन्यासादित्रितयान्तर्गतं न किञ्चिदुच्यत इत्यत आह— **संन्यासार्थमिति** । निन्दयतीति स्वार्थे णिच् । संन्यासार्थिनेति वा ॥

*प०टी०*— यद्यपि योगधर्मः संन्यासः । तथाऽप्यावश्यक एवेत्यभिप्रायेणोत्तरश्लोकमवतारयति **संन्यासार्थमिति** ॥

*न०टी०*—ध्यानं समाधिश्च मानसं कर्म । अतः कर्मयोग एव वरः संन्यासादित्युक्तं भवति । तथाऽपि महाफलसाधनज्ञानाङ्गत्वेनावश्यकर्तव्यः सन्यास इति भावेन तत्प्रतिकूलं निन्दयतीत्याह **संन्यासार्थमिति** ॥

*भा०दी०*— **त्रितयेति** । संन्यासयोग ब्रह्म.................तर्गतमित्यर्थः । प्रयोजककर्तर्येवायं णिजिति भावेन मध्ये कर्त्रन्तरमाह **संन्यासार्थिनेति** । काम्यादित्यागार्थि................ **अन्योन्याश्रय(त्वं) इति** । कामराहित्ये सति ब्रह्मलोकादिस्तत्प्राप्तौ सति तदित्येवमिति भावः । नन्वेवं नान्यत्र सोढुं सुकर................ कथमुक्तमित्यत आह **अन्यत्रेतीति** । **एतेनेति** । कामक्रोधेति भाष्येण इहैव प्राक् शरीरविमोक्षणादित्येतावद्विना वर्जमेकं वाक्यं तत्र सहनसामर्थ्यं मानुषशरीरविमोक्षणात्प्रागित्यपरमित्येव वाक्यभेदः सूचित इत्यर्थः । न सकृदिति सोढुं शक्नोति स युक्तः स सुखीत्यर्थमाह कश्चिदित्यर्थः ॥

*भा०र०*— 'संन्यासादि' इत्यत्रादिशब्देन योगज्ञाने ग्राह्ये । "णिदि = कुत्सायाम्" इत्यस्य कर्तरि 'निन्दति' इति रूपम् । तत्कथं निन्दयतीत्युक्तम् ? इत्यत आह **निन्दयतीति । स्वार्थ इति** । 'बहुलमेतन्निदर्शनम्' इत्युक्तेरिति भावः । प्रयोजकव्यापारे णिजुत्पादनेऽपि न दोष इति भावेनाह **संन्यासार्थिनेति वेति** । संन्यासार्थी कामभोगं निन्दति, तं प्रेरयति = संन्यासार्थिना क्रियमाणां निन्दां स्वयमनुवदतीत्यर्थ इति भावः ॥ २२ ॥

**गीता**

## शक्नोतीहैव यः सोढुं प्राक्शरीरविमोक्षणात् ।
## कामक्रोधोद्भवं वेगं स युक्तः स सुखी नरः ॥ २३ ॥

*वि०वि०*— संन्यासार्थमेव कामभोगपरित्यागं प्रशंसति **शक्नोतीति** । यः कामक्रोधोद्भवं वेगं मनसोऽनवस्थानं सोढुं शक्नोति स युक्तः स सुखी । इहैव शरीरविमोक्षणात् प्रागिति । यथा मनुष्यशरीरे सोढुं सुशकम्, न तथाऽन्यत्र । ब्रह्मलोकादिस्तु जितकामानामेव भवति । अतोऽत्रैव तत्सहनाय प्रयतितव्यमिति भावः ॥

*सा०सं०*— उक्तरूपसंन्यासार्थं कामभोगत्यागं प्रशंसति **शक्नोतीति** । **य इहैव** मानुषेदेहे । **शरीरविमोक्षणात् प्राक् कामक्रोधोद्भवं वेगं** मनसोऽनवस्थानम् । **सोढुं शक्नोति** । **स नरः युक्तः** ज्ञानोपायवान् । **सुखी च भवति** । मानुषदेह एव कामादिजवेगः सोढुं सुकरो नान्यदेह इति ज्ञापनाय **इहैवे**त्युक्तिः । अतोऽत्रैव तत्सहनाय प्रयतितव्यमिति भावः ॥

*अ०प्र०*— तस्मान्मोक्ष एव परः पुरुषार्थः तस्य च कामक्रोधवेगो अस्ति प्रतिपक्षः अतः तत्सहनसमर्थ एव मोक्षभागीत्याह **शक्नोतीति** ।

अन्वयः— यः[१], कामक्रोधोद्भवं[२], वेगं[३], इहैव[४], शरीरविमोक्षणात्[५], प्राक्[६], सोढुं[७], शक्नोति[८], स[९], नरः[१०], युक्तः[११], सैव सुखी भवतीत्यन्वयः ।

यः = पुरुषः[१], कामक्रोधोद्भवं वेगं = कामक्रोधाभ्यां उद्भवो विषयाभिनिवेशो यः तस्यैव विषयेषु प्रधावनं मनोनेत्रक्षोभादिलक्षणः वेगः तथा[३], तं इहैव तदुद्भव समय एव । यद्वा, अस्मिन् देहे एव[४], शरीरविमोक्षणात् प्राक् = पूर्वसाधनदशायां ज्ञानप्राप्तेरादौ । यद्वा, देहपातात्पूर्वं यावद्देहपातमित्यर्थः[६], सोढुं = प्रतिरोद्धुम् । यद्वा, क्षमितुं जेतुमित्यर्थः[७], शक्नोति = शक्तो भवितुमर्हति[८], सः नरः[१०], युक्तः = एवं देहे देहभावाः सर्वे येन वशीकृताः सः युक्तः स्वात्मनि समाहितः

ज्ञानीत्यर्थः[11], सैव सुखी भवतीत्यर्थः । यद्वा, मरणादूर्ध्वं विलपन्तीभिर्युवतिभिः अलिङ्ग्यमानोऽपि पुत्रादिभिः दह्यमानोऽपि यथा प्राणशून्यः कामक्रोधवेगं सहते यथा तथा मरणात्प्रागपि जीवन्नेव यः सहेत स एव युक्तः सुखी चेत्यर्थः । तदुक्तं वासिष्ठेन—

प्राणे गते यथा देहसुखं दुःखं न विन्दति ।
तथा चेत्प्राणयुक्तोऽपि स कैवल्याश्रमे वसेत् ॥ २३ ॥

**भाष्यम्**

**तत्परित्यागं प्रशंसति— शक्नोतीति । कामक्रोधोद्भवं वेगं सोढुं शक्नोति, शरीरविमोक्षणात् प्राक् । यथा मनुष्यशरीरे सोढुं सुशकं तथा नान्यत्रेति भावः । ब्रह्मलोकादिस्तु जितकामानामेव भवति ॥ २३ ॥**

***प०टी०***— 'प्राक् शरीरविमोक्षणात्' इत्यस्य कृत्यं दर्शयितुं श्लोकान्वयं दर्शयति **कामेति** । तत्कृत्यमाह **यथेति** । ब्रह्मादिलोके कामादिक्षयः सुतरां भवति । अतः कथं मानुष्यशरीर एवेत्युच्यते ? इत्यत आह **ब्रह्मेति** ॥

***न०टी०***—तदर्थमेव कामपरित्यागं प्रशंसतीत्याह **तदिति** । 'प्राक् शरीरविमोक्षणात्' इत्यस्योपयोगं वक्तुं श्लोकान्वयं तावदाह **कामेति** । तस्योपयोगमाह **यथेति** । एतेनेहैव लोक एतच्छरीरात् विमोक्षणात् प्रागित्युक्तं भवति । नन्वितोऽपि ब्रह्मलोकादिगतदिव्यशरीरे सोढुमतिसुशकत्वात् कथम् 'इहैव' इत्यादिविशेषः ? इत्यत आह **ब्रह्मेति** ॥

***प्र०दी०***— उत्तरश्लोकमप्यन्तर्भावयितुमाह— **तदिति** । कामभोगपरित्यागं संन्यासार्थमिति वर्तते । इहैव शरीरमोक्षणात्प्रागिति प्रशंसायामनुपयुक्तमिति भावेन तद्विहायान्यद्योजयति— **कामेति** । वेगं मनसोऽनवस्थानम् । एवं तर्हि इहैव शरीरविमोक्षणात्प्रागिति किमर्थमुक्तमित्यतस्तदनूद्य तात्पर्यमाह— **शरीरेति** । इहैवेत्यनुवादेन ग्राह्यमस्मिन्नेव लोक इति । अत एवोक्तं मनुष्यशरीर इति । अतोऽत्रैव तत्सहनाय प्रयतितव्यमित्यभिप्रायशेषः । ननु ब्रह्मलोकादौ तत्सहनमत्यन्तसुशकम् । तत्कथमेवमुच्यत इत्यत आह— **ब्रह्मेति** । तथा चान्योन्याश्रय इति भावः । अन्यत्रेति पश्वादिशरीरं व्युदस्तमिति हृदयम् । एतेनात्र वाक्यभेदः कार्य इति सूचितम् । शरीरविमोक्षणपर्यन्तं न सकृदिति कश्चित् । तदसत् । तथा सत्यशरीरविमोक्षणादिति स्यात् । इहैवेति च व्यर्थम् ॥

*भा०र०*— **अन्तर्भावयितुमिति**। तथा च तेनापि श्लोकेन संन्यास एव महाफलसाधन-ज्ञानाङ्गत्वेनावश्यं कर्तव्य इति स्पष्टीकृतो भवतीति विभावितमिति भावः। **वर्तते** 'संन्यासार्थम्' इति पदं पूर्वभाष्यादनुवर्तते। 'प्रशंसयति' इति पाठे "स्वार्थे णिच्" इत्यादिरूपेण पूर्ववद् व्याख्येयम्। **इति** पदजातम्। "कामक्रोधवेगं यः सोढुं शक्नोति स युक्तः स सुखी" इत्यनेनैव कामपरित्यागप्रशंसासम्भवात् अन्यत् पदजातं तत्रानुपयुक्तमित्यर्थः। **तत्** उक्तं पदजातम्। वेगाख्यसंस्कारस्य तान्त्रिकैः कामक्रोधजन्यत्वानङ्गीकारादाह **वेगमिति**। "वेगः प्रवाहजवयोरपि" (अ.को.) इत्यभिधानादत्र वेगशब्देन जवो ग्राह्यः। योग्यतया मनसोऽन्वयः। ताभ्यां हि मनसो जवशब्दितम् अनवस्थानम् उद्भवतीति भावः। "वेगः उद्वेगः" इत्यभिप्रेत्य तदर्थमाह "वेगं मनसो-ऽनवस्थानम्" इति इत्यपि **आहुः**। **इति** 'अर्थः' इति योज्यम्।

नन्वनुवादभाष्ये कुतस्तस्य ग्रहणम्? "अस्मिन् लोके" इति, 'तदर्थः' इति च कुतो वाच्यम्? इत्यत उपष्टम्भकमाह **अत एवेति**। 'इहैव' इत्यनुवादे ग्राह्यत्वात् तस्य चोक्तार्थत्वादेव भाष्ये 'मनुष्यशरीरे' इति तत्तात्पर्यमुक्तम्। अन्यथा तत् कथमस्य तात्पर्यरूपं स्यात्। "शरीर-विमोक्षणात् प्राक्" इत्येवानुवादे शरीरशब्देन मनुष्यशरीरालाभात् 'इहैव' इत्यनुवादे तस्य "अस्मि-न्नेव लोके" इत्युक्तार्थत्वे च मनुष्यशरीरं लभ्यते। तस्यैतल्लोकमात्रवृत्तित्वात्। पश्चादिशरीरस्यैत-ल्लोकस्थत्वेऽपि तस्य कामक्रोधसमुद्भववेगसहनायोग्यतयैव निरास इति 'मनुष्यशरीरे' इति तात्पर्य-कथनम् उक्तमर्थं ज्ञापयतीति भावः। **अत्रैव** मनुष्यशरीर एव। **तत्सहनाय** कामादिवेगसहनाय। एवशब्दव्यावर्त्यमुक्तं भाष्ये **नान्यत्रेति**॥

तत्र शङ्कते **नन्विति**। **एवमुच्यते** 'नान्यत्र' इत्येवमुच्यते। अनेन कृतचोद्यस्य किमुत्तरमुक्तं भवति? इत्यत आह **तथा चेति**। जितकामानामेव ब्रह्मलोकप्राप्तिः, प्राप्तब्रह्मादिलोकानां जित-कामत्वम् इत्यन्योन्याश्रयत्वमित्यर्थः। ननु तर्हि कामादिसहनस्य ब्रह्मलोकादावसत्त्वात् कथं 'नान्यत्र' इत्यप्रसक्तप्रतिषेधः? इत्यत आह **अन्यत्रेतीति**। पश्चादिशरीरस्य कर्मभूमिस्थत्वेन तत्र कामादिसहनप्रसक्तौ तद्व्युदासार्थमेव भाष्ये 'नान्यत्र' इत्युक्तमित्यर्थः। **केचित्तु** यदि साधनरूपं कामादिसहनं न ब्रह्मलोकादौ तर्हि साध्यरूपस्य तस्य ब्रह्मलोकादौ प्रसक्त्यभावात् तद्व्यावृत्त्यर्थं 'नान्यत्र' इति न वक्तव्यम्? इत्यत आह **अन्यत्रेतीति** इत्यवतारयन्। **एतेन** 'कामक्रोध' इति, 'शरीरविमोक्षणात्' इति च भाष्येण "यः कामक्रोधोद्भवं वेगं सोढुं शक्नोति, स युक्तः स सुखी नरः" इत्येकं वाक्यम्। "तच्च सहनम् इहैव प्राक् शरीरमोक्षणात्" इत्यपरं वाक्यम् इत्येवम् **अत्र** गीतायां वाक्यभेदः कार्य इति सूचितमित्यर्थः। "यावन्मरणं तावन्न विस्रम्भणीयम्" (शां.भा.

५.२३) इति **सङ्करेण** भाषणादाह **शरीरविमोक्षणपर्यन्तमिति** । ननु "प्राग्दीव्यतोऽण्" इत्यादाविव आङोऽभावेऽपि तदर्थबोधः किं न स्यात् ? इत्यतो दोषान्तरमाह **इहैवेतीति** ॥ २३ ॥

***गीताश्लोकद्वयाक्षरार्थस्तु***— संन्यासार्थं कामभोगो निन्द्यते **ये हीति** । **ये संस्पर्शजाः** विषयसम्बन्धसम्भवाः **भोगाः** सन्ति ते **दुःखयोनयः** दुःखहेतवः दुःखोदर्का एव । कुतः ? **हि** यतः **आद्यन्तवन्तः** उत्पत्तिविनाशवन्तः बुद्बुदा इव अतिफल्गव इति यावत् । **अतो बुधः** ज्ञानी **तेषु** कामभोगेषु **न रमते** सक्तिं न करोति ॥ २२ ॥

संन्यासस्यात्यावश्यकत्वावेदनाय कामभोगपरित्यागः प्रशस्यते **शक्नोतीति** । **यः कामक्रोधोद्भवं** कामक्रोधौ **उद्भवौ** उत्पादकौ यस्य मनसोऽनवस्थानलक्षणस्य वेगस्य स तथा तं **सोढुं** प्रसहितुं शक्नोति **स नरः युक्तो** योगयुक्तः, स एव च सुखी भवति । तच्च सहनम् **इहैव** अस्मिन्नेव लोके शरीरविमोक्षणात् **प्राक्** । यथा मनुष्यशरीर एव सुकरं नान्यत्र पश्वादिशरीरे । अतो अत्रैव तत्सहनाय प्रयतितव्यमित्यभिसन्धिना "इहैव शरीरविमोक्षणात् प्राक्" इत्युक्तमिति ॥ २३ ॥

**गीतातात्पर्यनिर्णयः**

**इदानीमपि परमात्मनि स्मृतमात्रे सुखं विन्दतीति यत् तदा स एव सम्यग्युक्तः किमु ? ॥ २१-२३ ॥**

*प्रका०*— बाह्यस्पर्शेष्वित्येतद्व्याचष्टे **इदानीमिति** ॥

*न्या०दी०*— यदुक्तं योगरूपसंन्यासस्य निःश्रेयसकरत्वं तदुपपाद्यते **बाह्य इति** । तद्दुर्गमार्थत्वाद्व्याचष्टे **इदानीमिति** ॥ संसारेऽपि परमात्मस्मरणाद्यल्पयोगयुक्तः संन्यासी सुखं विन्दति यदा तदा ध्यानादिमहायोगयुक्तो मोक्षादिनिःश्रेयसं विन्दतीति किमु वाच्यमित्यर्थः ॥ २१-२३ ॥

**गीता**

**योऽन्तःसुखोऽन्तरारामस्तथाऽन्तर्ज्योतिरेव यः ।**
**स योगी ब्रह्मनिर्वाणं ब्रह्मभूतोऽधिगच्छति ॥ २४ ॥**

***वि०वि०***— ज्ञानिलक्षणं प्रपञ्चयति **योन्तःसुख इत्यादिभिः** । आरामः परमात्मदर्शनादिनिमित्तं सुखम् । सुखं कामाद्युपद्रवक्षये व्यक्तम् । उक्तं च—

'दर्शनस्पर्शसम्भाषाद्यत्सुखं जायते नृणाम् ।
आरामः स तु विज्ञेयः सुखं कामक्षयोदितम् ॥'

इति । अन्तःसुखः कामक्षयाभिव्यक्तात्मसुखः । अन्तरारामः परमात्मदर्शनादिहेतुकसुखवान् । अन्तर्ज्योतिः अन्तरभिव्यक्तपरमात्मरूपः । असम्प्रज्ञातसमाधीनां बाह्यदर्शनव्यावृत्त्यर्थः, तदन्यज्ञानिनां बाह्यदर्शनेऽपि चित्तविक्षेपाभावाद्ब्रह्मदर्शनापेक्षया बाह्यदर्शनप्राचुर्यव्यावृत्त्यर्थ एवशब्दः । स च सामर्थ्याज्ज्योतिषैव सम्बद्ध्यते । केषाञ्चिद्बहिरपि ब्रह्मदर्शनात् । पुनर्य इति सर्वत्रानुगमार्थः । अन्तःसुखत्वादेः कारणं ब्रह्मणि भूत इति । सोऽप्राकृतविग्रहं भगवन्तं प्राप्नोतीत्यर्थः ॥

*अ०प्र०*— न केवलं कामक्रोधं वेगं संहरणमात्रेण मोक्षं प्राप्नोति, अपि तु **योऽन्त** इति ।

अथान्वयः— यः[१], अन्तःसुखः[२], अन्तरारामश्च[३], तथा अन्तर्ज्योतिरेव[४], एतादृशो यः[१], सः योगी[६], ब्रह्मभूतः[७], ब्रह्मनिर्वाणं[८], अधिगच्छति[९] इत्यन्वयः ।

यः अन्तःसुखः = आत्मन्येव सुखं यस्य स तथा न विषयेषु । यद्वा, अन्तःकामाद्युपद्रवक्षयात् अभिव्यक्तिस्वरूपसुखवान्[२], अन्तरारामः = अन्तरेव आरामः क्रीडा यस्य न बहिः । यद्वा, अन्तः परमात्मदर्शनादि-जन्यसुखवान्[३], तदुक्तम्—

'दर्शनस्पर्शसम्भाषाद्यत्सुखं जायते नृणाम् ।
अरामस्स तु विज्ञेयः सुखं कामक्षयोदितम् ॥' इति ॥

तथा अन्तर्ज्योतिरेव अन्तरेव ज्योतिः दृष्टिः यस्य न गीतनृत्यादिषु । यद्वा, अन्तः अभिव्यक्तिपरमात्मरूपवान्[४], एवकारस्तु बाह्यदर्शनव्यावृत्त्यर्थः एतादृशः यः[१], सः योगी[६], ब्रह्मभूतः = अब्रह्मीभूतस्य कथं ब्रह्मीभाव इत्यतो लक्षणेत्याह ब्रह्माधिगच्छति जानातीति तज्ज्ञानित्वरूप तन्निष्ठमनस्त्वमेव ब्रह्मणि भूतत्वं नान्यदिति भावः[७-९], स एव ज्ञानी प्राकृतदेहशून्यं ब्रह्माप्नोति । तदुक्तम्—

'स्वज्योतिषान्महाविष्णोरन्तर्ज्योतिस्तु तत्स्थितः' इति ।

सः विष्णुस्थितो यस्मिन् स ज्ञानी तत्स्थित उच्यत इति प्रमाणार्थः ॥ २४ ॥

*वा०ल०*— 'योन्तः सुखः' इत्यत्र अन्तः सुखः, अन्तः सुखं हरिध्यानेन सुखं यस्य । अन्तरारामः अन्तः हरावेव आ सम्यक् रमत इति अन्तरारामः । अन्तर्ज्योतिः अन्तः ज्योतिः हरेरपरोक्षज्ञानं यस्य स तथोक्तः । निर्वाणं मोक्षप्रदम् । ब्रह्मभूतः ब्रह्मण्येव भूतः ब्रह्मनिष्ठ इत्यर्थः ॥

*सा०सं०*— ज्ञानिलक्षणं प्रपञ्चयत्युत्तरैः श्लोकैः । **योऽन्तःसुखः** कामाद्युपद्रवक्षयाभिव्यक्तस्वरूपसुखः । **अन्तरारामः** भगवद्दर्शनजन्यसुखवान् । उक्तज्ञानिलक्षणद्वये हेतुमाह **अन्तर्ज्योतिः** अन्तरभिव्यक्तभगवत्स्वरूपः यत इति । एतेन - अन्तर्ज्योतिष्ट्वमेव ज्ञानित्वम्, एतत् कथं

ज्ञानिलक्षणमिति निरस्तम् । तत्र हेतुसमर्पकत्वाद**स्येति** । असम्प्रज्ञातसमाधिस्थस्य बाह्यादर्शनादेवशब्दः । सम्प्रज्ञातसमाधौ अन्यदर्शनसत्वेऽपि तस्य विक्षेपाहेतुत्वाददर्शनकल्पमेव तदिति भावः । एवं चास्यान्यव्यवच्छेदप्रधानत्वादन्यदर्शनहीनान्तर्ज्योतिष्ट्वमित्येवं लक्षणोक्तिपरत्वेऽपि न दोषः । अन्तःसुखत्वादौ हेतुस्तु **स योगी ब्रह्मभूतो** ब्रह्मणि स्थितो **निर्वाणम्** अशरीरम् । **ब्रह्माधि गच्छति** । यतोऽतोऽन्तःसुखादिरित्येवमुत्तरार्धोक्तो ज्ञेयः ।

*सा०सं०*— नन्वेवं ब्रह्मभूतो ब्रह्माधिगच्छतीत्युक्त्याऽर्थाद्ब्रह्मभूतत्वस्य ब्रह्माधिगतिरूपब्रह्मज्ञानहेतुत्वमुक्तम् । तच्च 'तद्बुद्धयः' इत्यादिनोक्तमेव ब्रह्मभूतत्वस्य तद्बुद्धित्वादिरूपत्वात् सत्यमयमप्यनुवाद एव । **योऽन्तःसुखो योऽन्तरारामो योऽन्तर्ज्योतिरेव** यश्च तद्बुद्धित्वादिरूप**ब्रह्मभूतः निर्वाणं ब्रह्माधिगच्छति स योगी** ज्ञानीत्येव ब्रह्मभूतपदं प्रागुक्ततद्बुद्धित्वादिरूपज्ञानसाधनानुवादः । यस्य ज्ञानस्य तद्बुद्धित्वादिरूपं ब्रह्मभूतत्वं साधनं तादृशज्ञानवन्तः । सुखत्वादिलक्षणक इति तात्पर्यार्थः । अत्र **य** इति पुनरुक्तिः सर्वत्रान्वयार्था ॥ २४ ॥

**भाष्यम्**

**ज्ञानिलक्षणं प्रपञ्चयत्युत्तरश्लोकैः । आरामः परदर्शनादिनिमित्तं सुखम् । अत्र तु परमात्मदर्शनादिनिमित्तं तत् । सुखं तूपद्रवक्षये व्यक्तम् । अत्र तु कामादिक्षये व्यक्तमात्मनः सुखम् । स्वयंज्योतिष्ट्वाद्भगवतः तद्व्यक्तेरन्तर्ज्योतिः । सर्वेषां अन्तर्ज्योतिष्ट्वेऽपि व्यक्तेर्विशेषः । असम्प्रज्ञातसमाधीनां बाह्यदर्शनात् । दर्शनेऽप्यकिञ्चित्करत्वादेवशब्दः । उक्तं चैतत्—**

**"दर्शनस्पर्शसम्भाषाद्यत्सुखं जायते नृणाम् ।**
**आरामः स तु विज्ञेयः सुखं कामक्षयोदितम् ॥"**

**—इति नारदीये ॥**

**"स्वज्योतिष्ट्वान्महाविष्णोरन्तर्ज्योतिस्तु तत्स्थितः ॥"**

**इति च । अन्तःसुखादेः कारणं आह— ब्रह्मभूत इति ॥ २४ ॥**

*प०टी०*— ननु यदर्थं संन्यासयोगावावश्यकौ तत्त्वज्ञानं किं लक्षणम् ? इत्याशङ्क्य, उत्तरश्लोकमवतारयति **ज्ञानीति** । तत्र 'आराम-सुख'शब्दौ सामान्यविशेषाभ्यां व्याचष्टे **आराम इति** । 'अन्तर्ज्योतिः' इत्येतद्व्याचष्टे **स्वयंज्योतिष्ट्वादिति** । तस्यान्तःस्थितिरिति वक्तव्ये तद्व्यक्तेरित्युक्तं

सर्वजीवविशेषज्ञानार्थम् । तदेव स्पष्टयति **सर्वेषामिति** । ननु ज्ञानिनोऽन्यदपि दृश्यते । अतः कथं सोऽन्तर्ज्योतिरिवेत्यवधारणयोग्यः इत्यत आह **असम्प्रज्ञातेति** । उक्तार्थे प्रमाणमाह **उक्तं चेति** । तत्स्थित इति स स्थितो यस्मिन्नित्यर्थः । 'ब्रह्मभूत'पदमन्यथाप्रतीतिनिवृत्त्यर्थमवतार्य यथावद्व्याचष्टे **अन्तरिति** । ब्रह्मभूतत्वं नाम तस्मिन् स्थितत्वम् । तदन्तःसुखत्वादेः कारणम् इत्युक्ते ज्ञानकारण-मित्येवोक्तं भवति ॥

***न०टी०***— यावत्पर्यन्तं मुमुक्षुणाऽवश्यकर्तव्यौ संन्यासयोगौ, अन्यथा न मुक्तिः, यत ऊर्ध्वं सिद्धेऽपि मोक्षे आनन्दवृद्ध्या एव क्रियते, तद्वतः किं लक्षणम् ? इत्याकाङ्क्षोत्तरत्वेनोत्तरं श्लोक-मवतार्य व्याचष्टे **ज्ञानीति** । 'आराम'शब्दार्थं साधारणं प्रस्तुतं चाह **आराम इति** । 'सुख'शब्दार्थ-मपि तथैवाह **सुखं त्विति** । अनन्यापेक्षद्युतिस्वरूपत्वात् स्वयंज्योतिर्भगवान् । ततोऽसौ स्वयमेवा-न्तर्व्यक्तो यस्य सोऽन्तर्ज्योतिः । नत्वनन्यापेक्षद्युतिस्वरूपान्तरपदार्थज्ञानमात्रज्ञानीति भावेनान्त-र्ज्योतिपदं व्याचष्टे **स्वयमिति** । तद्व्यक्तेः इत्येतत् स्वयं विवृणोति **सर्वेषामिति** । ज्योतिःशब्दा-र्थस्य भगवतः सर्वान्तर्गतत्वेऽपि यस्यासावन्तर्गतव्यक्तः स एवान्तर्ज्योतिरित्यर्थः । ननु मा भूद्भग-वतः स्वयंज्योतिष्ट्वेन तज्ज्ञानायान्यज्ञानं घटज्ञानायेव आलोकज्ञानमन्यथाप्यानुषङ्गिकत्वेनान्यस्यापि ज्ञानं स्यादेव । अतः कथम् 'अन्तर्ज्योतिः' इत्यवधारणम् ? इत्यत आह **असम्प्रज्ञातेति** । **अकिञ्चित्करात्** चित्तविक्षेपाद्यकरत्वादित्यर्थः । सुखारामान्तर्ज्योतिःशब्दानां स्वोक्तार्थे प्रमाणं चाह **उक्तं चेति** । न च 'ब्रह्मभूत'पदं ब्रह्मत्वमाचष्टे, तथा सति ब्रह्म गच्छतीति विरोधात् । अत-स्तदन्तःसुखत्वादेः कारणध्यानादिकत्वेन ब्रह्मण्यवस्थानमाचष्ट इति भावेन ब्रह्मभूतपदं सविग्रह-मवतारयति **अन्तःसुखत्वादेरिति** ॥

***प्र०दी०***— ननु योगिनो ब्रह्माधिगतिः प्रागुक्ता । तत्किं पुनरुच्यत इत्यत आह— **ज्ञानीति** । द्वितीये कथितत्वात्प्रपञ्चयतीत्युक्तम् । यथा योगस्याधिक्यकथनं योगनिरूपणमेव । संन्यासार्थे निन्दास्तुती च संन्यासनिरूपणमेव । तथा ज्ञानिलक्षणकथनं च ज्ञानिनिरूपणमिति । आरामशब्दार्थं तावदाह— **आराम इति** । इदानीमन्तरारामशब्दलब्धमर्थमाह— **अत्र त्विति** । तत्सुखम् । एवं तर्हि 'अन्तःसुख' इत्यनेनैव गतार्थमेतदित्याशङ्क्य सुखशब्दस्य तावदर्थभेदमाह— **सुखं त्विति** । व्यक्तमात्मसुखमिति सम्बन्धः । तर्ह्यन्तःसुख इति कथमित्यतस्तल्लब्धार्थमाह— **अत्र त्विति** । अनेनारामसुखशब्दार्थान्तर्गतयोः परोपद्रवक्षययोरन्तरित्येतत् सामर्थ्याद्विशेषणमित्युक्तं भवति । ज्योतिःशब्दार्थं तावदाह— **स्वयमिति** । ज्योतिष्ट्वमिति शेषः । यद्यपि ज्योतिःशब्दः प्रकाशमात्रे प्रवर्तते । तथाऽपि भगवत एव परानपेक्ष्य प्रकाशत्वान्मुख्ये च सम्प्रत्ययात् स एव

ज्योतिरित्यर्थः । इदानीमन्तर्ज्योतिश्शब्दार्थमाह— **तद्व्यक्तेरिति** । तस्य भगवतोऽन्तर्हृदये व्यक्तेरित्यर्थः । नन्वन्तर्ज्योतिर्यस्यासावन्तर्ज्योतिः । व्यक्तेरिति तु कथं लभ्यत इत्यत आह— **सर्वेषामिति** । शब्दतः प्राप्तमन्तर्ज्योतिष्ट्वं सर्वसाधारणम् । अत्र तु ज्ञानिविशेषणत्वेनोच्यते तत्सामर्थ्यादिदं लब्धमिति भावः । यद्वा तद्व्यक्तेरित्यध्याहारेण तात्पर्यमुक्तम् । अध्याहारस्येदानीं प्रयोजनमुच्यते । नन्वेवशब्दो यदि धर्मान्तरनिवृत्त्यर्थः तदान्तःसुखमित्यादि व्याहतम् । अथ वस्त्वन्तरदर्शननिवृत्त्यर्थः तदाऽसम्भवित्वमित्यत आह— **असम्प्रज्ञातेति** । बाह्यं भगवतोऽन्यत् । दर्शनेऽप्यन्यदेति शेषः । अकिञ्चित्कराद्विक्षेपकरणाभावादित्यर्थः । एवशब्दः सम्भवदर्थ इति शेषः । एतेन लक्ष्यमेवेदं कथं लक्षणत्वेनोच्यत इति परिहृतम् । व्यवच्छेदप्रधानत्वात् । एवशब्दस्य सामर्थ्याज्ज्योतिषा सम्बन्ध इति । आरामसुखशब्दयोरुक्तार्थत्वं कुत इत्यत आह— **उक्तं चेति** । न केवलं पुनरुक्तिबलादिति चार्थः । द्वन्द्वैकत्वादेकवचनम् । कामेत्युपद्रवोपलक्षणम् । उदितं व्यक्तम् । अन्तर्ज्योतिरित्यस्योक्तार्थत्वे प्रमाणमाह— **स्वेति** । स स्थितो यस्मिन्निति तत्स्थितः । अन्तरेव ज्योतिर्दर्शनं यस्येत्येवं व्याख्यानेऽपि यद्यप्युक्तार्थो लभ्यते । तथाप्यार्थिकाच्छाब्दं वरमित्येवं व्याख्यातम् । ब्रह्मैव भूत इत्यन्यथाप्रतीतिनिरासाय ब्रह्मभूतशब्दस्य विग्रहं दर्शयन् प्रकृतसङ्गतिमाह— **अन्तरिति** । ब्रह्मणि भूत इत्येवं विग्रहो न तु ब्रह्मैव भूत इति । प्रमाणविरोधात् । ननु ब्रह्मणि भूतत्वं साधकधर्मः । तत्कथं ज्ञानिलक्षणत्वेनोच्यते । मैवम् । यतोऽन्तःसुखत्वादेः कारणत्वेनोच्यते । नन्वेवं सत्यर्थादिदं ज्ञानसाधनत्वेनोच्यते । तच्च 'तद्बुद्धय' इत्यनेनैवोक्तम् । सत्यम् । तद्बुद्धित्वादिकं ब्रह्मणि भूतत्वं यस्य कारणं तद्वानेवंलक्षणक इत्येवं सङ्गतिसूचनार्थोऽयमनुवाद इति भावः । एवं चाधिगच्छतीत्यस्य जानातीत्यर्थो ज्ञातव्यः ॥

***भा०दी०*— प्रागुक्तेति** । 'योगं युक्तो मुनिर्ब्रह्म न चिरेणाधिगच्छती'त्यत्रोक्तेत्यर्थः । **कथितत्वादिति** । 'प्रजहाति यदा कामानि'त्यादिनेति योज्यम् । ननु संन्यासयोगज्ञानानि प्रपञ्चयत्यध्यायशेषेणेत्युक्तम् । तथा च ज्ञानिलक्षणोक्तिः कथं सङ्गतेत्यत आह **यथेति** । बाह्यस्पर्शेष्वित्यनेन योगाधिक्यकथनं वेत्यादिश्लोकद्वयेन क्रमात्कामभोगनिन्दातत्त्यागस्तुतीत्यर्थः । **तदित्यनुवादः सुखमिति** व्याख्या । **आरामसुखशब्दार्थान्तर्गतयोरिति** । परदर्शनादिनिमित्तं सुखमाराम इति । उपद्रवक्षयव्यक्तं तु सुखमित्यारामसुखशब्दार्थान्तर्गतयोः परेति उपद्रवेति विशेषणयोरन्तरित्यर्थः । अत्र परत्वस्य आरामशब्दार्थान्तर्गतत्वोक्तिरभ्युपेत्य वादेन दर्शनजसुखस्यैवारामशब्दार्थत्वस्य चेतनाभिधाने व्यक्तत्वात् । द्वितीये यस्त्वात्मरतिरेवेत्यत्र परेति स्वरूपकथनमिति भाष्यार्थोक्तिश्चेति ज्ञेयम् । **इदानीमिति** । तात्पर्योक्त्यनन्तरं सर्वेषामित्यादिना प्रयोजनमुच्यत इत्यर्थः । **एवशब्द**

**इति** । भाष्यपदमनूद्याकाङ्क्षितं पूरयति **एवशब्दः सम्भवदर्थ इति** । **शेष इति** । युक्तार्थक इत्यर्थः । **एतेनेति** । एवकारार्थकथनेनेत्यर्थः । ज्योतिज्ञानस्वरूपमेवेदमन्तर्ज्योतिरित्येतदित्यर्थः । व्यवच्छेदप्राधान्यं व्यनक्ति **एवशब्दस्येति** । अन्तर्ज्योतिरेव यस्य न तदन्यदर्शनं संज्ञानीत्युक्त्या भगवदन्यादर्शनवत्वं अन्यदर्शनेऽप्यविक्षेपवत्वलक्षणं लभ्यत इति भावः । **द्वन्द्वैक(वद्भा)त्वादिति** । 'सर्वो द्वन्द्वो विभाषैकवद्भवती'त्युक्तेः । अत एव नपुंसकतापीति भावः । तस्थित इत्यस्य भगवदधिष्ठानभूत इत्यर्थलाभायाह स स्थितो यस्मिन्निति । **उक्तोऽर्थ इति** । भगवदेकदर्शनत्वरूपोऽर्थ इत्यर्थः । **एवं व्याख्यातमिति** । तत्स्थित इत्येव व्याख्यातमित्यर्थः । **ब्रह्मणि भूतत्वं साधकधर्म इति** । तदेकनिष्ठभूतब्रह्मभूतत्वं साधनानुष्ठानधर्म इत्यर्थः । **अर्थादिति** । ब्रह्मभूतो ब्रह्माधिगच्छती-त्यनुवादबलादित्यर्थः । **इदमिति** । ब्रह्मणि भूतत्वमित्यर्थः । अयमनुवादो ब्रह्मभूत इत्याद्यनुवाद इत्यर्थः ॥

*भा०र०*— **प्रागुक्तेति** । ''योगयुक्तो मुनिर्ब्रह्म न चिरेणाधिगच्छति'' (५.६) इत्यत्रोक्तेत्यर्थः । सामान्यत उक्तस्य विस्तृत्य वर्णनं हि प्रपञ्चनम् । न च ज्ञानिलक्षणमत्राध्याये प्रागुक्तम् । अतः कथं 'प्रपञ्चयति' इत्युक्तम् ? इत्यत आह **द्वितीय इति** । ''प्रजहाति यदा कामान्'' (२.५५) इत्यादिना इति शेषः । ननु ''संन्यास-योग-ज्ञानानि मेलयित्वा प्रपञ्चयति'' (गी.भा. ५.२०) इत्यध्यायशेषप्रतिपाद्योऽर्थो भाषितः । ज्ञानिलक्षणं च न तृतीयान्तर्गतम् इति तत्कथनं कथं न विप्रतिषिद्धम् ? इत्यत आह **यथेति** । 'बाह्यस्पर्शेषु' (५.२१) इति योगस्याधिक्यकथनम्, ''ये हि संस्पर्शजाः'' (५.२२) ''शक्नोतीहैव'' (५.२३) इति श्लोकद्वयेन कामभोगनिन्दा-तत्परित्यागस्तुती च तादर्थ्यात् तत्प्रपञ्चनमेव यथेत्यर्थः । ''अतो नास्य प्रकृतासङ्गतिः शङ्क्येति भावः'' इति शेषः । 'परदर्शनादि' इति भाष्ये आदिशब्देन स्पर्शसम्भाषणे ग्राह्ये । **परदर्शनादिनिमित्तं** परदर्शनादिनिमित्तकम् । 'तत्' इत्यनुवादः । 'सुखम्' इति व्याख्या । **एवं तर्हि** आरामशब्देन सुखग्रहणे । **इति सम्बन्ध इति** । तथा च व्यक्तमात्मसुखमेव 'अन्तःसुख' इत्यत्र सुखशब्देन विविक्षितमिति न गतार्थमिति भावः । **इति कथमिति** । आत्मसुखस्यान्तरत्वाव्यभिचाराद् व्यर्थम् 'अन्तः' इति सुखविशेषणमिति भावः ।

**आरामसुखशब्दार्थान्तर्गतयोरिति** । ''परदर्शनादिनिमित्तकं सुखम्'' इत्यारामशब्दार्थान्तर्गतस्य परस्य, ''उपद्रवक्षये व्यक्तमात्मसुखं सुखशब्दार्थः'' इति सुखशब्दार्थान्तर्गतस्योपद्रव्यस्य च ''अन्तः यः परः'', ''अन्तः यः उपद्रवः'' इत्येवम् 'अन्तः' इत्येतद्विशेषणम् । ''नामार्थस्य नामार्थेनैवान्वयः, न तु तदेकदेशेन'' इति नियमात् कथमेतत् ? इत्यत उक्तम् **सामर्थ्यात्**

योग्यताबलाद् इति । 'चैत्रनप्ता' इत्यादौ चैत्रस्य पुत्रेणान्वयस्य सर्वसम्मततयोक्तनियम एवासिद्ध इति भावः । न च "रमणं परदर्शनादिनिमित्तं सुखम्" (प्र.दी. ३.१७) इति तृतीयभाष्यव्याख्याऽवसरटीकायाम् 'पर' इति स्वरूपकथनम्, न शब्दार्थान्तर्भूतम् इत्युक्तम् । अत्र तु 'पर' इत्यारामशब्दार्थान्तर्गतम् इत्युच्यत इति कथं विप्रतिषिद्धमुच्यत इति वाच्यम् । दर्शनजन्यसुखमेवाराम इति आरामशब्दार्थान्तर्गतदर्शनविषयप्रदर्शनपरतया परिचायकरूपत्वाभिधानरूपं स्वरूपकथनं यत् 'पर' इति, तस्य 'अन्तः' इत्येतत् सामर्थ्याद्विशेषणम् इत्यभिप्रायात् । तृतीयटीकायाश्च सुखे 'दर्शनादि' इव 'पर' इत्येतदपि नाऽहत्य प्रविष्टमिति तात्पर्यादिति ।

'अन्तर्ज्योतिः' इति समासार्थस्य वक्ष्यमाणत्वात् 'तावत्' इत्युक्तम् । नात्र ज्योतिःशब्दार्थो भाषितः ? इत्यतः शेषमाह **ज्योतिष्ट्वमितीति** । भाष्ये स्वयंशब्दस्य प्रयोजनं वक्तुं शङ्कते **यद्यपि इति** । **प्रकाशमात्र इति** । अत एव "ज्योतिः भ-द्योत-दृष्टिषु" इत्यमरव्याख्याने हरिदीक्षितः । द्योतः प्रकाशः । तथा च जयः "ज्योतिः प्रकाशे धारायां वेदाङ्गान्तरनेत्रयोः" इतीति । "स्वयंज्योतिष्ट्वात्" इत्यस्यार्थोक्तिः **परानपेक्षप्रकाशत्वादिति** । तथाऽपि तस्य ग्रहणं कुतः ? इत्यत उक्तम् **मुख्ये चेति** । "मुख्यामुख्ययोर्मुख्ये कार्यसम्प्रत्ययः" इति न्यायात्, सापेक्षनिरपेक्षयोर्निरपेक्षस्यैव मुख्यत्वात्, स एव ग्राह्य इत्यर्थः । "व्यक्तेः इति तु कथम्" इति कृतचोद्यं भाष्यभावोक्त्या परिहरति **शब्दत इति** । **सर्वसाधारणमिति** । प्राणभृन्मात्रेऽपि भगवतोऽन्तःस्थितेरिति भावः । अत्र तु 'ज्ञानिनः' इति वदन् योगिपदं ज्ञानितात्पर्यकमित्यभिप्रैति । नन्वेवं तर्हि 'अन्तर्ज्योतिः', इत्यत्र शाब्दबोध एकः । अर्थबोधोऽपर इति बोधद्वयम् इत्यापन्नम् ? इत्यतः पक्षान्तरमाह **यद्वेति** । **अध्याहारेणेति** । तथा च शब्देन एक एव बोधः, न बोधद्वयमिति भावः । **तात्पर्यमुक्तम्** अन्तर्ज्योतिश्शब्दस्य । **इदानीम्** तात्पर्योक्त्यनन्तरम् । **उच्यते** 'सर्वेषाम्' इति भाष्येण । **प्राचीनटीकायां तु** "तद्व्यक्तेरिति स्वपदं वर्णयति **सर्वेषामिति** । ज्योतिश्शब्दार्थस्य भगवतः सर्वान्तर्गतत्वेऽपि, यस्यासावन्तर्व्यक्तः स एवान्तर्ज्योतिरत्र विवक्षित इत्यर्थः" इत्युक्तम् ।

ननु "अन्तर्ज्योतिरेव" इत्यत्रैवशब्दः समासान्वित उत तदवयवान्वयीति विकल्प्य, आद्ये पर्यवसितार्थमुक्त्वा दोषमाह **नन्वेवशब्द इति** । द्वितीयेऽप्यभिप्रेतार्थं वदन् तत्र दोषमाह **अथेति** । **असम्भवित्वमिति** । बाह्यघटादिप्रकाशस्यापि सत्त्वादिति भावः । 'बाह्यदर्शनात्' इति भाष्ये बाह्यप्रातिपदिकार्थमाह **बाह्यमिति** । 'दशनेऽपि' इति भाष्यपदमनूद्य तत्र शेषमाह **दशनेऽपीति** । **अन्यदा** असम्प्रज्ञातसमाधिकालाद् अन्यकाले । "सर्वैकान्यकिंयत्तदः काले दा" इति दाप्रत्ययस्मरणात् । **विक्षेपकरणाभावादिति** । कामिन्यासक्तचित्तस्य यथा आलेख्यदर्शनं न मनसो

व्यासङ्गमापादयति, तथा भगवच्चित्तस्य बाह्यदर्शनमपि न मनसो विक्षेपं करोतीति, तद्धेतोरित्यर्थः । 'एवशब्दः' इति भाष्यमनूद्य तत्रोक्तदोषापनुत्तये शेषमाह **एवशब्दः सम्भवदर्थक इति** ।

ज्ञानिलक्षणं ह्यत्र निरूप्यते । स च ज्ञानी असम्प्रज्ञातसमाधिस्थः सम्प्रज्ञातसमाधिस्थश्चेति द्विरूपः । तत्रासम्प्रज्ञातसमाधिस्थविवक्षायाम् 'अन्तर्जोतिरेव' इत्येवशब्दस्तत्र सम्भवदर्थक एव, तस्य बाह्यदर्शनशून्यत्वात् । सम्प्रज्ञातसमाधिस्थग्रहणेऽपि तस्य विक्षेपहेतुबाह्यार्थदर्शनाभावेन सोऽप्यन्तर्ज्योतिःपुरुषकल्प एवेति तत्र एवशब्दस्य यः सम्भवन्नर्थः तत्तात्पर्यक एव, इत्येवं सम्भवदर्थको व्याख्यातव्य इति नोक्तासम्भवित्वदोष इति भावः । **एतेन** एवम् 'एव'शब्दव्याख्यानेन । **लक्ष्यमेवेति** । लक्षणं ह्यत्रोच्यते । तच्चासाधारणो धर्मः । 'अन्तर्ज्योतिः' इत्येतच्च लक्ष्यस्य ज्ञानिनः स्वरूपसमर्पकमेव । न हि गोः स्वरूपमेव गोर्लक्षणं भवतीति भावः । 'लक्ष्यमेव' इत्यस्य लक्ष्यतावच्छेदकमेवेत्यर्थ इत्यपि आहुः । 'एतेन' इत्युक्तहेतुमेवाह **व्यवच्छेदेति** । 'अन्तर्ज्योतिरेव' इत्यवधारणस्य विक्षेपहेतुभगवदन्यदर्शनव्यवच्छेदतात्पर्यकत्वादित्यर्थः । तथा च विक्षेपहेतुभगवदन्यदर्शनशून्यत्वम् 'अन्तर्ज्योतिरेव' इत्यनेन विवक्षितं ज्ञानिलक्षणमित्युक्तं भवति । नन्वेवं तर्हि एवशब्दोऽवयवार्थान्वयी इत्यापन्नम् । तच्चायुक्तम् । संन्यासान्वयित्वश्रवणात् ? इत्यत उक्तम् **एवशब्दस्येति** । समासार्थान्वयित्वे प्रागुक्तदोषाद्, योग्यताबलात् ज्योतिषा सम्बन्धोऽङ्गीकार्य इत्यर्थः ।

उक्तार्थत्वम् "आरामः परदर्शनादिनिमित्तं सुखम्, सुखं तूपद्रवक्षये व्यक्तम्" इत्युक्तार्थत्वम् । **पुनरुक्तिबलात्** आरामसुखशब्दयोः । ननु 'दर्शनस्पर्शसम्भाषाभ्यः' इति स्यात् ? समासार्थबाहुल्यात् । सम्भाषाशब्दस्य स्त्रीलिङ्गत्वाच्चेत्यत आह **द्वन्द्वैकत्वादिति** । "सर्वो द्वन्द्वो विभाषयैकवद्भवति" इत्येकवद्भावः । ततः एकवचनम्, "स नपुंसकम्" इति क्लीबत्वं च । "कार्यकालं संज्ञापरिभाषम्" इति यथेति भावः । "कामादिक्षये व्यक्तम्" इति भाष्याविसंवादायाह **कामेत्युपद्रवोपलक्षणमिति । उदितं व्यक्तं इति च । उक्तार्थत्वे** भगवन्मात्रदर्शनवत्त्वरूपार्थत्वे । **स्वज्योतिष्ट्वात्** परानपेक्षप्रकाशत्वान्महाविष्णोः ज्योतिष्ट्वमिति भाष्यार्थः ।

ननु 'अन्तर्ज्योतिः' इति बहुव्रीहेः "तस्मिन् स्थितः तत्स्थितः" इति तत्पुरुषेण व्याख्यानमयुक्तम्, अनुपयुक्तं च ? इत्यतो व्याचष्टे **स स्थितो यस्मिन्निति** । तथा च न विरुद्धार्थत्वम्, नाप्यनुपयोग इति भावः । **उक्तोऽर्थः** भगवन्मात्रदर्शनवत्त्वरूपोऽर्थः । **आर्थिकाच्छाब्दं वरमिति** । "अन्तरेव ज्योतिर्दर्शनं यस्य" इत्युक्ते विष्णुभिन्नबाह्यार्थस्यान्तरभावेन अर्थात् अन्तःस्थितभगवन्मात्रदर्शनं सिद्ध्यतीति तस्यार्थिकत्वम् । "अन्तर्व्यक्तः परानपेक्षप्रकाशतया ज्योति-

रशब्दार्थः परमात्मैव यस्य" इति व्याख्याने शब्दादेव भगवन्मात्रदर्शनं सिद्ध्यतीति तस्य शाब्दत्वम् । शाब्दस्य च शब्दबोध्यत्वेन शीघ्रोपस्थितिकत्वाद् वरत्वम् । आर्थिकस्य तु शब्दबोध्यार्थानुपपत्तिप्रतिसन्धानगम्यत्वेन मन्थरोपस्थितिकत्वाद् जघन्यत्वमिति भावेन भाष्योदाहृतप्रमाणे "स स्थितो यस्मिन् स तत्स्थितः एवान्तर्ज्योतिः" इति अन्तर्ज्योतिःपदं व्याख्यातमित्यर्थः ।

**प्रमाणेति** । जीवस्य ब्रह्मत्वस्य 'नाहमीश्वरः' इति प्रत्यक्षेण, "जीवपरमात्मानौ भिन्नौ विरुद्धधर्माधिकरणत्वात्" इत्याद्यनुमानेन, "द्वा सुपर्णा" (आथ. ३.१.१) इत्याद्यागमेन च विरुद्धत्वादित्यर्थः । **अन्तःसुखत्वादेः** अन्तःसुखत्वस्य, अन्तरारामत्वस्य, अन्तर्ज्योतिष्ट्वस्य च । **कारणत्वेनोच्यते** ब्रह्मणि भूतत्वम् । प्रस्थानान्तरे (गी.ता. ५.२४) तु अन्तःसुखत्वाद्येव ज्ञानिलक्षणम् । तत्र कारणत्वेनान्तर्ज्योतिष्ट्वमुच्यत इत्यन्तर्ज्योतिष्ट्वमपि कारणकोटौ प्रवेशितम् । **अर्थादिति** । अन्तःसुखत्वं कामादिक्षयाभिव्यक्तात्मस्वरूपसुखवत्त्वम् । तादृशसुखव्यक्तिश्च भगवज्ज्ञानासाधारणकारणिका । ब्रह्मणि भूतत्वं तत्र कारणत्वेनोच्यमानम् आहत्यासम्भवात् ज्ञानं द्वारम् आक्षिपति । तथा च ब्रह्मणि भूतत्वरूपसाधनेन ज्ञाने जाते एवान्तःसुखत्वादिकं भवतीत्यर्थापत्तिबलात् ज्ञानसाधनत्वेनोच्यत इत्युक्तं स्यादित्यर्थः । तत्रेष्टापत्तिमाशङ्क्याह **तच्चेति** । तद्बुद्धित्वादिकं ब्रह्मणि भूतत्वमिति 'तद्बुद्धयस्तदात्मानः' (५.१७) इत्यत्रोक्तम् । तद्बुद्धित्वादिकमेवात्र ब्रह्मणि भूतत्वमित्यर्थः । **यस्य** ज्ञानस्य । तद्बुद्धित्वादिकं ज्ञानसाधनत्वेनोक्तम् इत्यतोऽत्रापि ज्ञानोपस्थापकमाह **एवं चेति** । **ज्ञातव्य इति** । अधिपूर्वस्य गमेर्ज्ञानि प्रयोगप्राचुर्यादिति भावः ॥ २४ ॥

**गीता**

## लभन्ते ब्रह्मनिर्वाणमृषयः क्षीणकल्मषाः ।
## छिन्नद्वैधा यतात्मानः सर्वभूतहिते रताः ॥ २५ ॥

***वि०वि०***— पापक्षयाच्चैतद्भवतीत्याह **लभन्त इति** । क्षीणकल्मषा भूत्वा छिन्नद्वैधायतात्मानः द्वेधीभावो द्वैधं संशयो विपर्ययो वा । छिन्नं द्वैधं येषां ते छिन्नद्वैधाः, त एव आयतात्मानः । आयतात्मत्वं दीर्घमनस्कत्वं तत् छिन्नद्वैधत्त्वे हेतुः । तदुक्तम्—

'विपर्ययः संशयो वा यद्वैधं त्वकृतात्मनाम् ।
ज्ञानासिना तु तच्छित्वा मुक्तसङ्गः परं व्रजेत् ॥' इति ।

छिन्नद्वैधाः यतात्मान इति पदद्वयं वा ॥

***वा०ल०***— 'छिन्नद्वैधा(:)' इत्यत्र द्विधा विरुद्धकोटिद्वयावलम्बनेन जातं ज्ञानं द्वैधम्, संशय इत्यर्थः ॥

*॥ इति श्रीमद्भागवद्गीतालक्षालङ्कारे पञ्चमोऽध्यायः ॥*

***सा०सं०***— अन्तःसुखत्वादिलक्षणसम्पादको ब्रह्माधिगमो न ब्रह्मभूतत्वमात्राद्भवति । किन्तु पापक्षयाच्चेत्याह **लभन्त इति** । द्वैधशब्दोऽत्र द्वैधा भावो द्वैधमिति विषयापेक्षयाऽन्यप्रकारत्व-रूपायथार्थत्वपरः सन्नयाथार्थ्यार्पितज्ञानलक्षणो भूत्वा संशयविपर्ययपरः । **ऋषयो** ज्ञानिनः । **क्षीण-कल्मषाः** निवृत्तपाप्मानो भूत्वा'। छिन्नद्वैधाऽयतात्मानः सर्वभूतहिते रताश्च भवन्तीति शेषः । छिन्नौ द्वैधौ संशयविपर्ययौ येषां ते **छिन्नद्वैधाः** । ते च ते **आयतात्मानश्च** । दीर्घमनस्काः । श्रवणादिना विदितसर्ववेद्या इति यावत् । छिन्नद्वैधाऽऽयतात्मानः । छिन्नद्वैधत्वे क्षीणकल्मषत्वमिवायतात्मत्वमपि बुद्ध्या विविच्य हेतुत्वेन योज्यम् । यतात्मानो वशीकृतमनस्का इति भिन्नं पदम् । ततश्च **निर्वाणम्** अशरीरं **ब्रह्म लभन्ते** । उपशब्दोऽत्र योज्यः । उपलभन्ते पश्यन्तीत्यर्थः । अत्र ज्ञानस्य प्रति-बन्धकपापक्षयाख्यकारणोक्तावपि 'असाधारणं कारणं कार्यरूपस्य लक्षणं भवति' इत्यस्य लक्षण-प्रपञ्चनपरत्वमविरुद्धं ध्येयम् ॥

***अ०प्र०***— किञ्च, **लभन्त इति** ।

अन्वयः— सर्वभूतहिते रताः[१], ऋषयः[२], क्षीणकल्मषाः सन्तः[३], छिन्नद्वैधा[४], यतात्मानश्च भूत्वा[५], ब्रह्मनिर्वाणं[६], लभन्ते इत्यन्वयः ॥

सर्वभूतहिते रताः = सर्वभूतानां हिते आसक्ताः कृपालवः[१], ऋषयः = सम्यक् दर्शिनः[२], क्षीणकल्मषाः = क्षीणकल्मषं येषां हतपापाः भूत्वा[३], छिन्नद्वैधा = च्छिन्नं संशयो येषां ते तथा[४], यतात्मानश्च भूत्वा = यतः संयतः आत्मा चित्तं येषां ते तथा भूत्वा[५], ब्रह्मनिर्वाणं = मोक्षं[६], लभन्ते = उपलभन्ते साक्षात्कुर्वन्तीत्यर्थः । वस्त्वपेक्षया द्वितीयः प्रकारो द्वैधाभावो द्वैधं संशयोविपर्ययश्च छिन्नं द्वैधं येषान्ते छिन्नद्वैधाः ते च तम् । अयतात्मानश्च ते तथा । आयतात्मत्वं दीर्घमनस्त्वं सर्वज्ञत्वमित्यर्थः । सर्वज्ञत्वं छिन्नद्वैधत्वे हेतुः । तदुक्तम्—

'विपर्ययः संशयो वा यद्वैधं त्वकृतात्मनाम् ।
ज्ञानासिना तु तच्छित्वा मुक्तसङ्गः परं व्रजेत्' इति ॥ २५ ॥

**भाष्यम्**

**पापक्षयाच्चैतत् भवतीत्याह— लभन्त इति । क्षीणकल्मषा भूत्वा छिन्न-द्वैधायतात्मनः । द्वेधाभावो द्वैधम् । संशयो विपर्ययो वा । तच्चोक्तम्—**

"विपर्ययः संशयो वा यद्वैधं त्वकृतात्मनाम् ।
ज्ञानासिना तु तच्छित्त्वा मुक्तसङ्गः परं व्रजेत् ॥" इति ।

**छिन्नद्वैधास्त एवायतात्मानः । दीर्घमनसः । सर्वज्ञा इत्यर्थः । तत एव छिन्नद्वैधाः । तच्चोक्तम्—**

**"क्षीणपापा महाज्ञाना जायन्ते गतसंशयाः ॥" इति ।**

**छिन्नद्वैधाः यतात्मान इति वा ॥ २५ ॥**

*प॰टी॰*— न केवलं ब्रह्मणि भूतत्वेन तज्ज्ञानम्, साधनान्तरं चास्तीत्युत्तरश्लोकमवतारयति **पापेति** । पापक्षयज्ञानयोः कार्यकारणभावं दर्शयति **क्षीणेति** ।

*प॰टी॰*— 'द्वैध'पदार्थमाह **द्वेधेति** । तच्च किम् ? इत्यतः सप्रमाणमाह **संशय इति** । वस्तुतत्वापेक्षया द्वितीयग्राहको विपर्ययः । 'छिन्नद्वैधायतात्म' पदस्य विग्रहं दर्शयति **छिन्नेति** । 'आयतात्म' पदार्थमाह **दीर्घेति** । आयतात्मत्वछिन्नद्वैधत्वयोरपि कार्यकारणभावो विवक्षित इत्याह **तत एवेति** । क्षीणकल्मषत्वायतात्मत्वछिन्नद्वैधत्वानां क्रमेण कार्यकारणभावे प्रमाणमाह **तच्चेति** । पापक्षयमात्रात् कथं ज्ञानम् ? इत्यत आह **छिन्नेति** । क्षीणकल्मषाणां मनोनियतिद्वारा ज्ञानमित्यर्थः ॥

*न॰टी॰*—यज्ज्ञानिलक्षणमुक्तम् अन्तःसुखत्वादिकम्, तस्य कारणविधानेन ज्ञानस्यैव कारणमुक्तम् । अथ तत्र कारणान्तरोक्तिपरत्वेनोत्तरं श्लोकमवतार्य व्याचष्टे **पापक्षयाच्चेति** । 'क्षीणकल्मषाः' इत्यादिपदद्वयान्वयप्रदर्शनेन पापक्षयसाध्यत्वं ज्ञानस्य प्रकाशयति **क्षीणेति** । 'छिन्नद्वैध'पदार्थं सप्रमाणकं प्रदर्शयन्, तस्य ज्ञानस्य फलं प्रकाशयति **द्वेधेति** । **अकृतात्मनाम्** अयतचित्तानाम् । **परं व्रजेत्** इत्यनेन 'लभन्ते ब्रह्म निर्वाणम्' इत्यस्यान्वयं सूचयति । 'आयतात्मानः' इति यद्वृत्तं पदं तत्प्रकाशयति **छिन्नेति** । तस्यार्थमाह **दीर्घेति** । 'आयतात्म'पदमुत्तरमपि हेतुवाचीत्याह **तत इति** । क्षीणकल्मषायतात्मछिन्नद्वैधत्वानां क्रमेण हेतुहेतुमद्भावे प्रमाणमाह **तच्चेति** । 'यतात्मनः' इति पदं व्यस्तं चेति सूचयति **छिन्नेति** ॥

*प्र॰दी॰*— उत्तरश्लोके ज्ञानिनो ब्रह्मप्राप्तिः पुनः किमर्थमुच्यत इत्यत आह— **पापेति** । ब्रह्मभूतत्वेन सहास्य समुच्चयार्थश्चशब्दः । एतदुक्तलक्षणं ज्ञानम् । अतो लभन्त इत्यस्योपलभन्त इत्यर्थः । कथं तर्हि ज्ञानिलक्षणप्रपञ्चार्थत्वं श्लोकत्रयस्योक्तमिति । उच्यते । ज्ञानप्रतिबन्धकपाप-

क्षयाख्यमसाधारणं कारणं कार्यस्य लक्षणं भवत्येवेति । अत्र कार्यकारणभावो न प्रतीयत इत्यत आह— **क्षीणेति** । भवन्ति ततो ब्रह्मोपलभन्त इत्यर्थः । छिन्नद्वैधशब्दार्थं ज्ञापयन् द्वैधशब्दं व्याचष्टे— **द्वैधेति** । विषयापेक्षयाऽन्यप्रकारत्वमयथार्थत्वमिति यावत् । तेन च तज्ज्ञानमुपलक्ष्यत इति भावेनाह— **संशय इति** । वाशब्दश्चार्थे । अत्रैव प्रमाणमाह— **तच्चेति** । अकृतात्मनामशुद्धबुद्धीनाम् । छिन्नेत्यादेः समासत्वमभिप्रेत्य विग्रहमाह— **छिन्नेति** । आयतशब्दस्यात्मशब्दस्य चानेकार्थत्वात् 'आयतात्मनः' इत्येतद्व्याचष्टे— **दीर्घेति** । अणुनो मनसः कथं दीर्घत्वमित्यत आह— **सर्वज्ञा इति** । बहुविषयत्वमुपलक्ष्यत इति भावः । श्रवणादिना विदितवेद्या इत्यर्थः । समासेनोक्तयोरप्यर्थयोर्बुद्ध्या विविक्तयोर्हेतुहेतुमद्भावोऽस्तीति भावेनाह— **तत एवेति** । आयतात्मत्वादेव । क्षीणकल्मषत्वायतात्मत्वछिन्नद्वैधत्वानां हेतुहेतुमद्भावे प्रमाणमाह— **तच्चेति** । व्यस्ते वा एते पदे इत्याह— **छिन्नेति** । नियतमन इत्यर्थः ॥

***भा०दी०***— **एतदित्यनुवादः** । **उक्तेत्यादि** व्याख्या । अन्तर्भगवदेकविषयकत्वादिरूपमित्यर्थः । **अत इति** । ज्ञानिभावकर्मेति ........वाद....... कस्येत्यर्थः । आत्मन इत्यनन्तरं भाष्ये शेषमाह **भवन्ति ततो ब्रह्मोपलक्ष्यत इत्यर्थ इति** ॥ २५ ॥

***भा०र०***— "गच्छन्त्यपुनरावृत्तिं ज्ञाननिर्धूतकल्मषाः" (५.१७) इति ज्ञानिनो ब्रह्मप्राप्तेरुक्तत्वादाह **पुनरिति** । **उक्तलक्षणकमिति** । तद्बुद्धित्वादिसाधनजन्यम् अन्तःसुखत्वादिकारणीभूतस्वरूपमिति, अन्तर्गतभगवदेकविषयत्वरूपलक्षणोपेतमिति वाऽर्थः । **उपलभन्ते** । साक्षात्कुर्वन्ति । **असाधारणकारणमिति** । पापक्षयाख्यासाधारणकारणत्वं कार्यस्य ज्ञानस्यासाधारणधर्मत्वाल्लक्षणमिति युक्तं ज्ञानिलक्षणनिरूपणपरत्वमिति भावः ।

ननु प्रतिबन्धकाभावस्य कारणत्वाभ्युपगमे सिद्धान्तविरोधः । सुधायाम् "तर्हि दोषाभावः कारणमित्यायातमिति चेन्न । तथा सत्युत्सर्गापवादयोः क्वाप्यभावप्रसङ्गात्" इति । विष्णुतत्त्वनिर्णयटीकायां च दोषाभावोऽपि न प्रामाण्यकारणम्, यादृच्छिकसंवादिषु सत्यपि दोषे प्रमाणज्ञानोदयात्" इति प्रतिबन्धकाभावस्य कारणत्वनिरासादिति चेन्न । अत्र कारणशब्दस्य यद्घटं प्रति कुलालपित्रादिसाधारणं तद्व्यतिरेकप्रयुक्तव्यतिरेकप्रतियोगित्वरूपं प्रयोजकत्वम्, तन्मात्रतात्पर्यकत्वात् । न च पापे सति ज्ञानानुदयः, पापक्षये तु तदुदयः "निश्शेषगतदोषाणां बहूभिः जन्मभिः पुनः । स्यादापरोक्ष्यं हि हरेः" इति । (अ.व्या. ३.४.४. अधि. ९० श्लो. १५०२) "ज्ञानमुत्पद्यते पुंसां क्षयात् पापस्य कर्मणः" इत्यादिदर्शनात्, इत्यनन्यथासिद्धान्वयव्यतिरेकित्वात् पापक्षयः कारणमेव किं न स्यादिति वाच्यम् । क्लृप्तकारणं तद्बुद्धित्वादिरूपं ब्रह्मभूतत्वमादायैव पापाभावस्य

भगवज्ज्ञानं प्रति नियतपूर्वभावित्वग्रहणेन दण्डत्ववत्, दण्डगतदार्ढ्यवत्, "शक्तिः कारणताव-च्छेदिका" इति पक्षे शक्तिवत्, "उपस्थितेष्टभेदाग्रहः प्रवर्तकः" इत्यत्र उपस्थितिवत्, "विषयत्वेन विषयजन्यं ज्ञानं प्रत्यक्षम्" इत्यत्र विषयत्ववच्च, तद्बुद्धित्वादिनिष्ठकारणतावच्छेदकत्वमात्रेणा-न्वयव्यतिरेकयोरुपपत्तौ पापक्षयस्य कारणतायाः, पापक्षयत्वे कारणतावच्छेदकतायाश्च कल्पने गौरवात् । विष्णुतत्त्वनिर्णयटीकायां "दोषाभावोऽपि न प्रामाण्यकारणम्, यादृच्छिकसंवादिषु सत्यपि दोषे प्रमाणज्ञानोदयात्" इति प्रमासामान्यं प्रति प्रतिबन्धकाभावस्य व्यतिरेकव्यभिचारोक्त्या कारण-त्वखण्डनाच्च ।

न चैवं "दोषाभावस्य कारणत्वे च नास्माकमनिष्टम्, तावताऽपौरुषेयत्वाव्याघातात्" इति भाष्यटीकाविरोध (ब्र.सू. १.३.२८) इति वाच्यम् । अत्रत्यकारणशब्दस्य प्रयोजकत्वमात्रतात्पर्यक-त्वात् । उक्तं हि—

> "तस्माद्गुणेभ्यो दोषाणामभावस्तदभावतः ।
> अप्रामाण्यद्वयाभावस्तेनोत्सर्गो न चोदितः ॥" इति ।

प्रपञ्चितं चैतत्तर्कताण्डवे– प्रमायां दोषाभावस्य हेतुत्वभङ्गे । "असाधारणं कारणम्" (प्र.दी.) इत्यसाधारणपदं च न पापक्षयस्यादृष्टादिरूपप्रयोजनमात्रसाधारण्यम्, किन्तु ततोऽप्यतिशयोऽस्तीति विभावनायेति ज्ञातव्यम् । **यत्तु** "प्रतिबन्धकाभावः कारणं न" इत्युत्सर्गः । यत्र तु "ज्ञानमुत्पद्यते पुंसां क्षयात्पापस्य कर्मणः" इत्याद्यपवादः, तत्र प्रतिबन्धकाभावस्यापि कारणत्वमस्त्येव । तथा चोत्सर्गाभिप्रायेण सुधाप्रवृत्तेरविरोध इति व्याख्यातम्, तत्तु उक्तविष्णुतत्त्वनिर्णयटीकया, प्रतिबन्ध-काभावस्य हेतुप्रकारचतुष्टयं खण्डयित्रा तर्कताण्डवेन च विरुद्धम् इत्यनादरणीयमेवेत्यलम् ।

क्त्वाप्रत्ययनिर्वाहाय भाष्ये शेषमुक्त्वा कार्यकारणभावं स्फोरयति **भवन्ति तत इति** । ननु द्वेधाभावो नाम प्रकारद्वयावगाहित्वं चेत्, "घटो द्रव्यं पृथिवी" इति प्रमायामतिव्याप्तम् । तत्परिहाराय 'विरुद्धनानाप्रकारत्वम्' इति विवक्षायां विपर्यये अव्याप्तम् ? इत्यत आह **विषयेति** । विषयापेक्षया विषयिणि ज्ञानमात्रे ज्ञानत्वसविषयत्वाद्यन्यप्रकारत्वमस्तीति प्रमायामतिव्याप्तम् ? इत्यत आह **अयथार्थत्वमिति** । नन्वयथार्थत्वं विशेष्यताव्यधिकरणप्रकारकत्वम्, तद् ज्ञानधर्मः, न ज्ञानिधर्मः । तत्र च कथं छिन्नत्वान्वयः ? अप्रसक्तप्रतिषेधापत्तेः, इत्यंत आह **तेन चेति** । **तद्वत्** अथार्थत्ववत् । अनेन लक्षणाबीजसम्बन्ध उक्तः । "तदज्ञानविपर्ययौ संशयं च पराणुद्य" (ब्र.त.) इत्यादिप्रमाणानुसारेणाह **वाशब्द इति** ।

क्षयाख्यमसाधारणं कारणं कार्यस्य लक्षणं भवत्येवेति । अत्र कार्यकारणभावो न प्रतीयत इत्यत आह— **क्षीणेति** । भवन्ति ततो ब्रह्मोपलभन्त इत्यर्थः । छिन्नद्वैधशब्दार्थं ज्ञापयन् द्वैधशब्दं व्याचष्टे— **द्वैधेति** । विषयापेक्षयाऽन्यप्रकारत्वमयथार्थत्वमिति यावत् । तेन च तज्ज्ञानमुपलक्ष्यत इति भावेनाह— **संशय इति** । वाशब्दश्चार्थे । अत्रैव प्रमाणमाह— **तच्चेति** । अकृतात्मनामशुद्धबुद्धीनाम् । छिन्नेत्यादेः समासत्वमभिप्रेत्य विग्रहमाह— **छिन्नेति** । आयतशब्दस्यात्मशब्दस्य चानेकार्थत्वात् 'आयतात्मनः' इत्येतद्व्याचष्टे— **दीर्घेति** । अणुनो मनसः कथं दीर्घत्वमित्यत आह— **सर्वज्ञा इति** । बहुविषयत्वमुपलक्ष्यत इति भावः । श्रवणादिना विदितवेद्या इत्यर्थः । समासेनोक्तयोरप्यर्थयोर्बुद्ध्या विविक्तयोर्हेतुहेतुमद्भावोऽस्तीति भावेनाह— **तत एवेति** । आयतात्मत्वादेव । क्षीणकल्मषत्वायतात्मत्वछिन्नद्वैधत्वानां हेतुहेतुमद्भावे प्रमाणमाह— **तच्चेति** । व्यस्ते वा एते पदे इत्याह— **छिन्नेति** । नियतमन इत्यर्थः ॥

***भा०दी०***— **एतदित्यनुवादः** । **उक्तेत्यादि** व्याख्या । अन्तर्भगवदेकविषयकत्वादिरूपमित्यर्थः । **अत इति** । ज्ञानिभावकर्मेति ........वाद....... कस्येत्यर्थः । आत्मन इत्यनन्तरं भाष्ये शेषमाह **भवन्ति ततो ब्रह्मोपलक्ष्यत इत्यर्थ इति** ॥ २५ ॥

***भा०र०***— "गच्छन्त्यपुनरावृत्तिं ज्ञाननिर्धूतकल्मषाः" (५.१७) इति ज्ञानिनो ब्रह्मप्राप्तेरुक्तत्वादाह **पुनरिति** । **उक्तलक्षणकमिति** । तद्बुद्धित्वादिसाधनजन्यम् अन्तःसुखत्वादिकारणीभूतस्वरूपमिति, अन्तर्गतभगवदेकविषयत्वरूपलक्षणोपेतमिति वाऽर्थः । **उपलभन्ते** । साक्षात्कुर्वन्ति । **असाधारणकारणमिति** । पापक्षयाख्यासाधारणकारणत्वं कार्यस्य ज्ञानस्यासाधारणधर्मत्वाल्लक्षणमिति युक्तं ज्ञानिलक्षणनिरूपणपरत्वमिति भावः ।

ननु प्रतिबन्धकाभावस्य कारणत्वाभ्युपगमे सिद्धान्तविरोधः । सुधायाम् "तर्हि दोषाभावः कारणमित्यायातमिति चेन्न । तथा सत्युत्सर्गापवादयोः काप्यभावप्रसङ्गात्" इति । विष्णुतत्त्वनिर्णयटीकायां च दोषाभावोऽपि न प्रामाण्यकारणम्, यादृच्छिकसंवादिषु सत्यपि दोषे प्रमाणज्ञानोदयात्" इति प्रतिबन्धकाभावस्य कारणत्वनिरासादिति चेन्न । अत्र कारणशब्दस्य यद्वद्घटं प्रति कुलालपित्रादिसाधारणं तद्व्यतिरेकप्रयुक्तव्यतिरेकप्रतियोगित्वरूपं प्रयोजकत्वम्, तन्मात्रतात्पर्यकत्वात् । न च पापे सति ज्ञानानुदयः, पापक्षये तु तदुदयः "निश्शेषगतदोषाणां बहूभिः जन्मभिः पुनः । स्यादापरोक्ष्यं हि हरेः" इति । (अ.व्या. ३.४.४. अधि. ९० श्लो. १५०२) "ज्ञानमुत्पद्यते पुंसां क्षयात् पापस्य कर्मणः" इत्यादिदर्शनात्, इत्यनन्यथासिद्धान्वयव्यतिरेकित्वात् पापक्षयः कारणमेव किं न स्यादिति वाच्यम् । क्लृप्तकारणं तद्बुद्धित्वादिरूपं ब्रह्मभूतत्वमादायैव पापाभावस्य

भगवज्ज्ञानं प्रति नियतपूर्वभावित्वग्रहणेन दण्डत्ववत्, दण्डगतदार्ढ्यवत्, "शक्तिः कारणतावच्छेदिका" इति पक्षे शक्तिवत्, "उपस्थितेष्टभेदाग्रहः प्रवर्तकः" इत्यत्र उपस्थितिवत्, "विषयत्वेन विषयजन्यं ज्ञानं प्रत्यक्षम्" इत्यत्र विषयत्ववच्च, तद्बुद्धित्वादिनिष्ठकारणतावच्छेदकत्वमात्रेणान्वयव्यतिरेकयोरुपपत्तौ पापक्षयस्य कारणतायाः, पापक्षयत्वे कारणतावच्छेदकतायाश्च कल्पने गौरवात् । विष्णुतत्त्वनिर्णयटीकायां "दोषाभावोऽपि न प्रामाण्यकारणम्, यादृच्छिकसंवादिषु सत्यपि दोषे प्रमाणज्ञानोदयात्" इति प्रमासामान्यं प्रति प्रतिबन्धकाभावस्य व्यतिरेकव्यभिचारोक्त्या कारणत्वखण्डनाच्च ।

न चैवं "दोषाभावस्य कारणत्वे च नास्माकमनिष्टम्, तावताऽपौरुषेयत्वाव्याघातात्" इति भाष्यटीकाविरोध (ब्र.सू. १.३.२८) इति वाच्यम् । अत्रत्यकारणशब्दस्य प्रयोजकत्वमात्रतात्पर्यकत्वात् । उक्तं हि—

"तस्माद्गुणेभ्यो दोषाणामभावस्तदभावतः ।
अप्रामाण्यद्वयाभावस्तेनोत्सर्गो न चोदितः ॥" इति ।

प्रपञ्चितं चैतत्तर्कताण्डवे– प्रमायां दोषाभावस्य हेतुत्वभङ्गे । "असाधारणं कारणम्" (प्र.दी.) इत्यसाधारणपदं च न पापक्षयस्यादृष्टादिरूपप्रयोजनमात्रसाधारण्यम्, किन्तु ततोऽप्यतिशयोऽस्तीति विभावनार्येति ज्ञातव्यम् । **यत्तु** "प्रतिबन्धकाभावः कारणं न" इत्युत्सर्गः । यत्र तु "ज्ञानमुत्पद्यते पुंसां क्षयात्पापस्य कर्मणः" इत्याद्यपवादः, तत्र प्रतिबन्धकाभावस्यापि कारणत्वमस्त्येव । तथा चोत्सर्गाभिप्रायेण सुधाप्रवृत्तेरविरोध इति व्याख्यातम्, तत्तु उक्तविष्णुतत्त्वनिर्णयटीकया, प्रतिबन्धकाभावस्य हेतुप्रकारचतुष्टयं खण्डयित्रा तर्कताण्डवेन च विरुद्धम् इत्यनादरणीयमेवेत्यलम् ।

त्त्वाप्रत्ययनिर्वाहाय भाष्ये शेषमुक्त्वा कार्यकारणभावं स्फोरयति **भवन्ति तत इति** । ननु द्वेधाभावो नाम प्रकारद्वयावगाहित्वं चेत्, "घटो द्रव्यं पृथिवी" इति प्रमायामतिव्याप्तम् । तत्परिहाराय 'विरुद्धनानाप्रकारत्वम्' इति विवक्षायां विपर्यये अव्याप्तम् ? इत्यत आह **विषयेति** । विषयापेक्षया विषयिणि ज्ञानमात्रे ज्ञानत्वसविषयत्वाद्यन्यप्रकारत्वमस्तीति प्रमायामतिव्याप्तम् ? इत्यत आह **अयथार्थत्वमिति** । नन्वयथार्थत्वं विशेष्यताव्यधिकरणप्रकारकत्वम्, तद् ज्ञानधर्मः, न ज्ञानिधर्मः । तत्र च कथं छिन्नत्वान्वयः ? अप्रसक्तप्रतिषेधापत्तेः, इत्यंत आह **तेन चेति** । **तद्वत्** अथार्थत्ववत् । अनेन लक्षणाबीजसम्बन्ध उक्तः । "तदज्ञानविपर्ययौ संशयं च पराणुद्य" (ब्र.त.) इत्यादिप्रमाणानुसारेणाह **वाशब्द इति** ।

**अत्रैव** "अयथार्थज्ञानमेव द्वैधशब्दार्थः" इत्यत्र । नन्वात्मनां नित्यत्वेन सर्वेऽप्यकृतात्मान एव । तत्कथम् 'अकृतात्मनाम्' इति विशेषणम् ? इत्यतस्तदनूद्य अर्थमाह **अकृतात्मनाम् अशुद्धबुद्धीनामिति** । ज्ञानस्य लूनसंशयविपर्ययतादशायामित्यर्थः । तेन "ज्ञानासिना तद् = द्वैधं छित्त्वा" इति युज्यते । **समासत्वम्** ऐकपद्यम् । अन्यथाऽपि प्रतिपत्तिव्याख्यानबीजमित्यभिसन्धाय आह **आयतशब्दस्येति** । तथा च नानालिङ्गाध्याये त्र्यक्षरकाण्डे "आयतं दीर्घवस्तुनि । स्यात् कृतायमने च" (के.को.) इति । तथा नान्तनानार्थे—

"आत्माऽर्कचन्द्रवाताग्निजीवेषु परमात्मनि ।
देहे यत्ने धृतौ कीर्तौ बुद्धौ मनसि विश्रुते ।
धर्मे स्वभावे पुत्रेऽर्थे परस्य प्रतियोगिनि ॥" इति केशवः ।

**केचित्तु** "आयतिः संयमे दैर्घ्ये प्रभावागामिकालयोः" इति, "आत्मा देहमनोब्रह्मस्वभावधृतिबुद्धिषु" इति च विश्वोक्तेः, आयत-आत्मशब्दौ नानार्थाविति भावेन 'अनेकार्थत्वात्' इत्युक्तमित्याहुः । ननु ज्ञानिमात्रे सार्वज्ञं प्रमाणविरुद्धम् ? इत्यतो भाष्यभावमाह **बहुविषयत्वमिति** । 'दीर्घवाचकायतशब्देन' इति शेषः ।

नन्वायतात्मत्वं छिन्नद्वैधत्वे हेतुः, यद्वक्ष्यति— "तत एव छिन्नद्वैधाः" इति । अत्र चायतात्मत्वं बहुविषयत्वं विवक्षितमित्युक्तम् । नैतद्युक्तम् । न हि गङ्गावालुकादिबहुविषयज्ञानेन तत्त्वसंशयादिच्छेदो दृश्यते । तस्य "श्रुत्वा मत्वा तथा ध्यात्वा तदज्ञानविपर्ययौ । संशयं च पराणुद्य" (ब्र.त.) इति श्रवणादिजन्यज्ञानच्छेद्यत्वावेदनादित्यत आह **श्रवणादिनेति** । "विशेषणं विशेष्येण बहुलम्" इत्यत्र बहुलग्रहणाद् विशेषणयोरपि, समासो युक्त इति भावेनाह **समासेनेति** । **अर्थयोः** छिन्नद्वैधत्वायततात्मत्वयोः । **छिन्नद्वैधत्वानां** 'क्रमेण' इति शेषः । 'यतात्मनः' इत्यस्यार्थमाह **नियतेति**॥ २५ ॥

**गीता**

## कामक्रोधवियुक्तानां यतीनां यतचेतसाम् ।
## अभितो ब्रह्मनिर्वाणं वर्तते विदितात्मनाम् ॥ २६ ॥

***वि०वि०***— सुलभं च तेषां ब्रह्मेत्याह **कामक्रोधेति** । अभितः सर्वतः ॥

***सा०सं०***— न केवलमन्तःसुखत्वादिकमेव ज्ञानिलक्षणम्, किं तु सर्वदेशकालेषु सुखेन ब्रह्मलब्धिमत्त्वमपीत्याह **कामक्रोधेति** । **यतीनां** प्रयत्नवताम् । **यतचेतसां** वशीकृतमनस्कानाम् ।

**अभितः** सर्वदेशकालेषु । **वर्तते** । रक्षकत्वेन ज्ञानविषयत्वेन वेत्यर्थः । **विदितात्मनां** ब्रह्मज्ञानिनाम् । शिष्टं व्यक्तम् ॥

***अ०प्र०***— किञ्च, **कामेति** ।

अन्वयः स्पष्टः । कामक्रोधवियुक्तानां = कामक्रोधवियुक्तौ विवर्जितौ यैस्ते वियुक्ताः तेषां तथा निर्विषयाणामित्यर्थः[१], यतीनां = यत्नपराः यतयः तेषां संन्यासिनां[२], यतचेतसां = यतं नियमितं विजितं चेतः चित्तं यैस्ते तथा तेषां संयतचित्तानां[३], विदितात्मनां = विदितो आत्मा यैस्ते विदितात्मानः तेषां ज्ञातात्मतत्त्वानां[४], अभितो ब्रह्मनिर्वाणं = उभयतः मृतानां जीविनां च ब्रह्म । यद्वा, मोक्षः ब्रह्मणि कथं वा[६], वर्तते = प्रत्यक्षतयेति शेषः । मृतानां जीविनामपि वर्तत इत्यर्थः ॥ २६ ॥

**भाष्यम्**

**सुलभं च तेषां ब्रह्मेत्याह— कामक्रोधेति । अभितः = सर्वतः ॥ २६ ॥**

***प०टी०***— न केवलं ते लभन्त इत्येव, किन्तु कारुण्यात् सर्वकालदेशेषु ब्रह्म लभ्यमित्यभिप्रायेण उत्तरश्लोकमवतारयति **सुलभं चेति** । किं तत् सौलभ्यवाचिपदम् ? इत्यत आह **अभित इति** ॥

***न०टी०***—क्षीणकल्मषत्वादिविशेषणचतुष्टयवन्तो (ऽ)प्राकृतविग्रहा ब्रह्म लभन्त इत्युक्तम् । अथ नैतावदेव । किन्तु ते तत्सुखेन लभन्त इति विशिनष्टीति भावेनोत्तरं श्लोकमवतारयति **सुलभं चेति** । सौलभ्यवाचिपदमुपपादयन् व्याचष्टे **अभित इति** । प्रायः सर्वत्र सर्वदा यत्प्रयत्नं विना स्वयमेव कृपया तन्मनोगोचरो भवतीत्यर्थः ॥

***प्र०दी०***— यतीनां सर्वं ब्रह्मतयैव प्रतीयत इत्यन्यथाप्रतीतिनिरासायाह— **सुलभं चेति** । न केवलमुक्तलक्षणा इति चार्थः । इदं च साधारणधर्मत्वाज्ज्ञानिलक्षणं भवत्येव । सौलभ्यवाचि किमप्यत्र न प्रतीयत इत्यतस्तदुपादाय व्याचष्टे— **अभित इति** । सर्वदेशकालेष्वित्यर्थः ॥

***भा०दी०***— **उक्तलक्षणा इति** । यो ................. क्तलक्षणा इत्यर्थः । ज्ञानिलक्षणं प्रपञ्चयत्युत्तरश्लोकैरिति प्राक्तनभाष्यघटनायाह ............... सर्वदेश ........लब्धिमत्वमित्यर्थः ॥

***भा०र०***— **उक्तलक्षणा इति** । ज्ञानिनो न केवलं "योऽन्तःसुखः" (५.२४) इत्याद्युक्तान्तःसुख इत्यादिलक्षणकाः । किन्तु सर्वदेशकालेषु सुखेन ब्रह्मलब्धिमन्तश्चेति भावेन भाष्ये

चशब्दः प्रयुक्त इत्यर्थः । ननु "ज्ञानिलक्षणं प्रपञ्चयत्युत्तरैः" (गी.भा. ५.२४) इत्युक्तम् । न चास्य श्लोकस्य ज्ञानिलक्षणप्रपञ्चनार्थत्वम् प्रतीयते ? इत्यत आह **इदं चेति** । सर्वदेशकालेषु ब्रह्म-लब्धिमत्त्वमित्यर्थः । **असाधारणेति** । न ह्यज्ञानिनो ब्रह्म सुलभमिति भावः । **तत्** सौलभ्य-वाचिपदम् । सर्वशब्दात्सप्तम्यर्थे तसिरिति भावेनाह **सर्वदेशकालेष्विति** । यो यत्र यत्र देशे सञ्चारार्हः तत्र तत्र देशेषु कालेषु च तस्य सुलभं ब्रह्मेति भावः ॥ २६ ॥

***गीताश्लोकत्रयाक्षरार्थस्तु***— ज्ञानिलक्षणं प्रपञ्च्यते **यो अन्तःसुख इत्यादिना** । यथा योगस्याधिक्यकथनं योगनिरूपणमेव, संन्यासार्थे निन्दास्तुती च संन्यासनिरूपणमेव, तथा ज्ञानि-लक्षणकथनं च ज्ञानिनिरूपणमेवेति संन्यास-योग-ज्ञानानि मेलयित्वा प्रपञ्चयतीति भाषितार्था-विसंवादः । **अन्तःसुखः** कामादिक्षयाभिव्यक्तात्मस्वरूपसुखः । **अन्तरारामः** । अन्तरवस्थित-परमात्मदर्शनादिनिमित्तकसुखवान् । **अन्तर्ज्योतिः** अन्तरभिव्यक्तपरमात्मस्वरूपः । असम्प्रज्ञात-समाधीनां बाह्यादर्शनात्, सम्प्रज्ञातसमाधीनां बाह्यदर्शनेऽपि तस्य चित्तविक्षेपाहेतुत्वात्, ब्रह्मदर्शना-पेक्षया बाह्यदर्शनप्राचुर्याभावाच्चैवशब्दः । 'यः' इत्यस्य पुनरुक्तिः सर्वज्ञान्यनुगमार्था ।

अन्तःसुखत्वादेः कारणमुच्यते **ब्रह्मभूत इति** । **ब्रह्मणि** विष्णौ **भूतः** मनसा स्थित इत्यर्थः । नन्वेवं सत्यर्थादिदं ब्रह्मणि भूतत्वं ज्ञानसाधनत्वेनोच्यत इत्युक्तं स्यात् । तच्च 'तद्बुद्धयः' (५.१७) इत्यनेनोक्तमेवेति न पुनर्वक्तव्यम् । सत्यम् । तद्बुद्धित्वादिरूपं ब्रह्मभूतत्वं यस्य कारणं तद्वान् एवंलक्षणक इत्येवं सङ्गतिसूचनार्थो ब्रह्मभूतत्वस्य तद्बुद्धित्वादिशब्देनोक्तस्यात्रानुवादः । एवं च 'अधिगच्छति' इत्यस्य 'जानाति' इत्यर्थो ज्ञातव्यः । **गीताविवृतौ तु** योऽन्तःसुखो योऽन्तरारामो योऽन्तर्ज्योतिः तथा यो ब्रह्मभूतो ब्रह्मणि भूतश्च स योगी **निर्वाणम्** अशरीरम् अप्राकृतदिव्यसुन्दरविग्रहं **ब्रह्म** भगवन्तम् **अधिगच्छति** प्राप्नोतीत्युक्तम् । तदुक्तार्थापरित्यागेनार्था-न्तरवर्णनमेवेति न टीकाविसंवादः ॥ २४ ॥

न केवलं ब्रह्मभूतत्वाद् उक्तलक्षणकं ज्ञानमुत्पद्यते । किन्तु ज्ञानप्रतिबन्धकपापक्षयाख्या-साधारणप्रयोजकादपीत्युच्यते **लभन्त इति** । **क्षीणकल्मषाः** क्षीणपापाः भूत्वा **छिन्नद्वैधायता-त्मानः** **छिन्नं** विनष्टं द्वेधाभावो **द्वैधं** विषयापेक्षयाऽन्यप्रकारत्वम् अयथार्थत्वमिति यावत् । तेन तद्वज्ज्ञानं संशयो विपर्ययश्च लक्ष्यते । तद्येषां ते तथा, **आयतात्मानः** बहुविषयमानसाः श्रवणादिना विदितवेद्याः, छिन्नद्वैधाश्च ते आयतात्मानश्च तथोक्ताः । समासेनोक्तयोरप्यर्थयोर्बुद्ध्या विविक्तयो-र्हेतुमद्भावोऽत्र विवक्षितः । आयतात्मत्वात् छिन्नद्वैधा इति । क्षीणकल्मषत्व-आयतात्मत्व-छिन्न-द्वैधत्वानां क्रमेण हेतुहेतुमद्भावे "क्षीणपापा महाज्ञाना जायन्ते गतसंशयाः" इति भाष्ये प्रमाण-

मुक्तम् । **छिन्नद्वैधा यतात्मानः** नियतमनस इति व्यस्ते वा पदे । एतादृशा **ऋषयः** ज्ञानिन **निर्वाणम्** अप्राकृतदिव्यविग्रहं भगवन्तं **लभन्ते** उपलभन्ते = साक्षात्कुर्वन्ति । ज्ञानप्रतिबन्धक-पापक्षयाख्यम् असाधारणकारणं कार्यस्य ज्ञानस्य लक्षणं भवत्येवेति, अस्य श्लोकस्य ज्ञानिलक्षण-प्रपञ्चनपरत्वं युक्तम् ॥ २५ ॥

न केवलं ज्ञानिनः 'योऽन्तःसुखः' (५.२४) इत्याद्युक्तान्तःसुखत्वादिलक्षणकाः । किन्तु सर्वदेशकालेषु सुखेन ब्रह्मलब्धिमन्तश्चेत्युच्यते **कामक्रोधेति** । कामक्रोधाभ्यां हीनानां क्षीणसकल-कल्मषाणां **यतीनां** प्रयत्नवतां **यतचेतसां** नियतमनसां **विदित आत्मा** परमात्मा यैस्तेषां ज्ञानिनां **निर्वाणम्** अप्राकृतविग्रहं **ब्रह्म अभितः** सर्वदेशकालेषु **वर्तते** रक्षकत्वेनोपलब्धिविषयत्वेन चेति योज्यम् । तथा चोक्तं **प्राचीनटीकायाम्** "प्रायः सर्वत्र सर्वदा स्वप्रयत्नं विना स्वयमेव कृपया तन्मनोगोचरो भवति" इति । सर्वदेशकालेषु ब्रह्मलब्धिमत्त्वं चासाधारणधर्मत्वाद् ज्ञानिलक्षणं भवत्येवेति युक्तमस्यापि श्लोकस्य ज्ञानप्रपञ्चनपरत्वमिति ॥ २६ ॥

**गीता**

**स्पर्शान् कृत्वा बहिर्बाह्यांश्चक्षुश्चैवान्तरे भ्रुवोः ।**
**प्राणापानौ समौ कृत्वा नासाभ्यन्तरचारिणौ ॥ २७ ॥**

***वि०वि०*— ** ब्रह्मयोगादिपदेन ध्यानं प्रकृतं तत्कारणमाह **स्पर्शानिति** । स्पृश्यन्त इति स्पर्शा विषयाः । बाह्यान् स्पर्शान् बहिः कृत्वा श्रोत्रादीनि योगेन नियम्येत्यर्थः । चक्षुः भ्रुवोरन्तरे कृत्वा भ्रुवोर्मध्यमवलोकयन्नित्यर्थः । उपलक्षणमेतत् । 'सम्प्रेक्ष्य नासिकाग्रं स्वम्' इति वक्ष्यमाणत्वात् । प्राणापानौ समौ समानौ कृत्वा । कुम्भके स्थित्वा इत्यर्थः ॥

***सा०सं०*— स ब्रह्मयोगयुक्तात्मा** इत्यादौ ब्रह्मयोगादिपदेन प्रकृतध्यानप्रकारमाह **स्पर्शा-नित्यादिद्वयेन** । स्पृश्यन्त इति **स्पर्शाः** शब्दाद्याः श्रोत्रादीन्द्रियविषयाः । तेषां बाह्यत्वं दुःसम्पा-दकत्वम् । **बाह्यान् स्पर्शान्** शब्दादीन् । **बहिः** श्रोत्राद्यविषयान् । **कृत्वा** प्रत्याहारेणेन्द्रियाणि नियम्येति यावत् । **भ्रुवोरन्तरे** मध्ये । **चक्षुश्च** कृत्वा । भ्रुवोर्मध्यमवलोकयन्नित्यर्थः । 'सम्प्रेक्ष्य नासिकाग्रं स्वम्' इत्यादेर्वक्ष्यमाणस्योपलक्षणम् । **प्राणापानौ समौ** समानौ निर्विकारौ **नासा-भ्यन्तरचारिणौ कृत्वा** कुम्भके स्थित्वेति यावत् ॥ २७ ॥

**गीतातात्पर्यनिर्णयः**

**ब्रह्मणि भूतः । अन्यथा पुनर्ब्रह्म गच्छतीति विरोधाच्च । अन्तःसुखादिकं च ब्रह्मदर्शनात् ॥ २४-२७ ॥**

*प्रका०*— योऽन्तःसुख इत्येतद्व्याचष्टे **ब्रह्मणीत्यादिना** । अन्यथेत्यस्य ब्रह्मत्वेन भूतश्चे-दित्यर्थः ॥

*न्या०दी०*— ज्ञानिलक्षणमुच्यते 'योऽन्तःसुखः' इति । तत्र ब्रह्मभूतपदं ब्रह्मणैकीभूत इत्यन्यथाप्रतीतिनिरासाय व्याचष्टे **ब्रह्मणीति** ॥ मनसेति शेषः । प्रतीत एवार्थः किं न स्यादिति चेन्न । ज्ञानिनोऽपि ब्रह्मभेदस्य साधितत्वात् । दोषान्तरं चाह **अन्यथेति** ॥ यद्यत्र ज्ञानिनो ब्रह्मभावोऽभिधीयते तर्हि ब्रह्माधिगच्छतीति विरुद्धं स्यात् । न हि कश्चित् स्वयं स्वात्मानं गच्छतीत्यर्थः । नन्वत्र अन्तःसुखत्वादिकं भवतु ज्ञानिलक्षणम् । अन्तर्ज्योतिष्ट्वं कथं ब्रह्मदर्शिनो लक्षणं स्यात् । यावता ब्रह्म दर्शित्वमेव तदित्यत आह **अन्तःसुखत्वादिकमिति** ॥ नात्रान्त-र्ज्योतिष्ट्वं ज्ञानिलक्षणमुच्यते । किन्तु अन्तःसुखत्वाद्येव । तत्र कारणत्वेनान्तर्ज्योतिष्ट्वमुच्यत इति भावः ॥

*भा०दी०*— **साधितत्वादिति** । द्वितीयेऽध्याय इति योज्यम् ॥

**गीता**

**यतेन्द्रियमनोबुद्धिर्मुनिर्मोक्षपरायणः ।**
**विगतेच्छाभयक्रोधो यः सदा मुक्त एव सः ॥ २८ ॥**

*वि०वि०*— 'मुक्त एव सः' इति श्रुतिः । मुक्तसदृशः स्याद्वा मुक्तः । उक्तं च—

'अमुक्तो मुक्तसादृश्यान्मुक्त एव हि तत्त्वदृक् ।
किमु मुक्तिगतस्तस्माज्ज्ञानमेवाधिकं नरे ॥' इति ॥

*सा०सं०*— **यतेन्द्रियमनोबुद्धिः** । **मुनिः** मननशीलः । एवम्भूतो **यः स मुक्त** एवेति स्तुतिः । यद्वा, अभिमानादिपरित्यागेन मुक्तसादृश्यान्मुक्त एवेति गौणप्रयोगः ॥

*अ०प्र०*— स योगी ब्रह्मनिर्वाणमित्यादिषु योगी मोक्षमाप्नोति इत्युक्तम् । तदेव योगं सङ्क्षेपेण दर्शयन्नाह **स्पर्शानिति** द्वाभ्याम् ।

एक एवान्वयः । ब्रह्मयोगादिपदेन प्रकृतं ध्यानं तत्प्रकारमेव श्लोकद्वयेनाह । अथान्वयः— मोक्षपरायणः[१], विगतेच्छाभयक्रोधः[२], यः[३], मुनिः[४], यतेन्द्रियमनोबुद्धिः[५], बाह्यान्[६], स्पर्शान्[७], बहिः[८], कृत्वा[९], चक्षुश्चैव[१०], भ्रुवोः[११], अन्तरे एवं कृत्वा[१२], नासाभ्यन्तरचारिणौ[१३], प्राणापानौ[१४], समौ[१५], कृत्वा[१६], एवंभूतो यः मुनिः सः[१७], सदा[१८], मुक्त एवेत्यन्वयः ॥

मोक्षपरायणः = श्रीविष्णौ दासत्वेन जीवस्य संयोजनं मोक्षः स एव परमं उत्कृष्टं अयनं गतिः यस्य सः मोक्षपरायणः । यद्वा, मोक्षे एव तत्परः मोक्षपरायणः[१], विगतेच्छाभयक्रोधः = अपगत इच्छाभयक्रोधः । यद्वा, अत एव विगताः विशेषेण गताः इच्छा च भयं च क्रोधादयश्च यस्मात् स तथा[२], यः मुनिः = योगसाधनशीलः[४], यतेन्द्रियमनोबुद्धिः = यतानि नियमितानि इन्द्रियाणि मनश्च बुद्धिश्च येन सः तथा प्रत्याहारादियोगेन श्रोत्रादीन्नियम्य । यद्वा, प्राणो बहिर्न निर्याति तथा चापानः अंतः न प्रविशति किन्तु नासामध्य एव द्वावपि यथा चरतः तथा प्राणापानाभ्यां उच्छ्वासनिश्वासाभ्यां समौ कृत्वेति अनेनोपायेन यताः संयताः इन्द्रियमनोबुद्धयो यस्य । एवंभूतो यो मुनिरित्यर्थः[५], बाह्यान् = इन्द्रियादिगोचरान्[६], स्पर्शान् = शब्दादिविषयान् । यद्वा, बाह्या एव स्पर्शरूपरसादयो विषयाश्चिन्तिताः सन्तो अन्तःप्रविशन्ति तान् तत्तच्चिन्त-नात्यागेन[७], बहिः कृत्वा = बहिरेव कृत्वा दूरत एव कुर्यादित्यर्थः[८], तदज्ञानप्रसक्तिं निवारयेदि-त्यर्थः । श्रोत्रादिनियमनाभावे तत्सन्निकृष्टाः चिन्तिता वा विषयाः अन्तर्भवन्ति अतस्तन्नियमनेन असन्निकृष्टाणामाध्यातानां तेषां बहिर्भावो भवतीत्यर्थः[९], चक्षुश्चैवं भ्रुवोः अन्तरे एव कृत्वा = अत्यन्तनेत्रनिमीलने निद्रया मनो निमिलीयते उन्मीलने च बहिः प्रसरति तदुभयदोषपरिहारार्थं अर्धनिमीलनेन भ्रूमध्यमलोकयन्नित्यर्थः[१२], उपलक्षणमेतत् । 'सम्प्रेक्ष्य नासिकाग्रं स्वं' इत्यादि वक्ष्यमाणत्वात् 'नासाग्रे वा भ्रुवोर्मध्ये ध्यानी चक्षुर्निधारयेत्' इति वचनात् । नासाभ्यन्तरचारिणौ = नासिकयोर्मध्ये चरन्तौ प्राणापानौ श्वासोच्छ्वासरूपौ[१४], समौ कृत्वा उर्ध्वाधोगतिनिरोधेन समौ निर्विकारौ कृत्वा कुम्भके स्थित्वेत्यर्थः[१६], एवंभूतो यः मुनिः सः[१७], सदा जीवन्नपि[१८], मुक्त एवेत्यर्थः = मुक्तसदृशो वा मुक्तः[१९], तदुक्तम्—

'अमुक्तो मुक्तसादृश्यान्मुक्त एव हि तत्त्वदृक् ।
किमु मुक्तिगतस्तस्माज्ज्ञानमेवाधिकं नरे ॥' इत्युक्तेः ॥ २८ ॥

**भाष्यम्**

**ध्यानप्रकारं आह— स्पर्शानित्यादिना । बाह्यान् स्पर्शान् बहिष्कृत्वा । श्रोत्रादीनि योगेन नियम्येत्यर्थः । चक्षुः भ्रुवोरन्तरे कृत्वा, भ्रुवोर्मध्यमवलोकय-**

**न्नित्यर्थः । उक्तं च— "नासाग्रे वा भ्रुवोर्मध्ये ध्यानी चक्षुर्निधापयेत् ॥" इति । प्राणापानौ समौ कृत्वा = कुम्भके स्थित्वेत्यर्थः** ॥ २७-२८ ॥

*प०टी०*— 'ब्रह्मभूत'पदेन यद्व्याख्यानमुक्तम्, तत्प्रकारप्रदर्शनपरतयोत्तरश्लोकद्वयमवतारयति **ध्यानेति** । 'स्पर्शान्' इत्येतत् 'विषयांस्त्यक्त्वा' इत्यन्यथाप्रतीतिनिरासाय व्याचष्टे **बाह्यानिति** । इन्द्रियानियमने विषयदूरीकरणमात्रेण न प्रयोजनमित्यभिप्रायः । चक्षुषोः भ्रूमध्यस्थत्वं कथम् ? इत्यत आह **चक्षुरिति** । नानेन 'सम्प्रेक्ष्य नासिकाग्रम्' इत्यस्य विरोध इत्यभिप्रायेणाह **उक्तं चेति** । 'प्राणापानौ' इत्यस्यान्यथाप्रतीतिनिरासार्थमाह **प्राणेति** ॥

*न०टी०*—सोऽयं समाधिर्नाम । ध्यानं तु ध्यातृप्रयत्नात् । तच्च किदृशं कार्यम् ? इत्याकाङ्क्षोत्तरत्वेनोत्तरं श्लोकमवतार्य व्याचष्टे **ध्यानप्रकारमिति** । **योगेन** उपायेन । कुम्भवदुच्छ्वासनिःश्वासरहितं केवलं वायुपूरणं कं शिरो यस्य शरीरस्य कृतं तत् कुम्भकम् । तत्र स्थित्वेत्यर्थः ॥

*प्र०दी०*— ध्यानिनां मुक्तत्वं साक्षाच्चेत्प्रमाणविरोधः । ज्ञानद्वारा चेत्पुनरुक्तिरित्यतः श्लोकद्वयतात्पर्यमाह— **ध्यानेति** । "मुक्त एव सः" इति स्तुतिरिति भावः । पदानां व्यवहितत्वादन्वयमाह— **बाह्यानिति** । स्पृश्यन्त इति स्पर्शा शब्दाद्याः । स्पर्शा बाह्या एव । तेषां किं बहिष्करणमित्यत आह— **श्रोत्रादीनीति** । योगेन प्रत्याहारेण श्रोत्रादीनामनियमे पद्मभ्यासादरप्रत्ययवशाच्छब्दाद्या अन्तरा इव भवन्ति । तन्नियमे तु बाह्या बहिष्कृताः स्युरिति भावः । 'कृत्वा' इत्यस्यानुवृत्त्या योजयति— **चक्षुरिति** । दुर्घटमेतदित्यत आह— **भ्रुवोरिति** । चक्षुर्वृत्तौ चक्षुःशब्द इत्यर्थः । 'सम्प्रेक्ष्य नासिकाग्रं स्वं' इति वक्ष्यमाणविरोध इत्यत आह— **उक्तं चेति** । न्यूनाधिकभावराहित्यं समीकरणमित्यन्यथाप्रतीतिनिरासायाऽनूद्य व्याचष्टे— **प्राणेति** । कुम्भके प्राणायामे ततश्च समौ निर्विकारौ निश्चलावित्यर्थः । इतरत्समीकरणं कुम्भकार्थमेवेति भावः ॥

*भा०दी०*— **प्रमाणेति** । दृष्ट्वैवं मुच्यत इत्यादिप्रमाणेत्यर्थः । **पुनरुक्तिरिति** । स ब्रह्मयोगयुक्तात्मः सुखमक्षयमश्नुत इत्येवं ध्यानादेर्ज्ञानद्वारा अक्षयसुखहेतुत्वोक्तेरिति भावः । गीतापदस्य निष्कृष्यार्थमाह **ततश्चेति** । तस्यैवार्थो **निश्चलाविति** । **इतरदिति** । न्यूनाधिकराहित्यरूपम् ।

*भा०र०*— **ध्यायिनामिति** । यद्यपि गीतायां 'मुनिः' इत्याद्येकवचनश्रवणाद् अत्रापि 'ध्यायिनः' इति वक्तव्यम् । तथापि 'तद्बुद्धयः' (५.१७) इत्यत्र बहुवचनश्रवणात् तत्रोक्तानामेवात्र "मुक्त एव सः" इति स्तूयमानत्वाद् बहुवचनं प्रयुक्तम् । अत एव "ज्ञानद्वारा चेत् पुनरुक्तिः"

इत्याह । उक्तवाक्याग्रहणे ज्ञानद्वारा ध्यानस्य मोक्षहेतुत्वप्रतिपादनपरवाक्यान्तराभावात् । पुनरुक्त्युद्घाटनायोग इति बोद्धव्यम् । "मुनिर्मुक्तः" इत्याद्येकवचनं तु समुदायाशयमिति भाव इति आहुः । **प्रमाणेति** । "दृष्ट्वेव तं मुच्यते" (कौशि.श्रु.) इत्यादिप्रमाणविरोध इत्यर्थः । **पुनरुक्तिरिति** । "स ब्रह्मयोगयुक्तात्मा सुखमश्नुते" (५.२१) इत्यत्र ध्यानादियुक्तस्यैव ज्ञानद्वाराऽत्मसुखमक्षयम्, नान्यथेति ध्यानादियोगस्याक्षयसुखहेतुत्वोक्तेः पुनरुक्तिरिति **स्वामिनः** । "स्पर्शान् इत्यादिना" (गी.भा.५.२७) इत्यत्रादिपदसङ्ग्राह्योक्तिः **श्लोकद्वयेति** ।

ध्यायिनो अमुक्तस्य "कथं मुक्त एव सः" इति मुक्तत्वमुच्यते ? इत्यत आह **मुक्तमेवेति** । स्तुतावधिकोक्तिः सम्भवतीति हृदयम् । एतेन "ध्यायिनां मुक्तत्वं साक्षाच्चेत् प्रमाणविरोधः" इति दूषणम् अलग्नकं वेदितव्यम् । ननु भाष्ये योगशब्देन यदि कर्मयोगो विवक्षितः, तदा श्रोत्रादिनियमनस्य प्रत्याहारादिसाधनान्तरसाध्यत्वेन कर्मयोगसाध्यत्वाभावाद् बाधः । यदि समाधिः, तदाऽपि तस्य श्रोत्रादिनियमनस्य साध्यत्वेन तत्साधनत्वाभावाद् बाध एव ? इत्यत आह **प्रत्याहारेणेति** । बाह्यानामेव तेषां बहिष्करणं नाम किम् ? इति कृतचोद्यपरिहाराय भाष्यभावमाह **श्रोत्रादीनामिति** । **पट्वभ्यासादरप्रत्ययवशादिति** । अनादिकालानुबद्धत्वाच्छब्दादिविषयेषु श्रोत्रादीनां पटुः **अभ्यासः** आवृत्तिः परिचयः, **आदरः** तत्र सम्प्रीतिः, केषुचिद्विषयेषु तात्कालिकात्यल्पसुखानुकूलत्वानुभवात् **प्रत्ययः** विश्वासश्च, तदायत्तत्वादित्यर्थः । **तन्नियमे** श्रोत्रादीन्द्रियनियमे **बाह्याः** स्वभावतः **बहिष्कृताः** आन्तरत्वाध्यासागोचराः । **योजयति** द्वितीयपादम् । **एतत्** भ्रुवोरन्तरे चक्षुषः करणम् । **चक्षुर्वृत्तौ** चक्षुर्जन्यावलोकने ।

**वक्ष्यमाणविरोधः** यतः "चक्षुश्चैवान्तरे भ्रुवोः" (५.२७) इत्यस्य भाष्ये 'चक्षुः' इत्यस्यावलोकनम् अर्थः । वैकल्पिकत्वान्न विरोध इति भावः । **राहित्यम्** राहित्यापादनम् । "अल्पः कुम्भः कुम्भकः" इत्यादिप्रतीतिनिरासाय 'कुम्भकः' इत्यनूद्यार्थमाह **कुम्भक इति** । तथा च तन्त्रसारे—

> "रेचकः पूरकश्चैव कुम्भकश्च त्रिधा स्मृतः ।
> प्राणायामः ........................................॥" (त.सं. ४.१३८) इति ।

एतावता किन्नाम समीकरणमुक्तम् ? इत्यत आह **ततश्चेति** । कीदृशं निर्विकारत्वम् ? इत्यतस्तद्दर्शयति **निश्चलाविति** । ननु रेचके पूरके च प्राणायामे प्राणापानयोः समीकरणमस्ति । तन्त्रसारे—

"द्विगुणोत्तरं रेचकादि षोडशादिक्रमेण तु ।
मात्राणां ह्रस्ववर्णस्य कालो मात्रेति शब्द्यते ।
क्रमेणैवाभ्यसेन्मात्रावृद्धिमेकाग्रधीः पुनः ॥" (तं.सा. ४.१४८,१४९)

इति षोडश-द्वात्रिंशदादिसङ्ख्याया अन्यूनानतिरिक्तायाः समशब्दार्थत्वावेदनात्, अत्र च तस्यैव समीकरणशब्दार्थत्वसम्भवेन तस्यैव "प्राणापानौ समौ कृत्वा" (५.२७) इत्यत्रापि ग्रहणमस्तु ? इत्यत आह **इतरदिति** ॥ निश्चलत्वरूपसमीकरणादितरत् । न्यूनाधिकभावराहित्य-रूपसमीकरणं कुम्भकप्राणायामनिष्पादनार्थमेव शास्त्रे विहितम् । कुम्भकप्राणायाम एव तु प्रकृत-ध्यानोपयोगीति भावः । तथा चतुर्थाध्याये "अपाने जुह्वति प्राणम्" (४.२९) इति गीताभाष्य-व्याख्यानटीका— "पूरकरेचकयोः कुम्भकार्थत्वेन पृथक् प्राणायामत्वाभावाच्च" (प्र.दी. ४.२९) इति ॥ २७-२८ ॥

***गीताश्लोकद्वयाक्षरार्थस्तु***— ब्रह्मयोगादिपदेन प्रकृतध्यानप्रकार उच्यते **स्पर्शानिति** । स्पृश्यन्त इति **स्पर्शाः** शब्दाद्या विषयाः । तेषाम् आत्मस्वरूपसुखाभिभावकत्वाद् बाह्यत्वम् । **बाह्यान् स्पर्शान् बहिः** श्रोत्रादीन्द्रियाविषयान् कृत्वा प्रत्याहारेण श्रोत्रादीन्द्रियाणि नियम्येति यावत् । श्रोत्रादीनामनियमे पञ्चभ्यासादरप्रत्ययवशाच्छब्दाद्या आन्तरा इव भवन्ति । तन्नियमे तु बाह्याः = बहिष्कृताः स्युरिति तन्नियमो ध्यानाङ्गमिति भावः । **भ्रुवोरन्तरे** मध्ये **एव चक्षुः** चाक्षुषमवलोकनं कृत्वा "दिशश्चानवलोकयन्" (६.१३) इति वक्ष्यमाणत्वात् भ्रूममध्यमेवाव-लोकयन्नित्यर्थः । तेन "चक्षुरन्तरे भ्रुवोः कृत्वा" इति दुर्घटमिति चोद्यं निरस्तम् । "सम्प्रेक्ष्य नासिकाग्रं स्वम्" (६.१३) इति षष्ठे वक्ष्यमाणविरोधस्तु "नासाग्रे वा भ्रुवोर्मध्ये ध्यानी चक्षु-र्निधायपयेत्" इति भाष्ये वैकल्पिकत्वेन निरस्तः । तथा **प्राणापानौ नासाभ्यन्तरचारिणौ समौ** निर्विकारौ निश्चलौ कृत्वा, कुम्भकप्राणायामे स्थापयित्वेति यावत् ॥ २७ ॥

यतेन्द्रियमनोबुद्धिः नियतानीन्द्रियाणि मनो बुद्धिश्च यस्य स तथोक्तः । **मुनिः** मननशीलः । मोक्षः **परम् अयनं** परा गतिर्यस्य स **मोक्षपरायणः** । विगता इच्छा भयं च क्रोधश्च यस्मात्स विगतेच्छाभयक्रोधः । 'सदा' इति सर्वत्रान्वेति । भवेत् । एवम्भूतो यः साधकः स मुक्त एवेति स्तुतिः । एवं ध्यानं ज्ञानद्वारा मुक्तिहेतुत्वाद् अवश्यं आपादनीयमिति स्तुतितात्पर्य-मिति ॥ २८ ॥

**गीता**

**भोक्तारं यज्ञतपसां सर्वलोकमहेश्वरम् ।**
**सुहृदं सर्वभूतानां ज्ञात्वा मां शान्तिमृच्छति ॥ २९ ॥**

*इति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे कर्मसंन्यासयोगो नाम पञ्चमोऽध्यायः ॥*

*वि०वि०*— ध्येयमाह **भोक्तारमिति** । ज्ञात्वेत्यस्य ध्यात्वेत्यर्थः । शान्तिसाधनत्वमपि भोक्तृत्वादिवत् ध्येयविशेषणमेव । एवं सर्वत्राप्रसिद्धोपादानं द्रष्टव्यम् ॥

*॥ इति श्रीमद्भगवद्गीताविवृतौ श्रीमज्जयतीर्थशिष्य–विद्याधिराजभट्टोपाध्यायविरचितायां श्रीमन्मध्वमतानुवर्तिन्यां पञ्चमोऽध्यायः ॥ ५ ॥*

*सा०सं०*— ध्यानमुक्त्वा ध्येयमाह **भोक्तारमिति** । **यज्ञो** ज्योतिष्टोमादिः । **तपः** कृच्छ्र-चान्द्रायणादिः । महांश्चासावीश्वरश्च महेश्वरस्तम् । **सुहृदम्** उपकारिणम् । **शान्तिं** शान्ति-साधनम् । मुक्तिहेतुमिति ईश्वरविशेषणम् । **ज्ञात्वा** ध्यात्वेत्यर्थः । **ऋच्छति** साक्षात्करोतीत्यर्थः ॥

*॥ इति श्रीमत्सर्वतन्त्रस्वतन्त्रश्रीसुधीन्द्रगुरुपादशिष्येण राघवेन्द्रेण कृते श्रीमद्गीतार्थसङ्ग्रहे पञ्चमोऽध्यायः ॥*

*अ०प्र०*— न चैवं इन्द्रियादिसंयममात्रेण कथं मुक्तः स्यान्न तावन्मात्रेण । किन्तु ज्ञान-द्वारेणेत्याह **भोक्तारमिति** ।

अथान्वयः— यज्ञतपसां[१], भोक्तारं[२], सर्वभूतमहेश्वरं[३], सर्वभूतानां[४], सुहृदं[५], एतादृशं मां[६], ज्ञात्वा[७], शान्तिं[८], ऋच्छतीत्यन्वयः ॥

यज्ञानां तपसां च स्वभक्ते समर्पितानां[१], तदिच्छया भोक्तारं = पालकमिति वा[२], सर्वभूतमहेश्वरं = सर्वेषां भूतानां महतं ईश्वरं[३], सर्वभूतानां = सुहृदं सर्वभूतान्तर्यामिणं[५], एतादृशं मां ज्ञात्वा = मत्प्रसादेन[७], शान्तिं = मोक्षं[८], ऋच्छति = प्राप्नोतीत्यर्थः[९], यद्वा, राघवेन्द्रयतिभिः ज्ञात्वा ध्यात्वा शान्तिसाधनज्ञानविषयत्वमपि भोक्तृत्वादिकं यथा तथा ध्येयविशेषणमेव । शिष्टं स्पष्टम् ॥ २९ ॥

*इति श्रीमद्भगवद्गीताया विवरणे अन्वयप्रकाशिकायां पञ्चमोऽध्यायः ॥*

**भाष्यम्**

**ध्येयमाह— भोक्तारमिति ॥ २९ ॥**

*इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते*
*श्रीमद्भगवद्गीताभाष्ये पञ्चमोऽध्यायः ॥*

***प०टी०***— ध्यानस्य ध्येयसापेक्षत्वात् किं ध्येयम् ? इत्याशङ्क्य, उत्तरश्लोकमवतारयति **ध्येयमिति** । 'ज्ञात्वा' इत्यस्य ध्यात्वेत्यर्थः ॥

*॥ इति श्रीपद्मनाभतीर्थभट्टारकविरचित श्रीमद्भगवद्गीताभाष्यभावप्रदीपिकायां*
*पञ्चमोऽध्यायः ॥*

***न०टी०***—ध्यानस्य ध्येयसापेक्षत्वात् तमुत्तरश्लोकेनाचष्टे, न ज्ञेयमात्रमिति भावेनाह **ध्येयमिति** । ध्यानं नाम निरन्तरमेकविषयज्ञानसन्तानम् । ततश्च 'ज्ञात्वा माम्' इत्यस्य ध्यात्वा मामित्यर्थ उक्तो भवति ॥

*॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितश्रीगीताभाष्यटीकायां श्रीनरहरितीर्थभट्टारककृतौ*
*भावप्रकाशिकायां पञ्चमोऽध्यायः ॥*

***प्र०दी०***— भगवज्ज्ञानस्य शान्तिसाधनत्वं पुनः किमर्थमुच्यत इत्यत आह— **ध्येयमिति** । ततश्च 'ज्ञात्वा' इत्यस्य ध्यात्वेत्यर्थः । शान्तिसाधनज्ञानत्वमपि भोक्तृत्वादिवत् ध्येयविशेषणमेवेति भावः ॥

*इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य*
*श्रीमद्गीताभाष्यस्य टीकायां जयतीर्थमुनिविरचितायां प्रमेयदीपिकायां*
*पञ्चमोऽध्यायः समाप्तः ॥ ५ ॥*

***भा०दी०***— नन्वेवमपि ध्यात्वा शान्तिं पृच्छतीति ध्यानफलमेव प्राप्तम्, न तु ध्येय-महिमेत्यत आह **शान्तिसाधनज्ञानत्वमपीति** ।

*इति श्रीगीताभाष्यटीकायाः प्रमेयदीपिकायाः टिप्पण्यां*
*श्रीराघवेन्द्रयतिकृतायां भावदीपे पञ्चमोऽध्यायः ॥*

*भा०र०*— **पुनरिति** । "स शान्तिमाप्नोति न कामकामी" (२.७०), "निर्ममो निरहङ्कारः स शान्तिमधिगच्छति" (२.७१) इति द्वितीये, "श्रद्धावान् लभते ज्ञानं मत्परः संयतेन्द्रियः । ज्ञानं लब्ध्वा परां शान्तिमचिरेणाधिगच्छति" (४.३९) इति चतुर्थे च भगवद्ध्यानस्य शान्तिसाधनत्व-मुक्तमिति 'पुनः' इत्युक्तम् । **ध्येयं** ध्यानकमर्हिति भाषितम् । न चात्र ध्यानवाचकं पदमस्ति इत्यत आह **ततश्चेति** । ध्यानं नाम निरन्तर एकविषयकज्ञानसन्तानः । ततश्च 'ज्ञात्वा' इत्यस्य 'ध्यात्वा' इत्यर्थो युक्त एवेति भावः । नन्वेवं सति "मां ध्यात्वा शान्तिमृच्छति" इति ध्यानस्य मोक्षफलकत्वमुक्तं स्यात् । तदयुक्तम् । तस्य ज्ञानसाध्यतायाः "तमेवं विद्वानमृत इह भवति" (तै.आ. ३.१२), "दृष्ट्वैव तं मुच्यते नापरेण" (कौ.श्रु.), विद्यैव तु निर्धारणात्' (ब्र.सू. ३.३.४८) इत्यादौ स्थितत्वात् । अतो "ज्ञात्वा माम्" इति यथाश्रुतमेव साधु । **तथा च सङ्करः** "समाहितचित्तेन विज्ञेयमत्रोच्यत इति" इत्यत आह **शान्तिसाधनत्वमपीति** । "चक्षुश्चैवान्तरे भ्रुवोः" (५.२७) इत्यादि ध्यानाङ्गोक्त्या, "अथेदानीं ध्यानयोगं सम्यग्दर्शनस्यान्तरङ्गं विस्तरेण भगवानुपदिशति" इति **सङ्करेण** भाषितत्वेन च ध्यानस्य प्रकृतत्वात्, तस्य च ध्येयसापेक्षत्वेन ध्येयविशेषणोक्तेरुचितत्वाच्छान्तिपदेनोक्तं शान्तिसाधनत्वं ध्येयविशेषणमिति युक्तं 'ध्येयमाह' इति भाष्यमिति भावः ॥ २९ ॥

*गीताक्षरार्थस्तु*— उक्तध्यानस्य ध्येयसापेक्षत्वादत्र ध्येयमुच्यते **भोक्तारमिति** । **यज्ञतपसाम्** "स एष यज्ञः पञ्चविधोऽग्निहोत्रं दर्शपूर्णमासौ चातुर्मास्यानि पशुः सोमः" (ऐ-प्र.२,अ.२,ब्रा.३, मं.३) इत्यादिशास्त्रोक्तानाम् अग्निहोत्रादियज्ञानाम्, **तपसाम्** कृच्छ्रचान्द्रायणादिरूपाणां च **भोक्तारं सर्वलोकमहेश्वरम्** सर्वेषां लोकानां महान्तमीश्वरं **सर्वभूतानां सुहृदम्** प्रत्युपकारानपेक्षयोपकारिणं **शान्तिं** मोक्षसाधनं **मां** भगवन्तं **ज्ञात्वा** ध्यात्वा **ऋच्छति** साक्षात्करोतीति ॥ २९ ॥

श्रीमद्गीताभाष्यटीकापञ्चमाध्यायसेवया ।
गुणिनः परितुष्यन्तु गुणग्रहणभूषणाः ॥

*॥ इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमत्सुरेन्द्रतीर्थपूज्यपादशिष्यश्रीमत्सुमतीन्द्रभिक्षुविरचितायां श्रीमद्भगवद्गीताभाष्यटीकाव्याख्यायां भावरत्नकोशसमाख्यायां पञ्चमोऽध्यायः ॥*

**गीतातात्पर्यनिर्णयः**

"अमुक्तो मुक्तसादृश्यान्मुक्त एव हि तत्त्वदृक् ।
किमु मुक्तिगतस्तस्माज्ज्ञानमेवाधिकं नरे ॥"

—इति नारदीये ॥ २८-२९ ॥

*॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमद्भगवद्गीतातात्पर्यनिर्णये पञ्चमोऽध्यायः ॥*

*प्रका०*— "विगतेच्छाभयक्रोधः यः सदा मुक्त एव सः" इत्येतस्यार्थमाह **अमुक्त इति** ॥

*इति श्रीमदानन्दतीर्थभगवत्पादविरचितस्य श्रीमद्गीतातात्पर्यनिर्णयस्य प्रकाशिकायां पद्मनाभतीर्थविरचितायां पञ्चमोऽध्यायः ॥*

*न्या०दी०*— ब्रह्मयोगादिपदेन प्राकृतध्यानप्रकार उच्यते "स्पर्शान्" इति । तत्र ध्यानिनोऽमुक्तस्य कथं "मुक्त एव सः" इति मुक्तत्वमुच्यत इत्याशङ्कां स्मृत्यैव परिहरति **अमुक्त इति** ॥ मुक्तसादृश्यमभिमानादिपरित्यागः । मुक्त एवोच्यत इति शेषः । यस्मात् ज्ञानसामर्थ्येन एवं फलं भवति तस्मात् ॥

*इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य श्रीमद्भगवद्गीतातात्पर्यनिर्णयस्य टीकायां जयतीर्थमुनिविरचितायां न्यायदीपिकायां पञ्चमोऽध्यायः समाप्तः ॥*

*भा०दी०*— **ब्रह्मयोगादीति** । "स ब्रह्मयोगयुक्तात्मे"त्यत्रत्यब्रह्मयोगपदेनेत्यर्थः । आदिपदेन ब्रह्मणि स्थितो ब्रह्मभूत इत्यादेर्ग्रहः । मुक्त एवेत्यनूद्योच्यत इति शेषमाह **इति शेष इति** । यद्वा मुक्तिगत इत्यनन्तरं मुक्त एवोच्यत इति शेषोक्तिः । दुर्गमत्वात् तच्छब्दार्थं व्यनक्ति **यस्मादिति** ॥

*॥ इति श्रीमद्गीतातात्पर्यटीकाभावदीपे राघवेन्द्रयतिकृते पञ्चमोऽध्यायः ॥*



॥ श्रीः ॥

॥ श्रीवेदव्यासाय नमः ॥

॥ श्रीमदानन्दतीर्थगुरुभ्यो नमः ॥

# श्रीमद्-भगवद्गीता

## अथ षष्ठोऽध्यायः

गीता

**श्रीभगवानुवाच—**

**अनाश्रितः कर्मफलं कार्यं कर्म करोति यः ।**
**स संन्यासी च योगी च न निरग्निर्न चाक्रियः ॥ १ ॥**

*वि०वि०—* 'योगे त्विमां शृणु' इति प्रतिज्ञातयोगश्च कर्मयोगो ध्यानयोगश्चेति द्विविधो भवति । तत्र सङ्क्षेपविस्ताराभ्यां कर्मयोगो निरूपितः । ध्यानयोगप्रकारश्च सङ्क्षेपेण पञ्चमान्ते निरूपितो विस्तरेणास्मिन्नध्याये उच्यते । प्रकृतं ध्यानमग्न्याधानादिपरित्यागेन निःसङ्गतया वर्तमानस्य भवतीति केचित् । तन्निरासार्थमीश्वराराधनस्वकर्मानुष्ठानलक्षणेन योगेन सह ध्यानाधिकारिविशेषणं कामादिवर्जनलक्षणं संन्यासमाह **अनाश्रित इति** । यः फलकामनारहितः कर्तव्यं स्ववर्णाश्रमोचितं कर्म करोति स संन्यासी च योगी च । निरग्निः संन्यासी योगी च न भवति । अक्रियश्च । तथा स ब्रह्मनिष्ठस्तु 'यतिर्महात्मा शारीरमग्निं च मुखे जुहोति' इत्यादेर्यत्याश्रमस्वीकारकाले पूर्वाश्रम-स्वीकृताग्नेः आत्मनि समारोपणात् । दैवमेवापरे यज्ञम्' इत्यग्निक्रिययोरभिधानाच्च न यतीनामग्नि-क्रिययोरभावः । अनग्नित्वादिप्रवादश्च बाह्याग्न्याद्यभावनिबन्धन इति बोद्धव्यम् ॥

*सा०सं०—* 'बुद्धिर्योगे त्विमां शृणु' (२-३९) इति योगवचनं प्रतिज्ञातं द्वितीये । स च योग उत्तरषट्के वक्ष्यमाणभगवज्ज्ञानं प्रति उपायः । स च द्विविधः । कर्मयोगो ध्यानयोगश्चेति । तत्र कर्मयोगो ज्ञानं प्रति बहिरङ्गोपायत्वात् 'त्रैगुण्यविषया वेदा' (२-४५) इत्यादिना द्वितीये सङ्क्षेपेण तृतीयाध्यायादावतीतग्रन्थे विस्तरेण च पूर्वं निरूपितः । अधुना कर्मयोगसाध्यत्वा-

द्वक्ष्यमाणज्ञानान्तरङ्गसाधनत्वाच्च अवसरप्राप्तं समाधियोगं 'स्पर्शान्' (५-२७) इत्यादिना पूर्वाध्यायान्ते सङ्क्षेपेण प्रकृतं विस्तरेणास्मिन्नध्याये वक्ति ।

आसनादीनामङ्गानां वक्ष्यमाणत्वेऽपि तेषां ध्यानार्थत्वेन ध्यानस्यैव प्राधान्यात् । 'उद्धरेदात्मनाऽऽत्मानम्' इत्यादिना ध्यानयोगं विधातुं तत्र ध्याने संन्यासयोगयुक्त एवाधिकारीति ज्ञापनाय कामादिवर्जनरूपसंन्यासं ईश्वराराधनरूपस्वकर्मानुष्ठानलक्षणयोगं चाह **अनाश्रित इति** । **यः कर्मफलमनाश्रितः कार्यं** स्वस्ववर्णाश्रमोचिततया कर्तव्यं **कर्म करोति । स संन्यासी योगी च** स एव च ध्यानाधिकारीति भावः । आहवनीयाद्यग्नित्यागेन अग्निहोत्रादिक्रियात्यागेन च निःसङ्गतया वर्तमान एव ध्यानाधिकारीति साङ्ख्यमतमपाकरोति **नेति** । निरग्निरक्रियश्च संन्यासी योगी च नेत्यर्थः । यतेरपि 'दैवमेवापरे यज्ञम्' (४-२५) इत्यादिनाऽग्निक्रिययोरुक्तत्वात् संन्यासाश्रमस्वीकारकाले पूर्वाश्रमस्वीकृताग्नेरात्मनि समारोपणाच्च सोऽपि संन्यासी योगी च भवत्येवेति भावः ॥

***अ०प्र०— अ०प्र०—*** 'योगे त्विमां शृण्वि'ति योगः प्रतिज्ञातः सिद्धः कर्मयोगो ध्यानयोगश्चेति । तत्र कर्मयोगः सङ्क्षेपविस्तराभ्यां पूर्वाध्याये निरूपितः । ध्यानप्रकारश्च सङ्क्षेपेण पञ्चमान्ते उक्तः । अत्र षष्ठाध्याये विस्तरेण निरूप्यते । प्रकृतध्यानमग्न्यादिपरित्यागेन निःसङ्गतया वर्तमानस्य यतेः भवतीति केचित् । तन्निरासार्थं ईश्वराराधनस्वविहितकर्मानुष्ठानरूपो कर्मयोगेन सह ध्यानादिकारणविशेषणं संन्यासमाह । यद्वा, पूर्वाध्यायान्ते सङ्क्षेपेणोक्तं योगं प्रपञ्चयितुं षष्ठाध्यायप्रारम्भः । तत्र तावत्सर्वकर्माणि मनसा संन्यस्तेत्यारभ्य संन्यासपूर्विकाया ज्ञाननिष्ठायाः तात्पर्येणाभिधानात् दुःखरूपत्वाच्च कर्मणा सह संन्यासातिप्रसङ्गं निवारयितुं संन्यासादपि श्रेष्ठत्वेन कर्मयोगं स्तौति **अनाश्रितेति** द्वाभ्याम् ।

अथान्वयः— यः[१], कर्मफलं[२], अनाश्रितः सन्[३], कार्यं कर्म करोति[६], सः[७], संन्यासी[८], सैव योगी च[९], यः निरग्निकः[१०] यः अक्रियश्च[११] सः संन्यासी न भवति[१२] योगी च न भवतीत्यन्वयः ॥

यः = पुरुषः[१], कर्मफलं = यज्ञादीनां ज्योतिष्टोमादि फलं[२], अनाश्रितः = श्रीकृष्णपरमात्मनि अर्पितत्वात् अनपेक्षमानः कामनारहितो वा[३], एवम्भूतः सन् कार्यं कर्म = अवश्यकर्तव्यतया विहितं स्ववर्णाश्रमोचितं कर्म[४], करोति[६], सः संन्यासी = सः निरभिमानत्वेन विहितकर्माणि कृत्वा ईश्वरे न्यस्तत्वात्संन्यासीत्यभिप्रायः सैव संन्यासी[८], सैव योगी च = कर्मफलमीश्वरे समर्पितत्वात्प्रसादेन

भक्तिवैराग्यसाधनद्वारा ज्ञानप्राप्तिं गच्छतीति सैव योगी चेत्यभिप्रायः[९]। यः निरग्निकः = वैश्वदेवाग्निहोत्रयज्ञादिकर्मरहितः[१०] यः अक्रियश्च = देवऋषिपितृतर्पणादि नित्यनैमित्तिकक्रियारहितश्च[११] सः संन्यासी न भवति[१२], योगी च न भवतीत्यर्थः ! यद्वा संन्यासमात्रेण शमदमादिसाधनेन विना संन्यासी न भवतीति भावः । योगिनः योगोऽतीव दुष्करः, तत्साधनं विना कर्मत्यागमात्रेण योगी न भवतीत्यभिप्रायः । यद्वा न निरग्निः अग्निहोत्रादिकर्माणि बन्धकानीति त्यक्त्वा संन्यासमात्रेण संन्यासी न भवति । तत्र कर्माभावादक्रिय इति अज्ञाः प्रवदन्ति । न चाक्रियः संन्यासमात्रेण प्राकृतदृष्टेरक्रियोऽपि संन्यासी न भवति । तत्र तस्य आश्रमविहितकर्माचरणत्वात् अग्निहोत्रादिकर्मसु अक्रियोऽपि स्वानुभवेन निष्कर्मसंन्यासी ज्ञानी न भवति ॥ १ ॥

**भाष्यम्**

**ज्ञानान्तरङ्गं समाधियोगमाह अनेनाध्यायेन । विवक्षितं संन्यासमाह योगेन सह अनाश्रित इति । चतुर्थाश्रमिणोऽप्यग्निः क्रिया चोक्ता 'दैवमेव' इत्यादौ ॥**

**"अग्निर्ब्रह्म च तत्पूजा क्रिया न्यासाश्रमे स्मृता" इति च ॥**

**तस्मान्निरग्निरक्रियः संन्यासी योगी च न भवत्येव ॥ १ ॥**

***प०टी०***— एतदध्यायार्थं दर्शयति **ज्ञानेति** । आद्यषट्कस्य प्राधान्येन साधनपरत्वात्, साधनेषु च ध्यानयोगस्य मुख्यत्वादसावेव कथ्यत इत्यर्थः । समाधियोगश्च सर्वकर्मप्रहाणे शनैर्भवतीति मन्दाशङ्कानिवारकतयाऽऽद्यश्लोकमवतारयति **विवक्षितमिति** । निष्कामकर्मिणामेव योगित्वात् संन्यासित्वाच्च तेषामेव समाधियोगो न निरग्नेरक्रियस्यापीत्यर्थः । यतीनामग्न्याद्यभावात् कथं 'न निरग्निः' इत्याद्युच्यते ? इत्यत आह **चतुर्थेति** । चतुर्थाश्रमिणोऽप्यग्न्यादिसद्भावो यस्मात् तस्मात् 'न निरग्निः' इति युक्तमेवेत्याह **तस्मादिति** ॥

***न०टी०***—प्राधान्येन साधनप्रतिपादनपर आद्ये षट्के पूर्वाध्यायोक्तज्ञानादिसर्वसाधनसापेक्षत्वात् स्वयमपरोक्षज्ञानान्तरङ्गत्वाच्च षष्ठ एव समाधियोगः प्रतिपादनीय इति भावेनाध्यायार्थमाह **ज्ञानान्तरङ्गमिति** । अत्र केचिदाहुः । यावद्यावत्कर्मभ्य उपरमते तावत्तावन्निरायासस्य जितेन्द्रियस्य चित्तं समाधीयत इति समाधियोगः सर्वकर्मसंन्यासिनः चतुर्थाश्रमिण एव घटते । न तु यः पूर्वाध्यायविवक्षितः संन्यासः कर्मयोगसहितः, तद्वतः । तस्य चित्तसमाधानविरोधित्वादिति । तन्निराकरोतीति भावेनाद्यं श्लोकमवतारयति **विवक्षितमिति** । समाधियोगवतोऽपि पूर्वाध्याय-

विवक्षितं कर्मयोगसहितं कामसङ्कल्पत्यागादिलक्षणमेव संन्यासमाह । न तु सर्वकर्मसंन्यास-मित्यर्थः । तथाहि श्लोकार्थः । 'अनाश्रितः कर्मफलम्' इति । यः पूर्वाध्यायोक्तः कामसङ्कल्पादि-त्यागवान् संन्यासीत्युच्यते । कार्यं कर्म करोतीति यस्तत्रोक्तः कर्मयोगी च, स एव चतुर्थाश्रमवान् समाधियोगवांश्च । यस्तु निरग्निरक्रियश्च स न चतुर्थाश्रमी । विहितपरित्यागेनेश्वरप्रकोपवान्, न समाधियोगवांश्चेति । ननु चतुर्थाश्रमिणो निरग्नित्वाक्रियत्वेनैव वेदादिसिद्धत्वात् कथं निरग्निरक्रियः संन्यासी योगी च न भवति ? इत्यत आह **चतुर्थेति** । 'दैव'शब्दोक्तब्रह्मोपासनं यथा यज्ञो भवति तथोपासत इति व्याख्यातत्वाद्ब्रह्मैवाग्निः, तदुपासनं क्रियेत्यर्थः । प्रकटं वाऽन्यत्रोक्तमित्याह **अग्नि-रिति** । अनग्नित्वाक्रियत्वप्रसिद्धिस्तु बाह्याग्न्यभावात्, बाह्यकर्मसङ्कोचाच्च । एवमविरुद्धत्वादयमेव श्लोकार्थ इति भावेन तच्छेषं व्याचष्टे **तस्मादिति** । एतेनैतदप्यपास्तम् । यदाह मायी— 'न केवलं निरग्निरक्रिय एव संन्यासी योगी च । किन्तु फलानपेक्षया कर्मकृदपीत्यकाम्यकर्म स्तूयते' इति । अनध्याहारेण प्रतीयमानमुख्यार्थोपपत्तौ, अप्रतीयमानाध्याहारेण स्तुतिमात्रकल्पनायोगादिति भावः ॥

***प्र०दी०***— सङ्गतिं सूचयन् एतदध्यायप्रतिपाद्यमर्थमाह— **ज्ञानान्तरङ्गमिति** । ''योगे त्विमां शृणु'' इति प्रतिज्ञाय द्वितीयषट्के वक्ष्यमाणं भगवज्ज्ञानं प्रति कर्मयोगस्य बहिरङ्गत्वात् स प्राधान्येनातीते ग्रन्थे प्रतिपादितः । तत्साध्यत्वाज्ज्ञानान्तरङ्गत्वाच्चावसरप्राप्तं समाधियोगमाह अनेन षष्ठाध्यायेनेत्यर्थः । आसनादीनामङ्गानां वक्ष्यमाणत्वेऽपि तेषां समाध्यर्थत्वात्प्राधान्येन समाधियोगस्य ग्रहणम् । पञ्चमान्तोक्तस्य प्रपञ्चोऽयमित्यदोषः ।

गृहस्थस्यापि स्तुत्यर्थमुपचरितं संन्यासित्वं योगित्वं चाऽद्येन श्लोकेन उच्यत इति परकीय-तात्पर्यकथनमसदिति भावेनाह— **विवक्षितमिति** । समाधियोगं विधातुं तत्राधिकारिणं ज्ञापयिष्यन् साङ्ख्याद्यभिमततदधिकारिनिरासाय तद्विशेषणं प्राग्विवक्षितं कर्मादिवर्जनलक्षणं संन्यासमीश्वरा-राधनस्वकर्मानुष्ठानलक्षणेन योगेन सहाऽऽहेत्यर्थः । यदि हि संन्यासो यत्याश्रमोऽत्र विवक्षितः स्याद्योगश्च कश्चिद्गृहस्थासम्भवी स्यात्, तदोपचारेण तत्स्तुतिरियम् । न चैवमिति भावः ।

न केवलं निरग्निरक्रियश्चतुर्थाश्रमिसंन्यासी योगी च किन्त्वनाश्रित इत्याद्युक्तो गृहस्थोऽपीति परकीयां योजनां निराकरोति— **चतुर्थेति** । अत्रैव स्पष्टं वाक्यान्तरं पठति— **अग्निरिति** । चस्त्वर्थः । अतो न परकीया योजना युक्तेति शेषः । तर्हि कथमित्यत आह— **तस्मादिति** । परकृतयोजनायाः निरस्तत्वात् । ननु निरग्नेरक्रियस्य चतुर्थाश्रमिणोऽपि संन्यासित्वाद्योगित्वाच्च कथं न निरग्निरित्याद्युक्तमित्यतो वाऽऽह— **चतुर्थाश्रमिणोऽपीत्यादि** । न भवत्येवेति युक्तमिति शेषः । अनग्नित्वादिप्रवादश्च बाह्याग्न्याद्यभावनिबन्धन इति भावः ॥ १ ॥

*भा०दी०*— भाष्यमित्युपलक्षणं मत्वा आह **तत्साध्यत्वादिति** । स्पर्शान्कृत्वेत्यत्र कर्मयोगसाध्यत्वादित्यर्थः । ध्यानयोगस्योक्तत्वात् पुनरुक्तिदोषमाशङ्क्याह **पञ्चमीति** । **विधातुमिति** । योगी युञ्जीतेत्यादिनेति योज्यम् । प्राग्विवक्षित ज्ञयः सन्नित्यसंन्यासीत्यत्रेति भावः । ननु कर्महीनकर्मानुमानयोगः कामवर्जनाख्यसंन्यासः योगेन सहेति कथमित्यत्रोक्तयोगशब्द एकदेशपर इति भावेनाह **ईश्वरेति** । **चस्त्वर्थ इति** । अग्निस्तु ब्रह्म । क्रिया तु तत्पूजेति योजनेति भावः ॥

*भा०र०*— **सङ्गतिं सूचयन्निति** । ज्ञानपदेन वक्ष्यमाणग्रन्थप्रतिपाद्यज्ञानरूपार्थेन योगेन चैतदध्यायार्थसमाधियोगस्य साध्यसाधनभावलक्षणां सङ्गतिं सङ्क्षेपेण ज्ञापयन्नित्यर्थः । तामेवाह **योग इत्यादिना** । प्रतिज्ञाय प्रतिपादित इति सम्बन्धः । **बहिरङ्गत्वात्** मनःशुद्ध्यादिद्वारा साधनत्वात् । तथा च आहुः "कर्मभिः शुद्धसत्त्वस्य" इति, "प्राचीनाचीर्णपुण्योच्चयचतुरतराचारतश्चारुचित्तान्" (वा.स्तु. श्लो.३४) इति च । **तत्साध्यत्वात्** कर्मयोगसाध्यत्वात् । **ज्ञानान्तरङ्गत्वात्** भगवज्ज्ञानं प्रत्यावश्यकसाधनत्वात् **समाधियोगमिति** ।

यद्यपि तात्पर्यनिर्णये "ध्यानमत्रोच्यते" (गी.ता. ६.१) इति ध्यानमध्यायार्थ इत्युक्तम् । तद्व्याख्यानं कृतं न्यायदीपिकायाम् " 'योगे त्विमां शृणु' (६.३९) इति प्रतिज्ञातम् । योगश्च कर्मयोगो ध्यानयोगश्चेति द्वेधा भवति । तत्र सङ्क्षेपविस्तराभ्यां कर्मयोगो निरूपितः । ध्यानयोगप्रकारश्च सङ्क्षेपेण पञ्चमान्ते निरूपितः । विस्तरेणास्मिन्नध्याय उच्यते" इति । अत्र तु समाधियोगो अध्यायार्थ उच्यते । ध्यानसमाधी च भिन्नलक्षणौ । यथोक्तं तन्त्रसारे—

"खण्डस्मृतिर्धारणा स्यादखण्डा ध्यानमुच्यते ।
अप्रयत्नात्समाधिश्च ................................॥" (तं.सा. ४.१५७) इति ।

**पञ्चमान्तप्राचीनटीकायां च** "सर्वदा सर्वत्र ध्यातृप्रयत्नं विना स्वयमेव कृपया आत्मन्यभिव्यक्तस्य भगवतो मनसाऽवलोकनं समाधिः । ध्यानं तु ध्यातृप्रयत्नसाध्यम्" इति । तथाप्यवान्तरसूक्ष्मवैलक्षण्यं अनालक्ष्योभयोरेकत्वमभिसन्धाय एवमुक्तमित्यविरोधः । तथा च "सोपासना च द्विविधा" (अ.व्या. ३.३.५२ श्लो.) इत्यत्र सुधा— "ध्यानसमाध्योरनतिभिन्नत्वाद् ध्यानशब्देन समाधिरपि गृह्यते" इति । 'आसनादीनाम्' इत्यादिपदेन स्वनासाग्रावलोकन-दिगनवलोकन-प्रशान्तात्मत्व-ब्रह्मचर्य-मनःसंयमनादीनां ग्रहणम् । नन्वेवं ध्यानसमाध्योरेकत्वे ध्यानयोगस्य "स्पर्शान् कृत्वा बहिर्बाह्यान्" (५.२७) इति पञ्चमान्ते कथितत्वान्नात्र स वक्तव्यः, पौनरुक्त्यापत्तेः ? इत्यत आह **पञ्चमान्तोक्तस्येति** । तत्र सङ्क्षेपेणोक्तस्यात्र विस्तरेण निरूपणान्नोक्तदोष इति भावः ।

**परकीयतात्पर्यकथनमिति** । तथा च **सङ्करः** ''प्रतिपन्नगार्हस्थ्यस्याग्निहोत्रादिकर्म फलनिरपेक्षमनुष्ठीयमानं ध्यानयोगारोहणसाधनत्वं सत्त्वशुद्धिद्वारेण प्रतिपद्यत इति 'संन्यासी च योगी च' इति स्तूयते'' (शां.भा. ६.१) इति । **विधातुम्** ''उद्धरेदात्मनाऽत्मानम् (६.५) इत्यनेन'' इति शेषः । **तद्विशेषणं** समाधियोगाधिकारिविशेषणम् । प्राक् ''ज्ञेयस्स नित्यसंन्यासी'' (५.३) इत्यत्र । ननु कामहीनं कर्मानुष्ठानं योगः । तथा च कामवर्जनाख्यं संन्यासं योगेन सहाहेति कथमुच्यते ? इत्यतोऽत्र योगशब्देन तदेकदेशो गृह्यत इति भावेनाह **ईश्वरेति** । परकीयतात्पर्यकथनस्यासत्त्वं भाष्यभावोक्त्या स्पष्टयति **यदि हीति** । **स्तुतिरियम्** ''इति तात्पर्यं कथनीयं स्यात्'' इति शेषः ।

''न केवलं निरग्निरक्रिय एव संन्यासी योगी च, किं तर्हि ? कर्म्यपि कर्मफलासङ्गं संन्यस्य कर्मयोगमनुतिष्ठन् संन्यासी योगी च भवतीति स्तूयते'' (शां.भा. ६.१) इति **सङ्करभाष्यं** सार्थमनुवदति **न केवलमिति** । अत्रैव चतुर्थाश्रमिणोऽप्यग्निः क्रिया चास्तीत्यत्रैव । 'दैवमेव'' (४.२५) इत्यस्योक्तार्थत्वे विप्रतिपद्यमानं प्रति वाक्यान्तरं पठतीत्यर्थः । **च इति** । ''क्रिया तु ब्रह्मपूजा'' इति चशब्दस्तुशब्दार्थ इत्यर्थः । ''इति च'' इत्यनन्तरं शेषमाह **अत इति** । ''चतुर्थाश्रमिणोऽप्यग्निः क्रिया चास्ति'' इत्यस्य प्रमाणसिद्धत्वादित्यर्थः । कथं योजना **इत्यतो वेति** । अस्मिन् पक्षे 'तस्मात्' इत्यस्य चतुर्थाश्रमिणोऽप्यग्निक्रियासद्भावस्य प्रमाणसिद्धत्वादित्यर्थः इति भावः । तर्हि 'अनग्निरनिकेतनः' इति, 'विशेषो निष्क्रिययतेः' (स.स्मृ. ३२) इत्यादावनग्नित्वाद्युक्तिः कथम् ? इत्यत आह **अनग्नित्वादीति** । **बाह्याग्न्यादीति** । आहवनीयाद्यग्निहोत्रादिर्बाह्याग्निशब्दार्थः । आदिपदेन तदितरक्रिया ग्राह्या ॥ १ ॥

**गीतातात्पर्यनिर्णयः**

**ध्यानमत्रोच्यते ।**

*प्रका०*— एतदध्यायप्रतिपाद्यं दर्शयति **ध्यानमिति** ।

*न्या०दी०*— एतदध्यायप्रतिपाद्यमर्थं दर्शयति **ध्यानमिति** ॥ ''योगे त्विमां शृणु'' इति प्रतिज्ञातम् । योगश्च कर्मयोगो ध्यानयोगश्चेति द्वेधा भवति । तत्र सङ्क्षेपविस्तराभ्यां कर्मयोगो निरूपितः । ध्यानयोगप्रकारश्च सङ्क्षेपेण पञ्चमान्ते निरूपितो विस्तरेणास्मिन्नध्याये उच्यत इति भावः ।

*भा०दी०*— **प्रतिज्ञातमिति** । द्वितीये योगवचनं प्रतिज्ञातमित्यर्थः । **कर्मयोगः** कर्मरूप-ज्ञानोपाय इत्यर्थः ॥ **सङ्क्षेपेति** । त्रैगुण्यविषया इत्यादिना द्वितीये सङ्क्षेपेण तृतीयादौ विस्तरेण निरूपित इत्यर्थः ॥ **पञ्चमान्त इति** । स्पर्शान् कृत्वा इत्यादिनेति योज्यम् ॥ १ ॥

**गीतातात्पर्यनिर्णयः**

**"स ब्रह्मनिष्ठस्तु यतिर्महात्मा शारीरमग्निं च मुखे जुहोति" इत्यादेः न यते-रप्यनग्नित्वम् । आत्मसमारोपणाच्च ॥ १ ॥**

*प्रका०*— "स संन्यासी च योगी च न निरग्निर्न चाक्रियः" इत्यनेन संन्यासी च निरग्निर्न भवति अक्रियश्च न भवति इत्युक्तम् । तत्र यतेरनग्नित्वमाशङ्क्य परिहरति **स एव ब्रह्मनिष्ठ इति** । संन्यासाश्रमस्वीकारे पूर्वाश्रमस्वीकृतस्याग्नेः आत्मसमारोपणं क्रियत इत्यर्थः ॥

*न्या०दी०*— प्रकृतं ध्यानमग्न्यादिपरित्यागेन निस्सङ्गतया वर्तमानस्य भवतीत्याशङ्का निरस्यते **अनाश्रित इति** । तत्र निरग्नेः संन्यासित्वं योगित्वं च नास्तीत्युक्तं नोपपद्यते । तथा सति यत्याश्रमस्याननुष्ठेयत्वप्रसङ्गात् । यतेर्निरग्नित्वेन योगसंन्यासाभावप्राप्तेः । तयोरेव श्रेयःसाधन-त्वादित्यत आह **स इति** ॥ भवेदनेन यत्याश्रमस्याननुष्ठेयत्वप्रसङ्गो यदि यतेर्निरग्नित्वं स्यात् । न च तदस्ति । स ब्रह्मनिष्ठ इति तस्याप्यग्निश्रवणादिति भावः । इतश्च न यतेरग्नित्वमित्याह **आत्मेति** ॥ यत्याश्रमस्वीकारकाले पूर्वाश्रमस्वीकृतेनाग्नेरात्मनि समारोपणाच्च न यतेरनग्नित्व-मित्यर्थः । अनेन न केवलं निरग्निरक्रियो यतिरेव संन्यासी योगी च । किन्त्वनाश्रितः कर्मफलं कार्यं कर्म करोति यः सोऽपीत्यपव्याख्यानं च निराकृतं भवति ॥

*भा०दी०*— **कर्मयोगमध्य इति** । कर्मरूपोपायमध्य इत्यर्थः ॥ १ ॥

**गीता**

**यं संन्यासमिति प्राहुर्योगं तं विद्धि पाण्डव ।**
**न ह्यसंन्यस्तसङ्कल्पो योगी भवति कश्चन ॥ २ ॥**

*वि०वि०*— संन्यासी च योगी चेत्युक्त्या प्राप्तां संन्यासयोगयोः पृथक्त्वशङ्कां निवारयति **यमिति** । इतिशब्दः पूर्वाध्यायोक्तप्रकारपरामर्शार्थः । योगविशेष एव संन्यास इत्यर्थः । तदेवोप-पादयति **न हीति** । कामसङ्कल्पाद्यपरित्यागे कथमुपायवान् स्यादित्याशयः ॥

***वा०ल०***— 'न ह्यसन्न्यस्तसङ्कल्पः' इत्यत्र सन्न्यस्तः सङ्कल्पः फलोद्देशो येन स न भवतीति असन्न्यस्तसङ्कल्पः फलकामनावान् ॥

***सा०सं०***— 'स संन्यासी च योगी च' इत्युक्त्या प्राप्तां तयोरत्यन्तभेदशङ्कां निरसितुम्, अमुख्ययोगापेक्षया पृथगुक्तोऽपि संन्यासो मुख्ययोगान्तर्भूत इत्याह **यमिति** । 'ज्ञेयः स नित्य-संन्यासी' इत्यादिनोक्तप्रकारेण **यं** कामक्रोधादिवर्जनरूपं **संन्यासं योगं** मुख्ययोगं ज्ञानोपायभूत-कामादिवर्जनविशिष्टनिवृत्तकर्मानुष्ठानरूपयोगान्तर्भूतम् । **विद्धि** जानीहि । हे **पाण्डव** । कुतः **कश्चन** कोऽपि **असंन्यस्तसङ्कल्पः** अत्यक्तसङ्कल्पादिः संन्यासहीनकर्मानुष्ठानमात्रवानिति यावत् । **योगी** ज्ञानोपायवान् **न भवति** । नहि समाग्रचैकदेशः कार्यजनको भवति । क्वचित् पृथगुक्तिस्तु ज्ञान-भक्त्योः पृथगुक्तिरिव एकदेशापेक्षयेति भावः ॥

***अ०प्र०***— कुत इत्यपेक्षायां संन्यासस्य योगान्तर्भूतत्वात् कर्मयोगस्यैव संन्यासत्वं सम्पादयन्नाह **यमिति** ।

अथान्वयः— हे पाण्डव ![१], इति, यं[२], संन्यासमिति[३], प्राहुः[४], तं[५], योगं[६], विद्धि[७], हि[८], असंन्यस्तसङ्कल्पः[९], कश्चन[१०] योगी[११] न भवति[१२] ॥

हे पाण्डव, इति = पूर्वोक्तसङ्कल्पादित्यागरूपं[१], यं[२], संन्यासं[३], प्राहुः[४], तं योगं = तदेक-देशमुपायं विद्धीत्यर्थः । यद्वा, केवलसन्न्यसनाद्धेतोः योगमेव तं जानीहीति[७] । असन्न्यस्तसङ्कल्पः = सङ्कल्पशब्दो कामाद्युपलक्षकः कामसङ्कल्पादित्यागरहितः[९], कश्चित् योगी न भवति[१२] ॥ कामादि-त्यागसहितेश्वराराधनविहितकर्मानुष्ठानं हि मुख्ययोगरूपो ज्ञानोपायः । संन्यासस्य तदेकदेशत्वेन तदभावे मुख्ययोगो न भवतीति भावः ॥ २ ॥

**भाष्यम्**

**संन्यासोऽपि योगान्तर्भूत इत्याह— यं संन्यासमिति । कर्मसङ्कल्पाद्यपरि-त्यागे कथमुपायवान् स्यादित्याशयः ॥ २ ॥**

***प०टी०***— यद्यपि योगसंन्यासौ द्वावप्यपेक्षितौ । तथाऽपि संन्यासो योगादवम इत्यभि-प्रायेणोत्तरश्लोकमवतारयति **संन्यासोऽपीति** । कथं सङ्कल्पमात्रत्यागः संन्यासश्च ? इत्याशङ्क्य, 'न हि' इत्यस्यार्थमाह **कामेति** । कामोऽप्युपलक्ष्यते 'सङ्कल्प'पदेनेत्यर्थः ॥

***न०टी०***—अधुना योगस्य प्राधान्यं वक्तुमितरस्य तदन्तर्गतत्वमाह **संन्यासोऽपीति** । ननु सङ्कल्पत्यागमात्रात् कथं संन्यासी ? इत्याशङ्कां परिहरन् 'योगी' इति पदं व्याचष्टे **कामेति** । कामाद्युपलक्षणार्थः सङ्कल्पशब्द इति भावः ॥

***प्र०दी०***— ननु संन्यासयोगौ भिन्नलक्षणौ । तत्कथं तयोरैक्यमुच्यत इत्यत आह— **संन्यासोऽपीति** । "संन्यासी च योगी च" इत्युक्त्या प्राप्तात्यन्तभेदशङ्कानिवृत्त्यर्थमिति शेषः । अमुख्ययोगापेक्षया पृथगुक्तोऽपीत्यपेरर्थः । योगशब्देन मुख्योऽत्राभिहितः । अत एव वक्ष्यत्यु- पायवानिति । अन्तर्भूतत्वादैक्योक्तिरित्यर्थः । संन्यासस्य योगान्तर्भूतत्वमुपपाद्यते 'न हि' इति । तदसत् । सङ्कल्पत्यागमात्रस्यासंन्यासत्वात्, ईश्वराराधनाय स्वकर्मकरणमात्रं योगः, तस्य संन्यासा- भावेऽप्युपपत्तेरित्यत आह— **कामेति** । सङ्कल्पशब्दस्य कामाद्युपलक्षणत्वाद्योगशब्दस्य ज्ञानोपाय- रूपमुख्ययोगार्थत्वान्नानुपपत्तिरिति भावः ॥

***भा०दी०***— **अमुख्ययोगेति** । प्रागुक्तदिशा एकदेशरूपेत्यर्थः । **अत्रेति** । योगं तं विद्धी- त्यत्रेत्यर्थः । **ऐक्योक्तिरिति** । गीतायां अपरोक्षज्ञानिना पश्चादेव भवतीत्युपरि भवनसादृश्या- दित्युक्तम् ॥

***भा०र०***— **भिन्नलक्षणाविति** । "कामादिवर्जनं संन्यासः", "भगवदर्पणबुद्ध्या स्वविहित- कर्मानुष्ठानं योगः" इति विरुद्धधर्माधिकरणभूतावित्यर्थः । **अमुख्ययोगापेक्षयेति** । कामादिवर्जन- पूर्वकं भगवदर्पणबुद्ध्या कर्मानुष्ठानं मुख्ययोगः । ईश्वरार्पणबुद्ध्या कर्मानुष्ठानं त्वमुख्ययोगः । तदपेक्षया च "स संन्यासी च योगी च" (६.१) इति पृथगुक्त इत्यर्थः । तर्हि पृथगुक्तयोगान्त- र्भावायोगात् 'योगान्तर्भूतः' इति कथं भाष्ये ? इत्यत आह **योगशब्देनेति** । कामादित्यागेन ईश्वरार्पणबुद्ध्या कर्मानुष्ठानरूपो योगो भाष्ये योगशब्देनात्राभिप्रेतः । विशिष्टे चैकदेशस्यान्तर्भावो युक्त एवेति भावः । **अत एव** योगशब्दस्य मुख्ययोगाभिप्रायकत्वादेव । **उपायवान्** ज्ञानोपाय- वान् । "योगी भवति कश्चन" इति गीतास्थयोगपदस्योपायत्वेन व्याख्यानात् । ज्ञानं प्रति च मुख्ययोगस्यैव साधनत्वात् अत्र स एव ग्राह्य इति भावः । विलक्षणयोरैक्योक्तिः कथम् ? इति कृतचोद्यं परिहर्तुमाह **अन्तर्भूतत्वादिति** । **ऐक्योक्तिः** "यं संन्यासमिति प्राहुर्योगं तं विद्धि" इति गीतायाम् । गीतामवतारयति **संन्यासस्येति** । भाष्ये आदिशब्दस्योपायशब्दस्य च तात्पर्यं वदन्, सङ्कल्पत्यागमात्रस्य संन्यासत्वाभावात्, योगस्य संन्यासाभावेऽप्युपपत्तेरिति कृतशङ्काद्वयं परिहरति **सङ्कल्पशब्दस्येति** । **योगशब्दस्य** योगशब्दे प्रकृतिभूतस्य ॥ २ ॥

***गीताश्लोकद्वयाक्षरार्थस्तु***— द्वितीयाध्याये "योगे त्विमां शृणु" (२.३९) इति योगाभिधानं प्रतिज्ञातम् । योगो नाम द्वितीयषट्के वक्ष्यमाणं भगवज्ज्ञानं प्रत्युपायः । स च कर्मयोगः, समाधिलक्षणध्यानयोगश्चेति द्विविधः । तत्र कर्मयोगो ज्ञानं प्रति बहिरङ्गत्वात् "त्रैगुण्यविषया वेदाः" (२.४५) इत्यादिना द्वितीये सङ्क्षेपेण, तृतीयादावतीतग्रन्थे विस्तरेण च निरूपितः । अथ तत्साध्यत्वात् ज्ञानान्तरङ्गत्वाच्च समाधिलक्षणध्यानयोगप्रकारः "स्पर्शान् कृत्वा बहिर्बाह्यान्" (५.२७) इति पञ्चमान्ते सङ्क्षेपेण निरूपितो विस्तरेणास्मिन्नध्याय उच्यते । आसनादीनामत्र वक्ष्यमाणत्वेऽपि (६.११-१२), तेषां समाध्यर्थत्वात् प्राधान्येन समाधिः, तदधिकारितदङ्गादिकथनेन प्रपञ्च्यत इत्यध्यायार्थस्तावद्भाष्यादौ स्फुटः । "उद्धरेदात्मनाऽऽत्मानम्" (६.५) इत्यादिना समाधियोगं विधातुं तत्र संन्यासयोगयुक्त एवाधिकारीति ज्ञापयिष्यन् साङ्ख्याद्यभिमतदधिकारिनिरासाय समाध्यधिकारिविशेषणं "ज्ञेयः स नित्यसंन्यासी यो न द्वेष्टि न काङ्क्षति" (५.३) इति यः प्राग्विवक्षितः कामादिवर्जनलक्षणः संन्यासः, स ईश्वराराधनरूपस्वकर्मानुष्ठानलक्षणयोगेन सहोच्यते **अनाश्रित इति** । **यः** पुमान् **कर्मफलं अनाश्रितः** कर्मफलाकाङ्क्षाहीनः कार्यं स्ववर्णाश्रमोचिततया कर्तव्यं **कर्म करोति स** एव **संन्यासी योगी च** इति स्वयं ध्यानादिकारिणं निरूप्य, यत् "आहवनीयाद्यग्नित्यागेन, अग्निहोत्रादिसकलक्रियात्यागेन च निस्सङ्गतया वर्तमान एव ध्यानाधिकारी" इति मतं निराक्रियते **न निरग्निर्न चाक्रिय इति** । निरग्निरक्रियश्च कर्तव्यं करोति स एव संन्यासी योगी चेति चतुर्थाश्रमी संन्यासी योगी च भवत्येव । "स ब्रह्मनिष्ठस्तु यतिर्महात्मा शारीरमग्निं च मुखे जुहोति", "अग्निर्ब्रह्म च तत्पूजा क्रिया न्यासाश्रमे स्मृता" इत्यादेः चतुर्थाश्रमिणोऽप्यग्न्यादिश्रवणात् । यत्याश्रमस्वीकारकाले पूर्वाश्रमस्वीकृतानां आत्मनि समारोपणाच्च । अनग्नित्वादिप्रवादश्च बाह्याग्न्याद्यभावनिबन्धन इति भावः ॥ १ ॥

"संन्यासी च योगी च" (६.१) इत्युक्त्या प्राप्ता संन्यासयोगयोरत्यन्तभेदशङ्का निवार्यते । 'यम्' इति शब्दः "ज्ञेयस्स नित्यसंन्यासी" (५.३) इत्युक्तप्रकारार्थः । उक्तप्रकारेण **यं** कामादिवर्जनरूपं **संन्यासं प्राहुः, तं योगं** कामादिवर्जनविशिष्टनिवृत्तकर्मानुष्ठानलक्षणमुख्ययोगान्तर्भूतं **विद्धि हे पाण्डव** । संन्यासस्य योगान्तर्भाव उपपाद्यते **न हीति** । **कश्चन** कोऽपि असन्यस्तसङ्कल्पः सङ्कल्पशब्दः कामाद्युपलक्षणार्थः, अन्यत्र सङ्कल्पकामादिः कामवर्जनादिहीनकर्मानुष्ठानमात्रवान् इति यावत् । **योगी** ज्ञानवान् उपायवान् **न** भवति । सामग्र्येकदेशेन कार्योत्पादो न दृष्ट इति ॥ २ ॥

**गीतातात्पर्यनिर्णयः**

**योगविशेष एव संन्यास इत्यर्थः ॥ २ ॥**

*प्रका०*— यं संन्यासमित्यस्यार्थमाह **योगेति** ।

*न्या०दी०*— संन्यासी योगी चेत्युक्त्या प्राप्ता संन्यासयोगयोः पृथक्त्वाशङ्का निवार्यते 'संन्यासम्' इति । तत्र संन्यासयोगयोरैक्ये कथं पृथगुक्तिरित्यत आह **योगेति** ॥ २ ॥

**गीता**

**आरुरुक्षोर्मुनेर्योगं कर्म कारणमुच्यते ।**
**योगारूढस्य तस्यैव शमः कारणमुच्यते ॥ ३ ॥**

*वि०वि०*— योगातिशयेन कियन्तं कालं कर्म कर्तव्यमित्यत आह **आरुरुक्षोरिति** । योगमारुरुक्षोः उपायसम्पूर्तिकामस्य । कर्म कारणम् । सन्निधानाद्योगारोहस्येति गम्यते । दृष्टार्थ-त्वादवघातादिवत्फलपर्यन्तमनुष्ठेयमित्यर्थः । योगारूढस्य कर्तव्यमस्ति वा न वेत्यपेक्षायामाह **योगारूढस्येति** । सम्पूर्णोपायस्य परमसुखस्येति शेषः । कारणं शमः । भगवन्निष्ठबुद्धित पुनरपि जपादिकं कर्तव्यमित्यर्थः । यद्यपि ज्ञानिसुखस्यासम्प्रज्ञातसमाधिः कर्माद्यपेक्षया प्रधानं कारणं, तथापि यदा भोक्तव्योपरमः तदैव सम्यगसम्प्रज्ञातसमाधिर्जायते । अन्यदा तु भगवच्चरितादौ स्थितिः । तच्चोक्तम्—

'ये त्वां पश्यन्ति भगवंस्त एव सुखिनः परम् ।
तेषामेव च सम्यक् तु समाधिर्जायते नृणाम् ॥

भोक्तव्यकर्मण्यक्षीणे जपेन कथयाऽपि वा ।
वर्तयन्ति महात्मानस्तन्निष्ठास्तत्परायणाः ॥' इति ।

अथवा, कर्मध्यानयोगयोर्मध्ये कीदृशो योगो ज्ञानार्थिनाऽवश्यमपेक्षित इत्यत आह **आरुरुक्षोरिति** । राजादिकरवदवश्यकतया प्रमितं प्राण्युपकारलक्षणं कर्मयोगफलज्ञानकामस्य ज्ञान-कारणमुच्यते । सम्पूर्णोपायस्य ज्ञानिनः । शमो भगवन्निष्ठबुद्धित्वम् । मुक्तिगतानन्दातिशयकारण-मुच्यते । तदुक्तम्—

'नानाजनस्य शुश्रूषा कर्माख्या करवन्मितेः ।
योगार्थिना तु सा कार्या योगस्थेन हरौ स्थितिः ॥

तेनापि स्वोत्तमानां तु कार्याऽन्यैरखिलेष्वपि ।
शक्तितः करणीयेति विशेषो सिद्ध्यसिध्ययोः ॥
प्राप्तोपायस्तु सिद्धः स्यात् प्रेप्सुः साधक उच्यते ।
तस्य प्राण्युपकारेण सन्तुष्टो भवतीश्वरः ॥
सिद्धोपायेन विष्णोस्तु ध्यानव्याख्यार्चनादिकम् ।
कार्यं नान्यत्तस्य तेन तुष्टो भवति केशवः ॥'

इति । अत्र कर्मपदेन नानाजनशुश्रूषैवोच्यते, न तु सन्ध्यावन्दनादि । शमपदेन नानाजनशुश्रूषोपशम एवोच्यते । भगवद्ध्यानादिकं च न सन्ध्यावन्दनादिकर्मोपशमः । अतो ज्ञानार्थिनः कर्मापेक्षितं ज्ञानिनः कर्मापेक्षितम् इत्युक्त्या, 'न निरग्निर्नचाक्रियः' इति विरोधो नेति भावः ॥

*सा०सं०*— ध्यानाधिकारत्वेनोक्तो मुख्यः कर्मयोगः किं सकृदनुष्ठेय उत फलप्राप्तिपर्यन्तमित्यतः, फलपर्यन्तमित्याह **आरुरुक्षोरिति** । **योगं** ज्ञानोपायम् । **आरुरुक्षोः** सम्पूर्णं कामयमानस्य । **मुनेः** परोक्षज्ञानिनः । **कर्म कारणुच्यते** । योगारोहरूपसाक्षात्कारस्येति योज्यम् । अपरोक्षरूपफलोदयपर्यन्तं कार्यमिति भावः । तस्यैव मुनेर्योगारूढस्य सम्पूर्णज्ञानोपायस्यापरोक्षज्ञानिनः । **शमः** उपलक्षणम् । भगवन्निष्ठबुद्धित्वरूपध्यानव्याख्यानार्चनादिकं **कर्म कारणम्** । मुक्तिगतसुखातिशयस्येति योज्यम् । यद्यप्ययं प्रश्नो 'यदा ते मोहकलिलम्' (२-५२) इत्यनेन द्वितीये परिहृतः । तथापि तत्र परोक्षज्ञानार्थिनोऽत्र तु योगारोहशब्दितसम्पूर्णोपायशब्दितापरोक्षज्ञानार्थिन इति भेद इति भावः ।

यद्वा, योगारूढस्येत्युत्तरार्धे, अपरोक्षज्ञानिनो ध्यानादिकं कर्म वक्तुं 'यदा ते' इति श्लोकोक्तस्यैव प्रश्नोत्तरस्य पूर्वार्धेनानुवाद इति ज्ञेयम् । यद्वा, कर्मध्यानयोगयोर्मध्ये ज्ञानार्थिना कीदृशो योगोऽवश्यापेक्षित इत्यत आह **आरुरुक्षोरिति** । पूर्वार्धेन ज्ञानार्थिन उत्तमाधममध्यमस्वरूपनानाजनशुश्रूषाख्यमेव कर्मावश्यापेक्षितमित्युच्यते । चरमार्धेन तु ज्ञानिनो नानाजनशुश्रूषाख्यकर्मोपशम एव शमपदेनोच्यते । न तु ध्यानाद्युपशमः । तत्तु कार्यमेवेत्युच्यते । शमपदस्योभयार्थत्वात् । एवं चात्र श्लोके पूर्वार्धे ज्ञानार्थिनः कर्मापेक्षितमित्युक्त्वोत्तरार्धे ज्ञानिनः शमपदेन कर्मोपशमोऽपेक्षित इत्युच्यते । तथा च 'न निरग्निर्नचाक्रियः', 'योगी' इत्याद्युक्तिविरोध इति प्रत्युक्तं ध्येयम् । कर्मशमशब्दाभ्यां नानाजनशुश्रूषाख्यकर्मतदुपशमयोरेवात्र विवक्षितत्वादिति ॥

*अ०प्र०*— अतः फलसङ्कल्पत्यागसाम्यात्संन्यासी च फलसङ्कल्पत्यागादेव चित्तविक्षेपाभावाद्योगी च भवत्येव स इत्यर्थः । तर्हि यावज्जीवं कर्मयोग एव प्राप्त इत्याशङ्क्य तस्यावधिमाह **आरुरुक्षोरिति** ।

अन्वयः— योगं[१], आरुरुक्षोः[२], मुनेः[३], कर्म[४], कारणं[५], उच्यते[६], शेषं क्रमेणैव ॥

योगं आरुरुक्षोः = योगसाधनेन सोपानक्रमेण योगारूढतां गन्तुमिच्छोः, यद्वा योगमारोढुं प्राप्तुमिच्छोः[२] मुनेः = मननशीलसाधकस्य[३] कर्म कारणं उच्यते = तदारोहे विहितानुष्ठानं कर्म चित्तशुद्धित्वात्[४], कारणं[५], उच्यते[६], ध्यानसम्पूर्तिपर्यन्तं स्वविहितं कर्म करणीयम्, तत्कारणत्वादिति भावः । यद्वा, अत्र योगसाधनेन बाह्यस्थूलकर्मभावादपि मनोवाक्काययोः मूलाधारादिषट्चक्रभेदेन ब्रह्मरन्ध्रं गन्तुं तत्साधनानि यमनियमासनप्राणायामप्रत्याहारधारणाध्यानैः समाधिं प्राप्तुं योगसाधनरूपाणि सन्त्येव । तस्मात् योगसाधकस्य तत्साधने कर्म कारणमित्युक्तं[६], योगारूढस्य ज्ञानयोगमारूढस्य तु सिद्धसमाधेः अपरोक्षज्ञानिन इति यावत् । तस्यैव अनेन योगसाधनेन कर्मणा यः समाधिं प्राप्तः तस्यैव ध्याननिष्ठस्य ईश्वराधीन एवाहमिति बुद्धिमानेव तस्यैव[८], शमः = भगवन्निष्ठबुद्धित्वं कारणं उच्यते[११] मौक्तसुखाधिक्यार्थं शमशब्दवाच्यासम्प्रज्ञातध्यानादिकं कार्यमित्यर्थः । तदुक्तम्—

ये त्वां पश्यन्ति भगवंस्त एव सुखिनः परम् ।
तेषामेव तु सम्यक् च समाधिर्जायते नृणाम् ॥
भोक्तव्यकर्मण्यक्षीणे जपेन कथयापि वा ।
वर्तयन्ति महात्मानस्तन्निष्ठास्तत्परायणाः ॥ ३ ॥

**भाष्यम्**

**कियत्कालं कर्म कर्तव्यमित्यत आह— आरुरुक्षोर्मुनेरिति । योगमारुरुक्षोः = उपायसम्पूर्तिमिच्छोः । योगमारूढस्य सम्पूर्णोपायस्य । अपरोक्षज्ञानिन इत्यर्थः । कारणं परमसुखकारणम् । अपरोक्षज्ञानिनोऽपि समाध्यादिफलमुक्तम् । तस्य सर्वोपशमेन समाधिरेव कारणं प्राधान्येनेत्यर्थः । तथाऽपि यदा भोक्तव्योपरमः तदैव सम्यगसम्प्रज्ञातसमाधिर्जायते । अन्यदा तु भगवच्चरितादौ स्थितिः । तच्चोक्तम्—**

**"ये त्वां पश्यन्ति भगवंस्त एव सुखिनः परम् ।**
**तेषामेव तु सम्यक् तु समाधिर्जायते नृणाम् ।**
**भोक्तव्यकर्मण्यक्षीणे जपेन कथयाऽपि वा ।**

**वर्तयन्ति महात्मानः त्वद्भक्ताः तत्परायणाः ॥"**

**—इति ॥ ३ ॥**

***प॰टी॰***— नन्वयं कर्मयोगः कियत्कालमवश्यं कार्यः ? कदा वा त्याज्यः ? इत्याशङ्कोत्तरत्वेनोत्तरश्लोकमवतार्य व्याचष्टे **कियदिति** । योगमारुरुक्षोः कर्मयोगः कारणं स्यान्नाम । योगारूढस्य किं प्रति कारणम् ? इत्यत आह **कारणमिति** । ननु ज्ञानमात्रेण मोक्षसिद्धेर्व्यर्थमेव कर्मेत्यत आह **अपरोक्षज्ञानिनोऽपीति** । 'शम'शब्दं द्वेधा व्याकुर्वन् वाक्यार्थमाह **तस्येति** । सर्वकर्मणामपि फलातिशयकारणत्वात् किमिति समाधिरेव गृह्यते ? **प्राधान्येनेति** । ननु यदि सर्वकर्मसु समाधिरेवातिशयफलं ददाति, तर्हि सर्वज्ञानिनः किमिति व्याख्यानं कुर्वन्ति, समाधिं विहाय ? इत्याशङ्कां सप्रमाणकं परिहरति **तथाऽपीति** ॥

***न॰टी॰***—भवत्वन्तर्गतसंन्यासः कर्मयोगः समाधियोगिनामप्यवश्यानुष्ठेयः । स च कियत्कालम् ? इत्याकाङ्क्षोत्तरत्वेनोत्तरं श्लोकमवतार्य व्याचष्टे **कियदिति** । युज्यतेऽनेनेति योग उपायः । अपरोक्षज्ञानोपायत्वात् समाधिर्योग उच्यते । आरोहणमुपरिभावः । योगारोहणं नाम तदुपरिभावकार्यावाप्तिः । सा च योगे सम्पूर्ण एव भवतीति भावेन 'योगम्', 'आरुरुक्षोः', 'योगारूढस्य' इति पदत्रयं व्याचष्टे **योगमित्यादिना** । ननु योगमारुरुक्षोर्योगारोहकारणं भवतु कर्मयोगम् । आरूढस्य तु शमः किमर्थम् ? इत्यत आह **कारणमिति** । परमसुखस्य सर्वेषामपेक्षितत्वेन बुद्धिस्थत्वादनुक्तिरिति भावः । नन्वपरोक्षज्ञानिनस्तत एव परमसुखरूपस्य मोक्षस्य सिद्धत्वात्, न पुनस्तस्य शमफलं पश्याम इत्यत आह **अपरोक्षेति** । द्वितीयाध्याये समर्थितमित्यर्थः । **समाध्यादि** इति पदेन समाधिजपकथादयः सामान्यतः शमशब्दार्थत्वेनोक्ताः । एतेषु बुद्धेर्विष्णुनिष्ठत्वात् । 'शमो मन्निष्ठता बुद्धेः' इति हि भागवते । अधुनोपशमोऽपि शमशब्दार्थ इति दर्शयन्नेतेषु समाधेः प्राधान्यमाह **तस्येति** । **सर्वोपशमेन** तदितरकर्मत्यागेनेत्यर्थः । नन्वपरोक्षज्ञानिनः समाधेरेव प्राधान्ये किमिति शुकादयः प्रायो भगवत्कथादौ प्रवर्तन्ते ? इत्यत आह **तथाऽपीति** । भोक्तव्यकर्मण्यक्षीणे सम्यगसम्प्रज्ञातसमाधेरपि स्वधर्मस्य कर्तव्यत्वादिति भावः । यदुक्तं योगारूढो नामापरोक्षज्ञानी । तस्यैव समाधिः परमसुखकारणम् । सोऽपि भोक्तव्यकर्मण्यक्षीणे कथादिनाऽऽत्मानं वर्तयतीति तत्र प्रमाणमाह **तच्चेति** ॥

***प्र॰दी॰***— नन्वेवं समाधियोगस्याधिकारिणि निरूपिते तं प्रति समाधिरभिधेयः । 'आरुरुक्षोः' इत्यादि किमर्थमुच्यत इत्यत आह— **कियदिति** । समाधियोगाधिकारत्वेनोक्तं कर्म

किं सकृदनुष्ठेयम् । उताऽफलप्राप्तेरिति प्रश्नार्थः । ननु योगो नाम नाश्वादिरिवारोढव्यः । तत्कथमुच्यते 'योगमारुरुक्षोः', 'योगमारूढस्य' इति । तत्राह— **योगमिति** । उपरिभवनसादृश्यादुपचार इत्यर्थः । उपायः समाधिरेव । समाधेः फलपरिमाणाद्यवच्छेदाभावात् कीदृशी सम्पूर्णता इत्यत आह— **अपरोक्षेति** । साधनस्य हि पूर्णता साध्यायपर्याप्तत्वम् । अतो यावताऽपरोक्षज्ञानं सम्पद्यते तावत्त्वं सम्पूर्णत्वमिति भावः । ननु योगमारुरुक्षोः कर्म कारणम् । सन्निधानाद्योगारोहस्येति लभ्यते । कारणत्वाच्च तत्पर्यन्तं कर्तव्यमिति । कार्यापेक्षया नियतपूर्वभावित्वात् कारणस्य । योगारूढस्य तु शमः किं प्रति कारणम् । ज्ञानस्य तत एव सिद्धेरित्यत आह— **कारणमिति । परमसुखं** मुक्तिगतम् ।

नन्वयं प्रश्नो ''यदा ते मोहकलिलं'' इति परिहृतः । मैवम् । तत्र ज्ञानार्थिनोऽत्र तु योगारोहार्थिन इति भेदात् । तयोश्च साध्यसाधनयोः पृथक्त्वात् । अपरोक्षज्ञानिन इति चानतिविप्रकर्षेणोक्तत्वात् । तथोक्तमैहिकमप्रस्तुतप्रतिबन्ध इति । अथवा योगारूढस्यापि कर्तव्यं वक्तुं प्रश्नोत्तरानुवादोऽयमिति ।

नन्वपरोक्षज्ञानिनोऽनाधेयातिशयस्य कथं शमः परमसुखकारणमुच्यत इत्यत आह— **अपरोक्षेति** । उक्तं समर्थितं द्वितीये । समाध्यादीत्यनेन शमशब्दार्थः समाधिरिति सूचितम् । तत्किं तस्यान्यत् कर्तव्यमेव नास्तीत्यत आह— **तस्येति** । सर्वोपशमेन सर्वविषयोपरतिलक्षणेनेति समाधौ शमशब्दं समर्थयितुमुक्तम् । कारणं सुखाभिवृद्धेः । तदविरोधेनान्यत् कार्यमिति भावः । यदि ज्ञानिनः समाधिरानन्दवृद्धेः कारणं तर्हि तमेव कुतो न कुर्युः । कुतश्च व्याख्यानादौ प्रवर्तन्त इत्यत आह— **तथाऽपीति** । भोक्तव्योपरमः प्रतिबन्धकप्रारब्धकर्मोपरमः । अन्यदा सम्यक् समाधिप्रतिबन्धककर्मानुपरमकाले । अत्रागमसम्मतिमाह— **तच्चेति** । परं केवलम् । तेषामेव सम्यगेव समाधिश्च जायत इति योजना । वर्तयन्ति वर्तन्ते कालं नयन्तीति वा ॥

*भा०दी०*— **तत एव सिद्धेरिति** । पूर्वतनकर्मत एव सिद्धेरित्यर्थः । **अयं प्रश्न इति** । कियत्कालं कर्म कर्तव्यमिति प्रश्ने द्वितीये यदा ते मोहकलिलमिति श्लोके परिहृतमित्यर्थः । **ज्ञानेति** । परोक्षेत्यर्थः । योगार्थिन इति समाध्यर्थिन इत्यर्थः । **तयोरिति** । परोक्षापरोक्षज्ञानार्थिनोरित्यर्थः । ज्ञानार्थिनो हि ज्ञानसाध्यं श्रवणमननादिकं साधनं समाध्यर्थिन......र्णयरूपतत्त्वज्ञानादि साधनं अपरोक्ष्यं साध्यमिति भावः । नन्वेवं योगारूढस्येत्यस्य समाधिं सम्पन्नस्येति वाच्यम् । अपरोक्षज्ञानो......क्तिरस्तु कथमित्यत आह **अपरोक्षेति** । समाधिस्थस्यापरोक्षदृशिरनतिविलम्बेन भवतीत्यत्र सूत्रसम्मतिमाह **ऐहिकमिति** । प्रारब्धप्रतिबन्धाभावे साधनसम्पत्तिमज्जन्मन्येवापरोक्षं

भवतीति सूत्रार्थः । योगारूढस्येत्यस्यापरोक्षज्ञानिन इत्युक्तिरेवेति भावेन **अथवेति** । **कर्तव्यमिति** । समाध्यादिकं द्वितीय इति । 'बुद्धियुक्तो जहातीह', 'उभे सुकृतदुष्कृत' इत्येतद्व्याख्यावसरे सुकृतमप्रियमित्यादिग्रन्थेनेति भावः । योगरूढशब्दितसमाधिसम्पन्नस्यापरोक्षज्ञानमेव लक्षणमस्त्वित्यत आह **अपरोक्षेति** ॥

*भा०र०*— **अधिकारिणि** कामादिहीननिवृत्तकर्मानुष्ठानवति **सः** समाधियोगः । असङ्गतवचनत्वं परिहर्तुं परिष्करोति **समाधीति** । **अधिकारत्वेन** अधिकारिविशेषणत्वेन । एतेनैव "कर्म यावता कालेन निर्वर्त्यते तावन्तं कालं कार्यमिति सिद्धमेव । किञ्च योगो हि ज्ञानसाधनतयोपदिष्टः । साधनं च साध्यप्राप्तिपर्यन्तमनुष्ठेयमिति प्रसिद्धमेव । नियतपूर्वक्षणवृत्तिकारणमिति हि तल्लक्षणम् । अतः कथमयं प्रश्नः ?" इति चोद्यं च परिहृतम् । नायं कर्मनिवृत्तिकालप्रश्नः । किन्तु उक्तं कर्म व्रीहिप्रोक्षणादिकमिव सकृदनुष्ठेयम्, उतावहननादिकमिव आफलसमाप्ति आवर्तनीयमिति प्रश्न इति तात्पर्यात् । भाष्ये "कियान् कालो यस्य तत् कियत्कालम्" इति कर्मविशेषणमिति ज्ञातव्यम् । कियांश्चासौ कालश्च कियत्कालः, तम् । "कालाध्वनोरत्यन्तसंयोगे" इति द्वितीया । "कियति काले" इत्यर्थ इत्यपि **आहुः** ।

"नाश्वादिरिवारोढव्यो योगः" इति कृतचोद्यं परिहर्तुमाह **उपरिभवनेति** । **उपचारः** गौणीवृत्तिः । सा च **गुणनिबन्धना**, "सिंहो देवदत्तः" इति यथा । अत्राश्वारोहणक्रियायाम् अश्वोपरिभवनात्मकत्वमिवापरोक्षज्ञानस्य योगोत्तरभावित्वरूपयोगोपरिभवनमस्तीति उपरिभवनसादृश्यात् आरोहशब्दो योगसम्पूर्तिफलेऽपरोक्षज्ञाने वर्तत इति भावः ।

ननु साधनस्य साध्याय पर्याप्तत्वं सम्पूर्णत्वमस्तु । "कियत्कालं कर्म कर्तव्यम्" इति शङ्कायाः परिहारो नानेन लब्धः ? इति चोद्यं परिहरन्नेव उत्तरभाष्यमवतारयति **ननु योगमिति** । **तावत्पर्यन्तं** योगारोहपर्यन्तमिति कालेयत्वोक्त्या भवति कारणत्वमात्रेण, कार्यनिष्पत्तिकालावध्यनुष्ठेयत्वं कथं लभ्यते ? इत्यत उक्तम् **कार्यापेक्षयेति** । प्रोक्षणादेरदृष्टार्थस्य सकृत्कर्तव्येऽपि, दृष्टार्थस्य कर्मणो यावत्फलप्राप्ति अवहननादेरिव कर्तव्यत्वमिति भावः । "ज्ञानं प्रति" इति वदाम इत्याशङ्क्याह **ज्ञानस्येति** । **तत एव** समाधियोगादेव । ननु सर्वविषयोपरतिलक्षणेन शमेन पुरुषस्य क्लेश एव भवेत् । तत्कथं शमः सुखस्य कारणम् ? कथन्तरां परमसुखस्य ? इत्यत आह **परमसुखं मुक्तिगतमिति** । अपरोक्षज्ञानानन्तरमनुष्ठितः समाधिलक्षणः शमो मुक्तिगतसुखाभिवृद्धेः कारणमिति नोक्तशङ्काऽवकाश इति भाव इत्याशयः ।

**अयं प्रश्नः** ''कियत्कालं कर्म कर्तव्यम्'' इति प्रश्नः । तथा च द्वितीये तद्गमनिकाभाष्यम् ''कियत्पर्यन्तं कर्तव्यानि मुमुक्षुणा कर्माणि इत्याह– यदेति'' (गी.भा. २.५२) इति । **ज्ञानार्थिनः** परोक्षज्ञानार्थिनः । तथा च द्वितीये एतच्छ्लोकटीकायाम् ''योगो हि न साक्षाज्ज्ञानसाधनम्, किन्तु श्रवणादिकमेव । प्रमितेः प्रमाणफलत्वात् । योगस्त्वदृष्टद्वारा सत्त्वशुद्धिमुत्पाद्य श्रवणादीनामुपकरोति'' (प्र.दी. २.५२) इत्युक्त्वा ''यदा ते'' (२.५२) इति श्लोकोक्तार्थस्पष्टनपरे ''श्रुतिविप्रतिपन्ना ते'' (२.५३) इत्युत्तरश्लोके, ''अनेनापरोक्षज्ञानकाष्ठा दर्शिता'' (प्र.दी. २.५३) इत्युक्तम् । **योगारोहा-र्थिनः** योगसम्पूर्तिं कामयमानस्य ''कर्म कारणमुच्यते'' इति शेषः । तथा च पुनरुक्तिर्नास्तीत्याह **तयोरिति** । ज्ञानार्थियोगारोहार्थिनोरित्यर्थः । **पृथक्त्वात्** परोक्षज्ञानार्थिनः परोक्षज्ञानं साध्यम्, श्रवणाद्युपकारकभगवदाराधनात्मककर्म तत्साधनम् । योगारोहशब्दितसमाध्यर्थिनस्तु समाधिरेव साध्यः । परोक्षज्ञानानन्तरमनुष्ठितं कर्म साधनमिति साध्यसाधनयोः पृथक्त्वान्न पुनरुक्तिशङ्केति भावः ।

नन्वेवमस्य योगारोहार्थप्रश्नोत्तरत्वे ''अपरोक्षज्ञानिन इत्यर्थः'' इति कथं भाषणम् ? इत्यत आह **अपरोक्षज्ञानिन इति चेति** । समाधिसम्पूर्त्यव्यवहितोत्तरकाल एव प्रतिबन्धाभावे अपरोक्षज्ञानं भवतीत्यत्र ब्रह्मसूत्रसम्मतिमाह **यथोक्तमिति । ऐहिकं** साधनसम्पत्तिजन्मनि भवं ज्ञानं प्रारब्धप्रतिबन्धाभावे तत्रैव भवति । ''श्रुत्वाऽऽत्मानं मतिपूर्वं ह्युपास्यैहैव दृष्टिम्'' (सौ.श्रु.) इति श्रुतावुक्तार्थस्य 'दर्शनादि'ति सूत्रार्थः (ब्र.सू. ३.४.५०) । ''अपरोक्षज्ञानिनः इति भाष्यं ''योगमारुरुक्षोः'' इत्यस्य तात्पर्यकथनरूपमित्युक्तम् । इदानीं योगारूढपदस्य व्याख्यानरूपमिति पक्षान्तरमाह **अथवेति** । ननु ''यदा ते'' (२.५२) इत्यत्र कियत्पर्यन्तं कर्तव्यं कर्मेति प्रश्नस्य यद् उत्तरम् आफलप्राप्ति कर्म कर्तव्यमिति तस्य 'आरुरुक्षोर्मुनेः' इत्यर्धेनानुवाद इत्ययुक्तम् । निषेध-अधिक-विधानयोरत्रानुपलब्धेः ? इत्यत उक्तम् **योगारूढस्यापि कर्तव्यं वक्तुमिति** । शमपदविवक्षित-भगवन्निष्ठबुद्धित्वरूपध्यानव्याख्यानार्चनादिकं वक्तुमित्यर्थः । 'योगारूढस्येत्युत्तरार्धेन' इति शेषः ।

उत्तरभाष्यगतापिपदाशयं वदन्नेव तदवतारयति **नन्वपरोक्षेति** । ननु अपरोक्षज्ञानिनः शमः किं प्रति कारणं भवेत् ? न तावत् मोक्षं प्रति, तस्यापरोक्षज्ञानादेव सिद्धेः । नापि कर्तृगतमतिशयं प्रति, तस्यानाधेयातिशयत्वात् इति कृताक्षेपस्य सोपपत्तिकत्वात् कथमुक्तिमात्रेण निरासः ? इत्यत आह **समर्थितमिति** । ''बुद्धियुक्तो जहातीह उभे सुकृतदुष्कृते'' (२.५०) इत्येतद्व्याख्याऽवसरे ''सुकृतमप्यप्रियं मानुष्यादिफलं जहाति, न बृहत्फलम् उपासनादिजनितम्'' (गी.भा. २.५०) इत्यादिग्रन्थेन द्वितीयेऽध्याये उपपत्तिभिः साधितमित्यर्थः । 'समाधिरिति' इत्यनन्तरम् ''उपलक्ष-

णार्थश्चशब्द इति च'' इति शेषः । **तस्य** अपरोक्षज्ञानिनः । **अन्यत्** शमशब्दितसमाधेः । 'समर्थयितुम्' इति वदन् सर्वोपशमेन सर्वविषयोपरतित्वेन शमशब्दार्थः समाधिरिति भाष्यार्थ इत्यभिप्रेतीति **आहुः** । भाष्यपदमनूद्य शेषमाह **कारणमिति** । किं तस्यान्यत् कर्तव्यमेव नास्ति ? इति कृतचोद्यं 'प्राधान्येन' इति भाष्यभावोक्त्या परिहरति **तदविरोधेनेति** । शमाविरोधेन **अन्यत्** व्याख्याऽर्चनादिकमित्यर्थः । **न कुर्युः** 'ज्ञानिनः' इति शेषः । भाष्ये 'तस्य' इत्येकवचनात् ''यदि ज्ञानिनः'' इत्येकवचनम्, ''ये त्वाम्'' इत्यागमे बहुवचनात् 'कुर्युः' इत्याख्यातोपात्तकर्तरि बहुवचनं च प्रायुङ्क्तेति ज्ञातव्यम् ।

''ध्यानव्याख्याऽर्चनादिकम् (प्रवृत्ते)'' इति तात्पर्यनिर्णयं (गी.ता. ६.३) हृदि कृत्वाऽऽह **व्याख्यानादाविति** । यद्यपि समाधिरेव कर्तव्यः, तथापीति भाष्यार्थः । 'भोक्तव्यकर्मण्यक्षीणे' इति वक्ष्यमाणवचनानुसारेण भाष्यार्थमाह **भोक्तव्येति** । काले दाप्रत्ययानुशासनादाह **सम्यगिति** । **सम्यक् समाधिः** असम्प्रज्ञातसमाधिः । **अत्र** ''भोक्तव्योपरमे असम्प्रज्ञातसमाधिः'' इत्यत्र, ''समाधिप्रतिबन्धककर्मानुपरमकाले भगवच्चरितादौ स्थितिः'' इत्यत्र च । **परम्** उत्कृष्टम्'' इति भगवद्विशेषणत्वे वक्तुं शक्येऽपि 'केवलम्' इति वचनं परमसुखकारणमिति समाध्युपोद्बलित-भगवद्दर्शनस्य परमसुखहेतुत्वस्य प्रसक्तत्वात् तदाशयेनेत्यवधेयम् । 'सम्यक्च' इत्यत्र चशब्द एवार्थः, अपरस्तु पूर्ववाक्यार्थसमुच्चयार्थः, समाधिपदेनान्वेतीति भावेनाह **तेषामेवेति** । **सम्यगेव** असम्प्रज्ञात एव । ''भोक्तव्यकर्मण्यक्षीणे'' इति भाष्यस्य प्रतिबन्धकप्रारब्धकर्मानुपरम इत्यर्थः । ''स्वार्थे णिच्'' इति भावेनाह **वर्तन्त इति** । तत एवानुशयादाह **कालमिति** ॥

***गीताक्षरार्थस्तु***— समाधियोगाधिकारितावच्छेदकत्वेनोक्तो ज्ञानोपायरूपो योगः किं सकृदनुष्ठेय उत आफलप्राप्तेरिति प्रश्ने आफलप्राप्त्यनुष्ठेय इत्युच्यते **आरुरुक्षोरिति** । **योगमारुरुक्षोः** आरोढुमिच्छोः = सम्पूर्णं कामयमानस्य । **मुनेः** परोक्षज्ञानिनः **कर्म कारणं** सन्निधानाद् 'योगा-रोहस्य' इति लक्ष्यते । कारणत्वाच्च तत्पर्यन्तं कर्तव्यमिति । कार्यापेक्षया नियतपूर्वक्षणभावित्वात् कारणस्य । **तस्यैव** मुनेः **योगारूढस्य** सम्पूर्णोपायस्यापरोक्षज्ञानिनः **शमः** सर्वविषयोपरमलक्षणः समाधिः **कारणं** मुक्तिगतानन्दवृद्धेः व्याख्याऽर्चनाद्यपेक्षया प्रधानं साधनम् **उच्यते** । परोक्षज्ञानिना-ऽनुष्ठितं कर्म योगारोहकारणम् । आरूढयोगेनापरोक्षज्ञानिनाऽप्यनुष्ठितः शमस्तु ध्यानव्याख्याना-र्चनादितोऽप्यतिशयेन मुक्तिगतानन्दातिशयकारणमिति भाव इति ॥ ३ ॥

**गीतातात्पर्यनिर्णयः**

**सम्पूर्णोपायो योगारूढः ।**

*प्रका०*— आरुरुक्षोरित्येतच्छ्लोकं व्याचष्टे **सम्पूर्णेत्यादिना** ।

*न्या०दी०*— कर्मयोगमध्ये कीदृशो योगो ज्ञानार्थिनोऽवश्यापेक्षित इत्यत उच्यते **आरुरुक्षोरिति** । तत्र योगारूढपदस्य दुर्गमार्थत्वादर्थमाह **सम्पूर्णेति** ।

**गीतातात्पर्यनिर्णयः**

**"नानाजनस्य शुश्रूषा कर्माख्या करवन्मितेः ।**
**योगार्थिना तु सा कार्या योगस्थेन हरौ स्थितिः ॥**

**तेनापि स्वोत्तमानां तु कार्याऽन्यैरखिलेष्वपि ।**
**शक्तितः करणीयेति विशेषोऽसिद्धसिद्धयोः ॥**

*न्या०दी०*— अत्र ज्ञानार्थिनः कर्म अपेक्षितमित्युक्त्वा ज्ञानिनः कर्मोपशमोऽपेक्षित इत्युच्यते । तथा च न निरग्निर्न चाक्रिय इत्यादिविरोध इत्यत आह **नानेति** ॥ **नानाजनस्य** उत्तमाधममध्यमस्य ॥ **करवन्मितेरिति** । राजादिकरवदावश्यकतया प्रमितत्वादित्यर्थः । योगस्थेनापि शुश्रूषायाः कार्यत्वे को विशेषो योगार्थियोगस्थयोरित्यत आह **तेनापीति** । **अन्यैः** योगार्थिभिः ।

*भा०दी०*— **इत्युक्त्वेति** । पूर्वार्धेनेति योज्यम् । **कर्मोपशमः** कर्मत्यागः । योगस्थेनापि सा कार्येत्युपेत्य शङ्कते **योगस्थेनापीति** ।

**गीतातात्पर्यनिर्णयः**

**प्राप्तोपायस्तु सिद्धः स्यात् प्रेप्सुः साधक उच्यते ।**
**तस्य प्राण्युपकारेण सन्तुष्टो भवतीश्वरः ॥**

**सिद्धोपायेन विष्णोस्तु ध्यानव्याख्यार्चनादिकम् ।**
**कार्यं नान्यत् तस्य तेन तुष्टो भवति केशवः ॥"**

**इति प्रवृत्तवचनान्न विरोधः ।**

णार्थश्चशब्द इति च" इति शेषः । **तस्य** अपरोक्षज्ञानिनः । **अन्यत्** शमशब्दितसमाधेः । 'समर्थयितुम्' इति वदन् सर्वोपशमेन सर्वविषयोपरतित्वेन शमशब्दार्थः समाधिरिति भाष्यार्थ इत्यभिप्रेतीति **आहुः** । भाष्यपदमनूद्य शेषमाह **कारणमिति** । किं तस्यान्यत् कर्तव्यमेव नास्ति ? इति कृतचोद्यं 'प्राधान्येन' इति भाष्यभावोक्त्या परिहरति **तदविरोधेनेति** । शमाविरोधेन **अन्यत्** व्याख्याऽर्चनादिकमित्यर्थः । **न कुर्युः** 'ज्ञानिनः' इति शेषः । भाष्ये 'तस्य' इत्येकवचनात् "यदि ज्ञानिनः" इत्येकवचनम्, "ये त्वाम्" इत्यागमे बहुवचनात् 'कुर्युः' इत्याख्यातोपात्तकर्तरि बहुवचनं च प्रायुङ्क्तेति ज्ञातव्यम् ।

"ध्यानव्याख्याऽर्चनादिकम् (प्रवृत्ते)" इति तात्पर्यनिर्णयं (गी.ता. ६.३) हृदि कृत्वाऽऽह **व्याख्यानादाविति** । यद्यपि समाधिरेव कर्तव्यः, तथापीति भाष्यार्थः । 'भोक्तव्यकर्मण्यक्षीणे' इति वक्ष्यमाणवचनानुसारेण भाष्यार्थमाह **भोक्तव्येति** । काले दाप्रत्ययानुशासनादाह **सम्यगिति** । **सम्यक् समाधिः** असम्प्रज्ञातसमाधिः । **अत्र** "भोक्तव्योपरमे असम्प्रज्ञातसमाधिः" इत्यत्र, "समाधिप्रतिबन्धककर्मानुपरमकाले भगवच्चरितादौ स्थितिः" इत्यत्र च । **परम्** उत्कृष्टम्" इति भगवद्विशेषणत्वे वक्तुं शक्येऽपि 'केवलम्' इति वचनं परमसुखकारणमिति समाध्युपोद्बलित-भगवद्दर्शनस्य परमसुखहेतुत्वस्य प्रसक्तत्वात् तदाशयेनेत्यवधेयम् । 'सम्यक्च' इत्यत्र चशब्द एवार्थः, अपरस्तु पूर्ववाक्यार्थसमुच्चयार्थः, समाधिपदेनान्वेतीति भावेनाह **तेषामेवेति** । **सम्यगेव** असम्प्रज्ञात एव । "भोक्तव्यकर्मण्यक्षीणे" इति भाष्यस्य प्रतिबन्धकप्रारब्धकर्मानुपरम इत्यर्थः । "स्वार्थे णिच्" इति भावेनाह **वर्तन्त इति** । तत एवानुशयादाह **कालमिति** ॥

***गीताक्षरार्थस्तु***— समाधियोगाधिकारितावच्छेदकत्वेनोक्तो ज्ञानोपायरूपो योगः किं सकृदनुष्ठेय उत आफलप्राप्तेरिति प्रश्ने आफलप्राप्त्यनुष्ठेय इत्युच्यते **आरुरुक्षोरिति** । **योगमारुरुक्षोः** आरोढुमिच्छोः = सम्पूर्णं कामयमानस्य । **मुनेः** परोक्षज्ञानिनः **कर्म कारणं** सन्निधानाद् 'योगा-रोहस्य' इति लक्ष्यते । कारणत्वाच्च तत्पर्यन्तं कर्तव्यमिति । कार्यापेक्षया नियतपूर्वक्षणभावित्वात् कारणस्य । **तस्यैव** मुनेः **योगारूढस्य** सम्पूर्णोपायस्यापरोक्षज्ञानिनः **शमः** सर्वविषयोपरमलक्षणः समाधिः **कारणं** मुक्तिगतानन्दवृद्धेः व्याख्याऽर्चनाद्यपेक्षया प्रधानं साधनम् **उच्यते** । परोक्षज्ञानिना-ऽनुष्ठितं कर्म योगारोहकारणम् । आरूढयोगेनापरोक्षज्ञानिनाऽप्यनुष्ठितः शमस्तु ध्यानव्याख्याना-र्चनादितोऽप्यतिशयेन मुक्तिगतानन्दातिशयकारणमिति भाव इति ॥ ३ ॥

**गीतातात्पर्यनिर्णयः**

**सम्पूर्णोपायो योगारूढः ।**

*प्रका०*— आरुरुक्षोरित्येतच्छ्लोकं व्याचष्टे **सम्पूर्णेत्यादिना** ।

*न्या०दी०*— कर्मयोगमध्ये कीदृशो योगो ज्ञानार्थिनोऽवश्यापेक्षित इत्यत उच्यते **आरुरुक्षोरिति** । तत्र योगारूढपदस्य दुर्गमार्थत्वादर्थमाह **सम्पूर्णेति** ।

**गीतातात्पर्यनिर्णयः**

**"नानाजनस्य शुश्रूषा कर्माख्या करवन्मितेः ।**
**योगार्थिना तु सा कार्या योगस्थेन हरौ स्थितिः ॥**

**तेनापि स्वोत्तमानां तु कार्याऽन्यैरखिलेष्वपि ।**
**शक्तितः करणीयेति विशेषोऽसिद्धसिद्धयोः ॥**

*न्या०दी०*— अत्र ज्ञानार्थिनः कर्म अपेक्षितमित्युक्त्वा ज्ञानिनः कर्मोपशमोऽपेक्षित इत्युच्यते । तथा च न निरग्निर्न चाक्रिय इत्यादिविरोध इत्यत आह **नानेति** ॥ **नानाजनस्य** उत्तमाधममध्यमस्य ॥ **करवन्मितेरिति** । राजादिकरवदावश्यकतया प्रमितत्वादित्यर्थः । योगस्थेनापि शुश्रूषायाः कार्यत्वे को विशेषो योगार्थियोगस्थयोरित्यत आह **तेनापीति** । **अन्यैः** योगार्थिभिः ।

*भा०दी०*— **इत्युक्त्वेति** । पूर्वार्धेनेति योज्यम् । **कर्मोपशमः** कर्मत्यागः । योगस्थेनापि सा कार्येत्युपेत्य शङ्कते **योगस्थेनापीति** ।

**गीतातात्पर्यनिर्णयः**

**प्राप्तोपायस्तु सिद्धः स्यात् प्रेप्सुः साधक उच्यते ।**
**तस्य प्राण्युपकारेण सन्तुष्टो भवतीश्वरः ॥**

**सिद्धोपायेन विष्णोस्तु ध्यानव्याख्यार्चनादिकम् ।**
**कार्यं नान्यत् तस्य तेन तुष्टो भवति केशवः ॥"**

**इति प्रवृत्तवचनान्न विरोधः ।**

***न्या०दी०***— योगार्थियोगस्थयोर्विशेषे वक्तव्ये असिद्धसिद्धयोर्विशेषः किमर्थमुच्यत इत्यत आह **प्राप्तेति** ॥ नानाजनस्य शुश्रूषा कथं ज्ञानस्य साधनमित्यतो भगवत्प्रसादद्वारेत्याह **तस्येति** ॥ नन्वज्ञानामपि हरौ स्थितत्वाद्योगस्थेन हरौ स्थितिः कार्येति किमुच्यत इत्यत उक्तं विवृणोति **सिद्धेति** ॥ अन्यत् नानाजनशुश्रूषादि । ज्ञानिनो मोक्षनियमात् किं ध्यानादिनेत्यत आह **तस्येति** ॥ ततश्च मुक्तावानन्दपूर्तिरिति भावः । अत्र कर्मपदेन नानाजनशुश्रूषैवोच्यते न तु सन्ध्या-वन्दनादि । शमपदेन च नानाजनशुश्रूषोपशम एवोच्यते । भगवद्ध्यानादिकं च । न सन्ध्यावन्दना-दिकर्मोपशमः । नानाजनस्येति स्मृतिसमाख्यानात् । अतो नास्य पूर्वोक्तविरोध इति भावः ।

***भा०दी०***— **भगवद्ध्यानादिकं चेति** । शमपदेन उच्यत इत्यनुषङ्गः ॥ **पूर्वोक्तेति** । न निरग्निक इत्याद्युक्तेत्यर्थः ॥

**गीतातात्पर्यनिर्णयः**

**"शमो मन्निष्ठता बुद्धेर्दम इन्द्रियनिग्रहः ॥" इति भागवते ॥ ३ ॥**

***प्रका०***— न च "अनाश्रितः कर्मफलं कार्यं कर्म करोति यः । स संन्यासी च योगी च" इत्यनेन "योगारूढस्य तस्यैव शमः कारणमुच्यत" इत्येतस्य विरोधः शङ्कनीयः । "सिद्धोपायेन विष्णोरस्तु ध्यानव्याख्यार्चनादिकं कार्यमि"ति वचनात्, "शमो मन्निष्ठता बुद्धेरि"ति भगवद्वचनात् शमशब्दार्थस्यात्र कर्मनिवृत्तित्वाभावादित्यर्थः ॥

***न्या०दी०***— शमपदस्य विष्णुध्यानादिवाचित्वे स्पष्टार्थां स्मृतिं चाह **शम इति** ॥

**गीता**

## यदा हि नेन्द्रियार्थेषु न कर्मस्वनुषज्जते ।
## सर्वसङ्कल्पसंन्यासी योगारूढस्तदोच्यते ॥ ४ ॥

***वि०वि०***— योगारूढस्य लक्षणमाह **यदेति** । यदा विषयेषु कर्मसु च प्रयत्नं विना-ऽप्यननुषक्तः । कथं नानुषज्जते । सर्वसङ्कल्पसंन्यासी सङ्कल्पादिकं सर्वं भगवदधीनमिति ज्ञानवान् । तदा योगारुढ उच्यते ॥

***सा०सं०***— योगारूढशब्दितसम्पूर्णोपायसिद्धिमतो लक्षणमाह **यदेति** । **यदा हीन्द्रियार्थेषु** शब्दादिविषयेषु **कर्मसु** च प्रयत्नं विनाऽपि **नानुषज्जते** । ननु कर्माननुषङ्गो नाम कर्मस्वरूपत्याग

एव, तथा न 'न चाक्रियः', 'योगी', इति प्रागुक्तविरोध इत्यतः कर्माननुषङ्गं स्वयमेव व्याख्याति **सर्वेति**। ज्ञानिनः कर्माननुषङ्गो नाम सर्वकर्मसु सङ्कल्पन्यास एव। सर्वेषु कर्मसु सङ्कल्पत्यागी सन् कर्मसु नानुषज्जते। **यदा** तदा। **योगारूढ** उच्यते इति योजना। कर्मसु सङ्कल्पत्यागो नाम ममतात्याग एव। सङ्कल्पक्रियादिकं सर्वं भगवदधीनमिति ज्ञानमेव। एवं च सङ्कल्पादेर्भगवदधीन-ताज्ञानेन हेतुना कर्मस्वनासक्तत्वे सत्यप्रयत्नेन शब्दादिविषयेष्वनासक्तत्वं योगारूढस्य लक्षणमित्युक्तं भवति। अप्रयत्नेनेति विशेषणाद्योगमारुरुक्षौ नातिव्याप्तिः। तस्यानासक्तेः प्रयत्नसाध्यत्वात्॥

*अ०प्र०*— कीदृशोऽसौ योगारूढः यस्य शमः कारणमुच्यते इत्यत्राह **यदा हीति**।

यदा[1], इन्द्रियार्थेषु[2], कर्मसु च[3], हि[4], नानुषज्जते[5], तदा[6], सर्वसङ्कल्पसंन्यासी[7], तस्मात् योगारूढः[8], उच्यते इत्यन्वयः॥

यदा इन्द्रियार्थेषु = इन्द्रियाणां अर्थाः - शब्दाद्याः, तेषु इन्द्रियभोगेषु[2], कर्मसु च = तत्साधनेषु इन्द्रियाणां कर्मसु च[3], हि = यस्मात्[4], नानुषज्जते = आसक्तिं न करोति - सक्तो न भवति[5], तत्र हेतुः— आसक्तिमूलभूतात् सर्वसङ्कल्पसंन्यासी सर्वान् भोगविषयान् कर्मविषयांश्च सङ्कल्पान् संन्यसितुं त्यक्तुं शीलं यस्य स तथा[6], तस्मात् योगारूढः तदा[8], उच्यते। यद्वा, विषयेषु कर्मसु च प्रयत्नं विना स्वभावत एव अनुषक्तो न भवति। कथं नानुषज्जते सर्वसङ्कल्पविषयं कर्मादिकं भगवदधीनमिति ज्ञानी विषयाद्यनासक्तिरूपं इदं लक्षणं योगारूढे ज्ञानिनि स्वभावसिद्धं अज्ञानिनः प्रयत्नसाध्यं इति भेदः। तदुक्तम्—

'स्वतो दोषलयो दृष्ट्वा त्वितरेषां प्रयत्नतः।'

इति मदधीनमिदं ज्ञात्वा मत्संन्यासीति चोच्यत इति कामादेः मदधीनत्वज्ञानमेवमपि संन्यासशब्दार्थ इति प्रमाणार्थः॥ ४॥

### भाष्यम्

**योगारूढस्य लक्षणमाह— यदेति। सम्यगननुषङ्गस्तस्यैव भवति। उक्तं च— "स्वतो दोषलयो दृष्ट्वा त्वितरेषां प्रयत्नतः॥" इति॥ ४॥**

*प०टी०*— यदि योगारूढतापर्यन्तमवश्यं कर्म कार्यम्, तर्हि सैव कीदृशी? इत्याशङ्क्य, उत्तरत्वेनोत्तरश्लोकमवतारयति **योगेति**। ननु विषयाननुषङ्गाख्यलक्षणं जिज्ञासावतिव्याप्तमित्याशङ्क्य, सप्रमाणकं परिहरति **सम्यगिति**। तस्यैव योगारूढस्य। स्वतः प्रयत्नं विना॥

***न०टी०***—योगारूढो नाम योगोपरिभाविकार्यमपरोक्षज्ञानं प्राप्तः, यस्य शमः परमसुखकारणं स कथं ज्ञातव्यः ? इत्यत आह **योगारूढस्येति** । कर्मस्वननुषङ्गो नाम स्वानुष्ठीयमानाध्ययनादि-कर्मसु 'अहं करोमि', 'ममैतत् फलं स्यात्' इति कामसङ्कल्पत्यागः । ननु प्रत्याहारादेरपीन्द्रियार्था-दिष्वननुषङ्गो भवति । अतोऽतिव्यापकमिदं लक्षणमित्यत आह **सम्यगिति** । अपरोक्षज्ञानिन एवे-त्यर्थः । तत्र प्रमाणाह **उक्तं चेति** । **स्वत इति** । प्रयत्नं विना । विषयकर्मानुषङ्गे दोषहानिलक्षण-मिति भावः ॥

***प्र०दी०***— स्फुटमपि तात्पर्यं मन्दानुजिघृक्षया आह— **योगेति** । अपरोक्षज्ञानं तु योगा-रोहस्य कार्यं सति प्रतिबन्धे विलम्बत इति न लक्षणम् । नन्विदं साधकेऽपि विद्यते । "वशे हि यस्येन्द्रियाणि" इत्यादेः । अतोऽतिव्यापकमित्यत आह— **सम्यगिति** । प्रयत्नं विनेत्यर्थः । तस्यैव योगारूढस्यैव । अत्र प्रमाणमाह— **उक्तं चेति** । परमात्मानं दृष्ट्वा त्वाप्यत इति शेषः । मुख्य एव चाननुषङ्गोऽत्र विवक्षित इति भावः ॥

***भा०दी०***— **नन्विद**मित्यनुवादः । यदा ते मोहेत्युक्तस्य आरुरुक्षुरिति पूर्वार्धेनेति योज्यम् । 'यदा ही'ति श्लोकोक्तं वशे हि यस्येन्द्रियाणि तस्य प्रज्ञा प्रतिष्ठितेति द्वितीयोक्तगीतवचनादि-त्यर्थः । दृष्ट्वेत्युक्त्वा श्रुत्युपपत्तये क्रियान्तरमाह दृष्ट्वा त्वाप्यत इति शेष इति त्वात्चामित्यर्थः । तावता साधके विद्यत इति शङ्कायाः कः परिहार इत्यत आह **मुख्य एवेति** । अत्रेति यदा हीति श्लोके साधके त्वमुख्य इति भावः ॥

***भा०र०***— 'योगारूढस्तदोच्यते' इति स्वयमेवावेदनादाह **स्फुटमपीति** । समाधियोगाधि-कारत्वेनोक्तस्य कर्मण आफलप्राप्ति कर्तव्यत्वे निर्णीते सम्प्रत्यवसरप्राप्तसमाधियोग एव विधेयः । "योगारूढः सर्वसङ्कल्पसंन्यासी" इति किं प्रकृतासङ्गतमुच्यत इति मन्दानाम् । आशङ्कापरिहाराय उत्तरगीतामवतारयन् भाष्यकारो मन्दान् अनुजिघृक्षतीत्यर्थः । 'योगारूढस्य' इत्यपरोक्षज्ञानिनो मुक्तिगतसुखवैचित्र्यकारणं शम इत्युक्तम् । योगारूढ एव केन लक्षणेन प्रतिपत्तव्य इत्याकाङ्क्षायां शब्दादिविषयाननुषङ्गेण लक्षणेन स ज्ञातव्यः । एवंविधेन च महाफलहेतुत्वाद् योगोऽवश्यमनुष्ठेय इति फलतीति नासङ्गतिरिति भावः ।

ननु योगारूढस्यापरोक्षज्ञानवत्त्वमेव कस्माल्लक्षणं नोक्तम् ? इत्यत आह **अपरोक्षज्ञानं त्विति** । अत्र विवेक्तव्यम्— योग्यता लक्षणम् उत फलोपधानम् । नाद्यः । तस्या मुमुक्षुमात्र-साधारणतयाऽतिव्याप्तेः । न द्वितीयः । प्रतिबद्धफले योगारूढे अव्याप्तेरिति भावेनोक्तम्– "सति

प्रतिबन्धे विलम्बते" इति । **इदं** विषयाननुषङ्गाख्यं लक्षणम् । **साधके** मोक्षस्य । "वशे हि यस्ये-न्द्रियाणि तस्य प्रज्ञा प्रतिष्ठिता" (२.६१) इति द्वितीये "ज्ञानार्थिन इन्द्रियाणां वशीकरणं नाम तेषां विषयानुषङ्गजननशक्तिकुण्ठनम्" इत्युक्तेः, तस्यापि विषयाननुषङ्गो विद्यत एवेत्यर्थः । **अत्र** योगा-रूढस्यैव प्रयत्नं विना विषयानुषङ्ग इत्यत्र । प्रमाणे 'स्वतः' इत्यस्य "प्रयत्नं विना" इत्यर्थ उक्तो **भावप्रदीपिकायाम्** । 'दृष्ट्वा' इत्यस्य कर्म पूरयन् क्त्वाप्रत्ययनिर्वाहाय शेषमाह **परमात्मान-मित्यादि** । अनेन "परमात्मानं दृष्ट्वा तु प्रयत्नेन विना विषयानुषङ्गलक्षणदोषलयो योगारूढे-नाप्यते । तदितरेण स्वप्रयत्नेन दोषलय आप्यते" इति प्रमाणार्थ उक्तो भवति । लक्षणातिव्यापक-त्वशङ्कायाः कः परिहारः ? इत्यत आह **मुख्य एवेति** । अप्रयत्नसाध्याननुषङ्ग एव, **अत्र** "यदा हि नेन्द्रियार्थेषु" इति गीतावाक्ये विवक्षतः । साधके तु प्रयत्नसाध्य एवासाविति न तत्राति-व्याप्तिरिति भावः इत्यर्थः ।

अत्र **केचित्**— योगारूढपदेन लक्ष्यत्वेनापरोक्षज्ञानी विवक्षित उत समाधिपरिपाकवान् । नाद्यः । लक्ष्यतावच्छेदक. अणयोरुत्सर्गतो भिन्नयोः ऐक्यप्रसङ्गेनापरोक्षज्ञानस्य लक्षणत्वशङ्काया एवायोगेन "अपरोक्षज्ञानं तु तल्लक्षणम्" इति तन्निरासायोगात् । न द्वितीयः । "स्वतो दोषलयो दृष्ट्वा" इति प्रमाणोपन्यासविरोधात्, तत्रायत्नप्रयोज्यदोषलयस्यापरोक्षज्ञानजन्यत्वोक्तेरिति चेन्न । 'दृष्ट्वा' इत्यस्य "प्रतिबन्धहीनदर्शनसाधनसमाधिपरिपाकं प्राप्य" इत्यर्थात् । तथा च समाधि-परिपाकवत एव लक्ष्यत्वान्न कोऽपि दोष इत्याहुः ॥

**गीताक्षरार्थस्तु** — योगारूढलक्षणमुच्यते **यदा हीति** । **यदा हीन्द्रियार्थेषु** शब्दादिविषयेषु **कर्मसु च** प्रयत्नं विनाऽपि **नानुषज्जते** । ननु कर्माननुषङ्गो नाम यदि कर्मस्वरूपत्यागस्तदा "न चाक्रियः" (६.१) इत्युक्तविरोधः इत्याशङ्क्य कर्माननुषङ्गो व्याख्यायते **सर्वसङ्कल्पसंन्या-सीति** । नात्र ज्ञानिनः स्वरूपतः कर्माननुषङ्गोऽभिधीयते, किन्तु सर्वकर्मसु सङ्कल्पसंन्यास एव । अतो नोक्तदोषः । ननु च यदि सर्वकर्मसु सङ्कल्पसंन्यासी तथोक्तः तदा कर्मस्वरूपत्याग एव प्राप्नोति, स्वरूपत्यागे सङ्कल्पत्यागायोगादिति चेन्न । सङ्कल्पसंन्यासपदेन सङ्कल्पद्रव्यक्रियादिकं सर्वं भगवदधीनमिति सर्वस्य भगवदधीनताज्ञानस्यैवाभिप्रेतत्वात् । "मयि सर्वाणि कर्माणि संन्यस्य" (३.३०) इत्यत्र संन्यासपदस्य भगवदधीनताज्ञानार्थताया उक्तत्वात् तदा **योगारूढ उच्यते** । सङ्कल्पादेः भगवदधीनताज्ञानेन कर्मस्वनासक्तया अप्रयत्नेन शब्दादिविषयेष्वनासक्तत्वं योगारूढस्य लक्षणमिह विवक्षितमिति ॥ ४ ॥

***न०टी०***—योगारूढो नाम योगोपरिभाविकार्यमपरोक्षज्ञानं प्राप्तः, यस्य शमः परमसुखकारणं स कथं ज्ञातव्यः ? इत्यत आह **योगारूढस्येति**। कर्मस्वननुषङ्गो नाम स्वानुष्ठीयमानाध्ययनादि-कर्मसु 'अहं करोमि', 'ममैतत् फलं स्यात्' इति कामसङ्कल्पत्यागः। ननु प्रत्याहारादेरपीन्द्रियार्था-दिष्वननुषङ्गो भवति। अतोऽतिव्यापकमिदं लक्षणमित्यत आह **सम्यगिति**। अपरोक्षज्ञानिन एवे-त्यर्थः। तत्र प्रमाणाह **उक्तं चेति**। **स्वत इति**। प्रयत्नं विना। विषयकर्मानुषङ्गे दोषहानिलक्षण-मिति भावः ॥

***प्र०दी०***— स्फुटमपि तात्पर्यं मन्दानुजिघृक्षया आह— **योगेति**। अपरोक्षज्ञानं तु योगा-रोहस्य कार्यं सति प्रतिबन्धे विलम्बत इति न लक्षणम्। नन्विदं साधकेऽपि विद्यते। ''वशे हि यस्येन्द्रियाणि'' इत्यादेः। अतोऽतिव्यापकमित्यत आह— **सम्यगिति**। प्रयत्नं विनेत्यर्थः। तस्यैव योगारूढस्यैव। अत्र प्रमाणमाह— **उक्तं चेति**। परमात्मानं दृष्ट्वा त्वाप्यत इति शेषः। मुख्य एव चाननुषङ्गोऽत्र विवक्षित इति भावः ॥

***भा०दी०***— **नन्विद**मित्यनुवादः। यदा ते मोहेत्युक्तस्य आरुरुक्षुरिति पूर्वार्धेनेति योज्यम्। 'यदा ही'ति श्लोकोक्तं वशे हि यस्येन्द्रियाणि तस्य प्रज्ञा प्रतिष्ठितेति द्वितीयोक्तगीतवचनादि-त्यर्थः। दृष्ट्वेत्युक्त्वा श्रुत्युपपत्तये क्रियान्तरमाह दृष्ट्वा त्वाप्यत इति शेष इति त्वात्वामित्यर्थः। तावता साधके विद्यत इति शङ्कायाः कः परिहार इत्यत आह **मुख्य एवेति**। अत्रेति यदा हीति श्लोके साधके त्वमुख्य इति भावः ॥

***भा०र०***— 'योगारूढस्तदोच्यते' इति स्वयमेवावेदनादाह **स्फुटमपीति**। समाधियोगाधि-कारत्वेनोक्तस्य कर्मण आफलप्राप्ति कर्तव्यत्वे निर्णीते सम्प्रत्यवसरप्राप्तसमाधियोग एव विधेयः। ''योगारूढः सर्वसङ्कल्पसंन्यासी'' इति किं प्रकृतासङ्गतमुच्यत इति मन्दानाम्। आशङ्कापरिहाराय उत्तरगीतामवतारयन् भाष्यकारो मन्दान् अनुजिघृक्षतीत्यर्थः। 'योगारूढस्य' इत्यपरोक्षज्ञानिनो मुक्तिगतसुखवैचित्र्यकारणं शम इत्युक्तम्। योगारूढ एव केन लक्षणेन प्रतिपत्तव्य इत्याकाङ्क्षायां शब्दादिविषयाननुषङ्गेण लक्षणेन स ज्ञातव्यः। एवंविधेन च महाफलहेतुत्वाद् योगोऽवश्यमनुष्ठेय इति फलतीति नासङ्गतिरिति भावः।

ननु योगारूढस्यापरोक्षज्ञानवत्त्वमेव कस्माल्लक्षणं नोक्तम् ? इत्यत आह **अपरोक्षज्ञानं त्विति**। अत्र विवेक्तव्यम्— योग्यता लक्षणम् उत फलोपधानम्। नाद्यः। तस्या मुमुक्षुमात्र-साधारणतयाऽतिव्याप्तेः। न द्वितीयः। प्रतिबद्धफले योगारूढे अव्याप्तेरिति भावेनोक्तम्— ''सति

प्रतिबन्धे विलम्बते" इति । **इदं** विषयाननुषङ्गाख्यं लक्षणम् । **साधके** मोक्षस्य । "वशे हि यस्ये-न्द्रियाणि तस्य प्रज्ञा प्रतिष्ठिता" (२.६१) इति द्वितीये "ज्ञानार्थिन इन्द्रियाणां वशीकरणं नाम तेषां विषयानुषङ्गजननशक्तिकुण्ठनम्" इत्युक्तेः, तस्यापि विषयाननुषङ्गो विद्यत एवेत्यर्थः । **अत्र** योगा-रूढस्यैव प्रयत्नं विना विषयानुषङ्ग इत्यत्र । प्रमाणे 'स्वतः' इत्यस्य "प्रयत्नं विना" इत्यर्थ उक्तो **भावप्रदीपिकायाम्** । 'दृष्ट्वा' इत्यस्य कर्म पूरयन् क्त्वाप्रत्ययनिर्वाहाय शेषमाह **परमात्मान-मित्यादि** । अनेन "परमात्मानं दृष्ट्वा तु प्रयत्नेन विना विषयानुषङ्गलक्षणदोषलयो योगारूढे-नाप्यते । तदितरेण स्वप्रयत्नेन दोषलय आप्यते" इति प्रमाणार्थ उक्तो भवति । लक्षणातिव्यापक-त्वशङ्कायाः कः परिहारः ? इत्यत आह **मुख्य एवेति** । अप्रयत्नसाध्याननुषङ्ग एव, **अत्र** "यदा हि नेन्द्रियार्थेषु" इति गीतावाक्ये विवक्षतः । साधके तु प्रयत्नसाध्य एवासाविति न तत्राति-व्याप्तिरिति भावः इत्यर्थः ।

अत्र **केचित्**— योगारूढपदेन लक्ष्यत्वेनापरोक्षज्ञानी विवक्षित उत समाधिपरिपाकवान् । नाद्यः । लक्ष्यतावच्छेदक. अणयोरुत्सर्गतो भिन्नयोः ऐक्यप्रसङ्गेनापरोक्षज्ञानस्य लक्षणत्वशङ्काया एवायोगेन "अपरोक्षज्ञानं तु तल्लक्षणम्" इति तन्निरासायोगात् । न द्वितीयः । "स्वतो दोषलयो दृष्ट्वा" इति प्रमाणोपन्यासविरोधात्, तत्रायत्नप्रयोज्यदोषलयस्यापरोक्षज्ञानजन्यत्वोक्तेरिति चेन्न । 'दृष्ट्वा' इत्यस्य "प्रतिबन्धहीनदर्शनसाधनसमाधिपरिपाकं प्राप्य" इत्यर्थात् । तथा च समाधि-परिपाकवत एव लक्ष्यत्वान्न कोऽपि दोष इत्याहुः ॥

**गीताक्षरार्थस्तु** — योगारूढलक्षणमुच्यते **यदा हीति** । **यदा हीन्द्रियार्थेषु** शब्दादिविषयेषु **कर्मसु च** प्रयत्नं विनाऽपि **नानुषज्जते** । ननु कर्माननुषङ्गो नाम यदि कर्मस्वरूपत्यागस्तदा "न चाक्रियः" (६.१) इत्युक्तविरोधः इत्याशङ्क्य कर्माननुषङ्गो व्याख्यायते **सर्वसङ्कल्पसंन्या-सीति** । नात्र ज्ञानिनः स्वरूपतः कर्माननुषङ्गोऽभिधीयते, किन्तु सर्वकर्मसु सङ्कल्पसंन्यास एव । अतो नोक्तदोषः । ननु च यदि सर्वकर्मसु सङ्कल्पसंन्यासी तथोक्तः तदा कर्मस्वरूपत्याग एव प्राप्नोति, स्वरूपत्यागे सङ्कल्पत्यागायोगादिति चेन्न । सङ्कल्पसंन्यासपदेन सङ्कल्पद्रव्यक्रियादिकं सर्वं भगवदधीनमिति सर्वस्य भगवदधीनताज्ञानस्यैवाभिप्रेतत्वात् । "मयि सर्वाणि कर्माणि संन्यस्य" (३.३०) इत्यत्र संन्यासपदस्य भगवदधीनताज्ञानार्थताया उक्तत्वात् तदा **योगारूढ उच्यते** । सङ्कल्पादेः भगवदधीनताज्ञानेन कर्मस्वनासक्त्या अप्रयत्नेन शब्दादिविषयेष्वनासक्तत्वं योगारूढस्य लक्षणमिह विवक्षितमिति ॥ ४ ॥

**गीतातात्पर्यनिर्णयः**

**कथं नानुषज्जते ? सर्वसङ्कल्पसंन्यासी । "मयि सर्वाणि कर्माणि" इत्युक्तत्वात् । "मदधीनमिदं ज्ञात्वा मत्संन्यासीति चोच्यते" इति च ॥ ४ ॥**

*प्रका०*— यदा हीत्येतद्व्याचष्टे **कथमित्यादिना** । सर्वसङ्कल्पसंन्यासित्वमुपपादयति **मयि सर्वाणि कर्माणि संन्यस्याध्यात्मचेतसा** इत्यनेन ॥

*न्या०दी०*— योगारूढलक्षणमुच्यते **यदा हि इति** । तत्र न कर्मस्वनुषज्यत इति ज्ञानिनः कर्माभावकथनान्न चाक्रिय इत्यादिविरोध इत्यत आह **कथमिति** ॥ नात्र ज्ञानिनः स्वरूपतः कर्मानुषङ्गोऽभिधीयते । किन्तु सर्वकर्मसु सङ्कल्पन्यासेनैव । तथा स्वयमेव व्याख्यातत्वादिति भावः । यदि सर्वकर्मसु सङ्कल्पन्यासस्तर्हि कर्मस्वरूपन्यास एव प्राप्नोति । स्वरूपात्यागे सङ्कल्पत्यागायोगादित्यत आह **मयीति** ॥ भवेत्कर्मस्वरूपत्यागप्राप्तिर्यदि सङ्कल्पस्वरूपत्यागोऽभिप्रेतः स्यात् । न चासावस्ति । सङ्कल्पसंन्यासपदेन सङ्कल्पादेर्भगवदधीनताज्ञानस्यैवाभिप्रेतत्वात् । मयि सर्वाणि कर्माणि संन्यस्येत्यत्र संन्यासपदस्य भगवदधीनताज्ञानार्थतायाः समर्थितत्वादिति भावः । प्रमाणान्तरं चाह **मदधीनमिति** ॥

*भा०दी०*— **संन्यस्येत्यत्रेति** । तृतीय इति योज्यम् ।

**गीता**

**उद्धरेदात्मनाऽऽत्मानं नात्मानमवसादयेत् ।**
**आत्मैव ह्यात्मनो बन्धुरात्मैव रिपुरात्मनः ॥ ५ ॥**

*वि०वि०*— स च योगारोहः प्रयत्नेन कर्तव्य इत्याह **उद्धरेदिति** । आत्मना मनसा । आत्मानं जीवम् । आत्मा मन एव । आत्मनो जीवस्य बन्धुः । स एव जीवस्य रिपुः ॥

*वा०ल०*— 'आत्मैव ह्यात्मनो बन्धुः' इत्यत्र पुण्ये कृते आत्मैवात्मनो बन्धुः, पापे कृते आत्मैवात्मनो रिपुः इत्यादि ॥

*सा०सं०*— यस्य ध्यानयोगस्य कामादिवर्जनरूपसंन्यासयुक्तस्ववर्णाश्रमोचितकर्मानुष्ठानवानधिकारी उक्तः । अपरोक्षाख्यफलपर्यन्तं कर्मानुष्ठानं चोक्तम् । स एव ध्यानयोगोऽभियोगेन कार्य इत्याह **उद्धरेदिति** । **आत्मना** मनसा । **आत्मानं** जीवमुद्धरेत् । पुमर्थभाजनं कुर्यात् । **आत्मानं**

जीवम् । **नावसादयेत्** । न क्लेशभाजनं कुर्यात् । कुतः । **हि** यस्मात् । **आत्मनो** जीवस्य । **आत्मैव** मन एव । **बन्धुः रिपुश्च** भवत्यत इति ।

यद्वा, योगारोहशब्दितयोगसम्पूर्तेर्भगवत्प्रसादो मुख्यसाधनमित्याह **उद्धरेदिति** । **आत्मना** परमात्मना । तत्प्रसादेनेति यावत् । **आत्मानं** जीवम् । प्राग्वदेव योजना । **आत्मनो** जीवस्यात्**मैव** परमात्मैव **बन्धुः रिपुश्च हि** यतः ।

***अ०प्र०***— अतो विषयासक्तित्यागे मोक्षं तदाऽऽसत्त्यैव बन्धं पर्यालोच्य रागादिस्वभावं त्यजेदित्याह **उद्धरेदिति** ।

आत्मना[१], आत्मानं[२], उद्धरेत्[३], आत्मानं[४], न अवसादयेत्[५], आत्मनः[६], आत्मैव[७], बन्धुः[८], हि[९], आत्मनः[१०] रिपुः[११] आत्मैव[१२] इत्यन्वयः ।

आत्मना = स्वेन विवेकयुक्तेन मनसा[१], आत्मानं जीवं संसारसागरात्[२], उद्धरेत् = समुद्धरेत्[३], आत्मानं = जीवं[४], न अवसादयेत् = अधो न नयेत् संसाराख्यदोषयुक्तं न कुर्यात् संसारेऽस्यापि भवाम्बुधौ न निमज्जयेदित्यर्थः[५], आत्मनः आत्मैव बन्धुः = उपकारी[८], हि = तथा[९], आत्मनः = जीवस्य[१०] रिपुः = अपकारी[११] आत्मैव[१२] इत्यर्थः । अथवा योगारोहस्य भगवत्प्रसादो मुख्यसाधनमित्याह **उद्धरेदिति** । पूर्वं येनात्मशब्देन मनोभिहितं तेनेदानीं भगवानुच्यते । शिष्टं पूर्ववत् । तदुक्तम्—

'उद्धरेत्सर्वसंसारात् जीवात्मानं परात्मना ।
विष्णुर्बन्धुः सतां नित्यं परमात्माऽसतामरिः ॥
तत्प्रसादजया भक्त्या जितो यस्य वशे हरिः ।
वर्तते तस्य मित्रं सत्तदन्यस्य च शत्रुवत् ॥' इति

कुतः परमात्मा स्वात्मानं उद्धरेदित्यत आह **विष्णुरिति** । सदसत्स्वरूपमाह **तदिति** । भक्त्या यस्य वशे हरिः सन् तदन्यस्य भक्त्या वशीकृतब्रह्मणः पुंसः सः सदिति प्रमाणार्थः ॥ ५ ॥

**भाष्यम्**

**स च योगारोहः प्रयत्नेन कर्तव्य इत्याह— उद्धरेदित्यादिना ॥ ५ ॥**

***प०टी०***— नन्वेवं योगारोहस्य दुष्करत्वात्, मार्गान्तरेणापि सुखसम्भवात्, किमनेन ? इत्याशङ्क्य, उत्तरत्वेनोत्तरश्लोकमवतारयति **स चेति** ।

*न०टी०*—ननु योगनिरूपणावसरे कोऽयमात्मोद्धारः ? इत्याशङ्क्य, उत्तरश्लोकमवतार्य तात्पर्यकथनेन परिहरति **स चेति** । मोक्षसुखापेक्षया संसारसुखस्यार्वाग्गतिरूपत्वात् तत उद्धार-हेतुर्योगोऽवश्यकर्तव्य इति भावः ।

*प्र०दी०*— नन्वेवं विध्युपयुक्तमुक्त्वा समाधियोगे विधेये किमर्थमात्मोद्धारकर्तव्यतोच्यत इत्यतोऽनया वाचोभङ्ग्या योग एव विधीयत इत्याह— **स चेति** । यस्याधिकार्यादिकमुक्तं स एव च योग इति वक्तव्ये यदारोहग्रहणं कृतं तत् तावत्पर्यन्तं योगः कर्तव्यः । न मध्य एव त्याज्य इति ज्ञापनार्थम् । **प्रयत्नेन** अभियोगेन ॥

*भा०दी०*— **आधिकार्यादिकमिति** । आदिपदेन फलपर्यन्तं कर्मानुष्ठानग्रहः । वचो-ऽभ्युपेति उद्धरेत्याद्युक्तरीत्येत्यर्थः । तावत्पर्यन्तं सम्पूर्णोपायसिद्धिपर्यन्त इत्यपि ग्राह्यमिति । एतेन कस्येत किं विशेषणस्येति व्याख्यानं भवति ॥

*भा०र०*— **विध्युपयुक्तम्** समाधिविध्युपयुक्तम् अधिकार्यादिकम् । **वाचोभङ्ग्या** वाचो-रीत्या । अवसरसङ्गतिकथनरूपत्वं "स एव" इत्यस्य स्फुटयति **यस्येति** । समाधियोगस्येत्यर्थः । 'अधिकार्यादिकम्' इत्यत्र आदिपदेन कारणलक्षणयोः समाधियोगाधिकारत्वेनोक्तकर्मण आफलप्राप्ते-रनुष्ठेयत्वस्य च सङ्ग्रहः । 'आरोहग्रहणम्' इत्यनन्तरं 'तत्' इति शेषः । **तेन** योगिना । **ताव-त्पर्यन्तम्** योगारोहणापरोक्षज्ञानरूपकार्यपर्यन्तम् । ननु कर्तव्यपदेनैव प्रयत्नसाध्यत्वलाभात् 'प्रयत्नेन' इति व्यर्थम् ? इत्यत आह **अभियोगेनेति** । "अभियोग आग्रहः" इति सुधा (अ.व्या. २.२.२ श्लो. ५४८) । बहुश्रुतत्वादिना जातेन परिचयातिशयेनेत्यर्थः । 'अभियोगस्त्वाग्रहः' इत्यमर-व्याख्याने तथोक्तेः ॥ ५ ॥

**गीता**

## बन्धुरात्माऽऽत्मनस्तस्य येनात्मैवात्मना जितः ।
## अनात्मनस्तु शत्रुत्वे वर्तेतात्मैव शत्रुवत् ॥ ६ ॥

*वि०वि०*— कीदृशं मनः । कीदृशस्य जीवस्य बन्धुः रिपुश्चेत्यत आह **बंधुरात्मेति** । येनात्मना जीवेन कर्त्रा येन जीवेन बुद्ध्या करणेन वा । आत्मा जितः । मनो जितम् । तस्यात्मनो जीवस्यात्मा मनो बन्धुः । यथा सन्नपि भृत्यो भृत्यकार्यमकुर्वन्नभृत्यः । तथाऽसन्नपि आत्मा मनो यस्यानुपकारीत्यनात्मा । तस्यासन्मनस्कस्य पुरुषस्य, आत्मा मन एव शत्रुवच्छत्रुत्त्वेऽपकारकरणे वर्तते ।

'मन एव मनुष्याणां कारणं बन्धमोक्षयोः ।
बन्धाय विषयासक्तं मुक्त्यै निर्विषयं स्मृतम् ॥' इति श्रुतिः ।

अथवा योगारोहस्य भगवत्प्रसादो मुख्यसाधनमित्याह **उद्धरेदित्यादिना** । पूर्वं येनात्म-शब्देन मनोऽभिहितं तेनेदानीं भगवानुच्यते । उक्तं च—

'उद्धरेतैव संराराज्जीवात्मानं परात्मना ।
विष्णुर्बन्धुः सतां नित्यं परात्मा ह्यसतामरिः ॥
तत्प्रसादजया भक्त्या जितो यस्य वशे त्विव ।
वर्तते तस्य मित्रं सः तदन्यस्य च शत्रुवत् ॥' इति ॥

***वा०ल०***— 'आत्मैवात्मना जितः' इत्यत्र आत्मा अन्तःकरणम् । 'अनात्मनस्तु शत्रुत्वे' इत्यत्र अनात्मनः चित्तजयरहितस्य, केनचित् समं शत्रुत्वे प्राप्ते आत्मैव शत्रुवत्, स्वचित्तं प्रत्येव शत्रुवद्वर्तेत । कलहिंनं प्रति कलहं न कुर्यात्, किन्तु स्वचित्तमेव शमयेदिति भावः ॥

***सा०सं०***— कीदृशस्यात्मनः कीदृशं मनो बन्धुः रिपुश्चेत्यत आह **बन्धुरिति** । **येनात्मना** येन जीवेनेति समानाधिकरणं वा । येन जीवेन कर्त्रा । **आत्मना** बुद्ध्या करणेनेति व्यधिकरणं वा । **आत्मा** मनः । **जितं** वशीकृतम् । **तस्यात्मनो** जीवस्य । **आत्मा** मनः । **बन्धुरेवोप-**कार्येव । भगवद्ध्यानोपयोगीति यावत् । **अनात्मनस्तु** अजितमनस्कस्य तु । जीवस्य । **आत्मैव** मन एव । **शत्रुवत्** प्रसिद्धशत्रुरिव । शत्रुत्वे अनुपकारित्वे वर्तेतेति मनोजयेन ध्यानयोगः कार्य इत्युक्तं भवति ।

यद्वा, कीदृशस्य हरिर्बन्धुः रिपुश्चेत्यत आह **बन्धुरिति** । पूर्ववदेवार्थो योजना च । परन्तु प्रथमान्तात्मशब्दोऽत्र परमात्मपरः । आत्मना बुद्ध्येत्यत्र बुद्ध्युपलक्षितभक्त्येत्यर्थः । अनात्मन-स्त्वित्यस्य भक्तिबलेनावशीकृतभगवत्स्वरूपस्य पुंस इत्यर्थः ॥

***अ०प्र०***— तत्कथमित्याह **बन्धुरिति** ।

येन[१], आत्मना[२], आत्मैव[३], जितः[४], तस्य[५], आत्मनः[६], आत्मा बन्धुः[७], अनात्मनस्तु[८] [९], शत्रुवत्[१०] शत्रुत्वे[११] वर्तेत[१२] इत्यन्वयः ।

येन[१], आत्मना = जीवेन कर्त्रा बुद्ध्या करणेन वा स्वेन आत्मविवेकेन वा[२], आत्मैव जितः = देहाहङ्कार एव वशीकृतः, मनो जितं वा[४], तस्य तथाभूतस्य आत्मनो = जीवस्य[६], आत्मा = मनः[७], बन्धुः = हितकृत्[८], अनात्मनस्तु = अजितमनस्कस्य पुंसः यथा सन्नपि भृत्यो

भृत्यकार्यमकुर्वन् न भृत्य इत्युच्यते तथा सन्नपि आत्मा मनो यस्यानुपकारी स अनात्मेत्युच्यते[८], आत्मैव = मन एव[९], शत्रुवत् = नाशकारीव[१०] शत्रुत्वे = अपकारित्वे अपकारप्रकरणे[११] वर्तते इत्यर्थः । तदुक्तम्—

'मनः परं कारणमामनन्ति । मन एव मनुष्याणां कारणमिति । बन्धाय विषयाऽऽसक्तं मुक्त्यै निर्विषयं स्मृतम्' इति वचनेभ्यः ॥ ६ ॥

**भाष्यम्**

**कस्य बन्धुरात्मेत्याह– बन्धुरात्मेति । आत्मा मनः । आत्मनः जीवस्य । आत्मना मनसा । आत्मानं जीवम् । आत्मैव मनः । आत्मना बुद्ध्या, जीवेनैव वा । स हि बुद्ध्या विजयति । उक्तं च—**

**"मनः परं कारणमामनन्ति ॥"**

**"मनः एव मनुष्याणां कारणं बन्धमोक्षयोः ॥"**

**"उद्धरेन्मनसा जीवं न जीवमवसादयेत् ।**
**जीवस्य बन्धुः शत्रुश्च मन एव न संशयः ॥"**

**"जीवेन बुद्ध्या हि यदा मनो जितं**
**तदा बन्धुः शत्रुरन्यत्र चास्य ।**
**ततो जयेद्बुद्धिबलो नरस्तद्**
**देवे च भक्त्या मधुकैटभारौ ॥"**

**—इत्यादि ब्रह्मवैवर्ते ॥**

**अनात्मनः अजितात्मनः पुरुषस्य, अजितमनस्कस्य । सदपि मनोऽनुपकारीत्यनात्मा । सन्नपि भृत्यो यस्य न भृत्यपदे वर्तते स ह्यभृत्यः । तस्यात्मा मन एव शत्रुवत् शत्रुत्वे वर्तते ॥ ६ ॥**

***प०टी०***— आत्मैवात्मनो बन्धू रिपुश्चेत्युक्तम् । तदुभयमेकत्र विरुद्धम् । अतः कस्य बन्धुः ? कस्य रिपुः ? इत्याशङ्क्य, उत्तरत्वेनोत्तरश्लोकमवतारयति **कस्येति** । 'बन्धुरात्माऽऽत्मनः' इत्यात्मशब्दो व्याचष्टे **आत्मेति** । उद्धरेदात्मनाऽऽत्मानं नात्मानम्' इत्यात्मशब्दत्रयार्थमाह **आत्म-**

**नेति** । 'येनात्मैवात्मना जितः' इत्यस्यात्मशब्दद्वयार्थमाह **आत्मैवेति** । 'आत्मना' इति बुद्धिः कुतः ? इत्यत आह **स हीति** । श्लोकार्थं प्रमाणैः स्थापयति **उक्तं चेति** । 'अनात्मनः' इत्येतदविद्यमानात्मन इति प्रतीतिनिरासाय व्याचष्टे **अजित इति** । अजितमनस्कत्वेऽनात्मत्व-प्रयोगः कथम् ? इत्यत आह **सदपीति** । अनुपकारिण्यविद्यमानताप्रयोगः क दृष्टः ? इत्यत आह **सन्निति** । 'अनात्म'शब्दार्थमुक्त्वा, 'अनात्मनस्तु शत्रुत्वे' इति योजयति **तस्येति** ॥

*न०टी०*— आद्यात्मशब्दौ पूर्वश्लोकस्थौ । अत्र स्वेनैव सात्मानमुद्धरेदिति मायिनोक्तम् । तद्व्युदासाय मनसा जीवमुद्धरेदित्येतमर्थं बहुवाक्यसंवादेन स्थापयति **उक्तं चेति** । तत्र न विद्यत आत्मा यस्यासावनात्मेति प्रतीतेः 'अनात्म'शब्दस्य भगवद्विवक्षितार्थं तावदाह **अनात्मन इति** । अजितात्मन्यनात्मशब्दप्रवृत्तिं सदृष्टान्तं घटयति **अजितमनस्कस्येत्यादिना** । एवम् 'अनात्म'-शब्दार्थं घटयित्वा तदादेः श्लोकार्धस्यार्थमाह **तस्येति** ॥

*प्र०दी०*— ''आत्मैव हि'' इत्युक्तमेवोत्तरश्लोके किमिति कथ्यत इति मन्दाशङ्का-निरासार्थमाह— **कस्येति** । 'किं विशेषणश्च' इत्यपि ग्राह्यम् । तस्यैव तमेव प्रति बन्धुत्वं रिपुत्वं च विरुद्धम् । तद्विशेषणभेदेन व्यवस्थाप्यम् । तथा च किं विशेषणस्यात्मनः किं विशेषणो वाऽत्मा बन्धू रिपुश्चेत्यर्थः । इति पृच्छायामिति शेषः । 'आत्मा', 'आत्मनः' इति पदद्वयमात्मशब्दस्याने-कार्थत्वात् व्याचष्टे— **आत्मेति** । नन्वाद्यश्लोके स्वपर्याय एवात्मशब्दः प्रकृतः । तदुपपादकद्वितीये कथमन्योऽर्थ इत्यत आह— **आत्मनेति** । अनयैव रीत्याऽद्यश्लोकोत्तरार्धगतात्मशब्दव्याख्यानं द्रष्टव्यम् । 'येनात्मैवात्मना जितः' इत्यत्र आत्मशब्दौ व्याचष्टे— **आत्मैवेति** । एवशब्दोपादानं व्याख्येयविवेकार्थम् । 'जीवेनैव' इत्यवधारणं प्राधान्यज्ञापनार्थम् । यदाऽऽत्मशब्दो जीवे तदा कर्तरि तृतीया । यदा बुद्धौ तदा करण इति ज्ञापयन्नुपपादयति— **स हीति** । विजयति विजयते मन इति शेषः । स्वेनैवेत्यादिव्याख्याननिरासार्थमुक्तेऽर्थे प्रमाणान्याह— **उक्तं चेति** । 'अनात्मन' इति नञ्समासो बहुव्रीहिर्वा स्यात् । नाद्यः । आत्मनः आत्माऽन्यत्वानुपपत्तेः । आत्मान्तरादन्यत्वस्य च प्रकृतेऽनुपयोगात् । न द्वितीयः । आत्मशब्दस्य जीववाचित्वे वा मनोवाचित्वे वा संसारिणि तदभावस्यासम्भवादित्यत आह— **अनात्मन इति** । बहुव्रीहिपरिग्रहसूचनाय 'पुरुषस्य' इत्यन्य-पदार्थो दर्शितः । अनात्मशब्दार्थं दर्शयितुमाह— **अजितेति** । ननु अविद्यमान आत्मा यस्या-सावनात्मा । तत्कथमुच्यतेऽजितात्मन इति । तत्राह— **सदपीति** । विद्यमानमपि मनो अजित-मनुपकारीति अविद्यमानसादृश्यात् अविद्यमानतामुपचर्य अजितात्मा अनात्मोक्त इत्यर्थः । गौण-प्रयोगे किं प्रयोजनमिति चेन्न, रूढोपचारे प्रयोजनानपेक्षणादिति भावेनाह— **सन्नपीति** । भृत्यपदे

भृत्यकार्यमकुर्वन् न भृत्य इत्युच्यते तथा सन्नपि आत्मा मनो यस्यानुपकारी स अनात्मेत्युच्यते[८], आत्मैव = मन एव[९], शत्रुवत् = नाशकारीव[१०] शत्रुत्वे = अपकारित्वे अपकारप्रकरणे[११] वर्तते इत्यर्थः । तदुक्तम्—

'मनः परं कारणमामनन्ति । मन एव मनुष्याणां कारणमिति । बन्धाय विषयाऽऽसक्तं मुक्त्यै निर्विषयं स्मृतम्' इति वचनेभ्यः ॥ ६ ॥

**भाष्यम्**

**कस्य बन्धुरात्मेत्याह— बन्धुरात्मेति । आत्मा मनः । आत्मनः जीवस्य । आत्मना मनसा । आत्मानं जीवम् । आत्मैव मनः । आत्मना बुद्ध्या, जीवेनैव वा । स हि बुद्ध्या विजयति । उक्तं च—**

**"मनः परं कारणमामनन्ति ॥"**

**"मनः एव मनुष्याणां कारणं बन्धमोक्षयोः ॥"**

**"उद्धरेन्मनसा जीवं न जीवमवसादयेत् ।**
**जीवस्य बन्धुः शत्रुश्च मन एव न संशयः ॥"**

**"जीवेन बुद्ध्या हि यदा मनो जितं**
**तदा बन्धुः शत्रुरन्यत्र चास्य ।**
**ततो जयेद्बुद्धिबलो नरस्तद्**
**देवे च भक्त्या मधुकैटभारौ ॥"**

**—इत्यादि ब्रह्मवैवर्ते ॥**

**अनात्मनः अजितात्मनः पुरुषस्य, अजितमनस्कस्य । सदपि मनोऽनुपकारीत्यनात्मा । सन्नपि भृत्यो यस्य न भृत्यपदे वर्तते स ह्यभृत्यः । तस्यात्मा मन एव शत्रुवत् शत्रुत्वे वर्तते ॥ ६ ॥**

***प०टी०*— आत्मैवात्मनो बन्धू रिपुश्चेत्युक्तम् । तदुभयमेकत्र विरुद्धम् । अतः कस्य बन्धुः ? कस्य रिपुः ? इत्याशङ्क्य, उत्तरत्वेनोत्तरश्लोकमवतारयति **कस्येति** । 'बन्धुरात्माऽऽत्मनः' इत्यात्मशब्दो व्याचष्टे **आत्मेति** । उद्धरेदात्मनाऽऽत्मानं नात्मानम्' इत्यात्मशब्दत्रयार्थमाह **आत्म-**

**नेति** । 'येनात्मैवात्मना जितः' इत्यस्यात्मशब्दद्वयार्थमाह **आत्मैवेति** । 'आत्मना' इति बुद्धिः कुतः ? इत्यत आह **स हीति** । श्लोकार्थं प्रमाणैः स्थापयति **उक्तं चेति** । 'अनात्मनः' इत्येतदविद्यमानात्मन इति प्रतीतिनिरासाय व्याचष्टे **अजित इति** । अजितमनस्कत्वेऽनात्मत्व-प्रयोगः कथम् ? इत्यत आह **सदपीति** । अनुपकारिण्यविद्यमानताप्रयोगः क्व दृष्टः ? इत्यत आह **सन्निति** । 'अनात्म'शब्दार्थमुक्त्वा, 'अनात्मनस्तु शत्रुत्वे' इति योजयति **तस्येति** ॥

***न०टी०***—आद्यात्मशब्दौ पूर्वश्लोकस्थौ । अत्र स्वेनैव सात्मानमुद्धरेदिति मायिनोक्तम् । तद्व्युदासाय मनसा जीवमुद्धरेदित्येतमर्थं बहुवाक्यसंवादेन स्थापयति **उक्तं चेति** । तत्र न विद्यत आत्मा यस्यासावनात्मेति प्रतीतेः 'अनात्म'शब्दस्य भगवद्विवक्षितार्थं तावदाह **अनात्मन इति** । अजितात्मन्यनात्मशब्दप्रवृत्तिं सदृष्टान्तं घटयति **अजितमनस्कस्येत्यादिना** । एवम् 'अनात्म'-शब्दार्थं घटयित्वा तदादेः श्लोकार्धस्यार्थमाह **तस्येति** ॥

***प्र०दी०***— ''आत्मैव हि'' इत्युक्तमेवोत्तरश्लोके किमिति कथ्यत इति मन्दाशङ्का-निरासार्थमाह— **कस्येति** । 'किं विशेषणश्च' इत्यपि ग्राह्यम् । तस्यैव तमेव प्रति बन्धुत्वं रिपुत्वं च विरुद्धम् । तद्विशेषणभेदेन व्यवस्थाप्यम् । तथा च किं विशेषणस्यात्मनः किं विशेषणो वाऽत्मा बन्धू रिपुश्चेत्यर्थः । इति पृच्छायामिति शेषः । 'आत्मा', 'आत्मनः' इति पदद्वयमात्मशब्दस्याने-कार्थत्वात् व्याचष्टे— **आत्मेति** । नन्वाद्यश्लोके स्वपर्याय एवात्मशब्दः प्रकृतः । तदुपपादकद्वितीये कथमन्योऽर्थ इत्यत आह— **आत्मनेति** । अनयैव रीत्याऽद्यश्लोकोत्तरार्धगतात्मशब्दव्याख्यानं द्रष्टव्यम् । 'येनात्मैवात्मना जितः' इत्यत्र आत्मशब्दौ व्याचष्टे— **आत्मैवेति** । एवशब्दोपादानं व्याख्येयविवेकार्थम् । 'जीवेनैव' इत्यवधारणं प्राधान्यज्ञापनार्थम् । यदाऽऽत्मशब्दो जीवे तदा कर्तरि तृतीया । यदा बुद्धौ तदा करण इति ज्ञापयन्नुपपादयति— **स हीति** । विजयति विजयते मन इति शेषः । स्वेनैवेत्यादिव्याख्याननिरासार्थमुक्तेऽर्थे प्रमाणान्याह— **उक्तं चेति** । 'अनात्मन' इति नञ्समासो बहुव्रीहिर्वा स्यात् । नाद्यः । आत्मनः आत्माऽन्यत्वानुपपत्तेः । आत्मान्तरादन्यत्वस्य च प्रकृतेऽनुपयोगात् । न द्वितीयः । आत्मशब्दस्य जीववाचित्वे वा मनोवाचित्वे वा संसारिणि तदभावस्यासम्भवादित्यत आह— **अनात्मन इति** । बहुव्रीहिपरिग्रहसूचनाय 'पुरुषस्य' इत्यन्य-पदार्थो दर्शितः । अनात्मशब्दार्थं दर्शयितुमाह— **अजितेति** । ननु अविद्यमान आत्मा यस्या-सावनात्मा । तत्कथमुच्यतेऽजितात्मन इति । तत्राह— **सदपीति** । विद्यमानमपि मनो अजित-मनुपकारीति अविद्यमानसादृश्यात् अविद्यमानतामुपचर्य अजितात्मा अनात्मोक्त इत्यर्थः । गौण-प्रयोगे किं प्रयोजनमिति चेन्न, रूढोपचारे प्रयोजनानपेक्षणादिति भावेनाह— **सन्नपीति** । भृत्यपदे

सेवादौ । पदानां व्यवहितत्वात् 'अनात्म' इत्यर्धं व्याचष्टे— **तस्येति** । **तस्य** अजितमनस्कस्य । बन्धुरेवेत्येवार्थः । शत्रुवत् प्रसिद्धशत्रुरिव । शत्रुत्वेऽपकारित्वे ॥

***भा०दी०***— **अनयेवेति** । पूर्वार्धगतात्मपदद्वयव्याख्यानरीत्यैव जीवमनःपरत्वेन व्याख्यानं द्रष्टव्यमित्यर्थः । **व्याख्येयेति** । एवं हि जीवेनैवेत्येवकारो व्याख्यानेऽप्यर्थ इत्यत आह **प्राधान्येति** । आत्मनेत्युक्तकरणापेक्षयेति भावः । ................ इत्यात्मनेपदोक्तेराह **विजयत इति** ॥

***भा०र०***— ननु "येनात्मैवात्मना जितः" इति विशिष्टस्यैव तत्र बन्धुत्वाद्युक्तेर्नोक्तमेवोच्यते ? इत्यत आह **मन्देति** । बन्धुत्वेनोक्तस्यात्मनो रिपुत्वं घटयितुमाह **किंविशेषणश्चेत्यपि ग्राह्यमिति** । किं विशेषणं यस्यात्मन इति बहुव्रीहिणा पुंस्त्वम् । "आत्मनो बन्धुः" इति प्रतिसम्बन्धिन उक्तत्वात् कथमेवमाकाङ्क्षा ? इत्यत आह **तस्यैवेति** । उक्ताशङ्काऽपनोदाय **कस्येति** । भाष्यार्थमाह **किंविशेषणस्येति** । "येनात्मैवात्मना जितः" इति गीतायां "जीवेन बुद्ध्या हि यदा मनो जितम्" (ब्र.वै.) इत्युदाहरिष्यमाणप्रमाणे च वैशिष्ट्यस्यैव मनसो बन्धुत्वावगमादाह **किंविशेषणो वेति** । "बन्धू रिपुः" इत्यत्र "ढ्रलोपे पूर्वस्य दीर्घोऽणः" इति दीर्घः । प्रश्नोत्तररूपत्वे "इत्यत आह" इति विन्यासः स्यादित्यतः 'इति' इत्यनूद्य शेषमाह **इति पृच्छायामिति** ।

"आत्माऽर्कचन्द्रवाताग्निजीवेषु परमात्मनि ।
देहे यत्ने धृतौ कीर्तौ बुद्धौ मनसि च श्रुतः ॥ (के.को.)

इति अभिधानादाह **अनेकार्थत्वादिति** ।

**आद्यश्लोके** 'उद्धरेत्' (६.५) इत्याद्यश्लोके । उपपाद्योपपादकभावेनैकार्थ्याद् आद्यत्वद्वितीयत्वविवक्षा ज्ञेया । **स्वपर्याय एवेति** । अन्यस्योद्धारविधिगोचरतायां अवसादनप्रसक्तेश्चाभावेन तस्मिन्निषेधविषयतायाश्चायोगेन स्वशब्दपर्यायो जीववाचक एव वक्तव्यः । तथा च **सङ्करः** "न ह्यन्यः स्वस्य कश्चिद्बन्धुः संसारनिमग्नस्य भवति" (शां.भा. ६.५) इत्यभाषतेति भावः । **अन्यार्थः** मनोऽर्थकः । **आत्मनेतीति** । तथा च पूर्वश्लोकेऽपि मनसः प्रकृतत्वात् नोक्तानुपपत्तिरिति भाष्यभाव इति हृदयम् । उद्धारादौ हेतूक्तिपरे "आत्मैव ह्यात्मनः" इत्याद्यश्लोकोत्तरार्धे जीव एवोच्यत इति कथमेवमुक्तिः ? इत्यत आह **अनयैवेति** । पूर्वार्धगतात्मशब्दद्वयव्याख्यानरीत्यैवेत्यर्थः । वक्ष्यति चात्मशब्दस्य मनोऽर्थत्वे मानमिति भावः । ननु "**आत्मैव** मन एव" इति वक्तव्यम् । तत्कथं मन इति ? यदि स्फुटत्वादनुक्तिः, तर्हि "**आत्मा** मनः" इत्येव युक्तमित्यत आह **एवशब्देति** । बहूनामात्मशब्दानां बुद्ध्युपारूढत्वात् "येनात्मैवात्मना जितः" इत्यत्र विद्यमानमात्मपदं व्याख्येय-

मिति ज्ञापनार्थम् एवशब्दशिरस्कात्मपदं गृहीतम् । अन्यथा 'बन्धुरात्मा' इत्यात्मशब्दस्य मनोऽर्थतया व्याख्याततत्वात् पुनर्व्याख्यानं व्यर्थमिति शङ्का स्यादिति भावः ।

एवशब्दस्यान्ययोगव्यवच्छेदार्थत्वे 'बुद्ध्या' इति व्याख्यानमयुक्तम् ? इत्याशङ्क्याह **प्राधान्येति** । 'बुद्ध्यपेक्षया' इति शेषः । "करणे तृतीया" इति वर्तते । "कर्तृकरणयोस्तृतीया" इति स्मरणात् । इदं च 'सः' इति कर्तृवाचकपदेन 'बुद्ध्या' इति करणतृतीयान्तपदेन च ज्ञायत इति भावेनोक्तम् **ज्ञापयन्निति** । तथा च वक्ष्यते **जीवेन बुद्ध्येति** । 'विजयति' इति कथं परस्मैपदम् ? "विपराभ्यां जेः" इति विपूर्वस्य जयतेरात्मनेपदविधानादित्यत आह **विजयति विजयत इति** । महाभाष्ये " 'षष्ठीयुक्तश्छन्दसि वा' इत्यत्र 'वा' इति योगविभागाश्रयणेन 'छन्दसि वा सर्वे विधयो भवन्ति' इत्युक्त्वा, परस्मैपदव्यत्ययः 'प्रतीपमन्य ऊर्मिः युध्यति', 'युध्यते' इति प्राप्ते" इत्युक्तत्वाद् युक्तं परस्मैपदम् । भाष्यस्य छन्दस्तुल्यत्वादिति भावः । "चन्द्रादयस्तु मन्यन्ते सर्वस्मादुभयं पदम्" इति वचनात्, "व्यत्ययो बहुलम्" इति सूत्रे "सुप्तिङुपग्रहलिङ्गनराणाम्" इति श्लोकं व्याकुर्वता हरदत्तेन परस्मैपदात्मनेपदयोः उपग्रहशब्दो वर्तते इत्युक्त्वा "स ब्रह्मचारिणमिच्छते", 'इच्छति' इति प्राप्ते, 'ऊर्मिर्युध्यति' 'युध्यते' इति प्राप्त इति भाष्योक्तमेवोदाहृत्य व्यत्ययेन परस्मैपदमप्यस्तीति भावनाच्च अत्र परस्मैपदं नानुचितम् । अत एव व्यत्ययसूत्रमहाभाष्ये– " 'स च न मरति', 'म्रियते' इति प्राप्ते" इत्युक्तमित्यपि **आहुः** । "ततो जयेद् बुद्धिबलो नरस्तन्मनः" (ब्र.वै.) इति प्रमाणानुसारेण 'विजयति' इत्यस्य कर्म पूरयति **मन इतीति** ।

नन्वेकस्यात्मशब्दस्य मनोबुद्ध्यात्मादिनानार्थत्वे न प्रमाणमस्ति । अतो 'येन' इत्यादौ "येनात्मना स्वेनैवात्मलक्षणया आत्मा कार्यकारणसङ्घातो जितः" (शां.भा. ६.६.) इति **सङ्कोक्तिरीतिरेवाश्रयणीया**, इत्याशङ्क्याह **स्वेनैवेति** । **परं कारणम्** बन्धमोक्षयोः । **उद्धरेत्** ऊर्ध्वं हरेत् योगारूढताम् आपादयेत् । **अवसादयेत्** अधो नयेत् । मनस आत्मोद्धारे तदवसादे च कथं कारणत्वम् ? इत्यत उक्तम् **जीवस्य बन्धुः शत्रुश्चेति** । कथमेकस्यैव बन्धुत्वं शत्रुत्वं च विप्रतिषिद्धम् ? इत्यत उक्तम् **बुद्ध्या जितं बन्धुः, अन्यत्र शत्रुरिति** । बुद्धिः बलं यस्य स तथा, **तत्** मनः । न केवलं बुद्धिबलेन, **मधुकैटभयोररौ देवे** भगवति भक्त्या च इति प्रमाणानि स्फुटत्वाद् अव्याख्यातानि ।

आत्मनोऽन्यो अनात्मा, अनश्व इति यथा इति, अत्रापि वर्तिपदार्थ आत्मा किं स्वात्मैव विवक्षित आहोस्विज्जीवमात्रमिति विकल्पं हृदि निधायाद्यं दूषयति **नाद्य इति** । द्वितीयं दूषयति **आत्मान्तरादिति** । अविद्यमान आत्मा यस्मिन् यस्य वा सः अनात्मा इति बहुव्रीहिपक्षं दूषयति

**न द्वितीय इति** । **आत्मशब्दस्य** अनात्मपदान्तर्गतस्य । **तदभावस्य** आत्माभावस्य । **असम्भवादिति** चिदचित्संवलितस्यैव वस्तुनः संसारित्वादिति भावः । यद्वक्ष्यति 'सुहृन्मित्र' (६.९) इत्यत्र "चेतनाचेतनपिण्डे जीवशब्दस्य प्रयोगात्" (प्र.दी. ६.९) इति 'पुरुषस्य' इति कस्य व्याख्यानम् ? इत्यतस्तद्भावमाह **बहुव्रीहीति** । बहुव्रीहिपक्षे जीववाचित्वं मनोवाचित्वं वा न सम्भवतीति दूषितमित्याशङ्क्य मनोवाचित्वम् अत्राभिसंहितमिति भाष्यमवतारयति **अनात्मशब्दार्थमिति** । **सत्** निर्दुष्टम् इत्युक्तौ 'अनुपकारि' इति व्याहतम् ? इत्यत आह **विद्यमानमपीति** । अनुपकारित्वं च तस्य. विशेषणावच्छिन्नस्यैवेति भावेन विशेषणमाह **अजितमिति** । 'उपचर्य' इति ल्यप्, गौणीं वृत्तिमाश्रित्येत्यर्थः । **प्रयोजनानपेक्षणादिति** । चित्रलिखितसिंहादौ सिंहशब्दप्रयोगस्येवेति भावः । "स हि अभृत्यः" इति विद्यमानोऽपि भृत्यो न **सेवादौ** उपकारे वर्तत इत्यविद्यमानसादृश्यात् अविद्यमान इत्युपचर्य "असेवकभृत्यो अभृत्यो ह्युच्यते" इति भाष्यार्थ उक्तप्रायत्वादनुक्तः ।

'आत्मनः' इत्यस्य परामर्शः **तस्येति** । तदर्थमाह **अजितमनस्कस्येति** । एवशब्दग्रहणाभिप्रायमाह **बन्धुरेवेतीति** । यो बन्धुत्वेनोक्त आत्मा स एवेत्येवकारार्थ इत्यर्थः । 'तत्र तस्येव' इति सप्तमीषष्ठीसमर्थाद् वतिप्रत्यय इत्यङ्गीकारे प्रकृतानन्वयात्, प्रथमान्ताद् वतिरिति भावेन व्याचष्टे शत्रुवत् **प्रसिद्धशत्रुरिवेति** । तथा च विष्णुतत्त्वनिर्णयटीकायाम् । "तत्र तस्येव" इति लक्षणस्य प्रायिकत्वेनाभियुक्तैर्व्याख्यातत्वाद् 'घटवत्' इति युज्यत इति । **केचित्तु** 'शत्रुवत्' इति फलितार्थप्रदर्शनम् । "शत्रुणा तुल्यं वर्तते" इत्येव व्युत्पत्तिः । "तेन तुल्यं क्रिया चेद्वतिः" इति वतिप्रत्ययसम्भवात् । अत एव 'स्थानिवदादेशः' इति सूत्रे "स्थानिना तुल्यं वर्तत इति स्थानिवत्" इति व्याख्यातं वृत्तावित्याहुः । ननु शत्रुः शातयिता । तत्कथमात्मा शत्रुः ? तथात्वे च कथं वतिः ? इत्याशङ्क्य, अत्र शत्रुत्वम् अनुपकारित्वसादृश्यादेव ज्ञातव्यमिति भावेनाह **शत्रुत्वे अपकारित्व इति** ॥ ६ ॥

***गीताश्लोकद्वयाक्षरार्थस्तु***— यस्याधिकार्यादिकमुक्तं स एव योगो अभियोगेन कर्तव्य इत्युच्यते **उद्धरेदिति** । प्रकरणाद् ध्यानयोगाधिकारित्वेनोक्तः पुरुषः **आत्मना** मनसा **आत्मानम्** स्वात्मानं जीवम् **उद्धरेत्** ऊर्ध्वं हरेत् योगमारोहयेत् । **आत्मानं** जीवं **नावसादयेत्** नाधः पातयेत् । **हि** यस्मात् **आत्मा** मन **एवात्मनो** जीवस्य **बन्धुः**, आत्मैव मन एव **रिपुरात्मनः** । ॥ ५ ॥

तस्यैव तमेव प्रति बन्धुत्वं रिपुत्वं च विरुद्धमिति, तद् विशेषणभेदेन व्यवस्थाप्यते । ततश्च किं विशेषणस्यात्मनः किंविशेषणो वाऽऽत्मा बन्धू रिपुश्चेति पृच्छायाम् उच्यते **बन्धुरिति** । **येन आत्मना** जीवेन बुद्ध्या करणेन **आत्मा** मनो **जितः** विषयेभ्य आहृत्य वशीकृतम्, **तस्यात्मनो** जीवस्य **आत्मा** मनो बन्धुरेव उपकार्येव । **अनात्मनः** अजितमनस्कस्य तु पुरुषस्य आत्मा मन एव यो बन्धुत्वेनोक्तः स एव **शत्रुवत्** प्रसिद्धशत्रुरिव शत्रुत्वे अपकारित्वे **वर्तेत** वर्तत इति जानीयात् इति ॥ ६ ॥

**गीतातात्पर्यनिर्णयः**

**"उद्धरेतैव संसाराज्जीवात्मानं परात्मना ।**
**विष्णुर्बन्धुः सतां नित्यं परात्मा ह्यसतामरिः ।**
**तत्प्रसादजया भक्त्या जितो यस्य वशो त्विव ।**
**वर्तते तस्य मित्रं स तदन्यस्य च शत्रुवत् ॥" इति च ।**

**"परमात्मा समाहितः" इति वाक्यशेषाच्च ॥ ५-६ ॥**

*प्रका०*— उद्धरेदित्यादि व्याचष्टे **उद्धरेतैवेत्यादिना** । "जितात्मनः प्रशान्तस्य परमात्मा समाहितः" इति वाक्यशेषात् "बन्धुरात्मे"त्यादिरुक्तार्थो युज्यत इत्यर्थः ॥

*न्या०दी०*— योगारोहस्य भगवत्प्रसादो मुख्यसाधनमित्युच्यते 'उद्धरेत्' इति । तत्र आत्मपदं जीवादिमात्रविषयं न परमात्मविषयमित्यन्यथाप्रतीतिनिरासाय स्मृत्यैव व्याचष्टे **उद्धरेतेति** ॥ कुतः परमात्मना स्वात्मानमुद्धरेदित्यत आह **विष्णुरिति** ॥ कीदृशाः सन्तः कीदृशा असन्त इत्यत उक्तं विवृणोति **तदिति** ॥ तदन्यस्य भक्त्याऽवशीकृतपरमात्मनः पुरुषस्य । इतोऽप्यत्र आत्मपदेन परमात्मग्रहणं युक्तमित्याह **परमात्मेति** ॥ येन आत्मा वशीकृतस्तस्यासौ बन्धुतया किं करोतीत्यपेक्षायां वाक्यशेषे वशीकृतोऽसौ परमात्मा तस्य हृदि सम्यगाहितो भवतीत्युक्तत्वात् पूर्वमप्यात्मपदेन परमात्मैवोच्यत इति ज्ञायत इति भावः ॥

*भा०दी०*— **योगारोहस्येति** । उपायसम्पूर्तेरित्यर्थः ।

**गीता**

**जितात्मनः प्रशान्तस्य परमात्मा समाहितः ।**
**शीतोष्णसुखदुःखेषु तथा मानाप(व)मानयोः ॥ ७ ॥**

*वि०वि०*— जितात्मनः फलमाह **जितात्मन इति** । जितात्मत्वादेव प्रशान्तस्य प्रायो विषयानुन्मुखमनसः । परमात्मा सम्यक् हृद्याहितः सन्निहितो भवति । परमात्मापरोक्षज्ञानं भवतीत्यर्थः । अपरोक्षज्ञानिनो लक्षणं स्पष्टयति **शीतोष्णेत्यादिना** ॥

*सा०सं०*— ननु मनसो भगवतश्च वशीकरणे तावस्य बन्धू भवत इत्युक्तम् । केनोपकारेण तावस्य बन्धू । 'आत्मना आत्मानमुद्धरेत्' इति, आत्मोद्धारं कुरुत इत्युक्तमिति चेत् स एव क इत्यत आह **जितेति** । **जितात्मनः** वशीकृतमनस्कस्य भक्त्या वशीकृतभगवत्स्वरूपस्य प्रशान्तिर्भवति । स्वत एव मनसो विषयेष्वप्रवृत्तिर्भवतीत्यर्थः । सम्पूर्णयोगसिद्धिमद्रूपो योगारूढो भवतीति यावत् ॥

*अ०प्र०*— स्वस्मिन् बन्धुत्वं स्फुटयति **जितात्मन इति** ।

जितात्मनः[१], प्रशान्तस्य[२], शीतोष्णसुखदुःखेषु[३], तथा मानाप(व)मानयोः[४] परमात्मा[५], समाहितः[६] ॥

जितात्मनः = देहादिविषयेभ्यः सकाशात् तस्य[१], प्रशान्तस्य = प्रकर्षेणोपशान्तः कामो यस्य तस्य रागादिरहितस्य प्रशान्तत्वाज्जितमनसः प्रायो विषया गतिर्भवति तस्य प्रायो विषयान्मुखमनसः भक्त्या वशीकृतपरमात्मन इति वा एतादृशस्य[२], शीतोष्णजन्यसुखदुःखेषु[३], तथा मानाप(व)मानयोः सत्स्वपि[४], परमात्मा = तस्य हृदि परमात्मा[५], समाहितः = स्थितो भवति[६], परमात्मनिष्ठो भवतीत्यर्थः = प्रत्यक्ष एव स्थितेत्यर्थः ॥ ७ ॥

**गीता**

## ज्ञानविज्ञानतृप्तात्मा कूटस्थो विजितेन्द्रियः ।
## युक्त इत्युच्यते योगी समलोष्टाश्मकाञ्चनः ॥ ८ ॥

*वि०वि०*— शीतोष्णादिषु कूटस्थः । कूटमाकाशः 'कूटं खं विदलं व्योम सन्धिराकाश उच्यते' इत्यभिधानात् । तद्वत् स्थितो निर्विकार इत्यर्थः । तत्र हेतुः । ज्ञानविज्ञानतृप्तात्मा विजितेन्द्रियः । ज्ञानं सामान्यज्ञानम्। विज्ञानं विशेषज्ञानम्—

'सर्वत्र विष्णोरुत्कर्षज्ञानं ज्ञानमितीर्यते ।
तद्विशेषपरिज्ञानं विज्ञानमिति गीयते ॥'

इत्युक्तेः । ताभ्यां सन्तुष्टं मनो यस्येति तथा योगी योगं कुर्वन् । युक्तो योगसम्पूर्णः । एवम्भूतो योगानुष्ठाता योगसम्पूर्ण उच्यत इत्यर्थः ॥

***सा०सं०***— 'यदा हि नेन्द्रियार्थेषु' इत्यत्रापरोक्षिणो लक्षणोक्तावपीह लक्षणं स्पष्टयति— **शीतोष्णेत्यादि**सार्धश्लोकद्वयेन । शीतोष्णादिद्वन्द्वधर्मेषु । **कूटस्थः** कूटमाकाशं तद्वत् तिष्ठतीति कूटस्थः । उत्सेकानुत्सेकरूपविकारहीन इत्यर्थः । तत्र **हेतुर्ज्ञानेत्यादि** । वेदादौ सर्वत्र विष्णोरुत्कर्षज्ञानं ज्ञानमित्युच्यते । तदवान्तरमाहात्म्यविशेषज्ञानं विज्ञानमित्युच्यते ।

यद्वा, परोक्षापरोक्षज्ञाने ज्ञानविज्ञानशब्दाभ्यां वाच्ये ताभ्यां तृप्तो विषयेष्वलम्बुद्धिमान् विजितेन्द्रियश्च । यतोऽतः । **कूटस्थः** । **समलोष्टाश्मकाञ्चनः** । **योगी** योगं कुर्वन् । **युक्तः** योगसम्पूर्णः । **इत्युच्यते** ॥

***अ०प्र०***— योगारूढस्य लक्षणं उपपाद्य उपसंहरति **ज्ञानविज्ञानेति** ।

ज्ञानविज्ञानतृप्तात्मेत्यादि विशेषणचतुष्टयवान्[१-४], योगी[५], युक्तः[६], इत्युच्यते इत्यन्वयः ।

ज्ञानविज्ञानतृप्तात्मा = ज्ञानं परोक्षं औपदेशिकं सामान्यविषयं वा, विज्ञानं विशेषविषयं अपरोक्षानुभवः । यद्वा, ज्ञानं परमात्मविवेकः विज्ञानं साक्षात्कारः ताभ्यां तृप्तः निराकाङ्क्षः विषयेष्वलम्बुद्धियुक्तो वा आत्मा मनो यस्य सः तथा[१], कूटस्थः = कूटमाकाशः तद्वत्स्थितः निर्विकारः । यद्वा, कूटे भूतादिसङ्घाते देहे तिष्ठतीति तथा व्यापक इत्यर्थः[२], अत एव जितेन्द्रियः विशेषेण जितानीन्द्रियाणि श्रोत्रादीनि शब्दादिभ्यो विषयेभ्यो येन स तथा[३], समानि लोष्टाश्मकाञ्चनादीनि समलोष्टाश्मकाञ्चनः समानि लोष्टं च मृत्पिण्डश्च अश्म च पाषाणश्च काञ्चनं - सुवर्णं च लोष्टाश्मकाञ्चनानि यस्य सः; काञ्चनं लोष्टसमं अनर्घ्यरत्नं पाषाणसमं यस्य सः समलोष्टाश्मकाञ्चनः; लोष्टादिवत् काञ्चनमपि उदासीनं यस्येति[४], एतादृशो योगी योगं कुर्वन्[५], स युक्तः = योगारूढः[६], इत्युच्यते = एवम्भूतो योगानुष्ठाता योगसम्पूर्ण इत्युच्यते[७], इत्यर्थः । तदुक्तम्—

'सर्वत्र विष्णोरुत्कर्षज्ञानं, ज्ञानमितीर्यते ।
तद्विशेषपरिज्ञानं विज्ञानमिति गीयते ॥'

यद्वा,

'सामान्यैर्ये त्वविज्ञेया विशेषा मम गोचराः ।
देवादीनां च तज्ज्ञानं विज्ञानमिति कीर्तितम् ॥
श्रवणान्मननाच्चैव यज्ज्ञानमुपजायते ।
तज्ज्ञानं दर्शनं विष्णोः विज्ञानं क्रतुरब्रवीत् ॥
विज्ञानं ज्ञानमङ्गादेर्विशिष्टं दर्शनं तथा ॥' इति ।

मम सामान्यधर्मविषयकं सामान्यपुंसकर्तृकं ज्ञानं, सामान्यनरा ज्ञेया मम विशेषा देवादीनां गोचराः तज्ज्ञानं विज्ञानं विशिष्टं दर्शनं विना हरिणोपदिष्टं तं प्रतिपादकं वैष्णवं शास्त्रमिति प्रमाणार्थः ॥ ८ ॥

**भाष्यम्**

जितात्मनः फलमाह— **जितात्मन इति** । जितात्मा हि प्रशान्तो भवति । न तस्य मनः प्रायो विषयेषु गच्छति । तदा च परमात्मा सम्यक् हृद्याहितः सन्निहितो भवति, अपरोक्षज्ञानी स भवतीत्यर्थः । अपरोक्षज्ञानिनो लक्षणं स्पष्टयति— **शीतोष्णेत्यादिना** । शीतोष्णादिषु कूटस्थः । ज्ञानविज्ञानतृप्तात्मा विजितेन्द्रियः इति कूटस्थत्वे हेतुः । विज्ञानं विशेषज्ञानम् । अपरोक्षज्ञानं वा । तच्चोक्तम्—

"सामान्यैर्ये त्वविज्ञेया विशेषा मम गोचराः ।
देवादीनां तु तज्ज्ञानं विज्ञानमिति कीर्तितम् ॥" इति ॥

"श्रवणान्मननाच्चैव यज्ज्ञानमुपजायते ।
तज्ज्ञानं दर्शनं विष्णोर्विज्ञानं शम्भुरब्रवीत् ।"

"विज्ञानं ज्ञानमङ्गादेर्विशिष्टं दर्शनं तथा ॥" इत्यादि ।

कूटस्थो निर्विकारः । कूटवत् स्थित इति व्युत्पत्तेः । कूटं = आकाशः ।

"कूटं खं विदलं व्योम सन्धिराकाश उच्यते ॥"

इत्यभिधानात् । योगी योगं कुर्वन् । युक्तो योगसम्पूर्णः । एवम्भूतो योगानुष्ठाता योगसम्पूर्ण उच्यत इत्यर्थः ॥ ७ ॥ ८ ॥

*प०टी०*— नन्वेवं जितं मनो यदि बन्धुः, तर्ह्यपि किं फलम् ? इत्याशङ्क्य, उत्तरत्वेनोत्तरार्धमवतारयति **जितात्मन इति** । जितात्मत्वेन कथं ज्ञानम् ? इत्यत आह **जितात्मेति** । तदा चेति प्रशान्तत्वे । हृदये परमात्मनः स्थितिः सर्वसमेत्यत उक्तम् **सम्यगिति** । तदेव विवृणोति **अपरोक्षेति** । इन्द्रियार्थाननुषङ्गमात्रं यज्ज्ञानिलक्षणं पूर्वमुक्तम्, तत्सुषुप्त्यादावतिव्याप्तमित्याशङ्क्य,

उत्तरत्वेनोत्तरं सार्धमवतारयति **अपरोक्षेति**। 'शीतोष्ण...' इत्यादिसप्तम्याः केनान्वयः ? इत्यत आह **शीतेति**। सुषुप्त्यादावतिव्याप्तिं परिहर्तुमाह **ज्ञानेति**। सुप्तादेः पूर्वोक्तलक्षणसद्भावेऽपि न तेन ज्ञानविज्ञानतृप्तात्मत्वादिकारणमित्यर्थः। ज्ञानाद्विशेषज्ञानस्य भेदं सप्रमाणकमाह **विज्ञानमिति**। **सामान्यैः** साधारणजनैः। नित्यत्वादिवाचिकूटस्थशब्दस्य कथमत्रान्वयः इत्यत आह **कूटस्थ इति**। कथं 'कूटस्थ'शब्दो निर्विकारवाचकः ? इत्यत आह **कूटवदिति**। किं तत्कूटम् ? इति तत्राह **कूटमिति**। 'युक्त इत्युच्यते' 'योगी' इत्यनयोरर्थभेदमाह **योगीति**। कथं योगं कुर्वन् योगसम्पूर्णः ? इत्यत आह **एवमिति**॥

***न०टी०***—मनो जित्वा तेन स्वात्मानमुद्धरेदित्युक्तम्। तत्रात्मोद्धारः कः ? इत्याकाङ्क्षायां प्रकृतयोगारोह एवेति भावेनोत्तरार्धमवतार्य व्याचष्टे **जितात्मनः फलमिति**। पदद्वयं हेतुहेतुमद्भावेन योजयति **जितात्मा हीति**। 'प्रशान्त'शब्दो विषयोपरतिमाचष्ट इत्याह **न तस्येति**। विषयोपरते च मनसि किम् ? इत्याकाङ्क्षायामाह **तदा चेति**। सदा सन्निहितत्वात् तदा को विशेषः ? इत्यत आह **अपरोक्षेति**। कथं तमितरे त्ववगच्छन्ति ? इत्याकाङ्क्षायामाह **अपरोक्षज्ञानिन इति**। 'यदा हि नेन्द्रियार्थेषु' इत्यादिनोक्तत्वादत्र **स्पष्टयति** इत्युच्यते। व्यवहितानामपि पदानां योग्यतयाऽन्वयं दर्शयति **शीतोष्णादिष्वित्यादिना**। ज्ञानाद्विज्ञानस्य भेदं वक्तुं विज्ञानशब्दार्थं विभज्य सप्रमाणकमाह **विज्ञानमित्यादिना**। श्रवणात् इत्यादिना ज्ञानमप्युक्तमिति सूचयितुं **तच्च** इति **च**शब्दः। **सामान्यैः** साधारणजनैरित्यर्थः। नित्यत्वादिवाचिनः कूटस्थशब्दस्यात्रानन्वयमाशङ्क्य, तस्यात्र विवक्षितार्थमुक्त्वा तं च घटयति **कूटस्थ इत्यादिना**। युक्तयोगिशब्दयोरेकार्थत्वमाशङ्क्य परिहरति **योगीति**। ननु योगं कुर्वन्नेव कथं योगसम्पूर्ण उच्यते ? इत्यत आह **एवम्भूत इति**। योगफलस्य भगवद्दर्शनस्य प्राप्तत्वात् पुनर्योगमाचरन्नपि योगसम्पूर्ण उच्यत इत्यर्थः॥

***प्र०दी०***— योगो विहितः। तत्किं 'जितात्मनः' इत्यनेनेत्यत आह— **जितात्मन इति**। उपकारी बन्धुरुच्यते। तत्र जितं मनः कमुपकारं करोति। येन बन्धुः स्यात्। आत्मोद्धारं करोतीति चेत्। स एव च क इत्याशङ्क्येति शेषः। जितात्मनः फले वक्तव्ये 'प्रशान्तस्य' इत्यनुवादः किमर्थमित्यत आह— **जितात्मा हीति**। वाक्यभेदेनेदमेव फलकथनमिति भावः। ननु जितात्मत्वमेव प्रशान्तत्वम्। तत्कथं तत्फलं स्यादित्यत आह— **नेति**। तस्य जितात्मनः स्वत एवेति शेषः। तर्हि निराकाङ्क्षत्वादुत्तरं वाक्यं व्यर्थमित्यतः परमफलं दर्शयितुं तदिति भावेन न्यूनमध्याहारेण पूरयन् व्याचष्टे— **तदा चेति**। प्रशान्तत्वे सति परमात्मा सर्वेषां हृदि सन्निहित एव। तत्कुतः प्रशान्तस्य विशेष इत्यतः सम्यक्पदसूचितार्थं विवृणोति— **अपरोक्षेति**। योगारूढ इत्यर्थः। यदा

हीति योगारूढस्य लक्षणमुक्तम् । तत्किमर्थं पुनरुच्यत इत्यत आह— **अपरोक्षेति** । सार्धश्लोकद्वयग्रहणायादिपदम् । अत्र सप्तम्या अन्वयो न दृश्यते । अत आह— **शीतेति** ।

अत्र भास्करोऽन्वयमपश्यन् परमात्मा समाहित इति सम्प्रदायगतं पाठं विसृज्य ''परमात्मसमा मतिः'' इति पाठान्तरं प्रकल्प्य समा मतिरिति त्वावृत्त्या सप्तम्या अन्वयमुक्त्वा पूर्वपाठेऽन्वयाभाव इत्यवादीत् । तदनेनापहस्तितं भवति । कृत्रिमेऽपि पाठे सुहृदित्यादिकं आत्मौपम्येनेत्यादिकं च पुनरुक्तं स्यात् ।

ननु यः शीतोष्णादिषु कूटस्थः तस्य ज्ञानविज्ञानतृप्तमनस्त्वं विजितेन्द्रियत्वं चार्थात् सिद्धमेव । तत्किमर्थं पुनरुच्यत इत्यत आह— **ज्ञानेति** । प्रत्येकमन्वयादेकवचनम् । ननु शिल्पादिविषया बुद्धिर्विज्ञानम् । ''मोक्षे धीर्ज्ञानमन्यत्र विज्ञानं शिल्पशास्त्रयोः'' इत्यभिधानात् । तत्कथं विज्ञानेन तृप्तात्माऽयं स्यादित्यत आह— **विज्ञानमिति** । अनेन सामान्यज्ञानं परोक्षज्ञानं वा ज्ञानमिति सूचितम् । कुत एतदित्यत आह— **तच्चेति** । प्रसिद्धाभिधानार्थोऽप्यङ्गीक्रियत इति चशब्दः । सामान्यैः साधारणैः पुरुषैः । सामान्यविषयं तु ज्ञानमित्यपि द्रष्टव्यम् । तदेव ज्ञानमिति सम्बन्धः । अङ्गादेः व्याकरणादेः । शिल्पस्य च विशिष्टं दर्शनं वैष्णवशास्त्रम् । कूटस्थशब्दो नित्यादिपर्यायः । तेन कथमन्वयः सप्तम्या इत्यत आह— **कूटस्थ इति** । तत्कथमित्यत आह— **कूटवदिति** । (३-२-४) 'सुपिस्थ' इति वचनात् कूटशब्दोऽनृतवाद्यादिवाची । तत्परिग्रहे निर्विकारत्वं न लभ्यत इत्यत आह— **कूटमिति** । एतैः शब्दैराकाश उच्यत इत्यर्थः । 'युक्तो', 'योगी' इति पुनरुक्तिरिति मन्दाशङ्कानिरासार्थमाह— **योगीति** । इनेरस्त्यर्थत्वात् कुर्वन्नित्युक्तम् । निष्ठाया भूतार्थत्वात् 'सम्पूर्ण' इति । वक्ष्यमाणान्वयापेक्षया क्रमोल्लङ्घनम् । तर्हि विरुद्धार्थयोः कथं सामानाधिकरण्यमित्यत आह— **एवम्भूत इति** । धातुसम्बन्धे प्रत्यया इति ह्युक्तम् ॥

***भा०दी०***— **योगो विहित इति** । वशीकृतमनसा त्वं हि समाधिरूपयोगोपायत्वाद्योग इत्यु............चोद्धरेदित्यादिना विहित इत्यर्थः । **वाक्यभेदेनेति** । जितात्मनः प्रशान्तिः प्रशान्तस्य परमात्मेत्येवमिति भावः । .........हः प्रयत्नेन कर्तव्य इत्यादि सम्बन्धभाष्यानुरोधादाह **योगारूढ इत्यर्थ इति** । समाधिसम्पन्न इत्यर्थः । **आत्मौपम्येति** । अत्रैवाध्यायेऽग्रे आत्मौपम्येन सर्वत्र समं पश्यति योऽर्जुनेति वक्ष्यमाणं चेत्यर्थः । **इति वचनादिति** । सुबन्त उपपदे तिष्ठतेः कः प्रत्ययो भवतीति पाणिनिवचनादित्यर्थः । कटपदे उपपदे स्था इत्यस्य कप्रत्यये (६-४-६२) 'आतो लोप इटि च' इत्याकारलोपे रूपमिति भावः । इनिरिति योगोऽस्मिन्नस्तीत्यर्थे तदस्मा-

त्यस्त्यस्मिन्निवृत्य 'अत(न) इनिठनौ' (५-२-११५) इति सूत्रे इनिप्रत्ययस्य विधानादिति भावः । **निष्ठायाः इति युक्त इति** । श्रुतप्रत्ययस्येत्यर्थः ।

ननु युक्तपदयोगपदयोः गीतापाठक्रमविपरीतक्रमेण व्याख्याने किं बीजमित्यत आह **वक्ष्यमाणेति** । एवम्भूत इत्यादिनोत्तरवाक्ये गीतापदानां वक्ष्यमाणान्वयापेक्षयेत्यर्थः । **तर्हीति** । युक्तयोगिपदयोरतीतवर्तमानार्थकत्वे योगं कुर्वन् योगसम्पूर्ण इति वर्तमानकालातीतकालीन यो सामानाधिकरण्यं विरुद्धयोः कथमित्यर्थः । यद्यपि 'धातुसम्बन्धे प्रत्यया' इति तृतीयान्त्यपादीयाद्यसूत्रे धातुशब्दो प्रार्थपरः । प्रातिपदिकार्थधात्वर्थयोः विशेषणविशेष्यभावेन सम्बन्धे अभिमते सति यथा कालोक्ताः प्रत्ययाः साधवो भवन्ति इत्यर्थमुक्त्वा याज्यस्य पुत्रो भवितेत्युदाहृतं वृत्तौ । न चात्र धात्वर्थयोः सम्बन्धोऽस्ति किन्तु योगी युक्त इति प्रातिपदिकार्थधात्वर्थयोरेव, तथापि (३-१-१) 'प्रत्ययः (३-१-२) परश्च' इति प्रत्ययाधिकारे पुनरत्र प्रत्ययग्रहणं धात्वधिकारविहित अधात्वधिकारविहिता अपि प्रत्ययास्तद्धिता धात्वर्थसबन्धे कालभेदे साधने यथा स्युरित्युक्त्वा गोमानासीद्गोमान् भवितेत्यपि वृत्तावुदाहृतत्वादिहापि युक्त इति । जिधात्वर्थसम्बन्धाद्वर्तमानातीतकालयोः सामानाधिकरण्यं युक्तमिति भावः ॥

*भा०र०*— **योगो विहित इति** । ज्ञानान्तरङ्गसमाधियोगः 'उद्धरेत्' (६.५) इत्यादिना कर्तव्यत्वेनोक्त इत्यर्थः । नायं 'प्रशान्तस्य' इत्यनुवादः, किन्तु जितात्मनः फलाभिधानरूपमेव । न चैवं षष्ठ्यनुपपत्तिः ? इत्याशङ्क्याह **वाक्यभेदेनेति** । उक्तरीत्या जितात्मा हि प्रशान्तः = विषयोपरतिमान् भवति । प्रशान्तस्य च परमात्मा समाहित इति वाक्यभेदेन युक्तं फलकथनरूपत्वमस्य वाक्यस्येति भावेन "जितात्मा हि प्रशान्तो भवति" इत्यभाषतेत्यर्थः । **तत्** प्रशान्तत्वम् । **तत्फलम्** जितात्मत्वफलम् । फलफलिभावस्य भेदगर्भत्वादिति भावः । 'जितात्मनः' इत्यत्र मनसो जयो नाम वशीकरणम् । वशीकृतं च मनः स्वत एव प्रायो विषयेषु न गच्छतीति मनोजयस्य विषयालग्नत्वरूपविषयोपरतिं प्रति हेतुत्वमत्राभिप्रेतमिति युक्त एव फलफलिभाव इति भावः । **उत्तरं वाक्यं** "परमात्मा समाहितः" इति पादः । **अध्याहारेण** 'हृदि' इत्यन्वयप्रतियोगिसमर्पकपदस्य ।

'दा'प्रत्ययस्य काले अनुशासनेन 'प्रशान्तिकाले' इति वक्तव्ये तत्फलितप्रदर्शनमिदम् **प्रशान्तत्वे सतीति** । यथाश्रुतार्थग्रहणे योगारूढप्रकरणविरोधः, "योगसम्पूर्ण उच्यते" इत्युपरितनभाष्यविरोधश्च इत्यतो व्याचष्टे **योगारूढ इति** । सम्पूर्णयोगसिद्धिमान् भवतीत्यर्थः । **लक्षणं** विनाऽपि प्रयत्नं विषयाननुषङ्गित्वम् । अनेनैव 'अपरोक्षज्ञानिनः' इति भाष्यमपि 'योगारूढस्य' इति

व्याख्यातं भवति । तथा च **न्यायदीपिका** ''योगारूढलक्षणं प्रपञ्च्यते'' इति । **सार्धश्लोकद्वयेति** । 'शीतोष्ण' इत्यादि 'समबुद्धिर्विशिष्यते' इत्यन्तं सार्धश्लोकद्वयम्, तद्ग्रहणाय भाष्ये 'शीतोष्णेत्यादिना' इति आदिपदं प्रयुक्तमित्यर्थः । **अत्र** 'शीतोष्ण' इत्यर्थे । **अनेन** ''शीतोष्णादिषु कूटस्थः'' इति सप्तम्यन्वयप्रदर्शनेन **अपहस्तितं** वामेन हस्तेन नुन्नमित्यर्थः । 'अपहसितम्' इत्यपि पाठः । सम्प्रदायगतपाठेन साम्याभावप्रदर्शनाय स्वयं परपाठे दूषणान्तरमाह **कृत्रिमेति** । **पुनरुक्तमिति** । तत्रोभयत्रापि ''परात्मसु समा मतिः'' इति परोत्प्रेक्षितार्थस्यैवाभिधानादिति भावः । न केवलमन्वयादर्शनं पुरुषदोषः, क्विन्तु पुनरुक्तत्वम् अर्थदोषश्चेति चशब्दः ''पुनरुक्तं च'' इत्यत्रापि संयोज्य व्याख्यातव्यः ।

आत्मशब्दो मनोऽर्थ इति भावेनोक्तम् **तृप्तमनस्त्वमिति** । ज्ञानविज्ञानतृप्तमनस्त्वस्य विजितेन्द्रियत्वस्य च हेतुत्वे 'हेतू' इति वक्तव्ये कथं ''कूटस्थत्वे हेतुः'' इत्येकवचनम् ? इत्यत आह **प्रत्येकमिति** । ज्ञानविज्ञानतृप्तात्मत्वात् कूटस्थः, विजितेन्द्रियत्वात् कूटस्थ इति प्रत्येकमन्वयाभ्युपगमाद् एकवचनं युक्तमित्यनेन हेत्वर्थगर्भं विशेषणद्वयमित्युक्तं भवति । 'शिल्पादि' इत्यादिशब्देन शास्त्रपरिग्रहः । अत्रामरवचनं संवादयति **मोक्षे धीरिति** । मोक्षफलिका धीः ज्ञानम्, अन्यफलिकाशिल्पे शास्त्रे च या धीः सा विज्ञानमित्यभिधानार्थः । **अयं** योगारूढः । **अनेन** 'विज्ञानम्' इत्यादिभाष्येण । **प्रसिद्धाभिधानार्थः** 'मोक्षे' (अ.को.) इत्याद्युदाहृताभिधानोक्तार्थोऽपि । ''विज्ञानं ज्ञानमङ्गादेः'' इति वक्ष्यमाणप्रमाणानुसारेण शिल्पशास्त्रजनितधियो विज्ञानशब्दार्थत्वे दोषाभावादिति भावः । अनल्पबोधविषयं चेदं वचनमिति मन्तव्यम् । **प्राचीनटीकायां तु** ''न केवलं विज्ञानं ज्ञानं चोक्तमिति समुच्चयाय चशब्दः'' इत्युक्तम् ।

''साधारणं तु सामान्यम्'' (अ.को.) इत्यमरवचनादाह **सामान्यैः साधारणैरिति** । बहुभिरविज्ञेयत्वे असत्त्वमेव स्यात् इति शङ्कानिरासाय ''मम शम्भोर्देवादीनां च ये गोचराः'' इत्युक्तम् । **तज्ज्ञानं** तेषां = विशेषाणां ज्ञानं विज्ञानमिति कीर्तितमिति । शिष्टभाष्यार्थस्यातिरोहितत्वात् तत्र वक्तव्यमाह **सामान्यविषयं त्विति** । **केचित्तु** ये मम भगवतो विशेषाः सामान्यैरविज्ञेयाः देवादीनामेव गोचरास्तद् ज्ञानं विज्ञानमिति भाष्यं व्याचक्षते । 'चैव' इत्यत्रैवशब्दस्य तज्ज्ञानं दर्शनम् इत्यत्रत्येन 'तत्' इत्यनेनान्वय इत्याह **तदेवेति** । 'अङ्गादेः' इत्यत्राङ्गशब्देन व्याकरणादिषडङ्गानि, आदिपदेन शिल्पशास्त्रं च गृह्यत इत्याह **अङ्गादेरिति** । **वैष्णवं** विष्णुमाहात्म्यवर्णनपरं शास्त्रं तथा विज्ञानमित्यन्वयः । **नित्यादिपर्याय इति** । नित्य-मूलपुरुष-कैतवस्थादिपर्याय इत्यर्थः । ''एकरूपतया तु यः कालव्यापी स कूटस्थः'' (अ.को.) इत्यमराभिधानात्, 'कूटस्थगणनायाम्' इत्यादिप्रयोगात् ''कूटस्थे ख्यातः'' इत्यमरव्याख्यानादावुदाहरणाच्चेति **आहुः** ।

तर्हि 'कूटस्थितः' इति स्यात् ? इत्यत आह **सुपि स्थ इति** । सुबन्ते कूटशब्द उपपदे स्थाधातोः कप्रत्ययो भवतीति सूत्रात् तिष्ठतेः कप्रत्यये 'कूटस्थः' इति मूले रूपम् । तदर्थनिर्विकारत्वं व्युत्पत्तिकथनेन विशदयितुं भाष्ये "कूटवत् स्थितः" इत्युक्तम् । तत्र 'गत्यर्थाकर्मक' इत्यादिना कर्तरि क्तप्रत्यय इति भावः । तथा चामरव्याख्याने भट्टः " 'कूटवत्तिष्ठतीति कूटस्थः', 'सुपि स्थः' इति कः" इति । **अनृतवाद्यादीति** । "मायानिश्चलयन्त्रेषु कैतवानृतराशिषु । अयोघने शैलशृङ्गे सीराङ्गे कूटमस्त्रियाम् ॥" इत्यमरे कूटशब्दस्यानृतकैतवाद्यर्थत्वाभिधानात्, 'कूटसाक्षी', 'कूटयोधी' इत्यादौ "अनृतं वदन् साक्षी", "कैतवं कुर्वन् योद्धा" इत्यर्थप्रतीतेश्चानृतवादी कतवादिकारी वा तद्वाच्य इति **वक्तव्यम्** । तथा सति 'तद्वत्तिष्ठति' इति व्युत्पत्तौ निर्विकारत्वं न लभ्यत इत्यर्थः । **एतैरिति** । कूटं खं विदलं व्योम सन्धिः इति "एतैः शब्दैः" इति शेषोक्तिः । तथा च केशवोऽपि "कुटोऽस्त्री पुञ्जमायाऽघेष्वद्रिशृङ्गे शरान्तरे । अयोघनेऽनृते दम्भे व्योम्नि निश्चलयन्त्रयोः ॥ (के.को.) इति ।

निष्ठेन्योर्भिन्नार्थकत्वात् कथमाशङ्का ? इत्यत उक्तम् **मन्देति** । ननु वर्तमानार्थकलडादेशशत्रन्तेन 'कुर्वन्' इत्यनेन, अतथाभूतस्य 'योगी' इत्यस्य कथं व्याख्यानम् ? इत्यत आह **इनेरस्त्यर्थत्वादिति** । 'तदस्यास्ति' इत्यधिकृत्य 'इनिठनौ' इति इनेर्विधानात्, 'अस्ति' इत्यत्र कालस्य विवक्षितत्वाद् युक्तं 'कुर्वन्' इत्यनेन इनेर्व्याख्यानमिति भावः । **निष्ठाया इति** । 'युक्तः' इत्यत्र निष्ठासंज्ञकस्य क्तप्रत्ययस्येत्यर्थः । 'भूते' इत्यधिकारादिति भावः । ननु युक्त-योगिपदयोर्गीतापाठक्रमं व्यत्यस्य व्याख्याने किं बीजम् ? इत्यत आह **वक्ष्यमाणेति** । 'एवम्भूतः' इत्यनुपदमेव वक्ष्यमाणेत्यर्थः । **विरुद्धार्थयोरिति** । इनि-क्तप्रत्यययोः वर्तमानत्व-अतीतत्वार्थकत्वेन विरुद्धार्थत्वात् तदवरुद्धयोः 'योगी', 'युक्तः' इत्येतयोरपि विरुद्धार्थत्वमिति भावः ।

एवमपि कथं विरोधपरिहारः ? इत्यत आह **धातुसम्बन्ध इति** । धात्वर्थयोः सम्बन्धो धातुसम्बन्धः, तस्मिन् सति अयथाकालोक्ता अपि प्रत्ययाः साधवो भवन्ति । "अग्निष्टोमयाजी अस्य पुत्रो जनिता", "कृतः कटः श्वो भविता", "भाविकृत्यमासीत्" इति सूत्रार्थोदाहरणे उक्तः 'अग्निष्टोमयाजी' इत्यत्र भूतकालः 'जनिता' इति भविष्यत्कालेन सम्बध्यते । एवं सम्बध्यमानः साधुर्भवतीत्युपपाद्य, 'प्रत्ययः', 'परश्च' इत्यतः प्रत्ययग्रहणानुवृत्तावपि पुनरत्र सूत्रे "प्रत्ययग्रहणम् अधात्वधिकारविहिता अपि प्रत्ययास्तद्धिता धातुसम्बन्धे सति कालभेदे साधवो यथा स्युरिति 'गोमानासीत्', 'गोमान् भवति' " इति वृत्तावुक्तत्वादिह "युक्त इति" इत्यर्थः । प्रत्यययुक्तयुजिधात्वर्थसम्बन्धे योगप्रतिपादकात् उत्पन्नस्य वर्तमानातीतार्थकयोः सामानाधिकरण्यमिति भावः । ॥ ७-८ ॥

**गीतातात्पर्यनिर्णयः**

**"सर्वत्र विष्णोरुत्कर्षज्ञानं ज्ञानमितीर्यते ।**
**तद्विशेषपरिज्ञानं विज्ञानमिति गीयते ॥" इति च ॥ ७-८ ॥**

*प्रका०*— "ज्ञानविज्ञानतृप्तात्मा" इत्यत्र ज्ञानविज्ञानयोरर्थमाह **सर्वत्रेति** ॥

*न्या०दी०*— योगारूढलक्षणं प्रपञ्च्यते **शीतोष्ण इति** । तत्र ज्ञानविज्ञानशब्दयोरर्थभेदं स्मृत्यैवाह **सर्वत्रेति** ॥ **सर्वत्र** वेदादौ ॥

*भा०दी०*— यदा हि 'नेन्द्रियार्थेष्वि'त्यत्र लक्षणस्योक्तत्वादाह **प्रपञ्च्यत इति** ॥ ७-८ ॥

**गीता**

## सुहृन्मित्रार्युदासीनमध्यस्थद्वेष्यबन्धुषु ।
## साधुष्वपि च पापेषु समबुद्धिर्विशिष्यते ॥ ९ ॥

*वि०वि०*— स एव सुहृदादिषु समबुद्धिः । सर्वस्माद्विशिष्यते । प्रत्युपकारानपेक्षयोपकारकृत् सुहृत् । क्लेशस्थानं ज्ञापयित्वा यो रक्षां करोति स मित्रम् । अरिः वधादिकर्ता । कर्तव्ये उपकारेऽपकारे च य उदास्ते स उदासीनः । कर्तव्यमुभयमपि यः करोति स मध्यस्थः । अप्रियकृत् द्वेष्यः । उक्तं च —

'अनिमित्तस्नेहवांस्तु सुहृत् ज्ञात्वोपकारकृत् ।
मित्रं वधादिकृदरिर्द्वेष्यस्त्वप्रियमात्रकृत् ॥
उदासीनः स्नेहवतोऽप्यस्नेही तत्कृतानुकृत् ।
मध्यस्थ इति विज्ञेयः सुहृदेषु विशिष्यते ॥'

इति । बन्धुर्देहसम्बधी । साधुः साधुधर्मवान् । पापः पापवान् ।

'स्वभावतस्त्रिधा जीवा उत्तमाधममध्यमाः ।
उत्तमास्तत्रदेवाद्या मर्त्याद्याश्चैव मध्यमाः ॥
अधमा असुराद्याश्च नैषामस्त्यन्यथाभवः ।
शरीरमात्रान्यथात्वे स्वजातिं पुनरिष्यति ॥' इति ।
'सर्वं चेश्वरतस्तेषां न किञ्चित्स्वत एव तु ।
समा एव ह्यतः सर्वे वैषम्यं भ्रान्तिसम्भवम् ॥'

इत्याद्युक्तप्रकारेण सुहृदादिषु जीवचैतन्यस्योत्तममध्यमाधमरूपस्य उत्तमादिरूपत्वमेव स्वाभाविकम् । वैषम्यं भ्रान्तिजमिति ज्ञानम् । तथा सुहृदादिषु स्थितस्य भगवतः सुहृत्वादेस्तन्निमित्तकत्वस्य च साम्येन ज्ञानं समबुद्धित्वम् ।

'यस्य यत्र यथा वृत्तिर्विहितावर्तनं तथा ।
ज्ञानं चा(वा)ऽपि समत्वं तद्विषमत्वमतोऽन्यथा ॥'
'यथा सुहृत्सु कर्तव्यं पितृशत्रुसुतेषु च ।
तथा करोति पूजादिं समबुद्धिः स उच्यते ॥'

इत्याद्युक्तप्रकारेण वा समबुद्धित्वम् । न तु सुहृदादीनां पूजासाम्यम् ।

'समानां विषमा पूजा विषमानां समा तथा ।
क्रियते येन देवोऽपि स्वपदाद्भ्रश्यते हि सः ॥'

इति दोषस्मरणात् ॥ ९ ॥

***वा०ल०***— 'समबुद्धिर्विशिष्यते' इत्यत्र एषु वस्तुषु स्थिते समे नारायणे बुद्धिर्यस्य स तथोक्तः ।

***सा०सं०***— स एव च सुहृदादिषु समा भगवद्विषयिणी बुद्धिर्यस्य स **समबुद्धिः** । योगारूढः योगिवर्गात् सर्वस्मा**द्विशिष्यत** इति । सुहृदादिषु सर्वत्रस्थितहरिरूपाणां गुणादिषु तारतम्यं नेति बुद्धिर्वा, सुहृदि सुहृत्त्वमेव मित्रादिषु मित्रत्वादिकमेव ददाति । न तु सुहृदि मित्रत्वं मित्रादौ सुहृत्वादिकमिति वैषम्येण । अतः सुहृदादौ सुहृत्त्वादिकमीशकृतमेव न स्वतन्त्रमिति वा, भगवद्विषये समबुद्धिः ।

यद्वा, सुहृदादिजीवविषये समा बुद्धिर्यस्येत्यर्थः । तेषु समबुद्धित्वं नाम यत्सुहृत्त्वमित्रत्वादिकमस्ति तन्न स्वरूपान्तर्गतं किन्तु, अन्तःकरणोपाधिकमेव देवदानवमानवभेदेन स्वतो विषमाणां चैतन्यस्वभावत्त्वमेकमेव सममिति बुद्धिमत्त्वमेवेति ज्ञेयम् । अथवा सुहृदादिषु विषये शास्त्रेषु यथा यथा वृत्तिर्विहिता तथा तथा वर्तनं वर्तनज्ञानं वा सुहृदादिजीवेषु समबुद्धिर्ध्येया । प्रत्युपकारनिरपेक्षोपकारकृत् **सुहृत्** । क्लेशस्थानं विज्ञाप्य ततो रक्षा**कृन्मित्रम्** । वधादिकर्ता **अरिः** । कर्तव्ये उपकारे अपकारे च य उदास्ते स **उदासीनः** । उपकारापकारोभयकृत् **मध्यस्थः** । अवाञ्छितकृत् **द्वेष्यः** । **बन्धुः** उपकर्ता ॥

***अ०प्र०***— सुहृदादिषु समबुद्धियुक्तस्य ततो श्रैष्ठ्यं इत्याह **सुहृदिति** ।

अन्वयः स्पष्टः ।

सुहृच्च मित्रञ्च अरिश्च उदासीनश्च मध्यस्थश्च द्वेष्यश्च बन्धुश्च सुहृन्मित्रार्युदासीनमध्यस्थ-द्वेष्यबन्धवः, तेषु तथा। सुहृत् = प्रत्युपकारानपेक्षया स्वभावेनैव उपकारकृत्, मित्रम् = स्नेहवशेन क्लेशस्थानं ज्ञापयित्वा यो रक्षां करोति सः, अरिः, वधादिकृत् - घातकः, उदासीनः = कर्तव्ये अपकारे च उपकारे च उभयोरपि उपेक्षकः, मध्यस्थः = विषदमानयोरुभयोरपि हि नांशसी यद्वा, कर्तव्यमुभयमपि यः करोति, द्वेष्यः = अप्रियकृत्, बन्धुः = देहसम्बन्धी, साधुः = धर्मवान्, पापाः = दुराचाराः, एतेषु समबुद्धिः = समा रागद्वेषादिशून्या बुद्धिर्यस्य सः तथा विशिष्यते = विशिष्ट इत्यर्थः। एतेषु समबुद्धित्वं नाम सर्वजीवाः अपि चिद्रूपा इति चित्वेन साम्यज्ञानमिति। तत्रायं विवेकः—

'त्रिविधा जीवसङ्घा हि देवमानुषदानवाः।'

एतेषां सुहृत्वादिकं स्वाभाविकमेव, तदपि तत्र भगवन्नियतं न जीवस्वरूपान्तर्गतमिति यो जानाति, संसारी तु अयं मम रीति अजीव एव अरित्वादिकं भ्रान्त्या प्रत्येति नैव योगीति उक्त्वा

स्वतः सर्वेऽपि चिद्रूपा सर्वदोषविवर्जिताः।
जीवास्तेषां तु ये दोषाः तदुपाधिकृता मताः॥
सर्वञ्चेश्वरतस्तेषां न किञ्चित्स्वत एव तु।
समा एव ह्यतत्सर्वे वैषम्यभ्रान्तिसम्भवम्॥ ९॥

**भाष्यम्**

**स एव च सर्वस्माद्विशिष्यते, साधुपापादिषु समबुद्धिः। जीवचितः परमात्मनः सर्वस्य तन्निमित्तकत्वस्य च सर्वत्रैकरूप्येण। चिद्रूपा एव हि जीवाः। विशेषस्त्वन्तःकरणकृतः। सर्वेषां च साधुत्वादिकं सर्वमीश्वरकृतमेव। स्वतो न किञ्चिदपि। उक्तं च एतत् सर्वम्—**

**"स्वतः सर्वेऽपि चिद्रूपाः सर्वदोषविवर्जिताः।**
**जीवास्तेषां तु ये दोषास्त उपाधिकृता मताः।**
**सर्वं चेश्वरतस्तेषां न किञ्चित् स्वत एव तु।**
**समा एव ह्यतः सर्वे वैषम्यं भ्रान्तिसम्भवम्।**
**एवं समानजीवास्तु विशेषो देवतादिषु।**

**स्वाभाविकस्तु नियमादत एव सनातनः ।**
**असुरादेस्तथा दोषा नित्याः स्वाभाविका अपि ।**
**गुणदोषौ मानवानां नित्यौ स्वाभाविकौ मतौ ।**
**गुणैकमात्ररूपास्तु देवा एव सदा मताः ॥''—इति ब्राह्मे ॥**

***प०टी०***— 'सुहृत्' इति श्लोकं व्याचष्टे **स एवेति** । सुहृदादीनां विषमत्वात् कथं तेषु समबुद्धिः ? इत्यत आह **जीवेति** । नन्वीश्वरस्य सर्वत्र साम्यं, जीवस्य तु कथं साम्यम्, विशेष-दर्शनादेव ? इत्यत आह **चिद्रूपा इति** । देवादीनां सुखादिविशेषः स्वरूपान्तःकरणकृतः । दैत्या-दीनां दुःखादिविशेषः तत्स्वरूपान्तःकरणकृतः । देवादीनां दुःखादिविशेषो बाह्यान्तःकरणहेतुकः । दैत्यादीनां सुखादिविशेषोऽपि बाह्यान्तःकरणकः । मिश्राणां मिश्रता स्वरूपान्तःकरणकृता । अन्य-तराधिक्यं बाह्यान्तःकरणकृतम् । स्वरूपान्तःकरणं नाम जीवोपाधिः । तस्य च शुद्ध्यशुद्धिमिश्रता-भेदात् नानारूपतापादकत्वं च लक्षलक्षस्यैव प्रतिबिम्ब...चलनकारणता । बिम्बस्याचलत्वेऽपि चिद्रूपत्वे सत्त्वप्रतीतिप्रवृत्तिमात्रमुपहितम् । तावन्मात्रत्वेन क्वचिद्विशेषः । सर्वोपाधीनां द्रव्यमात्र-प्रतिफलनकारणत्वनियमनदर्शनाद्विशेषमात्रापादकत्वाच्चेति । तर्हि चिद्रूपत्वसाधुत्वादिनेश्वरस्थमिति प्रतिबिम्बविशेषस्योपाध्यधीनत्वात् स्वरूपस्य स्वतस्त्वादित्यत आह **सर्वेषां चेति** । **स्वतः इति** जीवतद्रूपाद्यधीने । तत्रैव प्रमाणमाह **उक्तं चेति** । वैषम्यं भ्रान्तिसम्भवम् इति कथितान्तःकरण-निमित्ततां विना, औपाधिकोऽपि नानित्य इत्यर्थः । तमेव विशेषं दर्शयति **असुरादेरिति** ।

***न०टी०***—'सुहृत्' इत्यादेः श्लोकस्य सङ्गतिं प्रतिपाद्यं च सङ्ग्रहेणाह **स एवेति** । एवम्भूत योगी यदि साधुपापादिषु वक्ष्यमाणप्रकारेण समबुद्धिस्तर्हि स न केवलं योगसम्पूर्ण उच्यते, किन्तु सर्वजनसमूहाद्विशिष्टश्च भवतीत्यर्थः । अत्र विष्णुमुपासतस्तद्योगस्य योगिन एकान्ततः साहाय्य-कारणात् साधवः सुराः । नियमेन तत्प्रतिकूलाः पापा एवासुराः । अनियमेन कादाचित्कसुहृन्मित्रा-र्युदासीनमध्यस्थद्वेष्यबन्धुत्वात् मिश्रा एव नराः । नरोत्तमान्ताः सुरेषु, नराधमान्ता असुरेषु । ननु यद्येतेषु साधुपापादिषु समत्वं स्यात् तर्ह्येव तज्ज्ञान्यधिकः स्यात् । तदेव कुतः ? इत्यत आह **जीवचित इति** । ननु भवतु परमात्मनः साधुपापादिषु सर्वेष्वेकरूपत्वं सर्वगुणसम्पूर्णत्वात् सर्वदोषविवर्जितत्वाच्च । 'निर्दोषं हि समं ब्रह्म' इत्युक्तत्वात् । जीवचैतन्यस्य साधुत्वादिविशेष-दर्शनात् कथं सर्वत्रैकरूपवत्त्वम् ? इत्यत आह **चिद्रूपा इति** । असुरादेः पापत्वादिविशेषः कश्चि-न्नित्यान्तःकरणकृत इति भावः । नन्वसुरादेः पापत्वादिविशेषस्यान्तःकरणकृतत्वे कथं तस्य

जीवविशेषस्य सर्वस्य परमात्मनिमित्तत्वमुक्तम् ? इत्यत आह **सर्वेषामिति** । साधुत्वादिकं सर्वं सर्वेषां न स्वाधीनम्, नाप्यसुरादिपापत्वाद्यन्तः करणाधीनम् । कस्यापीश्वरप्रेरणां विना स्वतोऽकिञ्चित्करत्वात् । ईश्वरस्तु स्वत एव तत्सर्वं करोतीत्यर्थः । तत्र प्रमाणमाह **उक्तं चेति** । बिम्बभूतस्य भगवतः चिद्रूपत्वनिर्दोषत्वाभ्यां तत्प्रतिबिम्बभूतसर्वजीवानां स्वतस्तदुभयं प्राप्तम् । तत्रासुरादीनां दोषास्तेषां सर्वदोषात्मकनित्यान्तःकरणोपाधिकृताः । अनौपाधिकत्वविवक्षयैव सर्वजीवचिद्रूपत्वनिर्दोषत्वयोः स्वतस्त्वम् । स्वातन्त्र्यविविक्षयाऽत्र तदपि भगवदायत्तमित्याह **सर्वं चेति** । **अतः** इत्युक्तप्रकारद्वयेन **समा एव** सर्वजीवाः । उक्तनिमित्तद्वयं विना यद्वैषम्यं तद्भ्रान्त्यैव प्रतीयत इत्यर्थः । एवं तावदसुरादिपापत्वादिविशेषाणामन्तरान्तःकरणनिबन्धनत्वेनौपाधिकत्वात्, स्वतो निर्दोषचिद्रूपत्वेन सर्वजीवसाम्यात्, तद्बुद्धिः समबुद्धिरित्युक्तम् । अधुनाऽन्तरोपाधीनां जीवाभेदाभिप्रायेण तन्निबन्धनानामपि विशेषाणां स्वाभाविकत्वमेवास्तु । तथाऽप्यर्युदसीनत्वादीनां कादाचित्कत्वादीनां बाह्यान्तःकरणकृतत्वेनौपाधिकत्वात् स्वतः सर्वनरोत्तमजीवसाम्यात् तद्बुद्धिः समबुद्धिरस्त्विति भावेनाह **एवं समा इति** । अस्मिन् पक्षे चिद्रूपा एव हि इति नरोत्तमा एव । तेषां भगवद्भागवतारित्वादिविशेषो बाह्यान्तःकरणकृत इत्यपि ज्ञातव्यम् । देवतादिषु देवतासृष्ट्यादिषु यो महानवान्तरश्च विशेषः, स तु स्वाभाविकः न बाह्यान्तःकरणकृतः । तथाऽप्यसौ अत एव परब्रह्मत एवेत्यर्थः ।

***प्र०दी०***— मध्ये लक्ष्यस्योक्तत्वात् 'सुहृत्' इत्यादिकं न योगारूढलक्षणमिति प्रतीतिनिरासायाह— **स एवेति** । साधुपापादिषु समबुद्धिश्च स योगारूढ एवेति न, किन्तु सर्वस्मादयोगिवर्गाद्विशिष्यत इत्येतद्वक्तुं पृथगन्वय इति भावः । साधुत्वं धर्मित्वम् । पापत्वं पापवत्त्वं च नियतं, न तु सुहृत्त्वादिवदव्यवस्थितमित्यतः 'सुहृदादिषु' इत्यनुक्त्वा 'साधुपापादिषु' इत्युक्तम् । समबुद्धित्वं नाम पूजादिसाम्यमित्यन्यथाप्रतीतिनिरासायाह— **जीवचित इति** । ''एष चेतनया युक्तो जीव इत्यभिधीयत'' इति चेतनाचेतनपिण्डे जीवशब्दप्रयोगात् 'चित' इत्युक्तम् । सुहृदादिचैतन्यस्य तथा सर्वत्र सुहृदादिषु स्थितस्य परमात्मनः । एवं सर्वत्र सुहृदादिषु स्थितस्य सुहृत्त्वादेः परमात्मनिमित्तकत्वस्य चैकरूप्येण कारणेन तद्दर्शी समबुद्धिरित्यर्थः । तत्राद्यं प्रकारं विवृणोति— **चिद्रूपा एवेति** । मनुष्येषु यदेकं एक प्रति सुहृदित्यादि तन्न जीवस्वभावान्तर्गतम् । किन्तु चिद्रूपत्वादिकमेवेत्यर्थः । तर्हि सुहृत्त्वादिधर्मः किमात्मक इत्यत आह— **विशेषस्त्विति** । अन्तःकरणोपादानको बाह्यधर्मः । एतदुक्तं भवति । मुक्ताववशिष्यमाणं यज्जीवरूपं तत् ''त्रिविधा जीवसङ्घाः'' इत्यादिप्रमाणाद्विषममेव । किन्तु देहेन्द्रियान्तःकरणधर्मैः यद्वैषम्यं तत्तत्स्वरूप एवारोप्य विषमबुद्धित्वं

योगारूढस्य नास्तीति । द्वितीयः प्रकारः स्फुटः । तृतीयं विवृणोति— **सर्वेषामिति** । स्वतः स्वातन्त्र्येण । अत्र प्रमाणमाह— **उक्तं चेति** । स्वतः स्वरूपेण । दौषैररित्वादिभिः । एवं सुहृत्त्वादिगुणैरित्यपि ग्राह्यम् । आगन्तुकधर्मा न स्वरूपान्तर्गता इत्यर्थः । किं तर्हीत्यत आह— **तेषां त्विति** । दोषाः गुणाश्च उपाधिरन्तःकरणादि, सर्वं सुहृत्त्वादिकम् । अत एव प्रकारद्वयेन यदनात्मधर्मानात्मस्वन्तर्भाव्य वैषम्यं यच्च क्वचित् परमेश्वरानधीनरूपत्वं तद्भ्रान्तिप्रतीतम् । योगे प्रवर्तमानं प्रति यत्सुहृत्त्वादिकं तन्मनुष्येष्वेव स्वरूपवैषम्यकारणं न भवति । न तु देवादिषु इत्युक्त-स्यापवादमाह— **एवमिति** । तुशब्दोऽवधारणे । अवधारणार्थं विवृणोति— **विशेष इति** । विशेषो योगिनं प्रति सुहृत्त्वादिः । तदेव प्रपञ्चयति— **असुरादेरिति** । तथाशब्दो वक्ष्यमाणसमुच्चये । दोषा योगिनं प्रत्यरित्वाद्याः । तथा चोक्तम् 'विद्ध्येनमिह वैरिणं' इति । गुणदोषौ सुहृत्त्वारित्वादी अनागन्तुकौ । गुणैः सुहृत्त्वादिभिरेकमात्रं गुणैकमात्रम् । तथा च श्रुतिः ''यथा ह वै बहवः पशवः'' इत्यादिका ।

*भा०दी०*— **मध्ये लक्ष्यस्येति** । शीतोष्णेत्यादिना परोक्षज्ञानिलक्षणस्पष्टीकरणमध्ये एवम्भूतो योगानुष्ठाता योगयुक्तो योगसम्पूर्णोऽपरोक्षज्ञानीति युक्तपदेन लक्ष्यस्योक्तत्वादित्यर्थः । समबुद्धिरित्यन्तभाष्यभावार्थमाह **साध्विति** । **पृथगन्वय इति** । सुहृदादिषु समबुद्धिर्योगारूढ एव न किन्तु सर्वस्माद्विशिष्ये तथेत्येव गीतायां पृथगन्वय इत्यर्थः । धर्मित्वधर्मवत्वं सर्वत्रेत्येत-त्परमात्मपदेनान्वितत्या व्याख्याय सर्वस्येत्यनेनाप्यन्वितत्यार्थमाह **एवमित्यादिना** । **इत्यादीति** । एकैकप्रतिमन्त्रं एकैकं प्रत्यविगित्यादि तन्न । जीवस्वभावान्तर्गतमित्यर्थः । अस्फुटत्वाज्जीवजित इत्यादि भाष्यार्थं निष्कृष्याह । **एतदुक्तमिति** । **त्रिविधा इति** । 'त्रिविधा जीवसङ्घास्तु देवा मानुष दानवा' इति तात्पर्योक्तिप्रमाणादित्यर्थः । **यद्वैषम्यमिति** । सुहृत्वमित्रत्वादिरूपमित्यर्थः । **द्वितीय इति** । सर्वत्र परमात्मनः साम्यरूपेणेति द्वितीयप्रकार इत्यर्थः । **तृतीयमिति** । सुहृत्वादेरीश्वराय-त्तत्वप्रकारमित्यर्थः । **अत** इत्यनुवादः **प्रकारद्वयेने**ति व्याख्या । स्वतश्चिद्रूपत्वं सुहृत्वादिगुणदोष-राहित्यरूपद्वयेन समा इत्यर्थः । **वक्ष्यमाणेति** । गुणदोषौ मनुष्याणामिति वक्ष्यमाणेति । मनु-ष्याणामित्यस्य नित्यसंसारिण ................ कामाद्यभिमानिनमसुरवैरिणं विद्धीति तृतीये गीताया-मुक्तमित्यर्थः । यथा ह वै बहवे पशवे मनुष्यं भुज्यु .................. देवान् भुनक्तीति काण्वश्रुतौ 'आत्मैवेदमग्र' इति चतुर्थब्राह्मणे ज्ञानिनो देवप्रियत्वोक्तेर्देवानां ज्ञानिनः प्रति गौणैकमात्ररूपमिति भावः ।

*भा०र०*— **मध्य इति**। "शीतोष्णसुखदुःखेषु मानावमानयोश्च कूटस्थः" (६.७) इति "साधुपापादिषु समबुद्धिः" (६.९) इत्युक्तयोर्मध्ये = "युक्त इत्युच्यते योगी" (६.८) इत्यत्रेत्यर्थः। एव-चशब्दयोरन्वयं दर्शयन् 'सः' इत्यस्यार्थमाह **साधुपापादिष्विति**। **योगारूढ एवेति**। 'सुहृत्' इत्यादिवाक्यमपि योगारूढलक्षणकथनपरमेवेति यावत्। तर्हि मध्ये लक्ष्योक्तेः किं प्रयोजनम् ? इति पृच्छति **किन्त्विति**। भाष्यभावोक्त्या तत्रोत्तरमाह **सर्वस्मादिति**। **पृथगन्वय इति**। सुहृदादिवाक्येऽपि योगारूढ एव लक्ष्यते, युक्त इत्युच्यते योगी" (६.८) इति "समबुद्धिर्विशिष्यते" (६९) इति च गीतायां पृथगन्वयाभिधानं तु योगानारूढजनात् विशिष्टश्च योगारूढ इति महद्वैलक्षण्यं ज्ञापयितुं कृतमित्यर्थः। ननु भाष्ये 'सुहृन्मित्र' इत्यादिगीतानुसारेण "सुहृदादिषु समबुद्धिः" इति वक्तव्ये 'साधुपापादिषु' इत्युत्तरार्धग्रहणं किमिति कृतम् ? इत्यतस्तत्प्रयोजनं वक्तुमाह **साधुत्वं धर्मित्वमिति**। धर्मवत्त्वम्, **पुण्यवत्त्वमित्यर्थः**। पापशब्दोऽत्र मत्वर्थीयार्शआद्यच्प्रत्ययान्त इति भावेन व्याचष्टे **पापत्वं पापवत्त्वमिति**। **केचित्तु** साधुशब्दसन्निहितः पापशब्दः क्रूरवचनः। "पापस्तु कुत्सिते क्रूरे त्रिषु क्लीबं तु दुष्कृते" (के.को) इति केशवाभिधानात्, क्रौर्यं चात्र पापत्वं विवक्षितमित्याशयेनैवमुक्तमित्याहुः।

**नियतमिति**। धर्मवान् पापवांश्च पुमान् सर्वान् प्रति पुण्यवान् पापवानेवेति व्यवस्थितमित्यर्थः। **इत्यतः** इति जिज्ञापयिषितत्वात्। 'जीवस्य' इत्येव किमिति नोक्तम् ? इत्यत आह **एष इति**। योगारूढलक्षणोक्तिप्रस्तावे "जीवचितः परमात्मनः" इत्यादि प्रकृतासङ्गतं किमुच्यते ? इत्यतस्तत्सङ्गमयितुमाह **सुहृदादीति**। चशब्दस्यात्राप्यन्वये समुच्चयः सिद्ध्यतीति भावेनोक्तम् **तथेति**। 'सर्वत्र' इत्यनुवादः, 'सुहृदादिषु' इति व्याख्या। 'स्थितस्य' इति शेषोक्तिः। 'सर्वत्र' इत्यस्यावृत्तिमभिप्रेत्योक्तम् **एवमिति**। 'सर्वस्य' इत्यनूद्यार्थमाह **सर्वस्य सुहृत्त्वादेरिति**। 'तन्निमित्तकत्वस्य' इत्यत्र तच्छब्दः परमात्मार्थः, बहुव्रीहिश्च समास इति भावेनाह **परमात्मनिमित्तकत्वस्येति**। 'ऐकरूप्येण' इति तृतीया हेतावित्याह **कारणेनेति**। "तद्दर्शी समबुद्धिः" इति वदन् सुहृदादिचैतन्यस्य परमात्मनः सुहृत्त्वादेर्भगवदधीनत्वस्य चैकरूप्यं पश्यन् 'समबुद्धिः' इत्युच्यत इति गीतार्थ इत्यभिप्रैति। **आद्यप्रकारम्** सुहृदादिचैतन्यस्य एकरूपेण दर्शनप्रकारम्।

विष्णुमुपासीनस्य योगिन एकान्ततः साधुकरणात् साधवः सुराः, नियमेन तत्प्रातिकूल्यापादनात् पापा एवासुराः, अनियमेन कादाचित्कसुहृन्मित्रार्युदासीनमध्यस्थद्वेष्यबन्धुत्वकत्वात् मिश्रा एव नरा इति **प्राचीनटीकायां** साधुत्वादेः व्यवस्थापितत्वाद् अव्यवस्थितसुहृत्त्वादिमनुष्योत्तमविषयं भाष्यमित्याशयेन तदर्थमाह **मनुष्येष्विति**। मानुषोत्तमेष्वित्यर्थः। 'इत्यादि' इत्यनन्तरं

वेदनव्यवहारभाजनं सुहृत्त्वादीति योज्यम् । **जीवस्य स्वभावान्तर्गतम्** जीवात्यन्ताभिन्नधर्मः । 'चिद्रूपत्वादिकम्' इत्यत्रादिपदेन भगवदधीनत्वग्रहः । मन्युष्येषु चिद्रूपत्वं भगवदधीनत्वं च, देवेषु साधुस्वरूपत्वम्, दैत्येषु दोषस्वरूपत्वम् आदिपदग्राह्यमिति **एके** । अरित्वादिदोषवर्जितत्वं सुहृत्त्वादिगुणवर्जितत्वं चादिपदार्थ इति **अन्ये** । सुहृत्त्वादेर्जीवस्वभावानन्तर्गतत्वम् उपपादयितुमुक्तम् **बाह्यधर्म इति** । तदेव कुतः ? इत्यत उक्तम् **अन्तःकरणोपादानक इति** । ननु साधु-पाप-मिश्रभेदेन जीवचितां विषमत्वस्य प्रमाणप्रसिद्धत्वात्, तत्र साम्यदर्शित्वे योगारूढो मिथ्यामतिमानेव स्यात् ? इत्यतो भाष्यभावमाह **एतदुक्तमिति** । 'मुक्तौ' इत्यत्र मुक्तिर्लिङ्गभङ्गः । स च मुक्तियोग्यानां देवादीनाम्, तमोयोग्यानां दैत्यादीनामेव, न तु नित्यसंसारिणाम् । "मानुषा मध्यमा ये तु सृतियोग्याः सदैव हि" (भ.प.) इत्यादिवचनात् । अतस्तदुभयापेक्षयैव 'मुक्तावविशिष्यमाणम्' इत्युक्तम् । "त्रिविधा जीवसङ्घास्तु देवमानुषदानवाः" (भ.प.) इति निर्णयोदाहृतप्रमाणे (म.भा.ता.नि. १.८७) मुक्तियोग्याः, नित्यसंसारिणः, तमोयोग्याश्च देवादिपदैर्विवक्षिताः ।

एवं विषमेषु साम्यदर्शने भ्रान्तत्वं स्यात् ? इति पृच्छति **किन्त्विति** । उत्तरमाह **देहेति** । 'आरोप्य' इत्यनन्तरं यद्विषमोऽयमिति लोकोऽवबुद्ध्यते तथाविधमिति योज्यम् । **नास्तीति** । अतो न तस्य भ्रान्तत्वप्रसङ्ग इति भावः । **प्राचीनटीका-भावप्रदीपकयोस्तु** केवलचिद्रूपाणां देवादीनां सुखदुःखादिविशेषः किंनिबन्धनः ? इत्याशङ्क्योक्तम् **विशेषस्त्वन्तःकरणकृत इति** । देवादीनां सुखादिविशेषः स्वरूपान्तःकरणकृतः, दैत्यादीनां दुःखादिविशेषस्तत्स्वरूपान्तःकरणनिमित्तः । देवादीनां दुःखादिविशेषो बाह्यान्तःकरणहेतुकः, दैत्यादीनां सुखादिविशेषोऽपि बाह्यान्तःकरणकः, मिश्राणां मिश्रतः स्वरूपान्तःकरणकृतान्यतराधिक्यं बाह्यान्तःकरणकृतम् । स्वरूपान्तःकरणं नाम जीवोपाधिः । तस्य च शुद्धि-अशुद्धि-मिश्रताभेदात् नानारूपताऽऽपादकत्वम् इत्यादिरूपेण विशेषस्त्वन्तःकरणकृत इति भाष्यं व्याख्यातम् । **द्वितीयः प्रकारः** सर्वत्र स्थितः परमात्मैकरूपः इति द्वितीयः प्रकारः । **तृतीयं** सुहृत्त्वादेरीश्वरायत्तत्वम् इति तृतीयं प्रकारमिति विपरिणामेनान्वयः । 'स्वभावतः' इतिं प्रतीतिं निरसितुं व्याचष्टे **स्वतः स्वातन्त्र्येणेति** । परानपेक्षतयेत्यर्थः । 'स्वातन्त्र्येण' इति प्रतीतिं निवारयितुमुक्तम् **स्वरूपेणेति** । तृतीयार्थे तसिरिति भावः ।

"सर्वैर्दोषैर्विवर्जिताः सर्वदोषविवर्जिताः" इति प्रमाणे विग्रहस्थस्य 'दोषैः' इत्यस्यार्थमाह **दोषैररित्वादिभिरिति** । उपरितनप्रमाणानुसारेण गीतासङ्गतये दोषपदमुपलक्षणमित्याह **एवं सुहृत्त्वादिगुणैरिति** । दोषगुणशून्यत्वे निरस्वरूपत्वं स्यात् ? इत्यतोऽभिप्रायमाह **आगन्तुका इति** । 'अन्तःकरणादिः' इत्यत्रादिशब्देन देहेन्द्रियं च गृह्यते । **स्वतः** 'स्वातन्त्र्येण' इति व्याख्यात-

प्रायम् । 'अतः' इत्यनुवादः, 'एवं प्रकारद्वयेन' इति व्याख्या । "स्वतश्चिद्रूपाः सुहृत्त्वारित्वादि-गुणदोषवर्जिताः" इति, "सर्वं चेश्वरतः" इत्युक्तप्रकारद्वयेनेत्यर्थः । "वैषम्यं भ्रान्तिसम्भवम्" इत्यत्र वैषम्यस्वरूपं दर्शयन् भ्रान्तिः **सम्भवः** उत्पादिका यस्य तत् तथोक्तम् इत्युक्तभ्रान्तिसम्भवत्वं च व्याख्याति **यदनात्मेति** । **अन्तर्भाव्य** बोध्यमानम् । **मनुष्येष्वेव** मनुष्योत्तमजीवेष्वेव । "न तु देवादिषु इत्युक्तस्य" इत्यत्र "स्वतः सर्वेऽपि चिद्रूपाः" (ब्रा.) इत्यादिना 'भ्रान्तिसम्भवम्' (ब्रा.) इत्यन्तेनोक्तस्य "न तु देवादिषु" इत्यपवादमाहेति योजना । 'नृजीवाः' इति भाष्यस्य मनुष्योत्तम-जीवा इत्यर्थः । तथा च **प्राचीनटीका** चिद्रूपा एव नरोत्तमा एव तेषां भगवद्भागवतारित्वादिविशेषो बाह्यान्तःकरणकृत इत्यादि ज्ञातव्यमिति ।

"तुशब्दस्तु विशेषे स्यात् स्वसिद्धान्तेऽवधारणे" (ना.म.) इत्यभिधानादाह **तुशब्द इति** । प्रकरणाभिप्रेतं विशेषमाह **योगिन इति** । अनेन "देवतादिषु तु सुहृत्त्वादिरूपो विशेषः स्वाभाविकः = नागन्तुकः, अत एव = नियमात् सदातनः = नित्यः स्वरूपान्तर्गतः" इति भाष्यार्थ उक्तो भवति । 'देवतादिषु' इत्यत्र ऋषि-पितृ-चक्रवर्तिनामिव, आदिपदेन तत्प्रतियोगिदैत्य-रक्षः-पिशाचमर्त्याधमानां नित्यसंसारिणामपि ग्रहणसम्भवेन तद्धर्मारित्वादेरनागन्तुकत्वस्योक्तत्वात् पुन-रुक्तिरिति शङ्कां परिहर्तुमाह **तदेवेति** । अरित्व-सुहृत्त्वादेरनागन्तुकत्वमेवेत्यर्थः । **वक्ष्यमाणेति** । "गुणदोषौ मनुष्याणाम्" (ब्रा.) इत्यादिना वक्ष्यमाणानां मनुष्याणां देवानां च समुच्चये तथाशब्दो वर्तत इत्यर्थः । आदिशब्दस्तु रक्षःपिशाचाद्यर्थ इति न तेन तल्लाभ इति भावः । योगारूढं प्रत्यरि-त्वम् असुरादेरस्तीत्यत्र सम्मतिमाह **यथोक्तमिति** । "काम एष क्रोध एष रजोगुणसमुद्भवः । महाशनो महापाप्मा विद्ध्येनमिह वैरिणम्" (३.३७) इति तृतीये गीतायां वैरिपदेन असुरादे-ररित्वादिकमुक्तमित्यर्थः । एतद्वाक्यगतकामशब्दस्तात्पर्यनिर्णये (गी.ता. ३.३७) "तत्र कामः कालनेमिः" (ब्र.त.) इति तत्र कामाभिमानिकालनेम्यसुरार्थतया व्याख्यात इति युक्तं तस्योक्तार्थे सम्मतित्वमिति भावः ।

**सुहृत्त्वेति** । सुहृत्त्वादिः गुणः, अरित्वादिः दोष इत्यर्थः । भाष्ये मनुष्याणां नित्यसंसारिणा-मित्यर्थः । 'स्वाभविकौ' इत्यस्यार्थः **अनागन्तुकाविति** । तेन "स्वभावशब्दान्निवृत्तेऽर्थे ठक्, उत्पाद्यत्वे निवृत्तिः स्यात्, नित्यत्वनियमात् कथमेतत् ?" इति चोद्यं परिहृतम् । निवृत्तत्वं प्रयोज्यत्वं विवक्षितमिति तात्पर्यात् । 'गुणैक' इत्यत्र कर्मधारयाभिप्राये एकशब्दस्य 'पूर्वकालैक' इति स्मरणात् पूर्वनिपातः स्यात् सुहृत्त्वादिनानागुणसम्पत्तेर्वक्तव्यतया असम्भवदुक्तिकत्वं च इत्यतस्तृतीयासमासोऽभिमतोऽत्रेति भावेनाह **गुणैः सुहृत्त्वादिभिरिति** । "मात्रं कार्त्स्न्येऽवधारणे"

(अ.को.) इत्यभिधानात्, **एकमात्रम्** एकमेव = गुणैरत्यन्ताभिन्नमेव रूपं येषां ते गुणैकमात्ररूपा इत्येवं भाष्यार्थान्न काप्यनुपपत्तिरिति भावः । **इत्यादिकेति** । "यथाह वै बहवः पशवो मनुष्यं भुज्युः, एवमेकैकः पुरुषो देवान् भुनक्ति" इत्येवंरूपा काण्वश्रुतिरित्यर्थः । अत्र 'भुज्युः', 'भुनक्ति' इति पदद्वयम् अन्तर्भावितणिजन्तम् । तथा च यथा गोः पुरुषभोजकत्वात् तत्प्रियत्वम्, तथा ज्ञानिनो देवभोजकत्वात् तत्प्रियत्वम् इत्यावेदनाद् देवानां योगिनं प्रति सुहृत्त्वादिकं युक्तमिति भावः ।

**भाष्यम्**

न तु साधुपापादीनां पूजादिसाम्यम् । तत्र दोषस्मृतेः—

"समानां विषमा पूजा विषमाणां समा तथा ।
क्रियते येन देवोऽपि स्व(स)पदाद् भ्रश्यते पुमान् ॥"

—इति ब्राह्मे ॥

"वित्तं बन्धुर्वयः कर्म विद्या चैव तु पञ्चमी ।
एतानि मान्यस्थानानि गरीयो ह्युत्तरोत्तरम् ॥"

—इति मानवे ॥

"गुणानुसारिणीं पूजां समां दृष्टिं च यो नरः ।
सर्वभूतेषु कुरुते तस्य विष्णुः प्रसीदति ॥
वैषम्यमुत्तमत्वं तु ददाति नरसञ्चयात् ।
पूजाया विषमा दृष्टिः समा साम्यं विदुःखजम् ॥"

—इति ब्रह्मवैवर्ते ॥

सुहृदादिषु शास्त्रोक्तपूजादिकृतिः अन्यूनानधिका या सापि समा । तदप्याह—

"यथा सुहृत्सु कर्तव्यं पितृशत्रुसुतेषु च ।
तथा करोति पूजादि समबुद्धिः स उच्यते ॥"

—इति गारुडे ॥

***प०टी०***— नन्वेवं साम्यं चेदस्ति, तर्हि साम्येन पूजादिकमपि किं न स्यात् ? इत्यत आह **न त्विति** । न केवलं पूजासाम्यं निषिद्धम्, किन्तु वैषम्येन पूजादि विहितं चेत्याह **वित्तमिति** । फलपर्यालोचनयाऽपि पूजा विषमा, बुद्धिः समा कार्येत्याह **गुणेति** । विषमपूजा वैषम्यं ददाति । तस्यैवार्थः **उत्तमत्वमिति** । या समा दृष्टिः सा विदुःखरूपं जनयतीति । साम्यं प्रकारान्तरेण सप्रमाणकमाह **सुहृदादिष्विति** ।

***न०टी०***—ननु समत्वात् साधुपापादिचेतनानाम्, तान् समत्वेन जानतः सर्वनराधिक्यं फलं चेत्, समत्वेनैव हेतुना तान् साम्येन नमतः पूजयतोऽपि तत्फलं किं न स्यादित्याशङ्क्याह **न त्विति** । साधुपापादिरूपवैषम्यस्याप्युपपादितत्वात्, विषमान् समत्वेन पूजयतो दोषस्मृतेरित्यर्थः । गुणानुसारेण पूजाविधानाच्च, न सत्यपि साम्ये पूजादिसाम्यमित्याह **वित्तमिति** । फलपर्यालोचनयाऽपि पूजादृष्टी विषमे स्यातामिति भावेनाह **गुणानुसारिणीमिति** । या पूजा विषमा, सा वैषम्यमुत्तमत्वं ददाति । या दृष्टिः समा सा तत्साम्यं दुःखाभावसाम्यं जनयतीत्यर्थः । साम्यं प्रकारान्तरेण सप्रमाणकं व्याचष्टे **सुहृदिति** । अतोऽपि न सर्वभूतेषु पूजादिसाम्यमिति भावः ।

***प्र०दी०***— 'सुहृत्' इत्यादिश्लोकस्य प्रतीतार्थ एवार्थः किं न स्यादित्यत आह— **न तु इति** । सर्वशब्दपर्यायस्य समशब्दस्यैव सर्वनामसंज्ञा, न साधारणार्थस्य ''समे देशे यजति'' इति यथा । न केवलं समपूजायां दोषः । किन्तु विषमपूजाविधानं चास्तीत्याह— **वित्तमिति** । बन्धुरिति बन्धुत्वं मान्यानि च तानि स्थानानि च । वित्तादिशब्दैः तद्वन्त उपलक्ष्यन्ते । दृष्टिरेवोक्तप्रकारत्रयेण समा कार्या, पूजा तु विषमैवेत्यत्र प्रमाणान्तरमाह— **गुणेति** । या विषमा पूजा सा वैषम्यम् । तस्यैव व्याख्यानमुत्तमत्त्वम् । साम्यं ददाति । विदुःखत्वनिमित्तम् । समबुद्धित्वं प्रकारान्तरेण व्याचष्टे— **सुहृदादिष्विति** । एतन्न योगारूढविषयमिति तत्रैव नोक्तम् । न हि योगारूढो लौकिकेष्वरिष्वपकारं करोति । करोति यः ।

***भा०दी०***— **प्रतीत एवार्थ इति** । साम्येन पूजाधिरूपोऽर्थ इत्यर्थः । ननु स्मृतौ समानामिति कथं 'सर्वादीनि सर्वनामानि' (१-१-२७) इति स्मृतौ सर्वादिगणे समशब्दं पठित्वा सर्वनामसंज्ञाविधानेन 'आमि सर्वनाम्नः सुडि'ति (७-१-५२) सुडागमे सर्वेषामितिवत् समेषामिति भाव्यमित्यत आह **सर्वशब्दपर्यायस्येति** । समे दर्शपूर्णमासाभ्यां यजेतेत्यादेरर्थानुवादः समे देश इति अन्यथा समस्मिन्निति स्यादिति भावः । **उक्तप्रकारत्रयेणेति** । जीवचितः स्वतो निर्दोषाय अतित्वादिधर्माणामन्तःकरणौपाधिकत्वेशायत्तत्वादिप्रकारेणेत्यर्थः । पुराणे पूजायां विषमेत्यत्र पूजाया इत्यस्य षष्ठ्यन्तत्वभ्रमं निरस्यन् योजनामाह **या विषमा पूजेति** । सेति शेषोक्तिः ।

**प्रकारान्तरेणेति** । यत्सुहृत्त्वादिकं यथाशास्त्रं सुहृदादिषु उपकारापकारानुष्ठातृत्वरूपप्रकारान्तरेणे- त्यर्थः । यस्तत इत्यत्र ततशब्दार्थः ॥

*भा०र०*— **प्रतीत एवार्थः** समबुद्धित्वं नाम पूजादिसाम्यमेवेत्यापातप्रतीत एवार्थः । भाष्ये 'तत्र' इत्यस्य साधुपापादिपूजासाम्ये, आदिपदोक्ते स्तुत्यभिवन्दनादौ चेत्यर्थः । ननु स्मृतौ 'समानाम्' इति कथम् ? यावता असौ सर्वनामगणे पठितः । अतस्तस्माद् ''आमि सर्वनाम्नः सुट्'' इति सुडागमे एत्वे षत्वे च 'समेषाम्' इत्येव षष्ठीबहुवचने साधुः, 'सर्वेषाम्' इति यथेत्यत आह **सर्वशब्देति** । **साधारणार्थस्य** तुल्यार्थस्य । तथा च आधुनिकः ''समः सर्वपर्यायः । तुल्य- पर्यायस्तु नेह गृह्यते । 'यथासङ्ख्यमनुदेशः समानाम्' इति ज्ञापकात् । 'नभन्तामन्यके समे' इति श्रुतेः'' इति । साधारणार्थस्य न सर्वनामत्वम्'' इत्येतदुदाहृत्य दर्शयति **समे देशे यजतीति यथेति** । अन्यथा तत्रापि 'इतः', 'समस्मिन्' इत्यादाविव सर्वनामकार्यं दृश्येतेति भावः । भेदलक्षणे समे ''दर्शपूर्णमासाभ्यां यजेत'' इति मीमांसकोदाहृतवाक्यस्यायमर्थतोऽनुवाद इति **स्वामिनः** ।

ननु 'वित्तम्' (म.स्मृ. २.१३६) इत्यादिस्मृतौ साधुपापादीनां पूजासाम्ये न कोऽपि दोषो दृश्यत इति प्रकृतासङ्गतिः ? इत्यतः सङ्गतिमाह **न केवलमिति** । पूर्वं पश्चाच्च धर्माणामेवो- पादानात्, तेषां च धर्मत्वेनैव प्रेषणमान्यस्थानपदेनान्वयबोधदशायां बन्धुशब्दार्थस्य धर्मिणो धर्मत्वेनान्वयप्रतियोगित्वायोगेन वैरूप्यमापद्यते । तथैकरूप्ये सम्भवति न स्वरसम् ? इत्यतो व्याचष्टे **बन्धुरिति बन्धुत्वमिति** । बन्धुशब्देन धर्मधर्मिभावसम्बन्धेन तद्धर्मो बन्धुत्वं लक्ष्यत इति न वैरूप्यमिति भावः । ननु 'मान्यस्थानानि' इत्यत्र षष्ठीतत्पुरुषाभ्युपगमे मान्यशब्दो भावे कर्मणि वा ण्यत्प्रत्ययान्तः, स्थानशब्दश्च 'निग्रहस्थानम्', 'क्लेशस्थानम्' इत्यादाविव निमित्तवाची स्यात् तदा 'पूजानिमित्तानि', 'पूज्यनिमित्तानि' इति वाऽर्थः स्यात् । स्थानशब्दस्याधिकरणार्थत्वे 'पूजा- ऽधिकरणानि', 'पूज्याधिकरणानि' इति वाऽर्थः स्यात् । सर्वत्र च विषमपूजाविधायकत्वाभावाद् विषमपूजाविधानं चास्तीत्यर्थे असङ्गतोऽयं श्लोक आपद्यते । एतेन ''बहुव्रीहिः द्वन्द्वो वा समासोऽस्तु'' इति प्रत्युक्तम् । असङ्गतेरेवेत्यत आह **मान्यानि च तानि स्थानानीति** ।

नोक्तसमासेषु कोऽप्यत्रेष्यते, येन प्रकृतासङ्गतिः स्यात् । किन्तु कर्मधारय एव, स्थानशब्दो- ऽधिकरणार्थः, मान्यशब्दश्च ''मान = पूजायाम्'' इति धातोः 'ऋहलोर्ण्यत्' इति विहितण्यत्प्रत्य- यान्तः । ण्यत्प्रत्ययश्च ''प्रैषातिसर्गप्राप्तकालेषु कृत्याः'' इति, ''तयोरेव कृत्यक्तखलर्थाः'' इति च प्रैषशब्दितविधौ कर्मणि च विहित इत्यतोऽत्रोभयार्थः । तथा च प्रैषशब्दितविधिगोचरमानन- कर्मणीत्यर्थे प्रत्ययेनाभिहिते विषमपूजाविधानं लभ्यत इति न श्लोकोदाहरणमसङ्गतम् । अत एव

''वित्त-बन्धु-धर्म-जाति-विद्या-वयांसि मान्यानि'', ''परबलीयांसि'' (गौ.सू. ६.२०,२१) इति गौतम-धर्मसूत्रे 'पूजयितव्यानि' इत्यर्थकं 'मान्यानि' इतिपदं प्रयुक्तमिति भावः । ननु वित्तादीनां धर्माणां पूजनीयत्वायोगात् कथमेवं व्याख्यानम् ? इत्यत आह **वित्तादिशब्दैरिति** । वित्तबन्धुवयः कर्मविद्याशब्दैरित्यर्थः । तथा चोक्तम् उक्तगौतमसूत्रव्याख्यायां मिताक्षर्यां ''वित्तादीनां साक्षा-न्मान्यत्वासत्त्वात् तद्वन्तो मान्याः'' इति ।

नन्वेवं सति बन्धुपदस्य लक्षितलक्षणेति प्राप्तम् । न च तद्युक्तम् । तस्य वचनवृत्त्यैव मान्य-तायाः सम्भवेनानुपपत्त्यभावात्, लक्षितलक्षणाऽश्रयणस्यातीव जघन्यत्वाच्चेति चेत् । उच्यते । ''गरीयो यद्यदुत्तरम्'' इत्यत्र यच्छब्देन प्रकृतपरामर्शिना बन्धुत्वत्वेन वेषेण बन्धुत्वमनूद्य तस्य पूर्व-स्माद्गरीयत्वं विधीयत इति वक्तव्यम् । उद्देश्यतावच्छेदकेन रूपेणोपस्थित एव धर्मिणि विधीय-मानान्वयप्रतीतिनियमात् । बन्धुत्वत्वेन बन्धुत्वानुवादश्च तथाविधपुरोवादसापेक्ष इति तदर्थं बन्धु-पदस्य बन्धुत्वे लक्षणायां वक्तव्यायाम्, तत्राप्युक्तरीत्याऽन्वयानुपपत्तौ तत्रापि लक्षणा, ''शीतोष्ण-सुखदुःखदाः'' (२.१४) इत्यत्र शीतोष्णपदयोरिव न्यायप्राप्तत्वात् स्वीकार्यैवेति । एतेन 'बन्धु-र्मान्यः' इत्यन्वयेऽनुपपत्त्यभावाद्, अन्वयानुपपत्तेरेव सिद्धान्ते लक्षणाबीजत्वात् कथमत्र बन्धुपदेन बन्धुत्वलक्षणा ? इति निरस्तम् । ''छत्रिणो गच्छन्ति'', ''यष्टीः प्रवेशयः'', ''काकेभ्यो दधि रक्ष्यताम्'' इत्यादावन्वयानुपपत्तेरभावेन तत्र लक्षणाऽभावप्रसङ्गात् । यदि च तत्र प्रकरणादिना 'गच्छन्ति' इत्यस्य एकसार्थवाहित्वेन छत्र्यछत्रिगमनम् अर्थः, 'प्रवेशय' इत्यस्य भोजनप्रयोजनक-प्रवेशनम् अर्थः, 'रक्ष्यताम्' इत्यस्य दध्युपघातकमात्राद् रक्षणमर्थ इत्यवगतत्वेन अस्त्येव अन्वया-नुपपत्तिरिति मतम्, तर्ह्यत्रापि बन्धुपदस्य सदृशन्यायेन याज्ञवल्क्यश्रुत्युक्तनिमित्तत्वनिर्वाहाय धर्मार्थि-कत्वावगमे बन्धुत्वरूपधर्मस्य मान्यत्वानुपपत्तिरस्तीति समम् ।

अत एव ''विद्याकर्मवयोबन्धुवित्तैर्मान्या यथाक्रमम्'' (या.स्मृ. १.५.११६) इति याज्ञवल्क्य-स्मृतौ विद्यादिसमकक्ष्यतया तृतीयाविभक्त्या बन्धोर्मान्यतां प्रति निमित्तत्वं प्रतीयते । तच्च बन्धो-र्मान्यत्वेन, मान्यतायां निमित्तत्वायोगाद् अयुक्तम् ? इत्याशङ्क्य तद्व्याख्यात्रा ''बन्धुः इति बन्ध-त्वमत्र ग्राह्यम् । एतैर्युक्ताः क्रमेण मान्याः = पूजनीयाः'' इत्युक्तम् । **केचित्तु** 'मान्यस्थानानि' इत्यत्र मान्यशब्दो भावप्रधानः, स्थानशब्दश्च ''क्लेशस्थानसहस्राणि दुःखस्थानशतानि च'' इत्या-दाविव निमित्तार्थकः, ''मान्यतायां निमित्तानि'' इत्यर्थः सम्पद्यते । तत्र बन्धोर्मान्यत्वेन, मान्यतां प्रति निमित्तत्वाभावाद् बन्धुशब्दो बन्धुत्वलक्षक इत्याह **बन्धुरिति बन्धुत्वमिति** । एवं वित्तादि-ग्रहणस्वारस्येन मान्यस्थानशब्दे तत्पुरुषसमासमभिप्रेत्य बन्धुशब्दो व्याख्यातः । अधुना बन्धुशब्द-

स्वारस्येन कर्मधारयसमास इति विग्रहमाह **मान्यानि च तानि स्थानानि चेति**। पूज्यस्थलानीत्यर्थः। अत्र पक्षे वित्तादेः पूज्यतानिमित्तत्वेन स्वयं पूज्यत्वायोगादाह **वित्तादिशब्दैरिति**। बन्धुशब्दव्यतिरिक्तैर्वित्तवयआदिशब्दैरित्यर्थः। तथा च पक्षान्तरत्वद्योतको वाशब्दोऽत्राध्याहार्यः। यथाश्रुतार्थत्वे बन्धुशब्दस्य बन्धुत्वपरोक्तययोगादिति व्याचक्षते।

अनेन वित्तवानाढ्यः, बन्धुत्ववान् = स्वजनः, वयस्वान् = वयसाधिकः, कर्मवान् = यथोक्तकारी, विधावान् = प्राप्ताध्यात्मज्ञानः एतादृशा अनेतादृशैः मान्याः। मान्यस्थानपदम् अनितरसाधारणद्योतनाय परस्परसमवाये परं गरीयः। वित्तवतो बन्धुर्मान्यः, उभाभ्यां कर्मवान् इत्यादीति स्मृतिर्व्याख्याता भवति। ननु स्मृतिव्याख्याता तु बन्धुः = कुलम्, कर्म = यज्ञदानादि मान्यस्थानानि मन्यमानः पूजास्थानानि निमित्तानि, एतेषु यद्यदुत्तरं तत्तत् पूर्वस्मात् - पूर्वस्मात् गरीयो मान्यस्थानमिति व्याख्यातवान्, स स्थूलदृश्वा। 'मान्यानि' (गौ.सू. ६.२०) इति गौतमसूत्रे, 'मान्याः' (या.स्मृ. १.५.११६) इति याज्ञवल्क्यस्मृतौ च मान्यत्वस्य विधेयत्वावगमात्। 'पञ्चानां त्रिषु वर्णेषु भूयांसि गुणवन्ति च। यत्र स्युः सोऽत्र मानार्हः शूद्रोऽपि दशमीं गतः ॥' (म.स्मृ. २.१३७) इत्युत्तरस्मृतिवचने "मानार्हः = मान्यः" इत्येव स्फुटमवभासेन, "मान्यशब्दो मानार्थः" इति व्याख्यानस्याकुशलत्वाच्चेति टीकाकारीयमेव व्याख्यानं युक्तमिति। **उक्तप्रकारेणेति**। सुहृत्त्वारित्वादिधर्माणाम् अन्तःकरणोपाधित्व-ईशायत्तत्वादिरूपोक्तप्रकारेणेत्यर्थः। सर्वभूतेषु सुहृत्त्वादिरूपेष्विति भाष्यार्थः।

"पूजा या विषमा दृष्टिः" (ब्रह्म.वै.) इत्येतत् षष्ठीभ्रमं निरस्यन्नन्वयं दर्शयन् व्याचष्टे **या विषमा पूजेति**। "वैषम्यम् ददाति" (ब्र.वै.) इत्युक्तम् ? वैषम्यस्य दोषत्वेन गुणाद्यनुसारिपूजाफलत्वायोगात् इत्यत आह **तस्यैवेति**। **उत्तमत्वम्** 'इति' शेषः। **नरसञ्चयात्** पामरनिवहात् इति भाष्यार्थः। या तु दृष्टिरुक्तप्रकारेण समा सा साम्यम्, इत्यस्य अनुवृत्तेन 'ददाति' इत्यनेनान्वय इत्याह **ददाति इति**। 'विदुःखजम्' इत्यस्य तात्पर्यम् **विदुःखत्वनिमित्तमिति**। **प्रकारान्तरेणेति**। सुहृदादिषु, "महतां बहुमानेन दीनानामनुकम्पया। मैत्र्या चैवात्मतुल्येषु" इति, "गुरुदेवप्रतीपानां विमुखः" (तन्त्र.सं. ४.११३), "यः प्रशंस्यान्न प्रशंसेत् निन्द्यो येन न निन्द्यते" (सत्कारे) इत्यादिशास्त्रोक्तपूजानिन्दादिकृतिरापादनीयेत्येवं प्रकारान्तरेणेत्यर्थः। नन्वेवं व्याख्यानं "न तु साधुपापादीनां पूजादिसाम्यम्" इत्यतः पूर्वमेव कस्मान्न कृतम् ? औचित्यात् इत्यत आह **एतदिति**। प्रकारान्तरेण व्याख्यानमित्यर्थः। कुतो योगारूढविषयत्वं नास्ति ? इत्यतस्तदुपपादयति **न हीति**। 'हि'शब्दो हेतौ। अतो न योगारूढविषयम्, किन्तु योगार्थिविषयमिति भावेनात्रैतदुक्तमित्यभिसन्धिः।

**भाष्यम्**

**प्रत्युपकारनिरपेक्षयोपकारकृत् "सुहृत्" । क्लेशस्थानं निरूप्य यो रक्षां करोति स मित्रम् । अरिर्वधादिकर्ता । कर्तव्ये उपकारे अपकारे च य उदास्ते स उदासीनः । कर्तव्यमुभयमपि यः करोति स मध्यस्थः । अवासितकृत् द्वेष्यः । आह चैतत्—**

**"द्वेष्योऽवासितकृत् कार्यमात्रकारी तु मध्यमः ।**
**प्रियकृत् प्रियो निरूप्यापि क्लेशं यः परिरक्षति ॥**

**स मित्रमुपकारं तु अनपेक्ष्योपकारकृत् ।**
**यस्ततः स सुहृत् प्रोक्तः शत्रुश्चापि वधादिकृत् ॥"**

**—इति ॥ ९ ॥**

***प०टी०***— सुहृदादिशब्दार्थान् सप्रमाणकमाह **प्रत्युपकारेति** । **अवासितम्** अप्रियम् । **ततः** उपकृतात् ॥

***न०टी०***—सुहृदादिपदार्थं सप्रमाणकमाह **प्रत्युपकारेत्यादिना** । **अवासितम्** अनभिप्रेतम् ॥

***प्र०दी०***— सुहृन्मित्रशब्दयोः, अरिद्वेष्यशब्दयोः, उदासीनमध्यस्थशब्दयोश्चार्थभेदो न प्रतीयते । अत आह— **प्रत्युपकारेति** । निरपेक्षयाऽनपेक्षया । अवासितमप्रियम् । ततः उपक्रियमाणात् ॥

***भा०र०***— "निर् निश्चयनिषेधयोः" (अ.को.) इति कोशात् 'निर्' इत्यस्य निषेधार्थत्वमत्र विवक्षितमिति भावेनोक्तम् **अनपेक्षयेति** । अर्थाभावेऽव्ययीभावसमासाभ्युपगमे अमादेशप्रसङ्गेन 'निर्मक्षिकम्' इत्यत्रेव 'निरपेक्षम्' इति स्यात् इत्याशङ्क्य "निर्गता अपेक्षा निरपेक्षा" इति प्रादिसमास एवायम्, भावप्रधानकबोधश्च लक्षणयेति भावेन 'अनपेक्षया' इति व्याख्यातमिति **केचित्** । "**वाञ्छा** इच्छा अस्य सञ्जाता" इत्यर्थे "तदस्य सञ्जातं तारकादिभ्य इतच्" इति तद्धित इतच्प्रत्ययः । 'अस्य' इति षष्ठ्यर्थश्च कर्मत्वमिति भावेन 'अवाञ्छितम्' इत्येतदनूद्य व्याचष्टे **अवाञ्छितमप्रियमिति** । तथा च तात्पर्यम् "द्वेष्यस्त्वप्रियमात्रकृत्" (ना.पु.) इति । अवासितम् अनभिमतम् इति तु **प्राचीनटीका** । **केचित्तु** इहापि 'अवासितम्' इति पठित्वा, "वासितं सुरभीकृतम्" इति विश्वकोशः । तथाऽपि "सुरभीकृतं प्रियं भवति" इत्युपचारेणैवं व्याख्यातमित्याहुः ।

**कार्यमात्रकारी** कर्तव्यम् उपकारकम् अपकारं च कुर्वन्निति यावत् । "प्रियकृत् प्रियो निरूप्यापि" इत्यत्र एकाक्षराधिक्येऽपि छन्दोभङ्गो न शङ्कनीयः । "न वा एकेनाक्षरेण छन्दांसि वियन्ति" (ब.ब्रा.) इति निगमात् । "प्रियकृत् प्रियः" इति प्रियशब्दार्थकथनं प्रसङ्गादिति द्रष्टव्यम् । "प्रिय उपकर्ता, प्रियो बन्धुः" इति बन्धुस्वरूपनिरूपणम् । तथा च रामानुजभाष्यम् "जन्मत एव हितैषिणो बन्धव इति" (रा.भा. ६.९) इति **केचित्** । "उपकारं तु अनपेक्ष्य" इत्यत्र विवक्षाऽभावात् सन्ध्यभावः, "विवक्षातः सन्धिर्भवति" इति हि प्रसिद्धिः । यद्वक्ष्यति सप्तमे "पदसन्धेः विवक्षाऽधीनत्वाद् असन्धिर्न दोषः" (प्र.दी. ७.१५) इति । "यस्ततः स सुहृत्प्रोक्तः" इत्यत्र 'ततः' शब्दमनूद्यार्थमाह **तत उपक्रियमाणदिति** । "देवदत्तो यज्ञदत्तस्योपकर्ता" इत्यत्र देवदत्त उपकर्ता, स तु सुहृत्प्रोक्त इत्यन्वय इति भावः । भाष्ये 'शत्रुश्च' इत्यत्र चशब्दस्तुशब्दार्थः । वधादिकृत्तु शत्रुः अरिः । अपिशब्दः सुहृदादिसमुच्चयार्थ इत्यर्थो द्रष्टव्यः ॥ ९ ॥

***गीताश्लोकत्रयाक्षरार्थस्तु***— "वशीकृतं मनो बन्धुः" (६.६) इत्युक्तम् । उपकारी हि बन्धुरुच्यते । जितं च मनः कमुपकारं करोति ? येन बन्धुः स्यात् । आत्मोद्धारं करोतीति चेत्, स एव कः ? इत्याशङ्क्य जितात्मनः फलमुच्यते **जितात्मन इति** । वशीकृतमनस्कस्य प्रशान्तिर्भवतीति मनोवशीकरणविषयोपरतिलक्षणप्रशान्त्योः हेतुहेतुमद्भावप्रतिपादकमेकं वाक्यम् । ततः प्रशान्तस्य स्वत एव मनसा विषयेष्वनासङ्गवतः परमात्मा सम्यक् हृद्याहित इत्यपरं वाक्यं द्रष्टव्यम् । परमात्मा सर्वेषां हृदये सन्निहित एव, तत्कुतः प्रशान्तस्य विशेषः ? इत्यतः 'सम्' इत्युक्तम् । अपरोक्षविषयो भवति । प्रशान्तो योगारूढो भवतीति यावत् । एवं च जित आत्मा प्रशान्तिलक्षणमुपकारं कुर्वन् बन्धुरित्युच्यत इति विभावितं भवति । योगारूढस्य "यदा हि नेन्द्रियार्थेषु" (६.४) इति यल्लक्षणमुक्तम्, तदेव स्पष्टीक्रियते **शीतोष्णेत्यादिना सार्धश्लोकद्वयेन** । शीतोष्णादिद्वन्द्वेषु तथा **मानावमानयोः कूटस्थः** निर्विकारः उत्सेकानुत्सेकरूपविकारहीन इत्यत्र "ज्ञानविज्ञानतृप्तात्मा विजितेन्द्रियः" इति हेतुद्वयम् । **ज्ञानं** सामान्यज्ञानं परोक्षज्ञानं वा, **विज्ञानं** विशेषज्ञानम् अपरोक्षज्ञानं वा, ताभ्यां **तृप्तः** सन्तुष्ट **आत्मा** मनो यस्य स तथा । विजितानि इन्द्रियाणि येन स तथोक्तः । यतोऽतः कूटस्थ इति । **समानि** असारत्वेन लोष्टाश्मकाञ्चनानि यस्य स **समलोष्टाश्मकाञ्चनः, योगी** योगं कुर्वन्, **युक्तो** योगसम्पूर्ण उच्यते । एवम्भूतो योगानुष्ठाता योगसम्पूर्णो भवतीति भावः ॥ ७-८ ॥

स एव च **सुहृदादिषु समबुद्धिः** सर्वस्माद् अयोगिवर्गाद् विशिष्यते । प्रत्युपकारानपेक्षया उपकारकृत् **सुहृत्**, स्वयमेव तस्य क्लेशस्थानं निरूप्योपकारकर्ता **मित्रम्, अरिः** वधादिकर्ता,

कर्तव्ये उपकारे य उदास्ते स **उदासीनः**, कर्तव्यमुभयमपि यः करोति स **मध्यस्थः**, अप्रियकृत् **द्वेष्यः**, **बन्धुः** देहसम्बन्धी, **साधवः** धर्मिणः **पापाः** पापवन्तः, एतेषु सुहृदादिषु सुहृदादिचैतन्यस्य, सुहृदादिषु स्थितस्य परमात्मनः, सुहृदादिषु स्थितस्य सुहृत्त्वादेः परमात्मनिमित्तत्वस्य च ऐक्यरूप्येण कारणेन तद्दर्शी **समबुद्धिः** अयोगिनो विशिष्ट इति ॥ ९ ॥

**गीता**

**योगी युञ्जीत सततमात्मानं रहसि स्थितः ।**
**एकाकी यतचित्तात्मा निराशीरपरिग्रहः ॥ १० ॥**

***वि०वि०***— समाधियोगप्रकारमाह **योगी युञ्जीतेत्यादिना** । आत्मानं मनो युञ्जीत समाधियोगयुक्तं कुर्यात् । सततं निरन्तरं रहसि एकान्ते स्थितः सन् । एकाकी सङ्गशून्यः । अनेन बाह्ययोगान्तरायान्निवारयति । नियमरूपेण तप आदिना शुद्धौ मनोदेहौ यस्य स यतचित्तात्मा । निराशीः दृष्टश्रुतविषयवितृष्णः । अपरिग्रह इत्यहिंसादियमान्तराणामप्युपलक्षणम् ॥

***वा०ल०***— 'एकाकी जितचित्तात्मा निराशीरपरिग्रहः' इत्यत्र जितचित्तात्मा जितचित्तप्रयत्नवान् ॥

***सा०सं०***— 'उद्धरेत्' इत्यादिना विहितं ध्यानयोगमनूद्य तत्प्रकारमाह **योगीति** । **योगी** ज्ञानोपायमनुतिष्ठन् । **आत्मानं** मनः **युञ्जीत** भगवन्निष्ठं कुर्यात् । समाधियुक्तं कुर्यादिति यावत् । **सततं** निरन्तरम् । **रहसि स्थितः** । **एकाकी** सङ्गशून्यः । यतं नियमितं चित्तं मनः आत्मा देहश्च यस्य स **यतचित्तात्मा** । **निराशीः** कामनाहीनः । परिग्रहोज्झश्च भूत्वा कुर्यादिति ॥

***अ०प्र०***— एवं योगारूढस्वलक्षणमुक्त्वा इदानीं तस्य साङ्गसंयोगं विधत्ते **योगीत्यादिना** ।

'स योगी परमो मत' इत्यन्तेन । इह रहसि स्थित इत्यादि पञ्चविशेषणयुक्तः[५], योगी[६], आत्मानं,[७], सततं[८], युञ्जते इत्यन्वयः ।

रहसि स्थितः = एकान्ते स्थितः सन्, एकाकी = सङ्गशून्यः, अनेन बाह्ययोगान्तरायान्निवारयति[२], यतचित्तात्मा = नियमरूपेण तप आदिना यतौ संयतौ शुद्धौ मनोदेहौ यस्य स तथा । यद्वा, यतं नियमितं चित्तं मनः आत्मा देहो येन सः[३], निराशीः = निर्गताः आशिषः इष्टविषयादि यस्मात् स तथा । दृष्टश्रुतविषयतृष्णाशून्यः[४], अपरिग्रहः = परिग्रहशून्यः शरीराद्यभिमानरहितः[५], इति अहिंसादियमान्तराणामप्युपलक्षणम् । एतादृशो यः सः योगी = योगारूढः

योगं कुर्वन् सन्[6], आत्मानं = मनः[7], सततं = असकृत्[8], युञ्जीत = समाधि-युक्तं कुर्यात् । यद्वा, समाहितं, कुर्यादित्यर्थः । यद्वा, सततं रहसि स्थितेति अन्वयो वा ॥ १० ॥

**गीता**

## शुचौ देशे प्रतिष्ठाप्य स्थिरमासनमात्मनः ।
## नात्युच्छ्रितं नातिनीचं चेलाजिनकुशोत्तरम् ॥ ११ ॥

*वि०वि०—* **शुचौदेश इति** । मनःप्रसादहेतुभूतदेशोपलक्षणम् ।

'तमेव देशं सेवेत तं कालं तामवस्थितिम् ।
तानेव भोगान्सेवेत मनो यत्र प्रसीदति ॥
न हि देशादिभिः कश्चिद्विशेषः समुदीरितः ।
मनः प्रसादनार्थं हि देशकालादिचिन्तनम् ॥'

इति वचनात् । आत्मनः आसनं प्रतिष्ठाप्य कीदृशम् । स्थिरम् अचलम् । नातीवोन्नतं न चातिनीचम् । चैलं वस्त्रम् । अजिनं व्याघ्रादिचर्म । कुशा दर्भा उत्तरा यस्मिन् तथोत्तरम् । समग्रादासनप्रदेशात् साक्षादुत्तरत्वायोगात् बुद्ध्या विभक्तस्योत्तरोत्तरनिर्दिष्टस्य बुद्धिसन्निहितत्वात् साक्षादुत्तरत्वं पूर्वनिर्दिष्टस्य व्यवहितत्वात् परम्परया उत्तरत्वं द्रष्टव्यम् ॥

*सा०सं०—* पुनर्ध्यानप्रकारमेवाह **शुचावित्याद्यनेकश्लोकैः** । **शुचौ देशे** मनःप्रसादहेतुभूतदेशोपलक्षणमेतत् । **चेलं** वस्त्रम् । **अजिनं** व्याघ्रादिचर्म । **कुशो** दर्भः **उत्तरम्** उपरि यस्य तत्तथा । **नात्युच्छ्रितं नातिनीचम्** । न समासः । एवम्भूत**मासनं स्थिरं** यथा भवति तथा **आत्मनः प्रतिष्ठाप्य** ॥

*अ०प्र०—* आसननियमं दर्शयन्नाह द्वाभ्याम् । तत्र, **शुचाविति** ।

अथान्वयः— पूर्वोक्तयोगी स्थिरं[1], नात्युच्छ्रितं[2], नातिनीचं[3], चैलाजिनकुशोत्तरं[4], आत्मनः[5], आसनं[6], शुचौ[7], देशे[8], प्रतिष्ठाप्य[9], आसने[10] उपविश्य[11] योगं[12], युञ्ज्यात्[13], इति उत्तरेणान्वयः ।

पूर्वोक्तयोगी स्थिरं = स्थिरमासनं, यथा निश्चलं भवति तथा, नात्युच्छ्रितं = नातीवोन्नतं[2], नातिनीचं = न चातिनीचं[3], चैलाजिनकुशोत्तरं = चैलं वस्त्रं, अजिनं च व्याघ्रादि चर्म । चैलाजिनकुशेभ्यः उत्तरे यस्मिन् तत्तथोक्तभूम्यां दर्भाः तेषु चर्म तत्र वस्त्रं कुशानामुपरि चर्म तदुपरि वस्त्रं इति उत्तरत्वं ज्ञेयं[4], आत्मनः आसनं = स्वस्याऽऽसनं[6], शुचौ देशे = शुद्धस्थाने[8], प्रतिष्ठाप्य = स्थापयित्वा[9], तत्रासने, उपविश्य, योगं, युञ्ज्यादिति, उत्तरेण अन्वयः । तदुक्तम्—

'स्मरणोपासनं चैव ध्यानात्मकमिति द्विधा ।
स्मरणं सर्वदा योग्यं ध्यानोपासनमासने ॥
नैरन्तर्यमनोवृत्तेः ध्यानमित्युच्यते बुधैः ।
आसीनस्य भवेत्तत्तु न शयानस्य निद्रया ॥
स्थितस्य गच्छतो वाऽपि विक्षेपस्यैव सम्भवात् ।
स्मरणात्परमं ज्ञेयं ध्यानं नास्त्यत्र संशयः ॥
क्षिप्तं मूढं'च विक्षिप्तमेकाग्रं च निरोधकम् ।'

——इत्युक्तं पञ्चविधमनोवृत्तिषु ॥ ११ ॥

**भाष्यम्**

**समाधियोगप्रकारमाह— योगी युञ्जीत इत्यादिना । युञ्जीत समाधियोग-युक्तं कुर्यात् । आत्मानं मनः ॥ १० ॥ ११ ॥**

***प०टी०***— उत्तरप्रघट्टकमवतारयति **समाधीति** । 'योगी युञ्जीत' इति व्याचष्टे **युञ्जीतेति** ॥

***न०टी०***—'अत्यन्तं सुखमश्नुते' इत्येतदन्तं प्रघट्टकमवतारयति **समाधीति** । प्राधान्यत एतेषु श्लोकेषु योगप्रकार एवोच्यते । तत्फलादि चान्यत् तदर्थमेव ॥

***प्र०दी०***— ननु 'उद्धरेत्' इत्यनेनैव योगो विहितः । तत्किं पुनर्विधीयत इत्यत आह— **समाधीति** । प्रकारकथनाय विध्यनुवाद इत्यर्थः । 'युञ्जीत' इति योगमात्रमुच्यते । तत्कथं समाधी-त्युक्तमित्यत आह— **युञ्जीतेति** । सामान्यशब्दोऽपि प्रकरणाद्विशेषेऽवतिष्ठत इत्यर्थः । आत्म-शब्दस्यात्र विवक्षितमर्थमाह— **आत्मानमिति** ॥

***भा०र०***— **कथनायेति** । रहःस्थित्याद्यङ्गकलापकथनायेत्यर्थः । **प्रकरणादिति** । समाधि-योगप्रकरणादित्यर्थः । अत एव 'समाधियोगमाह' (गी.भा. ६.१) इत्यध्यायगमनिकाभाष्यमिति भावः ॥ १०-११ ॥

**गीता**

**तत्रैकाग्रं मनः कृत्वा यतचित्तेन्द्रियक्रियः ।**
**उपविश्यासने युञ्ज्याद्योगमात्मविशुद्धये ॥ १२ ॥**

***वि०वि०***— तत्र तस्मिन्नासने उपविश्येति पद्मासनस्वस्तिकासनादिष्वन्यतमस्मिन् स्थिरे सुखे आसने उपविष्टस्यैव समाधिसिद्धिरिति दर्शयति । यदुक्तम्—

'स्मरणोपासनं चैव ध्यानात्मकमिति द्विधा ।
स्मरणं सर्वदा योग्यं ध्यानोपासनमासने ॥
नैरन्तर्यं मनोवृत्तेर्ध्यानमित्युच्यते बुधैः ।
आसीनस्य भवेत्तत्तु न शयानस्य निद्रया ॥
स्थितस्य गच्छतो वाऽपि विक्षेपस्यैव सम्भवात् ।
स्मरणात्परमं ज्ञेयं ध्यानं नास्त्यत्र संशयः ॥'

इति । क्षिप्तं मूढं विक्षिप्तमेकाग्रं निरुद्धमिति चित्तवृत्तयः । तत्र समाध्यन्तरङ्गभूता चतुर्थी मनोवृत्तिनिर्दिश्यते । 'एकाग्रं मनः कृत्वा' इति । उपरतचित्तेन्द्रियव्यापारः आत्मनो मनसो विशुद्धये सर्वमनोमलदाहार्थे । योगं युञ्ज्यात् । सर्वात्मना चित्तवृत्तिनिरोधलक्षणं समाधियोगं कुर्यात् ॥

***सा०सं०***— **तत्रासने उपविश्य** । तदाह सूत्रे 'ॐ आसीनः सम्भवात् ॐ' (४-१-७) इति । **यतचित्तेन्द्रियक्रियः** सन् **एकाग्रं मनः कृत्वा** आत्मनो मनसो विशुद्धये सर्वमलदाहाय स्वस्य संसारमलनिवृत्तये वा । **योगं** ध्यानयोगं **युञ्ज्यात्** कुर्यादिति विद्वद्यनुवादेन प्रकारोक्तिरियम् ॥

***अ०प्र०***— समाध्यन्तरङ्गभूतां च चतुर्थी वृत्तिमाह **तत्रैकाग्रं मनः कृत्वेति** ।

यतचित्तेन्द्रियक्रियः[१], योगी तत्र[२], आसने[३], उपविश्य[४], एकाग्रं[५], मनः[६], कृत्वा[७], आत्मविशुद्धये[८], योगं[९], युञ्ज्यादित्यन्वयः ।

यतचित्तेन्द्रियक्रियः योगी = यता उपरताः नियमिता वा । चित्तस्य इन्द्रियाणां च क्रियाः येन स तथा उपरतमनआदीन्द्रियव्यापारः योगी[१], आत्मविशुद्धये = मनसः उपशान्तये सर्वमनमलदाहार्थे[२], तत्र आसने = तस्मिन् आसने[३], उपविश्य = उपविशेत्[४], तदनन्तरं एकाग्रं = विक्षेपरहितं[५], मनः कृत्वा[७], योगं = श्रीविष्णुरेव सर्वोत्तमो मोक्षदायकः तस्य दासोऽहमिति भक्तिरूपयोगं[९], युञ्ज्यात् = कुर्यात्, साधनया अभ्यसेदिति वा । सर्वात्मना चित्तवृत्तिनिरोधलक्षणसमाधिसाधनामभ्यसेदित्यर्थः ॥ १२ ॥

**गीता**

**समं कायशिरोग्रीवं धारयन्नचलं स्थिरः ।**
**सम्प्रेक्ष्य नासिकाग्रं स्वं दिशश्चानवलोकयन् ॥ १३ ॥**

*वि०वि०*— कायं मध्यदेहं शिरश्च ग्रीवां च समत्वेन धारयन् । अन्यथा मनश्चलन-प्रसङ्गात् । उक्तं च—

'अचलं चेच्छरीरः स्यान्मनसश्चाप्यचालनम् ।
चलने च शरीरस्य चञ्चलं च मनोभवेत् ॥'

इति । स्वयं स्थिरः अवहितप्रयत्नः । नासिकाग्रं सम्प्रेक्ष्येति । भ्रूमध्यं च सम्प्रेक्ष्येति ग्राह्यम् । 'चक्षुश्चैवान्तरे भ्रुवोः' इत्युक्तत्वात् ॥

*सा०सं०*— **कायशिरोग्रीवं** कायो मध्यदेहः स च शिरश्च ग्रीवा च प्राण्यङ्गत्वात् द्वन्द्वैकवद्भावः । **समम्** ऋजु । **धारयन् अचलं** यथा तथा । **स्थिरो** दृढः । **स्वं नासिकाग्रं सम्प्रेक्ष्य दिशश्चानवलोकयन्** युञ्ज्यात् इति पूर्वेण वा, 'युक्त आसीत' इत्युत्तरेण वाऽन्वयः ॥

*अ०प्र०*— चित्तैकाग्र्योपयोगिनीं देहादिधारणां दर्शयन्नाह द्वाभ्याम् । तत्र, **सममिति** ।

स्थिरः[१], योगी, अचलं[२], कायशिरोग्रीवं[३], समं[४], धारयन् सन्[५], दिशश्च[६], अनवलोकयन्[७], स्वं[८], नासिकाग्रं[९], सम्प्रेक्ष्य[१०] मत्परः सन्नासीत इत्युत्तरेण अन्वयः ।

स्थिरः = दृढप्रयत्नः[१], योगी, अचलं = निश्चलं अवक्रं यथा भवति तथा[२], कायशिरोग्रीवं = कायश्च शिरश्च ग्रीवा च कायशिरोग्रीवम् । काय इति देहमध्यभागो विवक्षितः मूलाधारादारभ्य मूर्ध्नान्तिपर्यन्तम्[३], समं = अचलं[४], धारयन् = दृढप्रयत्नो भूत्वा इत्यर्थः[५], दिशश्च[६], अनवलोकयन्[७], स्वं = स्वीयं[८], नासिकाग्रं = नासिकायाः अग्रं मूलं भ्रूमध्यं[९], सम्प्रेक्ष्य = अर्धनिमीलितनेत्र इत्यर्थः[१०], इतस्ततो अनवलोकयन् सन् मत्परः सन्नासीतेत्यर्थः ॥ १३ ॥

**गीता**

## प्रशान्तात्मा विगतभीर्ब्रह्मचारिव्रते स्थितः ।
## मनः संयम्य मच्चित्तो युक्त आसीत मत्परः ॥ १४ ॥

*वि०वि०*— प्रशान्तात्मा निर्मलचित्तः । अनेन श्रद्धादिसंस्कारवत्वमाचष्टे **विगतभीः** । प्रमादालस्याद्यान्तरयोगान्तरायभयरहितः । ब्रह्मचर्ये स्थितमनः । सम्यक् प्रत्याहृत्य । मच्चित्तो भगवद्ध्यानवान् । युक्तः समाधिसम्पन्नः आसीत । सोऽपि समाधिर्भगवदनुग्रहादेव भवतीत्याशयेनाह **मत्पर इति** ॥

***सा०सं०***— **प्रशान्तात्मा** स्वतो विषयेषु अप्रवृत्तमनस्कः । **विगतभीः** व्याघ्रचोरादि-भयहीनः । **ब्रह्मचारिव्रते स्थितः मनः** सम्यक् प्रत्याहृत्य **मच्चित्तो** मद्ध्यानवान् । **मत्परः** अहमेव परः सर्वोत्तमः यस्य स मत्परः । **युक्तः** समाधिसम्पन्नः । **आसीते**त्यर्थः ॥

***अ०प्र०***— पूर्वार्धविशेषणत्रययुक्तः[३], मच्चितः[४], मत्परः, सन्[१], मनः[६], संयम्य[७], एवं युक्तो भूत्वा[८], आसीतेत्यन्वयः ॥

प्रशान्तात्मा = प्रशान्तः आत्मा चित्तं यस्य स तथा । यद्वा, प्रकर्षेण शान्तं निश्चलं निःसङ्कल्पं मनो यस्य विषयानासक्तमनाः निर्मलचित्तो वा । अनेन श्रद्धादिसंस्कारमाचष्टे[१] । विगतभीः = विशेषेण गतभयः प्रमादालस्याद्यन्तरायरहितः[२], ब्रह्मचारिव्रते स्थितः = ब्रह्मचारः सोऽस्यास्तीति तथा, तस्य व्रतं तस्मिन् ब्रह्मचारिव्रते स्थितः तदनुष्ठाने स्थितः सन्[३], मच्चित्तः = भगवद्ध्यानवान्[४], मत्परः = अहमेव परः पुरुषार्थो यस्य स तथा[५], मनः संयम्य = प्रत्याहृत्य[७], एवं युक्तो = समाधिसम्पन्नो भूत्वा[८], आसीत = तिष्ठेत्[१४], यद्वा, युक्तः = समाधिसम्पन्नः, सोऽपि समाधिः भगवदनुग्रहादेव सिद्ध्यति इत्याह **मत्पर इति** । अहं कृष्ण एव परं इति धीः यस्य सः ॥ १४ ॥

**भाष्यम्**

## योगं समाधियोगं युञ्ज्यात् ॥ १२-१४ ॥

***प०टी०***— 'उपविश्यासने युञ्ज्याद्योगम्' इत्यत्र 'योग'शब्दार्थमाह योगमिति ॥

***प्र०दी०***— 'उपविश्यासने' इत्यत्रापि योगशब्द एवमेव व्याख्येय इत्याह— **योगमिति** । स्थानविवेकार्थं युञ्ज्यादित्युक्तम् । कुर्यादिति यावत् ॥

***भा०दी०***— 'तत उपक्रीयमाणात्' इति योगशब्दार्थोक्तिपरं चेति भाष्ये युञ्ज्यादित्यंशेन वाच्य इत्यत आह **स्थानविवेकार्थमिति** । 'उपविश्यासने युञ्ज्याद्योगमि'त्यत्र योगशब्दार्थ इति ज्ञापयितुमित्यर्थः । युञ्ज्यादित्यत्र प्रत्ययमात्रं विवक्षितमन्यथा पौनरुक्त्यापत्तेरिति भावेनाह **कुर्या-दिति । यावदिति** ॥

***भा०र०***— **एवमेव** समाधियोगार्थत्वेनैव । योगशब्दार्थवर्णनमात्रेणार्थसिद्धेः 'युञ्ज्याद्' इत्यनुवादस्य किं प्रयोजनम् ? इत्यत आह **स्थानविवेकार्थमिति** । 'योगमात्मविशुद्धये' इत्यत्र विद्यमानं योगपदमिह व्याख्येयमिति ज्ञापनार्थमित्यर्थः । निर्वाणादिपदार्थकथनेन स्थानविवेकसम्भवे-ऽपि अन्तरङ्गज्ञापकप्रदर्शनाय 'युञ्ज्यात्', 'युञ्जीत' इत्यन्वयः प्रादर्शीति भावः । ननु 'युञ्ज्याद्'

इत्यनेनैव "योगं कुर्याद्" इत्यर्थलाभाद् 'योगम्' इति व्यर्थम् ? इत्याशङ्क्य 'तपस्तप्यते' इत्यादाविव प्रत्ययार्थमात्रं विवक्षितमिति भावेनाह **कुर्यादिति यावदिति** ॥ १२-१४ ॥

**गीता**

## युञ्जन्नेवं सदाऽऽत्मानं योगी नियतमानसः ।
## शान्तिं निर्वाणपरमां मत्संस्थामधिगच्छति ॥ १५ ॥

*वि०वि०*— न केवलमादरनैरन्तर्याभ्यां समाधिः सेवितव्यः, किन्तु दीर्घमपि तादृक्तयैव व्युत्थानसंस्कारानभिभाव्यत्वादिति दर्शयन् समाधिफलमाह **युञ्जन्निति**। निर्वाणं देहाभावः । तस्मात्परमामुत्तरकालीनां मत्संस्थां मयि स्थितिम् । तादृशीं शान्तिं योगी प्राप्नोति । न जीवन्मुक्तिमात्रमित्यर्थः ॥

*सा०सं०*— समाधेः फलमाह **युञ्जन्निति** । **नियतमानसो** यतचित्तः । **योगी** योगानुष्ठाता । **एवमुक्तप्रकारेण** । **सदाऽऽत्मानं युञ्जन्** ध्यायन्, आत्मानं मनो भगवति युक्तं कुर्वन्निति वा । **निर्वाणपरमां** शरीरत्यागोत्तरकालीनाम् । **मत्संस्थां** मयि स्थितिरूपाम् । **शान्तिमधिगच्छति** प्राप्नोति । न जीवन्मुक्तिमात्रमाप्नोतीत्यर्थः ॥

*अ०प्र०*— योगाभ्यासफलमाह **युञ्जन्नेवमिति** ।

सदा[१], नियतमानसः[२], योगी[३], एवं[४], आत्मानं[५], युञ्जन् सन्[६], शान्तिं[७], निर्वाणपरमां[८], मत्संस्थां[९], अधिगच्छतीत्यन्वयः ॥

सदा नियतमानसः = निरुद्धमानसः[१-२], योगी[३], एवं = उक्तप्रकारेण[४], आत्मानं = मनः[५], युञ्जन् सन् = समाधियुक्तं कुर्वन् सन्[६], शान्तिं निर्वाणपरमां = निर्वाणो लिङ्गदेहाभावः तस्मात्परमां उत्तरकालीनाम् । यद्वा, निर्वाणमेव परममुत्कृष्टं फलं यस्यास्तां तथा[७], शान्तिं = मोक्षं, संसारापरमं वा[८], मत्संस्थां = मयि स्थितिरूपां[९], शान्तिं आप्नोति = न जीवन्मुक्तिमात्रमित्यर्थः ॥ १५ ॥

**भाष्यम्**

**निर्वाणपरमां शरीरत्यागोत्तरकालीनाम् ॥ १५ ॥**

*प०टी०*— 'निर्वाणपरमाम्' इत्यत्र मोक्षोत्तमामित्यन्यथाप्रतीतिं वारयति **आत्मनेति** ॥

*न०टी०*—निर्वाणं बाणाभावः शरीरत्यागः, तत्परमात् तदुत्तरकालीनादुत्तरकालतया वा । शान्तिर्मुक्तिः, साऽपि भगवत्संस्था । भगवदाश्रयतामाप्नोतीत्यर्थः ॥

***प्र०दी०***— ननु शान्तिः निर्वाणमिति मोक्षपर्यायौ । तत्कथं शान्तेर्निर्वाणपरमत्वमित्यत आह— **निर्वाणेति** । न जीवन्मुक्तिमात्रमित्यर्थः । उपशान्तेर्योगकारणत्वाद्योगफलत्वमनुपपन्नम् ॥

***भा०दी०***— नन्वत्र शान्तिपदस्य विषयेषु मनसोऽप्रवृत्तिरूपोपशान्तिरर्थः कुतो नेत्यत आह **उपशान्तेरिति** ॥

***भा०र०***— "शान्तिर्मोक्षोऽथ निर्वाणम्" (द.को.) इत्युक्तेराह **मोक्षपर्यायाविति** । भाष्ये **प्राचीनटीकारीत्या** निर्वाणशब्दस्य देहाभावः = शरीरत्यागोऽर्थः । "कायो बाणं शरीरं च" इति द्वितीये (गी.भा. २.७२) अभिधानाद्, निरो निषेधार्थत्वाद् बवयोरभेदाश्रयणाद् । तस्मात् परमा = उत्तरकालीना ताम्, शान्तिं गच्छतीति विशेषणमहिम्ना परमुक्तिरत्र शान्तिपदेन ग्राह्या, न पुनर्मुक्ति-शब्दगौणार्थो जीवन्मुक्तिमात्रमिति भावेनाह **न जीवन्मुक्तिमात्रमितीति** । **अर्थः** तात्पर्यार्थः । "निर्वाणपरमां = मोक्षकाष्ठां शान्तिम् = उपरतिम्" इति **सङ्करीत्या**ऽत्र शान्तिशब्द उपशान्त्य-र्थकः कस्मान्न स्यात् ? इत्यत आह **उपशान्तेरिति** । उपरतिशब्दितायाः स्वतोऽपि प्रायो विषया-गतेरित्यर्थः । "प्रशान्तस्य परमात्मा समाहितः" (६.७) इत्यत्र तयोः कार्यकारणभावाभिधानादाह **योगकारणत्वादिति** ॥ १५ ॥

**गीता**

## नात्यश्नतस्तु योगोऽस्ति न चैकान्तमनश्नतः ।
## न चातिस्वप्नशीलस्य जाग्रतो नैव चार्जुन ॥ १६ ॥

***वि०वि०***— योगनिष्ठस्याहारादिनियममाह **नात्यश्नत इति द्वाभ्याम्** । एकान्तमत्यन्तम् । एतच्च जाग्रत इत्यनेनापि सम्बध्यते ॥

***सा०सं०***— ध्यानयोगनिष्ठस्याहारादिनियममाह **नात्यश्नत** इत्यादि द्वाभ्याम् । **अति** अधिकं भुञ्जानस्य **एकान्तं** सर्वथैवाभुञ्जानस्य चातिनिद्राशीलस्याति**जाग्रतश्च योगो नैवास्तीत्यर्थः** । अत्राशनजागरणनिषेधोऽशक्तस्य, शक्तस्य तु अनशनादावपि न योगक्षतिरिति ज्ञेयम् ॥

***अ०प्र०***— योगाभ्यासनिष्ठस्य आहारादिनियममाह द्वाभ्याम् ।

योगस्तु[१], अत्यश्नतः[२], नास्ति[३], एकान्तं[४], अनश्नतः[५], न चैवं[६], अतिस्वप्नशीलस्य[७], न च[८], हे अर्जुन ![९], अतिजाग्रतः[१०] योगो, न, चैव इत्यन्वयः ।

हे अर्जुन !, योगस्तु[१], अत्यश्नतः = अधिकभुञ्जानस्य[२], नास्ति = योगः समाधिर्न भवति[३], तथा एकान्तं = अत्यन्तं[४], अनश्नतः = अभुञ्जानस्यापि[५], न चैव = योगसमाधिर्नैव भवति[६], अतिस्वप्नशीलस्य = अतिनिद्राशीलस्य[७], न च समाधिर्भवति[८], अतिजाग्रतश्च[९], योगो = योग-समाधिर्न चैवास्ति ॥ १६ ॥

**भाष्यम्**

**अनशनादिनिषेधोऽशक्तस्य । उक्तं हि—**

**"निद्राशनभयश्वासचेष्टातन्द्रादिवर्जनम् ।**
**कृत्वाऽऽनिमीलिताक्षस्तु शक्तो ध्यायन् प्रसिद्ध्यति ॥"**

**—इति नारदीये ॥ १६ ॥**

*न०टी०*— 'नात्यश्नतस्तु योगोऽस्ति न चैकान्तमनश्नतः । जाग्रतो नैव च ' इत्येतदशक्त-विषयमित्येतत् सप्रमाणकमाह **अनशनेति** ॥

*प्र०दी०*— "न चैकान्तमनश्नतः", "जाग्रतो नैव च" इति युञ्जानस्यानशनजागरण-निषेधः क्रियते । स सर्वविषय इति प्रतीतिनिरासायार्थमाह— **अनशनादीति** । कुत इत्यतः शक्तस्य तद्विधानादित्याह— **उक्तं हीति** । आनिमीलिताक्ष ईषन्निमीलिताक्षः । शक्तस्त्विति सम्बन्धः ॥

*भा०र०*— **युञ्जानस्य** योगं कुर्वाणस्य । **तद्विधानात्** अनशनादिविधानात् । 'निमीलिताक्षः' इति पदच्छेदे "सम्प्रेक्ष्य नासिकाग्रं स्वम्" (६.१३) इति गीताविरोधः स्यात्, इत्यतो विवक्षितं पदं दर्शयन् तदर्थमाह **आनिमीलिताक्ष इति** । "ईषदर्थे क्रियायोगे आङं विद्याद्" इति वचनादाह **ईषदिति** ॥ १६ ॥

**गीता**

## युक्ताहारविहारस्य युक्तचेष्टस्य कर्मसु ।
## युक्तस्वप्नावबोधस्य योगो भवति दुःखहा ॥ १७ ॥

*वि०वि०*— यावता श्रमाद्यभावो भवति तावदाहारादेर्दुःखनाशको योगो भवति । एतच्चा-शक्तविषयम् । उक्तं च—

'निद्राशनभयश्वासचेष्टातन्द्रादिवर्जनम् ।
कृत्वा निमीलिताक्षस्तु शक्तो ध्यायन् प्रसिद्ध्यति ॥' इति ॥ १७ ॥

***सा०सं०***— कथम्भूतस्य योगो भवतीत्यत आह **युक्तेति** । युक्तौ योगोपेतौ आहारविहारौ भोजनसञ्चारौ यस्य स तथा तस्य, यावता श्रमादिर्न भवति तावदाहारव्यापारवत इत्यर्थः । **कर्मसु** कार्येषु **युक्तचेष्टस्य** श्रमानापादकचेष्टायुक्तस्य । **युक्तस्वप्नावबोधस्य** यावन्निद्राऽवबोधौ योगाविघातकौ तावन्निद्रावबोधोपेतस्य । **योगो** ध्यानयोगः समाधिरिति यावत् । **दुःखहा भवती**त्यर्थः ।

***अ०प्र०***— तर्हि कथम्भूतस्य योगो भवतीत्यत आह **युक्तेति** ।

योगः[१], युक्ताऽऽहारविहारस्य[२], कर्मसु[३], युक्तचेष्टस्य[४], युक्तस्वप्नावबोधस्य[५], दुःखहा[६], भवति[७] ।

हे अर्जुन !, योगः[१], युक्ताऽऽहारविहारस्य = आहारश्च विहारश्च आहारविहारौ युक्तौ नियमितौ आहारविहारौ यस्य सः तस्य तथा[२] कर्मसु = वागादिकर्मसु कार्येषु[३], युक्तचेष्टस्य = युक्ता नियमिता चेष्टा कर्मेन्द्रियक्रिया यस्य सः तस्य[४], युक्तस्वप्नावबोधस्य = स्वप्नं सुषुप्तिः अवबोधो जागृतिः तौ स्वप्नावबोधौ निद्राजागरौ युक्तौ नियतौ परिमितौ यस्य सः तस्य[५], एतादृशस्य दुःखहा = दुःखनिवर्तकः[६], योगः भवति = सिद्ध्यति, अनेन सुखप्रदो भवतीति भावः ॥ १७ ॥

### भाष्यम्

**युक्ताहारविहारस्य सोपायाहारादेः । यावता श्रमाद्यभावो भवति तावद् आहारादेरित्यर्थः ॥ १७ ॥**

***न०टी०***—'युक्तः.' इत्यादिपदमनूद्य तस्य प्रतीतिकार्थं तावदाह **सोपायेति** । आहरणमाहारो भोजनम् । तस्योपायसाहित्यं नाम किम् ? इत्याकाङ्क्षायां तस्यैव पदस्य तात्पर्यार्थमाह **यावतेति** । 'योगो भवति दुःखहा' इत्युच्यमानत्वाच्छ्रमाद्यभावस्तत्रैवोपाय इति भावः ॥

***प्र०दी०***— आहारादीनां केन युक्तत्वमित्यत आह— **युक्तेति** । उपायः समाधिः । समाधिर्हि धात्वर्थः । तद्वत्ता च प्रत्ययार्थः । अतः सोपायेत्युक्तम् । आहारादेः सोपायत्वं नाम कीदृशमित्यत आह— **यावतेति** । आदिपदेनेन्द्रियोत्सेकाऽलस्यादेः सङ्ग्रहः । उपायेन साहित्यं नाम तदविरोधित्वम् । तच्चैवम्भूतमित्यर्थः ॥

***भा०र०***— "युज = समाधौ" इति धातोर्निष्ठायां युक्तशब्दो निष्पन्न इत्यभिप्रेत्य भाष्यं घटयन् प्रकृतिप्रत्यययोरर्थमाह **समाधिर्हीति** । निष्ठाप्रत्ययस्य 'गत्यर्थाकर्मक' इत्यादिना कर्त्राद्यर्थे विधानेऽपि, फलितमभिप्रेत्योक्तम् **तद्वत्ता चेति** । **आदिपदेन** 'श्रमादि' इत्यत्रत्यादिपदेन । **एव-**

**म्भूतमिति** । श्रमोत्सेकालस्यानापादकत्वरूपमित्यर्थः । "योगो भवति दुःखहा" इति विशेषणात् 'श्रमाद्यभावः' इत्युक्तमिति **प्राचीनटीका** ॥ १७ ॥

**गीता**

## यदा विनियतं चित्तमात्मन्येवावतिष्ठते ।
## निःस्पृहः सर्वकामेभ्यो युक्त इत्युच्यते तदा ॥ १८ ॥

***वि०वि०***— योगसम्पूर्तिकालमाह **यदेति** । आत्मनि भगवति ॥

***सा०सं०***— योगसम्पूर्तिस्वरूपमाह **यदे**त्याद्यनेकश्लोकैः । **यदा** विशेषेण नियतं विषयेभ्यः प्रत्याहृतं **चित्तमात्मन्येवावतिष्ठते** । **सर्वकामेभ्यः निस्पृह**श्च यदा तदा **युक्तो** योगसम्पूर्तिमान् **इत्युच्यत** इत्यर्थः ॥

***अ०प्र०***— कदा निष्पन्नयोगः पुरुषो भवतीत्यपेक्षायामाह **यदेति** ।

विनियतं[१], चित्तं[२], आत्मन्येव[३], यदा[४], अवतिष्ठति[५], सर्वकामेभ्यः[६], निस्पृहः सन्[७], तदा[८], युक्तः[९], इत्युच्यते इत्यन्वयः ।

विनियतं = संयतं[१], चित्तं[२], आत्मन्येव[३], यदा निश्चलं[४], अवतिष्ठति[५], सर्वकामेभ्यः[६], निस्पृहः, सन्[७], तदा[८], योगयुक्तः[९], इत्युच्यते ॥ १८ ॥

**भाष्यम्**

**आत्मनि भगवति ॥ १८ ॥**

***न०टी०***—'यदा विनियतं चित्तमात्मन्येवावतिष्ठते' इत्यत्र स्वात्मन्येवेति यो वक्ति स वक्तव्यः । किं तस्य जीवत्वध्यानं मुक्तिसाधनं ? ब्रह्मत्वध्यानं वा ? नाद्यः, स्वानधीनत्वान्मुक्तेः । नेतरः, विपरीतध्यानस्यानर्थहेतुत्वात् । तदेतन्मनसि निधायाह **आत्मनीत्यादि** ॥

***प्र०दी०***— 'आत्मन्येवावतिष्ठते' इत्यत्र स्वस्मिन्नेवेति प्रतीतिनिरासायाह— **आत्मनीति** । अन्यथा 'ज्ञात्वा मां' इत्यादिविरोधः ॥

***भा०दी०***— **अन्यथेति** । जीवार्थत्वे 'ज्ञात्वा मां शान्तिमृच्छतीति पञ्चमान्तगीतोक्तविरोध इत्यर्थः ॥

*भा०र०*— **इति प्रतीतीति** । तथा च **सङ्करः** "**आत्मन्येवावतिष्ठते** केवले स्वात्मनि स्थितिं लभते" (शां.भा. ६.१८) इति । अत्र दूषणमाह **अन्यथेति** । जीवार्थकत्वे । आदिपदेन "मामेव ये प्रपद्यन्ते" (७.१४), "मामेवैष्यस्यसंशयम्" (८.७) इत्यादेः सङ्ग्रहः । **विरोधः** "स्यादिति भावः" इति शेषः । **प्राचीनटीकायां** तु "आत्मनि = स्वात्मनि" इति यो वक्ति स वक्तव्यः, किं तस्य जीवत्वध्यानं मुक्तिसाधनम्, ब्रह्मत्वध्यानं वा ? नाद्यः । स्वानधीनत्वान्मुक्तेः । नेतरः । विपरीतध्यानस्यानर्थहेतुत्वादिति भावेन स्वयमात्मशब्दार्थमाह "आत्मनि = भगवति" इति व्याख्यातम् ॥ १८ ॥

**गीता**

**यथा दीपो निवातस्थो नेङ्गते सोपमा स्मृता ।**
**योगिनो यतचित्तस्य युञ्जतो योगमात्मनः ॥ १९ ॥**

*वि०वि०*— योगी कथं तिष्ठतीत्यपेक्षायां योगिनोऽवस्थितौ दृष्टान्तमाह **यथेति** । आत्मनः भगवद्विषयं योगम् ॥

*सा०सं०*— योगसम्पन्नः कथं तिष्ठतीत्यत आह **यथेति** । वायुशून्यदेशस्थो **दीपो यथा नेङ्गते** न चलति । **सा उपमा** दृष्टान्तः कस्येत्यत उक्तम् **योगिन इति** । **आत्मनो योगं** भगवद्विषयसमाधिं **युञ्जतः** कुर्वतः **योगिनः यतचित्तस्येति** ॥

*अ०प्र०*— श्रीविष्णुः सर्वोत्तमः जीवस्तदधीनेति भक्त्याऽऽकारतयाऽवस्थितस्य चित्तस्योपमानमाह **यथेति** ।

अथान्वयः— यथा[१], निवातस्थः[२], दीपः[३], न इङ्गते[४], सा[५], उपमा[६], स्मृता[७], तथा यतचित्तस्य[८], योगिनः[९], आत्मनः[१०] योगं[११] युञ्जते इत्यन्वयः ।

यथा[१], निवातस्थः = वातशून्ये देशे स्थितः[२], दीपः[३], न इङ्गते = न विचलति[४], सा[५], उपमा = उपमीयते अनयेत्युपमा दृष्टान्त इति भावः[६], स्मृता = योगज्ञैर्निश्चितेत्यर्थः । उक्ता[७], तथा यतचित्तस्य = यतं चित्तं यस्य निष्कम्पकतया प्रकाशकतया च चित्तं तद्वत्तिष्ठतीत्यर्थः[८], योगिनः = विष्णुः सर्वोत्तमः जीवः तदधीनरूपयोगमभ्यस्यतः[९], आत्मनः = परमात्मनः[१०] योगं = पूर्वोक्ततद्विषययोगं[११] युञ्जते = कुर्वन्त इत्यर्थः ॥ १९ ॥

**म्भूतमिति** । श्रमोत्सेकालस्यानापादकत्वरूपमित्यर्थः । "योगो भवति दुःखहा" इति विशेषणात् 'श्रमाद्यभावः' इत्युक्तमिति **प्राचीनटीका** ॥ १७ ॥

**गीता**

**यदा विनियतं चित्तमात्मन्येवावतिष्ठते ।**
**निःस्पृहः सर्वकामेभ्यो युक्त इत्युच्यते तदा ॥ १८ ॥**

***वि०वि०***— योगसम्पूर्तिकालमाह **यदेति** । आत्मनि भगवति ॥

***सा०सं०***— योगसम्पूर्तिस्वरूपमाह **यदे**त्याद्यनेकश्लोकैः । **यदा** विशेषेण नियतं विषयेभ्यः प्रत्याहृतं **चित्तमात्मन्येवावतिष्ठते** । **सर्वकामेभ्यः निस्पृह**श्च यदा तदा **युक्तो** योगसम्पूर्तिमान् **इत्युच्यत** इत्यर्थः ॥

***अ०प्र०***— कदा निष्पन्नयोगः पुरुषो भवतीत्यपेक्षायामाह **यदेति** ।

विनियतं[1], चित्तं[2], आत्मन्येव[3], यदा[4], अवतिष्ठति[5], सर्वकामेभ्यः[6], निस्पृहः सन्[7], तदा[8], युक्तः[9], इत्युच्यते इत्यन्वयः ।

विनियतं = संयतं[1], चित्तं[2], आत्मन्येव[3], यदा निश्चलं[4], अवतिष्ठति[5], सर्वकामेभ्यः[6], निस्पृहः, सन्[7], तदा[8], योगयुक्तः[9], इत्युच्यते ॥ १८ ॥

**भाष्यम्**

**आत्मनि भगवति ॥ १८ ॥**

***न०टी०***—'यदा विनियतं चित्तमात्मन्येवावतिष्ठते' इत्यत्र स्वात्मन्येवेति यो वक्ति स वक्तव्यः । किं तस्य जीवत्वध्यानं मुक्तिसाधनं ? ब्रह्मत्वध्यानं वा ? नाद्यः, स्वानधीनत्वान्मुक्तेः । नेतरः, विपरीतध्यानस्यानर्थहेतुत्वात् । तदेतन्मनसि निधायाह **आत्मनीत्यादि** ॥

***प्र०दी०***— 'आत्मन्येवावतिष्ठते' इत्यत्र स्वस्मिन्नेवेति प्रतीतिनिरासायाह— **आत्मनीति** । अन्यथा 'ज्ञात्वा मां' इत्यादिविरोधः ॥

***भा०दी०***— **अन्यथेति** । जीवार्थत्वे 'ज्ञात्वा मां शान्तिमृच्छतीति पञ्चमान्तगीतोक्तविरोध इत्यर्थः ॥

*भा०र०*— **इति प्रतीतीति** । तथा च **सङ्करः** "**आत्मन्येवावतिष्ठते** केवले स्वात्मनि स्थितिं लभते" (शां.भा. ६.१८) इति । अत्र दूषणमाह **अन्यथेति** । जीवार्थकत्वे । आदिपदेन "मामेव ये प्रपद्यन्ते" (७.१४), "मामेवैष्यस्यसंशयम्" (८.७) इत्यादेः सङ्ग्रहः । **विरोधः** "स्यादिति भावः" इति शेषः । **प्राचीनटीकायां** तु "आत्मनि = स्वात्मनि" इति यो वक्ति स वक्तव्यः, किं तस्य जीवत्वध्यानं मुक्तिसाधनम्, ब्रह्मत्वध्यानं वा ? नाद्यः । स्वानधीनत्वान्मुक्तेः । नेतरः । विपरीतध्यानस्यानर्थहेतुत्वादिति भावेन स्वयमात्मशब्दार्थमाह "आत्मनि = भगवति" इति व्याख्यातम् ॥ १८ ॥

**गीता**

## यथा दीपो निवातस्थो नेङ्गते सोपमा स्मृता ।
## योगिनो यतचित्तस्य युञ्जतो योगमात्मनः ॥ १९ ॥

*वि०वि०*— योगी कथं तिष्ठतीत्यपेक्षायां योगिनोऽवस्थितौ दृष्टान्तमाह **यथेति** । आत्मनः भगवद्विषयं योगम् ॥

*सा०सं०*— योगसम्पन्नः कथं तिष्ठतीत्यत आह **यथेति** । वायुशून्यदेशस्थो **दीपो यथा नेङ्गते** न चलति । **सा उपमा** दृष्टान्तः कस्येत्यत उक्तम् **योगिन इति** । **आत्मनो योगं** भगवद्विषयसमाधिं **युञ्जतः** कुर्वतः **योगिनः यतचित्तस्येति** ॥

*अ०प्र०*— श्रीविष्णुः सर्वोत्तमः जीवस्तदधीनेति भक्त्याऽऽकारतयाऽवस्थितस्य चित्तस्योपमानमाह **यथेति** ।

अथान्वयः— यथा[१], निवातस्थः[२], दीपः[३], न इङ्गते[४], सा[५], उपमा[६], स्मृता[७], तथा यतचित्तस्य[८], योगिनः[९], आत्मनः[१०] योगं[११] युञ्जते इत्यन्वयः ।

यथा[१], निवातस्थः = वातशून्ये देशे स्थितः[२], दीपः[३], न इङ्गते = न विचलति[४], सा[५], उपमा = उपमीयते अनयेत्युपमा दृष्टान्त इति भावः[६], स्मृता = योगज्ञैर्निश्चितेत्यर्थः । उक्ता[७], तथा यतचित्तस्य = यतं चित्तं यस्य निष्कम्पकतया प्रकाशकतया च चित्तं तद्वत्तिष्ठतीत्यर्थः[८], योगिनः = विष्णुः सर्वोत्तमः जीवः तदधीनरूपयोगमभ्यस्यतः[९], आत्मनः = परमात्मनः[१०] योगं = पूर्वोक्ततद्विषययोगं[११] युञ्जते = कुर्वन्त इत्यर्थः ॥ १९ ॥

**भाष्यम्**

**आत्मनः भगवद्विषयं योगम् ॥ १९ ॥**

*प०टी०*— 'युञ्जतो योगमात्मनः' इत्येतद्व्याचष्टे **आत्मन इति** ॥

*न०टी०*—'युञ्जतो योगमात्मनः' इत्यत्रात्मा भगवान् । तस्य योगसम्बन्धश्च विषयविषयिभाव इत्याह **आत्मन इति** । आत्मा जीवश्चेत्, स किं योगस्य विषयः ? आश्रयो वा ? आद्ये पूर्वोक्तदोषः । द्वितीये, आत्मशब्दो व्यर्थ इति भावः ॥

*प्र०दी०*— 'युञ्जतो योगमात्मनः' इत्यत्र आत्मशब्दस्य षष्ठ्याश्च विवक्षितमर्थमाह— **आत्मन इति** । योगिन आत्मन इत्यन्वयनिरासाय योगमित्युक्तम् । अन्यथा वैयर्थ्यात् ॥

*भा०र०*— **विवक्षितम्** आत्मप्रातिपदिकस्य भगवानर्थः, विभक्तेश्च विषयविषयिभावः सम्बन्धोऽर्थ इति विवक्षितम् अर्थम् । **इत्यन्वयेति** । तथा च **सङ्करः** "**योगिनः** आत्मनः समाधिमनुतिष्ठतः स्वात्मनः" इति । अत्र दूषणमाह **अन्यथेति** । "योगिन आत्मनः" इत्यन्वयाभ्युपगमे आत्मशब्दवैयर्थ्यम्, योगिन आत्मत्वाव्यभिचारादित्यर्थः । **प्राचीनटीकायाम्** "आत्मशब्दार्थो जीवश्चेत् स किं योगस्य विषय आश्रयो वा । आद्ये तस्य मुक्त्यर्थत्वेन स्वानधीनत्वान्मुक्तेरित्युक्तदोषः । द्वितीये आत्मशब्दो व्यर्थ इति भाव इति" इदं भाष्यं व्याख्यातम् ॥ १९ ॥

**गीतातात्पर्यनिर्णयः**

**"यस्य यत्र यथा वृत्तिर्विहिता वर्तनं तथा ।**
**ज्ञानं वाऽपि समत्वं तद्विषमत्वमतोऽन्यथा ॥"**

**—इति महाविष्णुपुराणे ।**

**"अनिमित्तस्नेहवांस्तु सुहृज्ज्ञात्वोपकारकृत् ।**
**मित्रं वधादिकृदरिर्द्वेष्यस्त्वप्रियमात्रकृत् ।**
**उदासीनः स्नेहवतोऽप्यस्नेही तत्कृतानुकृत् ।**
**मध्यस्थ इति विज्ञेयः सुहृदेषु विशिष्यते ॥"**

**—इति नारदीये ॥ ९-१९ ॥**

*प्रका०*— सुहृदित्येतं श्लोकं व्याचष्टे **यस्येत्यादिना** ॥

*न्या०दी०*— ननु सुहृदादीनां विषमत्वात् कथं तेषु ज्ञानिनः समबुद्धित्वमुच्यत इत्याशङ्कां स्मृत्यैव परिहरति **यस्येति** ॥ सुहृन्मित्रपदयोः अरिद्वेष्यपदयोः उदासीनमध्यस्थपदयोश्च एकार्थत्व-प्रतीतिनिरासाय स्मृत्यैव तदर्थमाह **अनिमित्तेति** ॥ **ज्ञात्वोपकारकृदिति** । स्वयमेव तस्य क्लेशस्थानं निरूप्योपकारकर्तेत्यर्थः ॥

**गीता**

## यत्रोपरमते चित्तं निरुद्धं योगसेवया ।
## यत्र चैवात्मनाऽऽत्मानं पश्यन्नात्मनि तुष्यति ॥ २० ॥

*वि०वि०*— विस्तरेण योगलक्षणमाह **यत्रेति** । यत्र योगे निरुद्धं मनः उपरमतेऽन्यत्र निवृत्तव्यापारं भवति । विष्णौ रमत इति वा । 'हृदिस्थविष्णौ सन्तोषः सदैवोपरमः स्मृतः' इति वचनात् । यत्र चात्मना मनसा । यद्वा, परमात्मना । तत्प्रसादादेव । आत्मनि देहे । आत्मानं भगवन्तं पश्यन् तुष्यति सुखं प्राप्नोति ॥

*सा०सं०*— **योगसेवया निरुद्धं चित्तं यत्र** समाधावु**परमते** बाह्यव्यापारहीनं भवति । **यत्र चैव** यस्मिन्नेव समाधियोगे । **आत्मना** मनसा । **आत्मानं** भगवन्तम् । **पश्यन्नात्मनाऽऽत्मनि** देहे । **तुष्यति** तोषमाप्नोतीत्यर्थः । यच्छब्दयोः **'तम्'** इत्यग्रेऽन्वयः । एवमुत्तरत्रापि ॥

*अ०प्र०*— 'यं संन्यासमिति प्राहुर्योगं तं विद्धि पाण्डवे'त्यादौ कर्मैव योगशब्देनोक्तम्, 'नात्यश्नतस्तु योगोऽस्ती'त्यादौ तु समाधिर्योगशब्देनोक्ता । तत्र मुख्यो योगः क इत्यपेक्षायां समाधिरेव स्वरूपतः फलतश्च क्षपन् स एव मुख्यो योग इत्याह सार्धैस्त्रिभिः । तत्रादौ **यत्रेति** ।

यत्र[१], योगसेवया[२], निरुद्धं[३], चित्तं[४], उपरमते[५], यत्र चैव[६], आत्मना[७], आत्मनि[८], आत्मानं[९], पश्यन् सन्[१०] तुष्यतीत्यन्वयः ॥

यत्र = यत्रावस्थायां[१], योगसेवया = योगाभ्यासेन[२], निरुद्धं सत्, चित्तं = मनः[४], उपरमते = निवृत्तबाह्यव्यापारं भवति। उपेधिके विष्णौ रमत इति वा । तदुक्तम्— हृदिस्थविष्णौ सन्तोषः सदैवोपरमः स्मृतः[५], यत्र चैव च = तदैव च यत्र अवस्थाविशेषे[६], आत्मना = मनसा परमात्मना वा तत्प्रसादेनेति यावत्[७], आत्मनि = देहे[८], आत्मानं = भगवन्तं[९], पश्यन्[१०] तुष्यति[११] ॥ २० ॥

**भाष्यम्**

**आत्मना मनसा । आत्मनि देहे । आत्मानं भगवन्तं पश्यन् ॥ २० ॥**

***प०टी०***— 'यत्र चैवात्मना' इत्यात्मशब्दत्रयार्थमाह **आत्मनेति** ॥

***न०टी०***—'यत्र चैवात्मना' इत्यर्धगतात्मशब्दत्रितयार्थानाह **आत्मनेत्यादिना** । न चात्र 'आत्मानम्' इत्यत्र जीवपरमात्मैक्यं प्रतीयते, नापि युज्यते पूर्वोक्तदोषात् । अत्र केनचिद्भगवतश्चतुर्भुजाद्याकारध्याने 'समं काय..' इत्यादिप्रकरणविरोध इत्युक्तम् । तदसत् । समं कायशिरोग्रीवं धारयताऽपि साकारध्यानाविरोधात् । सकलैश्वर्ययुक्तब्रह्मस्वरूपाकारस्य द्वितीयाध्याये समर्थितत्वान्न कश्चिद्दोषः ॥

***प्र०दी०***— 'यत्र चैवात्मना' इत्यत्र पदत्रयं व्याख्याति— **आत्मनेति** । अन्वयापेक्षया व्युत्क्रमः । पश्यन्निति स्थानविवेकार्थमुक्तम् ॥

***भा०दी०***— **व्युत्क्रमः** गीताक्रमव्यत्यासो भाष्यक्रम इत्यर्थः । पश्यन्निति पदार्थे विगानाभावेन व्याख्यानाकरेण भाष्ये तदनुवादो व्यर्थ इत्यत आह **स्थानेति** । पश्यन्नित्यत्र कर्मतया श्रुतात्मपदस्य भगवन्तमिति व्याख्येति ज्ञापनार्थमित्यर्थः ॥

***भा०र०***— **पदत्रयम्** 'आत्मना', 'आत्मानम्', 'आत्मनि' इति पदत्रयम् । ननु 'आत्मानम्' इति द्वितीयान्तं व्याख्याय 'आत्मनि' इति सप्तम्यन्तं व्याख्येयम्, गीताऽनुसारात् । तत्किमिति व्युत्क्रमेण व्याख्यातम् ? इत्यत आह **अन्वयापेक्षयेति** । 'आत्मन्यात्मानम्' इत्यन्वयप्रदर्शनार्थमित्यर्थः । ननु 'पश्यन्' इति पदस्य विगानाभावाद् अव्याख्येयस्याप्यनुवादः किमर्थम् ? इत्यत आह **स्थानेति** । "यत्र चैवात्मना" इति तृतीयान्तपदव्याख्यानानन्तरं द्वितीयान्तसप्तम्यन्तयोर्व्युत्क्रमेण व्याख्यानप्रस्तावाद् "आत्मन्येव वशं नयेत्" (६.२६), "युञ्जन्नेवं सदाऽऽत्मानम्" (६.२८) इत्युत्तरवाक्यगतात्मशब्दयोर्व्याख्यानमेतदिति प्रतीतिः स्यात् । तद्व्यावर्तनेन प्रदेशविशेषज्ञापनार्थमित्यर्थः ॥ २० ॥

**गीता**

**सुखमात्यन्तिकं यत्तद्बुद्धिग्राह्यमतीन्द्रियम् ।**
**वेत्ति यत्र न चैवायं स्थितश्चलति तत्त्वतः ॥ २१ ॥**

*वि०वि०*— बुद्धिग्राह्यं स्वानुभवेन वेद्यम्, अतीन्द्रियं इन्द्रियैरग्राह्यम् । आत्यन्तिकं सुखं वेत्ति यत्र स्थितस्तत्त्वतः । अबाधिताद्भगवद्रूपान्न चलति ॥

*वा०ल०*— 'सुखमात्यन्तिकम्' इत्यत्र आत्यन्तिकं सुखं निरवधिकसुखरूपं यत् ब्रह्म तत् वेत्ति ॥

*सा०सं०*— **यत्र** समाधौ **स्थितः बुद्धिग्राह्यम्** अनुभवेन वेद्यम् । **अतीन्द्रियम्** इन्द्रियाग्राह्यम् । **आत्यन्तिकम्** अतिशयितम् । सुखं **वेत्ति** अनुभवति । **यत्र** योगे **स्थितः** अयं **तत्त्वतो** भगवद्रूपात् **न चलति** तम् इत्यन्वयः ॥

*अ०प्र०*— आत्मन्येव तोषे हेतुमाह **सुखमिति** ।

बुद्धिग्राह्यं[१], अन्तीद्रियं[२], आत्यन्तिकं[३], यत्[४], सुखं[५], तत् सुखं[६], अयं वेत्ति[७], यत्र[८], स्थितः सन्[९], तत्त्वतः[१०] न चैव[११] चलतीत्यन्वयः ॥

बुद्धिग्राह्यं = अहं जीवः किञ्चिज्ज्ञः मम स्वामी श्रीस्वामी सर्वान्तर्यामी सर्वकर्ता अस्तीति निश्चयात्मिकया बुद्ध्या ग्राह्यं[१], अतीन्द्रियं = विषयेन्द्रियसम्बन्धातीतं तज्जन्यं च बाह्येन्द्रियग्राह्यं[२], आत्यन्तिकं = दुःखामिश्रं नित्यसुखं अपारमित्यर्थः । तत्तु तदा विषयेन्द्रियसम्बन्धाभावात्, यत्[४], सुखं[५], तत्सुखं अयं वेत्ति = अनुभवति[७], यत्र यस्मिन् अवस्थाविशेषे[८], स्थितः सन्[९], तत्त्वतः परमात्मतत्त्वाख्य अबाधितभगवद्रूपात्[१०] न चैव[११] चलति ॥ २१ ॥

**गीता**

## यं लब्ध्वा चापरं लाभं मन्यते नाधिकं ततः ।
## यस्मिन्स्थितो न दुःखेन गुरुणाऽपि विचाल्यते ॥ २२ ॥

*वि०वि०*— यं लब्ध्वा ततोऽधिकमपरं लाभं न मन्यते । यस्मिन् स्थितो गुरुणाऽपि दुःखेन न विचाल्यते ॥

*सा०सं०*— **यं** योगं **लब्ध्वा च** ततो**ऽपरं लाभमधिकं न मन्यते** । **यस्मिन् स्थितो गुरुणाऽपि दुःखेन** दुःखहेतुना **न विचाल्यते** ॥

*अ०प्र०*— अचलनमेवोपपादयति **यमिति** ।

यं[१], लब्ध्वा[२], ततः[३] अधिकं[४], अपरं[५], लाभं[६], न मन्यते[७], यस्मिन्[८], स्थितः सन्[९], गुरुणाऽपि[१०] दुःखेन[११] न विचाल्यते इत्यन्वयः ।

यं = अबाधितभगवद्रूपदर्शनसुखं[१], लब्ध्वा = प्राप्य[२], ततोऽधिकं अपरं लाभं न मन्यते[७], यस्मिन् स्थितः सन् = तस्यैव निरतिशयसुखत्वात्, यस्मिन् सुखलाभे स्थितः सन्[९], गुरुणाऽपि = पाषाणादिना महतापि[१०] दुःखेन = शीतोष्णादिदुःखसाधनेन[११] न विचाल्यते = न चाञ्चल्य-माप्नोति[१२], नाभिभूयते एतेनानिष्टनिवृत्तिफलेनापि योगस्य लक्षणमुक्तं द्रष्टव्यम् ॥ २२ ॥

**भाष्यम्**

**तत्त्वतः भगवद्रूपात् ॥ २१ ॥ २२ ॥**

***प०टी०***— 'तत्त्वतः' इति यथार्थत इत्याशङ्कां निराकर्तुं व्याचष्टे **तत्त्वत इति** ॥

***न०टी०***—'स्वस्य तद्रूपत्वान्न चलति' इत्युक्तेऽध्याहारस्य दोषः । सर्वप्रमाणविरोधश्च । अतो यत्र समाधौ स्थितो विषयभूतभगवद्रूपान्न चलतीत्येवार्थ इत्याह **तत्त्वत इति** । 'अतीतानागते काले यत्तादृशमुदीर्यते । कथञ्चिदन्यथा नेयात् तत् तत्त्वं तत्त्वतो विदुः' इति वचनात् तत्त्वं हि भगवद्रूपम् ॥

***प्र०दी०***— तत्वतः तद्भावात् ब्रह्मत्वादिति प्रमाणविरुद्धं व्याख्यानं व्यावर्तयितुमाह— **तत्त्वत इति** ॥

***भा०दी०***— तत्त्वत इत्यनूद्य भावप्रधानस्तच्छब्दोऽयमिति भावेन तस्य प्रतिपाद्यमाह **तद्भावादिति** । तस्यार्थमाह **ब्रह्मत्वादिति** ॥

***भा०र०***— तस्य भावः तत्त्वम्, तस्मात् तद्भावात् । तच्छब्दश्च "ॐ तत्सदिति निर्देशो ब्रह्मणः" इति शास्त्राद् ब्रह्मार्थ इति परभावं हृदि कृत्वाऽऽह **तत्त्वत इति** । **व्याख्यानमिति** । तथा च **सङ्करः** "आत्मस्वरूपे स्थितः, तत्त्वतः = तत्त्वस्वरूपाद् ब्रह्मात्वात् न प्रच्यवते" (शां.भा. ६.२१) इति । "प्रमाणविरुद्धम् इति हेत्वर्थगर्भं विशेषणम् । सर्वश्रुतिस्मृतीतिहासपुराणविरुद्ध-त्वादित्यर्थः । तत्त्वशब्दस्येश्वरार्थकत्वं "तत्त्वं चिदचिदीशेषु स्वरूपे निश्चयार्थयोः" इति प्रसिद्धा-भिधानसिद्धमिति 'भगवद्रूपात्' इत्युक्तमिति भावः । तथा च **प्राचीनटीका**—

"अतीतेऽनागते काले यत्तादृशमुदीर्यते ।
कथञ्चिदन्यथा नेयात् तत्तत्त्वं तत्त्वतो विदुः ॥" (म.सं)

इति वचनात् तत्त्वं हि भगवद्रूपमिति ॥ २१-२२ ॥

**गीता**

# तं विद्याद् दुःखसंयोगवियोगं योगसंज्ञितम् ।
# स निश्चयेन योक्तव्यो योगोऽनिर्विण्णचेतसा ॥ २३ ॥

*वि०वि०*— तं योगसंज्ञितं विद्यात् । दुःखसंयोगो येन वियुज्यते स दुःखसंयोगवियोगः तम् । संयोगशब्देन न केवलमुत्पन्नं दुःखं नाशयति, किन्तु उत्पत्तिमेव निवारयतीति दर्शयति । योगानुष्ठाने गुणान्तरविधानार्थमाह **स इति** । निश्चयेन योक्तव्य एव बुभूषुणा इत्यर्थः ॥

*वा०ल०*— 'तं विद्यात्' इत्यत्र दुःखसंयोगस्य वियोगो यस्मिन् स दुःखसंयोगवियोगः, तम् ॥

*सा०सं०*— **तं दुःखसंयोगवियोगं** दुःखसंयोगेन वियुज्यमानम् । दुःखसंयोगस्य वियोगो यस्मादिति वा । वियुज्यतेऽनेनेति वियोगः । करणे घञ् । दुःखसंयोगो यस्य वियोग इति वा । **योगसञ्ज्ञितं विद्यात्** । संयोगपदेन न केवलमुत्पन्नदुःखं नाशयति, किन्तूत्पत्तिमेव निवारयतीति सूचयति । **स योगः** समाधिः **निर्विण्णचेतसा** विषयविरक्तमनसा **निश्चयेन योक्तव्यो**ऽवश्यं कर्तव्य एव मुमुक्षुणेत्यर्थः । मुमुक्षोर्ध्यानायोगव्यवच्छेदार्थोऽयं निश्चयशब्दः । अयोगव्यवच्छेद-विधानार्थमेव 'उद्धरेत्' इत्यत्र विहितस्यात्र पुनर्विधानम् ॥

*अ०प्र०*— य एवम्भूतोऽवस्थाविशेषस्तमाह **तमित्यर्धेन** । योगानुष्ठाने गुणान्तरविधानार्थं आह **सेत्यर्धेन** ।

दुःखसंयोगवियोगं[१], योगसंज्ञिकं[२], तं[३], विद्यात्[४], दुःखसंयोगेन वियुज्यते स दुःखसंयोग-वियोगः, तं तथा । न केवलमुत्पन्नदुःखं नाशयति किन्तु, तदुत्पत्तिमेव निवारयति[१], (इति) संयोग-शब्देन दर्शयति । यद्वा, दुःखशब्देन दुःखमिश्रत्वात् वैषयिकसुखमपि गृह्यते । दुःखस्य संयोगेन सम्पूर्णमात्रेणापि वियोगो यस्मिन् तं अवस्थाविशेषयोगसंज्ञितं योगशब्दवाच्यं जानीयात् । परमात्मनः क्षेत्रज्ञस्य संयोजनं योगः । यद्वा, दुःखसंयोगेन वियोग एव शूरेति कातरे शब्दवत् विरुद्धलक्षणया योग उच्यते । कर्मणि तु योगशब्दस्तदुपायत्वादौपचारिक एवेति भावः । यस्मादेवं महाफलो योगः तस्मात्स एव यत्नतोऽभ्यसनीय इत्याह **सेति** सार्धेन ।

सः = योगः,[६], अनिर्विण्णचेतसा[७], निश्चयेन[८], योक्तव्यः[९], ॥

सः = योगः[६], अनिर्विण्णेन चेतसा = अनिर्विण्णेन निर्वेदरहितेन चेतसा दुःखबुद्ध्या प्रयत्न-शैथिल्यं निर्वेदः । यद्वा, अनिर्विण्णचेतसा = सवैराग्यमनसा, सम्यक् मोक्षकामेन स पूर्वोक्तो

योगो[७], निश्चयेन = नियमेन[८], योक्तव्यः = कर्तव्य एव। नात्याज्यशास्त्राचार्योपदेशजनितेन अभ्यसनीय इत्यर्थः। अर्थान्तरं; तत् दुःखस्य संयोगः यः तस्य वियोगं निवारणं सुखमित्यर्थः। योगसंज्ञितं = योगेन संज्ञातं यत्स्वरूपं तत् तथा निर्विण्णचेतसा अनुद्वेगेन मनसा योक्तव्यः = योजितव्यः ॥ २३ ॥

**भाष्यम्**

**दुःखसंयोगो येन वियुज्यते स दुःखसंयोगवियोगः। न केवलमुत्पन्नं दुःखं नाशयति। उत्पत्तिमेव निवारयतीति दर्शयति संयोगशब्देन। निश्चयेन योक्तव्यः योक्तव्य एव। बुभूषुणेत्यर्थः ॥ २३ ॥**

***प०टी०***— 'अभ्यासे दुःखसंयोगः पश्चाद्वियोगः' इति प्रतीतिनिरासाय 'दुःखसंयोगवियोग'पदं व्याचष्टे **दुःखेति**। दुःखनिवारकत्वमात्राभिप्राये 'संयोग'शब्दो व्यर्थ इत्यत आह **न केवलमिति**। न ज्ञानपूर्वकं योक्तव्यमिति शङ्कानिरासाय 'स निश्चयेन' इत्येतद्व्याचष्टे **निश्चयेनेति** ॥

***न०टी०***—ननु दुःखसंयोगः तद्वियोगश्चात्मनः परमार्थतो न सम्भवतः। अतोऽत्र विपरीत-लक्षणाश्रयणेन दुःखसंयोगवियोगमात्मानं योगसञ्ज्ञितं विद्यादिति कश्चित्। तन्न। जीवस्य दुःख-संयोगो येन भगवता तद्विषयेण वा योगेन वियुज्यते सः दुःखसंयोगवियोग इति जीवपरमात्मनो-र्भेदेनैव मुख्यार्थे सम्भवति विपरीतलक्षणाश्रयणायोगादिति भावेनैतत्पदं व्याचष्टे **दुःखेति**। ननु दुःखसंयोगः तद्वियोगश्चात्मनो न स्त इति विपरीतलक्षणाश्रयणमेव सूचयति संयोगशब्दः। अन्यथा दुःखवियोगमित्येतावताऽलम्, किं संयोगेन? इत्यत आह **न केवलमिति**। युक्तदुःखसंयोगेन वियुज्यते इत्येतावदेव न, किंतु तदुपरिष्ठात् दुःखं न संयुज्यत इत्यर्थः। यतोऽयमात्यन्तिकं सुखमापादयति दुःखं चोत्पत्स्यमानमपि निवारयति, अतो दुःखासंस्पृष्टात्यन्तिकसुखरूपात्माऽत्र। स चेच्छुनाऽनुष्ठेय एव योग इति प्रकृतात्युपयोगित्वेन 'निश्चय'पदार्थमाह **निश्चयेनेति** ॥

***प्र०दी०***— ननु दुःखसम्बन्धस्य वियोगो ध्वंसः। स कथं योगः स्यादित्यत आह— **दुःखेति**। करणेऽपि घञः स्मरणात्। एवं तर्हि दुःखवियोगमित्येव वक्तव्यम्। किं संयोगशब्देने-त्यत आह— **न केवलमिति**। वियोगशब्दो निवारणे वर्तत इति भावः। एतच्च पदाधिक्यादेव लभ्यते। नान्यथा। ननु 'स निश्चयेन योक्तव्यः' इति पुनर्विधानं किमर्थम्। निश्चयेनेत्यादिविशेष-विधानार्थमिति चेन्न। महाफले सन्देहात् प्रवृत्त्यभावेन 'निश्चयेन' इत्यस्य वैयर्थ्यादित्यत आह—

**निश्चयेनेति** । अयोगव्यवच्छेदे निश्चयशब्द इत्यर्थः । कुत्रायोगो व्यवच्छिद्यत इत्यत उक्तं— **बुभूषुणेति** । मुमुक्षुणेत्यर्थः ॥

***भा०दी०*— करणे घञ्स्मरणादिति** : 'अकर्तरि च कारके संज्ञायाम्' (३-३-१९) इत्यनेनेति भावः । कथमेतल्लाभो शब्दार्थत्वादित्यत आह **एतच्चेति** । संयोगपदप्रयोगान्यथा-नुपपत्त्येत्यर्थः । **पुनर्विधानमिति** । उद्धरेदित्यनेन विधानात् पुनःशब्दः अयोगव्यवच्छेदेति । असम्बन्धव्यवछेदोऽयोगशब्दितः समाधिरूपोपायस्येत्यर्थः ॥

***भा०र०*—** 'येन' इति श्रवणादाह **करण इति** । "अकर्तरि च कारके संज्ञायाम्" इति कर्तृ-भिन्नकारकमात्रेऽपि घञ्प्रत्ययविधानात् 'येन' इति युज्यत इति भावः । **निवारणे वर्तते** निवारके वर्तत इति यावत् । निवारयतीति करणे कर्त्रर्थकाख्यातप्रयोगस्येदं भावकथनम् । कथमेत-ल्लभ्यते ? इत्यत आह **एतच्चेति** । उत्पत्तिमेव निवारयतीत्येतत् । **पदाधिक्यात्** संयोगपदा-धिक्यात् । "शब्दाधिक्याद् अर्थाधिक्यम् इति न्यायादिति भावः" इति **सुधीन्द्रश्रीमच्चरणाः** । **निश्चयेनेत्यस्येति** । महाफलरूपे मोक्षतत्साधनादौ प्रवर्तमानः प्रेक्षावान् निश्चयेनैव प्रवर्तते, न तु कृष्यादाविव सन्देहेनेति, 'निश्चयेन' इत्यस्य वैयर्थ्यमेवेति भावः । कृतचोद्यनिरासायाह **अयोगेति** । योगस्यासम्बन्धव्यवच्छेद इत्यर्थः । ननु बुभूषुशब्देन ऐहिकपुरुषार्थकामः प्रतीयते, तत्र च प्रकृतानानुगुण्यम् इत्यत आह **मुमुक्षुणेति** । मोक्षीभवितुमिच्छुरपि बुभूषुरेवेति नासङ्गतिरिति भावः ॥ २३ ॥

**गीता**

**सङ्कल्पप्रभवान्कामांस्त्यक्त्वा सर्वानशेषतः ।**
**मनसैवेन्द्रियग्रामं विनियम्य समन्ततः ॥ २४ ॥**

***वि०वि०*—** सर्वान्सर्वविषयानशेषतः । एकविषयोऽपि कामः सङ्कल्पः कदाचित् क्वापि न कर्तव्य इत्यर्थः । मनसैव नियन्तुं शक्यते नान्येन इति एवशब्दार्थः ॥

***सा०सं०*—** किञ्च सङ्कल्पेन एतदर्थमिदं कुर्यादितं सङ्कल्पपूर्वकानुष्ठानेन प्रभवो जन्म येषां तान् । **कामान्** विषयभोगान् । **सर्वान् अशेषतो** निःशेषतः । **त्यक्त्वा** । **इन्द्रियग्रामम्** इन्द्रियसमूहम् । **समन्ततः** सर्वतः । **मनसैव विनियम्य** । इन्द्रियनियमनं न मनसोऽन्येनेति ज्ञापनायैवकारः ॥

*अ०प्र०*— यस्मादेवं महाफलो योगः तस्मात् स एव यत्नतोऽभ्यसनीय इत्याह **सङ्कल्प-प्रभवानिति** ।

सङ्कल्पप्रभवान्[१], सर्वान्[२], कामान्[३], अशेषतः[४], त्यक्त्वा[५], समन्ततः[६], मनसा एव[७], इन्द्रिय-ग्रामं[८], विनियम्य[९], योगो योक्तव्य इति पूर्वेणान्वयः ।

सङ्कल्पप्रभवान् = सङ्कल्पात् प्रभवो येषां तान् सङ्कल्पजन्यान्[१], योगप्रतिकूलान् विषयानुसारि सर्वान् कामान्[३], अशेषतः = निःशेषतः[४], त्यक्त्वा = सन्त्यज्य, एकविषयोऽपि कामः, स्वल्पोऽपि, कादाचित्कोऽपि न कर्तव्य इत्यर्थः[५], समन्ततः = सर्वविषयेभ्यः[६], मनसा एव[७], इन्द्रियग्रामं = विषयदोषदर्शिनः सर्वतः प्रसरन्तं इन्द्रियसमूहं समुदायं[८], विनियम्य = विशेषणनियमनं कृत्वा इति शब्दार्थः ।

तात्पर्यं तु— अत्र योगसिद्धौ सङ्कल्पत्याग एव मुख्यः । यद्यपि वक्ष्यमाणक्रमेण विना कामस्त्यक्तोऽपि सङ्कल्पस्थितश्चेत्पुनः कामोद्भवाय हेतुः स्यात् । तस्मात्सङ्कल्पत्याग एव मुख्यः । स तु कामनाशाद्विना न गच्छति । सोऽपि कामो विषयत्यागेनेन्द्रियनियमं विना न नश्यति । तेऽपि विषयाः वैराग्यं विना त्यक्ता न भवन्ति । तस्मात् वैराग्यसंयुक्तेन मनसा विषयान् परित्यज्य इन्द्रियग्रामं नियमितं चेत् कामो विनश्यति । तथाच गीतायाम्—

तस्मात्त्वमिन्द्रियाण्यादौ नियम्य भरतर्षभ ।
पाप्मानं प्रजहि ह्येनं ज्ञानविज्ञाननाशनम् ॥

एनं कामं अतः कामनाशे सङ्कल्पो प्रणष्टो भवति । तदा सात्त्विकधैर्यबुद्धिर्निवसति । इत्युत्तरेणान्वयः । 'मनसैव नियन्तुं शक्यते नान्येने'त्येवशब्दः । योगो योक्तव्य इति पूर्वेणान्वयः ॥२४॥

**भाष्यम्**

**सर्वान् सर्वविषयान् । अशेषतः एकैकविषयोऽपि कामः स्वल्पः कादाचित्कोऽपि न कर्तव्य इत्यर्थः । मनसैव नियन्तुं शक्यते नान्येनेत्येवशब्दः ॥२४॥**

*प०टी०*— 'सर्व'शब्दागतार्थतया 'अशेष'पदार्थमाह **सर्वानिति** । मनोव्यतिरिक्तेनापीन्द्रियनियमने दोषाभावात् किमर्थं 'मनसैव' इत्यत्र धारणम् ? इत्यत आह **मनसेति** ॥

*न०टी०*— 'सर्व-अशेष'शब्दयोरर्थभेदमाह **सर्वानित्यादिना** । नन्वन्येनापीन्द्रियग्रामनियमने को दोषः, येन 'मनसैव' इत्यवधार्यते ? इत्याशङ्क्यान्येन नियन्तुमशक्यत्वादेवावधार्यते नान्यदोषेणेत्याह **मनसेति** ॥

*प्र०दी०*— 'सर्वान्', 'अशेषतः' इत्येतयोस्तात्पर्यमाह— **सर्वानिति** । कामः स्वल्पः कादाचित्कोऽपीति मूलपाठः । नन्विन्द्रियग्रामनियमनमेवावश्यकम् । न तु करणनियमः । कथमुच्यते 'मनसैवेन्द्रियग्रामं' इति । तत्राह— **मनसैवेति** । स्वरूपकथनमेतदिति भावः । इति ज्ञापयितुमिति शेषः ॥

*भा०दी०*— **इति मूलपाठ इति** । कामः सङ्कल्प इत्यद्यतनकोशगतपाठो लेख इत्युक्तं भवति ॥

*भा०र०*— **इति मूलपाठ इति** । क्वचित्कोशेषु "कामः सङ्कल्पः कादाचित्कः" इति परिदृश्यमानः पाठः कृत्रिम इत्यर्थः । **इन्द्रियग्रामेति** । श्रोत्रादीन्द्रियसमुदायेत्यर्थः । **करणनियमः** "मनसैव, न त्वन्येन करणेन" इति नियमनकरणनियम इति **सुधीन्द्रतीर्थश्रीमच्चरणाः** । 'इति' इति भाष्यपदमनूद्यातःपरं शेषमाह **इतीति** । **एतत्** मनसैवेत्यवधारणम् ॥ २४ ॥

**गीता**

## शनैः शनैरुपरमेद्बुद्ध्या धृतिगृहीतया ।
## आत्मसंस्थं मनः कृत्वा न किञ्चिदपि चिन्तयेत् ॥ २५ ॥

*वि०वि०*— बुद्ध्या उपरमेत् विषयेभ्यो निवर्तयेत् । आत्मनि रमेत इति वा ॥

*सा०सं०*— **मनश्च धृतिगृहीतया** धैर्योपेतया धारणया गृहीतया, वशीकृतयेति वा । **बुद्ध्या शनैः शनैरुपरमेत्** विषयेभ्यो व्यावर्तयेत् । भगवति रमेतेति वाऽर्थः । किञ्च **आत्मसंस्थं** भगवन्निष्ठं **मनः कृत्वा** । बुद्ध्वेत्यनुषङ्गः । भगवतोऽन्यन्न **किञ्चिदपि** चिन्तयेत् ॥

*अ०प्र०*— प्रोक्तेन कर्मसंस्कारेण मनो विचलेत् तर्हि धारणया स्थिरीकुर्यादित्याह **शनैरिति** ।

धृतिगृहीतया[१], बुद्ध्या[२], शनैः शनैः[३], उपरमेत्[४], एवं आत्मसंस्थं[५], मनः[६], कृत्वा[७], ततो किञ्चिदपि[८], नैव[९], चिन्तयेत्[१०] ॥

धृतिगृहीतया = धृतिर्धारणा धैर्यं वा, तद्वशीकृतया । यद्वा, सात्त्विकधैर्येण युक्तया[१], बुद्ध्या[२], शनैः शनैः = अभ्यासक्रमेण[३], मन उपरमेत् = विषयेभ्यो निवृत्य हरौ स्थापयेत्[४], एवं, आत्मसंस्थं = आत्मन्येव सम्यक् स्थितं निश्चलं[५], मनः कृत्वा[७], ततो किञ्चिदपि[८], नैव[९], चिन्तयेत्[१०] इत्यर्थः ॥ २५ ॥

**भाष्यम्**

**बुद्धेः कारणत्वं मनोनिग्रहे । आत्मरमणे च ॥ २५ ॥**

*प०टी०*— बुद्धयेन्द्रियग्रामनियमनं कुतो न ? इत्यत आह **बुद्धेरिति** । अनेन 'शनैः शनैरुपरमेत्' इति व्याख्यातं भवति । 'उपरमेत्' विषयेभ्यः, परमात्मन उप समीपे रमेत् इति च ॥

*न०टी०*—ननु बुद्धेरपीन्द्रियग्रामनियमनसम्भवात् कथं 'मनसैव' इत्यवधार्यते ? इत्यत आह **बुद्धेरिति** । 'आत्मसंस्थम्' इत्यादिना मनोनिग्रह उच्यते । 'शनैः' इत्यादिनाऽऽत्मरमणं च । 'उप' समीप आत्मनो रमेतेति ॥

*प्र०दी०*— "शनैः शनैरुपरमेद्बुद्धया" इति बुद्धेरपीन्द्रियग्रामनियमने कारणत्वस्य वक्ष्यमाणत्वात् कथमेतदित्यत आह— **बुद्धेरिति** । अनेनोपरमेदित्यस्यार्थद्वयमुक्तं भवति ॥

*भा०दी०*— अर्थद्वयमिति विषयेभ्यो वर्तमानरूपो एकोऽर्थः । भगवति रूपोऽन्योऽर्थ इत्यर्थद्वयमित्यर्थः ॥

*भा०र०*— **अनेन** बुद्धेः कारणत्वं मनोनिग्रहे आत्मरमणे चेति भाष्येण । **अर्थद्वयमिति** । "साधको विषयेभ्यो निवर्तेत" इत्येकः, "**उप** समीपे आत्मनो रमेत" इत्यन्य इत्यर्थद्वयमित्यर्थः । **प्राचीनटीकायां** तु "आत्मसंस्थं मनः" इति मनोनिग्रह उच्यते । 'शनैश्शनैः' इत्यादिना **उप** समीपे आत्मनो रमेत इत्यात्मरमणं चेत्युक्तम् । अनेन 'शनैः' इत्यत्र बुद्धेर्मनोनिग्रहादिकारणत्वमेवोच्यते, नेन्द्रियग्रामनियमनकरणत्वम्, तत्तु मनस एवेति नोक्तनियमभङ्ग इति विभावितं भवति ॥ २५ ॥

**गीता**

**यतो यतो निश्चल(र)ति मनश्चञ्चलमस्थिरम् ।**
**ततस्ततो नियम्यैतदात्मन्येव वशं नयेत् ॥ २६ ॥**

*वि०वि०*— मध्ये अनवस्थितं चेत् मनस्तदा प्रत्याहारेण वशीकुर्यादित्याह **यत इति** । यतो यतो यत्र यत्र । अस्थिरं योगसमये चञ्चलं सत् मनो निर्गच्छति एतन्मनस्ततो नियम्य प्रत्याहृत्य आत्मन्येव वशं नयेत् । आत्मविषय एव वशीकुर्यादित्यर्थः ॥

*सा०सं०*— ध्यानेन मनोऽनवस्थितं चेत् प्रत्याहारेण वशीकुर्यादित्याह **यतो यत इति** । 'आद्यादिभ्य उपसङ्ख्यानम्' इति सप्तम्यर्थे तसिः । **यत्र यत्र** विषये स्वतः **चञ्चलं मनोऽस्थिरं** सत् **निश्चरति** प्रवर्तते । **ततस्तत** एतन्मनो नियम्य प्रत्याहृत्य । **तत्** आत्मन्येव भगवत्येव । **वशं** तन्निष्ठमेव । **नयेत्** कुर्यादित्यर्थः ॥

*अ०प्र०*— एवमपि रजोगुणवशाद्यदि मनः प्रचलेत् तर्हि पुनः प्रत्याहारेण वशीकुर्यादित्याह ।

चञ्चलं[१], अस्थिरं[२], मनः[३], यतः यतः[४], निश्चलति[५], ततः ततः[६], एतत्[७], नियम्य[८], आत्मन्येव[९], वशं,[१०] नयेदित्यन्वयः ॥

स्वभावतः चञ्चलं = धार्यमाणमपि[१], अस्थिरं[२], मनः[३], यतो यतो = यत्र यत्र शब्दादौ[४], निश्चलति = यं यं विषयं प्रति निर्गच्छति[५], ततस्ततो[६], एतन्मनः[७], नियम्य = शब्दादिभ्यः प्रत्याहृत्य[८], आत्मन्येव[९], वशं = स्थिरं[१०] नयेत् कुर्यादित्यर्थः ॥ २६ ॥

**भाष्यम्**

**यतो यतो = यत्र यत्र । "यतो यतो धावति" इत्यादि प्रयोगात् । आत्मन्येव वशं नयेत् = आत्मविषय एव वशीकुर्यादित्यर्थः ॥ २६ ॥**

*प०टी०*— 'यतो यत इन्द्रियादिन्द्रियात्' इति प्रतीतिं निराकर्तुं 'यतो यतो निश्चरति' इति व्याचष्टे **यत इति** । यत्र यत्र विषये ॥

*न०टी०*—सर्वेन्द्रियनिरोधेऽपि मनोऽनिर्गमनाद्यतो यत इन्द्रियाणि निश्चरतीति न व्याख्येयम् । किं तर्हि ? इत्यत आह **यतो यत इति** । मनस आत्मविषयत्वस्यैव प्रस्तुतत्वात् तथैव व्याख्येयम् । न वृथा सप्तमीभङ्गेनात्मवशत्वमात्रमर्थ इति भावेनाह **आत्मनीति** ॥

*प्र०दी०*— यतो यतः श्रोत्रादेरिति प्रतीतिनिरासायाह— **यत इति** । शब्दादावित्यर्थः । कुतः सप्तम्यर्थे तसिर्लभ्यत इत्यत आह— **यत इति** । तथा चोक्तं "आद्यादिभ्य उपसङ्ख्यानं" इति । अन्यथा द्वारमात्रनियमे स्मरणस्य को निवारयिता । षष्ठ्या ह्यत्र भाव्यं, सप्तमी तु कथमित्यत आह— **आत्मनि इति** ॥

*भा०दी०*— **यत इतीति** । यतो यतो धावति दैवचोदितं मन इति पञ्चमाध्याये प्रयोगादिति भाष्यार्थः । **आद्यादिभ्य इति** प्रतियोगे "पञ्चम्यास्तसिल्" (५-३-७) इति सूत्रेण आद्यादि-

शब्देभ्यः सर्वविभक्त्यर्थे तसिलुपसङ्ख्यानमिति वार्तिककृतोक्तमित्यर्थः । ननु यतो यतो यस्माद्यस्माच्छ्रोत्रादिद्वारा मनो निर्गच्छति ततो द्वारान्नियम्येत्यर्थः । कुतो नेत्यत आह **अन्यथेति** । द्वारार्थत्व इत्यर्थः । **स्मरणस्येति** । शब्दस्पर्शादिविषयस्मरणस्येत्यर्थः । स्वात्मार्थत्वमात्मपदस्थमाशङ्कते **षष्ठ्या ह्यत्रेति** ॥ २६ ॥

*भा०र०*— **इति प्रतीतीति** । " 'ततस्ततः' इति तावत्पञ्चम्यन्तम्, 'नियम्य' इति श्रवणात् । अतस्तत्प्रतियोगिभूतं 'यतो यतः' इत्यपि पञ्चम्यन्तमेवेति 'श्रोत्रादेः' इति व्याख्येयमेव" इति प्रतीतीत्यर्थः । "यतो यतो धावति दैवचोदितं मनः" (भाग. १०.१.४२) इति दशमस्कन्धाद्याध्याये प्रयोगादिति भाष्यार्थः । प्रयोगोऽपि अनुशासनमूल एव वक्तव्य इति, किं तदनुशासनम् ? इत्यत आह **तथा चेति** । "प्रतियोगे पञ्चम्यास्तसिः" इति सूत्रे "आद्यादिभ्य उपसङ्ख्यानम्" इति सर्वविभक्त्यर्थे तसिरस्तीति कात्यायनेनोक्तमित्यर्थः । ननु **यतः** यस्मात् श्रोत्रादीन्द्रियद्वारा निर्गच्छति ततो द्वारान् नियम्येति प्रतीतार्थः किं न स्यात् ? इत्यत आह **अन्यथेति** । प्रतीतार्थत्वे मनोनिस्सरणद्वारभूतश्रोत्रादीन्द्रियमात्रनियमे सम्पन्नेऽपि मनसो विषयात् नियमनानापत्त्या तत्करणकशब्दादिविषयस्मरणस्य कः प्रतीकारः ? तद्भावे च, "कर्मेन्द्रियाणि संयम्य य आस्ते मनसा स्मरन् । इन्द्रियार्थान् विमूढात्मा मिथ्याचारः स उच्यते ॥" (३.६) इत्युक्तदोष इति भावः । "**आत्मन्येव वशं नयेद्** आत्मवश्यताम् आपादयेद्" (शां.भा. ६.२६) इति **सङ्करव्याख्यान** इव आत्मशब्दस्य स्वात्मार्थत्वे षष्ठीविभक्तिः स्यात् ? इति शङ्कते **षष्ठ्या हीति** । आधाराधेयभावाभावेन सम्बन्धमात्रं वक्तव्यम्, आत्मनो वशम् इति प्रतीतेः, तत्र च "षष्ठी शेषे" इति षष्ठीविभक्तिरेव युक्तेति शङ्कितुर्हृदयम् । **आत्मनीतीति** । विषयार्था चात्र सप्तमीविभक्तिरिति न परव्याख्यान इव क्लेशाश्रयणमिति भावः ॥ २६ ॥

**गीतातात्पर्यनिर्णयः**

**आत्मानं विष्णुम् । तत्प्रसादादेव ॥ २०-२६ ॥**

*प्रका०*— यत्र चेत्यस्यार्थमाह **आत्मानमिति** ॥

*न्या०दी०*— योगसम्पूर्तिस्वरूपमुच्यते 'यदे'त्यादिना । तत्र आत्मनाऽऽत्मानमित्यात्मशब्दयोर्जीवादिविषयत्वप्रतीतिनिरासायाह **आत्मानमिति** । अन्यथा तोषायोगादिति भावः ॥

*भा०दी०*— **यदेत्यादिनेति** । अनेकश्लोकग्रहणायादिपदम् ॥ **अन्यथेति** । आत्मपदस्य जीवादिविषयत्व इत्यर्थः ॥

गीता

## प्रशान्तमनसं ह्येनं योगिनं सुखमुत्तमम् ।
## उपैति शान्तरजसं ब्रह्मभूतमकल्मषम् ॥ २७ ॥

*वि०वि०*— एवं सङ्ग्योगमभिधाय तदनुष्ठातुः फलं प्रपञ्चयति **प्रशान्तमनसमिति** । विगतरजोदोषं ब्रह्मणि स्थितम् एनं योगिनम् । उत्तमं सुखं कर्तृ । स्वयमुपैति ॥

*वा०ल०*— 'ब्रह्मभूतम्' इत्यत्र ब्रह्मप्रसादाज्जातं ब्रह्मभूतम् ॥

*सा०सं०*— एवं साङ्ग्योगमभिधाय तदनुष्ठातुः फलं प्रपञ्चयति- **प्रशान्तेति** । **प्रशान्तमनसं** स्वतो विषयेष्वप्रवृत्तमनसं **शान्तरजसं** विगतरजोगुणम् । अत एव **अकल्मषं** कामक्रोधादिदोष-हीनम् । रजोजन्यत्वात् तेषाम् । **ब्रह्मभूतं** 'तद्बुद्धयः' इत्युक्तदिशा ब्रह्मणि स्थितिमन्तमेनं **योगिनं** समाधियोगवन्तम् **उत्तमं सुखम्** । कर्तृ । **उपैति** प्राप्नोति । **हि** प्रसिद्धं श्रुत्यादावित्यर्थः ॥

*अ०प्र०*— एवं प्रत्याहारादिभिः पुनःपुनः मनो वशीकुर्वन् रजोगुणक्षये सति योगसुखं प्राप्नोतीत्याह **प्रशान्तमनसमिति** ।

शान्तरजसं[१], अत एव प्रशान्तमनसं[२], एनं[३], अकल्मषं[४], ब्रह्मभूतं[५], योगिनं[६], हि[७], उत्तमं[८], सुखं[९], उपैतीत्यन्वयः ॥

शान्तरजसं = रजःशून्यं[१], अत एव प्रसन्नचित्तं[२], एनं = योगिनं[३], अकल्मषं = अपापं[४], ब्रह्मभूतं = ब्रह्माधीनतां प्राप्तं ब्रह्मणि स्थितत्वात्[५], एनं = योगिनं[६], हि = निश्चयेन[७], उत्तमं सुखं = समाधिसुखं[८-९], उपैति = स्वयमेव प्राप्नोति ॥ २७ ॥

गीता

## युञ्जन्नेवं सदाऽऽत्मानं योगी विगतकल्मषः ।
## सुखेन ब्रह्मसंस्पर्शमत्यन्तं सुखमश्नुते ॥ २८ ॥

*वि०वि०*— तत्सुखं किं प्रयासेन भवति कीदृशं चेत्यत उक्तं प्रपञ्चयति **युञ्जन्निति** । सुखेनाक्लेशेन भगवत्संसर्गाभिव्यक्तम् ॥

*वा०ल०*— 'सुखेन ब्रह्मसंस्पर्शम्' इत्यत्र ब्रह्मसंस्पर्शमात्मानं चित्तं युञ्जन् ।

*सा०सं०*— 'सुखमुपैति' इत्युक्तसुखं किमायासेन प्राप्नोति कीदृशं च तदित्यतो व्यनक्ति **एवमिति** । **विगतकल्मषो** विगतरागादिदोषो **योगी** । **एव**मुक्तदिशा । **आत्मानं** भगवन्तम् । **युञ्जन्** धारयन् । **सुखेना**क्लेशेन । **ब्रह्मसंस्पर्शं** भगवत्संसर्गाभिव्यक्तम् । **अत्यन्तम्** अतिशयितम् । **सुखमश्नुते** प्राप्नोति ॥

*अ०प्र०*— ततः कृतार्थो भवतीत्याह **युञ्जन्निति** ।

एवं[१], विगतकल्मषः[२], योगी[३], सदाऽऽत्मानं[४], युञ्जन्[५], सुखेन[६], ब्रह्मसंस्पर्शं[७], अत्यन्तं[८], सुखं[९], अश्नुते इत्यन्वयः ।

एवं = अनेन प्रकारेण[१], विगतकल्मषः = विशेषेण सर्वात्मना गतं कल्मषं यस्य स तथा[२], योगी[३], सदाऽऽत्मानं = सर्वदा मनः[४], युञ्जन् = वशीकुर्वन्[५], सुखेन = अनायासेन[६], ब्रह्मसंस्पर्शं = ब्रह्मणः संस्पर्शो यस्य कारणं तादृशं[७], अत्यन्तं = अन्तशून्यं[८], सुखं[९], अश्नुते = प्राप्नोति इत्यर्थः ॥ यद्वा, ब्रह्मसंस्पर्शं ब्रह्माधीनत्वमेव ब्रह्मसंस्पर्शम् । यद्वा, ब्रह्मसंस्पर्शमतिरतोन्तिमकारणं यस्य तद्ब्रह्मसंस्पर्शमत्यन्तमिति वा ॥ २८ ॥

**भाष्यम्**

**पूर्वश्लोकोक्तं प्रपञ्चयति— एवं युञ्जन्निति ॥ २७-२८ ॥**

*न०टी०*—ननु योगिनः सुखावाप्तिरुच्यते 'प्रशान्तमनसम्' इति श्लोके तदुत्तरश्लोके च । अतः को विशेषोऽनयोः ? इत्यत आह **पूर्वेति** ॥

*प्र०दी०*— 'प्रशान्तमनसं' इत्युक्तमेव पुनः कस्मादुच्यत इत्यत आह— **पूर्वेति** ॥

*भा०दी०*— **उक्तमेवेति** । सुखमात्यन्तिकमित्यादिश्लोकोक्तमेवेत्यर्थः । यद्वा 'युञ्जन्नेवं सदात्मानमि'त्यादिश्लोकोक्तमेवेत्यर्थः ॥

*भा०र०*— भाष्ये पूर्वशब्देन कः श्लोको ग्राह्यः ? इत्यतस्तं दर्शयति **प्रशान्तमनसमितीति** ॥ २७-२८ ॥

**गीतातात्पर्यनिर्णयः**

**ब्रह्मणि भूतम् ॥ २७-२८ ॥**

*प्रका०*— ब्रह्मभूतमकल्मषमित्यत्र ब्रह्मभूतशब्दार्थमाह **ब्रह्मणि भूतमिति** ॥

*न्या०दी०*— योगफलमुच्यते **प्रशान्त** इति । तत्र ब्रह्मभूतपदस्य अन्यार्थप्रतीतिनिरासाय अर्थमाह **ब्रह्मणीति** ॥ अन्यथा बहुप्रमाणविरोधादिति भावः । अनेन पूर्वोक्तं मत्संस्थापदमपि व्याख्यातं भवति ॥

*भा०दी०*— **अन्यार्थप्रतीतीति** । ऐक्यार्थप्रतीतीत्यर्थः ॥

**गीता**

## सर्वभूतस्थमात्मानं सर्वभूतानि चात्मनि ।
## ईक्षते योगयुक्तात्मा सर्वत्र समदर्शनः ॥ २९ ॥

*वि०वि०*— इदानीं ध्येयमाह **सर्वभूतस्थमित्यादिना** । सर्वभूतेषु स्थितं परमात्मानं परमेश्वरम् । सर्वभूतानि चात्मनि परमेश्वरे । तं च परमेश्वरं सर्वत्र ब्रह्मतृणादौ । ऐश्वर्यादिना साम्येन पश्यतीति समदर्शनः ॥

*सा०सं०*— 'एवं युञ्जन्' इति ध्यानप्रकरणस्य फलकथनेनोपसंहृत्य इदानीं ध्येयमाह **सर्वेति** । 'भोक्तारम्' (५-२९) इति पञ्चमान्ते 'मच्चित्तो युक्त आसीत' (६-१४) इत्यत्रैवाध्याये ध्येयोक्तावपि इहोत्तमाधिकारिणां ध्येयस्योक्तिरिति ज्ञेयम् । **आत्मानं** परमात्मानं ब्रह्मादिसर्वप्राणिगतम् । **आत्मनि** परमात्मनि । **सर्वत्र** ब्रह्मादितृणान्तेषु । भगवन्तम् ऐश्वर्यादिना साम्येन पश्यन् **समदर्शनो योगयुक्तात्मा** समाधियुक्तमनस्कः । **ईक्षते** पश्यतीत्यर्थः ॥

*अ०प्र०*— ब्रह्मसाक्षात्कारमेव दर्शयति **सर्वभूतस्थमिति** ।

सर्वत्र समदर्शनः[१], योगयुक्तात्मा[२], आत्मानं[३], सर्वभूतस्थं[४], ईक्षते[५], तथा सर्वभूतानि च[६], आत्मनि[७], ईक्षते इत्यन्वयः ।

सर्वत्र समदर्शनः = सर्वत्र समं ब्रह्मैव पश्यतीति तथा, सर्वत्र स्थितानां ईश्वररूपाणां सम्यग्ज्ञानी सन्[१], योगयुक्तात्मा = योगेन अभ्यस्यमानेन युक्तः आत्मा यस्य स समाहितचित्तः[२], आत्मानं = ईश्वरं[३], सर्वभूतस्थं = चराचरप्राणिनां अन्तर्यामित्वेन स्थितं[४], ईक्षते = पश्यति[५], तथा सर्वभूतानि = ब्रह्मादिस्थावरान्तानि[६], आत्मनि = परमात्मनि, ईक्षते = पश्यति[७], अथवा पश्येत् ध्यायेत् वर्तमानार्थे भविष्यदर्थः ॥ २९ ॥

भाष्यम्

ध्येयमाह— **सर्वभूतस्थमिति** । सर्वभूतस्थमात्मानं परमेश्वरम् । सर्वभूतानि चात्मनि परमेश्वरे । तं च परमेश्वरं ब्रह्मतृणादौ ऐश्वर्यादिना साम्येन पश्यति । तच्चोक्तम्—

"आत्मानं सर्वभूतेषु भगवन्तमवस्थितम् ।
अपश्यत् सर्वभूतानि भगवत्यपि चात्मनि ॥" इति ।
"समं सर्वेषु भूतेषु तिष्ठन्तं परमेश्वरम् ॥" इति च ॥ २९ ॥

*प०टी०*— पूर्वश्लोके 'प्रशान्तमनसम्' इति ध्यानस्य ध्येयसापेक्षत्वात्, तत्प्रदर्शनपरतयोत्तरश्लोकमवतार्य व्याचष्टे **ध्येयमिति** । अत्रोच्यमान आत्मा जीवः किं न स्यात् ? इत्यत आह **तच्चेति** ॥

*न०टी०*—भवत्वयं समाधियोगप्रकारः सफलः । अत्र किं ध्येयम् ? इत्याकाङ्क्षोत्तरत्वेनोत्तरं श्लोकमवतार्य व्याचष्टे **ध्येयमिति** । यं सर्वभूतानामन्तर्यामिणं यस्मिन्नितराणि ब्रह्मादिस्थावरान्तानि भूतान्याश्रितानि योगयुक्तात्मानः पश्यन्ति, स परमात्मैवेत्यत्र प्रमाणमाह **तच्चेति** । सर्वान्तर्यामित्वेन सर्वगुणपूर्णत्वेन सर्वत्र साम्यं च परमेश्वरस्यैवेति गीतास्वेव सिद्धमित्याह **सममिति** । एवमात्मशब्दस्य परममुख्यार्थपरमात्मपरत्वे सम्भवति, न वृथा सर्वभूतस्थं स्वमात्मानमिति मुख्यमात्रजीवपरत्वं कल्पनीयम् । न हि जीवस्य युगपत् सर्वभूतस्तथा । तस्योत्क्रान्त्यादिभिरणुत्वस्य साधितत्वात् । न च तदणुत्वस्यौपाधिकत्वे प्रमाणमस्ति । अत एवासौ न सर्वभूताश्रयः । सर्वभूतानि चात्मन्येकत्वं गतानीत्यश्रुतकल्पनं च तत्पक्षं इत्यलं विस्तरेण ॥

*प्र०दी०*— एवं 'युञ्जन्' इति योगप्रकरणस्य फलकथनेनोपसंहृतत्वात् किमुत्तरेण इत्यत आह— **ध्येयमिति** । ननु 'मच्चित्तो युक्तः' इत्यादिना ध्येयमुक्तमेव । सत्यम् । तथाऽप्युत्तमाधिकारिणां ध्येयमनेनोच्यत इत्यदोषः । आत्मानं स्वात्मानमित्यादिप्रतीतिपराकरणार्थमाह— **सर्वेति** । कुतोऽयमर्थ इत्यतः पुराणसमाख्यानादित्याह— **तच्चेति** । 'सर्वत्र समदर्शनः' इत्यस्योक्तार्थतां गीतासम्मत्योपपादयति— **सममिति** ॥

*भा०र०*— **फलकथनेन** "अत्यन्तं सुखमश्नुते" (६.२८) इत्युत्तमसुखानुभवकथनेन । **मच्चित्त इति** । "मनः संयम्य मच्चित्तो युक्त आसीत" (६.१४) इत्यत्र मद्विषयकध्यानवान् योग-

सम्पन्न आसीतेति भगवानेव ध्येय इत्युक्तमेवेत्यर्थः । 'इत्यादि' इत्यत्र "स्वात्मनि सर्वभूतानि" इति प्रतीतिः, "सर्वत्र = स्थावरादिब्रह्मान्तेषु समं = निर्विशेषं ब्रह्मात्मैकत्वविषयं दर्शनं यस्य स सर्वत्र समदर्शनः" इति प्रतीतिश्चादिशब्देन ग्राह्या ॥ २९ ॥

**गीता**

# योो मां पश्यति सर्वत्र सर्वं च मयि पश्यति ।
# तस्याहं न प्रणश्यामि स च मे न प्रणश्यति ॥ ३० ॥

*वि०वि०*— अस्य ध्यानविशेषस्य फलमाह **यो मामिति** । तस्याहं न प्रणश्यामि सर्वदा योगक्षेमवहः स्याम् इत्यर्थः । स च मे न प्रणश्यति सर्वदा मद्भक्तो भवति ॥

*सा०सं०*— सर्वभूतस्थात्मध्यानविशेषस्य फलमाह **यो मामिति** । **सर्वत्र** ब्रह्मादितृणान्तेषु स्थितं **मां यः पश्यति, सर्वं च** ब्रह्मादिजगत् **मयि** मदधीनं **पश्यति** । **तस्याहं न प्रणश्यामि** सर्वदा योगक्षेमवहः स्याम् इत्यर्थः । **स च मे न प्रणश्यति** सदा मद्भक्तो भवतीत्यर्थः ॥

*अ०प्र०*— एवं परमात्मभूतात्मज्ञानस्य सर्वभूतान्तर्यामितया मदुपासनमुख्यकारणमित्याह **य इति** ।

यः[१], मां[२], सर्वत्र स्थितं[३], पश्यति[४], सर्वञ्च[५], मयि[६], पश्यति[७], शेषं क्रमेणान्वयः ।

यः मां = परमात्मशब्दवाच्यं हरिं[१२], सर्वत्र स्थितं = भूतमात्रे नियामकत्वेन स्थितं[३], पश्यति[४], सर्वं च = प्राणिमात्रं[५], मयि = मदाधारत्वेन[६], पश्यति[७], तस्याहं न प्रणश्यामि = अदृश्यं न भवामि । यद्वा, मृतोऽनाथ इव अनुपकारी न भवामि, किन्तु तस्य योगक्षेमं वहामि[१०] स च मे न प्रणश्यति = स च मम अदृश्यो न भवति मृतोभृत्य (मृतः भृत्यः यस्य सः इत्यर्थः) इव सेवां न त्यजति[१३], अपि तु सर्वदा मद्भजनशीलो भवति । तस्याहं प्रत्यक्षो भूत्वा कृपादृष्ट्या तं विलोक्य अनुगृह्णामीत्यर्थः । तदुक्तम्—

सर्वदा सर्वभूतेषु समं मां यः प्रपश्यति ।
अचला तस्य भक्तिः स्याद्योगक्षेमं वहाम्यहम् ॥

सर्वत्र समदर्शन इत्युक्ते साम्यदर्शनं विवेचयन् सर्वगतत्वमनूद्य स च मे न प्रणश्यति ॥ ॥ ३० ॥

**भाष्यम्**

**फलमाह— यो मामिति । तस्याहं न प्रणश्यामीति सर्वदा योगक्षेमवहः स्यामित्यर्थः । स च मे न प्रणश्यति, सर्वदा मद्भक्तो भवति । सत्यपि स्वामिन्यरक्षत्यनाथः, एवं भृत्येऽप्यभजत्यभृत्य इति हि प्रसिद्धिः । उक्तं च—**

**"सर्वदा सर्वभूतेषु समं मां यः प्रपश्यति ।**
**अचला तस्य भक्तिः स्यात् योगक्षेमं वहाम्यहम् ॥"**

**—इति गारुडे ॥ ३० ॥**

*प०टी०*— नन्वेवं सर्वगतत्वेन परमात्मोपासने किं फलम् ? इत्यत उत्तरश्लोकमवतारयति **फलमिति** । एवं भृत्येऽपि 'अभजति' इति शेषः । व्यतिरेकदृष्टान्तोऽयम् ॥

*न०टी०*— 'आत्म'शब्दोक्तं भगवन्तमेवास्मच्छब्देन परामृश्य तज्ज्ञानिनः फलाभिधानाच्च पूर्वोक्त आत्मा भगवानेवेत्यभिप्रायेणोत्तरं श्लोकमवतार्य व्याचष्टे **फलमिति** । ननु सतामेव कार्यविशेषाकारित्वेनासत्वव्यवहारः क्व दृष्टः ? येन विद्वद्भगवतोरेव परस्परं प्रत्यनाशित्वं स्यादित्यत आह **सत्यपीति** । भृत्येऽपि 'अभजति' इति शेषः । न केवलं दृष्टान्तमात्रेणैतदुपपादितमित्याह **उक्तं चेति** । न च तस्याहं न परोक्षीभवामि, स च मे न परोक्षीभवतीति व्याख्येयम् । देशकालादिभिरविलुप्तावबोधात्मकत्वात् भगवतः को परोक्षीभवति, तमृते सर्वेषामिति, तद्रूपत्वात् सोऽपि न कस्यापि परोक्षीभवेदिति विशेषप्रतिषेधानुपपत्तेः ॥

*प्र०दी०*— किञ्चैतदर्थानुवादेन फलप्रतिपादकमुत्तरवाक्यमप्यस्य भगवद्विषयत्वं ज्ञापयतीति भावेनाह— **फलमिति** । अस्य ध्यानविशेषस्येति शेषः । ननु भगवान् तद्ध्यायी च सर्वान् प्रति नित्यौ । तत्कथमेतदित्यत आह— **तस्येति** । कथमयमर्थो लभ्यत इत्यत आह— **सत्यपीति** । अविद्यमाननाथोऽयमिति भृत्ये प्रसिद्धिः । एवं सत्यपि भृत्ये अभजति अविद्यमानभृत्योऽयमिति स्वामिनि प्रसिद्धिः । एतदुक्तं भवति । विद्यमानस्यापि स्वयोग्यव्यापाराकरणसादृश्यादुपचारेणाविद्यमानता । प्रकृते तु तथात्वाभावान्न प्रणश्यामीत्यादि । रूढोपचारश्चायम् । अतो न प्रयोजनान्वेषणमिति । अत्र पुराणसम्मतिमाह— **उक्तं चेति** ॥

*भा०दी०*— **तथात्वाभावादिति** । अरक्षणाभजनयोरभावान्न प्रणश्यामीत्याद्युक्तिगीतायामित्यर्थः ॥

*भा०र०*— **अस्य** 'सर्वभूतस्थमात्मानम्' इत्यत्रात्मशब्दस्य । 'अस्य' इत्यस्य विवरणम् **ध्यानविशेषस्येति** । सर्वभूतस्थत्वादिप्रकारकस्येत्यर्थः । **कथमेतदिति** । अप्रणाशो ध्वंसाप्रतियोगित्वं नित्यत्वं सर्वान् प्रत्यस्तीति 'तस्याहम्', 'स च मे' इति भगवतो योगिनश्च परस्परं नित्यत्ववचनं कथमित्यर्थः । 'अरक्षति' इत्यस्य प्रातियोगिभूतं शेषमाह **अभजतीति** । 'स्वामिनि' इत्येतद् अत्राप्यनुकृष्यत इति भावेनोक्तम् **स्वामिनीति** । "कया वृत्त्याऽयमर्थो लभ्यते" इति कृतचोद्ये कः परिहारः उक्तः ? इत्यत आह **एतदुक्तं भवतीति** । **सादृश्यादिति** । अनेन 'प्रणश्यामि' इत्यादेर्गौणी वृत्तिरिति विभावितं भवति । **तथात्वाभावात्** अरक्षणकर्तृत्व-अभजनकर्तृत्वयोरभावात् । प्रसिद्धिपदोपादानलब्धमर्थमाह **रूढेति** । अत्र "न प्रणश्यामि" इत्यस्य "योगक्षेमवहो भवामि" इत्यर्थकत्वेन केवलमेव तत् लोकन्यायगम्यम्, पुराणे कथितं चेति भाष्ये चशब्द इति **प्राचीनटीका** ॥ ३० ॥

**गीतातात्पर्यनिर्णयः**

**सर्वभूतेषु स्थितं परमात्मानम् ॥ २९-३० ॥**

**"आत्मानं सर्वभूतेषु भगवन्तमवस्थितम् ।**
**अपश्यत् सर्वभूतानि भगवत्यपि चात्मनि ॥" इति ।**

**"समं सर्वेषु भूतेषु तिष्ठन्तं परमेश्वरम् ॥" इति च ॥ २९-३० ॥**

*प्रका०*— सर्वभूतस्थमित्यस्यार्थमाह **सर्वभूतेष्विति** ॥

*न्या०दी०*— ध्येयमुच्यते **सर्वभूतस्थमिति** । तत्रात्मपदेन जीव उच्यत इत्यन्यथाप्रतीतिनिरासायाह **सर्वेति** ॥ भोक्तारमिति सङ्क्षेपोक्तौ परमात्मन एव ध्येयत्वोक्तेः, यो मामित्यनुवादाच्चेति भावः ॥

*भा०दी०*— आत्मशब्दः परमात्मार्थ इत्यत्र ज्ञापकमाह **भोक्तारमितीति** । पञ्चमान्ते सङ्क्षेपेण ध्येयत्वोक्तावित्यर्थः ॥

**गीता**

**सर्वभूतस्थितं यो मां भजत्येकत्वमास्थितः ।**
**सर्वथा वर्तमानोऽपि स योगी मयि वर्तते ॥ ३१ ॥**

*वि०वि०*— एतदेव स्पष्टयति **सर्वभूतस्थितमिति** । एकत्वमास्थितः सर्वत्रैक एव परमात्मेति स्थितः । सर्वप्रकारेण न्यायेनान्यायेन वर्तमानो मय्येव वर्तते । एवमधर्माचरणेऽप्यपरोक्षं पश्यतो ज्ञानफलं नियतमित्यर्थः । प्रायेण ज्ञानिनां नाधर्मे बुद्धिः । प्रमादिकं तु पापं भस्मीभवति । महच्चेत् दुःखसूचकं भवतीति भावः । उक्तं च—

'कदाचिदपि नाधर्मे बुद्धिर्विष्णुदृशां भवेत् ।
प्रमादात्तु कृतं पापं स्वल्पं भस्मीभविष्यति ॥

आदिराजैस्तथा देवैर्ऋषिभिः क्रियते कियत् ।
बाहुल्यात्कर्मणस्तेषां दुःखसूचकमेव तत् ॥' इति ॥

*बा०ल०*— 'भजत्येकत्वमास्थितः' इत्यत्र एकत्वं सर्वभूतस्थितमद्रूपाणामैक्यम्, स्थानभेदेन मद्रूपभेदं न पश्येदित्यर्थः । सर्वभूतस्थितमित्याधाराधेयभावोक्तेः, मां भजति इति सेव्यसेवक-भावोक्तेश्च जीवैक्यस्य बाधितत्वात्, स्थानभेदेन प्रसक्तस्वरूपभेदनिषेध एवायम् । अत एव एकत्वम् इति सामान्येनोक्तिः ।

*सा०सं०*— 'यो माम्' इतिश्लोकोक्तमेव स्पष्टयति **सर्वेति** । **य एकत्वमास्थितः** सर्वत्र परमेश्वर एवेत्यास्थितः ज्ञानी । सर्वभूतस्थं **मां भजति** सेवते । **स योगी** सर्वप्रकारेण न्यायेनान्यायेन वा **वर्तमानोऽपि मयि वर्तते** । अन्यायप्रवृत्तावपि ज्ञानिनो मोक्षो नियत एवेति भावः । तदाह सूत्रे "ॐ कामकारेण चैके ॐ" (३-४-१५) इति । आनन्दह्रासस्तु अस्त्येवेति ज्ञेयम् ॥

*अ०प्र०*— न चैवंभूतो विधिकिङ्करः स्यादित्याह **सर्वभूतस्थमिति** ।

यः योगी[१], एकत्वमास्थितः सन्[२], सर्वभूतस्थितं[३], मां[४], भजति[५], स योगी[६], सर्वथा वर्तमानोऽपि[७], मयि वर्तते इत्यन्वयः ।

यः योगी[१], एकत्वमास्थितः सन् = सर्वान्तर्यामिरस्थपरमात्मा एक एवेति ईश्वररूपाणां एकत्वं सम्यक् जानन् सन्[२], सर्वभूतस्थितं = सर्वभूतेषु अन्तर्यामित्वेन स्थितं[३], एतादृशं ज्ञात्वा मां[४], भजति[५], सः योगी[६], सर्वथा वर्तमानोऽपि = सर्वप्रकारेण न्यायेनान्यायेन वा देहे वर्तमानोऽपि[७], मयि वर्तते = मां प्राप्तः सन् मद्भजनशीलोऽभूदित्यर्थः । यद्वा, युक्तो भवत्येवेति भावः । एवमुत्तर-यागादिकर्मजनितपुण्यपापयोः यजनादेः तदुभयोरश्लेषशब्दोक्तः यद्यप्यपरोक्षज्ञानिनः पूर्वकृतयोः प्रारब्धभिन्नयोः काम्यकर्मप्राप्तेर्विनाशः, अकाम्यस्य ज्ञाने उपयोगः, प्रारब्धयोस्तु भोग एव, निवृ-त्तस्य तु मोक्षे उपयोगः, तथापि कामकारेण चैकेन सर्वथा वर्तमानोऽपि इत्यादि प्रमाणशाबल्यात्

अन्यथानुपपत्त्या ज्ञानोत्तरकर्मणि कश्चन विशेषः सिद्धान्तितः सर्वज्ञमुनिना । प्रायेण ज्ञानिनां धर्मे बुद्धिर्भवति, प्रमादात्कृतं त्वल्पशापाजनकमेव दुष्कर्म नश्यति वृत्रहत्यादिवन्महच्चेद्दुष्कर्म अदृष्टाजनकमपि इदानीमेव मरणस्य नियतं यतोऽनेन विषं भक्षितमिति यथा विषाशनं मृतिसूचकं तथा प्रारब्धदुःखसूचकं भवति । स्वयोग्याधिकतया प्रसक्तगुणादिह्रासकरं च तथा मौक्तानन्दोन्नाहभावकरं तथा मानुषाणां मौक्तानन्दह्रासकरं च भवति । तदुक्तम्—

'कदाचिदपि नाधर्मे बुद्धिर्विष्णुदृशां भवेत् ।
प्रमादात्तु कृतं पापं स्वल्पं भस्मीभविष्यति ।'

तथा

'आदिराजैस्तथा देवैर्ऋषिभिः क्रियते कियत् ।
बाहुल्यात्कर्मणस्तेषां दुःखसूचकमेव तत् ॥'

इत्याद्युक्तौ प्रमाणान्यत्र द्रष्टव्यानि ॥ ३१ ॥

**भाष्यम्**

**एतदेव स्पष्टयति— सर्वभूतस्थितमिति । एकत्वमास्थितः सर्वत्र एक एवेश्वर इति स्थितः । सर्वप्रकारेण वर्तमानोऽपि मय्येव वर्तते । एवमपरोक्षं पश्यतो ज्ञानफलं नियतमित्यर्थः । तथाऽपि न प्रायो नाधर्मं करोति । कुर्वतस्तु महच्चेद् दुःखसूचकं भवतीत्युक्तं पुरस्तात् । आह च—**

**"कदाचिदपि नाधर्मे बुद्धिर्विष्णुदृशां भवेत् ।
प्रमादात्तु कृतं पापं स्वल्पं भस्मीभविष्यति ॥
आदिराजैस्तथा देवैर्ऋषिभिः क्रियते कियत् ।
बाहुल्यात् कर्मणस्तेषां दुःखसूचकमेव तत् ॥" इति ॥ ३१ ॥**

***प०टी०***— ननु तृतीयाध्याये ज्ञानिनोऽपि कर्मविधानात् कथं यथेष्टाचरणं विधीयते ? इत्यत आह **एवमिति** । ननु विकर्मणा मोक्षविरोधाभावे किमिति न ज्ञानिनो विकर्म कुर्युः ? इत्यत आह **तथाऽपीति** । **कियदिति** महदित्यर्थः ॥

***न०टी०***—उत्तरेण स्पष्टयमानत्वादप्ययमेव श्लोकद्वयार्थ इति भावेनाह **एतदेवेति** । तथा हि । 'सर्वत्र समदर्शनः' इत्यत्र यत्समशब्दोक्तमेकत्वं सर्वभूतस्थितानां तदत्र स्पष्टयते 'एकत्व-

मास्थितः' इति । तच्चैकत्वं 'माम्' इत्युक्त्या भगवद्रूपाणामेवेत्यवगम्यते । न तु जीवपरमात्मनोः, तत्प्रापकाभावात् । 'तस्याहं न प्रणश्यामि' इति यत् सदा योगक्षेमवहत्वं भगवता प्रतिज्ञातम्, तत् स्पष्टयते 'स योगी मयि वर्तते' इत्यनेन । ननु यथेष्टचरणस्य ज्ञानपादे निरस्तत्वात् कथं यथेष्टचारिणो योगक्षेमं वहति भगवान् ? इत्यत आह **एवमिति** । यथेष्टचरणस्य विधिरेव निषिद्ध-स्तत्र । ज्ञानफलस्य मुक्तेर्नियतत्वेनानुमितिमात्रं तु तत्राप्युक्तमिति भावः । ननु यथेष्टचारिणोऽपि ज्ञानफलं नियतं चेत् सर्वेऽप्यधर्मं कुर्युरित्याशङ्का । नायं दोषः । न ह्यसावधर्मं प्रायः करिष्यति । प्रमादकृतं तु स्वल्पं भस्मीभविष्यति । महदपि प्रारब्धदुःखसूचनेन कृतार्थं भवतीत्येतत् सप्रमा-णकमाह **तथाऽपीति । अपि** महदप्यानन्दमीषत् ह्रासयति, न मुक्तिं प्रतिबध्नातीति भावः ॥

***प्र०दी०***— 'यो माम्' इत्युक्तमेव पुनः किमर्थमुच्यत इत्यत आह— **एतदेवेति** । एकत्व-मास्थित इत्यस्यान्यथाप्रतीतिनिरासार्थमर्थमाह— **एकत्वमिति** । मयि वा मद्विकारे वा वर्तमानो-ऽपीत्यपव्याख्याननिरासार्थमाह— **सर्वेति** । न्यायेन वाऽन्यायेन वेत्यर्थः । अपव्याख्याने थाल्-प्रत्ययो न युक्त इति भावः । भगवन्तं भजतोऽधर्माचरणं सर्वथाऽप्यकिञ्चित्करमिति प्रतीतिनिरा-सायाह— **एवमिति** । अधर्माचरणेऽपीति शेषः । ज्ञानफलं मोक्षः । आनन्दह्रासादिकं तु विद्यत एवेति भावः । ननु ज्ञानिनो मोक्ष एवापेक्षितः । सोऽधर्माचरणेऽपि न प्रतिबध्यते इति चेत् तत्किम-धर्मं करोतीत्यत आह— **तथाऽपीति** । सर्वथाऽप्यकरणे ''सर्वथा वर्तमानोऽपि'' इत्युक्तमयुक्त-मित्यत उक्तं— **प्राय इति** । एतेन न हीदृशस्य यथेष्टचेष्टता सम्भवतीति परकीयमस्मद्व्याख्यान-दूषणमपि निरस्तं भवति । प्रारब्धवशेन कदाचित्तथाभावदर्शनात् । कुतो न करोतीत्यत आह— **कुर्वतस्त्विति** । अत्र प्रमाणमाह— **आह चेति** । कियन्महदिति शेषः । कर्मणः प्रारब्धस्य बाहु-ल्यात् प्राबल्यात् । लोके प्रवृत्तिकर्मणो बाहुल्येन चित्तविक्षेपादिति वा ॥

***भा०दी०***— **थाल्प्रत्यय इति** । तस्य 'प्रकारवचने थाल्' (५-३-३३) इति पाणिन्युक्त्या प्रकारार्थत्वादिति भावः । **किमिति** । अधर्मं करोषि किमिति योजना । यथेष्टचेष्टतेति यथेष्ट-प्रवृत्तिनेत्यर्थः । **तथाभावदर्शनादिति** । अजामिलादाविति योज्यम् । भाष्ये पुरस्तादित्यस्य तृतीयेनैव तस्य कृतेनार्थ इति श्लोकभाष्ये ईषत्प्रारब्धानर्थसूचकं तद्भवति महच्चेद्वृत्रहत्यादिवदित्यने-नेत्यर्थः ॥

***भा०र०***— **यो मामित्युक्तमेवेति । प्राचीनटीकायां** तु '' 'सर्वभूतस्थम्' (६.२९) इत्यादिश्लोकद्वयोक्तमेव स्पष्टयते 'तथा हीति' । 'सर्वत्र समदर्शनः' (६.२९) इत्युक्तं समदर्शनमेव

'एकत्वमास्थितः' इति स्पष्टीक्रियते । अत्रोक्तम् एकत्वम् एकत्वरूपत्वं भगवद्रूपाणां युक्तम् । जीवपरमात्मनोस्तत्प्रापकाभावात् । तथा 'तस्याहं न प्रणश्यामि' (६.३०) इति यत् सदा योग-क्षेमवहत्वं भगवता पूर्वमुक्तं तदेव स्पष्टयते 'स योगी मयि वर्तते' इत्यनेन'' इत्युक्तम् । **अन्यथा-प्रतीतीति** । 'आत्मैकत्वदर्शी' इति **सङ्करोक्त**प्रतीतीत्यर्थः । 'सर्वथा' इत्यस्य परोक्तार्थानुवादः **मयि वा मद्विकारे वेति** । **थाल्प्रत्यय इति** । ''प्रकारवचने थाल्'' इति तस्य प्रकारार्थ एवानुशासनेन ''मयि वा मद्विकारे वा'' इत्यर्थे अननुशासनादिति भावः । **एवं** सर्वभूतस्थितत्वादिप्रकारेण भगवन्तमपरोक्षतया पश्यत इति भाष्यार्थः स्पष्ट इति, ततः शेषमाह **अधर्मेति** । ज्ञानफलं ''स योगी मयि वर्तते'' इत्युक्तम् । किं तत् ? इत्यत आह **मोक्ष इति** ।

ननु न्यायेन अन्यायेन वा वर्तमानस्यापि यदि ज्ञानफलं नियतम्, तर्हि ज्ञानपादे कथम् अन्यायाचरणप्रतिक्षेपः ? कथं च तृतीयाध्याये (३.१७) ज्ञानिनोऽपि कर्मविधिः ? इत्यत आह **आनन्देति** । तथा चोक्तम्—

''ज्ञानान्मोक्षो भवत्येव सर्वाकार्यकृतोऽपि तु ।
आनन्दो ह्रसतेऽकार्याच्छुभं कृत्वाऽनुवर्धते ॥'' इति (ब्रह्माण्डे) ।

''सर्वभूतस्थम्'' इति ''यो माम्'' इति च श्लोकद्वयम् उत्तमाधिकारिविषयम्, ''सर्वभूत-स्थितम्'' इति श्लोकस्तु ज्ञानिमात्रपर इति भावेन आनन्दह्रासोक्तिरिति **वदन्ति** । **किमिति** । अधर्मं करोति किम् ? इत्यन्वयः । यद्यपि न मोक्षप्रतिबन्धः, तथापीति भाष्यार्थः । **एतेन** 'प्रायः' इति पदोपादानेन । **यथेष्टचेष्टता** अन्यायाचरणम् । तथाभावदर्शनात् यथेष्टचेष्टतादर्शनात् । 'पुरस्तात्' इत्यस्य तृतीयाध्याये ''नैव तस्य कृतेनार्थः'' (३.१८) इति श्लोकव्याख्याऽवसरे ''ईषत्प्रारब्धानर्थ-सूचकं तद्भवति, महच्चेद्वृत्रहत्यादिवत्'' (गी.भा. ३.१८) इत्यत्रेत्यर्थः । स्वल्पपापस्य भस्मीभावा-भिधानात् कियत्किमपीत्यनन्तरं प्रकृतोपयोगाय शेषमाह **कियन्महदितीति** । ''राजाहःसखिभ्य-ष्टच्'' इति समासान्ते, 'आदिराजैः' इति युक्तं भाष्ये । 'कियत्' इत्युक्तेः 'बाहुल्यात्' इति व्याख्याति **प्राबल्यादिति** । ज्ञानेनाप्यनाश्यत्वं प्राबल्यमिह विवक्षितम् । मुख्यार्थालाभानुशयादाह **लोकेति** ॥ ३१ ॥

**गीतातात्पर्यनिर्णयः**

**सर्वत्र विष्णुरेक इति स्थितः ॥ ३१ ॥**

*प्रका०*— ''सर्वभूतस्थितमि''त्यस्यार्थमाह **सर्वत्र विष्णुरेक इति** ॥

*न्या०दी०*— परमात्मध्यानफलमुच्यते **सर्वेति** । तत्र "एकत्वमास्थितः" इत्येतदन्यथा-प्रतीतिनिरासाय व्याचष्टे **सर्वत्रेति** ॥ अन्यथा सर्वभूतस्थितमिति स्ववचनविरोधादिति भावः ॥

**गीता**

## आत्मौपम्येन सर्वत्र समं पश्यति योऽर्जुन ।
## सुखं वा यदि वा दुःखं स योगी परमो मतः ॥ ३२ ॥

*वि०वि०*— साम्यं प्रकारान्तरेण व्याचष्टे **आत्मौपम्येनेति** । अतो विष्ण्वनुवर्तिषु स्ववत्स्नेहः कर्तव्य इत्याशयः ॥

*सा०सं०*— 'समदर्शनः' इत्युक्ते गोगवयादिवद्भवति किं साम्यदर्शनमित्याकाङ्क्षायाम् 'एकत्वमास्थितः' इति साम्यदर्शनं स्वयमेव व्याख्याय, इदानीं भगवदनुवर्तिविषयतया साम्यदर्शनं स्वयमेव व्याचष्टे **आत्मेति** । यथा सुखं स्वस्य प्रियं दुःखं चाप्रियं तथाऽन्येषामपि भगवद्भक्ताना-मित्येव**मात्मौपम्येन** स्वसादृश्येन **सर्वत्र** भगवदनुवर्तिषु **समं यः पश्यति** सुखमेव सर्वभक्तेषु यो वाञ्छति । स्वात्मन इवेति यावत् । **स योगी परमो मत** इति विष्ण्वनुवर्तिषु स्वात्मनीव स्नेहं कुर्वन् श्रेष्ठो मत इति फलितार्थः ॥

*अ०प्र०*— हे अर्जुन ![१], आत्मौपम्येन[२], सुखं वा[३], यदि[४], दुःखं वा[५], सर्वत्र[६], समं[७], पश्यति[८], सः योगी[१०] परमः[११] सः मतः[१२] इत्यन्वयः ।

हे अर्जुन ![१], आत्मौपम्येन = आत्मना उपमा यस्य तत् आत्मोपमं तस्य भावः आत्मौ-पम्यम्, तेन तथा स्वसादृश्येन[२], सुखं वा यदि वा दुःखं = यथा मम सुखं प्रियं दुःखं चाप्रियं तथाऽन्येषामपीति[५], सर्वत्र = प्राणिषु[६], समं पश्यति = सुखमेव सर्वेषां वाञ्छति न तु कस्याऽपि दुःखं वाञ्छति[८], स योगी परमः = श्रेष्ठः सः मतः सः ममाभिमतः सम्मतः ॥ ३२ ॥

**भाष्यम्**

### साम्यं प्रकारान्तरेण व्याचष्टे— आत्मौपम्येनेति ॥ ३२ ॥

*प०टी०*— 'सर्वत्र समदर्शनः' इत्युक्तं समत्वम्, 'एकत्वमास्थितः' इत्यनेन स्पष्टितम् । तद्भगवदनुवृत्तिषु स्वसाम्यपरतयाऽपि व्याकुर्वन् श्लोकमवतारयति **साम्यमिति** ॥

*न०टी०*—'सर्वत्र समदर्शनः' इत्युक्तं समत्वम् 'एकत्वमास्थितम्' इत्यनेन सर्वगतभगव-द्रूपाणां परस्परैक्यपरत्वेन व्याख्याय, भगवदनुवर्तिषु स्वसाम्यपरत्वेनापि व्याचष्ट इति भावेनोत्तरं

श्लोकमवतारयति **साम्यमिति** । ननु 'आत्मौपम्येन सर्वत्र' इति सर्वशब्दात्, हर्यधिष्ठानत्वसाम्याच्च, सर्वेष्वात्मौपम्यं किं न स्यात् ? मातृद्रिणमातुलादिमान्यत्वहानवद्धरिद्विट्तदधिष्ठानादियाथात्म्यताहानादिति ब्रूमः ॥

*प्र०दी०*— 'सर्वत्र समदर्शनः' इत्यस्यान्यथाव्याख्यानमितोऽप्यसदिति भावेनाह— **साम्यमिति** । साम्यदर्शनम् । 'समदर्शनः' इत्युक्ते किं गोगवयादिवत् भवति साम्यदर्शनमित्याकाङ्क्षायां 'एकत्वमास्थितः' इति स्वयमेव व्याख्यातम् । इदानीं तु भगवदनुवर्तिविषयतयाऽपि व्याचष्ट इत्यर्थः ॥

*भा०दी०*— **अन्यथाव्याख्यानमिति** । साम्येन पूजादिस्वयमेवेति कृष्णे तवेत्यर्थः । **भगवदनुवर्तीति** । भगवद्भक्तिविषयतयेत्यर्थः । **सर्वत्रे**त्यस्य विष्णुभक्तेष्वित्यर्थः ॥

*भा०र०*— **अन्यथा व्याख्यानमिति** । "**सर्वत्र** स्थावरादिब्रह्मान्तेषु **समं** निर्विशेषब्रह्मात्मैकत्वविषयं **दर्शनं** यस्य स तथा" (शां.भा. ६.२९) इति **सङ्करव्याख्यानमित्यर्थः** । न केवलम् "समं सर्वेषु भूतेषु तिष्ठन्तं परमेश्वरम्" (१३.२८) इति गीतावचनादिति अपिशब्दः । साम्यस्याशब्दरूपस्य कथं व्याख्यानम् ? इत्यत आह **साम्यदर्शनमिति** । 'समदर्शनः' इति साम्यदर्शनप्रतिपादकं वाक्यमित्यर्थः । ननु पूर्वमेकेन प्रकारेणाप्यव्याख्याततत्वात् कथं 'प्रकारान्तरेण' इत्युक्तम् ? इत्यत आह **समदर्शन इत्युक्त इति** । **एकत्वमास्थितः** सर्वत्रैक एवेश्वर इत्यास्थितः । स्वयमेव **गीताऽऽचार्येणैव** । **भगवदनुवर्तिविषयतयाऽपीति** । भगवद्भक्तिषु स्वसाम्यपरतयाऽपीत्यर्थः । तथा च "विष्णवनुवर्तिषु स्ववत् स्नेहः कर्तव्यः" (गी.ता. ६.३२) इति तात्पर्यानुसारिणी भगवदनुवर्तिषु स्वसाम्यपरत्वेनापि व्याचष्ट इति **प्राचीनटीका** । 'भगवदनुवृत्तिविषयतया' इति पाठे भगवद्भक्तिविषयतयेत्यर्थः । तथा च 'सर्वत्र' इत्यस्य 'विष्णुभक्तेषु' इति पर्यवसितार्थ इति भाव इति **व्याचक्षते** ॥ ३२ ॥

**गीता**

## अर्जुन उवाच—

**योऽयं योगस्त्वया प्रोक्तः साम्येन मधुसूदन ।**
**एतस्याहं न पश्यामि चञ्चलत्वात्स्थितिं स्थिराम् ॥ ३३ ॥**

*वि०वि०*— मनसश्चञ्चलत्त्वेन वायोरिव निग्रहीतुमशक्यत्वात् । साम्येनैतस्य योगस्य स्थिरा स्थितिः कर्तुमशक्या इत्यर्जुन उवाच **यो यमिति द्वाभ्याम्** ॥

***सा०सं०***— भगवदुक्तयोगस्याननुष्ठानलक्षणमप्रामाण्यमाशङ्कते **योऽयमिति** । हे **मधुसूदन** । **साम्येन** भगवतः साम्येन सर्वत्रैक्येन । तथा भगवदनुवर्तिषु चात्मौपम्यरूपसाम्येनेति वा । मनस एकाग्रत्वेनेति वा । **योऽयं** ध्यान**योगस्त्वया प्रोक्तः एतस्य** योगस्य **चञ्चलत्वात् स्थिरां स्थितिं** मनसः चञ्चलत्वात् **न पश्यामि** ॥

***अ०प्र०***— उक्तलक्षणस्य योगस्यासम्भवं मन्वानः **अर्जुन उवाच– योऽयमिति** द्वाभ्याम् ।

हे मधुसूदन ![१], त्वया[२], अयं[३], यः[४], योगः[५], साम्येन[६], प्रोक्तः[७], अहं[८], स्थिरां[९], स्थितिं[१०] चञ्चलत्वात्[११] न पश्यामीत्यन्वयः ।

हे मधुसूदन ![१], त्वया = सर्वज्ञेन[२], अयं[३], यः[४], योगः[५], साम्येन = मनसो लयविक्षेप-शून्यतया[६], प्रोक्तः[७], अहं = अर्जुनः[८], एतस्य = योगस्य[९], स्थिरां = दीर्घकालां[१०] स्थितिं[११] मनश्चञ्चलत्वात् न पश्यामीत्यर्थः ॥ ३३ ॥

**भाष्यम्**

## एतस्य योगस्य स्थिरां स्थितिं न पश्यामि मनसः चञ्चलत्वात् ॥ ३३ ॥

***प०टी०***— योगसाम्ययोरुभयोरपि प्रकृतत्वात् 'एतस्य' इति किं परामृश्यते ? इत्यत आह **एतस्येति** । 'चञ्चलत्वात्' इत्यत्र कस्य चञ्चलत्वमिति ? अत्राह **मनस इति** ।

***न०टी०***— 'योऽयम्' इत्यादिश्लोकत्रयार्थं समासतः सप्रमाणकमाह **एतस्येत्यादिना** ।

***प्र०दी०***— साम्यस्य योगस्य च प्रकृतत्वात् 'एतस्य' इति कस्य परामर्श इति न ज्ञायते । अतः तत्प्रदर्शनाय व्यवहितानां पदानामन्वयमाह— **एतस्येति** । योगस्य प्राधान्येन साम्यस्य तु तृतीययाऽप्राधान्येन प्रकृतत्वादिति भावः । 'चञ्चलत्वात्' इत्यस्यान्यो धर्मी न प्रतीयते । अतो योग एव सम्बध्यते । तथा च साध्याविशिष्टतेत्यत आह— **मनस इति** । एतच्चोत्तरवाक्यादवगम्यत इति भावः ॥

***भा०दी०***— **प्रकृतत्वादिति** । पूर्वार्धेनेति भावः । **साध्याविशिष्टतेति** । स्थिरां स्थितिं न पश्यामीत्यस्य हि चञ्चलतां पश्यामि योगस्येत्यर्थपर्यवसानादिति भावः ॥

***भा०र०***— उभयोः प्रसक्तत्वाद् योगमात्रग्रहणं कथम् ? इत्यतो भाष्यकाराभिमतं हेतुमाह **योगस्य प्राधान्येनेति** । **प्रकृतत्वात्** "योऽयं योगस्त्वया प्रोक्तः साम्येन" इत्यर्थे "पुत्रेण सहागतः पिता" इत्यत्रेव प्रथमया प्राधान्येन तृतीयया अप्राधान्येन च प्रकृतत्वादित्यर्थः । योगस्य

धर्मित्वे को दोषः ? इत्यत आह **तथा चेति** । 'चञ्चलत्वाद्' इति तावद्धेतुः । "साधनत्व-व्यापकविभक्त्यन्तं लिङ्गवचनं हेतुः" इति तल्लक्षणात् । योगश्च धर्मी = पक्षः । तथा च "योगो न स्थिरस्थितिमान् चञ्चलत्वात्" इत्यनुमाने साध्यस्येव हेतोरपि सन्देहावस्कन्दितत्वाविशेषात् सन्दिग्धासिद्धो हेतुः स्यादिति भावः । यद्वा **धर्मी** चञ्चलत्वरूपधर्मान्वयप्रतियोगीत्यर्थः । शिष्टं पूर्ववत् । मनसोऽत्रान्वय इति कुतो विज्ञायते ? इत्यत आह **एतच्चेति** । "चञ्चलं हि मनः कृष्ण" (६.३४) इत्यर्जुनप्रश्नरूपोत्तरवाक्यादित्यर्थः । न च "मनसश्चञ्चलत्वाद् योगो न स्थिरः" इति वैयधिकरण्यमापद्येतेति वाच्यम् । योगो न स्थिरः मनःकरणकत्वात्, मनसश्चञ्चलत्वात् करणानुसारित्वात्कार्यस्य इत्यत्र तात्पर्यात् ॥ ३३ ॥

**गीता**

## चञ्चलं हि मनः कृष्ण प्रमाथि बलवद् दृढम् ।
## तस्याहं निग्रहं मन्ये वायोरिव सुदुष्करम् ॥ ३४ ॥

***सा०सं०***— 'चञ्चलत्वात्' इत्यत्र कस्येति शङ्कां निरस्यन् मनोनिग्रहेणास्तु योगस्य स्थिरतेति शङ्कां निराह **चञ्चलमिति** । **मनश्चञ्चलं हि** प्रसिद्धम् । **प्रमाथि** प्रमथनशीलम् । देहेन्द्रियक्षोभकरम् । किञ्च **बलवत्** विवेकेनापि जेतुमशक्यम् । **दृढम्** । विषयवासनानुविद्धतया दुर्भेदं साधुविषये नेतुमशक्यम् । अत आकाशे दोधूयमानस्य **वायोः** वस्त्रेण कुम्भादिना वा निरोधनमशक्यं यथा, तथा **तस्य** मनसो **निग्रहं** निरोधनं दुष्करम् **अहं मन्ये** जानामि ॥

***अ०प्र०***— किञ्च एतत् स्फुटयति **चञ्चलं हीति** ।'

हे कृष्ण ![1], हि यस्मात्[2], चञ्चलं[3], प्रमाथि[4], बलवत्[5], दृढं[6], मनः[7], तस्मात् अहं[8], तस्य[9], निग्रहं[10] वायोरिव[11] सुदुष्करं[12], मन्ये इत्यन्वयः ।

हे कृष्ण ![1], हि = यस्मात्[2], चञ्चलं = स्वभावेनैव चपलं[3], किञ्च प्रमाथि = प्रमथन-शीलदेहेन्द्रियादिक्षोभकमित्यर्थः[4], किञ्च बलवत् = विदुषैः बलवद्विचारेणापि जेतुमशक्यं[5], किञ्च दृढं = विषयवासनाबद्धतया दुर्भेदं[6], एतादृशं मनः[7], यस्मात्तस्मात् अहं[8], तस्य = मनसः[9], निग्रहं = निरोधं[10] यथा वायोरिव, यथाऽऽकाशे दोधूयमानस्य वायोः कुम्भादिषु निरोधनमशक्यं तथा[11] सुदुष्करं = सर्वथा निरोधं कर्तुमशक्यं[12], मन्ये[13] इत्यर्थः ॥ ३४ ॥

**गीता**

## श्रीभगवानुवाच—

**असंशयं महाबाहो मनो दुर्निग्रहं चलम् ।**
**अभ्यासेन तु कौन्तेय वैराग्येण च गृह्यते ॥ ३५ ॥**

***वि०वि०***— यद्यपि मनो निगृहीतुमशक्यम् । तथाप्यभ्यासवैराग्याभ्यां तन्निरोधः कर्तुं शक्य एवेति श्रीभगवानुवाच **असंशयमिति** ॥

***सा०सं०***— अर्जुनोक्तं मनश्चाञ्चल्यादिकमङ्गीकृत्य मनोनिग्रहोपायं भगवानाह **असंशयमिति** । हे **महाबाहो** स्वभावतश्चञ्चलं **मनोऽसंशयं** यथा भवति तथा **दुर्निग्रहं** दुःखेन निरोद्धव्यम् । तथाऽभ्यासवैराग्याभ्यां तु **निगृह्यते** ॥

***अ०प्र०***— चञ्चलत्वादिकं अङ्गीकृत्यैव मनोनिग्रहोपायं **श्रीभगवानुवाच असंशयमिति** ।

अथान्वयः— हे महाबाहो ![१], चलं = चञ्चलत्वादि[२], मनः[३], दुर्निग्रहं = दुःखेनापि निरोद्धुमशक्यं[४], इति त्वं यद्वदसि तत् असंशयं निस्संशयमेव[५], हे कौन्तय ![६], तथापि अभ्यासेन तु[७], वैराग्येण च[८], गृह्यते[९], अभ्यासेन = चाञ्चल्यप्रतिबन्धात् श्रीविष्णौ अनन्यभक्त्याद्यभ्यासेन[७], वैराग्येण च = विक्षेपप्रतिबन्धाच्च समदुःखेत्यादि वैराग्येन वा[८], गृह्यते = निरोद्धुं शक्यते । यद्वा, स्वाधीनं क्रियते[९], तदुक्तम्—

मनसश्चञ्चलत्वाद्धि स्थितिर्योगस्य वै स्थिरा ।
विनाभ्यासे न शक्यः स्यात् वैराग्याद्वा न संशयः ॥

यथा मत्तमातङ्गः स्वयमेव भ्रान्तः शान्तो भवति तथा विषयैस्तृप्तं मनः कदाचित्स्वयमेव नियतं भविष्यति ॥ ३६ ॥

**भाष्यम्**

**उक्तं च—**

**"मनसश्चञ्चलत्वाद्धि स्थितिर्योगस्य वै स्थिरा ।**
**विनाऽभ्यासान्न शक्या स्यात् वैराग्याद्वा न संशयः ॥"**

**—इति व्यासयोगे ॥ ३४ ॥ ३५ ॥**

*प०टी०*— एतच्छ्लोकार्थं समर्थयन्नुत्तरश्लोकं व्याचष्टे **उक्तं चेति** ॥

*प्र०दी०*— अत्रागमं चाह— **उक्तं चेति** । एतेन 'असंशयं' इति परिहारवाक्यमपि व्याख्यातम् ॥

*भा०दी०*— **व्याख्यातमिति** । अत्यासन्नवैराग्येण दुर्ग्रहं वारस्त्यत्र संशय इत्युक्त्या ताभ्यां लभ्यत इत्यर्थस्यात्र प्रतीतेरिति भावः ॥

*भा०र०*— आगमे "अभ्यासं विना वैराग्यादिना योगस्य स्थिरा स्थितिर्न शक्या" इत्यन्वयः । 'आपादयितुम्' इति शेषः । "मनसश्चञ्चलत्वाद्धि स्थितिर्योगस्य न स्थिरा" इत्येतावत एव प्रकृतोपयोगित्वेऽप्यधिकांशोदाहरणप्रयोजनं दर्शयति **एतेनेति** । 'विना' इत्यर्धोदाहरणेनेत्यर्थः । न केवलं "न पश्यामि चञ्चलत्वात् स्थितिं स्थिराम्" इति प्रश्नवाक्यं पूर्वार्धेन व्याख्यातमिति अपिशब्दः ॥ ३४-३५ ॥

**गीता**

## असंयतात्मना योगो दुष्प्राप इति मे मतिः ।
## वश्यात्मना तु यतता शक्योऽवाप्तुमुपायतः ॥ ३६ ॥

*वि०वि०*— यथा मत्तमातङ्गः स्वयमेव श्रान्तः शान्तो भवति, तथा विषयैस्तृप्तं मनः कदाचित्स्वयमेव नियतं भवति किमभ्यासादिना इत्यत आह **असंयतात्मनेति** । अवशीकृतचित्तेन योगः सर्वात्मना मनोवृत्तिनिरोधः । विषयैर्मनसोऽभिवृद्धिरेव न कदाचिच्छान्तिरित्याशयः । उक्तं च—

'न जातुकामः कामानामुपभोगेन शाम्यति ।
हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते ॥' इति ॥

*सा०सं०*— ननु यथा मत्तमातङ्गः स्वयमेव श्रान्तः सन् शान्तो भवति । तथा विषयैस्तृप्तं मनः कदाचित् स्वयमेव नियतं भवति किमभ्यासादिनेत्यत आह **असंयतेति** । अभ्यासादितोऽवशीकृतचित्तेन **योगो दुष्प्रापो**ऽसाध्यः **इति मे मतिः** । अभ्यासादिना **वश्यात्मना** वशीकृतमनस्केन तु पुंसा **यतता** पुनरनेनोपायेन यत्नं कुर्वता **योगोऽवाप्तुं शक्य** इत्यर्थः ॥

*अ०प्र०*— एतावांस्त्वत्र निश्चय इत्याह **असंयतात्मनेति** ।

असंयतात्मना[१], योगः[२], दुष्प्रापः[३], वश्यात्मना तु[४], उपायतः[५], यतता[६], आप्तुं[७], शक्य एव[८], इति मे[९], मतिः इत्यन्वयः ।

असंयतात्मना = उक्तप्रकारेण अभ्यासवैराग्यादि साधनरहितत्वाद् वशीकृतं आत्मा चित्तं यस्य सः असंयतात्मा तेन तथा पुरुषेण[१], यद्वा असंयतं अनियतं योगः असंयोगः । यद्वा, सर्वात्मना मनोवृत्तिनिरोधरूपः योगः[२], दुष्प्रापः = प्राप्तुमशक्यः[३], वश्यात्मना तु = वशवर्ति आत्मा चित्तं यस्य सः वश्यात्मा तेन तथा अभ्यासवैराग्याभ्यां वशोवर्ति आत्मा चित्तं यस्य सः तेन वशीकृतमनसा तु[४], उपायतः यतता = योगशास्त्रविहित-पुनश्चानेनैवोपायेन प्रयत्नं कुर्वता पुंसा तु[६], पूर्वोक्तयोगः आप्तुं = प्राप्तुं[७], शक्य एव = शक्यते[८], इति मे = मम[९], मतिः = निश्चयः[१०] विषयैः मनोवृद्धिः स्यान्न कदाचिच्छान्तिरित्यर्थः । तदुक्तम्—

'न जातुकामः कामानां उपभोगेन शाम्यति ।
हविषा कृष्णवर्त्मेव भूयएवाभिवर्धते ॥' इति ।

'शुभेच्छारहितानां तु द्वेषिणां च रमापतौ ॥
नास्तिकानां तु वै पुंसां सदा मुक्तिर्न जायते ॥' इति च ॥ ३६ ॥

**भाष्यम्**

**न च कदाचित् स्वयमेव मनो नियम्यते—**

**"शुभेच्छारहितानां च द्वेषिणां च रमापतौ ।**
**नास्तिकानां च वै पुंसां सदा मुक्तिर्न युज्यते ॥"**

**—इति निषेधात् ब्राह्मे ॥ ३६ ॥**

***प०टी०***— ननु किमभ्यासवैराग्याभ्याम् ? मत्तमातङ्गवन्मनसः स्वयमेवोपरमादित्याशङ्कां परिहर्तुमुत्तरश्लोकं तात्पर्यतः सप्रमाणकं व्याचष्टे **न चेति** ॥

***न०टी०***—ननु कालतः स्वयमेव मनो नियम्यते । किं तत्राभ्यासेन ? वैराग्येण वा ? इत्यत आह **न चेति** । सदा इत्यस्यादितस्त्रिष्वपि सम्बन्धः । अनेन 'असंयत...' इति श्लोकस्य तात्पर्यमुक्तं भवति ॥

***प्र०दी०***— 'असंयत' इति श्लोको व्यर्थ इव प्रतीयते । तन्निवृत्यामाशङ्कां सूचयन् तात्पर्य-माह— **न चेति** । यथा मत्तमातङ्गः स्वयमेव श्रान्तः शान्तो भवति तथा विषयैः तृप्तं मनः कदाचित् स्वयमेव नियतं भवति । किमभ्यासादिना इत्येतन्नैवेत्यर्थः । कुत इत्यत आह—

**शुभेति** । सदेति पूर्वेण सम्बन्धः । अनेनात्र शुभेच्छादिकमप्युपलक्षितमिति सूचितम् । मुक्तिबीजत्वान्मनोनियमस्य मुक्तिरित्युक्तम् ॥

*भा०दी०*— **अनेनात्र शुभेच्छादिकमपीति** । **अत्र** गीतायाम् । 'वश्यात्मना तु यतते'-त्यनन्तरं शुभमिच्छता हरिद्वेषनास्तिक्याभ्यां हीनेनेत्युपलक्षितमित्यर्थः । 'मनोनियमनं न जायत' इति वक्तव्ये मुक्तिर्न जायत इत्युक्तिरयुक्तेत्यतः प्रकृतार्थसंवादाय मुक्तिपदे मुक्तिहेतुमनोनियतिरेव ग्राह्येति भावेनाह **मुक्तिबीजत्वादिति** ॥ ३६ ॥

*भा०र०*— **व्यर्थ इवेति** । आपाततः तथाप्रतीतेः 'इव' इत्युक्तम् । **मत्तमातङ्गः** मत्तगजः । 'अभ्यासादिना' इत्यत्रादिशब्देन वैराग्यग्रहः । **पूर्वेणेति** । सदा शुभेच्छारहितानाम्, सदा रमापतौ द्वेषिणाम्, सदा नास्तिकानामित्येवं पूर्वेण सम्बध्यत इत्यर्थः । **अत्र** "वश्यात्मना तु यतता" इति गीतावाक्ये, सदाऽपि शुभेच्छा, सदा रमापतावद्वेषः, आस्तिकत्वं च योगावाप्तिं कामयमानस्य विशेषणान्यपेक्षितानि इति वश्यात्मपदेनोपलक्षितानि ज्ञातव्यानीति सूचितमित्यर्थः । "अभ्यासेन तु कौन्तेय" इति गीतावाक्ये अभ्यासवैराग्यपदाभ्यां शुभेच्छादिकं लक्षणीयमिति सूचितमिति **अपरे** । "अभ्यासादिकं विना मनो नियन्तुं न शक्यते" इति प्रकृतेऽर्थे "मुक्तिर्न जायते" इत्युक्तिः कथं प्रमाणम् ? इत्यतः अत्र मुक्तिशब्देन लक्षणया मनोनियमनमेव ग्राह्यम् इति भावेन लक्षणाबीजं शक्यसम्बन्धं दर्शयति **मुक्तिबीजत्वादिति** । "मन एव मनुष्याणां कारणं बन्धमोक्षयोः" (वि.पु.) इत्यादिशास्त्रादिति भावः ॥ ३६ ॥

**गीतातात्पर्यनिर्णयः**

## अतो विष्णवनुवर्तिषु स्ववत् स्नेहः कर्तव्यः ॥ ३२-३६ ॥

*प्रका०*— "आत्मौपम्येने"त्यस्यार्थमाह **अतो विष्णिवति** । यतो विष्णुः सतां बन्धुः नित्यं सखा, यत्र यथावृत्तिः विहितवर्तनं तथेत्याद्युक्तम् । अतो विष्णुभक्तेषु स्वस्मिन्निव स्नेहः कर्तव्य इत्यर्थः ॥

*न्या०दी०*— योगिन एव इत्थम्भावान्तरमुच्यते 'आत्मा' इति । तत्सर्वप्राणिविषयमित्यन्यथाप्रतीतिनिरासाय व्याचष्टे **अत इति** ॥ अत्र भगवदीयेष्वेव स्वस्मिन्निव स्नेहो विधीयते, न त्ववैष्णवेषु । बन्धुरात्मेति वैष्णवानामेव भगवत्प्रियत्वस्योक्तत्वात्, अनात्मन इत्यवैष्णवानां भगवदप्रियत्वस्योक्तत्वादिति भावः ॥

**गीता**

## अर्जुन उवाच—

**अयतिः श्रद्धयोपेतो योगाच्चलितमानसः ।**
**अप्राप्य योगसंसिद्धिं कां गतिं कृष्ण गच्छति ॥ ३७ ॥**

*वि०वि०*— योगभ्रष्टस्य गतिं जिज्ञासुः अर्जुन उवाच **अयतिरिति** । अयतिरप्रयत्नः । श्रद्धयोपेतः आस्तिक्यबुध्या युक्तः । योगस्य संसिद्धिं सम्पूर्तिमप्राप्य ॥

*सा०सं०*— अभ्यासादिहीनस्य फलं पृच्छति **अयतिरिति** । **अयतिरप्रयत्नः** । **श्रद्धया** आस्तिक्यबुद्ध्या **उपेतो** युक्तः । **योगात्** ध्यानरूपोपायात् । **चलितमानसः योगसंसिद्धिं** ध्यानसम्पूर्तिं ध्यानफलम् । ज्ञानमिति यावत् । **अप्राप्य** हे **कृष्ण कां गतिं गच्छतीति** ॥

*अ०प्र०*— अभ्यासवैराग्याभावेन कथञ्चिदप्राप्तसम्यग्ज्ञानः किं फलमाप्नोतीति अर्जुनप्रश्नः **अयतिरिति** ।

हे कृष्ण ! श्रद्धयोपेतः[१], अयतिः[२], अत एव योगाच्चलितमानसः सन्[३], योगसंसिद्धिं[४], अप्राप्य[५], कां गतिं[६], गच्छति ? इत्यन्वयः ॥

हे कृष्ण ! श्रद्धयोपेतः = प्रथमं श्रद्धया आस्तिक्यबुद्ध्या उपेतः सहितः ध्यानयोगं कुर्वाणोऽपि[१], अयतिः = अभ्यासादिप्रयत्नशून्यः शिथिलाभ्यास इत्यर्थः[२], अत एव योगाच्चलित-मानसः सन् = योगात् चलितं मानसं चित्तं यस्य तथा योगभ्रष्टमनः सन्, मन्दवैराग्य इत्यर्थः[३], योगसंसिद्धिं = योगस्य संसिद्धिं ज्ञानं स्वफलोत्पत्तिरूपां सम्पूर्तिं वा[४], अप्राप्य एवमभ्यासवैराग्य-शैथिल्यात् ज्ञानं अप्राप्य[५], कां गतिं आप्नोति = गच्छतीत्यर्थः ॥ ३७ ॥

**गीता**

**कच्चिन्नोभयविभ्रष्टश्छिन्नाभ्रमिव नश्यति ।**
**अप्रतिष्ठो महाबाहो विमूढो ब्रह्मणः पथि ॥ ३८ ॥**

*वि०वि०*— वायुना द्वेधा कृत मेघ इव किं नश्यति आहोस्विन्न नश्यति । अप्रतिष्ठो निराश्रयः ॥ ३८ ॥

***सा०सं०***— **कच्चित्** किमित्यर्थः । **उभयविभ्रष्टः** उभयस्मात् स्वर्गापवर्गरूपाद्विभ्रष्टः प्रच्युतः । ऐहिकामुष्मिकपुमर्थाद्विभ्रष्ट इति वा । यद्वा - स्वर्गाद्युपायात् काम्यकर्मानुष्ठानादपवर्गोपायाद्ध्यानाच्च विभ्रष्टः । **अप्रतिष्ठो** निराश्रयः । अत एव **ब्रह्मणः पथि** परब्रह्मप्राप्त्युपाये **विमूढः** वायुना द्वेधाकृतमेघ **इव** किं **नश्यति** नरकाद्यनर्थं प्राप्नोत्युत न नश्यति ॥

***अ०प्र०***— प्रश्नाभिप्रायं विवृणोति—

हे महाबाहो ![१], उभयविभ्रष्टः[२], ब्रह्मणः[३], पथि विमूढः[४], अप्रतिष्ठः[५], योगभ्रष्टः[६], छिन्नाभ्रमिव कच्चित्[७], न नश्यति[८] इत्यन्वयः ।

हे महाबाहो ![१], उभयविभ्रष्टः = तत्रैकात् ब्रह्मप्राप्तिः मोक्षं, द्वितीयात् संसारासक्तिः । तत्कथं योगाच्चलितमानसः योगानिष्पत्तेश्च ब्रह्मप्राप्तिः मोक्षं नाप्नोति । कर्मणां अननुष्ठानात् कर्मणां कृते सति श्रीविष्णौ अनर्पितत्वाच्च न तावत् कर्मफलं संसारासक्तिरूपं स्वर्गादिकं प्राप्नोति । एवं उभयविभ्रष्टः उभयात् पूर्वोक्तप्रवृत्ति-निवृत्तिमार्गद्वयात् विभ्रष्टः प्रचलितः[२], अत एव ब्रह्मणः = योगाभावात् ब्रह्मणोऽपि प्राप्ति-उपाये मोक्षाख्ये[३], पथि = मार्गे[४], विमूढः सन् = अप्रतिष्ठश्च काम्यकर्माभावात् स्वर्गाद्याश्रयरहितश्च भूत्वा एवं तूभयविशेषणयुक्तः योगभ्रष्टः[६], छिन्नाभ्रमिव = यथा वायुना छिन्नमभ्रं पूर्वस्मादभ्रात् विश्लिष्टं अभ्रान्तरं च प्राप्य मध्य एव विलीयते तद्वत्[६], कच्चित् किं[७], न नश्यति[८], नश्यत्येवेत्यर्थः ॥ ३८ ॥

**गीता**

## एतन्मे संशयं कृष्ण छेत्तुमर्हस्यशेषतः ।
## त्वदन्यः संशयस्यास्य छेत्ता न ह्युपपद्यते ॥ ३९ ॥

***सा०सं०***— **एतन्मे संशयम्** एतं संशयम् । व्यक्तोऽर्थः ॥

***अ०प्र०***— त्वयैव सर्वज्ञेनाऽयं मम सन्देहो निरसनीयः । त्वत्तोऽन्यस्तु सन्देहनिवर्तको नास्तीत्याह **एतन्मे संशयमिति** ।

हे कृष्ण ![१], एतन्मे[२,३], संशयं[४], अशेषतः[५], छेत्तुं[६], त्वमर्हसि[७], अस्य[८], संशयस्य[९], छेत्ता = निवर्तकः[१०] त्वदन्यः[११] न हि[१२], उपपद्यते इत्यन्वयः ॥

**गीता**

## श्रीभगवानुवाच—

**पार्थ नैवेह नामुत्र विनाशस्तस्य विद्यते ।**
**न हि कल्याणकृत्कश्चिद्दुर्गतिं तात गच्छति ॥ ४० ॥**

*वि०वि०—* अत्र परिहारं श्रीभगवानुवाच **पार्थेत्यादिना** ॥

*सा०सं०—* प्रश्नस्योत्तरमाह सार्धैश्चतुर्भिः । हे **पार्थ इह** लोके । **अमुत्र** परलोके च **नाशस्तस्य** नास्ति । इह नाशस्तिर्यगादिदुर्गतिप्राप्तिः । परत्र नाशो नरकप्राप्तिः । तद्द्वयं तस्य योगभ्रष्टस्य नेत्यर्थः । नञ्द्वयमादरार्थम् । कुत इत्यत उक्तम् **न हीति** । **कल्याणकृत्** श्रद्धया किञ्चित् कालं ध्यानादिकृदित्यर्थः ॥

*अ०प्र०—* अत्रोत्तरं **श्रीभगवानुवाच** – **पार्थेति** सार्धचतुर्भिः ।

हे पार्थ ![१], तस्य[२], इह[३], अमुत्र च[४], विनाशः[५], नैव[६], विद्यते[७], हे तात ![८], यतः कल्याण-कृत्[९], कश्चिदपि[१०] दुर्गतिं[११] न गच्छती[१२]त्यन्वयः ।

हे पार्थ ![१], तस्य = योगभ्रष्टस्य[२], इह = इहलोके उभयस्यात्यागात् पातित्यं[३], अमुत्र च = परलोके[४], विनाशो = नरकप्राप्तिः तदुभयमपि[५], नैव विद्यते = नास्त्येव[६,७], लोकरीत्या लालयन् सम्बोधयति हे तातेति[८], हि यतः कल्याणकृत् = कल्याणं मोक्षसाधनं करोतीति तथा शुभकारी मुमुक्षुः श्रद्धायोगकारित्वात्[९], कश्चिदपि[१०] दुर्गतिं = अन्याप्राप्तिं[११] न गच्छति = न प्राप्नोऽतीत्यर्थः। ध्वन्यर्थेन सद्गतिं मोक्षं गच्छतीत्यभिप्रायः । यद्वा, श्रद्धायोगे प्रवृत्तत्वात् तातेति ॥ ४० ॥

**गीता**

**प्राप्य पुण्यकृतान् लोकानुषित्वा शाश्वतीः समाः ।**
**शुचीनां श्रीमतां गेहे योगभ्रष्टोऽभिजायते ॥ ४१ ॥**

*वि०वि०—* लोकान् प्राप्य तेषु अनेकेषु संवत्सरेषु उषित्वा ॥

*सा०सं०—* तर्हि किं प्राप्नोतीत्यत आह **प्राप्येति** । **पुण्यकृतान्** पुण्यसम्पाद्यान् **लोकान् प्राप्य,** तेषु **शाश्वतीः समाः** अनेकसंवत्सरान् **उषित्वा शुचीनां श्रीमतां** धनिनां **गेहे अभिजायते** ॥

*अ०प्र०*— तर्हि किमसौ प्राप्नोतीत्यत आह **प्राप्येति** ।

स योगभ्रष्टः[1], पुण्यकृतान्[2], लोकान्[3], प्राप्य[4], तत्र शाश्वतीः समाः[5], उषित्वा[6], पुनः पुण्यशेषेण भुवि शुचीनां[7], श्रीमतां[8], गेहे[9], अभिजायते इत्यन्वयः ।

पूर्वोक्तः सः योगभ्रष्टः पुण्यकृतान् = अश्वमेधादियज्ञादिपुण्यकारिणां[2], लोकान् = योगारम्भमात्रपुण्यजान् स्वर्गादिलोकान्[3], प्राप्य = कैवल्यकामो गत्वा तत्र[4], शाश्वतीः समाः = शाश्वतीः बह्वीः समाः संवत्सरान्[5], उषित्वा = वासं कृत्वा इत्युक्तेन तत्रत्यालौकिकामोघभोगान् यावन्मनसो जिहासोत्पद्यते तावत् भुङ्क्तेत्यभिप्रायः[6], पुनः पुण्यशेषेण भुवि शुचीनां = ये सकलधर्मालयाः नीतिमार्गप्रवर्तकाः सत्यधूतात्मानस्तेषां सदाचाराणां[7], श्रीमतां = पुण्यार्जितसर्वसुखहेतुभूतप्रवर्धमानैश्वर्यवतां[8], गेहे[9], अभिजायते = जन्म प्राप्नोतीत्यर्थः ॥

**गीता**

# अथवा योगिनामेव कुले भवति धीमताम् ।
# एतद्धि दुर्लभतरं लोके जन्म यदीदृशम् ॥ ४२ ॥

*वि०वि०*— ईदृशं शुचीनां श्रीमतां योगिनां वा कुले भवेत् ॥

*सा०सं०*— **धीमतां** ज्ञानिनां **योगिनां कुले** वंशे वा भवति । **यत्** ईदृक् । **जन्म** उक्तं द्विविधं जन्म । **एतत्** दुर्लभं कष्टलभ्यं न सुलभसाध्यम् । **हि** प्रसिद्धम् ॥

*अ०प्र०*— अल्पकालाभ्यस्तयोगभ्रंशे गतिरेषा मुक्ता । चिराभ्यस्तयोगभ्रंशे तु पक्षान्तरमाह **अथवेति** ।

अथवा[1], हि = यस्मात्[2], योगिनां[3], धीमतामेव[4], कुले भवति[6], तस्मादेतत्[7], यत् ईदृशं[9], जन्म[10] लोके[11] दुर्लभतरमित्यन्वयः ॥

अथवा = चिरकालमभ्यस्तयोगभ्रष्टः[1], हि = यस्मात्[2], योगिनां = अत्र योगो नाम ज्ञानं, ज्ञानिनां[3], अत एव धीमतां = विष्णुरस्सर्वोत्तमः, स्वतन्त्रः, तत्प्रतिबिम्बो जीवस्तदधीन इति निश्चयात्मकं ज्ञानं येषां ते धीमतः । तेषां धीमतां एव[4], कुले भवति = कुले जायते न तु पूर्वोक्तानामनारूढयोगानां कुले भवति[5,6], तस्मात् = एतत्[7], यत्[8], ईदृशं = अलौकिकं[9], जन्म[10] लोके = मनुष्यलोके[11] दुर्लभतरं = केषामप्यलभ्यं मोक्षहेतुत्वात् इत्यर्थः ॥ ४२ ॥

**गीता**

**तत्र तं बुद्धिसंयोगं लभते पौर्वदेहिकम् ।**
**यतते च ततो भूयः संसिद्धौ कुरुनन्दन ॥ ४३ ॥**

*वि०वि०*— संसिद्धौ योगसंसिद्धिविषये ॥

*सा०सं०*— **तत्र** द्विप्रकारेऽपि जन्मनि । **पौर्वदैहिकं** पूर्वदेहे भवन्तम् । **बुद्धिसंयोगं** मनोयोगम् । ध्यानमिति यावत् । **लभते** । **ततो भूयः** पौर्वदैहिकादधिकम् । **संसिद्धौ** ध्यान-सम्पूर्तौ । **यतते** यत्नं करोति । हे **कुरुनन्दन** ॥

*अ०प्र०*— ततः किमत आह **तत्रेति** सार्धेन ।

हे कुरुनन्दन ![१], तत्र[२], पौर्वदेहिकं[३], तमेव[४], बुद्धिसंयोगं[५], लभते[६], ततः[७], भूयः[८], संसिद्धौ[९], यतते[१०] चेत्यन्वयः ॥

हे कुरुनन्दन ![१], तत्र = द्विप्रकारेऽपि जन्मनि बाल्यदशायामेव[२], पौर्वदेहिकं = पूर्वस्मिन् देहे भवं पौर्वदेहिकं विष्णुसर्वोत्तमज्ञानसाधनं लब्धं[३], तमेव = प्राक् देहे यत् ज्ञानं जातं यत्र जीवितं समाप्त तमेव[४], बुद्धिसंयोगं = बुद्धेर्मेलनम् । यद्वा, ब्रह्मविषयया योगबुद्ध्या संयोगं[५], लभते[६], ततश्च[७], भूयः = अधिकं यथा भवति तथा[८], संसिद्धौ = योगसम्पूर्तिविषये मोक्षे[९], यतते च = प्रयत्नं करोतीत्यर्थः । भूय इत्यस्य उपलक्षणं अनेकजन्मान्तरे पूर्वजन्मसाधनादपि उत्तरोत्तरेषु जन्मसु अधिकाधिकसाधनं मत्प्राप्तौ कुरुत इत्यर्थः ॥ ४३ ॥

**भाष्यम्**

**अयतिरप्रयत्नः ॥ ३७ - ४३ ॥**

*प०टी०*— 'अयतिः' इत्यचतुर्थाश्रमीति शङ्का मा भूदित्याह **अयतिरिति** ॥

*न०टी०*—**अयतिरप्रयत्नो** न त्वसंन्यासीति भावः ॥

*प्र०दी०*— अचतुर्थाश्रमीति प्रतीतिनिरासायाह— **अयतिरिति** ॥

*भा०र०*— न विद्यते यतिः = प्रयत्नो यस्य स तथोक्तः, "यती = प्रयत्ने" इति धातोरिति भाष्यभावः स्फुटत्वान्नोक्तः ॥

**गीतातात्पर्यनिर्णयः**

**अयतिः अप्रयत्नः । "प्रयत्नाद्यतमानस्तु" इति वाक्यशेषात् । योगशब्दस्य उपायार्थत्वेऽप्यत्र उपायविशेष एव ध्यानयोगादिर्विवक्षित इति न विरोधः ॥ ॥ ३७-४३ ॥**

*प्रका०*— "अयतिः श्रद्धयोपेत" इत्यत्र अयतिशब्दार्थमाह **अप्रयत्न इति** । "प्रयत्नाद्यत-मानस्तु योगी संशुद्धकिल्मिषः । अनेकजन्मसंसिद्धः ततो याति परां गतिमि"त्युत्तरत्र श्रवणात् । अत्र योगाभ्यासप्रयत्नातिशयवान् परां गतिं यातीति प्रतीत्या पूर्वत्र योगाभ्यासरहितः योगसिद्धिं न प्राप्नोतीति युज्यते । "सन्दिग्धे तु वाक्यशेषादि"ति जैमिनिसूत्रात् । अतोऽत्र अयमितिशब्देन गृहस्थादिर्नाशङ्कनीय इत्यर्थः । ननु श्रद्धादेरपि योगशब्दार्थत्वात् "अयतिः श्रद्धयोपेतो योगा-च्चलितमानस" इत्युक्तिः कथं युज्यत इत्यत आह **योगशब्दस्येति** ॥

*न्या०दी०*— अयतिरित्यर्जुनप्रश्नवाक्यगतायतिपदस्य गृहस्थादिरित्यन्यथाप्रतीतिनिरासा-यार्थमाह **अयतिरिति** ॥ गृहस्थादिरेवार्थः किं न स्यादित्यत आह **प्रयत्नादिति** ॥ अयतेस्तत्र श्रद्धावतः का गतिरिति प्रश्ने जन्मान्तरे प्रयत्नवान् भवतीति परिहारस्योक्तत्वादप्रयत्न एवायति-रवगम्यते । अन्यथा जन्मान्तरे श्रद्धावशात् चतुर्थाश्रमी भवतीति परिहारप्रसङ्गादिति भावः । ननु योगशब्दस्य ज्ञानोपायार्थत्वात् श्रद्धावान् लभते ज्ञानमित्यादेः श्रद्धाया अपि ज्ञानोपायत्वात् श्रद्धयोपेतो योगाच्चलितमानस इति परस्परविरोध इत्यत आह **योगेति** ॥ भवेदयं विरोधो यदि योगशब्देनात्र सामान्यतो ज्ञानोपायोऽभिधीयते । न च तदस्ति । ध्यानस्यैव विवक्षितत्वात् । न च योगशब्दस्य ज्ञानोपायवाचित्वविरोधः । ध्यानस्यापि ज्ञानोपायविशेषत्वादिति भावः ॥ ३७-४३ ॥

**गीता**

**पूर्वाभ्यासेन तेनैव ह्रियते ह्यवशोऽपि सः ।**
**जिज्ञासुरपि योगस्य शब्दब्रह्मातिवर्तते ॥ ४४ ॥**

*वि०वि०*— ननु कथं योगभ्रष्टस्य पुण्यलोकादिकमित्यत आह **जिज्ञासुरिति** । **योग-स्येति** । द्वितीयार्थे षष्ठी । योगं जिज्ञासुरपि ज्ञातव्यो मया योग इति । यस्यातीवेच्छा सोऽपि विधिनिषेधात्मकं शब्दाख्यं बह्मातिवर्ततेऽतिक्रामति । परं ब्रह्म प्राप्नोतीत्यर्थः ॥

***वा०ल०***— 'शब्दब्रह्मातिवर्तते' इत्यत्र वेदाभ्यासयोगाभ्यासयोरेकेनैव मनसा कर्तुमशक्यत्वात् वेदाभ्यासे किञ्चिदुपरतो भवतीत्यर्थः । यद्वा, शब्दरूपवेदावृत्तिमतिवर्तते, अर्थरूपं परम्ब्रह्मैव ध्यायन्नास्त इत्यर्थः ॥

*॥ इति श्रीमद्भगवद्गीतालक्षालङ्कारे षष्ठोऽध्यायः ॥*

***सा०सं०***— **तेनैव पूर्वाभ्यासेनावशोऽपि सन् ह्रियते** ध्यानादौ बुद्धिपूर्वं स्वरसया प्रवृत्तिहीनोऽपि पूर्वाभ्यासवशात् ध्यानादिकर्मणि प्रवर्तत इत्यर्थः । योगभ्रष्टस्य पुण्यलोकादिकमित्येतद् कैमुत्येनाप्याह **जिज्ञासुरपीति** । **योगस्य** ध्यानयोगस्य **जिज्ञासुरपि** केवलं योगज्ञानेच्छुरपि । "न लोकाव्यय.." (२-३-६९) इति नञा निर्दिष्टस्य अनित्यत्वात् योगस्येति साधु । (**शब्दब्रह्म** विधिनिषेधरूपशब्दब्रह्म **अतिवर्तते** । विधिनिषेधातीतो भवति ।) मुक्तो भवतीति यावत् । किमु किञ्चित् कालं योगानुष्ठातेति भावः ॥

***अ०प्र०***— तत्र हेतुः **पूर्वाभ्यासेनेति** सार्धेन ।

सः[१], अवशोऽपि[२], तेनैव[३], पूर्वाभ्यासेन[४], हि = यस्मात्[५], ह्रियते[६], तस्मात् योगस्य[७], जिज्ञासुरपि[८], शब्दब्रह्म[९], अतिवर्तते इत्यन्वयः ।

सः = योगभ्रष्टः[१], अवशोऽपि = कुतश्चिदन्तरायादनिच्छन्नपि । यद्वा, अक्रियमाणाभ्यासोऽपि[२], तेनैव[३], पूर्वाभ्यासेन = पूर्वदेहकृतेन योगाभ्यासेन योगसंस्कारेण । यद्वा, पूर्वजन्मकृत अभ्यासबलेन[४], हि = यस्मात्[५], ह्रियते = योगे समाकृष्यते जन्मान्तरे च । यद्वा, श्रीहरिप्रसादजन्यपूर्वसंस्कारबलात् विषयेभ्यः परावृत्य योगनिष्ठः क्रियते[६], तस्मात् = तदेवं पूर्वसंस्कारवशेन प्रयत्नं कुर्वन् शनैर्मुच्यत इत्यत्र इममर्थं कैमुत्यन्यायेन स्फुटयति **जिज्ञासुरिति** सार्धेन ॥ जिज्ञासुरिति तस्मात् योगस्य[७], जिज्ञासुरपि = योगस्य स्वरूपं जिज्ञासुः ज्ञातव्यो मम योग इति । यस्यातीवेच्छा एवम्भूते योगे प्रविष्टमात्रः पापवशात् योगभ्रष्टोऽपि ज्ञातुमिच्छुः तया जिज्ञासया[८], शब्दब्रह्म = विधि-निषेधोक्तवेदात्मकशब्दाख्यं ब्रह्म । यद्वा, शब्दब्रह्म प्रणवः तं[९], अतिवर्तते = वेदोक्तकर्मफलानि अतिक्रमति । यद्वा, प्रणवं अतीत्य गच्छति[१०] ततोऽप्यधिकफलं प्राप्य मुच्यते इत्यर्थः । यद्वा, विध्यादिराहित्येन मुक्तिमेति किमु योगानुष्ठानेनेति भावः । तदुक्तम्—

> अतीव श्रद्धया युक्तो जिज्ञासुर्विष्णुतत्परः ।
> ज्ञात्वा ध्यात्वा तथा दृष्ट्वा बहुभिर्जन्मभिः पुमान् ।
> विशेन्नारायणं देवं नान्यथा तु कथञ्चन ।

यद्वा, योगस्य जिज्ञासुरपि मुच्यते किमुत ज्ञानादिमान् इति स्तुतिः क्रियते । मोक्षोपायस्य जिज्ञासुरपि केवलपाठकात् विशिष्टः किमुत तद्विद्वान् किं पुनः यस्तदास्थितवचनात् ॥ ४४ ॥

### भाष्यम्

**योगस्य जिज्ञासुरपि, ज्ञातव्यो मया योग इति यस्यातीवेच्छा सोऽपि । शब्दब्रह्मातिवर्तते, परं ब्रह्म प्राप्नोतीत्यर्थः ॥ ४४ ॥**

***प०टी०*—** योगसमभ्यसतो मोक्षो भवतीति न चित्रम् । योगज्ञानमिच्छतोऽपि मोक्षसम्भवादित्यभिप्रायेण 'जिज्ञासुरपि' इति व्याचष्टे **योगस्येति** । शब्दब्रह्म विधिनिषेधादिरूपो वेदः ॥

***न०टी०*—**न च योगमभ्यसंस्ततो विभ्रष्टस्तेनैवाभ्यासलेशेन योगमासाद्याप्नोति भगवन्तमित्येतदाश्चर्यम् । ततोऽत्यन्तं योगज्ञानेच्छुरपि क्रमेणाप्नोति भगवन्तमित्यभिप्रायेण जिज्ञासुरपीति श्लोकं व्याचष्टे **योगस्येति । ज्ञातव्यः** इत्यादिनाऽत्र ज्ञानेच्छुरेव जिज्ञासुः, न तु विचारकृदिति द्योतयति । ब्रह्मेशानादिसर्वशब्दार्थत्वात्, शब्दब्रह्म हिरण्यगर्भः । तं यदाऽति वर्तते तदा परब्रह्मैव प्राप्नोतीत्यभिहितं भवति ॥

***प्र०दी०*—** उप्रत्ययप्रयोगे ''न लोकाव्यय'' इति षष्ठीनिषेधाद्योगस्य स्वरूपमित्यध्याहृत्य कश्चिद्व्याख्यातवान् । स श्रमो वृथैव । ''नञा निर्दिष्टमनित्यं'' इत्यस्यानित्यत्वात् । अतः कात्यायनः ''द्विषः शतुर्वा वचनं'' इत्याद्यवोचदित्यभिप्रेत्याह— **योगस्येति** । 'ब्रह्मजिज्ञासा' इत्यादाविव विचारार्थताशङ्कानिरासाय व्याचष्टे— **ज्ञातव्य इति** । 'अतीव' इत्युप्रत्ययस्यार्थः । ''सनाशंसभिक्ष उः'' (३-२-१६८) इति ताच्छीलादौ तस्य विहितत्वात् । इच्छाऽर्थे बाधकाभावादिति भावः । 'शब्दब्रह्मातिवर्तते' इत्येतत् वेदोक्तकर्मकारिभ्योऽतिरिच्यत इति कश्चिद्व्याचष्टे । तदसत् । ''ततो याति परां गतिं'' इत्यस्यार्थस्य परामर्शादिति भावेनाह— **शब्देति** । शब्दब्रह्मशब्देन वैदिकविधिनिषेधावत्रोच्येते । तदतिवर्तनं परब्रह्मप्राप्तस्यैवेत्यत एवमुक्तम् ॥

***भा०दी०*—** ''इकोऽचि विभक्तौ'' (७-१-७३) इत्यत्र अच्ग्रहणम् । हे वारीति सम्बुध्यन्तवारिशब्दे नुगागमनिवृत्त्यर्थं क्रियते । इको विभक्तावपि ''न लु मताङ्गस्य'' (१-१-६३) इति सूत्रेण स्वमोर्नपुंसकादिति लुकि (७-१-२३) लुप्तविभक्तेरकार्यकरत्वेन विभक्तिपरत्वाभावेनैव नुमो प्राप्ते व्यर्थं सदजग्रहणम् । न लुमताङ्गस्य (१-१-६३) इति नञा निर्दिष्टस्यानित्यत्वं ज्ञापयतीत्याहुः । स्वयं ज्ञापकान्तरमाह **न एवेति** । 'न लोकाव्ययनिष्ठाखलर्थतृणाम्' (२-३-६९) इति निषेधस्य अनित्यत्वादेव द्विष अप्रीताविति धातोः शत्रन्तस्य योगे षष्ठीनिषेधो विकल्पेन भवति

चोरं द्विषन् चोरस्य द्विषन् इति न लोकस्तत्र एव वार्तिककृदवोचत् । अतो ज्ञायते न लोकेत्यादि (२-३-६९) सूत्रनिषेधो नित्य इति भावः । **तच्छीलादाविति** । 'आह्वे तच्छीलतद्धर्मतत्साधु-कारिष्वि'त्यधिकृत्य सनन्ताद्धातोः शंसस्तुताविति धातोः भिक्षशब्दाच्च उप्रत्ययविधानादित्यर्थः । **परां गतिमितीति** । यान्ति परां गतिमुत्तरश्लोकस्थेनाशब्द-ब्रह्मेत्यनेनोक्तार्थस्य परामर्शादित्यर्थः । **अत एवेति** । तपस्विपदेन ज्ञानिग्रह इति ज्ञापनार्थत्वादेव ज्ञानिभ्य इति पदं पूर्वं व्याख्यातम् । अन्यथा पाठ-क्रमात्तपस्विपदमेव प्राग्व्याख्येयमिति भावः ॥

*भा०र०*— **उप्रत्ययेति** । जिज्ञासुशब्दस्य ''सनाशंसभिक्ष उः'' इति विहितोप्रत्ययान्तत्वात् तद्योगे ''कटं चिकीर्षुः'' इत्यादाविव द्वितीयैव स्यात्, न तु षष्ठीति । तद्घटनाय सङ्करः ''**जिज्ञासुः** योगस्य स्वरूपं ज्ञातुमिच्छन्'' (शां.भा. ६.४४) इति स्वरूपपदमध्याहृत्य व्याख्यातवानित्यर्थः । अनित्यत्वज्ञापकमाह **अत एवेति** । ''द्विष = अप्रीतौ'' इत्यतो ''द्विषोऽमित्रे'' इति शतृप्रत्यये 'द्विषन्' इति रूपम् । तद्योगे विकल्पेन षष्ठीप्रतिषेध इति वार्तिकार्थः । ''न लोक'' इति सूत्रे 'तृन्' इति प्रत्याहारस्य ग्रहणम् । '' 'तृन्' इति नेदं प्रत्ययग्रहणम् किं तर्हि ? प्रत्याहारग्रहणम् । 'लटः शतृ' इत्यतः प्रभृति आ तृनो नकारात्'' इति भाष्यादावुक्तेः । तथा च द्विषः शतुरपि प्रत्याहारा-न्तःपातित्वेन तद्योगे नित्यं निषेधः प्राप्त एव । तत्र च विकल्पारम्भात् ज्ञापकात् ''न लोक'' इति निषेधोऽनित्यः । ज्ञापकस्य सामान्यापेक्षत्वादिति भाव इति **केचित्** ।

**स्वामिनस्तु** ''न लुमता'' इति निषेधस्य नित्यत्वे वारिशब्दे सम्बुद्धेर्लुकि तन्निमित्तनुमो अप्राप्तेः ''इकोऽचि'' इत्यच्ग्रहणं व्यर्थम् । न चान्यत्र हलादौ नुमभावार्थमिदम्, कृतेऽपि नुमि तल्लोपसम्भवात् । अतः ''इकोऽचि'' इत्युक्तेरेवं ज्ञायते– ''न लुमता'' इत्यस्यानित्यत्वे सम्बुद्धे-र्लुक्यपि प्रत्ययलक्षणत्वेन नुम् स्यात् । न च तल्लोपः शक्यः, ''न ङिसम्बुद्ध्योः'' इति निषे-धात् । अतस्तत्र नुमभावार्थम् अज्ग्रहणं कृतम् । तेन ''न लुमता'' इति नञा निर्दिष्टो निषेधो-ऽनित्य इत्यतः पक्षे सम्बुद्धिनिमित्ते गुणे ''हे वारे'' इति रूपमिति वैयाकरणैरेवोक्तत्वात्, ''न लोक'' इति ''नञा निर्दिष्टोऽप्यनित्यः'' इति भावेन 'अनित्यत्वात्' इत्युक्तम् । अन्तरङ्गोपष्टम्भकमप्याह **अत एवेति** । उक्तनिषेधस्यानित्यत्वादेव ''चोरस्य द्विषन्'', ''चोरं द्विषन्'' इत्यत्र षष्ठीनिषेधो विक-ल्पितः कात्यायनेन इति उप्रत्ययान्तयोगेऽपि पाक्षिकी षष्ठी युक्ता इत्यध्याहारश्रमो वृथैव परस्येति टीकाशय इति व्याख्यातवन्तः ।

**इत्यादाविवेति** । ''अथातो ब्रह्मजिज्ञासा'' (ब्र.सू. १.१.१), ''जिज्ञासितं सुसम्पन्नम्'' (भाग. १.५.३) इत्यादौ जिज्ञासादिशब्दे यथा विचारार्थताऽस्ति, तथा जिज्ञासुशब्दे विचारार्थता-

शङ्कानिरासार्थमित्यर्थः । **ताच्छील्यादाविति** । "आ केः तच्छील-तद्धर्म-तत्साधुकारिषु" इत्यधिकृत्य सन्नन्ताद्धातोः, "शंसु = स्तुतौ" इत्यस्माद्, भिक्षाशब्दाच्च उप्रत्ययो भवतीति ताच्छील्यादिविशिष्टकर्तरि उप्रत्ययस्य विहितत्वाद् 'अनीव' इत्यर्थभाषणं युक्तमिति भावः । 'ब्रह्मजिज्ञासा' इत्यादौ जिज्ञासाशब्दे अश्वकर्णमीमांसादिशब्द इव योगाभावाद् विचारे रूढिरभ्युपगता । जिज्ञासुशब्दे तु इच्छार्थकसन्प्रत्ययान्तत्वे बाधकाभावाद् योगज्ञानेच्छावानेवार्थ इति भावं प्राप्तशङ्कां निरसितुमाह **इच्छार्थ इति** ।

"**शब्दब्रह्म** वेदोक्तकर्मानुष्ठानफलम् **अतिवर्तते** अपाकरिष्यति, किमुत बुद्ध्वा यो योगं तन्निष्ठोऽभ्यासं कुर्वन्" (शां.भा. ६.४४) इति **सङ्करभाष्यं** तात्पर्यतोऽनुवदति **शब्दब्रह्मेति** । **अस्यार्थस्येति** । शब्दब्रह्मातिवृत्तिरूपस्यार्थस्य । "ततो याति परां गतिम्" (६.४५) इत्यनेन परगतिशब्दितब्रह्माप्तिरूपत्वेनाभिधास्यमानत्वादित्यर्थः । ननु भवत्पक्षे शब्दब्रह्मातिवर्तनं कथं नाम ब्रह्मप्राप्तिः स्यात् ? इत्यत भाष्याशयमाह **शब्दब्रह्मशब्देनेति** । अनन्तवर्णराशिरूपो वेदः शब्दब्रह्म-शब्देनोच्यते, तत्प्रमाणकौ विधिनिषेधौ तेन लक्ष्येते । तदतिवर्तनं च परब्रह्मप्राप्तस्य सङ्गच्छते, नान्यस्य, इत्यन्यथाऽनुपपन्नार्थकथनपरं भाष्यमित्यर्थः । न च योगज्ञानेच्छामात्रेण कथं परब्रह्मप्राप्तिः ? तस्या भगवदपरोक्षमात्रसाध्यत्वस्य बहुप्रमाणप्रसिद्धत्वादिति वाच्यम् । योगस्य जिज्ञासुरपि भगवन्तं प्राप्नोति परम्परया, किमुत योगमभ्यस्यन्, इति कैमुत्याभिप्रायेण प्रवृत्तत्वात् । तदुक्तं **प्राचीनटीकायाम्** "योगमभ्यस्यन् ततो विभ्रष्टः तेनैवाभ्यासलेशेन योगमासाद्याप्नोति भगवन्तमित्येतन्नाश्चर्यम् । यतोऽत्यन्तं योगज्ञानेच्छुरपि क्रमेणाप्नोति भगवन्तमित्यभिप्रायेण प्रवृत्तं 'जिज्ञा-सुरपि' इति श्लोकं व्याचष्टे" इति । **प्राचीनटीकायां तु** "**शब्दब्रह्म** हिरण्यगर्भः, यदा च तमतिवर्तते तदा परब्रह्मैव प्राप्नोति, इत्यभिप्रायेणैवमभिहितम्" इत्युक्तम् ॥ ४४ ॥

**गीता**

## प्रयत्नाद्यतमानस्तु योगी संशुद्धकिल्बिषः ।
## अनेकजन्मसंसिद्धस्ततो याति परां गतिम् ॥ ४५ ॥

*वि०वि०*— योगजिज्ञासामात्रेण परब्रह्मप्राप्तिश्चेद्योगानुष्ठानादिवैय्यर्थ्यं स्यादित्यत आह **प्रयत्नादिति** । योगं जिज्ञासुर्ज्ञात्वा प्रयत्नं करोति । ततः संशुद्धकल्मषो योगी अनेकजन्मभिः संसिद्धः अपरोक्षज्ञानी भूत्वा परां गतिं याति । उक्तं च—

'अतीव श्रद्धया युक्तो जिज्ञासुर्विष्णुतत्परः ।
ज्ञात्वा ध्यात्वा तथा दृष्ट्वा जन्मभिर्बहुभिः पुमान् ॥
विशेन्नारायणं देवं नान्यथा तु कथञ्चन ॥' इति ।

यद्वा, जिज्ञासुरपि मुच्यते किमुत ज्ञानादिमानिति योज्यम् । उक्तं च—

'मोक्षोपायस्य जिज्ञासुरपि केवलपाठकात् ।
विशिष्टः किमु तद्विद्वान् किं पुनर्यः सदा स्थितः ॥' इति ॥

***सा०सं०***— योगजिज्ञासामात्रेण मुक्तिश्चेत् तदनुष्ठानं व्यर्थमित्यतो न तावन्मात्रेण मुक्तिरपि त्वनेकजन्मनीत्याह **प्रयत्नादिति** । योगजिज्ञासुरपीत्यनुषङ्गः । योगं ज्ञात्वेति शेषः । **यतमानः** प्रयत्नं कुर्वन् । **ततः प्रयत्नाद्योगी** ध्यानयोगवान् सन् । **संशुद्धकिल्बिषः** निर्धूतपापः । अनेक-जन्मभिः संसिद्धोऽपरोक्षज्ञानी **अनेकजन्मसंसिद्धः** । **ततः** अपरोक्षज्ञानात् । **परां गतिं याती**ति ॥

***अ०प्र०***— योगजिज्ञासामात्रेण परब्रह्मप्राप्तिश्चेत् तर्हि योगानुष्ठानादिवैय्यर्थ्यं स्यादित्यत आह **प्रयत्नादिति** ।

प्रयत्नात्[१], यतमानस्तु[२], योगी[३], संशुद्धकिल्बिषः सन्[४], अनेकजन्मसंसिद्धो भूत्वा[५], ततः[६], परां गतिं[७], याति इत्यन्वयः ।

प्रयत्नात् = पूर्वजन्मसाधनापेक्षयाऽऽधिक्यात्[१], यतमानस्तु = कृताभ्यासस्तु[२], योगी = यद्वा प्रयत्नाद्यतमानः उत्तरोत्तरमधिकं योगे यत्नं कुर्वन् यस्तु योगी जिज्ञासुः[३], संशुद्धकिल्बिषः सन् = सम्यक् शुद्धिगतं वासनात्मकमनोमलं यस्य स तथा । यद्वा, योगेनैव संशुद्धकिल्बिषो विधूतपापः सन्[४], अनेकजन्मसंसिद्धो भूत्वा = अनेकजन्मसाधनबलेन चरमे जन्मनि योगसंसिद्धिं गतः तस्मात् तथा । यद्वा, अनेकेषु जन्मसु उपचितेनैव योगेन संसिद्धः योगसम्पूर्तिमान् अपरोक्षज्ञानी भूत्वा[५], ततः[६], परां गतिं = श्रेष्ठां गतिं[७], यातीत्यर्थः । यदेवं योगे मन्दप्रयत्नोऽपि परां गतिं याति प्रयत्ना-द्यतमानस्तु उक्तप्रकारेण योगं कुर्वन् मोक्षगतिं यातीति किं वक्तव्यमित्यर्थः ॥ ४५ ॥

**भाष्यम्**

**नैकजन्मनीत्याह— प्रयत्नादिति । जिज्ञासुर्ज्ञात्वा प्रयत्नं करोति । एवमनेकजन्मभिः संसिद्धोऽपरोक्षज्ञानी भूत्वा परां गतिं याति । आह च—**

**"अतीव श्रद्धया युक्तो जिज्ञासुर्विष्णुतत्परः ।**

**ज्ञात्वा ध्यात्वा तथा दृष्ट्वा जन्मभिर्बहुभिः पुमान् ।**
**विशेन्नारायणं देवं नान्यथा तु कथञ्चन ॥"**

**—इति नारदीये ॥ ४५ ॥**

***प०टी०*— योगजिज्ञासूनामेव मोक्षश्चेत् किं योगेन ? तत्साध्यज्ञानेन च ? इत्याशङ्कोत्तरतयोत्तरश्लोकमवतार्य सप्रमाणकं व्याचष्टे **नैकेति** ॥

***न०टी०*—न च योगजिज्ञासोरुक्तक्रमेण परब्रह्मावाप्तिः, तस्मिन्नेव जन्मनि ब्रह्मानवाप्त्या तदभावः शङ्कनीय इति भावेनोत्तरं श्लोकमवतार्य व्याचष्टे **नैकेति** । 'संसिद्ध'पदव्याख्या अपरोक्षज्ञानी भूत्वा इति । योगजिज्ञासोरुक्तक्रमेण परब्रह्मावाप्तिं पुराणवाक्येन स्थापयति **आह चेति** ॥

***प्र०दी०*— योगजिज्ञासामात्रेण परब्रह्मप्राप्तिश्चेत् योगानुष्ठानवैयर्थ्यं स्यादित्यत एतदेवाशङ्क्य भगवतैवोत्तरं दत्तमित्याह— **नैकेति** । न योगजिज्ञासामात्रेणेत्यभिप्रायः । अत्र योगजिज्ञासोरपरामर्शात् कथं तद्विषयमेतदित्यतोऽध्याहारेण व्याचष्टे— **जिज्ञासुरिति** । ज्ञात्वा योगमिति शेषः । यतनानन्तरमनेकजन्मसंसिद्ध इत्यन्यथाप्रतीतिनिरासायाह— **एवमिति** । योगे सम्पूर्णे संसिद्धेर्विलम्बे कारणाभावादिति भावः । व्याख्यातार्थे पुराणसम्मतिमाह— **आह चेति** ॥

***भा०दी०*— **योगमिति शेष इति** । ..... ज्ञानमेवेति ज्ञात्वा ज्ञात्वेति च योगज्ञानविषयमेवेति दर्शितम् । कर्मधारयपक्षे अधिकसाधनमिति स्यादिति । न चासौ साधनेष्वधिकमिति ॥

*इति श्रीगीताभाष्यटीकायाः प्रमेयदीपिकायाः टिप्पण्यां*
*राघवेन्द्रयतिकृतायां भावदीपे षष्ठोऽध्यायः ॥*

***भा०र०*— 'योगानुष्ठानवैयर्थ्यम्' इति कृतचोद्यं भाष्यभावोक्त्या परिहरति **न योगेति** । 'योगजिज्ञासोः' इत्यत्रोक्तरीत्या षष्ठीति पक्षे, शेषषष्ठीति पक्षे च 'षष्ठी' इति समासः । "योगं जिज्ञासुः" इति द्वितीयान्तत्वे 'अन्नबुभुक्षुः' इति भाष्यप्रयोग इव "श्रितादिषु गमिगाम्यादीनाम्" इति वक्तव्यात् द्वितीयासमास इत्यपि आहुः । "प्रयतनादधिकं यतमानो योगी अनेकेषु जन्मसु संसिद्धः सन्" (शां.भा. ६.४५) इति **सङ्करभाष्यं** सङ्क्षेपेणानुवदति **यतनानन्तरमिति** । अपव्याख्यां भाष्यभावोक्त्या प्रत्याख्याति **योग इति** । **संसिद्धेः** अपरोक्षज्ञानस्य । **व्याख्यातार्थे** योगजिज्ञासोरपि प्रणाडिकया ब्रह्मप्राप्तिरस्तीत्यर्थे ॥ ४५ ॥

**गीतातात्पर्यनिर्णयः**

**"मोक्षोपायस्य जिज्ञासुरपि केवलपाठकात् ।**
**विशिष्टः किमु तद्विद्वान् किं पुनर्यस्तदास्थितः ॥"**

**—इति परमयोगे ॥ ४४-४५ ॥**

*प्रका०*— जिज्ञासुरपि योगस्येत्यस्यार्थमाह **मोक्षेति** ।

*न्या०दी०*— योगाच्चलितमानसस्य "प्राप्य पुण्यकृतान् लोकान्" इत्यादिफलमुपपाद्यते **जिज्ञासुरिति** । तत्र योगजिज्ञासयोः विधिनिषेधाभावप्रतीतिनिरासाय तत्स्मृत्यैव व्याचष्टे **मोक्षेति** ॥ **तदास्थित इति** । तत्राल्पप्रवृत्तिमानित्यर्थः ॥

*भा०दी०*— **उपपाद्यत इति** । कैमुत्यन्यायेनेति भावः ॥ ४४-४५ ॥

**गीता**

**तपस्विभ्योऽधिको योगी ज्ञानिभ्योऽपि मतोऽधिकः ।**
**कर्मिभ्यश्चाधिको योगी तस्माद्योगी भवार्जुन ॥ ४६ ॥**

*वि०वि०*— योगिनं स्तौति **तपस्विभ्य इति** । कृच्छ्रादिचारिभ्यः । योगज्ञानिभ्यः यज्ञादिकारिभ्यः योगी अधिकः । तस्माद्योगी भव ॥

*सा०सं०*— योगिनं स्तौति **तपस्विभ्य इति** । कृच्छ्रचान्द्रायणादितपोयुक्तेभ्योऽयोगिज्ञानिभ्योऽपि **योगी** ध्यानानुष्ठाताऽ**धिको मतः** । **तस्मात्** सर्वाधिकत्वाद्योगस्येत्यर्थः ॥

*अ०प्र०*— हे अर्जुन ![१], यस्मात् योगी[२], तपस्विभ्यः[३], अधिकः[४], ज्ञानिभ्योऽपि[५], अधिकः[६], कर्मिभ्यश्च[७], अधिकः[८], योगी[९], मतः[१०] तस्मात्[११] योगी[१२], भव[१३] इत्यन्वयः ।

हे अर्जुन ![१], यस्मात् योगी[२], तपस्विभ्यः = कृत्स्नचान्द्रायणादितपोनिष्ठेभ्यः[३], अधिकः = श्रेष्ठः[४], ज्ञानिभ्योऽपि = योगादिशास्त्रज्ञानविद्भ्योऽपि[५], योगी अधिकः[६], कर्मिभ्यश्च = इष्टापूर्तिकारिभ्योऽपि[७], योगी अधिकः = श्रेष्ठः[९], मतः = अभिमतः[१०] यस्माद्योगी सर्वेषां वन्द्यो भूयात् तस्मात् त्वं[११] योगी[१२] भवेत्यर्थः ॥ ४६ ॥

**गीता**

## योगिनामपि सर्वेषां मद्गतेनान्तरात्मना ।
## श्रद्धावान् भजते यो मां स मे युक्ततमो मतः ॥ ४७ ॥

*इति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे आत्मसंयमयोगो नाम षष्ठोऽध्यायः ॥*

*वि०वि०*— योगेष्वपि तारतम्यमाह **योगिनामिति** । सर्वेषामपि योगिनां मध्ये श्रद्धाशब्दोदितमद्भक्तिमान् यः स एव युक्तो मतः । तत्रापि यो मां भजते स युक्ततरो मतः । तदुक्तम्—

'तपसश्चैव यज्ञादेर्ध्यानमेव विशिष्यते ।
अज्ञानिध्यानतो ज्ञानं ध्यानं सज्ञानमप्यतः ॥
तत्रापि मय्यभक्तस्य नान्यद्ध्यानं प्रयोजकम् ।
अन्यसामान्यवित् यो मे यश्चान्यन्नेति पश्यति ॥
अवरत्वदृगुदासीनो विद्वेषी चेत्यभक्तयः ।
मद्भक्तोऽपि हि कार्यार्थे यो ध्यायेदन्यदेवताः ॥
परिवारतामृते तस्मात्केवलं मदुपासकः ।
वरोऽन्यान् मदधीनांश्च सर्वान् जानन् विशुद्धधीः ॥' इति ॥

*॥ इति श्रीमद्भगवद्गीयाविवृतौ श्रीमज्जयतीर्थशिष्य–विद्याधिराजभट्टोपाध्यायविरचितायां श्रीमन्मध्वमतानुवर्तिन्यां षष्ठोऽध्यायः ॥ ५ ॥*

*सा०सं०*— ध्यानवत्स्वपि तारतम्यमाह **योगिनामिति** । **सर्वेषामपि योगिनां** मध्ये श्रद्धाशब्दोदितभक्तिमान् यः स युक्तो मतः । तत्रापि भक्तिमत्स्वपि **यो मां भजते** सेवते स युक्ततरः । तत्रापि **मद्गतेनान्तरात्मना** मद्गतान्तःकरणेन । फलकामनां विना भजते **स युक्ततमो मत** इति । योगिष्वप्युत्तम इति मे मतः ॥

*॥ इति श्रीमत्सर्वतन्त्रस्वतन्त्रश्रीसुधीन्द्रगुरुपादशिष्येण श्रीराघवेन्द्रयतिकृते श्रीमद्गीतार्थसङ्ग्रहे षष्ठोऽध्यायः ॥ ६ ॥*

*अ०प्र०*— योगिष्वपि तारतम्यमाह **योगिनामपीति** ।

यमनियमादिपराणां मध्ये मद्भक्तः श्रेष्ठ इत्याह **योगीति** ।

सर्वेषां[१], योगिनां मध्ये[२], श्रद्धावान् यः[३], सः[४], युक्तो मतः[५], तत्रापि यो[६], मां[७], भजते[८], सः मे युक्ततरो मतः[९], तत्रापि मद्गतेनान्तरात्मना = फलकामनां विना यो मां भजते[१०] सः युक्ततमो मत इत्यन्वयः ।

सर्वेषां योगिनां मध्ये = यमनियमादियोगवतां सर्वेषां मध्ये[१-२], श्रद्धावान् यः = श्रद्धोपलक्षितभक्त्यादिमान् यः[३], सः = युक्तः[४], मतः = संमतः[५], तत्रापि यः[६], मां[७], भजते[८], सः मे युक्ततरो मतः = संमतः[९], तत्रापि मद्गतेनान्तरात्मना यो मां भजते = मद्गतेनान्तरात्मना फलकामनां विना यो मां भजते[१०] सः युक्ततमो मतः = सः योगयुक्तेषु श्रेष्ठतमः मम संमतः[११] अतो मद्भक्तो भवेदिति भावः । तदुक्तम्—

'तपश्चैव च यज्ञाश्च ध्यानमेव विशिष्यते ।
अज्ञानी ध्यानतो ज्ञानं ध्यानं संज्ञानमप्यतः ॥
तत्रापि मय्यभक्तस्य नान्यध्यानं प्रयोजकम् ।
अन्यसामान्यविद्यो मे पश्यन्नन्येति पश्यति ॥
अवरत्वदृगुदासीनो विद्वेषी चेत्यभक्तयः ।
मद्भक्तो हि कार्यार्थं यो ध्यायेदन्यदेवताः ॥
परिवारकृते तस्मात्केवलं मदुपासकः ।
वरोऽन्यान् मदधीनांश्च जन्मान् सर्वान् स शुद्धधीः ॥' इति ॥

'कृच्छ्रादेरपि यज्ञादेर्ध्यानयोगो विशिष्यते ।
तत्रापि शेषश्रीब्रह्मशिवादिध्यानता हरेः ॥
ध्यानं कोटिगुणं प्रोक्तं अधिकं तु मुमुक्षुणाम् ॥' इति ॥

'अज्ञात्वा ध्यायिनो ध्यानात् ज्ञानमेव विशिष्यते ।
ज्ञात्वा ध्यानं ज्ञानमात्रात् ध्यानादपि च दर्शनम् ॥
दर्शनाच्चैव भक्तिश्च किञ्चित्स्यात्साधनादिकम् ॥' इति च ॥

सम्यक् ध्यानप्रकाराज्ञस्य ध्यानतः ध्यानप्रकारज्ञानमेवोत्तमं, ध्यानप्रकारज्ञानसहितं ध्यानं तु ध्यानप्रकारज्ञानमात्रतोऽधिकमिति प्रमाणार्थः ॥ ४७ ॥

*इति श्रीमद्भगवद्गीताया विवरणे अन्वयप्रकाशिकायां*
*अभ्यासयोगो नाम षष्ठोध्यायः ॥*

**भाष्यम्**

**ज्ञानिभ्यो योगज्ञानिभ्यः । तपस्विभ्यः कृच्छ्रादिचारिभ्यः । उक्तं च—**

**"कृच्छ्रादेरपि यज्ञादेर्ध्यानयोगो विशिष्यते ।**
**तत्रापि शेषश्रीब्रह्मशिवादिध्यानतो हरेः ।**
**ध्यानं कोटिगुणं प्रोक्तमधिकं वा मुमुक्षुणाम् ॥"**

**—इति गारुडे ॥**

**"अज्ञात्वा ध्यायिनो ध्यानात् ज्ञानमेव विशिष्यते ।**
**ज्ञात्वा ध्यानं ज्ञानमात्रात् ध्यानादपि तु दर्शनम् ।**
**दर्शनादपि भक्तेश्च न किञ्चित् साधनाधिकम् ॥"**

**—इति च नारदीये ॥ ४६ ॥ ४७ ॥**

*इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते*
*श्रीमद्भगवद्गीताभाष्ये षष्ठोऽध्यायः ॥*

***प०टी०***— ज्ञानस्य योगसाध्यत्वात् कथं ततोऽधमत्वम् ? इत्यत आह **ज्ञानिभ्य इति** । ननु ज्ञानस्यापि तपोरूपत्वात् कथं तपोधिकत्वं योगस्यैव ? इत्यत आह **तपस्विभ्य इति** । उक्तार्थस्थापनपूर्वकमुत्तरश्लोकव्याख्यानाय पुराणवचनमुदाहरति **उक्तं चेति** । अनेनायमर्थः सिद्ध्यति 'सर्वेषां योगिनां मध्ये यो मां विषयार्थी भजते स युक्ततरः । यस्तु मद्गतेनान्तरात्मना भजते स युक्ततमः' इति । ननु 'ज्ञान'शब्देन भगवज्ज्ञानमेव किं न स्यात् ? कुतो योगज्ञानम् ? इत्यत आह **अज्ञात्वेति** ॥

*॥ इति श्रीपद्मनाभतीर्थविरचित-श्रीमद्भगवद्गीताभाष्यभावप्रदीपिकायां षष्ठोध्यायः ॥*

***न०टी०***—यत एवं योगज्ञानेच्छुरप्यन्ततः परमाप्नोति, अतः सर्वसाधनोत्तमत्वादवश्यानुष्ठेयो योग इति भावेनोत्तरं श्लोकं व्याचक्षाणः तद्विषयज्ञानादेव ध्यानयोगोऽधिकः, न परमात्मज्ञानादपीत्याह **ज्ञानिभ्य इति** । ज्ञानानुसन्धानस्यैव मुख्यतपस्त्वाद्योगस्य च तदुत्तमत्वनियमासम्भवात् अत्र कृच्छ्रादिचरणं तप इति भावेनाह **तपस्विभ्य इति** । ध्यानस्य कृच्छ्राद्युत्तमत्वमुत्तरश्लोकव्याख्यान-गारुडपुराण इत्याह **उक्तं चेति** । एतदुक्तं भवति । सर्वेषां योगिनां मध्ये यः श्रद्धावान् योगेन हरिं

भजते अणिमादिफलगतेनाप्यन्तरात्मना स युक्ततरः । रमाविरिञ्चादिसर्वयोगिभ्यो हरिगतेनैवान्तरात्मना चेद्युक्ततम इति । ननु ध्यानयोगः परमात्मज्ञानादप्युत्तमः किं न स्यात् ? इत्यत आह **अज्ञात्वेति** । तदेवं ज्ञानध्यानयोः परस्परोत्तमत्वात्, ध्यानयोगः स्वविषयज्ञानादेवाधिको न भगवज्ज्ञानात् परोक्षादपि । किं पुनरपरोक्षज्ञानात् भक्तितश्चेत्यर्थः । 'यो मां भजते स युक्ततमः' इति भक्तिर्हि सर्वसाधनाधिकत्वेनोच्यते ॥

*॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितश्रीगीताभाष्यटीकायां श्रीनरहरितीर्थभट्टारककृतौ भावप्रकाशिकायां षष्ठोऽध्यायः ॥*

***प्र०दी०***— ननु ज्ञानं योगस्य फलम् । तत्कथं ज्ञानिभ्योऽप्यधिको मत इत्यत आह— **ज्ञानिभ्य इति** । यद्यपि 'ज्ञानतपसा पूता' इति ज्ञानमपि तपः । तथापि तदतिरिक्तमेवात्र विवक्षितमित्याह— **तपस्विभ्य इति** । ब्रह्मज्ञानादाधिक्यस्यासम्भवाद्योगज्ञानाधिक्यस्य पृथगुक्तत्वादिति भावः । अत एव पूर्वं तद्व्याख्यातम् । उक्तार्थमुपपादयन् श्लोकद्वयार्थं पुराणवाक्येनाह— **उक्तं चेति** । मुमुक्षुणाम् । एतेन सर्वेषामपि योगिनां मध्ये यो मां भजते स युक्ततरो मतः । तत्रापि मद्गतेनान्तरात्मना यो भजते स युक्ततमो मत इति व्याख्यातं भवति । "ज्ञानिभ्योऽपि मतोऽधिकः" इत्येतद्योगज्ञानविषयमेव, न तद् ब्रह्मज्ञानविषयमित्येतत् पुराणवाक्येन स्थापयति— **अज्ञात्वेति** । योगमिति शेषः । साधनाधिकं साधनेष्वधिकम् ॥

*इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य श्रीमद्गीताभाष्यस्य टीकायां जयतीर्थमुनिविरचितायां प्रमेयदीपिकायां षष्ठोऽध्यायः समाप्तः ॥ ६ ॥*

***भा०र०***— 'तपस्विभ्यः' इत्यत्र तपःशब्देन ज्ञानस्यापि ग्रहणे दोषः ? इति चेत्, किं योगस्य ब्रह्मज्ञानात् आधिक्यं वक्तव्यम् ?, योगज्ञानाद्वा ? इति विकल्प्य आद्ये दोषमाह **ब्रह्मेति** । "न किञ्चिदन्तराधाय निर्वाणायापरोक्षदृक्" (ना.अ.क.) इत्यादिशास्त्राद् ब्रह्मज्ञानाधिक्यस्य योगादौ क्वाप्यसम्भवादित्यर्थः । द्वितीय आह **योगेति** । "ज्ञानिभ्योऽपि मतोऽधिकः" इत्यनेन योगज्ञानाद् आधिक्यस्य योगे पृथगुक्तत्वेनात्रावक्तव्यत्वात्, तपःशब्देन कृच्छ्राद्येव ग्राह्यमिति भाव इत्यर्थः । **अत एवेति** । तपस्विशब्दगततपःशब्दस्य योगज्ञानपरत्वासम्भवादेव, 'तपस्विभ्यः' इति पदव्याख्यानात् पूर्वं 'ज्ञानिभ्यः' इति पदं 'योगज्ञानिभ्यः' इति व्याख्यातम् । अन्यथा पाठक्रमात् तदेवादौ व्याख्येयं स्यादिति भावः । "तपस्विभ्यः कर्मिभ्यश्चाधिको योगी" इत्यस्य तात्पर्यवर्णनपरे "कृच्छ्रादेः" (गी) इत्यर्धे तपःशब्देन कृच्छ्रादि, कर्मशब्देन यज्ञादि,

योगशब्देन ध्यानयोगश्च ग्राह्य इति भावेनाह **उक्तार्थमिति**। 'छन्दस्युभयथा' इति 'मुमुक्षुणाम्' इति पुराणे नामि दीर्घत्वं नाश्रितमिति भावेनाह **मुमुक्षुणामिति**।

**एतेन** "तत्रापि शेषश्रीब्रह्मशिवादि" (गा.) इति पुराणोदाहरणेन। **सर्वेषामिति**। श्रीब्रह्म-शेषादिसाधारण्येन ध्यानमात्रवन्तो ये युक्तशब्दिता योगिनस्तेषां सर्वेषां मध्य इत्यर्थः। 'माम्' इत्यनन्तरं **भावप्रदीपिकारीत्या** 'विषयार्थी' इति, **प्राचीनटीकारीत्या** "अणिमादिफलकत्वेनाप्यन्त-रात्मना" इति वा संयोज्यम्। तेन युक्ततमादप्यवरत्वं सिद्ध्यति। **तत्रापि** युक्ततरवर्गमध्येऽपि **इत्येतदिति**। इत्यत्र विद्यमानं ज्ञानिशब्दप्रकृतिभूतं ज्ञानप्रातिपदिकमित्यर्थः। **योगमिति शेष इति**। अनेन "योगं = सम्यग्योगप्रकारमज्ञात्वा ध्यानवतः पुरुषस्य ध्यानात् ज्ञानं सम्यग्योग-प्रकारकं ज्ञानं विशिष्यते। ज्ञानमात्रं तु विशिष्यते। दर्शनं तु ध्यानादपि विशिष्यते" इति भाष्यं योजितं भवति। भाष्ये "भज = सेवायाम्" इति धातोः सेवारूपभक्तेः 'भजते' इत्यनेनैव लाभ इति 'भक्तेश्च' इत्युक्तम्। 'यस्मादधिकम्' इत्यधिकशब्दयोगे पञ्चमीवत्, अत्रापि 'साधनेभ्यो-ऽधिकम्' इति विग्रहाश्रयणे "दर्शनाच्चैव भक्तेश्च" इति पञ्चम्यनन्वय इत्यतो व्याचष्टे **साधने-ष्वधिकमिति**। 'तदस्मिन्नधिकम्' इति दर्शनात् अधिकशब्दयोगे सप्तमी चास्ति। सा च 'सप्तमी' योगविभागात् समस्यत इति भावः॥ ४६-४७॥

*आ अध्यायपरिसमाप्तेर्योगप्रघट्टकस्यायमक्षरार्थः*— 'उद्धरेत्' (६.५) इति विहित एव योग इत्थम्भावकथनाय पुनरनूद्यते **योगी युञ्जीतेति**। ज्ञानोपायमनुतिष्ठन् आत्मानं मनो **युञ्जीत** समादध्यात् इति यत् तत् **सततं** निरन्तरं **रहसि** एकान्ते **स्थितः एकाकी** "एकादाकिनच् असहाये" इत्याकिनच्प्रत्ययः। **असहायः** सङ्गशून्यः, **यतचित्तात्मा** यतौ = नियमरूपेण तप-आदिना संयतौ **चित्तात्मानौ** अन्तःकरणदेहौ यस्य स तथोक्तः, **निराशीः** वीततृष्णः **अपरिग्रहः** अपरिग्रहशब्दोपलक्षिताहिंसा-असत्य-अस्तेय-ब्रह्मचर्यादिशास्त्रोक्तधर्मवान्, समादध्यादिति विध्य-नुवादेन प्रकारकथनं द्रष्टव्यम्॥ १०॥

एवं तत्रैव प्रकारान्तरमुच्यते **शुचौ देश इत्यादिना**। **शुचौ** मनःप्रसादहेतुभूते **देशे**, तथाविधे काले, तथाविधायाम् अवस्थायामिति चोपलक्ष्यते। **चेलाजिनकुशोत्तरं – चेलं** वस्त्रम्, **अजिनं** कृष्णव्याघ्रादिचर्म, **कुशाः** दर्भाः उत्तरे यस्मिन् तत् तथा, विपरीतोऽत्र क्रमः। चेलादीनामिति प्राञ्चः। न **अत्युच्छ्रितम्** अतीवोच्छ्रितम् अत्युच्छ्रितम्, **नातिनीचं** नाप्यतीव नीचम्, **स्थिरम्** अचलम्, **आत्मन आसनं प्रतिष्ठाप्य**॥ ११॥

**तत्र** तस्मिन्नासने उपविश्य यतचित्तेन्द्रियक्रियः उपरतान्तःकरणबाह्येन्द्रियव्यापारः सन् । क्षिप्तम्, मूढम्, विक्षिप्तम्, निरुद्धमेकाग्रम् इति चतस्रो वृत्तयः । तत्र समाध्यन्तरङ्गभूता चतुर्थी मनोवृत्तिर्निर्दिश्यते एकाग्रमितीति प्राञ्चः । एकाग्रं मनः कृत्वा आत्मविशुद्धये मनोमलशोधनाय योगं युञ्ज्यात् । सर्वात्मना चित्तनिरोधलक्षणं समाधियोगं कुर्यादिति यावत् ॥ १२ ॥

**कायो** मध्यदेहश्च **शिरश्च ग्रीवा** च प्राण्यङ्गद्वन्द्वत्वात् एकवद्भावः । **समम्** अचलं समत्वेनाचलत्वेन च **धारयन् स्थिरः** अवहितप्रयत्नो भूत्वा **स्वं** स्वकीयं **नासिकाग्रं सम्प्रेक्ष्य दिशोऽनवलोकयंश्च** ॥ १३ ॥

**प्रशान्तात्मा** स्वतो विषयेष्वप्रवृत्तमनाः, **विगतभीः** प्रमाद-आलस्यादियोगान्तरायभयहीनः **ब्रह्मचारिव्रते** ब्रह्मचर्ये इन्द्रियोपरति-गुरुशुश्रूषादिरूपे स्थितः तदनुष्ठाता **मनःसंयम्य** प्रत्याहृत्य मच्चित्तो मयि चित्तं यस्य सः, मदृध्यानवान् **मत्परः** ममैकान्त्येन सर्वोत्तमत्वं जानन् **युक्तः** समाधिसम्पन्न आसीत ॥ १४ ॥

उक्तप्रकारेणानुष्ठितस्य फलमुच्यते **युञ्जन्नेवमिति** । 'एवम्' इत्यस्य किञ्चिद्विवरणम् **नियतमानस इति** । नियतमानसत्वादिप्रकारेण **सदा आत्मानं** मनो भगवति **युञ्जन्** युञ्जानः, **आत्मानं** भगवन्तं **युञ्जन्** ध्यायन्निति वा, **योगी निर्वाणपरमां** शरीरत्यागोत्तरकालीनां **मत्संस्थां** मयि स्थितिरूपां शान्तिम् अधिगच्छति प्राप्नोति ॥ १५ ॥

आहारादिनियमाभावे योगसम्पत्तिर्न, सति तु तस्मिन् साऽस्तीति योगिन इत्थम्भावान्तरम् **नात्यश्नत इत्यादिश्लोकद्वयेनोच्यते** । **अत्यश्नतः** अधिकं भुञ्जानस्य इन्द्रियोत्सेकापत्तेरिति भावः । **एकान्तम्** अत्यन्तं श्रमादेरवर्जनीयत्वादिति भावः । 'अतिस्वप्नशीलस्य' इत्यत्र स्वप्नशब्देन निद्रा ग्राह्या । 'जाग्रतः' इत्यत्रापि 'एकान्तम्' इत्यन्वेति । अत्राशनजागरणादिनिषेधो अशक्तविषय इति भाष्ये व्यक्तम् ॥ १६ ॥

**युक्ताहारविहारस्य युक्तौ** योगोपेतौ योगाविरुद्धौ **आहारविहारौ** अशनसञ्चारौ यस्य स तथोक्तः । तस्य यावता श्रम-इन्द्रियोत्सेक-आलस्यादियोगविरोध्यभावो भवति, तावदाहारादिरिति यावत् । **कर्मसु** कार्येषु **स्वप्नावबोधौ** निद्राजागरणे **दुःखहा** सांसारिकदुःखानि हन्तीति तथायोगः समाधियोगो भवति ॥ १७ ॥

योगसम्पूर्तिस्वरूपमुच्यते **यदेत्याद्यनेकश्लोकैः** । **विनियतं** विशेषेण विषयेभ्यः प्रत्याहृतं **चित्तम् आत्मनि** भगवति **एवावतिष्ठते** तदेकतानं भवति, **सर्वकामेभ्यो** निस्पृहश्च यदा, तदा **युक्तो** योगसम्पूर्तिमान् इत्युच्यत इति योगपूर्तेः कालविशेष उक्तः ॥ १८ ॥

अथ तद्वतोऽवस्थितिरुच्यते **यथेति**। **निवातस्थः** वातवर्जिते देशे स्थितः दीपः **यथा नेङ्गते** न चलति **सा** उपमीयते अनेनेति **उपमा** दृष्टान्तः। "सा वैश्वदैव्यामिक्षा" इत्यादाविव विधेयापेक्षया 'सा' इति स्त्रीलिङ्गम्। 'कस्य ?' इत्यत उक्तम् **योगिनः यतचित्तस्य आत्मनो** भगवतः सम्बन्धिनं **योगं** भगवद्विषयकं समाधिं **युञ्जतः** कुर्वत इति ॥ १९ ॥

किञ्च **योगसेवया** योगाभ्यासेन **निरुद्धं चित्तं यत्र** समाधौ **उपरमते** अन्यत्र उपरतव्यापारं भवति, यत्र च समाधियोगे **आत्मना** मनसा आत्मनि देहे **आत्मानं** भगवन्तं **पश्यन् तुष्यति** तोषं प्राप्नोति ॥ २० ॥

**यत्र** समाधौ **स्थितः बुद्धिग्राह्यम्** अनुभववेद्यम् **अतीन्द्रियम्** इन्द्रियाग्राह्यम्, अत्यन्तमेव भवतीति **आत्यन्तिकं** तत्र शास्त्रप्रसिद्धं **सुखं वेत्ति** अनुभवति। यत्र च योगे स्थितो यं योगी **तत्त्वतः** "अतीतेऽनागते काले यत्तादृशमुदीर्यते। कथञ्चिदन्यथा नेयात् तत्तत्त्वं तद्विदो विदुः॥" (म.सं.) इति वचनात् भगवद्रूपात् न चलतीति यत् ॥ २१ ॥

**यं च** योगं **लब्ध्वा ततोऽधिकं लाभं न मन्यते, यस्मिंश्च** योगे स्थितो **गुरूणां** प्रबलेनापि **दुःखेन** दुःखहेतुना **न विचाल्यते** ॥ २२ ॥

**तम्** एवंविधं **दुःखसंयोगवियोगं** दुःखस्य संयोगः सम्बन्धः, वियुज्यत अनेनेति **वियोगो** वियोजकः, दुःखसंयोगस्य वियोगो दुःखसंयोगवियोगः, तं तथोक्तं **योगसंज्ञितं** योग इति संज्ञयोक्तं **विद्यात्** विजानीयात्। 'दुःखवियोगम्' इत्येव वक्तव्ये संयोगशब्दः न केवलमुत्पन्नं दुःखं नाशयति, किन्तूत्पत्तिमेव निवारयतीत्यर्थविशेषप्रतिपत्त्यर्थः। योगे गुणान्तरं विधातुमुच्यते **स इति**। **स योगो निर्विण्णचेतसा** विषयविरक्तमानसेन **निश्चयेन योक्तव्यः** अवश्यं कर्तव्य एव। मुमुक्षोर्ध्यानायोगव्यवच्छेदार्थोऽयं निश्चयशब्द इति तद्विधानार्थमिदं वचनम् ॥ २३ ॥

किञ्च **सङ्कल्पप्रभवान्** "एतदर्थमिदं कुर्याम्" इति सङ्कल्पः **प्रभवः** उत्पादको येषां ते तथोक्ताः तान् **सर्वान्** सर्वविषयान् **कामान् अशेषतः** निःशेषतः, एकविषयोऽपि कामः स्वल्पः कादाचित्कोऽपि न कर्तव्य इति वक्तुम् इदम्, **त्यक्त्वा, इन्द्रियग्रामं** श्रोत्रादीन्द्रियसमुदायं **समन्ततः** सर्वतः **विषयेभ्यः मनसैव नियम्य**, इन्द्रियग्रामो मनसैव नियन्तुं शक्यते, नान्येनेति स्वरूपकथनाय एवशब्दः ॥ २४ ॥

**धृतिगृहीतया** धैर्यवशीकृतया **बुद्ध्या शनैः शनैरुपरमेत्** उपरतो भवेत् विषयेभ्यो मनो निवर्तयेदिति यावत्। **आत्मनः समीपे रमेतेति वा**। एवं बुद्ध्या **आत्मसंस्थं** भगवद्विषयं **मनः** कृत्वा आत्मनोऽन्यत् **किञ्चिदपि न चिन्तयेत्** ॥ २५ ॥

मध्ये व्युत्थितं चेत् मनः, तदा तत्प्रत्याहारेण वशीकुर्यादित्युच्यते **यतो यत इति**। आद्यादिभ्य उपसङ्ख्यानात् सप्तम्यर्थे तसिः। यत्र यत्र शब्दादौ विषये स्वतः चञ्चलं **मनो अस्थिरं** सत् **निश्चरति** प्रवर्तत इति यावत्। **ततस्ततो** विषयात् **एतत्** मनो **नियम्य** प्रत्याहृत्य **आत्मन्येव वशं नयेत्** आत्मविषय एव वशीकुर्यात्॥ २६॥

उक्तयोगफलमुच्यते **प्रशान्तेति**। प्रकर्षेण शान्तं = स्वतो विषयेष्वप्रवृत्तं मनो यस्य तं तथोक्तम्। **शान्तरजसं** विगतरजोदोषम्, अत एव **अकल्मषं** कामक्रोधादिदोषहीनम्, **ब्रह्मभूतं** ब्रह्मणि **भूतं** स्थितम्, **योगिनं** समाधिमन्तम् **उत्तमं सुखमुपैति** ध्यानयोगवान् उत्तमं सुखं प्राप्नोति इति श्रुत्यादौ प्रसिद्धमिति हिशब्दः॥ २७॥

योगिना सुखं किमायासेन प्राप्यते ? कीदृशं च तत् ? इति शङ्काम् अपनुदता पूर्वश्लोकोक्तमेव प्रपञ्च्यते **एवं युञ्जन्निति**। उक्तदिशा **आत्मानं** मनो **युञ्जन्** भगवति युञ्जानः, भगवन्तं ध्यायन्निति वा, **विगतकल्मषः** वीतरागादिदोषः **सुखेन** अक्लेशेन ब्रह्मसंस्पर्शं भगवत्संसर्गाभिव्यक्तम् **अत्यन्तम्** अतिशयितं **सुखमश्नुते** प्राप्नोति॥ २८॥

"योगी युञ्जीत" (६.१०) इत्यादिना "अत्यन्तं सुखमश्नुते" (६.२८) इत्यन्तेन ग्रन्थेन फलकथनेन योगप्रकरणं समापितम्। अथ ध्येयमुच्यते **सर्वभूतस्थमिति**। 'भोक्तारम्' (५.२९) इति पञ्चमे, "मच्चित्तो युक्त आसीत" (६.१४) इत्यत्र ध्येयोक्तावपि, अत्राप्युत्तमाधिकारिणा मनोध्येयमुच्यत इति विवेकः। तिष्ठतेः "सुपि स्थः" इति कप्रत्ययः। **सर्वेषु भूतेषु स्थितम् आत्मानं** परमेश्वरम् **सर्वभूतानि चात्मनि** परमेश्वरे **योगयुक्त आत्मा** मनो यस्य स तथा, **सर्वत्र** तृणादिब्रह्मान्तेषु वस्तुषु विद्यमानेषु **समम्** ऐश्वर्यादिना साम्यावगाहि **दर्शनं** यस्य स सर्वत्र समदर्शनः सन् **ईक्षते** पश्यति॥ २९॥

सर्वभूतस्थत्वादिप्रकारकध्यानविशेषस्य फलमुच्यते **यो मामिति**। **यो** ध्यानयोगी सर्वत्र ब्रह्मादितृणान्तेषु समं **मां** यः **पश्यति मयि च सर्वं** ब्रह्मादि जगत् **पश्यति, तस्याहं न प्रणश्यामि** सर्वदा योगक्षेमवहः स्याम्, **स च मे न प्रणश्यति** सर्वदा मद्भक्तो भवति॥ ३०॥

"यो माम्" (६.३०) इत्युक्तमेव स्पष्टीकुर्वता ज्ञानिमात्रस्यात्रातिशय उच्यते **सर्वभूतस्थितमिति**। **सर्वभूतस्थितं माम् एकत्वमास्थितः** "सर्वत्रैक एवेश्वरः" इति जानन् सन्, **भजति** सेवते, **स योगी सर्वथा** सर्वप्रकारेण न्यायेनान्येन वा वर्तमानोऽपि **मयि** एव **वर्तते** अन्यायप्रवृत्तावपि ज्ञानिनो मोक्षो नियत एव। अधमाधिकारिषु त्वानन्दह्रासादिकं विद्यत एवेति तात्पर्यम्॥ ३१॥

'समदर्शनः' (६.२९) इत्युक्तम्, तत्र किं गो-गवयादिवत् भगवति साम्यदर्शनम् ? इत्याकाङ्क्षायाम् 'एकत्वमास्थितः' (६.३१) इति समदर्शनवचनं स्वयमेव व्याख्यातम् । इदानीं भगवदनुवर्तिविषयतयाऽपि तदेव व्याक्रियते **आत्मौपम्येनेति । आत्मा** स्वयमेवोपमा तद्भाव औपम्यम्, तेन यथा आत्मनः स्वस्य सुखमेव प्रियं दुःखं त्वप्रियमेव, तथाऽन्येषामपि भगवद्भक्तानाम् इत्येवं स्वसादृश्येन सुखं दुःखं च **समं यः पश्यति** सुखमेव भागवतेषु, न जात्वपि दुःखमिति वाञ्छतीति यावत्, **स योगी परमो मतः** ॥ ३२ ॥

मनसश्चञ्चलत्वेन वायोरिव निग्रहानर्हत्वात् साम्येन योगस्य स्थिरस्थितिरसुसम्पादा इत्यर्जुनेन श्लोकद्वयेन शङ्कितमित्युच्यते **अर्जुन उवाच । यो मामित्यादि । हे मधुसूदन त्वया साम्येन** भगवतः सर्वत्रैक्येन, भगवदनुवर्तिषु चात्मौपम्येन, **योऽयं योगो** भगवति मनःसमाधानरूपो ध्यानयोगः **प्रोक्तः एतस्य** योगस्य **स्थिरां स्थितिं न पश्यामि** । कुतः ? मनसः चञ्चलत्वात् ॥३३॥

तदेव कुतः ? इत्यत उक्तम् **चञ्चलं हीति** । सकलप्रमाणानुभवसिद्धं तस्य चाञ्चल्यमिति द्योतयितुं हिशब्दः । **प्रमाथि** प्रमथनशीलं **बलवत्** विवेकेनाप्यजेयं दृढं विषयवासनाऽनुविद्धतया दुर्भेदम्, **तस्य** मनसो **निग्रहं वायोरिव सुदुष्करं मन्ये** इत्यर्जुनप्रश्नं स्वयमङ्गीकृत्य मनोनिग्रहोपायो भगवतोपदिश्यत इत्युच्यते **भगवानुवाच– असंशयमिति । महाबाहो मनो दुर्निग्रहं** स्वतः **चलम्** इत्यत्र **असंशयम्**, अर्थभावेऽव्ययीभावः संशयाभावः । तथाऽपि **अभ्यासेन विषयवैराग्येण च गृह्यते** निगृह्यते । तुरेवार्थः ॥ ३४-३५ ॥

यथा मत्तमातङ्गः स्वयमेव श्रान्तः शान्तो भवति, तथा विषयैस्तृप्तं मनः कदाचित् स्वयमेव नियतं भवति, किमभ्यासेन वैराग्येण च ? इत्यत उक्तम् **असंयतात्मनेति । असंयतात्मना** अभ्यासवैराग्याभ्याम् अवशीकृतचित्तेन योगो **दुष्प्रापः** दुःसम्प्राप्यः, अप्राप्य इति, **मे मतिः । उपायतः** अभ्यासादिरूपात् **वश्यात्मना** अभ्यासवैराग्याभ्यां वशत्वमापादित **आत्मा** मनो यस्य तेन **तु यतता** यतमानेन **अवाप्तुं शक्यः** ॥ ३६ ॥

अभ्यासादिहीनस्य दशां पृच्छतीत्युच्यते **अर्जुन उवाच– अयतिरिति । अयतिः** अप्रयत्नः, **श्रद्धया** "अत्रोक्तमस्ति", "अनेन मम प्रयोजनमस्ति" इत्येवंरूपबुद्ध्या **उपेतः योगाच्चलितमानसः योगसंसिद्धिं** ध्यानसम्पूर्तिं ध्यानफलं ज्ञानमिति यावत् । **अप्राप्य हे कृष्ण ! कां गतिं गच्छति** ॥ ३७ ॥

**उभयविभ्रष्टः** ऐहिकामुष्मिकफलभोगविभ्रष्टः, स्वर्गाद्युपायात् ध्यानयोगाच्च विभ्रष्ट इति वा, **अप्रतिष्ठः** निराश्रयः **ब्रह्मणः पथि** ब्रह्मप्राप्त्युपाये **विमूढः छिन्नाभ्रमिव** वात्यया शकलीकृत-

मेघखण्ड इव **नश्यति कच्चित्** । दृष्टप्रश्ने 'कच्चित्' इत्यव्ययम् । "कच्चित् कामप्रवेदने" इत्यमरोक्तेः ॥ ३८ ॥

किं **नश्यति** नरकाद्यनर्थं प्राप्नोति, आहोस्विन्न नश्यतीति प्रश्नमूलम् **एतत् संशयं** त्वमेव विनाशयितुमर्हसीति स्पष्टम् **उपपद्यते** सम्भवति ॥ ३९ ॥

एवं प्रश्ने तदुत्तरं भगवतोक्तम् इत्युच्यते **भगवानुवाच– पार्थेत्यादिभिः सार्धैश्चतुभिः श्लोकैः** । **हे पार्थ ! इह** लोके **तस्य** योगभ्रष्टस्यापि **विनाशो** दुर्गतिः तिर्यगादिभावो **न विद्यते** नास्ति । **अमुत्र विनाशो** नरकाद्यनर्थो **नैव विद्यते** । कुतः ? इत्यत उक्तम् **न हीति** । **कल्याणकृत्** ध्यानादिलक्षणकल्याणस्य कर्ता ॥ ४० ॥

किं तर्हि तस्य भवति ? **पुण्यकृताम्** अश्वमेधादियाजिनाम्, 'पुण्यकृतान्' इत्यपि पठन्ति । **लोकान् प्राप्य** तत्र लोकेषु **शाश्वतीः** नित्याः, बह्वीः, **समाः** संवत्सरान्, "कालाध्वनोरत्यन्त-संयोगे" इति द्वितीया, बहुषु संवत्सरेषु **उषित्वा** वसनमनुभूय **शुचीनां** यथोक्तकारिणां **श्रीमतां** भूतिमतां **गेहे योगभ्रष्टोऽभिजायते** ॥ ४१ ॥

**धीमतां** ज्ञानिनां **योगिनामेव कुलेऽथवा भवति** उत्पद्यते । अस्य फलत्वं घटयितुमुच्यते **एतदिति** । **यदीदृशं जन्म** इत्युक्तं विविधमपि जन्मेत्येतद् **दुर्लभतरं** दुःखलभ्यतरम् । **हि** प्रसिद्धम् ॥ ४२ ॥

**तत्र** यथोक्तविशेषणे जन्मद्वये, **पौर्वदेहिकं** पूर्वदेहे भवं **बुद्धिसंयोगं** भगवति मनोनिवेश-लक्षणं ध्यानं **लभते** । किञ्च **ततो भूयः** पूर्वकृतात् संस्काराद् बहुतरं **संसिद्धौ** योगसंसिद्धिविषये **यतते** ॥ ४३ ॥

कथम् ? **पूर्वाभ्यासेन** पूर्वजन्मनि कृतोऽभ्यासः पूर्वाभ्यासः तेनैव, **तेन** बलवता **अवशोऽपि** स्वरसतया प्रवृत्तिप्रकर्षहीनोऽपि ध्यानयोगादौ ह्रियते प्रवर्त्यते । योगाच्चलितमानसस्य प्राप्य पुण्य-कृतां लोकान् इत्यादिफलं कैमुत्येनाप्युच्यते **जिज्ञासुरपीति** । **योगस्य** योगं **जिज्ञासुः** "ज्ञातव्यो मया योगः" इति यस्यातीवेच्छाऽस्ति सोऽपि, 'शब्दब्रह्म'शब्देन वैदिकविधिनिषेधावत्र ग्राह्यौ । तदतिवर्तनं परं ब्रह्म प्राप्तस्यैव, नान्यस्येति जिज्ञासुमात्रस्यापि महाफलोक्तौ किमु कञ्चित्कालं योग-मनुष्ठातुरिति कैमुत्येनोक्तफलयोगोक्तिः ॥ ४४ ॥

योगजिज्ञासामात्रेण परब्रह्मप्राप्तिश्चेत्, योगानुष्ठानवैयर्थ्यं स्यात् ? इत्यत उच्यते **प्रयत्ना-दिति** । योगं जिज्ञासुः ज्ञात्वा प्रयत्नं करोति । 'प्रयत्नाद्यतमानः' इत्यस्य "अधिकं प्रयत्नं कुर्वन्" इत्यर्थ इति **एके** । ततो यत्नाद् **योगी** ध्यानयोगसम्पन्नः **संशुद्धकिल्बिषः** निर्धूतपापः **अनेक-**

**जन्मभिः संसिद्धो** अपरोक्षज्ञानी भूत्वा, **ततः** अपरोक्षज्ञानात् **परां गतिं याति** । न जिज्ञासामात्रेण, इत्यभिप्रायः ॥ ४५ ॥

योगः स्तूयते **तपस्विभ्य इति** । कृच्छ्रादिकारिभ्यः, **ज्ञानिभ्यः** योगज्ञानिभ्योऽपि, **कर्मिभ्यः** यज्ञादिकारिभ्योऽपि **योगी** ध्यानमनुतिष्ठन् **अधिकः** उत्तमः । **तस्मात्** एवं योगस्य तपआदिभ्य उत्तमत्वात् ॥ ४६ ॥

योगिनामप्यस्ति तारतम्यमित्युच्यते **योगिनामिति** । **सर्वेषामपि योगिनां** मध्ये यः श्रद्धाशब्दितमद्भक्तिमान् **सः** एव **युक्तो मतः** । तत्रापि **यो मां भजते स युक्ततरो मतः**, तत्रापि **मद्गतेनान्तरात्मना** फलकामनां विना यो मां भजते **स युक्ततमः** अतिशयेनोत्तमो **मे** मम **मतः** "मतिबुद्धिपूजार्थेभ्यश्च" इति षष्ठी ॥ ४७ ॥

*॥ इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमत्सूरीन्द्रतीर्थपूज्यपादशिष्यसुमतीन्द्रयतिविरचितायां भावरत्नकोशसमाख्यायां प्रमेयदीपिकाव्याख्यायां षष्ठोऽध्यायः ॥*

स्वतन्त्रः कर्ताऽयं मुररिपुरहं कर्मसु परं
प्रतिच्छायारूपः किमपि च करोमि स्वविहितम् ।
इति प्राज्ञैर्ज्ञात्वा सकलसुकृतानि प्रतिदिनं
हरावेव न्यस्यन् प्रथित इह तु जड (न) इति सः ॥

मादृशस्स्वलनं नैव दोषः श्रीभाष्यटीकयोः ।
किन्तु तत्सेवनोद्युक्ता शोध्या मद्वीर्दयालुभिः ॥

आर्यस्वान्ताम्भोजहंसायमानौ संसाराम्भोराशिनावौ समानौ ।
भूयास्तां तौ भूतये भूरिमानौ वेदव्यासानन्दतीर्थाभिधानौ ॥

श्रीमद्गीताभाष्यटीकाश्रीषष्ठाध्यायसेवया ।
गुणिनः परितुष्यन्तु गुणग्रहणभूषणाः ॥

**गीतातात्पर्यनिर्णयः**

**"तपसश्चैव यज्ञादेर्ध्यानमेव विशिष्यते ।**
**अज्ञानिध्यानतो ज्ञानं ध्यानं सज्ञानमप्यतः ॥**
**तत्रापि मय्यभक्तस्य नान्यद्ध्यानं प्रयोजकम् ।**
**अन्यसामान्यविद् यो मे यश्चान्यं नेति पश्यति ॥**

अवरत्वद्दगुदासीनो विद्वेषी चेत्यभक्तयः ।
मद्भक्तोऽपि हि कार्यार्थे यो ध्यायेदन्यदेवताम् (ताः) ॥
परिवारतामृते तस्मात् केवलं मदुपासकः ।
वरोऽन्यान् मदधीनांश्च सर्वान् जानन् विशुद्धधीः ॥''

—इति च दत्तात्रेयवचनम् ॥ ४६-४७ ॥

*॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमद्भगवद्गीतातात्पर्यनिर्णये षष्ठोऽध्यायः ॥*

***प्रका०***— तपस्विभ्य इत्यादेरर्थमाह **तपस इत्यादिना** ॥

*इति श्रीमदानन्दतीर्थभगवत्पादविरचितस्य श्रीमद्गीतातात्पर्यनिर्णयस्य प्रकाशिकायां पद्मनाभतीर्थविरचितायां षष्ठोऽध्यायः ॥*

***न्या०दी०***— योगः स्तूयते **तपस्विभ्य इति** । तत्र योगस्य ज्ञानार्थत्वात् कथं ज्ञानादुत्तमत्वमुक्तमित्यतः तत्स्मृत्यैव व्याचष्टे **तपस इति** ॥ **अज्ञानिध्यानत इति** ॥ सम्यग् ध्यानप्रकाराज्ञस्य ध्यानतो ध्यानप्रकारज्ञानमेवोत्तमम् । ध्यानप्रकारज्ञानसहितं ध्यानं ध्यानप्रकारज्ञानमात्रतोऽधिकमित्यर्थः । ध्यानिष्वपि तारतम्यमाह **तत्रापीति** ॥ कीदृशोऽभक्त इत्यत आह **अन्येति** ॥ न भक्तिर्येषु तेऽभक्तयः । अन्यान् मदधीनान् जानन्नित्यनेन परिवारतया अन्योपासनमुच्यते । मदुपासकेष्वपि विशुद्धधीः निष्कामो वर इत्यर्थः । अनेन योगिनामिति श्लोको व्याख्यातो भवति । तथाहि— सर्वेषां योगिनां मध्ये यः श्रद्धाशब्दोदितमद्भक्तिमान् स एव युक्तो मतः । तत्रापि यो मां भजते स एव युक्ततरो मतः । तत्रापि फलकामनां विना यो मां भजते स युक्ततमो मत इति ॥

*इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य श्रीमद्भगवद्गीतातात्पर्यनिर्णयस्य टीकायां जयतीर्थमुनिविरचितायां न्यायदीपिकायां षष्ठोऽध्यायः समाप्तः ॥*

***भा०दी०***— अभक्तय इत्यस्य पुरुषपरत्वलाभायाह **न भक्तिर्येष्विति** ॥ **तत्रापीति** । भक्तेष्वपीत्यर्थः । **भजते** सेवते ॥

*॥ इति श्रीमद्गीतातात्पर्यटीकाभावदीपे राघवेन्द्रयतिकृते षष्ठोऽध्यायः ॥*

★ ★ ★

॥ श्रीः ॥

॥ श्रीवेदव्यासाय नमः ॥

॥ श्रीमदानन्दतीर्थगुरुभ्यो नमः ॥

# श्रीमद्-भगवद्गीता

## अथ सप्तमोऽध्यायः

**गीता**

**श्रीभगवानुवाच—**

**मय्यासक्तमनाः पार्थ योगं युञ्जन्मदाश्रयः ।**
**असंशयं समग्रं मां यथा ज्ञास्यसि तच्छृणु ॥ १ ॥**

*वि०वि०*— ज्ञानसाधनं प्राधान्येनोक्तमतीतैरध्यायैः षड्भिः। षष्ठान्ते प्रस्तुतभक्त्युत्पादनार्थं भगवन्माहात्म्यं प्राधान्येनोच्यतेऽस्मिन्नध्याये । तत्र तावच्छ्रोतारमभिमुखीकुर्वन् भगवान् ज्ञानं वक्तुं प्रतिजानीते **मयीति द्वाभ्याम्** । आसक्तमनाः अतीव स्नेहयुक्तमनाः । योगं युञ्जन् ज्ञानोपाय-मनुतिष्ठन् मदाश्रयः भगवानेव मया सर्वं कारयति, स एव मे शरणं, तस्मिन्नेवाऽहं स्थित इति स्थितः । संशयं विना त्वं च समग्रं यथा मां ज्ञास्यसि तत् शृणु ॥ १ ॥

*सा०सं०*— 'बुद्धिर्योगे त्विमां शृणु' (२-३९) इति भगवज्ज्ञानोपायं प्रतिज्ञाय, कामादि-वर्जनयुक्तनिवृत्तकर्मानुष्ठानरूपकर्मयोगं ज्ञानस्य बहिरङ्गोपायमापञ्चमाध्यायान्तं ज्ञानान्तरङ्गसाधनं ध्यानरूपं योगं च षष्ठे निरूप्य, अधुना पूर्वोक्तं ध्यानं भक्तिपूर्वकमेवानुष्ठितं ज्ञानसाधनम् । न चैद्यादेरिव द्वेषपूर्वकम् । अतो भक्त्यर्थं भगवन्माहात्म्यं 'मयि' इत्यादिनाऽध्यायषट्केनोच्यते । 'न त्वेवाहम्' (२-१२) इत्यादिना पूर्वषट्केऽपि भगवन्माहात्म्योक्तावपि साधनस्यैव प्राचुर्ये-णोक्तिः । उत्तरषट्के क्वचित् क्वचित् साधनस्योक्तावपि प्राचुर्येणैव भगवन्महिम्नो वर्णनाच्च पूर्वोत्तर-षट्कयोः साङ्कर्यम् । तयोः पौर्वापर्यबीजं तु यदर्थं साधनं निरूपितं तज्ज्ञानाय ज्ञातव्यमाहात्म्य-निरूपणात् कार्यकारणभावरूपं 'योगं युञ्जन् समग्रं मां यथा ज्ञास्यसि तच्छृणु' इति प्रतिज्ञान्तर-

करणादेव व्यक्तमिति श्रोतारमभिमुखीकुर्वन् भगवन्माहात्म्यं वक्तुं प्रतिजानीते **मयीति** । **मयि** श्रीकृष्णे । **आ** अत्यन्तं **सक्तमनाः** अतीवस्नेहयुक्तमनाः । **योगं** द्विरूपं ज्ञानोपायम् । **युञ्जन्** अनुतिष्ठन् । **मदाश्रयः** भगवानेव मया सर्वं कारयति स एव मे शरणं तस्मिन्नेवाहं स्थित इति जानन्नित्यर्थः । असंशयं समग्रमिति क्रियाविशेषणम् । तव **असंशयं समग्रं** च **यथा** भवति तथा । **मां यथा** येन प्रकारेण । **ज्ञास्यसि तच्छृणु** तत्प्रकारकमज्ज्ञानजनकवचनं श्रुत्वा तत्र निष्ठां कुर्वित्यर्थः । तदित्यस्य तथेति वाऽर्थः ॥

*अ०प्र०— अ०प्र०—* ज्ञानसाधनं प्राधान्येनोक्तमतीतैः षड्भिरध्यायैः । तच्च भक्तियुतमेव फलजनकं नान्यथेति षष्ठान्ते प्रस्तुतं तद्भक्तेरुत्पादनाय भगवन्माहात्म्यं प्राधान्येनोच्यत उत्तरैः षड्भिः । तत्र तावच्छ्रोतारमभिमुखीकृत्य विवक्षितभगवन्माहात्म्यज्ञानं स्तुवन् वक्तुं प्रतिजानीते । तत्र पूर्वाध्यायान्ते मद्गतेनान्तरात्मना यो मां भजते स मे युक्ततमो मतेत्युक्तं तत्र कीदृशस्त्वं यस्य भक्तिः कर्तव्येत्यपेक्षायां स्वरूपं निरूपयिष्यन् श्रीभगवानाह मय्यासक्तमना इति द्वाभ्याम् । तत्रादौ **मयीति** ।

अथान्वयः— हे पार्थ ![१], मय्यासक्तमनाः[२], मदाश्रयः सन्[३], योगं युञ्जन्[४], असंशयं[५], मां[६], समग्रं[७], यथा ज्ञास्यसि[८], तत्[९], शृणु[१०] ॥

हे पार्थ ![१], मय्यासक्तमनाः = मय्येव आसक्तं मनो यस्य सः तथा । मयि परमेश्वरे अभिनिविष्टं मनो यस्य अतीव स्नेहयुक्तमनाः भक्तिमानिति यावत्[२], मदाश्रयः = अहमेव आश्रयो यस्य भगवानेव मया सर्वं कारयतीति स एव मे रक्षकः तदाधारेणाऽहं स्थित इति जानन् अनन्य-शरणः सन्[३], योगं युञ्जन् = ज्ञानोपायं अनुतिष्ठन् अभ्यसन्नित्यर्थः[४], असंशयं संशयं विना[५], मां समग्रं = यथावत् योग्यतया पूर्णं विभूतिबलैश्वर्यादिसहितं मोक्षाय पर्याप्तं[७], एतादृशं मां यथा ज्ञास्यसि[८], तथा मया ज्ञानजनकवक्ष्यमाणवाक्यं तत् = तादृशं वाक्यं[९], शृणु = श्रुत्वा तत्र निष्ठां कुर्विति भावः ॥ १ ॥

### भाष्यम्

**साधनं प्राधान्येनोक्तमतीतैरध्यायैः । उत्तरैस्तु षड्भिर्भगवन्माहात्म्यं प्राधा-न्येनाह— आसक्तमनाः अतीवस्नेहयुक्तमनाः । मदाश्रयः = "भग-वानेव मया सर्वं कारयति । स एव मे शरणम् । तस्मिन्नेव चाहं स्थित" इति स्थितः । असंशयं, समग्रं इति क्रियाविशेषणम् ॥ १ ॥**

*प०टी०*— पूर्वानुवादपूर्वकमुत्तराध्यायषट्कार्थमाह **साधनमिति** । ननु साधनवचनानन्तरं भगवन्महिमोक्तौ का सङ्गतिः इत्याशङ्क्य, एतद्भगवतैव परिहृतमित्यभिप्रायेणाद्यश्लोकं व्याचष्टे **आसक्तेति** । यो योगो भगवत्स्नेहपूर्वं क्रियते स एव ज्ञानाङ्गो नान्यः । भगवति स्नेहश्च तन्महिमोक्तौ भवति । अतः पूर्वं योगार्थमेव भगवन्महिमोच्यत इत्यर्थः । ननु सर्वेषामपि भगवदाश्रयत्वात् को विशेषो योगिनो विधीयते ? इत्यत आह **मदाश्रय इति** । नन्वनन्तं भगवन्तं कथमर्जुनः समग्रं ज्ञास्यति । इत्यत आह **असंशयमिति** ॥

*न०टी०*—यदुक्तं विस्तरेणाद्यषट्के त्रिविधं कर्म यज्ञादिलक्षणं भगवदर्पितं सङ्गरहितम्, भगवज्ज्ञानम्, तत्सहितं ध्यानम्, तदपरोक्षज्ञानम्, तद्भक्तिश्चेति क्रमोन्नतं साधनजातं सङ्ग्रहेणापि तदन्तश्लोकद्वयेन, तद्भगवन्महिम्नि विशेषतः कथिते सिद्ध्यतीत्यधुना सोऽभिधीयत इति भावेनोत्तरषट्कार्थमाह **साधनमिति** । आद्यश्लोकारूढैवेयं सङ्गतिरिति सूचयन् तं व्याख्यातुमुपक्रमते **आसक्तेति** । तथाहि । यथा मन्माहात्म्येऽभिधीयमाने मय्यतीव स्नेहयुक्तमना भूत्वा कर्मयोगं समाधियोगं च युञ्जन् मां परोक्षमपरोक्षं च ज्ञास्यति तत्तद्योग्यः, तथा श्रुणूत्तरषट्कमिति । ननु किं भगवदाश्रयत्वं नाम ? तच्च योगिन एवेत्यत्र को विशेषः ? इत्यत आह **मदाश्रय इति** । एतादृशभगवदाश्रयत्वे सर्वेषां विद्यमानेऽप्येतज्जानन्नेवास्थितो योगी नान्य इत्यर्थः । ननु यं ब्रह्माऽपि सर्वविशेषसहितं न पश्यति । कं कथमर्जुनः समग्रं पश्यति ? इत्यत आह **असंशयमिति** । 'असंशयम्' इतिवत् 'समग्रम्' इत्यपि क्रियाविशेषणमेव । ततश्च तत्र योग्यज्ञानं यथा समग्रं भवति तथा मां ज्ञास्यसीत्यर्थः । उत्तरश्लोकेऽपि 'ते' तव योग्यं 'ज्ञानमशेषतः' इत्यर्थः ॥

*प्र०दी०*— ज्ञानसाधनादन्यदुत्तराध्यायप्रतिपाद्यं वक्तुं ''योगे त्विमां श्रृणु'' इति प्रतिज्ञातमसमाप्य कथमर्थान्तरमुच्यत इत्याशङ्कां तावत्परिहरति— **साधनमिति** । ज्ञानस्येति शेषः । तत्र तत्र भगवन्महिम्नोऽपि वर्णितत्वेन प्राधान्येनेत्युक्तम् । प्राचुर्येणेत्यर्थः । उक्तमित्यनेन प्रतिज्ञातसमाप्तिं सूचयति । तच्च प्रतिज्ञान्तरकरणादवगम्यते । इदानीमुत्तरग्रन्थप्रतिपाद्यमाह— **उत्तरैस्त्विति** । अध्यायैरिति वर्तते । अनेन ज्ञानविज्ञानशब्दौ ज्ञेयभगवन्माहात्म्यपराविति सूचितम् । अत्रापि क्वचित्साधनस्योक्तत्वात्प्राधान्येनेत्युक्तम् । सङ्गतिस्तु प्रथमश्लोक एवोक्ता । अनेन द्विविधेन योगेन यज्ज्ञातव्यं तच्छृणु इत्युक्तत्वात् । आसक्तमनाः सम्बद्धमना इति प्रतीतिनिरासायाह– **आसक्तेति** । 'अतीव' इत्याद्योऽर्थः । सम्बन्धमात्रस्य योगानङ्गत्वादिति भावः । भगवदाश्रयत्वं सर्वसाधारणं कथं योगिनो विशेषणमित्यत आह— **मदाश्रय इति** । शरणं रक्षकः । इति स्थित इति जानन्निति यावत् । असंशयं समग्रमित्युभयं भगवद्विशेषणत्वेन भास्करो व्याख्यातवान् ''संशयरहितं समग्रं

कृत्स्नं मां'' इति । अपरस्तु समग्रमित्येव ''समग्रं समस्तविभूतिबलशक्त्यैश्वर्यादिगुणसम्पन्नं मां संशयमन्तरेण'' इति । तन्निरासार्थमाह— **असंशयमिति** । तव समग्रं यथा भवति तथेत्यर्थः । न हि भगवतः संशयराहित्यमिदानीं वक्तव्यम् । न च भगवान् समग्रोऽन्येन केनचिच्छक्यो ज्ञातुम् । ''स्वयमेवात्मनाऽऽत्मानं वेत्थ त्वं'' इति वक्ष्यमाणत्वादिति भावः ॥

***भा०दी०***— भगवन्महिमोक्तेन प्राधान्यनिरासाय प्राधान्यपदार्थमाह **प्राचुर्येणेति** । प्रतिज्ञान्त ........ ज्ञास्यसित ........ रकरणत्वादित्यर्थः । **सङ्गतिस्त्विति** । पूर्वोक्तषट्कयोर्मध्यासक्तेति श्लोक एवोक्तिरि.......... तां व्यनक्ति । अनेन ........... शृण्विति द्वितीये प्रतिज्ञातं ज्ञानस्य बहिरङ्ग-साधनं कर्मयोगमापञ्चमाध्यायसमाप्तिनिरूप्यापञ्चमेऽन्तरङ्गसाधनसमाधियोगोक्ति ......... पूर्वोक्तेन द्विविधेन योगेनेत्युक्तम् । **वक्ष्यमाणत्वादिति** । 'स्वयमेवात्मनात्मानं वेत्थ त्वं पुरुषोत्तम' इत्या-दिना ॥

***भा०र०***— **ज्ञानसाधनादन्यदिति** । ''योगे त्विमां शृणु'' (२.३९) इति प्रतिज्ञातो हि ज्ञानसाधनयोगो द्विविधः । कामादिवर्जनयुक्तनिवृत्तकर्मानुष्ठानलक्षणक एकः समाधिरूपोऽपर इति यत्, तदुभयस्माद् **अन्यत्** भगवन्माहात्म्यरूपमित्यर्थः । फलरूपतयाऽभ्यर्हितत्वात् ''मोक्षस्य साधनम्'' इति प्रतीतौ असङ्गतिशङ्का स्याद् इत्यतोऽध्याहरति **ज्ञानस्येति** । **तत्र** अतीतेष्वध्यायेषु ''न त्वेवाहम्'' (२.१२) इत्यादिना द्वितीये, ''यो बुद्धेः परतस्तु सः'' (३.४२) इति तृतीये, ''अजोऽपि सन्नव्ययात्मा'' (४.६) इति चतुर्थे, ''भोक्तारं यज्ञतपसाम्'' (५.२९) इति पञ्चमे, ''सर्वभूतस्थमात्मानम्'' (६.२९) इति षष्ठे च जननमरणादिदोषराहित्य-अप्रमेयत्वादिभगवन्माहा-त्म्यस्य वर्णितत्वादित्यर्थः । ''तत्र तत्र'' इति पाठेऽप्येवमेवार्थः । ननु 'प्राधान्यम्' इहानुपसर्जन-त्वम् । तच्च भगवन्महिम्न एव, सर्वस्य तदर्थत्वात् । तत् कथं साधनस्य प्राधान्यम् ? इत्यतोऽत्र विवक्षितं प्राधान्यशब्दार्थमाह **प्राचुर्येणेत्यर्थ इति** । बहुना ग्रन्थसन्दर्भेणेत्यर्थः । प्रतिज्ञातम् असमाप्य कथम् अन्यदुच्यते ? इति शङ्कितम् । तत्परिहर्तुमाह **उक्तमितीति** । 'उक्तम्' इत्युक्ति-मात्रेण कथं समाप्तिसूचनम् ? इत्यतः स्वयं ज्ञापकं दर्शयति **तच्चेति** । प्रतिज्ञातार्थयोगवर्णन-समापनम् । ''यथा ज्ञास्यसि तच्छृणु'' (७.१) इति प्रतिज्ञान्तरकरणादित्यर्थः । पूर्वप्रतिज्ञातार्थ-वर्णनाभिप्राये पुनरत्र प्रतिज्ञान्तरमयुक्तमिति भावः ।

ननु ''उत्तरैः षड्भिरध्यायैर्भगवन्माहात्म्यम्'' इति भाष्यं ''ज्ञानं तेऽहं सविज्ञानमिदं वक्ष्यामि'' (७.२) इति गीताविसंवादि ? इति शङ्कां परिहरति **अनेनेति** । 'उत्तरैः' इति भाष्येण । 'ज्ञेय-भगवन्माहात्म्यपरौ' इति वदन् ''ज्ञा = अवबोधने'' इति धातोः कर्मणि ''कृत्यल्युटो बहुलम्'' इति

बहुलग्रहणात् ल्युट् । अत एव "यज्ज्ञात्वा नेह भूयोऽन्यज्ज्ञातव्यमवशिष्यते" (७.२) इति भगवद्वचनमित्यभिसन्धत्ते **अत्रापि** भगवन्माहात्म्यप्रतिपादनपरेऽप्युत्तरषट्के । **उक्तत्वादिति** ।

"ते द्वन्द्वमोहनिर्मुक्ता भजन्ते मां दृढव्रताः ।" (७.२८)

"जरामरणमोक्षाय मामाश्रित्य यतन्ति ये ॥" (७.२९) इति सप्तमे,

"तस्मात्सर्वेषु कालेषु मामनुस्मर युध्य च ।
मय्यर्पितमनोबुद्धिर्मामेवैष्यस्यसंशयम् ॥" (८.७)

"अभ्यासयोगयुक्तेन चेतसा नान्यगामिना ।
परमं पुरुषं दिव्यं याति पार्थानुचिन्तयन् ।" (८.८)

"सर्वद्वाराणि संयम्य मनो हृदि निरुध्य च ।
मूर्ध्न्याधायात्मनः प्राणमास्थितो योगधारणाम् ॥" (८.१२)

"ओमित्येकाक्षरं ब्रह्म व्याहरन्मामनुस्मरन् ॥" (८.१३) इत्यादिना अष्टमे,

"अनन्याश्चिन्तयन्तो मां ये जनाः पर्युपासते ।
तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहम् ॥" इति (९.२२)

"मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु ॥" (९.३४)

इत्यादिना नवमादौ च साधनस्योक्तत्वात् **प्राधान्येन** अन्यानुपसर्जनतया इत्युक्तमित्यर्थः । "न त्वेवाहम्" (२.१२) इत्यादिना पूर्वषट्के भगवन्माहात्म्योक्तावपि साधनस्यैव प्राचुर्येणोक्तिः, अत्र तु षट्के भगवत्संवित्साधनोक्तावपि अन्यानुपसर्जनतया प्राचुर्येण च भगवन्माहात्म्यस्य वर्णनात्, न पूर्वोत्तरषट्कयोरभिधेयसाङ्कर्यं शङ्कनीयमिति भाष्यभाव इति हृदयम् ।

ननु साधनवचनानन्तरं भगवन्माहात्म्यवचनस्य का सङ्गतिः ? इत्याशङ्क्य भगवतैवाद्यश्लोके परिहृता इति, भाष्ये तदनुक्तिर्न दोषायेति भावेनाह **सङ्गतिस्त्विति** । हेतुहेतुमद्भावलक्षणसङ्गतिरित्यर्थः । कथमुक्ता ? इत्यत उपपादयति **अनेनेति** । आपञ्चमाध्यायसमाप्ति उक्तेन कर्मयोगलक्षणेन, षष्ठोक्तेन समाधिलक्षणेन इत्येवं **द्विविधेन योगेन** । तच्छब्दश्रवणाद् यच्छब्दोऽध्याहृतः । यः पूर्वषट्के द्विविधो योगः स भक्तिपूर्वकमनुष्ठित एव भगवज्ज्ञानसाधनम्, नान्यथा । अतो भक्त्युत्पादनार्थं भगवन्महिमा उत्तरषट्के प्राधान्येनाभिधीयत इति आद्यश्लोके अवगमेन नासङ्गतिशङ्केति भावः । योगद्वयसाध्यं भगवन्माहात्म्यज्ञानम्" इति पूर्वोत्तरषट्कयोः हेतुहेतुमद्भावलक्षणसङ्गतिप्रतिपत्तिः प्रथमश्लोकत एवोत्पद्यत इति वाऽऽशयः ।

**आङोऽर्थ इति** । ''आङीषदर्थेऽभिव्याप्तौ सीम्न्यर्थे धातुयोगजे'' (अ.को.) इत्यमरव्याख्याने अनेकार्थत्वे सत्यपि, अनभिव्यक्तार्था एव धातवः 'आङ्' इत्याद्युपसर्गयोगाद् अर्थविशेषे वर्तन्ते । अतो धात्वर्थद्योतकत्वेनोपसर्गाणामपि तदर्थत्वमुच्यत इत्युक्त्वा, 'धातुयोगजेऽर्थे' इत्यस्य विवरण-परम् अमरशेषवचनं ''क्रियोद्गमग्रहोधर्षाश्लेषशापाभिकाङ्क्षणः'' इत्याद्युदाहृत्य, एवंप्रयोगान् उपलक्ष्य उपसर्गबोध्या अर्था द्रष्टव्या इत्यभिधानात्, अत्रापि आ धातुयोगजार्थस्य क्रियागतातिशयस्यावगमे तद्युक्तधातोरपि स्वार्थसङ्गत्यागेन स्नेहार्थत्वं ज्ञातव्यमिति भावेन भाष्ये 'अतीवस्नेह' इत्युक्तम् । अत एव ''ईषदर्थे क्रियायोगे'' (व्या.म.भा.) इति, ''उपसर्गवशाद्धातुरर्थान्तरविलासकृत् । प्रहाराहार-संहारविहारपरिहारवत्'' इत्यादि वैयाकरणवचनमिति भावः ।

'सम्बद्धमनाः' इति प्रतीतार्थे दोषमाह **सम्बन्धमात्रस्येति** । आसक्तमनस्कत्वस्य योगं प्रत्यङ्गत्वमवगम्यते । तत्सम्बन्धमात्रार्थत्वे चैद्यपौण्ड्रकादिषु द्वेषिषु मनस्सम्बन्धस्य सत्त्वेऽपि तेषां योगित्वाभावादिति भावः । ''शरणं रक्षणे वधे'' इत्यनेकार्थत्वस्य विश्वप्रकाशेऽभिधानाद् रक्षणादेः प्रकृतानुपयोगाद्, विवक्षितमर्थमाह **शरणं रक्षक इति** । **शृणाति** विपदं हिनस्तीति शरणम् । ''शृ = हिंसायाम्'' इत्यतः ''कृत्यल्युटो बहुलम्'' इति कर्तरि ल्युट् । ''शरणं गृहरक्षित्रोः'' इत्यमरः । ''शरणं तरुणेन्दुशेखरः'' इत्यादिप्रयोगाद्, रूपभेदाच्च नपुंसकत्वम् । ''यदनान्तमकर्तरि'' इति वचनं तु भाववचनमनान्तं नपुंसकमित्येवंपरम्, अन्यत्रोदासीनमिति व्याख्यातं नैघण्टुकैरिति भावः । भाषितमपि भगवदाश्रयत्वं साधारणमेव ? इत्यत आह **जानन्निति** । **यावदिति** एवंप्रकारकं तु ज्ञानं योगिन एवेति भावः ।

तदेवाह **संशयरहितमित्यादि** । **अपरः** सङ्करः, ''भगवद्विशेषणत्वेन व्याख्यातवान्'' इति वर्तते । तद्भाष्यमनुवदति **समग्रमिति** । तन्मतेऽपि 'असंशयम्' इत्येतद् भगवद्विशेषणमिति कस्मान्न स्यात् ? इति शङ्काऽपनोदायोक्तम् **संशयमन्तरेणेति** । **तन्निरासार्थम्** व्याख्यानद्वयनिरासार्थम् । ''न विद्यते संशयो यस्मिन् कर्मणि तद्यथा भवति तथेत्यसंशयम्'' इत्यस्यानतिगूढत्वात् 'समग्रम्' इत्यस्य क्रियाविशेषणत्वं व्याख्याति **तवेति** । ''योग्यं ज्ञानम्'' इति योज्यम् । त्वद्योग्यताऽनुसारेण फलाय पर्याप्तमित्यर्थः । मतद्वयमपि दूषयति **न हीति** । **समग्रः** कृत्स्नः समस्तविभूतिबलशक्त्यै-श्वर्यादिगुणसम्पन्नः । **वक्ष्यमाणत्वात्** दशमे (१०.१५) अनेनैव ''यं ब्रह्मापि सर्वविशेषसहितं न पश्यति, तं कथमर्जुनः समग्रं पश्येत् ?'' इति चोद्यमपि निरस्तम् । तव 'समग्रम्' इति क्रिया-विशेषणत्वेन व्याख्यानात् ॥ १ ॥

**गीता**

## ज्ञानं तेऽहं सविज्ञानमिदं वक्ष्याम्यशेषतः ।
## यज्ज्ञात्वा नेह भूयोऽन्यज्ज्ञातव्यमवशिष्यते ॥ २ ॥

***वि०वि०*—** इदं मद्विषयं ज्ञानं सामान्यज्ञानं सविज्ञानं विशेषज्ञानसहितं वक्ष्यामि । यज्ज्ञात्वा पुनरन्यत् ज्ञातव्यं नावशिष्टम् । समस्तमपि ज्ञातप्रायमेव ॥

***सा०सं०*—** श्रवणं प्रवचनाधीनमित्याह **ज्ञानमिति** । ज्ञानविज्ञानशब्दौ कर्मार्थल्युडन्तौ । हे पार्थ ते तुभ्यम् । इदं मदीयम् । विज्ञानसहितं **ज्ञानं** विशेषेण ज्ञातव्यसहितं ज्ञातव्यं माहात्म्यं सामान्यं विशेषमाहात्म्यं च । **वक्ष्यामीत्यर्थः** । **अशेषत** इत्यस्य यावदर्जुनयोग्यं तावन्मध्ये शिष्यमाणमकृत्वेत्यर्थः । वक्ष्यमाणं स्तौति **यदिति** । **यत्** माहात्म्यं **ज्ञात्वा** । **भूयः** पुनः **अन्यज्ज्ञातव्यम्** । **इह** मदुक्तेऽर्थे । **नावशिष्यते** अवशिष्टं नास्तीति ॥

***अ०प्र०*—** वक्ष्यमाणं स्तौति **ज्ञानमिति** ।

हे पार्थ !, अहं[१], ते[२], इदं[३], ज्ञानं[४], सविज्ञानं[५], अशेषतः[६], वक्ष्यामि[७], इह त्वया[८], यज्ज्ञानं[९], ज्ञात्वा[१०] भूयः[११] अन्यत्[१२], ज्ञातव्यं[१३], नावशिष्यते इत्यन्वयः ॥

हे पार्थ !, अहं = सर्वज्ञः[१], ते = तव[२], इदं = मद्विषयं[३], ज्ञानं = मम साक्षात्कारकं शास्त्रीयं सामान्यविषयं[४], सविज्ञानं = विशेषविषयज्ञानसहितं यद्वा, विशेषेण प्रपञ्चो येन ज्ञायते तद्विज्ञानं तेन सहितं तथा[५], अशेषतः = साकल्येन[६], वक्ष्यामि = उपदिशामि[७], इह = अस्मिन्लोके श्रेयो मार्गे वर्तमानेन त्वया[८], यत् ज्ञानं[९], ज्ञात्वा[१०] भूयः = पुनः[११] अन्यत्[११] ज्ञातव्यं = बुद्धेर्ज्ञेय-पदार्थान्तरं स्वल्पं विशेषं वा । श्रीविष्णुसर्वोत्तमः जीवस्तदधीनः स सर्वव्यापकः मम स्वामी रक्षत्येवेति दृढवैराग्यभक्त्या ज्ञानद्वारकमोक्षसाधनान्तरगं बुद्धेर्ज्ञेयपदार्थान्तरं स्वल्पं विशेषं वा मोक्षार्थं ज्ञातव्यम्[१३], नावशिष्यते = अवशिष्टं न भवति न विद्यत इत्यर्थः । अनेन मद्बोधेनैव अपगतशोकः सन् युद्धादि स्वविहितकर्मणा मां भजन् तेनैव कृतार्थो भविष्यसीत्यर्थः । अत्र ज्ञानविज्ञानशब्दौ ज्ञेयविज्ञेयतत्त्वपरौ ॥ २ ॥

**भाष्यम्**

**इदं मद्विषयं ज्ञानम् । विज्ञानं = विशेषज्ञानम् ॥ २ ॥**

**आङोऽर्थ इति** । ''आङीषदर्थेऽभिव्याप्तौ सीम्न्यर्थे धातुयोगजे'' (अ.को.) इत्यमरव्याख्याने अनेकार्थत्वे सत्यपि, अनभिव्यक्तार्था एव धातवः 'आङ्' इत्याद्युपसर्गयोगाद् अर्थविशेषे वर्तन्ते । अतो धात्वर्थद्योतकत्वेनोपसर्गाणामपि तदर्थत्वमुच्यत इत्युक्त्वा, 'धातुयोगजेऽर्थे' इत्यस्य विवरण-परम् अमरशेषवचनं ''क्रियोद्गमग्रहोधर्षाश्लेषशापाभिकाङ्क्षणः'' इत्याद्युदाहृत्य, एवंप्रयोगान् उपलक्ष्य उपसर्गबोध्या अर्था द्रष्टव्या इत्यभिधानात्, अत्रापि आ धातुयोगजार्थस्य क्रियागतातिशयस्यावगमे तद्युक्तधातोरपि स्वार्थसङ्गत्यागेन स्नेहार्थत्वं ज्ञातव्यमिति भावेन भाष्ये 'अतीवस्नेह' इत्युक्तम् । अत एव ''ईषदर्थे क्रियायोगे'' (व्या.म.भा.) इति, ''उपसर्गवशाद्धातुरर्थान्तरविलासकृत् । प्रहाराहार-संहारविहारपरिहारवत्'' इत्यादि वैयाकरणवचनमिति भावः ।

'सम्बद्धमनाः' इति प्रतीतार्थे दोषमाह **सम्बन्धमात्रस्येति** । आसक्तमनस्कत्वस्य योगं प्रत्यङ्गत्वमवगम्यते । तत्सम्बन्धमात्रार्थत्वे चैद्यपौण्ड्रकादिषु द्वेषिषु मनस्सम्बन्धस्य सत्त्वेऽपि तेषां योगित्वाभावादिति भावः । ''शरणं रक्षणे वधे'' इत्यनेकार्थत्वस्य विश्वप्रकाशेऽभिधानाद् रक्षणादेः प्रकृतानुपयोगाद्, विवक्षितमर्थमाह **शरणं रक्षक इति** । **शृणाति** विपदं हिनस्तीति शरणम् । ''शृ = हिंसायाम्'' इत्यतः ''कृत्यल्युटो बहुलम्'' इति कर्तरि ल्युट् । ''शरणं गृहरक्षित्रोः'' इत्यमरः । ''शरणं तरुणेन्दुशेखरः'' इत्यादिप्रयोगाद्, रूपभेदाच्च नपुंसकत्वम् । ''यदनान्तमकर्तरि'' इति वचनं तु भाववचनमनान्तं नपुंसकमित्येवंपरम्, अन्यत्रोदासीनमिति व्याख्यातं नैघण्टुकैरिति भावः । भाषितमपि भगवदाश्रयत्वं साधारणमेव ? इत्यत आह **जानन्निति** । **यावदिति** एवंप्रकारकं तु ज्ञानं योगिन एवेति भावः ।

तदेवाह **संशयरहितमित्यादि** । **अपरः** सङ्करः, ''भगवद्विशेषणत्वेन व्याख्यातवान्'' इति वर्तते । तद्भाष्यमनुवदति **समग्रमिति** । तन्मतेऽपि 'असंशयम्' इत्येतद् भगवद्विशेषणमिति कस्मान्न स्यात् ? इति शङ्काऽपनोदायोक्तम् **संशयमन्तरेणेति** । **तन्निरासार्थम्** व्याख्यानद्वयनिरासार्थम् । ''न विद्यते संशयो यस्मिन् कर्मणि तद्यथा भवति तथेत्यसंशयम्'' इत्यस्यानतिगूढत्वात् 'समग्रम्' इत्यस्य क्रियाविशेषणत्वं व्याख्याति **तवेति** । ''योग्यं ज्ञानम्'' इति योज्यम् । त्वद्योग्यताऽनुसारेण फलाय पर्याप्तमित्यर्थः । मतद्वयमपि दूषयति **न हीति** । **समग्रः** कृत्स्नः समस्तविभूतिबलशक्त्यै-श्वर्यादिगुणसम्पन्नः । **वक्ष्यमाणत्वात्** दशमे (१०.१५) अनेनैव ''यं ब्रह्मापि सर्वविशेषसहितं न पश्यति, तं कथमर्जुनः समग्रं पश्येत् ?'' इति चोद्यमपि निरस्तम् । तव 'समग्रम्' इति क्रिया-विशेषणत्वेन व्याख्यानात् ॥ १ ॥

**गीता**

# ज्ञानं तेऽहं सविज्ञानमिदं वक्ष्याम्यशेषतः ।
# यज्ज्ञात्वा नेह भूयोऽन्यज्ज्ञातव्यमवशिष्यते ॥ २ ॥

*वि०वि०*— इदं मद्विषयं ज्ञानं सामान्यज्ञानं सविज्ञानं विशेषज्ञानसहितं वक्ष्यामि । यज्ज्ञात्वा पुनरन्यत् ज्ञातव्यं नावशिष्टम् । समस्तमपि ज्ञातप्रायमेव ॥

*सा०सं०*— श्रवणं प्रवचनाधीनमित्याह **ज्ञानमिति** । ज्ञानविज्ञानशब्दौ कर्मार्थल्युडन्तौ । हे पार्थ ते तुभ्यम् । इदं मदीयम् । विज्ञानसहितं **ज्ञानं** विशेषेण ज्ञातव्यसहितं ज्ञातव्यं माहात्म्यं सामान्यं विशेषमाहात्म्यं च । **वक्ष्यामीत्यर्थः** । **अशेषत** इत्यस्य यावदर्जुनयोग्यं तावन्मध्ये शिष्यमाणमकृत्वेत्यर्थः । वक्ष्यमाणं स्तौति **यदिति** । **यत्** माहात्म्यं **ज्ञात्वा** । **भूयः** पुनः **अन्यज्ज्ञातव्यम्** । **इह** मदुक्तेऽर्थे । **नावशिष्यते** अवशिष्टं नास्तीति ॥

*अ०प्र०*— वक्ष्यमाणं स्तौति **ज्ञानमिति** ।

हे पार्थ !, अहं[१], ते[२], इदं[३], ज्ञानं[४], सविज्ञानं[५], अशेषतः[६], वक्ष्यामि[७], इह त्वया[८], यज्ज्ञानं[९], ज्ञात्वा[१०] भूयः[११] अन्यत्[१२], ज्ञातव्यं[१३], नावशिष्यते इत्यन्वयः ॥

हे पार्थ !, अहं = सर्वज्ञः[१], ते = तव[२], इदं = मद्विषयं[३], ज्ञानं = मम साक्षात्कारकं शास्त्रीयं सामान्यविषयं[४], सविज्ञानं = विशेषविषयज्ञानसहितं यद्वा, विशेषेण प्रपञ्चो येन ज्ञायते तद्विज्ञानं तेन सहितं तथा[५], अशेषतः = साकल्येन[६], वक्ष्यामि = उपदिशामि[७], इह = अस्मिन्लोके श्रेयो मार्गे वर्तमानेन त्वया[८], यत् ज्ञानं[९], ज्ञात्वा[१०] भूयः = पुनः[११] अन्यत्[११] ज्ञातव्यं = बुद्धेर्ज्ञेय-पदार्थान्तरं स्वल्पं विशेषं वा । श्रीविष्णुसर्वोत्तमः जीवस्तदधीनः स सर्वव्यापकः मम स्वामी रक्षत्येवेति दृढवैराग्यभक्त्या ज्ञानद्वारकमोक्षसाधनान्तरगं बुद्धेर्ज्ञेयपदार्थान्तरं स्वल्पं विशेषं वा मोक्षार्थ ज्ञातव्यम्[१३], नावशिष्यते = अवशिष्टं न भवति न विद्यत इत्यर्थः । अनेन मद्बोधेनैव अपगतशोकः सन् युद्धादि स्वविहितकर्मणा मां भजन् तेनैव कृतार्थो भविष्यसीत्यर्थः । अत्र ज्ञानविज्ञानशब्दौ ज्ञेयविज्ञेयतत्त्वपरौ ॥ २ ॥

**भाष्यम्**

**इदं मद्विषयं ज्ञानम् । विज्ञानं = विशेषज्ञानम् ॥ २ ॥**

*प०टी०*— 'असंशयम्' इतिवत् तव मोक्षार्थं समग्रं यथा भवति तथेत्यर्थः । ज्ञानस्यापुरोवर्तित्वात् कथम् 'इदम्' इति परामर्शः ? इत्यत आह **इदमिति** । 'विज्ञान'पदेनात्र नापरोक्षज्ञानमिति भावेनाह **विज्ञानमिति** ॥

*न०टी०*—'मां यथा ज्ञास्यसि' इति प्रस्तुतत्वात् भगवद्विषयज्ञानस्येदन्तया निर्देश इति भावेनाह **इदमिति** । 'रसोऽहम्' इत्यादिवक्ष्यमाणानन्तविशेषान् विज्ञानपदोद्दिष्टान् भगवत्यसहमानेन मायिनाऽऽच्छादितं 'सविज्ञान'पदं 'सविज्ञानं स्वानुभवसंयुक्तम्' इति । तत् पुनः प्रकाशयति **विज्ञानमिति** ॥

*प्र०दी०*— ननु ज्ञानं वक्ष्यते । न तूक्तम् । तत्कथमिदमिति परामर्श इत्यत आह— **इदमिति** । 'मां' इति स्वस्य प्रकृतत्वात्तत्सम्बन्धित्वेन ज्ञानमपि प्रकृतमिति भावः । ''सविज्ञानं स्वानुभवसंयुक्तं'' इत्येतदपाकर्तुं विज्ञानपदार्थमाह— **विज्ञानमिति** । अस्यैव वक्ष्यमाणत्वात् । अपरस्य तदभावादिति भावः ॥

*भा०र०*— 'मद्विषयम्' इति भाष्यभावोद्घाटनेन कृतचोद्यं परिहरति **मामितीति** । ''असंशयं समग्रं माम्'' इत्यस्मच्छब्देन भगवतः प्रकृतत्वात्, सम्बन्धित्वेन भगवन्माहात्म्यमपि प्रकृतमिति इदंशब्दस्य तत्परामर्शित्वं युक्तमित्यर्थः । अनेन ''मदीयमाहात्म्यविषयकं ज्ञानं तवोत्पादयिष्यामि'' इति भाष्यार्थ इत्युक्तं भवति । ''**सविज्ञानं** विशेषमाहात्म्यविषयकज्ञानेन सहितम् अनुभवसंयुक्तम्'' इति **सङ्करभाष्यं** साभिप्रायमनुवदति **स्वानुभवसंयुक्तमित्येतदिति** । **अस्यैवेति** विशेषज्ञानपदोक्तस्य स्वयोग्यस्य माहात्म्यविशेषस्य ''रसोऽहमप्सु कौन्तेय'' (७.८) इत्यादिना वक्ष्यमाणत्वात्, **अपरस्य** स्वानुभवस्य **तदभावात्** वक्ष्यमाणत्वाभावाद् भाष्यकारीयमेव व्याख्यानं युक्तमित्यर्थः ॥ २ ॥

**गीतातात्पर्यनिर्णयः**

**भगवन्महिमा विशेषत उच्यते ॥ १-२ ॥**

*प्रका०*— एतदध्यायप्रतिपाद्यं दर्शयति **भगवन्महिमेति** । अध्यायान्तरेषु भगवन्महिमोक्तावपि अत्र विष्णुमहत्त्वं विशेषेणोच्यत इत्यर्थः ।

*न्या०दी०*— एतदध्यायप्रतिपाद्यमर्थं दर्शयति **भगवदिति** ॥ यत्पूर्वोक्तं ध्यानं तद्भक्तिपूर्वकमेव ज्ञानसाधनं, नान्यथा । अतो भक्त्यर्थं भगवन्महिमाऽस्मिन्नध्यायेऽभिधीयत इत्यर्थः । 'न त्वेवाह-

मि'त्यादिना प्रागपि भगवन्महिम्नो वर्णितत्वात् किमनेनेत्यत उक्तम् **विशेषत इति** ॥ प्राक् सङ्क्षेपेणोक्तोऽत्र विस्तरेणोच्यत इत्यर्थः । उपरितनाध्यायानामपि भगवन्महिमाभिधायकत्वादत्रेत्यादि नोक्तम् ।

*भा०दी०*— **पूर्वोक्तमिति** । पूर्वाध्यायादावुक्तमित्यर्थः ॥ **भक्त्यर्थमिति** । माहात्म्यज्ञानपूर्वकस्नेहरूपत्वात् भक्तेरिति भावः । **नोक्तम्** इति विभागः । अत्राध्याय इति अत्र सप्तमे इति वा नोक्तमित्यर्थः ॥ २ ॥

**गीता**

## मनुष्याणां सहस्रेषु कश्चिद्यतति सिद्धये ।
## यततामपि सिद्धानां कश्चिन्मां वेत्ति तत्त्वतः ॥ ३ ॥

*वि०वि०*— प्रतिज्ञातज्ञाने लिप्सामुत्पादयितुं तस्य दुर्लभत्वमाह **मनुष्याणामिति** । कश्चित्पुण्यवान् पुरुषः सिद्धये ज्ञानाय यतते । सिद्धानां सहस्रेषु कश्चिदेव भगवत्कृपावान् तत्त्वतो याथार्थ्येन वेत्ति ॥

*सा०सं०*— प्रतिज्ञाते ज्ञाने आदरजननाय तस्य दौर्लभ्यमाह **मनुष्याणामिति** । **कश्चिदेव** पुण्यवान् पुरुषः । **सिद्धये** ज्ञानाय । **यतति** यतते । **यततां** ज्ञानार्थं यतमानानामपि मध्ये । **कश्चिदेव** सिद्धिमान् भवतीति योज्यम् । सिद्धानां ज्ञानिनामपि मध्ये कश्चिदेव **तत्त्वतो मां वेत्ति** यथावज्जानाति ॥

*अ०प्र०*— मद्भक्तिं विना तु मज्ज्ञानं दुर्लभमित्याह **मनुष्याणामिति** ।

मनुष्येतर असङ्ख्यातानां जीवानां मध्ये श्रेयसि प्रवृत्तिरेव नास्ति । मनुष्याणां सहस्रेषु इत्यत्र सहस्रेषु इत्युपलक्षणं असङ्ख्येषु एव चेत् यततामपि सिद्धानामित्यत्र अपिशब्देन अर्थो गमयति तत्कथं असङ्ख्यातानां स्थावरजङ्गमादिजीवानां मध्ये ज्ञानसाधनयोग्यो मनुष्यजन्म मत्प्रसादेनैव प्राप्यते । तत्रापि असङ्ख्यातानां मनुष्याणां मध्ये एक एव पुरुषः मोक्षसाधनज्ञानप्रयत्नाय इच्छां कुरुते । एवं अपिशब्दस्यार्थः । तथा च तेषां मोक्षसाधनज्ञानप्रयत्नाय इच्छां कुर्वतां मनुष्याणां सहस्रेषु मध्ये[३], कश्चिदेव = एकः भगवत्कृपया[४], सिद्धये मोक्षसाधनज्ञानाय मुक्तये वा[५], यतते = प्रयत्नं कुरुते[६], तत्रापि यततां = मोक्षप्रयत्नशीलानां[७], असङ्ख्यातानां सिद्धानां मध्ये[८], कश्चित् = एक एव[९], मां एवं = मां परमात्मानं[१०] तत्त्वतः = याथार्थ्यसाक्षात्कारेण[११] वेत्ति = मत्प्रसादेनैव सम्यक् जानाति[१२], एवमुक्तप्रकारेण मज्ज्ञानं अतिदुर्लभतरं तुभ्यं करुणया वक्ष्ये इत्यर्थः ॥ तदुक्तम्—

'अनन्तानां तु जीवानां यतन्ते केचिदेव तु ।
मुक्त्यै तेषु तु मुच्यन्ते केचिन्मुक्तेषु च स्फुटम् ॥
केचिन्नैव हरिं सम्यग्ब्रह्मरुद्रादयो विदुः ।
अन्येषां यावता मुक्तिः तावज्ज्ञानं हरौ परम् ॥'

—इति वचनात् ॥ ३ ॥

**भाष्यम्**

**दौर्लभ्यं ज्ञानस्याह— मनुष्याणामिति ॥ ३ ॥**

*प०टी०*— स्वेन वक्ष्यमाणे श्रद्धातिशयाय दौर्लभ्यं वक्त्युत्तरश्लोकेनेत्याह **दौर्लभ्यमिति** ॥

*न०टी०*—अनन्तमहिमत्वादेव भगवतस्तद्विषयज्ञानं तत्प्रसादं विनाऽतिदुर्लभमिति भावेनोत्तरं श्लोकमवतारयति **दौर्लभ्यमिति** ॥

*प्र०दी०*— ननु ज्ञानादिवचनं प्रतिज्ञाय यत्किञ्चित्कथमुच्यत इत्यत आह— **दौर्लभ्यमिति** । श्रोतुरादरजननार्थमिति शेषः । ज्ञानस्य दौर्लभ्ये विज्ञानस्य तत्सुतराम् ॥

*भा०र०*— इदं "मनुष्याणां सहस्रेषु" इत्यादिकम्, प्रकृतासङ्गतत्वादिति भावः । ज्ञानदौर्लभ्यवर्णनस्यापि प्रकृतसङ्गतये शेषमाह **श्रोतुरिति** । उभयोरपि वक्ष्यमाणत्वाद् "ज्ञानविज्ञानयोर्दौर्लभ्यमाह" इति किन्न भाषितम् ? इत्यत आह **ज्ञानस्येति** । न्यायसिद्धत्वाद्भाष्ये तदनुक्तिरिति भावः ॥ ३ ॥

**गीतातात्पर्यनिर्णयः**

**"अनन्तानां तु जीवानां यतन्ते केचिदेव तु ।
मुक्त्यैतेषु च मुच्यन्ते केचिन्मुक्तेषु च स्फुटम् ॥**

**केचनैव हरिं सम्यग् ब्रह्मरुद्रादयो विदुः ।
अन्येषां यावता मुक्तिस्तावत् ज्ञानं हरौ परम् ॥" इति पाद्मे ।**

**"मुक्तानामपि सिद्धानां नारायणपरायणः ।
सुदुर्लभः प्रशान्तात्मा कोटिष्वपि महामते ॥" इति भागवते ।**

*प्रका०*— मनुष्याणामित्येतस्य श्लोकस्यार्थमाह **अनन्तानामित्यादिना** । मुक्त्यै यतमानेष्वपि केचिन्मुच्यन्त इत्यनेन यततामपि सिद्धानामित्येतदनन्तानामपि केषाञ्चित्सिद्धानां **मुक्तानामि**ति व्याख्यातं भवति । **नारायणपरायणः सुदुर्लभ** इत्यत्र नारायणैकायन इति ज्ञातव्यम् ।

*न्या०दी०*— प्रतिज्ञाते ज्ञाने लिप्सामुत्पादयितुं दौर्लभ्यं तस्योच्यते **मनुष्याणाम् इति** ॥ तत्स्मृतिभिर्व्याचष्टे **अनन्तानामिति** ॥ केचनैव चेत् सम्यग्विदुस्तर्हि कथमितरेषां मोक्ष इत्यत आह **अन्येषामिति** ॥ अनेन यततामपि केचित् सिद्धा भवन्तीति व्याख्यातं भवति ।

*भा०दी०*— **लिप्सेति** । लाभेच्छा । आदरजननायेति यावत् ॥ **इति व्याख्यातमिति** । शेषोक्त्येति भावः । इति प्रत्येकमन्वयः ॥

**गीतातात्पर्यनिर्णयः**

**"सर्वे मुक्ता हरौ भक्तास्तेषु ब्रह्मैव मुख्यतः ।**
**विष्णोः परमभक्तस्तु तस्मात् जीवघनो मतः ॥"**

**—इति सत्तत्त्वे ॥ ३ ॥**

*प्रका०*— मुक्तानां नारायणायतनत्वमस्ति । नारायणायतनस्तु हिरण्यगर्भ इत्येतदेव प्रदर्श्यते **सर्वे मुक्ता** इत्यनेन ॥

*न्या०दी०*— जीवन्मुक्तानां सर्वेषामपि सिद्धिपदोदिता मुक्तिर्भवति । सिद्धिं गताः सर्वेऽपि नारायणायनाः, तज्ज्ञानादिमत्त्वात् । नारायणपरायणस्तु सुदुर्लभ इत्यर्थः । **जीवघनो** जीवसारः । अनेन न केवलं महाज्ञानिनो दौर्लभ्यमपि तु महाभक्त्यादिमानपि दुर्लभ इत्युक्तं भवति ॥ ३ ॥

**गीता**

## भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च ।
## अहङ्कार इतीयं मे भिन्ना प्रकृतिरष्टधा ॥ ४ ॥

*वि०वि०*— प्रतिज्ञातं ज्ञानमाह **भूमिरित्यादिना** । महतो अहङ्कार एवान्तर्भावः । पृथिव्यादिकार्यरूपेण प्रकृतिरष्टधा भिन्नेत्यर्थः ॥

*वा०ल०*— 'मे भिन्ना प्रकृतिः' इत्यत्र मदधीना प्रकृतिः जडप्रकृतिः ॥

*सा०सं०*— एवमुपोद्घातमुक्त्वाऽधुना प्रथमप्रतिज्ञातं ज्ञानपदोक्तं ज्ञातव्यं तावदाह **भूमि-**रित्यादि श्लोकचतुष्टयेन । भूम्यादिपञ्चमहाभूतानि मनस्तत्त्वबुद्धितत्त्वे च । अहङ्कारपदेन महत्तत्त्व-मुपलक्षणीयम् । **अहङ्कारश्चेति** चशब्दान्वयः । **इति** एवम् । मदधीना **प्रकृतिरष्टधा भिन्ना** । उद्दिष्टापेक्षया अष्टधेत्युक्तिः । उपलक्षितापेक्षया तु नवधेति ज्ञेयम् । मत्प्रेरिता प्रकृतिः पृथिव्यादि-कार्यरूपेणैव भिन्नेत्यर्थः ॥

*अ०प्र०*— एवं श्रोतारमभिमुखीकृत्य इदानीं प्रकृतिद्वारा सृष्ट्यादिकर्तृत्वेन ईश्वरतत्त्वं प्रतिज्ञातं निरूपयिष्यन् परापरभेदेन प्रकृतिद्वयमाह **भूमिरिति** द्वाभ्याम् । तत्र **भूमिरिति** ।

भूम्यादि पञ्चपदैः पञ्चगन्धादितन्मात्राण्युच्यन्ते । यद्वा, भूम्यादिखान्तैः पञ्चमहाभूतानि सूक्ष्मैः सह एकीकृत्य गृह्यन्ते[१], मनःशब्देन तत्कारणभूतोऽहङ्कारः । यद्वा, मनःशब्देन तु मनसैव उन्नेय-मव्यक्तरूपं प्रधानं[६], बुद्धिश्चेत्यनेन तत्कारणभूतमहत्तत्त्वं[७], अहङ्कार एव = अहङ्कारशब्देन तत्कारण-मविद्यामहत्तत्त्वमुपलक्ष्यते । यद्वा, अहङ्कारशब्देन अहङ्कार एव । तेनैव तत्कार्याणि इन्द्रियाणि गृह्यन्ते[८], एवं जडप्रकृतिर्मायाख्या शक्तिः[९], अष्टधा भिन्ना । पृथिव्यादिकार्यभेदेन अष्टधा भिन्ने-त्युक्तम्[१०-११] इयं = पूर्वोक्ता प्रकृतिः[१२], मे = मदधीनेत्यर्थः[१३], तथा वक्ष्यमाणक्षेत्राध्याये इमामेव प्रकृतिं चतुर्विंशतितत्त्वात्मना प्रपञ्चयिष्यति—

'महाभूतान्यहङ्कारो बुद्धिरव्यक्तमेव च ।
इन्द्रियाणि दशैकं च पञ्च चेन्द्रियगोचराः' इति ॥ ४ ॥

**भाष्यम्**

**प्रतिज्ञातं ज्ञानमाह— भूमिरित्यादिना । महतोऽहङ्कार एवान्तर्भावः ॥ ४ ॥**

*प०टी०*— उत्तरप्रघट्टकमवतारयति **प्रतिज्ञातमिति** । नन्वादिकार्यं महत्तत्त्वं कुतो नोच्यते ? इत्यत आह **महत इति** ॥

*न०टी०*— 'रसोऽहम्' इत्यतः प्राक्तनग्रन्थसन्दर्भमवतारयति **प्रतिज्ञातमिति** । महतः किं कारणे प्रकृतावन्तर्भावः ? कार्ये वाऽहङ्कारे ? इति संशये सत्याह **महत इति** ॥

*प्र०दी०*— 'मनुष्याणां' इतिवदुत्तरमप्यन्यार्थमिति प्रतीतिनिरासार्थं प्रतिज्ञातयोरुभयोः किमादावुच्यत इत्यपेक्षायां चाह— **प्रतिज्ञातमिति** । असङ्गतिपरिहारायानन्यार्थताज्ञापनाय च ज्ञानस्य प्राथम्ये हेतुसूचनाय च प्रतिज्ञातमित्युक्तम् । प्रतिज्ञातत्वेन सङ्गतं प्रतिज्ञातमेव । न तु तदर्थं

प्राथम्येन प्रतिज्ञातम् । 'रसोऽहं' इत्यतः प्राक्तनग्रन्थसङ्ग्रहायादिपदम् । महत्तत्वमत्र नोपात्तम् । तत्किं नास्त्येवेत्यत आह— **महत इति** । अहङ्कारे अहङ्कारशब्दार्थेऽन्तर्भावः । कार्यवाचिना-ऽहङ्कारशब्देन कारणस्य महतोऽप्युपलक्षणमेव । न् त्वभाव इत्यर्थः ॥

***भा०दी०***— प्राथम्ये हेतुसूचनशेषोक्त्या व्यनक्ति **प्राथम्ये प्रतिज्ञातमिति** ॥

***भा०र०***— **इतिवदिति** । 'मनुष्याणाम्' (६.३) इति वचनं यथाऽऽदरजननार्थम् तथा 'भूमिरापः' इत्याद्युत्तरमित्यर्थः । "इत्यपेक्षायां च" इत्यत्र चशब्देन "यत्किञ्चिदिदं कथमुच्यते" इत्यसङ्गतिशङ्कायां चेति समुच्चीयते । असङ्गतत्वम् अन्यार्थत्वं किमादावुच्यत इति च कृतशङ्कात्रयं तद् भाष्यारूढं परिहर्तुमाह **असङ्गतीति** । हेत्वर्थगर्भं विशेषणमिति भावेनोक्तम् **प्रतिज्ञातत्वेनेति** । "सर्वं वाक्यं सावधारणम्" इति भावेन एवशब्दं संयोज्य तद्व्यावर्त्यमाह **न तु तदर्थमिति** । प्रतिज्ञातार्थवचनार्थम्, तच्छेषतया नात्रान्यदुच्यत इत्यर्थः । प्राथम्ये हेतुसूचनं शेषोक्त्या व्यनक्ति **प्राधान्येनेति** । 'सविज्ञानम्' इत्युक्त्या विज्ञानस्याप्राधान्यलाभः । समासान्तवर्तितृतीयायाः "सह-युक्ते अप्रधाने" इत्यप्राधान्ये विहितत्वात्, प्रथमोपस्थितावचने कारणाभावाच्चेति भावः ।

भाष्ये आदिपदेन सङ्ग्राह्यानुक्तौ 'रसोऽहम्' (७.८) इत्याद्यपि ज्ञानप्रकरणमिति प्रतीतिः स्यात्, तथा च "रसोऽहमित्यादिविज्ञानम्" (गी.भा. ७.८) इति भाष्यविरोधः ? इत्यतः सङ्ग्राह्यमाह **रसोऽहमित्यत इति** । महत्तत्त्वमेव नास्ति किम् ? इति प्रश्ने गर्वेऽन्तर्भावभाषणम् अननुरूपम् इत्यतो नैतद्गीतोक्ताहङ्कारशब्दार्थो गर्वः, किन्त्वहङ्कारतत्त्वमेव । तत्रान्तर्भावश्च तच्छब्दार्थतयोपादाने वचनवृत्त्यभावाच्च लक्षणा वक्तव्या । तत्र च कार्यकारणभाव एव सम्बन्धबीजमिति भावेनाह **अहङ्कार इत्यादि** । यद्वा "महत्तत्त्वं किमिति नोपात्तम्" इति चोद्यस्याहङ्कारान्तर्भावकथनेन कथं परिहारः ? इत्यतो अहङ्कारशब्देन महतोऽपि ग्रहणम् इति भाष्यभावं स्फोरयितुं तद्व्याचष्टे **अहङ्कार-शब्दार्थ इति** । तेन तद्ग्रहणमुपपादयति **कार्यवाचिनेति** । 'महतोऽपि' इत्यपिपदं न केवलमहङ्कार-शब्दो अहङ्कारतत्त्वस्याभिधायकः, किन्तु महत्तत्त्वस्योपलक्षकोऽपीति व्याख्येयम् । कृतप्रश्नपरिहारं दर्शयितुमुक्तम् **न त्वभाव इति** । **प्राचीनटीकायां तु "महतोऽहङ्कार एव"** इति भाष्यं महत्त-त्त्वस्य किं कारणे प्रकृतावन्तर्भावः, कार्ये अहङ्कारे वेति संशये सत्याह" इत्यवतारितम् ॥ ४ ॥

**गीता**

**अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे पराम् ।**
**जीवभूतां महाबाहो ययेदं धार्यते जगत् ॥ ५ ॥**

*वि०वि०*— अपरां वक्ष्यमाणामपेक्ष्यानुत्तमाम् । जडत्वादित्यर्थः । परामुत्तमां जीवभूतां जीवानां प्राणधारिणीम् । चिद्रूपभूतां सर्वदा विद्यमानां नित्यां श्रियं विद्धि । परत्वे हेतुः **ययेति** । मेशब्दाभ्यामुभयोः प्रकृत्योर्भगवद्वशत्वमाचष्टे ॥

*वा०ल०*— अपरेयम् अष्टधा भिन्ना इत्यन्वयः । जीवभूतां जीवस्य देहेन्द्रियादिरूपाम् । यया एरं द्विविधया जडप्रकृत्या ॥

*सा०सं०*— न केवलं जडप्रकृतिरेव स्वकार्येण सह मद्वशा, किन्तु ब्रह्मादिजगन्माता चित्प्रकृतिरपीत्याह **अपरेति** । यद्वा, हरेः परत्वं वक्तुं तदुपयोगितया परावरवस्तुनी आह **अपरेति** । **इयं** प्रागुक्ता जडप्रकृतिः । जीवा अप्युपलक्षन्ते । जडप्रकृतिः जीवाश्च**अपराः** अधमाः । **इतस्तु** जडप्रकृत्यादितस्तु **अन्याम्** । जीवभूतां सर्वजीवदेहेषु स्थित्वा तदीयान् प्राणान् तद्देहेषु धारयतीति जीवेत्युक्ता । 'जीव प्राणधारणे' इति धातोः । सा च सा भूता च सर्वदा विद्यमाना च जीवभूता, ताम् । 'भू सत्तायाम्' इति धातोः । प्राणधारकत्वेन सर्वदा विद्यमानामित्यर्थः । **मे** मदधीनाम् । **प्रकृतिं** चित्प्रकृतिम् । मुक्ता अप्युपलक्षन्ते । श्रियं मुक्तांश्च **परां** परानुत्तमान् **विद्धि** । परत्वे हेतुः । **यये**ति । श्रियेत्यर्थः । मुक्तानां पराभासत्वात् ययेत्येवोक्तम् । **इदं** ब्रह्मादि**जगत्** । **धार्यत** इति ॥

*अ०प्र०*— भूम्यादि पञ्च[१-५], मनः[६], बुद्धिश्च[७], अहङ्कार एव[८], इत्येवं प्रकृतिः[९], अष्टधा[१०] भिन्ना[११] इयं पूर्वोक्ता प्रकृतिः[१२], मे मदधीनेत्यन्वयः ॥

हे महाबाहो ![१], इयं[२], अपरा[३], इतस्तु[४], परां[५], अन्यां[६], जीवभूतां[७], मे[८], प्रकृतिं[९], विद्धि[१०] यया[११] इदं[१२], जगत्[१३], धार्यते इत्यन्वयः ।

हे महाबाहो ![१], इयं = अष्टधोक्ता या प्रकृतिः[२], इयमपि = अपरा वक्ष्यमाणापेक्षया अनुत्तमा निकृष्टा जडत्वात्परमार्थत्वाच्च[३], इतस्तु = अस्याः पूर्वोक्ताया जडप्रकृतेरस्सकाशात्[४], परां = प्रकृष्टोत्तमां[५], अन्यां = भिन्नां कारणभूतां[६], जीवभूतां = जीवानां प्राणिनां धारणीयं यद्वा, जीवत्वेन चिद्रूपत्वेन भूतां सदा विद्यमानां[७], मे = मदधीनां[८], श्रीरूपिणीं प्रकृतिं[९], विद्धि = जानीहि[१०] परत्वे हेतुः— यथा चेतनया क्षेत्रज्ञरूपया अस्य कर्मद्वारेण जीवरूपया प्रकृत्याऽहङ्कारेण वा[११] इदं = विद्यमानं पुरोवृत्ति चराचरं[१२], जगत् = धार्यते[१४], इत्यर्थः ॥ ५ ॥

### भाष्यम्

**अपरा = अनुत्तमा । वक्ष्यमाणामपेक्ष्य । जीवभूता श्रीः । जीवानां प्राणधारिणी । चिद्रूपभूता सर्वदा सती । 'एतन्महद्भूतं' इति श्रुतिः । जगाद च—**

"प्रकृती द्वे तु देवस्य जडा चैवाजडा तथा ।
अव्यक्ताख्या जडा सा च सृष्ट्या भिन्नाऽष्टधा पुनः ।
महान् बुद्धिर्मनश्चैव पञ्चभूतानि चेति हि ।
अवरा सा जडा श्रीश्च परेयं धार्यते तया ।
चिद्रूपा सा त्वनन्ता च अनादिनिधना परा ।
यत्समं तु प्रियं किञ्चिन्नास्ति विष्णोर्महात्मनः ।
नारायणस्य महिषी माता सा ब्रह्मणोऽपि हि ।
ताभ्यामिदं जगत्सर्वं हरिः सृजति भूतराट् ॥"

—**इति नारदीये ॥ ५ ॥**

***प०टी०***— 'इतः'कार्यात्, 'अपरा' न भिन्ना, इति प्रतीतिनिरासायाह **अपरेति** । जीवभूतेति जीव एवेति भ्रान्तिनिरासायाह **जीवेति** । 'जीवभूत'शब्दार्थमाह **जीवानामिति** । विशेषणद्वयं जीवपदस्यार्थः । 'भूत'शब्दस्य सर्वदा विद्यमानार्थत्वे प्रयोगं दर्शयति **एतदिति** । उक्तार्थं प्रमाणेन स्थापयति **जगाद चेति** । अत्राहङ्कारस्य महत्यन्तर्भावः । इयं पूर्वोक्ता अनन्ता देशेन । आभ्याम् इत्यनेन 'एतद्योनीनि' इति व्याख्यातम् ॥

***न०टी०***—अपरशब्दस्याभेदेऽपि प्रयोगात्, प्रकृत्यात्मनैषामभेदसम्भवाच्चाभेदवाच्ययमित्याशङ्क्याह **अपरेति** । अहङ्कारादिरूपिण्या अस्याः प्रकृतेर्महान्तं मूलप्रकृतिं वाऽपेक्ष्यानुत्तमत्वशङ्कायामाह **वक्ष्यमाणामिति** । यतोऽत्र 'इयम्' इति मूलप्रकृतिरेवोच्यते सैवाष्टकार्यरूपेणाष्टधा भिन्ना । अहङ्कारात् सात्विकात्मनः, राजसात् बुद्धिः, तामसात् खादयः पञ्चेति सेयं सकार्यमूलप्रकृतिरपरेत्युच्यते । पृथक्कार्यरूपेणाष्टधा भिन्ना । अतः सूक्तं **वक्ष्यमाणापेक्ष्य इति** । एतेनैतदपि प्रत्युक्तम् । यदुक्तं मायिना भूम्यादिशब्दैस्तन्मात्राण्येवोच्यन्ते, न स्थूलानि । मनोबुद्ध्यहङ्कारशब्दैस्तु मनोबुद्ध्यङ्कारकारणान्यहङ्कारमहदव्यक्तानि, 'भिन्ना प्रकृतिरष्टधा' इति वचनादिति । तदसत् । भूम्यादिशब्दैः स्थूलसूक्ष्माभिधानेऽप्यौषध्यादिकारणत्वेन प्रकृतित्वसम्भवात् न स्वार्थसङ्कोचः कार्यः । मनोबुद्ध्यहङ्कारशब्दैस्तत्तदर्थाभिधानेऽपि स्थूलप्रकृतिव्यतिरिक्तानां प्रकृतिविकृतानामेवाष्टविधत्वसम्भवात् न स्वार्थपरित्यागः कल्पनीयः । मनोबुद्ध्योश्च संशयनिश्चयकारणत्वेन प्रकृतित्वमिति । ननु कोपरिवक्ष्यमाणेतःपरत्वेन ? इत्याकाङ्क्षायाम्, जीवशब्दात्, तथैवान्यैर्व्याख्यातत्वाच्च जीवा एवेति प्राप्ते, आह **जीवभूतेति** । ननु 'जीव प्राणधारणे' इति धातोः श्रीरपि जीवभूता चेत्,

संसारिवत् देहेन्द्रियप्राणधारिणी स्यादित्यत आह **जीवानामिति** । स्वयं भगवानिव ज्ञानानन्दादि-गुणसान्द्रसुन्दरमूर्तिरूपा यतो ब्रह्मादिसर्वजीवानां प्राणधारिणी अत एव जीवशब्दोक्ता । यतः श्रीरेवाह स्वसूक्ते— 'मया सोऽन्नमति यो विपश्यति यः प्राणिति' इत्यादि । चिद्रूपत्वाच्च जीव-शब्दोक्ता सेत्याह **चिद्रूपेति** । 'एतन्महद्भूतम्' इत्यादिश्रुताविव सर्वदा सत्त्वमेव भूतशब्दार्थ न तु जातत्वमिति भावेनाह **भूतेति** । न हि महत्त्वेन जातमिति श्रुत्यर्थः । जीवभूतां जीवत्वं प्राप्तामिति यदन्येनोक्तं तदनेन निरस्तं भवति । 'ययेदं धार्यते जगत्' 'एतद्योनीति भूतानि सर्वाणि' इत्येकस्या एव सर्वजगदाधारत्वं सर्वभूतोत्पत्त्यादिकत्वं चोच्यमानम् । 'अहं मित्रावरुणोभा बिभर्मि', 'यं कामये तं तम्' इत्याद्युक्ता श्रीरेव जीवभूता प्रकृतिः, न बहवः संसारिण इत्यलं विस्तरेण । इममेवार्थं 'भूमिः' इत्यादिसार्धश्लोकद्वयस्यान्यत्र भगवान् व्यक्तमुवाचेत्याह **जगादेति** । **देवस्य** इति देवाद्भेदः प्रकृत्योरुच्यतेऽत्र । 'इयं मे पराम्' इति गीतायामपि । 'अतोऽपि न भगवत्स्वरूपा जीवभूता प्रकृतिः । **पुनरिति** । मूलप्रकृतिरूपतः पृथक् प्रकृतिविकृतिरूपेणैवाष्टधेत्यर्थः ॥

***प्र०दी०***— अपरशब्दस्यानेकार्थत्वाद्विवक्षितमर्थमाह— **अपरेति** । अनुत्तमत्वस्य सापेक्षत्वा-त्किमपेक्ष्येत्यत आह— **वक्ष्यमाणामिति** । सन्निधानादिति भावः । ''जीवलक्षणां जीवत्वं प्राप्तां'' इति व्याख्याननिरासार्थमाह— **जीवभूतेति** । कथं सा जीवभूतेत्यत आह— **जीवाना-मिति** । 'प्राणधारिणी' इत्येवोक्ते स्वप्राणधारिणीति प्रतीतिः स्यात् । तन्निरासार्थमुक्तं— **जीवा-नामिति** । सर्वजीवदेहेषु स्थित्वा तदीयान्प्राणान् तत्र धारयतीत्यर्थः । स्वप्राणधारिणी कुतो न स्यादित्यत आह— **चिद्रूपेति** । ज्ञानात्मकविग्रहवती । यद्वा जीवप्राणधारण इत्यतो जीवशब्दस्य यौगिकार्थमुक्त्वा गौणीं वृत्तिमाश्रित्यार्थान्तरमनेनोक्तम् । भूतशब्दस्य सर्वदा सत्त्ववाचित्वे प्रयोगं दर्शयति— **एतदिति** । प्रकृतिमपेक्ष्य श्रियः परत्वोपपादनार्थमेतत् । 'भूमिः' इत्यादेरभिमतमर्थं पुराणवाक्येन स्थापयति— **जगाद चेति** । देवस्यैव । सृज्यत इति सृष्टिः । कार्यम् । कार्य-रूपेणेत्यर्थः । अनेन भूम्यादिशब्दैः पञ्चतन्मात्राण्येवोच्यन्ते । न स्थूलानि भूतानि । मन इति तत्कारणमहङ्कारः । बुद्धिरिति महत्तत्त्वम् । अहङ्कार इत्यविद्यासहितमव्यक्तम् । ''भिन्ना प्रकृति-रष्टधा'' इति वचनादिति व्याख्यानं निरस्तम् । 'कार्यरूपेणाष्टधा भिन्ना' इति व्याख्यानसम्भवेन प्रसिद्धार्थपरित्यागायोगात् । महत्यहङ्कारस्यान्तर्भाव इत्येवेति सम्बन्धः । 'जडा' इत्यवरत्वोप-पादनम् । 'श्रीः परा' इत्यस्योपपादनं ''इयं धार्यते तया'' इत्यादि । अनन्ता देशतः गुणतश्च । परा मुख्या । अनादिनिधना न तु अव्यक्तवद्विक्रियावती ॥

*भा०दी०*— **गौणीं वृत्तिमिति** । जीववा .......................त्कारेत्यर्थः । **एतदितीति** । जीवे भूतेति विशेषणमित्यर्थः । एवकारान्वयमाह **देवस्यैवेति** । **अनेनेति** । पुराणवाक्य-कथनेनेत्यर्थः । अविद्यासहितममुक्तमित्युक्तार्थे चात्र नृ पादसंवादमाह **भिन्नेति** । महान्बुद्धिर्मनश्चे-त्यादौ गीतोक्तावहङ्कारो न गणित इत्यत आह **महतीति** । एवकारस्येतिपदेनान्वयमाह **इत्येवेति** ॥

*भा०र०*— **अनेकार्थत्वादिति** । "अथापरं क्लीबलिङ्गं सिद्धान्ते मुनयो विदुः । गजपाश्चात्त्य-पादेऽथ त्रिः पूर्वप्रतियोगिनि । अन्यस्मिन्नपि" (के.को.) इत्यभिधानादिति भाव इति **केचित्** । **अपरे तु** परा न भवतीति अपरा, न विद्यते परा यस्याः सा अपरा इत्याश्रयणेऽनेकार्थत्वावेदनादिति भाव इत्याहुः । **अनुत्तमत्वस्य** निकृष्टत्वस्य । **अपेक्ष्य** 'उक्ता' इति भाष्ये शेषः, तेन ल्यबुप-पत्तिः । चित्प्रकृतेरुपस्थितावुपायमाह **सन्निधानादिति** । "जीवभूतां क्षेत्रलक्षणाम्" (शां.भा. ७.५) इति **सङ्करभाष्यमर्थतोऽनुवदति** **जीवलक्षणामिति** । "प्रमाणंभूत आचार्यः" (व्या.म.भा.) इति महाभाष्ये "प्रमाणत्वं प्राप्तः" इति कैयटव्याख्यानादाह **जीवत्वं वा प्राप्तामिति** । ननु जीव-सम्बन्धिप्राणधारकत्वं जीवानामेव, न तु श्रीदेव्याः ? इत्यत आह **सर्वजीवदेहेष्विति** । **तत्र** देहेषु । "स्वभावाकृतिसौन्दर्यवपुषु श्लोकशब्दयोः । रूपम्" इत्यभिधानादाह **ज्ञानात्मकविग्रहेति** । यत एवम्, अतः सा प्राणधारिणी कुतो न स्यात् ? इति चोद्यस्य नावकाश इति भावः ।

तथा च **प्राचीनटीका**— ज्ञानानन्दादिगुणसान्द्रमूर्तीर्यतो ब्रह्मादिजीवानां प्राणधारिणी । अत एव जीवशब्दोक्ता । यतः श्रीरेवाह स्वसूक्ते "मया सो अन्नमत्ति यो विपश्यति यः प्राणिति यः" (ऋ.मं.१०, सू.१२५, मं.४) इत्यादीति । चिद्रूपत्वाच्च जीवशब्दोक्तेत्याह **चिद्रूपेति** । प्राचीन-टीकामनुरुन्धानो भाष्यमन्यथापि योजयति **यद्वेति** । **गौणीं वृत्तिमिति** । जीवगतचिद्रूपत्वलक्षण-गुणयोगेन जीवशब्देनोपचारेण श्रीरेव ग्राह्येत्यर्थः । अनेनाद्यपक्षे "जीवा चासौ भूता च" इति विग्रहः । "पुंवत्कर्मधारय" इति पुंवद्भावः । द्वितीये "जीवश्चासौ भूता च" इति विग्रहः । जीव इव जीव इति जीवशब्दस्य गौणी वृत्तिः । बहुलग्रहणाच्च विशेषणयोरपि समास इत्युक्तं भवति । **भूतशब्दस्येति** । "भवतेः 'गत्यर्थाकर्मक' इत्यादिना कर्तरि निष्ठान्तस्य" इत्युपस्कर्तव्यम् । **सर्वदा सत्त्ववाचित्वे** सर्वदा विद्यमानार्थवाचित्वे । 'जीवभूताम्' इति विशेषणं किमर्थम् ? इत्यत आह **प्रकृतामिति** । 'भूमिः' इति पूर्वत्र प्रसक्तां जडप्रकृतिमित्यर्थः । 'प्रकृतिमपेक्ष्य' इति पाठे 'जडप्रकृतिम्' इत्यर्थः । **एतत्** 'जीवभूताम्' इति विशेषणम् ।

"जडा चैव" इत्येवशब्दस्य **देवस्य** भगवत इत्यनेनान्वय इत्याह **देवस्यैवेति** । नान्यस्ये-त्यर्थः । जडप्रकृतेरष्टविधत्वं गीतोक्तं घटयितुं सृष्टिशब्दार्थमाह **सृज्यत इतीति** । सृजतेः कर्मणि

"अकर्तरि च कारके" इत्यनुवृत्तेः क्तिन् प्रत्यय इति भावः । **अनेन** प्रमाणोदाहरणेन, 'निरस्तम्' इति सम्बन्धः । "भूमिरिति पृथिवीतन्मात्रमुच्यते, न स्थूला" (शां.भा. ७.४) इत्यादि**सङ्कर**भाष्यं निष्कृष्यानुवदति **भूम्यादिशब्दैरित्यादि** ।

"महाभूतानि पञ्चैव भूरापोऽग्निर्मरुन्नभः ।
तन्मात्राणि च तावन्ति गन्धादीनि मतानि मे ॥" (भाग. ३.२७.१३)

इति भागवते,

"रसमात्राणि चाम्भांसि रूपमात्रं समावृणेत् ।
तन्मात्राण्यविशेषानि अविशेषास्ततो हि ते ॥" (वि.पु. १.२.४३)

इति विष्णुपुराणे च प्रयोगाद् मात्रशब्दो नपुंसकलिङ्गोऽप्यस्ति । **तत्कारणं** मनसः कारणम् अहङ्कार उच्यत इति विपरिणम्यानुवर्तते । कुत एवं कल्पना ? इत्यत उक्तम् **भिन्ना प्रकृतिरष्टधेति वचनादिति** । स्थूलानां प्रकृतित्वायोगादिति भावः । **इति व्याख्यानसम्भवेनेति** । तथा चानुपपत्तेरभावेन लक्षणाश्रयणमयुक्तम् । एकेन प्रकृतिपदेनानेकेषामर्थप्रच्यावनम्, भूयोऽनुग्रहन्यायबाह्यं चेति भावः । **प्राचीनटीकायां तु** "भूम्यादिशब्दैः स्थूलभूम्याद्यभिधानेऽपि तेषाम् औषध्यादिकारणत्वेन प्रकृतित्वम्, मनोबुद्ध्योश्च संशयनिश्चयकारणत्वेन प्रकृतित्वम् अवधेयमिति न प्रकृतिशब्दास्वारस्यम् अस्मत्पक्षे" इत्युक्तम् ।

"महान् बुद्धिर्मनः" इत्यत्र गीतोक्ताहङ्कारापरिगणनाद् विसंवादः ? इत्यत आह **महत्यहङ्कारस्येति** । कारणवाचिना महच्छब्देन तत्कार्याहङ्कारस्याप्युपलक्षणमिति न विसंवादः । इदमेव प्रमाणं हृदि कृत्वा "महतोऽहङ्कार एवान्तर्भावः" (गी.भा. ७.४) इति प्राग्भाषितमिति भावः । अत्रैवार्ध एवशब्दस्य इति शब्देनान्वय इत्याह **इत्येवेतीति** । चशब्दावितरेतरसमुच्चये, इत्येव सृष्ट्याऽष्टधाभिन्ना सा प्रकृतिरित्यपि सम्बन्धो द्रष्टव्यः । 'जडा' इति विशेषणं हेत्वर्थगर्भम् अवरत्वमुपपादयितुं प्रवृत्तमित्याह **जडेतीति** । 'श्रीश्च' इति चशब्दस्तुशब्दार्थ इति भावेनोक्तम् **श्रीस्तु परा** उत्तमेति । **इयं** जडप्रकृतिः **तया** चित्प्रकृत्या **धार्यते** 'जगत्' इति शेषः । श्रीदेव्याः जडप्रकृतिं प्रति जगद्धारणशक्तिप्रदत्वमुच्यत इत्युत्तमत्वमुपपादितं भवतीति भावः ।

ननु 'अनन्ता' इत्यत्र कालानन्त्योक्तौ 'अनादिनिधना' इति पूर्वोत्तरकालकोटिविहीनत्ववचनं पुनरुक्तं स्यात् ? इत्यत आह **अनन्ता देशतो गुणतश्चेति** । आनन्त्यस्य भगवदेकायतत्त्वविशेषस्य द्योतनार्थः । "सा तु" इति तुशब्द इत्यतो जडप्रकृतिसाधारणं देशानन्त्यमिति चोद्यं

प्रत्यस्तम् । गुणानन्त्यमपि भगवदायत्तमेव विवक्षितमिति न तत्राप्यनुपपत्तिशङ्का । 'परा' इति श्रीतत्त्वे परत्ववचनं व्यर्थम् ? इत्यतोऽङ्गावतारन्यायेन श्रीविशेषणानादिनिधनत्वविशेषणम् इत्यभिप्रेत्य व्याचष्टे **परा मुख्येति** । 'परा' इति पदं परस्ताच्छ्रुतमपि अनादिनिधनविशेषणमिति ज्ञापनार्थम् अवैयर्थ्यार्थं च 'अनन्ता', 'अनादिनिधना' इति पदयोर्मध्ये व्याख्यातम् । श्रीदेव्यां मुख्यानादिविशेषणवत्त्वकथनस्य व्यावर्त्यमाह **न त्वव्यक्तवदिति** ॥

**गीता**

## एतद्योनीनि भूतानि सर्वाणीत्युपधारय ।
## अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा ॥ ६ ॥

***वि०वि०***— तयोरेव कारणत्वाच्छरीरेन्द्रियविषयलक्षणस्य कार्यस्य जीवानां च यथायोगमन्तर्भाव इति दर्शयति **एतद्योनीनीति** । भवतु प्रकृत्योर्भगवद्वशत्वम्, जगज्जन्मादिकं तु ताभ्यामेव भविष्यतीत्यतो जगज्जन्मादिकमपि भगवदधीनसत्ताकमित्याह **अहमिति** । प्रभवादेः सत्ताप्रतीत्यादिकारणत्वात् । पित्रादेः पुत्रादिप्रभवरिपुप्रलयोपलब्धिजनित सुखभोक्तृत्ववत् जगत्प्रभवाद्युपलब्ध्यभिव्यक्तिविशेषवत् सुखभोक्तृत्वाच्च 'प्रभवः' इत्याद्युक्तम् । भूमिरित्याद्युक्तार्थे प्रमाणम् ।

'अचेतनाचेतनेति द्विविधा प्रकृतिर्मता ।
त्रिगुणा चेतना तत्र चेतना श्रीर्हरिप्रिया ॥
ते उभे विष्णुवशगे जगतः कारणे मते ।
पिता विष्णुः स जगतो माता श्रीर्या त्वचेतना ॥
उपादानं तु(च) जगतः सैव विष्णुबलेरिता ॥' इति ॥

***वा०ल०***— 'अहं कृत्स्नस्य' इत्यत्र कृत्स्नस्य जीवजडात्मकजगतः ॥

***सा०सं०***— ननु देहेन्द्रियादेरपि सत्त्वेन प्रकृत्योरेवेशाधीनत्वमहिमोक्तिः कथमित्यतो देहादिसर्वकार्यजातस्य प्रकृत्योरेवान्तर्भाव इति दर्शयितुमाह **एतदिति** । शरीरेन्द्रियविषयलक्षणकार्यसहितानि जीवजातरूप**भूतानि सर्वाण्येतद्योनीनि** जडाजडप्रकृतिकारणकानि । यथासम्भवं तदुत्पन्नानि इति । उपधारय जानीहि । पूर्वं प्रकृत्योरवरत्वं परत्वं च वाक्यभेदेनोक्त्वा 'मे' इति स्ववशत्वं चोक्त्वा 'ययेदं धार्यते जगत्' इति 'एतद्योनीनि' इति जगद्धारकत्वकारणत्वे कथिते । तत्र प्रकृती एव भगवद्वशे । जगज्जन्मस्थितिलयास्तु प्रकृत्यधीना एव नेशाधीना इति प्रतीतिनिरासार्थमाह **अहमिति** । प्रभवप्रलययोः सत्ताप्रतीतिकारणत्वात् **अहं प्रभवः प्रलयश्चे**त्युक्तिः ।

प्रभवप्रलयभोक्तृत्वाच्च तथोक्तिः । जगत्प्रभवादि भोक्तृत्वं च यथा पुत्रादिप्रभवो रिपुप्रलयश्चोपलब्धः सुखहेतुरित्युपलब्धः । पित्रादेस्तद्भोक्तृत्वं **तथा** हरेरिति ज्ञेयम् । प्रभवाद्युपलब्धेर्भगवत्सुखहेतुत्वं च—

'आगमिष्यत्सुखं चापि तच्चास्त्येव सदाऽपि तु ।
तथाऽप्यचिन्त्यशक्तित्वाज्जातं सुखमतीव च ॥' (नारदीये)

इति स्मृत्युक्तदिशा ज्ञेयम् । प्रकृतिद्वारा कृत्स्नजगत्कर्ताऽहमेवेति भावः ॥

*अ०प्र०*— ननु परापरप्रकृतिभिन्नस्य सकलजीवब्रह्माण्डादिजडपदार्थस्य तत्त्वान्तरस्य सत्त्वात् कथं द्वयमेव तत्त्वमुच्यत इत्यतः सर्वस्य जीवजडात्मकप्रपञ्चस्य प्रकृतिद्वयकारणकत्वात्तदन्तर्भावविवक्षया तत्त्वद्वयोक्तिं दर्शयन् स्वस्य तत्तद्वारा सृष्ट्यादिकारणत्वमाह ।

हे पार्थ ! सर्वाणि[१], भूतानि[२], एतद्योनीनि[३], इति[४], उपधारय[५], अहं[६], कृत्स्नस्य[७], जगतः[८], प्रभवः[९], तथा[१०] प्रलयः[११] इति विद्धीति पूर्वेणान्वयः ॥

हे पार्थ ! सर्वाणि भूतानि = परापरप्रकृतिकानि[१-२], एतद्योनीनि = एते क्षेत्रक्षेत्रज्ञरूपे प्रकृती योनी कारणभूते येषां तानि तथा स्थावरजङ्गमात्मकानि । यद्वा, जीवजडरूपाणि । यद्वा, एतत् योनीनि इत्यत्राप्येतत् एषा परा प्रकृतिः यदा स्थूलत्वं प्राप्नोति तदा भूतसृष्टिर्भवति तस्मादेषा जीवाख्या सूक्ष्मा प्रकृतिः योनिः जन्मस्थानं येषां तानि एतद्योनीनि[३], इति उपधारय = बुध्यस्व[५], अत्रोक्ताष्टविधातिरिक्तं सर्वं जडस्यापरत्वे जडप्रकृतौ यथायोग्यमन्तर्भावः । सर्वचेतनानां तु सर्वचेतनप्राणधारिण्यापरत्वे चित्प्रकृतौ अन्तर्भाव इत्यतः परापरत्वद्वयमुक्तमिति भावः । नन्वेवं स्वाधीनप्रकृत्यधीनत्वेन जगतः साक्षात्स्वाधीनत्वं नास्ति । किमित्यतः जगत्सृष्ट्यादेरपि स्वाधीनत्वाज्जगदपि साक्षात्स्वाधीनमित्याह **अहमिति** । यद्वा, जडप्रकृतिः देहरूपेण परिणमते चेतना तु मदंशभूता भोक्तृत्वेन देहेषु प्रविश्य स्वकर्मणा तानि धारयति । तत्र च मदीयप्रकृतिः मत्तः सम्भूता, अतो अहमेवेति । अहं कृत्स्नस्य = सप्रकृतिकस्य[७], जगतः[८], प्रभवः = प्रकर्षेण भवत्यस्मादिति प्रभवः उत्पत्तिकृत्[९], तथा पालनकर्तारमपि अहमेव प्रलयः प्रलीयतेऽनेनेति प्रलयः नाशः संहर्ता च[१०-११] इति उत्पत्तिस्थितिनाशकर्तारमहमेव विद्धीति पूर्वेणान्वयः । तथा अहमेव मध्यं उत्पत्तिप्रलययोर्मध्ये पालनकर्ता अपि अहमेवेति तथेति शब्देन गमयति । एवं पूर्वोक्तप्रकारेण उत्पत्तिपालनप्रलयेत्यादि अहमेव तत्तत्सत्तादेर्मदधीनत्वात् मद्भोग्यत्वाच्च । तदुक्तम्—

'यदधीना यस्य सत्ता तत्तदित्येव भण्यते ।'

इत्यादेः यथा ज्ञाता पुत्राद्युत्पत्तिः पित्रादेः सुखहेतुः तथा जगदुत्पत्तिस्थितिलयादि साक्षात्कृतो हरेः सुखहेतुरित्येवं प्रभवादिभोक्तृत्वमीश्वरस्येत्यतोऽहं प्रभव इत्याह । भूमिरित्याद्युक्तार्थे प्रमाणम्—

'अचेतना चेतनेति द्विविधा प्रकृतिर्मता ।
त्रिगुणा चेतना तत्र चेतना श्रीः हरिप्रिया ॥
ते उभे विष्णुवशे जगतः कारणे मते ।
पिता विष्णुः स जगतो माता श्रीर्या त्वचेतना ॥
उपादानं तु जगतः सदा विष्णुबलेरिता ।
प्रकृती द्वे तु देवस्य जडा चैवाजडा तथा ॥
अव्यक्ताख्या जडा सा च सृष्ट्या भिन्नाष्टधा पुनः ।'

—इत्यादि च ॥ ६ ॥

**भाष्यम्**

**न केवलं ते जगत्प्रकृती मद्वशे इत्येतावन्मदैश्वर्यमित्याह— अहमिति । प्रभवादेः । सत्ताप्रतीत्यादिकारणत्वात् तद्भोक्तृत्वाच्च प्रभव इत्यादि । तथा च श्रुतिः—**

**"सर्वकामः सर्वकर्मा सर्वगन्धः सर्वरसः**
**सर्वमिदमभ्यात्तोऽवाक्यनादरः ॥" इति ।**

**आह च—**

**"स्रष्टा पाता च संहर्ता नियन्ता च प्रकाशिता ।**
**यतः सर्वस्य तेनाहं सर्वोऽसीत्यृषिभिः स्तुतः ।**
**सुखरूपस्य भोक्तृत्वान्न तु सर्वस्वरूपतः ।**
**आगमिष्यत् सुखं चापि तच्चास्त्येव सदाऽपि तु ।**
**तथाऽप्यचिन्त्यशाक्तित्वाज्जातं सुखमतीव च ॥"**

**—इति नारदीये ॥ ६ ॥**

***प०टी०***— उत्तरश्लोकमवतारयति **न केवलमिति** । **जगत्प्रकृती** जगत्कारणप्रकृती । ननु केनाभिप्रायेण प्रभवादेर्भगवदैक्यमुच्यते ? इत्यत आह **प्रभवादेरिति** । भोक्तृभोग्ययोरैक्यव्यपदेशो यथा 'अस्य जीव एव कदलीफलम्' इति । ईश्वरस्य सर्वभोक्तृत्वे प्रमाणमाह **तथा चेति** । अहमेतादृश इति वाक्यरहितः अवाकी, ईदृश इति निरूपणं च नास्तीति अनादरः । नन्वय-मैक्यव्यपदेशः सत्तादिकर्तृत्वादिनैव नाभेदेनेत्येत्कुतः ? इत्यत आह **आह चेति** । **सुखरूपस्येति** शुभविषयस्येत्यर्थः । ननु भोगोत्पाद्यसुखाभावेनापूर्णता हरेः । पूर्णस्य भोगायोगादित्यत आह **आगमिष्यदिति** । यदप्यागमिष्यत्सुखं तदप्यस्तीति चशब्दावपिशब्दार्थौ ।

***न०टी०***—न च जगत्कर्त्रोर्भगवदधीनत्वमात्रं भगवदैश्वर्यम् । किन्तु तयोर्महदादिषु च सर्वेषु स्थित्वा भगवानेव जगदुत्पत्त्यादि करोति । स एव सर्वस्मात् परतमः । तस्मिन्नेव सर्वमिदं प्रोतमितीत्यभिप्रायेणोत्तरं श्लोकत्रयमवतारयति **न केवलमिति** । ननु भवत्पक्षे प्रभवप्रभवित्रोरभेदात् 'अहं कृत्स्नस्य जगतः प्रभवः' इत्याद्युक्तौ 'अहं कृत्स्नं जगत्' इत्येवोक्तं स्यात् । तर्हि कथं भगवतः सर्वस्माद्भेदः ? इत्यत आह **प्रभवादेरिति** । स्वकृतक्षेत्रादिरूपेणोच्यमानमैत्रादिवत् प्रभवादिभोक्तृ-त्वादपि प्रभव इत्याद्युच्यते । मैत्रादेर्व्रीह्यादिप्रभवादिवत् सर्वजगत्प्रभवादिर्भगवतो भोज्य इति भावः । ननु रमाविरिञ्चादिदेवदानवमानवा अपि जगति भागशः कुर्वन्तो भुञ्जाना अपि दृश्यन्ते श्रूयन्ते च केचन । अतो भगवानेव कथं सर्वस्य जगतः कर्ता भोक्ता च ? इत्यत आह **तथा चेति** । **कामाः** इच्छाः, तद्विषयाश्च कर्मव्युत्पत्त्या । ते सर्वे सर्वाणि च कर्माणि यस्माद्रमा-विरिञ्चाद्यन्तर्यामिणः पृथक्स्थिताश्च स **सर्वकामः सर्वकर्मा** । अनेन यदिच्छामात्रेण सर्वजगत उत्पत्त्यादिकर्तृत्वं यच्च व्यापारपूर्वकं तदुभयविधं भगवत एव संपूर्णस्वातन्त्र्येण च । रमादीनां यद्भागशः कर्तृत्वं तदपि केवलं तदायत्तमित्युक्तं भवति । उपलक्षणार्थौ **गन्धरसशब्दौ** । अतो गन्धरसरूपस्पर्शशब्दाः सर्वे यस्याधीनाः **सर्वगन्धः** इत्यादि । अनेन भगवान् यथेष्टतः सारभोक्तेति सिद्ध्यति । देवदानवमानवानां सारासारमिश्रभोजकत्वेऽपि न भगवत्सर्वभोक्तृत्वहानिः । स्वप्रिय-विद्वेष्युदासीनानाम् । सारासारमिश्रभोजकत्वस्यापि स्वभोगत्वात् । **सर्वमिदमभ्यात्तः** सर्वेणानेन जगताऽभितः स्वीकृतो भगवान् । तं विनाऽस्य सर्वस्य जगतः सत्ताप्रतीतिप्रवृत्तिशक्त्याद्यभावात्, स्वस्यैव तद्विनाऽपि सत्ताप्रतीतिशक्त्यादिसम्पूर्णत्वात् 'अहो मयेदं लब्धम्' इति न वक्ति न वर्णयतीति **अवाकी** । मनसाऽपि नादरं करोतीति **अनादरः** इत्यर्थः । सर्वभिन्नस्यापि भगवतः सर्वत्ववचनं तत्सत्तादिकारणत्वतद्भोक्तृत्वाभ्यामेवेत्येतत् पुराणवाक्येनापि दर्शयति **आह चेति** । ननु पूर्णसुखरूपस्य सर्वकर्तृत्वानुपपत्तेः पूर्णसुखरूपस्य च सर्वभोक्तृत्वानुपपत्तेः, उक्तहेत्वोः परस्पर-

विरोधात् सर्वस्वरूपत्वादेव सर्वत्ववचनं भगवतः, न तूक्तहेतुभ्यामित्यत आह **सुखरूपस्येति** । 'पूर्णानन्दः पूर्णभुक् पूर्णकर्ता' इति श्रुतौ पूर्णसुखरूपस्य पूर्णभोक्तृत्वावगमात् न सर्वकर्तृत्व-भोक्तृत्वयोः परस्परविरोधः, अतस्ताभ्यामेव सर्वत्ववचनं भगवतः । यस्मादेवं पूर्णसुखरूपस्यापि भोक्तृत्वं श्रूयते, **तत्** तस्माद्भोगेन **आगमिष्यत् सुखमपि सर्वदाऽप्यस्त्येव** । सर्वकर्तृत्वादयोऽपि शक्तिरूपेण सदा सन्तीति पूर्वचकारार्थः । अचिन्त्यशक्तेश्चेत्युत्तरचकारार्थः । ननु सदातनं सुखं कथं भोगेन जातमित्युच्यते इत्याशङ्क्य, उत्तरं चकारार्थं विवृणोति **तथाऽपीति** ॥

*प्र०दी०*— नन्वत्रापरपरनिरूपणपूर्वकं भगवतो यत्परतरत्वं वक्तुमभिप्रेतं तत्र शरीरेन्द्रिय-विषयलक्षणाख्यकार्यस्य जीवानां च तयोरेवान्तर्भाव इति दर्शयितुं 'एतद्योनीनि' इत्युक्तम् । इदानी-महं परतर इति वक्तव्यम् । इदं तु किमर्थमुच्यत इत्यत आह— **न केवलमिति** । पूर्वं वाक्यभेदेन प्रकृत्योरवरत्वं, परत्वं, 'मे' इति स्ववशत्वं चोक्त्वा ''ययेदं धार्यते जगत्'', 'एतद्योनीनि' इति जगदाधारत्वकारणत्वे कथिते । तत्र प्रकृती एव भगवद्वशे, जगज्जन्मस्थितिलयास्तु प्रकृत्यधीना एव, न भगवदधीना इति प्रतीतम् । तन्निरासार्थमेतदित्यर्थः । जगत्प्रति ममैश्वर्यमित्येतावत्प्रकृति-द्वारकमुपचरितमिति यावत् । प्रकृत्योः कारणत्वादिकं मदायत्तमिति भावः । जगद्धर्मयोः प्रभव-प्रलययोः साक्षाद्भगवदैक्यमुच्यत इति प्रतीतिनिरासार्थमाह— **प्रभवादेरिति** । यथा पुत्रादिप्रभवो रिपुप्रलयश्चोपलब्धः सुखहेतुरित्युपलब्धः पित्रादेः तद्भोक्तृत्वं तथा तद्भोक्तृत्वात् । भगवतः सर्व-भोक्तृत्वं कुत इत्यत आह— **तथा चेति** । 'सर्वकामः' इत्यादेः द्विरुक्तत्वादेकं भोगविषयमिति ज्ञायते । काम्यन्त इति कामा द्रव्याणि गन्धरसशब्दौ गुणान्तरस्याप्युपलक्षकौ । सर्वमिदमभि अभितः । आत्तो धृतः स्थित इत्यर्थः । न विद्यते वाक्यमनुग्रहमन्तरेण यस्यासाववाक्यः, न विद्यते आदरः आश्चर्यबुद्धिः यस्यासौ नादरः, अवाक्यश्चासौ नादरश्चेति अवाक्यनादरः । कारणत्वादि-नैवैक्यव्यपदेश इत्येतत्कुत इत्यत आह— **आह चेति** । सुखरूपस्य सुखकारणस्य । ननु 'स्रष्टा पाता' इत्यादिकमयुक्तम् । कादाचित्कक्रियाऽवेशे विकारित्वप्रसङ्गात् । भोगेन यद्भाव्यं सुखं तस्य पूर्वमभावेन अपूर्णत्वप्रसङ्गाच्चेत्यत आह— **आगमिष्यदिति** । यद्भोगेनागमिष्यत्सुखं तच्च सदा-ऽप्यस्त्येव क्रियाश्च शक्तिरूपेण चेति चार्थः । तर्हि कथं ''भोगेन जातं'' इत्युच्यत इति भावेन पृच्छति— **अपि त्विति** । उत्तरमाह— **तथाऽपीति** । सदा सद्भावेऽपि । यद्यपि प्रभवत्यस्मादिति प्रभवः, प्रलीयतेऽस्मिन्निति प्रलय इति शक्यते व्याख्यातुम् । तथाऽपि महिमातिशयलाभायैवं व्याख्यातम् । एतेन यस्मान्मम प्रकृती योनी सर्वभूतानां ततः 'अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा' इति व्याख्यानमपहस्तितं भवति ॥

*भा०दी०*— सम्बन्ध इति भाष्ये(ऽ)नुक्तेः पूर्वार्धतात्पर्यदुर्गमत्वात्स्वयं व्यनक्तं कुर्वन्नेवोत्तरार्धं सम्बन्धभाष्यमवतारयति **नन्वत्रापरेदित्यादिना** । **वाक्यभेदेनेति** । इयं जडरूपा प्रकृतिरपरेत्येकं वाक्यम् । इतो जडप्रकृतितोऽन्यां जीवभूतां परां विद्धीत्यन्यद्वाक्यं सा च मे मदीयमदधीनेत्यपरं वाक्यमिति वाक्यभेदेनेत्यर्थः । जगत्प्रकृतीत्यत्र जगत्पदस्य षष्ठ्यन्ततया प्रकृतिविशेषणत्वे वैय्य-र्थ्यादन्यथा योजयति **जगत्प्रतीति** । प्रकृती मद्वशे इत्युक्तमेतच्छब्दपरामृष्टं तस्य फलितार्थमाह **प्रकृतिद्वारकमिति** । प्रभवादिभोक्तृत्वं हरेर्व्यनक्ति **यथेत्यादिना** । **द्विरुक्तत्वादिति** । छान्दोग्ये तृतीये 'सर्वं खल्विदं ब्रह्मे'ति चतुर्दशखण्डे 'सर्वकाम' इत्यादिवाक्यस्य द्विरुक्तत्वादेकस्वरूपपर-मन्यत्तद्धोक्तृत्वपरं तथैव तद्भाष्योक्तोऽन्यथा पुनरुक्तताप्रसङ्गादिति भावः । सुखहेतुप्रभवप्रलय-भोक्तृत्वरूपप्रकृतप्रमेयसंवादायाह **सुखरूपस्य सुखकारणस्येति** । रूप्यते उत्पद्यतेऽनेनेति रूप-शब्दः कारणपर इति भावः । **एतेनेति** । प्रामाणिकव्याख्यानप्रदर्शनेत्यर्थः ॥

*भा०र०*— पूर्वसन्दर्भानुवादपूर्वम् "अहं कृत्स्नस्य" इत्यधिगमनिकाभाष्यम् अवतारयितुं शङ्कते **नन्ववरेति** । अपरशब्दस्यानुत्तमार्थस्यार्थानुवादः **अवरेति** । **अभिप्रेतमिति** । अपरवस्तु-परवस्तुनिरूपणानन्तरं परतरवस्तुनिरूपणस्य विस्तरप्राप्तत्वादिति भावः । "एतद्योनीनि भूतानि" इत्यर्धमपि प्रकृतानुपयुक्तम् इत्यतोऽस्य प्रकृतोपयोगं दर्शयति **तत्र शरीरेन्द्रियेति** । "भूतानि सशरीरान् जीवान्" (गी.भा. ८.४) इत्यष्टमाध्यायभाष्ये शरीरपदमुपलक्षणम् इति भावेन "शरीरे-न्द्रियविषयलक्षणस्य कार्यस्य जीवानां च" इति भूतशब्दार्थोक्तिः । **तयोरेवेति** । भूतशब्दस्य चिदचिद्विषयवस्तुवाचित्वेन शरीरादिलक्षणकार्यस्य जडप्रकृतौ, जीवानां च चित्प्रकृतावन्तर्भाव इति दर्शयितुं जडाजडप्रकृतिकारणकानि भूतानीत्युक्तमित्यर्थः । **इदं तु** "अहं सर्वस्य जगतः" इत्यर्धं तु । कृतचोद्यपरिहारं भाष्यारूढं वक्तुमाह **पूर्वमिति** । "इयं मे भिन्ना प्रकृतिः" (६.४) इति, "प्रकृतिं विद्धि मे पराम्" (६.५) इति । 'च', 'मे' इत्यस्य द्विरावृत्तितात्पर्यम् **वाक्यभेदेनेति** । "इयं मे भिन्ना प्रकृतिः" इति, "प्रकृतिं श्रीदेवीं परां विद्धि" इत्येकं वाक्यम् । "तां च मद्वशां विद्धि" इत्यपरं वाक्यम् इति वाक्यभेदेनेत्यर्थः । **एतत्** "अहं कृत्स्नस्य जगतः" इति वाक्यम् ।

ननु "जगत्प्रकृती" इति द्वन्द्वाभ्युपगमे बहुवचनश्रवणप्रसङ्गः । परापरप्रकृत्योः प्रस्तुतत्वात् । "जगतः प्रकृती" इति षष्ठीतत्पुरुषाश्रयणे जगत्पदस्य नातीव प्रयोजनम् इत्यतो 'जगत्' इति पृथक् पदं द्वितीयान्तम् । द्वितीया च कर्मप्रवचनीययोगलक्षणेति भावेन प्रतिशब्दं संयोजयति **जगत्प्रति इति** । इत्येतावत् "प्रकृती मद्वशे इत्येतावत्" इत्यस्य फलितं दर्शयति **प्रकृतिद्वारकमिति** । किमुक्तं भवति ? इत्यत आह **उपचरितमिति यावदिति** । प्रकृतिनिष्ठजगदाधारत्वजगत्कारणत्व-

रूपम् ऐश्वर्यं प्रकृतिस्वामिन्युपचर्यत इत्यर्थः । ननु जगत्कारणत्वाद्यैश्वर्यं प्रकृतिद्वारकमुपचरितं भवतीत्युक्त्या भगवतः साक्षाज्जगत्कारणत्वादिकं गीताऽभिप्रेतमित्युक्तं स्यात् । न च तद्युज्यते । "प्रभवादेः सत्ताप्रतीत्यादिकारणत्वात्" इत्युत्तरभाष्येण जगद्धर्मभूतप्रभवादिकारणत्वस्यैव साक्षात् प्रत्यायनात्, जडप्रकृतिस्वभावपरिणामलक्षणकारणत्वस्य भगवति सर्वथाऽनुपपत्तेश्चेत्यत आह **प्रकृत्योरिति** । अनेन यदुक्तं "प्रकृती एव भगवद्वशे, जगज्जन्मादिस्थितिलयाः तत्प्रकृत्यधीना एव, न भगवदधीना" इति तन्निरस्तम् । प्रकृत्योरिव प्रकृतिनिष्ठकारणत्वाधारत्वयोरपि "अहं कृत्स्नस्य जगतः" इति भगवदधीनत्वकथनादिति । **प्राचीनटीकायां भावदीपिकायां** च "जगतः प्रकृती जगत्प्रकृती" इति विग्रह इति लभ्यत इति ।

ननु प्रभवप्रलययो रूपरसादिवद् भोग्यत्वाभावात् कथं तद्भोक्तृत्वं भगवतः ? इत्यतः तद्बुद्ध्यारोहाय दृष्टान्तेनोपपादयति **यथा पुत्रादीति** । तत्सत्तायाश्च मदधीनत्वेन तदभेदव्यपदेशः "सर्वं खल्विदं ब्रह्म" (छा. ३.२.९), "राजा राष्ट्रम्" इत्यादौ दृष्टः । "यदधीना यस्य सत्ता तत् तदित्येव भण्यते" (भ.प.) इति शास्त्रात् । भोग्यभोक्त्रोरैक्यव्यपदेशश्च "असौ जीव एव कदली-फलम्" इत्यादौ दृष्ट इति **भावप्रदीपिकायाम्** उक्तम् । उक्तं च "सर्वयज्ञभुजे नमः" (ई.भा.) इत्यत्र यज्ञभोक्तृत्वाद् 'यज्ञनाम्नः' इतीशावास्यटीकायाम् । वक्ष्यति च "आह च" इति भाष्यगम-निकायाम् ।

ननु 'सर्वकामः' इत्यादिना काम्याद्यैक्यमेवोच्यते, न पुनस्तद्भोक्तृत्वमिति कथमिदं वाक्यं प्रकृतार्थे प्रमाणं स्यात् ? इत्यत आह **सर्वकाम इत्यादेरिति** । "सर्वकर्मा सर्वकामः सर्वगन्धः सर्वरसः सर्वमिदमभ्यात्तो अवाक्यनादरः" (छा.अ.३,ख.२,मं.९) इति वाक्यं छन्दोगोपनिषदि द्विः पठ्यते । तत्रैकं गन्धाद्यैक्यबोधनपरम्, अन्यत् गन्धादिभोगबोधनपरम्, अन्यथा वैयर्थ्यप्रसङ्गात् । तथा च छान्दोग्यभाष्यम् "एकत्र सर्वगन्धादिना चिदानन्दात्मकसर्वगन्धादिरूपत्वमुच्यते । अन्यत्र तद्भोक्तृत्वमिति" (छा.भा.अ.३,ख.२,मं.९) इति भावः । ननु कामो नामेच्छाऽपरनामको अभि-लाषः । स च न भोग्य इत्यतः विवक्षितं कामशब्दार्थमाह **काम्यन्त इतीति** । **द्रव्याणि** हविःपुष्पफलादीनि । ननु सर्वभोक्तृत्वे नेदं मानम् ? गन्धरसयोरेवात्र श्रवणात्, इत्यत आह **गन्धरसशब्दाविति** । **गुणान्तरस्य** शब्दादेः ।

ननु भोग्यार्थान् प्रति भगवत आभिमुख्येन स्थितौ स्यादिदं भोगवचनम् । तदेव कथम् ? इति शङ्काऽपनोदाय श्रुतौ 'सर्वमिदमभ्यात्तः' इत्युक्तम्, तदर्थमाह **सर्वमिदमिति** । 'अभिरभागे' इत्यभेः कर्मप्रवचनीयत्वम्, कर्मप्रवचनीययोगे च द्वितीया इति भावेन 'अभि' इत्यस्यार्थ उक्तः **अभित**

**इति** । यद्यपि "पर्यभिभ्यां च" इत्यत्र सर्वोभयार्थयोरेव तसिर्नियमित इति, उभयतः पार्श्वद्वये इत्येवार्थः प्राप्त इति 'अभितः' इत्यस्य नाभिमुख्यार्थकत्वलाभः । तथाऽपि "समीपोभयतःशीघ्र-साकल्याभिमुखेऽभितः" (अ.को.) इत्यमरव्याख्याने अभिमुखे यथा "अभितः समापतन्तम् अरिम् अपश्यत् = आभिमुख्येन आपतन्तं शत्रुमपश्यदित्यर्थः" इत्युक्तेराभिमुख्यार्थकत्वकथनं न दोषाय ।

आङ्पूर्वाद् "डु दाञ् दाने" इत्यतः कर्मणि निष्ठायाम् "आत्तः इति रूपम् । तदर्थमनूद्याह **आत्तो धृत इति** । जगतो भगवत्कर्मकधारणं नाम किम् ? इत्यतस्तत्तात्पर्यमाह **स्थित इतीति** । तिष्ठतेरकर्मकत्वात् कर्तरि क्तप्रत्ययः सर्वमिदमभितो भगवान् स्थित इति सर्वाभिमुख्य-सद्भावाद् युक्तमेव तस्य सर्वभोक्तृत्वमिति भावः । तदुक्तं **प्राचीनटीकायाम्** "सर्वमिदम् अभ्यात्तः = सर्वेण अनेन जगताऽभितः स्वीकृतो भगवान्" इति । "न विद्यते वाक्यमस्य" इत्युक्ते अवक्तृ-त्वम्, अवाच्यत्वं वा स्यात् । तच्च "यो वै वेदांश्च प्रहिणोति तस्मै", "ईक्षतेर्नाशब्दम्" (ब्र.सू. १.१.४) इत्यादिबहुप्रमाणविरुद्धम् ? इत्यत उक्तम् **अनुग्रहमन्तरेणेति** । अवाक्यपदेन वक्तृत्वाभाव एव विवक्षितः । न चैवं मूकता वा स्यादिति वाच्यम् । प्राकृतस्यैव निरर्थकवाक्यवक्तृत्वाभाव-स्याभिसंहितत्वादिति ।

आदरशब्दस्य विवक्षितमर्थमाह **आश्चर्यबुद्धिरिति** । "विशेषणं विशेष्येण बहुलम्" इति बहुलग्रहणाद् विशेषणयोरपि समासः, नसमासत्वात् नलोपाभावश्च, इति मनसि निधायाह **अवाक्यश्चासौ नादरश्चेतीति** । **प्राचीनटीकायां तु** "इदमद्य मया लब्धम्" इति **न वक्ति** न वर्णयतीति 'अवाकी', मनसाऽपि नादरं करोतीति 'अनादरः' इत्युक्तम् । तत्र "वच – परिभाषणे" इत्यतो भावे घञि "चजोः कु घिण्ण्यतोः" कुत्वेन **वाकः** वाक्यम्, सोऽस्यास्तीति 'वाकी' स न भवतीति 'अवाकी' इति, न विद्यत आदरो यस्येति 'अनादरः' इत्येव च व्युत्पत्तिः । "न वक्ति" इत्यादि तु फलितप्रदर्शनमेवमित्यवधेयम् । अवाक्योऽनादरश्चेति विशेषणद्वयं च भगवतो महा-प्रभुत्वात् सम्भवति । सर्वभोक्तृत्वं भुञ्जानोऽपि न प्राकृत इवाश्चर्यबुद्ध्या शुभविषयान् गन्धरसा-दींश्चोपभुङ्क्ते इति विभावयितुमुपात्तमिति **आहुः** ।

'कारणत्वादिना' इत्यत्रादिपदेन भोक्तृत्वग्रहणम् । 'कारणादिना' इत्यपि क्वचित् पाठः । सुख-कारणप्रभवप्रलयभोक्तृत्वरूपप्रकृतप्रमेये "सुखरूपस्य भोक्तृत्वात्" इत्येतत्कथं प्रमाणम् ? इत्यत आह **सुखरूपस्य सुखकारणस्येति** । "प्रास्यन्ति तमिति प्रासः" इतिवत् "रूपयन्ति निरूपयन्ति

निष्पादयन्ति यं गन्धादिरूपं भोग्यं सोऽयं रूपः'' इति । ''रूप = करणे'' इति धातोः ''अकर्तरि च कारके'' इति कर्मणि 'एरच्' इति णिजन्तात् अच्प्रत्यये रूपशब्दनिष्पत्तौ ''सुखस्य रूपं सुखरूपम्'' इति सुखकारणं ग्राह्यमिति भावः । न च ''एरच् अण्यन्तानाम्'' इति वचनात् ण्यन्तादच्प्रत्ययो नेति वाच्यम् । ''कल्पादेः प्रतिषेधो वक्तव्यः'' इति वार्तिकारम्भात् उक्तवचनमनार्षमिति मनोरमायां स्थितेरिति **केचित्** । **अन्ये** तु सुखं **रूपयन्ति** निष्पादयन्तीति सुखरूपम्, 'कर्मण्यण्' इत्यणि 'कुम्भकारः' इत्यादिवदुपपदसमासः । न च करणे घञ्प्रत्यय एव कुतो न भवेदिति वाच्यम् । ल्युटो घञ्बाधकत्वेन तत्प्रवृत्त्यवश्यम्भावे 'रूपणस्य' इति प्रयोगापत्तेः । ''रूपं शब्दो गन्धरसस्पर्शाश्च विषया अमी'' (अ.को.) इत्यमरव्याख्याने तु रूपशब्दो नाना निष्पादित इत्यन्यदेतत्, इत्युक्तरीत्यैव कारणार्थकत्वलाभ इति **आहुः** । **भावप्रदीपिकायां** तु सुखरूपस्य शुभविषयस्येत्यर्थ इत्युक्तम् ।

'प्रकाशिता' इति भाष्यस्य 'प्रकाशयिता' इत्यर्थः । तच्छब्दप्रतियोगितया यच्छब्दम्, 'भोगेन' इति च शब्दमध्याहरन्, व्यवहितानामन्वयं वदन्, आद्यचशब्दार्थं चाह **यद्भोगेनेति** । **शक्तिरूपेण** ''सदा सन्त्येव'' इति विपरिणामेनानुवर्तनीयम् । अनेन ''कादाचित्कक्रियावेशो विकारित्वप्रसङ्गात्'' इति कृतचोद्यं परिहृतं भवति । **सदा सद्भावेऽपि** 'सुखस्य' इति योज्यम् । **इति प्रभव इति** । प्रपूर्ववाद् भवतेरपादाने 'ऋदोरप्' इत्यप्प्रत्यये 'प्रभवः' इति रूपमित्यर्थः । **इति प्रलय इति** । प्रपूर्वात् ''लीङ् = श्लेषणे'' इति धातोरधिकरणे 'एरच्' इत्यच्प्रत्यय इत्यर्थः । **महिमातिशयेति** । सकलसत्ताप्रतीत्यादिकारणत्वसर्वशुभभोक्तृत्वरूपमहिमातिशयेत्यर्थः । **एतेन** 'प्रभवादेः' इति भाष्येण । **इति व्याख्यानम् सङ्करव्याख्यानम्** ।

**अपहस्तितमिति** । 'कर्तृकरणाद्धात्वर्थे' इति अपासितुः करणवाचकात् हस्तशब्दाद् धात्वर्थे निरसने णिच्प्रत्यये ''हस्तेन अपास्यति अपहस्तयति'' इत्यतः कर्मणि निष्ठायाम् 'अपहस्तितम्' इति रूपे ''वामेन पाणिनाऽपास्तम्'' इत्यर्थः । यद्वा ''अप = अपवर्जन-वियोग-आलेखन-चौर्य-निर्देश-वैकृति-विधिविपर्यय-ऋणग्रहण-अवयवपूजा-निह्नव-सव्यावृत्तिषु'' इत्युपसर्गनिघण्टौ 'अप' इत्युपसर्गस्य विधिविपर्ययार्थकत्वाभिधानात् साधुकर्मविहितदक्षिणपाणिविपरीते सव्यपाणौ अपहस्तशब्दः । 'अपशब्दः' इति यथा । ''सोऽस्य निरासकत्वेन प्राप्तः'' इत्यर्थे ''तदस्य सञ्जातं तारकादिभ्य इतच्'' इतीतच्प्रत्यये, **अपहस्तेन** सव्यहस्तेन निरस्तम् अतितुच्छमित्यर्थः । जगद्धर्मयोः प्रभवप्रलययोः साक्षाद् भगवदैक्यानुपपत्तेरिति भावः ॥ ६ ॥

**गीतातात्पर्यनिर्णयः**

''अचेतना चेतनेति द्विविधा प्रकृतिर्मता ।
त्रिगुणाऽचेतना तत्र चेतना श्रीर्हरिप्रिया ।
ते उभे विष्णुवशगे जगतः कारणे मते ।
पिता विष्णुः स जगतो माता श्रीर्या त्वचेतना ।
उपादानं तु जगतः सैव विष्णुबलेरिता ॥'' इति च ॥ ४-६ ।

*प्रका०*— भूमिरित्यादेरर्थमाह **अचेतनेत्यादिना** ॥

*न्या०दी०*— प्रतिज्ञातं ज्ञानमुच्यते **भूमिः** इत्यादिना । तत्स्मृत्यैव व्याचष्टे **अचेतनेति** ॥ चेतना श्रीरित्यनेन जीवभूतामिति व्याख्यातं भवति । ते उभे इत्यनेन मे प्रकृतिरित्यस्यार्थ उक्तो भवति । एतद्योनीनीत्यस्यार्थो **जगत** इति । विष्णोरेव जगत्कारणत्वात् कथमेतदित्यत आह **पितेति** ॥ पितृत्वेनैव विष्णुः कारणमित्यर्थः । अनेन अहं कृत्स्नस्येति व्याख्यातं भवति । तर्हि प्रकृत्योः कीदृशं कारणत्वमित्यत्र आह **मातेति** ॥ अचेतनप्रकृतेरुपादानत्वशक्तिरपि भगवदधीने-त्युच्यते **विष्णुबलेरितेति** ॥

**गीता**

**मत्तः परतरं नान्यत्किञ्चिदस्ति धनञ्जय ।
मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव ॥ ७ ॥**

*वि०वि०*— परापरप्रकृत्योः स्वाधीनत्वोक्त्या स्वस्य परत्वमुक्तप्रायम् । तत्रापरतत्त्वं यथा भूम्यादिभेदेनानेकम्, यथा च परतत्त्वं श्रीब्रह्मादिभेदेनानेकम्, तथा परतरमपि किमनेकम् उत त्वेकमेवेति जिज्ञासायामाह **मत्त इति** । मत्तोऽन्यत्परतरं किमपि नास्ति । परतरस्त्वहमेवेत्यर्थः ।

अथवा, कृत्स्नस्य प्रभव इत्यादिकमनेनोपपाद्यते । जडापेक्षया चेतनानां परत्वम्, तेषामपि श्रीपर्यन्तमवरपरत्वम्, सैव सर्वतः परतरा, तस्या अपि परतरोऽहमेव । नान्यो मत्सदृशः । अतो मत्त एव जगत्सृष्ट्यादिकं युक्तमित्याशयः । परस्याऽन्यस्याभावात् तमबर्थे तरप्प्रत्ययः । न केवलं प्रभवप्रलयौ मदधीनौ । अपि तु स्थितिरपि मदधीनेत्याह **मयीति** ॥

*सा०सं०*— ननु परावरप्रकृत्योः स्वाधीनत्वोक्त्यैव स्वस्यावरत्वस्य परत्वस्य चायोगात् परतरत्वशब्दितं सर्वोत्तमत्वं तव प्राप्तमित्यस्तु जगत्पितृत्वम् । तद्वत् सर्वोत्तमान्तरस्यापि जग-

त्पितृत्वाद्युपपत्तेः कथमहमेव कृत्स्नस्येत्याद्युक्तिरुपपद्यत इत्यत आह **मत्त इति** । **मत्तोऽन्यत्** परतरशब्दितं सर्वोत्तमं किञ्चि**न्नास्ति** । येनाहमेवेत्युक्तिरयुक्ता स्यात् ।

यद्वा, अन्यत् परतरं नेत्युक्त्या, अर्थात् तात्पर्यगत्या लब्धम् 'अहमेव परतरः' इत्यादौ योजयित्वा पश्चात् 'मत्तः' इत्यादि योज्यम् । तथा चावतारिकायाम्, उक्तदिशा लब्धस्यापि परतरत्वस्यात्रोक्तिः, अपरतत्त्वं यथा भूम्यादिभेदेनानेकविधं यथा चापरतत्त्वं श्रीदेवीमुक्तभेदेनानेकम्, तथा परतरमप्यनेकविधमुतैकमेवेति जिज्ञासायामहमेक एवेति ज्ञापयितुमिति ध्येयम् । न केवलं जगतः प्रभवप्रलयौ मदधीनौ । किन्तु स्थितिरपि मदधीनेत्याह **मयीति** । **इदं सर्वं** प्रकृत्यादिजगत् ॥

***अ०प्र०***— अत्र परापरप्रकृत्योः स्वाधीनत्वोक्त्या स्वस्य परतत्त्वमुक्तप्रायं तत्र अपरतत्वं यथा भूम्यादिभेदेन बहुविधा । यथा च परतत्त्वं श्रीतत्त्वं मुक्तामुक्तब्रह्मादिचेतनभेदेन बहुविधं तथा परतरतत्त्वमपि किमनेकविधमुत त्वेक एवेति जिज्ञासायामाहं **मत्त इति** ।

हे धनञ्जय ![1], मत्तः[2], परतरं[3], अन्यत्[4], किञ्चित्[5], नास्ति[6], इदं[7], सर्वं[8], अपि[9], सूत्रे[10] मणिगणा[11] इव[12], प्रोतमित्यन्वयः ॥

हे धनञ्जय ![1], मत्तः = परमात्मनः सकाशात्[2], परतरं = श्रेष्ठं जगतः सृष्टिस्थितिसंहारयोः स्वतन्त्रकारणं[3], अन्यत् = व्यतिरिक्तं[4], किञ्चिन्नास्ति = किञ्चिदपि न विद्यते[6], इदं सर्वं मयि[7-9], यथा सूत्रे[10] मणिगणाः प्रोताः = ग्रथिताः[11] तद्वत्[12], प्रोतं = ग्रथितं आश्रितमित्यर्थः[13], तदेव राघवेन्द्रयतिभिः उपपादितम् । दुःखोक्तत्वात्संसारिणोऽवराः । दुःखकारणत्वाज्जडप्रकृतिरप्यवरा । दुःखरहितं परं मुक्तब्रह्मादिकं तत्रापि श्रीः परैव । ब्रह्मादिमुक्तास्तु प्राक् दुःखवत्त्वात्पराभासा अवराः । देहसम्बन्धात् जीवा एव प्रकीर्तिताः ।

नित्यनिर्दुःखरूपत्वात् परा श्रीरेकयैव तु ।
दुःखासंस्पृष्टत्वात्तु मध्यमो वायुरुच्यते ॥
मुक्तस्तु स्यात्पराभाससुनित्यसुखभोजनात् ।
तत्रापि तारतम्यत्वात्तेषु ब्रह्माऽधिको मतः ॥
अन्यथाधीनरूपत्वादसमाधिकसौख्यतः ।
तत्तन्त्रत्वात्तु सर्वस्य विष्णुः परतरो मतः ॥
यस्यास्सम्बन्धयोग्यत्वाज्जीवा अप्यवरा मताः ।
तस्या जडायाः प्रकृते अवरत्वे क्व संशयः ॥
अथावरतरा ये तु विश्वाद्यश्चेतना हरेः ।

नित्यदुःखैकहेतुत्वादिप्रमाणात् जडापेक्षया चेतनानां परत्वेऽपि श्रीपर्यन्तमवरत्वमेव । श्रीरेव सर्वतः परा । तस्यापि अपरत्वात्परतरोऽहमेक एव । नान्यो मत्सदृशः । अतो मत्त एव जगत्सृष्ट्यादिकं युक्तमित्याशयः । न केवलं प्रभवप्रलयौ मदधीनौ । अपि तु स्थितिरपीत्याह **मयि इति** । यथा सूत्राधारतया मणिगणाः स्थितास्तथेदं प्रमितं प्रकृत्यादिकं जगन्मदाधारेण स्थितम् ॥ ७ ॥

**भाष्यम्**

**अहमेव परतरः । मत्तोऽन्यत्परतरं न किञ्चिदपि । इदं ज्ञानम् ॥ ७ ॥**

***प०टी०***— ननु न केवलं पूर्वकाले, सदाऽपि मत्तः परतरं नान्यदित्यन्यथाप्रतीतिनिरासाय यथावद्व्याचष्टे **अहमिति** । ज्ञानप्रतिपादकप्रघट्टकं समाप्तमित्याह **इदमिति** ॥

***न०टी०***—एवं जडाजडप्रकृत्योरपरत्वपरत्वोक्तौ परतरः कः ? इत्याकाङ्क्षायां स एव निरूपणीयः, न तु सर्वभिद इति भावेन 'मत्तः' इति श्लोकार्धं व्याचष्टे **अहमेवेति** । भगवतोऽन्यस्य परतरत्वनिषेधात् स एव परतरः । अन्यत्वमात्रनिषेधे 'परतर'शब्दः 'अन्यत्'शब्दो वा व्यर्थ इति भावः । परापरयोश्चिदचित्प्रकृत्योस्तद्योनिकस्य च महदहङ्कारादिलक्षणस्य ब्रह्मेशानादेः कृत्स्नस्य जगतः प्रभवादिशब्दोक्तसत्ताप्रतीतिप्रवृत्त्यादिप्रदत्वात् परतमोऽपि स एव । 'ज्ञानं तेऽहं प्रवक्ष्यामि' इति प्रतिज्ञायैवं पारापर्यस्योक्तत्वादेतद्विषयमेव ज्ञानम्, एतद्विरोधि सर्वं मिथ्याज्ञानमिति भावेनाह **इदमिति** ॥

***प्र०दी०***— नन्वपरं परं च तत्त्वमुक्त्वा परतरोऽहमिति वक्तव्यम् । मत्त इति किमुच्यत इत्यतस्तात्पर्यमाह— **अहमेवेति** । परापरप्रकृत्योः स्वाधीनत्वोक्त्यैव स्वस्य परतरत्वमुक्तप्रायम् । किन्त्वपरतत्वं यथाऽनेकं भूम्यादिभेदेन, यथा च परतत्वं "मुक्तस्तु स्यात् पराभास" इति वचनात्, तथा परतरमपि किमनेकमुत त्वेकमेवेति जिज्ञासायां "अहमेव परतरः" इत्यनेनोच्यत इत्यर्थः । कथमनेनेदं लभ्यते । भगवत्प्रतियोगिकाधिक्यवन्निषेधस्यात्र प्रतीतेरित्यतो योजयति— **मत्त इति** । अन्यथा तरपोऽन्यशब्दस्य च वैयर्थ्यादिति भावः ॥

***भा०दी०***— उक्तप्रायं तर्हि मत्त इत्यनाकाङ्क्षितं किमित्युच्यत इति पृच्छति **किं त्विति** । **परतत्वमिति** । अनेकमित्यनुषङ्गः । कथमित्यतश्चित्प्रकृतित्वेनैके तु व्यक्तम् । अन्यत्तु मुक्तजात-मिति भावेन गीतातात्पर्योक्त "मुक्तस्तु स्यात्पराभासः सुनित्यसुखभोजनादि"ति वाक्यशेषः । नित्यनिर्दुःखचित्प्रकृतिवत् सन्नि ............................ वेति भावेन चित्प्रकृतिः परा मुक्तो

पर इत्यनुक्त्वा पराभास इत्युक्तः । **आधिक्यवन्निषेधस्येति** । आधिक्यवन्निषेधस्येत्यर्थः । **अन्यथेति** । हरेः परतत्त्वार्थकत्वाभिप्रायाभाव इत्यर्थः ॥ ७ ॥

*भा०र०*— 'परतरोऽहम्' इति वक्तव्यम् ? इत्यस्योत्तरमाह **परापरप्रकृत्योरिति** । स्वाधीनत्वोक्त्या "इयं मे प्रकृतिरष्टधा भिन्ना" (७.४) "अपरा" (७.५) इति, "प्रकृतिं विद्धि मे पराम्" (७.५) इति च स्वाधीनत्वोक्त्या । भावलब्धत्वेऽपि साक्षाद्वचनाभावाद् 'उक्तप्रायम्' इत्युक्तम् । तर्हि 'मत्तः' इत्यनाकाङ्क्षितं किमित्यभिधीयते ? इति पृच्छति **किन्त्विति** । उत्तरमाह **अपरतत्त्वमिति** । **परतत्त्वम्** 'अनेकम्' इत्यनुषङ्गः । तत्कुतः ? इत्यतः श्रीतत्त्वं तावदेकं परं तत्त्वम्, अन्यत्तु मुक्तजीवजातम् इति भावेन तत्र गीतातात्पर्यमुदाहरति **मुक्त इति** । "सुनित्यसुखभोजनत्वाद् अवरत्वाभावेऽपि प्राग् दुःखसम्बन्धात् पराभास एव मुक्तः, न तु पर एव" इति तट्टीकायाम् "मुक्तस्तु स्यात् पराभासः सुनित्यसुखभोजनात्" (गी.ता. ७.७) इति वचनं व्याख्यातम् । हेतु-हेत्वाभासयोः हेतुशब्द इव, श्री-जीवयोः परशब्द इति परानेकत्वमपि प्रामाणिकमिति भावः । गीतागतास्मच्छब्दार्थः **भगवदिति** । भगवत्प्रतियोगिकं यद् आधिक्यम्, तच्छालि यद्वस्तु, तन्निषेधस्य भगवदपेक्षया चाधिकवस्तुनिषेधस्यात्र 'मत्तः' इति गीतायां प्रतीतेः, "अहमेव परतरं तत्त्वम्" इत्येतत् कथं लभ्यत इत्यर्थः । **अन्यथेति** । "मत्तोऽन्यत् परतरं न किञ्चिदपि" इति भाष्योक्तयोजनामनभ्युपगम्य "मत्तः परं नास्ति" इत्यर्थाङ्गीकारे तरपः "द्विवचनविभज्योपपदे तरवीयसुनौ" इति विहितस्य परशब्दात् परस्य तरप्प्रत्ययस्य, "मत्तः परं नास्ति" इत्येतावतैव परोत्प्रेक्षितार्थलाभसम्भवाद्, अन्यशब्दस्य च वैयर्थ्यादित्यर्थः ॥ ७ ॥

***गीताक्षरार्थस्तु***— ज्ञानसाधनम्, कामादिवर्जितनिवृत्तकर्मानुष्ठानलक्षणकर्मयोगम्, ध्यानयोगं चातीतैः षड्भिरध्यायैरुक्तम् । उत्तरैः षड्भिरध्यायैः षष्ठान्तप्रस्तुतध्यानाङ्गभक्त्युत्पादनार्थं भगवन्महिमा प्राचुर्येण निरूप्यत इति सङ्गतिं वदता, श्रोतारम् अभिमुखीकुर्वता भगवता भगवन्माहात्म्यं वक्तुं प्रतिज्ञायते **मयीति** । **हे पार्थ, मयि** श्रीकृष्णे **आसक्तमनाः** अतीवभक्तिलक्षणस्नेहयुक्तमनाः **योगं युञ्जन्** युञ्जानः कर्मयोग-ध्यानयोगरूपज्ञानोपायम् अनुतिष्ठन् **मदाश्रयः** अहमाश्रयो यस्य स तथोक्तः, भगवानेव मया सर्वं कारयति, स एव मम रक्षकः, तस्मिन्नेव चाहं स्थित इति जानन्निति यावत् । 'असंशयम्', 'समग्रम्' इति क्रियाविशेषणद्वयस्य संशयमन्तरेण तव योग्यताऽनुसारेण समग्रं यथा भवति तथेत्यर्थः । **मां यथा** येन प्रकारेण **ज्ञास्यसि तत्** तं प्रकारम्, तथेति वा शृणु । तत्प्रकारकमज्ज्ञानजनकवचनं श्रुत्वा तत्र निष्ठां कुरु इति यावत् ॥ १ ॥

"श्रवणनिष्ठे वचनाधीने" इत्यत उक्तम् **ज्ञानं तेऽहमिति** । अत्र ज्ञानविज्ञानशब्दौ ज्ञातव्य-विज्ञातव्यभगवन्माहात्म्यपरौ । **इदं** 'माम्' इति प्रकृतत्वात् मद्विषयं मम सम्बन्धि **ज्ञानं** सामान्यतो ज्ञातव्यं माहात्म्यं **सविज्ञानं** विशेषतो ज्ञातव्यमाहात्म्येन सहितं वक्ष्यामि । 'अशेषतः' इत्यस्य यावदर्जुनयोग्यं तन्मध्ये शेषमकृत्वेत्यर्थः । तन्माहात्म्यं **ज्ञात्वा** अनुसन्दधतः **भूयोऽन्यत् ज्ञात-व्यम्** अनुसन्धातव्यं **नावशिष्यते** । यज्ज्ञात्वा ज्ञातव्यमन्यत् नावशिष्यत इत्यत्र च ज्ञानक्रिया-ऽपेक्षया त्त्वाप्रत्यय इति वा ॥ २ ॥

श्रोतुरादरार्थं ज्ञानविज्ञानयोर्दौर्लभ्यमुच्यते **मनुष्याणामिति** । **कश्चिदेव** पुण्यवान् **सिद्धये** उक्तविधमाहात्म्यज्ञानाय **यतति** यतते । **यततां** यतमानानामपि मध्ये कश्चिदेव सिद्धिमान् भवति, **सिद्धानां** ज्ञानवतामपि मध्ये **कश्चिदेव तत्त्वतो मां वेत्ति** ॥ ३ ॥

"माहात्म्यविशेषयुक्तं ज्ञानम्" इति प्रतिज्ञातं ज्ञानमुच्यते **भूमिरित्यादिना "रसोऽहम्" इत्यतःप्राक्तनग्रन्थेन** । **अनलः** अग्निः, **खम्** आकाशः, **मनो बुद्धिश्च** तत्त्वे, कार्यवाचिना अह-ङ्कारशब्देन तत्कारणं महत्तत्त्वमप्युपलक्ष्यत इत्येवम् **अष्टधा भिन्ना प्रकृतिर्मे** मदधीना । मत्प्रेरिता प्रकृतिरेव पृथिव्यादिकार्यभावमापन्नाऽस्तीति प्रकृतिप्रेरकत्वादिमाहात्म्योक्तिः ॥ ४ ॥

न केवलं जडप्रकृतिरेव मद्वशा, अपि तु चित्प्रकृतिरपीत्युच्यते **अपरेयमिति** । **इयं** पूर्व-श्लोकोक्ता जडप्रकृतिः, **अपरा** वक्ष्यमाणचेतनप्रकृत्यपेक्षया, अनुत्तमा **इतः** जडप्रकृतितस्तु **अन्यां जीवभूतां** "जीवा च सा भूता च" इति विग्रहः, तां जीवानां प्राणधारिणीम्, सर्वजीवदेहेषु स्थित्वा तदीयान् प्राणांस्तत्र धारयतीत्यर्थः । यद्वा जीव इव जीव इति चित्त्वसादृश्याद् गौण्या वृत्त्या श्रीतत्त्वं जीवशब्दार्थः । **भूता** सर्वदा विद्यमाना च । एतच्च विशेषणद्वयं सर्वजीवनदात्री, अनादि-निधनाऽपि श्रीर्भगवदधीनेति माहात्म्यस्फोरणाय । जडप्रकृत्यपेक्षया **पराम्** उत्तमां **प्रकृतिं** चित्प्रकृतिं श्रीदेवीं **मे** मदधीनां **विद्धि** । परत्वे हेतुः **ययेदं धार्यते जगदिति** ॥ ५ ॥

ननु शरीरेन्द्रियविषयलक्षणस्य कार्यस्य जीवानां च सद्भावेन तेषां भगवदधीनत्वावचनात् कथं प्रकृत्योस्तद्वशत्ववर्णनमात्रेण महिमाऽतिशयलाभः ? इति शङ्कमानं प्रति शरीरेन्द्रियविषयलक्षणस्य कार्यस्य जीवानां च तयोरेवान्तर्भाव इति दर्शयितुम् **एतद्योनीनीत्युक्तम्** । शरीरादिकार्यसहितानि जीवजातरूप**भूतानि** सर्वाणि **एतद्योनीनि** जडाजडप्रकृतिकारणकानि यथासम्भवं तत उत्पन्नानि **इत्युपधारय** अवधारय जानीहि । पूर्वं वाक्यभेदेन प्रकृत्योरवरत्वम्, परत्वम्, 'मे' इति स्ववशत्वं चोक्त्वा "ययेदं धार्यते जगत्" (७.५) 'एतद्योनीनि' इति जगदाधारकत्वकारणत्वे कथिते । तत्र

प्रकृती एव भगवद्वशे, जगज्जन्मस्थितिलयास्तु प्रकृत्याधीना एव, न भगवदधीना इति प्रतीतम् । तन्निरासार्थं जगज्जन्मस्थितिलयानामपि स्ववशत्वं वक्तुमुच्यते **अहमिति** । 'एतद्योनीनि' इति वचनं प्रकृतिद्वयनिष्ठं कारणत्वादिकं मदायत्तमित्यभिप्रायकमिति नोक्तविरोध इति भावः । **कृत्स्नस्य जगतः प्रभवः प्रलयश्च** प्रभवादिसत्ताप्रतीत्यादिकारणत्वात् ''यदधीना यस्य सत्ता तत् तदित्येव भण्यते'' (भ.प.) इति ताच्छब्द्यम्, पुत्रादिप्रभवो रिपुप्रलयश्चोपलब्धः सुखहेतुरिति उपलब्धुः पित्रादेः तद्भोक्तृत्वम्, तथा तद्भोक्तृत्वाच्च प्रभवः प्रलयः । तद्भोक्तृत्वेन तच्छब्दवाच्यत्वं च ''यज्ञभोक्तृत्वाद् यज्ञनामा'' (ई.भा.टी.) इत्यत्र दृष्टम् । तथा च भाष्यम् ''सुखरूपस्य भोक्तृत्वात्'' (ना.) इति ॥ ॥ ६ ॥

परापरप्रकृत्योः स्वाधीनत्वोक्त्यैव स्वस्य परतरत्वमुक्तप्रायम् । किन्तु, अपरं तत्त्वं यथाऽनेकं भूम्यादिभेदेन, यथा च परं तत्त्वं श्रीतत्त्व-मुक्तजातभेदेन, तथा परतरमपि किमनेकम् ? उत त्वेक-मेवेति जिज्ञासायाम् ''अहमेव परतरं तत्त्वम्'' इत्यनेनोच्यते । त्वमिवान्योऽप्यस्ति चेत् परतरः, तदा जगद्धर्मरूपप्रभवप्रलयादिकारणत्व-तद्भोक्तृत्वलक्षणधर्मस्यान्यत्र सम्भवे भगवत एव महिमा-ऽतिशयो न वर्णितः स्यादिति चोद्यं परिहर्तुम् ''मत्तोऽन्यत् परतरं न किञ्चिदपि'' इति विभाव्यत इति तात्पर्यम् । ''मत्तः परतरं नान्यत्'' इत्यत्र 'मत्तः' इति अस्मच्छब्दाद् आद्यादित्वात्तसिः । 'प्रत्ययोत्तरपदयोश्च' इति मपर्यन्तस्य मादेशः । 'तसेश्च' इति तसिलादेशो न भवति, 'अद्व्यादिभ्यः' इति पर्युदासात्, तेन विभक्तिसंज्ञाप्रयुक्तत्वादिकार्यं न । एवमेव 'त्वत्तः कमलपत्राक्ष' (११.२) इत्येतदपि निर्वोढव्यम् । न केवलं जगतः प्रभवप्रलयौ मदधीनौ, अपि तु स्थितिरपि मदायत्तेत्युच्यते **मयीति** । **इदं** प्रकृत्यादिरूपं जगदिति ॥ ७ ॥

**गीतातात्पर्यनिर्णयः**

**मत्तोऽन्यत् परतरं नास्ति । परतस्तु अहमेव इत्यर्थः । अन्यथा अन्यदिति व्यर्थम् ।**

***प्रका०***— मत्तः परतरं नान्यदित्येतद्व्याचष्टे **मत्तोऽन्यदिति** । अन्यत् यत् प्रकृतिपुरुषादिकं तत् मत्तः अधिकतरं न भवति । तत्र परतरस्त्वहमेवेत्युक्तं भवति । अत्र परतरं नेत्यनेन भगव-दितरनिषेधे प्रत्यक्षादिप्रमाणविरोधः स्यात् । अन्यशब्दवैय्यर्थ्यं च स्यादित्यर्थः ।

***न्या०दी०***— त्वद्वत् सर्वोत्तमान्तरस्यापि पितृत्वाद्युपपत्तेः कथं कृत्स्नस्येत्याद्युक्तमित्यत उच्यते **मत्त इति** । तत्र स्वव्यतिरिक्तमात्रं निषिध्यत इत्यन्यथाप्रतीतिनिरासायाऽऽह **मत्त इति** ॥ नात्र

स्वव्यतिरिक्तनिषेधः, किन्तु मत्तोऽन्यद्वस्तु परतरं न भवति । किन्त्वहमेव परतरः । अतः "अहं कृत्स्नस्य" इत्यादि युक्तमेवोच्यत इति भावः । स्वातिरिक्तनिषेधोऽयं किं न स्यादित्यत आह **अन्यथेति** ॥ यद्यत्र स्वातिरिक्तनिषेधस्तर्हि परतरपदेनैव स्वातिरिक्तस्योक्तत्वादन्यदिति व्यर्थं स्यात् । अन्यदिति पदस्य स्वातिरिक्तार्थताभ्युपगमे च परतरमिति व्यर्थं स्यादित्यर्थः ।

**गीतातात्पर्यनिर्णयः**

**"अवरा दुःखसम्बन्धाज्जीवा एव प्रकीर्तिताः ।**
**नित्यनिर्दुःखरूपत्वात् परा श्रीरेकलैव तु ॥**
**दुःखासम्पीडितत्वात्तु मध्यमो वायुरुच्यते ।**
**अनन्याधीनरूपत्वादसमाधिकसौख्यतः ॥**
**तत्तन्त्रत्वाच्च सर्वस्य विष्णुः परतरो मतः ।**
**अभावादन्तराऽन्यस्य त्विहैकार्थौ तरप्तमौ ॥**

*प्रका०*— अत्र परतरशब्दसामर्थ्यादवरादिकमप्यस्त्येव । तदैतत्स्पष्टीकरोति । परशब्दार्थात् लक्ष्मीतत्त्वात् परतर इति वा परतम इति वा विष्णुरेव वक्तव्यो न तु परमो विष्णुः परतरस्ततोऽन्य इति । तस्याभावात् इत्येतदुच्यते **अभावादन्तरान्यस्य त्विहैकार्थौ तरप्तमौ** इत्यादिना ।

*न्या०दी०*— यदि विष्णुरेव परतरस्तर्हि परावरादिना भाव्यम् । तत्किमित्यत उक्तार्थे स्मृतिमाह **अवरा इति** ॥ दुःखसम्बन्धित्वान्न परो, दुःखेन सम्यगपीडितत्वाच्च नावरः । अतो मध्यम इत्यर्थः । विष्णुः परतरश्चेत् कः परतम इत्यत आह **अभावादिति** ॥ अत्र परतरपरतमपदाभ्यां विष्णुरेक एवोच्यते । न त्वसौ परतम एव । परभूतश्रीतत्त्वस्य परतमभूतविष्णोश्च मध्ये परतरस्यान्यस्याभावात् । नापि विष्णुः परतर एव, परतमस्यान्यस्याभावादिति भावः ।

*भा०दी०*— **परावरादिनेति** । परेणावरेणावरतरेण परतरेण च भाव्यमित्यर्थः । अभावादन्तरान्यस्येत्येतद् द्वेधा योजयति **न त्वसावित्यादिना** ॥

**गीतातात्पर्यनिर्णयः**

**यस्याः सम्बन्धयोग्यत्वाज्जीवा अप्यवरा मताः ।**
**तस्या जडायाः प्रकृतेरवरत्वे क्व संशयः ॥**

*न्या०दी०*— ननु जडप्रकृतेरपि नित्यनिर्दुःखत्वात् कथं श्रीरेकैव परेत्यत आह **यस्या इति** ॥ निर्दुःखत्वेऽपि दुःखकारणत्वेन जडप्रकृतेरसन्दिग्धमवरत्वमेवेत्यर्थः ।

**गीतातात्पर्यनिर्णयः**

**अथावरतरा ये तु विमुखाश्चेतना हरेः ।**
**नित्यदुःखैकयोग्यत्वान्न ह्येतत् स्यादचेतने ॥**

*न्या०दी०*— यदुक्तं जीवा अवरा इति तस्यापवादमाह **अथेति** ॥ अत्रापि तरप्तम-भावेकार्थौ । नन्वचेतनादपि चेतनस्योत्तमत्वात् ईश्वरविमुखानामवरतरत्वे कथं प्रकृतेरवरत्वमित्यत आह **न हीति** ॥

**गीतातात्पर्यनिर्णयः**

**अतः परतरं विष्णुं यो वेत्ति स विमुच्यते ।**
**मुक्तस्तु स्यात् पराभासः सुनित्यसुखभोजनात् ॥**

*न्या०दी०*— जीवानां दुःखसम्बन्ध उक्तः । तर्हि मोक्षः कथं स्यादित्यत आह **अत इति** ॥ उक्तप्रकारेणेत्यर्थः । ननु भगवज्ज्ञानेन दुःखमोक्षो भवति चेत् मुक्तस्य परत्वं स्यात् । तथा च श्रीरेकैव परेत्ययुक्तमित्यत आह **मुक्त इति** ॥ सुनित्यसुखभोजनादवरत्वाभावेऽपि प्राक् दुःख-सम्बन्धत् पराभास एव न तु पर एवेत्यर्थः ।

**गीतातात्पर्यनिर्णयः**

**तत्रापि तारतम्यं स्यात् तेषु ब्रह्माधिको मतः ।**
**विष्णोराधिक्यसंवित्तिः सर्वस्माज्ज्ञानमुच्यते ।**
**एवं विविच्य तज्ज्ञानं विज्ञानमिति कीर्तितम् ॥**

*प्रका०*— ज्ञानं तेऽहं सविज्ञानमिति प्रस्तुतं ज्ञानं विज्ञानं च दर्शयति **विष्णोरित्यादिना** ॥

*न्या०दी०*— सर्वमुक्तानां दुःखाभावसाम्येऽपि न सुखादावपि साम्यमित्याह **तत्रापीति** ॥ ननु श्रुत्यादौ ज्ञानविज्ञानाभ्यां मोक्षोक्तेः कथं विष्णोः परतरत्वज्ञानेन मोक्षोऽभिहित इत्यत आह **विष्णोरिति** ॥ उच्यते श्रुत्यादाविति शेषः । एवं श्र्यादीनां परत्वादिज्ञानेन । अनेन ''ज्ञानं तेऽहं सविज्ञानम्'' इत्यस्याप्यर्थ उक्तो भवति ।

*भा०दी०*— **व्याख्यातमिति** । चेतनरूपामिति व्याख्यातमित्यर्थः । इत्यस्येत्यस्य **एवमि-त्यनुवादः** । **श्र्यादीनां परत्वादिज्ञानेन** इति व्याख्या ॥

**गीतातात्पर्यनिर्णयः**

**एतच्च तारतम्येन वर्तते केशवादिषु ।**
**मुख्यविज्ञान्यतो विष्णुः किञ्चिद्विज्ञानिनो परे ॥" ॥ ७ ॥**

*न्या०दी०*— ज्ञानविज्ञानयोर्दौर्लभ्यं लिप्सोत्पादनाय आह **एतच्चेति** ॥ मुक्तानां तारतम्ये वाऽनेन हेतुरुच्यते । अनेन मनुष्याणामित्येतदपि व्याख्यातं भवति ॥

*भा०दी०*— **लिप्सेति** । आदरेत्यर्थः ॥ **तारतम्येति वेति** । तत्रापि तारतम्यं स्यादिति प्रागुक्ततारतम्ये वेत्यर्थः ॥

**गीता**

**रसोऽहमप्सु कौन्तेय प्रभाऽस्मि शशिसूर्ययोः ।**
**प्रणवः सर्ववेदेषु शब्दः खे पौरुषं नृषु ॥ ८ ॥**

*वि०वि०*— एवं ज्ञानान्युक्त्वा विज्ञानमाह **रस इत्यादिना** । अबाद्यपेक्षया रसादिषु । तेषामबादिधर्मत्वेन तद्धर्मेष्वपि सारत्वे सादित्वे च पृथक् प्रयत्नवान् । विशेषतो रसादिभोक्ता विशेषेण रसादिषु उपास्यश्चेति रसोऽहमित्याद्युक्तम् । उक्तं च—

'रसादीनां रसादित्वे स्वभावत्त्वे तथैव च ।
सारत्वे सर्वधर्मेषु विशेषेणापि कारणम् ॥
सारभोक्ता च सर्वत्र यतोऽतो जगदीश्वरः ।
रसादिमानिनां देहे स सर्वत्र व्यवस्थितः ॥' इति ॥

*वा०ल०*— 'रसोऽहमप्सु' इत्यत्र रसः रसनियामकः । सूत्रे मणिगणा इव इति प्रोक्ताधारा-धेयभावविवरणरूपत्वात् रसोऽहम् इत्यादिकं आधाराधेयभावविवक्षया । जडैक्यस्य कैरप्यनङ्गी-कारात् । "बीजं मां सर्वभूतानाम्" इति स्वेनैव वक्ष्यमाणत्वाच्च । तत्तत्स्वभावभूतासाधारणगुण-स्यापि स्वयमेव नियामक इति बोधनार्थं पृथगुक्तिः ॥

*सा०सं०*— 'ज्ञानं तेऽहम्' इति ज्ञानपदेन प्रतिज्ञातं ज्ञातव्यं 'भूमिरापः' इत्यादिश्लोक-चतुष्टयेनोक्त्वाऽधुना विज्ञानपदेन प्राक् प्रतिज्ञातं विशेषेण ज्ञातव्यं हरेरलौकिकमाहात्म्यमाह **रस**

**इति** । **अप्सु** सारभूतो यो **रसः**, तस्य अपामनागन्तुकधर्मस्वभावत्वे अब्धर्मेषु सङ्ख्यादिषु, सारत्वे रसत्वे विशेषतो हरेः कारणत्वात् तद्भोक्तृत्वाच्च रसोऽहमित्यभेदोक्तिः । **शशिसूर्ययोर्या प्रभा** तस्याः शशिसूर्ययोरनागन्तुकधर्मत्वे, चन्द्रसूर्यधर्मेषु सारत्वे प्रभात्वे विशेषतः कारणत्वात् प्रभाऽहमस्मीत्यभेदोक्तिः । **सर्ववेदेषु** सारभूतो यः **प्रणवः** तस्य वेदसारत्वं प्रणवत्वं चेशाधीनमित्यभेदोक्तिः । **खे** आकाशे यः **शब्दः** ध्वन्यात्मकः तस्याकाशानागन्तुकधर्मत्वं सङ्ख्याद्याकाशधर्मेषु सारत्वं शब्दत्वं चेशायत्तं तद्भोग्यश्च शब्द इति शब्दोऽहमस्मीत्युच्यते । **नृषु** यत् **पौरुषं** स्त्रीव्यावृत्तः प्रागल्भ्यविशेषः तस्य सत्ताप्रतीतिकारणत्वात् पौरुषमहमस्मीत्युच्यते ॥

*अ०प्र०*— एवं ज्ञानमुक्त्वा जडादिषु अतिहेतुत्वविज्ञानमाह **रस** इति पञ्चभिः ॥

हे कौन्तेय ![१], अप्सु[२], रसोऽहं[३], शशिसूर्ययोः[४], प्रभाऽस्मि[५], सर्ववेदेषु[६], प्रणवोऽहं[७], खे शब्दोऽहं[८], नृषु पौरुषमहम्[९-१०] ॥

हे कौन्तेय ![१], रसतन्मात्रारूपया विभूत्या आश्रयत्वेन अप्सु स्थितोऽहं[३], तदुक्तम्—

रसादीनां रसादित्वे स्वभावत्वे तथैव च ।
सारत्वे सर्वधर्मेषु विशेषेणापि कारणम् ॥
सारभोक्ता च सर्वत्र यतोऽतो जगदीश्वरः ।
रसादिमानिनां देहे स सर्वत्र व्यवस्थितः ॥
अबादेर्यः पुरुषदो ध्येयः स ज्ञानिनां हरिः ।
रसादिसम्पत्त्यन्येषां वासुदेवो जगत्पतिः ॥

सर्वत्राबादिषु यत ईश्वर एव रसादेः कारणम् । सारभोक्ता च रसादिमानिनि देहे च स्थितः । अत एव ईश्वरो रसादिकं जगदित्युच्यते[३], शशिसूर्ययोः प्रभाऽस्मि = चन्द्रे अर्के च प्रकाशरूपया विभूत्या तदाश्रयत्वेन स्थितोऽहमित्यर्थः[५], एवमुत्तरत्रापि द्रष्टव्यम् । सर्ववेदेषु = ऐश्वरीरूपेषु तन्मूलभूतः[६], प्रणवः = ॐकारोऽस्मि[७], खे = शब्दोऽहम्[८], आकाशे = शब्दतन्मात्ररूपोऽस्मि[८], नृषु पौरुषमहमस्मि = नृपेषु उद्यमोऽस्मि[९-१०] यद्वा पौरुषं भावात्मकं सत्त्वम् । उद्यमे हि पुरुषस्तिष्ठति ॥ ८ ॥

**भाष्यम्**

**रसोऽहमित्यादि विज्ञानम् । अबादयोऽपि तत एव । तथाऽपि रसादिस्वभावानां साराणां च स्वभावत्वे सारत्वे च विशेषतोऽपि स एव नियामकः । न तु अबादिनियमानुबद्धो रसादिः तत्सारत्वादिश्च इति दर्शयति 'अप्सु**

**रसः' इत्यादि विशेषशब्दैः । भोगश्च विशेषतो रसादेरिति च । उपासनार्थं च । उक्तं च गीताकल्पे—**

> **"रसादीनां रसादित्वे स्वभावत्वे तथैव च ।**
> **सारत्वे सर्वधर्मेषु विशेषेणापि कारणम् ।**
> **सारभोक्ता च सर्वत्र यतोऽतो जगदीश्वरः ।**
> **रसादिमानिनां देहे स सर्वत्र व्यवस्थितः ।**
> **अबादयः पार्षदा सः ध्येयः स ज्ञानिनां हरिः ।**
> **रसादिसम्पत्त्याऽन्येषां वासुदेवो जगत्पतिः ॥" इति ।**

> **"स्वभावो जीव एव च ।"**

> **"सर्वस्वभावो नियतस्तेनैव किमुतापरम् ।"**

> **"न तदस्ति विना यत् स्यान्मया भूतं चराचरम् ।" इति च ।**

**'धर्माविरुद्धः', 'कामरागविवर्जितम्' इत्याद्युपासनार्थम् ।**

**उक्तं च गीताकल्पे—**

> **"धर्माविरुद्धकामेऽसावुपास्यः काममिच्छता ।**
> **विहीने कामरागादेर्बले च बलमिच्छता ।**
> **ध्यातस्तत्र त्वनिच्छद्भिर्ज्ञानमेव ददाति सः ॥" इत्यादि ॥ ८ ॥**

***प०टी०***— उत्तरप्रघट्टकप्रतिपाद्यमाह **रसोऽहमिति** । नन्वनादिसत्ताप्रतीतिभोक्तृत्वं भगवतोऽस्त्येव । अतः किमर्थं रसादीनां भगवत्कृतत्वादिविशेषेणोच्यते ? इत्यत आह **अबादयोऽपीति** । यद्यप्यबादयोऽपि भगवत्सृष्टास्तद्भोग्याश्च । तथाऽपि रसादीनां विशिष्याभिधानं युक्तम् । यदबादिकर्तृत्वादिकं तन्नान्तरीयकतया रसादीनामबादिस्वभावानाम्, अबादिगुणेषु सारभूतानां नियामको भगवानिति शङ्का निवर्त्यव्यातिविशेषतोऽपि तेषां रसादित्वे, अबादिगुणमध्ये सारत्वे, अबादिस्वभावत्वे नियामक इति ज्ञापनार्थत्वादित्यर्थः । यथाऽबादेर्भोगः, ततोप्यतिशयेन रसादेर्भोग्यत्वाच्च विशिष्याभिधानं युक्तमित्याह **भोगश्चेति** । रसादिषु भगवदुपासनार्थं विशेषतो

'रसोऽहम्' इत्याद्युक्तिरित्याह **उपासनार्थं चेति** । उक्तमेव प्रमाणेन स्थापयति **उक्तं चेति** । यतः कारणं सारभोक्ता अत ईश्वर एव जगदित्युच्यते । ज्ञानिनां ज्ञानार्थिनाम्, अन्येषां कामिनाम्, अन्नादिसम्पत्त्यै तत्प्राप्त्यै । स्वभावनियामकत्वं विशेषतः साधयति **स्वभाव इति** । ननु धर्मत्वाविशेषाद्बलकामगन्धानां विशेषोक्तिः किमर्था ? इत्यत आह **धर्मेति** । धर्मविरुद्धकामादेर्भगवदुपास्तावनधिष्ठानत्वात् पूर्वोक्तोपास्तिसिद्ध्यर्थं विशेषणमित्यर्थः । उपास्तिर्धर्माविरुद्धकामादावेव कार्येत्यत्र प्रमाणमाह **उक्तं चेति** ।

***न०टी०*—** नन्वेवमनन्तैश्वर्यविषयमपि ज्ञानं चेत्, विज्ञानं कीदृशम् ? इत्याकाङ्क्षोत्तरत्वेनोत्तरं श्लोकसन्दर्भमवतारयति **रस इति** । ननु 'अहं कृत्स्नस्य' इत्यादिनैवाबादीनां सर्वेषां सत्ताप्रतीत्यादेर्भगवदधीनत्वस्य, तेषां भगवद्भोग्यत्वस्य चोक्तत्वात्, किमिति पुनस्तेषु रसादीनां तदुभयमुच्यते ? इत्यत आह **अबादयोऽपीति** । भवतु 'अहं कृत्स्नस्य' इत्यादिनैवाबादिसत्ताप्रतीत्यादेर्भगवदधीनत्वम् । न त्वबादीनां रसादिस्वभावत्वम्, अबादिगुणेषु रसादीनां सारत्वम्, रसादित्वं च विशेषतः पृथक् भगवन्नियम्य् । किन्त्वबादीनामबादित्वकारणैनैव तेषां सिद्धिरित्याशङ्कां परिहर्तुं 'रसोऽहम्' इत्याद्यारभ्यत इति भावः । भगवन्नियम्यत्वात् भगवद्भोग्यत्वाच्च भगवानेव कृत्स्नमित्युच्यत इति स्थितेऽपि नियम्यते विशेषात् 'रसोऽहम्' इत्यादिविशेषोक्तिरित्युक्तम् । अधुना भोग्यत्वेऽपि विशेषात् तदुक्तिरित्याह **भोगश्चेति** । स्वोपासकानां रसादिसम्पत्तिनिमित्तत्वेन रसाद्यभिमानिदेहस्य रसादिशब्दपरममुख्यार्थत्वेनोपासनार्थं च 'रसोऽहम्' इत्याद्युक्तिरित्याह **उपासनेति** । विशिष्टनियमनादिहेतुत्रये प्रमाणमाह **उक्तं चेति** । स्वभावस्यान्याधीनत्वे सर्ववादिविप्रतिपत्तेः तद्बहुवाक्यैः स्थापयति **स्वभाव इत्यादिभिः** । ननु रसादीनां मध्ये बलकामयोर्गन्धस्य च विशेषणं किमर्थम् ? इत्यत आह **धर्मेति** । **आदिशब्देन** गन्धविशेषणग्रहणम् । रसादीनां सर्वेषां विशेषेण भगवन्नियम्यत्वे तद्भोगार्थत्वे तदुपासनार्थत्वे च वक्तव्ये बलकामयोरुक्तविशेषणरहितयोरपुण्यगन्धस्यैव भगवदुपासनार्थत्वायोगात् तदर्थं विशेषणमिति भावः । विशेषितयोरेव बलकामयोरुपासनार्थत्वं न युक्तिमात्रादित्याह **उक्तं चेति** ।

***प्र०दी०*—** 'भूमिरित्यादिना' इत्यत्रावधेरनुक्तेः 'रसोऽहं' इत्याद्यपि ज्ञानप्रकरणमिति प्रतीतिः स्यात् । तन्निरासाय तत्समाप्तिमाह— **इदमिति** । एतावता ग्रन्थेन ज्ञानं निरूपितमित्यर्थः । कुतोऽत्र ज्ञानप्रकरणस्य समाप्तिरित्यत आह— **रसोऽहमिति** । इति शब्दाद्यभावेऽपि प्रकरणान्तरारम्भ एव समाप्तिं गमयिष्यति । अलौकिकमाहात्म्यप्रतिपादनादस्य विज्ञानप्रकरणत्वं ज्ञायत इति भावः । प्रभवादेरित्युक्तन्यायेनैव 'रसोऽहं' इत्यादेरपि व्याख्यानं सिद्धम् । ''रसादीनां सत्तादि-

कारणत्वाद्भोक्तृत्वाच्च भगवान् रसादिः'' इति । ननु अबादयोऽपि धर्मिणो भगवदधीनाः, तद्भोग्याश्चेत्यङ्गीक्रियते न वा । नेति पक्षे ''अहं कृत्स्नस्य'' इत्युक्तविरोधः । आद्ये 'त्वप्सु रसः' इत्यादेर्धर्मिभ्यो निष्कृष्य धर्माणां ग्रहणस्यानुपपत्तिरित्यतः प्रथमं पक्षं तावदङ्गीकरोति— **अबादयोऽपीति** । धर्मिणोऽपि तदधीना एव तद्भोग्याश्चैव । ननु तत्रोक्तो दोष इत्यतः कारणत्वे तावद्विशेषशब्दोपादाने प्रयोजनमाह— **तथाऽपीति** । यद्यपि धर्मिणोऽपि भगवदधीना एव । तथाऽपि धर्मिभ्यो निष्कृष्य धर्माणामुपादानं युज्यत इति शेषः । कथमित्यत आह— **रसादीति** । रसादयश्च ते स्वभावाः अबादीनामनागन्तुकधर्माश्चेति रसादिस्वभावाः । तेषां साराणामबादिधर्मेषु सङ्ख्यादिषु श्रेष्ठानां च तेषामेवाबादिस्वभावभूतानां तद्धर्मेषु श्रेष्ठानां च रसादीनामिति यावत् । स्वभावत्वेऽबादीनामिति शेषः । सारत्वेऽबादिधर्मेष्विति शेषः । रसादित्वे चेति चार्थः । स भगवानेव । विशेषतोऽपीत्यस्य व्यावर्त्यं— **न त्विति** । अनुबद्धोऽनुपङ्गसिद्धः । **तत्सारत्वादिश्चेति** । तस्य रसादेरबादिधर्मेषु सारत्वमबादिस्वभावत्वं रसत्वादिकं चेत्यर्थः । यथा लोके कुविन्दादिः पटादिद्रव्येष्वेव व्यापारवाननुभूयते न तु तदीयेषु गन्धरसादिषु गुणेषु तद्धर्मेषु च गन्धत्वादिषु पृथग्व्यापारवान् । किन्तु ते पटादिजन्मानुषङ्गिजन्मान एव । न तथा भगवान् । अपि त्वबादेर्धर्मेषु रसादिषु तद्धर्मेषु च स्वभावत्वादिषु पृथक्प्रयत्नवान् । न त्वबादिनियमानुषङ्गिसत्तादिकास्त इति दर्शयितुं विशेषशब्दा उपात्ता इत्यर्थः । भोगपक्षेऽपि प्रयोजनमाह— **भोगश्चेति** । अबादिभोगादप्यतिशयेन रसादेर्भोगः परमेश्वरस्येति दर्शयति विशेषशब्दैरिति सम्बन्धः । रसोऽहमित्याद्यभेदोक्तेरर्थान्तरं सूचयन् तत्रापि विशेषशब्दोपादाने प्रयोजनमाह— **उपासनार्थं चेति** । विशेषतो रसादेरिति वर्तते । अर्थवशाद्रसादेरिति सप्तमीत्वेन विपरिणम्यते । रसादयः परमेश्वरोपासने प्रतिमात्वेनात्र विवक्षिताः । प्रतिमायां च भेदोक्तिः प्रसिद्धा । प्रतिमात्वमबादीनां समानम् । ''योऽप्सु तिष्ठन्'' इत्यादेः । अतः किं विशेषशब्दग्रहणेनेति चेत् । अबादिभ्यो विशेषतो रसादिषु भगवदुपासनार्थं तदुपपत्तिरिति । उक्तेऽर्थत्रये प्रमाणमाह— **उक्तं चेति** । तथाचशब्दावन्योन्यसमुच्चये । एवशब्दस्य 'ईश्वरः' इत्यनेन सम्बन्धः । सर्वत्राबादिषु । ईश्वरो रसादिकं जगदित्युच्यत इत्यर्थः । अबादयोऽबाद्यभिमानिनः । ज्ञानिनां ज्ञानार्थिनां सम्पत्त्यै प्राप्त्यै अन्येषां रसार्थिनाम् । 'अबादयः' इति 'रसादि' इति च पादयोः सप्तनवाक्षरत्वेऽपि ''न वा एकेनाक्षरेण छन्दांसि वियन्ति'' इति वचनाददोषः । स्वभावस्य भगवदधीनत्वमलौकिकमित्यतस्तत्रान्यान्यपि वाक्यानि पठति— **स्वभाव इति** । अस्त्वेवं धर्मिभ्यो निष्कृष्य धर्माणामुपादानम् । धर्माणां विशेषणोपादानं तु किमर्थमित्यत आह— **धर्मेति** । आदिपदेन 'पुण्यो गन्धः' इत्यस्य ग्रहणम् । कामादिषु विशिष्टेष्वेव भगवा-

नुपास्यो न धर्मविरुद्धेष्वशुचिष्विति ज्ञापनाय कामादीनां धर्माणां धर्माविरुद्धत्वादिविशेषणोपादान-मित्यर्थः । अत्र प्रमाण-माह— **उक्तं चेति** । कामं पुरुषार्थम् । कामरागादेः कामरागादिना । अनिच्छद्भिः कामादिकम् ॥

*भा०दी०*— अवधेरनुक्तेः प्रतिज्ञातं ज्ञानम................**दिनेति** । भाष्य इत्यर्थः । व्याख्यानं सिद्धमेतद्व्यनक्ति **रसादीनामिति** । चशब्देन भोक्तृत्वादिति ग्राह्यम् । साराणामित्यस्यार्थः । **रसादीनामिति** । विशेष्याप्रतीतेराह । **रसादीनामिति यावदिति** । भागपक्षेऽपि प्रयोजनमाहेति । सोऽहमिति निष्कृष्योक्तेरिति योजयति । उपासनारूपार्थान्तरेऽपीत्यर्थः । **प्रसिद्धेरिति** । यो नाम ब्रह्मेत्युपास्त इत्यादाविति योज्यम् । जगदीश्वर इत्यत्रेति शब्द...........योरध्याहारेणार्थमाह **ईश्वर इति** । **रसेति** । रसादिरूपजगदात्मनोच्यत इत्यर्थः । **विशेषणोपादानमिति** । बलादेः कामराग-विवर्जितत्वादि विशेषणोपादानमित्यर्थः । काममिच्छतेत्यत्र कामपदार्थः पुरुषार्थमिति ॥ ८ ॥

**गीतातात्पर्यनिर्णयः**

**"सोऽप्सु स्थित्वा रसयति रसनामा ततः स्मृतः ।**
**सूर्यचन्द्रादिषु स्थित्वा प्रभानामा प्रभासनात् ॥**
**वेदस्थः प्रणवाख्योऽसावात्मानं यत् प्रणौत्यतः ।**
**खे स्थितः शब्दनामाऽसौ यच्छब्दयति केशवः ॥ ८ ॥**

*प्रका०*— "रसोऽहमि"त्यादेरर्थमाह **सोऽप्सु स्थित्वेत्यादिना** । विषयरागवान् बलेन अन्यायमपि चिकीर्षति । न तथा भगवान् स्वसामर्थ्यम् अस्थाने प्रयोजयति इत्येतदुच्यते "अराजसबलश्चैव स्थानेभ्योऽन्येष्वयोजनादि"ति व्यवस्थयेत्यत्र रसमप्सु जनयति । प्रभां सूर्यादिषु जनयति इत्येव व्यवस्था ज्ञातव्या । न तु अहं तेषु ते मयि इत्यस्य प्रातिलोम्येन व्याख्यानम् । तदायत्तमिदं न स अन्यायत इति ।

*न्या०दी०*— विष्णुतन्त्रत्वात् सर्वस्यासौ परतर इति विविच्य परतरत्वज्ञानं विज्ञानमित्यु-क्तम् । तद्विज्ञानमेव सर्वस्य तदधीनत्वप्रदर्शनेनाह **स इति** ॥ अनेन विज्ञानप्रदर्शकं रसोऽहमित्यादि व्याख्यातं भवति । रसयति रसमादत्ते रसं प्रेरयति । प्रभासनात् स्वयं प्रभासमानत्वात्, प्रभाप्रेर-णाच्च । प्रणौति स्तौति स्तावकत्वं प्रेरयति च । शब्दयति वक्ति शब्दं प्रेरयति च ॥

*भा०दी०*— भाष्योक्तदिशाऽऽह **विज्ञानप्रदर्शकमिति** ॥ ८ ॥

**गीता**

# पुण्यो गन्धः पृथिव्यां च तेजश्चास्मि विभावसौ ।
# जीवनं सर्वभूतेषु तपश्चास्मि तपस्विषु ॥ ९ ॥

***वि०वि०—*** पुण्य एव गन्धे भगवानुपास्य इत्येवमर्थे पुण्य इति विशेषणम् । पुण्यगन्धमेव भुङ्क्ते न दुर्गन्धमिति ज्ञापयितुं च ।

'शुभं पिबत्यसौ नित्यं नाशुभं स हरिः पिबेत् ।
पूर्णानन्दमयस्यास्य चेष्टा न ज्ञायते क्वचित् ॥'
'आगमिष्यत्सुखं चापि तच्चास्त्येव सदाऽपि तु ।
तथाऽप्यचिन्त्यशक्तित्वाज्जातं सुखमतीव च ॥' इति ।

विभावसावग्नौ ॥

***सा०सं०—*** **पृथिव्यां** यः पुण्यो **गन्धः** शुभगन्धः तस्य भूम्यनागन्तुकधर्मत्वे स्वभावत्वे पृथिवीधर्मेषु सारत्वे गन्धत्वे हरिः कारणं गन्धभोक्ता चेति गन्धोऽहमस्मीत्युच्यते । अहमस्मीति सर्वत्रानुषङ्गः । **विभावसौ** यत् **तेजो** दाहसामर्थ्यं तदुक्तहेतुबलादहमस्मीत्युच्यते । सर्वभूतानां सारभूतं य**ज्जीवनं** तन्नियन्तृत्वात् तदप्यहमस्मीत्युच्यते । **तपस्विषु** सारभूतं य**त्तपः** कृच्छ्रादि । तदप्यहमस्मि । तन्नियामकत्वहेतुना इति भावः ॥

***अ०प्र०—*** पृथिव्यां[१], पुण्यो गन्धः[२], चकारादहमस्मि[३], विभावसौ[४], तेजश्चास्मि[५], सर्वभूतेषु[६], जीवनमहमस्मि[७], तपस्विषु[८], तपश्चास्मि[९] इत्यन्वयः ।

पृथिव्यां पुण्यो गन्धः = विकृतो गन्धः गन्धतन्मात्रं पृथिव्याश्रयभूतमहमित्यर्थः । यद्वा, नैसर्गिकः पुण्यो गन्धोऽहम् । यद्वा, विभूतिरूपेण आश्रयत्वस्य विवक्षितत्वात् सुरभिगन्धस्यैवोत्कृष्टतया विभूतित्वात् पुण्यो गन्ध इत्युक्तम्[३], तथा विभावसौ = अग्नौ यत्तेजः सहसा दीप्तिस्तदहं[४-५], सर्वभूतेषु जीवनं = प्राणधारणमायुः अहमित्यर्थः । प्रकृतिवशात् पवनतृणान्नजलरूपेण सर्वभूतेषु यज्जीवनमस्ति तदहं वा[६-७], तपस्विषु = वानप्रस्थादिषु द्वन्द्वसहनादिरूपतयाऽस्मि[८-९] इत्यर्थः । तदुक्तम्—

स्रष्टा पाता च संहर्ता नियन्ता च प्रकाशिता ।
यतः सर्वस्य तेनाहं सर्वोऽसीत्यृषिभिस्तुतः ॥

किञ्च,

प्रविविक्तभुग्यतो ह्यस्माच्छारीरात् पुरुषोत्तमः ।
अतो भोक्ता च तच्छूलस्थूलभोगात्सदैव तु ॥

पूर्णोऽपि लीलया भक्तप्रियार्थं भुङ्क्ते अवतारेषु स्थूलमप्यन्नादिकं भुङ्क्ते इति च शब्दश्रुतौ ।
अत्र विशेषः पञ्चदशे वक्ष्यति ॥ ९ ॥

**गीतातात्पर्यनिर्णयः**

**पुण्यापुण्यं गन्धयति स्वयं पुण्यो धरास्थितः ।**
**तेजयत्यग्निसंस्थः सन् भूतस्थो जीवनप्रदः ।**
**तपस्विस्थस्तपयति ॥ ९ ॥**

*न्या०दी०*— सुरभ्यसुरभितया गन्धं प्रेरयति, स्वयं सुरभिश्चेति पुण्यगन्धः । स्वयं पुण्यगन्धप्रदत्वाच्च । तेजयति तेजस्वी वर्तते, तेजः प्रेरयति चेति तेजः । जीवनप्रदः तस्माज्जीवनम् । तपयति तपः कुरुते प्रेरयति चेति तपः ॥

*भा०दी०*— गन्धयतीत्यस्यार्थान्तरमाह **पुण्यगन्धप्रदत्वाच्चेति** ॥ ९ ॥

**गीता**

**बीजं मां सर्वभूतानां विद्धि पार्थ सनातनम् ।**
**बुद्धिर्बुद्धिमतामस्मि तेजस्तेजस्विनामहम् ॥ १० ॥**

*वि०वि०*— सर्वभूतानां मां बीजं विद्धि । 'व्यञ्जनाज्जगतो विष्णुर्बीजं न परिणामतः' इति वचनाद्व्यक्तिकारमत्वाद्बीजम् । न परिणामे बीजम् ॥

*सा०सं०*— **सर्वभूतानां बीजं** व्यञ्जकत्वाद्बीजमिव बीजम् । **मां विद्धि** न परिणामिकारणम् । **बुद्धिमतां** ज्ञानिनाम् । या **बुद्धिः** साऽप्यह**मस्मि** । बुद्धिमद्धर्मेषु सारत्वे बुद्धित्वे बुद्धिमद्धर्मत्वे नियामकोऽहमिति बुद्धिरहमस्मीत्युच्यते । एवं **तेज** इत्यपि ध्येयम् । अप्शशिसूर्यादिरवधितयोक्तस्य सर्वस्योक्तदिशा रसादेरिवेशायत्ततत्त्वाविशेषेऽपि 'रसोऽहमस्मि' इत्यादिरूपेण निष्कृष्योक्तिः - लोके कुविन्दादिः पटादिद्रव्येष्वेव व्यापारवाननुभूयते । न तु तदीयगन्धरसादिगुणेषु तन्निष्ठगन्धत्वादिधर्मेषु च पृथग्व्यापारवान् । किन्तु पटादिजन्मानुषङ्गिकजन्मान एव ते । न तथा भगवान् । अपि तु

अबादिधर्मेषु रसादिषु तद्धर्मेषु रसत्वादिषु पृथक् प्रयत्नवान् । न त्वबादिनियमानुषङ्गिकसत्तादिक इति दर्शयितुम् अबादिभोगादप्यतिशयेन रसादिभोगः परमेश्वरस्येति दर्शयितुं च ।

किञ्च रसादयो ह्यत्र रहेरुपासने प्रतिमात्वेन विवक्षिताः । रसोऽहमस्मि इत्युपासीतेत्यादिरूपेण प्रतिमायां चाभेदोक्तिः 'नाम ब्रह्मेत्युपासीत' (छां. ७-१-५) इत्यादौ प्रसिद्धा । तथा चाबादिषु भगवदुपासनापेक्षया रसादिषु तदुपास्तेरतिशयाच्च विशिष्योक्तिः । अपि च ज्ञानार्थिनो हि रसाद्यभिमानिदेहेषु भगवान् सर्वत्र तिष्ठति । अबादिमानिनस्तु तत्पार्षदा इत्युपासते । ततोऽपि विशिष्योक्तिः ।

यद्वा,

'सर्वत्र विष्णोरुत्कर्षज्ञानं ज्ञानमितीर्यते ।
तद्विशेषपरिज्ञानं विज्ञानमिति गीयते ॥'

इति स्मृत्या सर्वत्र सामान्यतो विष्णोरुत्कर्षज्ञानं ज्ञानपदेन विवक्षितम् । 'अपरेयम्' इत्यादिनोक्तदिशा जडप्रकृतिब्रह्मादिजीवाश्चावराः आसुरजना अवरतराः श्रीर्मुक्तजनाश्च पराः । तत्रापि श्रीर्मुख्यपरा । कदाऽपि दुःखासम्बन्धात् । मुक्तास्तु पराभासाः । कदाचिद्दुःखसम्बन्धात् । ते सर्वे हर्यधीनाः । हरिस्तु परतरः । अत्र तरशब्दस्तमबर्थश्च भवति । हरेरन्यस्य परतमस्याभावादयमेव परतम इति वक्तव्यत्वात् । परत्वेनोक्तश्रीमुक्तानां हरेश्चमध्ये कस्यचित् परतरस्याभावेनायमेव परतरश्चेति वाच्यत्वात् । हरिरेव परतरः परतमश्च, ततोऽन्यत् परतरं परतमं वा किञ्चिन्नास्ति । नच मुक्ताः पराः श्रीः परतरेति शङ्क्यम् । 'मुक्तास्तु स्यात् पराभासाः' इति तात्पर्योक्त्या तेषां परत्वाभावात् । 'अभावादन्तरान्यस्य त्विहैकार्थौ तरप्तमौ' इति स्मृतेश्चेत्येवं परापरत्वविवेचनपूर्वं हरेः सर्वोत्तमत्वं 'ज्ञानं तेऽहं सविज्ञानमि'ति प्रतिज्ञातं ज्ञानं विज्ञानं च द्वयमपि 'भूमिः' इत्यादि श्लोकचतुष्टयेनोक्तम् ।

तद्विज्ञानमेव सर्वस्य तदधीनत्वप्रदर्शनेनाह **रस इत्यादिना** । अत्र रसादिशब्दाः तद्भोक्तृत्वतन्नियन्तृत्वहेतुना भगवन्नामानः । तथाहि- अप्स्वित्यादिसप्तम्योऽधिकरणसप्तम्यः । अप्सु स्थित्वा रसमाददामीति तं प्रेरयामि चेति रसनामाऽहमस्मि । शशिसूर्ययोः स्थित्वा स्वयं प्रभासमानत्वात् प्रभाऽहमस्मि । सर्ववेदेषु स्थित्वा स्वात्मानं प्रणौति स्तावकं प्रेरयति इति प्रणवनामाऽस्मि । खे स्थित्वा शब्दं प्रेरयतीति शब्दनामाऽस्मि । स्वयं पुण्यः पुण्यगन्धः सन् पृथिव्यां स्थित्वा सुरभ्यसुरभितया गन्धं प्रेरयतीति गन्धनामा । विभावसावग्नौ स्थित्वा तेजःप्रेरकत्वात् तेजोनामा ।

भूतेषु जीवनदत्वाज्जीवननामा । तपस्विषु स्थित्वा तपः कुरुते तपः प्रेरयति चेति तपोनामा । बीजप्रेरकत्वाद्बीजनामा । बुद्धिमताम् । सप्तम्यर्थे षष्ठी । बुद्धिमत्सु स्थित्वा बोद्धृत्वाद्बुद्धिप्रेरकत्वा-द्बुद्धिनामा । तेजस्विषु स्थित्वा तेजः प्रेरयतीति तेजोनामा । अबादिसर्ववस्तूनां रसगन्धप्रभादिधर्मान् व्यवस्थया ददातीति रसादिनामा हरिरित्यर्थः ॥

*अ०प्र०*— किञ्च, **बीजं मामिति** ।

हे पार्थ ![१], सर्वभूतानां[२], बीजं[३], सनातनं[४], मां[५], विद्धि[६], बुद्धिमतां[७], बुद्धिः[८], अहमस्मि[९], तेजस्विनां[१०] तेजः[११] अहमस्मि[१२] इत्यन्वयः ॥

हे पार्थ ![१], सर्वभूतानां = चराचराणां[२], बीजं = सजातीयं कार्योत्पादनसामर्थ्यं[३], सनातनं = नित्यं उत्तरोत्तरसर्वकार्येषु अनुस्यूतं तदेव बीजं मद्विभूतिं यद्वा, सनातनं सृष्टिकाले यद्गगनाङ्कुरेण विवर्धते, स्थितौ विश्वान्तर्यामित्वेन तिष्ठति, प्रलये व्यक्तिनाशे यदीदृशमिति वक्तुं न शक्यते तदेव सनातनं अनादिसर्वभूतानां बीजं अहमिति[४], मां[५], विद्धि = जानीहि[६], न तु प्रतिव्यक्तिविनश्यत् तथा बुद्धिमतां बुद्धिः = प्रज्ञाहमस्मि[७-९], तेजस्विनां = प्रगल्भानां तेजःप्रागल्भ्यं अहमस्मि[१२] ॥ १० ॥

**गीतातात्पर्यनिर्णयः**

**व्यञ्जनाद् बीजसञ्ज्ञितः ।**
**बोधनाद् बुद्धिनामाऽसौ बुद्धिमत्सु व्यवस्थितः ॥ १० ॥**

*न्या०दी०*— व्यञ्जनाद् व्यञ्जकत्वात् प्रेरकत्वाच्च । बोधनात् बोद्धृत्वात् बुद्धिप्रेरकत्वाच्च ॥

*भा०दी०*— **प्रेरकत्वात्** बीजप्रेरकत्वादित्यर्थः ॥ १० ॥

**गीता**

**बलं बलवतामस्मि कामरागविवर्जितम् ।**
**धर्माविरुद्धो भूतेषु कामोऽस्मि भरतर्षभ ॥ ११ ॥**

*वि०वि०*— कामरागविवर्जितत्वं धर्माविरुद्ध इत्यादिविशेषणमुपासनार्थम् ।

'प्रायो हि कामिता अर्था धर्मान् हन्युर्हरिः पुनः ।
न धर्महानिकृत् किन्तु कामितो धर्मवृद्धिकृत् ॥'

इति च धर्माविरुद्धकामः ॥

*सा०सं०*— **बलवतां** बलवत्सु स्थित्वा । **कामरागविवर्जितं बलमस्मि** । विषयभोग-निरपेक्षया नित्यपूर्णबलवत्त्वात् कामवर्जितबलात्माऽस्मि । अस्थाने अप्रयुज्यमानत्वाद्रागविवर्जित-बलात्माऽस्मीत्यर्थः । रागिणो ह्यस्थानेऽपि बलं प्रयुञ्जते । **भूतेषु धर्माविरुद्धो** यः **कामः सोऽस्मी**त्यर्थः । अत्र 'पुण्यो गन्धः' इति 'कामरागविवर्जितम्' इति गन्धबलादेः पुण्यत्वादि-विशेषणोपादानं तु गन्धबलकामादिषु विशिष्टेष्वेव भगवानुपास्यः । न त्वशुचिषु धर्मविरुद्धेष्विति ज्ञापनायेति ध्येयम् ॥

*अ०प्र०*— किञ्च, **बलमिति** ।

हे भरतर्षभ ![१], बलवतां[२], कामरागविवर्जितं[३], बलं[४], चाहं[५], भूतेषु[६], धर्माविरुद्धः[७], कामोऽस्मि इत्यन्वयः ।

हे भरतर्षभ ![१], बलवतां = येन बलेन बलिनो भवन्ति तेषां मध्ये[२], कामरागविवर्जितं = कामश्च रागो रक्तिश्च कामरागौ ताभ्यां विवर्जितं अप्राप्ते वस्तुन्यभिलाषः कामः स राजसः पुनरभिलषितेऽर्थे प्राप्तेऽपि पुनरधिकेऽर्थे चित्तरञ्जनात्मकः तृष्णापर्यायस्तामसः ताभ्यां विवर्जितं[३], बलं = यद्वा, बलं बुद्धिः निश्चयात्मिका[४], चाहं = सात्त्विकस्वधर्मानुष्ठानसामर्थ्यं अहमित्यर्थः[५], भूतेषु[६], धर्माविरुद्धः = धर्मेण अविरुद्धः स्वदारादिषु सन्तानमात्रोपयोगी, यद्वा, धर्मशास्त्रविहितस्य अविरुद्धः यो विरोधी न भवति[७], कामोऽहं[८], इत्यर्थः ॥ ११ ॥

**भाष्यम्**

**'पुण्यो गन्धः' इति भोगापेक्षया । तथा च श्रुतिः— "पुण्यमेवामुं गच्छति न ह वै देवान् पापं गच्छति", "ऋतं पिबन्तौ सुकृतस्य लोके" इत्यादिका । ऋतं च पुण्यम् "ऋतं सत्यं तथा धर्मः सुकृतं चाभिधीयते ।" इत्यभिधानात् । "ऋतं तु मानसो धर्मः सत्यं स्यात् सप्रयोगगः ।" इति च । "न च अनश्नन्नन्यो अभिचाकशीति", "अन्यो निरन्नोऽपि बलेन भूयान्" इत्यादिविरोधः । स्थूला-नशनोक्तेः । आह च सूक्ष्माशनम्— "प्रविविक्ताहारतर इवैष भवत्यस्मा-च्छारीरादात्मनः ।" इति । न च अत्र जीव उच्यते । 'शारीरादात्मनः' इति भेदाभिधानात् । स्वप्नादिश्च शारीर एव— "शारीरस्तु त्रिधा भिन्नो जाग्रदादि-ष्ववस्थितेः ।" इति वचनाद् गारुडे । 'अस्मात्' इतीश्वरनिवृत्त्यर्थः । "शारीरौ तावुभौ ज्ञेयौ जीवश्चेश्वरसंज्ञितः । अनादिबन्धनस्त्वेको नित्यमुक्तस्तथाऽपरः ॥"**

**इति वचनात् नारदीये । भेदश्रुतेश्च । सति गत्यन्तरे पुरुषभेद एव कल्प्यो न त्ववस्थाभेदः । आह च—**

**"प्रविविक्तभुग् यतो ह्यस्माच्छारीरात् पुरुषोत्तमः ।**
**अतोऽभोक्ता च भोक्ता च स्थूलाभोगात् स एव तु ॥"**

**—इति गीताकल्पे ॥ ९-११ ॥**

***प०टी०***— 'पुण्यो गन्धः' इत्यत्र न केवलमुपास्त्यर्थं विशेषणं, किन्तु भोगाद्यपेक्षया च । अपुण्यगन्धस्य भगवदभोज्यत्वादित्याह **पुण्य इति** । भगवतो नापुण्यभोक्तृत्वमित्यत्र प्रमाणमाह **तथा हीति** । ऋतपानं श्रूयते न पुण्यपानमित्यत आह **ऋतं चेति** । **प्रयोगगः** वाचिकः । ननु भगवतो भोक्तृत्वमेव श्रुतिस्मृतिविरुद्धं, कुतः शुभभोक्तृत्वम् ? इत्यत आह **न चेति** । सर्वथा भोक्तृत्वाभाव एवार्थः कुतो न स्यात् ? इत्यत आह **आह चेति** । सूक्ष्माशनोक्तेरनशनश्रुत्यादेः स्थूलानशनमेवार्थ इत्यर्थः । ननु प्रविविक्ताहारतयो जीव एवेत्यत आह **न चेति** । ननु शरीर-सम्बन्धिनो जीवाज्जाग्रदवस्थात् स्वप्नावस्थस्याशरीरस्यावस्थाभेद उच्यते, तन्नेत्यत आह **स्वप्नादि-श्चेति** । जाग्रदवस्थस्य शारीरत्वेऽप्यजाग्रदवस्थाच्छारीरात् स्वप्नावस्थः प्रविविक्ताहारतर इत्यर्थः किं न स्यात् ? अन्यथा विशेषणवैयर्थ्यादित्यत आह **अस्मादिति** । शारीरात् प्रविविक्ताहारतर इत्युक्ते विष्णोरपि सकाशात् तस्यैव प्रविविक्ताहारतरत्वं स्यात् । तद्व्यावृत्त्यर्थमस्माज्जीवादस्माच्छारीरादिति विशेषणमित्यर्थः । विष्णोः शारीरत्वे भवेत् । तदेव कुतः ? इत्यत आह **शारीराविति** । इतश्च नावस्थाभेदमात्रं तच्छ्रुतेरर्थ इत्याह **भेदेति** । भेदश्रुतेरवस्थाभेदात् गत्यन्तरे पुरुषभेदे सति स एवाद्यः कल्पः नावस्थाभेदोऽर्थः । मुख्यपरित्यागेनामुख्यग्रहणस्य दोषत्वादित्यर्थः । न केवलं स्थूला-नशनपरिदानोक्तिबलात् कल्प्यते, किन्तु प्रमाणेनैव व्यवस्थापितत्वाच्चेत्याह **आह चेति** । अतोऽभोक्ता च भोक्ता च इत्यस्य पाठव्यत्यासेनान्वयः ॥

***न०टी०***—बलादिविशेषणवन्नोपासनार्थत्वमेव गन्धविशेषणम्, किन्तु भोगार्थमपीत्याह **पुण्य इति** । पुण्यस्यैव भगवद्भोग्यत्वे प्रमाणमाह **तथा हीति** । यतो न देवान् पापं गच्छति अतोऽमुं सप्तान्नोपासकं पुण्यमेव गच्छति । देवानामेव सप्तान्नोपासकत्वाद्देवश्रेष्ठं हरिं न पापं गच्छतीति किमु वक्तव्यमिति भावः । पुण्यमेव भगवद्भोग्यमित्यस्मिन्नर्थे 'ऋतं पिबन्तौ' इति श्रुतिः किमित्युदा-ह्रियते ? इत्यत आह **ऋतं चेति** । ऋतशब्दस्य पुण्यवाचित्वे सामान्यविशेषरूपमभिधानद्वयं दर्श-यति **ऋतमिति** । ननु सिद्धे भोक्तृत्वे भगवतः पुण्यमेव भगवद्भोग्यमित्यस्मिन्नर्थे निश्चयः स्यात् ।

तदेव कुतः ? श्रुतिस्मृतिविरोधादित्यत आह **न चेति** । स्थूलाशनप्रतिषेधेनैव श्रुतिस्मृत्योः सावकाशत्वादित्यर्थः । ननु सिद्धे सूक्ष्माशनेऽनयोः स्थूलानशनोक्तिपरता स्यात् । तदेव कुतः ? इत्यत आह **आह चेति** । नन्वयं प्रविविक्ताहारतरो जीव एव किं न स्यात् ? इत्यत आह **न चेति** । ननु शरीरयोगेन वासात् जाग्रदवस्थ एव जीवः शारीरः । स्वप्नाद्यवस्थस्तु तदभावान्न शारीरः । अतोऽवस्थाभेदाभिधानमिदं किं न स्यात् ? इत्याशङ्क्य, स्वप्नाद्यवस्थोऽपि शारीरः । तदाऽपि तस्य शरीरे वर्तमानत्वादित्येतत् सप्रमाणकमाह **स्वप्नादिश्चेति** । ननु भवतु त्र्यवस्थोऽपि जीवः शारीरः । तथाऽपि अस्मात् इति विशेषणसामर्थ्यात् जाग्रदवस्थात् स्वप्नावस्थस्येदं भेदाभिधानं स्यात् । अन्यथा विशेषणवैय्यंर्थ्यादित्यत आह **अस्मादिति** । नन्वीश्वरस्यापि शारीरशब्दार्थत्व एतत् स्यात् । तदेव कुतः ? इत्यत आह **शारीराविति** । भगवतोऽपि शारीरशब्दार्थत्वं भेदश्रुतिसामर्थ्यादपि सिद्ध्यतीत्यभिप्रायेणाह **भेदश्रुतेश्चेति** । न हि जीवः स्वस्मादेव स्वयं भिन्न इत्यस्मादिति पदव्यावृत्तः भगवानेव स्यादित्यर्थः । ननु भवत्येव भिन्नः स्वाप्नाद्यवस्थो जाग्रदवस्थात्, अतोऽसावेव अस्मात् इति पदव्यावृत्तः स्यादित्यत आह **सतीति** । अवस्थामात्रभेदात्, गत्यन्तरे पुरुषभेदे सति स एव कल्प्य इत्यर्थः । भगवत एवानया श्रुत्या सूक्ष्माशनोक्तिमतान्यासां (?) स्थूलाभोगपरत्वं च गीताकल्पेन स्थापयति **आह चेति** ॥

***प्र०दी०***— गन्धस्य विशेषणोपादाने प्रयोजनान्तरमाह— **पुण्य इति** । पुण्यगन्धस्यैव भगवतो भोगो न दुर्गन्धस्येति ज्ञापयितुमत्र विशेषणोपादानमित्यर्थः । ननु दुर्गन्धं भगवाननुभवति न वा । नेति पक्षे सार्वज्ञाभावः । आद्ये कथं भोगाभावः । उच्यते । अनुभूयमाना अपि दुर्गन्धादयो न फलहेतव इत्यभिप्रायः । सुगन्धस्तु सुखहेतुरित्युपपादितम् । शुचिवस्त्वेव भगवतो भोग्यमित्यत्र प्रमाणमाह— **तथा हीति** । अमुमुपासकम् । कुतः ? तस्य देवत्वात् । तथापि कुतः । न ह वै देवमात्रस्य पुण्यभोगनियमे देवोत्तमस्य सुतरां तत्सिद्धिः । 'ऋतं' इति श्रुतिः कथं प्रकृतोपयोगिनीत्यत आह— **ऋतं चेति** । कुत इत्यतः सामान्यविशेषाभिधानादित्याह— **ऋतमिति** । प्रयोगगः शब्दजन्यः । तथा च श्रुतावृतशब्दः पुण्यफलस्योपलक्षक इति भावः । स्यादिदं व्याख्यानं यदि भगवतो विषयभोगो युक्तः स्यात् । न चैवम् । तदङ्गीकारे श्रुत्यादिविरोधात् । ''ऋतं पिबन्तौ'' इति चात एव छत्रिन्यायेनोपचरितमित्यत आह— **स च इति** । कुतो नेत्यत आह— **आह चेति** । गन्धादिषु यो जीवेन्द्रियागोचरः सारभागस्तस्य भोगं परमेश्वरोऽस्माच्छरीरादात्मनो जीवादतिशयेन विलक्षणभोग एव भवति । अवतारेषु स्थूलमपि भुङ्क्ते इतीवशब्दः । ननु प्रविविक्ताऽहारतरोऽयं जीव एवेत्यत आह— **न चेति** । न हि जीवो जीवादेव विलक्षणाऽहार इति युज्यत इत्यर्थः ।

ननु शरीराज्जागरावस्थाज्जीवात् स्वप्नसुषुप्त्यवस्थः स एव प्रविविक्ताऽहार इत्यवस्थाभेदोपाधिकं जीवस्य भेदमङ्गीकृत्य व्याख्यास्यामीत्यत आह— **स्वप्नादिश्चेति** । स्वप्नोऽन्नमिति स्वप्नशब्दः कर्तरि । स्वप्नसुषुप्तश्च शारीर एव न केवलं जाग्रत् । तथा च त्र्यवस्थस्यापि शारीरशब्देन गृहीतत्वान्न ततो भेदः स्वप्नसुषुप्तयोरित्यर्थः । अवस्थात्रयवतोऽपि शारीरत्वं कुत इत्यत आह— **शारीरस्त्विति** । जाग्रदादिष्ववस्थासु । अस्तु त्र्यवस्थोऽपि शारीरः । तथापि अस्मादिति विशेषणेनात्र शारीरादिति जाग्रदवस्थो गृह्यते । तस्माच्च स्वप्नाद्यवस्थस्य भेदोक्तिरुक्तविधया सम्भवति । भवत्पक्षेऽपि शारीरादिति जीवे सिद्धे 'अस्मात्' इति विशेषणं व्यर्थं स्यादिति । तत्राह— **अस्मादिति** । नैतद्विशेषणसार्थक्यायेश्वरं परित्यज्य जीवोऽत्र ग्राह्यः । शारीरादित्येवोक्तावीश्वरस्यापि प्राप्तावीश्वरादेवेश्वरस्य भेदानुपपत्तेस्तद्व्यावृत्त्यर्थं जीवमात्रपरिग्रहाय विशेषणमिति सार्थक्योपपत्तेरित्यर्थः । भवेदेवं यदि शारीरत्वमीश्वरस्यापि स्यात् । तदेव कुत इत्यत आह— **शारीराविति** । नन्वेवं पक्षद्वयेऽप्युपपत्तौ ईश्वर एवात्रोच्यते न जीव इति कुतो विनिगमनमित्यत आह— **भेदेति** । चो हेतौ । भेदश्रुतेः स्वाभाविकभेदरूपे गत्यन्तरे सम्भवति पुरुषभेद एवार्थतया ग्राह्यो न त्ववस्थोपाधिको भेदः । मुख्यामुख्ययोर्मुख्ये सम्प्रत्ययात् । अतो युक्तं विनिगमनम् । न केवलमुक्तव्यवस्था न्यायप्राप्ता । किन्त्वागमसिद्धा चेत्याह— **आह चेति** । अभोक्ता च भोक्ता चेत्येतयोर्व्युत्क्रमेणान्वयः ॥

*भा०दी०*— **उपपादितमिति** । सुखरूपस्य भोक्तृत्वादिनेति भावः । सत्यान्नोपासने योग्या देवा एव । ततो हि यदित्यादि बृहद्भाष्यादि शासत्यान्नविधास्य वाक्यस्यार्थमाह **अमुमुपासकमिति** । तथापि कुत इति देवत्वेऽपि पुण्यमात्रावाप्तिः कुत इत्यतो न ह वै देवानिति वाक्यं प्रवृत्तमित्यर्थः । **सामान्येति** सामान्यरूपविशेषरूपाभिधानादित्यर्थः । प्रयोग इत्यस्यार्थः **शब्दजन्य इति** । शब्दजन्यो धर्मः सत्यमित्यर्थः । धर्मस्य पिबन्ता इत्युक्तपातृत्वयोगादाह **तथा च श्रुताविति** । **अत एवेति** । अनश्नन्नन्येत्यस्य इत्यादि श्रुतिविरोधादेव भोक्तृजीवसहचर्यादीश्वरे भोक्तृत्वमुपचरितं यथा छत्रिसहचर्यादाच्छत्रिणो छत्रिपदेनोच्यते **छत्रिणो गच्छन्तीति** । **तद्वदिति** । प्रविविक्ततरेत्यस्यार्थोऽतिशयेन विलक्षणेति । **स्वप्नशब्दः कर्तरीति** । यद्यपि ताभीय तृतीयभाष्ये 'अकर्तरि च कारके संज्ञायाम्' (३-३-१९) इत्यधिकारे स्वप्नो नन्विति मह्यत्ययोपिहितः तथापि इह भाष्ये कर्तर्युपित्य भाष्ये प्रयुक्त इत्यर्थः । जागृदादिष्वित्यत्र विशेष्यानुक्तेराह **अवस्थास्विति** । प्रविभक्तभोगस्थूलभोगरूपहेत्वोः क्रमादुक्तयोरन्वयमाह **अभोक्ता च भोक्ता चेत्यादि** ॥ ॥ ९-११ ॥

भा०र०— **इत्यादिनेत्यत्रेति** । "प्रतिज्ञातं ज्ञानमाह भूमिरित्यादिना" (गी.भा. ७.४) इति पूर्वभाष्य इत्यर्थः । 'इदम्' इत्यस्य अव्यवहितपरामर्शित्वभ्रमनिरासाय तात्पर्यम् **एतावतेति** । **ज्ञानम्** ज्ञातव्यम्, 'निरूपितम्' इति शेषोक्तिः । **इतिशब्दाद्यभावेऽपीति** । अत्रादिशब्देन "एषा तेऽभिहिता साङ्ख्ये" (२.३९) इत्यादिवत् समाप्तिज्ञापकवाक्यं गृह्यते । प्रकरणान्तरारम्भत्वं स्फोरयति **अलौकिकेति** । **इत्यादेरपि** रसादीनां सत्तादिकारणत्वाच्च भगवान् रसादिरिति व्याख्यानं सिद्धमित्यन्वयः । चशब्दो भोक्तृत्वसमुच्चयार्थः । क्वचित् 'भोक्तृत्वाच्च' इति पाठः ।

**प्रथमं पक्षं तावदिति** । तत्रोक्तदोषश्च परिहरिष्यत इति 'तावत्' शब्दः । **तत एव** भगवत एव इत्यस्य तात्पर्यं तदधीना एव, 'तद्भोग्याश्चैव' इति शेषः । **तत्रोक्तो दोषः** धर्मिभ्यो निष्कृष्य धर्माणां ग्रहणानुपपत्तिरूपः । भोगपक्षेऽपि प्रयोजनस्य वक्ष्यमाणत्वात् 'तावत्' इत्युक्तम् । **धर्मिणः** अबादयः । "अप्सु रस इत्यादिविशेषशब्दैः" इत्यागामिभाष्यानुसारेण शेषमाह **धर्मिभ्य इत्यादि** । रसादीनां ये स्वभावाः रसत्वादयः तेषाम् इति षष्ठीतत्पुरुषाश्रयणे रसत्वादिधर्मगतस्वभावत्वस्यैव भगवान् नियामक इत्युक्तं स्यात् । नैतदेवम् । "रसादीनां रसादित्वे स्वभावत्वे" (गी.क.) इति वक्ष्यमाणप्रमाणे रसादीनाम् अनादिधर्मस्वभावत्वस्य भगवदधीनत्वावेदनविरोधात्, इत्यतो विवक्षितं विग्रहं दर्शयति **रसादयश्च त इति** । रसादयो नामाबादितन्मात्रम् । सविशेषाभिन्नधर्मत्वात् सत्यपि धर्मिणि रसादिना तद्दर्शनाच्चेत्यतः स्वभावशब्दार्थं विवक्षितं दर्शयति **अनागन्तुकधर्माश्चेति** ।

**तेषां** रसादीनामेव । अबादीनां धर्मिणां भगवदधीनत्वोक्त्यैव तद्धर्माणां रसादीनामपि तत्त्वसिद्धेः पृथगुक्तिः किमर्था ? इति चोद्यपरिहारः स्फुटं न प्रतीयत इत्यतः "रसादिस्वभावानां साराणां च" इत्यंशस्य तात्पर्यं वदन् समग्रभाष्यं व्याचष्टे **अबादिस्वभावभूतानाम् इत्यादिना, विशेषशब्दा उपात्ता इत्यर्थ इत्यन्तेन** । **इति शेष इति** । तथा च अबादिधर्मिणः प्रत्यनागन्तुकधर्मत्व इत्यर्थः । "अबादिधर्मेषु सङ्ख्यादिषु रसादित्वं च विशेषतो भगवन्नियम्यम्" इति प्राचाम् उक्तिम् "रसादीनां रसादित्वे" (गी.क.) इति प्रमाणं चानुरुन्धान आह **रसादित्वे चेतीति** । **अनुषङ्गसिद्धः** नान्तरीयकः, **रसत्वादिकम्** रसगन्धत्वादिकम् । क्वाप्यनुषङ्गसिद्धत्वाप्रसक्तेः तन्निषेधायोग इत्यतस्तत्प्रसक्तिं दर्शयितुं दृष्टान्तमाह **यथेति** । **तदीयेषु** पटादिद्रव्यगतेषु । रसादीनामपि गन्धादित्वेन ग्रहणं पटादिद्रव्यस्य पृथिवीत्वेन गन्धवत्त्वात् तदभिप्रायेण । **पृथग्व्यापारवान्** 'अनुभूयते' इति वर्तते । **ते** गन्धादिगुणाः ।

'विशेषतः' इत्यस्यार्थः **अबादिभोगादप्यतिशयेनेति**। **प्रसिद्धा** 'विष्णोरङ्गारशेषेण' (कृ.म.) ''विष्णोरारार्तितं मुखम्'', ''सुपूजितं हरिं दृष्ट्वा'', ''रथस्थं केशवं दृष्ट्वा'' इत्यादौ । अनेन ''अभेदोक्तेरर्थान्तरमुपपादितम्'' भवति । 'विपरिगम्यते' इत्युक्तम्, तद्दर्शयति **रसादिष्विति** । **तदुपपत्तिः** विशेषग्रहणोपपत्तिः । **अर्थत्रये** रसादेरबादिनियमानुषङ्गिसत्ताकत्वाभावः, अबादिभ्योऽप्यतिशयेन रसादेर्भोग्यत्वम्, अबादिभ्यो विशेषतो रसादिर्भगवदुपासनाप्रतिमेति चोक्तेऽर्थत्रये । 'रसोऽहम्' इत्यभेदोक्तिः तत्सत्ताकारणत्वात् तद्भोक्तृत्वात् तत्प्रतिमाकत्वाच्च युज्यत इत्युक्तेऽर्थत्रये इति वाऽर्थः । **अन्योन्यसमुच्चये** रसादीनां रसादित्वे च, तथा स्वभावत्वे इत्यन्योन्यसमुच्चये व्याख्येयावित्यर्थः । **सर्वधर्मेषु** अबादिधर्मभूतसङ्ख्यादिषु । **सारत्वे** अबादिभ्योऽपि विशेषाकारेण तत्र पृथग्व्यापारवान् इति भाष्यार्थः ।

'सर्वत्र' इत्यनुवादः, 'अबादिषु' इति व्याख्या । ईश्वरस्य जगच्छब्दवाच्यत्वोक्तेः प्रकृतानुपयोगादाह **रसादिकं जगदिति** । एतेन 'जगत्' इति 'ईश्वरः' इति च पदद्वयमिति विभावितं भवति । **उच्यते** 'रसोऽहम्' इत्यादौ । अनेन 'रसादिस्वभावानाम्' इत्यादिना भाषिते आद्येऽर्थे, ''भोगश्च विशेषतः'' इति द्वितीयेऽर्थे च प्रमाणमुक्तम् । **उपासनार्थं चेति** । तृतीयेऽर्थे प्रमाणम् ''रसादिमानिनां देहे'' इति । तत्र 'अबादयः' इत्यस्यार्थः **अबाद्यभिमानिन इति** । अनेन अबाद्यभिमानिनो देवाः **पार्षदाः** परिवारभूता इत्येवमनुसन्दधानानां ज्ञानार्थिनां स हरिः **सर्वत्र** अबादौ व्यवस्थितोऽपि रसादिमानिनां **देहे** रसादौ ध्येय इति भाष्ययोजनोक्ता भवति । उपासना ज्ञानिनामयुक्ता ? तादर्थ्यात् तस्या इत्यतो ''ज्ञानं ददाति'' इति प्रमाणमनुसृत्याह **ज्ञानिनामिति** । **अन्येषां** 'ज्ञानार्थिभ्यः' इति शेषः । तत्फलितार्थमाह **रसाद्यर्थिनामिति** । रसादिसम्पत्तिकामनावद्भी रसाद्यभिमानिदेहे जगत्पतिर्वासुदेवो ध्येय इति भाष्याशय इति भावः ।

**नवाक्षरत्वेऽपीति** । उभयत्रापि 'पूर्वत्रासिद्धम्' इति लोपस्यासिद्धत्वप्रसङ्गेन स्वरसन्ध्ययोगादिति भावः । **स्वभाव इतीति** ।

> ''द्रव्यं कर्म च कालश्च स्वभावो जीव एव च ।
> यदनुग्रहतः सन्ति न सन्ति यदुपेक्षया ॥'' (भाग. २.१०.१२)

इति वाक्यमनेन गृहीतम् । **स्वभावः** अबादीनाम् अनागन्तुको धर्मः, रसादिः प्रकृत्यादीनां परिणामादिरूपः । **विशेषणोपादानमिति** । 'धर्माविरुद्धः' इति कामविशेषणम्, 'कामरागविवर्जितम्' इति बलविशेषणम्, ''पुण्यो गन्धः'' इति गन्धविशेषणं च किंप्रयोजनकमित्यर्थः । **विशिष्टेष्वेव**

धर्माविरुद्धत्वादिविशेषणविशिष्टेष्वेव । **अशुचिषु** नरकाद्यनर्थापादकतया अपवित्रेषु । अत्र ''विशिष्टेष्वेव कामेषु भगवानुपास्यः'' इत्यत्र इच्छाविषयकेच्छाया असम्भवादाह **कामं पुरुषार्थमिति** । काम्यत इति कामः, इष्टार्थ एव कामशब्दार्थः, नेच्छेति भावः । ''कामं पुरुषार्थे'' इति पाठे तु ''पुरुषार्थो मे भूयात्'' इति 'काममिच्छता' इति इच्छाविशेषणेच्छा युक्तेति भावः । ''पूर्वसदृशसमोनार्थकलहनिपुणमिश्रश्लक्ष्णैः'' इत्यत्र ऊनार्थकशब्देन तृतीयायाः समासज्ञापनात्, ''पुण्येन हीनः'' इति निदर्शनाच्च विहीनशब्दयोगे तृतीयाया भाव्यत्वेन पञ्चम्याः षष्ठ्या वा अयोगः ? इत्यतः पञ्चमी व्यत्ययात् तृतीयार्थे इति भावेनाह **कामरागादिनेति** । **कामः** इच्छा, **रागः** आसक्तिरिति विवेकः । **कामादिकं** कामबलादिकम् ।

*भा०र०*— ''विशिष्टेष्वेव भगवानुपास्यः'' इति ज्ञापनार्थं धर्माणां विशेषणोपादानमिति प्रयोजनस्योक्तत्वात् 'प्रयोजनान्तरम्' इत्युक्तम्, तद्विशदयति **पुण्यगन्धस्यैवेति** । ''प्रभुत्वात् सर्वं पश्यति'', ''सर्वापरोक्षविद्विष्णुः'' (ब्र.पु.) इत्यादिश्रुतिस्मृतिषु सर्वानुभवावेदनाद्, आद्यपक्षमङ्गीकृत्य तत्रोक्तं दूषणमुद्धरति **अनुभूयमाना अपीति** । **फलहेतवः** स्वकार्यदुःखप्रापकाः । **उपपादितमिति** । ''सुखरूपस्य भोक्तृत्वात्'' (ना.) इत्यत्र (गी.भा. ७.६) सुखकारणवस्तुमात्रस्य भगवत्स्वरूपसुखाभिव्यक्तिहेतुत्वम्, नेतरस्य । एतच्चाचिन्त्यशक्तित्वाद् उपपादितमिति युक्तं कथितमित्यर्थः । 'इति' इति शेषः । सुगन्धस्यैव सन्निधानेऽपि श्रुतेः सामान्यगोचरत्वाद्, रसादेर्भोग्यत्वस्य प्रकरण-प्राप्तत्वाच्चाह **शुचिवस्त्वेवेति** । बृहदारण्यकश्रुतौ विवक्षितम् अदश्शब्दार्थमाह **अमुम् उपासकमिति** । 'सप्तान्नः' इति स्वोपासकमित्यर्थः । **कुतः** पुण्यमेवामुं गच्छतीति कुतः ? उत्तरमाह **तस्येति** । सप्तान्नोपासकस्येत्यर्थः । ''सप्तान्नोपासनायोग्या देवा एकान्ततो हि यत्'' (बृ.भा. ३.६.२७) इति बृहद्भाष्योक्तेरिति भावः । **तथापि** देवत्वेऽपि । कुतः पुण्यमात्रप्राप्तिः ? इत्याकाङ्क्षायाम् ''न ह वै देवान् पापं गच्छति'' (बृ. ३.६.२७) इति वाक्यं प्रवृत्तमित्यर्थः ।

नन्वेवमपि ''भगवतः पुण्यमात्रोपभोगः'' इत्यत्र नेदं प्रमाणम् । देवानामेव पापाप्राप्त्युक्तेः, इत्यतः ''देवशिखामणिं हरिं पापं न गच्छतीति किमु वक्तव्यम्'' इति **प्राचीनटीकोक्तं** कैमुत्यन्यायमाह **देवमात्रस्येति** । मात्रशब्दः कात्स्न्यार्थः । 'तत्सिद्धिः' इत्यनन्तरम् ''इत्यतः प्रकृतार्थे प्रामाण्यं युक्तम्'' इति शेषः । **कथमिति** । ऋतपानस्य श्रवणेन भगवतः पुण्यभोगोऽस्तीत्यप्रतीतेरिति भावः । **सामान्यविशेषाभिधानादिति** । ''ऋतं सत्यम्'' इत्यभिधाने च धर्ममात्रस्य ऋतत्वावेदनात् तस्य सामान्यत्वम्, ''ऋतं तु मानसः'' इत्यत्र मानसस्यैव व्यापारस्य ऋतत्व-

वर्णनाद् विशेषाभिधानरूपत्वम् । यद्यप्यत्र "ऋतं पुण्यम्" इति भाष्याविसंवादाय पुण्यपदघटित-मभिधानं वक्तव्यम् । तथाऽपि "धर्मस्तु सुकृतं पुण्यम्" इति, "पुण्यं हेम्नि जले धर्मे" इति च वैजयन्त्यां दर्पणे चोक्त्या पुण्यधर्मशब्दयोः पर्यायत्वस्य लौकिकाभिधानप्रसिद्धत्वाद् धर्मपदोपादान-मेव पुण्यपदोपादानमिति भावेनैवमुक्तमिति भाष्यभावः शिष्यैरूह्यत्वान्नोक्तः । 'प्रयोगगः' इति पद-मनूद्यार्थमाह **प्रयोगगः शब्दजन्य इति** । वाचिको वाचि भवः स धर्मः सत्यमिति भावप्रदी-पिकारीत्याऽर्थः ।

एवमपि पुण्यस्यादृष्टविशेषस्य भोग्यत्वायोगात् प्रकृतोपयोगो न सिद्ध्यति ? इत्यत आह **तथा चेति** । पुण्यफलस्य पानं तु भोग एवेति भावः । एवं पुण्यशब्दोऽपि तत्फलोपलक्षक इति ज्ञातव्यम् । **श्रुत्यादीति** । "अनश्नन्नन्यो अभिचाकशीति" (आथ. ३.१.१), "न तदश्नाति किञ्चन" (बृ. ५.८.८) "अन्यो निरन्नोऽपि बलेन भूयान्" (भाग. ११.११.६) इत्यादिश्रुतिस्मृती-त्यर्थः । "ऋतं पिबन्तौ" (कठ. १.७.१) इति श्रुतिरेव भोगे मानमस्तु ? इत्याशङ्क्याह **ऋतं पिबन्ताविति** । **चात एवेति** । श्रुत्यादिविरोधादेव अपातर्यपीश्वरे पातृजीवसाहचर्येण 'पिबन्तौ' इति पदोक्तं पातृत्वमुपचरितम् । यथा "छत्रिणो गच्छन्ति" इत्यत्र छत्रिसाहित्याद् अच्छत्रिष्वपि छत्रिपदम्, तद्वदित्यर्थः । तथा च गुहाधिकरणे (ब्र,सू.,अ. १.२.३) पूर्वपक्षचन्द्रिका— "अत्र पिबन्तौ जीवेश्वरावेव, ईश्वरस्याभोक्तृत्वेऽपि छत्रिन्यायेन पातृत्वव्यपदेशः" इति । भाष्ये 'श्रुत्यादौ' इतिपदं संयोजयन् स्थूलशब्दस्य, अशनशब्दस्य च विवक्षितमर्थमाह **श्रुत्यादाविति** ।

स्थूलानशनोक्तौ गन्धादिभोगोक्तिः किंविषयिणी ? इत्यत आह **सूक्ष्मभोगस्य चेति** । 'अनश्नन्' (आथर्व. ३.१.१) इत्यादिवाक्यं जीवभोग्यविषयाभोगपरम्, "पुण्यमेवामुं गच्छति" (बृ. ३.६.२७), "ऋतं पिबन्तौ" (कठ. १.७.१) इत्यादिवाक्यं तु सूक्ष्मभोगसद्भावपरमिति वाक्यद्वयस्य विषयव्यवस्थेत्यर्थः । गन्धादिभोगस्य प्रस्तुतत्वात् 'गन्धादिषु' इति पदं संयोजयन् सूक्ष्माशन-शब्दार्थमाह **गन्धादिष्विति** । पूर्वम् इन्द्रशब्देनेन्द्रनामकस्य हरेः । प्रस्तुतत्वात्, तेनानुवाद्यं समर्पयन् श्रुत्यर्थमाह **परमेश्वर इति** । 'शारीरादात्मनः' इत्यस्यार्थः **जीवादिति** । तरपोऽर्थः **अतिशये-नेति** । प्रविविक्ताहारपदार्थः **विलक्षणेति** । इवशब्दात् पर एवशब्द आहारशब्देनान्वेतीति भावेनो-क्तम् **भोग एवेति** । विलक्षणभोग एव चेत्, इवशब्दो न स्वरसः ? इत्यत आह **अवतारे-ष्विति** । रामकृष्णादिषु ।

ननु यदुक्तं 'स्थूलानशनोक्तेः' इत्यत्र स्थूलस्य जीवभोग्यस्य विषयस्याभोगोक्तेः "अनश्नन्नन्यो अभिचाकशीति" (आथर्व. ३.१.१), "अन्यो निरन्नोऽपि बलेन भूयान्" (भाग. ११.११.६) इत्यादिश्रुतिस्मृतिविरोधो नास्तीति, तदसत् ।

"जीवभोगस्य भोक्तेशो जीवस्तद्भोगभुङ् न तु ।
विविक्तभुगिवातोऽसौ भगवान् पुरुषोत्तमः ॥" (पा.पु.)

इति षष्ठबृहद्भाष्ये (बृ. ६.२.) "जीवभोगस्य भोक्ता परमेश्वरः" इत्युक्त्या, माण्डूकभाष्ये "स्थूलान् भोगानिन्द्रियैः स शुभान् भुङ्क्ते न चाशुभान्" (म.यो.) इति स्थूलभोगोक्त्या, ऐतरेयभाष्ये

"आस्यभोग्यं ततो विष्णोरन्नं तौ कुरुतः सदा ।
सर्वैर्यद् भुज्यते चान्नं तत्र तत्र स्थितो हरिः ।
तद् भुङ्क्तेऽतस्तदर्थं हि तावन्नं कुरुतः सदा ॥" इति ।

तथा तत्रैव "अन्येषां जीवानां श्रवणजं भोगं स्वश्रोत्रेण दिग्भिरननुगृहीतेन भगवान् भुङ्क्ते इति । तथा तत्रैव

"सङ्कर्षणश्च प्रद्युम्नस्तत्र भोक्तृषु संस्थितौ ।
भोक्तृशक्तिप्रदौ नित्यं भोक्तारौ च विशेषतः ॥" (ऐ.सं.)

इत्युक्त्या "श्रोत्रं चक्षुः" (१५.९) इत्यत्र 'विषयानुपसेवते' इति, "पत्रं पुष्पं फलं तोयम्" (९.२६) इत्यत्र 'अश्नामि' इत्यादि भगवदुक्त्या,

"पञ्च यज्ञान् स यज्ञेशो विधायैवं सलक्ष्मणः ।
हविष्यं बुभुजे दिव्यं देव्या पात्रे समर्पितम् ॥" (सं.रा. अयो.कां. ९.४८)

इति सङ्ग्रहरामायणे,

"विप्रपत्नीभिरानीतं तद्गृहान्तिकमागतः ।
सोऽन्नं सानुचरो भुक्त्वा चक्रे तासामनुग्रहम् ॥ (म.मं. ४.४.)

इति मणिमञ्जर्याम्, "नन्दादिभिः परिवृतो हरिरत्र रात्रौ भुक्त्वा पयोऽन्वितशुभान्नम् उवास कामम्" (म.भा.ता.नि. १३.१०६) इति भारततात्पर्यनिर्णये चोक्त्या, "**आदेयम्** उपादेयं सुखं तत्साधनं च **माति** अनुभवतीत्यात्मा" इति अन्तराधिकरणसुधायाम् (ब्र.सू. १.२.१३), सुखभोगस्यैव तत्साधनस्य स्थूलभोगस्योक्त्या च तद्विरोधात्, अत्र सर्वत्र भगवतः स्थूलाशनावभासात् । न ह्येकेन गीताभाष्येण उदाहृतानि बहूनि वचनानि अन्यथयितव्यानि । भूयोऽनुग्रहन्यायविरोधात् । यच्चापि "आह च सूक्ष्माशनम्" (गी.भा.) इत्यत्र "गन्धरसादिषु जीवेन्द्रियागोचरो यः सारभागस्तद्भोगो भगवतोऽस्ति" इत्युक्तम्, तत्र यद्यप्यनशनश्रुत्यादिविरोधः 'स्थूलानशनोक्तेः' इति भाष्ये—

"प्रविविक्तभुग्यतो ह्यस्माच्छारीरात् परमेश्वरः ।
अतोऽभोक्ता च भोक्ता च स्थूलाभोगात् स एव तु ॥" (गी.क.)

इति वक्ष्यमाणप्रमाणे च परिहृतः । तथाऽपि सारभोगेन यद् भाव्यं सुखं तस्य पूर्वमभावेनापूर्णत्वप्रसङ्गः ।

"रमया रमणं तस्मात् रमाया रतिपात्रता ।
न ह्यस्या रतिदातृत्वं विष्णोर्न ह्यन्यतो रतिः ॥"

इत्यैतरेयभाष्ये सर्वथा अन्यप्रयोज्यभोगमात्रप्रतिषेधस्याप्रतीकारादिति चेत् ।

**अत्राहुः** "जीवभोगस्य भोक्तेशः" (पा.पु.) इति बृहद्भाष्ये जीवभोगशब्देन जीवस्वामिक आनन्द उच्यते । "भोगः सुखे स्त्र्यादिभृतौ अहेश्च फणकाययोः" (अ.को.) इत्यभिधानात्, "महाभोगशब्देन परमानन्दत्वं प्राणस्योक्तम्" (ब्र.सू. १.१.२३) इति सूत्रभाष्योक्तेः, प्राणाधिकरण**तत्त्वप्रदीपिकायां** (ब्र.सू.अ. १.१.९) तु "भुज्यत इत्यानन्दो भोगः" इति व्याख्यातत्वाच्च, तद्भोगश्च भगवतः "सर्वत्र सारभुग्देवो नासारं स कदाचन" (वा.पु.) इति प्रथमतात्पर्ये, "सुखमत्त्येव हि सदा सर्वत्रावस्थितं विभुः" (भो.नि.) इत्येकादशतात्पर्ये, "जीवसमवेते भोगे स्वीकारमात्रं विष्णोः" इति गुहाधिकरण**तत्त्वप्रदीपिकायां** (ब्र.सू.अ. १.२.३) चाभिहितः "सर्वत्र सारभुक्" इत्यत्र "भूतेषु तद्गुणान्" (भाग. १.२.३४) इति "भागवतजीवगुणशब्दार्थ आनन्दादिः सारशब्देनोक्तः **विजयध्वजाचार्यैः** "तद्गुणानानन्दादीन्" (भाग.वि. १.२.३४ श्लो.) इति व्याख्यातत्वात् । 'सुखमत्त्येव' (भो.नि.) इत्यत्र सर्वत्रापि जीवेषु स्थितं सुखं सदाऽत्त्येवेति **सुधीन्द्रतीर्थ**श्रीमच्चरणैर्व्याख्यातत्वाच्च ।

स च जीवानन्दो द्विविधः । स्वरूपरूपो मनोवृत्तिरूपश्चेति । तत्र सुप्तौ मुक्तौ च जीवस्वरूपानन्दो भगवदुपभोग्यः । "विषयभोगं विना आनन्दमात्रभुक्त्वाद् आनन्दभुगिति विशेषः" इति माण्डूकभाष्ये विश्व-तैजस-प्राज्ञानां स्थूलभुक्त्वप्रविविक्तभुक्त्व-आनन्दभुक्त्वलक्षणधर्मविदनप्रकरणे प्राज्ञस्य सुप्त्यवस्थागतजीवानन्दभोगप्रतिपत्तेः । तथा चैकादशतात्पर्ये—

"दक्षिणाक्षिस्थितो विष्णुर्भुङ्क्तेऽर्थान् जाग्रदास्थितान् ।
कण्ठसंस्थस्तथा स्वप्नान् जीवानन्दं च सुप्तिगः ॥" (सत्तत्वे) इति ।

मुक्तजीवस्वरूपसुखभोगेऽपि "सुखमत्त्येव हि सदा सर्वत्रावस्थितं विभुः" (भो.नि.) इत्युदाहृतवचने सदाशब्देन मुक्त्यवस्थाया ग्रहणाद्, अनुव्याख्यानान्त्यभागे—

"अतो जगद्व्यापृतिमन्त एव ब्रह्मादयः पूर्णगुणाः क्रमेण ।
अमन्दमानन्दमजस्रमेव भुञ्जन्तमात्मीयमजात् समासत ॥"

—(अ.व्या.४.४.११.श्लो.)

इत्यत्र सुधायाम् "आत्मीयम्, न तु पारमेश्वरम् । अजात् = परमेश्वरात् तमविहाय" इत्यर्थ इत्यत्र "परमात्मानम् अविहायात्मीयमानन्दं भुञ्जानाः" इति विभावनाच्चावेद्यते ।

मनोवृत्तिसुखभोगश्च गुहाधिकरणसिद्धः (ब्र.सू.अ.१.२.३) । तत्र ऋतशब्दोक्तपुण्यफलस्य सुखत्वेन व्यवहारात् । एवं च बृहद्भाष्ये जीवस्वामिकसुखभोगस्य, गीताभाष्ये जीवे बाह्येन्द्रियगोचरविषयाभोगस्य च विवक्षितत्वेन भिन्नविषयतया न तयोर्विरोधः । बृहद्भाष्यटीकायां "भोगो विषयः" इति वचनं भुजेर्भावे घञि निष्पन्नेन भोगशब्देन केवलं भोजनक्रियाप्रतीतौ तद्व्यावर्तनेन 'भुज्यते' इति भुजिक्रियाविषयः सुखमेव कर्मणि घञि ग्राह्यमिति स्फोरयितुमिति न तद्विसंवादः । "स्थूलान् भोगानिन्द्रियैः सः" (म.यो.) इति माण्डूकभाष्यं च दक्षिणाक्षिस्थितविश्वरूपस्यैव "विश्वो हि स्थूलभुङ् नित्यम्" (मां.अ.१.खं.१,मं.९) इति, 'स्थूलभुग्वैश्वानरः' (मां.अ.१,खं.१, मं.३) इति चोपनिषदुक्तस्थूलभोगो नाध्यात्मगतरूपस्येत्येवं परम् । गीताभाष्यं तु तदन्याध्यात्मरूपस्य स्थूलानशनपरमिति भिन्नविषयतया न विरोधि । ऐतरेयभाष्योदाहृतवचनजातमपि जीवेन्द्रियागोचरसूक्ष्मसारभोगविषयतया सावकाशम् । तत्र स्थूलशब्दानुपादानात्, "विशेषतो भोक्तारौ" (ऐ.सं.) इति तत्रैवोक्त्या सूक्ष्मभोगावगमाच्च । "सर्वैर्यद् भुज्यते चान्नम्" (ऐ.भा. १.५) इत्यत्रापि तच्छब्दस्तद्गतसारपरः । एतेन भगवद्वचनमपि सूक्ष्माशनार्थतया व्याख्यातम् । पण्डिताचार्योक्तिः (सं.रा. अ.यो.९४८, मं.म.४.४), "भुक्त्वा पयोऽन्वितशुभान्नम्" (म.भा.ता.नि. १३.१०६) इति भगवत्पादीयसूक्तिश्च रामकृष्णाद्यवतारेषु स्थूलभोगाभ्युपगमपरा । तथा चात्र टीका "अवतारेषु स्थूलमपि भुङ्क्त इति इवशब्दः" इति ।

अत्रेदं ज्ञातव्यम्— बृहद्भाष्ये "जीवस्वामिकानन्द ईशजीवयोर्भोग्यः" इति वचनम् "प्रविविक्ताहारतर इव" (बृ. ६.२.३) इत्यत्र इवशब्देनोक्तं सादृश्यं घटयितुम् "जीवस्तद्भोगभुङ् न तु" (पा.पु.) इति वचनं तु प्रविविक्ताहारत्वं च घटयितुं व्याख्यातम् । अत्र टीकायां तु "प्रविविक्ताहारत्वं जीवादतिशयेन विलक्षणभोग एव" इति व्याख्याय, श्रौतेवशब्दोक्तं साम्यम् अवतारेषु जीवेशभोग्यस्थूलस्य समत्वेन व्याख्यातव्यमिति व्याख्यानान्तरत्वज्ञापनाय "स्थूलमपि भुङ्क्त इतीवशब्दः" इत्युक्तमिति । एवमेव सुधाऽपि (ब्र.सू. १.२.१३) सूक्ष्मसुखकारणभोगविषया

व्याख्यातव्येति, न साऽपि स्थूलानशनविरोधिनी । युक्तं चैकेनापि निरवकाशेन बहूनामपि साव-काशवचनानाम् अन्यथा नयनम् । सूक्ष्माशनाभ्युपगमे अनशनश्रुत्यादिविरोधस्तु स्थूलानशनोक्त्या परिहृतः ।

सूत्रभाष्य-तत्त्वप्रकाशिका-चन्द्रिकादौ तु, "तस्येदाहुः पिप्पलं स्वाद्वग्रे" (ऋ.मं.१,सू.१६४, मं.२२) इतीश्वरस्य स्वादुभोक्तृत्वोक्तेः, तथा "प्रविविक्ताहारतर इव" (बृ. ६.२.३) इति श्रुतौ भगवदाहारस्य जीवाहाराद् विभक्तत्वोक्तेः, तथा "शुभं पिबत्यसौ" (पा.पु.) इत्यादिस्मृत्यादिभि-रशुभयोगस्यैव निषेधात् । तथा

"अन्यूनानधिकत्वाच्च पूर्णः स्वानन्दभोजनात् ।
विरागाच्च परस्यास्य भोक्तृत्वप्रतिषेधनम् ॥" (स्का.पु.)

इत्यादिस्मृतिभिरभोक्तृत्वश्रुतेर्गतिकथनात्, "क्रीडा भोगो न चान्यथा" (ब्र.त.) इत्यादिस्मृत्या क्रीडारूपभोगसम्भवस्योक्तत्वाच्च, अशुभभोगाभावविषयत्वेन समाहितः । तथा च भागवततात्पर्ये वचनम् "अनश्नन्नित्याद्यशुभापेक्षया" (भाग.ता.१.२.२४.श्लो.) इति । यदप्यत्रापूर्णत्वप्रसञ्जनं तदपि,

"आगमिष्यत्सुखं चापि तच्चास्त्येव सदाऽपि तु ।
तथाऽप्यचिन्त्यशक्तित्वात् ............................॥" (ना.पु.)

इत्यत्र "यद् भोगेनागमिष्यत्सुखं तच्च सदाऽस्त्येव" इति व्याख्यानेनाकर एव समाहितम् । "विष्णोर्न ह्यन्यतो रतिः" इत्यैतरेयभाष्यमप्यन्यायरतिनिषेधपरम् । अत एव "न ह्यस्या रति-दातृत्वम्" इति तत्रैवोक्तम् । स्वरमणस्य विष्णोरन्यरूपभोगविशेषतोऽन्यतो न इत्येवंपरमित्यपि केचित् ।

एवं च "जीवाद्यमेव नाश्नाति, न तु नाश्नात्येव, तस्येदाहुः पिप्पलं स्वाद्वग्रे" (ऋ.मं.१, सू.१६४, मं.२२) इत्युक्तत्वात् ।

"स्वातन्त्र्येणैव भोक्तृत्वात् दुःखाभोगाच्च सर्वदा ।
अभोक्ता चैव भोक्ता च भगवान् विष्णुरव्ययः ॥" (तत्त्वसारः)

इत्याथर्वणभाष्यम् ।

"स एतैरिन्द्रियैर्विष्णुर्भोगाननुभवत्यजः ।
स्वरूपेणैव शक्तोऽपि जीवदेहस्थितो हरिः ॥

भुङ्क्ते तदिन्द्रियैर्भोगांश्छुरितैरिन्द्रियैः स्वकैः ।
जीवं तदिन्द्रियाण्येवं प्राणं च व्याप्य कृत्स्नशः ॥
भुङ्क्ते तत्तद्गुणान् विष्णुः नैव दोषान् कदाचन ॥" (सा.सं.)

इति छान्दोग्यभाष्यम् ।

"अस्वादु स्वादुवद्ध्यत्ति जीवो नैवं जनार्दनः ।
अतो नात्तीति वचनमश्नतोऽपि शुभं सदा ॥" (परभोगे) इति,

"साशनानशनत्वेन नरदेवौ यथोदितौ ।
अत्तिं विनाऽप्यदौर्बल्यात् तथाऽनत्तिहरीर्भुजः ॥" (स्वाभाव्ये)

इति स्वयं त्वत्त्येव, तथाऽपि नादननिबन्धनं तस्य बलमित्यर्थ इति ।

"सुपर्णौ द्वौ शरीरस्थौ जीवश्च परमस्तथा ।
पारवश्यादनाज्जीवस्तत्रात्तीति श्रुतौ श्रुतः ॥
स्ववशेनादनाद्विष्णुर्नात्तीत्यत्ताऽपि सन् श्रुतः ।
स एव हि शुभस्यात्ता जीवोऽत्तस्यैव वेदनात् ॥" (कू.सं.)

इत्येकादशस्कन्धतात्पर्यनिर्णयः ।

भोगोऽस्यापि साधितः पुरस्तात्" (गी.भा. १५.८) "इन्द्रियद्वाराऽपि सोऽपि भुङ्क्ते" (गी.भा. १५.९) "तद्य इमे वीणायां गायन्त्येतं ते गायन्ति" (छा. १.३.९) इति श्रुतिः । "गुणान्वितमेव भुङ्क्ते" (गी.भा. १५.९) "न ह वै देवान् पापं गच्छति" (बृ. ३.६.२७) इति च श्रुतिः (गी.भा. १५.९) इति पञ्चदशगीताभाष्यम् । "राजाद्यन्तर्गतं गायन्ति इत्यनेन हि तच्छ्रोत्रेण गानभोगो लभ्यते" इति तट्टीका ।

भुङ्क्ते हरिः शुभान् भोगानिन्द्रियेषु व्यवस्थितः ।
पूर्णानन्दोऽपि भगवान् क्रीडया भुङ्क्त एव तु ॥ इति गीतातात्पर्यम् (१५.९) ।

"ईश्वरस्य पूर्णानन्दत्वात् किं विषयभोगेन ? इत्यतः" इति तट्टीका । "मुन्नाम विषयोत्थं यत् प्रकृष्टविषयात् प्रमुत्" इति षष्ठबृहद्भाष्यानुसारेण प्रवृत्ता । "प्रकृष्टातिप्रकृष्टविषयोत्थौ मोदप्रमोदौ" इति तत्त्वप्रकाशिका (ब्र.सू. १.१.१२) । भुङ्क्ते गुणान् षोडश षोडशात्मकः सोऽलङ्क्षीष्ट भगवान् वचांसि मे" (भाग. २.४.२३) इति भागवतटीकायाम् "गुणान् शब्दादिविषयसारान्" इति **विजयध्वजाचार्य**वचनम् इत्यादीनि वाक्यानि "गन्धरसादिषु जीवेन्द्रियागोचरसारभोगविषयाणि

व्याख्यातव्यानि । चक्षुरादिदशेन्द्रियाणां मनआदीनां पञ्चानां साक्षिणश्च षोडशगुणान् विषयान् भुङ्क्त इति छान्दोग्यभाष्यटीकायाम् एतद्भागवतवचनव्याख्याऽवसरे षोडशगुणान् विषयान् इति सम्मुग्धोक्तिरपि,

> "..........................जीवदेहस्थितो हरिः ।
> भुङ्क्ते तैरिन्द्रियैर्भोगांश्छुरितैरिन्द्रियैः स्वकैः ॥" (सा.सं.)

इति इन्द्रियद्वारा हि सोऽपि भुङ्क्त इति भगवत्पादीयवचनानुसारेण भगवदिन्द्रियोपभोग्यसारपरैव व्याख्येयेति न तद्विसंवादोऽपीति ।

**केचित्तु** यतो जीवः स्वतो भोगभुङ् न भवति, अतो भगवान् विविक्तभुगुच्यते, यतश्चेशः स्वावतारेषु जीवभुक्तस्य स्थूलस्यापि भोक्ता, अतः 'इव' इत्युक्तमिति इवशब्दोक्तसाम्यघटनाय बृहद्भाष्यं योजयित्वोभयोरविरोधम् आहुः । **यत्तु** बृहद्भाष्ये जीवभोग्यरसादिभोग उच्यते । अत्र तु जीवभोग्यद्रव्याभोगोऽभिसन्धीयत इति भिन्नविषयतया न विरोध इति, तन्न । "सर्वकर्मा सर्वकामः सर्वगन्धः सर्वरसः" (छा. ३.२.९) इति प्रागुदाहृतश्रुतिव्याख्यानटीकायां "काम्यन्त इति कामा द्रव्याणि" (प्र.दी. ७.६) इति द्रव्याणामपि भगवद्भोक्तव्यत्वोक्त्या, "अन्नादिभोगादप्यतिशयेन रसादेर्भोगः परमेश्वरस्य" (प्र.दी. ७.८) इति, "रसोऽहमप्सु कौन्तेय" (७.८) इति अत्रत्यटीकोक्त्या च तद्विरोधात् । अत्र भगवतो जीवेन्द्रियागोचररसादिभोगोक्त्या, तत्र जीवेशयोरेकरसादिभोगोक्तेरयुक्तत्वाच्च । किञ्चात्र द्रव्यभोगाभावाभिसन्धाने "त्वयोपभुक्तस्रग्गन्धवासोऽलङ्कारचर्चिताः" (भाग. ११.६.४६) इति, "वसिष्वोत्तमवस्त्राणि भूषणैरप्यलङ्कुरु" इति, "वासो विभूषणम्, उपवीतासने दत्त्वा गन्धपुष्पे तथैव च" (तन्त्र.स) इत्यादिवचनेषु स्रग्वस्त्रभूषणादिद्रव्याणां भगवदुपभुक्तत्वादिवर्णनम् अयुक्तं स्यात् । न च तत्रापि द्रव्यगतगन्धादिगुणभोगा एव, न वस्त्रभूषणादिद्रव्योपभोग इत्यत्र निरवकाशं प्रमाणमुपलभामहे । उक्तं च ऋग्भाष्ये "मनोऽपि भोग्यमीशस्य प्रीतिमात्रेण केवलम्" इति द्रव्यस्य मनसो भगवदुपभोग्यत्वम् ।

नन्वेवं भगवतः स्थूलभोगाभावाभ्युपगमे "नैवेद्यशेषं तुलसीविमिश्रितम्", "भुक्तशेषं भगवतो भृत्यातिथिपुरस्सरः भुञ्जीत" (सदाचारस्मृतिः), "उच्छिष्टभोजिनो दासाः" (भाग. ११.६.४६) इत्यादौ भगवद्भुक्तशेषस्य भोक्तव्यत्ववचनमयुक्तं स्यात् । स्थूलस्य भगवद्भुक्तत्वात्, सूक्ष्मस्य च जीवेन्द्रियागोचरतया जीवं प्रति तस्य भोक्तव्यत्वाभावादिति चेन्न ।

> "अदनाघ्राणदृष्ट्याख्यभोगत्रयविभागतः ।
> मुखनासाचक्षुषां तद् भोग्यमन्नं हरेः श्रुतम् ॥"

इत्यैतरेयभाष्यटीकायाम् "तदन्नं हरेर्मुखनासाचक्षुषाम् अदनाघ्राणदृष्ट्याख्यभोगत्रयविभागतो भोग्यं श्रुतम्" इत्यन्वय इत्युक्तम् । तत्र मुखस्यादनीयतया भोग्यम्, घ्राणस्याघ्रेयतया भोग्यम्, चक्षुषो दर्शनीयतया भोग्यमिति भोगत्रयं विभज्य चाखण्डार्थकथनावसरे— अत्तृत्वादन्ननाम्ना मुखगतेन भार्गविण, घ्राणगतेन नृसिंहेन, चक्षुर्गतेन कपिलेन च इदं सर्वं प्रसिद्धान्नमश्नुते । अदनाघ्राणदृष्टिभेदेन स्वीकरोति हि यस्मात् तस्मात् तृचाशीतय इव प्रसिद्धान्नमपि तस्यान्नमित्यत्र जीवेन्द्रियगोचर-स्थूलभोगस्य दृष्ट्या स्वीकाराभिधानेन भगवदुपभुक्तसूक्ष्मसाराधिष्ठानत्वेन च भगवद्भुक्तशेषत्वोप-पत्त्योक्तवचनानाम् अयुक्तार्थत्वाभावात् । "आविभागेन दृष्टत्वात्" (ब्र.सू. ४.४.४) इत्यधिकरणे "यानेवाहं शृणोमि, यान् पश्यामि, यान् जिघ्रामि, तानेवैत इदं शरीरं विमुच्यानुभवन्ति" (च.शि.) इति श्रुतिमुदाहृत्य साक्षाद्भगवद्भुक्तभोक्तृत्वसमर्थनं तु सायुज्यादिभाग्जीवविषयमिति मन्तव्यम् ।

**यत्तु** निषिद्धमद्यमांसादिसेवनेन सेवमानस्य सुखं तावदुत्पद्यत इत्यनुभवसिद्धम् । तच्चान्त-र्यामिणो भोगमन्तरेण न सम्भवितुमर्हतीत्यतो मद्यादावपि जीवेन्द्रियागोचरसारभागो भगवद्भोग्यो-ऽस्तीति तदप्यभव्यम् । "अनुभूयमाना अपि दुर्गन्धादयो न फलहेतवः" इति तेषां भगवत्सुखा-नभिव्यञ्जकत्वस्य टीकायां स्फुटमुक्तत्वात् । दुर्गन्धादिसमानन्यायत्वान्मद्यादीनां "शुचिवस्त्वेव भगवतो भोग्यम्" इति टीकायाम् अपवित्रवस्तुनो भगवदुपभोग्यस्यैवकारेण व्यावर्तनाच्च । न चैवम् "अत्ता चराचरग्रहणात्" (ब्र.सू. १.२.९) इति भगवतः सर्वभोक्तृत्वोक्तिविरोध इति वाच्यम् । पापिजीवं प्रत्यसारभोजकत्वमेव भगवतो भोग इत्यभ्युपगमेन तस्य सर्वात्तृत्वाविरोधात् । तथा च **प्राचीनटीका** "देव-दानव-मानवानां सार-असार-मिश्रभोक्तृत्वेऽपि न भगवतः सर्वभोक्तृत्वहानिः । स्वप्रिय-द्वेषि-उदासीनानां सार-असार-मिश्रभोजकत्वस्यापि स्वभोगत्वात्" इति । श्रुतिगीता-तात्पर्ये च,

"असताम् अधमाचारो हरिदृष्ट्याऽऽत्मपूजनम् ।
तस्याधोगमनायेति श्रुतिराहाखिलक्रियम् ॥" इति ।

पापात्मनां मद्यमांसादनाद्यसदाचरणस्य तदधोगमनाय भगवता कारितत्वेन तदपि तस्य सुखहेतुरिति विभावितमिति ।

भागवतैकादशस्कन्धगतायाः "लोके व्यवायामिषमद्यसेवा" (भाग. ११.५.११) इत्यादि-त्रिश्लोक्यास्तात्पर्यम्—

"व्यवायामिषमद्यानि हरेः पूजार्थमेव तु ।
वामदेव्यो नाम यज्ञो व्यवायो हरिपूजनम् ।

पितृयज्ञो देवयज्ञो मांसेन हरिपूजनम् ।
व्यवाययज्ञे मद्यं तु सोमात्मकतयेष्यते ।
क्षत्रियादेर्न विप्राणां विप्रो द्रोषेण लिप्यते ।
अरागतः प्रवृत्तिस्स्याद् रागो दोषस्य कारणम् ।
घ्राणभक्षोऽथवा यज्ञे दैवे सर्वस्य चेष्यते ।
पैष्टमद्यस्य मध्वादि क्षत्रियस्य न दुष्यति ।
दैवे रत्यैव च प्रीतिर्विष्णोः पुत्रात्तु मानुषे ।
तस्माद्विहितमात्रेषु रागं मुक्त्वा यथाविधि ।
समाहितो हरिं स्मृत्वा वर्तन् याजी हरेर्भवेत् ॥''(क्रियाविधाने) इति

इत्यत्र अधिकारिभेदेन भक्षभेदेन च मद्यग्रहणाभिधानेन पितृयज्ञे देवयज्ञे मेध्यपशुमांसस्य स्वीकारा-भ्युपगमेन च तत्र मद्यमांसादौ जीवेन्द्रियागोचरभगवद्भोक्तव्यसाराभ्युपगमेऽपि न कोऽपि दोषः । यथा चैतदेवं तथा व्याख्यातं सुधीन्द्रतीर्थश्रीमच्चरणैः । अतः साधूक्तं ''स्थूलस्य जीवभोग्यस्य विषय-स्याभोगोक्तेः सूक्ष्माशनस्य चाङ्गीकारात्'' इति । **इति भगवद्भोगनिर्णयः** ।

भाष्ये 'शारीरादात्मनः' इत्यनन्तरम् 'इति'शब्दोऽध्याहर्तव्यः । तस्य च 'आह' इत्यन्वयः । **अयं** श्रुतावुक्तः । कुत इत्यतः प्रवृत्तम् 'शारीरात्' इति भाष्यं भाष्योक्तसाध्यहेत्वोः प्रयोज्य-प्रयोजकभावलक्षणाय व्याचष्टे **न हीति** । शारीरशब्दो न जीवमात्रार्थः, येनोक्तविविक्ताहारत्वाभाव-प्रसङ्गः । किन्तु जागरलक्षणावस्थाविशेषविशिष्टपर एवेति शङ्कते **नन्विति** । **स्वप्नेति** । स्वप्नसुषुप्ती अवस्थे यस्य तथेत्यर्थः । ननु ''स्यान्निद्रा शयनं स्वापः स्वप्नः संवेश इत्यपि'' (अ.को.) इत्यमरे स्वप्नशब्दस्य शारीरावस्थाविशेषवाचिनः कथं शारीरार्थकत्वम् ? इत्यत आह ''**स्वपो नन्**'' **इति स्वप्नशब्दः कर्तरीति** । यद्यपि भावे ''अकर्तरि च कारके'' इत्यधिकारे ''ञि ष्वप् = शये'' इत्यतो नन्प्रत्ययो भवतीति वैयाकरणैर्भाव एव नन्प्रत्ययोऽभिहितः, न कर्तरि । तथाऽपि ''कृत्यल्युटो बहुलम्'' इत्यत्र बहुलग्रहणात् कर्तर्यपि भवतीति भावेनैवमुक्तमिति **स्वामिनः** । आदिशब्दार्थमाह **सुषुप्तश्चेति** । स्वपेः 'गत्यर्थाकर्मक' इत्यादिना कर्तरि क्तप्रत्यय इति भावः । चशब्दसमुच्चेयमाह **न केवलं जाग्रदिति** । जागरावस्थाऽऽपन्न इत्यर्थः । अवस्थाभेदेन भेदशङ्कनात् तत्परिहाराय भाष्यतात्पर्यमाह **तथा चेति** । **शारीरत्वं कुत इति** । शरीराभिमानयोगाद् जागरा-वस्थापन्न एव जीवः शारीरः, न स्वप्नाद्यवस्थापन्नोऽपीति कुतस्तस्य शारीरत्वमित्यर्थः । 'जाग्रदा-दिषु' इत्यनूद्य तत्र शेषमाह **जाग्रदादिष्विति** ।

ननु ''जागृ = निद्राक्षये'' इत्यतो लटः शतरि जाग्रच्छब्दो निष्पन्नः । स च जागरावस्था-कर्तारमाह । आदिशब्दश्च स्वप्नसुषुप्त्यवस्थाकर्तारम् इति तत्कथं 'जाग्रदादिष्ववस्थासु' इति सामानाधिकरण्यम् ? इति चेन्न । जाग्रच्छब्दस्य भावप्रधाननिर्देशत्वेन जाग्रत्त्वार्थकत्वात्, जाग्रत्त्वं च जागरावस्थैव, यद्वक्ष्यति ''जाग्रदवस्थो गृह्यते'' (प्र.दी. ८.१०) इति । एवमादिशब्दोऽप्यवैरूप्याय अवस्थापर एवेति युक्तं सामानाधिकरण्यम् । ''देहयोगाद् वासोऽपि'' (ब्र.सू.३.२.६) इत्यधिकरणादौ जाग्रदवस्थाप्रेरकत्वम् इत्यादिव्यवहारोऽपि भावप्रधानत्वेनैव निर्वाह्य इति । **उक्तविधया** ''औपाधिकं भेदमङ्गीकृत्य'' इत्युक्तप्रकारेण । **भगवत्पक्षेऽपि** भगवत्पक्षे तु ।

**शारीराविवितीति** । भाष्ये जीवः, **ईश्वरसंज्ञितः** ''ईश्वर इति संज्ञा अस्य सञ्जाता'' इति इतच्प्रत्ययः, ईश्वरशब्दादभिहितः परश्च । ''शारीरौ ज्ञेयौ'' इत्युक्तौ जीवस्य शरीरवत्त्वेन शरीराभिमानितया, 'तस्येदम्' इति शरीरसम्बन्धित्वेन वा, अणि शारीरशब्दार्थत्वं युक्तम् । ईश्वरस्य तु तदयोगात् कथं शारीरत्वम् ? तथात्वे च जीवस्येव संसारादि स्यात् ? इत्यत उत्तरार्धं प्रवृत्तम् । तत्र 'तस्येदम्' इत्यादिना अणि जीवे शारीरशब्दः, ईश्वरे तु शेषे = ''अपत्यादि-चतुरर्थ्यन्ताद् अन्योऽर्थः शेषः'', तत्राणादय इति लक्षणं च, अधिकारश्चेति वदद्भिर्वैयाकरणैरुक्तत्वेन ''शरीरेण हीनः'' इत्यर्थे शैषिके अण्प्रत्यये सति निष्पन्नो वर्तत इति वक्तुम् 'अनादिबन्धनः' इति, 'नित्यमुक्तः' इति चोक्तमिति तस्याभिप्रायो व्याख्यातव्यः ।

समुच्चयादेरयोगादाह **च इति** । चशब्द इत्यर्थः । अव्ययानाम् अनेकार्थत्वादिति भावः । **भेदश्रुतेः** 'शारीरादात्मनः' इति भेदाभिधानस्य । **मुख्य इति** । तस्य औत्सर्गिकत्वादिति भावः । कुतो विनिगमनम् ? इति शङ्कितम्, तदनुवदति **अत इति** । **प्राचीनटीकायां तु**— भगवतः शारीरशब्दार्थत्वं भेदश्रुतिसामर्थ्यादपि सिद्ध्यतीत्यभिप्रायेणाह **भेदश्रुतेश्चेति** । न हि जीवः स्वस्मादेव, स्वयं भिन्न इति 'अस्मात्' इति पदव्यावर्त्यो भगवानेव स्यादित्यर्थ इति 'भेदश्रुतेश्च' इति पृथग्योगो व्याख्यातः । भाष्ये— 'आह च' इति चशब्दश्रवणादाह **न केवलमिति** । **प्रविविक्तभुग्यतः** 'प्रविविक्तभुक्त्वात्', 'स्थूलाभोगात्' इति हेत्वोर्यथाश्रुतसाध्याभ्यामन्वये विरुद्धता स्यात् ? इत्यत आह **अभोक्ता च भोक्ता चेत्येतयोरिति** । **व्युत्क्रमेण** प्रविविक्तभुक्त्वात् 'भोक्ता' इति, स्थूलाभोगाद् 'अभोक्ता च' इति व्युत्क्रमेण । तथा च न विरुद्धतेति भावः ॥ ८-१० ॥

**गीतातात्पर्यनिर्णयः**

**नित्यपूर्णबलत्वात्तु बलं कामविवर्जितम् ।**
**अराजसबलश्चैव स्थानेभ्योऽन्येष्वयोजनात् ॥**

*न्या०दी०*— विषयभोगनिरपेक्षतया नित्यपूर्णबलत्वात् कामवर्जितं बलम् । अस्थानेऽप्रयुज्यमानत्वाद् रागविवर्जितं बलम् । रागिणो ह्यस्थानेऽपि बलं प्रयुञ्जते । कामरागविवर्जितबलदश्चेति वा ।

**गीतातात्पर्यनिर्णयः**

**एतादृशबलात्माऽसौ बलिनां बलदः स्वयम् ।**
**वेति पूर्णत्ववाची स्यात् तद्रतेर्बलमुच्यते ।**
**प्रायो हि कामिता अर्था धर्मं हन्युर्हरिः पुनः ।**
**न धर्महानिकृत् किन्तु कामितो धर्मवृद्धिकृत् ।**
**धर्माविरुद्धकामोऽतो विष्णुर्भूतेषु संस्थितः ।**

*न्या०दी०*— अर्थान्तरमुच्यते **एतादृशेति** । एतादृशबलात्मेत्यनुवादः । अर्थान्तरं चोच्यते **वेति** ॥ तद्रतेः पूर्णरतित्वात् । अत्रापि कामरागराहित्यं पूर्ववत् । धर्माविरुद्धेच्छाप्रेरकत्वाच्चेति ज्ञातव्यम् । अप्सु रस इत्यादिव्यवस्थयाऽबादिसर्वेषां रसादिसर्वदोऽतो रसादिनामेत्यर्थः ।

*भा०दी०*— **अर्थान्तरमिति** । बलपदस्येति योज्यम् । **अनुवाद इति** । तथा च न पुनरुक्तिरिति भावः ॥ **अत्रापीति** । पूर्णरतित्वरूपबलपदार्थेऽपीत्यर्थः ॥ **पूर्ववदिति** । रसयतीत्यादौ तत्प्रेरकत्वं यथोक्तं तथा हरिः पुनर्न धर्महानिकृदित्यादि कामपदार्थे धर्माविरुद्धेच्छाप्रेरकत्वाच्च धर्माविरुद्धकाम इति योजनेति भावः । अप्सु स्थित्वा रसयतीत्यादेः फलितार्थपरस्मृतिशेषार्थमाह **अप्सु रस इत्यादिव्यवस्थयेति** । अपां रसः पृथिव्या गन्धः शशिसूर्ययोः प्रमेत्येवं व्यवस्थयेत्यर्थः ॥ ११ ॥

**गीतातात्पर्यनिर्णयः**

**एवं स सर्वतश्चान्यः स्वतन्त्रश्चैव सर्वगः ।**
**व्यवस्थयैव सर्वेषां सर्वदा सर्वदः प्रभुः ॥ ११ ॥**

*न्या०दी०*— रसाद्यभेदात्तन्नामा किं न स्यादित्यत आह **सर्वत इति** ॥ तत्र स्वातन्त्र्यं हेतुः । रसादेरस्वातन्त्र्यं प्रसिद्धमिति भावः ॥ ११ ॥

**गीता**

## ये चैव सात्त्विका भावा राजसास्तामसाश्च ये ।
## मत्त एवेति तान्विद्धि न त्वहं तेषु ते मयि ॥ १२ ॥

*वि०वि०*— न केवलं रसादिधर्मप्रेरकः किं नाम सर्वप्रेरकश्चेत्यत आह **ये चैवेति** । यथा भगवदधीनमिदम् एवं भगवानपि तदधीनोऽस्तु भूः भूधरवदित्यत आह **नत्त्विति** । नाहं जगदायत्तः तत्तु मदायत्तमित्यर्थः ॥

*वा०ल०*— 'मत्त एवेति तान् विद्धिः' इत्यत्र तान् गुणान् मत्त एवेति विद्धि । न त्वहमेव ते गुणा इति विद्धीति एवकारेण स्पष्टमैक्यनिषेधाच्च उक्त एवार्थः । अहं तेषु गुणेषु न, ते गुणा मदाधारभूता न । किन्तु ते गुणा एव मयि, अहमेव तेषां नियामकतया आधार इत्यर्थः । अथवा अहं तेषु न, ते मय्यपि न । असङ्गत्वादिति भाघः ॥

*सा०सं०*— न केवलं रसादिधर्मप्रेरकः किन्नामाऽब्रादिसर्वप्रेरकश्चेत्याह **ये चेति** । **ये च भावाः** पदार्थाः । **सात्त्विकाः** सत्त्वगुणविकाराः । **राजसास्तामसाश्च तान्** सर्वान् पदार्थान् । **मत्त** एवोत्पन्नान् **विद्धि** । तथा **ते** मयोत्पन्नाः पदार्थाः । **मयि** मदाधारतया । मदुपजीवनेनेति यावत् । वर्तन्त इति विद्धि । यथेदं जगत् त्वदधीनं तथा त्वमपि किमेतदधीन इत्यतो नेत्याह **न त्वहं तेष्विति** । तदुपजीवनेनाहं नैव तिष्ठामीत्यर्थः । ये च ये चेति पृथगुक्तिः सर्वेषां त्रिगुणविकारत्वेऽपि सत्त्वादिप्राचुर्याभिप्रायेणेति ज्ञेयम् ॥

*अ०प्र०*— किञ्च, **ये चेति** ।

ये चैव[१], सात्त्विका भावाः[२], राजसा भावाश्च[३], ये तामसा भावाश्च[४], तान्[५], मत्त एवेति[६], विद्धि[७], एवमपि तु[८], तेषु[९], अहं[१०] न वर्ते[११] ते तु मयि वर्तन्ते इत्यन्वयः ।

ये चैव = ये चान्येऽपि[१], सात्त्विका भावाः = शमदमादयः[२], राजसा भावाश्च = हर्षदर्पादयः[३], ये तामसा भावाश्च = शोकमोहादयः[४], प्राणिनां स्वकर्मवशाज्जायन्ते तान् सर्वान्[५], मत्त एवेति = मत्त एव जातानिति[६], विद्धि = जानीहि मदीयप्रकृतिगुणकार्यत्वात्[७], एवमपि तु तेषु अहं न वर्ते[११] जीववत्तदधीनोऽहं भवामीत्यर्थः[११] ते तु = मदधीनास्सन्तो मयि वर्न्तते इत्यर्थः । भू भूधरयोः इव नान्याधीनत्वमित्याह **न त्विति** । ते मयि आधेयत्वेन स्थिताः, न तु अहं तेषु आधेयत्वेन स्थितः । मणिसूत्रमिव तत्स्थोऽपि

'तदाधार एव भर्त्ता सन् भ्रियमाणो बिभर्ति
एको देवो बहुधानिष्ठः' इति श्रुतेः ।

'तदाश्रितं जगत्सर्वं नासौ कुत्रचिदाश्रितः' इति वचनात् ।

यद्वा, अर्थान्तरं— ये चैव सात्त्विका भावाः सात्त्विकाः सत्त्वगुणाविर्भूताः भावाः प्राणिगणाः राजसा भावाश्च रजसाविर्भूताः प्राणिगणाश्च ये तामसाभावाश्च ये तमोगुणाविर्भूताः प्राणिगणाश्च[४], ये वर्तन्ते ते मत्सकाशादेव जाता इति तान् विद्धि[५], तेषु भूतेषु नाहं व्यवस्थितः ते तु मयि आधीनत्वेन सन्तीत्यभिप्रायः ॥ १२ ॥

**भाष्यम्**

**"न त्वहं तेषु" इति तदनाधारत्वमुच्यते । उक्तं च— "तदाश्रितं जगत्सर्वं नासौ कुत्रचिदाश्रितः ॥" इति गीताकल्पे ॥ १२ ॥**

***प०टी०***— ननु सर्वगतो हरिः कथं भूतेषु नावस्थित उच्यते ? इत्यत आह **न त्विति** । भगवतोऽनाधारत्वे प्रमाणमाह **उक्तं चेति** ॥

***न०टी०***—ननु भगवतः सर्वभावेषु स्थित्यभावे परिच्छिन्नत्वम्, 'सर्वभूतस्थमात्मानम्' इत्याद्युक्तिविरोधश्च स्यादित्यत आह **न त्विति** । तत्र प्रमाणमाह **उक्तं चेति** ॥

***प्र०दी०***— 'सर्वभूतस्थमात्मानं' इत्युक्तत्वात् "न त्वहं तेषु" इति कथमुच्यत इत्यत आह— **न त्वहमिति** । तदनाधारत्वं तदुपजीवनेन स्थित्यभावः । कुत एतदित्यत आह— **उक्तं चेति** । न केवलमुक्तविरोधादिति चार्थः ॥

***भा०दी०***— **इत्युक्तत्वादिति** । 'पूर्वाध्याये उक्ते'ति सर्वभूतस्थमित्युक्तेरित्यर्थः ॥

***भा०र०***— "मत्त एवेति तान् विद्धि (७.१२) इत्युपसंहाराच्च" (गी.ता. ७.१३-२३) इत्युत्तरप्रस्थानोक्तिं हृदि कृत्वाऽऽह **उपसंहारवाक्य इति** ॥ ११-१२ ॥

***गीताक्षरार्थस्तु***— एतावता ग्रन्थेन ज्ञानं निरूपितम् । अथ प्राक् प्रतिज्ञातं विज्ञानपदोक्तं हरेरलौकिकमाहात्म्यमुच्यते **'रसोऽहम्' इत्यादिना** । **अप्सु** यः सारः स **रसः** सः **अहमस्मि** रसादीनां सत्ताप्रतीत्यादिकारणत्वात् तद्भोक्तृत्वात्, तस्योपास्यत्वाच्च, 'रसोऽहमप्सु', 'प्रभाऽस्मि', 'पुण्यो गन्धः' इत्याद्यभेदोक्तिः । नन्वबादयो धर्मिणो भगवदधीनाः, तद्भोग्याश्चाङ्गीक्रियन्ते न वा ।

नेति पक्षे "अहं कृत्स्नस्य" (७.६) इत्युक्तविरोधः । आद्ये तु 'अप्सु रसः' इत्यादेर्धर्मिभ्यो निष्कृष्य धर्माणां ग्रहणस्यानुपपत्तिरिति चेत्, उच्यते— धर्मिणोऽपि भगवदधीनास्तद्भोग्याश्चैव । तर्हि धर्मिभ्यो निष्कृष्य रसादिधर्माणां ग्रहणस्य किं प्रयोजनमिति न वाच्यम् । कारणत्वपक्षे अबादिस्वभावभूतानाम्, अबादिधर्मेषु सङ्ख्यादिषु श्रेष्ठानां च रसादीनाम् अबादिस्वभावत्वे, अबादिधर्मेषु श्रेष्ठत्वे, रसादित्वे च भगवानेव विशेषतो नियामक इति महामाहात्म्यप्रत्यायनाय विशेषशब्दोपादानात् ।

**इदमुक्तं भवति** । यथा लोके कुविन्दादिः पटादिद्रव्येष्वेव व्यापारवान्, न तु तदीयेषु गन्धरसादिषु गुणेषु, तद्धर्मेषु च गन्धत्वादिषु पृथग्व्यापारवान् । किन्तु गन्धरसादिगुणास्तद्गतगन्धत्वादिधर्माश्च पटादिजन्मानुषङ्गिजन्मान एव । न तथा भगवान् । अपि तु अबादिधर्मेषु रसादिषु तद्धर्मेषु स्वभावत्वादिषु पृथक् प्रयत्नवान्, न त्वबादिनियमानुषङ्गिसत्ताकास्त इति दर्शयितुं विशेषशब्दा उपात्ता इति । भोगपक्षेऽपि अबादिभोगादप्यतिशयेन च रसादेर्भोगः परमेश्वरस्येति प्रदर्शनं विशेषशब्दोपादानप्रयोजनम् । अपि च, अबादिभ्यो विशेषतोऽपि रसादिषु भगवदुपासनार्थं विशेषशब्दग्रहणोपपत्तिरिति ।

अस्त्वेवं धर्मिभ्यो निष्कृष्य धर्माणामुपादानं सप्रयोजनम् । धर्माणां काम-बल-गन्धानां यानि धर्माविरुद्धत्व-कामरागविवर्जितत्व-पुण्यत्वविशेषणानि तेषामुपादानं किमर्थम् ? इति चेत् "कामादिषु विशिष्टेष्वेव भगवानुपास्यः, न धर्मविरुद्धेषु, अशुचिषु" इति ज्ञापनाय धर्माविरुद्धत्वादिविशेषणम् । "पुण्यगन्धस्यैव भगवतो भोगः, न दुर्गन्धस्य" इति ज्ञापयितुं च गन्धे पुण्यत्वविशेषणमिति । "शशिसूर्ययोः प्रभाऽस्मि" इति तत्सत्ताप्रतीत्यादिकारणत्वात्, तद्भोक्तृत्वात् तत्प्रतिमाकत्वाच्च तदभेदोक्तिरिति सर्वत्र व्याख्येयम् । **खे** आकाशे **शब्दः** ध्वनिः, **पौरुषं** पुरुषस्य तेजः, "पौरुषं पुरुषस्योक्तं भावे कर्मणि तेजसि" (वि.को.) इति विश्वोक्तेः ॥ ८ ॥

**पुण्यो गन्धः** शुचिः सुरभिर्गन्धः, **विभावसौ** अग्नौ **तेजो** दीप्तिः, **जीवनं** प्राणधारणम्, **तपः** कृच्छ्रादि ॥ ९ ॥

**सर्वभूतानां बीजं** कारणं **मां विद्धि** । "यतो वा इमानि भूतानि" (तै.उ. ३.१) इति श्रुतेः **बुद्धिमतां** बुद्धिमत्सु, प्रस्थानान्तरे (गी.ता.) तथोक्तेः । **तेजस्विनां** तेजस्विषु **तेजः** प्रागल्भ्यम् । ॥ १० ॥

**बलवतां** बलवत्सु **कामरागविवर्जितम्** । असन्निकृष्टेषु विषयेषु तृष्णा **कामः**, प्राप्तेषु विषयेषु रञ्जना, अशोभनेषु शोभनाध्यासो वा **रागः**, ताभ्यां विवर्जितम् । **बलम्** अहमस्मि । **भूतेषु**

**धर्माविरुद्धः कामोऽस्मि** । अत्र प्रकरणे 'अप्सु' इत्यादि सप्तमी अबादिनां रसादौ भगवदुपासने पार्षदत्वज्ञापनाय ॥ ११ ॥

विज्ञाननिरूपणमुपसंह्रियते **ये चैवेति । ये चैव** सत्त्वगुणनिर्वृत्ताः, रजोगुणनिर्वृत्ताः, तमोगुण-निर्वृत्ताश्च ये **च** केचिद् **भावाः** पदार्थाः **तान् मत्त एव** मत्कारणकानेव **विद्धि । तेषु** भावेषु **अहं** तदुपजीवनेन न तिष्ठामि । "सर्वभूतस्थमात्मानम्" (६.२९) इत्यत्र स्थितिमात्रोक्तावपि तदुपजीवनेन स्थित्यभावोऽभिसंहित इति न तद्विरोधः । **ते तु मयि** मदुपजीवनेनैव वर्तन्त इति च **विद्धि** । 'उपसंहारवाक्ये' इति टीकोक्तेः "मत्त एवेति तान् विद्धीत्युपसंहाराच्च" (गी.ता.७.१३) इति तात्पर्यनिर्णयवचनाच्च इतिशब्दो विज्ञाननिरूपणसमाप्तिवचनोऽपि व्याख्येयमिति ॥ १२ ॥

**गीतातात्पर्यनिर्णयः**

**ये चैव सात्त्विका भावा राजसास्तामसाश्च ये ।**
**तत एव न चान्यस्मात् तदायत्तमिदं न सः ॥**
**अन्यायत्तो** ............................... **॥ १२ ॥**

*न्या०दी०*— न केवलं रसादिधर्मप्रेरकः, किंनामाऽबादिप्रेरकश्चेत्याह **ये चेति** ॥ यथा भगव-दधीनमिदमेवं भगवानेतदधीनोऽस्तु, भूभूधरादिवदित्यत आह **तदायत्तमिति** ॥ इदमेव तदायत्तं न त्वसावेतदायत्त इति भावः । अनेन "न त्वहं तेषु ते मयि" इत्यस्य वैलोम्येनार्थ उक्तो भवति ॥

*भा०दी०*— गीतामवतारयति **न केवलमिति** ॥ **भूभूधरवदिति** । भूमेः पर्वतानां चान्यो-न्याश्रयभावस्तथेत्यर्थः ॥ **वैलोम्येनेति** । पूर्वापरभावेनेत्यर्थः ॥ १२ ॥

**गीता**

## त्रिभिर्गुणमयैर्भावैरेभिः सर्वमिदं जगत् ।
## मोहितं नाभिजानाति मामेभ्यः परमव्ययम् ॥ १३ ॥

*वि०वि०*— सर्वे भावा दृश्यमाना गुणमया इति दर्शयति **त्रिभिरिति** । एभिः देहादिभिः ज्ञानिव्यावृत्त्यर्थमुक्तम् **इदमिति** । व्यवहारपतितमित्यर्थः । एभ्यो गुणमयेभ्यः परं व्यतिरिक्तम् । गुणमयब्रह्मादिदेहादीन् दृष्ट्वा मायामोहिताः विष्णोरपीदृशः देहादिरिति मन्यन्त इत्यर्थः । उक्तं च—

'गौणान् ब्रह्मादिदेहादीन्दृष्ट्वा विष्णोरपीदृशः ।
देहादिरिति मन्वानो मोहितोऽज्ञो जनो भृशम् ॥' इति ॥ १३ ॥

***वा०ल०***— रसोऽहम् इत्यादिवाक्येषु स्वाभिप्रायमज्ञात्वा स्वस्य जडजीवैक्यं वदन्तो मिथ्याज्ञानिन इत्याह **त्रिभिर्गुणमयैरिति** ॥

***सा०सं०***— ननु विज्ञानोक्त्युपसंहारपरपूर्वश्लोके सत्त्वादिगुणनिष्पन्नानां सर्वपदार्थानां भगवानेव कारणं तदाश्रयश्चेत्युक्तम् । तेनैव गुणातीत इति चोक्तप्रायम् । तदेतदयुक्तम् । तथात्वेन गुणातीतत्वेनाज्ञायमानत्वस्य सगुणत्वेन ज्ञायमानत्वस्य च तवायोगादित्यत आह **त्रिभिरिति** । त्रित्वं योग्यतया गुणविशेषणम् । सत्त्वरजस्तमोरूपत्रिगुणमयैः गुणत्रयात्मकैरित्यर्थः । तादात्म्यार्थोऽयं मयट् । **भावैः** पदार्थैः । उपादानोपादेययोरभेदात् त्रिगुणतत्कार्यरूपैः । **एभिर्भावैः** पदार्थैरित्यर्थः ।

यद्वा **गुणमयैस्त्रिभिः** । प्रागुक्तरीत्या सात्त्विकादिभेदभिन्नैः । **एभिः** प्रमितैः **भावैः** पदार्थैः । **मोहितं** सत् इदं ज्ञानिभिन्नम् । **जगदेभ्यो** गुणतद्विकारेभ्यः **परं** व्यतिरिक्तम् । अत एव देहतोऽ**प्यव्ययं मां नाभिजानाति** । विपरीतं च जानातीत्यर्थः । अत्र एभिरिति सर्वपदार्थानां गुणमयत्वप्रदर्शनाय । प्रमितसर्वपरामर्शित्वात् तस्य । नच भगवद्विषयसगुणत्वादिमोहस्य कथं गुणमयात्मकाः पदार्थाः कारणम् । येन गुणमयैर्भावैर्मोहितमित्युक्तिर्युक्ता स्यादिति शङ्क्यम् । लोके गुणमयदेहादिकं दृष्ट्वा ईश्वरदेहादिरप्येतादृशः देहत्वादिति हेतुना गुणमयमिति मोहितमिति तात्पर्यात् । ज्ञानिनो यथावत्तया जानन्तीति तद्व्यावृत्त्यर्थ**मिदम्**मिति जगद्विशेषणम् । उपायाभावादज्ञजनस्य गुणातीतत्वेन भगवतोऽनुपलम्भः । देहादित्वानुमानाभासेन सगुणतया विपरीतोपलम्भश्चेत्युक्तं भवति ॥

***अ०प्र०***— एवंभूतं परमेश्वरं अयं जनः किमिति न जानाति । यद्वा, यद्येवं गुणमयं मां त्वदधीनत्वात् त्वं गुणातीतः स्वतन्त्रस्तर्हि त्वां तथात्वेन जीवाः कुतो न जानाति इत्यतः त्रिगुणमयपदार्थावृतत्वात् इत्याह **त्रिभिरिति** ।

एभिः[१], त्रिभिः[२], गुणमयैः[३], भावैः[४], इदं[५], सर्वं[६], जगत्[७], मोहितं[८], एभ्यः[९], परं[१०] अव्ययं[११] मां[१२], नाभिजानातीत्यन्वयः ॥

एभिस्त्रिभिः = पूर्वोक्तैः त्रिप्रकारैः कामादिभिः[२], गुणमयैः = गुणविकारैः[३], भावैः = स्वभावैः[४], इदं सर्वं जगत् मोहितं[८], अतो मां नाभिजानाति कथंभूतं एभ्यः गुणात्मकपदार्थेभ्यो

भावेभ्यः[९], परं = अतिरिक्तं एभिरसंस्पृष्टं एतेषां नियन्तारं[१०] अत एव अव्ययं नाशरहितं निर्विकारमित्यर्थः[११] एतादृशं मां नाभिजानातीत्यर्थः[१२] ॥ १३ ॥

**भाष्यम्**

**तर्हि कथमेवं न ज्ञायत इत्यत आह— त्रिभिरिति । तादात्म्यार्थे मयट् । तच्चोक्तम्— "तादात्म्यार्थे विकारार्थे प्राचुर्यार्थे मयट् त्रिधा ॥" इति । न हि गुणकार्यभूता माया । 'गुणमयी' इति च वक्ष्यति । सिद्धं च कार्यस्यापि तादात्म्यम्— "तादात्म्यं कार्यधर्मादेः संयोगो भिन्नवस्तुनोः ॥" इत्यादि व्यासयोगे । भावैः पदार्थैः । सर्वे भावा दृश्यमाना गुणमया एत एवेति इति दर्शयति— एभिरिति । ज्ञानिन्व्यावृत्त्यर्थमिदमिति । गुणमयदेहादिकं दृष्ट्वा ईश्वरदेहोऽपि तादृश इति मायामोहित इत्यर्थः । जगाद च व्यासयोगे— "गौणान् ब्रह्मादिदेहादीन् दृष्ट्वा विष्णोरपीदृशः । देहादिरिति मन्वानो मोहितोऽज्ञो जनो भृशम् ॥" इति । एभ्यः गुणमयेभ्यः । 'गुणेभ्यश्च परम्' इति वक्ष्यमाण-त्वात् । 'केवलो निर्गुणश्च' इत्यादि श्रुतिभ्यश्च । 'त्रैगुण्यवर्जितम्' इति चोक्तम् ॥ १३ ॥**

*प०टी०*— नन्वयं यदि भगवान् सर्वाधारो नान्याधारः, तर्हि किमिति सर्वविलक्षण एव न दृश्यते, सर्वसादृश्येनैव प्रतीयते ? इत्याशङ्कोत्तरत्वेनोत्तरश्लोकमवतारयति **तर्हीति** । 'गुणमयैः' इत्यस्य विवक्षितार्थमाह **तादात्म्येति** । मयटो विकारार्थत्वे 'मामेभ्यः' इत्यत्र गुणातीतत्वमयुक्तं स्यात् । अतस्तादात्म्यार्थतैवेत्यर्थः । मयटो विकारार्थत्वादर्थान्तरमेव नास्तीति कश्चिद्व्याख्याति । तं प्रत्याह **न हीति** । यदि मयटो विकारैकार्थता तदा प्रकृतेर्गुणविकारत्वं स्यात् । न च तद्युक्त-मित्यर्थः । कथं मयटो विकारैकार्थताभ्युपगमे प्रकृतेर्गुणविकारतापत्तिः ? इत्यत आह **गुणेति** । तादात्म्यार्थत्वे गुणातीतत्वमेव हरेः स्यात्, न गौणातीतत्वमित्यत आह **सिद्धं चेति** । 'भाव'-शब्दस्य नानार्थत्वात् विवक्षितार्थमाह **भावैरिति** । 'एभिः' इत्यस्य एवार्थमाह । केषाञ्चित्पदार्थानां गुणमयत्वमेव नास्तीति विपरीतप्रतीतिनिरासायाह **सर्व इति** । ब्रह्मादीनां मोहाभावात् कथं सर्वं जगन्मोहितम् ? इत्यत आह **ज्ञानीति** । श्लोकाभिप्रायं सप्रमाणकमाह **गुणमयेति** । गोणस्यैव तव गुणाबद्धत्वे कथं मोहः ? इत्याशङ्कां परिहर्तुं सप्रमाणकं चतुर्थपादं व्याचष्टे **एभ्य इति** ॥

*न०टी०*—ननु यदि भगवान् सत्वरजस्तमोगुणात्मकदेहानां ब्रह्मादीनां सर्वेषामाश्रयः स्वयमनन्याश्रयश्च, तर्हि तद्विलक्षणाप्राकृतापरिमितज्ञानानन्दादिस्वरूपदेहः स्यात् । तादृत्त्वाप्रतीतेरयमपि गुणात्मकदेह इति भावेनाशङ्क्य, एतां परिहर्तुमुत्तरं श्लोकमवतार्य व्याचष्टे **तर्हीति** । मयटोऽत्र विकारार्थत्वे 'मामेभ्यः परम्' इति गुणकार्येभ्य एव भगवतः परत्वं स्यात् । न गुणेभ्योऽपि अतस्तदुभयज्ञापनार्थं तादात्म्यार्थत्वं मयटः सप्रमाणकमाह **तादात्म्येति** । मायिनाऽत्र मयटो विकारार्थत्वमुक्तं 'गुणमयैः गुणविकारैः' इति । तत्पक्षे मायाऽपि गुणकार्यभूता स्यात् । न च तद्युज्यत इत्याह **न हीति** । ननु कथं गुणकार्यभूता स्यात् ? इत्याशङ्क्य, तस्याप्युत्तरश्लोके गुणमयीत्वाभिधानादित्याह **गुणमयीति** । ननु मूलप्रकृतेरकार्यत्वात् तादात्म्यं मयडर्थः स्यात् । एषां तु भावानां गुणकार्यत्वात् कथं तत्तादात्म्यम् ? इत्याशङ्क्य कार्यस्यापि तादात्म्यं सप्रमाणकमाह **सिद्धं चेति** । बह्वर्थत्वात् 'भाव'शब्दस्यात्र भगवद्विवक्षितार्थमाह **भावैरिति** । दृश्यमानसर्वभावानां गुणमयत्वज्ञापनार्थम् 'एभिः' इति निर्देशो नान्यव्यावृत्त्यर्थः । येनान्येभ्यः परत्वं भगवतो न सिद्ध्येदिति भावेनाह **सर्व इति** । 'इदम्' इति विशेषणं त्वन्यव्यावृत्त्यर्थमित्याह **ज्ञानीति** । एवं पदार्थाद्युक्त्वा श्लोकतात्पर्यार्थ्यं सप्रमाणकमाह **गुणमयेति** । ननु भगवद्देहस्य ब्रह्मादिदेहसादृश्यज्ञो जनः तर्ह्येव मोहितः स्यात्, यद्यसावतादृशः स्यात् ? तदेव कुतः ? इत्याशङ्कापरिहारत्वेन चतुर्थपादोक्तमतादृत्त्वं प्रकाश्य, उक्तवक्ष्यमाणसम्मत्या श्रुत्या च स्थापयति **एभ्य इत्यादिना** । स्वाभेदं स्वदेहस्य ज्ञापयितुं 'माम्' इत्युक्तं भगवतेत्यभिप्रायः ॥

*प्र०दी०*— ननु विज्ञाननिरूपणं प्रारभ्य 'त्रिभिः' इत्यादिकं किमर्थमुच्यत इत्यत आह— **तर्हीति** । ये चैवेति विज्ञाननिरूपणोपसंहारवाक्ये सत्त्वादिगुण-निर्वृतानां भगवान् कारणमाश्रयश्च तदनाश्रयश्चेत्युक्तम् । तेनैव गुणातीत इति चोक्तप्रायम् । तस्यायमाक्षेपः । एवं गुणातीततया सगुणश्च ज्ञायत इति शेषः । एवमनुपलम्भविपरीतोपलम्भाभ्यामुक्तमसदिति भावः । विकारार्थतानिरासार्थमाह— **तादात्म्येति** । मयटः तादात्म्यार्थत्वं कुत इत्यत आह— **तच्चेति** । तादात्म्ये प्रयोगं दर्शयितुमुपोद्घातमाह— **न हीति** । 'कार्यभूता' इत्युपलक्षणम् । गुणप्राचुर्यादिकमपि तस्यां न सम्भवति । ततः किमित्यत आह— **गुणेति** । ''दैवी ह्येषा गुणमयी मम माया'' इति मायाया गुणमयीत्वमुच्यते । न च तत्र विकाराद्यर्थता सम्भवति । ततः परिशेषतः तादात्म्यार्थता ग्राह्येत्यर्थः ।

अस्तु मयटः तादात्म्ये शक्तिः । अत्र विकारार्थतां परित्यज्य तद्ग्रहणे को हेतुरिति चेत् उच्यते । विकारार्थताग्रहणे मामेभ्यः परमित्यत्र गुणकार्येभ्य एव भगवतः परत्वमुक्तं स्यान्न तु

गुणेभ्यः । अतः तत्सङ्ग्रहाय तादात्म्यार्थताग्रहणम् । एवं तर्हि गुणेभ्य एव परत्वमुक्तं स्यान्न तु गुणकार्येभ्योऽपीति समानमित्यत आह— **सिद्धं चेति** । सिद्धं प्रमितम् । ततश्च गुणात्मकैरित्युक्ते गुणानां तत्कार्याणां चोपादाने सत्युभयपरत्वमुक्तं भवति । **कार्यधर्मादिरिति** । कार्यद्रव्यस्योपादानेन, गुणक्रियाजातिपूर्वाणां धर्माणां गुण्यादिभिरित्यर्थः । भावशब्दस्यानेकार्थत्वात्तस्य विवक्षितमर्थमाह— **भावैरिति** । एवं सति सर्वपरत्वलाभादिति भावः । नन्वेवमप्येभिरिति पुरोवर्तिनामेव ग्रहणान्न सर्वपरत्वसिद्धिरित्यत आह— **सर्व इति** । प्रमितपरामर्शोऽयं न परोवर्तिमात्रस्येति भावः । 'जगन्मोहितं' इत्यलं किं 'इदं' इत्यनेनेत्यत आह— **ज्ञानीति** । व्यवहारपतितमित्यर्थः । ननु भगवद्विषयस्य सगुणत्वमोहस्य कथं गुणात्मकाः पदार्थाः कारणमित्यत आह— **गुणमयेति** । देहत्वादिहेतुनेति शेषः । मायेति गुणमयानां ग्रहणम् । मोहितो जनः । तत्र प्रमाणमाह— **जगाद चेति** । आदिपदेनेन्द्रियादिग्रहणम् । यदर्थं तादात्म्यार्थग्रहणं कृतं तदाह **एभ्य इति** । ननु भगवतो गुणातीतत्वे प्रमिते तदर्थोऽयं श्रमः सफलः स्यात् । तदेव कुत इत्यत आह— **गुणेभ्यश्चेति** ॥

***भा०दी०***— **प्रारभ्येति** । रसोऽहमित्यादिनेति योज्यम् । अनुवादव्याजेन पूर्वश्लोकार्थं व्यनक्ति **ये चैवेति** । एवमित्यनूद्यार्थमाह **एवं गुणातीततयेति** । **उक्तमिति** । गुणातीतत्वगुणप्राचुर्यादिकमपीति मयटः प्राचुर्यार्थत्वं प्राधान्यार्थत्वं चात्र न युक्तमिति सूचितम् । आदिपदार्थोक्तिरुपादानेनेति जातिस्तत्तदसाधारणो धर्मः देहत्वादिहेतुनेति विमतो भ ............ यो देहत्वाच्च ब्रह्मादिदेहवत् । विमतानि शरीरेन्द्रियाणि गुणमयानि इन्द्रियत्वाच्चैत्रादीन्द्रियवदित्येवं देहत्वादिहेतुकानुमानेन मिथ्याज्ञानिनो भवन्तीत्यर्थः ॥

***भा०र०***— कृतामसङ्गतिशङ्कां परिहर्तुं पूर्वश्लोकार्थं वदन् आक्षेपविषयं दर्शयति **ये चैवेतीति** । **तेनैव** उपसंहारवाक्येनैव । **उक्तप्रायमिति** । न हि गुणबद्धो गुणनिवर्तितपदार्थकारणं भवतीत्यर्थाद् गुणातीतत्वमपि प्राप्तमिति भावः । **तस्य** गुणातीतत्वस्य । **अयं** भाष्यगतः 'कथम्' इत्ययम् । न पुनः कारणत्वस्य आश्रयत्वस्य वा, गीतायां तत्परिहाराप्रतीतेरिति भावः । 'एवम्' इत्यनूद्यार्थवर्णनम् **एवं गुणातीततयेति** । गुणमयाः पदार्थाः भगवद्विषयस्य सगुणत्वप्रकारकमोहस्य कारणम् । तेन च मोहेन गुणातीतत्वं न जानातीत्यस्यार्थस्य गीतायां वक्ष्यमाणत्वात्, गमनिकाभाष्ये तद्व्यावर्त्या शङ्का संयोज्येति भावेनाह **सगुणश्च ज्ञायस इति शेष इति** । 'नाभिजानाति' इत्यादिगीतानिवर्त्याशङ्कामुक्त्वा 'मोहितम्' इति गीताव्यावर्त्याक्षेपमाह— 'सगुणश्चेति' इत्यप्यवतारयन्ति । **एवमनुपलम्भविपरीतोपलम्भाभ्यामिति** । गुणातीतत्वानुपलम्भसगुणत्वोपलम्भाभ्या-

***न०टी०***—ननु यदि भगवान् सत्वरजस्तमोगुणात्मकदेहानां ब्रह्मादीनां सर्वेषामाश्रयः स्वयमनन्याश्रयश्च, तर्हि तद्विलक्षणाप्राकृतापरिमितज्ञानानन्दादिस्वरूपदेहः स्यात् । तादृत्त्वाप्रतीतेरयमपि गुणात्मकदेह इति भावेनाशङ्क्य, एतां परिहर्तुमुत्तरं श्लोकमवतार्य व्याचष्टे **तर्हीति** । मयटोऽत्र विकारार्थत्वे 'मामेभ्यः परम्' इति गुणकार्येभ्य एव भगवतः परत्वं स्यात् । न गुणेभ्योऽपि अतस्तदुभयज्ञापनार्थं तादात्म्यार्थत्वं मयटः सप्रमाणकमाह **तादात्म्येति** । मायिनाऽत्र मयटो विकारार्थत्वमुक्तं 'गुणमयैः गुणविकारैः' इति । तत्पक्षे मायाऽपि गुणकार्यभूता स्यात् । न च तद्युज्यत इत्याह **न हीति** । ननु कथं गुणकार्यभूता स्यात् ? इत्याशङ्क्य, तस्याप्युत्तरश्लोके गुणमयीत्वाभिधानादित्याह **गुणमयीति** । ननु मूलप्रकृतेरकार्यत्वात् तादात्म्यं मयडर्थः स्यात् । एषां तु भावानां गुणकार्यत्वात् कथं तत्तादात्म्यम् ? इत्याशङ्क्य कार्यस्यापि तादात्म्यं सप्रमाणकमाह **सिद्धं चेति** । बह्वर्थत्वात् 'भाव'शब्दस्यात्र भगवद्विवक्षितार्थमाह **भावैरिति** । दृश्यमानसर्वभावानां गुणमयत्वज्ञापनार्थम् 'एभिः' इति निर्देशो नान्यव्यावृत्त्यर्थः । येनान्येभ्यः परत्वं भगवतो न सिद्ध्येदिति भावेनाह **सर्व इति** । 'इदम्' इति विशेषणं त्वन्यव्यावृत्त्यर्थमित्याह **ज्ञानीति** । एवं पदार्थाद्युक्त्वा श्लोकतात्पर्यार्थ्यं सप्रमाणकमाह **गुणमयेति** । ननु भगवद्देहस्य ब्रह्मादिदेहसादृश्यज्ञो जनः तर्ह्येव मोहितः स्यात्, यद्यसावतादृशः स्यात् ? तदेव कुतः ? इत्याशङ्कापरिहारत्वेन चतुर्थपादोक्तमतादृत्त्वं प्रकाश्य, उक्तवक्ष्यमाणसम्मत्या श्रुत्या च स्थापयति **एभ्य इत्यादिना** । स्वाभेदं स्वदेहस्य ज्ञापयितुं 'माम्' इत्युक्तं भगवतेत्यभिप्रायः ॥

***प्र०दी०***— ननु विज्ञाननिरूपणं प्रारभ्य 'त्रिभिः' इत्यादिकं किमर्थमुच्यत इत्यत आह— **तर्हीति** । ये चैवेति विज्ञाननिरूपणोपसंहारवाक्ये सत्त्वादिगुण-निर्वृतानां भगवान् कारणमाश्रयश्च तदनाश्रयश्चेत्युक्तम् । तेनैव गुणातीत इति चोक्तप्रायम् । तस्यायमाक्षेपः । एवं गुणातीततया सगुणश्च ज्ञायत इति शेषः । एवमनुपलम्भविपरीतोपलम्भाभ्यामुक्तमसदिति भावः । विकारार्थतानिरासार्थमाह— **तादात्म्येति** । मयटः तादात्म्यार्थत्वं कुत इत्यत आह— **तच्चेति** । तादात्म्ये प्रयोगं दर्शयितुमुपोद्घातमाह— **न हीति** । 'कार्यभूता' इत्युपलक्षणम् । गुणप्राचुर्यादिकमपि तस्यां न सम्भवति । ततः किमित्यत आह— **गुणेति** । ''दैवी ह्येषा गुणमयी मम माया'' इति मायाया गुणमयीत्वमुच्यते । न च तत्र विकाराद्यर्थता सम्भवति । ततः परिशेषतः तादात्म्यार्थता ग्राह्येत्यर्थः ।

अस्तु मयटः तादात्म्ये शक्तिः । अत्र विकारार्थतां परित्यज्य तद्ग्रहणे को हेतुरिति चेत् उच्यते । विकारार्थताग्रहणे मामेभ्यः परमित्यत्र गुणकार्येभ्य एव भगवतः परत्वमुक्तं स्यान्न तु

गुणेभ्यः । अतः तत्सङ्ग्रहाय तादात्म्यार्थताग्रहणम् । एवं तर्हि गुणेभ्य एव परत्वमुक्तं स्यान्न तु गुणकार्येभ्योऽपीति समानमित्यत आह— **सिद्धं चेति** । सिद्धं प्रमितम् । ततश्च गुणात्मकैरित्युक्ते गुणानां तत्कार्याणां चोपादाने सत्युभयपरत्वमुक्तं भवति । **कार्यधर्मादेरिति** । कार्यद्रव्यस्योपादानेन, गुणक्रियाजातिपूर्वाणां धर्माणां गुण्यादिभिरित्यर्थः । भावशब्दस्यानेकार्थत्वात्तस्य विवक्षितमर्थमाह— **भावैरिति** । एवं सति सर्वपरत्वलाभादिति भावः । नन्वेवमप्येभिरिति पुरोवर्तिनामेव ग्रहणान्न सर्वपरत्वसिद्धिरित्यत आह— **सर्व इति** । प्रमितपरामर्शोऽयं न परोवर्तिमात्रस्येति भावः । 'जगन्मोहितं' इत्यलं किं 'इदं' इत्यनेनेत्यत आह— **ज्ञानीति** । व्यवहारपतितमित्यर्थः । ननु भगवद्विषयस्य सगुणत्वमोहस्य कथं गुणात्मकाः पदार्थाः कारणमित्यत आह— **गुणमयेति** । देहत्वादिहेतुनेति शेषः । मायेति गुणमयानां ग्रहणम् । मोहितो जनः । तत्र प्रमाणमाह— **जगाद चेति** । आदिपदेनेन्द्रियादिग्रहणम् । यदर्थं तादात्म्यार्थग्रहणं कृतं तदाह **एभ्य इति** । ननु भगवतो गुणातीतत्वे प्रमिते तदर्थोऽयं श्रमः सफलः स्यात् । तदेव कुत इत्यत आह— **गुणेभ्यश्चेति** ॥

*भा०दी०*— **प्रारभ्येति** । रसोऽहमित्यादिनेति योज्यम् । अनुवादव्याजेन पूर्वश्लोकार्थं व्यनक्ति **ये चैवेति** । एवमित्यनूद्यार्थमाह **एवं गुणातीततयेति** । **उक्तमिति** । गुणातीतत्वगुणप्राचुर्यादिकमपीति मयटः प्राचुर्यार्थत्वं प्राधान्यार्थत्वं चात्र न युक्तमिति सूचितम् । आदिपदार्थोक्तिरुपादानेनेति जातिस्तत्तदसाधारणो धर्मः देहत्वादिहेतुनेति विमतो भ ............ यो देहत्वाच्च ब्रह्मादिदेहवत् । विमतानि शरीरेन्द्रियाणि गुणमयानि इन्द्रियत्वाच्चैत्रादीन्द्रियवदित्येवं देहत्वादिहेतुकानुमानेन मिथ्याज्ञानिनो भवन्तीत्यर्थः ॥

*भा०र०*— कृतामसङ्गतिशङ्कां परिहर्तुं पूर्वश्लोकार्थं वदन् आक्षेपविषयं दर्शयति **ये चैवेतीति** । **तेनैव** उपसंहारवाक्येनैव । **उक्तप्रायमिति** । न हि गुणबद्धो गुणनिवर्तितपदार्थकारणं भवतीत्यर्थाद् गुणातीतत्वमपि प्राप्तमिति भावः । **तस्य** गुणातीतत्वस्य । **अयं** भाष्यगतः 'कथम्' इत्ययम् । न पुनः कारणत्वस्य आश्रयत्वस्य वा, गीतायां तत्परिहाराप्रतीतेरिति भावः । 'एवम्' इत्यनूद्यार्थवर्णनम् **एवं गुणातीततयेति** । गुणमयाः पदार्थाः भगवद्विषयस्य सगुणत्वप्रकारकमोहस्य कारणम् । तेन च मोहेन गुणातीतत्वं न जानातीत्यस्यार्थस्य गीतायां वक्ष्यमाणत्वात्, गमनिकाभाष्ये तद्व्यावर्त्या शङ्का संयोज्येति भावेनाह **सगुणश्च ज्ञायस इति शेष इति** । 'नाभिजानाति' इत्यादिगीतानिवर्त्याशङ्कामुक्त्वा 'मोहितम्' इति गीताव्यावर्त्याक्षेपमाह— 'सगुणश्चेति' इत्यप्यवतारयन्ति । **एवमनुपलम्भविपरीतोपलम्भाभ्यामिति** । गुणातीतत्वानुपलम्भसगुणत्वोपलम्भाभ्या-

मित्यर्थः । **उक्तम्** 'गुणातीतः' इत्युक्तम् । **विकारार्थतेति** । तथा च सङ्करः "गुणमयैः गुणविकारैः" इति । "प्रयोगं च" इत्यत्र न केवलं प्रमाणसिद्धत्वमिति चशब्दः ।

ननु मयटः विकारः, अवयवः, प्राचुर्यम्, तादात्म्यं चेति चत्वारोऽर्थाः । तत्र "न हि कार्यभूत" इति विकारार्थत्वप्रतिषेधमात्रेण न परिशेषे वक्ष्यमाणः प्रवर्तते । प्रसक्तयोः प्राचुर्यावयवार्थयोरप्रतिषेधादित्यत आह **कार्यभूतेति** । **न सम्भवति** "इत्यपि ग्राह्यम्" इत्युपस्कर्तव्यम् । 'गुणमयीत्वम्' इत्यत्र 'त्वतलोर्गुणवचनस्य' इति सूत्रे गुणशब्दः शुक्लादिगुणवचन एवेति मनोरमायां व्यवस्थापितमिति न पुंवद्भावः । अत्र सत्त्वादेर्गुणशब्दार्थस्य द्रव्यत्वात् । अत एव 'स्त्रियाम्' इति सूत्रे 'व्यापिनीत्वात्' इति कैयटः । **विकाराद्यर्थता** विकारप्राचुर्याद्यर्थता ।

**तद्ग्रहणे** तादात्म्यार्थताग्रहणे । **गुणेभ्यः** परत्वम् । **तत्सङ्ग्रहाय** गुणपरत्वसङ्ग्रहाय । उपसंहारस्योत्पत्तेर्वा ग्रहणं प्रकृते न सम्भवतीत्यतो विवक्षितमर्थमाह **सिद्धं प्रमितमिति** । **इत्युक्ते** 'गुणमयैः' इत्यस्य 'गुणात्मकैः' इत्यर्थपर्यवसाने । 'कार्यधमदिः' इत्यत्र कार्यम् उपादेयद्रव्यम्, तद्**धर्माः** गुण-क्रिया-जाति-शक्ति-सादृश्य-विशिष्ट-अंशलक्षणाः च, आदयो यस्य उपादानद्रव्यस्य, गुणिनः, क्रियावतः, जातिमतः, शक्तिमतः, सदृशस्य, शुद्धस्य, अंशिनश्च इत्येवंरूपस्य समूहस्य स तथा, तस्येति विग्रहमभिप्रेत्य, कार्यस्योपादानेन, गुणस्य गुणिना, क्रियायाः क्रियावता च तादात्म्य-मित्यादिरूपेण व्याख्या द्रष्टव्येत्याह **कार्यधमदिरितीति** ।

**अनेकार्थत्वादिति** । "भावः स्वभावेऽभिप्राये चेष्टासत्तात्मजन्मसु । क्रियालीलापदार्थेषु बन्धुजन्तुविभूतिषु" इति विश्वप्रकाशाभिधानादिति भावः । एवमनेकार्थत्वेऽपि प्रकृते पदार्थार्थकत्वमेव युक्तम्, "एभ्यः परम्" इत्यनेन सर्वपदार्थेभ्योऽपि परत्वालाभादित्याह **एवमिति** । पुरोवर्तिमात्रस्य परामर्शे सति बुद्ध्या विविक्तस्यान्वयः । 'इदम्' इत्यस्यार्थः **व्यवहारेति** । लौकिकहानोपादानादिव्यवहारपदम् इत्यर्थः । "पामरजनस्य ग्रामस्था अपि न ग्राम्याः, वैलक्षण्याद्धि सज्जनाः" (गी.ता. १८.४०) इत्यादौ ज्ञानिनां पामरवैलक्षण्याभिधानेन ज्ञानिजनवैलक्षण्यवेदनादिति भावः ।

**देहत्वादीति** । "विमत ऐश्वरो देहो गुणमयः देहत्वात्, चैत्रदेहवत्", "ऐश्वराणीन्द्रियाणि गुणमयानि इन्द्रियत्वात् सम्मतवत्" इत्यनुमानेनेत्यर्थः । गुणमयपदार्था उक्तानुमानाभासोत्पादनद्वारा भगवद्विषयस्य सगुणत्वप्रकारकमोहस्य कारणमिति नोक्तचोद्यमिति भावः । ननु गुणमयपदार्थानां मोहकारणत्वे प्रतिपादनीये भाष्ये मायाशब्दः कथं प्रयुक्तः ? इत्यत आह **मायया इति** । वक्ष्य-

माणप्रमाणानुसारेण 'जनः' इति विशेष्योक्तिः । **अत्र** गुणमयपदार्थानाम् अनुमानाभासोत्पादनद्वारा सगुणत्वमोहे कारणत्वमित्यत्र । 'इन्द्रियादिग्रहणम्' इत्यत्र आदिशब्देन मनोग्रहणम् । "मनः सर्वेन्द्रियाणि" (आ.उ. १.३.३) इत्यादौ तस्य पृथगुक्तेः प्राणबुद्ध्यादिग्रहणमिति **अन्ये** । **अयं श्रमः** तादात्म्यार्थताग्रहणश्रमः । **तदेव** गुणातीतत्वमेव । भाष्ये **वक्ष्यमाणत्वात्** "गुणेभ्यश्च परं वेत्ति मद्भावं सोऽधिगच्छति" (१४.१९) इति चतुर्दशेऽध्याये गुणातीतत्वस्य । "**केवलः** जडामिश्रः **निर्गुणः** सत्त्वादिगुणहीनः" इति **तत्त्वप्रकाशिका** (ब्र.सू. १.१.११) ।

न च निर्गुणश्रुतिर्ब्रह्मणो ज्ञानानन्दादिगुणसामान्याभावप्रतिपादनाय प्रवृत्तेति न त्रिगुणातीतत्वे प्रमाणमिति वाच्यम् ।

"एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा ।
कर्माध्यक्षः सर्वभूताधिवासः साक्षी चेता ..................॥" (श्वे. ६.११)

इति स्वेनैव **एकः** प्रधानभूतः सर्वभूतेषु गुप्ततयाऽवस्थितः । न केवलं भूतेषु, सर्वव्यापी च, न केवलं सर्वभूतेषु स्थितिमात्रं च, सर्वभूतान्तर्यामी च, **अध्यक्षः** अधिपतिः सर्वभूतानामाश्रयः सर्वं साक्षादीक्षत इति **साक्षी, चेता** ज्ञानरूप इति बहुगुणविधानेन व्याघातापातात् । किं च निर्गुणवाक्यं छागपशुन्यायेन गुणत्रयशून्यत्वरूपविशेषोपसंहारपरम् अभ्युपगन्तव्यमिति भावेन 'त्रैगुण्यवर्जितम्' (म.भा.-मं.श्लो.) इति भारतवाक्यमुदाहृतम् । त्रयो गुणा एव त्रैगुण्यम् तद्वर्जितमित्याह गुणत्रयातीतत्वमत्र स्फुटमिति भाष्यं व्याख्येयम् । भारततात्पर्यनिर्णये च "निर्दोषकः सृतिविहीन उदारशक्तिः" (म.भा.ता.नि. २.५६) इत्यत्र 'त्रैगुण्यवर्जितम्' इत्यस्य निर्दोषपदेन व्याख्यानं सर्वदोषाणां गुणत्रयकार्यतया तद्वर्जने सर्वदोषविहीनत्वं फलतीति फलितार्थप्रदर्शनरूपमिति न तद्विसंवादशङ्का ॥ १३ ॥

**गीतातात्पर्यनिर्णयः**

**................ऽचेतनया तन्मेयत्वात्तु मायया ।**
**लक्ष्म्या वशगया लोको विष्णुनैव विमोहितः ।**
**ये तु विष्णुं प्रपद्यन्ते ते मायां तां तरन्ति हि ॥**

*न्या०दी०*— एवं सर्वप्रेरकः परमात्मा कुतो लोकेन न ज्ञायत इत्यत आह **अचेतनयेति** । प्रकृत्येति शेषः ॥ **तन्मेयत्वादिति** । विष्णुनैव सम्यक् ज्ञातत्वात् । लक्ष्म्या च इत्यर्थः । अनेन त्रिभिरित्यादेरर्थ उक्तो भवति । ममेत्यस्यार्थो **वशगयेति** । विष्णुनैवेत्यनेन अचेतनप्रकृत्याद्याहितं

स्वविषयमोहं भगवान् कुतो न वारयतीत्याशङ्कानिवारकस्य 'नाहं प्रकाश' इत्यस्यार्थ उक्तो भवति । यदि साक्षाद्भगवत्या लोको मोहितस्तर्हि न कस्यापि ज्ञानमित्यत आह **ये त्विति** ॥ अनेन मामेवेत्येतद्व्याख्यातं भवति ।

*भा०दी०*— लक्ष्म्यां मायाशब्दनिर्वचनपरं तन्मेयत्वादिति पदम् । तदर्थमाह **विष्णुनैवेति** । माङ् मान इत्यतः कर्मणि यप्रत्यये स्त्रीत्वात् टाप्प्रत्यय इति भावः ॥ **लक्ष्म्या चेति** । जडप्रकृत्या समुच्चयाय चशब्दोऽध्याहृतः ॥ **अनेनेति** । अचेतनयेत्यादिग्रन्थेन इत्यर्थः । उपादानोपादेययोरभेदाद्वा प्रकृत्या इत्युक्त्या तन्मयोपलक्षणाद्वा त्रिभिरित्यादेरर्थ उक्तो भवतीत्युक्तम् ॥ **इति शङ्कानिवारकस्येति** । प्रकृतिद्वयं निमित्तीकृत्य हरिरेव मोहक इत्युक्त्या तन्निवारणमिति भावः ॥

**गीतातात्पर्यनिर्णयः**

**लक्ष्मीः सा जडमाया या देवता ते उभे अपि ॥**
**विष्णोर्वशे ततोऽनन्यभक्त्या तं शरणं व्रजेत् ॥ १३ ॥**

*न्या०दी०*— भगवत्प्रपत्त्या कथं मायातरणमित्यत आह **लक्ष्मीरिति** ॥ ननु पूर्वं लक्ष्म्या एव भगवद्वशत्वस्योक्तत्वात् कथं ते उभे अपि विष्णोर्वशे उच्येते इत्यत उक्तम् **लक्ष्मीः सा जडमाया या देवतेति** ॥ लक्ष्म्या भगवद्वशत्वे उभयोरपि भगवद्वशत्वं भवति । अचेतनप्रकृतेर्लक्ष्मीवशत्वात् । अतो मोहकप्रकृत्योर्भगवद्वशत्वात् तत्प्रपत्त्या मायातरणं युक्तमेव । अतः तं प्रपद्येतेत्यर्थः । अनेन गुणमयीत्येतत् व्याख्यातं भवति । ततोऽनन्यभक्त्येत्यनेनैकभक्तिरित्यादेः तात्पर्यमुक्तं भवति ॥१३॥

**गीता**

**दैवी ह्येषा गुणमयी मम माया दुरत्यया ।**
**मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते ॥ १४ ॥**

*वि०वि०*— कथमनादिकाले मोहानत्ययो बहूनामित्यत आह **दैवीति** । क्रीडादिगुणसम्पन्नस्य मम सम्बधिनी दैवी । तदेव स्पष्टयति **मम मायेति** । गुणमयी त्रिगुणात्मिका । दुरत्यया । अत्येतुमशक्या । यदि भगवती माया मोहिकाऽत्येतुमशक्या च तर्हि कस्यापि ज्ञानं न स्यादित्यत आह **मामेवेति** । अन्यत्सर्वं परित्यज्य मामेव ये प्रपद्यन्ते गुर्वादिवन्दनं च मय्येव समर्पयन्ति ।

'मत्सम्पत्त्या तु गुर्वादीन् भजन्ते मध्यमाजनाः ।
मदुपाधितया तांश्च सर्वभूतानि चोत्तमाः ॥'

इत्याद्युक्तरीत्या स एव च तत्र स्थित्वा गुर्वादिर्भवति इत्यादि पश्यन्ति त एतां मायां तरन्ति । उक्तं च—

'लक्ष्म्या वशगया लोका विष्णुनैव विमोहिताः ।
ये तु विष्णुं प्रपद्यन्ते ते मायां तां तरन्ति हि ॥ ' इति ॥

***वा०ल०***— एभ्यः जीवजडेभ्यः परं विलक्षणमुत्तमञ्च । अव्ययं तद्वन्नाशरहितम् । 'दैवी ह्येषा गुणमयी' इत्यत्र देवी महालक्ष्मीः सत्सम्बन्धिनी दैवी । तदभिमन्यमानेत्यर्थः ॥

***सा०सं०***— ननु ब्रह्मादिदेहेन्द्रियादिदृष्टान्तेन देहादित्वहेतुना भगवान् गुणमयदेह इति धीः कथं मोहः । बाधकाभावात् । ज्ञानिनां धीर्बाधिकेति चेत् । बहुतरपामरधीविरोधेन तस्या एवाल्पीयस्या अयथार्थत्वोपपत्तेः । न च तेषामेव कालान्तरे बाधधीः सेत्स्यतीति शङ्क्यम् । अनादिकालेऽप्यजातस्योत्तरत्राप्यसम्भवादित्यतो यथावज्ज्ञानाभावविपरीतज्ञानयोर्गुणाभिमानिनी दुर्गैव कारणम् । देहत्वाद्यनुमानं तु निमित्तमात्रमिति भावेनाह **दैवीति** । सृष्ट्यादिरूपक्रीडादिगुणविशिष्टस्य देवस्येयं **दैवी** । देवसम्बन्धिनी । को देव इत्यतो दैवीत्युक्तं विवृणोति **ममेति** । मदीया ममातिप्रियेति यावत् । **एषा** प्रमाणप्रमिता । **गुणमयी** सत्त्वादिगुणात्मिका । गुणाभिमानिनीति यावत् । **माया** दुर्गा । मोहिकेति शेषः ।

कालान्तरे तत्कृते मोहो निवर्ततामित्यत आह **दुरत्ययेति** । अत्येतुमशक्या । तत्कृतं मोहं कोऽपि नात्येतुं शक्नोतीत्यर्थः । अतो न कस्यापि बाधकप्रत्ययो भवतीति भावः । 'मम माया' इत्येव पूर्तौ 'दैवी' इत्युक्तिः मदीयतामात्रेण कथं दुरत्ययेत्यतः सृष्टिस्थितिलयादिगुणविशिष्टतयाऽतिसमर्थमदतिप्रियत्वेन तस्या अप्यतिशयशक्तित्वादिति ज्ञापयितुम् । 'गुणमयी' इत्युक्तिस्तु गुणाभिमानित्वात् तमोगुणेनैवंविधं मोहं जनयतीति सूचयितुमिति ज्ञेयम् ।

ननु यदि न केवलमनुमानम्, किन्तु भगवतोपोद्बलिता माया मोहहेतुः तर्हि, न कथञ्चिदत्येतुं शक्येति कस्यापि ज्ञानं न स्यादित्यत आह **मामिति** । **एव**शब्दोऽत्र भगवत्प्रतिपत्तावित्थम्भावसूचकः । अन्यत् परित्यज्य गुर्वादिवन्दनादिकमपि भगवद्भक्तत्वेनैव कुर्वन्तो **मां ये प्रपद्यन्ते** शरणं प्राप्नुवन्ति । त **एतां** मायां मायाकृतमोहम् । **तरन्ति** अतिक्रामन्तीत्यर्थः ॥

***अ०प्र०***— यस्मान्मायया जगन्मोहितं ते न जानन्ति । तर्हि के त्वां जानन्तीत्यत आह **दैवीति** ।

हे पार्थ ![१], दैवी[२], गुणमयी[३], मम[४], एषा[५], माया[६], दुरत्यया[७], हि[८], तथापि ये[९], मामेव[११] प्रपद्यन्ते[१२], ते[१३], एतां[१४], मायां[१५], तरन्ति[१६], इत्यन्वयः ॥

हे पार्थ ![१], दैवी = मम सम्बन्धिनी अलौकिकी अद्भुतेत्यर्थः[२], गुणमयी = दुर्गारूपा त्रिगुणाभिमानिनी सत्त्वादिगुणविकारात्मिका[३], मम सृष्ट्यादिरूपक्रीडादिगुणसम्पन्नो परमेश्वरस्य[४], एषा ईदृशी मोहिकीत्यर्थः[५], माया मा इत्युक्ते नास्ति या इत्युक्ते यद्यत् किञ्चित् । अयमर्थः— यद्यत्किञ्चित् दृश्यते तत्सर्वं नश्यतीति इत्यनेन मायाशब्दार्थः मायानदी[६], दुरत्यया = जीवानां दुःखेन अत्येतुं तर्तुं अशक्या । यद्वा, दैवीत्वादेव दुस्तरा[७], हि = प्रसिद्धमेतत्[८], तथापि यदि भगवती माया मोहिका अत्यन्तमशक्या चेत्तर्हि कस्यापि ज्ञानं न स्यादित्यत आह **मामेवेति** । ये[९], मां[१०] एव[११] प्रपद्यन्ते = अन्यत् सर्वं परित्यज्य अव्यभिचारिण्या भक्त्या प्रपद्यन्ते भजन्ति[१२], ते[१३], एतां दुस्तरामपि[१४], मायां तरन्ति[१६], ततो मां जानन्तीत्यर्थः ॥

तदुक्तम्—

'मत्सम्पत्या तु गुर्वादीन् भजन्ते मध्यमा जनाः ।
मदुपाधितया तांश्च सर्वभूतानि चोत्तमा ॥
लक्ष्म्या वशंगता लोका विष्णुनैव विमोहिताः ।
ये तु विष्णुं प्रपद्यन्ते ते वै मायां तरन्ति हि ॥' इति ।
'श्री-भू-दुर्गेति या भिन्ना महामाया तु वैष्णवी ।
तच्छक्त्यनन्तांशहीना याऽपि तस्याश्रयात्प्रभो ॥
अनन्तब्रह्मरुद्रादेर्नास्याः शक्तिकलाऽपि हि ।
तेषां दुरत्ययाप्येषा विना विष्णुप्रसादतः ॥'

—इति व्यासयोगे ॥ १४ ॥

**भाष्यम्**

**कथमनादिकाले मोहानत्ययो बहूनामित्यत आह— दैवीति । अयमाशयः— माया ह्येषा मोहिका । सा च सृष्ट्यादिक्रीडादिमद्देवसम्बन्धित्वाददतिशक्तेर्दुरत्यया । तथा हि देवशब्दार्थं पठन्ति— 'दिवुक्रीडाविजिगीषाव्यवहारद्युतिस्तुतिमोदमदस्वप्रकान्तिगतिषु' इति । कथं दैवी ? मदीयत्वात् । अहं हि देव इति । अब्रवीच्च—**

**"श्रीर्भूर्दुर्गेति या भिन्ना महामाया तु वैष्णवी ।
तच्छक्त्यनन्तांशहीनाऽथापि तस्याश्रयात् विभोः ।**

**अनन्तब्रह्मरुद्रादेर्नास्याः शक्तिः कलाऽपि हि ।**
**तेषां दुरत्ययाऽप्येषा विना विष्णुप्रसादतः ॥"**

**—इति च व्यासयोगे ।**

**तर्हि न कथञ्चिदत्येतुं शक्यत इत्यत आह— मामेवेति । अन्यत् सर्वं परित्यज्य मामेव ये प्रपद्यन्ते । गुर्वादिवन्दनं च मय्येव समर्पयन्ति । स एव च तत्र स्थित्वा गुर्वादिर्भवतीत्यादि पश्यन्ति । आह च नारदीये—**

**"मत्सम्पत्त्या तु गुर्वादीन् भजन्ते मध्यमा नराः ।**
**मदुपाधितया तांश्च सर्वभूतानि चोत्तमाः ॥" इति ।**
**"आचार्यचैत्यवपुषा स्वगतिं व्यनक्ति ।" इति च ॥ १४ ॥**

***प०टी०***— ननु यदि भगवतो गौणत्वज्ञानं मोहः, तर्हि बाधः किमिति नास्ति ? अतो नायं मोह इत्याशङ्कोत्तरत्वेनोत्तरश्लोकमवतारयति **कथमिति** । बाधाभावे कारणप्रश्ने मायास्वरूपं किमर्थं वर्ण्यते इत्यत आह **अयमिति** । ये गुणा मोहतयोक्ताः, तदभिमानी माया हि मोहिका ।

***प०टी०***— ततश्च किम् ? इत्यत आह **सा चेति** । क्रीडादिगुणवत्त्वासाद्य देवीति किं न स्यात् ? इत्याशङ्क्य, 'मम' इति पदं व्याचष्टे **कथमिति** । उभयोरपि तच्छब्दवाच्यत्वं किं न स्यात् ? इत्यत आह **अहं हीति** । मुख्यत इत्यर्थः । ततो गुणाभिमानिन्या निरूपाया विष्णुबलाश्रयाया अवधत्वान्न (?) मोहाश्रय इत्यर्थः । अत्रैव प्रमाणमाह **अब्रवीच्चेति** । यदि स्वयमपि महेश्वरी पुनर्हर्याश्रयाद्बध्नाति, तर्हि न कस्यापि संसारतरणमित्याशङ्क्योत्तरार्धमवतारयति **तर्हीति** । 'एव'कारविवरणपूर्वकं व्याचष्टे **अन्यदिति** । गुर्वादिपरित्यागे प्रत्यवायः स्यादित्याशङ्कां सप्रमाणकं परिहरति **गुर्वादीति** । मध्यमाधिकारिविषयम् । स एव चेत्युत्तमाधिकारिविषयम् । मत्सम्पत्त्या मद्भक्ततयेत्यर्थः । मदुपाधितयेति सत्प्रतिमात्वेन । आचार्यस्य चित्तस्थेन वपुषा स्वज्ञानं विस्तृतवानसि ॥

***न०टी०***—ननु त्रिगुणात्मकदेहो भगवानित्ययं मोहश्चेत्, बाधकप्रत्ययः स्यात् । तदभावान्न मोहोऽयमिति भावेनाशङ्क्य, तां परिहर्तुमुत्तरश्लोकार्धमवतार्य व्याचष्टे **कथमिति** । ननु 'बाधकाभावे किं कारणम् ?' इति प्रश्नस्य मायादैवत्वदुरतिक्रमणत्वयोरभिधानं कथमुत्तरम् ? इत्यत आह **अयमिति** । मोहकारणत्वेनेतिहासपुराणादिप्रसिद्धा या माया भगवदीयत्वेन दुरत्ययत्वान्न बाधक

इत्यर्थः । ननु सा भगवतेव स्वातन्त्र्येणैव सृष्ट्यादिक्रीडादिमत्त्वात् स्वयं देव्येव । न तु 'दैवी' इति भावेनाशङ्क्य, तदुत्तरत्वेन 'मम' इति व्याचष्टे **कथमित्यादिना** । ननु देवदेव्योर्मध्ये देवशब्द-मुख्यार्थत्वनिर्धारः कथम् ? इत्यत आह **अहमिति** । **हीति** । श्रुत्यादिसर्वप्रमाणप्रसिद्धमित्यर्थः । अन्यत्रैतमेवार्थं भगवान् व्यक्तमवोचदित्याह **अब्रवीच्चेति** । ननु सर्वजगन्मोहकरी महामायैवा-त्येतुमशक्या । किं पुनः सैव भगवद्बलेरिता ? अतः का गतिर्जगतः ? इति भावेनाशङ्क्य, तां परिहर्तुमुत्तरार्धमवतार्य व्याचष्टे **तर्हीति** । अवधारणार्थं दर्शयति सम्यग्घटयितुम् **अन्यदिति** । **प्रपद्यन्ते** शरणं व्रजन्तीत्यर्थः । ननु गुर्वग्न्यादिपूजाभावे प्रत्यवायः स्यादित्यत आह **गुर्वादीति** । प्राधान्येनान्यत् सर्वं परित्यज्यापि भगवदीयत्वेन गुर्वादीन् सम्पूज्य, तत्पूजां च भगवत्येव समर्पयन्ति ये ते च मध्यमभक्ताः । उत्तमभक्तानाह **स एवेति** । उक्तद्वैविध्ये प्रमाणमाह **आह चेति** । भगवत्सम्पत्तिर्भगवान्नः स्वामीति स्वामिसम्पत्तिर्गुर्वादीनाम् । अत एव तान् सेवन्ते भगवदर्थिनः । द्रव्यसम्पन्नानपि द्रव्यार्थिनः । प्रतिमास्विव भगवानुपाधीयते स्वेच्छयैव गुर्वादिषु । अतस्तानुत्तमास्तदुपाधितयैव सेवन्ते । गुर्वादिसर्वभूतेष्वपि स्थित्वा स एव क्षीरादिप्रद इत्येव तानि च सेवन्त इत्यर्थः । आचार्यचित्तस्थेन वपुषेत्यर्थः । युक्तं च रमाजशङ्करादेर्जडाजडात्मकस्य विश्वस्य भगवदुपाधियतैव सेव्यत्वम् । यतः स्वान्तर्निहितभगवत्सन्निधानतारतम्यादेव गुणतारतम्यम्, अत एव तत्तदन्तर्गतस्य भगवतो वासुदेवस्यैव सर्वगुणसम्पूर्णत्वम् । अनेनैव 'वासुदेवः सर्वम्' इति वक्ष्यमाणसर्वत्वस्य व्याख्यातत्वान्न पुनस्तद्व्याख्यास्यति । न च जडाजडात्मत्वं सर्वत्वं भगवतः । 'मामेव ये प्रपद्यन्ते' इत्यवधारणविरोधादित्येषा दिक् ॥

*प्र०दी०*— उपायाभावानुमानाभासाभ्यामनुपलम्भो विपरितोपलम्भश्चेत्युक्तम् । अतः किमु-त्तरेण वाक्येनेत्यत आह— **कथमिति** । भगवान् गुणमयविग्रह इत्ययं न मोहः । बाधकप्रत्यया-भावात् । ज्ञानिनां सम्यक्प्रत्ययो बाधक इत्युक्तमिति चेन्न । बहुतरज्ञानविरोधेन कतिपयज्ञानाना-मेवायथार्थत्वापत्तेः । ननूत्तरकाले बाधकप्रत्ययो भविष्यतीति चेन्न । अनादौ कालेऽजातस्योत्तर-त्राप्यसम्भवादिति भावः । ननु बाधकप्रत्ययाभावाद्यथार्थ एवायं प्रत्यय इति शङ्कायां किमेत-दसङ्गतमुच्यत इत्यत आह— **अयमिति** । एषेत्यनुवादेन 'मोहिका' इति व्याख्यातम् । मोहित-मिति धात्वर्थमात्रं परामृश्य योग्यप्रत्ययसम्बन्धेन व्याख्यानात् । गुणमयी तदभिमानिनी दुर्गा या हि तमोगुणेनैवंविधं मोहं जनयति । अनुमानं तु निमित्तमात्रम् । ततः किमित्यत आह— **सा चेति** । सा च दुरत्यया । तत्कृतमोहं कोऽपि नात्येतुं शक्नोति । न कस्यापि बाधकप्रत्ययो भवति । कुतो दुरत्ययेत्यतोऽतिशक्तेरिति हेतुरध्याहृत्योक्तः । कुतोऽतिशक्तित्वमित्यतो 'दैवी'

इत्येतद्धेतुगर्भमिति व्याख्यातम् । **देवसम्बन्धित्वादिति** । सम्बन्धित्वं परमप्रियत्वम् । सति देवस्यातिशक्तित्वे तत्सम्बन्धिन्याः तत्स्यात् । तदेव कुत इत्यतो देवशब्दार्थो निरुक्तः । **सृष्ट्या-दीति** । सृष्ट्यादिश्च सा क्रीडा च । प्रथमादिपदेन स्थित्यादेः सङ्ग्रहः । द्वितीयेन विजिगीषादेः । क्रीडादिमत्त्वेनातिशक्तिर्न सिद्ध्यतीति क्रीडा व्याख्याता । देवशब्दस्य क्रीडादिमत्त्वमर्थः कुत इत्यत आह— **तथा हीति** । देवशब्दे या प्रकृतिः तदर्थमित्यर्थः । प्रत्ययस्त्विगुपधलक्षणस्य कस्य बाधकः पचाद्यच् । दैवीत्यनेन निराकाङ्क्षत्वात् 'मम' इति व्यर्थमित्यत आह— **कथमिति** । तस्यैव व्याख्यार्थमेतदिति भावः । त्वदीयत्वेऽपि कथं दैवीत्यतः शेषं पूरयति **अहं हीति** । आशयवर्णन-समाप्तौ इतिशब्दः । अत्र प्रमाणमाह— **अब्रवीचेति** ।

उत्तरस्य प्रकृतोपयोगितया सङ्गतिमाह— **तर्हीति** । यदि न केवलमनुमानं, किन्तु भग-वतोपोद्बलिता माया मोहहेतुः तर्हीत्यर्थः । ततश्च ज्ञानिव्यावृत्त्यर्थं यदिदमित्युक्तं तदसदिति भावः । ननु मायात्ययोपायस्यासम्भावनाशङ्कायां तदुपाय एव वक्तव्यो न तूपायान्तरप्रतिषेधः । अतो-ऽनुपपन्नमवधारणमित्यत आह— **अन्यदिति** । स्वप्रतिपत्तावित्थं भावसूचक एवैवशब्दो नोपाया-न्तरप्रतिषेधपर इत्यर्थः । एवं तर्हि गुर्वादिवन्दनाभावः प्राप्त इत्यतोऽभिप्रायमाह— **गुर्वादीति** । 'भागवता एते' इत्यादिबुद्ध्या वन्दनादि कुर्वन्तीति यावत् । एतन्मध्यमभक्तानां चरित्रमुक्तम् । उत्तमानां त्वाह— **स एवेति** । भगवानेव तत्र गुर्वादिषु । द्वयं प्रमाणेनोपपादयति— **आह चेति** । अहं च सा सम्पत्तिश्च । मदुपाधितया मत्प्रतिमात्वेन । चैत्यं चित्स्थम् । स्वगतिं स्वज्ञानम् । व्यनङ्क्षि व्यञ्जयसि ॥

***भा०दी०*— उपायेति** । गुणातीतत्वेन कथं न ज्ञायसे प्रत्युत गुणयुक्तत्वेनैव ज्ञायसे इत्याक्षेपस्य त्रिभिरिति श्लोकैः गुणातीतत्वानुपलम्भ उपायाभावेन गुणमयत्वे विपरितोपालम्भश्च देहत्वाद्यनुमानाभासेनेत्युक्तमित्यर्थः । अत्र कृतस्य कथं मोहिकेति परामर्श इत्यत आह **मोहित-मितीति** । विशेष्य............ गीतास्थं पदं स्वयमनूद्य तदर्थमाह **गुणमयीति** । **अनुमानं त्विति** । देहत्वाद्यनुमान इत्यर्थः । **बाधकप्रत्यय इति** । "गुणवचनेभ्यो मतुप्" (५-२-९४) इति प्रत्ययस्येति योज्यम् । गीतायामदृष्टेराह **अध्याहृत्येति** । **इगुपधेति** । "इगुपधज्ञाप्रीकिरः क" (३-१-१३४) इति सूत्रे इगुपधानिमित्तक कप्रत्ययस्य बाधकः । "नन्दिग्रहि पचादिभ्यो ल्युणिन्य च" इति विहितोऽच्प्रत्यय इत्यर्थः । इगुपधेत्यस्य पचादिसूत्रात्परत्वेऽपिं देव................दिषु द्रष्टव्या । इति तार्तीयाद्यपादे कप्रत्ययस्तु त एव प्रवृत्तावुक्तेः । अच्प्रत्ययत्वे च कित्वाभावेन

"क्ङिति च" (१-१-५) इति निषेधाभावात् (७-३-८६) 'पुगन्तलघूपधस्य चे'ति गुणे देव इति रूपमिति भावः । इदमित्युक्तमसदिति ज्ञानिनोऽपि दुरत्ययत्वेन मोहितत्वादिति भावः । व्यनक्षा-तिपदं ण्यर्थतया व्याचष्टे **व्यञ्जयसीति** ॥

*भा०र०*— "त्रिभिर्गुणमयैः (७.१३) इति श्लोकस्य निर्गलितमर्थं वदन्नेवोत्तरभाष्यमवतारयति **उपायाभावेति** । गुणातीततोपलम्भस्य मोहाभाव उपायः, तदभावः मोह एवोपायाभावरूपः, उक्तानुमानाभासश्च सगुणत्वोपलम्भे उपायः । **ताभ्याम्** उपायाभाव-अनुमानाभासाभ्याम् अनुपलम्भ विपरीतोपलम्भौ भवत इति 'त्रिभिः' (७.१३) इति श्लोके उक्तमित्यर्थः । अतः प्रत्युपस्थितचोद्यस्य परिहृतत्वात् 'कथम्' इत्याक्षेपभाष्यभावमाह **भगवानिति** । **इत्ययम्** प्रत्ययः । **सम्यक्प्रत्ययः** गुणातीतत्वाध्यवसायः । 'बहुतर' इत्यत्र 'अल्पाच्तरम्' इत्यादाविव स्वार्थे तरप् । बहुबाधस्या-न्याय्यत्वादिति भावः । 'अनादिकालम्' इत्यस्य भावं वक्तुं शङ्कते **ननु चेति** । **अजातस्य** बाधक-प्रत्ययस्य । **अयं** "भगवान् पुण्यमयविग्रहः" इत्ययम् ।

नन्वेतच्छब्दः समीपतरवर्तिपदार्थपरामर्शी । न च मोहिका समीपस्था, पूर्वमप्रसक्तत्वात् । तत्कथं भाष्ये 'एषा' इत्यनूद्य 'मोहिका' इति व्याख्यायते ? इत्यत आह **मोहितमितीति** । पूर्वश्लोके हि "मोहितं नाभिजानाति" (७.१३) इत्यत्र मोहधात्वर्थो मोहनम्, तन्मात्रम् 'एषा' (७.१४) इति परामृश्य कर्त्रर्थकण्वुल्प्रत्ययरूपार्थानुकूलप्रत्ययोत्पादनेन व्याख्यानाद् युक्तं तथा व्याख्यानमित्यर्थः । 'मोहिका' इत्यत्र विशेष्याकाङ्क्षापूरकं 'माया' इति पदम् । तत्र विशेषणं 'गुणमयी' इति । "मयट् तादात्म्यार्थः" इति भाषितम् । तत्कथं मायाया गुणतादात्म्यम् ? इत्यतस्तद्धटयितुमाह **गुणमयी तदभिमानिनीति** । तमोगुणाभिमानिनी । का सा माया ? तदर्थः दुर्गा । यदर्थमेतद्विशेषणोपादानं तदाह **माया हि तमोगुणेनेति** । कथं माया मोहिका ? इत्याकाङ्क्षानिरासायैतद्विशेषणमिति भावः । तर्हि कथमनुमानाभासेन सगुणत्वमोह इत्युक्तम् ? इत्यत उक्तम् **अनुमानं त्विति** । जीवप्रबोधस्य भगवदसाधारणकारणकत्वेऽपि तत्र यथा भेरीताडनादि निमित्तमात्रम्, तथा देहत्वाद्यनुमानं सगुणत्वमोहनिमित्तमात्रमिति भावः । "**सा च** माया दुरत्यया" इत्यनूद्यार्थमाह **दुरत्ययेति** । किमुक्तं भवति ? इत्यत आह **न कस्यापीति** । बाधकप्रत्ययः "गुणमयदेहो हरिः" इति प्रत्ययस्य । **हेत्वर्थगर्भं** विशेषणम् । हेत्वर्थगर्भत्वं व्यनक्ति **देवेति** ।

ननु देवसम्बन्धित्वं सर्वसाधारणं कथमिति शक्तत्वे हेतुः ? इत्यत आह **सम्बन्धित्वं परमप्रियत्वमिति** । **तत्सम्बन्धिन्याः** देवसम्बन्धिन्या मायाशब्दितदुर्गायाः, **तत्** अतिशक्तत्वम् । सृष्ट्यादेर्धात्वर्थत्वाभावेन द्वन्द्वायोगाद् विवक्षितग्रहं दर्शयति **सृष्ट्यादिश्च सा क्रीडेति** । 'क्रीडा'

इति कथमुच्यते ? इत्यत आह **स्थित्यादेरिति** । स्थितिसंहारनियमनादेः, **विजिगीषादेः** विजिगीषा-व्यवहार-द्युति-स्तुति-मोदादेः । प्रकृत्यर्थाभिधानेन प्रकृतसिद्धेः "सृष्ट्यादिरूपा क्रीडा" इति किमुच्यते ? इत्यत आह **क्रीडादिमत्त्वेनेति** । ननु देवशब्दे या प्रकृतिर्दीव्यतिधातुस्तदर्थमिति न व्याख्यानं युक्तम् । देवशब्दस्यैव निष्पादयितुमशक्यत्वात् । यतो दीव्यतेः "इगुपधज्ञाप्रीकिरः कः" इति कप्रत्यये 'दिवः' इत्येव स्यात् ? इत्यत आह **प्रत्ययस्त्विति** । **बाधक इति** । 'कर्मोपपदानाम् इगुपधानां च बाधकबाधनार्थं पचाद्यनुक्रमणम्" इति हरदत्तेन देवसेवमेषादीनां पचादौ पाठस्य कप्रत्ययबाधनार्थत्वस्योक्तत्वादिति भावः । **तस्यैवेति** । 'दैवी' इत्यस्यैव । देवो नान्यः, किन्त्वहमेवेति देवशब्दस्य स्वात्मार्थत्वं स्फोरयितुमेव "मम सम्बन्धिनी माया" इत्युक्तमिति न वैयर्थ्यमिति भावः । हेतुस्फोरणस्य हिशब्देनैव सिद्धेः, इतिशब्दानर्थक्यम् ? इत्यत आह **आशयेति** । 'इत्ययमाशयः' इति इतिशब्दान्वय इति भावः । **अत्र** भगवदधीनतया अतिशक्तेः "दुरत्यया माया" इत्यत्र ।

भाष्ये **वैष्णवी** विष्णवधीना, कुत एतत् ? इत्यत उक्तम् **तच्छक्त्यनन्तांशहीनेति** । नन्वेवं मायाया ब्रह्मादीनां च भगवदधीनत्वाविशेषात् सा कथमन्यैर्दुरत्यया स्यात् ? इत्यत उक्तम् **अथापीति** । यद्यपि सा भगवदधीना । तथाऽपि प्रभोः **तस्य** विष्णोराश्रयात् हि यतोऽनन्तस्य ब्रह्मरुद्रादिदेववर्गस्य अस्याः शक्तिकलाऽपि नास्ति । ततस्तेषामपि सा दुरत्यया । तर्हि सर्वथा दुरत्यया किम् ? न इत्युच्यते **विनेति** । सम्पादितविष्णुप्रसादैस्तु साऽप्यत्येतुं शक्यैवेति भाव इति प्रमाणार्थः ।

**असदिति** । ज्ञानिनामपि तदत्ययायोगादिति भावः । **असम्भावनेति** । भगवच्छक्त्युपोद्बलिताया मायाया अतिशक्ततया तत्करणं दुःशकमिति शङ्कायामित्यर्थः । **उपायान्तरप्रतिषेध इति** । 'मामेव' इत्यवधारणेन "अन्यं न प्रपद्यते" इति प्रतिभानादिति भावः । **प्राप्त इति** । तथा च "गुरुरनुगन्तव्योऽभिवाद्यो वृद्धवयाः प्रत्युत्थेयः" इति शास्त्राननुष्ठानात् पुरुषः प्रत्यवेयादिति भावः । कथं गुर्वादिकर्मकवन्दनस्य गुर्वादावेवार्पणीयस्य भगवत्यर्पणम् ? इत्यतो भाष्यतात्पर्यमाह **भागवता एत इति** । "अन्यत्सर्वं परित्यज्य" इत्यादि "गुर्वादिवन्दनं च" इत्यनेन तात्पर्यस्योक्तत्वात् "स एव च" इत्यादिकं किमर्थम् ? इत्याशङ्का, तत्सार्थक्यं दर्शयितुमाह **एतदिति** । गुर्वादिवन्दनस्य भगवत्यर्पणम् । उत्तमानां तु भक्तानामाह **चरित्रं भगवानेवेति** । गीताभाष्ययोरस्मच्छब्देन भगवत एव प्रस्तुतत्वादिति भावः । 'गुर्वादिवन्दनम्' इत्यत्र प्रस्तुतत्वादाह **तत्र गुर्वादिष्विति** । **द्वयं** मध्यमभक्तचरित्रम्, उत्तमभक्तचरित्रमिति द्वयम् । "मत्सम्पत्त्या मदुपाधितया च भजन्ते" (ना.पु.) इत्युक्तेराह **उपपादयतीति** ।

'मत्सम्पत्त्या' इत्यत्र मम सम्पत्त्या = मम सम्पदा = मदैश्वर्येण गुर्वादीन् भजन्तो मध्यमा इत्यर्थाभ्युपगमे स्वसमवेतैश्वर्यस्य मध्यमभागवतनिष्ठगुरुभजनहेतुत्वं न युक्तम् ? इत्यतो विवक्षित-विग्रहमाह **अहं च सा सम्पत्तिश्चेति**। "स्यात्तु सम्पदि सम्पत्तिः" इत्यभिधानात् मद्रूपया सम्पदा सम्पन्ना इति निमित्तेन ये गुर्वादिगतं मां भगवन्तं गुर्वादींश्च भजन्ते ते मध्यमाः। "स देहाभि-मानिहरये प्रणमेत्" (व्या.स्मृ.) इति कर्मनिर्णयोक्तेरिति भावः। उपाधीयेऽहम् एतेषु गुर्वादिष्वि-त्युपाधिः। "उपसर्गे घोः किः" इत्यधिकरणे धातोः किप्रत्यये, आतो लोपश्च। ममोपाधिर्मदु-पाधिः, तत्तया। **तांश्च** गुर्वादीन् सर्वभूतानि च। "गुर्वादिषु भूतेषु च स्थित्वा भगवान् गुर्वादि-र्ज्ञानादिप्रदो भवतीति ये भजन्ते पश्यन्ति ते तूत्तमाः" इति योजनेति भावेन 'मदुपाधितया' इत्येतद्व्याचष्टे **मदिति**।

"नैवोपयान्त्यपचितिं कवयः स्तवेन
ब्रह्मादयोऽपि नतमूर्धसदास्मरन्तः।
योऽन्तर्बहिस्तनुभृतामशुभं विधुन्वन्
आचार्यचैत्त्यवपुषा स्वगतिं व्यनक्ति॥" (भाग. ११.२९.६)

इति भागवतश्लोके अनिमित्तबन्धुत्वेन सर्वस्मादुपकारकस्य भगवतः प्रत्युपकारं कर्तुं कवयो ब्रह्मा-दयोऽपि न समर्था इत्यर्थपरे कवयो ब्रह्मादयोऽपि नतमूर्धसदास्मरन्तः = नतमूर्धानः सन्त **आ** सम्यक् स्मरन्तः, विशेषणसमासः। नतमूर्धानश्च ते सदास्मरन्तश्चेति वा, तवापचितिं = प्रत्युप-कारमानृण्यं नैवोपयान्ति। तनुभृतामन्तर्बहिः स्थित्वा अशुभं विधुन्वन् = निरस्यन् यः त्वम् आचार्यचैत्त्यवपुषा = आचार्यस्य स्वस्वयोग्यगुरोरित्यनन्तरं चैत्त्यपदस्य स्वगतिपदस्य च प्रकृतोपयोगायार्थमाह **चैत्त्यं चित्तस्थमिति**। "चित्ते भवः" इत्यर्थे 'तद्धिताः' इति ष्यञ्-प्रत्ययः। तथाविधेन वपुषा व्यासदत्तादिरूपेण **स्वगतिं** स्वज्ञानं स्वकर्मकं ज्ञानं स्वेषां योग्यं ज्ञानं बिम्बसाक्षात्कारस्वरूपं च व्यनक्ति। तदिदमप्रतीतेर्व्याचष्टे **व्यञ्जयसीति**। प्रकाशयसीत्यर्थः।

ननु कथं 'व्यञ्जयसि' इति व्याख्यातम् ? यावता व्यञ्जिः प्रकाशानुकूलव्यापारार्थः। 'व्यनक्ति' इत्यस्य 'प्रकाशयति' इत्यर्थप्रतीतेः। "समिद्धो अञ्जन् कृदरं मतीनाम्" (कृ.य.का.५, प्र.१, अनु.११) (५६) इत्यत्र वेदभाष्ये "अञ्जन् प्रकाशयन्" इतिभट्टभास्करेण व्याख्यानाच्च, इति चेन्न। 'व्यञ्जयसि' इत्यत्र णिचः स्वार्थिकत्वाभ्युपगमात्। न च तस्य चुरादावपाठान्न तस्मात् स्वार्थे णिजुत्पादयितुं शक्य इति वाच्यम्। 'बहुलमेतन्निदर्शनम्' इत्यत्र नवगणीपठितेभ्योऽपि क्वचित् स्वार्थे णिच्– "रामो राज्यमचीकरत्" इति यथा इति सिद्धान्तकौमुदीकारवचनात्। "त्वं

च रुद्र महाबाहो मोहशास्त्राणि कारय'' (वा.पु.) इत्यत्र द्वितीयाध्याये ''कारयेति स्वार्थे णिच्'' (प्र.दी. २.७२) इति टीकोक्तेश्च । णिजन्तेन व्याख्यानं तु ''व्यनक्षि'' इत्यस्यान्तर्भावितणिजर्थत्व-ज्ञापनायेति **केचित्** । वस्तुतस्तु आचार्यचित्तगतेन स्वरूपेण त्वमेव स्वगतिं **स्वयोग्यज्ञानं** व्यनक्षि = व्यञ्जनीकरोषीत्युक्ते, आचार्यस्यैव शिष्यनिष्ठज्ञानव्यञ्जनं प्रति प्रयोजकत्वेन भगवतः प्रयोजकत्वं न लभ्यते । तस्यैव तद्यथा स्यादिति भावेन ''व्यञ्जयसि' इति व्याख्यातम्'' व्यञ्जतीं स्वगतिं प्रेरयन्तमाचार्यं तच्चित्तगतेन स्ववपुषा प्रेरयसि इत्यर्थलाभे भगवत्प्रयोज्यत्वमाचार्यस्य लभ्यत इति भावेनैवमुक्तमिति । एतेन ''प्रतीतार्थेऽनुपपत्तिर्विचारणीया'' इति वदन्तः प्रत्यूढाः । विपूर्वादञ्जेः सिपि रूधादित्वात् श्नमि विकरणे, ''श्नान्नलोपः'' इति नलोपे, ''चोः कुः'' इति कुत्वे, ''खरि च'' इति चर्त्वे, ''इण्कोः'' इति षत्वे, ''व्यनक्षि'' इति रूपस्यैव माधवाद्युक्तरीत्या युक्तत्वेऽपि, छन्द-स्तुल्यत्वात् ''श्नान्नलोपः'' नाश्रित इति हृदयम् ॥ १४ ॥

**गीता**

## न मां दुष्कृतिनो मूढाः प्रपद्यन्ते नराधमाः ।
## माययाऽपहृतज्ञाना आसुरं भावमाश्रिताः ॥ १५ ॥

*वि०वि०*— यदि त्वत्प्रतिपत्तिर्मायातरणोपायः, तर्हि किमिति सर्वे त्वां प्रतिपद्य तां मायां नात्यायन्नित्यत आह **न मामिति** । दुष्कृतित्वान्मूढाः । अत एव नराधमाः अपहृतज्ञानाः अभि-भूतज्ञानस्वभावाः । अतश्च मूढाः । अत एव असुराः । असुष्विन्द्रियेषु रता असुराः । 'ज्ञानप्रधाना देवास्तु असुरास्तु रता असौ' इत्युक्तेः । तदीयं भावं स्वभावमाश्रिताः मां न प्रपद्यन्ते ॥

*वा०ल०*— सोऽहम्भावमाश्रित्य, मम शरणागतिरूपं दासोऽहम्भावमुपेक्षमाणाः पुरुषाः पञ्चमहापातकिनः मूढाः, नरेष्वधमाः, मायया प्रमुषिततत्त्वज्ञानाः, केवलमसुराश्चेत्याह **न मां दुष्कृतिनो मूढाः प्रपद्यन्त** इति ॥

*सा०सं०*— ननु यदि त्वत्प्रतिपत्तिर्मायातरणोपायः, तर्हि त्वां प्रपद्य सर्वे किमिति मायां नात्यायन्नित्यत आह **न मामिति** । **दुष्कृतिनः** पापशीलाः । अत एव **मूढाः** विवेकहीनाः । अत एव **नराधमाः** । **मायया** अभिभूताधिष्ठानयाथात्म्यज्ञानाः । अतश्च मूढाः मिथ्याज्ञानिनः । अत एवासुरं **भावम**सुरत्वमाश्रिताः । अतो मां न प्रपद्यन्ते, इति । असुष्विन्द्रियेषु रता असुरास्तदीयं भावमाश्रिता इत्यर्थः ॥

***अ०प्र०***— किमिति सर्वे त्वां एव न भजन्तीत्यत्राह नरेषु ये अधमास्ते मां न भजन्ति इत्यत्र हेतुमाह **न मामिति** ।

दुष्कृतिनः[१], अत एव मूढाः[२], नराधमाः[३], माययापहृतज्ञानाः[४], आसुरं भावमाश्रिताः[५], मां[६], न प्रपद्यन्ते इत्यन्वयः ।

दुष्कृतिनः = शास्त्रविरुद्धपापकारिणः[१], अत एव मूढाः = मोहाविष्टमिथ्याज्ञानिनः[२], नराधमाः = मिथ्याज्ञानस्य पापकार्यत्वात् सर्वथा मिथ्याज्ञानित्वात् नराधमाः अमुक्तियोग्याः[३], मायया हरीच्छादिना स्वस्वभावेन च अपहृतं निरस्तं ज्ञानं शास्त्राचार्योपदेशाभ्यां जातमपि ज्ञानं येषां ते तथा गतसम्यग्ज्ञानाः[४], अत एव आसुरं भावमाश्रिताः = शास्त्रविरोधेन केवलेन्द्रियप्रीतिं ये कुर्वन्ति ते असुराः असुरसम्बन्धिस्वभावमाश्रिताः 'प्रवृत्तिं च निवृत्तिं च जना न विदुरासुराः' इत्यादिना असुरभावो वक्ष्यते । आसुरस्वभावं प्राप्तास्सन्तः[५], मां सर्वतन्त्रस्वतन्त्रं परमात्मानं मां[६], न प्रपद्यन्ते[७], न मां भजन्तीत्यर्थः ॥ १५ ॥

**गीता**

## चतुर्विधा भजन्ते मां जनाः सुकृतिनोऽर्जुन ।
## आर्तो जिज्ञासुरर्थार्थी ज्ञानी च भरतर्षभ ॥ १६ ॥

***वि०वि०***— स्वदोषादेव न मां प्रपद्यन्ते, न तु मत्प्रतिपत्तेर्मायातरणोपायत्वाभावादित्यत आह **चतुर्विधा इत्यादिना** । आर्तो दुःखी, जिज्ञासुरात्मज्ञानेच्छुः । अर्थार्थी भोगलुब्धः । ज्ञानी आत्मतत्त्ववित् ॥

***वा०ल०***— ये तु सोऽहम्भावमुपेक्ष्य स्वसेवायामेव निरतास्ते सोपाधिका वा निरुपाधिका वा भवन्तु, सर्वे सुकृतिन एवेत्याह **चतुर्विधा भजन्ते मामिति** ।

***सा०सं०***— सुकृतिनो मां भजन्तः प्रपद्यन्ते । तत्राप्यस्ति तारतम्यमित्याह **चतुर्विधा** इति । ये **सुकृतिनः** पूर्वजन्मकृतपुण्यवन्तः । **जनाः मां भजन्ते** सेवन्ते च । ते **चतुर्विधाः** । आर्त रोगाद्युपद्रुतः । **जिज्ञासुः** आत्मज्ञानेच्छुः । **अर्थार्थी** धनेच्छावान् । **ज्ञानी** चात्मतत्त्वविच्च । 'इति' इतिशब्दोऽत्र ध्येयः । द्विःसम्बोधनमादरार्थम् ॥

***अ०प्र०***— सुकृतिनस्तु मां भजन्ति ते च सुकृततारतम्येन चतुर्विधा इत्याह **चतुर्विधा इति** ।

हे अर्जुन ![१], सुकृतिनः[२], जनाः[३], मां[४], चतुर्विधा[५], भजन्ति[६], तत्कथं हे भरतर्षभ आर्तः[७], जिज्ञासुः[८], अर्थार्थी[९], ज्ञानी च[१०] एवं चतुर्विधा मां भजन्तीत्यर्थः ॥

हे अर्जुन ![१], सुकृतिनः[२], जनाः = पूर्वजन्मसु ये कृतपुण्याः जनाः[३], मां चतुर्विधा भजन्ति[६], तत्कथमित्याह— हे भरतर्षभ[७], आर्तः आर्तो रोगा-द्यभिभूतः दुःखी स यदि पूर्वकृतपुण्यः तर्हि मां भजति अन्यथा क्षुद्रदेवता-भजने संसरति एवमुत्तरत्रापि द्रष्टव्यम्[७], जिज्ञासुः = ब्रह्मज्ञानेच्छुः[८], अर्थार्थी अत्र च परत्र वा ऐहिकामुष्मिकभोगे साधनाद्यपेक्षावान्[९], ज्ञानी च सर्वतन्त्र-स्वतन्त्रो विष्णुस्सर्वोत्तमः जीवस्तदधीनः सर्वभावैर्भजनीयः इत्यादि भक्तिमान् ज्ञानी[१०] एवमुक्तप्रकारेण चतुर्विधा अपि मां भजन्तीत्यर्थः ॥ १६ ॥

**भाष्यम्**

**तर्हि किमिति सर्वे नात्यायन्नित्यत आह— न मामिति । दुष्कृतित्वा-न्मूढाः । अत एव नराधमाः । अपहृतज्ञानत्वाच्च मूढाः । अत एवासुरं भाव-माश्रिताः । स च वक्ष्यते— 'प्रवृत्तिं च निवृत्तिं च' इत्यादिना । अपहारो-ऽभिभवः । उक्तं चैतद् व्यासयोगे— "ज्ञानं स्वभावो जीवानां मायया ह्यभि-भूयते ॥" इति । असुषु रता असुराः । तच्चोक्तं नारदीये—"ज्ञानप्रधाना देवास्तु असुरास्तु रता असौ ॥" इति ॥ १५ ॥ १६ ॥**

*प०टी०*— नन्वेतादृश्यपि माया यदि त्वत्प्रपन्नान्न बध्नाति । तर्ह्युपायसत्त्वे किमिति सर्वे तां नात्यायन् ? इत्याशङ्क्य, उत्तरश्लोकमवतारयति **तर्हीति** । ननु मोक्षयोग्या अप्यभजन्तः सन्ति । तेषां कथमसुरभावाश्रयणम् ? इत्यत आह **स चेति** । नात्रासुरभावो नाम भगवद्वेषिस्वभावत्व-मित्यर्थः । ननु मोक्षयोग्यानां भगवज्ज्ञानं स्वरूपमेव । तस्य कथमपहारः ? इत्यत आह **अपहार इति** । ननु यदि प्रवृत्तिनिवृत्त्याद्यज्ञानमत्र विवक्षितम्, तर्हि नासुरपदं प्रयोक्तव्यम् । तस्य तद-वाचकत्वादित्यत आह **असुष्विति** । एवमुपायाननुष्ठानादेव बन्धो, न त्वमोचकत्वान्ममेति भावः ॥

***न०टी०***—ननु यदि भगवान् स्वाश्रितानुत्तारयति मोहार्णवात्, तर्हि तं कृपालुं प्लवं सर्वेऽपि समाश्रित्य किमिति मोहं नात्यायन् ? अतः प्रशंसामात्रमिदं भगवत इति भावेनाशङ्क्य, तां परिहर्तुमुत्तरश्लोकं व्याचष्टे **तर्हीति** । विशेषणपञ्चके हेतुहेतुमद्भावं दर्शयति **दुष्कृतित्वादित्यादिना** । दुष्कृतित्वापहृतज्ञानत्वाभ्यां मूढाः । अतो नराधमाः । ततः आसुरभावमाश्रिताः । ततो भगवन्तं न प्रपद्यन्त इत्यर्थः । नन्वासुरभाववर्जिता अहिंसादिव्रतस्था अपि भगवन्तं न प्रपद्यन्ते । अत-

स्तत्रासुरभाव एव कारणमित्येतत् कथम् ? इत्यत आह **स चेति** । तेषामपि 'प्रवृत्तिं च' इत्यादिवक्ष्यमाणलक्षणासुरभाववत्त्वादिति भावः । ननु ज्ञानापहारे जीवापहारः स्यात्, ज्ञानरूपत्वात् तेषामित्यत आह **अपहार इति** । ये भगवन्तं न प्रपद्यन्ते ते सर्वेऽप्यासुरं भावमाश्रिता इति ज्ञापयितुमैहिकामुष्मिकभोगपरायणेष्वप्यासुरं भावं सप्रमाणकं दर्शयति **असुष्विति** । देवासुरभावा-वत्यन्तव्यावृत्ताविति दर्शयितुमुभयत्र तुशब्दः ॥

***प्र०दी०***— उत्तरवाक्यं प्रकृतानुपयुक्तमित्यत आह— **तर्हीति** । यदि त्वत्प्रपत्तिर्माया-तरणोपायः तर्हीत्यर्थः । त्वां प्रपद्येति शेषः । तथा च मामेवेत्युक्तमसदिति भावः । दुष्कृतित्वादीनां प्रयोजनान्तराभावाद्धेतुत्वेनान्वये स्थिते किं ते पश्चापि साक्षात् भगवदप्रपत्तिहेतवः किं वा हेतुहेतु-मद्भावेनेत्यपेक्षायामाह— **दुष्कृतित्वादिति** । मूढा मिथ्याज्ञानिनः । विपर्ययस्य । धर्मकार्यत्व-प्रसिद्धेः । अत एव मूढत्वादेव । देवानामुत्तममध्यममनुष्याणां च केवलमिथ्याज्ञानित्वाभावात् । अधिष्ठानयाथात्म्यज्ञानस्य विपर्ययहेतुत्वप्रसिद्धेरपहृतज्ञानत्वाच्च मूढाः । अत एव नराधमत्वादेव । जीवत्रैविध्यविवक्षायां नराधमानामसुरेष्वन्तर्भावस्य प्रसिद्धत्वात् । आसुरभावाश्रयणान्न मां प्रपद्यन्त इत्यर्थः । नन्वासुरो भावो हि हिंसानृतादिलक्षणोऽन्यैर्व्याख्यातः । तद्रहिताश्च क्षपणकादयो न भगवन्तं प्रपद्यन्ते । तत्कथमस्य हेतुत्वमित्यत आह— **स चेति** । एतेषामन्यतमः सर्वेष्वप्यस्तीति भावः । ननु मुक्तौ योग्यानामयोग्यानां च भगवन्तमप्रतिपद्यमानानां एते धर्मा वक्तव्याः । तत्र मुक्तियोग्यानां सम्यग्ज्ञानस्वभावात् तत्कथमपहृतज्ञानत्वमित्यत आह— **अपहार इति** । आगमवाक्यमपि सज्जीवविषयं मुक्तियोग्यानामासुरभावाश्रयणप्रवृत्त्याद्यज्ञानेनोक्तम् । प्रकारान्तरेण घटयितुमाह— **असुष्विति** । इन्द्रियेषु तत्प्रीणन एव रताः । असाविति जातावेकवचनम् । पदसन्धेर्विवक्षाऽधीनत्वादसन्धिर्न दोषः । त्रिभिरित्यत्र भगवतो गौणविग्रहत्वज्ञानस्य कारणमुक्तम् । अत्र तु स्वदोषादेव न मां प्रपद्यन्ते । न तु मत्प्रपत्तेर्मायातरणोपायत्वाभावादित्यतो महान् भेदः ॥

***भा०दी०***— नराधमा इत्युक्तकृत्यमाह **देवानामिति** । अपहृतज्ञानस्य मूढतायां हेतुत्वं व्यनक्ति **अधिष्ठानेति** । **एतेषामिति** । 'प्रवृत्तिं च निवृत्तिं च जना न विदुरासुराः । न शौचं नापि चाचारो न सत्यं तेष्वि'त्यादिना षोडशे वक्ष्यमाणप्रवृत्तिनिमित्तज्ञानादिधर्माणां मध्ये अन्यतमस्य सर्वपुरुषेषु सत्त्वादस्ति तेषामासुरभाव इत्यर्थः । **एत इति** । दुष्कृतित्वादिधर्मा इत्यर्थः । देवा-स्त्वसुरास्त्विति भाव्यं कथं तत्र सन्ध्यभाव इत्यत आह **पदसन्धेरिति** । अत एव सप्तमाद्यपादे "इकोऽचि विभक्तौ" (७-१-७३) इत्यत्र वृत्तौ रायत्वं तिसृभावश्च व्यवधानुमाना अपीति श्लोकं नुमेत्यस्यापि पदेन सन्धिमकृत्वा निर्दिष्टम् ॥

*भा०र०*— **इत्युक्तमसदिति** । बहूनामत्ययादर्शनेन प्रपत्तेरपि मायातरणोपायत्वमसदित्यर्थः । **पञ्चापि** दुष्कृतिनः, मूढाः, नराधमाः, मायाऽपहृतज्ञानाः, आपन्नासुरभावाश्चेति पञ्च विशेषणानी-त्यर्थः । दुष्कृतित्वेऽप्यमिथ्याज्ञानित्वं किं न स्यात् ? इत्यत आह **विपर्ययस्येति** । मिथ्या-ज्ञानस्य । "विपरीतनिश्चयो विपर्ययः" (प्र.प.) इति पद्धतिः । **प्रसिद्धेति** ॥ "येषां त्वन्तगतं पापं ते द्वन्द्वमोहनिर्मुक्ताः इत्यादौ" (७.२८) इति शेषः । "द्वन्द्वमोहो मिथ्याज्ञानम्" (गी.ता. ७.२७) इत्युत्तरप्रस्थाने भाष्यकारोक्तेरिति भावः । "अत एव नराधमाः" इत्यत्र "अत एव" इत्यस्यार्थमाह **अत एवेति** । ननु मिथ्याज्ञानित्वान्नराधमाः" इति न साधयितुं युक्तम् ? देवेषु, मुक्तियोग्यमनुष्येषु, नित्यसंसारिषु च व्यभिचारात्, इत्यत आह **देवानामिति** । केवलमिथ्याज्ञानित्वस्य हेतुत्वेन विवक्षितत्वात्, तस्य च देवादिष्वभावान्न व्यभिचारशङ्का । न चैवमपि कल्यादौ व्यभिचारः, तस्य केवलमिथ्याज्ञानित्वेऽपि नराधमत्वाभावादिति वाच्यम् । नराधमशब्देन भगवद्द्वेषित्वरूपचेतनाधम-त्वस्य प्रकृते विवक्षितत्वादिति भावः ।

अपहृतज्ञानत्व-मूढत्वयोर्हेतु-हेतुमद्भावं व्यञ्जितुमाह **अधिष्ठानेति** । अपहृतज्ञानत्वं प्रकृतेऽधिष्ठानयाथात्म्यज्ञानशून्यत्वम्, अधिष्ठानतत्त्वापरिज्ञानं च, शुक्तिकाशकले रजतत्वप्रका-रकभ्रमं प्रति कारणमिति विश्वजनीनम् इति युक्तस्तयोर्हेतुहेतुमद्भाव इति भावः । "अत एवाऽसुरं भावम्" इत्यत्र "अत एव" इत्यनेनाव्यवधानेन प्रकृतस्य मूढत्वस्य परामर्शे, पूर्वं तत्र साध्य-स्योक्तत्वेन तत्समुच्चयार्थं चशब्दानुबन्धप्रसङ्गः, इत्यतो विवक्षितमर्थमाह **नराधमत्वादेवेति** ॥ ननु नराधमत्वहेतुना आसुरभावसाधनमयुक्तम् । नराधमत्वस्य मनुष्यत्वव्याप्यजातिरूपत्वे कलि-विप्रचित्त्यादावभावाद्, विरुद्धत्वाच्च । उत्तममध्यमान्यचेतनत्वरूपत्वे, "तानहं द्विषतः क्रूरान् संसारेषु नराधमान्" (१६.९) इति वक्ष्यमाणरीत्या द्वेषिचेतनरूपत्वे वा, आसुरत्वस्य जातिविशेषरूपत्वे पिशाचादौ व्यभिचार इत्यत आह **जीवत्रैविध्येति** । विवक्षितेन हेतुना प्रवृत्तिनिवृत्त्याद्यपरिज्ञानादि-लक्षणासुरभावस्य साध्यत्वाङ्गीकारान्नोक्तदोषः । "त्रिविधा जीवसङ्घास्तु देवमानुषदानवाः" (भ.प.) इत्यादिप्रमाणसिद्धजीवत्रैविध्यविवक्षायाम् उक्तलक्षणासुरभावस्य दैत्य-रक्षः-पिशाच-मर्त्याधमरूप-चेतनाधमेष्वभ्युपगमादिति भावः । नराधमत्वेनासुरभावसाधनेन फलितं दर्शयति **आसुरेति** ।

**अन्यैर्व्याख्यात इति** । तथा सङ्करः "**आसुरं भावं** हिंसानृतादिलक्षणम् आश्रिताः" (शां.भा. ७.१५) इति । **क्षपणकादयः** बौद्धप्रभेदाः । **अस्य** अनाश्रितहिंसानृतादिलक्षणासुर-भावत्वस्य । **हेतुत्वं** प्रपत्तौ । निषिद्धत्वाभावस्याधर्मसाधनत्वाभावव्याप्यत्ववत्, अनासुरभावस्य प्रपत्तिव्याप्यत्वाभावाद् आसुरभावोपपत्तौ न प्रयोजक इति भावः । **एतेषामन्यतम इति** ।

प्रवृत्तिनिवृत्त्यज्ञानजगदसत्यत्वावबोधादीनां षोडशे (१६.७-८) वक्ष्यमाणानाम् असुरधर्माणां मध्येऽन्यतमः सर्वेषु क्षपणकादिष्वस्तीति युक्तम् आसुरभावो न प्रपत्तिसाधनमिति भावः । **एते धर्मा इति** । मुक्तौ योग्यानां नराधमत्वातिरिक्ताः दुष्कृतित्व-मूढत्व-अपहृतज्ञानत्व-आश्रितासुर-भावत्वलक्षणा वक्तव्याः । अयोग्यानां तु पञ्चापि धर्माः । तत्रापि मूढत्वं केवलमिथ्याज्ञानित्वं च, अपहृतज्ञानत्वं चानुत्पन्नमनोवृत्तिरूपाधिष्ठानयाथात्म्यज्ञानत्वरूपं द्रष्टव्यमिति विवेक्तव्यम् । तमोयोग्येष्वप्यपहृतज्ञानत्वम् अनुमतमिति दुष्कृतित्वापहृतज्ञानत्वाभ्यां मूढाः, अतो नराधमा इति **प्राचीनटीकया**ऽवगम्यते । अपहारस्य सज्जीवविषयत्वे प्रमाणे साधारणजीवशब्दोपादानायोगः ? इत्यत आह **आगमेति** । "ज्ञानं स्वभावो जीवानाम्" (व्या.यो.) इत्यागमवाक्यम् । न केवलं भाष्यमिति अपिशब्दः ।

अत्रैवमनुप्रकारः— विमता अतीर्णमाया अप्रपन्नभगवच्छरणा आश्रितासुरभावत्वात् सम्प्रतिपन्नवत् । न चात्र हेतोरसिद्धिः । विमता आश्रितासुरभावाः मूढत्वादिति तत्साधनात् । आसुरभावाश्रयणं च ब्रह्मवायुसरस्वतीभारत्यतिरिक्तदेवेषु "द्रोणकर्णद्रौणिकृपाः कृष्णाभावे मनो दधुः" (म.भा. ता.नि. १८.२५) इत्यादिना निर्णये मनःशब्दोपादानाद् आगन्तुकं विवक्षितमिति न क्षुद्रोपद्रवः । अत्र मूढत्वं नाम मिथ्याज्ञानित्वमात्रं विवक्षितम् । न चात्राप्यसिद्धिः शङ्कनीया । अपहृतज्ञानत्व-दुष्कृतित्वाभ्यां तत्सिद्धेः । अपहृतज्ञानत्वं चाभिभूतज्ञानत्वं विवक्षितमिति योग्यपक्षे । मुक्त्ययोग्यपक्षे तु प्रधानानुमानम् उक्तरूपमेव । तत्रासुरभावो नराधमत्वेन हेतुना साधनीयः । नराधमत्वं च भगवद्द्वेषिस्वभावत्वमिति ज्ञातव्यम् । तच्च केवलमिथ्याज्ञानित्वरूपमूढत्वेन साधनीयम् । देवानाम् उत्तममध्यममनुष्याणां च केवलमिथ्याज्ञानित्वाभावान्न तत्र व्यभिचारः शङ्कनीयः । केवलमिथ्याज्ञानित्वं चापहृतज्ञानत्वदुष्कृतित्वाभ्यां हेतुभ्यामनुमातव्यम् । तत्राप्यपहृतज्ञानत्वम् अनुत्पन्नाधिष्ठानयाथात्म्यज्ञानत्वेन द्रष्टव्यमिति । **घटयितुम्** आसुरभावाश्रयणम् । **आह** असुरशब्दार्थम् । असुशब्दस्य "पुंसि भूम्न्यसवः प्राणाः" (अ.को.) इति प्राणार्थत्वेन तत्र रमणमयुक्तम् इत्यतोऽत्र विवक्षितम् 'असु'शब्दार्थमाह **इन्द्रियेष्विति** । "अस्यन्ति = क्षिपन्ति पुरुषान् विषयेषु" इति इन्द्रियाण्यसुशब्दार्थः । तदुपपदाद् रमेः "ञमन्ताड्डः" (उ.सू.) इति डप्रत्यय इति भावः । तत्रापि रमणं नाम किम् ? इत्यतस्तात्पर्यमाह **तत्प्रीणने इन्द्रियप्रीणन एवेति** । "असुषु रताः" इति भाष्यार्थ-संवादायाह **जातावेकवचनमिति** । 'असुषु' इत्यर्थ इति भावः । "इको यणचि" इति यणादेशे 'देवास्त्वसुराः' इति निर्देशः स्यात् ? इत्यत आह **पदसन्धेरिति** । तथा च महाभाष्यकारः "शयाना वर्धते दूर्वा", "आसीनं वर्धते विषम्" इति "लक्षणहेत्वोः क्रियायाः" इति सूत्रे । तथा वृत्तिकारवचनं च,

रायत्वं तिसृभावश्च व्यवधानान्नुमा अपि ।
नुड् वाच्य उत्तरार्थं तु इह किञ्चित् त्रपो इति ॥" इति ।

अत्र च संहिताया अविवक्षिततत्वात् "नुमा अपि" इत्यत्र सवर्णदीर्घत्वं न कृतमिति । तुशब्दस्य यण् न कृत इति च हरदत्तः ।

ननु "त्रिभिर्गुणमयैर्भावैः" (७.१३) इत्यत्र "मोहितं नाभिजानाति" इति भगवद्याथात्म्याज्ञानमुक्तम् । अत्रापि "माययाऽपहृतज्ञानाः" इति भगवद्याथात्म्याज्ञानमुच्यत इति पुनरुक्तिः । किंच यदि त्वत्प्रतिपत्तिर्मायातरणोपायः, तर्हि त्वां प्रपद्य सर्वेऽपि किमिति नात्यायन् ? अतो "मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते" (७.१४) इति त्वदुक्तम् असदिति च प्राक् चोदितम्, तत्परिहारो न कृतः ? इत्यत उभयोस्तात्पर्यभेदमाह **त्रिभिरित्यत्रेति** । **गौणविग्रहत्वज्ञानस्य** गुणातीतत्वाज्ञानस्य च, **कारणं** दुर्गाभिमततमोगुणजनितमोहरूपम् । **स्वदोषादेव** दुष्कृतित्वादिना साधितादासुरभावरूपादेव । अतो यच्चोदितं "मामेवेत्युक्तमसत्" इति, तदपि परिहृतम् । तात्पर्यभेदाच्च न पौनरुक्त्यशङ्काऽपीति भावः ॥ १५-१६ ॥

**गीता**

## तेषां ज्ञानी नित्ययुक्त एकभक्तिर्विशिष्यते ।
## प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः ॥ १७ ॥

***विं०विं०***— नित्ययुक्तः सदा भगवत्समाधिमान् । एकस्मिन् मय्येव प्राधान्येन भक्तिर्यस्य स एकभक्तिः । तदुक्तम्—

'यादृशी तत्र भक्तिः स्यात् तादृश्यन्यत्र नैव चेत् ।
अनन्यभक्तिः सा ज्ञेया विष्णावेव तु सा भवेत् ॥
अन्यत्र वैष्णवत्त्वेन लक्ष्मीब्रह्महरादिषु ।
कुर्याद्भक्तिं नान्यथा तु तद्वशा एव ते यतः' ॥ इति ॥

***वा०ल०***— 'उदाराः' इत्यत्र एते सर्व उदाराः उत्कृष्टाः । तत्रापि ज्ञानी अपरोक्षज्ञानी, आत्मैव जीव एव मे तु विशेषेण मतः सम्मतः । मिथ्याज्ञानिनां नराधमत्वोक्तेः ज्ञानी नरश्रेष्ठ इत्यर्थः । ज्ञानी यद्वा, तत्रापि ज्ञानी तु एतेभ्योऽपि विशेषेण आत्मैव अहमेवेति तु मेऽमतः मतो न । चतुर्विधा भजन्ते माम्, एकभक्तिर्विशिष्यते, स च मम प्रियः इत्यादिना ज्ञानिनोऽपि भेदस्यैव

मया प्रपञ्चनात् सर्वैक्यवादिनां ज्ञानिमात्रैक्यस्यानभिमतत्वाच्चेति भावः । स च मम प्रियः इत्युक्तत्वात् 'मम प्राणा हि पाण्डवाः' इतिवत् । ज्ञानी आत्मैव मम देह एव, मम देहवत् प्रिय इति वा ॥

*सा०सं०*— **नित्ययुक्तः** सदा भगवत्समाधिमान् । एकस्मिन् मय्येव प्राधान्येन भक्ति-र्यस्यासौ **एकभक्तिः** । **विशिष्यते** अतिशयितो भवति । कुत इत्यतो ममातिप्रियत्वादित्याह **प्रियो हीति** ॥

*अ०प्र०*— तेषां मध्ये ज्ञानी श्रेष्ठ इत्याह **तेषामिति** ।

तेषां मध्ये[१], नित्ययुक्तः[२], एकभक्तिः[३], ज्ञानी[४], विशिष्यते[५], हि यस्मात् तस्मात्[६], अहं[७], ज्ञानिनः[८], अत्यर्थं[९], प्रियः[१०] मम[११] स चात्यर्थं[१२], प्रियः[१३] इत्यन्वयः ।

तेषां = चतुर्विधानां भजनशीलानां मध्ये[१], नित्ययुक्तः = सदा भगवत्समाधिमान्[२], एकभक्तिः = एकस्मिन् मय्येव प्राधान्येन भक्तिर्यस्य सः एकभक्तिः[३], ज्ञानी[४], विशिष्यते = श्रेष्ठो भवति हि यस्मात् तस्मात्[५] । तत्कथमित्याह **प्रियो हीति**[६] । अहं[७], ज्ञानिनः = ज्ञानाद्यभि-मानाभावेन चित्तविक्षेपाभावात् नित्ययुक्तत्वमेकान्तभक्तिश्च सम्भवति नान्यथा । अत एव तस्य ज्ञानिनः[८], अत्यर्थं = अत्यन्तं[९], प्रियः[१०] मम[११] स चात्यर्थं स भक्तः अत्यन्तं[१२], प्रियः[१३], तस्मा-देतैर्नित्ययुक्तत्वादिभिः चतुर्भिर्हेतुभिः ज्ञानी उत्तमोत्तम इत्यर्थः । तदुक्तम्—

'मय्येव भक्तिर्नान्यत्र एकभक्तिरस उच्यते ।
इति यादृशी भक्तिस्यात्तादृश्यन्यत्र नैव चेत् ॥
अनन्यभक्तिरस्सा ज्ञेया विष्णावेव तु सा भवेत् ।
अन्यत्र वैष्णवत्वेन लक्ष्मीब्रह्महरादिषु ॥
कुर्याद्भक्तिं नान्यथा तु तद्वशा एव ते यतः ।
एवं जानन् तमाप्नोति नान्यथा तु कथञ्चन ॥' इति ॥ १७ ॥

**गीता**

## उदाराः सर्व एवैते ज्ञानी त्वात्मैव मे मतम् ।
## आस्थितः स हि युक्तात्मा मामेवानुत्तमां गतिम् ॥ १८ ॥

*वि०वि०*— अन्यदेवताभक्तेभ्य एते भक्तावराः । ज्ञानी त्वात्मा अहमेवेति मे मतं सिद्धान्तः । अतिप्रियत्वादभेदोपचारः । अथवा, आप्नोतीत्यात्मा । 'यच्चाप्नोति यदादत्त' इति वचनात् ।

ज्ञानी मां प्राप्नोतीत्यर्थः । हि यस्मात् । ज्ञानी अनुत्तमां परां गतिं मां प्रति । युक्तात्मा मामेव आस्थितः ॥

*वा०ल०*— मे अमतः इति यदुक्तं तदेव स्पष्टयति **आस्थितः स हीति** । सः ज्ञानी अनुत्तमां गतिम् अनुत्तमगतिदातारं मामेव आस्थितः आश्रितः । आश्रयाश्रयिभावेन भिन्न इत्यर्थः ॥

*सा०सं०*— एकप्रशंसया प्राप्तेतरनिन्दां निराह **उदारा इति** । **एते** चत्वारो जनाः । ज्ञानी **मे** आत्मैव स्वरूपमेव, अतिप्रियत्वात्, मदधीनसत्तादिरिति ज्ञानवत्त्वाद्वा, अभेदोपचारः । यद्वा, आप्नोतीति आत्मा । मत्प्राप्तिमानित्यर्थः । इति **मे मतं** सिद्धान्तः । **स हि** ज्ञानी । **अनुत्तमां गतिमुद्दिश्य युक्तात्मा** समाधियुक्तमनाः । **मामास्थितः** प्राप्त इति योजना ॥

*अ०प्र०*— तर्हि किमपरे आर्तादयः त्रयस्त्वद्भक्ताः संसरन्ति न हीत्याह **उदारा इति** ।

हे भारत !, एते[१], सर्वे एव[२], उदाराः[३], ज्ञानी तु[४], आत्मा एव[५], मे मतं[६], हि यस्मात्[७], अतो सः[८], युक्तात्मा[९], अनुत्तमां गतिं[१०] मामेव[११] आस्थितः[१२] इत्यन्वयः ।

हे भारत ! हि = यस्मात् एते सर्वे = एव एते आर्तादयः[१], सर्वेऽपि मद्भजकाः[२], उदाराः = अन्यदेवताभक्तेभ्योऽपि वराः मुक्तियोग्या महान्ताः[३], तत्रापि ज्ञानी तु पुनः[४], आत्मा एव अहमेवेति[५], मे मतं = मम सम्मतं निश्चयः[६], स्वात्मवत् = अतिप्रियत्वेन सम्मत इति भावः । यद्वा आप्नोतीत्यात्मा यच्चाप्नोतीत्युक्ते ज्ञानी मां प्राप्नोतीत्यर्थः[७], एतदेव विवृणोति **आस्थित इति** । अतः कारणात् सः ज्ञानी[८], युक्तात्मा नियुक्तमनाः मदेकचित्त इति यावत्[९], अनुत्तमां गतिं = न विद्यते उत्तमा यस्याः सा अनुत्तमा । तां अनुत्तमां एतादृशीं गतिं गम्यत इति गतिः । सर्वोत्तमं[१०] मां प्रति[११] मामेव आस्थितः = मद्व्यतिरिक्तमन्यत्फलं न मन्यत इत्यर्थः । तदुक्तं भागवते—

न तथा मे प्रियतमः आत्मयोनिर्न शङ्करः ।<br>
न च सङ्कर्षणो न श्रीर्नैवात्मा च यथा भवान् ॥

**भाष्यम्**

**एकस्मिन्नेव भक्तिरिति एकभक्तिः । तच्चोक्तं गारुडे— "मय्येव भक्तिर्नान्यत्र एकभक्तिः स उच्यते ॥" इति ॥ १७ ॥ १८ ॥**

*प०टी०*— भक्तेरेकत्वं नाम किम् ? इत्यत आह **एकस्मिन्निति** । 'अस्य' इति संयोज्यम् ॥

***न०टी०***— ये तु सुकृतिनस्ते सर्वे हरिं भजन्ते । तत्र ज्ञान्येव तं शरणं व्रजतीत्यभिप्राय उत्तरश्लोकचतुष्टये भगवतोऽन्यभजनीयत्वादर्शनादेवैकभक्तिः । न तु स्वतोऽन्यादर्शनादिति भावेन 'एकभक्ति'पदं सप्रमाणकं व्याचष्टे **एकस्मिन्निति** । वैष्णवत्त्वेन रमाब्रह्मादिषु भक्तौ विद्यमानायामपि प्राधान्येनैकस्मिन् विष्णावेव भक्तिर्यस्यासावेकभक्तिरित्यर्थः ।

***प्र०दी०***— एका भक्तिर्यस्येति विग्रहे भक्तिशब्दस्य प्रियादित्वात्तस्मिन् परतः पूर्वपदस्य पुंवद्भावो न सिद्ध्यतीत्यालोच्याह— **एकस्मिन्नेवेति** । अस्येत्यध्याहार्यम् । तथापि वैयधिकरण्याद्बहुव्रीहिर्न सिद्ध्यतीति चेन्न । आगमसिद्धत्वाच्चेत्याह— **तच्चेति** । यस्येत्युपस्कर्तव्यम् ॥

***भा०दी०***— मञ्जर्यां च नुमात्रपीत्यत्र संहिताया अविवक्षितत्वात्सवर्णदीर्घत्वं न कृतमित्युक्तं **प्रियादित्वादिति** । "स्त्रियाः पुंवद्भाषितपुंस्कादनूङ्समानाधिकरणे स्त्रियामपूरणी प्रियादिषु" (६-३-३४) इति षष्ठतृतीयपादीयसूत्रेण उक्तपुरकात्परस्यानूङ्स्त्रीप्रत्ययस्य पुंवद्रूपं स्यात् । एकार्थे स्त्रीलिङ्गे परतः न तु पूरण्यां प्रियादौ परत इति । पुंवद्भावस्यापि पादोपरतो निषेधादेकपदस्यापि पादौ पाठादित्यर्थः । एका भक्तिर्यस्येत्युक्तावपि (६-३-६२) एकतद्धिते चेति तत्पादगतः सूत्रेण तद्धितान्ते उत्तरपदे च परत एकशब्दस्य ह्रस्वो भवतीत्युक्तेरेकभक्तिरिति रूपसिद्धावपि वक्ष्यमाणप्रमाणानुरोधात्तद्व्यधिकरणबहुव्रीहिरप्याश्रित इति ज्ञेयम् । **तथापीति** । एकशब्दस्य पुल्लिङ्गतोपपत्तावपीत्यर्थः । "अनेकमन्यपदार्थे" (२-२-२४) इति सामानाधिकरणानामेव बहुव्रीह्युक्तेरिति भावः । बहुव्रीहित्वव्याख्यापनायाह **इत्युपस्कर्तव्यमिति** । अन्यथा स उच्यत इति उक्तानुपपत्तेरिति भावः ॥

***भा०र०***— **इति विग्रह इति** । सामानाधिकरण्यलाभायाभ्युपगते "एकाभक्तिरित्येव निर्देशः स्यात्, यतः" इति शेषः । **प्रियादित्वात्** प्रियादिगणे पाठात् । तथा च वृत्तिः "प्रिया मनोज्ञा कल्याणी सुभगा दुर्भगा भक्तिः" इति । **तस्मिन्** भक्तिशब्दे **पूर्वपदस्य** एकाशब्दस्य । **पुंवद्भावः** "स्त्रियाः पुंवत्" इति सूत्रोक्तं पुंशब्दस्येव रूपम् । "स्त्रियाः पुंवत् भाषितपुंस्कादनूङ् समानाधिकरणे स्त्रियाम् अपूरणीप्रियादिषु" इति सूत्रस्यायमर्थः । भाषितपुंस्काद् अनूङ् = ऊङभावो यस्यामिति बहुव्रीहिः, निपातनात् पञ्चम्या अलुक्, षष्ठ्याश्च लुक् । तुल्ये प्रवृत्तिनिमित्ते यदुक्तपुंस्कं तस्मात् पर ऊङोऽभावो यत्र तथाभूतस्य स्त्रीवाचकशब्दस्य पुंवाचकस्येव रूपं स्यात्, समानाधिकरणे स्त्रीलिङ्ग उत्तरपदे, न तु पूरण्यां प्रियादौ च परत इति । उदाहरणं च चित्रा गावोऽस्य चित्रगुः, रूपवती भार्या अस्य रूपवद्भार्या इत्यादि ।

नन्वनेन पुंवद्भावसिद्धावपि ''एकतद्धिते च'' इत्यत्र एकशब्दस्य तद्धितप्रत्यये उत्तरपदे च परतः ह्रस्वो भवति । एकस्या भाव एकत्वम्, एकता । एकस्याः क्षीरम् एकक्षीरम् इति व्याख्यानात्, अत्रापि ''एका भक्तिः'' इति विग्रहेऽप्येकशब्दे ह्रस्वो भविष्यतीत्यतः किमिति व्यधिकरणबहुव्रीहिराश्रयितव्य इति चेन्न । ''एकतद्धिते च'' इति सूत्रस्य व्यधिकरणार्थमिदमिति वदता हरदत्तेन भिन्नविभक्तिकविग्रहस्थल एव प्रवर्तितत्वेन ''एका चासौ भक्तिः'' इति सामानाधिकरण्यस्थलेऽनवतारात् । अत एव भाष्ये वृत्त्यादौ च ''एकस्याः क्षीरमेकक्षीरम्'' इत्यादि व्यधिकरणमेवोदाहृतम् । ''सर्वनाम्नो वृत्तिमात्रे पुंवद्भावः'' इति ''दिङ्नामान्यन्तराले'' इति सूत्रे भाष्यकारेष्ट्या गतार्थत्वात् ''एकतद्धिते च'' इति सूत्रमेवेदं न कर्तव्यमित्याधुनिकैनैतत्सूत्रस्य प्रत्याख्यातत्वात् । न चैवमुक्तभाष्यकारेष्ट्यैवाप्येकशब्दे पुंवद्भावो भविष्यतीति व्यधिकरणबहुव्रीह्याश्रयणमनुचितमिति वाच्यम् । ''उपायस्य उपायान्तरादूषकत्वम्'' इति भावेन व्यधिकरणबहुव्रीहेरभ्युपगमोपपत्तेः । 'अपूरणीप्रियादिषु' इति पर्युदस्तव्यतिरिक्तविषयत्वोपपत्तेश्च ।

वस्तुतस्तु ''सर्वनाम्नो वृत्तिमात्रे'' इतीष्टिरनादरणीया ''स्त्रियाः पुंवत्'' इति योगविभागेन ''एकस्याः क्षीरमेकक्षीरम्'' इत्यादीष्टसिद्धेः । सम्मतं चैवं योगविभागाश्रयणं वैयाकरणानाम् । ''दिङ्नामान्यन्तराले'' इत्यत्र ''स पुनः स्त्रियाः पुंवत्'' इति योगविभागेन सिद्ध्यति, इति न्यासकारवचनात् । न चैवमनेनैव योगविभागेनात्रापि पुंवद्भावसिद्धेर्न व्यधिकरणबहुव्रीह्याश्रयणं युक्तमिति वाच्यम् । एतत्सूत्र एव 'अपूरणीप्रियादिषु' इति भक्तिशब्दे परतः पुंवद्भावनिषेधादिति मीमांसामभिसन्दधानो भाष्यकारो व्यधिकरणबहुव्रीहिरित्याह **इत्यालोच्येति** । एतदङ्गीकारश्च भगवत एकस्यैव भक्तिविषयत्वप्रदर्शनरूपमहाप्रयोजनलाभायेति हृदयमिति भावः । **अस्येत्यध्याहार्यमिति** । ''एकस्मिन्नेव भक्तिः'' इत्यनन्तरम् । **इत्यध्याहार्यम्** ''यस्य सः'' इत्यध्याहार इत्यवचनम् 'अस्य' इत्यनेन बहुव्रीहित्वस्फोरणस्य कृतत्वात्, लाघवाच्च । अत एव 'चित्रगुः' इत्यत्र ''चित्रा गावो यस्य'' इत्येव विग्रहः प्रदर्शितो हरदत्तेन ।

**सङ्करभाष्यव्याख्यात्रा** च ''एकस्मिन् भगवति भक्तिरस्येत्येकभक्तिः इत्येवोक्तम् । **प्राचीनटीकायाम् ''एकस्मिन्** विष्णावेव भक्तिर्यस्यासावेकभक्तिः'' इत्युक्तिरुभयथाऽप्यन्यपदार्थनिर्देशसम्भवाभिप्राया । वक्ष्यति च ''यस्यासौ इत्युपस्कर्तव्यम्'' इति । **तथाऽपि** सप्तम्यन्तत्वाश्रयणेन ह्रस्वत्वेऽपि । **वैयधिकरण्यादिति** । ''बहुव्रीहिः समानाधिकरणानामिति वक्तव्यम्, व्यधिकरणानां मा भूत्'' इति वृत्तिकारवचनात् प्रकृते च भिन्नविभक्तिकत्वरूपवैयधिकरण्यान्न बहुव्रीहिः सिध्यतीत्यर्थः । 'चेन्न' इत्यनन्तरं ''व्यधिकरणानां 'सप्तमीविशेषणे बहुव्रीहौ' इत्यत्र सप्तम्यन्तस्य पूर्वप्रयो-

ज्यत्वोक्तिलिङ्गात् सिद्धेरिति ब्रूमः'' इति वाक्यं संयोज्यम् । तल्लिङ्गादन्यत्र व्यधिकरणबहुव्रीह्यभ्युप-गमेऽपि, अत्र स एवाश्रयितव्य इत्यत्र को विशेषहेतुः ? इत्यत आह **आगमसिद्धत्वादिति । तत्** व्यधिकरणपदबहुव्रीह्याश्रयणम् । ''गारुडे उक्तं च'' इति भाष्ये चशब्दान्वयः । **यस्यासावित्युप-स्कर्तव्यमिति** । ''मय्येव भक्तिः, अन्यत्र सा नास्ति यस्यासौ मद्भक्तिः'' इति व्याससमासौ ज्ञातव्यौ ।

ननु मद्भक्तिशब्दः किमिति व्याख्यायते ? प्रकृतार्थासङ्गतत्वात्, इत्यत उक्तं भाष्ये **स एवैकभक्तिरुच्यत** इति । 'एकभक्तिः' इत्यत्र गीतायामेकशब्देन अहं भगवानेवोच्ये, स च सप्तम्यन्तः, ''एकस्मिन् भक्तिरस्य'' इति व्यधिकरणपदश्च बहुव्रीहिरिति सिद्धान्तितव्यमिति प्रमा-णार्थत्वावगतेर्नासङ्गतिरिति व्याख्येयम् । एवं वाक्यभेदज्ञापनायैव पदसन्धिर्न कृत इति भावः । **केचित्तु** भूम्ना 'यस्यासौ' इत्यस्य बहुव्रीहित्वस्फोरणार्थत्वप्रसिद्धेः, प्रमाणस्थं 'सः' इति पदम् 'असौ' इत्यनूद्य तस्य 'यस्य' इति पदेन सम्बन्धोऽभिमत इति भावेन टीकायाम् 'यस्यासौ' इत्युपस्कर्तव्यम्, इत्युक्तमित्याहुः । भाष्ये 'सः' इति श्रवणाद् 'यस्य' इत्युपस्कर्तव्यम्, तेन च बहुव्रीहित्वं ज्ञापितम् । ''अन्यत्र नास्ति'' इत्यत्र कर्त्राकाङ्क्षायाम् ''असौ तादृशी'' इति भक्ति-परामर्शपरं पदं वोपस्कर्तव्यमित्यतः पदद्वयमपि सार्थकमिति **अन्ये** ।

**यत्तु** प्रमाणे 'सः' इति श्रवणाद् 'यस्य' इत्युपस्कर्तव्यमित्येव पाठः । 'यस्यासौ' इति पाठस्तु प्रामादिक इति । तन्न । व्याससमासयोः स्वपदविग्रहस्थले एकविधे प्रातिपदिकानुस्यूते व्युत्पत्ति-सिद्धत्वात् । अत एव ''चक्रं पाणौ यस्य स अरिहस्तः'', ''कण्ठे कालो अस्य गलेगरलः'', ''मूर्धनि शिखा यस्य स मस्तकशिखः'' इति व्याससमासयोरप्रदर्शनं विश्वजनीनम् । अत एव च द्वितीयाध्याये ''विधेय आत्मा मनो यस्य सः, जितात्मेत्यर्थः'' (गी.भा. २.६४) इत्यत्र टीकायां ''स इत्यनन्तरं विधेयात्मेति शेषः'' (प्र.दी. २.६४) इत्युक्तम् । अतो मय्येव भक्तिर्यस्यासौ मद्भक्तिः, स एव च एकभक्तिरुच्यत इत्युक्तरीत्या व्याख्याने पदद्वयोपकार एव युक्त इति ॥ ॥ १७-१८ ॥

**गीतातात्पर्यनिर्णयः**

**यादृशी तत्र भक्तिः स्यात् तादृश्यन्यत्र नैव चेत् ।**
**अनन्यभक्तिः सा ज्ञेया विष्णावेव तु सा भवेत् ।**
**अन्येषु वैष्णवत्वेन लक्ष्मीब्रह्महरादिषु ।**
**कुर्याद् भक्तिं नान्यथा तु तद्वशा एव ते यतः ॥ १७-१८ ॥**

*न्या०दी०*— अनन्यभक्तिर्नाम कीदृशीत्यत आह **यादृशीति** ॥ तत्र भक्तिविषये अनेनैकस्मिन् भक्तिर्यस्येति विग्रहः सूचितः । तेन सामानाधिकरण्याङ्गीकारे भक्तिशब्दस्य प्रियादित्वेन पुंवद्भावाप्राप्तिश्च परिहृता ।

*भा०दी०*— **सामानाधिकरण्येति** । एका भक्तिर्यस्येति विग्रहाङ्गीकारे स्त्रियाः पुंवद्भाषितपुंस्कादनूङ् समानाधिकरणे, स्त्रियामपूरणीप्रियादिष्विति सूत्रे प्रियादिषु परतो न पुंवद्भाव इति निषेधाद्भक्तिपदस्य च प्रियादिषु पाठात् पुंवद्भावाप्राप्तावेका भक्तिरित्येव समासेऽपि प्राप्नोतीत्यर्थः ॥ ॥ १७-१८ ॥

**गीतातात्पर्यनिर्णयः**

**एवं जानंस्तमाप्नोति नान्यथा तु कथञ्चन ।**
**पूर्णं वस्तु यतो ह्येको वासुदेवो न चापरः ॥**

*न्या०दी०*— विष्णोः सर्वोत्तमत्वमन्येषां तद्वशत्वं च ज्ञात्वा भक्तिं कुर्वतां किं फलमित्यत आह **एवमिति** ॥ **एवं जानन्निति** ॥ ज्ञात्वा भजन्नित्यर्थः । अनेन ''ज्ञानी त्वात्मैव मे मतम्'' इत्याद्युक्तार्थं भवति । अवधारणार्थतुशब्दस्यार्थो **नान्यथेति** । भगवज्ज्ञानिनामेव मोक्षो नान्येषामिति कुत इत्यत आह **पूर्णमिति** ॥ भगवत एव पूर्णत्वेन मोक्षदानशक्तिर्नान्येषामित्यर्थः । अनेन वासुदेव इत्यस्यार्थ उक्तो भवति ।

*भा०दी०*— **इत्याद्युक्तार्थमिति** । आप्नोतीत्यात्मेति व्युत्पत्त्या मे आत्मा मम प्राप्तिमानित्युक्तार्थमित्यर्थः ॥ **तुशब्दस्येति** । ज्ञानी त्विति तुशब्दस्येत्यर्थः ।

**गीता**

**बहूनां जन्मनामन्ते ज्ञानवान् मां प्रपद्यते ।**
**वासुदेवः सर्वमिति स महात्मा सुदुर्लभः ॥ १९ ॥**

*वि०वि०*— एवंविधो ज्ञानी दुर्लभ इत्याह **बहूनामिति** । बहूनां जन्मनामन्ते ज्ञानवान् भवति कीदृशज्ञानवान् । वासुदेवः सर्वः पूर्णवस्त्विति । ततो मां प्रपद्यते । उक्तं च—

'जन्मभिर्बहुभिर्ज्ञात्वा ततो मां प्रतिपद्यते' । इति ।

अतः स महात्मा ज्ञानी दुर्लभः ॥

***वा०ल०***— बहूनां जन्मनामन्तेऽपि ज्ञानवान् ज्ञानी मां प्रपद्यते एव, न तु तत्राप्यहमेव स भवति, किन्तु गन्तृगम्यभावेन भिन्न एव । किमुतेदानीम् इति भावः ॥

'वासुदेवः सर्वमिति' इत्यत्र 'वेद' इति क्रियायाः परेणाप्यध्याहर्तव्यत्वात् पूर्वोत्तरभेदवाक्यानुसारेण 'यो न वेद' इति क्रियाध्याहारे सर्वसामञ्जस्यं स्यात् । 'वेद' इत्यध्याहारेऽपि इति पूर्वोक्तप्रकारेण 'अहं कृत्स्नस्य जगतः' इत्युक्तकृत्स्नजगत्स्रष्टृत्वं, 'मत्तः परतरं नान्यत्' इत्युक्तसर्वोत्तमत्वं, 'मयि सर्वमिदं प्रोतम्' इत्युक्तसर्वाधारत्वं, 'न मां दुष्कृतिनो मूढाः' इति 'चतुर्विधा भजन्ते माम्' इति चोक्तजीवद्वैविध्यञ्चेति प्रमेयं सुदुर्लभः स महात्मा वासुदेवो वेद । असुदेवः वायुर्वा वेद । एकस्य मूलकर्तृत्वात्, एकस्य भाष्यकर्तृत्वादिति वा ।

यद्वा, "सर्वं समाप्नोषि ततोऽसि सर्वः" इति गीतायामेवोक्तत्वात्, सर्वं सर्वव्यापि ब्रह्म । चिन्मात्रैक्यवादे जीवजडात्मकसकलप्रपञ्चैक्यस्य अयुक्तत्वात् । अत्रैवोक्तबहुभेदवचनेभ्यश्चोक्त एवार्थः । सर्वस्य वासुदेवत्वे सर्वेषां साम्यात् स ज्ञानी महात्मा इत्युक्तमहत्त्वस्य, शुनामपि वासुदेवत्वेन सुदुर्लभः इत्युक्तसुदुर्लभत्वस्य चायोगात् । अस्मिन्नेव श्लोके पूर्वोत्तरार्धयोरेव विरोधाच्च । अभिसरतः स्ववैरिणो वारयतीति वा, अनुसरतः स्वभक्तान् वृणोतीति वा सर्वः । अत एव हि 'इदं ब्रह्म सर्वं खलु' इति श्रुतिरप्याह । तस्मान्न कश्चित्क्षुद्रोपद्रवः ॥

***सा०सं०***— एवंविधज्ञानी दुर्लभ इत्याह- **बहूनामिति** । **बहूनां जन्मनामन्ते** । **वासुदेवः सर्वं**, सर्वं वासुदेवाधीनसत्तादिमदिति ज्ञानवान् । सर्वं सम्पूर्णं वस्तु वासुदेव एवेति ज्ञानवानिति वाऽर्थः । एतेन भगवज्ज्ञानिनामेव मोक्ष इति कुत इति शङ्का निरस्ता । भगवत एव पूर्णत्वेन ज्ञानादिदानसमर्थत्वादिति । **स मां प्रपद्यते** । **स महात्मा** तादृशज्ञानवान् **सुदुर्लभः** । एतेन वासुदेवज्ञानेन यदि मोक्षस्तर्हि सर्वेषां स स्यादिति शङ्का निरस्ता । वासुदेवज्ञानेन मोक्षसत्वेऽपि न तज्ज्ञानिनः सर्वे । अतो न सर्वेषां मोक्ष इति तात्पर्यात् ॥

***अ०प्र०***— एवंविधो ज्ञानी दुर्लभ इत्याह **बहूनामिति** ।

बहूनां जन्मनामन्ते[१-३], वासुदेवः सर्वमिति[४-६], ज्ञानवान् सन्[७], मां प्रपद्यते[८-९], अतः सः[१०] महात्मा[११] सुदुर्लभः[१२] ॥

बहुजन्मसु साधनं विधायान्ते साधनपूर्तौ सत्यां पुण्यसञ्चयनेन अन्ते चरमे जन्मनि[१-३], वासुदेवः सर्वमिति = वासुदेवाधीनसत्तादिमत्त्वात् वासुदेव इत्युपचर्यते ।[४-६], 'सर्वं समाप्नोषि ततोऽसि सर्वः' यद्वत् इति वक्ष्यमाणत्वात् यथा वासुदेवसम्पूर्णवस्त्विति ज्ञानवान् भवति[७], ततो मां[८], प्रपद्यन्ते = भजति[९], अतः सः[१०] महात्मा = परिच्छिन्नज्ञः ज्ञानी[११] सुदुर्लभः[१२] ॥

तदुक्तम्—

बहुभिर्जन्मभिर्ज्ञात्वा ततो मां प्रतिपद्यते ।

तथा,

पूर्णा वस्तु यथा ह्येको वासुदेवो न चापरः ।
एवं विदुर्लभो लोके यत्सर्वे मिश्रयाजिनः ॥

विपरीतयाजिन इत्यर्थः ॥ १९ ॥

**भाष्यम्**

**बहूनां जन्मनामन्ते ज्ञानवान् भवति । तच्चोक्तं ब्राह्मे— "बहुभिर्जन्मभिर्ज्ञात्वा ततो मां प्रतिपद्यते ॥" इति ॥ १९ ॥**

***प०टी०***— ज्ञानोत्पत्त्यनन्तरं बहुजन्मान्ते मां प्रपद्यत इत्यन्यथाप्रतीतिनिरासायाह **बहूनामिति** ॥

***न०टी०***—न च ज्ञानवतो भगवतः तत्प्रपत्तौ बहुजन्मापेक्षः, किन्तु ज्ञानार्जन एव सेत्येतत् सप्रमाणकमाह **बहूनामिति** ॥

***प्र०दी०***— "बहूनां जन्मनां" इत्यत्र ज्ञानोत्पत्त्यनन्तरं भगवत्प्रपत्तौ बहुजन्मव्यवधानमुच्यत इति निरासार्थमाह— **बहूनामिति** । प्रतीतमेव किं न स्यादित्यत आह— **तच्चेति** । ततः तदैव ॥

***भा०र०***— **प्रतीतीति** । "ज्ञानवान् बहूनां जन्मनामन्ते मां प्रपद्यते" इत्यन्वये तथा प्रतीतिः स्यात्, तन्निरासार्थमित्यर्थः । **प्रतीतमेव** ज्ञानवतो भगवत्प्रपत्तौ बहुजन्मव्यवधानम् । कृतचोद्यनिरासकत्वस्फोरणाय प्रमाणे 'ततः' इति पदमनूद्य "सर्वं वाक्यं सावधारणम्" इति भावेन व्याचष्टे **ततस्तदैवेति** । तथा च उत्सर्गतः ज्ञानाव्यवहितकाल एव प्रपत्त्यावेदनात् प्रतीतमसदिति भावः ॥ १७-१८ ॥

'त्रिभिः' (७.१३) इत्याद्यायाः 'कामैस्तैः' (७.२०) इत्यतः प्राक्तन्याः ***समश्लोक्या अक्षरार्थस्तु***— "ये चैव" (७.१२) इति विज्ञाननिरूपणोपसंहारवाक्ये "सत्त्वादिगुणनिर्वृत्तानां सर्वपदार्थानां भगवान् कारणमाश्रयश्च" इत्युक्तम्, तेनैव 'गुणातीतः' इति चोक्तप्रायम् । तत्रैवं शङ्क्यते– यदि त्वं गुणातीतस्तर्हि कथं गुणातीततया न ज्ञायसे ? प्रत्युत सगुण एव ज्ञायसे ? इति । तत्परिहारार्थमुच्यते **त्रिभिरिति** । गुणशब्दात् तादात्म्ये मयट् । सत्त्वरजस्तमोरूपगुणत्रया-

त्मकैः पदार्थकैः सर्वे भावा दृश्यमाना गुणमया इति दर्शयितुम् 'एभिः' इति विशेषणम्, प्रमितैरित्यर्थः । **मोहितं** मोहमापादितं सद् इदं ज्ञानिव्यावृत्तं व्यवहारपतितं **सर्वं जगद् एभ्यः** गुणतत्कार्येभ्यः **परं** विलक्षणं गुणतत्कार्यातीतमिति यावत्, **नाभिजानाति** । अत एव देहतोऽप्यव्ययं गुणक्रियादिदोषशून्यदेहं नाभिजानाति, विपरीतं सगुणं च जानाति । ननु भगवद्विषयस्य सगुणत्वमोहस्य कथं गुणमयाः पदार्थाः कारणमिति चेत् "ऐश्वरो देहो गुणकार्यभूतः देहत्वात् ब्रह्मादिदेहवत्" "ऐश्वराणीन्द्रियाणि गुणकार्याणि इन्द्रियत्वात् सम्प्रतिपन्नवत्" इत्यनुमानाभाससम्पादनेनेति ब्रूमः । वक्ष्यमाणप्रपत्तिरूपोपायाभावात्, तदज्ञजनस्य गुणातीतत्वेन भगवतोऽनुपलम्भः तदापादितदेहत्वाद्यनुमानाभासेन तु सगुणतया विपरीतोपलम्भश्चेत्युक्तं भवति ॥ १३ ॥

ननु यदुक्तं भगवान् गुणमयविग्रह इत्ययं प्रत्ययो विपरीतोपलम्भरूपो मोह इति, तदयुक्तम् । बाधकप्रत्ययाभावात् । सम्यक्प्रत्ययो बाधक इति चेन्न । बहुतरज्ञानविरोधे कतिपयज्ञानानामेव अयथार्थत्वोपपत्तेः । न चोत्तरकाले बाधकप्रत्ययो भविष्यतीति वाच्यम् । अनादौ काले अजातस्योत्तरत्राप्यसम्भवात्, इत्याशङ्क्योच्यते **दैवीति** । देवस्य सम्बन्धिनी । सम्बन्धित्वं च परमप्रियत्वम्, "तत एव अतिशक्ता" इति शेषः । ननु भगवत एवातिशक्तत्वं कुतः ? यत्सम्बन्धितया मायाया अतिशक्तिरिष्यत इति चेन्न । देवशब्दप्रकृतिभूतधात्वर्थतया लाभात् । "दिवु = क्रीडादौ" इति हि देवशब्दार्थो निरुक्तः । सृष्टि-स्थिति-संहार-नियमनादिरूप-क्रीडा-विजिगीषादिमान् देव इति तदर्थावगमात् । एवंविधं देवं शृङ्गग्राहिकया दर्शयितुम् 'मम' इत्युक्तम् । "देवस्य सम्बन्धिनी" इत्यत्र बुद्ध्या विविक्तं 'देवस्य' इति पदं 'मम' इति व्याख्यातं भवति ।

**गुणमयी** गुणाभिमानिनी **माया** दुर्गा **एषा** मोहिका । माया हि तमोगुणेनैवंविधं मोहं जनयति । अनुमानं तु निमित्तमात्रम् । किं ततः ? सा **दुरत्यया** तत्कृतं मोहं कोऽपि नात्येतुं शक्नोति । मायाकृतमोहस्य सुदृढत्वान्न कस्याप्यनुत्तीर्णमायस्य बाधकप्रत्ययो भवतीति । यदि न केवलमनुमानम्, किन्तु भगवतैवोपोद्बलिता मायाऽपि मोहहेतुः, तर्हि सा न कथञ्चिदत्येतुं शक्या इति कस्यापि ज्ञानं न स्यात्, ततश्च ज्ञानिव्यावृत्त्यर्थम् 'इदम्' इति यद् विशेषणं तदसत् ? इत्यत इदमुक्तम् **मामेवेति** । 'भागवताः' इति बुद्ध्या गुर्वादीनां वन्दनादिकं कुर्वन्तोऽपि प्राधान्येन **मामेव ये प्रपद्यन्ते** शरणं प्राप्नुवन्ति **ते एतां** मोहिकां **मायां तरन्ति** यावन्तं कालं साधको भगवन्तं न प्रपद्यते तावन्तमेव कालं मोहिका मायाऽस्तीति न सगुणत्वमोहस्य बाधकप्रत्ययोदयः । कृतायां तु प्रपत्तौ मोहकमायाऽभावाद् "ज्ञानानन्दाद्यात्मकविग्रह एव भगवान्" इति बाधकप्रत्ययो ज्ञानिन उदेष्यतीति हेतोरसिद्ध्या नोक्तचोद्यमिति भावः ॥ १४ ॥

यदि त्वत्प्रपत्तिर्मायातरणोपायः, तर्हि त्वां प्रपद्य किमिति सर्वे तां नात्यायन् ? अतो 'मामेव' इत्युक्तमसत् ? इत्यत उच्यते **न मामिति** । ये अनुपचितयोग्यतापुण्यास्ते **न मां प्रपद्यन्ते** यत **आसुरं भावमाश्रिताः** । कुत आसुरभावाश्रयणम् ? **मूढाः** मिथ्याज्ञानिनो यतः । मूढत्वमपि कुतः ? यतो **दुष्कृतिनः** मायाऽभिभूताधिष्ठानयाथात्म्यज्ञानाश्च । केचिद्भगवद्द्वेषिणो दुष्कृतित्व-अनुपसञ्जाताधिष्ठानयाथात्म्यज्ञानत्वाभ्यां मूढाः केवलमिथ्याज्ञानिनो यतः, अत एव नराधमाः । यत एवम् तत आश्रितासुरभावा इति न मां प्रपद्यन्त इति मुक्तियोग्य-तदयोग्यविषयतया व्याख्येयम् । तत्र मुक्तियोग्यानामासुरभावो नाम "प्रवृत्तिं च निवृत्तिं च जना न विदुरासुराः" (१६.७) इत्यादिना वक्ष्यमाणः प्रवृत्त्यज्ञानरूपः, इन्द्रियप्रीणनरतत्वरूपश्च बोद्धव्यः । इतरेषां तु भावप्रदीपिकोक्तरीत्या भगवद्द्वेषिस्वभावत्वमिति विवेक्तव्यम् । 'त्रिभिः' (७.१३) इत्यत्र भगवतो गौणविग्रहत्वज्ञानस्य कारणमुक्तम् । अत्र तु स्वदोषादेव न मां प्रपद्यन्ते, न तु मत्प्रपत्तेर्मायातरणोपायत्वाभाव इत्युच्यत इत्यतो महान् भेदः । अतः किमिति सर्वे नात्ययन् ? इति शङ्कितम्, तत्परिहृतं वेदितव्यम् ॥१५॥

ननु त्वत्प्रपत्तेर्मायातरणाकारणत्वात् स्वदोषाद्वा त्वां न प्रपद्यन्त इत्यत्र कथं निर्णयः ? इत्याशङ्क्य प्रेक्षावतां मद्भजनमेव निर्णयकारणमिति मनसि निधाय, तदुपपादनाय दुष्कृतित्वादि-स्वदोषशून्याः केचिन्मां प्रपद्यमानाः सन्तीत्युच्यते **चतुर्विधा इति** । **आर्तः** व्याघ्र-चोर-रोगाद्यभिभूतः तन्निवृत्तिकामः सन्निति योज्यम् । **जिज्ञासुः** आत्मज्ञानेच्छुः, **अर्थार्थी** भोगलोलः, ज्ञानी आत्मविच्चेत्येवं **चतुर्विधाः सुकृतिनः** जनाः **मां भजन्ते** सेवन्ते । 'भरतर्षभ', 'अर्जुन' इति सम्बुद्धिरादरार्था ॥ १६ ॥

'भजन्ते' इत्युक्त्या प्राप्ता सेवकेषु साम्यशङ्का परिह्रियते **तेषामिति** । चतुर्णां मध्ये **ज्ञानी नित्ययुक्तः** सदा भगवत्समाधिसम्पन्नः **एकभक्तिः** वैष्णवत्वेन रमाब्रह्मादिषु भक्तौ विद्यमानायामपि प्राधान्येनैकस्मिन् मयि विष्णावेव भक्तिरस्यास्तीति तथोक्तः । **विशिष्यते विशेषम्** आधिक्यमापद्यते । तत्प्रकारविवरणम् **प्रियो हीति** । **ज्ञानिनोऽत्यर्थम् अहं प्रियो** यतः, ततः **सः** ज्ञानी **मम प्रियः** इत्येवंरूपो विशेषः पूर्वोक्तो ज्ञातव्य इति ॥ १७ ॥

चतुर्ष्वेकस्य प्रशंसया प्राप्तेतरनिन्दा परिह्रियते **उदारा इति** । **एते** चत्वारोऽपि **उदाराः** महान्तः **एव** अन्यदेवताभक्तेभ्यः, किन्तु **ज्ञानी त्वात्मा** अहम् **एव** इत्यतिप्रियत्वादभेदोपचार इति **विवृतिकृतः** । **स्वामिनस्तु** ज्ञानिनो विशेषेण भगवत्प्रतिमात्वात्, ज्ञानित्वात् 'आत्मैव' इत्यभेदोक्तिः । प्रतिमायां चाभेदोक्तिः प्रसिद्धा । सर्वस्य भगवत्प्रतिमात्वेऽपि विशेषतो ज्ञानी रसादिरिव हरेरुपासने प्रतिमेति प्रतिपादयितुमुक्तमुपपद्यते । 'आस्थितः' इत्युक्त्वा "वासुदेवः सर्वम्" (७.१९)

इति वाक्यं च 'प्रभवादेः' इत्युक्तन्यायेनैव रसोऽहम् इत्यादेरपि व्याख्यानं सिद्धम्— रसादीनां सत्ताप्रतीत्यादिकारणत्वात्, तद्व्योकृत्वाच्च भगवान् रसादिरित्यभेदेनोच्यते" (प्र.दी. ७.८) इति विज्ञाननिरूपणप्रकरणे टीकोक्तरीत्या वासुदेवः सर्वसत्ताप्रतीत्यादिकारणत्वात् तद्व्योकृत्वाच्च सर्वमुच्यत इति ज्ञानवान् सुदुर्लभ इति व्याख्यातवन्तः ।

उत्तरप्रस्थाने तु **ज्ञानी तु मे** मम **आत्मा** प्राप्त एव,

"यच्चाप्नोति यदादत्ते यच्चात्ति विषयानिह ।
यच्चात्मसन्ततो भावस्तस्मादात्मेति भण्यते ॥" (म.भा.)

इति भारते, प्राप्तेरात्मशब्दार्थत्वोक्तेः । कुतस्त्वां प्राप्नोत्येव ज्ञानी ? इति । यस्मात् **स हि** ज्ञानी अनुत्तमां सर्वातिशायिनीं **गतिम्** उद्दिश्य युक्तात्मा समाहितमना उपासीनः सन् **मामेवास्थितः** प्राप्तः । अतो ज्ञानी मत्प्राप्तिमानेवेति ॥ १८ ॥

यद्यनुमत्तां गतिमुद्दिश्य त्वामेवास्थितो ज्ञानी तवाऽत्मा, तर्ह्यनादिकालादारभ्यैव त्वत्प्राप्तिः कथं न स्यात् ? इत्यत उच्यते **बहूनामिति** । सत्यं "ज्ञानवान् मां प्रपद्यत एव" इति । तच्च ज्ञानं कस्याप्यनादिकालाद् भवति, किन्तु बहूनां जन्मनामवसान एव । यदाहुः—

"निःशेषगतदोषाणां बहुभिर्जन्मभिः पुनः ।
स्यादापरोक्ष्यं हि हरेः..........................॥"

(अ.व्या.३.४.४ अधि.९०, १५०२ श्लो.)

इति "बहुभिर्जन्मभिर्ज्ञात्वा ततो मां प्रतिपद्यते" (ब्रा.) इति च । किंविशेष्यककिंप्रकारकज्ञानवानत्र तवात्मा ? इत्यत इदमुदितम् "**वासुदेवः सर्वं** पूर्णं वस्त्विति **ज्ञानवान्**" इति । यद्येवंविधज्ञानेन मोक्षः, तर्हि सर्वेषां स्यात् ? इत्यत उक्तम् **स इति** । सः उक्तज्ञानवान् **महात्मा सुदुर्लभः** । "सुदुर्लभः प्रशान्तात्मा कोटिष्वपि महामतः" (भाग. ६.१४.५) इत्याद्युक्तेः सुतरां दुर्लभः । वासुदेवस्य पूर्णत्वज्ञानेन मोक्षसद्भावेऽपि तज्ज्ञानिनो न सर्व इति, न सर्वेषां मोक्ष इति भाव इति ॥ १९ ॥

**गीतातात्पर्यनिर्णयः**

**एवंविद् दुर्लभो लोके यत् सर्वे मिश्रयाजिनः ॥ १९ ॥**

**"विष्णुं तत्परमज्ञात्वा रमाब्रह्महरादिकान् ।**
**यजन्नपि तमो घोरं नित्यदुःखं प्रयाति हि ॥**

*प्रका०*— "कामैस्तैस्तैर्हृतज्ञानाः....... प्रपद्यन्तेऽन्यदेवता" इत्येतदादेः "लभते च ततः कामान् इत्येतदन्तस्यार्थ उच्यते **विष्णुं तत्परमित्यादिना** ।

*न्या०दी०*— यदि भगवज्ज्ञानेन मोक्षस्तर्हि सर्वेषां स्यादित्यत आह **एवंविदिति** ॥ वासुदेवज्ञानेन मोक्षसद्भावेऽपि तज्ज्ञानिनो न सर्व इति न सर्वेषां मोक्ष इत्यर्थः । एतेन स इति व्याकृतं भवति । लोके भगवज्ज्ञानिनां बहूनां दृश्यमानत्वात् कथं दौर्लभ्यमित्यत आह **यदिति** ॥ **मिश्रयाजिन इति** । वैपरीत्येन यजन्त इत्यर्थः । एतेन कामैरित्यादेस्तात्पर्यमुक्तं भवति । किं तेषां फलमित्यत आह **विष्णुमिति** ॥ **तत्परं** रमादिभ्यः परम् । **अज्ञात्वा** विपरीतं ज्ञात्वा च ।

*भा०दी०*— मिश्रयाजिनां त्रिदिवभूगोचरत्वेन वक्ष्यमाणतमःप्राप्तेरयोगादाह **वैपरीत्येनेति** । विधिवैपरीत्येनेत्यर्थः । अज्ञानमात्रेण तमःप्राप्तेरयोगादाह **विपरीतं ज्ञात्वा चेति** ॥

**गीता**

**कामैस्तैस्तैर्हृतज्ञानाः प्रपद्यन्तेऽन्यदेवताः ।**
**तं तं नियममास्थाय प्रकृत्या नियताः स्वया ॥ २० ॥**

*वि०वि०*— लोके भगवज्ज्ञानिनो लभ्यमानत्वात् कथं दुर्लभत्वमित्यत आह **कामैरिति** । तत्तत्कामापहृतज्ञानास्तत्तदागमोक्तं नियममाश्रित्य स्वस्वभावेन वशीकृता अन्यदेवता भजन्ते । अतो दृश्यमानानां सर्वेषां मिश्रयाजित्वाच्छुद्धो भागवतो दुर्लभ इति भावः ॥

*वा०ल०*— अन्यदेवताभजकस्य निन्दनाच्च सर्वस्य वासुदेवत्वमित्यापातप्रतीतार्थो न ममाभिप्रेत इति भावेनाह **कामैस्तैस्तैः इति** । तैस्तैः देवैर्दीयमानकामैः हतज्ञानाः हतं ज्ञानं मम सर्वोत्तमत्वज्ञानं यैस्ते । कामोद्रेकात् श्रुतिमतमुल्लङ्घ्य अगम्यागमनगन्तृवत्, अन्यदेवताभजनं कुर्वन्तीत्यर्थः । तं तं नियमं शैवादीनामपेक्षितं लिङ्गभस्मधारणादिनियमम् । प्रकृत्या आसुरादिप्रकृत्या ॥

*सा०सं०*— लोके भगवज्ज्ञानिनां बहूनां दृश्यमानत्चात् कथं दौर्लभ्यमित्यत आह **कामैरिति** । **तैस्तैः कामैः** स्वस्वाभिमतकामैरिच्छाभिः । **अपहृतज्ञानाः तं तं नियमं** तत्तदागमोक्त-नियममाश्रित्य । **स्वया प्रकृत्या** । प्रकृतिः स्वभावः । स्वकीयस्वभावेन । **नियताः** वशीकृताः सन्तः । **अन्यदेवताः** ब्रह्मादिदेवताः । प्रपद्यन्ते । ज्ञानितया दृश्यमानाः नानाविधकामापहृतभगवदुत्तमत्वज्ञानाः सन्तोऽन्यदेवतायाजिनो अन्यदेवता एव प्रपद्यन्ते । शुद्धो भागवतो दुर्लभ इति भावः ॥

***अ०प्र०***— एवं च कामिनोऽपि सन्तः कामप्राप्तये परमेश्वरमेव ये सेवन्ते ते कामान् प्राप्य शनैर्मुच्यन्त इत्युक्तम् । ये त्वत्यन्तं राजसास्तामसाश्च कामाभिभूताः क्षुद्रदेवताः भजन्ति ते संसरन्तीत्याह । एवं चतुर्विधभक्तानां ज्ञानिनः श्रैष्ठ्यं चोक्त्वा तामसाद्यभक्तानां गतिमाह **कामैरिति** चतुर्भिः । तत्र **कामैरिति** ।

हे अर्जुन ! तैस्तैः[१], कामैः[२], हृतज्ञानाः सन्तः[३], स्वया[४], प्रकृत्या[५], नियताः[६], तं तं[७], नियमं[८], अस्थाय[९], अन्यदेवताः[१०] प्रपद्यन्ते इत्यन्वयः ॥

हे अर्जुन !, ये तु तैस्तैः = पुत्रकीर्तिशत्रुजयादिविषयैः[१], कामैः = फलाभिलाषैः[२], हृतज्ञानाः = हृतानि ज्ञानानि येषां ते तथा आपहृतविवेकाः सन्तः[३], तत्रापि स्वया = स्वकीयया[४], प्रकृत्या = पूर्वाभ्यासवासनया[५], यद्वा, स्वस्य भावनासंस्कारेण वा नियताः वशीकृताः प्रेरिता वा, तदुक्तम्—

'स्वभावाः प्रकृतिश्चैव वासने'त्यभिधानात् नियताः सन्तः[६], तं तं नियमं आस्थाय = तत्तद्देवताराधने तत्तदागमाद्युक्तदुःखं प्रदाय प्राप्तं उपवासादिनियमं स्वीकृत्य[९], अन्यदेवताः = ब्रह्माद्याः, यद्वा, देवताभ्यो अन्याः अन्यदेवताः ब्रह्मादिभ्यो अन्यान् तन्नामकान् क्षुद्रान् भूतप्रेतयक्षादिकान्[१०] प्रपद्यन्ते = भजन्ति तेषां मध्ये ज्ञानी श्रेष्ठ इति पूर्वेणान्वयः ॥ २० ॥

**भाष्यम्**

**प्रकृत्या = स्वभावेन । "स्वभावः प्रकृतिश्चैव संस्कारो वासनेति च ॥" इत्यभिधानात् ॥ २० ॥**

***प०टी०***— प्रकृतेः सर्वत्रैक्येन कथं 'स्वया' इति प्रातिस्विकत्वोक्तिः ? इत्यत आह **प्रकृत्येति** ॥

***न०टी०***—ननु संसारनिवृत्तये हरिमेव प्रपद्यमाना अप्यर्थार्थं देवतान्तरं भजेयुः । को दोषः ? इत्यपेक्षायाम् एवं कामशः शरण्या एव किं न स्युरिति तत्प्रपद्येरन् इत्यभिप्राय उत्तरश्लोके शिवशक्त्यादिदेवतान्तरशरणागतिस्वभाव एव केषाञ्चित्, न माय्युक्तप्रकारेण संस्कारमात्रमिति भावेन 'प्रकृत्या' इति पदं सप्रमाणकं व्याचष्टे **प्रकृत्येति** । ननु भगवतः स्ववशीकृतसर्वस्वभावत्वात् कथं तं विहाय केषाञ्चित् स्वभावेनापि देवतान्तरशरणागतिस्तत्फलं चेत्याकाङ्क्षायां भगवानेव तत्सर्वं करोति । तथाऽपीज्यानामन्तवत्त्वात् तत्प्राप्तिर्नाम फलमपि अन्तवदेव, तदपि भगवद्विषयाल्पमेधसां न त्वमेधसां वेत्यर्थः ॥

*प्र०दी०*— ननु मूलप्रकृतेः सर्वत्रैकत्वात् कथं 'स्वया' इति प्रातिस्विकत्वमुच्यत इत्यत आह— **प्रकृत्येति** । स्वभाव एवेत्येवशब्दसम्बन्धः ॥

*भा०र०*— **एकत्वादिति** । "अजामेकां लोहितशुक्लकृष्णाम्" (तै.आ. १०.१०.१), "प्रकृती द्वे तु देवस्य जडा चैवाजडा तथा । अवरा सा जडा" (नार.पु.) इत्यादौ एकशब्दश्रवणाद्, एकवचनश्रवणाच्च "भिन्ना प्रकृतिरष्टधा" (७.४) इति तु "कार्यरूपेणाष्टधा भिन्ना" (प्र.दी.७.५) इति व्याख्यातमिति भावः । **एवशब्देति** । "प्रकृतिः संस्कारो वासनेति च स्वभाव एवाभिधीयते" इत्येवशब्दसम्बन्ध इत्यर्थः ॥ २० ॥

**गीता**

## यो यो यां यां तनुं भक्तः श्रद्धयाऽर्चितुमिच्छति ।
## तस्य तस्याचलां श्रद्धां तामेव विदधाम्यहम् ॥ २१ ॥

*वि०वि०*— ननु मिश्रयाजिनोऽपि क्रमेण भागवता भवन्त्येवेत्यत आह **योय इति** । यां यां ब्रह्मरुद्रादिरूपां तनुम् ॥

*वा०ल०*— यां यां तनुं ब्रह्मशिवादीनां प्रतिमाम् ॥

*सा०सं०*— ननु मिश्रयाज्यपि क्रमेण भागवतो भवति किमित्यतः स किं नित्यत्रैविद्यरूप उत शुद्धभागवतो निर्णायकाभावादिनिमित्तेनान्यदेवतायाजी । आद्ये दोषमाह **यो य इति** । शुद्ध-भागवततमोयोग्याभ्यामन्यो विष्णुतत्त्वज्ञानविपरीतज्ञानाभ्यां हीनो **यो यः** । कारणविशेषवशाद् **यां यां** ब्रह्मरुद्रादि**तनुम्** । **भक्त**स्तद्भक्तिमान् । **श्रद्धया** आस्तिक्यबुद्ध्या । **अर्चितुमिच्छति** । **तस्य तस्य** तामेव **श्रद्धाम् अचलाम् अहं विदधामि** ॥

*अ०प्र०*— यः यः भक्तः[३], यां यां तनुं[६], श्रद्धया[७], अर्चितुं[८], इच्छति[९], अहमपि[१०] तस्य तस्य[११-१२], तामेव अचलां[१४], श्रद्धां[१५], विदधामीत्यन्वयः ।

अन्यदेवयाजिनां मध्ये यः यः भक्तः[३], यां यां तनुं ब्रह्मादिदेवतारूपां मूर्तिमत्प्रतिमां वा या मूर्तिः श्रद्धया[७], अर्चितुं[८], इच्छति = श्रद्धया पूजितुं प्रवर्तते इच्छति वा[९], अन्तर्यामित्वेन ममापि तत्र सत्त्वात् सा मूर्तिः मदीया एव तस्मादहमपि[१०] तस्य तस्य भक्तस्य[१२], तामेव = तन्मूर्ति-विषयामेव[१३], अचलां = दृढां[१४], श्रद्धां = भक्तिं[१५], विदधामि अहं = अन्तर्यामी सन् करोमीत्यर्थः ॥ २१ ॥

**गीता**

## स तया श्रद्धया युक्तस्तस्याराधनमीहते ।
## लभते च ततः कामान्मयैव विहितान्हि तान् ॥ २२ ॥

*वि०वि०*— ततः किमित्यत आह **स तयेति** । एतच्च मिश्रयाजिविषयम् । ननु कथं मिश्रयाजिनां कर्मफलप्राप्तिः । पूजितानामन्यदेवतानां फलदाने सामर्थ्याभावादित्यत आह **लभते चेति** ॥

*वा०ल०*— 'लभते च ततः कामान्' इत्यत्र ततः अन्यदेवताभजनात् । मयैव विहितान् न तु तैस्तैर्देवैर्विहितान् । स्वाराधकफलदानशक्तिरपि तेषां नास्तीति भावः ॥

*सा०सं०*— **स च तया श्रद्धया युक्तस्य** देवस्य । **अराधनमीहते** करोति । ततस्तदाराधनात् । तद्देवस्थेन **मयैव विहितान्** । **तान्** स्वाभिप्रेतान् । **कामान् लभते च** । मदितरस्य फलदाने सामर्थ्याभावात् ।

*सा०सं०*— द्वितीयेऽप्याह **यो य इति** । भक्तः स्वतो विष्णुभक्त एव **यो यः** ज्ञात्वाऽपि विष्णुं कारणान्तरवशादेव । **यां यां** ब्रह्मादितनुम् । प्राग्वदेव 'ईहते' इत्यन्तस्यार्थः । **ततः** क्रमेणेशानुग्रहप्राप्तगुरूपदेशद्वारा । **तस्य** विष्णोः । **अराधनमीहते** । **ततो** भगवदाराधनात् **मयैव विहितान्** मोक्षादि**कामान् लभते** चेति ॥

*अ०प्र०*— ततश्च **स तयेति** ।

ततश्च सः भक्तः[१], तया[२], श्रद्धया[३], युक्तः सन्[४], ततः तस्य[५], आराधनं[६], ईहते[७], ततश्च[८], हि यस्मात्[९], मयैव[१०] विहितान्[११] तान्[१२], कामान्[१३], लभते[१४] इत्यन्वयः ।

ततश्च सः भक्तः[१], तया = दृढया सम्भूतया[२], श्रद्धया =भक्त्या[३], युक्तः सन्[४], ततः = तस्य तनोः[५], आराधनं = समाराधनं[६], ईहते = करोति[७], ततश्च[८], हि = यस्मात् । यद्वा, हि = स्फुटमेतत्[९], मयैव = देवतानामपि मदधीनत्वात् मन्मूर्तित्वाच्च मयैव देवतान्तर्यामिणा एव[१०] विहितान् = निर्मितान् दत्तान् वा[११] तान्[१२], कामान्[१३], लभते = तत्तद्देवताविशेषात् प्राप्नोतीत्यर्थः ॥ २२ ॥

भाष्यम्

**यां यां ब्रह्मादिरूपां तनुम् । उक्तं च नारदीये—**

**"अन्तो ब्रह्मादिभक्तानां मद्भक्तानामनन्तता ॥" इति ।**

**"मुक्तश्च कां गतिं गच्छेन्मोक्षश्चैव किमात्मकः ॥"**

**इत्यादेः परिहारसन्दर्भाच्च मोक्षधर्मेषु ।**

**"अवतारे महाविष्णोर्भक्तः कुत्र च मुच्यते ॥"**

**—इत्यादेश्च ब्रह्मवैवर्ते ॥ २१ ॥ २२ ॥**

***प०टी०***— 'यो यो यां याम्' इत्यत्र मत्स्यादिशङ्का न कार्येत्यभिप्रायेणाह यामिति । नात्र विष्णुरूपाणि विवक्षितानि । 'अन्तवत् तु फलम्' इत्यन्तवत्फलकारणत्वश्रवणादित्यर्थः ॥

***न०टी०***—उत्तरश्लोकत्रये 'यां यां तनुम्' इत्यादिसामान्योक्तेर्विष्णुतनुभक्तस्याप्यन्तवत्फलं स्यादित्याशङ्क्य, यासां तनूनामुपासनमन्तवत्फलं तांस्तनून् ग्रन्थान्तरानुसारेण विशिनष्टि **यां यामित्यादिना** ॥

***प्र०दी०***— रामकृष्णादिरूपां भगवत्तनुमिति प्रतीतिनिरासायाह— **यां यामिति** । कुत एतत् । "अन्तवत्तु फलं तेषां" इति तद्भक्तानामन्तवत्फलवचनात् । तस्य च ब्रह्मादिग्रहणे सम्भवात् भगवद्ग्रहणे चासम्भवादिति भावेनाह— **उक्तं चेति** । फलस्येति शेषः । गम्यत इति गतिः । इत्यादेः प्रश्नस्य परिहाररूपवाक्यसन्दर्भाच्च । बहुत्वादनुदाहरणमिति भावः । अनन्तफलत्वं मूलरूपभक्तानामस्तु । अवतारतनुभक्तानामन्तवत्फलाङ्गीकारे को विरोध इत्यत आह— **अवतार इति** । कुत्र चावतारे ॥

***भा०र०***— **कुत इति** । "ब्रह्मादिरूपां तनुम्" इति व्याख्यानं कस्माद्धेतोरवगम्यत इत्यर्थः । **तद्भक्तानां** भगवदितरदेवताभक्तानाम् । **शेषः** ब्रह्मादिभक्तानां फलस्य **अन्तः** अन्तवत्ता । **मद्भक्तानां** 'फलस्य' **अनन्तता** इत्युभयत्र शेषः इत्यर्थः । गमेर्भवि क्तिन्प्रत्यय इत्यभ्युपगमे "गतिं गच्छेत्" इत्यनन्वितम्, इत्यतः "कां गतिं गच्छेत् = कं गम्यमाप्नुयात् ?" इति **प्राचां** वाचमनुरुन्धानः कर्मणि "अकर्तरि च कारके" इति क्तिन्निति भावेनाह **गम्यत इति** । "इति प्राप्यम्" इत्यर्थः । 'किमात्मकः' इति भाष्यस्य किं स्वर्गादिवत् अनित्यसुखरूप उत अनन्त-

सुखात्मक इति **प्राचीनटीकोक्तार्थः**। 'इत्यादेः' इत्यत्रादिपदेन "देवतानां च को देवः", "पितॄणां तु पिता तथा" इत्यादेर्ग्रहणम्। "इत्यादेः परिहारसन्दर्भाच्च" इति सामानाधिकरण्येनान्वयस्य किंशब्दघटिततया प्रश्नत्वस्य स्फुटमवभासेनायोगात् 'प्रश्नस्य' इति शेषोक्तिः। सन्दर्भपदप्रयोगस्य तात्पर्यमाह **बहुत्वादिति**।

"क्षीरोदधेर्योत्तरतो हि द्वीपः श्वेतः स नाम्ना प्रथितो विशालः।"

(म.भा., शां प. ३४३.८)

"अनिन्द्रियाश्चानशनाश्च तत्र निष्पन्दहीनाः सुसुगन्धिनस्ते।"

(म.भा., शां.प. ३४३.९)

"श्वेताः पुमांसो गतसर्वपापाश्चक्षुर्मुषः पापकृतां नराणाम्॥"

(म.भा., शां.प. ३४३.१०) इति,

"वरेण्यं वरदं तं वै देवदेवं सनातनम्।
कथं पश्येम हि वयं देवं नारायणं त्विति॥" (म.भा., शां.प. ३४४.२९)

"क्षीरोदधेरुत्तरतः श्वेतद्वीपो महाप्रभुः।
तत्र नारायणपरा मानवाश्चन्द्रवर्चसः॥
एकान्तभावोपगतास्ते भक्ताः पुरुषोत्तमम्।
ते सहस्रार्चिषं देवं प्रविशन्ति सनातनम्॥
अनिन्द्रिया निराहारा अनिष्पन्दाः सुगन्धिनः।
एकान्तिनस्ते पुरुषाः श्वेतद्वीपनिवासिनः॥"

(म.भा., शां.प. ३४४.३२-३४)

इत्यादिरूपाणां परिहारवाक्यानां बहुत्वादित्यर्थः। अयं परिहाररूपवाक्यसन्दर्भो नारदनारायणसंवादरूपः। तत्र देवदेवं नारायणं श्वेतद्वीपादिनिवासिनं तदेकान्तभक्ताः सम्प्राप्यानन्तकालं यथासुखं विहरन्ति। अन्यदेवताभक्तानां न तादृशी गतिरिति निर्गलितोऽर्थोऽवगम्यत इति **प्राचीनटीका**। "महाविष्णोरवतारे भक्तः कुत्रापि मुच्यते" इत्यन्वयप्रतीतिनिरासायाह **कुत्र चावतार इति**। क्वाप्यवतारे भक्तोऽपि मुच्यत इति मुक्तिरुच्यते। मुक्तिश्चानन्तफलरूपेति भावः॥ २१-२३॥

**गीतातात्पर्यनिर्णयः**

**अज्ञानां तु कुले जातो यावद् विष्णोः समर्चनम् ।**
**विष्णुतत्त्वं च जानीयात् तावत्सेवा पृथक् कृता ॥**

*न्या०दी०*— कारणविशेषाज्ज्ञानरहितस्य विपरीतज्ञानाभावेनान्यदेवताराधनेन किं स्यादित्यत आह **अज्ञानामिति** ॥ उपलक्षणं चैतत् । निर्णेत्रभावादिकारणान्तरं च द्रष्टव्यम् । समर्चनं कर्तव्यमितीति शेषः । पृथक् सेवा परिवारतां विनैव अन्यदेवतायजनं विद्यादि तद्विषयज्ञानं स्तवनादि चेत्यर्थः ।

*भा०दी०*— **कारणान्तरं चेति** । अज्ञकुले जातत्वापेक्षया कारणान्तरं च भगवज्ज्ञान-राहित्यमिति योज्यम् ॥ **इति शेष इति** । तस्य जानीयादित्यन्वयः । तेन विष्णुतत्त्वं चेति चशब्दोपपत्तिरिति भावः ॥ **तद्विषयज्ञानेति** । अन्यदेवताविषयकज्ञानस्तवननमनादीत्यर्थः ।

**गीतातात्पर्यनिर्णयः**

**विद्याद्यैहिकभोगाय यदि बुद्ध्वा पुनर्न तु ।**
**परिवारतामृते कुर्यादन्यदेवार्चनं क्वचित् ॥**

*न्या०दी०*— एतच्च फलं नाज्ञानिमात्रस्य, अपि तु ज्ञानानन्तरं यः पूर्वमार्गं त्यक्त्वा भगवद्भजनमेव कुर्यात् तस्यैव । केषाञ्चित् तमोयोग्यानामपि कदाचिदज्ञत्वसम्भवादिति भावेनाह **यदीति** ॥

*भा०दी०*— तस्यैवेति कुत इत्यत आह **केषाञ्चिदिति** ॥

**गीतातात्पर्यनिर्णयः**

**अजानता कृतं त्यक्तं न दोषाय भविष्यति ।**
**जन्मादिप्रदमेव स्यादत्यागे पुनरेव तु ॥**
**क्षिप्रं च ज्ञापयत्येव भगवान् स्वयमेव तु ।**
**यदि जन्मान्तरे स्वीयो निमित्तीकृत्य कश्चन ॥" इत्यादि च ।**

*न्या०दी०*— इदं च तमोयोग्यव्यावृत्तिमात्रम् । नित्यत्रैविद्यानामपि फलसद्भावात् । प्राचीनापराधसद्भावात् कथमुत्तरापेक्षया फलमित्यत आह **अजानतेति** ॥ स्वतो भगवत एव यदि

विष्णुतत्त्वं ज्ञात्वाऽपि कारणविशेषात् पूर्वमार्गं न जहाति तस्य किं स्यादित्यत आह **अत्याग इति** ॥ **ज्ञापयति** त्यक्तुमिति शेषः । **जन्मान्तर** इत्युपलक्षणम् । यदि स्वीय इति सम्बन्धः । केचन गुर्वादिकं निमित्तीकृत्य, न तु साक्षात् । अनेन लभते चेत्यादेर्विषय उक्तो भवति ।

*भा०दी०*— **इदं चेति** । विष्णुतत्त्वज्ञानानन्तरमन्यदेवतार्चनमित्यर्थः ॥ **नित्यत्रैविद्यानामिति** । विष्णुं ज्ञात्वाप्यन्यदेवतार्चनात्यागिनां जन्मादिफलसत्त्वादित्यर्थः । शङ्कते **प्राचीनेति** ॥ **उत्तरेति** । विष्णुतत्त्वज्ञानोत्तरकालीनान्यदेवतार्चनापेक्षयेत्यर्थः । शङ्कते **स्वत इति** ॥ **कारणविशेषेति** । क्षुद्रफलाकाङ्क्षादिरूपेत्यर्थः ॥ **इत्युपलक्षणमिति** । तस्मिन्नपि जन्मनीत्यस्य इति योज्यम् ॥ **अनेनेति** । अत्यागे चेत्यादि ग्रन्थेन स्वतःशुद्धभागवतरूपो विषय उक्त इत्यर्थः ॥

**गीतातात्पर्यनिर्णयः**

**"मत्त एवेति, तान् विद्धि" इत्युपसंहाराच्च तत्तत्कारणत्वात् तत्तन्नामेत्यवसीयते । "मयि सर्वमिदं प्रोतम्" इति भेदेनैवोपक्रमाच्च ।**

*प्रका०*— 'रसोऽहमप्सु' इत्यादिषु रसाद्यभेदं परित्यज्य रसयतीति रस इत्यादिव्युत्पत्त्या रस इत्यादिशब्दाभिधेयत्वं यद्विष्णोरुक्तं तद्युक्तमेव । "मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इवे"ति मणिसूत्रवत् जगदीशयोः भेदेनोपक्रमात् । "ये चैवं सात्त्विका भावा राजसास्तामश्च ये । मत्त एवेति तान्विद्धि" इत्युपसंहाराच्चेत्याह **मत्त एवेत्यादिना** ।

*न्या०दी०*— एवं रसादिकारणत्वाद्रसादिनामकत्वं विष्णोर्नाभेदेनेति प्रमाणवचनेन उक्तम् । उपक्रमोपसंहारयोः सर्वस्य भगवदधीनत्वोक्तेश्च तज्ज्ञायत इत्याह **मत्त एवेति** ॥ "ज्ञानी त्वात्मैव मे मतम्" इत्येतत् "एवं जानंस्तमाप्नोति" इति प्रमाणवचनेन व्याख्यातम् ।

**गीतातात्पर्यनिर्णयः**

**आप्नोति विष्णुमित्येव आत्मशब्दो ज्ञानिनि ।**

*प्रका०*— "ज्ञानी त्वात्मैव मे मतम्" इत्येतद्व्याचष्टे **आप्नोतीत्यादिना** । "यच्चाप्नोति यदादत्ते यच्चात्ति विषयानिह । यच्चास्य सन्ततो भावस्तस्मादात्मेति भण्यते" इत्येतद्भारतवचनम् । "आस्थितः स हि युक्तात्मा मामेवानुत्तमां गतिम् । ज्ञानवान् मां प्रपद्यत" इति वाक्यशेषाच्च भगवत्प्राप्तियोग्यत्वेनैवात्मशब्दो ज्ञानिनि प्रयुक्तो न तु भगवत्स्वरूपभूतत्वेनेत्यर्थः ।

*न्या०दी०*— युक्त्या च तदुक्तार्थमेव न त्वभेदार्थमिति साधयितुमाह **आप्नोतीति** ॥

*भा०दी०*— **उक्तार्थमेवेति** । आत्मपदं प्राप्त्यर्थकमेवेत्यर्थः ॥

**गीतातात्पर्यनिर्णयः**

**"यच्चाप्नोति यदादत्ते" इत्यादेः । "आस्थितः स हि", "मां प्रपद्यते" इत्यादिवाक्यशेषाच्च ।**

*न्या०दी०*— आत्मशब्दस्याप्तिवाचित्वं कुत इत्यत आह **यच्चेति** ॥ 'यच्चाप्नोति यदादत्ते यच्चात्ति विषयानिह । यच्चास्य सन्ततो भावस्तस्मादात्मेति भण्यते ॥" इति भारतवाक्यम् । कुतोऽयमात्मशब्द आप्त्यर्थः, स्वरूपार्थः किं न स्यादित्यत आह **आस्थित इति** ॥ एतदर्थ-विवरणात्मके वाक्यशेषे परमां गतिमुद्दिश्य भगवन्तमुपासीनस्य ज्ञानिनस्तत्प्राप्तेरुक्तत्वात् अत्रापि प्राप्त्यर्थ एवाऽत्मशब्दो न स्वरूपार्थ इत्यर्थः ।

*भा०दी०*— **उद्दिश्येति** । एतेन गतिमित्युद्देश्य द्वितीयेत्युक्तं भवति । उक्तात्मेत्यस्यार्थो **भगवन्तमुपासीनस्येति** । मामास्थित इत्यस्यार्थः **तत्प्राप्तेरिति** ॥

**गीतातात्पर्यनिर्णयः**

**बहूनां जन्मनामन्ते ज्ञानवान् भवति । ततो मां प्रपद्यते ।**

*प्रका०*— "बहूनां जन्मनामन्त" इत्येतद्व्याचष्टे । **बहूनामिति** ।

*न्या०दी०*— ननु ज्ञानानन्तरं मोक्षस्य कर्मक्षयमात्रावधित्वात् "बहूनां जन्मनाम्" इति बहुजन्मनियतिः कथमुच्यत इत्यत आह **बहूनामिति** ॥

**गीतातात्पर्यनिर्णयः**

**वासुदेवः सर्वमिति पूर्णमिति जानन् ।**

*प्रका०*— वासुदेवः सर्वमिति स महात्मा सुदुर्लभः" इत्यत्र वासुदेवः सर्वमिति पूर्णवस्त्विति जानन्नित्येवावगन्तव्यम् । न तु वासुदेवः प्रपञ्च इति । प्रपञ्चत्वे वासुदेवस्य प्रपद्यन्तेऽन्यदेवताः । देवान् देवयजो यान्ति मद्भक्ता यान्ति मामपि" इति वाक्यशेषविरोधः स्यादित्यत आह **वासुदेव इत्यादिना** ।

*न्या०दी०*— वासुदेव इत्येतत् पूर्णं वस्त्विति प्रमाणवचनेन व्याख्यातम् । युक्त्या चैतमर्थं साधयितुमाह **वासुदेव इति** ॥ अत्र वासुदेवस्य पूर्णत्वमेवोच्यते, न तु सर्वाभेद इत्यर्थः । प्रमाणवचनेन भगवज्ज्ञानिनामेवानुत्तमगतिर्भवतीत्यत्र हेत्वभिधायकतयैव एतद् योजितम् । अथ बहूनां जन्मनामन्ते वासुदेवः सर्वमिति ज्ञानवान् भवतीत्यपि योजनां सूचयति **जानन्निति** ॥

*भा०दी०*— **एतद्योजितमिति** । वासुदेवस्सर्वमिति वाक्यं पूर्णं वस्तु यत इत्यादिप्रमाणेन योजितमित्यर्थः । तदर्थं फलं च स्मृत्यैवाहेत्यन्वयः ॥

**गीतातात्पर्यनिर्णयः**

**"प्रपद्यन्तेऽन्यदेवताः" इति वाक्यशेषे भेददर्शनाच्च ।**

*न्या०दी०*— अभेदार्थमेवेदं वाक्यं किं न स्यादित्यत आह **प्रपद्यन्त इति** ॥

**गीतातात्पर्यनिर्णयः**

**"देवान् देवयजो यान्ति मद्भक्ता यान्ति मामपि ॥" इति च ॥ २१-२२ ॥**

*न्या०दी०*— "देवान् देवयजो यान्ति" इत्येतत् "विष्णुं तत्परमज्ञात्वा" इत्यादिना विवृतम् ॥ २१-२२ ॥

**गीता**

**अन्तवत्तु फलं तेषां तद्भवत्यल्पमेधसाम् ।**
**देवान्देवयजो यान्ति मद्भक्ता यान्ति मामपि ॥ २३ ॥**

*वि०वि०*— कथं तर्हि भगवद्दत्तस्य फलस्यान्तत्वमित्यत आह **अन्तवदिति** । मम सर्वयज्ञभोक्तृत्वत् फलप्रदत्वादिकं तत्त्वेनाजानताम् । अल्पबुद्धित्वात् तेषां फलमन्तवदित्यर्थः । भगवद्भक्तानामनन्तं फलम्, अन्येषां त्वन्तवदित्येतत्प्रदर्शनायोभयेषां फलं दर्शयति **देवानिति** । देवान् यजन्तीति देवयजः । तदुक्तम्—

'ज्ञात्वा परत्वं विष्णोस्तु पृथक् देवान् यजन्नरः ।
याति देवांस्तदज्ञात्वा तम एव प्रपद्यते ॥

तथापि यावदन्यैस्तु साम्यं हीनत्वमेकताम् ।
न निश्चिन्वन्ति जायन्ते संसारे ते पुनःपुनः ॥' इत्यादि ॥ २३ ॥

*सा०सं०*— अन्यदेवतायाजिनामपि त्वत्त एव फलं चेत् कुतः तत्त्यागेन त्वदाराधनमेव कार्यमित्यत आह **अन्तवत्त्विति** । विष्णोः रमाब्रह्मादिभ्यः परत्वं ज्ञात्वा अन्यदेवतायाजिनां **तेषां फलमन्तवदेव** । कुतः ? **अल्पमेधसाम्** अल्पफल एव बुद्धिमत्वादित्यर्थः । कथमन्तवत्त्वमित्यत उक्तम् **देवानिति** । विष्णूत्कर्षं ज्ञात्वा ब्रह्मादिदेवतायाजिनो ब्रह्मादि**देवान् यान्ति** । नतु माम् ।

अतोऽन्तवत्फलम् । **मद्भक्तास्तु मामपि** देवान् प्राप्यान्ते मामपि **यान्ति** । अतोऽनन्तं तेषां फलम् । तस्मान्मदाराधनं प्राधान्येन, अन्यदेवताराधनं च परिवारतया कार्यमिति ॥

*अ०प्र०*— तदेवं यद्यपि सर्वा अपि दैवताः ममैव तनवः अतस्तदाराधनमपि वस्तुतो मदाराधनमेव । अहमेव च तत्र फलदाताऽपि । तथापि तु साक्षान्मद्भक्तानां च तेषां फलवैषम्यं भवति इत्याह **अन्तवत्तु फलमिति** ।

अल्पमेधसां[१], तेषां[२], तत्[३], अन्तवत्तु[४], फलं[५], भवति[६], देवयजः[७], देवान्[८], यान्ति[९], मद्भक्ता अपि[१०] मां यान्ति[१२] इत्यन्वयः ।

अल्पमेधसां = परिच्छिन्नदृष्टीनाम् । यद्वा, मम सर्वयज्ञभोक्तृत्वफल-प्रदत्वादिकर्तृत्वेन अजानतां[१], तेषां = अन्यदेवताभजकानां[२], तत् = फलं[३], अन्तवत् = अल्पं, विनाशी[५], भवति[६], भगवद्भक्तानां अनन्तफलं अन्येषां अल्पं विनाशि इत्येतत्प्रदर्शनार्थं उभयेषां फलं दर्शयति **देवानिति** । देवयजः = देवान् यजन्तीति देवयजः[७], देवान् = ते देवान् अन्तवन्तो[८], यान्ति[९], तदुक्तम्—

ज्ञात्वा विष्णोः परं तत्त्वं पृथक् देवान् यजन् नरः ।
याति देवांस्तदज्ञानात्तम एव प्रपद्यते ॥
तथापि यावदन्यैस्तु साम्यं हीनत्वमेकताम् ।
न निश्चिन्वन्ति जायन्ते संसारं ते पुनः पुनः ॥ इति ।

इतिवत् मद्भक्ता अपि = मद्भक्तास्तु[१०] मां = अनाद्यनन्तं परमानन्दं[११] यान्ति = प्राप्नुवन्ति ॥ २३ ॥

**गीतातात्पर्यनिर्णयः**

**"ज्ञात्वा परत्वं विष्णोस्तु पृथग् देवान् यजन्नरः ।**
**याति देवांस्तदज्ञात्वा तम एव प्रपद्यते ॥**
**तथाऽपि यावदन्यैस्तु साम्यं हीनत्वमेकताम् ।**
**न निश्चन्वन्ति जायन्ते संसारे ते पुनः पुनः ॥"**

**—इति च ॥ २३ ॥**

*प्रका०*— "देवान् देवयज" इत्यस्यार्थमाह **ज्ञात्वा परत्वमिति** ॥

***न्या०दी०***— वाक्यान्तरेणापि विवृणोति **ज्ञात्वेति** ॥ किमज्ञानमात्रेण तम इति, नेत्याह **तथापीति** ॥ यद्यप्येवमुच्यते तथापीत्यर्थः । तावदिति संयोज्यम् । केचन भागवताः पुरुषाः । केचन त्रैविद्याः सन्ति । तेषां च मोक्षादिकं फलमित्युक्तम् ॥ २३ ॥

**भाष्यम्**

**को विशेषस्तवान्येभ्यः इत्यत आह— अव्यक्तमिति । कार्यदेहादिवर्जितम् । तद्वानिव प्रतीयस इत्यत आह— व्यक्तिमापन्नमिति । कार्यदेहाद्यापन्नम् । तच्चोक्तम्— 'सदसतः परम्', 'न तस्य कार्यम्', 'अपाणिपादः', 'आनन्ददेहं पुरुषं मन्यन्ते गौणदैहिकम्' इत्यादौ । भावं याथार्थ्यम् । तथा अब्रवीत् च— "याथातथ्यमजानन्तः परं तस्य विमोहिताः ॥" इत्यादि ॥ २३ ॥ २४ ॥**

***प०टी०***— अन्तवत्फलत्वं विष्णुभक्तानां किं न स्यात् ? इत्यत आह **उक्तं चेति** । मूलरूपभक्तस्यान्तवत्त्वाभावेऽपि, अरतारभक्तस्य स्यादित्यत आह **अवतारेति** । कुत्राप्यवतारे । नन्वेवं ब्रह्मादिभक्तानां क्षयिष्णुफलत्वेऽपि त्वद्भक्तानां क्षयिष्णुफलत्वमित्यत्र तव को विशेषः ? इत्याशङ्कां परिहर्तुमुत्तरश्लोकाद्यपादमवतार्य व्याचष्टे **क इति** । ब्रह्मादीनां कार्यदेहादिमत्त्वाद्युक्तं तद्भक्तानां क्षयिष्णुफलत्वम् । मम तदभावात् मद्भक्तानामनन्ततेत्यर्थः । यदि कार्यदेहादिशून्यो भवान्, तर्हि कथं तथा प्रतीयते ? इत्याशङ्कोत्तरत्वेन श्लोकमवतार्य सप्रमाणकं व्याचष्टे **तद्वानिति** । सदसतः परम् इत्येतदेव स्पष्ट्यते **न तस्येति** । एतच्छ्रुतिभ्यो देहाभाव एव प्राप्त इत्यत आह **आनन्देति** । 'भाव'शब्दस्य विवक्षितार्थमुक्त्वा तदन्वयं प्रमाणेनैवाह **भावमिति** ॥

***न०टी०***—**कां गतिं गच्छेत्** कं गम्यमाप्नुयात् । **किमात्मकः** किं स्वर्गादिवदनित्यसुखरूपः, उतानन्तसुखात्मक इति । **आदिशब्दात्** 'देवतानां च को देवः' इत्यादेर्ग्रहणम् । बह्वध्यायात्मकोऽयं सन्दर्भः **परिहारसन्दर्भो** नारदनारायणसंवादादिरूपः । तत्र देवदेवं नारायणं श्वेतद्वीपादिनिवासिनं तदेकान्तभक्ताः सम्प्राप्यानन्तकालं यथासुखं विहरन्ति । नान्यभक्तानां तादृशी गतिरित्यवगम्यते । ननु देहवत्त्वेनान्तवत्त्वाद्देवनान्तद्यजान्तानेव प्राप्तानां फलमन्तवच्चेत्, भगवतोऽपि देहवत्त्वाविशेषादयं दोषः किं न स्यात् ? इति भावेनाशङ्क्य, अकार्यदेहत्वान्नायं दोष इत्युत्तरश्लोकस्थाव्यक्तशब्देन परिहरति **क इति** । कथं तर्हि कंसादयः कार्यदेहवन्तमिव पश्यन्ति ? इत्याशङ्क्य, बह्वागमविरुद्धत्वात् भ्रान्ता एव त इत्येवं श्लोकशेषमवतार्य व्याचष्टे **तदित्यादिना** । सच्चासच्च यस्य यस्मिन् वा देहरूपेणासौ **सदसत् ततः परं** पाञ्चभौतिकदेहात् जीवजातात्

परमित्यर्थः । नन्वेतैर्वाक्यैरदेहत्वमेव स्यादित्यत आह **आनन्देति** । **याथार्थ्यं** याथार्थ्यज्ञानरूपत्वं भगवतः, तदेव हि तस्य **परम् अव्ययम्** अनुत्तमं कार्यदेहाद्यनाप्तौ कारणम् । तदुक्तं श्रीभागवते—

'देशतः कालतो योऽसाववस्थातः स्वतोऽन्यतः ।
अविलुप्तावबोधात्मा स युज्येताजया कथम्' इति ॥

*प्र०दी०*— अव्यक्तमिति श्लोकस्य प्रकृतेन साक्षात् सङ्गत्यभावात्तं सङ्गमयितुमाह— **क इति** । अन्येभ्यो **ब्रह्मादिभ्यः** । येन तान् प्राप्तानामन्तवत्फलत्वेऽपि त्वां प्राप्तानामनन्तफलतेति शङ्काशेषः । कथमनेनोक्तशङ्कापरिहार इत्यत आह— **कार्येति** । अनेन यथाश्रुतं पदं पठित्वा व्याख्यातम् । वस्तुतस्त्वव्यक्तं मामित्यनुवादात् अव्यक्तोऽहमिति यत्सिद्धं तस्येदं व्याख्यानमिति ज्ञातव्यम् । इदानीमुत्तरस्य सङ्गतिमाह— **तद्वानिति** । कार्यदेहादिमान् इवेति मृदूक्तिः **वस्तुतस्त्वेवेति** । अतो न तद्वर्जित इति शेषः । प्रकृतोपयोगितया व्याचष्टे— **कार्येति** । भगवतः कार्यदेहादिवर्जितत्वं तद्वत्ताप्रतीतिश्चाज्ञानमूलेत्येतत् कुतः । येन वाक्यद्वयमुक्तार्थं स्यादित्यतोऽर्थद्वये क्रमेण प्रमाणान्याह— **तच्चेति** । कार्यात् कारणाच्चेदमपरं रूपं परं तु रूपमजानन्त इति प्रतीतिनिरासार्थमाह— **भावमिति** । याथार्थ्यं प्रमाणाव्यभिचरितस्वरूपम् । अत एव परम् । कुतोऽयमर्थः । समाख्यानादित्याह— **तथेति** । यद्यप्ययमर्थः 'त्रिभिः' इत्यत्रोक्तः । तथापि प्रसङ्गात्पुनरुक्त इत्यदोषः ॥

*भा०दी०*— तत इत्यनूद्यार्थमाह **तवैव भाष्ये अव्यक्तमिति** । प्रतीकग्रहणाकार्ये देहवर्जितमिति व्याख्येत्ययुक्ता प्रथमान्तव्याख्या त्वयुक्ता । **अव्यक्त इति** । विधायकपदाभावार्पितहृद्याशङ्क्यार्थलब्धस्येह व्याख्येत्याह **अनेनेत्यादिना** । आक्षेपलाभायाह **इति मृदूक्तिरित्यादि** । पूर्वार्धतात्पर्यं निष्कृष्य भगवत इत्यादिना वाक्यद्वयमिति । अव्यक्तं मामित्येकं व्यक्तमित्याद्यपरमिति वा अव्यक्तोऽहमित्यर्थसिद्धमेकं यथाश्रुतमन्य.......... वेति ज्ञेयम् । यथार्थस्य प्रमाणधर्मत्वान्ममेत्युक्तार्थस्य कथमित्यतस्तद्घटयति प्र......... । प्रमाणं यथा गृह्णातीति त........रूपमित्यर्थः । **परमिति** । विलक्षणमित्यर्थः । **प्रसङ्गादिति** । ब्रह्मादिप्राप्तेरनन्तफलमित्युक्तौ को विशेषस्तेभ्यस्तनेति .................. रासस्य प्रसक्तत्वादित्यर्थः ॥ २३-२४ ॥

**गीता**

**अव्यक्तं व्यक्तिमापन्नं मन्यन्ते मामबुद्धयः ।**
**परं भावमजानन्तो ममाव्ययमनुत्तमम् ॥ २४ ॥**

***वि०वि०***— को विशेषस्तवान्येभ्यो येन तान् प्राप्तानामन्तफलत्वेऽपि त्वां प्राप्तानामनन्तफलत्वमित्यत आह **अव्यक्तमिति** । अज्ञानिनः परमितरविलक्षणमनुत्तमं स्वोत्तमरहितं मम भावं याथार्थ्यमजानन्तः, अव्यक्तं कार्यदेहादिवर्जितं । मां व्यक्तिं कार्यदेहादिकमापन्नं मन्यन्ते । अज्ञानिदृष्टकार्यदेहादिराहित्याद्देवेभ्यो विशेष इति भावः ।

अथवा, केचन भागवताः पुरुषाः केचन त्रैविद्याः सन्ति, तेषां च मोक्षादिकं फलमित्युक्तम् । अथ केवलद्वेषिणोऽपि सन्ति इत्याह **अव्यक्तमिति** ।

यद्वा, एवं प्रेरकत्वादिमाहात्म्यवांश्चेद्भगवान् तत्कथं भवतः केचिज्जीवाभेदं मन्यन्त इत्यत आह **अव्यक्तमिति** । सर्वात्मना ज्ञेयत्वाज्ञेयत्वाभ्यां जीवेश्वरयोर्व्यक्तत्वाव्यक्तत्त्वेन ततो वैलक्षण्यात् तयोरभेदं मन्यमाना असुरा इत्यर्थः । उक्तं च—

'अव्यक्तः परमात्माऽसौ व्यक्तो जीव उदाहृतः ।
मन्यते यस्तयोरैक्यं स तु यात्यधरं तमः ॥' इति ॥

***वा०ल०***— अव्यक्तं ब्रह्मादीनामदृश्यं मां, व्यक्तं सर्वजनैर्दृश्यं पाञ्चभौतिकदेहम् आपन्नं प्राप्तं ब्रह्मादिपिपीलिकान्तजीवं मन्यन्ते । अत एव अबुद्धयः अन्तवत्फलाश्च ॥

***सा०सं०***— ननु को विशेषस्तवान्येभ्यो ब्रह्मादिभ्यः येन त्वां प्राप्तानामनन्तफलम्, देवान् प्राप्तानामन्तवत्फलमित्यत आह **अव्यक्तमिति** । **अबुद्धयो**ऽज्ञानिनः **परमि**तरविलक्षणम्, **अनुत्तमम्** उत्तमरहितम्, **अव्ययं मम भावं** प्रमाणाव्यभिचरितत्वरूपं याथार्थ्य**मजानन्तः** । **अव्यक्तं** कार्यदेहादिहीनं **मां व्यक्तिमापन्नं** कार्यदेहादियुक्तं **मन्यन्ते** । कार्यदेहादिराहित्यं तद्युक्तान्यदेवेभ्यो मम विशेष इति भावः ।

***सा०सं०***— यद्वा, यथा देवयाजिनो मद्याजिनश्च त्रैविद्याः, भागवताश्च वर्तन्ते, तथा मद्द्वेषिणश्च केचन सन्तीत्याह **अव्यक्तमिति** । सर्वात्मनाऽज्ञेयत्वहेतुना अव्यक्तपदार्थं **मामीश्वरं व्यक्तिं** सर्वात्मना ज्ञेयत्वमापन्नं प्राप्तम् । जीवमिति यावत् । **मम परं भावमजानन्तो**ऽल्पबुद्धयो **मन्यन्ते** । जीवैक्यं मन्यन्त इत्यर्थः ।

***सा०सं०***— यद्वा, 'मयि सर्वमिदं प्रोतम्' इत्यादावुक्तदिशा प्रेरकत्वादिमहामहिमवांश्चेद्भवान् तत्कथं भवतः केषाञ्चिज्जीवाभेदं मन्यन्त इत्यत आह **अव्यक्तमिति** । प्रागुक्तदिशा **अव्यक्तं मामीश्वरं व्यक्तिमापन्नं** जीवं जीवाभेदेन मां **मन्यन्ते** ये ते मम **परं भावमजानन्तोऽल्पबुद्धय**स्तमोयोग्या इत्यर्थः ।

*अ०प्र०*— ननु च समाने प्रयासे महति च फलविशेषेण सति सर्वेऽपि किमिति देवतान्तरं हित्वा त्वामेव न भजन्ति तवान्येभ्यो को विशेषः ? येन तान् प्राप्तानां अन्तवत् फलं, त्वत्प्राप्तानां अनन्तफलं इत्यत आह **अव्यक्तमिति** ।

अथान्वयः— हे अर्जुन !, अबुद्धयः[१], मम[२], अव्ययं[३], अनुत्तमं[४], परं[५], भावं[६], अजानन्तः[७], सन्तः[७], मां[८], अव्यक्तं व्यक्तिमापन्नमिति[१०] मन्यन्ते इत्यन्वयः ।

अबुद्धयः = अल्पबुद्धयोः ज्ञानिनः[१], मम = भावं याथार्थ्यं[२], अव्ययं = नित्यं[३], अनुत्तमं न विद्यते उत्तमो भावो यस्मात् तं भावम् । यद्वा, स्वोत्तमरहितं[४], अत एव परं भावं जगद्रक्षार्थोक्ति-लयाविष्ट्युत नानाविशुद्धोर्जितसत्त्वमूर्तिं मां परमेश्वरं, यद्वा, मम परं भावं इतरविलक्षणस्वरूपं[६], अजानन्तः सन्तः[७], मां[८], अव्यक्तं कार्यदेहादिरहितं प्रपञ्चातीतं[९], व्यक्तिमापन्नं = मनुष्य-कूर्मादि-कार्यदेहादिभावं प्राप्तमिति[१०] मन्यन्ते[११] इत्यर्थः । कर्मनिर्मितभौतिकदेहं च देवतान्तरं समं पश्यन्तो मन्दमतयो मां नाद्रीयन्ते । प्रत्युत क्षिप्रं फलदं देवतान्तरमेव भजन्ति चोक्तप्रकारेण अन्तवत्फलं प्राप्नुवतीत्यर्थः । यद्वा अज्ञानां भ्रान्त्या प्रतीयमानं यत्कार्यदेहादितदभावात् देवादिभ्यः मम विशेष इति भावः ।

अथवा लोके केचित् भागवताः केचन त्रैविद्याः सन्ति । तेषां च क्रमान्मुक्तिः । स्वर्गादिकं फलमित्युक्तम् । अथ केचन द्वेषिनोऽपि सन्तीत्याह **अव्यक्तमिति** । यद्वा, एवं प्रेरकत्वादि-माहात्म्यवान् चेद्भगवान् तर्हि कथं भगवतः केचिज्जीवा भेदं मन्यन्ते इत्यत आह **अव्यक्तमिति** । जीवविलक्षणमेव स्वरूपमजानन्तोऽप्यसुराः अव्यक्तं मां व्यक्तिमापन्नं जीवं मन्यन्ते । सर्वात्मना ज्ञेयत्वाज्ञेयत्वाभ्यां जीवेश्वरयोः व्यक्तत्वाव्यक्तत्वेन वैलक्षण्ययोरभेदं मन्यमाना असुरा इत्यर्थः । उक्तं च—

'अव्यक्तः परमात्मासौ व्यक्तो जीव उदाहृतः ।
मन्यते यस्तयोरैक्यं स तु यात्यधरं तमः ॥' इति ॥

*भा०र०*— **प्रकृतेन** अन्यदेवताभक्तानाम् अन्तवत्फलम्, मद्भक्तानामनन्तरम् इति पूर्व-प्रकृतेन । मुखतः सङ्गत्यनवभासाद् - 'साक्षात्' इत्युक्तम् । **तत्** प्रकृतं वचनम्, प्रकृतं वा । 'अन्तवत्फलत्वादि' इति पाठे तु आदिशब्देनाल्पमेधस्त्वग्रह इति **आहुः** । 'अनन्तफलता' इति बहुव्रीहिः । **अनेन** 'कार्यदेहादिवर्जितः' इति भाष्येण । **यथाश्रुतम्** 'अव्यक्तम्' इति द्वितीयाविभक्त्यन्तं गीतापदं व्याख्यातं प्रातिपदिकार्थवर्णनेन । गीताऽऽनुगुण्याद् द्वितीयान्ततया भाषणमेवोचितम्, न तु प्रथमान्ततया ? इत्यत उक्तम् **वस्तुतस्त्विति** । "अबुद्धयो अव्यक्तं मां मन्यन्ते" इत्यन्वया-

योगाद् अनुवादोऽयमिति तावद्वक्तव्यम् । अनुवादश्च पुरोवादसापेक्षः । न च "अव्यक्तोऽहम्" इत्येवमाकारकं पुरोवादवाक्यम् इतःपूर्वं श्रुतमस्ति । तदभावे च को विशेषस्तवान्येभ्य इति शङ्का न शाम्यति । सति तु तस्मिन् शाम्यति । अतोऽनुवादेन विनोक्तशङ्कायाः परिहाराभावाद् "अव्यक्तो-ऽहम्, इतरे त्वतथाविधाः" इत्यतो युक्ते फलस्यानन्ततासान्तते इति परिहारो गीताचार्याभिप्रेत इति वक्तव्यम् । अत्र चाव्यक्तमपि मां व्यक्तिमापन्नं मन्यन्त इत्यनुवादो ज्ञापकः । तदन्यथानुपपत्त्या च यत्सिद्धम् । 'अव्यक्तोऽहम्' इति वाक्यं प्रथमान्तम्, तस्य कार्यदेहादिवर्जित इति व्याख्यानं युक्तमेवेति भावः । यद्वक्ष्यति "न तद्वर्जितः" (प्र.दी.) इति शेष इति ।

"अव्यक्तमिति कार्यदेहादिवर्जितम्" इति भाष्यपाठो भूम्ना लक्ष्यते । तत्र "अव्यक्तं माम्" इत्यनुवादाद् 'अव्यक्तोऽहम्' इति यत्सिद्धं तस्यैव व्याख्यानम् 'कार्यदेहादिवर्जितः' इति कार्यम् । "तद्वानिव प्रतीयसे" इति वक्ष्यमाणप्रथमान्ताक्षेपानुगुण्यात्, इत्यत आह **अनेनेति** । **यथाश्रुतं** गीतागतम् 'अव्यक्तम्' इति द्वितीयान्तमेव पदं 'कार्यदेहादिवर्जितम्' इति द्वितीयान्तपदेन भाष्ये व्याख्यातमित्यर्थः । तथाऽप्युक्तशङ्कापरिहारो न स्फुटप्रतिभासः ? इत्यतो द्वितीयान्तभाष्यभावमाह **वस्तुतस्त्विति** । **तस्येदं व्याख्यानं** 'तात्पर्यगत्या' इति योज्यमित्यपि **व्याचक्षते** । कार्यदेहादि-मत्सादृश्यप्रतीतावपि कथं तद्वर्जितत्वाक्षेपः ? विरोधाभावादित्यत उक्तम् **मृदूक्तिरिति** । आक्षेप-परत्वस्फोरणाय **वस्तुतस्त्विति** । "तद्वानेव प्रतीयसे" इति निर्गलितस्य साध्यमाह **अत इति** ।

**प्रकृतेति** । "प्रादुर्भावं प्राप्तम्" इत्यस्य प्रकृतोपयोगादिति भावः । **तद्वत्ताप्रतीतिः** तद्वत्ता-प्रकारकप्रतीतिः । **वाक्यद्वयम्** अनुवादानुमितपुरोवादरूपम्, व्यक्तिमापन्नं मन्यन्त इति चेति वाक्यद्वयम् । द्वन्द्वैकवद्भावमभिसन्धाय सदसच्छब्दार्थं कथयति **कार्यात्कारणाच्चेति** । **परं** विलक्षणं कार्यकारणवर्जितमित्यर्थः । सदसतः पाञ्चभौतिकदेहाद् जीवजातात् परमिति **प्राचीनटीका** । भाष्ये कार्यं प्रकृतिकार्यं शरीरं न विद्यत इति कार्यदेहवर्जितत्वे मानान्तरम् । **अपाणिपादः** प्रकृतिकार्य-भूतपाणिपादवर्जित इत्यप्युक्तार्थे मानान्तरम् । 'गौणदैहिकम्' इत्युभयपदवृद्धिः । "प्रकृतिगुणकार्य-देहवन्तं मन्यन्ते" इत्येतत्तु कार्यदेहवर्जितत्वे, तद्वत्ताप्रतीतेरज्ञानमूलत्वे च प्रमाणम् । **इति प्रती-तीति** । व्यक्तिमापन्नमबुद्धयो मन्यन्त इति पूर्वार्धोक्तमपरम्, लीलाविग्रहादिलक्षणं सोपाधिकं रूपं परन्तु रूपमनौपाधिकं ममाव्ययमजानन्तः इति प्रतीतीत्यर्थः । तथा च "परं भावं परमात्मस्वरूप-मजानन्तः" (शां.भा. ७.२४) इति **सङ्करभाष्यस्य** व्याख्याता– "सोपाधिकनिरुपाधिकभावाव-बोधार्थम्" इत्यादि । निरसनीया च सा प्रतीतिः, भगवतः सोपाधिकनिरुपाधिकभावद्वयाङ्गीकारस्य बुहमानविरुद्धत्वादिति भावेन भावशब्दस्य विवक्षितमर्थमाहेत्यर्थः ।

प्रमाणधर्मो याथार्थ्यं भगवतः कथं धर्मः ? इत्यत आह **प्रमाणेति** । **यथार्थस्य** यथावस्थितज्ञेयविषयीकारिणः प्रमाणस्य यो **भावः** अर्थाव्यभिचारित्वम्, तदेव याथार्थ्यं नाम । तच्च प्रमाणविषयीभूते भगवति प्रमाणाव्यभिचरितत्वस्वरूपेणोपलक्ष्यत इति भाव इति **केचित्** । अपरे तु यथावस्थितोऽर्थो यथार्थः, 'सुप्सुपा' इति समासः । तस्य भावः याथार्थ्यम् । कथं यथावस्थितत्वमर्थस्य ? इत्यत उक्तम् **प्रमाणाव्यभिचरितत्वस्वरूपमिति** । अनेनैव भाष्ये 'याथातथ्यम्' इति समाख्याऽनुसाराद् 'याथात्म्यम्' इति वक्तव्येऽपि, 'याथार्थ्यम्' इत्युक्तिप्रयोजनमपि सूचितम् । प्रमाणप्रमितत्वस्यापि तेन सूचनात् । इदमपरं रूपम्, परन्तु रूपमजानन्त इति प्रतीतिं निरसितुमाह **अत एव परमिति** । कार्यदेहवर्जितत्वादेव परम्, न तु परीत्याऽनौपाधिकस्वरूपत्वात् परमित्यर्थः । भगवत औपाधिकानौपाधिकरूपद्वयाभावादिति भावः । उत्तरमाह **समाख्यानादिति** । **प्रसङ्गादिति** । ब्रह्मादिप्राप्तेरन्तवदेव फलम्, मत्प्राप्तेः फलमनन्तमित्युक्ते कस्तव तादृशो विशेष इति कृतचोद्यनिरासस्य कर्तव्यत्वेन प्रसक्तत्वादित्यर्थः ॥ २४ ॥

**गीता**

## नाहं प्रकाशः सर्वस्य योगमायासमावृतः ।
## मूढोऽयं नाभिजानाति लोको मामजमव्ययम् ॥ २५ ॥

***वि०वि०***— येनाज्ञानेन मामन्यथा मन्यन्ते तदज्ञानं च मदिच्छाधीनमेव । अतो न तत्स्वतो निवर्तते । नाप्यज्ञानकृतया निन्दया मम खेद इत्याह **नाहमिति** । योगेन स्वसामर्थ्यलक्षणोपायेन मायया च देव्या समाहतोऽहं सर्वस्य न प्रकाशः । अतो मय्येव मूढो लोको मामजादिरूपं नाभिजानाति । उक्तं च—

'आत्मनः प्रावृतिं चैव लोकचित्तस्य बन्धनम् ।
स्वसामर्थ्येन देव्या च कुरुते च महेश्वरः ॥' इति ॥

***सा०सं०***— ननु तेषां त्वद्विषयविपरीतज्ञानकृतनिन्दया तव खेदोऽस्ति किमित्यतः परं भावमजानन्तोऽन्यथा मन्यन्त इत्युक्तविपरीतज्ञानहेतुभूतमज्ञानं न स्वतन्त्रम् । किन्तु मदायत्तमेव । अतः कुतो मम खेद इति भावेनास्य स्वाधीनमाह **नाहमिति** । योगेन सामर्थ्यलक्षणोपायेन, मायया देव्या च । योगसहिता माया योगमायेति विग्रहः । **समावृतोऽहं न सर्वस्य प्रकाशः** । कर्मणि घञ् । प्रकाशविषयो न भवामि । अतो मयैव **मूढोऽयं लोको मामजमव्ययं** जन्मव्ययहीनम् । **नाभिजानातीति** ॥

***अ०प्र०***— येन अज्ञानेन मां अन्यथा मन्यन्ते तदज्ञानं च मदिच्छाधीनमेव । अतः न तत्त्वतो निवर्तते । नाप्यज्ञानिकृतया निन्दया मम खेद इत्याह **नाहमिति** ।

तेषां त्वज्ञाने हेतुमाह— योगमायासमावृतः[१], अहं[२], सर्वस्य[३], प्रकाशकः[४], न भवामि[५], अतः अयं लोकः[६], मूढः[७], मां[८], अजं[९], अव्ययं[१०] नाभिजानाति इत्यन्वयः ।

योगमायासमावृतः = योगेन स्वसामर्थ्यलक्षणोपायेन मायया च देव्या समावृतः । यद्वा, योगो युक्तिः मदीयः कोऽप्यचिन्त्यप्रज्ञाविलासः स एव माया अघटमानघटनपटीयस्त्वात् तया सञ्छिन्नः[१], अहं[२], सर्वस्य = लोकस्य[३], प्रकाशकप्रकाशविषयः[४], न भवामि[५], अत एवायं लोकः[६], मूढः[७], अव्ययं[८], मां[९], अजं = अजादिरूपं[१०] नाभिजानाति इत्यर्थः । तदुक्तम्—

'आत्मानः प्रवृत्तिश्चैव लोकचित्तस्य बन्धनम् ।
स्वसामर्थ्येन देव्या च कुरुते स महेश्वरः ॥' इति ॥ २५ ॥

**भाष्यम्**

**अज्ञानं च मदिच्छयेत्याह— नाहमिति । योगेन सामर्थ्योपायेन मायया च । मया एव मूढो नाभिजानाति । तथा आह पाद्मे—**

**"आत्मनः प्रवृत्तिं चैव लोकचित्तस्य बन्धनम् ।
स्वसामर्थ्येन देव्या च कुरुते स महेश्वरः ॥"**

**—इति च ॥ २५ ॥**

***प०टी०***— ननु त्वामविजानतामज्ञानमाहर्तुमसामर्थ्यात् कथमव्यक्तत्वं तव ? इत्याशङ्कोत्तरत्वेनोत्तरश्लोकमवतार्य सप्रमाणकं व्याचष्टे **अज्ञानमिति** ॥

***न०टी०***—ननु स्वकार्यं देहं मन्यमानानामज्ञानं निवर्तयितुमशक्तः कथमानन्ददेहः स्यात् ? इत्याशङ्कापरिहारायोत्तरं श्लोकमवतार्य सप्रमाणकं व्याचष्टे **अज्ञानं चेति** । 'युज्यते येन योगोऽसावुपायः शक्तिरेव च' इत्यभिधानात् सामर्थ्योपायौ योगशब्दार्थौ । अत्र तु सामर्थ्यमेवोपायः ॥

***प्र०दी०***— तथापि "नाहं प्रकाशः" इति पुनरुक्तिरित्यतः तात्पर्यमाह— **अज्ञानं चेति** । येनाज्ञानेन मामन्यथा मन्यन्ते तदज्ञानं च मदिच्छाधीनमेव, न स्वतन्त्रम् । येन तया निन्दया मम खेदः स्यादिति भावः । योग एव माया इति व्याख्यानमसदिति भावेनाह— **योगेनेति** । सामर्थ्यमेवोपायः ।

"युज्यते येन योगोऽसावुपायः शक्तिरेव च" इति वचनाद्योगशब्दस्योभयार्थत्वेन द्वन्द्वैकवद्भावः किं न स्यादिति चेन्न । मायया चेत्यस्य वैयर्थ्यापत्तेः । तस्या अप्युपायविशेषत्वात् । अत एवोपायार्थत्वं गृहीत्वा सामर्थ्येति तद्व्याख्यानं कृतम् । इदं तात्पर्यं श्लोके न प्रतीयत इत्यत आह— **मयैवेति** । उक्तार्थस्थापनाय पुराणसम्मतिमाह— **तथेति** ॥

*भा०दी०*— **अत एवेति** । मायया उपायविशेषत्वादेवेत्यर्थः । उपायार्थत्वं योगपदस्येति योज्यम् । शङ्कते ............... **दिना** ॥

*भा०र०*— **पुनरुक्तिरिति** । "त्रिभिर्गुणमयैर्भावैर्मोहितं जगन्नाभिजानाति" (७.१३) इति भगवतो जगदज्ञेयत्वस्य पूर्वमुक्तत्वादिति भावः । अज्ञानस्य भगवदधीनत्वोक्तेः प्रकृतासङ्गतत्वं परिहर्तुं भाष्यभावमाह **येनाज्ञानेनेति** । चशब्दोऽवधारणार्थोऽपि इति भावेन तद्व्यावर्त्यमुक्तम् **न स्वतन्त्रमिति** । "योगो युक्तिः, सैव माया योगमाया" इति **सङ्करोक्तेः** आह **इति व्याख्यानमिति** । सामर्थ्यमेवोपाय इत्युक्तिसमर्थनायाह **युज्यते येनेति** । इति वचनाद्योगशब्दस्य सामर्थ्यमुपायश्चेत्युभयार्थत्वाद् भाष्ये एकवचनं द्वन्द्वैकवद्भावाभिप्रायेणेत्यस्त्विति शङ्कते "**युज्यत इति**" वा । ननु मायायाः समावरणत्वं च वक्तुं तदुक्तिः ? इत्यत आह **तस्या अपीति** । मायाया इत्यर्थः । **उपायविशेषत्वात्** अप्रकाशोपायविशेषत्वाद् भाष्ये पुनः 'मायया' इति वचनं व्यर्थमेवेत्यर्थः ।

**अत एव** यतः 'उपायेन' इत्युक्तौ 'मायया' इत्यस्य वैयर्थ्यम्, अत एव योगशब्दस्योपायार्थत्वग्रहणेन मायाया अप्युपायत्वेन प्राप्तिसम्भवात् तद्व्युदासस्फोरणाय 'सामर्थ्यम्' इत्यनेनोपायो विवृत इत्यर्थः । **इदम्** "अज्ञानं च मदिच्छया" इति भाषितम् । उत्तरार्धसङ्गतये 'मयैव' इति वदता भाष्यकृता अहमेव मोहने, तत्कृतानभिज्ञाने च कर्तेत्यतो अज्ञानिकृतनिन्दया न मम खेदप्रसक्तिरिति तात्पर्यमस्मिन्नेव श्लोके प्रत्याहतमिति भावः । भाष्ये **आत्मनः** स्वात्मनः **प्रावृतिं** प्रावरणं **स्वसामर्थ्येन लोकचित्तस्य बन्धनं** याथात्म्यावगाहनशक्तिकुण्ठनं मायाऽभिमानिन्या दुर्गादिव्या च स महेश्वरः कुरुत इति वचनेनैव "योग एव माया" इति व्याख्यानमपि निरस्तमिति भावः ॥ २५ ॥

**गीतातात्पर्यनिर्णयः**

**"अव्यक्तः परमात्माऽसौ व्यक्तो जीव उदाहृतः ।**
**मन्यते यस्तयोरैक्यं स तु यात्यधरं तमः ॥" इति च ॥ २४-२५ ॥**

***प्रका०***— अव्यक्तमित्यस्यार्थमाह **अव्यक्त इति** ॥

***न्या०दी०***— अथ केचन द्वेषिणोऽपि सन्तीत्युच्यते 'अव्यक्तम्' इति । तदर्थं पूर्ववत् एषां फलस्यानुक्तत्वात् फलं च स्मृत्यैवाह **अव्यक्त इति** ॥ एवं सर्वप्रेरकत्वादिमहिमवांश्चेद्भगवान् तत्कथं भगवतः केचिज्जीवाभेदं मन्यन्त इत्यतो वा एतदुच्यते । सर्वात्मना ज्ञेयत्वाज्ञेयत्वाभ्यां जीवेश्वरयो-र्व्यक्ताव्यक्तत्वम् ॥

***भा०दी०***— फलोक्तौ हेतुः **पूर्ववदेवेत्यादि** । पूर्वेषां भागवतानां त्रैविद्यानां च "देवान् देवयजो यान्ति मद्भक्ता यान्ति मामपी"ति भगवत्प्राप्तितदन्यप्राप्तिरूपं फलं यथोक्तं तथा तेषां द्वेषिणां फलस्यानुक्तत्वादित्यर्थः ॥ **एतदुच्यत इति** । यथावद्भगवत्स्वरूपाज्ञानित्वं तेषामुच्यत इत्यर्थः । केन हेतुना जीवेश्वरौ व्यक्ताव्यक्तशब्दवाच्यावित्यत आह **सर्वात्मनेति** ॥ २४-२५ ॥

**गीता**

## वेदाहं समतीतानि वर्तमानानि चार्जुन ।
## भविष्याणि च भूतानि मां तु वेद न कश्चन ॥ २६ ॥

***वि०वि०***— यवनिकाद्युभयभागवर्तिनोः परस्परज्ञानवत् तवापि न सर्वविषये ज्ञानं स्यादित्यत आह **वेदेति** । मदधीनया मायया ममाबद्धत्वादहं सर्वं जानामि । तर्हि भवन्तमपि कश्चिद्ब्रह्मादि-र्ज्ञास्यतीत्यत आह **मां त्विति** । मां तु कश्चनातिसमर्थोऽपि स्वसामर्थ्यात् साकल्येन न वेद । तदुक्तम्—

'यथाऽऽत्मानं हरिर्वेत्ति तथाऽन्ये नैव तं विदुः ।
जानन्ति किञ्चित्क्रमशो रमाद्यास्तत्प्रसादतः ॥' इति ॥

***वा०ल०***— जीवेभ्यः स्वस्य भेदे तेषामसर्वज्ञत्वं स्वस्य सर्वज्ञत्वं च प्रयोजकमित्याह - 'वेदाहं समतीतानि इति ॥

***सा०सं०***— ननु यवनिकाद्युभयभागवर्तिनोः परस्पराज्ञानवत् तवापि भूतविषयाज्ञानं स्यादित्यतो यवनिकास्थानीयाऽपि माया न मां बध्नातीत्याह **वेदेति** । मायाकृतबन्धहीनत्वादहं भूतभविष्यद्वर्तमानभूतानि प्राणिनो **वेद** जानामि । **मां तु कश्चन** कोऽपि । यथावत्त्वेन **न** वेद । मायाकृतबन्धसत्वात् लोकस्येति । ब्रह्मादिरतिशक्तोऽपि किञ्चिदेव वेत्ति, न सर्वथेति भावः ॥

***अ०प्र०***— यवनिकाद्युभयभागवर्तिनोः परस्पराज्ञानवत् त्वद्विषये लोकस्याज्ञानमिव लोक-विषये तवाप्यज्ञानं स्यादित्यत आह **वेदेति** ।

हे अर्जुन ![1], अहं[2], समतीतानि[3], वर्तमानानि[4], भविष्याणि च[5], भूतानि[6], वेद[7], मां तु[8], कश्चन[9], न वेद[10] इति अन्वयः ।

हे अर्जुन, अहं[1-2], समतीतानि = विनष्टानि[3], वर्तमानानि च[4], भविष्याणि = भावीनि च भूतानि स्थावरजङ्गमानि सर्वाणि[6], वेदाहं = जानामि[7], मायाश्रयत्वात् मम तस्याः स्वाश्रयव्यामोहकत्वाभावात् । यद्वा, स्वतन्त्रस्य मे माया प्रतिबन्धाभावात् अहं सर्वं वदामीति भावः । असमर्थस्य त्वज्ञानाभावेऽपि समर्थस्य ब्रह्मादेस्त्वज्ञानं स्यादित्यत आह **मां त्विति** । मां तु[8], कश्चन = अतिसमर्थोऽपि स्वसामर्थ्यात्[9], न वेद = कोऽपि न जानातीत्यर्थः । तदुक्तम्—

'यथाऽऽत्मानं हरिर्वेत्ति तथान्ये नैव तं विदुः ।
जानन्ति किञ्चित् क्रमशो रमाद्यास्तत्प्रसादतः ॥'

—इति वचनात् ॥ २६ ॥

**भाष्यम्**

**न च मां माया बध्नातीत्याह— वेदेति । न कश्चनातिसमर्थोऽपि स्वसामर्थ्यात् ॥ २६ ॥**

***प०टी०***— ननु यदि मायावरणेन त्वां न जानन्ति, तर्हि तवाप्यज्ञानं स्यात्, यवनिकोभयभागगतवदित्याशङ्कोत्तरत्वेनोत्तरश्लोकमवतारयति **न चेति** । ननु भगवज्ज्ञानाभावे मोक्षाभावापत्तेः कथमुच्यते 'मां तु वेद न कश्चन' इति ? इत्यत आह **न कश्चनेति** ॥

***न०टी०***—ननु यदीशस्य स्वमायासमावृतत्वान्न तमन्ये पश्यन्ति, तर्हि तेनैव हेतुना सोऽप्यन्यान् न पश्यत्वित्याशङ्क्य, तां परिहर्तुमुत्तरं पादोनं श्लोकमवतारयति **न चेति** । न च भगवानिवान्यः कश्चिदतिसमर्थोऽप्यबद्धोऽस्तीत्यभिप्रायेणान्त्यपदं व्याचष्टे **नेति** ॥

***प्र०दी०***— अकस्मात्स्वस्य सार्वज्ञं किमित्युच्यत इत्यत आह— **नेति** । यवनिकाद्युभयभागवर्तिनोः परस्पराज्ञानवत्तवापि भूतविषये ज्ञानं न स्यादिति शङ्कानिरासार्थमिति शेषः । तथापि "मां तु वेद न कश्चन" इति पुनरुक्तमित्यत आह— **न कश्चनेति** । असमर्थो लोको न जानातु । अतिसमर्थस्तु ब्रह्मादिर्ज्ञास्यतीति शङ्कानिरासार्थमेतदुक्तम् । कश्चनेति विशेषणादिति भावः । तर्हि "ज्ञानी च भरतर्षभ" इत्यादिविरोध इत्यत उक्तं— **स्वेति** ॥ २६ ॥

*भा०दी०*— **उभयेति** । शक्त्युपायरूपोभयेत्यर्थः । द्वन्द्वैकवद्भाव इति सामर्थ्योपायेनेति भाष्ये इति योज्यम् । **यवनिकादीति** । ............ध्यगत विवृत्तप्रसरित पटाद्यावरणं यवनिका । आदिपदेन कुड्यादिग्रहः । **इत्यादिविरोध इति** । ज्ञानी च मां भजते वा ज्ञानी नित्यमुक्तः प्रियो हि ज्ञानिन इत्यादि पूर्वतनग्रन्थविरोधः । न कश्चन वेदेत्युक्त्या ज्ञानिन एव दुर्लभत्वादिति भावः ॥

*भा०र०*— एवमपि सर्वज्ञानोक्तेः कथं सङ्गतिः ? इत्यत उक्तम् **यवनिकेति** । **तिरस्करिणीत्यर्थः** । जीवं प्रति मायाया ईश्वरकर्मकज्ञानावरणत्वेन तस्या जीवेश्वरमध्यवर्तितया यवनिकासाम्यम् । यवनिका हि पुरुषद्वयमध्यवर्तिनी परस्परज्ञानाच्छादिका दृश्यते । तद्वन्मायाऽपि भगवतो भूतविषयाज्ञानमापादयति किम् ? इति शङ्कानिरासार्थमिति शेषोक्तौ सङ्गतिर्लभ्यत इति भावः । **तथाऽपि** सङ्गतिलाभेऽपि, "मूढो लोको मां नाभिजानाति" (७.२५) इत्यव्यवहितश्लोक एवास्यार्थस्योक्तत्वात् पुनरभिधानं व्यर्थमिति भावः । तत्सार्थक्यमाह **इति शङ्कानिरासार्थमिति** । **तर्हि** "कोऽपि न वेद" इत्युक्तौ, "ज्ञानी च भरतर्षभ भजते" (७.२६), "ज्ञानी त्वात्मैव" (७.१८), "स च मम प्रियः" (७.१६) इत्यादौ भगवज्ज्ञानिन उक्तत्वात् तद्विरोध इत्यर्थः । **स्वेतीति** । स्वसामर्थ्यात् कोऽपि जानाति । जानन् कश्चनापि मदनुग्रहेणैव मां जानातीति तात्पर्यान्नोक्तविरोध इति भाष्यभाव इति हृदयम् ॥

**गीतातात्पर्यनिर्णयः**

**"यथाऽऽत्मानं हरिर्वेति तथाऽन्ये नैव तं विदुः ।**
**जानन्ति किञ्चित् क्रमशो रमाद्यास्तत्प्रसादतः ॥" इति च ॥ २६ ॥**

*प्रका०*— "मां तु वेद न कश्चने"त्यस्यार्थमाह **यथाऽऽत्मानमिति** ॥

*न्या०दी०*— यदि मायावशादज्ञानं लोकस्य भगवद्विषयं तर्हि भवतोऽपि लोकविषयं तदस्ति किं, कुड्योभयभागावस्थितयोरन्योन्यादर्शनवदित्यत उच्यते **वेदाहमिति** ॥ तत्र कस्यापि भगवज्ज्ञानाभावे वेदादिवैय्यर्थ्यापत्तेः कथं "मां तु वेद न कश्चन" इत्युच्यत इत्यतस्तत्स्मृत्यैव व्याचष्टे **यथेति** ॥ २६ ॥

**गीता**

**इच्छाद्वेषसमुत्थेन द्वन्द्वमोहेन भारत ।**
**सर्वभूतानि संमोहं सर्गे यान्ति परन्तप ॥ २७ ॥**

***वि०वि०***— भगवांस्तदधीना माया च मुख्यं भगवद्विषयमोहस्य कारणमित्युक्तम् । इच्छाद्वेषप्रवृत्तिजनितद्वन्द्वमोहोऽप्यवान्तरकारणमित्याह **इच्छेति** । सुखदुःखादिविषयो मोहो द्वन्द्वमोहः । जीवेश्वरैक्यविषयो वा ।

'जीवधर्मानीश्वरे तु यो जीवेष्वैश्वरानपि ।
विद्याज्जीवेश्वरैक्यं वा द्वन्द्वमोही स उच्यते ॥' इति वचनात् ।
'सम्मोहं तु सदा मोहं महामोहं तदाग्रहम् ।
तमस्तु शार्वरं विन्द्यात् मोहश्चैव विपर्ययः ॥
तदाग्रहो महामोहस्तामिस्त्रः क्रोध उच्यते ॥'

इति वचनात् सर्गे सर्गकाल एव न तु सर्गात् प्राक् । तदानीमज्ञानस्य केवलेश्वरेच्छाद्यधीनस्य सत्वात् । इच्छाद्वेषजनितद्वन्द्वमोहोऽवान्तरकारणमित्यर्थः ॥

***सा०सं०***— पूर्वं 'दैवी ह्येषा गुणमयी'' इति ''नाहं प्रकाशः'' इति च गुणमयी माया भगवांश्च जीवाभेदादिविषयमोहे मुख्यं कारणमुक्तम् । इदानीम् इच्छाद्वेषप्रवृद्धिजनितसुखदुःखादिद्वन्द्वविषयमोहोऽप्यवान्तरकारणमस्तीत्याह **इच्छेति** । इच्छाद्वेषाभिवृद्धिजातेन **द्वन्द्वमोहेन** । द्वन्द्वानि सुखदुःखलाभालाभादीनि । तद्विषयमोहः । दुःखादिर्यथा हेयस्तथा वैषयिकसुखादिरपि हेयः । तथाऽप्युपादेयत्वेन तस्य यज्ज्ञानं तद्रूपमिथ्याज्ञानेनेत्यर्थः । **सर्वभूतानि सर्गे** सर्गकाले । सर्गकालमारभ्यैवेति यावत् । **सम्मोहं** भगवद्विषयजीवाभेदादिमिथ्याज्ञानं **यान्तीत्यर्थः** ।

यद्वा, यत्केषाञ्चिदद्वैतज्ञानं मदिच्छाधीनमिति यदुक्तं भगवता तदयुक्तम् । 'ऐकात्म्यं नाम यदिदं केचिद्ब्रूयुरनैपुणाः । कामक्रोधाभिभूतत्वादहङ्कारवशं गताः ॥' इत्यादौ इच्छाद्वेषादेरेवाद्वैतज्ञानहेतुत्वोक्तेरित्यतस्तदवान्तरकारणम् । सर्गात् पूर्वमभावेन सर्गमारभ्यैवोत्पत्तेरिति भावेनाह **इच्छेति** । इच्छाद्वेषोत्पन्नद्वन्द्वमोहेन । जीवेश्वरौ तद्धर्मभूतानि सर्वज्ञत्वाल्पज्ञत्वस्वातन्त्र्यपारतन्त्र्यसर्वशक्त्यल्पशक्त्यादिरूपाणि च द्वन्द्वानि । तद्विषयमिथ्याज्ञानेन सर्वभूतानि सर्गकालमारभ्यैव सम्मोहम् उक्तद्वन्द्वमोहदार्ढ्यं यान्तीति । द्विःसम्बोधनमादरार्थम् ॥

***अ०प्र०***— **इच्छाद्वेषेति** ।

हे भारत ![१], सर्गे[२], इच्छाद्वेषसमुत्थेन[३], द्वन्द्वमोहेन[४], सर्वभूतानि[५], हे परन्तप[६], संमोहं[७], यान्तीत्यन्वयः[८] ॥

हे भारत ![१], सर्गे सृजतीति सर्गः स्थूलदेहोत्पत्तौ सत्यां यद्वा, सर्गे = सर्गकालमारभ्यैव न तु सर्गात् प्राक् । प्रलये तु अज्ञातस्य केवलेश्वरमायाधीनस्य सत्त्वात् । सृष्टिकालमारभ्यैवेति[२],

इच्छाद्वेषसमुत्थेन द्वन्द्वमोहेन = इच्छाद्वेषाभ्यां समुत्थितो जानितो द्वन्द्वमोहः । यद्वा, इच्छाद्वेषयोः प्रवृद्धयोः सतोः ताभ्यां समुद्भूतो यः द्वन्द्वमोहः तेन द्वन्द्वमोहेन शीतोष्णसुखदुःखादिकं द्वन्द्वं तन्निमित्तो मोहो विपर्ययः विवेकभ्रंशः द्वन्द्वमोहः । यद्वा, द्वन्द्वेषु सुखदुःखप्रदेषु विषयेषु यो मोहः द्वन्द्वमोहः तेन द्वन्द्वमोहेन[४], सर्वभूतानि = चराचरादीनि[५], हे परन्तप ![६], संमोहं = अहं सुखी दुःखी चेति गाढतर अभिनिवेशो संमोहः संमोहम् । यद्वा, इच्छाद्वेषयोः प्रवृद्धयोः सतोः हेयरूपेऽपि वैषयिकसुखादौ उपादेयताबुद्धिर्भवति तदपि सर्गे सर्गकालमारभ्यैव, न तु सर्गात् प्राक् । प्रलये तु अज्ञातस्य केवलेश्वरमायाधीनस्य सत्त्वात् सृष्टिकालमारभ्य इच्छाद्वेषजन्यसुखाद्युपादेयत्वाज्ञानरूप-मोहेन भगवद्विषये भक्तिरहितत्वात् जन्ममरणादिदुःखप्रदं संसाररूपसंमोहं[७], यान्ति = प्राप्नुवन्ती-त्यर्थः । अतस्ताः मज्ज्ञानाभावात् न मां भजन्तीति भावः ॥ तदुक्तम्—

एकात्म्यं नाम यदिदं केचिद्ब्रूयुरनैपुणाः ।
कामक्रोधाभिभूतत्वादहङ्कारवशङ्गताः ॥

कामादिकमवान्तरकारणं, मुख्यकारणं भगवान् प्रकृतिश्चेति वचनात् ।

जीवेश्वरैक्यविषयज्ञानं द्वन्द्वमोहः । तदुक्तम्—

'जीवधर्मानीश्वरे तु यो जीवेष्वेश्वरानपि ।
विद्याज्जीवेश्वरैक्यं वा द्वन्द्वमोही स उच्यते ॥
तमस्तु शार्वरं विद्यात् मोहश्चैव विपर्ययः ॥' इति च ॥

अयोग्य-इच्छा = ईश्वरद्वेषः ऐक्यमोहेन सम्मोहमिथ्याज्ञानदार्ढ्यं याति तदाग्रहो महामोह-स्तामिस्रः क्रोध उच्यते इति वचनात् ॥ २७ ॥

**भाष्यम्**

**द्वन्द्वमोहेन सुखदुःखादिविषयमोहेन । इच्छाद्वेषयोः प्रवृद्धयोः न हि किञ्चि-ज्ज्ञातुं शक्यम् । कारणान्तरमेतत् । सर्गे सर्गकाले आरभ्यैव । शरीरे हि सन्ती-च्छादयः । पूर्वं तु अज्ञानमात्रम् ॥ २७ ॥**

*प०टी०*— ननु द्वन्द्वमोहादेवाज्ञानं नेश्वरेच्छात इत्याशङ्कोत्तरभूतम् 'इच्छाद्वेषसमुत्थेन' इति श्लोकं व्याचक्षाणः, तावत् 'द्वन्द्वमोह'शब्दार्थमाह **द्वन्द्वेति** । श्लोकं योजयति **इच्छेति** । पूर्वचोद्यस्य कः परिहारः ? इत्यत आह **कारणान्तरमिति** । अवान्तरकारणं द्वन्द्वमोहः, हरिरेवाज्ञानस्य मुख्य-हेतुरित्यत्र न प्रतीयत इत्यत आह **सर्ग इति** । कुतो न सर्वदा तत्कारणः ? इत्यत आह **शरीर**

**इति** । शरीराभावकाल इत्यनाद्यभावाद्द्वन्द्वमोहस्य, तत्कार्यस्याप्यभावः । अतो न तत्कार्यमज्ञानं तदा । किन्तु परमेश्वरेच्छानिमित्तकमज्ञानमात्रमित्यर्थः ॥

***न०टी०***— नन्वतिवृद्धेच्छाद्वेषाभ्यामेव सुखदुःखादिविषयज्ञानवद्भगवद्विषयज्ञानसम्भवात् कथमज्ञानं भगवदिच्छया ? इत्याशङ्कापरिहारत्वेनोत्तरं श्लोकं व्याचक्षाणो 'द्वन्द्वमोह'शब्दार्थं तावदाह **द्वन्द्वेति** । **आदि**शब्दादिच्छाद्वेषादि । मोहस्येच्छाद्वेषसमुत्थत्वं लोकप्रसिद्धमिति **हि**शब्देन प्रदर्शयन्, द्वन्द्वमोहसम्मोहयोर्निमित्तनैमित्तिकभावोक्तिः तयोरेकनिमित्तकत्वज्ञापनायेति सूचयन्नज्ञानमेवात्र मोहसम्मोहशब्दार्थ इति सूचयति **इच्छेति** । **किञ्चित्** इति सुखदुःखादिकमीश्वरादिकं च । अत इच्छाद्वेषाभिवृद्धिरेवोभयविषयज्ञानमिति भावः । न चैतावतैतदेव भगवद्विषयाज्ञानकारणम् । किन्त्वेतत्कारणान्तरमागन्तुकम् । अनादिकारणं तु भगवदिच्छैवेत्यभिप्रायेण 'सर्गे' इति पदमनूद्य व्याचष्टे **कारणान्तरमित्यादिना** । तदागन्तुकत्वमुपपादयति **शरीरे हीति** । **अज्ञानमात्रम्** अज्ञानमेव, नेच्छादय इत्यर्थः ॥

***प्र०दी०***— इच्छाद्वेषौ द्वन्द्वम् । तज्जन्यो मोहो द्वन्द्वमोहः । तेनेति कश्चित् । तदसदिति भावेनाह— **द्वन्द्वेति** । अन्यथा इच्छाद्वेषसमुत्थेन मोहेनेत्येव स्यादिति भावः । व्याख्यानव्याख्येयभावश्चागतिका गतिः । द्वन्द्वमोहस्येच्छाद्वेषसमुत्थत्वं कथमित्यत आह— **इच्छेति** । किञ्चित्सुखादिकं हेयत्वादिनेति शेषः । ननु ''नाहं प्रकाशः'' इति भगवतो ''दैवी ह्येषा'' इति तदधीनायाः गुणमय्या मायायाश्च मोहकत्वमुक्तम् । तत्कथं भगवद्विषयसम्मोहस्येच्छाद्वेषसमुत्थो द्वन्द्वमोहः कारणमुच्यत इत्यत आह— **कारणान्तरमिति** । इच्छाद्वेषसमुत्थद्वन्द्व-मोहलक्षणमेतद्भगवद्विषयस्य सम्मोहस्यावान्तरकारणमुच्यत इत्यर्थः । कुत एतदित्यतः तत्सूचकं पदं पठति— **सर्ग इति** । सर्गः क्रिया । कथं तस्या अधिकरणत्वमित्यतो लक्षणामाश्रित्य व्याचष्टे— **सर्गेति** । तदुत्तरकालं किं तत्र कारणमित्यतः पुनर्लक्षणाऽऽश्रयणेनाह— **आरभ्येति** । सर्गकालमिति सम्बन्धः । कथमनेनावान्तरकारणत्वं ज्ञायत इत्यतः सावधारणमेतदित्युक्त-मेवेति । उक्तमुपपादयन्नाह— **शरीर इति** । आदिपदेन द्वेषस्य द्वन्द्वानां च ग्रहणम् । अतः सर्गकालमारभ्यैवैतत् कारणमिति सिद्धम् । एतावता कथमवान्तरकारणत्वसिद्धिरित्यत आह— **पूर्वं त्विति** । सर्गात्पूर्वं त्विच्छादिना विनाऽज्ञानमस्त्येव भगवदिच्छाद्यधीनम् । अत एतदवान्तरं कारणमिति सिद्धमित्यर्थः ॥

***भा०दी०***— आरभ्येत्यस्याकाङ्क्षां पूरयति **सम्बन्ध इति** । आरभ्यैवेत्येवकारोक्तेः कृत्यं व्यनक्ति **कथमित्यादिना** । **एतदिति** । भावेनोक्तमेवेति पदमित्यर्थः । सावधारणमेतदित्युक्तत्व-

मात्रेण कथं परिहार इत्यत आह **उक्तमुपपादयन्निति** । **द्वन्द्वानां चेति** । सुखदुःखलाभादि-द्वन्द्वानामित्यर्थः ॥

*भा०र०*— कश्चिदिति "इच्छाद्वेषौ द्वन्द्वशब्देनाभिधीयेते, तन्निमित्तो मोहो द्वन्द्वमोहः, तेन" (शां.भा. ७.२७) इति भाषमाणः **सङ्कर** इत्यर्थः । अपव्याख्यानं भाष्यभावोक्त्या दूषयति **अन्यथेति** । परव्याख्याने इत्यर्थः । नन्विच्छाद्वेषौ द्वन्द्वः, तज्जन्यो मोहो द्वन्द्वमोहः, इतीच्छाद्वेषयोर्द्वन्द्वत्वं व्याख्यातुं 'द्वन्द्वमोहेन' इत्येवं व्याख्यानव्याख्येयभावाङ्गीकारेण **सङ्करो** द्वन्द्वशब्दवैयर्थ्यदोषं पर्य-हार्षीत् स्वग्रन्थ इत्यत आह **व्याख्यानेति** । **अगतिका गतिः** गत्यन्तरशून्या गमनिका । भाष्योक्तगत्यन्तरे सम्भवति नागतिकं व्याख्यानं युक्तमिति भावः । भाष्यमनूद्यार्थमाह **किञ्चि-दिति** । ननु सुखादेर्ज्ञातैकसत्त्वात् कथं तदज्ञानम् ? इत्यत उक्तम् **हेयत्वादिनेति** । इच्छाद्वेषसमुत्थं द्वन्द्वमोहलक्षणमेतत् । 'द्वन्द्वमोहेन' इति तृतीययोक्तं कारणमित्यर्थः ।

**लक्षणामिति** । क्रियावाचिना सर्गशब्देन तदाधारकाललक्षणामित्यर्थः । **पुनर्लक्षणेति** । सर्गशब्दलक्षितकालेऽप्यनुपपत्त्या तदारम्भक्रिया लक्षणीयेति लक्षितलक्षणेत्यर्थः । **इति सम्बन्ध इति** । "सप्तम्यन्तस्यापि विपरिणामेन" इति शेषः । **एतत्** 'आरभ्य' इति पदम् । **इति** भावेन 'एव' इत्युक्तमित्यन्वयः । सर्वं वाक्यं सावधारणमिति न्यायादिति भावः । 'आरभ्य' इत्यस्य सावधारणत्वे कथमुक्तचोद्यपरिहारः ? इत्यत आह **उक्तमिति** । अवान्तरकारणत्वमित्यर्थः । **उप-पादयन्** पूर्वं त्वज्ञानमात्रमित्यनेनोपपादयितुं द्वन्द्वमोहोत्पत्तिप्रकारमाहेत्यर्थः । **एतत्** इच्छाद्वेष-समुत्थद्वन्द्वमोहलक्षणम् **इच्छादिना विनेति** । भाष्ये मात्रशब्दार्थः । 'इच्छादि' इत्यत्रादिपदेन मायाग्रहः ॥ २७ ॥

**गीता**

## येषां त्वन्तगतं पापं जनानां पुण्यकर्मणाम् ।
## ते द्वन्द्वमोहनिर्मुक्ता भजन्ते मां दृढव्रताः ॥ २८ ॥

*वि०वि०*— सर्वभूतानां सम्मोहश्चेत् लुप्तो मुक्तिमार्ग इत्याशङ्क्य द्वन्द्वमोहविरहिताश्च केचि-त्सन्तीत्याह **येषां त्विति** । अन्तं नाशं गतं प्राप्तम् ॥

*बा०ल०*— अन्तगतं नाशं प्राप्तम् ॥

***सा०सं०***— सर्वभूतानि सम्मोहं यान्ति चेल्लुप्तो मुक्तिमार्ग इत्यतो द्वन्द्वमोहरहिताश्च केचित् सन्तीत्याह **येषामिति** । **येषां पुण्यकर्मणां जनानां** पापमन्तं गतं नष्टम् । **ते द्वन्द्वमोह-निर्मुक्ताः** । प्रागुक्तद्विविधद्वन्द्वविषयमिथ्याज्ञानहीनाः **दृढव्रताः** सन्तो **मां भजन्त** इत्यर्थः ॥

***अ०प्र०***— सर्वभूतानां संमोहश्चेत् लुप्तो मुक्तिमार्गः इत्याशङ्क्य द्वन्द्वमोहरहिताश्च केचित्सन्तीत्याह **येषामिति** ।

पुण्यकर्मणां[१], जनानां[२], एषां[३], पापं तु[४], अन्तगतं[५], ते द्वन्द्वमोहनिर्मुक्ताः[६], दृढव्रताः सन्तो[७], मां[८], भजन्ते इत्यन्वयः ।

पुण्यकर्मणां = पुण्याचरणशीलानां[१], जनानां[२], एषां[३], पापं तु[४], अन्तगतं = नष्टं, यद्वा, नाशं प्राप्तं[५], ते = साधकाः[६], द्वन्द्वमोहनिर्मुक्ताः = द्वन्द्वनिमित्तेन मोहेन निर्मुक्ताः[७], यद्वा, द्वन्द्वमोहजन्यात् दुःखरूपसंसारात् निर्मुक्ताः[५], दृढव्रतास्सन्तो = दृढानि निष्ठात्मकानि व्रतानि येषां ते तथा । यद्वा, एकान्तिनस्सन्तो[७], मां = परमात्मानं[८], भजन्ते = भक्त्या सेवन्ते इत्यर्थः ॥ २८ ॥

**भाष्यम्**

**विपरीताश्च केचित् सन्तीत्याह— येषामिति ॥ २८ ॥**

***न०टी०***—ननु सर्वभूतानां सम्मोहे कथं चतुर्विधास्तं भजन्ते ? कथं च तत्रापि केचित् तमेव शरणं व्रजन्ति ? इत्याशङ्कापरिहारत्वेनोत्तरं श्लोकमवतारयति **विपरीताश्चेति** ॥

***प्र०दी०***— 'चतुर्विधाः' इत्यनेन गतार्थमुत्तरं वाक्यमित्यत आह— **विपरीताश्चेति** । त्वत्प्रपत्तेर्मायातरणकारणत्वात्स्वदोषाद्वा त्वां न प्रपद्यन्त इत्यत्र कथं निर्णय इत्यतस्तदुक्तम् । सर्व-भूतानि सम्मोहं यान्ति चेल्लुप्तो मुक्तिमार्ग इत्याशङ्क्यात्र द्वन्द्वमोहरहिताश्च केचित्सन्तीत्याहेत्यर्थः ॥

***भा०दी०***— गतार्थतानिरासार्थं भेदं वक्ति **त्वत्प्रपत्तेरिति** । दैवी ह्येषेत्यादिश्लोकद्वय-तात्पर्यानुवादः क्रमात्पञ्चम्यन्तद्वयेन । **तदुक्तमिति** । चतुर्विधा इत्याद्युक्तमित्यर्थः ॥

***भा०र०***— **गतार्थमिति** । "सुकृतिनो भजन्ते" (७.१६) इति सुकृतिनां भगवद्भजन-मुक्तम् । अत्रापि "**ते** पुण्यकर्माणो **भजन्ते**" इति वचने पुनरुक्तमित्यर्थः । एतच्चोद्यनिरासायार्थभेदं दर्शयति **त्वत्प्रपत्तेरिति** । **तदुक्तं** 'चतुर्विधाः' इति उक्तम् । **लुप्तो मुक्तिमार्ग इति** । ज्ञानस्यैव मुक्त्युपायत्वात् सर्वेषां शरीरसङ्गहाद् आरभ्य इच्छाद्वेषसमुत्थद्वन्द्वमोहस्यावर्जनीयतया उपदेष्टृणामुप-देश्यानां च ज्ञानाभावप्रसक्त्या कस्यापि मुक्तिर्न स्यादिति भावः । **अत्र** "येषां त्वन्तगतं पापम्" इति श्लोके ॥ २८ ॥

**गीता**

## जरामरणमोक्षाय ममाश्रित्य यतन्ति ये ।
## ते ब्रह्म तद्विदुः कृत्स्नमध्यात्मं कर्म चाखिलम् ॥ २९ ॥

***वि०वि०***— 'मां भजन्ते' इत्युक्तानुवादेनोक्तमेव भगवद्भजनस्य विज्ञानाख्यं फलं पुनरन्योपायनिवृत्त्यर्थमाह **जरेति** । जरामरणमोक्षायेत्येतल्लक्षणया स्वर्गादिकामनिवृत्त्यर्थं तदपेक्षया च मोक्षापेक्षास्तुत्यर्थः । न तु भजनविधौ मोक्षस्योद्देश्यता । एकान्तिनां मोक्षापेक्षाया अभावात् । उक्तं च—

'सर्वे वेदास्तु देवार्था देवा नारायणार्थकाः ।
नारायणस्तु मोक्षार्थे मोक्षो नान्यर्थ इष्यते ॥
'एवं मध्यमभक्तानामेकान्तानां न कस्यचित् ।
अर्थे नारायणो देवः सर्वमन्यत्तदर्थकम् ॥'

इति । ये मामाश्रित्य यतन्ते त एव तद्ब्रह्म विदुः । न भगवद्भजनाद्यन्यस्तज्ज्ञानोपायोऽस्तीति भावः ॥

***सा०सं०***— भगवद्भजने किं फलं भवतीत्यतः प्रागुक्तभजनानुवादेन तस्य ब्रह्मज्ञानरूपं फलमाह **जरेति** । **ये** साधुप्रकृतयः । जरामरणमोक्षाय । लक्षणया स्वर्गादिकामनिवृत्तये । **मामाश्रित्य यतन्ति** यतन्ते । भजन्त इत्यनुवादः । **ते तद्ब्रह्म** विदुः **कृत्स्नमध्यात्मं** विदुः जानन्ति । **अखिलं कर्म च विदुः** । जरामरणमोक्षायेत्येतत् मोक्षसक्तिरन्यासक्तितः प्रशस्तेति मोक्षासक्तिस्तुत्यर्थं वा । प्रागुक्तदिशाऽन्यकामनिवृत्त्यर्थं वा । न सर्वथा तदुद्देशेन भजनविधिः । एकान्तभक्तानां मोक्षापेक्षाभावात् । 'मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते' इति भगवद्भजनफलस्योक्तावपीह तदुक्तिः, भगवद्भजनमेव ज्ञानद्वारा मायातरणोपायो नान्य इति ज्ञापनायेति ॥

***अ०प्र०***— एवञ्च मां भजन्तः सर्वं विज्ञेयं विज्ञाय कृतार्था भवन्तीत्याह **जरेति** ।

अथान्वयः— ये[१], जरामरणमोक्षाय[२], मां[३], आश्रित्य[४], यतन्ति[५], ते[६], तत्[७], ब्रह्म[८], विदुः[९], कृत्स्नं[१०] अध्यात्मं च विदुः[११] अखिलं[१२], कर्म च विदुः[१३], इति ॥

ये जरामरणनिरासार्थं[२], मां[३], आश्रित्य[४], यतन्ति = प्रयतन्ते[५], मोक्षार्थविषयासक्तिलक्षणया स्वर्गादिकामनिवृत्त्यर्थं अन्यविषयासक्तेः प्रशस्तेति स्तुत्यर्थं वा । ननु मोक्षोद्देशो न भजनं विधीयते एकान्तिनां मोक्षापेक्षाभावात् । उक्तञ्च—

'सर्वे वेदास्तु देवार्था देवा नारायणार्थकाः ।
नारायणस्तु मोक्षार्थे मोक्षो नान्यार्थ इष्यते ॥
एवं मध्यमभक्तानामेकान्तानां न कस्यचित् ।
अर्थे नारायणो देवः सर्वमन्यत्तदर्थकम् ॥' इति ॥

तथापि मोक्षोद्देशेन वा श्रीहरिप्रीत्युद्देशेन वा ये मयि सदा युक्तचेतसो मामाश्रित्य सदा यतन्ते = भजन्ते[५], ते एव[६], तत्[७], ब्रह्म[८], विदुः = जानन्ति[९], तथा कृत्स्नं[१०] अध्यात्मं च विदुः = विन्दन्ति[११] येन अध्यात्मज्ञानेन तत्प्राप्तव्यं देहादिव्यतिरिक्तजीवात्मानं तद्व्यतिरिक्तपरमात्मानं च जानन्तीत्यर्थः । तथा अखिलं कर्म च विदुः[१३], तत्साधनभूतं अखिलं सरहस्यं अधिभूताधिदैवाभ्यां सहितं ब्रह्मसंज्ञं कर्म च जानन्तीत्यर्थः ॥ २९ ॥

**गीता**

**साधिभूताधिदैवं मां साधियज्ञं च ये विदुः ।**
**प्रयाणकालेऽपि च मां ते विदुर्युक्तचेतसः ॥ ३० ॥**

***इति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे ज्ञानविज्ञानयोगो नाम सप्तमोऽध्यायः ॥***

*वि०वि०*— 'तद्ब्रह्म' इत्युक्ते भगवतो ब्रह्मणोऽन्यत्वशङ्का स्यात् । तां निवारयति **साधिभूताधिदैवं मामिति** ॥

*॥ इति श्रीमद्भगवद्गीताविवृतौ श्रीमज्जयतीर्थशिष्य-विद्याधिराजभट्टोपाध्यायविरचितायां श्रीमन्मध्वमतानुवर्तिन्यां सप्तमोऽध्यायः ॥*

*वा०ल०*— 'साधिभूताधिदैवं माम्' इत्यत्र साधिभूताधिदैवम् अधिभूताधिदेवैः सहितम्, तेषां हृदिस्थमित्यर्थः ॥

*॥ इति श्रीमद्भगवद्गीतालक्षालङ्कारे सप्तमोऽध्यायः ॥*

*सा०सं०*— 'तद्ब्रह्म' इत्युक्त्या ब्रह्म भगवतोऽन्यदिति शङ्कानिरासायाह **साधिभूतेति** । अधिभूताधिदैवसहितं **साधियज्ञम्** अधियज्ञसहितं च **मां ये विदुः** । अपि च **प्रयाणकाले मां**

**विदुः ते युक्तचेतसः** समाधियुक्तमनस्का इत्यर्थः । यद्वा, **प्रयाणकालेऽपि च मां विदुः** । स्मरन्ति युक्तचेतसो मामाश्रयन्ति । ये जनाः ते तद्ब्रह्म विदुरिति ॥

*॥ इति श्रीमत्सर्वतन्त्रस्वतन्त्रश्रीसुधीन्द्रगुरुपादशिष्येण राघवेन्द्रेण कृते श्रीमद्गीतार्थसङ्ग्रहे सप्तमोऽध्यायः ॥*

***अ०प्र०***— न चैवं भूतानां योगभ्रंशशङ्कापीत्याह **साधिभूताधिदैवमिति** । साधिभूताधि-शब्दानां अर्थो भगवानेवानन्तराध्याये व्याख्यास्यति ।

हे अर्जुन ![१], ये साधिभूताधिदैवं[२], साधियज्ञं च[३], मां[४], विदुः[५], ते युक्तचेतसः[७], प्रयाणकालेऽपि[८], मां च[९], विदुरित्यन्वयः[१०] ।

ये = साधकाः[१], साधिभूताधिदैवं = अधिभूतं च अधिदैवतं च अधिभूताधिदैवम् । ताभ्यां अधिभूताधिदैवताभ्यां सहितं तथा[२], तथा साधियज्ञं च अधियज्ञेन सह साधियज्ञं च[३], ये मां[४], विदुः = जानन्ति[५], ते युक्तचेतसः = मय्यासक्तमनसः मयि न्यस्तमनसो भूत्वा[६-७], प्रयाण-कालेऽपि = मरणसमयेऽपि[८], मां च विदुः = मामेव विन्दन्तीत्यर्थः । ततो वेदनान्मामेव प्राप्नुवन्तीति योजना । न तु तदापि व्याकुलीभूय मां विस्मरन्ति अतो मद्भक्तानां न योगभ्रंशशङ्का इत्यर्थः ॥

*इति श्रीमद्भगवद्गीताया विवरणे अन्वयप्रकाशिकायां ज्ञानविज्ञानयोगो नाम सप्तमोऽध्यायः ॥*

**भाष्यम्**

**'जरामरणमोक्षाय' इति अन्यकामव्यावृत्त्यर्थम् । मोक्षे सक्तिस्तुत्यर्थं वा । न विधिः । "मुमुक्षोरमुमुक्षुस्तु वरो ह्येकान्तभक्तिभाक् ।" इति इतरस्तुतेः नारदीये । 'नात्यन्तिकम्' इति च ।**

**"देवानां गुणलिङ्गानामानुश्राविककर्मणाम् ।**
**सत्त्व एवैकमनसो वृत्तिः स्वाभाविकी तु या ।**
**अनिमित्ता भगवति भक्तिः सिद्धेर्गरीयसी ।**
**जरयत्याशु या कोशं निगीर्णमनलो यथा ॥"**

**—इति भागवते लक्षणाच्च ।**

आह च—

"सर्वे वेदास्तु देवार्था देवा नारायणार्थकाः ।
नारायणस्तु मोक्षार्थो मोक्षो नान्यार्थ इष्यते ।

एवं मध्यमभक्तानामेकान्तानां न कस्यचित् ।
अर्थे नारायणो देवः सर्वमन्यत्तदर्थकम् ॥"

—इति गीताकल्पे ।

त एव च विदुः । "यमेवैष वृणुते" इति श्रुतेः ॥ २९ ॥ ३० ॥

*इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते*
*श्रीमद्भगवद्गीताभाष्ये सप्तमोऽध्यायः ॥*

***प०टी०***— ननु द्वन्द्वमोहे मनयति (?) सर्वभूतानि सम्मोहं यान्ति तर्हि कथं 'चतुर्विधा भजन्ते' इत्यादीनां (?) कोत्तराय साधनत्वमुक्त्वा 'मामाश्रित्य' इति, भगवत्प्रसादस्यापि ज्ञान-साधनत्वमुच्यते 'ते विदुर्युक्तचेतसः' इति । अतो ज्ञानभगवत्प्रसादमन्तरेमापि कारणं पापक्षया-द्यस्तीति मन्दाशङ्कां परिहरति **त एव चेति** । पापक्षयादिनापि भगवत्प्रसादवन्त एव 'ममाश्रित्य' इत्युक्ताः विदुः नान्य इत्यर्थः ॥

*॥ इति श्रीपद्मनाभभट्टारकविरचितश्रीमद्भगवद्गीताभाष्य-*
*भावप्रदीपिकायां सप्तमोऽध्यायः ॥*

***न०टी०***—ये तु तमेव शरणमागत्य तद्विषयश्रवणादियत्नं कुर्वन्ति, त एव तेन स्वीकृतत्वात् तत्प्रसादादेव तद्ब्रह्म यथायोग्यं सम्पूर्णं विदुः, तदर्थमेवाध्यात्मादिकं च विदुः । न तु स्वसामर्थ्या-दित्यभिप्रेतमर्थं श्लोकद्वयस्य **त एव** च इत्यादिना प्रकाशयिष्यन् 'जरामरणमोक्षाय' इत्येतत् मोक्षशक्तिस्तुत्यर्थः, अन्त्यकामनिवृत्त्यर्थं वा । न तु मोक्षायैव तं शरणं व्रजेतेत्येतदर्थम्, मुक्ति-कामात् तदकामस्यैव परत्वादित्येतत् सप्रमाणकमाह **जरा इत्यादिना** । **नात्यन्तिकं विगणय-न्त्यपि ते प्रसादं** मुक्तिमपि नेच्छन्तीत्यर्थः । **सत्त्व एव** सदा सर्वगुणाढ्य एव भगवति एकमनसः **पुरुषस्य** इन्द्रियदेवानां रूपादिज्ञानलिङ्गकानां श्रुत्युक्तं सर्वं कर्म कुर्वतां तस्मिन्नेव **भगवति या वृत्तिः स्वाभाविकी** न फलस्नेहनिमित्ता, या चाशु लिङ्गशरीरं **जरयति** इति हि मुख्यलक्षणं

भक्तेः । सा चापूर्णभक्तिनिमित्तात् मुक्तेर्गरीयसीत्यर्थः । ननु मुक्तिमप्यकामयमानानां किं हरिणा ? इत्याशङ्क्याह **आह चेति** ॥

*॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितश्रीगीताभाष्यटीकायां श्रीनरहरितीर्थभट्टारककृतौ भावप्रकाशिकायां सप्तमोऽध्यायः ॥*

***प्र०दी०***— 'मां भजन्ते' इत्युक्तानुवादेन फलमुच्यते । तत्र 'जरामरणमोक्षाय' इत्यनुक्तस्यानुवादासम्भवादप्राप्तत्वेन विध्यर्थं मद्भजनं च जरामरणमोक्षोद्देशेन कार्यमित्येवं प्रतीतिनिरासार्थमाह— **जरेति** । लक्षणया स्वर्गादिकामनिवृत्तिरर्थोऽस्येति तथोक्तम् । मोक्षविषयासक्तिरप्यसक्तेः प्रशस्तेति तत्स्तुत्यर्थं वा । सर्वथा न विधिः । कुत इत्यत आह— **मुमुक्षोरिति** । इतरस्यामुमुक्षोर्भक्तस्य । न हि प्रशस्ते सत्यप्रशस्तं नियन्तुं युक्तमिति भावः । इति चेतरस्तुतेरिति सम्बन्धः । प्रकारभेदात्पृथगुक्तिः । इतश्च न मोक्षकामविधिरित्याह— **देवानामिति** । सत्व एवैकमनसः शुद्धसात्त्विकस्य पुंसो देवानामिन्द्रियाणाम् । गुणलिङ्गानां गन्धाद्युपलब्धिलक्षणगुणानुमेयानाम् । तथा वचनादिक्रियाऽनुमेयानां च । आनुश्राविककर्मणां वैदिकानुष्ठाने कारणानाम् । या भगवत्वनिमित्ता फलोद्देशरहिता केवलं स्वाभाविकी निरवधिकस्नेहरूपस्वभावनिर्वृत्ता वृत्तिः सा भक्तिः । सा च सकामभक्त्या जातायाः सिद्धेः मुक्तेरपि गरीयसी । या सा कामनाऽभावेऽपि कोशं लिङ्गशरीरं स्वभावादेव जरयत्यनलवदित्यनिमित्तत्वस्य भक्तिलक्षणत्वेनोक्तत्वाच्चेत्यर्थः । न हि लक्षणवैकल्यं विधेयमिति भावः ।

आह च स्पष्टमेतदन्यत्र । देवार्था देवप्रतिपत्त्यर्थाः । प्रतिपन्ना देवा नारायणज्ञानार्थाः । मोक्षार्थे ज्ञातव्यः । नान्यार्थः । परः पुरुषार्थः । मध्यमभक्तानां चित्तवृत्तिः । एकान्तानां नियतानामुत्तमभक्तानां न कस्यचिदर्थे । स एव परमपुरुषार्थः । ननु मामेव ये प्रपद्यन्ते इत्युक्तत्वात् ''ते ब्रह्म तद्विदुः'' इति पुनरुक्तमित्यत आह— **त एवेति** । अन्योपायनिवृत्त्यर्थमेतदित्यर्थः । स्यादेवं व्याख्यानम् । यदि भगवद्भजनेन विना ज्ञानस्यान्योपायाभावः प्रमितः स्यात् स एव च कुत इत्यत आह— **यमिति** । भक्तमेव च वृणुत इति च प्रसिद्धम् ॥

*इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य श्रीमद्गीताभाष्यस्य टीकायां जयतीर्थमुनिविरचितायां प्रमेयदीपिकायां सप्तमोऽध्यायः समाप्तः ॥ ७ ॥*

***भा०दी०***— इच्छेत्यादिश्लोकार्थानुवादः सर्वभूतानीत्यादि अनुवादासम्भवे हेतुरप्राप्तत्वेनेति । विध्यर्थनित्यत्वेऽप्ययं हेतुरन्वेति । विध्यर्थमेव व्यनक्ति **मद्भजनमित्यादिना** । सर्वथा न विधिः कुत

इत्यस्य किमुत्तरमित्यत आह **न हीति** । मोक्षानुदिश्य भजने प्रशस्ते सत्यप्रशस्तं तदुद्देशेन भजनं जरेति श्लोकेन नियन्तुं युक्तमित्यर्थः । **प्रकारेति** । **स्तुतिप्रकारेति** । स्तुतिप्रकारभेदान्मोक्षे सक्तीति वाक्येऽनुक्त्वा पृथगुक्तिरित्यर्थः । मोक्षकामोद्देशेन भजनविधिरित्यर्थः । आहेत्यनूद्य शेषमाह **आह च स्पष्टमित्यादि** । फलमाह **मोक्षार्थे ज्ञातव्य इति** । नारायण इति योज्यम् । नान्यार्थस्य फलितोक्तिः **पर इत्यादि** । **अन्योपायेति** । भगवज्ज्ञाने तद्भजनादन्योपायनिवृत्त्यर्थं ब्रह्म तद्विदुरिति पुनर्वचनमित्यर्थः । श्रुतेरुक्तार्थसंवादतासिद्ध्यर्थमाह **भक्तमेवेति** ॥

*इति श्रीगीताभाष्यटीकायाः प्रमेयदीपिकायाः टिप्पण्यां*
*श्रीराघवेन्द्रयतिकृतायां भावदीपे सप्तमोऽध्यायः ॥*

*भा०र०*— **उक्तानुवादेनेति** । "मां भजन्ते" (७.२८) इति पूर्वोक्तभजनस्य "माम् आश्रित्य यतन्ति" इत्यनुवादेनेत्यर्थः । **फलमुच्यते** "ते ब्रह्म तद्विदुः" इति फलमुच्यते । विध्यर्थत्वे हेतुः **अप्राप्तत्वेनेति** । विध्यर्थं 'जरामरणमोक्षाय' इति पदमित्युक्तं विशदयति **मद्भजनं चेति** । **लक्षणयेति** । जरामरणमोक्षोद्देशेन भगवद्भजनं कार्यमिति हि विधिः परस्याभिमतः । न चासौ युज्यते । मोक्षकामनारहितान् एकान्तिनः प्रत्यस्य विधेरव्यापारात् । अतो मुख्यार्थानुपपत्तौ "निवृत्तस्वर्गादीतरफलकामनो भगवन्तं भजेत" इति विध्यर्थो वक्तव्यः । स च लक्षणां विना नावगम्यत इति लक्षणाऽऽश्रयणीया । न च शक्यसम्बन्धाभावः । मोक्षकामनायाः स्वर्गादीतरकामनानिवृत्त्या व्याप्तेरेव शक्यसम्बन्धत्वादिति भावः । जरामरणमोक्षकामानां मोक्षकामनारहितानां च स्वर्गादीतरफलकामनासाम्यं शक्यसम्बन्ध इत्यपि **आहुः** ।

**अस्य** 'जरामरणमोक्षाय' इति पदस्य । सप्तम्यर्थः **मोक्षविषयेति** । **अन्यसक्तेः** स्वर्गादीतरफलसक्तेः । भाष्यगतेतरशब्दार्थः **इतरस्यामुमुक्षोर्भक्तस्येति** । 'एकान्तभक्तिभाग्वरः' (नार.पु.) इति श्रवणादिति भावः । सर्वथा न विधिः कुतः ? इति कृतचोद्यस्य भाष्यारूढमुत्तरमाह **न हि इति** । अनुद्दिष्टमोक्षके भगवद्भजने प्रशस्ते सम्भवति, अप्रशस्तं तदुद्देश्यकं भजनं न विधातुमुचितमित्यर्थः । भाष्ये "आत्यन्तिकं मुक्तिहेतुम्" (प्र.दी. २.५२) इति द्वितीये टीका । "मुक्तिमपि नेच्छन्ति" इत्यर्थ इति तत्र **प्राचीनटीका** । ननु भाष्ये "मुमुक्षोरमुमुक्षुस्तु वरो ह्येकान्तभक्तिभाक्" (ना.), 'नात्यन्तिकम्' (भाग. ३.१६.४८) इति चेतरस्तुतेरित्येकवाक्ये कर्तुं शक्येऽपि किमिति "नात्यन्तिकमिति चेतरस्तुतेः" इति पृथगुक्तिः ? इत्यत आह **प्रकारभेदादिति** । नारदीये 'वरः' इत्यमुमुक्षुस्तुतिर्मुख्यत आवेद्यते । **भागवते** च "न विगणयति" (भाग. ३.१६.४८) इत्यनेनार्थात् तत्स्तुतिरुन्नीयत इति प्रकारभेदात् पृथग्वचनद्वयोदाहरणमित्यर्थः ।

भाष्ये **सत्त्वे** सत्त्वगुण एव **एकमनसः** एकाग्रचित्तस्येत्यर्थमभिसन्धाय तत्तात्पर्यमाह **शुद्ध-सात्त्विकस्येति** । 'पुंसः' इति शेषोक्तिः । "देवः सुरे धने राज्ञि, देवमाख्यातमिन्द्रियम्" इति विश्वप्रकाशोक्तेराह **देवानामिन्द्रियाणामिति** । ज्ञानकर्मेन्द्रियाणामित्यर्थः । गुणा गन्धरसादयः, तदुपलब्धयो लिङ्गानि येषां तानि तथोक्तानि, तेषामिति भावेन तदनूद्यार्थमाह **गुणेति** । कर्मेन्द्रियपक्षे गुणशब्दोऽयं प्रधानार्थ इति भावेनोक्तम् **तथा वचनेति** । अनुश्रवशब्दः श्रुतिवचनः, तत्र भवमानुश्रविकम्, श्रुतिविहितानुष्ठानमिति यावत् । तस्मिन् क्रियते व्यापार एभिरिति कर्माणि करणानि, तेषामिति ज्ञानकर्मेन्द्रियविशेषणमिति भावेन 'आनुश्रविककर्मणाम्' इत्यनूद्य व्याचष्टे **आनुश्रविकेति** । अनिमित्तपदस्य प्रकृतोपयोगायार्थमाह **फलेति** । 'निवृत्तेऽक्षद्यूतादिभ्यः' इति स्वभावशब्दात् ठक्, इति भावेनोक्तम् **स्वभावनिर्वृत्तेति** । तुशब्दार्थः **केवलमिति** । सकामभक्त्या फलकामनावत्या भक्त्या । **कामनाभावेऽपि** लिङ्गशरीरनाशकामनाभावेऽपि । "कोशोऽस्त्री कुड्मले दिव्ये शास्त्रेऽर्थे च गृहे तनौ" इति यादवोक्तेराह **लिङ्गशरीरमिति** ।

स्वर्गकामनाभावे समनुष्ठितस्यापि ज्योतिष्टोमादेः स्वर्गानिष्पादकत्ववत् भक्ते लिङ्गभङ्गकामनाभावे तन्नाशनिष्पादकत्वं न स्यात् ? इत्यत उक्तम् **स्वभावादेवेति** । न ह्यालोकोऽन्धकारनिवृत्तिकामं प्रत्येव प्रकाशमुत्पादयतीति नियम इति भावः । समूलतूलनाश एवात्राभिमत इति भावेन तत्र दृष्टान्त उक्तः **निगीर्णमनलो यथेति** । तात्पर्यम् **अनलवदिति** । सर्वतो ग्रस्तमग्निरिव जरयतीति । **अनिमित्तत्वस्य** फलकामनारहितत्वस्य । अनेन कथमितश्च न मोक्षकामविधिरित्युक्तं लभ्यते ? इत्यत आह **न हि लक्षणवैकल्यमिति** । फलोद्देशरहितत्वं यद्भक्तिलक्षणमुक्तम् तद्विकलभजनं न हि विधेयमित्यतः स्वर्गादिकामनिवृत्त्यर्थत्वं मोक्षविषयसक्तिस्तुत्यर्थत्वं वेत्युक्तमेव गीतातात्पर्यगोचरार्थ इति भावः ।

देवानामित्यादि द्विश्लोकी—

"सदा सर्वगुणाढ्यत्वात् सत्त्वो विष्णुरुदीर्यते ।" (कापि.)

"आनुश्रविककर्माऽसौ श्रुत्युक्तं यो न लङ्घयेत् ।" (भ.प.)

"अपूर्णभक्तेर्मुक्तौ तु न सुखं पूर्तिमेष्यति ।
अतस्तादृशमुक्तेश्च भक्तिः पूर्णा गरीयसी ॥" (भाग.ता. ३.२६.३३)

इति तात्पर्यानुसाराद् भागवतटीकायां **गुणलिङ्गानां** शब्दाद्युपलक्षणगुणानुमेयानाम् **आनुश्रविककर्मणां** वेदोक्तकर्मानुष्ठानेन तदुक्तानतिलङ्घिनां **देवानां** तत्त्वसंज्ञानां **सत्त्वे** सर्वगुणाढ्ये भगवति

**एकमनस** एकाग्रचित्तस्य या **वृत्तिः** सा **भक्तिः** उच्यते । कीदृशी ? **स्वाभाविकी, अनिमित्ता** फलाभिसन्धिरहिता, सा च **सिद्धेः** अपरिपक्वभक्त्या समवाप्तमुक्तेरपि **गरीयसी** । किमुक्तं भवति । यस्मिन् काले त्वपूर्णभक्तयः सब्रह्मचारिणो मुक्तिमेष्यन्ति, तस्मिन्नेव समये मुक्तिप्राप्तियोग्यस्य स्वयोग्यभक्तिपरिपाकमप्राप्तस्य पुंसो या सिद्धिरपरिपूर्णसुखलक्षणा मुक्तिः, तस्याः सिद्धेर्गरीयसी । "अपूर्णभक्तेर्मुक्तौ तु" (भाग.ता. ३.२६.३३) इत्युक्तवचनादित्युक्तं भवति । गरीयस्त्वमुपपादयितुम्– निगीर्णमनल इव भक्तिः कोशं जरयतीत्युक्तमिति प्रकारान्तरेण व्याख्याता । **प्राचीनटीकायां तु** सत्त्वे सर्वगुणाढ्ये भगवत्येकमनसः पुरुषस्येन्द्रियदेवानां रूपादिज्ञानलिङ्गकानां श्रुत्युक्तं सर्वं कर्म कुर्वतां तस्मिन्नेव भगवति या वृत्तिः स्वाभाविकी, अनिमित्ता, या चाशु लिङ्गशरीरं जरयतीत्याद्युक्तम् ।

उदाहृतभागवतवाक्येनैव कामनाराहित्यस्य भक्तिलक्षणत्वावगतिसम्भवात् किं वाक्यान्तरेण ? इति चोद्यपरिहाराय भाष्यमनूद्य तत्र शेषमाह **आह च स्पष्टमिति** । **एतत्** कामनाराहित्यं भक्तिलक्षणमित्येतत्, 'अन्यत्राह' इत्यन्वय इति भावः । "ब्रह्माद्याः ज्ञानयोजकाः" (ऋ. भा. सू. १, श्लो. १०४) इत्युक्तिं हृदि कृत्वोक्तम् **नारायणज्ञानार्था इति** । 'मोक्षार्थे' इत्यनुवादः, 'ज्ञातव्यम्' इति शेषोक्तिः । **नान्यार्थः** नान्यशेषः । किन्तु परः पुरुषार्थः = सर्वपुरुषार्थोत्तमः । **एवं** मोक्षार्थतयैव भगवानस्माभिर्ज्ञातव्य इत्येवम्, "मध्यमभक्तानां चित्तवृत्तिः" इति शेषोक्तिः । कस्यचित्समीहितस्यार्थे = कारणे, "अर्थः प्रकारे विषये चित्तकारणवस्तुषु" इति विश्वोक्तेः । यत्किञ्चित्समीहितनिष्पत्तय इति यावत् । किन्तु **स एव** नारायण एव **परमपुरुषार्थः** निरुपाधिकप्रेमास्पदम् । **प्राचीनटीकायाम्** ननु मुक्तिमप्यकामयमानानां तेषां किं हरिणाऽपि ? इत्यतः "आह च" इति भाष्यमित्युक्तम् । **एतत्** पुनर्वचनम् । **स एव** अन्योपायाभाव एव । उदाहृतश्रुतौ भगवत्कर्तृकवरणस्य ज्ञानहेतुत्वं प्रतीयते, न तु भजनस्य तत्प्राप्तिहेतुत्वम्, इत्यतोऽसङ्गतं तदुदाहरणम् ? इत्यत आह **भक्तमेवेति** । भगवद्वरणविषयत्वं भजनवत एव, 'भक्तप्रियम्' (म.भा.-मं.श्लो.), 'भक्तौ', "भक्त्यैव तुष्टिमभ्येति", "भक्त्यैकलभ्यः पुरुषोत्तमः" इत्यादिशास्त्रसिद्धमिति प्रकृतोपयोग इति भावः ॥ २९-३० ॥

*"कामैस्तैस्तैः" (७.२०) इत्याद्येकादशश्लोक्यक्षरार्थस्तु*— भगवतः सर्वकारणत्वादिमाहात्म्यज्ञानेन तं प्रपद्यमानो दुर्लभ इत्येतदुपपाद्यते **कामैरिति** । **तैस्तैः** पुत्र-कलत्र-पशु-स्वर्गादिविषयैः **कामैः** अभिलाषैः **हृतज्ञानाः स्वया** स्वात्मीयया प्रातिस्विक्या **प्रकृत्या** स्वभावेन **नियताः**

नियमिताः सन्तस्तद्देवताराधने यो यो नियमः, **तं तमास्थाय** कृत्वेति यावत्, **अन्यदेवताः प्रपद्यन्ते** ॥ २० ॥

प्राप्तान्यदेवता अपि ता विहाय भगवन्तं पुनः किमिति न प्रतिपद्येरन् ? इत्यत उच्यते **यो य इति** । **यो यो भक्तः यां यां** ब्रह्मरुद्रादिरूपां **तनुं श्रद्धयाऽर्चितुमिच्छति तस्य तस्य तां** तद्विषयिणीं **श्रद्धामचलां** स्थिरां **विदधामि** करोमि ॥ २१ ॥

यो मद्विहिताचलश्रद्धः **स तया श्रद्धया युक्तस्तस्याः** ब्रह्मादिरूपेतरदेवतातनोः **राधनम्** आराधनम् 'प्रति' इति शेषः, **ईहते** चेष्टते । देवताराधनं निर्वर्तयतीति यावत् । **ततो** देवतायाः **कामान्** अभिलषितार्थान् **लभते च** । कथं देवतान्तरस्य कामितफलस्य दानसामर्थ्यम् ? इति शङ्कानिरायासोक्तम् **मयैवेति** । तासु देवतासु स्थित्वा अहमेव कामितं ददामीति भावः । तथा चाहुः—

> "तत्र तत्र स्थितो विष्णुस्तत्तच्छक्तिप्रबोधकः ।
> एक एव महाविष्णुः कुरुते सर्वमञ्जसा ॥" इति ॥ २२ ॥

त्वत्तः प्राप्तफलानाम् इतरदेवताः प्रतिपद्यमानानां "हृतज्ञानाः" (७.२०) इति निन्दनं तर्हि किमिति क्रियते ? इत्यत उच्यते **अन्तवत्त्विति** । विनाश्येव तेषां **तत्** इतरदेवताभिः प्राप्यं **फलम् अल्पमेधसां** क्षुद्रफल्गुबुद्धीनामिति हेत्वर्थगर्भम् । कथमन्तवत्त्वम् ? इत्यत उक्तम् **देवा-निति** । देवान् यजन्त **इति देवयजः** ते **देवान् यान्ति** । **मद्भक्ताः** ममानन्तफलदत्वज्ञानवन्तस्तु **मामेव यान्ति** । अपिशब्दः "आनुमानिकमप्येकेषाम्" (ब्र.सू. १.४.१) इत्यादाविव एवशब्दार्थः ॥ २३ ॥

को विशेषस्तवान्येभ्यो ब्रह्मादिभ्यः ? येन तान् प्राप्तानाम् अन्तवत्फलवत्त्वम्, त्वां प्राप्तानाम् अनन्तफलता, इत्यत उच्यते **अव्यक्तमिति** । **अबुद्धयः** अज्ञानिनः, वस्तुतः **अव्यक्तं** कार्यदेहे-न्द्रियवर्जितम्, अत एव **परं** विलक्षणं **व्यक्तिं** कार्यदेहादिकम् **आपन्नं मन्यन्ते** । यतो मम **अनुत्तमम्** उत्तमवर्जितम् **अव्ययं भावं** प्रमाणाव्यभिचरितत्वस्वरूपम् **अजानन्त** इति । स्वतः कार्यदेहादि-वर्जितस्यापि भगवतः तद्वत्ताप्रतीतिरज्ञानमूलेत्यभिसन्दधता कार्यदेहादिराहित्यं तद्वद्भ्यो ब्रह्मादिभ्यो मम विशेष इति विभावितं भवति । यद्यपि अयमर्थः 'त्रिभिः' (७.१३) इत्यत्रोक्तः तथाऽपि प्रसङ्गात् पुनरुक्त इत्यदोषः ॥ २४ ॥

येनाज्ञानेन मामन्यथा मन्यन्ते तदज्ञानं तदिच्छाधीनमेव, न स्वतन्त्रम्, येन तया निन्दया मम खेदः स्यादिति भावेनोच्यते **नाहमिति** । **योगः** स्वसामर्थ्यलक्षण उपायः, **माया** देवी च ताभ्यां **समावृतः** सञ्छन्नः **अहं सर्वस्य लोकस्य न प्रकाशः** काशतेः कर्मणि घञ् । कस्यचिदेव भक्तस्य प्रकाशो भवामीति "न सर्वस्य" इत्युक्तम् । स्वसामर्थ्येन स्वात्मनः प्रावरणं मायादेव्या च लोकचित्तस्य बन्धनं यतोऽहमेव करोमि, अतो मयैव **मूढोऽयं** लोको **अजमव्ययं** जन्मापायहीनं मां **नाभिजानाति** ॥ २५ ॥

यवनिकोभयभागवर्तिनोः परस्पराज्ञानवत् तवापि भूतविषयेऽपि अज्ञानं स्यात् ? इत्याशङ्का-निरासार्थम्, तिरस्करिण्यपि माया न मां बध्नातीत्युच्यते **वेदाहमिति** । **भविष्याणि** भविष्यन्ति । "लृटः सद्वा इत्यत्र अकारोऽप्यत्र प्रश्लिष्य व्याख्यायते" इति ऋग्भाष्यटीकारीत्याऽकारान्तत्वं निर्वोढव्यम् । **भूतानि वेद** जानामि । मायाया मदधीनत्वात् सा मम यथा बन्धिका, तथा करणे सामर्थ्यसत्त्वाद् भूतविषयकाज्ञानजननी न भवितुमर्हतीति भावः । मया मूढो लोकस्तु **न मां वेद** । असमर्थो लोको न जानातु, अतिसमर्थस्तु ब्रह्मादिर्ज्ञास्यतीति शङ्काऽपनोदायोक्तम् **कश्चन इति** । अतिसमर्थो ब्रह्मादिरपि भगवत्प्रसादमन्तरा स्वसामर्थ्येन न वेद, साकल्येन च न वेद । यदाहुः—

> "यथाऽऽत्मानं हरिर्वेत्ति तथाऽन्ये नैव तं विदुः ।
> जानन्ति किञ्चित् क्रमशो रमाद्यास्तत्प्रसादतः ॥" इति ॥ २६ ॥

"नाहं प्रकाशः" (७.२५) इति भगवतः, "दैवी ह्येषा" (७.१४) इति तदधीनमायायाश्च मोहकत्वमुक्तम् । एवमेव भगवद्विषयसम्मोहस्य इच्छाद्वेषप्रवृद्धिसमुत्थद्वन्द्वमोहोऽप्यवान्तरकारणम् इत्युच्यते **इच्छेति** । **द्वन्द्वमोहेन** सुखदुःखादिविषयमोहेन, दुःखादिर्यथा हेयः, तथा वैषयिक-सुखादिरपि हेय एव । तथाऽपि तस्योपादेयत्वप्रकारकं यज्ज्ञानं तद्रूपमिथ्याज्ञानेनेत्यर्थः । **सर्गे** सर्ग-काले, सर्गमारभ्यैव, सर्गात् पूर्वं त्विच्छादिना विना अज्ञानमस्त्येव । भगवदिच्छाद्यधीनसर्गानन्तरं तु शरीरभावेनेच्छाद्वेषभावात् तदुत्पन्नद्वन्द्वमोहः सम्मोहम् उक्तरूपं प्रत्यवान्तरकारणमित्युक्तं भवति । द्विः सम्बोधनम् अस्यार्थस्यावश्यप्रत्येतव्यत्वज्ञापनाय ॥ २७ ॥

सर्वभूतानि सम्मोहं यान्ति चेत् लुप्तो मुक्तिमार्गः ? इत्याशङ्क्य द्वन्द्वमोहरहिताश्च केचित् सन्तीत्युच्यते **येषामिति** । **अन्तगतं** नाशं प्राप्तम्, "द्वितीया श्रितातीतपतितगत" इति समासः । **द्वन्द्वमोहनिर्मुक्ताः** द्वन्द्वविषयमिथ्याज्ञानहीना **दृढव्रताः** सन्तो **मां भजन्ते** ॥ २८ ॥

त्वद्भजनेन किं फलं स्यात् ? इत्यतो "मां भजन्ते" इत्युक्तानुवादेन फलमुच्यते **जरामरण-मोक्षायेति** । **माम्** एव शरणमागत्य **यतन्ति** यतन्ते, तद्विषयश्रवणादिप्रयतनं तन्वन्तीत्युक्तानुवादः । **ते तद् ब्रह्म कृत्स्नं** यथायोग्यं सम्पूर्णं **विदुः** जानन्ति । "त एव विदुः" इति भगवद्भजनेन विना ज्ञानस्यान्योपायो नास्तीति प्रत्याययितुम्, "मामेव ये प्रपद्यन्ते" (७.१४) इत्युक्तस्याप्यत्र पुनरुक्तिः । 'जरामरणमोक्षाय' एतत् लक्षणया 'स्वर्गादिकामनिवृत्तये' इत्यर्थकम् । मोक्षासक्तिरन्यासक्तितोऽपि प्रशस्तेत्येतदर्थपरं वा, न पुनर्मोक्षस्य सर्वान् प्रति पुरुषार्थत्वस्फोरणेन भगवद्भजनं जरामरणमोक्षोद्देशेन कार्यमित्येवं विधिरूपम् । एकान्तानां मुमुक्षाऽभावस्य "नात्यन्तिकं विगणयन्त्यपि ते प्रसादम्" (भाग. ३.१६.४८) इत्यादिनाऽऽवेदनेन तत्कामिनस्तान् प्रति तद्विधानायोगात् । कृत्स्नमध्यात्मम् "आत्मानं = जीवमधिकृत्य तदुपकारित्वेन वर्तमानं वस्तु" (प्र.दी. ८.१) इत्यादिरूपेणाध्यात्मादिशब्दार्थ उत्तराध्याये व्यक्तीभविष्यति । **अखिलं कर्म** च विदुः ॥ २९ ॥

**साधिभूतेति** । **साधिभूताधिदैवम्** अधिभूताधिदैवसहितम्, **साधियज्ञम्** अधियज्ञसहितं च मां ये विदुः, अपि च **प्रयाणकाले** मरणकाले **मामेव** विदुः ते **युक्तचेतसः** समाहितमानसाः । 'तद्ब्रह्म' इत्युक्तौ भगवतो ब्रह्मणोऽन्यत्वशङ्कायां तत्परिहारार्थं "साधिभूताधिदैवं माम्" इत्युक्तम् इत्युत्तरप्रस्थाने भगवत्पादाः ॥ ३० ॥

"कामैस्तैस्तैः" (७.२०) इत्यादेः "यत्सर्वे मिश्रयाजिनः" (गी.ता.) इत्यादिना अथ केचन द्वेषिणोऽपि सन्तीत्युच्यते **अव्यक्तमितीति** । यत् केषाञ्चिदद्वैतज्ञानं तदपि मदिच्छयेत्युक्तम् **नाहं प्रकाश इतीति** ।

> "जीवधर्मानीश्वरे तु यो जीवेष्वैश्वरानपि ।
> विद्याजीवेश्वरैक्यं वा द्वन्द्वमोही स उच्यते ॥" (आग्नेय पु.)

इत्यादिना च तात्पर्यनिर्णय (गी.ता. ७.२७) तट्टीकयोरर्थान्तरस्योक्तावपि, को विशेषस्तवान्येभ्यः ? इत्यत आह 'अव्यक्तमिति', अज्ञानं च मदिच्छयेत्याह नाहमिति द्वन्द्वमोहेन = सुखदुःखादिविषयमोहेनेत्यादि भाष्यतट्टीकादिरीत्याऽत्रास्माभिरर्थ उक्त इति न विसंवादः शङ्कनीयः । एवमन्यत्रापीति ।

*॥ इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमत्सूरीन्द्रतीर्थपूज्यपादशिष्येण सुमतीन्द्रयतिना विरचितायां प्रमेयदीपिकाव्याख्यायां भावरत्नसमाख्यायां सप्तमोऽध्यायः ॥*

**गीतातात्पर्यनिर्णयः**

**द्वन्द्वमोहो मिथ्याज्ञानम् ।**

*प्रका०*— "इच्छा-द्वेष-समुत्थेन द्वन्द्वमोहेन भारत । सर्वभूतानि सम्मोहं सर्गे यान्ति" इत्यस्यार्थमाह **द्वन्द्वेत्यादिना** ।

*न्या०दी०*— यत्केषाञ्चिदद्वैतज्ञानं तदपि मदिच्छयेत्युक्तं नाहं प्रकाश इति । तदयुक्तम् । "ऐकात्म्यं नाम यदिदं केचित् ब्रूयुरनैपुणाः । कामक्रोधाभिभूतत्वादहंकारवशं गताः ॥" इत्यादाविच्छाद्वेषादेरेव अद्वैतज्ञानहेतुत्वोक्तेरित्यत उच्यते **इच्छेति** ॥ तत्र मोहसंमोहशब्दयोरर्थभेदप्रदर्शनाय द्वन्द्वमोहपदमनूद्य मोहशब्दार्थमाह **द्वन्द्वेति** ॥

**गीतातात्पर्यनिर्णयः**

**"तमस्तु शार्वरं विद्यान्मोहश्चैव विपर्ययः ॥" इति च भारते ।**

*न्या०दी०*— मोहशब्दस्य मिथ्याज्ञानवाचित्वं कुत इत्यत आह **तम इति** ॥ शर्वरीसम्बन्धितमोवदावरकमज्ञानमित्यर्थः ।

**गीतातात्पर्यनिर्णयः**

**जीवेश्वरादिकं द्वन्द्वम् । तद्विषयो मोहो द्वन्द्वमोहः । सम्मोहः तदाग्रहः ।**

*न्या०दी०*— अस्तु मोहो मिथ्याज्ञानं, द्वन्द्वमोहो नाम क इत्यत आह **जीवेति** ॥ आदिपदेन सर्वज्ञत्वाल्पज्ञत्वादितद्धर्मग्रहणम् । मोहशब्दागतार्थतया संमोहशब्दं व्याचष्टे **संमोह इति** ॥ तदाग्रहो मिथ्याज्ञानदार्ढ्यमित्यर्थः ।

**गीतातात्पर्यनिर्णयः**

**"तदाग्रहो महामोहः क्रोधस्तामिस्र उच्यते" इत्युक्तत्वात् । सर्गे सर्गकाल एव ।**

*न्या०दी०*— कुतोऽयं संमोहशब्दार्थ इत्यत आह **तदाग्रह इति** ॥ "मोहश्चैव विपर्ययः" इति प्रकृतविपर्ययः तदिति परामृश्यते । क्रोधो यथार्थज्ञानिषु । उक्तशङ्कापरिहारायोक्तं सर्गपदं तदाशङ्कापरिहारकं यथा स्यात् तथा व्याचष्टे **सर्ग इति** ॥ सत्यमिच्छाद्वेषादिना मिथ्याज्ञानं भवतीति ।

तथापि तदवान्तरकारणमेव । सर्गकालमारभ्यैव तस्य कारणत्वात् । शरीरानुत्पत्ताविच्छाद्यभावात् । विष्णोस्तु सर्वदा कारणत्वादुक्तं युक्तमिति भावः ।

*भा०दी०*— **उक्तशङ्केति** । इच्छेति श्लोकावतारिकायां उक्तशङ्केत्यर्थः । शङ्कानिरासप्रकारं स्वयं व्यनक्ति **सत्यमित्यादिना** ॥ अवान्तरकारणत्वं व्यनक्ति **सर्गकालमिति** ॥

**गीतातात्पर्यनिर्णयः**

**"जीवधर्मानीश्वरे तु यो जीवेष्वैश्वरानपि ।**
**विद्याज्जीवेश्वरैक्यं वा द्वन्द्वमोही स उच्यते ॥"**

**—इत्याग्नेये ॥ २७-२९ ॥**

*प्रका०*— "तमो मोहो महामोहस्तामिस्रश्चान्धसंज्ञितः । अविद्या पञ्च पर्वैषा प्रादुर्भूता महात्मन" इत्येतद्वचनव्याख्यानरूपमिदं वचनम् । "तमस्तु शार्वरं विद्यान्मोहश्चैव विपर्ययः । तदाग्रहो महामोहस्तामिस्रः क्रोध उच्यते । मरणं त्वन्धतामिस्रमविद्या पाञ्चपर्विके"त्यस्यार्थः सोदाहरणः कथ्यते । शर्वरीभवतमस्सदृशं जीवेश्वरवैलण्याज्ञानाख्यं तम एकम् । जीवेश्वराभेदज्ञानाख्यो विपर्ययापरपर्यायो मोह एकः । तदाग्रहो महामोहः सम्मोहापरपर्यायः एकः । जीवेश्वराभेदनिरासकर्तृषु क्रोधस्तामिस्र एकः । जीवेश्वरभेदवादिभिः सह मरणपर्यन्तविग्रहोऽन्धतामिस्र एक इत्यविद्या पाञ्चपर्विकेति ॥

*न्या०दी०*— नन्वत्र जीवेश्वरादिविषयद्वन्द्वमोहस्येच्छाद्यवान्तरकारणत्वमुच्यते । न तु जीवेश्वराभेदज्ञानस्य । न हि विशेष्यैक्यज्ञानमेव द्वन्द्वमोह इति नियामकमस्तीत्यत आह **जीवेति** ॥ ॥ २७-२९ ॥

**गीतातात्पर्यनिर्णयः**

**"तद्ब्रह्म" इत्युक्तेऽन्यत्वाशङ्कां निवारयति साधिभूताधिदैवमिति ॥ ३० ॥**

*॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते*
*श्रीमद्भगवद्गीतातात्पर्यनिर्णये*
*सप्तमोऽध्यायः ॥*

***प्रका०***— "जरामरणमोक्षाय मामाश्रित्य यतन्ति ये । ते ब्रह्म तद्विदुरि"त्यत्र विष्णोरन्यत् ब्रह्मोच्यत इत्याशङ्क्य परिहरति **तद्ब्रह्मेत्यादिना** ।

*इति श्रीमदानन्दतीर्थभगवत्पादविरचितस्य श्रीमद्गीतातात्पर्यनिर्णयस्य प्रकाशिकायां पद्मनाभतीर्थविरचितायां सप्तमोऽध्यायः ॥*

***न्या०दी०***— भगवज्ज्ञानेन किं भवतीत्यत उच्यते 'जरे'ति ॥ तत्र भगवता तद्ब्रह्मेत्युक्तेऽपि न ब्रह्मणो भगवतः सकाशादन्यत्वं शङ्कनीयम् । तदाशङ्कापरिहारायैव साधिभूताधिदैवं ब्रह्मेति वक्तव्ये मामित्युक्तत्वादिति भावेनाह **तदिति** ॥ इत्युक्ते जातामिति शेषः ॥

*इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य श्रीमद्भगवद्गीतातात्पर्यनिर्णयस्य टीकायां जयतीर्थमुनिविरचितायां न्यायदीपिकायां सप्तमोऽध्यायः समाप्तः ॥*

***भा०दी०***— **इत्यत उच्यत इति** । फलमुच्यत इत्यर्थः ॥ ३० ॥

*॥ इति श्रीमद्गीतातात्पर्यटीकाभावदीपे राघवेन्द्रयतिकृते सप्तमोऽध्यायः ॥*



॥ श्रीः ॥

॥ श्रीवेदव्यासाय नमः ॥

॥ श्रीमदानन्दतीर्थगुरुभ्यो नमः ॥

# श्रीमद्-भगवद्गीता

## अथ अष्टमोऽध्यायः

गीता

**अर्जुन उवाच—**

**किं तद्ब्रह्म किमध्यात्मं किं कर्म पुरुषोत्तम ।**
**अधिभूतं च किं प्रोक्तमधिदैवं किमुच्यते ॥ १ ॥**

*वि०वि०—* सप्तमान्तोक्तब्रह्माध्यात्मादीनां व्याख्यानपूर्वकं ब्रह्मत्वाधियज्ञत्वमृतिकालकर्तव्य-स्मृतिविषयत्वगम्यत्वादिरूपो भगवन्महिमा अत्र उपवर्ण्यते । तत्र ब्रह्माध्यात्मादिरूपजिज्ञासया अर्जुन उवाच **किं तद्ब्रह्मेत्यादिना** । यद्यपि भगवत एव ब्रह्मत्वं प्रसिद्धम् । तथापि 'ते ब्रह्म तद्विदुः' इत्यत्र तदिति विशेषणाद्भगवतोऽन्यद्ब्रह्म वेदादिकमिति प्रतीयते । 'साधिभूताधिदैवं मां साधियज्ञं' चेति 'च'शब्दस्य साधिभूताधिदैवं साधियज्ञं मां चेति सम्बन्धेन ब्रह्मज्ञानादन्यदधि-भूतादिविशिष्टविष्णुज्ञानमिति प्रतीतेः, तस्य 'अधिभूतमधिदेवम्' इत्यादिना साधिभूताधिदैवस्य साधियज्ञस्य च विष्णोः ब्रह्मत्वसिद्धिः । तदेव ब्रह्म परमं कवीनाम्'' इत्यादिवाक्यात् विष्णावेव ब्रह्मत्वमवसीयते । अतो विप्रतिपत्त्या सन्देहात्प्रश्नः **किं तद्ब्रह्मेति** ॥

*अ०प्र०— अ०प्र०—* सप्तमान्तोक्तानां ब्रह्माध्यात्मादिषट्शब्दार्थव्याख्यानपूर्वकं ब्रह्मत्वा-धियज्ञत्वमृतिकालकर्तव्यस्मृतिविषयत्वगम्यत्वादिरूपो भगवन्महिमेयं वर्ण्यते अत्र अष्टमाध्याये । तत्र पूर्वोक्तं ब्रह्मादिषण्णां स्वरूपजिज्ञासया **अर्जुन उवाच – किं तत् ब्रह्मेति** द्वाभ्याम् । यद्यपि वासुदेवात्मकं ब्रह्मेत्यादौ भगवत एव ब्रह्मत्वं प्रसिद्धम् । तथापि ते ब्रह्म तद्विदुरित्यत्र तदिति

परोक्ष्येण निर्देशात् भगवतो उद्देशादिकं ब्रह्मेति प्रतीयते । ननु तत्र ते ब्रह्म तद्विदुरित्युक्त्वा कथंभूतं ब्रह्मेत्याकाङ्क्षायां साधिभूताधिदैवं साधियज्ञं च ब्रह्मेति वक्तव्ये, मामिति ब्रह्मणः परामर्शात् ब्रह्मणो भगवदन्यत्र प्रतीतिः परिहृतेति चेत् । सत्यम् । तथाप्यन्यत्वप्रतीतिर्भवेदेव । तत्र साधियज्ञं चेति चशब्दस्य सत्त्वात् तस्य च साधिभूताधिदैवं साधियज्ञं ब्रह्म तथा साधिभूताधिदैवं साधियज्ञं मां च विदुरित्यपि सम्बन्धसम्भवेनाधिभूताधिसहितत्वेन ब्रह्मज्ञानादन्यदेवतत्सहितत्वेन भगवज्ज्ञान-मुच्यते इत्याद्यन्यथा प्रतीतिसम्भवात् । तथा च ब्रह्मणो भगवदन्यत्वं शक्याप्रश्नः क्रियते । यद्वा, पूर्वाध्यायान्ते भगवतो प्रक्षिप्तानां ब्रह्माध्यात्मादिसत्त्वानां पदार्थानां तत्त्वजिज्ञासुः **अर्जुन उवाच – किं तत् ब्रह्मेति** द्वाभ्याम् ।

अथान्वयः— हे पुरुषोत्तम ![१], अधिभूतं[२], ब्रह्म[३], किं[४], अध्यात्मं[५], किं[६], कर्म[७], किं[८], अधिभूतं च[९], किं प्रोक्तं[१०] अधिदैवं[११] किं[१२], उच्यते[१३] इत्यन्वयः । स्पष्टार्थः ॥ १ ॥

**गीता**

# अधियज्ञः कथं कोऽत्र देहेऽस्मिन्मधुसूदन ।
# प्रयाणकाले च कथं ज्ञेयोऽसि नियतात्मभिः ॥ २ ॥

***वि०वि०***— अधियज्ञः कथमिति प्रकारप्रश्नः, क इति स्वरूपप्रश्नः, अन्तकाले च किमर्थं कथम्भूतः । केन प्रकारेण स्मर्तव्योऽसीत्यर्थः ॥

***वा०ल०***— 'स्वभावाध्यात्ममुच्यते' इत्यत्र स्वभावेन आत्मानं जीवमधिकृत्य वर्तमानं जीवहृदिस्थितत्वादध्यात्ममित्युच्यते ॥

***सा०सं०***— 'ते ब्रह्म तद्विदुः' (७-२९) इत्युक्तस्य 'प्रयाणकालेऽपि च मां विदुः' (७-३०) इत्युक्तस्य च व्याख्यानमत्र प्राधान्येन क्रियते । तत्प्रसङ्गादन्तकालस्मरणफलं तदुपायप्रकारो ब्रह्मप्राप्तिमार्गश्चात्रोच्यत इति पूर्वानन्तर्यमध्यायभेदः स्वस्मिन्नेकवाक्यता च । (स्मरणविषयत्व-प्राप्यत्वरूपो महिमैव वर्ण्यत इति षट्कान्तर्भावश्च ज्ञेयः ।) स्मरणविषयत्वप्राप्यत्वरूपो महिमैव वर्ण्यत इति षट्कान्तर्भावश्च ज्ञेयः । पूर्वत्र 'तद्ब्रह्म विदुः' इति परोक्षनिर्देशेन ब्रह्म भगवतोऽन्यदिति प्रतीयते । तथा 'साधिभूतं साधिदैवं साधियज्ञं मां च विदुः' इति योजनया भगवज्ज्ञानं ब्रह्मज्ञाना-दन्यदिति प्रतीयते । 'वासुदेवात्मकं ब्रह्म' (व्यासस्मृतिः) इत्यादौ भगवानेव ब्रह्मेति प्रतीयते । अतो विप्रतिपत्त्या जातसंशयात् पृच्छति **किं तद्ब्रह्मेति** । अत्राद्यश्लोके **किमिति** स्वरूपप्रश्नः । द्वितीये

**कथमिति** प्रकारप्रश्नः । अधिगतो **यज्ञमधियज्ञ** इति प्रादिसमासो नाव्ययीभावः । **अत्र देहे अधियज्ञः कथमि**त्यर्थः । अस्मिन् देहे अधियज्ञः क इति स्वरूपप्रश्नः । अस्मिन् देह इति पद-द्वयकृत्यं परिहारवाक्ये वक्ष्यामः । अन्तकाले किमर्थं **कथम्**भूतः केन प्रकारेण स्मर्तव्य इत्यर्थः ॥

*अ०प्र०*— किं च **अधियज्ञ इति** ।

हे मधुसूदन ![१], अधियज्ञः[२], कथं[३], अस्मिन्[४], देहे[५], कः[६], अत्र तिष्ठति[७], नियतात्मभिः[८], प्रयाणकाले त्वं च[९], कथं[१०] ज्ञेयोऽसि[११] इत्यन्वयः ।

हे मधुसूदन ![१], अधियज्ञः = यज्ञग्रहणं सर्वकर्मणामुपलक्षणार्थं[२], कथं = इति प्रकारप्रश्नः[३], अस्मिन् = पुरोवृत्ति विद्यमाने[४], देहे[५], प्रसिद्धाग्निव्यावृत्त्यर्थं अस्मिन् देहेत्युक्तं[४-५], कः = इति स्वरूपप्रश्नः[६], अत्र तिष्ठति = एतच्चोत्तरत्र समये स्पष्टीकरिष्यते[७], नियतात्मभिः = नियमितमनस्कैः पुरुषैः[८], प्रयाणकाले = परलोकं प्रति प्रयाणे प्रसक्ते सति त्वं च[९], कथं = किमर्थं कथम्भूतः केन प्रकारेण च, यद्वा, केनोपायेन वा[१०] ज्ञेयोऽसि = स्मर्तव्योऽसीत्यर्थः[११] यद्वा, किञ्च **अधियज्ञ इति** ॥ अत्र देहे यो यज्ञो निवर्तते तस्मिन् कोऽधियज्ञे अधिष्ठाता प्रयोजकः फलदाता च क इत्यर्थः । स्वरूपं पृष्ट्वा अधिष्ठानप्रकारं पृच्छति— कथं केन प्रकारेणाऽसौ अस्मिन् देहे स्थितो यज्ञमधितिष्ठतीत्यर्थः ॥ २ ॥

### गीतातात्पर्यनिर्णयः

## उक्तव्याख्यानपूर्वकं ब्रह्मप्राप्तिरुच्यते ।

*प्रका०*— एतदध्यायप्रतिपाद्यं दर्शयति **उक्तेति** ।

*न्या०दी०*— पूर्वाध्यायसङ्गतत्वेनैतदध्यायप्रतिपाद्यमर्थं दर्शयति **उक्तेति** ॥ यदुक्तं ''ते ब्रह्म तद्विदुः'' इत्यादि तद्व्याख्यानमत्रादौ क्रियते । ''प्रयाणकालेऽपि च माम्' इत्युक्तव्याख्यानप्रसङ्गेन अन्तकालस्मरणफलं, तदुपायप्रकारो, ब्रह्मप्राप्तिमार्गश्चेत्येतत् उच्यत इत्यर्थः । अन्तकालस्मरण-उपायादीनां ब्रह्म प्राप्यते एभिः इति ब्रह्मप्राप्तिशब्दाभिधेयत्वं ज्ञातव्यम् ।

*भा०दी०*— **इत्युक्तव्याख्यानप्रसङ्गेनेति** । एतेन उक्तव्याख्यानमेवाध्यायस्यार्थः । अन्यत्तु प्रासङ्गिकमिति अनेकार्थकत्वकृताध्यायभेदशङ्का न कार्येति सूचितम् ॥ **तदुपायेति** । स्मरणो-पायेत्यर्थः । एतावानर्थः प्राप्तिपदेन कथं लभ्यत इत्यत आह **अन्तकालेत्यादिना** ॥

**गीतातात्पर्यनिर्णयः**

**तदिति विशेषणात् ब्रह्मेत्युक्तमन्यदेव । प्रकृत्यादीनां मध्ये यत् किञ्चित् उपरि "साधियज्ञं च" इति च शब्दादधिभूतादिसहितत्वेन विष्णुज्ञानमन्यदेवेति संशयः "किं तद् ब्रह्म" इति प्रश्नकारणम् ॥ १-२ ॥**

*प्रका०*— गताध्याये "ते ब्रह्म तद्विदुरि"त्यादिनोक्तम् । तत् स्पष्टीकरिष्यन् "किं तद्ब्रह्म किमध्यात्ममि"त्यत्र ब्रह्मत्वस्यासम्भावितत्वमाशङ्क्य परिहरति **तदित्यादिना** । "ब्रह्म तद्विदुः" इत्यत्र तदिति विष्णुगुणा निर्दिष्टत्वात् "मां ब्रह्म विदुरि"ति । निर्देशाभावात् । उत्तरवाक्ये "साधिभूताधिदैवं मां साधियज्ञं च ये विदुरि"त्यत्र अधिभूतादिसहितं मां च विदुरिति ततोऽन्यत्वेन विष्णोः निर्देशात् । अत्र विष्णोरन्यद्ब्रह्म प्रतीयते । "वासुदेवात्मकं ब्रह्मे"त्यादिषु विष्णुर्ब्रह्मेति प्रतीयते । अतः संशयात् । किं तद्ब्रह्मेति प्रश्नो युज्यत इत्यर्थः ।

*न्या०दी०*— नन्वर्जुनस्य ज्ञानित्वाज्ज्ञानात्येवासौ भगवानेव ब्रह्मेति । अतः "किं तद्ब्रह्म" इति प्रश्नः कथं युज्यते, कारणाभावादित्यत आह **तदिति** ॥ अर्जुनस्य ज्ञानित्वेऽपि युक्तोऽयं प्रश्नः । तद्ब्रह्मेत्यत्र ब्रह्मणो भगवता तदिति पारोक्ष्येणोक्तत्वाद् भगवतोऽन्यदेवताऽऽत्रोक्तं ब्रह्मेति प्रतीयते । वासुदेवात्मकं ब्रह्मेत्यादेर्भगवान् ब्रह्मेति प्रतीयते । एवमुभयथाप्रतीतिजनितसंशयस्य प्रश्नकारणस्य सद्भावादिति भावः । ननु ब्रह्मशब्दस्य भगवन्मात्रवृत्तित्वात् कथं तदिति विशेषितत्वेऽप्यन्यत्वप्रतीतिरित्यत उक्तम् **प्रकृतीति** ॥ ब्रह्मशब्दस्य भगवति मुख्यत्वेऽपि प्रकृतिवेदादेरप्यमुख्यतया तदर्थत्वात् तदिति विशेषितत्वेन मुख्यार्थासम्भवेऽप्यमुख्यार्थः प्रकृत्यादीनां मध्ये यत्किञ्चिदत्र स्यादिति प्रतीतिर्युक्तेति भावः । ननु तदिति विशेषणेन प्राप्ता ब्रह्मणो भगवदन्यत्वशङ्का "साधिभूताधिदैवं माम्" इत्युपरितनवाक्ये भगवतैव परिहृता । ब्रह्मेति वक्तव्ये मामित्युक्तत्वात् । अतः कथं ब्रह्मणो भगवदन्यत्वप्रतीतिरित्यत उक्तम् **उपरीति** ॥ यद्यप्येषां प्रतीतिरुपरितनवाक्ये परिहृता, तथापि पुनर्भवत्येव । तत्र "साधियज्ञं च" इति चशब्दस्य साधिभूताधियज्ञं मां चेति संयोजनेन अधिभूतादिसहितत्वेन ब्रह्मज्ञानादन्यदेव विष्णुज्ञानमुच्यत इति तदिति विशेषणादेव प्रतीतिसम्भवादिति भावः । यत्किञ्चिदित्यत्र अन्यदेवेत्यत्र च इति प्रतीत्या जात इति शेषः ।

*भा०दी०*— **इत्यादेरिति** । स्मृतेरिति शेषः । "ब्रह्मेति परमात्मेति भगवानिति शब्द्यते" इत्यादिरादिपदार्थः । **भगवन्मात्रवृत्तित्वादिति** । "तदेव ब्रह्म परममि"त्यादिश्रुतिरिति भावः ॥ **प्रकृतीत्यादि** । "मम योनिर्महद्ब्रह्म", "तेन ब्रह्महृदा", "ब्रह्माणि जीवाः सर्वेऽपि" इत्यादेरिति

भावः ॥ **इत्युपरीति** । अस्मिन्नेवाध्याये । संशयपदात्पूर्वं स्थलद्वये शेषमाह **इत्यत्र च इति प्रतीत्या जात इति शेष इति** ॥

**गीता**

## श्रीभगवानुवाच—

### अक्षरं ब्रह्म परमं स्वभावोऽध्यात्ममुच्यते ।
### भूतभावोद्भवकरो विसर्गः कर्मसंज्ञितः ॥ ३ ॥

***वि०वि०***— अत्रोत्तरं भगवानुवाच **अक्षरमित्यादिना** । वेदादिशङ्काव्यावृत्त्यर्थमक्षरं परमत्त्वेन विशिनष्टि । परमाक्षरत्वं विष्णोरेव प्रसिद्धमिति । तथैवोक्तम् । अहं ब्रह्मेति येषामप्रसिद्धं तान् प्रति 'अव्यक्तं व्यक्तिमापन्नम्' इत्यव्यक्तत्वेन प्रसिद्धविष्णोः 'अव्यक्तोऽक्षरः' इत्यक्षरत्वस्योक्त्या सिद्धमित्युपपादनीयम् । आत्मानं जीवमधिकृत्य तदुपकारित्त्वेन वर्तमानं वस्त्वध्यात्मम् । स्वस्य 'ते ब्रह्म तद्विदुः' इति वेत्तृत्त्वेन प्रस्तुतस्य जीवस्य भावोऽन्तःकरणादिदेहपर्यन्तः पदार्थः स्वभावः ।

यद्वा, आत्माधिकारग्रन्थे प्रतिपाद्यमध्यात्मं स्वयमेव भावः स्वभावो जीवः । सर्वदाऽस्त्येवैकप्रकारेणेति भावः । असाधारणस्थितिरेकप्रकारा । मनस एव नानास्थितिः, विकारित्वात् । 'अन्नमयं सोम्य मनः' इत्यादि श्रुतेः । स्वशब्द ईश्वरव्यावृत्त्यर्थः । तस्य जीवरूपत्वाभावात् । प्रधानस्याप्रधानसम्बन्धित्त्वेन व्यपदेशाभावान्न स्वीयवाची स्वशब्दः । न चात्र धनवाचिता सम्भवति । भूतानां जीवानां भावानां जडपदार्थानां चोद्भवं करोतीति । तथा विशेषेण सर्जनं विसर्गः कर्मेति संज्ञितः ॥

***वा०ल०***— "भूतभावोद्भवकरो विसर्गः कर्मसंज्ञितः" इत्यत्र भूतानां भावः सत्ता, उद्भवः उत्पत्तिस्तौ करोतीति स तथोक्तः । विसर्गः, विशेषेण सर्गः आदिकालीनसृष्टिव्यापारः भगवतः कर्मसञ्ज्ञितः । किं कर्म इत्यस्योत्तरमिदम् ॥

***सा०सं०***— प्रश्नाष्टकस्यापि क्रमेणोत्तरमाह **अक्षरमित्यादिना** । 'किं तद्ब्रह्म' इति त्वया पृष्टं **ब्रह्म परममक्षरमु**त्तमाक्षरं परमाक्षरशब्दितं वस्तु । अत्र भगवतोऽन्यद्ब्रह्मेति शङ्कायां किं ब्रह्मेति प्रश्ने अहं ब्रह्मेति परिहारे कार्ये, 'अक्षरं ब्रह्म' इत्युक्तिः, 'तस्मादक्षरं तस्मादक्षरमित्याचक्षत एतमेव सन्तम्' इत्यादौ विष्णावेवाक्षरत्वप्रसिद्धेरक्षरमित्युक्त्यैव विष्णुर्ब्रह्मेति वा अहमेव ब्रह्मेति वा फलितत्वादज्ञानामक्षरत्वमिति फलितत्वादज्ञानामक्षरत्वमिति स्वस्य ज्ञापनाय । तथैव वाच्येऽपि

'परमम्' इत्यक्षरविशेषणं तु 'अधमं त्वक्षरं या सा प्रकृतिर्जडरूपिका' (स्कान्दे) इत्यादेः प्रकृत्यादेरप्यक्षरशब्दार्थत्वात् तद्व्यावृत्त्यर्थमिति ज्ञेयम् । आत्मानं जीवमधिकृत्य यदस्ति जीवोपकारित्वेन वर्तमानदेहेन्द्रियान्तःकरणरूपं तदध्यात्मम् । **स्वभाव**शब्दः स्वस्य 'ते विदुः' इति प्रकृतजीवस्य भवति । उपकारित्वेन वर्तते, इति व्युत्पत्त्या देहादिपदार्थवाची । देहेन्द्रियान्तःकरणलक्षणः पदार्थः **अध्यात्ममि**ति प्रथमान्ताव्ययपदेनोक्तव्युत्पत्त्योच्यते ।

यद्वा, अध्यात्मपदं सप्तम्यन्तमुपेत्य अध्यात्ममात्माधिकाराख्यग्रन्थे प्रतिपाद्यं किमिति चेत् तव प्रतिप्रश्नः, तदा **अध्यात्मम**ात्माधिकारग्रन्थप्रतिपाद्यं **स्वभावः** स्वशब्दः 'ते विदुः' इति प्रकृतजीववाची भवति सदैकप्रकारेणास्तीति भावः । स्वश्चासौ भावश्च सदैकरूपेण वर्तमानश्चेति स्वभावः । अध्यात्मशब्दितात्माधिकारग्रन्थोक्तस्तु सदैकप्रकारो जीव इत्यर्थः । 'स्व' इत्येवोक्तौ स्वशब्दस्यात्मीयेऽपि प्रयोगादन्तःकरणादिरपि प्रतीयेत । अतो 'भाव' इत्युक्तिः । 'अन्नमयं सोम्य मनः' इत्यादेर्मनःप्रभृतेरन्नविकारत्वेनैकप्रकारत्वाभावात् । 'भाव' इत्येवोक्तौ ईश्वरस्यापि सदैकरूपत्वात् तेन तस्य प्रतीतौ द्वितीयप्रश्नो नोत्तरितः स्यात् । अतः 'स्व' इत्युक्तिः । तेन च प्रकृतत्वाज्जीव एव परामृश्यत इति पदद्वयमप्यर्थवदेवेति भावः । 'किं कर्म' इत्यस्योत्तरं 'भूत' इत्यादि । भूतानां जीवानां भावानां जडपदार्थानां चोद्भवकरः उत्पत्तिकरो **विसर्गो** विशेषेण सर्जनम्, ईश्वरकर्तृको व्यापारः । **कर्मे**ति शब्दित इत्यर्थः ॥

*अ०प्र०*— भगवान् श्रीकृष्णः प्रश्नक्रमेणैवोपदिशति **अक्षरमित्यादि** त्रिभिः । तत्रादौ **अक्षरमिति** ।

हे अर्जुन !, परमं[१], अक्षरं[२], ब्रह्म[३], स्वभावः[४], आध्यात्मं[५], उच्यते[६], भूतभावोद्भवकरः[७], विसर्गः[८], कर्मसंज्ञितः[९] इत्यन्वयः ।

अक्षरं ब्रह्मेत्युक्ते अक्षरपदवाच्यस्य वेदाव्यक्तादेरपि ब्रह्मत्वं स्यात् । अतः परमित्युक्तं परमाक्षरत्वं च 'अक्षरात्परतपरः', 'अक्षरादपि चोत्तमः' इत्यादौ भगवत एव प्रसिद्धमेव इत्यतः एवमुक्तोऽपि अहं ब्रह्मेत्युक्तं प्रायमेव ये पुनः भगवतः परमाक्षरत्वं न जानन्ति तान् प्रति अव्यक्तं व्यक्तिमापन्नमित्यत्र अव्यक्तत्वेन प्रसिद्धस्य भगवतो व्यक्तोऽक्षर इत्युक्तेः । 'तमाहुः परमां गतिं' इत्युपरि अक्षरत्वस्य परमत्वस्य च वक्ष्यमाणत्वादहं ब्रह्मेति सेत्स्यतीति भावः । तस्मात् परमं अक्षरं ब्रह्म[१-३], यद्वा, मतान्तरे परमं अक्षरं जगतो मूलकारणं तत् ब्रह्म न क्षरति न चलतीत्यक्षरं श्रुतिः ये तद्वै तदक्षरं गर्ग ब्रह्मणा अभिवदन्तीति श्रुतेः । यद्वा, अक्षरं यदस्मिन् प्रभिन्ने पाञ्चभौतिकाकारे परिपूर्णमपि कदाचिन्न क्षरति तदक्षरं ब्रह्म परमं यत् अत्यन्तं सूक्ष्मात्सूक्ष्मतरं

अनिर्वचनीयं तत्परमं ब्रह्म निर्विशेषमिति[३], स्वभावः[४], अध्यात्मं[५], उच्यते[६], स्वभावः स्वस्यैव ब्रह्मणः प्रतिबिम्बेन जीवरूपेण भावनं स्वभावः स एव जीवात्मानं देहमधिकृत्य भोक्तृत्वेन वर्तमानो अध्यात्मशब्देनोच्यते । यद्वारा आत्मानं जीवं अधिकृत्य तदुपकारित्वेन वर्तमानं अध्यात्मं ते ब्रह्म तद्विदुः इत्यत्र वेत्तृत्वेन प्रस्तुतो यो जीवः स स्व इत्युच्यते स्वस्वभाव एव जीवोपकारित्वेना-ध्यात्ममुच्यत इत्यर्थः । यद्वा, आत्मानमधिकृत्य तत्प्रतिपादकत्वेन वर्तमानो ग्रन्थ अध्यात्म-मित्युच्यते । तत्र प्रतिपाद्यं किमिति प्रश्ने स्वश्चासौ भावश्चेति स्वभावो जीव इत्युत्तरं आत्मैव ह्यात्माधिकारे प्रतिपाद्यो नान्य इति भावः । न च स्वशब्दस्य जीववाचकत्वात्तेनैवालं किं भाव-शब्देन इति वाच्यम् । तस्यात्मीयेऽपि प्रयोगात् देहादिकं प्रसज्येत् । न च तद्युक्तमात्माधिकार-ग्रन्थप्रतिपाद्यत्वाभावात् । अतस्तद्व्यावृत्त्यर्थं भावशब्दः भवति इति भावः । 'मुख्यस्य निर्विशेषे-णेति' न्यायात् । सदैकप्रकारेण स्थितकर्ता भावः । न चान्तःकरणादेरेकप्रकारेण स्थितिः 'अन्नमयं हि सोम्य मन' इत्यादि श्रुतेः अन्नादिना प्रतिदिनं विकारित्वात् । एवं तर्हि भावशब्देनैवालमिति न वाच्यम् । स्वशब्दस्येश्वरव्यावृत्त्यर्थत्वात् । न हीश्वरो जीवानां स्वः भेदप्रमाणविरोधात्, नापि स्वीयः, प्रधानत्वात् अप्रधानो हि लोके स्वीय उच्यते । अतः स्वभावो जीव एवेति स एवात्मा-धिकारग्रन्थे प्रतिपाद्य इति भावः । यद्वा, यस्य भावः स्वभावः आकारे समुत्पन्ने सति यो जन्म धर्मादीन् न वेत्ति आकारे लोपे यो न लुप्यति एवं सहजस्थित्या य आत्मनः स्वभावः अध्यात्म-मिति मयोच्यते[६], भूतभावोद्भवकरः[७], विसर्गः = भूतानां जरायुजादीनां भावः उत्पत्तिः उद्भवः । उक्तं च—

'आदित्याज्जायते वृष्टिः वृष्टेरन्नं ततः प्रजाः ।'

इत्युक्तक्रमेण विवृद्धिस्तौ भावौ उद्भवौ करोतीति यो विसर्गः देवतोद्देशेन द्रव्यत्यागरूपो यज्ञः सर्वकर्मणामुपलक्षणमेतत् । यद्वा, भूतानां भावानां उपपदार्थानां चोद्भवमुत्पत्तिं करोतीति तथोक्तः विसर्गः । विशेषेण सर्जनं विसर्जनं विसर्गः । ईश्वरस्य सृष्ट्यादिरूपव्यापार इत्यर्थः । यद्वा, भूतभावानां उद्भवकरो यो विसर्गः सृष्टिकर्मसंज्ञितः स तथा[८], कर्मसंज्ञितः = सकर्मशब्दवाच्यः । ॥ ३ ॥

**भाष्यम्**

**मरणकाले कर्तव्यगत्याद्यस्मिन्नध्याये उपदिश्यति । परममक्षरं ब्रह्म । वेदा-दिशङ्काव्यावृत्त्यर्थमेतत् । आत्मन्यधि यत् तदध्यात्मम् । आत्माधिकारे यत्**

**तदिति वा । तथा हि । जैवः स्वभावः । स्वाख्यो भावः स्वभावः इति व्युत्पत्त्या जीवो वा स्वभावः । सर्वदा अस्त्यैव एकप्रकारेणेति भावः । अन्तः-करणादिव्यावृत्त्यर्थो भावशब्दः । न हि एकप्रकारेण स्थितिः अन्तःकरणादेः विकारित्वात् । स्वशब्द ईश्वरव्यावृत्त्यर्थः ।**

**भूतानां जीवानां भावानां जडपदार्थानां चोद्भवकरेश्वरक्रिया विसर्गः । विशेषेण सर्जनं विसर्ग इत्यर्थः ॥ १ - ३ ॥**

***प०टी०***— भगवन्महिमापरत्वे षट्कस्यापि स्थिते, अध्यायभेदार्थमेतदध्यायप्रतिपाद्यार्थमाह **मरणेति** । उक्तव्याख्यानादेरादिपदाद्ग्रहणम् । मुक्तप्राप्यत्वप्रलयादिकारणतामहिमा चात्रोच्यते । तत्र प्रश्नबीजस्य स्पष्टत्वात् परिहारवाक्यव्याख्यानेनैव प्रश्नवाक्यार्थसिद्धेः परिहारं व्याख्याति **परम-मिति** । किं 'परम'शब्दस्य कृत्यम् ? इत्यत आह **वेदादीति** । **आदिपदात्** प्रकृतिः । 'अध्यात्म'-शब्दं द्वेधा व्याचष्टे **आत्मनीति** । नन्वेवम् 'अध्यात्म'शब्दस्यार्थद्वयं चेद्विवक्षितम्, तर्हि कथं तत्परिहारः 'स्वभाव'पदेन ? इत्यत आह **तथा हीति** । 'स्वस्य भावः' इति व्युत्पत्त्या जैवः पदार्थः स्वभावो, देहपर्यन्त इति, आत्मन्यधि इत्यस्य परिहारः । 'स्वाख्यो भावः' इति व्युत्पत्त्या जीव एव स्वभाव इति, आत्माधिकार इत्यस्य परिहार इत्यर्थः । जैवार्थत्वे 'भाव'शब्दो यथा पदार्थवाची न तथा जीवार्थत्व इत्याह **सर्वदेति** । जीवार्थत्वे किं 'भाव'शब्देन ? 'स्व'शब्देनाल-मित्यत आह **अन्तरिति** । अन्तःकरणादेरपि स्वत्वमस्तीत्यर्थः । कथं भावपदेनान्तःकरणादे-र्व्यावृत्तिरासीत् ? इत्यत आह **न हीति** । तर्हि भावशब्देनालं किं स्वशब्देन ? इत्यत आह **स्वेति** । 'भूतभाव..' इत्येतद्व्याचष्टे **भूतानामिति** । विसर्गः 'कर्म' इति शेषः । 'विसर्ग'शब्देनेश्वर-क्रिया कुतः ? इत्यत आह **विशेषेणेति** ॥

***न०टी०***—उक्तव्याख्यानमुखेन, मरणकालध्येयत्वेन, मुक्तप्राप्यत्वेन च भगवन्महिमोक्तेः शट्कसङ्गतौ सिद्धायामध्यायभेदप्रदर्शनार्थमाह **मरणकाल इत्यादिना** । वेदप्रकृत्योरक्षरत्वात् ब्रह्मत्वाच्च, तद्व्यावृत्त्यर्थं 'परम'शब्देनाक्षरं विशिनष्टीत्याह **परममिति** । अध्यात्मशब्देनात्मात्मीयौ वक्तव्यौ । तौ च जीवतदीयाविति स्वभावशब्दोक्तावित्याह **आत्मनीत्यादिना** । **आत्मन्यधि यत् तत्** आत्मीयमन्तःकरणादिदेहपर्यन्तम् । **आत्माधिकारे** आत्मप्रकरणे स्थितमात्मजातमेव 'ते ब्रह्म विदुः' इति जीवानां प्रकृतत्वात् । स्वीयो भावः, स्वाख्यो भाव इति च व्युत्पत्त्या स्वभावशब्दोक्त-त्वात् सदेहात्मोपकार्यधिभूतजडं जीवं च वक्तीत्यर्थः । स्वभावशब्दस्य जैववाचित्वे भावशब्दः

पदार्थवाची । जीववाचित्वे तु विशेषमाह **सर्वदेति** । एवं सति भावशब्दोऽन्तःकरणादिव्यावर्तकमिति सयुक्तिकमाह **अन्तःकरणादीति** । तर्हि भावशब्द एवास्तु, किं तद्विशेषणेनेत्यत आह **स्वशब्द इति** । तेऽध्यात्मं स्वाख्यं भावं विदुरित्युक्तेः, स्वशब्दः प्रकृतजीववाच्येव नेशवाचीत्यर्थः । **कर्म** क्रिया । सा सर्वजीवजडसृष्टिलक्षणेश्वरेच्छादिरूपा, न तु जीवादृष्टम् । तस्योक्ताध्यात्मान्तर्गतत्वादिति भावेनोत्तरार्धं व्याचष्टे **भूतानामिति** । अतो नात्र विसर्गश्च पुरोडाशादित्याग इति भावेनाह **विशेषेणेति** ॥

***प्र०दी०***— अध्यायस्यावान्तरप्रतिपाद्यमर्थमाह— **मरणेति** । गम्यत इति गतिः । आदिपदेन मार्गादिकम् । मरणकालकर्तव्यं च गतिश्च ते आदी यस्य तत्तथोक्तम् । कर्तव्यस्मरणविषयत्वगम्यत्वादिरूपो भगवन्महिमैव वर्ण्यत इति षट्कान्तर्भावसिद्धिः । उक्तव्याख्यानपूर्वकमिति चोपस्कर्तव्यम् । तेनानन्तर्यलक्षणाऽपि सङ्गतिः सिद्धा । तत्प्रसङ्गेनैव मरणकालकर्तव्याद्युपदेशात् । ननु पूर्वाध्याये ते ब्रह्म इति निर्विशेषणमेवोपक्षिप्तम् । अत एवात्र 'किं तद्ब्रह्म' इति तथैव पृष्टम् । उत्तरे तु कस्मात् ''अक्षरं परमं ब्रह्म'' इति सविशेषणमुपादीयत इत्यत आह— **परममिति** । अक्षरस्यैव परमत्वविशेषणम् । न ब्रह्मण इत्यर्थः । तर्हि 'अक्षरं' इत्येवालम् । किं विशेषणेन इत्यत आह— **वेदेति** । आदिपदेन प्रकृतिः गृह्यते । तयोरपि ब्रह्माक्षरशब्दवाच्यत्वात्प्रसक्तिः । 'स्वभावोऽध्यात्मं' इति शब्दद्वयस्यैकविषयत्वसिद्धयेऽध्यात्मशब्दं तावद्द्वेधा व्याचष्टे— **आत्मनीति** । आत्मानं जीवमधिकृत्य तदुपकारित्वेन वर्तमानं वस्त्वित्यर्थः । 'आत्माऽधिकारे' इति ग्रन्थविशेषस्य संज्ञा । यत्प्रतिपाद्यं तदध्यात्मं इति वा इत्यर्थः । अत्राध्यात्मशब्दं प्रथमान्तं गृहीत्वा प्रथमं व्याख्यातम् । सप्तम्यन्तमुपादाय द्वितीयम् । आत्मशब्दं देहविषयमादाय व्याख्याने परमेश्वरप्रसक्तेः न तथा व्याख्यातम् । एवं तर्हि 'स्वभाव' इत्युभयस्य कथमुत्तरमित्यतः तावत्तद्व्याख्यानं प्रतिजानीते— **तथा हीति** । तत्र आद्योत्तरत्वेनादौ व्याचष्टे— **जैव इति** । जीवस्यायं जैवः अन्तःकरणादिः देहपर्यन्तः पदार्थः स्वभावः । स्वस्य भाव इति व्युत्पत्त्या । ते ब्रह्म तद्विदुः इति जीवानां प्रकृतत्वात्स्वशब्दो जीववाची । तथा चात्मन्यधि यत्तत् इत्येवं व्याख्याताध्यात्मशब्दार्थप्रश्नस्येदमुत्तरं भवतीति भावः ।

इदानीं द्वितीयोत्तरत्वेन व्याख्याति— **स्वाख्य इति** । पूर्ववदत्रापि स्वशब्दो जीववाची । तथा च 'आत्माऽधिकारे' इति व्याख्याताध्यात्मशब्दार्थप्रश्नस्येदमुत्तरं भवतीत्याशयः । ननु जैववाचित्वे भावशब्दः सार्थकः । षष्ठ्याः साकाङ्क्षत्वात् । जीववाचित्वे तु पदार्थत्वाव्यभिचारात्स्वशब्देनैवालं, किं भावशब्देनेत्यतो भावशब्दं तावदन्यथा व्याचष्टे— **सर्वदेति** । यद्यपि भवनकर्ता

भावः । तथाऽपि विशेषानुपादाने मुख्यस्य ग्राह्यत्वात्सर्वदेत्यादि सिद्ध्यति । तथाऽपि तस्य किं प्रयोजनमित्यत आह— **अन्तःकरणादीति** । स्वशब्दमात्रोपादाने तस्याऽत्मीयेऽपि प्रयोगादन्तः-करणादिकमपि प्रसज्येत । तथा च न द्वितीयस्येदमुत्तरं स्यात् । आत्मैव ह्यात्माऽधिकारे प्रतिपाद्यो वक्तव्यो नान्तःकरणादिकम् । अतस्तद्व्यावृत्त्यर्थो भावशब्दः प्रयुक्तः । कथं तेन तद्व्यावृत्तिरित्यत आह— **न हीति** । ''अन्नमयं हि सोम्य मनः'' इत्यादेरिति भावः । तथा चान्तःकरणादौ व्यावृत्ते स्वशब्द आत्मार्थतया व्याख्यातो भवतीति हृदयम् । एवं तर्हि भाव इत्येवास्तु किं स्वशब्देनेत्यत आह— **स्वशब्द इति** । ईश्वरोऽपि हि सर्वदैकप्रकारेणास्त्येव । अतो भाव इत्येवोक्ते तत्प्रसक्तौ पूर्ववद्द्वितीयोत्तरत्वासम्भवे तद्व्यावृत्त्यर्थः स्वशब्दः । न हीश्वरो जीवानां स्वः । भेदप्रमाण-विरोधात् । अत एव ईश्वरस्वभावो जीव इति व्याख्यानमपास्तम् ।

नन्वेवमपि स्वशब्दस्यात्मीयार्थत्वादीश्वरप्रसक्तिः । मैवम् । द्विष्ठो यद्यपि सम्बन्धः ''षष्ठ्यु-त्पत्तिः प्रधानतः'' इति वचनात् । तस्यात्मीयत्वाभावात् । षष्ठ्यन्तात्खल्वयं छः । सकलकार्यो-त्पत्तिनिमित्तभूतो देवतोद्देशेन च पुरोडाशादिद्रव्यत्यागः तज्जन्यमपूर्वमिति यावदिति व्याख्यान-मसत् । तस्याध्यात्मपदेनैव गृहीतत्वादिति भावेन भूतभाव इत्यादिकं व्याख्याति— **भूताना-मिति** । उद्भवकारी च सा ईश्वरक्रिया चेति विग्रहः । ईश्वरक्रियाग्रहणं कर्मशब्देनैकार्थ्यप्रतिपत्त्य-र्थम् । एवंलक्षणो यो विसर्गः स कर्मसंज्ञितो न तु कुलालादिसम्बन्धीत्यर्थः । ननु विसर्गशब्दः त्यागार्थः । तत्कथमेवं व्याख्यानमित्यत आह— **विशेषेणेति** ॥

*भा०दी०*— **अवान्तरेति** । भगवन्महिमरूपेकार्थस्यैकवाक्यताहेतोरत्र प्रतिपादनादिति भावः । कर्मणि रूपमुपेत्याह **गम्यत इति** । तात्पर्योक्तमाह **उक्तव्याख्यानेति** । **तदिति** । ते ब्रह्म तद्विदुरिति पूर्वोक्तव्याख्यानप्रसङ्गेनैवेत्यर्थः । **तर्हीति** । अक्षरविशेषणत्व इत्यर्थः । प्रथमान्तमित्यादि अजानजात्मोपकारित्वेन वर्तमान इति अध्यात्मं आत्माधिकाराख्यग्रन्थे प्रतिपाद्य इति प्रथमान्त-सप्तम्यन्तमित्यर्थः । **परमेश्वरेति** । तस्य देहमधिकृत्य स्थितत्वादिति भावः । **उभयस्येति** । कोऽध्यात्मं कोऽध्यात्मेति प्रतिपाद्य इति व्याख्यानद्वयेन कृत प्रश्नद्वयस्येत्यर्थः । भावशब्दव्याख्या **पदार्थ इति** । **अन्नमयं हीति** । प्रत्यहमुपभुक्तान्नवागेन मनस उपचयस्य श्रुतिसिद्धत्वादित्यर्थः । आति....पोमयः प्राणस्तेजोमयी वागिति गृह्यते । **नन्वेवमिति** । स्वपदस्य भावविशेषणत्वे सति यो जीवः तस्यायं स्वः जीवो यः स ....... व इति विग्रहसम्भवेन पुनरीश्वरस्य प्रसक्तिरित्यर्थः । **मैवमिति** । कुत इत्यतो राज्ञः स्वमित्वेनार्थतः । प्राधान्यात् प्राधान्या एव षष्ठ्युपपत्तेऽस्य जीव-स्यायं स्वजीवीय इतोपपद्यते जीवस्याप्रधानत्वादिति भावेन षष्ठ्युपपत्तौ षष्ठी शेष (२-३-५०)

इत्य............माह **द्विष्ठो यद्यपीत्यादि** । **अयं शब्द इति** । आत्मीयवाची स्वशब्द इत्यर्थः । भूतेत्याद्यर्थस्य । व्याख्यामनुवदति **सकलेति** । ...............आत्मपदेन जीवोपकारित्ववर्तमान-मात्रस्याध्यात्मपदेन ग्रहणादिति भावः ॥ १-३ ॥

***भा०र०*—** ननु सप्तमाध्यायोपक्रमे "उत्तरैः षड्भिरध्यायैः भगवन्माहात्म्यं प्राधान्येनाह" (गी.भा. ७.१) इति षट्कप्रतिपाद्यस्योक्तत्वात्, इह मरणकालकर्तव्यस्मरणगत्यादिरूपार्थस्य प्रति-पाद्यत्ववर्णनं प्रकृतविरुद्धम् ? इत्याशङ्क्याह **अवान्तरेति** । 'अध्यायभेदप्रदर्शनार्थम्' इति शेषः । 'मामनुस्मर' (८.७) इति गम्यस्यैव वक्ष्यमाणत्वादाह **गम्यत इतीति** । गमेः कर्मणि क्तिन् इति न वक्ष्यमाणविसंवाद इति भावः । तथा च नवमे वक्ष्यति भाष्यकारः "गम्यते मुमुक्षुभिरिति गतिः" (गी.भा. ९.१८) "अथ कस्मादुच्यते गतिरिति ? ब्रह्मैव गतिः, तद्धि गम्यते पापविमुक्तैरिति" (साम.वा.शा.) इति । 'मार्गादिकम्' इत्यत्रादिपदेनान्त्यकालस्मरणफलम्, तदुपायप्रकारश्च ग्राह्यः । पुनरावृत्य पुनरावृत्तिसङ्ग्रह इत्यपि **आहुः** । उक्तव्याख्यानादेरादिपदाद् ग्रहणमिति तु **भावप्रदी-पिका** । कर्तव्यत्वस्य गतिविशेषणत्वप्रतीतिं व्युदस्यन् विवक्षितविग्रहं दर्शयति **मरणेति** । **तत्** प्रमेयम् ।

तर्हि कथमस्य द्वितीयषट्केऽन्तर्भावः ? इत्यत आह **कर्तव्येति** । तथा च **प्राचीनटीका** "मरणकाले ध्येयत्वेन मुक्तप्राप्यत्वेन च भगवन्महिमोक्तेः षट्कसङ्गतौ सिद्धायामिति" इति । एवमपि कथमस्य पूर्वेण सङ्गतिः ? इत्यतः तात्पर्योक्तमाह **उक्तेति** । यदुक्तम् "ते ब्रह्म तद्विदुः" (७.२९) इत्यादि तद्व्याख्यानपूर्वकम्, तथा "प्रयाणकालेऽपि च माम्" (७.३०) इति यदुक्तम्, तद्व्याख्यानपूर्वकमित्यर्थः । **तत्प्रसङ्गेनैव** उक्तव्याख्यानप्रसङ्गेनैव । **अत एव** निर्विशेषणस्योप-क्षिप्तत्वादेव । **उत्तरे त्विति** । प्रश्नपरिहाररूपप्रतिवाक्य इत्यर्थः । "पूर्वादिभ्यो नवभ्यो वा" इति ङेः स्मिनो विकल्पेन विधानात् 'उत्तरे' इति साध्विति **केचित्** । "प्रतिवाक्योत्तरे समे" (अ.को.) इति कोशे उत्तरशब्दस्य संज्ञात्वानुशासनान्न सर्वनामतेति न कोऽपि दोष इत्यपि **आहुः** । व्यत्य-स्यान्वयकरणतात्पर्यं कृतचोद्यापनोदायाह **अक्षरस्यैवेति** । **तर्हि** एवमन्वयाभिप्रायाभावे, ब्रह्मपदेनैव तयोर्व्यावृत्तिर्भविष्यतीत्यत आह **तयोरपीति** । वेदे "ब्रह्म वेदस्तपस्तत्त्वम्" इत्यभिधानेन ब्रह्म-शब्दवाच्यत्वस्य, वर्णरूपत्वेनाक्षरशब्दार्थत्वस्य च, प्रकृतौ च "मम योनिर्महद्ब्रह्म" (१४.३) इति, "तामक्षरं परं प्राहुः" (स्का.) इति ब्रह्माक्षरशब्दवाच्यत्वावगमात् तेऽप्यक्षरत्वेन प्रसक्ते । अतस्त-द्व्यावर्तनाय 'परमम्' इत्यक्षरविशेषणमिति भावः ।

ननु 'आत्मन्यधि' इति कथं भाष्ये विग्रहप्रदर्शनम् ? अव्ययीभावसमासस्य नित्यत्वेन विग्रहोत्तययोगात्, अस्वपदविग्रहनियमाच्च, इत्यतो व्याचष्टे **आत्मानमिति** । 'आत्मनि' इति विषयसप्तमी, विषयत्वं कर्मत्वमिति च "घटं जानामि", "घटे ज्ञानम्" इत्यादावनर्थान्तरं दृष्टमिति सप्तम्यन्तम् 'आत्मानम्' इति द्वितीयान्तं शक्यं व्याख्यातुम् । तथा चोक्तं श्रुतिगीतातात्पर्ये—

"द्वितीयार्थे तृतीयार्थे पञ्चम्यर्थे च सप्तमी ।
चतुर्थ्यर्थे च सम्प्रोक्ता विषयेति च तां विदुः ॥" (म.व्या.) इति ।

एवम् 'अधि' इत्येतत् 'अधिकृत्य' इत्यर्थे वर्तते । तदुभयतात्पर्यं **तदुपकारित्वेनेति** । तत्र ल्यबुपपत्तये 'वर्तमानम्' इति संयोज्यम् । "अव्ययं विभक्तिः" इति सूत्रे 'अव्ययम्' इति योगो विभज्यत इति "गम्भीरात् ञ्यः", 'अव्ययीभावाच्च' इति सूत्रे न्यासकारेणोक्तमिति, अत्रापि 'अव्ययम्' इति योगविभागात् समासे, 'अनश्च' इति टच् । अस्वपदेन 'अधिकृत्य' इत्यर्थकाधिपदेन 'आत्मानम्' इति समासघटकद्वितीयान्तपदसमानार्थेन 'आत्मनि' इति पदेन च विग्रहोऽभ्युपगम्यत इति न नित्यसमासत्वविरोधः । तथा चाह– प्रसादे धर्मकीर्तिः अविग्रहो नित्यसमासः, अस्वपदविग्रहो वेतीति भावः ।

**केचित्तु** "व्यृद्धिशब्दस्य अल्पाच्तरस्याप्यपूर्वनिपातेन अस्यानित्यत्वज्ञापनात्" इति दुर्घटवृत्तावुक्तत्वात्,"अन्तरस्यां पुरि" इत्याद्युदाहरणदर्शनाच्च, स्वपदविग्रहोऽव्ययीभावसमासोऽस्तीति भाष्ये तथा विग्रहः प्रदर्शितः । तस्येदं तात्पर्यं टीकायाम् 'आत्मानमधिकृत्य' इत्यादिना उच्यत इति व्याचक्षते । **एके तु** "स्त्रीष्वधिकृत्य कथा प्रवर्तते" इति वृत्तिवाक्यम् अधिकृत्य = प्रस्तुत्य सन्निधानात् 'स्त्रियः' इति गम्यते, स्त्रियः प्रस्तुत्य स्त्रीविषया कथा प्रवर्तत इति व्याख्यातं हरदत्तेनेति, एतदपि भाष्यम्– आत्मानमधिकृत्य आत्मनि यद् उपकारित्वेन वर्तते तदध्यात्ममिति व्याख्यानमिति टीकाभाव **इत्याहुः** । "आत्मानमधिकृत्य यद्वर्तते तदध्यात्मम्" इत्यस्वपद एव विग्रहः । भाष्यं तु– अधेरीश्वरार्थत्वात्, आत्मन्यधि 'आत्मस्वामिकम्' इति फलितप्रदर्शनपरमिति न कोऽपि दोष इति भाव इत्यपि **आहुः** । **प्रथमान्तमिति** । आत्मानमधिकृत्य वर्तमानं वस्त्विति प्रथमान्तमित्यर्थः । तथा च 'स्वभावः' इत्यनेन सामानाधिकरण्यं सुज्ञानमिति भावः । **सप्तम्यन्तमिति** । कृतामादेशम् अध्यात्मम् इतिपदम् आत्मानमधिकृत्य प्रवृत्ते आत्माधिकारसंज्ञके ग्रन्थे इति सप्तम्यन्तम् इत्यर्थः । आत्माधिकारमात्रार्थस्याप्यध्यात्मशब्दस्य भाष्यकारोऽध्याहृतयत्तच्छब्दाभ्याम् । अन्वयमभ्युपगम्य 'स्वभावः' इत्यनेन सामानाधिकरण्यमभिसन्धत्त इति भाव इति **आहुः** ।

ननु परभाष्यरीत्याऽत्मशब्दं देहार्थं गृहीत्वाऽध्यात्मपदं व्याख्यायताम्, किं जीवग्रहणाग्रहेण ? इत्यतोऽत्र देहाग्रहणे नियामकमाह **आत्मशब्दमिति** । **परमेश्वर इति** । देहोपकारित्वस्य परमेश्वरेऽपि प्रसक्तेः, तस्याप्यध्यात्मपदेन ग्रहणं स्यात् । तच्च "अध्यात्मं देहपर्यन्तं केवलात्मोपकारकम्" (म.कौ.) इति वक्ष्यमाणवचने (गी.भा. ८.४) जीवोपकारकदेहादेरेव ग्रहणेन परमेश्वरस्य व्यावर्तनाद् अयुक्तम् । अत आत्मशब्देन न देहो ग्राह्य इति भावेन भाष्ये जीवार्थत्वग्रहणमित्याशयः । **एवं तर्हीति** । यद्युक्तप्रकारेणाध्यात्मशब्दस्यार्थद्वयनिष्ठत्वं तर्हीत्यर्थः । **उभयस्य** किम् अध्यात्मशब्दितम् आत्मोपकारकम् । किञ्चाध्यात्मसंज्ञके ग्रन्थे प्रतिपाद्यम् । इति प्रश्नद्वयस्य । **आद्योत्तरत्वेन** जीवोपकारीति प्रश्नोत्तरत्वेन । "अन्तःकरणादिः" इत्यत्रादिपदेनेन्द्रियग्रहणम् । "देहेन्द्रियप्राणबुद्धिनेतृत्वं मन्यतेऽत्मनः" इति प्रमाणोक्तबुद्धिशब्दितान्तःकरणादेः व्युत्क्रमेणेदं ग्रहणमित्यपि **आहुः** । भाष्ये 'जैवः' इत्यनन्तरं शेषमाह **पदार्थ इति** । तेन 'स्वभावः' इति गीतापदेन 'जैवः' इत्यस्यैकवाक्यता व्यक्तीकृता भवति । स्वभावपदेन कथं भाषितार्थलाभः ? इत्यत आह **स्वस्येति** । **व्युत्पत्त्या** विग्रहेण । स्वशब्देन जीवग्रहणे स्यादिदम्, तदेव कुतः ? इत्यत आह **ते ब्रह्मेति** । "मामाश्रित्य यतन्ति ये ते ब्रह्म तद्विदुः" (७.२९) इति पूर्वाध्याये भजनवतां जनानां यत्तच्छब्दाभ्यां बुद्धाववरूढत्वात् तत्परः स्वशब्द इत्यर्थः । **इदं** जीवात्युपकारिवाचिस्वभावपदम् ।

**स्वाख्य इतीति** । अत्र तु स्वश्चासौ भावश्चेति विग्रह इति भावः । **पूर्ववत्** "ते विदुः" इति 'ते' शब्देन जीवानां प्रकृतत्वादिति प्रथमव्याख्यान इव । **व्याख्यातेति** । आत्माधिकारनामकग्रन्थे प्रतिपाद्यार्थतया व्याख्यातेत्यर्थः । **जैववाचित्व इति** । "स्वस्य भावः" इति व्युत्पत्तेस्तत्राभिमतत्वादिति भावः । **सार्थकः** 'स्वस्यायम्' इत्यत्र विशेष्यसमर्पकत्वेन प्रयोजनवान् इत्येतदुपपादयति **षष्ठ्या इति** । 'स्वस्य' इति षष्ठ्या इत्यर्थः । **अव्यभिचारादिति** । "सम्भवव्यभिचाराभ्यां स्याद्विशेषणमर्थवत्" इति न्यायादिति भावः । 'अस्ति' इत्यत्र भवनकर्तुराख्यातेनोपादानात् अस्तिभवत्योरैकार्थ्याच्चेत्याह **भवनकर्तेति** । "विभाषा ग्रहः" इत्यत्र "भवतेश्चेति वक्तव्यम्" इति वृत्तिवाक्यात् भवतेः कर्तरि "ज्वलितिकसन्तेभ्यो णः" इत्यनुवृत्तणप्रत्यये 'भावः' इति रूपमिति भावः । "मुख्यस्य निर्विशेषेण शब्दः" इति न्यायमभिसन्धायाह **विशेषानुपादाने मुख्यस्येति** । **तथाऽपि** सर्वदाऽस्तीति भाषितार्थकत्वेऽपि । **आत्मीयेऽपि प्रयोगादिति** । "स्वमज्ञातिधनाख्यायाम्" इति सूत्रभाष्यादौ "स्वे पुत्राः", "स्वाः पुत्राः", स्वे गावः", "स्वा गावः" आत्मीया इत्यर्थ इति प्रयोगात्, "ज्ञात्यात्मनोः स्वः स्वार्थे स्वः स्वं स्वात्मीयमात्रके" इति नानार्थरत्नकोशादौ च प्रयोगादित्यर्थः । **आत्माधिकारे** ग्रन्थे । हिशब्दसूचितां श्रुतिमाह **अन्नमयं**

**हीति** । तत्र हि प्रत्यहम् उपभुक्तान्नसूक्ष्मभागेन मनस उपचयो अभिसंहित (छा. ६.२.९) इति, विकारावगत्या एकप्रकारेण भवनायोगात् सिद्धा तद्व्यावृत्तिरिति भावः । तथा च "द्वितीयस्य नेदमुत्तरम्" इति कृतचोद्यं भाष्यभावोक्त्या परिहरति **तथा चेति** ।

**द्वितीयोत्तरत्वासम्भव इति** । "आत्माधिकारे कः प्रतिपाद्यः ? इति द्वितीयप्रश्नस्य भाव-शब्देनोत्तरम्, तस्य सर्वदैकप्रकारेणावस्थितवस्तुवाचित्वाभ्युपगमात् । तत्त्वस्य त्वीश्वरेऽपि सत्त्वेन 'भावः' इत्युक्ते 'ईश्वरः' इत्यपि प्रतीयेत । आत्मैव ह्यात्माधिकारे प्रतिपाद्यः, नेश्वर इति न द्वितीयो-त्तरत्वं सम्भवतीति भावः । उपात्तेऽपि स्वपदे कथं तेनेश्वरव्यावृत्तिः ? इत्यत आह **न हीति** । स्वात्मा स्वरूपमित्यर्थः । साधितमेतद् आत्मन्यपि स्वशब्दस्य पुंलिङ्गत्वम्– "नित्योपाध्या स्वरूपया" (भ.व.) इति वचनव्याख्यानावसरे द्वितीयाध्यायटीकायाम् (प्र.दी. २.१८) । **अत एव** जीवेश्वरभेदप्रमाणविरोधादेव ।

**एवमिति** यथा स्वशब्दस्यात्मार्थत्वाद् ईश्वरस्य जीवान् प्रत्यात्मत्वाभावात् तदप्रसक्ति-रित्युक्तिः, एवं स्वशब्दस्योक्तरीत्याऽऽत्मीयार्थत्वस्यापि भावेन, ईश्वरस्यापि स्वशब्देनात्र ग्रहण-सम्भवात् प्रसक्तिरिति "स्वशब्द ईश्वरव्यावृत्त्यर्थः" इति भाषणमयुक्तमिति भावः । 'नन्वेवमपि' इति पाठे "स्वात्मार्थेन स्वशब्देनेश्वरव्यावर्तनेऽपि" इति अपिशब्दार्थः । **मैवमित्यादि** । 'स्वभावः' इत्यत्र स्वशब्दस्यात्मीयार्थकत्वे "**स्वः** आत्मीयश्चासौ भावश्च" इति विग्रह एष्टव्यः । तत्र चेश्वर-स्यात्मीयत्वम् आत्मशब्दितजीवं प्रत्युपसर्जनत्वेन वक्तव्यम् । 'आत्मनः' इति षष्ठ्याः प्रधानभूत-स्वामिवाचकप्रातिपदिकादेवोत्पत्तेः स्वरसत्वात् । "राज्ञः पुरुषः" इत्यादौ तथा दर्शनात् ।

यद्यपि "षष्ठी शेषे" इति सम्बन्धे षष्ठी विहिता । सम्बन्धश्च स्वस्वामिरूपोभयसम्बन्धि-निरूपित इत्युभयत्रापि सा प्राप्नोति । तथाऽपि लोकप्रतीतिव्यवहारबलात् स्वामिलक्षणप्रधानवाचिनः शब्दादेव तदुत्पत्तिर्वैयाकरणसम्मतेति नेश्वरस्यात्मस्वामिकत्वं युक्तमिति नात्र स्वशब्द आत्मीयपर इति ईश्वरप्रसक्तिरित्येतन्न युज्यते । "मम स्वामी श्रियः पतिः" इत्यादौ निरूप्यनिरूपकभावसम्बन्ध एव षष्ठी समाश्रीयत इति न काऽप्यनुपपत्तिः । एतदभिप्रायेणैव "द्विष्ठो यद्यपि सम्बन्धः, षष्ठ्यु-त्पत्तिस्तु भेदकात्" इति वचनम् । यदा तु पुरुषस्याप्राधान्यम्, राज्ञः प्राधान्यं च विवक्ष्यते "पुरुषस्य राजा" इत्यपि भवत्येवेत्यादि हरदत्तवचनं च प्रवृत्तम् । इह तु स्वामिवाचिकत्वेन प्रधानत्वविवक्षया "षष्ठ्युत्पत्तिः प्रधानतः" इत्युक्तं लोकप्रसिद्धप्रधानताकादित्यर्थः । यत्र स्वस्वामिभावसम्बन्धोऽभिसंहितः तत्र स्वामिवाचकादेव षष्ठी भवतीति निर्गलितमिति भावः ।

**केचित्** 'प्रधानतः' इत्यस्य प्रतिपिपादयिषिततया प्रधाने सम्बन्धे विवक्षित इत्यर्थः । एवं च यदा राज्ञः स्वामित्वं प्राधान्येन विवक्षितम्, तदा "राज्ञः परुषः" इति षष्ठी । यदा तु स्वत्वस्य प्राधान्यविवक्षा तदा "पुरुषस्य राजा" इति भवति । प्रकृते च आत्मनः स्वामित्वे विवक्षिते जीव-स्वामिकत्वम् ईश्वरस्याभ्युपगतं स्यात् । तस्य तच्चायुक्तम् । ईश्वरत्वव्याहतेः । यदा तु जीवभृत्यकत्वं विवक्षितम्, तदाऽप्यनुपपत्तिरेव । अजीवभृत्यकेश्वराभावेन व्यभिचाराभावात् । अतो नेश्वरस्यात्मी-यत्वम् अत्र विवक्षितमिति युक्तमेवेश्वरव्यावृत्तिभाषणमिति व्याचक्षते । षष्ठ्यन्तात् षष्ठीविभक्त्य-न्तात्मशब्दात्, **छः** 'वृद्धाच्छः' इति शास्त्रप्राप्तछप्रत्ययः । तस्य ईयादेश इत्यपि ग्राह्यम् ।

**विसर्गः** विसर्जनं देवतोद्देशेन चरुपुरोडाशादेः द्रव्यस्य परित्यागः । स एष विसर्गलक्षणो यज्ञः कर्मसंज्ञित इति **सङ्करभाष्यम्** (८.३) । तात्कालिक्याः क्रियायाः सकलभूतोद्भवहेतुत्वानुपपत्ते-स्तात्पर्यम् अप्यनुवदति **सकलेति** । 'तज्जन्यम्' इत्यादि तात्पर्योक्तिः । तेन नासदनुवादशङ्का । **गृहीतत्वादिति** ॥ "आत्मानं = देहमधिकृत्य प्रत्यगात्मतया प्रवृत्तं परमार्थब्रह्मावसानं वस्तु" (शां.भा. ८.३) इति परभाष्ये अन्तःकरणादृष्टादिरूपाचिद्वस्तुसंवलितचित एवाध्यात्मशब्देनाभि-संहिततया अपूर्वस्यापि तेन गृहीततया पुनरुक्तेरित्यर्थः । तथा च **प्राचीनटीका** न तु जीवादृष्टे, तस्योक्ताध्यात्मशब्दार्थान्तर्गतत्वादिति । जीवोपकारकम् अध्यात्ममित्युक्तम् । अपूर्वमपि तदुप-कारीति तत्पदेनैव तस्य गृहीतत्वेन पुनरुक्त्यापत्तेरित्यर्थः । स्वमतेन चेदं दूषणाभिधानमित्यपि **आहुः** । उपलक्षणमेतत् । 'भूतोद्भवकरः' इत्येव पूर्तेर्भावशब्दवैयर्थ्यं चेत्यपि द्रष्टव्यम् ।

पदार्थमात्रवाचिनोऽपि भावशब्दस्य भूतपदसन्निधानात् तदितरपदार्थत्वमिति भावेन भाष्ये 'जडपदार्थानाम्' इत्युक्तम् । सन्निधानादीश्वरविशेषणत्वे गीतायां विसर्गस्योद्भवकरत्वोक्तिविरोधः । क्रियाविशेषणत्वे टाबनुपपत्तिः ? इत्यतो विवक्षितं विग्रहं दर्शयति **उद्भवकरी च सेति** । "कृञो हेतु-ताच्छील्य-आनुलोम्येषु" इति करोतेस्ताच्छील्यविशिष्टे कर्तरि टः । टित्त्वाच्च "टिड्ढाणञ्" इत्यादिना ङीप् । तेनेश्वरीयसृष्ट्यादिक्रियाया न प्रयोजनोद्देश्यकत्वमिति सूचितम् । टाबन्तत्वाभावेन शब्दशेषे क्रियाविशेषणतया च न गीताविसंवाद इति भावः । **एवंलक्षणः** 'भूतभावोद्भवकरः' इत्युक्तलक्षणः । **त्यागार्थ इति** । "विसर्गस्तु परित्यागे पुरीषे" इति केशवाभिधानादिति भावः । **एवम्** ईश्वरक्रियार्थत्वेन ॥ १-३ ॥

गीता

**अधिभूतं क्षरो भावः पुरुषश्चाधिदैवतम् ।**
**अधियज्ञोऽहमेवात्र देहे देहभृतां वर ॥ ४ ॥**

*वि०वि०*— भूतानि सशरीरान् जीवानधिकृत्य तदुपकारित्वेन यत् तदधिभूतम् । क्षरो भावो विनाशिकार्यपदार्थः ।

'अव्यक्तं परमे व्योम्नि निष्क्रिये सम्प्रलीयते ।'

'तस्मादव्यक्तमुत्पन्नं त्रिगुणं द्विजसत्तम ॥'

इत्यादेः प्रकृतेरपि वैषम्यापरित्यागेन साम्यापत्तिलक्षणो नाशो विक्रयानुरूपं जन्म चास्तीत्यधिभूतेऽन्तर्भावः । पुरि शयनात्पुरुषो जीवः । स च सङ्कर्षणो ब्रह्मा वा । सर्वजीवाभिमानित्वात् सर्वदेवानधिकृत्य पतित्वेन वर्तत इत्यधिदैवतम् । देवा देवाधिकारग्रन्थप्रतिपाद्या इति वा । अधिगतो यज्ञम् इत्यधियज्ञः । अहं भगवान् साधियज्ञमिति भेदप्रतीतेः तन्निवृत्त्यर्थम् अहमेवेत्युक्तम् । तस्यैव सर्वप्राणिस्थितरूपान्तरापेक्षया सहितत्वं युज्यते । अन्योऽधियज्ञोऽग्न्यादिः प्रसिद्ध इति विशेषणम् । अत्रेति स्वदेहव्यावृत्त्यर्थम् । न हि तत्रेश्वरस्य पृथक् नियन्तृत्वमस्ति । सर्वप्राणिदेहस्थरूपेणाधियज्ञो भगवांश्चेत्यनेनैवास्य भोक्तृत्वादेरधियज्ञत्वं सिद्धमिति कथमित्यस्य परिहारः पृथक् नोक्तः । उक्तं च—

'देहस्थविष्णुरूपाणि त्वधियज्ञ इतीरितः ।
कर्मेश्वरस्य सृष्ट्याख्यं तच्चापीच्छाद्यमुच्यते ॥

अधिभूतं जडं चोक्तमध्यात्मं जीव उच्यते ।
हिरण्यगर्भोऽधिदैवं देवः सङ्कर्षणोऽपि वा ॥

ब्रह्मा नारायणो देवः सर्वदेवेश्वरेश्वरः ।'

'यथा प्रतीतं वा सर्वमत्र नैव विरुध्यते ॥' इति ॥

*वा०ल०*— 'अधिभूतम्' इत्यत्र, क्षरः क्षरणात् क्षरशब्दवाच्यो जीवानां देहः । अधिभूतं पञ्चमहाभूतान्यधिकृत्य वर्तमानत्वादधिभूतशब्दवाच्यम् । पुरुषो जीवः । अधिदैवतं दैवतान्यधिकृत्य वर्तमानत्वात् यज्ञादिना देवप्रीतिकरत्वात् अधिदैवतमित्युच्यते । अधियज्ञः यज्ञमधिकृत्य वर्तमानत्वात्, यज्ञभोक्तृत्वादिति यावत्, अधियज्ञपदवाच्यः ॥

***सा०सं०***— अधिभूतं च किमित्यस्योत्तरम् **अधिभूतमिति** । भूतानि सदेहान् जीवानधिकृत्य तदुपकारित्वेन वर्तमानं वस्तु । **क्षरो भावः**, विनाशी भावः । कार्यभूतः पदार्थः । भवत्युत्पद्यत इति व्युत्पत्तेः । 'अधिदैवं किम्' इत्यस्योत्तरं 'पुरुषश्च' इत्यादि । **अधिदैवतं** दैवतानि सर्वदेवानधिकृत्य तत्स्वामित्वेन वा, देवताप्रकरणे मुख्यतया प्रतिपाद्यत्वेन वा वर्तमानं च । किमिति पृष्टं वस्तु । **पुरुषः** पुरि देहे शेते तिष्ठतीति पुरुषो जीवः । स च सर्वजीवाभिमानी सङ्कर्षणो ब्रह्मा वा ज्ञेयः । अस्मिन् **देहे**ऽधियज्ञः क इत्यस्योत्तरम् **अधियज्ञोऽहमेवेति** । प्रागुक्तदिशाऽधियज्ञ इति प्रादिसमासः । अधिष्ठितो यज्ञोऽनेनेति बहुव्रीहिर्वा । अत्र लौकिकदेहे यज्ञाधिष्ठाताऽहमेवेत्यर्थः । 'अत्र' इति देहविशेषणम् ईश्वरदेहव्यावृत्त्यर्थम् । भगवतः प्राणिदेह इव स्वदेहे पृथगभावेन नियन्तृत्वाभावात् । कर्तृभोक्तृफलदातॄणां देहे प्रेरकत्वेन वर्तमानस्यात्र विवक्षितत्वात् । 'देहे' इत्युक्तिरप्यस्मिन् देहेऽधियज्ञः क इति कृतप्रश्नानुरोधात् । प्रश्ने वा अधियज्ञः क इत्येवोक्तावग्न्यादेरप्यधियज्ञस्य हरेरन्यस्य सत्वात् । प्रश्नस्य तद्विषयत्वे सिद्धार्थतादोषप्रसक्तेस्तद्व्यावृत्त्यर्थं कर्तृभोक्तृफलदातॄणां देहे प्रेरकतया वर्तमानोऽधियज्ञः क इत्यर्थलाभाय देह इत्यवश्यं वाच्यत्वात् ।

किञ्च पूर्वाध्यायान्ते 'साधियज्ञं मां विदुः' (७-३०) इति भगवतोऽधियज्ञसाहित्योक्त्याऽधियज्ञो भगवतोऽन्योऽग्न्यादिरिति प्राप्तशङ्काव्युदासाय च 'देहे' इत्युक्तिः । सर्वप्राणिदेहगताधियज्ञाख्यरूपविशेषापेक्षया साहित्याभिप्रायेण 'साधियज्ञं माम्' इत्युक्तिरिति । 'देहे' इत्युक्त्या साहित्योक्तेर्गतिसूचनेन भगवदन्यत्वशङ्कानिरासात्, साहित्योक्त्या प्राप्तभेदशङ्काया अवश्यं परिहार्यत्वादेव, प्रथमप्राप्तस्यात्र देहेऽधियज्ञः कथं केन प्रकारेणेति प्रश्नस्य परिहारमनुक्त्वा क इति प्रश्न एव परिहृतः ।

किञ्च सर्वयज्ञभोक्तृत्वसर्वयज्ञप्रवर्तकत्वप्रकारेण हि भगवतोऽधियज्ञत्वम् । तच्च सर्वयज्ञभोक्तृत्वादिकं 'भोक्तारं यज्ञतपसाम्' (५-२९) इत्यादि पञ्चमान्तोक्तं श्रुतवतोऽर्जुनस्य सिद्धमित्यधियज्ञोऽहमिति भगवतो यज्ञाधिष्ठातृत्वरूपाधियज्ञत्वोक्त्या कथम् 'अधियज्ञः' इत्यस्य भोक्तृत्वादिना प्रकारेणाधियज्ञत्वमिति परिहारस्य प्राप्तत्वाच्च तत्परिहारो नोक्त इति ।

यद्वा, कथमित्यस्य किं लक्षणक इत्यर्थः । अधियज्ञोऽहमेवेत्यधियज्ञाभिन्नत्वेनोक्तस्य हरेः 'कविं पुराणम्' इति कवित्वादिलक्षणोक्त्या एवं लक्षणकोऽधियज्ञ इति प्राप्तेर्नोक्तमुत्तरम् । **'देहभृतां वर'** इति सम्बुद्धिः । देहभृतां देह इति चोभयत्रान्वयो ज्ञेयः ।

श्लोकद्वयस्यायमर्थसङ्ग्रहः **ब्रह्म मम** व्याप्तरूपं **परममक्षरमुच्यते** । **अध्यात्मं** स्वभावः ।

जीवचिदुपकारिदेहेन्द्रियान्तःकरणलक्षणः पदार्थः । जीवराशिर्वा । कर्म तु चराचरविषयकेश्वर-कर्तृकसर्जनम् । **अधिभूतं तु क्षरो भावः** सदेहजीवोपकार्युत्पत्तिविनाशवान् देहेन्द्रियाद्यन्यपदार्थ उच्यते । **अधिदैवतं च पुरुषः**, ब्रह्मा, सङ्कर्षणो वा । अत्र देहस्थितोऽधिकयाज्यत्वहेतुना-ऽधियज्ञाख्यो रूपविशेषो **अहमेव** इति साहित्योक्त्या प्राप्तभेदशङ्कानिरासायैवकारप्रयोगः ।

यद्वा, **स्वभावो** भगवत्स्वभावोऽध्यात्ममुच्यते । अधिकत्वात् । **क्षरो भावः** सर्वजीव-राशिरधिभूतम् । भूतशब्दितपृथिव्यादिजडाधिकत्वात् । "षकारः प्राण आत्मा" इति श्रुत्या षकारस्य चेष्टापर्यायप्राणवाचित्वात् । पुरुप्राणत्वहेतुना पुरुषशब्दिता रमा अधिदैवतम् । दैवत-शब्दितो विष्णुरधिको यस्या इति व्युत्पत्तेरिति ।

एतेन 'ते तद्ब्रह्म' इत्यर्धद्वयस्यायमर्थः । ब्रह्म व्याप्तं तत् **मे** रूपं ते विदुः । कृत्स्नमध्यात्मं जीवोपकारिदेहेन्द्रियान्तःकरणलक्षणं वस्तु, जीवराशिं वा । सृष्टिलक्षणं भगवत्कर्म चाखिलं विदुः । **साधिभूताधिदैवम्** अधिभूतशब्दितसदेहजीवोपकारित्वेन स्थितोत्पत्तिविनाशिपृथिव्यादिपदार्थस्थत्वेन तन्नियन्तृतया तत्सहितं तद्गतरूपविशेषसहितमित्येके । पृथिव्यादिभूताधिकतयाऽधिभूतशब्दित-सर्वजीवराशौ स्थिततया तत्सहितमिति वा । अधिदैवशब्दितसर्वजीवाधिपतौ ब्रह्मणि सङ्कर्षणे वा स्थितत्वेन तत्सहितं तद्गतरूपविशेषसहितमित्येके । अधिदैवशब्दितरमासहितमिति वा । **साधियज्ञं च** अधियज्ञशब्दितसर्वप्राणिगतरूपविशेषसहितं च 'मां ये विदुः' इति ॥

***अ०प्र०*— किञ्च, अधिभूतमिति ।**

हे देहभृतां वर[१], क्षरोभावः[२], अधिभूतं उच्यते[३], च पुनः[४], पुरुषः[५], अधिदैवतं उच्यते[६], अत्र देहे[७], अहमेव[८], अधियज्ञः[१०] इत्यन्वयः ।

हे देहभृतां वर = पुरुषश्रेष्ठ ! देहभृतां मध्ये श्रेष्ठेति सम्बोधयन् त्वमप्येवम्भूतं अन्तर्यामिणं पराधीनस्वस्वप्रवृत्तिनिवृत्त्यन्वयव्यतिरेकाभ्यां बोद्धुमर्हसीति सूचयति[१], क्षरोभावः = विनेश्वरो देहादिः[२], अधिभूतं = भूतानि सशरीरजीवानधिकृत्य तदुपकारित्वेन यदस्ति तदधिभूतं क्षरोभावः क्षरतीति क्षरः विनाशीत्यर्थः । भावशब्दः आवर्तनीयः । तत्रैकः पदार्थवाची भवति उत्पद्यते इति भावः । इतरकार्यवाची तथा कार्यरूपः विनाशी रूपश्च वियदादि पदार्थः[२], अधिभूतं उच्यते = शरीरं जीवोपाधिकारित्वेन अधिभूतमुच्यते[३], न चात्र 'क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते' इति वचनात् सशरीरजीवानां ग्रहणमिति वाच्यं, तेषां अध्यात्मपदेन गृहीतत्वात् । अव्यक्तं परमे व्योम्नि निष्क्रिये सम्प्रलीयते तस्मादव्यक्तमुत्पन्नं त्रिगुणं गुणसत्तमेत्यादेः प्रकृतेरपि प्रलये वैषम्य-

***सा०सं०***— अधिभूतं च किमित्यस्योत्तरम् **अधिभूतमिति** । भूतानि सदेहान् जीवानधिकृत्य तदुपकारित्वेन वर्तमानं वस्तु । **क्षरो भाव**:, विनाशी भावः । कार्यभूतः पदार्थः । भवत्युत्पद्यत इति व्युत्पत्तेः । 'अधिदैवं किम्' इत्यस्योत्तरं 'पुरुषश्च' इत्यादि । **अधिदैवतं** दैवतानि सर्वदेवानधिकृत्य तत्स्वामित्वेन वा, देवताप्रकरणे मुख्यतया प्रतिपाद्यत्वेन वा वर्तमानं च । किमिति पृष्टं वस्तु । **पुरुष**: पुरि देहे शेते तिष्ठतीति पुरुषो जीवः । स च सर्वजीवाभिमानी सङ्कर्षणो ब्रह्मा वा ज्ञेयः । अस्मिन् **देहे**ऽधियज्ञः क इत्यस्योत्तरम् **अधियज्ञोऽहमेवेति** । प्रागुक्तदिशाऽधियज्ञ इति प्रादिसमासः । अधिष्ठितो यज्ञोऽनेनेति बहुव्रीहिर्वा । अत्र लौकिकदेहे यज्ञाधिष्ठाताऽहमेवेत्यर्थः । 'अत्र' इति देहविशेषणम् ईश्वरदेहव्यावृत्त्यर्थम् । भगवतः प्राणिदेह इव स्वदेहे पृथगभावेन नियन्तृत्वाभावात् । कर्तृभोक्तृफलदातॄणां देहे प्रेरकत्वेन वर्तमानस्यात्र विवक्षितत्वात् । 'देहे' इत्युक्तिरप्यस्मिन् देहेऽधियज्ञः क इति कृतप्रश्नानुरोधात् । प्रश्ने वा अधियज्ञः क इत्येवोक्तावग्न्यादेरप्यधियज्ञस्य हरेरन्यस्य सत्वात् । प्रश्नस्य तद्विषयत्वे सिद्धार्थतादोषप्रसक्तेस्तद्व्यावृत्त्यर्थं कर्तृभोक्तृफलदातॄणां देहे प्रेरकतया वर्तमानोऽधियज्ञः क इत्यर्थलाभाय देह इत्यवश्यं वाच्यत्वात् ।

किञ्च पूर्वाध्यायान्ते 'साधियज्ञं मां विदुः' (७-३०) इति भगवतोऽधियज्ञसाहित्योक्त्याऽधियज्ञो भगवतोऽन्योऽग्न्यादिरिति प्राप्तशङ्काव्युदासाय च 'देहे' इत्युक्तिः । सर्वप्राणिदेहगताधियज्ञाख्यरूपविशेषापेक्षया साहित्याभिप्रायेण 'साधियज्ञं माम्' इत्युक्तिरिति । 'देहे' इत्युक्त्या साहित्योक्तेर्गतिसूचनेन भगवदन्यत्वशङ्कानिरासात्, साहित्योक्त्या प्राप्तभेदशङ्काया अवश्यं परिहार्यत्वादेव, प्रथमप्राप्तस्यात्र देहेऽधियज्ञः कथं केन प्रकारेणेति प्रश्नस्य परिहारमनुक्त्वा क इति प्रश्न एव परिहृतः ।

किञ्च सर्वयज्ञभोक्तृत्वसर्वयज्ञप्रवर्तकत्वप्रकारेण हि भगवतोऽधियज्ञत्वम् । तच्च सर्वयज्ञभोक्तृत्वादिकं 'भोक्तारं यज्ञतपसाम्' (५-२९) इत्यादि पञ्चमान्तोक्तं श्रुतवतोऽर्जुनस्य सिद्धमित्यधियज्ञोऽहमिति भगवतो यज्ञाधिष्ठातृत्वरूपाधियज्ञत्वोक्त्या कथम् 'अधियज्ञः' इत्यस्य भोक्तृत्वादिना प्रकारेणाधियज्ञत्वमिति परिहारस्य प्राप्तत्वाच्च तत्परिहारो नोक्त इति ।

यद्वा, कथमित्यस्य किं लक्षणक इत्यर्थः । अधियज्ञोऽहमेवेत्यधियज्ञाभिन्नत्वेनोक्तस्य हरेः 'कविं पुराणम्' इति कवित्वादिलक्षणोक्त्या एवं लक्षणकोऽधियज्ञ इति प्राप्तेर्नोक्तमुत्तरम् । **'देहभृतां वर'** इति सम्बुद्धिः । देहभृतां देह इति चोभयत्रान्वयो ज्ञेयः ।

श्लोकद्वयस्यायमर्थसङ्ग्रहः **ब्रह्म मम** व्याप्तरूपं **परममक्षरमुच्यते** । **अध्यात्मं** स्वभावः ।

जीवचिदुपकारिदेहेन्द्रियान्तःकरणलक्षणः पदार्थः । जीवराशिर्वा । कर्म तु चराचरविषयकेश्वर-कर्तृकसर्जनम् । **अधिभूतं तु क्षरो भावः** सदेहजीवोपकार्युत्पत्तिविनाशवान् देहेन्द्रियाद्यन्यपदार्थ उच्यते । **अधिदैवतं च पुरुषः**, ब्रह्मा, सङ्कर्षणो वा । अत्र देहस्थितोऽधिकयाज्यत्वहेतुना-ऽधियज्ञाख्यो रूपविशेषो **अहमेव** इति साहित्योक्त्या प्राप्तभेदशङ्कानिरासायैवकारप्रयोगः ।

यद्वा, **स्वभावो** भगवत्स्वभावोऽध्यात्ममुच्यते । अधिकत्वात् । **क्षरो भावः** सर्वजीव-राशिरधिभूतम् । भूतशब्दितपृथिव्यादिजडाधिकत्वात् । "षकारः प्राण आत्मा" इति श्रुत्या षकारस्य चेष्टापर्यायप्राणवाचित्वात् । पुरुप्राणत्वहेतुना पुरुषशब्दिता रमा अधिदैवतम् । दैवत-शब्दितो विष्णुरधिको यस्या इति व्युत्पत्तेरिति ।

एतेन 'ते तद्ब्रह्म' इत्यर्धद्वयस्यायमर्थः । ब्रह्म व्याप्तं तत् **मे** रूपं ते विदुः । कृत्स्नमध्यात्मं जीवोपकारिदेहेन्द्रियान्तःकरणलक्षणं वस्तु, जीवराशिं वा । सृष्टिलक्षणं भगवत्कर्म चाखिलं विदुः । **साधिभूताधिदैवम्** अधिभूतशब्दितसदेहजीवोपकारित्वेन स्थितोत्पत्तिविनाशिपृथिव्यादिपदार्थस्थत्वेन तन्नियन्तृतया तत्सहितं तद्गतरूपविशेषसहितमित्येके । पृथिव्यादिभूताधिकतयाऽधिभूतशब्दित-सर्वजीवराशौ स्थिततया तत्सहितमिति वा । अधिदैवशब्दितसर्वजीवाधिपतौ ब्रह्मणि सङ्कर्षणे वा स्थितत्वेन तत्सहितं तद्गतरूपविशेषसहितमित्येके । अधिदैवशब्दितरमासहितमिति वा । **साधियज्ञं च** अधियज्ञशब्दितसर्वप्राणिगतरूपविशेषसहितं च 'मां ये विदुः' इति ॥

*अ०प्र०*— किञ्च, **अधिभूतमिति** ।

हे देहभृतां वर[१], क्षरोभावः[२], अधिभूतं उच्यते[३], च पुनः[४], पुरुषः[५], अधिदैवतं उच्यते[६], अत्र देहे[७], अहमेव[८], अधियज्ञः[१०] इत्यन्वयः ।

हे देहभृतां वर = पुरुषश्रेष्ठ ! देहभृतां मध्ये श्रेष्ठेति सम्बोधयन् त्वमप्येवम्भूतं अन्तर्यामिणं पराधीनस्वस्वप्रवृत्तिनिवृत्त्यन्वयव्यतिरेकाभ्यां बोद्धुमर्हसीति सूचयति[१], क्षरोभावः = विनेश्वरो देहादिः[२], अधिभूतं = भूतानि सशरीरजीवानधिकृत्य तदुपकारित्वेन यदस्ति तदधिभूतं क्षरोभावः क्षरतीति क्षरः विनाशीत्यर्थः । भावशब्दः आवर्तनीयः । तत्रैकः पदार्थवाची भवति उत्पद्यते इति भावः । इतरकार्यवाची तथा कार्यरूपः विनाशी रूपश्च वियदादि पदार्थः[२], अधिभूतं उच्यते = शरीरं जीवोपाधिकारित्वेन अधिभूतमुच्यते[३], न चात्र 'क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते' इति वचनात् सशरीरजीवानां ग्रहणमिति वाच्यं, तेषां अध्यात्मपदेन गृहीतत्वात् । अव्यक्तं परमे व्योम्नि निष्क्रिये सम्प्रलीयते तस्मादव्यक्तमुत्पन्नं त्रिगुणं गुणसत्तमेत्यादेः प्रकृतेरपि प्रलये वैषम्य-

परित्यागेन साम्यापत्तिलक्षणो नाशः । सृष्टौ तु गुणवैषम्यलक्षणं विक्रियारूपं जन्म चास्ति इत्यतो व्यक्तमपि अधिभूतेऽन्तर्भवति इति द्रष्टव्यम्[३], च = पुनः[४], पुरुषः[५], अधिदैवतं = उच्यते[६], पुरिशेत इति पुरुषो जीवः स च सङ्कर्षणो ब्रह्मा वा सर्वजीवाभिमानित्वात् सर्वदेवानधिकृत्य पतित्वेनास्तीत्यधिदैवतं दैवाधिकारग्रन्थप्रतिपाद्यं वाऽधिदैवतं उच्यते[७], अत्र[८], अहमेव[९], अधियज्ञः[१०] अत्र देहे प्रत्यक्षादिसिद्धे यज्ञादेः कर्तृभोक्तृफलदातॄणां सर्वप्राणिनां शरीरग्रामरूपदेहे प्रेरकत्वेन यज्ञादिप्रवर्तकत्वेन रूपान्तरेण देहे स्थितः[७], अहमेव[९], अधियज्ञः = अधिगतो यज्ञमित्यधियज्ञः अधिगतो यज्ञोऽर्थेन स. इति वा अधियज्ञः[१०] उच्यतेत्यर्थः । यद्वा, मतान्तरप्रतिपाद्य अर्थान्तरं क्षरोभावो विनेश्वरो देहादिपदार्थः[२], भूतं = प्राणिमात्रं अधिकृत्य भवतीत्यधिभूतं उच्यते[३], पुरुश्च = पुरुषो वैराजः सूर्यमण्डलवर्ती स्वांशभूतसर्वदेवतानां अधिपतिः पुरुषश्च[५], अधिदैवतमुच्यते[६], तदुक्तम्—

स वै शरीरी प्रथमः स वै पुरुष उच्यते ।
आदिकर्ता स भूतानां ब्रह्माग्रे समवर्तत॥ इति श्रुतेः ।

अत्रास्मिन् देहे[७], अहमेव = अन्तर्यामित्वेन स्थितः अहमेव[९], अधियज्ञः = यज्ञादि कर्मप्रवर्तकः तत्फलदाता च कथं चेत्यस्योत्तरं अनेनैवोक्तं द्रष्टव्यम् । अन्तर्यामी भगवान् प्रतिबिम्बमापन्नस्य जीवस्य देहान्तरवर्तित्वस्य प्रसिद्धत्वात् । तथा च श्रुतिः—

'द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते ।
तयोरन्यः पिप्पलं स्वाद्वत्यनश्नन्नन्यो अभिचाकशीति ॥' इति ॥

मतान्तरं तदुक्तं राघवेन्द्रयतिभिः । 'साधिभूताधिदैवं मां साधियज्ञं च ये विदुः' इत्यत्र अधियज्ञसाहित्योक्त्या भेदप्रतीतेस्तन्निवृत्त्यर्थं अहमेवेत्युक्तम् । स्वस्यैव सर्वप्राणिस्थस्वकीयरूपान्तरेण साहित्यं च युज्यते । अधियज्ञशब्दवाच्यो भगवदन्योऽपि अग्न्यादि बहिः प्रसिद्ध इति । तद्व्यावृत्त्यर्थं देह इत्युक्तम् । स्वदेहनिवृत्त्यर्थमत्र जैवे देहे इत्युक्तम् । न हि जैव देह इव स्वदेहे पृथग्रूपेण ईश्वरस्य नियन्तृत्वमस्ति सर्वप्राणिदेहस्थरूपेण भगवानेवाधियज्ञ इत्युक्त 'भोक्तारं यज्ञतपसाम्' इत्यादिना भगवान् सर्वयज्ञभोक्तृत्वादिना अधियज्ञत्वसिद्धं न वेति कृत्वा कथमेतस्य परिहारः पृथक् नोक्तः ? उक्तं च

'देहस्थविष्णुरूपाणि अधियज्ञ इतीरितः ।
कर्मेश्वरस्य सृष्ट्याख्यं तच्चापीच्छाद्यमुच्यते ॥'

'अधिभूतं जडं प्रोक्तं अध्यात्मं जीव उच्यते ।
हिरण्यगर्भोऽधिदैवं देवः सङ्कर्षणोऽपि च ॥

ब्रह्म नारायणो देवः सर्वदेवेश्वरेश्वर' इति ।
'अध्यात्मं देहपर्यन्तं केवलात्मोपकारकम् ॥
सदेहजीवा भूतानि ये तेषामुपकारकृत् ।
अधिभूतं तु मायां तं देवानामधिदैवतम् ॥' इति ।

'स वै शरीरी प्रथमः स वै पुरुषमुच्यते ।
आदिकर्ता च भूतानां ब्रह्माग्रे समवर्तत ॥' इति च ।

यथा प्रतीतं वा सर्वत्र नैव विरुध्यते । तथा हि—

'प्राणिनां देहगो विष्णुः अधियज्ञ इतीरितः ।
स एव व्यासरूपेण ब्रह्मेति परिकीर्त्यते ॥
तैस्तैरधिकयाज्यत्वाद्बहित्वाच्च हेतुतः ।
अध्यात्मं तत्स्वभावोऽयमधिकः परमात्मगः ॥

पुंसां स जडभावानां सर्गकर्म हरेः स्मृतम् ।
भूताधिकत्वतो जीवा अधिभूतमितीरितः ॥

अधिकोऽधिदैवतं विष्णुरेव यस्यास्तु सा रमा ।
पुरुप्राणाधिदैवाख्या ................................ ॥'

इत्यादि प्रमाणानुसारेण व्याख्यानान्तरं द्रष्टव्यम् ॥ ४ ॥

**भाष्यम्**

**भूतानि सशरीरान् जीवानधिकृत्य यत् तदधिभूतम् । क्षरो भावः विनाशिकार्यपदार्थः । अव्यक्तान्तर्भावेऽपि तस्याप्यन्यथाभावाख्यो विनाशोऽस्त्येव । तच्चोक्तम्— "अव्यक्तं परमे व्योम्नि निष्क्रिये सम्प्रलीयते ।" इति । "तस्मादव्यक्तमुत्पन्नं त्रिगुणं द्विजसत्तम ।" इति च । "विकारोऽव्यक्तजन्म हि ।" इति च स्कान्दे । पुरि शयनात् पुरुषो जीवः । स च सङ्कर्षणो ब्रह्मा वा । स**

**सर्वदेवानधिकृत्य वर्तते पतिरित्यधिदैवतम् । देवाधिकारस्थ इति वा । देवानिन्द्रियाण्यनपेक्ष्य ।**

***प०टी०***— 'अधिभूतं क्षरो भावः' इत्येतद्व्याचष्टे **भूतानीति** । नन्वव्यक्तस्याप्यधिभूतत्वान्न तस्यास्ति विनाशिकार्यत्वमित्यत आह **अव्यक्तेति** । अन्यथाभावाख्यः इति व्यक्तरूपं विहाय अव्यक्तरूपताख्यः । विनाशपदेन जन्मनोऽप्युपलक्षणम् । एवं सति, अन्यथाभावोऽव्यक्तस्य व्यक्तत्वप्राप्तिः । उक्तार्थद्वये प्रमाणमाह **तच्चेति** । इदं च जन्मान्यथाभावेनेत्यत्र प्रमाणमाह **विकार इति** । 'पुरुषश्चाधिदैवतम्' इत्येतद्व्याचष्टे **पुरीति** । अध्यात्माधिभूताभेदः स्यादेवमित्यत आह **स चेति** । सर्वजीवाभिमानित्वादिति भावः । कथं तयोरधिदैवत्वम् ? इत्यत आह **स इति** । सर्वदेवा वा जीवाभिमानिनोऽधिदैवमित्याह **देवेति** ।

***न०टी०***—अदेहात्मोपकारिणो देहान्तरस्याध्यात्मशब्दोक्तत्वात् सदेहात्मोपकार्यधिभूतशब्देन वक्तव्यम् । तच्चाव्यक्तान्तं जडमेव न हरिविरिञ्चादयो वा । तेषां ब्रह्माधिदैवशब्दाभ्यामुक्तेरिति भावेन 'अधिभूतं च किम् ?' इत्यस्योत्तरं विवृणोति **भूतानीत्यादिना** । प्रागभावव्यावृत्त्यर्थो 'भाव'-शब्दः । 'क्षर'शब्दस्तु परमात्मादिव्यावृत्त्यर्थः । स च विनाशिकार्यपदार्थ एवेत्यर्थः । ननु **अधिभूतं जडं प्रोक्तम्** इत्यादिवक्ष्यमाणपर्यालोचनया जगदुपादानस्याव्यक्तस्य विनाशिकार्यपदार्थत्वे न व्यवस्था स्यादित्याशङ्क्य, प्रलयेऽपि सशोको नानावस्थेति (?) भावेनैतत् सप्रमाणकमाह **अव्यक्तेति** । ब्रह्मैव परमं व्योम, तत्प्रलयकाले निष्क्रियं प्रापयति । ननु वक्ष्यमाणप्रकारेणाधिदैवतपदमुख्यार्थो भगवानेवेति 'पुरुषश्चाधिदैवतम्' इति पुरुषोऽप्यधिदैवतमिति व्याख्येयम् । तत्कथं युज्यते ? पुरुषशब्दस्यापि तत्रैव मुख्यत्वादित्यत आह **पुरीति** । पुरीशयनहेतुना जीव एवात्र पुरुषशब्दविवक्षितो न तु पूर्णत्वादिना परमपुरुष इत्यर्थः । सोऽपि न जीवमात्रं किन्तु तदभिमान्येवेत्याह **स चेति** । एवं पुरुषशब्दवाच्येऽहीशे के चाधिदैवतपदं योजयति **स इति** । यद्वा, पुरिशयनात् सर्वोऽधिदेवः पुरुषः । स च देवाधिकारस्थित्वादधिदैवतपदार्थ इति भावेनाह **देवेति** ।

***प्र०दी०***— परिहारं सङ्गमयितुमधिभूतशब्दार्थं तावदाह— **भूतानीति** । अधिकृत्य तदुपकारित्वेन यद्वर्तते । ''क्षरः सर्वाणि भूतानि'' इति वक्ष्यमाणं क्षरं व्यावर्तयितुं व्याचष्टे— **क्षर इति** । क्षरशब्दव्याख्या विनाशीति । भावशब्दस्यार्थद्वयं कार्य इति पदार्थ इति । भवति उत्पद्यत इति भावः । उत्पत्तिमान् पदार्थो नाशवान् पदार्थ इति प्रत्येकमुत्तरम् । सर्वभूतानामध्यात्मत्वान्न

ग्रहणम् । नन्वव्यक्तमपि सशरीरान् जीवानधिकृत्य वर्तत इति तस्याप्यधिभूतेऽन्तर्भावोऽस्त्येव । न चैतद्विनाशि कार्यं वा । नासत इत्युक्तत्वात् । ततोऽव्यापकमुत्तरमित्यत आह— **अव्यक्तेति** । अव्यक्तस्याधिभूतान्तर्भावेऽपि नाव्यापकमुत्तरमिति शेषः । कुत इत्यत आह— **तस्यापीति** । अन्यथाभावो वैषम्यपरित्यागेन साम्यावस्थापत्तिः । यत इति शेषः । तथा विक्रियालक्षणं जन्म चेत्यपि ग्राह्यम् । उभयत्र क्रमेण प्रमाणान्याह— **तच्चेति** । व्योम्नि व्याप्ते । प्रलये प्रचुरव्यापाराभावान्निष्क्रिये । ननु पुरुषः परमात्मा । स ब्रह्माधियज्ञशब्दाभ्यां उक्त इत्यत आह— **पुरीति** । शरीरे । 'अधिकरणे शेतेः' (३-२-१५) इति डः ''वर्णागमो वर्णविपर्ययश्च'' इत्यादिना साधुः । तथाऽप्यध्यात्मशब्देन गतार्थतेत्यत आह— **स चेति** । सर्वजीवाभिमानित्वादिति भावः । तस्याधिदैवत्वं कथमित्यतो द्वेधाऽऽह— **स इति** । अधिकृत्य वर्तते इत्यस्यैव विवरणं— **पतिरिति** । देवाधिकारस्थः तत्प्रकरणेषु मुख्यतः प्रतिपाद्यः । सर्वदेवतासङ्ग्रहार्थं वा द्वितीयं व्याख्यानम् । अक्षरार्थस्तु पूर्ववत् ।

***भा०दी०*— प्रत्येकमुत्तरमिति** । किमधिकमिति प्रश्नस्याधिभूतं क्षरो भावः । तथा भावः कार्यभूतो भावः पदार्थ इति भावपदस्य सकृदावृत्त्या प्रत्येकमुत्तरमित्यर्थः । क्षरः सर्वाणि भूतानीति वक्ष्यमाणात् सर्वभूतानामत्र ग्रहणं कुतो नेत्यत आह **सर्वभूतानामिति** । पूर्वोक्तव्याख्यानरीत्याध्यात्मपदेन प्राप्तत्वादित्यर्थः । **नासत इतीति** । असतः कारणस्याव्यक्तस्याभावो न विद्यत इत्युक्तत्वादित्यर्थः । **अधिकरणे शेतेरितीति** । यद्यपि द्वितीयतृतीयपादे शेतेर्धातोरधिकरणवाचि सुबन्ते उपपदे अच्प्रत्ययो भवतीति वृत्तावुक्तखे शेते खशय इत्याद्युदाहृतं तथापि तत्रैव ''अधिकरणे शेतेः'' (३-२-१५) सूत्रे रौड छन्दसि रौ शेते रौशय इत्यप्युक्तत्वाद्गीताया अपि छन्दस्तुल्याद्रौ ड इत्युपलक्षणमधिकरणभूतपुरुपदे उपपदेऽपि शितेर्डप्रत्ययो बोध्य इति भावेन ''अधिकरणे शेते'' (३-२-१५) इति ड इत्युक्तम् । तथा च डित्वाट्टिलोपो शकारस्य षकारे पूर्वपदस्योङ्कारान्तत्वेन रूपमिति भावः । रेफान्तपूर्वपदस्योङ्कारागमे शकारस्य षकारतया विपर्यये च ''पृषोदरादि'' (६-३-१०) सूत्रेण वृत्तावुक्तं वचनमाह **वर्णागम इति** । 'तथा परो वर्णविकारनाशौ । धातोस्तदर्थातिशये च योगस्तदुच्यते पञ्चविधं निरुक्तमि'ति वाक्यशेषः । सर्वदेवतेति पुरुषपदेन सर्वजीवाभिमानि सङ्कर्षणस्येव सर्वदेवतानामपि सर्वजीवेन्द्रियादिनियामकतया पुरिशयानात्पुरुपदेन तासां सङ्ग्रहार्थमित्यर्थः । **पूर्ववदिति** । देवतामधिकृत्य वर्तमानो ग्रन्थः अधिदैवः तन्त्रप्रतिपाद्य इति । सङ्कर्षणपरत्वे यथातथैवेति बाध्यात्मपदे यथातथेति वा सङ्कर्षणाद्यर्थद्वयेऽपीत्यर्थः ।

भाष्यम्

**सर्वयज्ञभोक्तृत्वादेः अधियज्ञः । अन्यः अधियज्ञः अग्न्यादिः प्रसिद्ध इति 'देह' इति विशेषणम् । "भोक्तारं यज्ञतपसाम्", "त्रैविद्या माम्", "येऽप्यन्य-देवताभक्ताः", "एतस्य वा अक्षरस्य प्रशासने गार्गि", "ददतो मनुष्याः प्रशं-सन्ति यजमानं देवाः" इत्यादेः । "कुतो ह्यस्य ध्रुवः स्वर्गः कुतो नैःश्रेयसं परम्" इत्यादि परिहाराच्च मोक्षधर्मे । भगवान् चेत् तद्भोक्तृत्वादेः अधियज्ञत्वं सिद्धमिति कथमित्यस्य परिहारः पृथक् नोक्तः । सर्वप्राणिदेहस्थरूपेण अधि-यज्ञः ।**

***प०टी०***— 'अधियज्ञः कथम्' इत्यस्य परिहारो गीता परिहारो गीतास्वनुक्तः । अतस्तमाह **सर्वेति** । **आदि**पदात् प्रवर्तकत्वफलदत्वादि । ननु कथं सर्वयज्ञभोक्तृत्वं भगवतः ? 'देहे' इति विशेषितत्वादित्याह **अन्य इति** । सर्वयज्ञभोक्तृत्वप्रवर्तकत्वफलदातृत्वादि हरेरन्यत्र सिद्धानीत्याह **कुत इति** । **इत्यादेः** प्रश्नस्य परिहारात् । नन्वेवं चेत् 'कथम्' इत्यस्य परिहारः, तर्हि गीतायामेव किं नोक्तः ? इत्यत आह **भगवांश्चेति** । ननु पूर्वं 'साधियज्ञम्' इत्युक्त्वा 'अधियज्ञोऽहम्' इति कथमुच्यते इत्यत आह **सर्वेति** ।

***न०टी०***—यद्वर्णितं प्रकारद्वयेन 'पुरुषश्चाधिदैवतम्' इति तद्द्वयमिन्द्रियदेवापेक्षयाऽपि युज्यत इति भावेनाह **देवानिति** । इन्द्रियशब्दस्य तदभिमानिषु मुख्यत्वात् सामानाधिकरण्यम् । सङ्कर्षण-ब्रह्माणावहङ्कारचित्ताभिमानिने । पूर्वत्र ब्रह्माण्डाख्यपुरि । अत्र तु देहाख्यपुरीति भावः । एवमुक्त-लक्षणः पुरुषोऽप्यधिदैवतं कथञ्चित् । मुख्याधिदैवतं तु भगवानेव सर्वदेवेश्वरेश्वरः सर्वदेवशब्द-परममुख्यार्थसर्वहृषीकाधिनाथो नारायण इति भावः । 'कथंरूपोऽधियज्ञः ?' इत्यस्य परिहारमाह **सर्वेति** । **आदि**शब्दाद्यज्ञे फलदत्वात् तत्प्रवर्तकत्वाच्च । 'देहे' इति विशेषणं किमर्थम् ? इत्यत आह **अन्य इति** । अग्न्यादेरपि ईषद्यज्ञभोक्तृत्वेनाधियज्ञत्वे सिद्धेऽपि न सर्वनियन्तृत्वं तस्येत्यर्थः । नन्वाप्तकामत्वाद्भगवतः किं तस्य भोक्तृत्वे मानम् ? इत्यत आह **भोक्तारमिति** । आप्तकामोऽपि क्रीडया भुङ्क्त इति भावः ' ननु भोक्तृत्वेऽपि भगवतो विष्ण्वादिशब्दोद्दिष्टेष्वेव यज्ञेषु, न त्विन्द्रादि-शब्दोद्दिष्टेष्विति कथं तस्य सर्वयज्ञभोक्तृत्वम् ? इत्यत आह **त्रैविद्या इति** । 'मामिष्ट्वा प्रार्थयन्ते' इत्युक्तेः त्रैविद्यधर्मेष्वपि भगवानीड्यः फलदश्चेति सिद्ध्यति । येऽप्यन्यदेवता यजन्ते तेऽपि मामेव यजन्तीति च त्रैविद्येड्यो भगवान् । तथाऽपि स्वबुद्ध्याऽन्यदेवतोद्देशान्न ते भागवता इति भावः ।

तावद्भगवतः सर्वयज्ञभोक्तृत्वं फलदत्त्वं च तद्वाक्यैः साधयित्वा, तस्य सर्वयज्ञप्रवर्तकत्वं श्रुत्या दर्शयति **एतस्येति** । दानतत्प्रशंसनया भगवत्प्रशंसनादि भगवत्प्रशस्त्येत्यर्थः । तदेतत् त्रयं मोक्षधर्मेऽपि सिद्धमित्याह **कुतो हीति । आदि**शब्दात् 'विधिना केन वा जुह्वन् जैवं पित्र्यमथापि च' इत्यादि । अस्य परिहारो नारदनारायणसंवादादिरूपः तत्र तावन्नारदवाक्ये 'चत्वारो ह्याश्रमादेव सर्वे गार्हस्थ्य...... ॥

*॥ इति श्रीनरहरितीर्थभट्टारकविरचिता गीताभाष्यभावप्रकाशिका ॥*

***प्र०दी०***— अधियज्ञः कथमित्यस्योत्तरं भगवताऽनुक्तं भाष्यकृदाह— **सर्वेति** । आदिपदेन तत्प्रवर्तकत्वादि । नाध्यात्मशब्दवदधियज्ञशब्देऽव्ययीभावः । किन्त्वधिगतो यज्ञमिति प्रादिसमासः । अधिष्ठितो यज्ञोऽनेनेति बहुव्रीहिर्वा । अधियज्ञः क इति प्रश्ने तत्परिहारे च देह इत्यस्य प्रयोजनमाह— **अन्य इति** । अन्यो भगवत इति सिद्धार्थतापरिहारार्थं प्रश्नवाक्ये देह इति विशेषणं प्रयुक्तम् । कर्तृभोक्तृफलदातॄणां देहप्रेरकत्वेन वर्तमान इति । अतः परिहारवाक्येऽपि यथा प्रश्नं तदुपात्तमिति वाक्यशेषः । भगवतः सर्वयज्ञभोक्तृत्वं कुतो, येनैवमुत्तरमध्याह्रियत इत्यत आह— **भोक्तारमिति** । त्रैविद्यानुष्ठितयज्ञभोक्तृत्वाभावात् 'सर्व' इत्यनुपपन्नमित्यत आह— **त्रैविद्या इति** । प्रवर्तकत्वे श्रुतिमाह— **एतस्येति** । यज्ञफलदातृत्वादौ प्रमाणमाह— **कुतो हीति** । ध्रुवः चिरन्तनः । नैश्रेयसं मुक्तौ भवं पदं सुखं इत्यादेः प्रश्नस्य । नन्वेष परिहारो भगवतैव कुतो नोक्त इत्यत आह— **भगवान् चेदिति** । चेच्छब्दः यदाशब्दार्थे । अधियज्ञोऽहमिति यदाऽधियज्ञत्वेन भगवानुक्तः तदा तस्य सर्वयज्ञभोक्तृत्वादेरधियज्ञत्वमर्जुनस्य सिद्धमेव । 'भोक्तारं' इत्यादेरर्थस्य तेन श्रुतत्वात् । अन्यत्वपक्ष एव कथमिति पृष्टत्वात् । एवमालोच्य भगवता 'कथं' इत्यस्य प्रश्नस्य परिहारो 'अधियज्ञोऽहं' इत्यतः पृथङ् नोक्तः । अस्माभिस्तु मन्दान् बोधयितुमुक्त इति भावः । ननु यद्यधियज्ञः स्वयमेव, कथं तर्हि 'साधियज्ञं मां' इति प्रागवोचदित्यत आह— **सर्वेति** । रूपविशेषापेक्षया साहित्यमुक्तमिति भावः । अनेन परिहारवाक्यस्थस्य 'देहे' इति विशेषणस्य प्रयोजनान्तरं चोक्तं भवति ।

***भा०दी०***— अधियज्ञः कथं कोऽत्र देह इति प्रश्नवाक्ये अधियज्ञः कथं कश्चाधियज्ञ इति प्रश्नद्वयं प्रतीयते तत्र क इति प्रश्नस्याधियज्ञोऽहमिति परिहारो गीतायां व्यक्तः । कथमिति प्रश्नस्य तु नोक्तः अत उक्तं **भगवताऽनुक्तमिति । नाध्यात्मेति** । नाव्ययीभाव इत्यन्वयः । तथात्वे अधियज्ञमिति स्यादिति भावः । द्वितीयस्य द्वितीयपादे 'कुगतिप्रादय' (२-२-१८) इति सूत्रोक्तशब्दाः गतिसंज्ञकाः प्राद्युपसर्गाश्च समस्यत इति समासविधिसूत्रे 'अत्यादयः क्रान्त्याद्यर्थे द्वितीयया'

**भाष्यम्**

**सर्वयज्ञभोक्तृत्वादेः अधियज्ञः । अन्यः अधियज्ञः अग्न्यादिः प्रसिद्ध इति 'देह' इति विशेषणम् । "भोक्तारं यज्ञतपसाम्", "त्रैविद्या माम्", "येऽप्यन्य-देवताभक्ताः", "एतस्य वा अक्षरस्य प्रशासने गार्गि", "ददतो मनुष्याः प्रशं-सन्ति यजमानं देवाः" इत्यादेः । "कुतो ह्यस्य ध्रुवः स्वर्गः कुतो नैःश्रेयसं परम्" इत्यादि परिहाराच्च मोक्षधर्मे । भगवान् चेत् तद्भोक्तृत्वादेः अधियज्ञत्वं सिद्धमिति कथमित्यस्य परिहारः पृथक् नोक्तः । सर्वप्राणिदेहस्थरूपेण अधि-यज्ञः ।**

***प०टी०***— 'अधियज्ञः कथम्' इत्यस्य परिहारो गीता परिहारो गीतास्वनुक्तः । अतस्तमाह **सर्वेति** । **आदिपदात्** प्रवर्तकत्वफलदत्वादि । ननु कथं सर्वयज्ञभोक्तृत्वं भगवतः ? 'देहे' इति विशेषितत्वादित्याह **अन्य इति** । सर्वयज्ञभोक्तृत्वप्रवर्तकत्वफलदातृत्वादि हरेरन्यत्र सिद्धानीत्याह **कुत इति** । **इत्यादेः** प्रश्नस्य परिहारात् । नन्वेवं चेत् 'कथम्' इत्यस्य परिहारः, तर्हि गीतायामेव किं नोक्तः ? इत्यत आह **भगवांश्चेति** । ननु पूर्वं 'साधियज्ञम्' इत्युक्त्वा 'अधियज्ञोऽहम्' इति कथमुच्यते इत्यत आह **सर्वेति** ।

***न०टी०***—यद्वर्णितं प्रकारद्वयेन 'पुरुषश्चाधिदैवतम्' इति तद्वयमिन्द्रियदेवापेक्षयाऽपि युज्यत इति भावेनाह **देवानिति** । इन्द्रियशब्दस्य तदभिमानिषु मुख्यत्वात् सामानाधिकरण्यम् । सङ्कर्षण-ब्रह्माणावहङ्कारचित्ताभिमानिने । पूर्वत्र ब्रह्माण्डाख्यपुरि । अत्र तु देहाख्यपुरीति भावः । एवमुक्त-लक्षणः पुरुषोऽप्यधिदैवतं कथञ्चित् । मुख्याधिदैवतं तु भगवानेव सर्वदेवेश्वरेश्वरः सर्वदेवशब्द-परममुख्यार्थसर्वहृषीकाधिनाथो नारायण इति भावः । 'कथंरूपोऽधियज्ञः ?' इत्यस्य परिहारमाह **सर्वेति** । **आदिशब्दा**द्यज्ञे फलदत्वात् तत्प्रवर्तकत्वाच्च । 'देहे' इति विशेषणं किमर्थम् ? इत्यत आह **अन्य इति** । अग्न्यादेरपि ईषद्यज्ञभोक्तृत्वेनाधियज्ञत्वे सिद्धेऽपि न सर्वनियन्तृत्वं तस्येत्यर्थः । नन्वाप्तकामत्वाद्भगवतः किं तस्य भोक्तृत्वे मानम् ? इत्यत आह **भोक्तारमिति** । आप्तकामोऽपि क्रीडया भुङ्क्त इति भावः ' ननु भोक्तृत्वेऽपि भगवतो विष्ण्वादिशब्दोद्दिष्टेष्वेव यज्ञेषु, न त्विन्द्रादि-शब्दोद्दिष्टेष्विति कथं तस्य सर्वयज्ञभोक्तृत्वम् ? इत्यत आह **त्रैविद्या इति** । 'मामिष्ट्वा प्रार्थयन्ते' इत्युक्तेः त्रैविद्यधर्मेष्वपि भगवानीड्यः फलदश्चेति सिद्ध्यति । येऽप्यन्यदेवता यजन्ते तेऽपि मामेव यजन्तीति च त्रैविद्येड्यो भगवान् । तथाऽपि स्वबुद्ध्याऽन्यदेवतोद्देशान्न ते भागवता इति भावः ।

तावद्भगवतः सर्वयज्ञभोक्तृत्वं फलदत्त्वं च तद्वाक्यैः साधयित्वा, तस्य सर्वयज्ञप्रवर्तकत्वं श्रुत्या दर्शयति **एतस्येति** । दानतत्प्रशंसनया भगवत्प्रशंसनादि भगवत्प्रशस्त्येत्यर्थः । तदेतत् त्रयं मोक्षधर्मेऽपि सिद्धमित्याह **कुतो हीति** । **आदि**शब्दात् 'विधिना केन वा जुह्वन् जैवं पित्र्यमथापि च' इत्यादि । अस्य परिहारो नारदनारायणसंवादादिरूपः तत्र तावन्नारदवाक्ये 'चत्वारो ह्याश्रमादेव सर्वे गार्हस्थ्य...... ॥

*॥ इति श्रीनरहरितीर्थभट्टारकविरचिता गीताभाष्यभावप्रकाशिका ॥*

***प्र०दी०***— अधियज्ञः कथमित्यस्योत्तरं भगवताऽनुक्तं भाष्यकृदाह— **सर्वेति** । आदिपदेन तत्प्रवर्तकत्वादि । नाध्यात्मशब्दवदधियज्ञशब्देऽव्ययीभावः । किन्त्वधिगतो यज्ञमिति प्रादिसमासः । अधिष्ठितो यज्ञोऽनेनेति बहुव्रीहिर्वा । अधियज्ञः क इति प्रश्ने तत्परिहारे च देह इत्यस्य प्रयोजनमाह— **अन्य इति** । अन्यो भगवत इति सिद्धार्थतापरिहारार्थं प्रश्नवाक्ये देह इति विशेषणं प्रयुक्तम् । कर्तृभोक्तृफलदातॄणां देहप्रेरकत्वेन वर्तमान इति । अतः परिहारवाक्येऽपि यथा प्रश्नं तदुपात्तमिति वाक्यशेषः । भगवतः सर्वयज्ञभोक्तृत्वं कुतो, येनैवमुत्तरमध्याहियत इत्यत आह— **भोक्तारमिति** । त्रैविद्यानुष्ठितयज्ञभोक्तृत्वाभावात् 'सर्व' इत्यनुपपन्नमित्यत आह— **त्रैविद्या इति** । प्रवर्तकत्वे श्रुतिमाह— **एतस्येति** । यज्ञफलदातृत्वादौ प्रमाणमाह— **कुतो हीति** । ध्रुवः चिरन्तनः । नैश्रेयसं मुक्तौ भवं पदं सुखं इत्यादेः प्रश्नस्य । नन्वेष परिहारो भगवतैव कुतो नोक्त इत्यत आह— **भगवान् चेदिति** । चेच्छब्दः यदाशब्दार्थे । अधियज्ञोऽहमिति यदाऽधियज्ञत्वेन भगवानुक्तः तदा तस्य सर्वयज्ञभोक्तृत्वादेरधियज्ञत्वमर्जुनस्य सिद्धमेव । 'भोक्तारं' इत्यादेरर्थस्य तेन श्रुतत्वात् । अन्यत्वपक्ष एव कथमिति पृष्टत्वात् । एवमालोच्य भगवता 'कथं' इत्यस्य प्रश्नस्य परिहारो 'अधियज्ञोऽहं' इत्यतः पृथङ् नोक्तः । अस्माभिस्तु मन्दान् बोधयितुमुक्त इति भावः । ननु यद्यधियज्ञः स्वयमेव, कथं तर्हि 'साधियज्ञं मां' इति प्रागवोचदित्यत आह— **सर्वेति** । रूपविशेषापेक्षया साहित्यमुक्तमिति भावः । अनेन परिहारवाक्यस्थस्य 'देहे' इति विशेषणस्य प्रयोजनान्तरं चोक्तं भवति ।

***भा०दी०***— अधियज्ञः कथं कोऽत्र देह इति प्रश्नवाक्ये अधियज्ञः कथं कश्चाधियज्ञ इति प्रश्नद्वयं प्रतीयते तत्र क इति प्रश्नस्याधियज्ञोऽहमिति परिहारो गीतायां व्यक्तः । कथमिति प्रश्नस्य तु नोक्तः अत उक्तं **भगवताऽनुक्तमिति** । **नाध्यात्मेति** । नाव्ययीभाव इत्यन्वयः । तथात्वे अधियज्ञमिति स्यादिति भावः । द्वितीयस्य द्वितीयपादे 'कुगतिप्रादय' (२-२-१८) इति सूत्रोक्तशब्दाः गतिसंज्ञकाः प्राद्युपसर्गाच्च समस्यत इति समासविधिसूत्रे 'अत्यादयः क्रान्त्याद्यर्थे द्वितीयया'

(२-२-१८) इत्युक्तत्वादधीत्युपसर्गस्याति अधीत्यादिषु पाठात् क्रान्तादीत्यादिपदेन गृहीतगतार्थे समासमुपेत्याधिगतो यज्ञमिति प्रादिसमास इत्युक्तं भाष्ये इति पदहेत्वर्थमुपेत्य तदनुवादपूर्वं तदनन्तर-मध्यायार्थमाह **इति सिद्धार्थतेति**। कोऽधियज्ञ इति प्रश्नस्येति योज्यम्। उक्तमित्यस्यात इत्यनेनान्वयः। प्रश्नवाक्यस्थ ..................स्यार्थमाह **कृत्यादिना**। अतो न प्रश्नयोगादिति भावः। प्रागिति पूर्वाध्यायान्त इत्यर्थः। **प्रयोजनान्तरमिति**। सर्वप्राणिदेहस्थरूपेण वाधियज्ञो ह न बाह्यरूपेणेति ज्ञापनरूपप्रयोजनान्तरसिद्धार्थतानिवृत्त्यर्थतया प्रश्नवाक्योपात्तदेहपदानुसारात् ..... योजनादन्यत्प्रयोजनमित्यर्थः। अत्र देह इति पदद्वयार्थ इह लौकिकदेहे इति।

**भाष्यम्**

**'अत्र' इति स्वदेहनिवृत्त्यर्थम्। न हि तत्र ईश्वरस्य नियन्तृत्वं पृथगस्ति। नात्रोक्तं ब्रह्म भगवतः अन्यत्। "ते ब्रह्म" इत्युक्त्वा "साधिभूताधिदैवं मां साधियज्ञं च ये विदुः" इति परामर्शात्। तस्यैव च प्रश्नात्। 'साधियज्ञं' इति भेदप्रतीतेः तन्निवृत्त्यर्थं 'अधियज्ञोऽहं' इत्युक्तम्। 'मां' इत्यभेदप्रसिद्धेः 'अक्षरं' इत्येवोक्तम्।**

**आह च गीताकल्पे—**

**"देहस्थविष्णुरूपाणि अधियज्ञ इतीरितः।**
**कर्मेश्वरस्य सृष्ट्याख्यं तच्चापीच्छाद्यमुच्यते।**
**अधिभूतं जडं प्रोक्तमध्यात्मं जीव उच्यते।**
**हिरण्यगर्भोऽधिदैवं देवः सङ्कर्षणोऽपि वा।**
**ब्रह्म नारायणो देवः सर्वदेवेश्वरेश्वरः॥" इति।**
**"यथा प्रतीतं वा सर्वमत्र वै न विरुद्ध्यते॥" इति।**

**स्कान्दे च—**

**"आत्माभिमानाधिकारस्थितमध्यात्ममुच्यते।**
**देहाद् बाह्यं विनाऽतीव बाह्यत्वादधिदैवतम्।**
**देवाधिकारगं सर्वं महाभूताधिकारगम्।**
**तत्कारणं तथा कार्यमधिभूतं तदन्तिकात्॥" इति।**

**महाकौर्मे च—**

**"अध्यात्मं देहपर्यन्तं केवलात्मोपकारकम् ।**
**सदेहजीवभूतानि यत्तेषामुपकारकृत् ।**
**अधिभूतं तु मायान्तं देवानामधिदैवतम् ॥" इति ॥ ४ ॥**

***प०टी०***— 'अत्र' इति विशेषित्वान्न सर्वं साधियज्ञत्वं हरेरित्यत आह **अत्रेति** । किमर्थं स्वदेहो व्यावर्त्यते ? इत्यत आह **न हीति** । एवं श्लोकद्वयं व्याख्याय, परकृतापव्याख्यां 'ब्रह्मशब्देन परमाक्षरं वेद' इति, तां निराकरोति **नात्रेति** । 'ते ब्रह्म' इत्युक्त्वा, अधिभूताधिदैवं ब्रह्मेत्यनुक्त्वा, 'माम्' इति ब्रह्मणो मच्छब्देन परामर्शात् । न च ब्रह्मज्ञानमुक्त्वा, स्वज्ञातृत्वमुच्यत इति वाच्यम् । 'मां च' इति 'च'शब्दाभावादिति । गताध्याये भगवानेव च ब्रह्म तर्ह्यत्रोक्तस्य किमायातम् ? इत्यत आह **तस्येति** । नन्वेवमधियज्ञब्रह्मणो भगवत्स्वरूपत्वे, 'अहम्' इत्युक्तेः किं कारणम् ? इत्यत आह **साधीति** । उक्तार्थे प्रमाणमाह **आह चेति** । न केवलमुक्त एवार्थोऽस्य, किन्त्वर्थान्तरमपि प्रमाणाविरोधिप्रतीतं चेत्, सोऽपि भगवदभिप्राय एवेत्याह **यथेति** । किं तत् अर्थान्तरम् ? इत्यत आह **स्कान्दे चेति** । देवानाम् उपकारक इति योज्यम् ॥

***प्र०दी०***— 'अत्र' इति देहविशेषणं किमर्थमित्यत आह— **अत्रेति** । इह लौकिके देह इत्यर्थः । कुत ईश्वरदेहो व्यावर्तनीय इत्यत आह— **न हीति** । तत्र स्वदेहे । पृथक् पृथग्भावेन । यथा 'अधियज्ञोऽहमेव' इत्युक्तं न तथा 'ब्रह्माहं' इति । अतो भगवतोऽन्यदेवेदम् । 'ब्रह्म परमं' इति तु स्वरूपकथनम् । न तु विशेषणमिति शङ्कां निवारयति— **नात्रेति** । पूर्वाध्याये "ते ब्रह्म तद्विदुः" इत्युक्त्वा कथम्भूतं ब्रह्म इत्याकाङ्क्षायां "साधिभूताधिदैवं साधियज्ञं च ब्रह्म" इति वक्तव्ये 'मां' इति ब्रह्मणः परामर्शात् । तत्रास्तु भगवानेव ब्रह्म । अत्र तु कुत इत्यत आह— **तस्यैवेति** । पृष्टस्यैव वक्तव्यत्वात् । तर्ह्यधियज्ञस्य ब्रह्मणश्च भगवत्त्वादेकत्राहमेवेत्युक्तिपरत्र तदनुक्तिः किन्निबन्धनेत्यत आह— **साधियज्ञमिति** । शेषं तात्पर्यनिर्णये । एतेनाऽपव्याख्यानमपि निरस्तम् । द्वादशादौ च विस्तरेण । आगमसम्मत्योक्तं स्थापयति— **आह चेति** । यानि देहस्थविष्णुरूपाणि सः अधियज्ञ इतीरितः । तदपीच्छाप्रयत्नाद्यमेव । न तु परिणामरूपम् । जडं देहाद्ग्राह्यम् । न केवलमेषां पदानामेतावन्मात्रार्थत्वं किं तु यथाप्रतीतं प्रतीतिमनतिक्रम्य शब्दशक्त्या यावत्प्रतीतं प्रमाणाविरुद्धं च तदत्र व्याख्यायमानं वक्तुरभिप्रायं न व्यभिचरतीत्यर्थः । किञ्चिद्व्यवहितत्वान्मध्येऽपीति शब्दः । एतदेव वाक्यान्तरेण स्पष्टयति— **स्कान्दे चेति** । आत्मनो-

ऽभिमानस्य विषयः । आत्माधिकारस्थं तत्र प्रतिपाद्यम् । देहाद्बाह्यं विनेति सामर्थ्यादात्माभिमानस्थेन सम्बध्यते । तत्र युक्तिरतीव बाह्यत्वादत्यभिमानविषयत्वाभावात् । महाभूताधिकारगं महाभूतम् । कार्यकारणग्रहणहेतुः । तदन्तिकात् तत्तादात्म्यात् । देवानामुपकारकृत् ॥

*भा०दी०*— **साधिभूताधिदैवमिति** । अधिभूतशब्दितध्यशरीरजीवोपकारित्वेन स्थितोत्पत्तिविनाशिपदार्थस्थतया तत्सहित अधिदैवशब्दितसर्वजीवाः .... बाह्याधि..स्थत्वेन तत्सहित..... वचनशब्दितसर्वप्राणिदेहगतरूपेण सहितं चेति पदत्रयार्थः । **परामर्शादिति** । अस्मच्छब्देन वित्ति ..........षयतया प्रागुक्तस्ये........र्थः । ननु तद्ब्रह्म विदुरित्युक्तस्य साधियज्ञ मामित्युक्तस्य साधि यज्ञं मामित्युक्त्वा भगवानेव ब्रह्मेति लाभात्तस्यैव च स्पष्टतया पृष्टस्यैव वक्तव्यतयास्तु परिहारेति ब्रह्म भगवानिति तथापि साक्षादेवाहमिति कुतो नोक्तमित्यतो विष्णोरक्षरत्वाज्ञानिना अक्षरत्वज्ञापनार्थं तथा परमक्षरं ब्रह्मेत्युक्तावपि साक्षादहमित्यनुक्तेर्भगवतोऽन्यदेव ब्रह्माक्षरं चेति शङ्का अव्यक्तोऽक्षर उच्यत इत्यादिनाग्रे पूर्वत्राव्यक्तं व्यक्तिमापन्नमिति हरौ प्रत्युक्ताव्यक्तपदानुवादेनाक्षरत्वोक्त्या परिह्रियते । तथा ब्रह्मपदेन व्याप्तं कथमधियज्ञपदेन देहगं रूपमित्याद्यभिप्रेत्याह **शेषमिति** । **एतेन त्वेति** । परमाक्षरस्य भगवत्वकथनेन परमक्षरप्रधान अधियज्ञस्तु भगवानिति वा परमक्षरं ब्रह्म निर्गुणमिति वापव्याख्यानं निरस्तमित्यर्थः । द्वन्द्वौ **विस्तरेणेति** । परन्तु ब्रह्म न हि भगवतोऽन्यदित्यादिना निरस्तमित्यर्थः । इरान्त इत्यस्यान्वयायाह **यानि स इति** । देहस्थानेकरूपात्मा विष्णुरित्यर्थः । तच्चेत्यादेरर्थस्तदपीत्यादि जडमित्यनुवादः । देहाद्बाह्यव्याख्या । यद्यपि यथेत्याद्येऽपि गीताकल्पगतमेव वाक्यं **तथापीति** । पदस्य मध्ये कीर्तनस्याभिप्रायमाह **किञ्चिदिति** । आत्माभिमानेति आत्मपदं चात्माभिमानस्थितमात्माधिकारस्थितमिति प्रत्येकमन्वेति । तत्राद्यस्यार्थमाह **आत्मनोऽभिमानस्य विषय इति** । द्वितीयमनूद्यार्थमाह **आत्मेत्यादिना** । आत्माभिमानविषयः क इत्यपेक्षया स्मृतौ देहाद्बाध्ये विनेत्युक्तमिति भावेन देहाभिमानस्थं देहाद्बाह्यं विनेति निर्देशाभावात्कथमन्वय इत्यत आह **सामर्थ्यादिति** । योग्यताबलादित्यर्थः । एतेन यत्प्राग्जीवोपकारितयास्थितं यच्च जीवस्वरूपं तदुभयमध्यात्मशब्दार्थ इति प्रागुक्तं संवादितं भवति । देवानामित्यत्रानुवृत्तिमाह **उपकारकृदिति** ॥ ४ ॥

**गीतातात्पर्यनिर्णयः**

**परमाक्षरो विष्णुरेव मुख्यत इति प्रसिद्धत्वात् तथैव परिहरति ।**

*न्या०दी०*— ननु ''साधिभूताधिदैवं माम्'' इति भगवत एव ब्रह्मत्वोक्तेः किं तद्ब्रह्मेति प्रश्ने अहं ब्रह्मेति परिहारो वक्तव्यः । ''अक्षरं ब्रह्म परमम्'' इति कथमुच्यत इत्यत आह **परमेति** ॥

**गीतातात्पर्यनिर्णयः**

**अज्ञानां तदपि ज्ञापयितुं तथैव परिहारः ।**

*न्या०दी०*— तथैव परमाक्षरं ब्रह्मेत्येव । भवतु परमाक्षरं ब्रह्मेत्युक्तिफलं, परमाक्षरशब्दस्य विष्णौ प्रसिद्धत्वात् । तथाप्यहमिति साक्षादनुक्त्वा एवं कथने को हेतुरित्यत आह **अज्ञानामिति** ॥ तदपि स्वस्य परमाक्षरत्वमपि ।

**गीतातात्पर्यनिर्णयः**

**पुनरहमिति नोक्तमित्याशङ्क्य ''अव्यक्तं व्यक्तिमापन्नम्'' इति विष्णावेव प्रयुक्तेन अव्यक्तशब्देन ''अव्यक्तोऽक्षर इत्युक्तः'' इति परिह्रियते ।**

*न्या०दी०*— ननु ये परमाक्षरं विष्णुरिति न जानन्ति तेषामहं ब्रह्मेति नोक्तम् । अक्षरं ब्रह्मेत्येवोक्तम् । अतो ब्रह्म अक्षरं च भगवतोऽन्यदेवेत्याशङ्कैव स्यान्न तु परमाक्षरं ब्रह्म च भगवानिति ज्ञानमित्यत आह **पुनरिति** ॥ सत्यमेव शङ्का भवतीति । सा च ''अव्यक्तोऽक्षर इत्युक्तः'' इत्युपर्यक्षरस्याव्यक्तत्वोक्त्या परिह्रियते । ''अव्यक्तं व्यक्तिमापन्नं मन्यन्ते माम्'' इत्यव्यक्तशब्दस्य भगवति प्रयुक्तत्वात् । अतः ''अक्षरं ब्रह्म परमम्'' इति परिहारे अहमित्युक्तादपि लाभसम्भवात् तथा परिहारो युक्त इति भावः ।

**गीतातात्पर्यनिर्णयः**

**''ये चाप्यक्षरमव्यक्तम्'' इत्यत्र तु पृथक् प्रश्नादुपासकयोः फलतारतम्यकथनात् ''कूटस्थोऽक्षर उच्यते'' इत्युक्त्वा ''अक्षरादपि चोत्तमः'' इति विष्णोः उत्तमत्वकथनाच्च अन्यदेवेत्यवसीयते ।**

*प्रका०*— अत्रोत्तरवाक्यम् ''अक्षरं ब्रह्म परममि''ति । तदुपपादयति **परमाक्षरमित्यादिना** । परमाक्षरं ब्रह्मेत्युक्तं विष्णुना न त्वहमिति । एषा परमाक्षरशब्दार्थाज्ञस्य मन्दस्याशङ्का अव्यक्तोऽक्षर इत्युक्तस्तमाह **परमां गतिमिति** । परिह्रियते । अक्षरशब्दान्निर्दिष्टो यः पूर्वमसावव्यक्त इत्यव्यक्तशब्दस्य ''अव्यक्तं व्यक्तिमापन्नं मन्यन्ते माम्'' इति विष्णौ मुख्यतया प्रयुक्तत्वादुत्तरत्र ''ये

चाप्यक्षरमव्यक्तमि''त्यत्र चाक्षरशब्दस्य विष्णुविषयत्वमपोद्यते । तथाहि । ''एवं सततयुक्ता ये भक्तास्त्वां पर्युपासते । ये चाप्यक्षरमव्यक्तं तेषां के योगवित्तमाः'' इति पृथक्प्रश्नात् । ''ये त्वक्षरमनिर्देश्यमव्यक्तं पर्युपासते । ते प्राप्नुवन्ति मामेव सर्वभूतहिते रताः । क्लेशोऽधिकतरस्तेषामव्यक्तासक्तचेतसाम् । ये तु सर्वाणि कर्माणि मयि संन्यस्य मत्पराः । अनन्येनैव योगेन मां ध्यायन्त उपासते । तेषामहं समुद्धर्ता मृत्युसंसारसागरात् ।'' इत्यक्षरोपासकयोः फलतारतम्यकथनात् अक्षरशब्दस्य विष्णुविषयत्वनिषेधो युक्तः । ''कूटस्थोऽक्षर उच्यते । यस्मात्क्षरमतीतोऽहमक्षरादपि चोत्तम'' इत्यक्षराद्विष्णोरुत्तमत्वकथनात् । अत्रापि अक्षरशब्दार्थस्य विष्णुत्वनिषेधो युक्त इत्यर्थः ।

***न्या०दी०***— यद्यक्षरशब्दो विष्णावेव मुख्यस्तर्हि ''ये चाप्यक्षरमव्यक्तम्'' इत्यत्र, ''कूटस्थोऽक्षर उच्यते'' इत्यत्र च अक्षरशब्दवाच्यो विष्णुः स्यादित्यत आह **ये चेति** ॥ अक्षरशब्दस्य विष्णौ मुख्यत्वेऽपि ''ये चाप्यक्षरमव्यक्तम्'' इत्यत्र तावद्विष्णोरन्यदेव अक्षरशब्दवाच्यमित्येवावसीयते । ''ये भक्तास्त्वां पर्युपासते'', ''ये चाप्यक्षरम्'' इति भगवदक्षरयोः पृथक्त्वेन तदुपासकयोस्तारतम्यस्य पृष्टत्वात् । ''ये त्वक्षरमनिर्देश्यम्'', ''ये तु सर्वाणि कर्माणि'' इत्यादिनाऽक्षरोपासकानां भगवदुपासकानां च फलतारतम्यस्य कथनाच्च । तथा ''कूटस्थोऽक्षर उच्यते'' इत्यत्रापि विष्णोरितरदेवाक्षरमित्यवसीयते । ''अहमक्षरादपि चोत्तमः'' इति विष्णोरक्षरादुत्तमत्वकथनात् मुख्यार्थासम्भवे गौणाङ्गीकारस्य न्याय्यत्वात् । प्रकृते तु बाधकाभावाद्विष्णुविषयत्वमेवेति भावः ।

***भा०दी०***— **तारतम्यस्येति** । ''के वा युक्ततमा मता'' इत्यनेनेति भावः ॥ **प्रकृते त्विति** । ''अक्षरं ब्रह्म परमम्'' इत्यत्रेत्यर्थः ॥

**गीतातात्पर्यनिर्णयः**

## ''अधियज्ञोऽहमेव'' इति साधियज्ञमित्युक्त्या प्राप्तभेदनिवृत्त्यर्थम् ।

***न्या०दी०***— नन्वधियज्ञब्रह्मणोऽपि विष्णुत्वे तत्र ब्रह्माहमेवेत्यनुक्त्वा अधियज्ञोऽहमेवेति किमर्थमुच्यते ? कारणविशेषमन्तरेणोक्तिभेदासम्भवात् । अतोऽधियज्ञ एव विष्णुर्न ब्रह्मेत्यत आह **अधियज्ञ इति** ॥ ब्रह्माधियज्ञोरुभयोर्विष्णुत्वेऽपि ब्रह्माहमेवेत्यनुक्त्वा अधियज्ञोऽहमेवेति कथनं युज्यते । ''साधियज्ञं माम्'' इति भगवता स्वस्याधियज्ञ-साहित्येनोक्तत्वात् अधियज्ञो भगवतो भिन्न एवेत्याशङ्का प्राप्ता । तन्निवृत्त्यर्थत्वादहमेवेत्युक्तेः । तदित्युक्त्या ब्रह्मणो भगवदन्यत्वशङ्काप्राप्तावपि मामित्यनेन तस्याः प्राज्ञबुद्धिमपेक्ष्य निरस्तत्वेन तत्राहमेवेत्युक्त्यभावादिति भावः । एतेन ''एवं बहुविधा यज्ञा वितता ब्रह्मणो मुखे'' इत्युक्तत्वादधियज्ञप्रश्नपरिहारौ प्राप्तिशून्याविति च निरस्तं भवति ।

*भा०दी०*— **मामित्यनेनेति** । "साधिभूताधिदैवं माम्" इत्यनेनेत्यर्थः ॥ **एतेनेति** । साहित्योक्त्या प्राप्तेरुक्तत्वेन इत्यर्थः ॥

**गीतातात्पर्यनिर्णयः**

**तस्यैव सर्वप्राणिदेहस्थितरूपान्तरापेक्षया सहितत्वं युज्यते ।**

*प्रका०*— अधियज्ञस्य विष्णोः साधियज्ञत्वं दर्शयति **तस्यैवेति** । 'अक्षरं ब्रह्मे'त्याद्यधियज्ञोऽहमित्येतदन्तं स्पष्टयति वचनान्तरेण ।

*न्या०दी०*— भगवानेवाधियज्ञश्चेत् कथं तत्साहित्यं प्रागुक्तमित्यत आह **तस्यैव इति** । भगवत एवाधियज्ञत्वेऽपि तत्साहित्यं युज्यते । अधियज्ञस्य सर्वप्राणिदेहगतरूपान्तरत्वादिति भावः । अनेन देह इत्यस्याभिप्रायो वर्णितो भवति ।

*भा०दी०*— **अनेनेति** । साहित्यनिर्वाहाय अधियज्ञाख्यरूपस्य सर्वप्राणिदेहगतरूपान्तरत्वकथनेन इत्यर्थः । देहे इत्युक्त्यैव तल्लाभादिति भावः ॥

**गीतातात्पर्यनिर्णयः**

**"प्राणिनां देहगो विष्णुरधियज्ञ इतीरितः ।**
**स एव व्याप्तरूपेण ब्रह्मेति परिकीर्त्यते ॥**
**तैस्तैरधिकयाज्यत्वाद् बृंहितत्वाच्च हेतुतः ।**
**अध्यात्मं तत्स्वभावो यदधिकः परमात्मगः ॥**
**पुंसां स जडभावानां सर्गः कर्म हरेः स्मृतम् ।**
**भूताधिकत्वतो जीवा अधिभूतमितीरिताः ॥**
**अधिको दैवतं विष्णुरेव यस्यास्तु सा रमा ।**
**पुरुप्राणाऽधिदैवाख्या त्विति ज्ञेयमिदं नरैः ॥"**

**—इति तत्त्वविवेके ।**

*प्रका०*— **प्राणिनामित्यादिना** । "भूतभावोद्भवकर" इत्यत्र भूतशब्दवाच्यानां पुंसामिति ज्ञातव्यम् । "अधिभूतं क्षरो भाव" इत्यस्य भूतमधिकृत्य वर्तते इति अधिभूतं पृथिव्यादि । जडभूताधिकारे जीवाक्षरभावशब्दाभिधेया इत्यर्थः । "पुरुषश्चाधिदैवतमि"त्यत्र पुरुषशब्दाभिधेया रमा ।

पुरुप्राणात्वात् । 'णकारो बलं षकारः प्राण आत्मे'ति श्रुतेः । 'कविं पुराणमनुशासितारमि'त्याद्यया तल्लक्षणोक्त्येति ज्ञातव्यम् ॥

*न्या०दी०*— अत्र प्रमाणं दर्शयन् भगवत एव ब्रह्मत्वे कथं तदित्युक्तिरित्याशङ्कां च परिहरन् श्लोकद्वयं स्मृत्यैव व्याचष्टे **प्राणिनामिति** ॥ ब्रह्मणः सर्वगतरूपान्तरत्वात् तदित्युक्तिर्युक्तेति भावः । तैस्तैः सर्वप्राणिभिरधिकयाज्यत्वादधियज्ञो, बृंहितत्वात् ब्रह्मेत्यर्थः । भूताधिकत्वत इत्यत्र भूतपदेन पृथिव्यादीनि पुरुप्राणाऽतः पुरुषाख्येति शेषः । "षकारः प्राण आत्मा" इति श्रुतेः ।

*भा०दी०*— **कथं तदुक्तिरिति** । अक्षरं ब्रह्मेत्युक्तिः किं ब्रह्मे(त्युक्त)ति प्रश्नस्य कथमुत्तरमित्यर्थः । पुरुप्राणा विश्वचेष्टा भवतीति विश्वप्रेरिकेति यावत् ।

**गीतातात्पर्यनिर्णयः**

**कथंरूपोऽधियज्ञ इति प्रश्नस्तु "अहमेव" इत्युक्तत्वात् तल्लक्षणोक्त्यैव परिहृतः ॥ ३-४ ॥**

*न्या०दी०*— ननु "अधियज्ञः कथं कोऽत्र" इत्यत्र कुतोऽधियज्ञः कथंरूप इति प्रश्नः कस्मान्न परिहृत इत्यत आह **कथंरूप इति** ॥ **तल्लक्षणोक्त्येति** । "कविं पुराणम्" इति भगवल्लक्षणोक्त्येत्यर्थः । भगवल्लक्षणोक्त्या कथमधियज्ञस्वरूपप्रश्नः परिहृत इत्यत उक्तम् **अहमेवेति** ॥ "अधियज्ञोऽहमेव" इत्यधियज्ञस्य भगवदभिन्नत्वेनोक्तत्वादित्यर्थः ॥

*भा०दी०*— **इति भगवल्लक्षणोक्त्येति** । अत्रैवोपरीति ज्ञेयम् । **भगवदभिन्नत्वेनोक्तत्वादिति** । तथा चाधियज्ञाभिन्नस्य भगवतः कवित्वादिप्रकारोक्त्या तदभिन्नोऽधियज्ञोऽपि कवित्वादिप्रकारोपेत इति लाभादिति भावः ॥ ४ ॥

**गीता**

**अन्तकाले च मामेव स्मरन्मुक्त्वा कलेवरम् ।**
**यः प्रयाति स मद्भावं याति नास्त्यत्र संशयः ॥ ५ ॥**

*वि०वि०*— प्रयाणकालेऽपि किमर्थं स्मर्तव्योऽसि, इत्यत्र परिहारमाह **अन्तकाल इति** । अन्तकाले मामेव स्मरन् देहं त्यक्त्वा यः प्रयाति स मद्भावं मयि सत्तां निर्दुःखनिरतिशयानन्दात्मिकां याति ॥

*वा०ल०*— 'मद्भावं याति' इत्यत्र मयि भावं भक्तिः । मयि सत्तां वा मद्भावम् । स्वभावसारूप्यं वा सद्भावम् ॥

*सा०सं०*— अन्तकाले च किमर्थं स्मर्तव्योऽसीति प्रश्नस्योत्तरमाह **अन्तकाले चेति** । **अन्तकाले** मृतिकाले । **मामेव स्मरन्** । **कलेवरं** देहम् । **त्यक्त्वा यः प्रयाति स मद्भावं** मयि निर्दुःखनिरतिशयानन्दानुभवात्मिकां सत्तां **याति** । सन्देहोऽत्रार्थे नास्तीत्यर्थः । निर्दुःखनिरतिशयानन्दाभिव्यक्तिरूपमद्भावप्राप्त्यर्थं मत्स्मरणमन्तकाले कार्यमित्युक्तं भवति ॥

*अ०प्र०*— अन्तकाले किमर्थं स्मर्तव्योऽसीत्यस्य परिहारमाह, ज्ञानोपायतत्फलं च दर्शयति **अन्तकालेति** ।

अन्तकाले[१], मामेव[२-३], स्मरन् सन्[४], कलेवरं[५], मुक्त्वा[६], यः प्रयाति[८], सः[९], मद्भावं[१०] याति[११] अत्र च[१२], संशयः[१३], नास्ति[१४] इत्यन्वयः ।

अन्तकाले = देहविसर्जनसमये[१], मामेव = उक्तलक्षणमन्तर्यामिरूपं समाहितचित्तो भूत्वा परमेश्वरं मामेव[३], स्मरन् = ध्यानं कुर्वन् सन्[४], 'स्मर्तव्यः सततं विष्णुरन्तकाले विशेषतः' कलेवरं = देहं[५], मुक्त्वा = सन्त्यज्य[६], यः = पुरुषः प्रयाति = प्रकर्षेण अर्चिरादिमार्गेण याति[८], सः पुरुषः[९], मद्भावं याति = मद्वद्भावं नित्यादुःखमानन्दरूपं प्राप्नोति । वस्तुतः पूर्वमेव मद्भजनशीलत्वादन्तकाले मन्नामस्मरणस्मृतिर्लब्ध्वा मत्समीपे मद्वद्भावं प्राप्य तिष्ठतीत्यर्थः[११] अत्र संशयो नास्ति = अस्मिन्नर्थे सर्वथा संशयो नास्ति[१२-१४], स्मरणं ज्ञानोपायः ज्ञानं मद्वद्भावापत्तिश्च फलमित्यर्थः । न केवलं मां स्मरन् मद्भावं प्राप्नोतीति नियमः ॥ ५ ॥

**भाष्यम्**

**मद्भावं मयि सत्ताम् । निर्दुःखनिरतिशयानन्दात्मिकाम् । तच्चोक्तम्— "मुक्तानां च गतिर्ब्रह्मन् क्षेत्रज्ञ इति कल्पितः ॥" इति मोक्षधर्मे ॥ ५ ॥**

*प०टी०*— 'मद्भाव'पदमन्यथाप्रतीतिनिरासाय व्याचष्टे **मद्भावमिति** । कथं सर्वेश्वरसादृश्यं जीवस्य ? इत्यत आह **निर्दुःखेति** । मयि सत्ताम् इति पाठे तु सर्वेषामपि भगवदाश्रयत्वात् को विशेषः ? मुक्तानामित्याशङ्क्याह **निर्दुःखेति** । प्रतीतार्थ एव किं न स्यात् ? इत्यत आह **मुक्तानां चेति** ॥

*प्र०दी०*— 'मद्भावं' इत्यस्य मदात्मकत्वं इत्यन्यथाप्रतीतिनिरासायाह— **मद्भावमिति** । ननु भगवति स्थितिः सर्वदाऽस्ति । सा कथं फलमित्यतो विशिनष्टि— **निर्दुःखेति** । क्वचित्पाठो

मद्भावं मद्भद्भावं इति । तत्र भगवत्प्रतिबिम्बानां जीवानां तत्सादृश्यं सदाऽस्ति । तत्कथं प्राप्यमुच्यत इत्यत उक्तम्— **निर्दुःखेति** । अत्रात्मकमिति पाठः । अभिव्यक्तमिति शेषः । प्रतीत एवार्थः किं न स्यादिति चेन्न । मुक्तानां भगवदाश्रितत्वेन तद्भावायोगात् । तदपि कुत इत्यत आह— **तच्चेति** । क्षेत्रज्ञः परमात्मा गतिरिति समर्थितः ॥

***भा०दी०***— **अत्रेति** । मद्भद्भाव इति पक्षे इत्यर्थः । भावपदस्य पुल्लिङ्गत्वादिति भावः । कल्पितपदार्थः **समर्थित इति** ॥

***भा०र०***— **परिहारम्** "अधिभूतं च किम्" इति प्रश्नस्य "यः क्षरो भावः" इति परिहारः, तम् । "युक्ते क्ष्मादौ ऋते भूतं प्राण्यतीते समे त्रिषु" इत्यमरकोशः । 'प्राण्यतीते' इत्यत्र 'प्राणी' इति प्रथमान्तं छित्त्वा सकलमपि शरीरि रूपभेदादेव नपुंसकलिङ्गभूतशब्दवाच्यमिति सुभूतिचन्द्रो व्याचष्टे । ततो "भूतानि = सशरीरान् जीवान्" इति भाषणं भद्रम् । श्रूयते च "तं भूतान्यभ्य-क्रोशन्" (कृ.य.का.२, प्र.५, अनु.१) इति । तत्र भाष्ये ल्यबन्वयाय शेषमाह **वर्तत इति** । **वक्ष्यमाणं** पञ्चदशेऽध्याये (१५.१६) "क्षर=विनाशसन्ततदानयोः" इति धातोराह **क्षरशब्देति** । भावशब्देन कथं कार्यस्य ग्रहणम् ? इत्यतो व्युत्पाद्य दर्शयति **भवत्युत्पद्यत इतीति** । धातूना-मनेकार्थत्वाद् उत्पत्त्यर्थाद् भवतेः कर्तरि णप्रत्यये 'भावः' इति रूपम् । तथा च वैयाकरणाः "धान्यानां भवने" इति सूत्रे भवन्ति = उत्पद्यन्ते धान्यानि अस्मिन्निति भवनमिति । सत्ताद्यर्थ-निर्देश उपलक्षणम् । "यागात् स्वर्गो भवति" इत्यादौ 'उत्पद्यते' इत्यर्थावगमादिति चेति द्रष्ट-व्यम् । "अधिभूतं किम्" इति प्रश्नस्य "क्षरो भावः" इत्युक्तं घटयितुं "विनाशी कार्यः पदार्थः" इति भाषितम् । नैतद्युक्तम् । शरीरप्रागभावस्य दुरितध्वंसस्य च शरीरजीवोपकारितयाऽधिभूत-शब्दार्थान्तर्गतत्वेन तयोरपि विनाशिकार्यत्वाभावेनाव्यापकत्वात्, इत्यत आह **उत्पत्तिमान् पदार्थ इति** । अनेन "भावो भावः" इति, "क्षरो भावः" इति च भावशब्दावृत्तिः । उक्तप्रागभावध्वंसावपि विनाशोत्पत्तिमन्ताविति नाव्यापकतोत्तरस्येत्युक्तं भवति । तदेव दर्शयति **प्रत्येकमिति** । "क्षरो भावः", "भावो भावः" इति प्रत्येकमित्यर्थः । "क्षरः सर्वाणि भूतानि" (१५.१६) इति वक्ष्य-माणक्षरव्यावृत्तिः कस्मात् क्रियते ? इत्यत आह **सर्वभूतानामिति** । भूतशब्दितजीवानाम् "स्वाख्यो भावः" (गी.भा. ८.३) इति द्वितीययोजनायाम् अध्यात्मशब्दवाच्यत्वेन प्राप्तानां क्षरशब्देन ग्रहणे पुनरुक्त्यापत्तेरिति भावः ।

**अधिकृत्य** 'तदुपकारित्वेन' इति वर्तते । **उक्तत्वादिति** । "असतः कारणस्याव्यक्तस्याभावो न विद्यते" (२.१६) इति द्वितीये प्रागभावप्रध्वंसाभावयोरभावस्योक्तत्वादित्यर्थः । **अव्यापकम्**

विवक्षितसर्वार्थाविषयम् । "अव्यक्तस्याधिभूतान्तभवि" इत्यन्तं व्याख्यानम् । 'अपि' इत्यादि-शेषोक्तिः । अन्यशब्दः परवचनः, थाल्प्रत्ययश्च प्रकारार्थः, भावशब्दोऽवस्थापत्तिवाची, इत्यक्षरार्थ-मभिप्रेत्य परप्रतियोगिभूतपूर्वभावं वदन्, अन्यं च विवक्षितभावं दर्शयन्, 'नाव्यापकम्' इति साध्ये हेतुसमर्पकत्वं च शेषोक्त्या आह **अन्यथेत्यादिना** । "कार्यम् वा" इति चोद्यं निरसितुं वक्ष्यमाण-प्रमाणद्वयानुसारेण भाष्यं संयोजयति **तथा विक्रियेति** । **उभयत्र** विनाशे जन्मनि च ।

प्रसिद्धाकाशस्याव्यक्तलयाधिकरणत्वायोगाद् व्योमशब्दे गौणीं वृत्तिमाश्रित्य तद्गुणं दर्शयति **व्योम्नि व्याप्त इति** । यद्वा "व्योमेति व्याप्तशब्दः स्याद् विशेषद्योतनाय ते" (श.नि.) इति एका-दशतात्पर्योदाहृतशब्दनिर्णयाभिधानाद् व्योमशब्दो व्याप्तवाचीत्याह **व्योम्नि व्याप्त इति** । अनेन "सर्वत्र व्याप्तस्याव्यक्तस्य कथं परिमिते परमेश्वरे लयः" इति शङ्का परास्ता । **प्राचीनटीकायां तु** "ब्रह्मैव परमं व्योम" इत्युक्तम् । कणलवादिसृष्टेस्तदाऽपि सद्भावात् 'प्रचुर' इत्युक्तम् । नित्यत्वे-नावगतस्याव्यक्तस्य कथमुत्पत्तिः ? इत्यतस्तद् घटयितुमुक्तं भाष्ये **त्रिगुणमिति** । सत्त्वरजस्तमो-गुणवत्स्वरूपेणोत्पत्त्यभावेऽपि गुणत्रयोत्पत्त्या उत्पत्तिमदुच्यत इत्यर्थः । "सहस्रशीर्षा पुरुषः" (ऋ. १०.९०.१ मं.), "पुरुषो ह वै नारायणः" (ना.उ.) इत्यादिश्रुतिप्रसिद्धत्वादाह **पुरुषः परमात्मेति** । **ब्रह्माधियज्ञशब्दाभ्यामिति** । "अक्षरं ब्रह्म परमम्" (८.३) इत्यत्र ब्रह्मशब्देन, 'अधियज्ञोऽहम्' (८.४) इति चाधियज्ञशब्देनाप्युक्त इत्यर्थः । माहात्म्यातिशयलिप्सया ब्रह्मशब्दो-दितस्यापि भगवतोऽधियज्ञशब्दोक्तत्वेऽपि न पुनरुक्तिशङ्केति भावः । "पिपर्ति पूर्यते वा इति पूः = शरीरम्" इति योगम्, "पूर्देहे नगरे बुद्धौ" (के.को.) इत्यभिधानं चाभिसन्धायाह **शरीर इति** ।

ननु "पुरि शेते" इति व्युत्पत्तिपक्षे कथं "पुरुषः" इति रूपम् ? इत्यत आह **अधिकरणे शेतेरिति ड इति** । 'इति' इत्यनन्तरं 'वार्तिकव्याख्यानेन' इति शेषः । "गिरौ डश्छन्दसि" इति वार्तिकस्य 'गिरौ' इत्यस्याधिकरणसामान्योपलक्षणत्वम्, "अधिकरणे शेतेः" इति सूत्रात् 'शेतेः' इत्यनुवृत्तिं च परिगृह्य व्याख्यानं कार्यम् । अन्यथा यथाश्रुतगिरिशब्दमात्रस्योपपदत्वाङ्गीकारे "पुरु-संज्ञे शरीरेऽस्मिन् शयनात् पुरुषो हरिः" इति, "यस्मात् पुर्यनुशेते च तस्मात् पुरुष उच्यते" इति, "भूतैर्महद्भिर्य इमाः पुरो विभुर्निर्माय शेते यदमूषु पूरुषः" (भाग. २.४.२३) इत्यादिषु च पुराणेषु, "स हि सर्वासु पूर्षु शेते" इत्यादिश्रुतिषु च पुरि शयनेन निमित्तेनावेदितं यत् पुरुषत्वं तत् निर्व्यूढं न स्यात् । तत्र गिरिशब्दस्यानुपपदत्वेन शेतेर्डप्रत्ययायोगात् । ततः कर्तव्यम् "अधिकरणे शेतेः डो वक्तव्यः" इति व्याख्यानम् । तथा च "अधिकरणवाचिनि 'पुरि' इत्यस्मिन्नुपपदे" "शीङ् = स्वप्ने" इति धातोः डप्रत्ययो वक्तव्य इति वचनव्यक्तिः सम्पद्यते, तेन च पुरुषशब्दनिष्पत्तिः ।

न च वक्तव्यम् "अधिकरणे शेतेः" इति सूत्रस्यैवायमनुवादः किन्न स्यात् ? इति । तस्य अच्प्रत्ययविधायकत्वेन डप्रत्ययाविधायकत्वात् । अत एव 'खशयः' इत्याद्युदाहृतं वृत्तौ । यत्र "अधिकरणे शेतेरिति डः" इति टीकायाम् इतिशब्दपाठं प्रामादिकमभ्युपगम्य "अधिकरणे सुप्युपपदे शेतेः "अन्येष्वपि दृश्यते" इति डप्रत्ययः" इति **व्याख्यानम्**, तत्र टीकाकारेषु सर्वज्ञकल्पेषु प्रमादकल्पनम्, "अन्येष्वपि दृश्यत इति शेतेर्डः" इति पाठापत्तिः, प्रतिपदोक्तस्याप्यच्प्रत्ययस्य डप्रत्ययापवादकत्वानादरः, "अधिकरणे शेते" इति शास्त्रेण डप्रत्ययानभिसन्धाने "अधिकरणे शेतेः" (अ.व्या. १.१.१६. सू., २०४ श्लो.) इति सुधावचनास्वारस्यम् । "अधिकरणे शेतेः" इति सूत्रे "गिरौ डः" इति वार्तिकं नारम्भणीयम् । "अन्येष्वपि दृश्यत इति डः" इत्युक्तरीत्यैव 'गिरिशः' इति रूपस्यापि निर्वोढुं शक्यत्वात् । भाष्यकैयटयोः वृत्तिमञ्जर्योराधुनिकग्रन्थे वा क्वाप्यनुल्लिखितस्य "अन्येष्वपि दृश्यते" इति डप्रत्यये 'पुरुषः' इति रूपमित्यस्य कल्पनं च स्यादिति दोषापत्तिः ।

**यच्च** " 'अधिकरणे शेतेः' इति सूत्रस्य डप्रत्ययविधायकत्वमप्यस्तीति अर्थान्तराभिप्रायेणात्रोदाहरणम् । न च डप्रत्ययोऽसन्निहित इति कथं तद्विधायकत्वमस्येति शङ्क्यम् । 'गिरौ डः' इति वार्तिके सन्निहितत्वात्, तस्य चैतत्सूत्रीयत्वात्" इति । तत्रापि वार्तिकस्य सूत्रोपजीवकतया तत्रोक्तस्य सूत्रे संयोजनस्यानुचितत्वम्, वैयाकरणमर्यादाऽतिलङ्घनं च स्यादिति । ननु धातोर्डप्रत्यये समासे सुब्लोपे "पूः शः" इत्येव स्यात्, न तु 'पुरुषः' इति ? इत्यत आह **वर्णागम इति** । उपपदगतरेफस्य उकारागमे धातुशकारस्य षकारलक्षणे विकारे च 'पुरुषः' इति शब्दो व्याकरणसंस्कृत इत्यर्थः । "वर्णागमो वर्णविपर्ययश्च" इत्यत्र विकारस्यानुक्त्या शकारस्य षकारतया विकारो न प्राप्नोति ? इत्यत उक्तम् **इत्यादिनेति** । "तथा वर्णविकारनाशौ" इति वचनशेषे विकारोऽप्युक्त इति, युक्तमेवोक्तं रूपमिति भावः । "पुरि शेते यतस्सोऽथ पुरुषः" (अ.व्या.२०४, ब्र.सू.१.१.१६) इत्यानन्दमयानुव्याख्यानसुधायाम् "अत्रोपपदस्य सप्तम्या अलुक्, तस्य चेकारस्योकारः, धातुशकारस्य षकारो निर्वचनत्वात् । 'अधिकरणे शेतेः' इति अलुगादिकमभ्युपगम्य पुरुषशब्दनिष्पत्तिः" अभिहिता, तत्र "अधिकरणे शेतेः" इत्यनन्तरम् अत्रेव "इति डः" इति वक्तव्यम् । न च सुधायामिवात्राप्यलुक् कस्मान्नाश्रित इति वाच्यम् । "उपेयप्रतिपत्त्यर्था उपाया अव्यवस्थिताः" इति न्यायेन, उपायस्योपायान्तरादूषकत्वात् । अस्ति चात्रैवं व्याख्यानेन विशेषावगतिः । यतः "निर्माय शेते यदमूषु पुरुषः" (२.४.२३) इति भागवतादिप्रयोगः सुधया न सिद्ध्यति । सप्तमीबहुवचनान्त उपपदे उकारस्यानवकाशात् । "पुरि शेते" (अ.व्या. २०४)

इत्यनुव्याख्याने उपपदे इकारस्य सत्त्वात्, तथा व्याख्यानं कृतं भाष्यादौ । "शेतिधात्वर्थः शयनम्", "शेते आस्ते" इति मञ्जर्युक्तेः, "सर्वासु पूर्षु वर्तमानः" (प्र.दी. ८.८) इति टीकायां वक्ष्यमाणत्वाच्चावस्थानमेवेति ज्ञातव्यम् । **तथाऽपि** पुरुषशब्दस्य जीवार्थकत्वेऽपि । **गतार्थमिति** । "आत्माऽधिकारे यत्तदिति वा" (गी.भा. ८.१) इति जीवस्याध्यात्मशब्दार्थत्वेन भाषितत्वादिति भावः । ननु भाषितव्युत्पत्तेः साधारणत्वात् कथं जीवविशेषलाभः ? इत्यत आह **सर्वेति** । साधारणस्यापि पुरुषशब्दार्थकजीवशब्दस्य निर्विशेषत्वात्, "मुख्यस्य निर्विशेषेण शब्दः" इति न्यायात्, अभिमान्यधिकरण (ब्र.सू.अ. २.१.३) न्यायाच्च ब्रह्मसङ्कर्षणार्थत्वमिति भावः । **तस्य** सर्वजीवाभिमानिनः सङ्कर्षणस्य ब्रह्मणश्च । ल्यबुपपत्तये आह **वर्तत इति** । देवाधिकारशब्देनापि ग्रन्थविशेषो ग्राह्य इति ज्ञापयितुमाह **तत्प्रकरणस्थ इति** । अस्यार्थः **मुख्यतः प्रतिपाद्य इति** । तथा च "नेतरो जीवोऽत्र ग्राह्यः" इति भावः । देवा एव हि देवाधिकारे प्रतिपाद्या वक्तव्याः, न तद्विशेषौ ब्रह्मसङ्कर्षणौ ? इत्यतः तत्पक्षाभ्युपगमेनाह **सर्वदेवतेति** । एवं च "अधिदैवतं देवाधिकारगं सर्वम्" (स्का.) इति प्रमाणमनुकूलितं भवति । अस्मिन् पक्षे "देववर्ग इति भाष्ये शेषः" इत्यपि उचितम् । **अक्षरार्थस्तु पूर्ववदिति** । अध्यात्मशब्दस्य द्वितीयव्याख्याने अध्यात्मे = आत्माधिकारनामके ग्रन्थ इति यथाऽक्षरार्थः प्रागुक्तः, तथाऽत्र 'अधिदैवतम्' इत्यस्य "अधि-दैवते देवाधिकारसंज्ञके ग्रन्थे" इत्येवाक्षरार्थः । 'तत्स्थः' इति तु यत् प्रतिपाद्यं तद् अध्यात्म-मितिवत्, अत्रापि शेषपूरणेन सप्तम्यन्तमुपादाय व्याख्येयमित्यर्थस्य स्फोरणायैवोपात्तम्, न पुनरक्ष-रार्थतया । तेन "अधिदैवतम् इत्यस्य रूढियोगाभ्यां देवाधिकारमात्रार्थकत्वेन तत्प्रतिपाद्यार्थक-त्वाभावाद्, भाष्ये 'देवाधिकारः' इत्यनुक्त्वा तत्स्थपर्यन्तधावनं किमिति कृतम् ?" इति चोद्यं निरस्तमिति विभावितमिति **आहुः** । सर्वदेवानां पुरुषशब्दार्थत्वं कथम् ? इत्यतो वा आह **अक्षरेति** । **पुरि** स्वशरीरे प्रेरकतया, अन्यशरीरे च, **शयनाद्** अवस्थानात् पुरुषो देववर्ग इति पूर्ववदेवार्थ इत्यर्थः ।

**प्राचीनटीकायां तु** वक्ष्यमाणप्रकारेणाधिदैवतपदमुख्यार्थो भगवानेवेति, 'पुरुषश्चाधिदैवतम्' (८.४) इत्यत्र पुरुषो जीवोऽप्यधिदैवतमिति व्याख्येयम् । तत्कथं युज्यते ? पुरुषशब्दस्य भगवत्येव मुख्यत्वादित्यत आह **पुरीति** । पुरि शयनेन हेतुना जीव एवात्र पुरुषशब्देन विवक्षितः, न पूर्णत्वादिना परमपुरुष इत्यर्थः । सोऽपि न जीवमात्रम्, किन्तु तदभिमान्येवेत्याह **स चेति** । एवं पुरुषशब्दवाच्ये अहीशे के चाधिदैवतपदं योजयति **स इति** । यद्वा पुरि शयनात् सर्वो देवः पुरुषः, स च देवाधिकारस्थितत्वाद्, अधिदैवतपदार्थ इति भावेनाह 'देवेति' इत्येवं "पुरि शयनात्

पुरुषो जीवः", "स च सङ्कर्षणो ब्रह्मा वा","स सर्वदेवानधिकृत्य पतिरित्यधिदैवतम्", "देवाधिकारस्थ इति वा" इति च चत्वारि भाष्यवाक्यानि व्याख्याय, यद्वर्णितं प्रकारद्वयेन 'पुरुषश्चाधिदैवतम्' इति तद्द्वयम् इन्द्रियदेवापेक्षयाऽपि युज्यत इति भावेनाह **देवानिन्द्रियाण्यपेक्ष्येति** । इन्द्रियशब्दस्य तदभिमानिषु मुख्यत्वात् सामानाधिकरण्यम् । सङ्कर्षणब्रह्माणौ अहङ्कारचित्ताभिमानिनौ पूर्वत्र ब्रह्माण्डाख्यपुरि, अत्र तु देहाख्यपुरीति विवेकेन पुरुषत्वमपि ।

एवमुक्तलक्षणः पुरुषोऽप्यधिदैवतं कथञ्चित् । मुख्याधिदैवतं तु भगवानेव, 'सर्वदेवेश्वरेश्वरः' (गी.क.) इत्यत्र सर्वदेवानि = इन्द्रियाणि, तेषामीश्वराः = देवाः, तेषामीश्वरः = हृषीकाधिनाथो नारायण इति वक्ष्यमाणप्रमाणेऽवगमादित्येवं **टीकायाम् अव्याख्यातमपि** देवानिन्द्रियाण्यपेक्ष्य" इति भाष्यं व्याख्यातम् । तत्र देवशब्दस्येन्द्रियार्थत्वपक्षे 'देवमिन्द्रियम्' इति क्लीबत्वाभिधानेऽपि भाष्यस्य छन्दस्तुल्यत्वाल्लिङ्गव्यत्ययः । "सुप्तिङुपग्रहलिङ्गनराणाम्" (म.व्या.) इति शास्त्राद् देवशब्दात् मत्वर्थीये अर्शआद्यच्प्रत्यये "देवान् देववत इन्द्रियाभिमानिनः **अपेक्ष्य** अधिकृत्य तत्प्रेरकत्वेन वर्तमानदेवोऽप्यधिदैवतमिति भाष्यं योजितं भवतीति भाति ।

**कथमित्यस्य** "केन प्रकारेणाधियज्ञः" इति प्रश्नस्य । "तत्प्रवर्तकत्वादि" इत्यत्रादिपदेन यज्ञफलप्रदत्वग्रहः । ननु 'अधियज्ञः' इति कथं पुल्लिङ्गप्रयोगः ? अव्ययीभावसमासे 'अव्ययीभावश्च' इति क्लीबताऽनुशासनात् । न चात्र नाव्ययीभाव इति वाच्यम् । अध्यात्मादिशब्दसहचरितत्वेन तत्त्वावश्यंभावादित्यत आह **नाध्यात्मादीति** । "येनाम्भावः, क्लीबत्वं च शङ्क्चेत" इति शेषः । 'यज्ञम्' इत्यनन्तरम् 'अधियज्ञः' इति योज्यम् । समासप्रापकं शास्त्रमवगमयितुमुक्तं **प्रादिसमास इति** । "कुगतिप्रादयः" इति सूत्रे "अत्यादयः क्रान्ताद्यर्थे द्वितीयया" इति वक्तव्यात् प्रादिगणपठिताधिशब्दस्य अधिगत्यर्थे वर्तमानस्य द्वितीयान्तेन सह समासोऽनुशिष्ट इत्यर्थः । 'अत्यादयः' इत्यादिशब्दाद् अन्येऽपि "उद्गतो वेलाम् उद्वेलः" इत्यादयः प्रयोगानुसारतो ज्ञातव्या इति प्रसादादौ वैयाकरणैरभिधानात् समास इति भावः । एतेन " 'प्रादिसमासः' इति कथम् ? 'प्रादयो गताद्यर्थे प्रथमया' इति प्रादीनां प्रथमान्तेनैव समासानुशासनात्, अत्र च द्वितीयान्तेन समासाभ्युपगमात्" इति चोद्यं निरस्तम् । प्रादिगणे पठितोपसर्गस्यापि प्रादित्वाशयादिति । **बहुव्रीहिर्वेति** । अनेन च यज्ञाधिष्ठातृत्वलाभे भगवतो यज्ञभोक्तृत्वयज्ञप्रवर्तकत्वादि च सम्पद्यते । अध्यात्मादिशब्दसहपाठस्तु पुल्लिङ्गस्यान्यथैव निर्वाह्यत्वादकिञ्चित्कर इति भावः । 'अन्यः' इति भाष्ये प्रतियोग्युक्तिः **भगवत इति** । **प्रसिद्धः** "त्वं यज्ञेष्वीड्यः" (कृ.य.का.१, प्र.१, अनु.१४) इत्यादौ प्रसिद्धस्तेजोभूताभि-

मानिदेवतारूप इति भाष्यपदार्थः स्फुटत्वान्नोक्तः । "अग्न्यादिरपीषद्यज्ञभोक्तृत्वेन प्रसिद्धः" इति तु **प्राचीनटीका** ।

'इति' इतिपदमनूद्यानन्तरम् उपस्कर्तव्यमाह **इति सिद्धार्थतेति** ।

"प्रश्नदोषा हि चत्वारः स्वव्याहतिरसङ्गतिः ।

सिद्धार्थता च वैफल्यम् ........................।।" (अ.व्या.३.२.१३ श्लो.९८६)

इत्यनुव्याख्याने सिद्धार्थतायाः प्रश्नदोषत्वोक्तेः तद्व्यावृत्त्यर्थमित्यर्थः । **प्रश्नवाक्ये** "अधियज्ञः कः" इति प्रश्नवाक्ये । **उक्तं** "कोऽत्र देहः" इति गीतायाम् । एवमपि स्वदेहे अग्न्यादिस्थितेरपि विदित-त्वेन सिद्धार्थता ? इत्यत उक्तम् **कर्तृभोक्तृफलदातृणामिति** । **इति विशेषणम्** "भूतले घटः" इत्यादाविव 'देहे' इत्येतद्व्यावर्तकम् । 'उक्तम्' इत्यन्वयः । **उत्तरम्** "सर्वयज्ञभोक्तृत्वादेरधियज्ञः" इति सर्वयज्ञभोक्तृत्व-तत्प्रवर्तकत्व-तत्फलदातृत्वप्रकारैरित्येवमुत्तरं भाष्यकारेणाध्याह्रियत इत्यर्थः । **यज्ञतपसां** यज्ञानां तपसां च । **त्रैविद्यानुष्ठितयज्ञभोक्तृत्वाभावादिति** । यज्ञानुष्ठानकाले त्रैविद्यानां भगवत एव सर्वयज्ञमुख्योद्देश्यत्वज्ञानशून्यतया तद्दत्तं न भगवान् भुङ्क्ते इति हृदयम् । **सर्वेत्यनु-पपन्नमिति** । 'सर्वयज्ञभोक्तृत्वादेः' इति भाष्य इति योज्यम् । "मामिष्ट्वा स्वर्गतिं प्रार्थयन्ते" (९.२०) इत्युक्तेस्त्रैविद्यधर्मेष्वपि भगवानेवेज्यः, भोक्ता, फलप्रदश्चेति सिद्ध्यति । "येऽप्यन्यदेवता भक्ता यजन्ते तेऽपि मामेव यजन्ते" (९.२३) इति च त्रैविद्ययज्ञेज्यो भगवानेवेति 'त्रैविद्यानाम्' इत्यादिभाष्यं **प्राचीनटीकायां** व्याख्यातम् । "भगवद्भोगनिमित्तं हि फलम्" (प्र.दी. ९.२३) इत्यादिना नवमे टीकायां च व्याख्यास्यत इति तद्रीत्याऽपि त्रैविद्ययज्ञभोक्तृत्वं भगवतोऽस्तीति युक्तं 'सर्व' इत्युक्तमिति ।

**प्रवर्तकत्वे** सर्वयज्ञप्रवर्तकत्वे । **एतस्य** उक्तगुणकस्य **अक्षरस्य** अक्षराधिकरणन्यायेन (ब्र.सू.अ. १.३.३) अक्षरशब्दमुख्यार्थस्य भगवतः प्रशासनेनैव अनन्याधीनासङ्कुचिताज्ञानिमित्तेनैव **ददतः** दातॄन् मनुष्याः प्रशंसन्ति भगवदाज्ञयैव **यजमानं** देवान् पूजयन्तं देवाः प्रशंसन्तीति श्रुत्या सर्वयज्ञप्रवर्तकत्वं लभ्यत इति भावः । **यज्ञफलदातृत्वादौ** यज्ञफलभूतस्वर्गदातृत्वे, ज्ञानफलभूत-निःश्रेयसदातृत्वे च प्रमाणोक्तिः । नैःश्रेयससौख्यमपि ददतः स्वर्गादिसौख्यदातृत्वमस्तीति किमु वक्तव्यम् इति कैमुत्यन्यायप्रदर्शनायेति ज्ञातव्यम् । 'यावदिन्द्रः' इत्यादिना स्वर्गस्यानित्यत्वावगमात् कथं नित्यपर्यायध्रुवशब्देन विशेषणम् ? इत्यतो गौणोऽयं शब्द इत्याह **ध्रुवश्चिरन्तन इति** । 'अचतुरविचतुर' इत्यादिना निपातनान्निःश्रेयसशब्दोऽयमकारान्तः । ततः "तत्र भवः" इत्यर्थेऽण्-प्रत्यय इति भावेनाह **निश्रेयसे मुक्तौ भवमिति** ।

पद्यते = गम्यत इति पदं = प्राप्तव्यमिति भावेनोक्तम् **पदं सुखमिति** । 'कुतः' इति वाक्यस्य प्रश्नरूपत्वात्, 'इत्यादिपरिहारात्' इति कथम् ? इत्यत आह **इत्यादेरिति** । भाष्ये न समानाधिकरणसमासः, किन्तु "इत्यादेः परिहारात्" इति षष्ठीसमासः, तत्र 'प्रश्नस्य' इति योज्य-मिति भावः । 'परिहारात्' इति भाष्यस्य "तस्य प्रसादाद् गच्छन्ति तदादिष्टफलां गतिम्" इति मोक्षधर्मे कुतः पुरुषस्य स्वर्गः ? कुतश्च निःश्रेयसम् ? इति प्रश्नस्य । **तस्य** देवस्य

"प्रसादादधमाद्विष्णोः स्वर्गलोकः प्रकीर्तितः ।
मध्यमाज्जनलोकादिरुत्तमस्त्वेव मुक्तिदः ॥" (ना.पु.)

इति शास्त्रावेदिताद् अधमाद्, उत्तमाच्च प्रसादात् तेन = भगवता आदिष्टं = दत्तं फलं सुखं यस्यां तां गतिं गच्छन्तीति परिहारे भगवत एव यज्ञज्ञानफलदातृत्वावगमादित्यर्थः । **एषः** "सर्वयज्ञभोक्तृ-त्वादेः" इत्येषः । भगवतोऽधियज्ञत्वस्य नित्यसिद्धत्वेन पाक्षिकत्वाभावाद्, यद्यर्थकचेच्छब्दा-योगः ? इत्यत आह **चेच्छब्द इति** । "पक्षान्तरे चेद्यदि च" (अ.को.) इत्यभिधानेऽपि, अव्य-यानामनेकार्थत्वाशयेन यदाशब्दार्थत्वोक्तिः । **इत्यादेरर्थस्येति** । सर्वयज्ञभोक्तृत्वस्य, आदिपदो-पात्तस्य प्रवर्तकत्वोपपादकस्य "अहं कृत्स्नस्य जगतः प्रभवः" (७.६) इत्यर्थस्य, फलदातृत्वोप-पादकस्य "लभते च ततः कामान् मयैव विहितान् हि तान्" (७.२२) इत्यर्थस्य च, "भोक्तारं यज्ञतपसाम्" (५.२९) इति, "अहं कृत्स्नस्य जगतः" (७.६) इति, 'मयैव' (७.२२) इत्यादौ पञ्चमान्तादौ अर्जुनेन श्रुतत्वाद् 'भोक्तारम्' (५.२९) इत्यत्र 'सर्वलोकमहेश्वरम्' (५.२९) इत्यनेन यज्ञादि-सर्वलोकप्रवर्तकत्वस्य, तत्फलदातृत्वस्य श्रुतत्वादित्यर्थः ।

तर्हि 'कथमधियज्ञः' इति प्रश्नायोगः ? इत्यत आह **अन्यत्वेति** । "भगवतोऽन्योऽग्न्यादि-रधियज्ञः" इति पक्ष एव 'कथमधियज्ञः' इति प्रश्नः, न भगवत्पक्ष इत्यतो नोक्तदोष इति भावः । 'पृथक्' इत्यत्र प्रतियोग्याह **अधियज्ञोऽहमित्यत इति** । **उक्तः** "सर्वयज्ञभोक्तृत्वादेरधियज्ञः" इति परिहार उक्तः । **कथमिति** । साहित्यस्य भेदसापेक्षत्वादिति भावः । यद्वक्ष्यति भाष्यकारः "साधि-यज्ञम् इति भेदप्रतीतेः" (गी.भा. ८.४) इति । "साधिभूताधिदैवं मां साधियज्ञं च ये विदुः" (७.३०) इत्यस्यानुवादः **साधियज्ञं मामिति** । **रूपविशेषेति** । सर्वप्राणिदेहस्थरूपापेक्षयेत्यर्थः । **अनेन** 'सर्वप्राणिदेहस्थरूपेण' इति भाषणेन । **प्रयोजनान्तरम्** अन्योऽधियज्ञोऽग्न्यादिः प्रसिद्ध इति सिद्धार्थतापरिहारार्थं प्रश्नवाक्ये 'देहे' इतिवत्, परिहारवाक्येऽपि 'देहे' इति विशेषणमर्थवदिति प्रश्ना-नुसारित्वरूपं यत् प्राक् प्रयोजनमुक्तम्, ततोऽन्यद् बहिःष्ठरूपव्यावृत्तिलक्षणप्रयोजनं चेत्यर्थः ।

*भा०र०*— 'अत्र' इत्यत्र प्रकृतिभूतैतच्छब्दस्य सप्तमीविभक्तेश्चार्थमाह **इहेति**। "इदम इश्" "इदमो हः" इति त्रलपवादे हप्रत्यये च 'इह' इति रूपम्, तस्य विवक्षितार्थोक्तिः **लौकिक इति**। 'ईश्वरदेहः' इति वदन् 'स्वदेहः' इति भाष्ये स्वस्य = भगवतो देह इति विग्रहमभिसन्धत्ते। "परः स्वो हरिरुद्दामः" (प्रकाशिका) इति भागवततात्पर्यरीत्या स्वशब्द एवेश्वरवचन इत्यपि **आहुः**। पृथङ्नियन्तृत्वं नास्तीत्युक्तौ, अन्येन सह तदस्तीति प्रतीयते, तन्निरासाय व्याचष्टे **पृथग्भावेनेति**। यथाऽन्यदेहे स्थितस्य भगवतो देहात् पृथगवस्थितस्यैव नियन्तृत्वेनाधियज्ञत्वम्, न तथा नियम्यापेक्षया पार्थक्येन तत्स्थितस्य तस्य नियन्तृत्वमित्यर्थः। अतस्तद्व्यावर्तनाय 'अत्र' इति देहविशेषणमर्थवदिति भावः। उत्तरभाष्यमवतारयति **यथाधियज्ञ इति**। **इदम्** "अक्षरं ब्रह्म परमम्" (८.३) इति परिहारवाक्योक्तं ब्रह्म वेदादिरूपमन्यदेवेत्यर्थः। ननु "अक्षरं ब्रह्म परमम्" इति वाक्ये अक्षरं परमत्वेन विशेषितम्। परमं चाक्षरम् अक्षराधिकरणादि(ब्र.सू.अ. १.३.३)रीत्या भगवानेवेति कथमन्यत्वशङ्का ? इत्यत उक्तम् **परममिति त्विति**।

अयं भावः। यदुक्तं 'परमम्' इत्यनेनाक्षरं वेदादितो व्यावर्त्यत इति, तदयुक्तम्। 'किं ब्रह्म ?' इति प्रश्नस्य 'अक्षरं ब्रह्म' इत्युक्तिमात्रेण परिहारात्। वेदादेरप्यक्षरशब्दार्थस्य ब्रह्मत्वावबोधे विरोधाभावेनाव्यावर्तनीयत्वात्। न हि तद्व्यावृत्तिर्बोद्धव्येत्यत्र नियामकविशेषोऽस्ति। उपात्तस्य 'परमम्' इत्यस्य "एको घटः", "नीलधूमवान् पर्वतो वह्निमान्" इत्यादाविव वस्तुस्थितिकथनरूपत्वमस्तु। तथा च न तद् भगवतोऽन्यस्य प्रतिपाद्यत्वशङ्कां निरुणद्धीति। **इत्याकाङ्क्षायां** कथम्भूतं ब्रह्म विदुः ? इत्याकाङ्क्षायाम्। **ब्रह्मणः परामर्शादिति**। अस्मच्छब्देन पूर्वोक्तब्रह्मणः परामर्शाभावे "कथम्भूतं ब्रह्म विदुः" इत्याकाङ्क्षाया अशान्त्यापत्त्या तत्परामर्शो युक्त इति भावः। 'परामर्शात्' इत्यस्य "अत्रोक्तं ब्रह्म न भगवतोऽन्यत्" इति पूर्वेणान्वयः। "परामर्शात् तत्रास्तु" इत्येकं वाक्यमित्यपि **आहुः**। **तत्र** पूर्वाध्याये (७.२९)। **अत्र तु** "अक्षरं ब्रह्म" (८.३) इत्यत्र तु। **कुत इति**। तत्रैवास्मच्छब्दादेर्भगवत्त्वज्ञापकस्याभावादिति भावः। "ते ब्रह्म तद्विदुः" (७.२९) इति पूर्वाध्यायोपलक्षितस्यैव ब्रह्मणः "किं तद्ब्रह्म" इति पृष्टत्वादिति भाष्यार्थं स्फुटत्वादनभिधाय, पूर्वोपक्षिप्तस्य पृष्टत्वेऽपि "अक्षरं ब्रह्म" (८.३) इति वाक्ये तद्ग्रहणं कुत इति चोद्यं परिहर्तुमाह **पृष्टस्यैवेति**। अत्रापि भगवदनन्यब्रह्मैवाभिमतमिति भावः। **तर्हि** यदि परिहारवाक्येऽपि भगवानेव ब्रह्मेत्यभिमतं तर्हीत्यर्थः। **एकत्र** "अधियज्ञोऽहम्" (८.४) इत्यत्र। **अपरत्र** "अक्षरं ब्रह्म परमम्" (८.३) इत्यत्र।

**साधियज्ञमितीति** । अयं भावः । यदुक्तम् अधियज्ञवत् ब्रह्मणोऽपि विष्णुत्वे तत्र 'ब्रह्माहमेव' इत्यनुक्त्वा, अत्र 'अधियज्ञोऽहमेव' इति किमर्थमुच्यते ? कारणविशेषमन्तरेणोक्तिवैचित्र्यायोगात् । अतोऽधियज्ञ एव विष्णुः, न ब्रह्मेति, तदयुक्तम् । ब्रह्माधियज्ञयोरुभयोर्विष्णुत्वेऽपि 'ब्रह्माहमेव' इत्यनुक्त्वा 'अधियज्ञोऽहमेव' इत्युक्तिः कथं न युज्यते ? "साधियज्ञं माम्" इति भगवता स्वस्याधियज्ञसाहित्योक्त्या "अधियज्ञो भगवतो भिन्न एव" इत्याशङ्कायां तत्परिहारार्थत्वात् 'अहमेव' इत्युक्तेः । "ते ब्रह्म तद्विदुः" (७.२९) इत्युक्तत्वात् "कथम्भूतं ब्रह्म विदुः" इत्याकाङ्क्षायां "साधिभूताधिदैवं साधियज्ञं ब्रह्म" (७.३०) इति वक्तव्ये 'माम्' इति भगवतो ब्रह्मत्वेन परामर्शाद् ब्रह्मभगवतोरभेदसिद्धेः "अक्षरं ब्रह्म" इत्येवोक्तम् । न पुनः "अहमेव ब्रह्म" इति चोक्तमित्युक्तिवैचित्र्यं तन्निबन्धनमिति ।

नन्वेवं ब्रह्मणो भगवत्त्वाभिप्रायेऽपि "ते ब्रह्म" (७.२९) इत्यत्र ब्रह्मणो भगवता 'तत्' इति पारोक्ष्येणोक्तत्वाद् भगवतोऽन्यदेवात्रोक्तं ब्रह्मेति प्रतीयते । न च ब्रह्मशब्दस्य भगवन्मात्रवृत्तित्वात् कथं 'तत्' इति विशेषितत्वेऽपि अन्यत्वप्रतीतिरिति वाच्यम् । ब्रह्मशब्दस्य भगवति मुख्यत्वेऽपि प्रकृति-वेदादेरप्यमुख्यतया तदर्थत्वात्, 'तत्' इति विशेषितत्वेन मुख्यार्थासम्भवे अमुख्यार्थप्रकृत्यादीनां मध्ये यत्किञ्चिदत्र स्यादिति प्रतीतेरनिवार्यत्वात् । नापि 'तत्' इति विशेषणेन प्राप्ता ब्रह्मणो भगवदन्यत्वशङ्का "साधिभूताधिदैवं माम्" (७.३०) इत्युपरितनवाक्येन भगवतैव परिहृता । 'ब्रह्म' इति वक्तव्ये 'माम्' इत्युक्तत्वात्, अतः कथं ब्रह्मणो भगवदन्यत्वप्रतीतिरिति वाच्यम् । उपरितनवाक्ये "साधियज्ञं च" (७.३०) इति चशब्दस्य "साधिभूताधिदैवं साधियज्ञं मां च" इति व्यत्यस्य संयोजनेनाधिभूतादिसहितत्वेन ब्रह्मज्ञानाद् अन्यदेव विष्णुज्ञानमिति 'तत्' इति विशेषणादेव प्रतीतेरप्रतिबन्धादित्यत आह **शेषं तात्पर्यनिर्णय इति** । तत्र (गी.ता. ८.४) भगवत एव ब्रह्मत्वे कथं 'तत्' इति पारोक्ष्येण निर्देशः ? इति शङ्कां परिहर्तुम्—

"प्राणिनां देहगो विष्णुरधियज्ञ इतीरितः ।
स एव व्यासरूपेण ब्रह्मेति परिकीर्त्यते ॥" (त.वि.)

इति सर्वप्राणिगतरूपापेक्षया ब्रह्मणः सर्वगतरूपान्तरस्यैवाभिसंहितत्वात् 'तत्' इति परोक्षोक्तिर्युक्ता । अत एव चशब्दस्य व्यत्यस्य योजनमपि प्रत्यस्तम् । ब्रह्माधियज्ञयोरेकत्वस्य साधितत्वादिति । शिष्टं प्रमेयं एतत्तात्पर्यनिर्णयतोऽवगन्तव्यमित्यर्थः ।

"शेषोऽप्रधानेऽनन्ताख्यसर्पराजेऽथ शार्ङ्गिणः ।
अवतारान्तरेऽपत्ये त्रिष्वन्यत्रोपयुक्ततः ॥" (के.को.)

इति केशवाभिधानात् शेषशब्दस्त्रिलिङ्गः । तथा च दर्पणः— "शेष उक्त शेषस्त्रिलिङ्गकः" इति । "अधियज्ञोऽहम्" (८.४) इत्यत्र 'अहम्' इत्युक्तेर्वासुदेवाख्यविष्णुशब्दितसगुणं ब्रह्मोच्यते, स हि विष्णुरहमेवेति हि **सङ्करः** । " 'अक्षरं ब्रह्म' (८.३) इत्यत्र तु निर्गुणं ब्रह्माभिधीयते । 'परमम्' इति च निरतिशयेऽक्षरे ब्रह्मण्युपपन्नतरं विशेषणम्" (शां.भा. ८.३) इति च **सङ्करो** यद् व्याख्यातवान् तद्दूषयति **एतेनेति** । "नात्रोक्तं ब्रह्म" इत्यादिना ब्रह्माधियज्ञयोर्भगवदभेदप्रतिपादनेनेत्यर्थः । किञ्च भगवान् वासुदेव एव परं ब्रह्म, न ततोऽन्यत् । तथा च निर्गुणं सगुणमिति ब्रह्मद्वैविध्यमसदिति द्वादशाध्यायस्यादौ "परन्तु ब्रह्म न हि भगवतोऽन्यत्" (गी.भा. १२.१-२) इत्युक्त्वा "वासुदेव एव ब्रह्म, न ततोऽन्यत्" इत्युक्तार्थे "आनन्दमानन्दमयोऽवसाने सर्वात्मके ब्रह्मणि वासुदेवे" (भाग. २.२.३४) इति प्रमाणमुदाहरता भाष्यकृता समानन्यायेन निरस्तमित्याह **द्वादशादौ चेति** । ननु तथाऽपि भगवतो वासुदेवस्य न ब्रह्मत्वं युक्तम् । भगवतः करचरणादिमद्रूपशालित्वात्, परब्रह्मणः "अशब्दमस्पर्शमरूपमव्ययम्" (कठ. अ.१, ब्रा.८, मं.२) इत्यादिश्रुत्या अतथाभूतत्वादित्यत उक्तम् **विस्तरेणेति** । " 'रूपं चेदृशं साधितं पुरस्तात्' (१२.१-२) इत्यादिना 'अरूपत्वादेस्तु गतिरुक्ता' (१२.१-२) इत्यन्तेन भाष्येण" इति शेषः । वक्तव्यस्य भूयस्त्वाद् 'विस्तरेण' इत्येवोक्तम् ।

"देहस्थविष्णुरूपाणि अधियज्ञ इतीरितानि" इति वक्तव्यम् ? अनियतलिङ्गानां विधेयवाचिशब्दानाम् उद्देश्यसमानलिङ्गत्वनियमात्, इत्यत आह **यानीति** । 'अधियज्ञः' इति विधेयापेक्षया 'सः' इति तावत् पुल्लिङ्गप्रयोगः । "अणौ यत्कर्म णौ चेत् स कर्ता", "तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षा", "शैत्यं हि यत्सा प्रकृतिर्जलस्य" इत्यादौ विधेयलिङ्गत्वदर्शनात् तदपेक्षया चेति 'सः' इति पुंलिङ्गत्वम्, एकवचनं च "अन्नमयादयः पञ्चापि ब्रह्मैव", "धर्मयज्ञसमयः प्रमाणं वेदाश्च" (आप.ध.सू.) इत्यादाविवोपपद्यत इति भावः । यद्यपि "योऽयमधियज्ञ इतीरितः स देहस्थविष्णुरूपाणि" इति योजनायामपि न लिङ्गव्यत्यासदोषादि । तथाऽपि गीतायाम् अधियज्ञत्वस्य विधेयत्वेनाभिसंहितत्वात् तदनुसारेणैवम् उक्तिरिति । अनेन "सर्वप्राणिदेहस्थरूपेणाधियज्ञः" इत्यत्र प्रमाणमुक्तं भवति । 'तच्च' इत्यत्र चशब्द एवार्थः, आद्यशब्दः प्रयत्नज्ञानसङ्कल्पाद्यर्थक इति भावेनाह **तदपीति** । एवशब्दव्यावर्त्यम् **न त्विति** । ईश्वरस्य सृष्ट्याख्यमेव कर्म । तदेव च विशोष(षे)णसर्जनरूपमिति विसर्गः । न पुनः परीत्या चरुपुरोडाशादिद्रव्यत्यागरूपमिति सिद्धवत्कृत्य, न तु परिणामरूपम् ईश्वरस्य कर्म कर्मशब्दार्थ इति व्यावर्त्यत इति भावेनैवमुक्तम् । अनेन "ईश्वरक्रिया विसर्गः, विशोष(षे)णसर्जनं विसर्गः" इत्यत्र प्रमाणमुक्तं भवति ।

ननु 'जडमधिभूतम्' इति कथम् ? अन्तःकरणादेः देहपर्यन्तस्य जडस्यैव प्राग् अध्यात्म-शब्दार्थतयोक्तत्वादित्यत आह **देहाद्बाह्यमिति** । आत्मा ह्यभिमानविषय इत्यर्थः । अनेन "सशरीरान् जीवान् अधिकृत्य यत् तदधिभूतम्" इत्यत्र प्रमाणमुक्तम् । "अध्यात्मं जीवः" (गी.क.) इति तु "आत्माधिकारे यत् तदिति वा" इत्यत्र प्रमाणम् । 'हिरण्यगर्भः' (गी.क.) इति 'सर्वदेवानधिकृत्य पतिः' इत्यधिदैवतम्, 'देवाधिकारस्थः' इति वा इत्यर्थद्वये प्रमाणम् । "परममक्षरं ब्रह्म" (८.३) इत्यत्र ब्रह्म नारायण इति भाष्यपदमनूद्य व्याचष्टे **यथेति** । तस्यैव विवरणं **शब्दशक्त्येति** । सर्वपदं सम्भाषिताशेषपरमिति भावेनोक्तम् **यावदिति** । तर्हि 'अध्यात्मम्' इत्यत्रात्मशब्देन देहस्य, "विसर्गः कर्म" (८.३) इत्यत्र विसर्गशब्देन चरुपुरोडाशादिपरित्यागरूपार्थस्य शब्दशक्त्या प्रतीतस्यापि ग्रहणं स्यात् ? इत्यत उक्तम् **प्रमाणविरुद्धं चेति** । अन्यत्तु तद्विरुद्धमिति भावः । **किञ्चिदिति** । "ब्रह्म नारायणो देवः सर्वदेवेश्वरेश्वरः" (गी.क.) इति वचनात् परं किमपि वचनमस्ति । तदनुदाहृत्य "यथा प्रतीतम्" इति गीताकल्पवचनस्यैवोदाहृतत्वाद् उभयत्र इतिशब्द इत्यर्थः । अन्यथा पूर्वोत्तरार्धयोरेकश्लोकत्वं प्रतीयेत । नैव च प्रत्येतव्यमिति, इतिशब्दद्वयमिति भावः ।

**एतदेव** अध्यात्मादिशब्दार्थजातमेव । यद्वा भावप्रदीपिकारीत्या "शब्दशक्त्या प्रतीतं प्रमाणाविरुद्धम्" इत्युक्तम् अर्थान्तरमेव 'आत्माभिमानस्थितम्' (स्का.) इति वाक्यान्तरेण स्पष्टयतीत्यर्थः । आत्मनोऽभिमानोऽधिकारश्च, तयोः स्थितम् आत्माभिमानाधिकारस्थितम् इति विग्रहमभिप्रेत्य व्याचष्टे **आत्मनोऽभिमानस्येति** । अभिमानस्थितत्वं विषयत्वेनेति भावः । आत्माधिकारो नाम ग्रन्थविशेषः । तत्र स्थितत्वं तत्प्रतिपाद्यत्वेनेति भावेनाह **तत्र प्रतिपाद्यमिति** । नन्वात्मैव ह्यात्माधिकारे प्रतिपाद्यः, न देहाद् बाह्यं किमपि, इति कथं "देहाद् बाह्यं विना" इति विशेषणम् आत्माधिकारस्थितस्य ? इत्यत आह **देहाद् बाह्यं विनेतीति** । **सामर्थ्यात्** योग्यताबलात् । "आत्माभिमानविषयो अध्यात्मम्" इत्युक्तौ गृहारामादेरप्यध्यात्मत्वं स्यात्, न चात्रोत्तरे तदभिप्रेतम् । 'केवलात्मोपकारकम्' (म.कौ.) इति व्यावर्तितत्वात् । अतो गृहारामादिव्यावृत्तये "देहाद् बाह्यं विना" इति विशेषणम् आत्मात्युपकारकमात्रग्रहणाय सार्थकम्, नात्माधिकारस्थितस्य विशेषणमिति न वैयर्थ्यशङ्केति भावः ।

आत्माभिमानविषयं शृङ्गग्राहिकया दर्शयितुं "देहाद् बाह्यं विना" इत्युक्तं स्मृतौ इत्यभिप्रेत्य तस्य बौद्धेनात्माभिमानस्थितमित्यनेनान्वयो द्रष्टव्य इत्याह "देहाद् बाह्यम्" इत्यादीति व्याख्येयम् । आत्मापेक्षया बाह्यत्वस्य देहादावपि सत्त्वात् तदप्यध्यात्मं किं न स्यात् ? इत्यतः

"अतीव बाह्यत्वात्" इत्युक्तम्, तदवतारयन् व्याचष्टे **तत्रेति** । 'इति' इति शेषः । 'युक्तिः' इति सम्बन्धः । न हि देहादेरिव गेहादेरत्यभिमानास्पदत्वम् आनुभाविकमिति युक्तं देहादेरेवाध्यात्मत्वमिति भावः । **देवाधिकारगम्** तन्नामकग्रन्थप्रतिपाद्यं सर्वमधिदैवतमिति भाष्ययोजना । 'महाभूताधिकारगम्' इत्यस्य विशेष्यमध्याहरति **महाभूतमिति** । ननु महाभूताधिकारनामग्रन्थप्रतिपाद्यत्वं महाभूतस्यैवेति तस्यैवाधिभूतत्वमुचितम्, न तु महाभूतकारणस्याहङ्कारादेः, तत्कार्यस्य भौतिकस्य च । अतः कथं "तत्कारणं तथा कार्यम्" (स्का.पु.) इति प्रमाणे द्वयोर्ग्रहणम् ? इत्यत आह **कार्येति** । 'महाभूताधिकारगम्' इति महाभूतस्येव कार्यकारणयोरपि ग्रहणमुचितम् । तयोर्महाभूताभिन्नत्वविवक्षया अधिभूतशब्दार्थत्वस्याभिमतत्वादिति भावः । **तत्तादात्म्यात्** महाभूताभिन्नत्वात् । 'इति' इति शेषः । देवानाम् अधिदैवतम् = देवानामप्युत्तमं दैवतं वस्तु अधिभूतमिति भगवतोऽधिभूतत्वमुच्यत इति प्रतीतिं निरस्यन् 'देवानाम्' इत्यनन्तरम् 'उपकारकृत्' इति पूर्वार्धोक्तमनुवर्त्य योज्यमित्याह **देवानामुपकारकृदिति** । "देवाधिकारप्रतिपाद्यं सर्वमप्यधिदैवतम्" इत्यपि संयोज्यम् ॥

**भगवत्प्रतिबिम्बानाम्** भगवता भिन्नत्वे सति अर्थप्रकाशत्व-अनुकूल-वेदनीयत्वादिना तज्ज्ञानानन्दादिसदृशज्ञानानन्दादिरूपकिञ्चित्सादृश्यसम्पन्नानाम् । लिङ्गानन्वयमाशङ्क्याह **अत्रेति** । 'मद्भद्भावम्' इति पाठपक्षे, **इति** पाठ इति । 'निर्दुःखनिरतिशयानन्दात्मकम्' इति भाष्यपाठ इत्यर्थः । निर्दुःखनिरतिशयानन्दात्मकरूपसादृश्यस्यापि

"बलमानन्द ओजश्च सहो ज्ञानमनाकुलम् ।
स्वरूपाण्येव जीवस्य ..........................॥" (गौ.श्रु.)

इति सनातनत्वात् कथं फलत्वम् ? इति कृतचोद्यं परिहर्तुं भाष्ये शेषमाह **अभिव्यक्तमिति** । अभिव्यक्तिस्तु प्राङ् नैवेति भावः । **प्रतीत एवार्थः** 'मद्भावम्' इत्यस्य 'मदात्मकत्वम्' इत्यापातप्रतीत एवार्थः । **तदपि** तदेव । क्षेत्रज्ञशब्दार्थं वदन् तदन्वितम् 'इति' शब्दं व्यत्यस्य योजयति **क्षेत्रज्ञ इति** । "स ह्यन्तरात्मा भूतानां क्षेत्रज्ञ इति कथ्यते" (मो.ध.) (म.भा., शां.प. ३४२.३१) इति, "आत्मा भिन्नः स विज्ञेयः ततस्तं पूजयावहे" (मो.ध.) (म.भा.,शां.प. ३४२.३४) इति आत्मादिशब्देन परमात्मा प्रस्तुत इति भावः । गम्यत इति **गतिः** आश्रयः । "कृपू = सामर्थ्ये" इति धातुव्याख्यानादाह **समर्थित इति** । 'ब्रह्मन्' इति नारदसम्बोधनम् ॥ ५ ॥

गीता

**यं यं वाऽपि स्मरन्भावं त्यजत्यन्ते कलेवरम् ।**
**तं तमेवैति कौन्तेय सदा तद्भावभावितः ॥ ६ ॥**

*वि०वि०*— तत्कथमित्यत आह **यं यमिति** । स्मरंस्त्यजतीत्येककालत्वप्रतीतेर्न शङ्कावकाशः । दुःखाच्छरीरत्यागकाले स्मरणायोगाद्भिन्नकालीनत्त्वेऽप्यविरोध इति शङ्का स्यात् । सा मा भूदित्यन्त इति विशेषणम् । अन्तकाले स्मरणोपायमाह **सदेति** । भावोऽन्तर्गतं मनः स्यात्, 'भावोऽन्तर्गतं मनः' इत्यभिधानात् । भावितत्वमधिवासितत्वम् । 'भावनात्वतिवासना' इत्यभिधानात् । अपरोक्षज्ञानिनां प्रारब्धकर्मावसानद्वारा सदा तद्भावभावितत्वमन्तकाले भगवत्स्मरणोपाय इति द्रष्टव्यम् ॥

*सा०सं०*— तत्कथमित्यतः सामान्यव्याप्तिमाह **यं यमिति** । **वा** अथवा **यं यमपि भावं पदार्थम्, अन्ते स्मरन् कलेवरं त्यजति तं तमेव भावं याति** । अन्तकाले स्मरणोपायमाह **सदेति** । **सदा** निरन्तरम् । तद्भावेन तस्मिन्नन्तर्गतेन मनसा । 'तद्भावोऽन्तर्गतं मनः' इत्यभिधानात् । **भावितो** वासितः । नित्यं तच्चिन्तया जाततद्गोचरस्मृतिजनकसंस्कारवानित्यर्थः । एवंरूपः पुमान् भावमन्ते स्मरंस्त्यजतीत्यन्वयः । एतच्च नित्यस्मृतिरूपं सदा तद्भावभावितत्वमपरोक्षज्ञानं जनयित्वा भोगेन प्रारब्धावसानानन्तरमन्तकाले स्मृतिहेतुः, न साक्षादिति ज्ञेयम् । स्मरंस्त्यजतीति त्यागस्मरणयोरेककालत्वप्रतीतावपि 'अन्त' इत्युक्तिस्त्यागकाले महादुःखात् स्मरणमसम्भावितमिति मन्दाशङ्काव्युदासाय । सर्वदा शरीरं हेयमिति मन्यमानानां ज्ञानिनां न देहत्यागो दुःखहेतुः । अतस्तदा स्मरणं नासम्भावितमिति प्रदर्शनार्था । अज्ञस्यापि त्यागक्षणात् पूर्वं एव दुःखम्, न तु त्यागक्षण इति ॥

*अ०प्र०*— किं तर्हि, **यं यमिति** ।

हे कौन्तेय ![१], यं यं[२], पदार्थं मां वा[३], अन्यदेवादिकं वा भावं वा[४], अपि अन्यदपि भावं वा[५], स्मरन् सन्[७], कलेवरं[८], त्यजति[९], सदा स्मर्यमाणं तं तमेव भावं[१२], एति[१३], अन्तकाले स्मरणस्योपायमाह सदेति सदा[१३], तद्भावभावितः[१४] इत्यन्वयः ।

यस्माच्चिन्तितमेव प्राप्नोति तस्मात्सर्वेषु कालेषु मामनुस्मरेति उत्तरेण अन्वयः । हे कौन्तेय ![१], यं यं[२], भावं वा पदार्थं मां वा अन्यदेवादिकं वा[४], अपिशब्देन अन्यदपि भावं वा प्रियकरं वस्तु[५], अन्ते = अन्तकाले[६], स्मरन् सन्[७], तिष्ठति स एव भावे मरणे विवर्धत इति भावः । को वा भावो

स्मरन् कलेवरं[८], त्यजति[९], तं तं एव सदा स्मर्यमाणं तं तमेव भावं = तत्सदृशमेव[११] एति = प्राप्नोति[१२], अन्तकाले स्मरणस्योपायमाह सदा तद्भावभावितः[१४], सदा = सर्वदा[१३], तद्भावभावितः तस्य भावो भावना अनुचिन्तनं तेन भाविनो वासितचित्तः । यद्वा, स्याद्भावोऽन्तर्गतं मनः इत्यभिधानात् । भावनात्वादिवासना इति च तस्मिन् भावः तद्भावः तद्भावेन तदन्तर्गतमनसा भावितः अपरोक्षज्ञानादिद्वारा अधिवासितः संस्कृत इति यावत् । सदा चिन्तनायुक्त इत्यर्थः । पूर्वकाले सदा चिन्तनमेवान्तकाले स्मृतिहेतुरिति भावः । स्मरन् इत्यत्र शतृलङ्देशत्वेन स्मरति त्यजति चेति स्मरणत्यागयोः एककालत्वप्रतीतेः सुमत्यपेक्षायां भावित इति विशेषणम् । देहं तथापि मरणकाले शरीरत्यागस्य महादुःखहेतुत्वात् दुःखान्मूर्छितो न स्मरति किन्तु पूर्वं स्मरन् पश्चाद्देहं त्यजति इति लक्षणे शतृप्रत्ययं कृत्वा भिन्नकालस्य शङ्का दुर्मतं स्यात् । तन्निवृत्त्यर्थमन्त इति विशेषणं देहाभिमानिनो ज्ञस्यैव देहत्यागमात्मत्यागमिव मन्यमानस्य मरणकाले दुःखं भवति । तदपि मरणक्षणात्पूर्वमेव सदा देहं हेयमेव मन्यमानो ज्ञानी न मनागपि दुःखायते किन्तु विशिष्टमेव तस्योत्क्रमणमित्यध्यात्मशास्त्रानुसन्धानत्वात्सुमतेः शङ्का नास्ति तदभावात् दुर्मतेः शङ्का । तदुक्तम्—

'त्यजन् देहं न कश्चित्तु मोहमाप कुतश्चने'ति ।

कश्चिद्विद्वानविद्वानपि मरणक्षणे तस्य हैतस्य हृदयस्याग्रं प्रद्योतते इत्यादेश्च, यस्माच्चिन्तितमेव प्राप्नोति तस्मात्सर्वेषु कालेषु मामनुस्मरेत्युत्तरेण अन्वयः ॥ ६ ॥

**गीता**

## तस्मात्सर्वेषु कालेषु मामनुस्मर युध्य च ।
## मय्यर्पितमनोबुद्धिर्मामेवैष्यस्यसंशयः ॥ ७ ॥

***वि०वि०***— अतः प्रयोजनवत्त्वात् सततं भगवदनुचिन्तनं कर्तव्यमित्याह **तस्मादिति** ॥

***सा०सं०***— अन्तकालस्मरणस्य फलोक्तेरुपयोगमाह **तस्मादिति** । नित्यं मत्स्मृतेः मत्प्राप्तिहेतुचरमकालीनमत्स्मरणकारणत्वादित्यर्थः । **मय्यर्पितमनोबुद्धिः** सन् युध्यस्व ॥

***अ०प्र०***— ननु तदा विवशस्य न स्मरणोद्यमः सम्भवति **तस्मादिति** ।

यस्मात्परोक्षज्ञानिनां प्रारब्धाभावे नित्यस्मृतिजन्या तत्कालस्मृत्या मत्प्राप्तिः । तस्मात्[१], सर्वेषु[२], कालेषु[३], मां अनुस्मर[५], युध्य च[६], एवं मय्यर्पितमनोबुद्धिः सन्[७], त्वं मामेव[९], एष्यसि[१०] असंशयः[११] इत्यन्वयः ।

तस्मात्सर्वेषु कालेषु = सर्वदा[3], मां अनुस्मर = चिन्तय[4], युध्य च = सततं स्मरणं च चित्तशुद्धिं विना न भवति, अतो युध्य च। क्षत्रियाणां युद्धं स्वधर्मः। स्वधर्माचरणेन चित्तशुद्धिः, तेन सततं स्मरणं, तेन अन्तकाले स्मृतिः, स्मृत्या मत्प्राप्तिः तस्मात् युध्य च[6], मय्यर्पितमनोबुद्धिः सन् = त्वं मयि परमात्मनि अर्पिते निवेशिते सङ्कल्पात्मकं मनः व्यवसायात्मिका बुद्धिश्च तौ मनोबुद्धी यस्य तव स त्वं अर्पयसि चेत्[7], मामेव = अचिन्त्याद्भुतशक्तिमन्तं परमात्मानमेव[8], एष्यसि = प्राप्स्यसि[10] असंशयः = सत्यमेव इत्यर्थः। ततो स्मृत्या मां प्राप्स्यसि ॥ ७ ॥

**भाष्यम्**

**स्मरन् पुरुषः त्यजतीति भिन्नकालीनत्वेऽप्यविरोध इति मन्दमतेः शङ्का मा भूदिति 'अन्ते' इति विशेषणम्। सुमतेः नैव शङ्काऽवकाशः। स्मरन् त्यजतीति एककालीनत्वप्रतीतेः। दुर्मतेः दुःखान्न स्मरन् त्यजतीति भविष्यति शङ्का। "त्यजन् देहं न कश्चित्तु मोहमाप्नोत्यसंशयम्।" इति स्कान्दे। "तस्य ह एतस्य हृदयस्याग्रं प्रद्योतते। तेन प्रद्योतनेन एष आत्मा निष्क्रामति।" इति हि श्रुतिः। सदा तद्भावभावित इत्यन्तकालस्मरणोपायमाह। भावोऽन्तर्गतं मनः। तथाऽभिधानात्। भावितत्वमतिवासितत्वम्। "भावना त्वतिवासना" इत्यभिधानात् ॥ ६-७ ॥**

*प०टी०*— ननु 'त्यजति' इत्यनेनैवान्तकालसिद्धेः किम् 'अन्त'पदेन ? इत्यत आह **स्मरन्निति**। 'भुञ्जन्नुत्थितः' इतिवत्। नन्वेवमर्थप्रतीतेः सुमतेरपि सम्भवात् किं दुर्मतेः ? इत्यत आह **सुमतेरिति**। नन्वेककालीनता दुर्मतेरपि शब्दबलात् प्रतीयत इत्यत आह **दुर्मतेरिति**। तर्हि शङ्काबीजमाशङ्कमानः कथं दुर्मतिः ? इत्यत आह **त्यजन्निति**। मोहोऽज्ञानमभिमानश्च। एतदुभयाभावात् कस्यापि न दुःखं किमुत ज्ञानिन इति भावेनोक्तस्य साक्षात् श्रुतिमप्याह **तस्येति**। यद्यन्तकालस्मरणमेव मुक्तिहेतुः, तर्हि किं श्रवणादिना ? इत्यत आह **सदेति**। तदर्थमाह **भाव इति**। तथाभिधानात् इति 'स्याद्भावोऽन्तर्गतं मनः, इत्येव ॥

*प्र०दी०*— ननु कलेवरत्यागस्यान्ताव्यभिचारात् 'अन्त' इति व्यर्थमित्यत आह— **स्मरन् इति**। न 'अन्ते' इत्येतत् "कलेवरं त्यजति" इत्यस्य विशेषणम्। येन व्यर्थं स्यात्। किन्त्वन्ते स्मरन् इति स्मरणस्यैव। तत्रापि किं प्रयोजनमिति चेदुच्यते। "लक्षणहेत्वोः क्रियायां" (३-२-

१२६) इति लक्षणेऽपि शतुर्विधानात् स्मरन् पुरुषः कलेवरं त्यजतीति स्मरणकलेवरत्यागयोः भिन्नकालत्वेऽपि न कश्चिच्छब्दविरोध इति मन्दमतेः शङ्का स्यात् । सा मा भूदित्येवमर्थं 'अन्ते' इति स्मरणस्य विशेषणमुपात्तम् । तेनात्र स्मरणकलेवरत्यागयोरेककालत्वसिद्धिरिति । मन्दमतेरित्यस्य कृत्यमाह— **सुमतेरिति** । कुत इत्यत आह— **स्मरन् इति** । ''लटः शतृशानचौ'' (३-२-१२४) इति लडादेशत्वेनापि शतुर्विधानमस्ति । स च लडिति वर्तमाने पुनः सङ्ग्रहणसामर्थ्यात् क्वचित् प्रथमासामानाधिकरण्येऽपि भवति । लक्षणे विहितत्वाच्च लडादेशो बलीयान् । तत्र क्रियायामित्युपपदसापेक्षत्वात् । अस्यानपेक्षत्वात् । अप्रथमासमानाधिकरण इत्यस्यातिप्रसक्तिपरिहारमात्रार्थत्वात् । तथा च बलवतो ग्राह्यत्वे स्मरन् त्यजतीत्यस्य स्मरति च त्यजति चेत्यर्थः स्यात् । एवं चान्त इत्यनुक्तेऽपि स्मरणत्यागयोः एककालीनत्वप्रतीतेः सुमतेर्नैव शङ्कावकाश इति भावः । ननु दुर्मतिरपि शाब्दं न्यायं जानात्येव । अन्यथा शास्त्रे नाधिक्रियेत । केवलमध्यात्मविषये न प्रवीणः । तत्कथं तस्याप्येषा शङ्का स्यात् । ततश्च तं प्रत्यपि 'अन्ते' इत्येतद्व्यर्थमित्यत आह— **दुर्मतेरिति** । दुर्मतेर्भविष्यति शङ्का भिन्नकालत्वविषया ? कुतः ? मरणकाले महद्दुःखं जायते । दुःखस्य च संस्कारविलोपहेतुत्वं प्रसिद्धम् । अतो दुःखात् कारणात् मूर्छितो न स्मरन् त्यजति । कलेवरत्यागसमये स्मरणसम्भवीति यावत् । एतामनुपपत्तिं पश्यन् बलवन्तमपि लडादेशं विहाय लक्षणार्थमेव हि मन्यत इति भावः । ननु सुमतेरप्येवं शङ्का स्यादेव । कथं चेयं शङ्का तत्त्वप्रतीतिरेवेति चेन्न । अज्ञानिन एव देहाभिमानिनो देहत्यागमात्मत्यागमिव मन्यमानस्य मरणकाले दुःखं भवति । तदपि मरणक्षणात्पूर्वमेव । ज्ञानी तु सर्वदा देहं हेयमेव मन्यमान न मनागपि दुःखायते । किं तु विशिष्टमेव तस्योत्क्रमणमित्यध्यात्मशास्त्रमनुसन्दधानस्य सुमतेः शङ्काऽनवकाशात् । किं तदध्यात्मशास्त्रमित्यत आह— **त्यजन् इति** । कश्चित् विद्वान् । अविद्वानपि तत्काले । तस्येति मरणवैशिष्ट्यमात्रपरम् ।

नन्वन्त इत्येतत् स्मरणविशेषणं चेत् ''सदा तद्भावभावितः'' इत्यनेनैव गतार्थं स्यात् । अन्यथा तद्व्यर्थं भवेदित्यत आह— **सदेति** । अन्तकालस्मरणमेव तत्प्राप्तिसाधनम् । न च तदकस्माद्भवति । अतस्तदुपायत्वेन सदा तद्भावभावितत्वमुच्यत इति भावः । कथमित्यतो यथाऽयं तदुपायः स्यात्तथा व्याचष्टे— **भाव इति** । **तथाऽभिधानात् इति** । ''स्याद्भावोऽन्तर्गतं मनः'' इत्येवंरूपाभिधानादित्यर्थः । वासितत्वं संस्कृतत्वम् । तस्मिन् भावः तद्भावः । तेन भावित इति मनोधर्मेणात्मोपचर्यते ॥

*भा०दी०*— **लक्षणेति** । तृतीयस्य द्वितीयपादे लक्षणहेत्वोः (३-२-१२६) इति सूत्रं लटः शत्रुशानचावप्रथमासमानाधिकरण (३-२-१२४) इति पूर्वसूत्रात् लटः शतृशानचाविति वर्तते । लक्ष्यते चिह्नते येन तल्लक्षणहेतुर्जनकलक्षणे हेतौ वर्तमानाद्धातोः परस्य लटशत्रुशानचौ भवतौ चेत्तल्लक्षणहेतुक्रियाविषयेव च त इति तस्यार्थमुक्त्वा तिष्ठन्तोऽनुशासन्निति गणकाः शयान् भुञ्जतः । पवमाना इत्या ........ त्तावुदाहृत ........................ योरिव स्मरणत्यागयोरेककालतैव प्रतीयते । तथापि स्मरणस्य लघ्वादेशशत्रन्तशब्दा .........पपत्त्या शयमाहु दुःख.................. संविनीति शतृप्रत्ययस्य 'त्यक्तुः पुंसः स्मरणरूपलक्षण एव तात्पर्यं न त्वेकका............ भावो ध्येयः । **तेनेति** । अन्तकाले ............ नेत्यर्थः । ननु तस्मिन् सूत्रे प्रथमान्तसमानाधिकरणे सति शत्रुशानचौ न भवतः (३-२-१२४) इत्युक्तेः इह च स्मरन् यः पुमानिति प्रथमान्तयच्छब्देन सामानाधिकरण्यात् कथं तेन सूत्रेण शत्रुप्रत्यय इत्यतोऽत्रोक्तवृत्तिकारोक्त ................ चेति । शतृप्रत्यय इत्यर्थः । वर्तमाने लडिति सूत्रात् (३-२-१२३) लडिति वर्तमान इत्यर्थः । **लडादेश इति** । लक्षणाद्यर्थहीनबलत्वादेश इत्यर्थः । ननु सौम्यप्रथमपदसामानाधिकरण्यमपेक्षत एवातः कथं बलीयानित्यत आह **अप्रथमेति** । **अतिप्रसङ्गेति** । प्रथमासमानाधिकरणे सर्वत्र मा भूदित्येत-दर्थत्वादित्यर्थः । न प्र...णोधिक्रिय इत्यन्वयः । **दुःखायतेति** । दुःखवदाचरतीत्यर्थः । **तत्काल इति** । मोहं न प्राप्नोति किन्तु पूर्वमेवेति योज्यम् । **मरणवैशिष्ट्येति** । ज्ञानिन इति योज्यम् । तावत एव प्रकृतोपयोगादिति भावः । **मनोधर्मेण** भावितत्वरूपेण ॥

*भा०र०*— **अव्यभिचारादिति** । अन्त्यकालान्यकाले कलेवरत्यागस्यासम्भवेन व्यभिचारा-भावाद् व्यर्थं विशेषणम् । "सम्भवव्यभिचाराभ्यां स्याद्विशेषणमर्थवत्" (लौ.न्या.सा. १८६) इति वचनादिति भावः । **स्मरणस्यैव** विशेषणम् । **"लक्षणहेत्वोः क्रियायाम्" इति लक्षणेऽपि शतुर्विधानादिति** । **लक्ष्यते** चिन्त्यते येन तत् लक्षणम् = जनको हेतुः, धात्वर्थविशेषणं चैतत् । लक्षणे हेतौ च वर्तमानाद्धातोः परस्य लटः शतृशानचावादेशौ भवतः, तौ चेत् लक्षणहेतू क्रिया-विषयौ । "शयाना भुञ्जते यवनाः", "तिष्ठन्तोऽनुशासति गणकाः" । **हेतुः** फलं कारणं च इति पक्षे "अर्जयन् वसति", "हरिं पश्यन् मुच्यते" इति सूत्रार्थोदाहरणे वृत्त्यादावुक्तेः । अत्र चाव-स्थानस्यानुशासनक्रियां प्रति लक्षणत्ववत्, कलेवरत्यागक्रियां प्रति स्मरणस्य लक्षकत्वविवक्षयैव शतृप्रत्ययः, न त्वेककालत्वाभिसन्धिनेति न शब्दकृतविरोध इति भावः । स्पष्टीकरिष्यति तदनु-पदमेव । यद्यपि "लक्षणहेत्वोः क्रियायाः" इति षष्ठ्यन्तमेव सूत्रं पठित्वा क्रियाया लक्षके = परिचायके, हेतौ च वर्तमानाद्धातोः लटः शतृशानचावादेशौ स्त इति सूत्रार्थः शाब्दिकैरुक्तः ।

तथाऽपि 'क्रियायाम्' इत्यपि पाठम्, तस्य "क्रियायामुपपदे सति" इत्यर्थं चाभ्युपेत्येदमुदितम्, इष्टं च । "तुमुन्-ण्वुलौ क्रियायां क्रियार्थायाम्" इत्यत्र 'क्रियायाम्' इत्यस्य 'क्रियायामुपपदे' इति व्याख्यातम् । अनुमतं चैतत् सूत्रकारवार्तिककारयोः । "सम्बोधने च", "माङि आक्रोशे" इत्युभयत्रापि सप्तम्यन्तत्वदर्शनात्, अत्रापि "तौ चेत् क्रियाविषयौ" इति वृत्तिकारवचनाच्च । अत एव "क्रियाया इति शेषलक्षणैव षष्ठी" इति हरदत्तवचनमनादरणीयम् । अनेनैव "तस्य क्रियायामित्युपपदसापेक्षत्वात्" (प्र.दी. ८.६) इति टीकाऽपि समर्थिता ज्ञातव्या । दृश्यते च सूत्रेऽपि पाठभेदः "तुन्दि-वलि-वटेर्भः" इत्यत्र 'तुण्डि' इति पाठाभ्युपगमात् । ऋग्भाष्यटीकायाम् "सप्तनोऽण् छन्दसि", "सप्तनोऽञ् छन्दसि" इति सूत्रपाठद्वयाभ्युपगमाच्च । ऋग्भाष्यटीकायां तु "लक्षणहेत्वोः क्रियायाः" इति षष्ठ्यन्तमेव सूत्रं पठितम् । **भिन्नकालत्वेऽपीति** । एतच्च "दुर्मतेर्दुःखान्न स्मरन्त्यजतीति भविष्यति शङ्का" (गी.भा. ८.६) इत्युपरितनभाष्यव्याख्याऽवसरे आकार एव स्पष्टीभविष्यति । **तेन** विशेषणोपादानेन ।

नन्वनुपदमेव "स्मरन् पुरुषस्त्यजति इति भिन्नकालत्वेऽप्यविरोधः" इति भाषितम् । तत्कथमत्रैककालत्वप्रतीतिः इति भाष्यते ? इत्यत आह **लटः शतृशानचावितीति** । द्विविधो हि शताऽस्ति । लक्षणे विहितः, केवललडादेशत्वेन विहित इति । तत्र पूर्वभाषितः शता लक्षणे विहितः । अत्र भाष्यमाणस्तु लडादेशतया विहितः । तथा च न पूर्वोत्तरभाषणयोर्भिन्नकालत्व-एककालत्वाभ्युपगमपरयोर्विसंवाद इति भावः । ननु तस्मिन् सूत्रे प्रथमान्तपदसामाधिकरण्ये सति शतृशानचौ न भवत इति प्रतिषेधात्, "स्मरन् पुरुषः" इति च प्रथमान्तपदसामानाधिकरण्यात् कथं शतृप्रत्ययः ? इत्यत आह **स चेति** । शत्रादेश इत्यर्थः । **इति वर्तमान इति** । "वर्तमाने लट्" इति सूत्रादनुवृत्तस्य षष्ठ्यन्तत्वेन विपरिणामसम्भवे अत्र पुनः 'लटः' इति लड्ग्रहणस्य प्रयोजनविशेषानिरूपणादिति भावः । **प्रथमासामानाधिकरण्येऽपीति** । तथा चोदाहरन् "सन् ब्राह्मणः", "अस्ति ब्राह्मणः", "विद्यमानो ब्राह्मणः", विद्यते ब्राह्मणः" (काशिका) इत्यादि ।

ननूभयोरपि प्राप्तौ कथं निर्णयः ? इत्यत आह **लक्षण इति** । लक्षणे वर्तमानाद्धातोः परस्य लट आदेशत्वेन विहितादित्यर्थः । लडादेशः "लटः शतृशानचौ" इति विहितलडादेशः । **तस्य** लक्षणे विहितस्य शतुः । **सापेक्षत्वात्** । क्रियायामुपपदे सत्येव भवतीति, अन्यप्रतीतिसापेक्षप्रतीतिकत्वात् । **अस्य** लडादेशस्य । ननु कथमस्यानपेक्षत्वम् ? तत्रापि 'अप्रथमासामानाधिकरणे' इत्यन्यसापेक्षप्रतीतिकत्वस्यावभासादित्यत आह **अप्रथमेति** । **अतिप्रसक्तीति** । प्रथमासामानाधिकरण्येऽपि सर्वत्र शतृशानचौ भवतश्चेत् "पचति देवदत्तः" इत्यादावपि प्रसक्तिरित्येवम् अति-

प्रसक्तिपरिहारमात्रार्थत्वादित्यर्थः, न पुनरुपपदत्वोपस्थापनार्थत्वमपीति मात्रपदार्थः । एवं बलाबल-चिन्तायाः फलमाह **तथा चेति । एककालीनत्वेति** । '' 'खः सर्वधुरात्' इति सूत्रे 'खः' इति योगविभागः कर्तव्य इष्टसङ्ग्रहार्थः'' इति वृत्तिकारवचनाद् इहैककालशब्दादपि खप्रत्ययः । अत एव 'दक्षिणधुरीणः', 'उत्तरधुरीणः', 'शातोदरीखरञ्चरीकलनाधुरीणः' इत्यादिप्रयोगा उपपद्यन्ते । तथा च अवश्यकर्तव्यत्वेन योगविभागेनैव एककालादिशब्दादपि खप्रत्ययनिष्पादनसम्भवे 'कालाट्ठञ्' इति सूत्रे 'समानकालीनम्' इत्यादिप्रयोगा अपभ्रंशा एवेति प्रलपन्नाधुनिकः प्रत्यस्तः । तथा च शरणदेवः ''चिरकालीनादयः 'खः सर्वधुरात्' इत्यत्र योगविभागेन'' इति ।

**नाधिक्रियेतेति** । तथा च मन्दमतेः शङ्काऽपनोदार्थम् 'अन्ते' इति विशेषणमित्युक्तमयुक्तमिति भावः । ननु शाब्दन्यायं जानन् शास्त्रे अधिकारी च कथं मन्दमतिः ? इत्यत आह **केवलमध्यात्मेति** । ननु स्मरणाभावः संस्काराभावे सति स्यात् । स्मरणस्य संस्कारान्वयव्यतिरेकित्वात् । न तु दुःखे सति स्मरणाभावः । दुःखाभावस्य स्मरणहेतुत्वानवधृतेः ? इत्यत आह **दुःखस्येति । प्रसिद्धम्** अनुभवसिद्धम् । 'दुःखात्' इत्यत्र पञ्चमीविभक्त्यर्थोक्तिः **दुःखकारणादिति** । दुःखरूपकारणादित्यर्थः । कारणशब्दात् पञ्चमी तु ''निमित्तकारणहेतुषु सर्वासां प्रायदर्शनम्'' इति वक्तव्यात् । **मूर्छितः** सञ्जातमूर्छाऽवस्थः लुप्तसंस्कार इत्यर्थः । ननु न नञस्त्यागेनान्वयबोधः ? कलेवरत्यागस्य प्रमितत्वात्, नैसर्गिकश्च नञः क्रियान्वयः, इत्यतस्तात्पर्यमाह **कलेवरत्यागेति** । **एतां** स्मरणासम्भवलक्षणाम् । **लक्षणार्थम्** ''लक्षणहेत्वोः क्रियायाम्'' इति शास्त्रविहितम् ।

ननु कलेवरत्यागसमये दुःखाविनाभावेन संस्कारविलोपप्राप्त्या ''अस्मरणसम्भवात्, सुमतेरपि विभिन्नकालत्वविषया शङ्का युक्तैव । किञ्च शङ्का नाम वितर्कापरनामा संशयः । ''शङ्का वितर्क-भययोः'' (वै.को. ६.२.३८) इत्यभिधानात् । इयं च निश्चयरूपा प्रमितिरिति कथं संशयात्मा ? इति भावेन शङ्कते **सुमतेरपीत्यादिना** । **तत्त्वप्रतीतिः** प्रमा । **मरणकाल इति** । तत्र दुःखा-पादितसंस्कारविलोपस्यावर्जनीयत्वादिति भावः । **मनाक्** ईषत् । **दुःखायत इति** । दुःखशब्दो वृत्तिविषये दुःखवति वर्तते । ओजो यश आदिशब्दो यथा । ततः ''कर्तुः क्यङ्'' इति क्यङि, ''सनाद्यन्ता धातवः'' इति धातुत्वे, ''अकृत्सार्वधातुकयोः'' इति दीर्घत्वे च दुःखिवदाचरती-त्यर्थः । कण्ड्वादौ पठितस्य दुःखधातोः कण्ड्वादिलक्षणे ''यत्किञ्चित्सुखदुःख–तत्क्रियायाम्'' इति व्याख्यानात्, दुःख्यति = दुःखमनुभवतीत्यर्थः । पचाद्यचि, ''यस्य हलः'' इति, ''अतो लोपः'' इति च यकाराकारयोर्लोपे, कर्तुः क्यङि च, 'दुःखायते' इति रूपम्, दुःखमनुभवन्निवा-चरतीत्यर्थ इत्यपि **आहुः** ।

**विशिष्टम्** दुःखापादितसंस्कारविलोपशून्यम् । अज्ञानिनो मरणक्षणात् पूर्वमेव दुःखस्य समर्थितत्वात् कश्चिदपि मोहं नाप्नोतीति कथमुच्यते ? इत्यत आह **तत्काल इति** । मरणक्षणे । 'मोहम्' इति भाष्यपदस्य 'मूर्च्छाम्' इत्यर्थः । "मूर्च्छा तु कश्मलं मोहः" (अ.को.) इत्यभिधानात् । तथा च तस्य संस्कारविलोपहेतुमूर्च्छाऽभावेन प्राप्यस्मरणसम्भवात् "तं तमेति" (८.६) इति युज्यत इति भावो ज्ञेयः । "तस्य ह एतस्य" (बृ. ६.४.२) इति भाष्योदाहृतश्रुतौ "मरणक्षणे मोहं नाप्नोति" इत्यस्य "तत्क्षणे प्राप्य स्मरणमस्ति" इत्यस्य वाऽर्थस्याप्रतिभासादसङ्गतं तदुदाहरणम् ? इत्यतस्तात्पर्यमाह **तस्येति** । **मरणवैशिष्ट्यमात्रपरमिति** । अज्ञानिमरणात् ज्ञानिमरणे अतिशयप्रतिपादनपरेयं श्रुतिरित्यतो विशिष्टमेव तस्योत्क्रमणम् इत्युक्तार्थप्रमापकत्वाद् युक्तं तदुदाहरणम् । व्यवस्थापितं चैतत् "तदेकोऽग्रज्वलनम्" (ब्र.सू.अ. ४.२.९) इत्यधिकरण इति भावः । **भावप्रदीपिकायां तु** "**मोहः** अज्ञानम् अभिमानश्च, एतदुभयाभावे कस्यापि न दुःखम्, किमुत ज्ञानिन इति भावेनोक्तार्थे श्रुतिमप्याह 'तस्येति' " इत्युक्तम् **तत्** "सदा तद्भावभावितः" इति स्मृतिविशेषणम् । **तत्** अन्तकाले स्मरणम् । **तस्मिन् भावः** तस्मिन् मनसोऽन्तर्गतिः । नन्वन्तर्गतिर्मनसो धर्मः तत्कथं सा स्मृतपुरुषविशेषणम् ? इत्यत आह **आत्मोपचर्य इति** ॥ ॥ ६-७ ॥

**गीता**

## अभ्यासयोगयुक्तेन चेतसाऽनन्यगामिना ।
## परमं पुरुषं दिव्यं याति पार्थानुचिन्तयन् ॥ ८ ॥

***वि०वि०***— सदा तद्भावभावितत्वं स्पष्टयति **अभ्यासेति** । अभ्यास एव योगस्तेन युक्तेनानन्यगामिना अनन्यविषयेण चेतसा अनुचिन्तयन् परममुत्तमं पुरुषं पुरि शयं पूर्णं च, 'स वा अयं पुरुषः सर्वासु पूर्षु पुरिशयो नैनेन किञ्चनानावृतं नैनेन किञ्च नासंवृतम्' इति श्रुतेः । दिव्यं सृष्ट्यादिक्रीडायुक्तं याति ॥

***सा०सं०***— सदा तद्भावभावितत्वं स्पष्टयति **अभ्यासेति** । अभ्यासः पुनः पुनरावर्तनम् । तद्रूपयोगेनोपायेन युक्तेन सहितेन । **अनन्यगामिना**ऽनन्यविषयेण **चेतसा** । **परम्** उत्तमम् । **दिव्यं** सृष्ट्यादिक्रीडागुणयुक्तम् । दीव्यतेरौणादिको यक् । परममुत्तमं पुरि सर्वप्राणिदेहे शेते नियन्तृतया वर्तत इति वा, पूर्णत्वाद्वा पुरुषाख्यम् 'पॄ पालनपूरणयोः' इत्यतः कुषन्, धातोरुकारः । **अनुचिन्तयन् याति** । परमं पुरुषमित्यनुषङ्गः ॥

*अ०प्र०*— सन्ततस्मरणस्य अभ्यासोऽन्तरङ्गसाधनं दर्शयन् सदा तद्भावभावितत्वं स्पष्टयति **अभ्यासेति** ।

हे पार्थ ![1], अभ्यासयोगयुक्तेन[2], नान्यगामिना[3], चेतसा[4], दिव्यं[5], परमं[6], पुरुषं[7], अनुचिन्तयन्[8], तमेव यातीत्यन्वयः ।

हे पार्थ ![1], अभ्यासयोगयुक्तेन = अभ्यासः साधनं सजातीयप्रत्ययप्रवाहो वा, स एव योगः उपायः तस्मिन् युक्तेन प्रवर्तितेन । यद्वा, तेन = युक्तेन एकाग्र्येण[2], अत एव नान्यगामिना = नान्यं विषयं गन्तुं शीलं यस्य स तथा अनन्यविषयेण[3], चेतसा[4], दिव्यं द्योतनात्मकं क्रीडादिगुणयुक्तं वा[5], परमं = उत्तमं[6], पुरुषं = पिपर्ति पूर्णो भवतीति पुरुषः स एवायं पुरुषः सर्वासु पूर्षु पुरिशयो नैनेन किञ्चनानावृतं नैनेन किञ्चनासंवृतमिति श्रुतेः । सर्वासु पूर्षु विद्यमानोऽयं पुरुष इत्युच्यते । कुतः ? पुरिशयत्वात् । तदेवाह **नैनेति** । आवरणमन्तर्व्याप्तिः । संवरणं बहिर्व्याप्तिः इति श्रुत्यर्थः । एतादृशं पुरुषं[7], अनुचिन्तयन् = चिन्तयेत् सः तमेव[8], याति = प्राप्नोतीत्यर्थः ॥८॥

**भाष्यम्**

**सदा तद्भावभावितत्वं स्पष्टयति— अभ्यासेति । अभ्यास एव योगो अभ्यासयोगः दिव्यं पुरुषं पुरिशयं पूर्णं च । "स वा अयं पुरुषः सर्वासु पूर्षु पुरिशयो नैनेन किञ्चनानावृतं नैनेन किञ्चनासंवृतम् ।" इति श्रुतेः । दिव्यं सृष्ट्यादिक्रीडायुक्तम् । 'दिवु क्रीडा' इति धातोः ॥ ८ ॥**

*प०टी०*— कथं मनसस्तदन्तर्गमनम् ? किञ्च तेनात्मनो वासितत्वम् ? इत्यत उत्तरश्लोकमवतारयति **सदेति** । 'अभ्यासयोगाभ्याम्' इति प्रतीतिं वारयति **अभ्यासेति** । 'पुरुषश्चाधिदैवतम्' इत्युक्तः पुरुषोऽयं न भवति । दिव्यत्वेन विशेषणादित्यभिप्रायेण 'पुरुष'पदं सप्रमाणकं व्याचष्टे **दिव्यमिति** । 'दिव्य'शब्देनान्यव्यावृत्तिः कथम् ? इत्यत आह **दिव्यमिति** ॥

*प्र०दी०*— कुतोऽयमर्थ इत्यत उत्तरत्रैवमेव व्याख्यानादिति भावेनाह— **सदेति** । द्वन्द्वादिशङ्काव्युदासार्थमाह **अभ्यास एवेति** । अभ्यासातिरिक्तस्य योगस्य प्रकृते उपयोगिनोऽभावादिति भावः । पुरुषश्चाधिदैवतमिति प्रकृतो हिरण्यगर्भोऽत्रोच्यत इति प्रतीतिनिरासार्थमाह— **दिव्यमिति** । दिव्यत्वेन विशेषणादीश्वर एवायमित्यर्थः । "पृ पालनपूरणयोः" इत्यतो उणादि 'विदिपुरोश्च' इति कुषन्प्रत्ययविधानात् पूर्णं चेति सिद्ध्यति । सर्वासु पूर्षु वर्तमान इति स्वरूपानुवादेन पुरुष इति विधेयम् । तस्य व्याख्यानं पुरिशयमित्यादि । आवरणमन्तर्व्याप्तिः । संवरणं बहिराच्छा-

दनम्। ननु दिवि भवो दिव्यः। स च सूर्यमण्डलस्थत्वात् हिरण्यगर्भोऽपि भवतीति कश्चित्। अत आह— **दिव्यमिति**। औणादिको यक्प्रत्ययः। 'परमं' इति विशेषणादिति भावः॥

*भा०दी०*— **द्वन्द्वादीति**। षष्ठीतत्पुरुषादिगादिपदार्थः। विदिपुराश्चेत्युणादिसूत्रेण कुषन्प्रत्यये कित्वाद्गुणाभावे दुराष्टयपूर्वस्येत्युत्वे उरणरपर (१-१-५१) इति रपरत्वे नृपुरुष इति प्रसिद्धेरिति भावः॥ ८॥

*भा०र०*— **द्वन्द्वादीति**। "अभ्यासश्च योगश्च" इति द्वन्द्वः। "अभ्यासस्य योगः सम्बन्धः" इति षष्ठीतत्पुरुषः। "अभ्याससहितो योगोऽभ्यासयोगः" इति समानाधिकरणसमास इति प्रतीतिनिरासार्थमित्यर्थः। तन्निरासम् एवकारतात्पर्योक्त्या विशदयति **अभ्यासातिरिक्त-स्येति**। 'दिव्यम्' इति विशेषणानुवादः साभिप्राय इति भावेन व्याख्याति **दिव्यत्वेनेति**। **कुषन् प्रत्ययेति**। "पुरः-कुषन्" (उ.सू.) इति पूर्वसूत्राद् औणादिकः कुषन्प्रत्ययः "विदिपुरोश्च" इत्यत्राप्यनुवर्तते। तस्य च कित्त्वाद् गुणाभावे "उदोष्ठ्यपूर्वस्य" इत्युत्वे, रपरत्वे च पुरुषशब्दः 'पिपर्ति', 'पूर्यते वा' इति कर्तरि निष्पन्नः पूर्णमाहेति भावः। "सर्वासु पूर्षु पुरिशयः" (बृ. ४.५.१८) इति श्रौतपदानि नान्वितानि ? इत्यतोऽध्याहरति **वर्तमान इति**। न चेदं पुरुषशब्दार्थ-विवरणपरम्, शरीरे वर्तमानत्वमात्रप्रतीत्या अभिलषितार्थानवभासादित्यत उक्तम् **इति स्वरूपा-नुवादेनेति**। **तस्य** 'पुरुषः' इत्यस्य। **पुरिशयमितीति**। **पुरि** शरीरे, "अधिकरणे शेतेः" इति डः, "वर्णागमो वर्णविपर्ययश्च" इत्यादिना साधुरिति भावः। 'इत्यादि' इत्यादिपदेन "नैनेन किञ्चनानावृत्तम्, नैनेन किञ्चनासंवृतम्" (बृ. ४.५.१८) इति श्रुतिशेषग्रहः। तत्राऽवृतसंवृतपदयो-रपौनरुक्त्याय, "नानेन किञ्चिदव्याप्तं नानेनाच्छादितं न च" (बृ.भा. ४.५.१८) इति बृहद्भाष्यरीत्या विवक्षितं प्रकृत्यर्थमाह **आवरणमित्यादि**। श्रुतिशेषे अन्तर्बहिर्व्याप्तिप्रतीत्या पूर्णत्वं लभ्यत इति भाष्योक्तपूर्णत्वे प्रमाणमिदम्। "पॄ = पालन-पूरणयोः" इति धातुव्याख्याने "पूरणं सर्वत्र व्याप्तिः" इत्यभिमतमिति भावः। श्रुतौ इदम एतदो वा "द्वितीयाटौस्स्वेनः" इत्यन्वादेशे 'एनेन' इति रूपम्।

**कश्चिदिति**। यद्यपि **सङ्करः** "दिवि सूर्यमण्डले भवं पुरुषं यान्ति" (शां.भा. ८.८) इत्येवात्र श्लोके अभाषत। तथाऽपि "स एवादित्यमण्डलान्तर्गतो हिरण्यगर्भ एव पुरुषोऽधिदैवतं च" इति, "पुरुषश्चाधिदैवतम्" (८.४) इत्यत्र भाषितवान्, इत्यत एवमुक्तम्। **औणादिको यक् प्रत्यय इति**। 'अर्घ्यादयश्च' इत्यत्र 'जनेर्यक्' इत्यतो यक्प्रत्ययानुवृत्तेरर्घ्यादिगणपठिततया तत्रत्यत्व-विवक्षया दीव्यतेर्यगुत्पादनीयः, "हलि च" इति दीर्घाभावश्चेति भावः। "दिवि भवं दिव्यम्" इति

परोक्तं कुतो न स्यात् ? इत्यत आह **परममितीति** । न हि हिरण्यगर्भस्य निरुपचरितं परमत्वं युक्तमिति भावः । ''सृष्ट्यादिक्रीडादियुक्तम्'' इति भाष्ये सृष्ट्यादिश्च सा क्रीडा चेति विग्रहः । आद्यआदिपदेन स्थित्यादेः सङ्ग्रहः, द्वितीयेन विजिगीषादेः । दीव्यतेः क्रीडादिकमर्थ इति कुतः ? इत्यत उक्तम् **दिवु क्रीडेति धातोरिति** । तथा व्याख्यानादित्यर्थ इति व्याख्यानं द्रष्टव्यम् ॥८॥

**गीतातात्पर्यनिर्णयः**

**मद्भावं मयि भावम् । सदा तद्भावभावितानामेव स्मरन् त्यजतीति केवलं तत्कालस्मरणं भवति । न चेत् स्मरतोऽपि समाधिस्थस्खलनवत् पूर्वकर्मानुसारिस्मृत्या तत्प्राप्तिरेव भवति । अपरोक्षज्ञानिनां प्रारब्धकर्मावसाने स्मरंस्त्यजतीति भवत्येव ।**

*प्रका०*— ''अन्तकाले च मामेव स्मरन् मुक्त्वा कलेवरम् । यः प्रयाति स मद्भावं याति'' इत्यस्यार्थमाह **सदेत्यादिना** । सदा तद्भावभावितत्वाभावे भगवत्स्मृतिरन्तकाले न भवतीत्याह **न चेदिति** ।

*न्या०दी०*— प्रयाणकाले च कथं ज्ञेयोऽसीत्यस्य किमर्थं कथम्भूतः केन प्रकारेण स्मर्तव्योऽसीत्यर्थः । तत्र किमर्थं स्मर्तव्योऽसीत्यस्य परिहार उच्यते 'अन्ते'ति । तत्र मद्भावपदस्य अन्यथाप्रतीतिनिरासायार्थमाह **मद्भावमिति** । अन्यथा तं तमेवैतीति वाक्यशेषविरोध इति भावः । नन्वन्तकाले स्मरणादेव तत्प्राप्तेः सदा तद्भावभावितत्वं किमर्थमुच्यत इत्यत आह **सदेति** ॥ न तत्प्राप्त्यर्थं सदा तद्भावभावितत्वमुच्यते । किन्तु स्मरन् त्यजतीत्युक्तं साक्षादन्तकालस्मरणं सदा तद्भावभावितानामेव भवतीति साक्षादन्तकालस्मरणोपाय एवोच्यत इति भावः । ननु अन्तकाल एव महता प्रयत्नेन भगवत्स्मरणस्य कर्तुं शक्यत्वात् किं सदा तद्भावभावितत्वेनेत्यत आह **न चेत् इति** ॥ सदा तद्भावभावितत्वाभावे महता प्रयत्नेन स्मरतोऽप्यन्यविषय एव प्रारब्धकर्मवशात् स्मृतिर्भवति । ततश्च तत्प्राप्तिरेव भवति । यथा खलु महता प्रयत्नेन समाधिं कुर्वतोऽपि प्रारब्धकर्मवशात् ततः स्खलनं भवति । अतः सदा तद्भावभावितत्वेन भाव्यमिति भावः । यदि प्रारब्धकर्मवशादन्तकाले ब्रह्मस्मृतिर्न भवेत् तर्हि ज्ञानिनामपि प्रारब्धकर्मभावादन्तकाले ब्रह्मस्मृत्यभावेन मोक्षाभावः प्रसज्यत इत्यत आह **अपरोक्षेति** ॥ अपरोक्षज्ञानिनां स्मरन् त्यजतीत्युक्तं साक्षादन्तकालस्मरणं भवत्येव । अतो न अमोक्षः । तस्य अप्रारब्धपूर्वोत्तरकर्मनाशाश्लेषसद्भावात् प्रारब्धकर्मणां परिमितत्वेन भोगेनावसानसम्भवादिति भावः ।

***भा०दी०*— तत्प्राप्तिरेव भवतीति** । अन्यवस्तुप्राप्तिरेव भवतीत्यर्थः ॥ **अप्रारब्धेति** । प्रारब्धेतरसञ्चितागामिकर्मणां यथाक्रमं नाशाश्लेषेत्यर्थः । "तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ" इति सूत्रादिति भावः ॥ **भोगेनेति** । "भोगेन त्वितरे क्षपयित्वाऽथ सम्पत्स्यत" इति सूत्रादिति भावः ॥

**गीतातात्पर्यनिर्णयः**

**"प्रयाणकालेऽपि च मां ते विदुः" इत्युक्तत्वात् ॥**

***न्या०दी०*—** एवं व्याख्याने भगवद्वाक्यसम्मतिमाह **प्रयाणेति** ॥ नन्वेवं सति अन्तकाल-स्मरणस्य प्रारब्धकर्मावसानमेव कारणं, तत्कारणतयाऽपरोक्षज्ञानं चेति प्राप्तम् । तथा च किं सदा तद्भावभावितत्वेनेत्यत आह **युक्तेति** ॥ सत्यं साक्षादन्तकालस्मरणस्य प्रारब्धकर्मावसानमेव कार-णम् । तत्कारणत्वात् अपरोक्षज्ञानं चेति । तथापि सदा तद्भावभावितत्वं च अन्तकालस्मरणकारणं भवत्येव । अपरोक्षज्ञानसाधनत्वात् । सदा तद्भावभावितत्वस्यापरोक्षज्ञानसाधनत्वेन युक्तचेतस इत्युक्तत्वादिति भावः । "युक्तचेतसः" इति विशेषणान्नित्यं स्मरतामेवापरोक्षज्ञानं जायते ।

**गीतातात्पर्यनिर्णयः**

**भक्त्या ज्ञानान्निषिद्धानां त्यागान्नित्यं हरिस्मृतेः ।**
**अरागाद् विहितात्यागादित्येतैरेव संयुतैः ।**
**अपरोक्षदर्शनं विष्णोर्जायते नान्यथा क्वचित् ॥"**

**—इति सत्तत्वे ॥ ५–८ ॥**

***प्रका०*—** "साधिभूताधिदैवं मां साधियज्ञं च ये विदुः । प्रयाणकालेऽपि मां ते विदुर्युक्त-चेतसः" । इत्युक्तत्वात् अपरोक्षज्ञानिनामन्तकाले प्रारब्धकर्मावसाने च भगवत्स्मृतिर्भवत्येव । न केवलं निरन्तरस्मरणं विष्णोरापरोक्ष्यसाधनम्, किन्तु भक्त्यादिसहितमेव सन्ततस्मरणं विष्णो-रापरोक्ष्यसाधनमित्यत्र प्रमाणमाह **भक्त्येति** ॥

***न्या०दी०*—** अनेन युक्तचेतसो मामाश्रित्य यतन्ति ये ते तद्ब्रह्म विदुरिति योजना सूच्यते । यन्नित्यस्मरणं भगवदपरोक्षज्ञानसाधनमुक्तं तद्भक्त्यादियुक्तमेव तथा । न स्वयमेवेति स्मृत्याऽऽह **भक्त्येति** ॥

*भा०दी०*— **अनेनेति** । इत्युक्तत्वादिति मूलवाक्येन । **युक्तचेतसः** परोक्षज्ञानिनः । तद्ब्रह्म विदुर्व्याप्तं तद्रूपं पश्यन्तीत्यर्थ इति भावः ॥ ५-८ ॥

**गीता**

**कविं पुराणमनुशासितार-**
**मणोरणीयांसमनुस्मरेद्यः ।**
**सर्वस्य धातारमचिन्त्यरूप-**
**मादित्यवर्णं तमसः परस्तात् ॥ ९ ॥**

*वि०वि०*— कथम्भूतः केन प्रकारेण स्मर्तव्योऽसीत्यत्र परिहारमाह **कविमिति श्लोकद्वयेन** । कविं सर्वज्ञम् । 'त्वं कविः सर्ववेदनात्' इति वचनात् पुराणं पुरापि नवम् । पृषोदरादित्वात्साधुः । अनुशासितारं शिक्षकम् । अणोरप्यणीयांसं सर्वस्य धातारं धारणपोषणकर्तारम् । अचिन्त्यरूपं वाङ्मनसा गोचरस्वरूपम् । आदित्यवर्णं सूर्यसदृशदेहप्रभम् । देहित्वे मृत्यादिप्रसङ्ग इत्यत उक्तं **तमसः परस्तादिति** । तमसः अव्यक्तात्परस्तात्स्थितम् । 'अव्यक्तं वै तमः । परस्ताद्धि स तत' इति श्रुतेः । अप्राकृतविग्रहमित्यर्थः ।

यद्वा, मृत्युस्तमः । 'मृत्युर्वै तमोज्योतिरमृतम्' इति श्रुतेः । मृत्युमदादिदेहरहितमित्यर्थः ॥

*वा०ल०*— 'कविं पुराणम्' इत्यत्र तमसः अज्ञानात् परस्तात् उपरि विद्यमानम् ॥

*सा०सं०*— कथम्भूतः स्मर्तव्योऽसीति प्राकृतप्रश्नस्योत्तरमाह **कविमिति** । **कविं** सर्वज्ञम् । **पुराणम**नादिम् । **अनुशासितारं** शिक्षकम् । अणोरणीयांसमत्यन्ताणुप्रमाणम् । **सर्वस्य** चराचराख्यविश्वस्य । **धातारं** धारणपोषणकर्तारम् । **अचिन्त्यरूपं** साकल्येन मनसोऽविषयम् । **आदित्यवर्णं** रविप्रभम् । **तमसः** प्रकृतेर्मृत्योर्वा । 'मृत्युर्वाव तमः' इति श्रुतेः । ताभ्यां **परस्तात्** । तदुभयास्पृष्टत्वेन स्थितमिति शेषः ॥

*अ०प्र०*— पुनरप्यनुचिन्तनीयं पुरुषं विशिनष्टि द्वाभ्याम् । तत्र **कविमिति** ।

अथान्वयः— हे अर्जुन !, यः पुरुषः[१], कविं[२], पुराणं[३], अनुशासितारं[४], अणोरणीयांसं[५], सर्वस्य धातारं[६], अचिन्त्यरूपं[७], आदित्यं वर्णं[८], तमसः परस्तात्[९], वर्तमानं[१०] एवम्भूतं पुरुषं अन्तकाले योऽनुस्मरेत्[११] स तं परं पुरुषमुपैतीति उत्तरेणान्वयः । हे अर्जुन !, यः पुरुषः[१], कविं

सर्वज्ञं त्वं कविः सर्ववेदनात् इत्युक्तेः । यद्वा, यः स्वयं नित्यः सन् सर्वान्तर्यामित्वेन सर्वं पश्यति स कविस्तं[2], पुराणं = पुरापि नवं अनादिसिद्धं[3], अनुशासितारं = नियन्तारं पृषोदरादित्वात्साधुः । यद्वा, यस्य सान्निध्याद्विश्वं चलति सोऽनुशासिता तं[4], अणोरणीयांसं = सूक्ष्मादपि अतिसूक्ष्मं यद्वा, अक्ष्णोः सूक्ष्मादपि अणीयांसं = अतिसूक्ष्मं[5], सर्वस्य धातारं = धारणपोषणकर्तारं[6], अचिन्त्यरूपं अत एव अपरिमितमहित्वात् मन आद्यगोचरं[7], आदित्यवर्णं = वर्णस्तेजः यस्मादादित्याद्भवति स आदित्यवर्णः तम् । यद्वा, आदित्यवत्स्वप्रकाशात्मको वर्णः स्वरूपं देहं यस्य तं[8], तमसः परस्तात् = वर्तमानं देहित्वे मृत्यादिकं स्यादित्यत उक्तं **तमस इति** । तमसः प्रकृतेः परस्तात् वर्तमानं अव्यक्तात्परतः स्थितं अव्यक्तं वै 'तमः परस्ताद्धि सततमि'ति श्रुतेः । यद्वा, मृत्युस्तमः 'मृत्युर्वै तमोज्योतिरमृतमि'ति श्रुतेः । अप्राकृतमृत्युशून्यदेहमित्यर्थः[10] अनुस्मरेत् एवम्भूतं पुरुषं अन्तकाले योऽनुस्मरेत्[11] स तं परं पुरुषमुपैतीति उत्तरेणान्वयः ॥ ९ ॥

**भाष्यम्**

**ध्येयमाह— कविमिति । कविं = सर्वज्ञम् । "यः सर्वज्ञः" इति श्रुतेः । "त्वं कविः सर्ववेदनात्" इति च ब्राह्मे । धातारं = धारणपोषणकर्तारम् । 'डुधाञ् धारणपोषणयोः' इति धातोः । "धाता विधाता परमोत सन्दृक्" इति च श्रुतिः । "ब्रह्मा स्थाणुः" इत्यारभ्य "तस्य प्रसादादिच्छन्ति तदादिष्टफलां गतिम्" इत्यादेश्च मोक्षधर्मे । तमसोऽव्यक्तात् परतः स्थितम् । तमसः परस्तात् इति । "अव्यक्तं वै तमः । परस्तात् हि स ततः ।" इति पिप्पलादशाखायाम् । "मृत्युर्वा व तमः । मृत्युर्वै तमो ज्योतिरमृतम्" इति श्रुतेः ॥ ९ ॥**

***प०टी०***— तत्काले स्मर्तव्यो हरिरित्युक्तम् । कीदृशोऽसौ ध्येयः ? इत्याशङ्कानिवारणायोत्तरश्लोकमवतारयति **ध्येयमिति** । 'कवि'शब्देन विवक्षितार्थमाह **कविमिति** । भगवतः सार्वज्ञ्ये प्रमाणमाह **य इति** । सर्वज्ञः 'कवि'शब्दार्थ इत्यत्र प्रमाणमाह **त्वमिति** । विवक्षितं 'धातृ'-शब्दार्थमाह **धातारमिति** । 'धातृ'शब्द उक्तार्थः कुतः ? इत्यत आह **डुधाञिति** । भगवतो धारणपोषणकर्तृत्वे प्रमाणमाह **धातेति** । आदित्यवर्णत्वे मरणादि स्यादित्यतोऽन्त्यपदेऽत्र सप्रमाणकं व्याचष्टे **तमस इति** ॥

***प्र०दी०***— उत्तरश्लोकगतविशेषणबलाच्च परमात्मैवायमिति भावेन तत्तात्पर्यमाह— **ध्येयमिति** । आह— विशिनष्टीत्यर्थः । ननु कवित्वमन्येषामप्यस्ति । तत्कथं भगवतो विशेषण-

मित्यत आह— **कविमिति** । परमेश्वरस्य सार्वज्ञे प्रमिते भवेदिदं व्याख्यानम् । तदेव कुत इत्यत आह— **य इति** । सर्वज्ञः कविशब्दार्थ इत्येतत्कुत इत्यत आह— **त्वमिति** । अन्येषां तु "सर्वे विमोहितधियः" इत्यादिना सार्वज्ञाभावः प्रमितः । ननु धाता विरिञ्चोऽपि प्रसिद्धः । तत्कथ-मेतद्भगवतो विशेषणमित्यत आह— **धातारमिति** । कुतोऽयमर्थ इत्यत आह— **डु धाञिति** । तृचः कर्तृवाचित्वं प्रसिद्धमेव । परमेश्वरस्य धातृत्वसद्भावे किं प्रमाणमित्यत आह— **धातेति** । विधाता कर्ता । परमा सन्दृक् परमज्ञानरूपः । "सर्वस्य धातारं" इत्येतद्भगवत एव नान्येषामित्यत्र प्रमाण-माह— **ब्रह्मेति** । तेन भगवता दिष्टं दत्तं फलं सुखं यस्यां सा तथोक्ता । मोक्षधर्मे कथित-मिति शेषः । 'तमसः परस्तात्' इत्येतदादित्यादिसाधारणमित्यतो द्वेधा सप्रमाणकं व्याचष्टे— **तमस इति** । स्थितमिति शेषोक्तिः । अप्राकृतविग्रहमित्यर्थः ॥

***भा०दी०***— **कर्तृवाचित्वं प्रसिद्धमेवेति** । ण्वुल्तृचौ (३-१-१३३) इति सूत्रे कर्तरि विधानादिति भावः । धातृपदेन धारणकर्त्रर्थकेनापौनरुक्त्याह **विधाता कर्तेति** । **विशेषणमिति** ॥

***भा०र०***— "अयं दिव्यं परमपुरुषम् अनुचिन्तयन्" (८.८) इति चिन्तनापरपर्यायध्यान-विषयस्योक्तत्वाद् 'आह' इत्यस्य तात्पर्यमाह **विशिनष्टीति** । ध्येय उक्तः । कीदृशोऽसौ ? इत्य-पेक्षायाम्, अत्र तस्य विशेषणान्युच्यन्त इत्यतो न पुनरुक्तिर्दोष इति भावः । **विशेषणमिति** । तस्येतरव्यावृत्तस्वभावत्वादिति भावः । **तदेव** सार्वज्ञमेव । 'वेदनात्' इति भाष्यपदस्य 'ज्ञानात्' इत्यर्थः । कवित्वमन्येषां ब्रह्मादीनामप्यस्तीति कृतचोद्यं परिहर्तुमाह **अन्येषां त्विति** । एकादश-स्कन्धे "सर्वे विमोहितधियस्तव माययेमे ब्रह्मादयस्तनुभृतो बहिरर्थभावाः" (भाग. ११.७.१७) इति प्रमाणमस्ति । यत्र च ब्रह्मादीनां विमोहितधीत्वम्, ब्रह्मवायुसरस्वतीभारतीनाम्

"सर्वेषां ब्रह्मपदवीयोग्यानां पूर्वमेव तु ।
अभावस्त्वापरोक्षस्य मोहो ज्ञानस्य भण्यते ॥" (श.वि.)

इति भगवत्पादव्याख्यानात् शतजन्मभ्यः पूर्वमपरोक्षज्ञानाभाववत्त्वम्, रुद्रादीनां तु "रुद्राद्यास्तन्व-भीमानाद् बहिरर्थयुजस्तथा" (श.वि) इति वचनाद् गौणमेव विमोहितधीत्वम् । तत एवोभयेषामपि अनादितः अपरोक्षज्ञानाभावलक्षणसार्वज्ञाभावः प्रमाणसिद्ध इति युक्तं कवित्वस्य विशेषणत्वमिति भावः । अत्र श्लोके ज्ञातव्यविशेषस्तत्तात्पर्यनिर्णयं व्याकुर्वद्भिः सुधीन्द्रतीर्थश्रीमच्चरणैर्भागवतोपास-नायां स्पष्टीकृतः ।

**प्रसिद्धः** "धाताऽब्जयोनिर्द्रुहिणो विरिञ्चः कमलासनः" (अ.को.) इत्यभिधाने । ननु धातु-व्याख्याने धारणपोषणे प्रतीयेते, न तत्कर्तृत्वमपि, तत्कथं भाष्यते ? इत्यत आह **तृच इति** ।

दधातेः 'ण्वुल्तृचौ' इति ण्वुल्प्रत्यये कृते, 'कर्तरि' इत्यनुवृत्त्या तस्य कर्तृत्वमर्थ इति व्याकरण-शास्त्रे प्रसिद्धमित्यर्थः । विपूर्वो दधातिः करोत्यर्थ इति प्रसिद्धेराह **विधाता कर्तेति** । **नान्येषा-मितीति** । तथा च रूढ्या विरिञ्चस्य, 'धारणकर्तारम्' इति योगेन, "व्यक्ताव्यक्तं भरते विश्वमीशः" इत्यादिवचनेन च शिवादीनां च न धातृपदार्थता । "ब्रह्मा स्थाणुः" (मो.ध.) इत्यत्र विरिञ्च-शिवादीनां भगवत्प्रसादायत्ततत्फलप्राप्त्यावेदनाद् ध्येयस्य चानन्यायत्ततया स्वप्रधानत्वौचित्यादिति भावः । 'तदादिष्टफलाम्' इत्यत्र तच्छब्दार्थं वदन् विवक्षितविग्रहं दर्शयति **तेनेति** । ल्यबुपपत्तये शेषमाह **कथितमिति** । "ब्रह्मा स्थाणुर्मनुर्दक्षो भृगुर्धर्मस्तथा यमः" (मो.ध.) इत्यारभ्य "तस्य वेदस्य मर्यादां पूजयन्तः सनातनीम्" (मो.ध.) इत्युक्त्वा, "तस्य प्रसादात्" इति मोक्षधर्मे नारा-यणीये कथितमित्यर्थः । **आदित्यादीति** । तस्य तेजोरूपतया तद्विरुद्धत्वादिति भावः ।

ननु मूलप्रकृतिरूपाव्यक्तात् परतः स्थितत्वं भगवति न वक्तुं युक्तम् । "समना चासृत्युप-क्रमात्" (ब्र.सू. ४.२.७) इति सूत्रे ईश्वरमूलप्रकृत्योः समव्याप्तिस्थितेः । गुणत्रयरूपाव्यक्तपरत्वं तु अव्याकृतादिसाधारणम्, इत्यतः "परतः स्थितम्" इति भाष्यभावं तात्पर्यनिर्णयोक्तमाह **अप्राकृ-तेति** । "अव्यक्तशब्देन प्रकृतिः" इत्यन्यत्र भगवत्पादीयवचनात् 'अप्राकृत' इत्युक्तिः । **सः** परमात्मा, **ततः** तमसः परस्ताद् 'हि' इति प्रसिद्धिः । तमःशब्दस्यार्थान्तरं भाषते **मृत्युर्वा व तम इतीति** । 'मृत्युः' इत्यादिभाष्यं स्पष्टार्थत्वाद्, "द्वेधा सप्रमाणकम्" इत्यवतारितत्वाच्च न विशिष्य व्याख्यातम् । मृत्युमतिक्रान्तमित्यर्थः । **भावप्रदीपिकायां तु** आदित्यवर्णत्वे सविग्रहत्वेन मरणादि स्यात्, इत्यतोऽन्त्यपादं सप्रमाणकं व्याचष्टे "तमस इत्यादि" इत्यवतारितम् । एवं व्याख्यान-द्वयेनाप्यादित्यादिव्यावृत्तं किं विशेषणं लब्धम् ? इत्यतः 'अप्राकृतविग्रहम्' इत्युक्तमित्यपि आहुः ॥ ९ ॥

**गीता**

**प्रयाणकाले मनसाऽचलेन**
**भक्त्या युक्तो योगबलेन चैव ।**
**भ्रुवोर्मध्ये प्राणमावेश्य सम्यक्**
**स तं परं पुरुषमुपैति दिव्यम् ॥ १० ॥**

*वि०वि०*— एवम्भूतं भगवन्तं निश्चलेन मनसा । तदुक्तम्—

'ब्रह्मरुद्ररमादिभ्योऽप्युत्तमत्वं स्वतन्त्रताम् ।
सर्वस्य तदधीनत्वं सर्वसद्गुणपूर्णताम् ॥
निर्दोषत्वं च विज्ञाय विष्णोस्तत्राखिलाऽधिकः ।
स्नेहो भक्तिरिति प्रोक्तः सर्वोपायोत्तमोत्तमः ॥'

इत्याद्युक्तलक्षणया भक्त्या योगबलेन च युक्तो यः, भ्रुवोर्मध्ये प्राणमावेश्य सम्यक् प्रयाणकालेऽनुस्मरेत् । स तं दिव्यं परमं पुरुषमुपैति ॥

*वा०ल०*— 'भ्रुवोर्मध्ये प्राणमावेश्य' इत्यत्र प्राणमाकृष्य भ्रुवोर्मध्ये निवेश्य श्वासनिरोधं कृत्वेत्यर्थः ॥

*सा०सं०*— **भक्त्या युक्तः सन् प्रयाणकाले योगबलेन भ्रुवोर्मध्ये प्राणमावेश्याचलेन मनसा यः स्मरेत् स दिव्यं परमुत्तमं पुरुषमुपैति** इति योजना । अत्र 'आदित्यवर्णम्' इति सशरीरत्वप्राप्तेर्जन्मादिप्रसङ्गः इति शङ्काव्युदासाय 'तमसः परस्तात्' इत्युक्तम् । तद्देहस्याप्राकृतत्वान्न जन्मादिदोष इति भावः । योगबलेनैव भ्रुवोर्मध्ये प्राणमावेश्येत्येतद्वायुजयादिमन्मात्रासाधारणम् । न तु उच्चक्रमिषोः सर्वस्य साधारणम् । वायुजयहीनानां ज्ञानभक्तिवैराग्यपूर्त्यैव मुक्तिसिद्धेः । वायुजयादिमतां तु ईषज्ज्ञानाद्यसम्पूर्तावपि वायुजयादौ निपुणानां तद्बलादेवाल्पमुक्तिः किञ्चित् शीघ्रं च भवतीति विशेष इति ॥

*अ०प्र०*— साधकाः द्विविधाः भक्त्यादिप्रधानाः वायुजयादिप्रधानाश्चेति तत्र वायुजयादि-योगयुक्तानां मृतिकाले विशेषकर्तव्ये मनोनैश्चल्यहेतुमाह **प्रयाणेति** ।

यः प्रयाणकाले[१], अचलेन[२], मनसा[३], योगबलेन च[४], एवं[५], भ्रुवोर्मध्ये[६], सम्यक्[७], प्राणं[८], आवेश्य[९], भक्त्या युक्तः सन्[१०] अनुस्मरेत् इति पूर्वेण अन्वयः । दिव्यं पुरुषं = अन्तकाले यः स्मरेदित्यर्थः[११] सः पुरुषः[१२], तं परमं पुरुषं[१३-१५], उपैति[१६] ॥

हे अर्जुन !, यः पुरुषः प्रयाणकाले = निर्याणसमये[१], अचलेन = निश्चलेन मनसा[३], योग-बलेन च वायुजययोगी सुषुम्नामार्गेण गमनरूप अभ्यासबलेन चकारेण भक्त्यादिसाधनबलेन वा[४], एवं भ्रुवोर्मध्ये = ब्रह्मरन्ध्रे[६], सम्यक् प्राणं आवेश्य = संस्थाप्य[९], भक्त्या युक्तः सन् = भक्तियुक्तत्वं कथं चेत्युपपादयति । ब्रह्मरुद्ररमादिभ्योऽप्युत्तमत्वं स्वतन्त्रतां सर्वस्य तदधीनत्वं सर्वसद्गुणपूर्णतां[१०] 'निर्दोषत्वं च विज्ञेयं विष्णोस्तत्राखिलाऽधिकः । स्नेहो भक्तिरिति प्रोक्ता सर्वोपायोत्तमोत्तमः' इत्यागमोक्तं ज्ञेयं इति भक्त्या युक्तः सन्[१०] केवलादभ्यासयोगादपि प्रणवाधारमध्यासमन्तरङ्गं विधित्सुः प्रतिजानीते । यद्वा, वायुजयादियुक्तानां मरणकाले कर्तव्यमेव स ध्येयं केन प्रकारेणेत्यस्य

परिहारत्वेन प्रपञ्चयति । दिव्यं पुरुषं अन्तकाले यः[११] अनुस्मरेत् इति पूर्वेणान्वयः । सः[१२], तं[१३], परमं पुरुषं[१४], उपैति प्राप्नोतीति सत्यम् ॥ १० ॥

भाष्यम्

**वायुजयादियोगयुक्तानां मृतिकालकर्तव्यमाह विशेषतः– प्रयाणकाल इति । वायुजयादिरहितानामपि ज्ञानभक्तिवैराग्यादिसम्पूर्णानां भवत्येवमुक्तिः । तद्वतां तु ईषज्ज्ञानाद्यसम्पूर्णानामपि निपुणानां तद्बलात् कथञ्चित् भवतीति विशेषः ।**

**उक्तं च भागवते—**

**"पानेन ते देवकथासुधायाः प्रवृद्धभक्त्या विशदाशया ये ।**
**वैराग्यसारं प्रतिलभ्य बोधं यथाऽञ्जसा त्वाऽऽपुरकुण्ठधिष्ण्यम् ।**
**तथा परे त्वात्मसमाधियोगबलेन जित्वा प्रकृतिं बलिष्ठाम् ।**
**त्वामेव धीराः पुरुषं विशन्ति तेषां श्रमः स्यान्न तु सेवया ते ॥"**

**—इति ।**

**"ये तु तद्भाविता लोकाः एकान्तित्वं समाश्रिताः ।**
**एतदभ्यधिकं तेषां तत्तेजः प्रविशन्त्युत ॥"**

**—इति च मोक्षधर्मे ।**

**"सम्पूर्णानां भवेन्मोक्षो विरक्तिज्ञानभक्तिभिः ।**
**नियमेन तथाऽपीरजयादियुतयोगिनाम् ।**
**वश्यत्वान्मनसस्त्वीषत् पूर्वमप्याप्यते ध्रुवम् ॥"**

**—इति च व्यासयोगे ॥ १० ॥**

*प०टी०*— उत्तरश्लोकमवतारयति **वाय्विति** । नन्वेवं चेद्वायुजयादिमतामेव मुक्तिर्नान्येषा-मन्यथाऽभ्यासवैयर्थ्यादित्येतत् सप्रमाणकं परिहरति **वायुजयादीति** ॥

*प्र०दी०*— उत्तरश्लोकोक्तं सर्वं सर्वोच्चिक्रमिषुसाधारणमिति प्रतीतिनिरासार्थमाह— **वायु-जयादीति** । साधकाः द्विविधाः भक्त्यादिप्रधाना वायुजयादिप्रधानाश्चेत्यतो विशेषणम् । 'विशेषतः'

इत्यनेन भक्त्यादीनां साधारण्यमाह— ननु च ''अनुस्मरेत् यः स तं परं पुरुषमुपैति'' इत्यन्वयादेकस्य वाक्यस्य **कथं** भिन्नविषयत्वमुच्यते। एकस्मिन्नपि वाक्ये योगबलेनैव ''भ्रुवोर्मध्ये प्राणमावेश्य'' इत्येतन्न **सर्वविषयमित्ये**तावन्मात्रमत्र प्रतिपाद्यते। यथा ''प्रातरुत्थाय'' इति श्रुतौ न भृशं वदेदित्यादिकं किञ्चित्**सा**धारणं किञ्चिदसाधारणम्। कुतोऽस्यासाधारण्यं कल्प्यत इत्यत आह— **वायुजयादीति**। अतो न तत्सर्वसाधारणमिति शेषः। तर्हि को विशेषोऽन्येषां येन वायुजयादिक्लेशमधिकमनुभवन्तीत्यत आह— **तद्वतां त्विति**। निपुणानां वायुजयादौ कथञ्चिदल्पा इत्यर्थः। किञ्चित् शीघ्रं चेत्यपि ग्राह्यम्। अत्र प्रमाणान्याह— **उक्तमिति**। यथा यथार्थं बोधं धिष्ण्यम्। मन्दिरं इन्द्रियम्। त्वां विशन्त्ये**व** न तु **स इ**व अञ्जसा तद्भाविता तेन भगवता वासिताः। एतन्मुक्तिलक्षणं फलम्। तेजो नारायणाख्य**म्**। ईरः समीरः। ध्रुवं ब्रह्म आप्यते तैः॥

***भा०दी०***— योगयुक्तानामित्यस्य वायुजयादीति विशेषणमिति विशेषतो मृतिकालकर्तव्यमित्युक्तिलब्धार्थमाह **भक्त्यादीनामीति**। **साधारण्यमिति**। द्विविधसाधकानामिति योज्यम्। कविमिति श्लोकस्थयच्छब्दस्य प्रयाणेति श्लोकस्थतच्छब्देनान्वयं दर्शयति **इत्यन्वयादिति**। **भिन्नविषयत्वमिति**। कविमित्यस्य द्विविधसाधकविषयत्वं प्रयाणेत्यस्य वायुजयादियोगविषयमित्यर्थः। **इति श्रुताविति**। 'प्रातरुत्थाय सन्ध्यामुपासीत यत्सन्ध्यामुपासते ब्रह्मैव तदुपासत' इत्यादि ज्ञानपादीयपरामर्शे जैमिनिरिति सूत्रभाष्योदाहृतश्रुतौ सन्ध्योपासनादिकं वर्णत्रयसाधारणं होमादिकं गृहस्थाद्यसाधारणं न भृशमित्यादि सर्वसाधारणमित्यर्थः। ननु सेवयेत्यत्र शेषमाह **न तु त इव अञ्जसेति**। पुरुषं विशतीत्यन्वय इति भावः। **एतदित्यनुवादः**। **मुक्तिलक्षणमिति** व्याख्या॥

***भा०र०***— उच्चिक्रमिषुसाधारणम् = उत्क्रमणेच्छुसाधारणं कथं सर्वसाधारणं न भवति ? इत्यतस्तद्वक्तुमाह **साधका इति**। 'मोक्षस्य' इति संयोज्यम्। **विशेषणं** 'वायुजयादि' इति योगविशेषणम्। **भक्त्यादीनाम्** भक्तिज्ञानवैराग्यादीनाम्। एकवाक्यत्वं घटयितुमुक्तम् **इत्यन्वयादिति**। यत्तच्छब्दयोरेकविषयत्वव्युत्पत्तेरिति भावः। **भिन्नविषयत्वम्** उक्तसाधकद्वयविषयत्वम्। **न सर्वविषयम्** द्विविधसाधकविषयं नेत्यर्थः। **प्रतिपाद्यते** भाष्ये। एकवाक्य एव साधारणासाधारणविशेषणोपादानं क्व दृष्टम् ? इत्यतो दृष्टान्तमाह **यथेति**।

**इति श्रुतौ** ''प्रातरुत्थाय सन्ध्यामुपासीत'', ''यत्सन्ध्यामुपासते ब्रह्मैव तदुपासते'', ''अथ देवान् नमेत्, जुहुयात्, वेदानावर्तयीत, नान्यत्किञ्चिदाचरेत्, न सुरां पिबेत्, न पलाण्डुं भक्षयीत, ''न भृशं वदेत्, न विस्मरेतात्मानम्, सोमं पिबेत्, हुतशेषेण वर्तयेत्'' इति, ज्ञानपरभाष्योदाहृतश्रुतौ

"न भृशं वदेत्, न विस्मरेतात्मानम्" इत्येवंरूपं किञ्चिद्विशेषणं सर्वमुमुक्षुसाधारणम् । "जुहुयात्" "वेदानावर्तयीत", "सोमं पिबेत्, इत्यादि किञ्चिच्च विशेषणं गृहस्थाद्यसाधारणं दृष्टमित्यर्थः । **अस्य** भ्रुवोर्मध्ये प्राणमावेश्य" इति विशेषणस्य । **अन्येषाम्** वायुजयादिरहितेभ्यः । 'निपुणानाम्' इत्यनूद्य तत्र शेषमाह **वायुजयादाविति** ।

"..........................ईरजयादियुतयोगिनाम् ।
वश्यत्वात्मनसस्त्वीषत् पूर्वमप्याप्यते ध्रुवम् ॥" (व्या.यो.)

इत्यादि वक्ष्यमाणवचने (गी.भा. ८.१०) "ईषत्पूर्वम्" इत्युक्तेः, "एतदभ्यधिकम्" (मो.ध.) इत्युक्तेश्च 'कथञ्चित्' इत्यस्य तात्पर्यमाह **अल्पेत्यर्थः** । **किञ्चिच्छीघ्रं चेत्यपीति** ।

**अत्र** वायुजयादिरहितानामपि ज्ञानभक्तिवैराग्यादिसम्पूर्णानाम्, वायुजयादौ निपुणानाम् ईषज्ज्ञानाद्यसम्पूर्णानां च मुक्तिर्भवतीत्युक्तप्रमेयविशेषे । "बोधं यथा" इत्यत्र यथाशब्दोऽनतिक्रमे वर्तते, योग्यतयाऽर्थान्वयः । बोधविशेषणं चैतत् । अर्थमनतिक्रम्य वर्तमानमिति लभ्यते, इति मनसि निधाय तन्निर्गलितार्थमाह **यथा यथार्थमिति** । उपमाऽर्थत्वे साधकयोर्द्वयोरपि फलसाम्यं प्रतीयेत । तथा च 'अञ्जसा' (भाग. ३.६.२६) इति, तेषां "श्रमः स्यात्" (भाग. ३.६.२५) इति चायुक्तं स्यादिति हृदयम् । "धिष्ण्यं सद्मनि नक्षत्रे स्थाने शक्तौ च पावके" इति विश्वप्रकाशोक्त्या, "धिष्ण्यं तेजश्च सामर्थ्यं महिमा धाम चोच्यते" इति चतुर्थस्कन्धतात्पर्योदाहृताभिधानेन च, धिष्ण्यशब्दस्य शक्तिमहिमाद्यर्थत्वे, अञ्जसा तु = अञ्जसैव ते शक्तिम् = महिमानं वा प्रापुरित्यर्थः प्रतीयते । स च "न ते विष्णो जायमानो न जातो देवमहिम्नः परमन्तमाप" (ऋ. ७.९९.२) इत्यादिशास्त्रप्रतिषिद्धः इत्यत आह **धिष्ण्यं मन्दिरमिति** । "त्वामेव धीराः पुरुषं विशन्ते" (भाग. ३.६.२५) इत्यत्र विशतेरात्मनेपदं छान्दसम्, तेन च 'एव'शब्दस्य सम्बन्ध इत्यभिसन्धाय तत्फलितं च दर्शयति **विशन्त्येव, न तु त इवाञ्जसेति** ॥ वैराग्यभक्तिज्ञानपूर्तिसम्पन्ना इत्येवेत्यर्थः । **अञ्जसा** सम्यक् ।

अनेन हे देव, ते कथासुधायाः **पानेन** श्रवणादिलक्षणेन **प्रवृद्धभक्त्या विशदाशयाः** निर्मलान्तःकरणाः, 'ते' इत्यावर्तते, शेषो वा, **वैराग्यसारं** वैराग्यफलं **यथाबोधम्** अर्थाव्यभिचारिज्ञानं साक्षात्काररूपं प्रतिलभ्य, **अकुण्ठधिष्ण्यम्** अप्रतिहतसत्पान्थजनमन्दिरम्, 'अकुण्ठ' इति देवविशेषणं वा, **त्वा** त्वाम् आपुरिति प्रथमः श्लोको भक्त्यादिप्रधानसाधकविषयः । ये च परे वायुजयादिनिपुणा ईषज्ज्ञानाद्यसम्पूर्णाः ते तु **आत्मसमाधियोगबलेन आत्मनि** परमात्मनि

**समाधिः** चित्तैकाग्र्यं **योगो** वायुजयादिरूपोपायः, तयोः सामर्थ्येन **बलिष्ठाम्** अन्यसाधनाजेयां **प्रकृतिं** बन्धकशक्त्यभिमानिनीम्, "वायोश्च प्रकृतेर्विष्णोर्जयो भक्त्यैव नान्यथा" (द.यो.) इति-वचनाद् भक्त्यैव जित्वा, प्रसाद्य तदभिमन्यमानां जडप्रकृतिं हित्वा च पुरुषं त्वां **विशन्ते** विशन्त्येव, न तु ज्ञानभक्तिवैराग्यादिसम्पूर्णा इवाञ्जसा विशन्ति । **तेषां** वायुजयादियुतयोगिनां **श्रमो** वायुजयादिक्लेशः सम्यङ्मुक्तिः भावलक्षणश्च स्यात्, **सेवया** ज्ञानभक्तिवैराग्यादिपूर्तिलक्षणया युतानां तु न तथेति, द्वितीयो वायुजयादियुतसाधकविषय इति श्लोकद्वयार्थ उक्तो भवति । भागवतटीकायां प्रकाशिकायां चैतच्छ्लोकद्वयम् अन्यथाऽपि व्याख्यातम् ।

**वासिताः** संस्कृताः, तदनुग्रहप्राप्तभक्त्यादिसम्पन्ना इत्यर्थः । "मुक्तानां च गतिर्ब्रह्मन्" (मो.ध.) (म.भा.,शां.प. ३४२.४२) इत्यादौ,

> "तं सदा स्वाश्रमाश्चैव नानामतसमास्थिताः ।
> भक्त्या सम्पूज्य यन्त्याशु गतिं चैषां ददाति सः ॥"

(मो.ध.) (म.भा.,शां.प. ३४२.४४)

इति पूर्वश्लोके च गतिशब्देन मुक्तेः प्रस्तुतत्वात् कथं नपुंसकलिङ्गम् ? इति चोद्यं परिहर्तुमाह **एतन्मुक्तिलक्षणं फलमिति** । "सामान्ये नपुंसकम्" इति प्रसिद्धेरिति हृदयम् । प्रकरणस्य नारायणत्वप्रसिद्धेर्नारायणशब्दसमानार्थब्रह्मात्मादिशब्दैर्व्यवहारात्, "अहं तत्तेजो रश्मीन्नारायणम्" (च.शि.) इति श्रुतौ आहत्य ज्योतिषो नारायणत्वावेदनाच्चाह **तेजो नारायणाख्यमिति** । 'ईर-जयादि' इत्यत्राप्रतीतेः ईरशब्दार्थमाह **ईरः समीर इति** । वायुरित्यर्थः । प्रकृतोपयोगाय ध्रुवशब्द-विवक्षितार्थमाह **ब्रह्मेति** । 'आप्यते' इत्यत्र 'ईरजयादियुतयोगिनाम्' इत्यस्यान्वयायोगादाह **तैरिति** । ईरजयादियुतयोगिभिरित्यर्थः ॥ १० ॥

### गीतातात्पर्यनिर्णयः

## तमसः परस्तात् अप्राकृतदेहः ॥ ९-१० ॥

***न्या०दी०—*** कथम्भूतः स्मर्तव्योऽसीत्यस्य परिहार उच्यते 'कविमि'ति । तत्र आदित्यवर्णश्चेच्छरीरित्वेन जन्मादिप्रसङ्ग इत्यत उक्तं **तमसः परस्तादिति** । तदनूद्य व्याचष्टे **तमस इति** । "अव्यक्तं वै तमः" इति हि श्रुतिः ॥ ९-१० ॥

**गीता**

**यदक्षरं वेदविदो वदन्ति**
**विशन्ति यद्यतयो वीतरागाः ।**
**यदिच्छन्तो ब्रह्मचर्यं चरन्ति**
**तत्ते पदं सङ्ग्रहेण प्रवक्ष्ये ॥ ११ ॥**

***वि०वि०***— मरणकाले कर्तव्यमेव सध्येयं प्रपञ्चयति **यदक्षरमित्यादिना** । अक्षरं सर्वथा नाशरहितम् । वीतरागाः अपगतकामादयो मुक्ताः । ब्रह्मचर्यं मन आदीनां ब्रह्मणि चरणम् । पद्यते गम्यते मुमुक्षुभिरिति पदम् । 'गीयसे पदमित्येव मुनिभिः पद्यसे यतः' इति वचनात् । तत् ते पदं सङ्ग्रहेण प्रवक्ष्ये तत्स्मरणप्रकारं प्रवक्ष्ये ॥

***वा०ल०***— 'तत् ते पदम्' इत्यत्र पद्यते इति पदम्, गम्यं वस्तु ॥

***सा०सं०***— वायुजयादिमतां मरणकाले कर्तव्यमेव सध्येयं स्पष्टयति **यदक्षरमिति** । यद्वा, केन प्रकारेण स्मर्तव्योऽसि, इति प्रश्नस्योत्तरं सध्येयमुच्यते **यदक्षरम्** इत्यादि त्रिभिः । **यत्पदम् अक्षरं** सर्वथा नाशरहितम् । **वेदविदो वदन्ति** । **यच्च** पदं वीतरागाः अपगतकामादिदोषाः । **यतयः** यत्नशीलाः । **विशन्ति** प्रविशन्ति । **यच्च** पद**मिच्छन्तः ब्रह्मचर्यं** मनआदीनां ब्रह्मणि चरणं ब्रह्मचर्यम् । **चरन्ति** अनुतिष्ठन्ति । **तत्पदं** पद्यते मुमुक्षुभिः प्राप्यत इति पदम् । 'षद्लृ गतौ' इत्यतः कर्मण्यकारप्रत्ययः । स्वरूपम् । **सङ्ग्रहेण** सङ्क्षेपेण । **प्रवक्ष्ये** तत्पदस्मरणप्रकारं प्रवक्ष्यामीत्यर्थः ॥

***अ०प्र०***— **यदक्षरमिति** ।

वेदविदः[१], अक्षरमिति[२], यद्वदन्ति[३], वीतरागाः[४], यतयः[५], यद्ब्रह्म[६], विशन्ति[७], यदिच्छन्तः[८], ब्रह्मचर्यं[९], चरन्ति[१०] तत्पदं[१११२], अहं ते[१३], सङ्ग्रहेण[१४], प्रवक्ष्ये[१५] इत्यन्वयः ।

वेदविदः = वेदान्तज्ञाः वेदो ज्ञानं तद्वेत्तारः[१], अक्षरमिति = सर्वदा नाशरहितं यत्पदमिति यत् क्षरं न भवतीत्यक्षरं[२], वदन्ति[३], वीतरागाः = वीताः गताः रागविषयकामाः येषां ते तथा अपगतकामादिदोषाः[४], यतयः = नियतेन्द्रियाः मनोजयादिप्रयत्नवन्तो युक्ताः सन्तः[५], यत् ब्रह्म[६], विशन्ति = प्राप्नुवन्ति, यद्वा— प्रविशन्ति प्रविष्टाः वा[७], यदिच्छन्तः = यत् ब्रह्म ज्ञातुमिच्छन्तो

गुरुकुले[८], ब्रह्मचर्यं = मन आदीन्द्रियाणां ब्रह्मणि चरणं वृत्ति वैराग्यं[९], चरन्ति = आचरन्ति इदानीं कुर्वन्तीति भावः । तत्पदं पद्यते गम्यते मुमुक्षुभिरिति पदं प्राप्यं तदुक्तम्— 'गीयसे पदमित्येव मुनिभिः पद्यसे यतः' तादृशं पदं[१२], अहं ते[१३], सङ्ग्रहेण = सङ्क्षेपेण[१४], प्रवक्ष्ये = तत्प्राप्त्युपायं कथयिष्यामीत्यर्थः ॥ ११ ॥

**भाष्यम्**

**तदेव सः ध्येयं प्रपञ्चयति— यदक्षरमित्यादिना । प्राप्यते मुमुक्षुभिरिति पदं स्वरूपम् । 'पद गतौ' इति धातोः । "तद् विष्णोः परमं पदम्" इति श्रुतेश्च । "गीयसे पदमित्येव मुनिभिः पद्यसे यतः ॥" इति वचनात् नारदीये ॥ ११ ॥**

***प०टी०***— उत्तरश्लोकचतुष्टयमवतारयति **तदेवेति** । मरणकालकर्तव्यम् । 'पद'शब्देन प्रणव इति शङ्कानिरासाय 'पद'शब्दं सप्रमाणकं व्याचष्टे **प्राप्यत इति** । अनेन 'अक्षर'शब्दोऽपि विष्णुपर इत्युक्तं भवति ॥

***प्र०दी०***— क्रममुक्त्यर्थमोङ्कारोपासनमुच्यत इत्यन्यथाव्याख्यानमपाकर्तुमाह— **तदेवेति** । वायुजययुतानां मरणकाले कर्तव्यमेव । मामनुस्मरन्नित्यादिविरोधादिति भावः । ननु पदत्वं शब्दस्यैवोङ्कारस्य सम्भवति न विष्णोरित्यत आह— **प्राप्यत इति** । कर्मण्यकारप्रत्ययः । पदं स्वरूपमिति प्रयोगदर्शनम् ॥

***भा०दी०***— **क्रममुक्त्यर्थमिति** । अर्चिरादिलोकप्राप्तिद्वारकमुक्त्यर्थमित्यर्थः । तदेवेत्यस्यार्थः **वायुजयेत्यादि** । अपव्याख्यानदोषमाह **मामिति** । आदिपदेन यो मां स्मरतीत्यादि ग्रहः ॥

***भा०र०***— "परस्य ब्रह्मणो वाचकरूपेण, प्रतिमावत् प्रतीकरूपेण च परब्रह्मप्रतिपत्ति-साधनत्वेन मन्दमध्यमबुद्धीनां विवक्षितस्योङ्कारस्योपासनं कालान्तरे मुक्तिफलं यत् तदेव "यदक्षरं वेदविदः" (८.११) इत्युपन्यस्यते" इति **सङ्कर**भाष्यं (८.१२) सङ्क्षेपतोऽनुवदति **क्रममुक्त्यर्थ-मिति** । कालान्तरभावि निर्गुणमुक्तिफलकमित्यर्थः । **तदेव** ध्येयसहितं कर्तव्यमेव, इति एवशब्देन न पुनः परोक्तमभिसन्धत्त इति प्राप्तम् । तत्कुतः ? इत्यत आह **मामिति** । परकीयव्याख्याने

"ओमित्येकाक्षरं ब्रह्म व्याहरन् मामनुस्मरन् ।
यः प्रयाति त्यजन् देहं स याति परमां गतिम् ॥" (८.१३)

इति भगवदनुस्मरणवतः परगतिशब्दितमुक्तिरत्रोच्यमाना अनुपपन्ना । ओङ्कारोपासनाभिसन्धाने तदनुस्मरणस्यैव वक्तव्यत्वात् । उच्यते चात्र "मामनुस्मरन्", (८.१३) "अनन्यचेता मां स्मरति"

(८.१४) इति भगवदनुस्मरणम् । न च तद्युक्तम् । उपास्यस्यैवानुस्मर्तव्यत्वौचित्यात् । "तस्याहं सुलभः" (८.१४) इति भगवतः सुखेन लभ्यत्वोक्तेरनौचित्याच्च । न ह्यन्योपासकं प्रति स्वात्मा सुलभ इति भाष्याशय इति भावः । 'क्रममुत्स्यर्थम्' इत्ययुक्तम् । परमगम्यस्य भगवत एवात्र 'माम्' इत्यनुस्मर्तव्यत्वावेदनादिति भाव इत्यपि **आहुः** । **शब्दस्येति** । तत उत्पन्नस्य सुपः 'अव्ययात्' इति लुका लुप्तत्वेऽपि 'दधि' इत्यादाविव स्वार्थबोधकत्वाप्रतिहतिरिति भावः । 'शब्दस्यैवोङ्कारस्य' इत्यत्र पररूपत्वाद् वृद्ध्यभावो युक्तः । 'प्राप्यते' इतःपूर्वं भाष्ये 'पठ्यते' इति शेषो वक्तव्यः । **कर्मण्यकारप्रत्यय इति** । "घञर्थे कविधानम्" इत्यत्र "अकर्तरि कारके" इत्यनुवृत्तेः, कर्मणि तेन कप्रत्यये कस्येत्त्वेन लोपे, अकारः शिष्यत इति मुक्तानुबन्धकप्रत्ययग्रहणमिदमिति ज्ञातव्यम् ।

पदशब्दस्यार्थान्तरमप्यस्तीत्यत्र किं प्रमाणम् ? इति शङ्काऽपनोदाय 'तद्विष्णोः' इति श्रुतिः प्रमाणीकृता । तत्रत्यं पदमनूद्य व्याख्याति **पदं स्वरूपमिति** । इदं च पदशब्दस्य स्वरूपे **प्रयोगे दर्शनं** श्रुतिवचनमुदाहृतमित्यर्थः । प्रयोगस्य **दर्शनं** प्रदर्शनमिदं कृतमिति वा । दर्शयतेरपि ल्युटि 'दर्शनम्' इति हि रूपम् । 'प्रयोगप्रदर्शनम्' इत्यपि कोशेषु पाठो दृश्यते । न च तत्रापि स्वरूपार्थत्वं कुत इति वाच्यम् । "पद्यते गम्यते" इति योगवृत्तेः सम्भवात् । "सदा पश्यन्ति सूरयः" (ऋ.मं.१, सू.२२, मं.७) इति वाक्यशेषे दर्शनकर्मत्वावेदनाच्च नोङ्कारस्य श्रावणस्यैत-द्युक्तम् । तथा च विष्णोः परमं पदमवभाति" इति यजुर्वेदभाष्ये भट्टभास्करः "**परमम्** उत्तमं **पदं** स्वरूपम्" इति व्याचख्याविति । भाष्ये पद्यसे = गम्यसे प्राप्स्यस इत्यर्थः ॥ ११ ॥

**गीता**

## सर्वद्वाराणि संयम्य मनो हृदि निरुध्य च ।
## मूर्ध्न्याधायात्मनः प्राणमास्थितो योगधारणाम् ॥ १२ ॥

*वि०वि०*— ब्रह्मनाडीं विना यद्यन्यत्र गच्छति, तर्हि विना मोक्षं स्थानान्तरं प्राप्नोतीत्यतः सर्वद्वाराणि संयम्य निर्गच्छन् । 'चक्षुषा सूर्यं दिशः श्रोत्रेण चैव हि' इत्यादिवचनात् । हृदि नारायणे । 'ह्रीयते च जगद्यस्मात् हृदित्येवं प्रभाष्यसे' इति वचनात् हरतीति हृदिति व्युत्पत्तिः, जस्त्वं छान्दसम् । अहृदीति वा । 'अप्राणो ह्यमनाः' इति श्रुतेः । मनो निरुद्ध्य न हि मूर्ध्नि प्राणे स्थिते हृदये मनसः स्थितिः सम्भवति । 'यत्र प्राणो मनस्तत्र तत्र जीवः परस्तथा' इति वचनात् । आत्मनः प्राणं वायुं सुषुम्नया मूर्ध्नि ब्रह्मरन्ध्रे आधाय योगधारणामास्थितः योगधारण एवाभियुक्तः ॥

***सा०सं०***— एवं ध्येयस्वरूपं तत्स्मरणप्रकारोक्तिं च प्रतिज्ञायेदानीं तत्प्रकारमाह **सर्वेति** । **सर्वद्वाराणि** वायुसञ्चारस्थानसर्वसुषुम्नोत्तरनाडीर्नियम्य । हृदि हरति जगदिति हृन्नामके नारायणे । हरतेः क्विप् । 'ह्रस्वस्य पिति कृति तुक्' (६-१-७१) । **मनो निरुद्ध्य चात्मनः प्राणं** प्राणवायुम् । **मूर्ध्नि** सुषुम्नामार्गेण ब्रह्मरन्ध्रे । **आधाय** । **योगधारणाम् आस्थितः** अखण्डस्मृतिरूपयोगधारण एवाभियुक्त इत्यर्थः ॥ १२ ॥

**गीतातात्पर्यनिर्णयः**

**मन आदीनां ब्रह्मणि चरणं ब्रह्मचर्यम् ॥ ११-१२ ॥**

***न्या०दी०***— केन प्रकारेण स्मर्तव्योऽसीत्यस्य परिहार उच्यते 'यदक्षरम्' इति । तत्र पूर्वमन्तकालस्मरणस्य सदा तद्भावभावितत्वं साधनमुक्त्वा ब्रह्मचर्यं तथा कथमुच्यत इत्यतो ब्रह्मचर्यपदं तत्परतया व्याचष्टे **मन आदीनामिति** ॥ ''तत्ते पदं सङ्ग्रहेण प्रवक्ष्ये'' इत्यत्र तत्स्मरणप्रकारं प्रवक्ष्य इत्यर्थः ॥

***भा०दी०***— **तथा कथमुच्यत इति** । अन्तकालस्मरणसाधनतया कथमुच्यत इत्यर्थः ॥ ॥ ११-१२ ॥

**गीता**

**ओमित्येकाक्षरं ब्रह्म व्याहरन्मामनुस्मरन् ।**
**यः प्रयाति त्यजन्देहं स याति परमां गतिम् ॥ १३ ॥**

***वि०वि०***— ओमित्येकाक्षरं वाचकं यत् तद्ब्रह्म व्याहरन्नुच्चरन् मामेव ब्रह्मानुस्मरन् यो देहं त्यजन् प्रयाति स परमां गतिं याति ॥

***सा०सं०***— ओमित्येकमक्षरं वाचकं यस्य तदो**मित्येकाक्षरं ब्रह्म** परं ब्रह्म । मां **व्याहरन्ननुस्मरन्** । ओमित्युच्चार्य तद्वाच्यं ब्रह्मरूपं **मामनुस्मरन् यः देहं त्यजन् प्रयाति** प्रैति । **स याति परमां गतिम्** ॥

***अ०प्र०***— प्रतिज्ञातमुपायं साङ्गमाह द्वाभ्याम् । **सर्वद्वाराणीति** ।

सर्वद्वाराणि[१], संयम्य च[२], मनः[३], हृदि[४], निरुध्य[५], आत्मनः[६], प्राणं[७], मूर्ध्नि[८], आधाय[९],

योगधारणं[१०] आस्थितः[११] ॐइति[१२], एकाक्षरं ब्रह्म[१४], व्याहरन्[१५], मां[१६], अनुस्मरन्[१७], यः[१८], देहं[१९], त्यजन्[२०], प्रयाति[२१], सः[२२], परमां[२३], गतिं[२४], याति[२५] इत्यन्वयः ।

सर्वद्वाराणि = ब्रह्मनाडिं विना यद्यन्यथा गच्छति तर्हि मोक्षं विना स्थानान्तरं गच्छतीत्यतः सर्वद्वाराणि सर्वाणि इन्द्रियद्वाराणि नाडीद्वाराणि वा[१], संयम्य = निरुध्य प्रत्याहृत्य वा[२], चक्षु-रादिभिः बाह्यविषयग्रहणमकुर्वन्नित्यर्थः । निर्गच्छंश्चक्षुषा सूर्यः दृशः यातीति शेषः । श्रोत्रेण चैवमिति वचनात्[२०], च = पुनः मनः[३], हृदि[४], निरुध्य[५], बाह्यविषयस्मरणपि अकुर्वन्नित्यर्थः । हृदि = नारायणे 'ह्रीयते च जगद्यस्मात् हृदित्येवं प्रभाष्यसे' इत्युक्तेः । हरतीति हृत् किम्वागमो वर्णविपर्ययश्च अहृदिति वा पदं 'अप्राणो ह्यमना' इति श्रुतेः मनोरहिते विष्णौ मनो निरुध्य बाह्यविषयान् हित्वा तदेकाग्रं कृत्वा[५], आत्मनः[६], प्राणं वायुं[७], मूर्ध्नि = सुषुम्नायां ब्रह्मरन्ध्रे[८], आधाय = निधाय[९], न हि मूर्ध्नि प्राणे स्थिते हृदि मनसः स्थितिः सम्भवति यत्र प्राणो मनस्तत्र जीवः परतरेति वचनात्[९], योगधारणं स्थैर्यम्[१०] आस्थितः = आश्रितः सन्[११] योगधारण एवाभि-युक्त इत्यर्थः[११] अथ ॐ इति मात्रात्रयात्मकमपि[१२], एकाक्षरं ब्रह्म तदेकं ब्रह्मवाचकत्वात् वा प्रतिमादिवत् ब्रह्मप्रतीकत्वाद्वा यद्वा ॐ इत्येकाक्षररूपं ब्रह्म मन्त्रं[१४], व्याहरन् = उच्चारयन्[१५], तथा मां[१६], अनुस्मरन् = मां स्मरति[१७], ॐ इत्येकाक्षरवाच्य अधिकोच्चगुणमुख्यं परं ब्रह्मरूपं मां अनुस्मरन् सन्[१९], यः पुरुषः एवं[१८], देहं[१९], त्यजन्[२०], प्रयाति = प्रकर्षेण अर्चिरादिमार्गेण याति[२९], सः = पुरुषः[२२], परमां = श्रेष्ठां[२३], गतिं = गम्यत इति गतिः स्थानं[२४], याति = प्राप्नोति[२५], एवं श्लोकद्वयस्य अर्थः ॥ १३ ॥

**भाष्यम्**

**ब्रह्मनाडीं विना यद्यन्यत्र गच्छति, तर्हि विना मोक्षं स्थानान्तरं प्राप्नोतीति सर्वद्वाराणि संयम्य । "निर्गच्छन् चक्षुषा सूर्यं दिशः श्रोत्रेण चैव हि" इत्यादि वचनात् व्यासयोगे मोक्षधर्मे च । हृदि नारायणे । "ह्रियते त्वया जगद्यस्मात् हृदित्येव प्रभाष्यसे ॥" इति हि पाद्मे । न हि मूर्ध्नि प्राणस्थितेर्हृदि मनसः स्थितिः सम्भवति । "यत्र प्राणो मनस्तत्र तत्र जीवः परस्तथा" —इति व्यास-योगे । योगधारणामास्थितः योगभरण एवाभियुक्त इत्यर्थः ॥ १२ ॥ १३ ॥**

*प०टी०*— ननु सर्वद्वारसंयमनं किमर्थमुच्यते इत्याशङ्कां सप्रमाणकं परिहरति **ब्रह्मेति** । मोक्षधर्मे चैतदेवोक्तं वचनमित्यर्थः । 'हृत्'शब्दस्य विवक्षितार्थं सप्रमाणकमाह **हृदीति** । 'हृत्'शब्देन

हृदयमेव किं न स्यात् ? इत्यत आह **न हीति**। कुतो न सम्भवति ? इत्यत आह **यत्रेति**। खण्डस्मृतेरत्रायोगात् 'धारणा'पदस्य विवक्षितार्थमाह **योगेति**॥

***प्र०दी०***— ननु मनो निरुध्येत्यनेनैव सर्वेन्द्रियसंयमनं लब्धम्। तत्किं पुनरुच्यते। मैवम्। वायुसञ्चरणद्वाराणां नाडीनामत्र ग्रहणात्। तन्नियमनं किमर्थमित्यत आह— **ब्रह्मेति**। इति हेतौ। इत्युक्तमिति शेषः। अत्र प्रमाणमाह— **निर्गच्छन्निति**। सूर्यं गच्छति। मोक्षधर्मे चायमेवार्थ उक्त इति शेषः। 'हृदि' इत्यस्य प्रसिद्धार्थतानिरासार्थमाह— **हृदीति**। "हरतेः क्विप् च" (३-२-७६) इति क्विप्। प्रसिद्धार्थ एव किं न स्यादित्यत आह— **न हीति**। कुतो न सम्भवतीत्यत आह— **यत्रेति**। आदौ हृदि निरुध्येत्यध्याहारो दोषः। मरणवेलायामखण्डस्मृतिर्वक्तव्या। तत्कथं धारणोच्यत इत्यत आह— **योगेति**॥

***भा०दी०***— संयम्येत्यनन्तरं शेषमाह **इत्युक्तमिति**। **शेष इति**। सूर्यमित्यनूद्य गच्छतीति शेषोक्तिः। **क्विबिति**। तथा च क्विपः। लशक्वतद्धिते (१-३-८), हलन्त्यं (१-३-३), वेरपृक्तस्य (६-१-६७) इति सूत्रे लोपे सति ह्रस्वस्य पिति कृति तुगिति तुगागमे हृदिति रूपमेवेति भावः। ननु मूर्ध्नि प्राधानादादौ हृदि मनो निरुध्य पश्चात्प्राणं मूर्ध्न्याधायेति व्याख्यानेन दोष इत्यत आदावित्यस्याध्याहार एव शेष इत्यादाविति॥

***भा०र०***— **पुनरुच्यते** "सर्वद्वाराणि संयम्य" इत्यनेन। **नाडीनामिति**। अन्यथा "सर्वेन्द्रियाणि संयम्य" इत्येवावक्ष्यदिति भावः। **तन्नियमनं** वायुसञ्चरणद्वाराणां नाडीनां नियमनम्। **इतिशब्दः** 'प्राप्नोति' इत्यतःपरं श्रूयमाणः। "इति शेषः" इत्यत्र 'संयम्येत्यनन्तरम्' इति शेषः। "चक्षुषा निर्गच्छन् सूर्यम्" (व्या.यो.) इत्यत्र शेषमाह **गच्छतीति**। **अयमर्थः** चक्षुरादिना निर्गच्छन् सूर्यादिं गच्छति, न तु मोक्षमित्ययमर्थः। व्यासयोगवचनस्यैव मोक्षधर्मेऽपि पाठात् पृथगनुदाहरणमिति **भावप्रदीपिकायाम्**। **प्रसिद्धार्थता** हृदयार्थत्वम्। **"क्विप् च" इति क्विबिति**। "अन्येभ्योऽपि दृश्यते" इति पूर्वसूत्रात् अपिशब्दस्य सर्वोपाधिव्यभिचारार्थस्येहानुवृत्तेः" इति हरदत्तवचनात्, हरतेरुपपदाभावेऽपि क्विप्प्रत्यये, "ह्रस्वस्य पिति कृति तुक्" इत्यनेन तुकि, तकारस्य दकारे च रूपम्। "ह्रियते त्वया" (पाद्म) इति प्रमाणे कर्तरि तृतीयेति भावः।

ननु "**हृदि** हृदयपुण्डरीके आदौ मनो नियम्य, पश्चान्मूर्ध्नि आधायात्मनः प्राणम्" (शां.भा. ८.१२) इति व्याख्याने न कोऽपि दोषः ? इत्यत आह **आदाविति**। इति व्याख्याने **अध्याहारः** 'आदौ' इति, 'पश्चात्' इति चाध्याहारः। स च सहश्रुतनिखिलपदानां सम्भूयैकार्थकारित्वे सम्भव-

त्ययुक्त इति भावः । **अखण्डस्मृतिः** ध्यानम्, **धारणा** खण्डस्मृतिः । **योगभरणे** योगस्य धृतौ, **अभियुक्तः** आग्रहशालीति तात्पर्यार्थ इति भाष्यार्थः ॥ १२-१३ ॥

**गीता**

## अनन्यचेताः सततं यो मां स्मरति नित्यशः ।
## तस्याहं सुलभः पार्थ नित्ययुक्तस्य योगिनः ॥ १४ ॥

***वि०वि०***— काऽसौ परमा गतिरित्यत आह **अनन्येति** । नित्ययुक्तस्य नित्योपायवतो योगिनः परिपूर्णयोगस्य । एतच्च वायुजयादियोगयुक्तविषयम् । वायुजयादिरहितानामपि ज्ञानभक्ति-वैराग्यादिसम्पूर्णानां भवत्येव मुक्तिः । तद्वतां तु ईषज्ज्ञानादिसम्पूर्णानामपि निपुणानां तद्बलात् कथञ्चिद्भवतीति विशेषः । उक्तं च—

'सम्पूर्णानां भवेन्मोक्षो विरक्तिज्ञानभक्तिभिः ।
नियमेन तथापीह भक्त्यादियुतयोगिनाम् ॥
वश्यत्वान्मनसस्त्वीषत् पूर्वमप्याप्यते ध्रुवम् ॥' इति ॥

***सा०सं०***— अन्तकाले मत्स्मरणं नित्याभ्यासवत एव भवति नान्यथेति स्पष्टमाह **अनन्यचेता इति** । सततमन्यविषयकचेतोहीनः सन् **यो मां नित्यशः स्मरति** । **तस्य** नित्ययुक्तस्य नित्योपायवतः । **योगिनः** सम्पूर्णोपायवतः । **अहं सुलभः** अन्तकाले स्मृतिविषयो भवामीत्यर्थः । यद्वा, सुलभः सुखेन लभ्यः प्राप्य इत्यर्थः । प्रागुक्तपरमगतिः केत्यतो मत्प्राप्तिरूपेति तदुपायोक्तिपूर्वं परमगतिविवरणार्थोऽयं श्लोकः ॥

***अ०प्र०***— कः असौ परमगतिरित्यतः ससाधनां गतिं दर्शयन् एवं चान्तकाले धारणया मत्प्राप्तिः नित्याभ्यासादेव भवति नान्यस्येति पूर्वोक्तमेवानुस्मारयति **अनन्येति** ।

हे पार्थ ![१], यः पुरुषः[२], अनन्यचेताः सन्[३], सततं[४], मां[५], नित्यशः[६], स्मरति[७], अहं लीलाविग्रहः नित्ययुक्तस्य[८], योगिनः[९], तस्य[१०] सुलभः इत्यन्वयः[११] ।

हे पार्थ ![१], यः पुरुषः[२], अनन्यचेताः सन् = अन्येषु विषयेषु चित्तं येषां ते अन्यचेताः ये नान्यचेतास्ते अनन्यचेताः निर्विषयाः । यद्वा, नास्त्यन्यस्मिन् चेतो यस्य स तथा मय्येव स्थितचित्तः सन्[३], सततं = निरन्तरं[४], मां = परमेश्वरं[५], नित्यशः = प्रतिदिनं[६], स्मरति = भजनं कुरुते[७], लीलाविग्रहः नित्ययुक्तस्य = नित्यं समाहितस्य । यद्वा, नित्योपायवतः[८], योगिनः =

सम्पूर्णयोगवतः[९], तस्य = पुरुषस्य[१०] सुलभः = सुखेन शीघ्रं लभ्योऽस्मि देहान्ते सुलभो भवामि इत्यर्थः । नान्यस्य एतच्च वायुजयादि-प्रधानसाधकपुरुषविषयम् । तदुक्तम्—

'पानेन ते देव कथासुधायाः प्रवृद्धभक्त्या विशदाशया ये ।
वैराग्यसारं प्रतिलभ्य बोधं यथाञ्जसा त्वापुरकुण्ठधिष्ण्यम् ॥

तथा परे त्वात्मसमाधियोगबलेन जित्वा प्रकृतिं बलिष्ठाम् ।
त्वामेव धीराः पुरुषं विशन्ते तेषां श्रमः स्यान्न तु सेवया ते ॥' इति ।

'सम्पूर्णानां भवन्मोक्षो विरक्तिर्ज्ञानभक्तिभिः ।
नियमेन तथा वायूजयादियुतयोगिनाम् ॥
वेश्यत्वान्मनसारस्त्वीषत्पूर्णमप्याप्यत ध्रुवम् ॥' इति च ॥ १४ ॥

**भाष्यम्**

**नित्ययुक्तस्य नित्योपायवतः । योगिनः परिपूर्णयोगस्य ॥ १४ ॥**

*प०टी०*— 'नित्ययुक्त''योगि'पदयोरर्थभेदमाह **नित्येति** । अनयोर्हेतुहेतुमद्भावादिति ॥

*प्र०दी०*— 'नित्ययुक्तस्य' 'योगिनः' इत्येतयोः एकार्थतानिरासार्थमाह— **नित्येति** । नित्योपायत्वेन सम्पूर्णयोगस्येत्यर्थः ॥

*भा०र०*— नित्ययुक्तपदावैयर्थ्याय भाष्यभावमाह **नित्योपायत्वेनेति** । प्रयोज्यप्रयोजकार्थत्वान्नानर्थक्यमिति भावः ॥ १४ ॥

**गीता**

**मामुपेत्य पुनर्जन्म दुःखालयमशाश्वतम् ।**
**नाप्नुवन्ति महात्मानः संसिद्धिं परमां गताः ॥ १५ ॥**

*वि०वि०*— भगवत्प्राप्तिं स्तौति **मामिति** । भगवन्तं प्राप्तानां पुनर्जन्मानवाप्तौ हेतुः संसिद्धिमित्यादि ॥

*सा०सं०*— अत एव परमगतिः सुलभा इत्युक्तभगवल्लाभश्च तत्प्राप्तिरूपमेव फलमिति भावेन तत्प्राप्तिं स्तौति **मामिति** । **महात्मानो** ज्ञानिनः । **मामुपेत्य** प्राप्य । **दुःखालयं** दुःखाश्रयम् ।

**अशाश्वतम्** अनित्यं नाशशिरस्कम् । **जन्म** देहयोगं **पुनर्नाप्नुवन्ति** । कुतः, यतः **परमां संसिद्धिं** मोक्षलक्षणम्, **गताः** प्राप्ताः । तत इति योजना ॥ १५ ॥

***अ०प्र०***— प्रमाणबलेन वायुजयादिप्रधानयोगिनामीषत् ज्ञानाद्यसम्पूर्णामपि वायुजयादिबला-च्छीघ्रमल्पा मुक्तिर्भवति । भक्त्यादिप्रधानानां देवादीनां ज्ञानभक्तिवैराग्यादिसम्पूतविव चिराद्विशिष्टा मुक्तिरित्येवं विशेषसद्भावेऽप्युभयप्राप्यां मुक्तिं स्तौति **मामिति** ।

यतः परमां[१], संसिद्धिं[२], गताः[३], अतः कारणात् महात्मानः[४], मां[५], उपेत्य[६], पुनः[७], दुःखा-लयं[८], अशाश्वतं[९], जन्म[१०] नाप्नुवन्तीत्यन्वयः ॥

यतस्ते परमां[१], संसिद्धिं = सम्यक् सिद्धिं मोक्षमेव[२], गताः = प्राप्ताः[३], पुनर्जन्मनां दुःखानां चालयं स्थानं मां उपेत्य न प्राप्नुवन्ति । अतः = कारणात् महात्मानः = उक्तलक्षणाः उभयेऽपि महात्मानः[४], मां[५], उपेत्य = प्राप्य[६], पुनः[७], दुःखालयं = दुःखाश्रयं[८], अशाश्वतं = अनित्यं[९], एतादृशं जन्म[१०] नाप्नुवन्ति = न यान्ति[११] ॥ १५ ॥

**भाष्यम्**

**तत्प्राप्तिं स्तौति— माम् इति । परमां सिद्धिं गता हि त इति तत्र हेतुः ॥ ॥ १५ ॥**

***प०टी०***— उत्तरश्लोकमवतारयति **तदिति** । 'मामुपेत्य' इत्यनेन 'संसिद्धिम्' इत्यस्यागतार्थ-त्वमाह **परमामिति** ॥

***प्र०दी०***— "स याति परमां गतिम्" । "तस्याहं सुलभः" इति द्वेधा वचनात् परमगतिः भगवल्लाभश्च पृथगिति न मन्तव्यम् । भगवत्प्राप्तेरेवोत्तरत्र स्तुतेः । अन्यथोभयस्तुतिप्रसङ्गादित्यभि-प्रायेणाह— **तत्प्राप्तिमिति** । तर्हि कथं 'मामुपेत्य' इत्युक्त्वा "संसिद्धिं परमां गताः" इति पृथगुक्तिरित्यत आह— **परमामिति** । ये मामुपेताः ते परमां सिद्धिं मोक्षलक्षणां हि गताः । न च मुक्तानां निर्बीजं जन्म सम्भवतीत्येवं तत्र स्वयं प्राप्तानां जन्माभावे हेतुरयमुच्यते । न तु भगवत्प्राप्तेरन्या परमसंसिद्धिप्राप्तिरित्यर्थः ॥

***भा०र०***— **द्वेधा वचनात्** "स याति परमां गतिम्" (८.१३) इति, "तस्याहं सुलभः" (८.१४) इति च द्वेधा वचनात् । **उत्तरत्र** "मामुपेत्य पुनर्जन्म न प्राप्नुवन्ति" (८.१४) इत्यत्र । **स्तुतेः** स्तवनात् । **अन्यथा** परमगतेः भगवल्लाभात् पृथक्त्वे । **तत्प्राप्तिम्** 'तस्याहम्' इत्यस्म-

च्छब्देन प्रकृतभगवत्प्राप्तिमिति भाष्यार्थः । 'तत्र' इत्यनुवादः, "स्वं प्राप्तानां जन्माभावे" इति व्याख्या ॥ १५ ॥

**गीतातात्पर्यनिर्णयः**

**एकाक्षरवाच्यत्वादेकाक्षरं परं ब्रह्म ॥ १३-१५ ॥**

***प्रका०***— एकमक्षरं वाचकं यस्य तदेव **एकाक्षरं ब्रह्म** इत्यर्थः ॥

***न्या०दी०***— "एकाक्षरं ब्रह्म" इत्येतदेकमक्षरं शब्दब्रह्मेति प्रतीतिनिरासाय व्याचष्टे **एकेति** । ओमित्येकमक्षरं वाचकं यस्य तदेकाक्षरमित्यर्थः । ब्रह्मशब्दस्य परब्रह्मण्येव मुख्यत्वात् न प्रतीत एवार्थः ॥ १३-१५ ॥

**गीता**

**आब्रह्मभुवनाल्लोकाः पुनरावर्तिनोऽर्जुन ।**
**मामुपेत्य तु कौन्तेय पुनर्जन्म न विद्यते ॥ १६ ॥**

***वि०वि०***— ब्रह्मादीन् प्राप्तानामपि पुनर्जन्माभावात् किं विशेष्याभिधीयते मामुपेत्य पुनर्जन्म नाप्नुवन्तीत्यत आह **आब्रह्मभुवनादिति** । ब्रह्मभुवनं मेरुस्थमत्र विवक्षितम् । जनोलोकोऽप्यनेन गृह्यते । आब्रह्मभुवनादेव आजनाच्चार्वाग्भवा एव लोकाः पुनरावर्तिनः, परे न पुनरावर्तिनः । तथापि नोक्तमयुक्तम् । यतस्तेषु लोकेषु स्थितं मामुपेत्यावस्थितस्य पुनर्जन्म न विद्यत इत्यर्थः । उक्तं च—

'आमेरुब्रह्मसदनादाजनान्न जनिर्भुवि ।
तथाप्यभावः सर्वत्र प्राप्यैव वसुदेवजम् ॥'

इति । मेरुस्थब्रह्मसदनमारभ्य जनलोकं चारभ्य परतः स्थितानां ब्रह्मज्ञानिनां न पुनरावृत्तिः । तथापि तेषु लोकेषु स्थितं भगवन्तमुपेत्यावस्थितानामेव पुनरावृत्तिः ।

अथवा, ब्रह्मभुवनमारभ्य लोकाः पुनरावर्तिनः अल्पजन्मादिमन्तः मामुपेत्यावस्थितस्य मुक्तस्यांशतोऽपि पुनर्जन्म न विद्यत इति । उक्तं च—

'नियमाज्जन्मनोऽभावो मुक्तस्यैव तथापि तु ।
महर्लोकमतीतानां न जन्मांशलयौ विना ॥
तत्राप्यवश्यं तत्स्थानं तैः क्षिप्तं पुनराप्यते ॥' इति ॥ १६ ॥

***वा०ल०***— 'आब्रह्मभवनात्' इत्यत्र महामेरुस्थितब्रह्मभवनपर्यन्तं पुनरावर्तिनः, पुनः पुनरावर्तन्ते इति पुनरावर्ताः संसारिणः तद्वन्तः पुनरावर्तिनः । महामेरुस्थितब्रह्मभवनादर्वाक्स्थितलोकेषु संसारिण एव तिष्ठन्ति, न तु मुक्ताः । तदुपरि मुक्ताश्चरन्ति, संसारिणोऽपि सन्ति । स्वलोके तु मुक्ता एव सन्तीति भावः ॥ १६ ॥

***सा०सं०***— ब्रह्मादीन् प्राप्तानामपि पुनर्जन्माभावात् किं विशिष्योच्यते 'मामुपेत्य' इत्यादि । तत्राह **आब्रह्मेति** । 'आङ्' अत्राभिविधौ । मेरुस्थब्रह्मसदनादारभ्यार्वाक्तनाः लोकाः तत्र गताः जना इति यावत् । **पुनरावर्तिनः** पुनर्भूमावागत्य जन्मादिमन्तो भवन्तीत्यर्थः । ननु मेरुस्थब्रह्मसदनादारभ्यार्वाक्तनलोकस्थाः पुनरावर्तिन इत्युक्त्या अर्थात् 'आमेरुब्रह्मसदनादाजनान्न जनिर्भुवि' इति स्मृत्या च तत उपरितनलोकस्थाः न पुनरावर्तिन इति प्राप्तत्वात्, मामुपेत्य पुनर्जन्म नाप्नुवन्तीति कथमुच्यत इत्यतस्तदेव पुनराह **मामिति** । सत्यम् । मेरुस्थब्रह्मसदनाज्जनोलोकाच्चोपरिस्थितानां जनिर्नेति । तथाऽपि तल्लोकस्थत्वमात्रं न जन्माभावे प्रयोजकम्, किन्तु तत्र स्थितं मामुपेत्य स्थितानामेव जन्म पुनर्न विद्यते । अतः प्रागुक्तं नायुक्तमिति भावः । तदुक्तम् 'तथाप्यभावः सर्वत्र प्राप्यैव वसुदेवजम्' (नारा.गो.कल्पे) इति । अभावः जननाभाव इत्यर्थः ।

***सा०सं०***— यत्तु 'आजनान्न जनिर्भुवि' इति जनोलोकादुपरिस्थितानामप्यपुनरावृत्त्युक्तेः ब्रह्मसदनादर्वाक् स्थिताः पुनरावर्तिनस्तदुपरिस्थारपुनरावर्तिन इत्युक्तिरयुक्तेति चोद्यम्, तद्ब्रह्मभवनपदेन मेरुस्थब्रह्मसदनग्रहणात् परिहृतम् । सत्यलोकस्थब्रह्मसदनग्रहणेऽपि आब्रह्मभवनात् सत्यलोकस्थब्रह्मसदनादर्वाक्तनतपोलोकस्थजना अंशेन पुनरावर्तिन इत्यर्थः । न च 'आजनात्' इति वचनविरोधः । तत्र स्मृतौ जनिर्नेत्यस्य कार्त्स्न्येन जनिर्नेत्यर्थकत्वात् । जनादिलोकस्थानामप्यंशेनापि भूमौ लयान्ते लयादौ च कार्त्स्न्येन जनिमृत्योर्भावात् । 'आब्रह्मभवनात्' इत्यत्र तत उपरि आर्थिकजन्माभावोक्तिस्तु मुक्तजन्माद्यभावोपेतमुक्तजनविषया । तेषामंशेनापि भूमौ जननाद्यभावादिति । एतेन 'आमेरुब्रह्मसदनादाजनात्' इति स्मृत्या मेरुजनान्तरालिकानां जन्माजन्मनोरर्थात् प्राप्तेर्विरोध इति प्रत्युक्तम् । अजनेर्मुक्तविषयत्वात्, जनेरुक्तदिशा मुक्तेतरविषयत्वादिति । तदुक्तम् 'नियमाज्जन्मनोऽभावो मुक्तस्यैव' इत्यादि ॥

***अ०प्र०***— एतदेव सर्वेष्वपि लोकेषु पुनरावृत्तिं दर्शयन् निर्धारयति । ननु ब्रह्मादिलोके ब्रह्मादीन्प्राप्तानामपि पुनर्जन्माभावात् किं विशेषेणैवमभिधीयते मामुपेत्य जन्म नाप्नुवन्तीत्यत्राह **आब्रह्मेति** ।

हे अर्जुन ![१], लोकाः[२], आब्रह्मभुवनात्[३], पुनरावर्तिनः[४], हे कौन्तेय ![५], मां[६], उपेत्य तु[७], पुनः जन्म न विद्यते[१०] ॥

हे अर्जुन ![१], लोकाः[२], आब्रह्मणो भुवनं वासस्थानं ब्रह्मलोकस्तमभिव्याप्य आब्रह्मभुवनात्[३], पुनरावर्तिनः = पुनरावर्तनशीलाः[४], कथं ब्रह्मलोकस्यापि विनाशित्वात्तत्रत्यानां उत्पन्नज्ञानानां अवश्यम्भावि पुनर्जन्म एव क्रममुक्तिफलाभिरुपासनाभिः ब्रह्मलोकं प्राप्ताः । तेषामेव तत्र तत्रोत्पन्न-ज्ञानानां ब्रह्मणा मोक्षो नान्येषां[४], हे कौन्तेय ![५], मां[६], उपेत्य वर्तमानानां तु[७], पुनर्जन्म न विद्यते = नास्त्येवेत्यर्थः ॥ १६ ॥

**भाष्यम्**

**महामेरुस्थब्रह्मसदनमारभ्य न पुनरावृत्तिः । तच्चोक्तं नारायणगोपाल-कल्पे—**

**"आमेरुब्रह्मसदनादाजनान्न जनिर्भुवि ।**
**तथाऽप्यभावः सर्वत्र प्राप्यैव वसुदेवजम् ॥" इति ॥ १६ ॥**

***प०टी०***— अन्यं प्राप्तानामप्यपुनरावृत्तेः किं विशिष्याभिधीयते 'मामुपेत्य' इति ? एतत्परि-हारायोत्तरश्लोकम् । ब्रह्मलोकादितरत्र विद्यमानानां पुनरावृत्तिरेव । ब्रह्मलोकेऽपि मत्प्राप्त्यैवापुनरा-वृत्तिरित्यर्थः । तत्र 'ब्रह्मभवन'शब्देन न सत्यलोको विवक्षितः । जनादिष्वप्यपुनरावृत्तेः । अतो मेरुस्थब्रह्मसदनमारभ्योत्तरवैजयन्तसदनपर्यन्तेष्वप्यपुनरावृत्तिरेवार्थ इत्याह **महामेरुरिति** । श्लोकार्थे प्रमाणमाह **तथेति** । मार्गभेदात् पृथगुक्तिः ॥

***प्र०दी०***— "आब्रह्मभुवनाल्लोकाः पुनरावर्तिन इति सत्यलोकसहितानां पुनरावृत्तिरुच्यत" इत्येतदपव्याख्यानमिति भावेनाह— **महामेरुस्थेति** । परतः स्थितानाम् । एवं जनलोकमारभ्येत्यपि ग्राह्यम् । कुत एतदित्यतः श्लोकमागमेनैव व्याचष्टे— **तच्चेति** । पृथिवीसम्बन्धिनां तदसम्बन्धिनां लोकानां ग्रहणायोभयोपादानम् । परतः स्थितानाम् । यद्यपीति शेषः । अभावो जनेर्लभ्यत इति शेषः । अनेनैवं व्याख्यातं भवति । महामेरुस्थब्रह्मसदनं जनलोकं चारभ्य न पुनरावृत्तिः । अतो "मामुपेत्य पुनर्जन्म" इति किमुच्यत इति चेत् । सत्यं आब्रह्मभवनादेवमाजनाच्चार्वाग्भवा एव लोकाः पुनरावर्तिनः । परे न पुनरावर्तिन इति यावत् । तथाऽपि नोक्तमयुक्तम् । यतस्तेषु लोकेषु स्थितं मामुपेत्यावस्थितस्य पुनर्जन्म न विद्यत इति । अन्यथा "मामुपेत्य पुनर्जन्म" इत्युक्तत्वा-दुत्तरार्धवैयर्थ्यं च ॥ १६ ॥

*भा०दी०*— आरभ्येति ल्यबन्तनिर्वाहायाह **परतः स्थितानामिति** । वक्ष्यमाणागमानुरोधादाह **एवं जनेति** । **पृथिवीति** पृथिवीसम्बन्धिनी मेरुश्वेतद्वीपब्रह्मासनानां ग्रहणाय जनोलोकमारभ्यस्थितलोकानां ग्रहणाय वा मेरुब्रह्मसदनादिति जनादि ............पादनमित्यर्थः । आजनादि- .......... **परतस्थितानामिति** । भुवीत्यनन्तरं यद्यपीति शेषमाह **इति शेष इति** । गीतावाक्यं योजयति ........ **ब्रह्मेत्यादिना** । **नोक्तमिति** । तामुपेत्य ....... ... न्मेत्युक्तमयुक्तं नेत्यर्थः । **अन्यथेति** । लोकावाप्तिमात्रस्य पुनर्जन्महेतुरित्यर्थः । **वैय्यर्थ्यं चेति** । न केवलं पुनरुक्ततेति चार्थः ॥

*भा०र०*— **इत्येतदपव्याख्यानमिति** । "आब्रह्मभुवनात् सह ब्रह्मलोकेन लोकाः सर्वेऽपि पुनरावर्तनस्वभावाः" (शां.भा. ८.१६) इति **सङ्करव्याख्यानमसाध्वित्यर्थः** । भाष्ये 'आरभ्य' इत्यनन्तरपूरणीयमाह **परतः स्थितानामिति** । वक्ष्यमाणागमानुसारेण संयोजयति **एवमिति** । **एतत्** "महामेरुस्थब्रह्मसदनादारभ्य परतः स्थितानां न पुनरावृत्तिः" इत्येतत् । हिरण्यगर्भस्य हि त्रीणि सदनानि महामेरावेकम्, अन्तरिक्षे जयन्ताख्यम् अपरम्, सत्यलोकेऽन्यत् । तथा च छान्दोग्यभाष्यम् (३.२.९)—

"पृथिव्यां ब्रह्मणो मेरौ जयन्तं त्वन्तरिक्षगम् ।
तृतीयं सत्यलोके च त्रिविधं सदनं स्मृतम् ॥" (सत्तत्त्वे) इति ।

तदभिप्रायेण 'आमेरुब्रह्मसदनात्' इत्युक्तं भाष्ये । तच्च पृथिवीसम्बन्धिनां महामेरुस्थब्रह्मसदनअनन्तासनश्वेतद्वीपानां ग्रहणाय । जनपदग्रहणं तु पृथिव्यसम्बन्धिनां जनस्तपस्सत्य इत्यादीनां लोकानामुपादानायेत्याह **पृथिवीत्यादि** । 'आमेरुब्रह्मसदनात्' इत्यनन्तरम्, 'आजनात्' इत्यनन्तरं च शेषोक्तिः "परतः स्थितानाम्" इति । 'तथाऽपि' इति श्रवणादाह **यद्यपीतीति** । स्वपक्षे गीता कथं व्याख्येया ? इति शङ्कां परिहरन्नाह **अनेनैवमिति** । परोदीरितार्थविरोधिप्रमाणोदाहरणेन । **अतः** भगवदितरलोकप्राप्तावप्यपुनरावृत्तिसद्भावात् । **किमुच्यते** किं विशिष्योच्यते ।

ननु "आब्रह्मभवनात्, आजनाच्च" इत्ययं परोक्ताक्षेपानुवादः । न च परेणार्वाक्तना लोकाः पुनरावर्तिन इत्याक्षिप्तम् । अतो असदनुवादोऽयम् ? इत्यत आह **परे न पुनरावर्तिन इति यावदिति** । **उक्तं** "मामुपेत्य पुनर्जन्म न प्राप्नुवन्ति" (८.१६) इति विशिष्योक्तम् । ल्यबुपपत्तय आह **अवस्थितस्येति** । तिष्ठतेः कर्तरि "गत्यर्थाकर्मक" इति क्तः । तेन क्रिययोः समानकर्तृकत्वलाभः । अपव्याख्याने प्रमाणविसंवादो भाष्येऽभिहितः । दोषान्तरं च स्वयमाह **अन्यथेति** ।

''आब्रह्मभुवनात्'' इति गीतावाक्यस्योक्तार्थमनादृत्य सत्यलोकसहितानां लोकानां पुनरावृत्तिपरत्वे तावतैवाभिप्रेतार्थसिद्धेः ''मामुपेत्य तु कौन्तेय'' इत्युत्तरार्धस्य व्यर्थत्वं स्यादित्यर्थः । उक्तागम-विरोधसमुच्चयार्थश्चशब्दः । स्वपक्षे तु ब्रह्मसदनात्, जनाच्च परलोकानाम् उपादानम् अपुनरावर्ति-लोकत्वं च तत्रत्यभगवत्प्राप्त्यैव, न लोकप्राप्तिमात्रेणेति ज्ञापनस्य प्रयोजनत्वादवैयर्थ्यमिति भावः । ॥ १६ ॥

**गीतातात्पर्यनिर्णयः**

**''नियमाज्जन्मनोऽभावो मुक्तस्यैव तथाऽपि तु ।**
**महर्लोकमतीतानां न जन्मांशलयौ विना ।**
**तत्राप्यवश्यं तत् स्थानं तैः क्षिप्रं पुनराप्यते ॥''**

**—इति पाद्मे ॥ १६ ॥**

***प्रका०*—** ''आब्रह्मभवनाल्लोकाः पुनरावर्तिनोऽर्जुन । मामुपेत्य तु कौन्तेय पुनर्जन्म न विद्यते'' इत्यस्यार्थमाह **नियमादिति** । महर्लोकमतीतानां पुरुषाणां कात्स्न्येन पुनर्जन्म न विद्यते । किन्तु अंशेनाभिजननं लयश्च ब्रह्मलये विद्यते । भुवि जातैरंशैर्जनलोकादिषु स्वमूलरूपस्थानमवश्यं प्राप्यत इत्यर्थः ॥

***न्या०दी०*—** ब्रह्मादीन् प्राप्तानामपि पुनर्जन्माभावात् किं विशिष्याभिधीयते मामुपेत्य पुनर्जन्म नाप्नुवन्तीति । अत उच्यते 'आब्रह्मे'ति । तत्र ''आजनान्नजनिर्भुवी''ति वचनात् जनलोकादिस्थितानामपि जन्माद्यभावात् कथं ब्रह्मभवनमारभ्य पुनरावृत्तिरुच्यत इत्याशङ्कां स्मृत्यैव परिहरति **नियमादिति** ॥ अत्र जन्मपदं मरणस्याप्युपलक्षकम् ॥ **अंशलयाविति** । अंशेन भूमौ जननं, लयान्ते च जननं, तदादौ मरणं चेत्यर्थः । अंशस्य मरणं चास्तीत्याह **तत्रापीति** ॥ अंशतोऽवतीर्णत्वेऽपि तैरंशैरंशिस्थानमाप्यत इत्यर्थः । अनेन जनादौ जननाद्यभावेऽपि नैतदयुक्तम् । मुक्तस्यैव मुख्यतया जननाद्यभावात् जनादावल्पजननादि-भावादेतद्वाक्यस्य च तदर्थत्वादित्युक्तं भवति ॥

***भा०दी०*—** आब्रह्मभवनादित्यस्यार्थानुवादो **ब्रह्मभवनमारभ्येति** । सत्यलोकगतब्रह्म-भवनस्य जनलोकादुपरितनत्वादिति भावः । **अनेनेति** । स्मृतिवचनेनेत्यर्थः ॥ **नैतदयुक्तमिति** । आब्रह्मभवनात्पुनरावर्ति न इत्येतदयुक्तं नेत्यर्थः ॥ **अल्पजननादीति** । कात्स्न्येन जननमृत्यो-

रभावेऽप्यंशेन तयोर्भावादित्यर्थः ॥ **एतद्वाक्यस्य चेति** । आब्रह्मभवनादिति वाक्यस्य च तदर्थत्वादंशेन पुनरावर्ति न इत्यर्थकत्वात् । यद्वा आजनान्नजनिर्भुवीत्येतद्वाक्यस्य च कात्स्न्येन जनिरूपमुख्यजनिर्नास्तीत्यर्थः ॥ १६ ॥

**गीता**

## सहस्रयुगपर्यन्तमहर्यद्ब्रह्मणो विदुः ।
## रात्रिं युगसहस्रान्तां तेऽहोरात्रविदो जनाः ॥ १७ ॥

***वि०वि०*—** मत्प्राप्तावेवापुनरावृत्तिरित्युक्तस्थापनायाशेषसृष्टिप्रलयादिकर्तृत्वमात्मनो दर्शयति **सहस्रेत्यादिना** । सहस्रशब्दोऽत्र बहुत्ववाची । ब्रह्मणः परब्रह्मणः ।

'अनेकयुगपर्यन्तमहर्विष्णोस्तथा निशा ।
रात्र्यादौ लीयते सर्वमहरादौ च जायते ॥'

इति वचनात् । निर्विकारस्य विष्णोः रात्राविव प्रलयकाले प्रवृत्त्यभावादन्यदाप्रवृत्तिसद्भावात् प्रलयादिकालो रात्र्यादित्वेनोपचर्यते । तदुक्तम्–

'नित्यस्यापि हरेः कालो द्विपरार्धात्मकस्त्वयम् ।
अहश्चासौ निमेषश्चेत्यप्रवृत्त्योपचर्यते ॥' इति ॥

***सा०सं०*—** मत्प्राप्तावेवापुनरावृत्तिरिति प्रतिज्ञामात्रेणोक्तस्य स्थापनायादौ सृष्टिप्रलयादिकर्तृत्वमात्मनो वक्तुम् उपोद्घातमाह **सहस्रेति** । **सहस्र**शब्दोऽत्र बहुशब्दपर्यायः । ये **जनाः** । **यत् परब्रह्मणोऽहः** तद्बहुयुगपर्यन्तं द्विपरार्धात्मकम् । **विदु**र्जानन्ति । **ब्रह्मणः** परब्रह्मणः । **रात्रिं** च **युगसहस्रान्तां** बहुयुगान्तां द्विपरार्धात्मिकां विदुः । तेऽहोरात्रविद इत्यर्थः । यदित्यस्य य इति वाऽर्थः । य इति शेषो वा । परब्रह्मणः कूटस्थनित्यस्यापि सृष्ट्यादिसव्यापारनिर्व्यापारावस्थयोरुपचारादहोरात्रत्वोक्तिः ॥

***अ०प्र०*—** मत्प्राप्तावेव न पुनरावृत्तिरित्युक्तं स्थापनाय शेषसृष्टिप्रलयादिकर्तृत्वमव्यक्ताख्यस्यात्मनो दर्शयति **सहस्रेति** ।

यः[१], ब्रह्मणः[२], अहः[३], सहस्रयुगपर्यन्तं[४], विदुः[५], तथा यः युगसहस्रां[६], तां[७], रात्रिं विदुः[८], ते जनाः[१०] अहोरात्रविदः[११] इत्यन्वयः ।

यः = पुरुषः[१], ब्रह्मणः = परब्रह्मणः[२], अहः = दिवसः[३], सहस्रयुगपर्यन्तं = बहुयुगाः पर्यन्तोऽवसानं यस्य तत्तथा परब्रह्मणो यदहः एवं विदुः[५], तथा यः युगसहस्रां = युगबह्ववसानकां[६], तां रात्रिं = च ये विदुः[८], ते = जनाः[१०] अहोरात्रविदः[११] न प्रसिद्धाऽहोरात्रविदः = अल्पज्ञत्वात् प्रलयसृष्टिकालौ रात्र्यहस्त्वेनोपचर्यते । तदुक्तम्—

'नित्यस्यापि हरेः कालो द्विपरार्धात्मिकः स्वयम् ।
अहश्चासौ निमेषश्चेत्यप्रवृत्त्योपचर्यते ॥' इति ॥

यद्वा, ब्रह्मणश्चतुर्युगानि मिलित्वा महायुगमेकं तत्सहस्रयुगपर्यन्तं अवसानं यदहः । तथा रात्रिं पूर्वोक्ताहःप्रमाणवर्ती एतादृशां अहोरात्रकालसङ्ख्यां ये पश्यन्ति ते जनाः अहोरात्रविदः इति वा ॥ १७ ॥

**गीता**

## अव्यक्ताद्व्यक्तयः सर्वाः प्रभवन्त्यहरागमे ।
## रात्र्यागमे प्रलीयन्ते तत्रैवाव्यक्तसंज्ञके ॥ १८ ॥

***वि०वि०***— अव्यक्ताद्विष्णोः । व्यक्तयो गुणवैषम्यादयः । तत्रैव विष्णावेव ॥

***वा०ल०***— 'अव्यक्ताद्व्यक्तयः' इत्यत्र अव्यक्तात् प्रकृतितत्त्वात् । व्यक्तयः प्राकृतदेहवन्तो जीवाः ॥

***सा०सं०***— ततः किमित्यत आह **अव्यक्तादिति** । ब्रह्मणोऽ**हरागमे** । महाप्रलयान्त इति यावत् । **अव्यक्तात्** भगवतः । व्यज्यन्त इति **व्यक्तयः**, गुणवैषण्यादयः कार्यपदार्थाः । **प्रभवन्ति** उत्पद्यन्ते । **रात्र्यागमे**ऽव्यक्तसञ्ज्ञके । **तत्रैव** भगवति **प्रलीयन्ते** ॥

***अ०प्र०***— अव्यक्तात्[१], अहरागमे[२], सर्वाः[३], व्यक्तयः[४], प्रभवन्ति[५], रात्र्यागमे[६], तत्रैव[७], अव्यक्तसंज्ञिके[८], प्रलीयन्ते इत्यन्वयः ।

अव्यक्तात् = विष्णोः[१], अहरागमे = अह्नागमो अहरागमः तस्मिन् दिनोदये सृष्टिकाले प्राप्तौ[२], जाग्रद्दशायां सृष्ट्यात्मकः सङ्कल्पो भवति[३], तेन सर्वाः व्यक्तयः आकृतयः गुणवैषम्यादिभावाः[४], प्रभवन्ति = उत्पद्यन्ते[५], रात्र्यागमे रात्रिप्रादुर्भावे प्रलयकालप्राप्तौ[६], तत्रैव ताः सर्वाः आकृतयः सुषुप्तिदशायां[७], अव्यक्तसंज्ञिके विष्णौ[८], प्रलीयन्ते = लीना भवन्ति[९], योगशास्त्रे मूलप्रकृतेः

अव्यक्तमिति संज्ञा । यद्वा, कार्यस्य अव्यक्तरूपं कारणात्मकं तस्मादव्यक्तात्कारणरूपात् व्यज्यते अभिव्यज्यते इति व्यक्तयः प्रभवन्ति = प्रादुर्भवन्ति । कदा ? अहरागमे ब्रह्मणो दिनस्योपक्रमे तथा रात्र्यागमे तस्मिन्नेषा व्यक्तसंज्ञिके कारणरूपे प्रलयं यान्ति । यद्वा, तेऽहोरात्रविद इत्येतन्न विधीयते । किन्तु ते प्रसिद्धाहोरात्रविदो जनाः यद्ब्रह्मणोहः विदुः तस्याह्नागमे अव्यक्ताद्व्यक्तयः प्रभवन्ति । पाञ्चरात्र्यं विदुस्तस्या रात्रेरागमे प्रलीयेत इति द्वयोरन्वयः ॥ १८ ॥

**गीता**

**भूतग्रामः स एवायं भूत्वा भूत्वा प्रलीयते ।**
**रात्र्यागमेऽवशः पार्थ प्रभवत्यहरागमे ॥ १९ ॥**

***वि०वि०***— भूतग्रामो भूतसमूहः । अवशो विष्णुवशः ॥

***सा०सं०***— महामहिमत्वख्यापनाय सृष्टिप्रलययोरविच्छेदमाह **भूतेति** । प्राग्जन्मलयवत्त्वेनोक्तो यः **स एवायं भूतग्राम**श्चराचरसमुदायः । ब्रह्मणोऽ**हरागमे** प्रत्यहमिति यावत् । प्रभवति । **भूत्वा भूत्वा** चोत्पद्योत्पद्य । **रात्र्यागमेऽवशो** भगवद्वशः सन् **प्रलीयते** । भूतग्रामो भूत्वा भूत्वा रात्र्यागमे प्रलीयते पुनरहरागमे प्रभवतीति वा योजना ॥

***अ०प्र०***— तत्र कृतनाशाकृताभ्यागमशङ्कां वारयन् वैराग्यार्थं सृष्टिप्रलयप्रवाहस्य अविच्छेदं दर्शयति **भूतेति** ।

हे पार्थ ![१], स[२], एवायं[३], भूतग्रामः[४], अवशः सन्[५], अहरागमे[६], प्रभवति भूत्वा[८], स्थित्वा[९], रात्र्यागमे[१०] प्रलीयते[११] इत्यन्वयः ।

हे पार्थ ![१], स एवायं यः प्रागासीत्स एव पुरोवृत्तिदृश्यमानः[३], भूतग्रामः = भूतानां चराचरप्राणिनां ग्रामः ब्रह्मादिचेतनरूपसमूहः[४], अवशविष्णुवशः[५], अहरागमे प्रतिदिनमह्न उपक्रमे[६], प्रभवति भूत्वा उत्पत्तिं प्राप्य[८], भूत्वा = स्थित्वा च[९], रात्र्यारम्भे = रात्र्यारम्भे[१०] प्रलीयते = नश्यति वा[११] ततः पुनः अहरागमे प्रभवति च तेषां ब्रह्मादीनां मुक्तावपि तज्जातीयानां तन्नामकानां पुनरुत्पत्तिरित्येवं जलवत्प्रवाहानादिनित्यः अत्र वियत्यादेरुक्तरीत्या विष्णुभिन्नस्य सर्वविश्वस्य पराधीनविशेषप्रातितदभावरूपजन्मलयौ भवतः । अनित्यजडस्य स्वरूपेणोत्पत्तिलयौ न नित्यस्य संसारिणः कर्मरूपकर्मचेतनेतरचेतनानां देहतो जन्मलयौ कर्मरूपाणां फलोन्मुखत्वादिकजन्माफलदानेन कर्मरूपहान्यादिर्लयः कामरूपाणामपि तत्पूर्वकल्पेषु देहतो जातानां कामकर्मादिजनकानां इदं

प्राथम्याभावात्संसारः प्रवाहतो अनादितिरिति तत्त्वं ज्ञेयम् । यद्वा, भूतग्रामः अहरागमे भूत्वा प्रलीय प्रलीय पुनरपि अहरागमे अवशः कर्मादिपरतन्त्रः प्रभवति नान्य इत्यर्थः ॥ १९ ॥

**गीता**

## परस्तस्मात्तु भावोऽन्योऽव्यक्तोऽव्यक्तात्सनातनः ।
## यः स सर्वेषु भूतेषु नश्यत्सु न विनश्यति ॥ २० ॥

***वि०वि०***— पर उत्तमः । भावः स्वतन्त्रः पदार्थः ।

'सृष्टिस्थितिश्च संहारो भावनं समुदाहृतम् ।
तद्यः करोति पुरुषः स भाव इति कीर्तितः ॥'

इति वचनात् । अव्यक्तात् तस्माद्व्यक्तादन्यः । 'यः सर्वेषु' इत्यव्यक्तत्वोपपादनम् ॥

***वा०ल०***— 'परस्तस्मात् तु' इत्यत्र तस्मात् भूतग्रामात्, अन्यः भिन्नः परः उत्तमः भावः परमात्माख्यः पदार्थः अव्यक्तादप्यव्यक्तः ॥

***सा०सं०***— भगवतोऽहोरात्रोक्त्या तस्यापि जगत इवान्यस्मादुत्पत्तिलयौ स्त इत्यतो नेत्याह **पर** इत्यादिद्वाभ्याम् । **अव्यक्तस्तु** भगवांस्तु **तस्मात्** प्रभवप्रलयोपेतात् **व्यक्तात्** भूतग्रामात् । **अन्यो** विलक्षणः । **भावः** स्वतन्त्रः । **परः** उत्तमः । **सनातनो**ऽनादिश्च यो भगवान् **सर्वेषु भूतेषु नश्यत्सु न विनश्यति** ।

***अ०प्र०***— लोकानामनित्यत्वं परमेश्वरस्वरूपस्य नित्यत्वं प्रपञ्चयति **पर इति** द्वाभ्याम् ।

यः[१], तस्मात्[२], अव्यक्तात्[३], परः[४], अन्यस्तु[५], अव्यक्तः[६], भावः[७], सनातनः[८], स तु[९], सर्वेषु[१०] भूतेषु[११] नश्यत्सु[१२], न विनश्यतीत्यन्वयः ।

यः तस्मात् अव्यक्तात् = कार्यरूपात् ब्रह्मादि चराचरवर्गात्[३], परः अन्यस्तु = परः उत्तमः अन्यस्तु[५], अव्यक्तः भावः = स्वातन्त्र्येण सृष्ट्यादिकर्ता[७], सनातनः = शश्वदेकरूपः यद्वा, यः तस्मात् व्यक्तो व्यक्तात् सतात् व्यक्तात् अव्यक्तात् अन्यो भावो यः परः स तु सनातनः पुरुषः[८], स तु यश्च[९], सर्वेषु भूतेषु = सर्वभूतेषु[११] नश्यत्स्वपि[१२], न विनश्यति सोऽव्यक्त उच्यते । तदुक्तम्—

सृष्टिस्थितिश्च संहारो भावनं समुदाहृतम् ।
तद्यः करोति पुरुषः स भाव इति कीर्तितः ॥

यद्वा, यस्तस्माच्चराचरकारणभूतात् अव्यक्तात्परस्तु अन्यः तस्यापि कारणभूतो योऽन्यः तद्विलक्षणः अव्यक्तः चक्षुराद्यगोचरः भावः सनातनः अनादिः स तु सर्वेषु भूतेषु कार्यकारणलक्षणेषु भूतेषु नश्यत्सु नश्यत्स्वपि न विनश्यति ॥ २० ॥

**भाष्यम्**

**मां प्राप्य न पुनरावृत्तिरिति स्थापयितुं अव्यक्ताख्यात्मसामर्थ्यं दर्शयितुं प्रलयादि दर्शयति— सहस्रयुगेत्यादिना । सहस्रशब्दोऽत्र अनेकवाची । "सा विश्वरूपस्य रजनी" इति हि श्रुतिः । द्विपरार्धप्रलय एवात्र विवक्षितः । "अव्यक्ताद् व्यक्तयः सर्वाः" इत्युक्तेः । उक्तं च महाकौर्मे—**

**"अनेकयुगपर्यन्तमहर्विष्णोस्तथा निशा ।**
**रात्र्यादौ लीयते सर्वमहरादौ तु जायते ॥" इति ।**

**"यः स सर्वेषु भूतेषु" इति वाक्यशेषाच्च ॥ १७-२० ॥**

*प०टी०*— कुतस्त्वां प्राप्येवापुनरावृत्तिर्नान्यप्राप्त्या ? इत्याशङ्क्य, उत्तरश्लोकसन्दर्भमवतारयति **मामिति** । 'सहस्र'शब्दस्य प्रातीतिकोऽर्थोऽत्र न भवतीत्याह **सहस्रेति** । ननु विरिञ्चाहोरात्रयोः सहस्रयुगात्मकत्वात् किमित्येवं व्याख्या ? इत्यत आह **ब्रह्मेति** । ननु परब्रह्मणः कथं रात्रिः ? इत्यत आह **सेति** । सा प्रलयवेला पूर्णरूपस्य हरे रजनीत्यर्थः । ननु 'सहस्रयुग'-शब्दश्रवणात् कल्पप्रलय एवायं किं न स्यात् ? इत्यत आह **द्विपरार्धेति** । ततश्चास्योक्त एवार्थो मानान्तरसंवादादित्याह **उक्तं चेति** । इतश्च द्विपरार्धप्रलयोऽयमित्याह **य इति** । नहि विरिञ्चाहनि सर्वनाश इत्यर्थः ॥

*प्र०दी०*— उत्तरप्रकरणस्यासङ्गतिमाशङ्क्याह **मां प्राप्येति** । अवस्थितानामिति शेषः । प्रतिज्ञामात्रेण हि तदुक्तम् । अव्यक्तसामर्थ्यस्यात्र कथनात् कथं 'आत्म' इत्युच्यत इत्यत उक्तम्— **अव्यक्ताख्येति** । **प्रलयादीति** । तत्कारणत्वं आत्मनः । सृष्टिप्रलययोरिदम्पूर्वत्वाभावज्ञापनाय गीतामुल्लङ्घ्योक्तम् । अत्र सहस्रशब्दो दशशतवाचीति प्रतीतिनिरासायाह— **सहस्रेति** । बहुशब्दपर्यायोऽयम् । न तु प्रसिद्धार्थः । विरिञ्चाहोरात्रयोः प्रसिद्धस्य सहस्रचतुर्युगपर्यन्तत्वात्कथमेतदित्यत आह— **ब्रह्मेति** । तथा द्विपरार्धप्रलयस्यादिसृष्टेश्चात्र विवक्षितत्वादुक्तं युक्तम् । ननु परस्य ब्रह्मणो नित्यत्वादहोरात्रे न स्तः । तत्कथं तत्परमेतदित्यत आह— **सेति** । सा

निर्व्यापारावस्था परिपूर्णरूपस्यापि हरेः रजनीत्यर्थः । अनेनाहरपि सिद्धम् । भवेदेतत् यद्यत्र द्विपरार्धप्रलयस्यादिसृष्टेश्च विवक्षेत्यत्र प्रमाणं स्यादित्यत आह— **द्विपरार्धेति** । एवमादिसृष्टेश्चेत्यपि ग्राह्यम् । न ह्यवान्तरसृष्टिप्रलययोः सर्वकार्योत्पत्तिविनाशाविति भावः । आगमान्तरसम्मतेश्चैवमित्याह— **उक्तं चेति** । इतोऽप्येवमित्याह— **य इति** । न ह्यवान्तरप्रलये सर्वेषामाकाशादीनां भूतानां नाशः । नापि विरिञ्चस्य पञ्चभूतनाशेऽप्यविनाशित्वमिति भावः ॥

***भा०दी०***— .........र्वाहायाह **अवस्थितानामिति शेष इति** । **तदुक्तमिति** । मामुपेत्य तु कौन्तेयेत्याद्युक्तमित्यर्थः । तथा च स्थायनं सङ्गच्छतमेवेति भावः । ...........धात्सृष्ट्यादीति वक्तव्ये प्रलयादीति व्युत्क्रमेणोक्तिरित्यत आह **सृष्टीति** । इदं पूर्वेति सृष्टिः पूर्वालयः पश्चादिति वा लयः पूर्वसृष्टि पश्चादिति वा न नियमोऽस्ति पौर्णमास्यमावास्योस्तिथ्योरिव चक्रवत्परिवर्तमानत्वादिति ज्ञापनायेत्यर्थः । **तत्रेति** । गीतायामित्यर्थः ॥

***भा०र०***— "मां प्राप्य" इति भाष्यस्थल्यबन्वयायाह **अवस्थितानामितीति** । 'इममर्थम्' इति भाष्यार्थः । 'स्थापयितुम्' इति भाष्योक्तस्थापनमुपपादयितुमाह **प्रतिज्ञामात्रेण हीति** । **तत्** "मामुपेत्यावस्थितानां पुनर्जन्म न विद्यते" (८.१६) इति गीतोक्तम् । **अत्र** "अव्यक्ताद् व्यक्तयस्सर्वाः" (८.१८) इति गीतायाम् । अव्यक्तशब्दस्य प्रधाने प्रसिद्धत्वादिति शङ्कितुर्हृदयम् । प्रलयादेर्दोषतया प्रसिद्धस्य कथं भगवदीयत्वम् ? इत्यत आह **तत्कारणत्वमिति** । **इदंपूर्वत्वेति** । इदंप्रथमत्वाभावज्ञापनाय "प्रभवन्त्यहरागमे रात्र्यागमे प्रलीयन्ते" (८.१८) इति गीतोक्तसृष्टिप्रलयक्रममुल्लङ्घ्य भाष्ये 'प्रलयादि' इत्युक्तमित्यर्थः । पौर्णमास्यमावास्यातिथ्योरिव विपरिवर्तमानत्वादिति भाव इति **स्वामिनः** । 'दशशत' इति विशेषणसमासोऽयम्, न द्विगुः । तेन क्लीबभाव उपपन्नः । अनेकशब्देन द्वयोरपि प्रतीतावर्थस्वारस्यादाह **बहुशब्देति** ।

**प्रसिद्धसहस्रचतुर्युगेति** । "सहस्रवृत्तं तदहः स्वयम्भुवो निशा च" (म.भा.ता.नि. ३.५७) इति निर्णयवचनादिति भावः । उत्तरभाष्ये "प्रलय एव" इत्युक्तावपि, 'प्रलयादि' इति पूर्वभाष्यानुसारेणाह **तथा च द्विपरार्धेति** । **नित्यत्वादिति** । कालकृतविकाराभावोपलक्षणम् । **एतत्** ब्रह्मपदम्, 'सहस्रयुगपर्यन्तम्' इति वाक्यं वा । "विश्वरूपस्य, इत्यस्यार्थः **परिपूर्णरूपस्येति** । **अनेन** 'रजनी' इति वचनेन, तस्या अहरविनाभावादिति भावः । **अत्र** 'सहस्रयुगपर्यन्तम्' इति गीतायाम् । **आदिसृष्टिश्च** विवक्षिता । उभयत्र हेत्वाकाङ्क्षां पूरयद् भाष्यम् **अव्यक्तादिति** । तत्र सर्वपदोपादानतात्पर्यमाह **न हीति** । **एवं** द्विपरार्धप्रलय-आदिसृष्टिः विवक्षिते । भाष्ये **रात्र्यादौ**

रात्रेरादिभागे । **अहरादौ** अपररात्रे । "लयस्य त्वष्टमो भागः सृष्टिकालः" (ना.) इति वचनात् । ब्रह्मशब्दस्य विरिञ्चार्थत्वे दोषमाह **नापीति** ॥ १७-२० ॥

**गीता**

## अव्यक्तोऽक्षर इत्युक्तस्तमाहुः परमां गतिम् ।
## यं प्राप्य न निवर्तन्ते तद्धाम परमं मम ॥ २१ ॥

***वि०वि०***— धाम स्वरूपम् । 'तेजः स्वरूपं च गृहं प्राज्ञैर्धामेति गीयते' इत्यभिधानात् ॥

***सा०सं०***— सर्वात्मना नाशाभावादेव **अव्यक्तो भगवानक्षरः इत्युक्तः** । 'तस्मादक्षरं तस्मादक्षरम्' इति श्रुत्यादौ । **तां परमां गतिमाहुः** । तामिति विधेयापेक्षया स्त्रीलिङ्गता । कुतोऽव्यक्तो भगवान् परमप्राप्य इत्यत आह **यं प्राप्येति** । **तन्मम धाम** । स्वरूपमित्यर्थः ॥

***अ०प्र०***— अविनाशे प्रमाणं दर्शयन्नाह **अव्यक्तमिति** ।

यः अव्यक्तः[१], भावः अक्षर[२], इत्युक्तः[३], तं[४], परमां[५], गतिं[६], आहुः[७], परमगतित्वमाह यं[८], प्राप्य[९], न निवर्तन्ते[१०] तत्[११] मम[१२], धाम[१३], परमं[१४] इत्यन्वयः ।

यः अव्यक्तः भावः अतीन्द्रियः अक्षर इति[२], उक्तः[३], स एव अस्मान्नाशनिमित्तात् अक्षर इत्युक्तः । प्रदेशो नाशशून्य इति तथा 'अक्षरात्स भवतीह विश्वं' इति श्रुतेः[३], तमेव परमां गतिं गम्यं पुरुषार्थमाहुः[७], 'पुरुषान्न परं किञ्चित्सा काष्ठा सा परा गतिः' इत्यादि श्रुतयः[७], परमगतित्वमेवाह यं प्राप्य[९], पुनः न निवर्तन्ते यः परं अव्यक्तं प्राप्य पुनः न निवर्तन्ते[१०] तत् = अव्यक्तं[११] मम धाम यथार्थस्थानं स्वरूपं च[१४], अतो अहमेव परमा गतिरित्यर्थः । 'गृहं प्राज्ञैर्धामेति गीयते' इत्युक्तेः ॥

***भा०र०***— **स्वस्थानत्वम्** । "यं प्राप्य न निवर्तन्ते तद्धाम परमं मम" इत्यत्र ॥ २१ ॥

**भाष्यम्**

**अव्यक्तो भगवान् । "यं प्राप्य न निवर्तन्ते" इति "मामुपेत्य" इत्युक्तस्य परामर्शात् । "अव्यक्तं परमं विष्णुम्" इति प्रयोगात् च गारुडे । धाम स्वरूपम् । "तेजः स्वरूपं च गृहं प्राज्ञैर्धामेति गीयते ॥" इत्यभिधानात् ॥ २१ ॥**

***प०टी०***— नन्वेवं महिमाऽव्यक्तस्यैवोक्तो न तु हरेरित्यत आह **अव्यक्त इति** । नन्वव्यक्तस्य 'तद्धाम मम' इति भगवदधिष्ठानत्वोक्तेः कथमव्यक्तो हरिः ? इत्यत आह **धामेति** ॥

***प्र०दी०***— इदानीं 'अव्यक्ताख्यात्म' इति यदुक्तं तत्साधयितुमाह— **अव्यक्त इति** । 'मामुपेत्य' इत्युक्तार्थस्य ''यं प्राप्य न निवर्तन्ते'' इत्यव्यक्तविषयतया परामर्शात् । न केवलमव्यक्तशब्दो युक्तिबलाद्भगवति नीयते । किं तु वाचकश्च तस्येत्याह— **अव्यक्तमिति** । कथं तर्हि भगवताऽव्यक्तस्य स्वस्थानत्वमुच्यत इत्यत आह— **धामेति** ॥

***भा०दी०***— धामपदार्थमाश्रयं मत्वाह **कथं तर्हीति** ॥ २१ ॥

**गीता**

## पुरुषः स परः पार्थ भक्त्या लभ्यस्त्वनन्यया ।
## यस्यान्तःस्थानि भूतानि येन सर्वमिदं ततम् ॥ २२ ॥

***वि०वि०***— 'भक्त्या युक्तः' इत्यादिना भक्तेः साधनान्तरैः सह साधनत्वमुक्तम् । तत्र साधनान्तरसाम्यशङ्कानिरासाय भक्तिरेव परमं साधनमित्याह **पुरुष इति** । यस्य स इति सम्बधः ॥

***वा०ल०***— 'पुरुषः स परः' इत्यत्र न विद्यते अन्यो विषयो यस्याः सा अनन्या, तया ॥

***सा०सं०***— 'भक्त्या युक्तो योगबलेन चैव' इत्यत्र साधनान्तरैः सह भगवत्प्राप्तिसाधनत्वं भक्तेरुक्तम् । तत्र साधनान्तरसाम्यशङ्कानिरासाय भक्तेरेव परमसाधनत्वमिति भावेनाह **पुरुष इति** । **भूतानि यस्यान्तःस्थानि** । **सर्वमिदं** जगत् **येन ततं** व्याप्तं स परमः पुरुषः भगवान् । अनन्यया-ऽन्यासाधारणया तु । **भक्त्या लभ्यः** प्राप्य इत्यर्थः । अत्र परमयेत्यनुक्तावपि पुनर्वचनबलादेव परमत्वलाभ इति भावः । उक्तं हि 'ॐ परेण च शब्दस्य ताद्विध्यं भूयस्त्वात्त्वनुबन्धः ॐ' (३-३-५४) इति सूत्रे भक्तेः प्राधान्यम् ॥

***अ०प्र०***— तत्प्राप्तौ च 'भक्तिरन्तरङ्गोऽपि य' इत्युक्तमेव भक्त्या युक्त इत्यत्र भक्तेः साधनान्तरैः सह पाठात् तत्साम्यशङ्कानिरासाय भक्तिरेव परमं साधनमित्याह **पुरुष इति** ।

हे पार्थ ![१], सः[२], परः[३], पुरुषः[४], अनन्यया[५], भक्त्या[६], लभ्यः[७], भूतानि[८], यस्य[९], अन्तरस्थानि[१०] येन[११] इदं[१२], सर्वं[१३], ततमित्यन्वयः ।

हे पार्थ ![१], स चाहं परवेदानां परः वेदैरेकतरः दृष्ट इत्यर्थः । पुरुषः[४], अनन्यया मया विना अन्यद्वस्त्वन्तरं यया न वेत्ति सा अनन्या तया अनन्यया भक्त्या एकान्तभक्त्या एव[६], लभ्यः

नान्यथा; न प्राप्यः[७], भूतानि = भूतानां प्रावरणमित्यर्थः[८], यस्य = कारणभूतस्य परमात्मनः[९], अन्तःस्थानि = अन्तःस्थितानि[१०] येन कारणभूतेन मया[११] इदं[१२], सर्वं = जगत्[१३], ततं = व्याप्तं सिद्धसंसारे नियमार्थ इति न्यायात् भक्तिरेव प्रधानसाधनमिति सिद्ध्यति । तस्माद्विष्णवावेव दास्यत्वेन भक्तिमेव कुर्यादित्यर्थः ॥ २२ ॥

**भाष्यम्**

**परमसाधनं आह— पुरुष इति ॥ २२ ॥**

*प०टी०*— यत्पूर्वं भगवत्प्राप्तौ साधनमुक्तं सदा तद्भावभावित्वं, न तावता तत्प्राप्तिः, द्वेषिणामपि सम्भवात् । अतः परमसाधनमन्यदस्तीत्यभिप्रेत्योत्तरं श्लोकमवतारयति **परमेति** ॥

*प्र०दी०*— 'भक्त्या युक्त' इति भक्तेः भगवत्प्राप्तिसाधनत्वस्योक्तत्वात्पुनरुक्तमुत्तरं वाक्यमित्यत आह— **परमेति** । अन्यैः साधनैः सहोक्तत्वेन तत्साम्यशङ्कायां साधनेषु भक्तेः परमत्वमनेनाह । तच्च पुनर्वचनेनैव द्योत्यमिति भावः ॥

*भा०दी०*— **अन्यैः साधनैरिति** । 'मनसा चलेन भक्त्या युक्तो योगबलेन चैवे'त्याद्युक्तेरिति भावः । **अनेनेति** । परमश्लोकेनेत्यर्थः ॥

*भा०र०*— **भक्त्या युक्त इतीति** । "भक्त्या युक्तो योगबलेन च" (८.१०) इत्यत्र । **अन्यैः साधनैः** 'मनसाऽचलेन', 'योगबलेन', 'चक्षुर्भ्रुवोर्मध्ये' (८.१०) इत्यादिनोक्तभक्त्यतिरिक्तसाधनैः । **अनेन** "भक्त्या लभ्यस्त्वनन्यया" इति वचनेन । **भावप्रदीपिकायां तु** यत् पूर्वं भगवत्प्राप्तौ साधनमुक्तं सदा तद्भावभावितत्वम्, न तावता तत्प्राप्तिः, द्वेषिणामपि तत्सम्भवात् । अतः परमसाधनम् अन्यदस्तीत्यभिप्रेत्योत्तरं श्लोकमवतारयतीति 'परमसाधनमाह' इति भाष्यमवतारितम् । ॥ २२ ॥

**गीतातात्पर्यनिर्णयः**

**सहस्रं इति बह्वेव । ब्रह्मणः परब्रह्मणः ।**

*प्रका०*— "सहस्रयुगपर्यन्तमहर्यद्ब्रह्मणो दिनम्" इत्यादेरर्थमाह **सहस्रमित्यादिना** ।

*न्या०दी०*— मत्प्राप्तावेवापुनरावृत्तिरित्युक्तस्थापनाय अशेषसृष्टिप्रलयादिकर्तृत्वमात्मन उच्यते 'सहस्र' इति । तत्र सहस्रपदं दशशतवाचीत्यन्यथाप्रतीतिनिरासाय व्याचष्टे **सहस्रमिति** ॥ बह्वेव प्रसिद्धसहस्रादिति शेषः । ननु "चतुर्युगसहस्राणि ब्रह्मणो दिनमुच्यते" इत्यादौ युगसहस्रमात्रस्य

विरिञ्चादिनादित्वेनोक्तत्वात् कथं सहस्रपदं ततोऽपि बह्वर्थमित्यत आह **ब्रह्मण इति** ॥ नात्र चतुर्मुखस्याहोरात्रमुच्यते, येन सहस्रपदं ततोऽपि बह्वर्थं न स्यात् । किन्तु परब्रह्मणो द्विपरार्धात्मकमहोरात्रमिति भावः ।

*भा०दी०*— **द्विपरार्धात्मकेति** । ब्रह्मण आयुःशतं परसंज्ञकं तस्यार्धद्वयात्मकेत्यर्थः ।

**गीतातात्पर्यनिर्णयः**

**"अव्यक्ताद् व्यक्तयः सर्वाः प्रभवन्त्यहरागमे ।**
**रात्र्यागमे प्रलीयन्ते तत्रैवाव्यक्तसंज्ञके ॥" इति वाक्यशेषात् ।**

*न्या०दी०*— कुतो ब्रह्मपदेन परब्रह्मेत्यङ्गीकृत्य तदहोरात्रपरत्वमुच्यते, विरिञ्चाहोरात्रपरत्वं किं न स्यादित्यत आह **अव्यक्तादिति** ॥

**गीतातात्पर्यनिर्णयः**

**न हि विरिञ्चाहन्येव सर्वव्यक्तिप्रलयः ।**

*न्या०दी०*— एवं वाक्यशेषसद्भावेऽपि कुतो नास्य विरिञ्चाहोरात्रपरत्वमित्यत आह **न हि इति** ॥ **अहनीति** । तदवसान इत्यर्थः । एवं न अहरागमे सर्वव्यक्तिप्रभव इत्यपि द्रष्टव्यम् ।

**गीतातात्पर्यनिर्णयः**

**"नित्यस्यापि हरेः कालो द्विपरार्धात्मकस्त्वयम् ।**
**अहश्चासौ निमेषश्चेत्यप्रवृत्त्योपचर्यते ॥" इति च ॥ १७-२२ ॥**

*प्रका०*— यत्परब्रह्मणोऽहस्तदनेकसहस्रयुगपर्यन्तं द्विपरार्धात्मकं रात्रिश्चाहरादीत्युच्यते । "अव्यक्ताः सर्वाः प्रभवन्त्यहरागमे" इत्यादि वाक्यशेषविरोधात् । न हि विरिञ्चाहरागमे सर्वपदार्थोत्पत्तिर्युज्यत इत्यर्थः । कालप्रवृत्तिकृतविकाराभावात् विष्णोरहरादि कल्पनम् औपचारिकमित्याह **नित्यस्येति** ।

*न्या०दी०*— ननु कथं भगवतोऽहोरात्रसद्भावः । कालकृतविकाराभावात् । "परनामनिमेषकान्ते" इत्यादौ द्विपरार्धकालस्य निमेषत्वेनोक्तत्वाच्चेत्याशङ्कां स्मृत्यैव परिहरति **नित्यस्येति** । निर्विकारस्येत्यर्थः । उपचारे बीजमप्रवृत्त्येति । रात्राविव प्रलयकाले प्रवृत्त्यभावादह्नीवान्यदा प्रवृत्तिसद्भावात् प्रलयादिकालो रात्र्यादित्वेनोपचर्यत इत्यर्थः ॥ १७-२२ ॥

**गीतातात्पर्यनिर्णयः**

**यत्र कालाभिमानिदेवतासु मृत्यनन्तरं प्रयाताः । अग्निर्ज्योतिर्धूमानामकालाभिमानित्वेऽपि कालप्राचुर्यात् काल इत्युच्यते ।**

***प्रका०***— यत्रेत्यादेरर्थमाह **यत्र कालाभिमानीत्यादिना** । "यत्र काले त्वनावृत्तिमावृत्तिं चैव योगिनः । प्रयाता यान्ति तं कालं वक्ष्यामी"त्युक्त्वा अग्निर्ज्योतिरहरित्यादिना अर्चिरादिमार्गधूमादिमार्गप्रतिपादनात् । अत्र कालशब्देन कालाभिमानिदेवता अर्चिरादिमार्गधूमादिमार्गभूता उच्यन्ते । अहश्शुक्लोत्तरायणषण्मासरात्र्यादिषु अग्निर्ज्योतिर्धूमा अपि पठिताः सन्ति । तेषु कालशब्दस्तु कालगणप्रविष्टत्वादवगन्तव्यः । "अग्निर्ज्योतिर्द्विधे"ति वचनात् अहश्शुक्लादयोऽत्र देवाः । न तु मरणकालाः । तत्कथनप्रसङ्गे अग्निर्जोतिर्धूमानामसङ्गतिप्रसङ्गादित्यर्थः ।

***न्या०दी०***— भगवन्तं प्राप्तानामपुनरावृत्तिः, अन्येषां पुनरावृत्तिरित्युक्तम् । तत्र पुनरावृत्तिमतामन्येषां च केन पथाऽऽगमनमित्यत उच्यते **यत्र इति** । यत्र यस्मिन् काले मृता अनावृत्तिं गच्छन्ति, यस्मिंश्च पुनरावृत्तिं गच्छन्ति तं कालं वक्ष्यामीत्यन्यथाप्रतीतिनिरासाय व्याचष्टे **यत्रेति** ॥ नन्वग्निर्ज्योतिर्धूमानाम् अकालाभिमानिनामपि मार्गे गम्यत्वेन वक्ष्यमाणत्वात् कथं प्रतिज्ञावाक्ये यत्र काले तं कालमित्युच्यत इत्यत आह **अग्नीति** ॥ अग्निर्ज्योतिर्धूमानां गम्यतया वक्ष्यमाणानामिति शेषः । गम्यतया वक्ष्यमाणेषु कालाभिमानिनां बाहुल्यात् अल्पसलिलयुतपयसि पयःपदस्य सलिलोपलक्षकत्ववत् कालपदस्येतरोपलक्षकत्वादिति भावः ।

**गीतातात्पर्यनिर्णयः**

**"अग्निर्ज्योतिरिति द्वेधा वह्नेः पुत्रो व्यवस्थितः ।**
**तं प्राप्य याति ब्रह्मिष्ठो दिवसाद्यभिमानिनः ॥" इति सत्तत्त्वे ।**

***न्या०दी०***— ननु "तेऽर्चिषमभिसम्भवन्ति", "अर्चिरादिना तत्प्रथितेः" इत्यादौ ज्योतिषः प्रथमप्राप्यतयोक्तत्वात् कथमत्र ज्योतिषः प्रथममग्नेः प्राप्तिरुच्यते । कुतश्चाहरादिपदस्य देवताविषयत्वमित्याशङ्कां स्मृत्यैव परिहरति **अग्निरिति** ॥

***भा०दी०***— तेऽर्चिषमभिसम्भवन्तीति श्रुतिः । अर्चिरादिनेति तु सूत्रम् । अर्चिर्ज्योतिःपदयोरेकार्थत्वात् ज्योतिषः प्रथमप्राप्यतयेत्युक्तम् ॥ १७-२२ ॥

**गीता**

## यत्र काले त्वनावृत्तिमावृत्तिं चैव योगिनः ।
## प्रयाता यान्ति तं कालं वक्ष्यामि भरतर्षभ ॥ २३ ॥

*वि०वि०*— भगवन्तं प्राप्तानाम् अपुनरावृत्तिरित्युक्तम् । तत्र अपुनरावृत्तिमतामन्येषां च केन पथा गमनमित्यपेक्षायामाह **यत्रेत्यादिना** । यत्र कालाद्यभिमानिदेवतासु मृत्युनन्तरं प्रयाता आवृत्तिमनावृत्तिं च यान्ति । कालं कालाद्यभिमानिदेवताम् । वक्ष्यामि ॥

*सा०सं०*— भगवन्तं प्राप्तानामन्येषां चापुनरावृत्तिपुनरावृत्ती कथिते । तत्र यद्देवताधिष्ठित-मार्गाभ्यां गतानामपुनरावृत्तिपुनरावृत्ती भवतः । ता देवता प्रतिज्ञापूर्वकमाह **यत्रे**त्यादित्रयेण । **काल** इति । **यत्र** कालाभिमानिदेवताधिष्ठितमार्गे कालानभिमानिदेवताधिष्ठितमार्गे च । **प्रयाता योगिनः अनावृत्तिमावृत्तिं च यान्ति तं कालम्** । तत्कालाभिमानिदेवता अन्यदेवताश्च वक्ष्यामीत्यर्थः ॥

*अ०प्र०*— तदेवं परमेश्वरोपासकाः तत्पदं प्राप्य न निवर्न्तते । अन्ये तु आवर्तन्त इत्युक्तं तत्कथमित्यपेक्षायामाह **यत्रेति** ।

हे भरतर्षभ ![१], योगिनः[२], यत्र[३], काले[४], प्रयाताः सन्तः[५], अनावृत्तिं[६], आवृत्तिं च[७], यान्ति[८], तं कालं[९], वक्ष्यामीत्यन्वयः ।

हे भरतर्षभ ![१], योगिनः[२], यत्र काले कालाभिमानिदेवताधिष्ठितमार्गे देहं त्यक्त्वा[४], प्रयाताः सन्तः[५], अनावृत्तिं = मोक्षं[६], आवृत्तिं = जन्म च[७], यान्ति[८], तत्कालं = तत्कालाभिमानिदेवतां अन्यदेवतांश्च[९], वक्ष्यामीत्यर्थः ॥ २३ ॥

**भाष्यम्**

**यत्कालाद्यभिमानिदेवता गता आवृत्त्यनावृत्ती गच्छन्ति ता आह— यत्रे-त्यादिना । काल इत्युपलक्षणम् । अग्न्यादेरपि वक्ष्यमाणत्वात् ॥ २३ ॥**

*प०टी०*— पूर्वं भगवद्भक्तानामपुनरावृत्तिरन्येषां पुनरावृत्तिश्चोक्ता । तद्द्वयं केन पथा गता-नाम् ? इत्यत उत्तरश्लोकान् सङ्ग्रहेण व्याचक्षाणोऽवतारयति **यदिति** । गीतायां 'काल'पदस्यैव श्रवणात् किमर्थम् आदिपदम् ? इत्यत आह **काल इति** ॥

*प्र०दी०*— यस्मिन् काले मृता आवृत्त्यनावृत्ती यान्ति तत्प्रतिपादनार्थमुत्तरो ग्रन्थ इत्यन्यथाप्रतीतिनिरासार्थमाह— **यदिति** । याश्च ताः कालाभिमानिन्यश्चेति विग्रहः । **देवतागता इति** । तदधिष्ठितमार्गाभ्यां गता इत्यर्थः । काल इत्युक्तत्वात्कथमादिपदप्रक्षेपेण व्याख्यानमित्यत आह— **काल इति** । कुत इत्यत आह— **अग्न्यादेरिति** । अग्निर्ज्योतिर्धूमानाम् ॥

*भा०दी०*— आदिपदार्थमाह **अग्निर्ज्योतिर्धूमानामिति** ॥

*भा०र०*— 'ताः' इत्युत्तरत्र भाषणात् तत्सामानाधिकरण्यानुकूलविग्रहं दर्शयति **याश्च ता इति** ॥

**गीता**

**अग्निर्ज्योतिरहः शुक्लः षण्मासा उत्तरायणम् ।**
**तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जनाः ॥ २४ ॥**

*वि०वि०*— अग्निर्ज्योतिर्धूमानामकालाभिमानित्वेऽपि कालप्राचुर्यात्तत्साहचर्येण कालत्त्व-मुपचर्यते । ज्योतिरर्चिः । अहरभिजित्सहितम् । शुल्कः पूर्णमास्यायुक्तः । अयनं विषुवेण सह स्थितम् । मासाभिमानिभ्योऽप्ययनाभिमानी पृथक् । तत्र प्रयाता ब्रह्मविदो ब्रह्म गच्छन्ति । उक्तं च–

'अग्निर्ज्योतिरिति द्वेधा वन्हेः पुत्रो व्यवस्थितः ।
तं प्राप्य यान्ति ब्रह्मिष्ठा दिवसाद्यभिमानिनः ॥' इति ।

तथा—

'साह्ना मध्यन्दिनेनाथ शुल्केन च स पूर्णिमा ।
सविष्वा चायनेनासौ पूजितः केशवं व्रजेत् ॥'

'पूजितस्त्वयनेनासौ मासैः परिवृतेन ह ॥' इति च ॥

*सा०सं०*— ता देवता उद्देशेनाह **अग्निरिति** । अग्निनामकदेवता । **ज्योतिरिति** अर्चिर्नामक-देवता । **अहरहरभिमानिदेवता** । अभिजिद्देवतासहितेत्यपि ध्येयम् । **शुक्लः** शुक्लपक्षाभिमानिनी । पौर्णमास्यभिमानिना सहेति ग्राह्यम् । षण्मासाभिमानिनी, उत्तरायणाभिमानिनी । विष्वभिमानिना सहेति ज्ञेयम् । **तत्र** क्रमेण निर्दिष्टाग्न्यादिदेवताऽधिष्ठितमार्गे **प्रयाताः ब्रह्मविदो** जनाः **ब्रह्म गच्छन्ति** ॥

*अ०प्र०*— तत्र अनावृत्तिमार्गमाह **अग्निरिति** ।

अग्निरिति = अग्निनामकदेवताः[1], ज्योतिरिति = अर्चिनामकदेवता[2], अहः इति = अहरभिमानिदेवता[3], अभिजित् देवतासहितेत्यपि ध्येयम् । शुक्लः = शुक्लपक्षाभिमानिनी पौर्णिमास्याभिमानिना सहेति ग्राह्यं[4], षण्मासाभिमानि उत्तरायणाभिमानिनी विष्णवभिमानिना सहेति ज्ञेयं[5], तत्र समयोग-काले क्रमेण निर्दिष्ट अग्न्यादिदेवताधिष्ठितमार्गे[7], प्रयाताः = त्यक्तदेहाः[8], ब्रह्मविदो जनाः = भगवदुपासकाः जनाः[9], ब्रह्म[10] गच्छन्ति = प्राप्नुवन्ति[11] ॥ २४ ॥

**गीता**

## धूमो रात्रिस्तथा कृष्णः षण्मासा दक्षिणायनम् ।
## तत्र चान्द्रमसं ज्योतिर्योगी प्राप्य निवर्तते ॥ २५ ॥

*वि०वि०*— योगी कर्मयोगी धूमादिदेवतामार्गे गत्वा चन्द्रं प्राप्य निवर्तते । स्मरणनिमित्ते चैते गती इति दर्शयितुं ब्रह्मविदो योगीति विशेषणम् । उक्तं च—

'गत्यनुस्मरणात् ब्रह्म चन्द्रं वा गच्छति ध्रुवम् ।
अननुस्मरणात्काले स्मरणं प्राप्य वै गतिः ॥

इति । तत्कालमरणविवक्षायामग्निर्ज्योतिर्धूमानामयोगः । 'अथ यो दक्षिणे प्रमीयते पितृणामेव महिमानं गत्वा चन्द्रमसः सायुज्यं सलोकतामाप्नोत्येतौ वै सूर्याचन्द्रमसोर्महिमानौ ब्राह्मणो विद्वानभिजयति । तस्माद्ब्रह्मणो महिमानमाप्नोति' (महा.ना.उ.) इति विदुषो दक्षिणायन-मरणेऽप्यपुनरावृत्त्या ब्रह्मप्राप्तिश्रुत्या सा न विरुध्यते । उक्तं च—

'शतं पञ्चैव सूर्यस्य दक्षिणायनरश्मयः ।
तावन्त एव निर्दिष्टा उत्तरायणरश्मयः ॥
ते सर्वे देहसम्बद्धा सर्वदा सर्वदेहिनाम् ।
महर्लोकादिगन्तारः उत्तरायणरश्मिभिः ॥
निर्गच्छन्तीतरैश्चैव(श्चापि) यैरेष्टव्येतरा गतिः ।
उत्तरं दक्षिणमिति त एव तु निगद्यते ॥
न तु कालविशेषोऽस्ति ज्ञानिनां नियमात्फलम् ।
ददाति कालेऽनुगुणे फलं किञ्चिद्विशिष्यते ॥
अत्युत्तमानां केषाञ्चिन्न विशेषोऽस्ति कालतः ॥' इति ॥ २५ ॥

***सा०सं०***— **धूम** इत्यादि धूमाद्यभिमानिदेवतानिर्देशः । तत्र धूमादिदेवताऽधिष्ठितमार्गे प्रयाता इति योज्यम् । **योगी** कर्मयोगी । पूर्वत्र 'ब्रह्मविदः' इति अत्र 'योगी' इति विशेषणाच्च क्रमात् मार्गद्रयस्य ज्ञानकर्मसाध्यत्वमुक्तं ध्येयम् । एतच्च मार्गद्रयमन्तकाले तद्विषयस्मृतिमतामेवेति ज्ञेयम् । तदाह सूत्रे 'ॐ योगिनः प्रति स्मर्यते स्मार्ते चैते ॐ' (४-२-२२) इति ॥

***अ०प्र०***— आवृत्तिमार्गमाह **धूम इति** ।

धूमः[१], रात्रिः[२], तथा कृष्णः[४], षण्मासा[५], दक्षिणायनं[६], तत्र प्रयाताः[७], कर्मयोगी[८], चान्द्रमसं ज्योतिः प्राप्य निवर्तते इत्यन्वयः ।

धूमः धूमाभिमानिनी देवताधिष्ठितमार्गे रात्र्यादिशब्दैश्च पूर्ववदेव रात्रि कृष्णपक्षदक्षिणायनरूप षण्मासाभिमानिनी देवतास्तिस्रो देवता लक्ष्यन्ते । एताभिः देवताभिरुपलक्षितो यो मार्गः[६], तत्र प्रयाताः[७], कर्मयोगी[८], चान्द्रमसं ज्योतिः तदुपलक्षितं स्वर्गलोकं[९], प्राप्य तत्रेष्टापूर्तकर्मफलं भुक्त्वा पुनः[१], निवर्तते = आवर्तते[११] अत्रापि श्रुतिः— 'ते धूममभिसम्भवती'त्याह । तदेवं निवृत्तकर्म-सहितोपासनया क्रममुक्तिः काम्यकर्मभिः स्वर्गभोगानन्तरमावृत्तिः क्षुद्रकर्मणां तु जन्तूनां अत्रैव पुनःपुनः जन्मेति द्रष्टव्यम् ॥ २५ ॥

**गीता**

## शुक्लकृष्णे गती ह्येते जगतः शाश्वते मते ।
## एकया यात्यनावृत्तिमन्ययाऽऽवर्तते पुनः ॥ २६ ॥

***वि०वि०***— उक्तौ मार्गौ निगमयति **शुक्लकृष्णेति** । ज्ञानकर्मसम्बन्धिन्यौ शाश्वते शाश्वत्यौ अनादिसंसिद्धे एते गती एकयाऽनावृत्तिं याति अन्यया पुनरावर्तते ॥

***सा०सं०***— उक्तौ मार्गौ निगमयति **शुक्लेति** । **एते** प्रागुक्ते । **शुक्लकृष्णे गती** मार्गौ । **जगतः** ज्ञानकर्मयोगिजगत्सम्बन्धिनौ । **शाश्वते** शाश्वत्यौ **मते** । **एकया** गतः **अनावृत्तिं याति** । **अन्यया** गतः **पुनरावर्तत** इति ॥

***अ०प्र०***— उक्तौ मार्गौ उपसंहरति **शुक्लेति** ।

शुक्लकृष्णे गती = शुक्ले प्रकाशमयत्वात् अर्चिरादिगतिः, कृष्णे तमोमयत्वाद्धूमादिगतिः[१], एते प्रागुक्ते मार्गौ[२], जगतः = ज्ञानकर्मयोगि-जगत्सम्बन्धिनो[३], शाश्वती = अनादी शाश्वतौ[४], मते = संमते संसारस्य अनादित्वात्[५], एकया = तयोरेकया शुक्ले गतौ[६], अनावृत्तिं = मोक्षं[७], याति[८], अन्यया कृष्णया तु[९], पुनः आवर्तते = पुनरावर्तत इति ॥ २६ ॥

**भाष्यम्**

**ज्योतिः अर्चिः । "तेऽर्चिषमभिसम्भवन्ति" इति हि श्रुतिः । तथा च नारदीये— "अग्निं प्राप्य ततश्चार्चिः ततश्चाप्यहरादिकम् ॥" इति । अभिमानिदेवताश्चाग्न्यादयः । कथं अन्यथा "अह्न आपूर्यमाणपक्षम्" इति युज्यते । "दिवादिदेवताभिस्तु पूजितो ब्रह्म याति हि ।" इति ब्राह्मे । मासाभिमानिभ्योऽयनाभिमानी च पृथक् । तच्चोक्तं गारुडे— "पूजितस्त्वयनेनासौ मासैः परिवृतेन ह ।" इति । अहरभिजिता शुक्लपौर्णमास्या अयनं विषुवा सह । तच्चोक्तं ब्रह्मवैवर्ते—**

**"साह्ना मध्यन्दिनेनाथ शुक्लेन च स पूर्णिमा ।**
**सविष्वा चायनेनासौ पूजितः केशवं व्रजेत् ॥"**

**—इति ॥ २४-२६ ॥**

***प०टी०***— 'ज्योतिः'शब्दार्थं सप्रमाणकमाह **ज्योतिरिति** । अहःप्राप्तेः पूर्वमर्चिःप्राप्तिनियमादत्राहरधस्तादुक्तज्योतिरर्चिरिवेत्यर्थः । नन्वरस्त्वग्न्यादिश्रवणादादिपदम् । देवतापदं व्यर्थमत्राश्रवणादित्येतत्सप्रमाणकं परिहरति **अभिमानीति** । ननु षण्मासायनयोरेकत्वात् कथं पृथक्प्राप्यत्वम् ? इत्यत आह **मासेति** । न केवलमत्रोक्तदेवतानां प्राप्यत्वम्, अन्यासां चेत्येतत्सप्रमाणकमाह **अहरिति** । मध्यन्दिनसहितेनाह्ना सपूर्णिमेन ॥

***प्र०दी०***— ज्योतिश्शब्दस्यानेकार्थत्वात् विवक्षितमर्थमाह— **ज्योतिरिति** । अभिसम्भवन्ति प्राप्नुवन्ति । श्रुतिपुराणयोरह्नः प्रागर्चिषः प्राप्तेरुक्तेः तत्समाख्यानादित्यर्थः । प्रातीतिक एवार्थः किं न स्यात् । कुतोऽभिमानिदेवताग्रहणमित्यत आह— **अभिमानीति** । आदिशब्दसमर्थनेन सह समुच्चयार्थश्चशब्दः । अन्यथा मरणकालपरिग्रहे । इति श्रुतिः । उपलक्षणमेतत् । 'अहः शुक्ल' इति गीताऽपि । अहोरात्रव्यतिरिक्तपक्षाभावादिति भावः । समाख्यानाच्चैवमित्याह— **दिवादीति** । किं च "षण्मासा उत्तरायणं", "षण्मासा दक्षिणायनं" इत्येतदप्यभिमानिदेवतां गमयति । मासातिरिक्तायनाभावात् । अभिमानिनां च पृथक्त्वेन पृथगुक्तिसम्भवादिति भावेनाह— **मासेति** । अनेन षण्मासा एवायनमिति व्याख्यानं निरस्तं भवति । पुराणविरोधात् । अत्रानुक्तमपि किञ्चिदध्याहरति— **अहरिति** । सहस्थितं यातीत्यप्यत्र द्रष्टव्यमिति भावः । एतदप्यभिमानिदेवतापरिग्रह-

समर्थनार्थम् । प्राधान्यादेरविवक्षितत्वात् 'साह्ना' इत्युक्तम् । सपूर्णिमा सपूर्णिमेन 'सुपां सुलुक्' इत्यादेः । विषुशब्दस्योवङ्यणादेशविकल्पश्छान्दसः ॥

*भा०दी०*— चशब्दसमुच्चयाप्रतीतेराह **आदिपदार्थेति** । आप्यादेरिति भाष्ये आदिपदोपात्ते ज्योतिःशब्दस्य अर्चिरर्थकत्वं यच्छ्रुतिपुराणाभ्यां समर्थनं कृतं तेनेत्यर्थः । यद्वा अग्न्यादेरित्यादि-पदेनाह्नः प्रागर्चिषः प्राप्ते श्रुतिपुराणोक्त्या समर्थनेनेत्यर्थः । **अन्यथेत्यनुवादः** । **मरणकालपरिग्रह** इति व्याख्या । इतिपदानुवादपूर्वशेषमाह **इति श्रुतिरिति** । **एतदिति** । इतरश्रुतिरिति भाष्य-मित्यर्थः । **गीताऽपीति** । कथं युज्यत इत्यनुषङ्ग इति भावः । **समर्थनार्थमिति** । अहरादेर्जडस्य जडान्तरा आदित्यायोगादिति भावः । **इत्युक्तमिति** । अन्यथा असहयुक्तदिशा प्राधान्यादेर्विव-क्षितत्वे प्रमाणेऽप्यहर्मध्यं तिष्ठेत्यादिनिर्देशः स्यादिति भावः । **इत्यादेरिति** । छान्दसस्तृतीयायाः प्रथमेत्यर्थः । **विकल्प इति** । भाष्ये उवङ्प्रयाणे यणादेश इति विकल्प इत्यर्थः ॥

*भा०र०*— **अनेकार्थत्वादिति** ।

"ज्योतिरात्मनि सूर्येऽग्नौ हविर्होमार्चिदीप्तिषु ।
ग्रहनक्षत्रतारासु नक्षत्रे च विशेषतः ॥
विलोचने धने पुत्रे सामभेदेषु केषुचित् ।
ज्योतिष्टोमाख्ययज्ञे च क्लीबं दीप्तौ तु वा स्त्रियाम् ॥
पुंनपुंसकलिङ्गस्तु ज्योतिष्टोमे मतो मम ॥"

इति केशवाभिधानादिति भावः । 'अर्चिषम्' इति श्रुतिपदं "ज्वालाभासोर्नपुंस्यर्चिः" (अ.को.) इत्यत्र "पुंसि न" इति निषेधात्, स्त्रियां नपुंसके च वर्तत इति व्याख्यानात्, स्त्रीलिङ्गमपीति स्फुटत्वादव्याख्याय, 'अभिसम्भवन्ति' इति पदमनूद्य व्याचष्टे **अभिसम्भवन्तीति** । प्राप्त्यर्थस्यापि भवतेरात्मनेपदाभावः छन्दस्त्वादिति भावः । **तत्समाख्यानात्** "अत्रापि ज्योतिःशब्दो अर्चि-रर्थकः" इति शेषः । **आदिशब्दसमर्थनेन** "काल इत्युपलक्षणम्" (८.२३) इत्यादिरूपेण । भाष्ये **अग्न्यादयः** 'ग्राह्याः' इति शेषः । भाष्ये **'इति'** इत्यतःपरं शेषमाह **इति श्रुतिरिति** । 'आपूर्यमाण-पक्षम्' (छा. ५.४.१) इति श्रौतपदस्य 'शुक्लपक्षम्' इत्यर्थः ।

**एतत्** श्रुतिग्रहणम् । **गीताऽपि** "कथं युज्यते" इत्यन्वेति । 'दिवादि' (ब्रा.) इति वचने देवतापदप्रयोगाद् अग्न्यादयोऽभिमानिदेवता ग्राह्या इति भावः । "अर्चिरादिना तत्प्रथितेः" (ब्र,सू.

४.३.१) इति सूत्रभाष्यादौ अर्चिःप्राप्तेः प्रथमत्वावगमाद्, अत्राग्निप्राप्तिः कथं प्रथमोच्यते ? इति शङ्का,

"उत्क्रान्तस्तु शरीरात् स्वाद् गच्छत्यर्चिषमेव तु ।
ततो हि वायोः पुत्रं च योऽसौ नाम्नाऽऽतिवाहिकः ॥
ततोऽहः पूर्वपक्षं चाप्युदक्संवत्सरं तथा ।
तटितं वरुणं चैव प्रजापं सूर्यमेव च ॥
सोमं वैश्वानरं चेन्द्रं ध्रुवं देवीं दिवं तथा ।
ततो वायुं परं प्राप्य तेनैति पुरुषोत्तमम् ॥" (ब्र.त.)

इति भाष्योदाहृतवचने (ब्र.सू. ४.३.५) अग्नेः सोमादनन्तरप्राप्यत्वावेदनात् कथं प्रथमप्राप्यत्वोक्तिः ? इति शङ्का च,

"अग्निर्ज्योतिरिति द्वेधैवार्चिषः सम्प्रतिष्ठितिः ।
अग्निं गत्वा ज्योतिरेति प्रथमं ब्रह्म संव्रजन् ॥" इति,

"एकस्मिंस्तु पुरे संस्थो द्विरूपोऽग्नेः सुतो महान्" (ब्र.त.) इति भाष्योदाहृतवचनेन (ब्र.सू. ४.३.१), "अग्निं प्राप्य ततश्चार्चिः ततश्चाप्य हरादिकम्" (ना.) इति, अत्र वचनेन च, अर्चिष एवाग्निर्ज्योतिर्नामकरूपद्वयमङ्गीकृत्य, अग्निशब्दस्य प्रधानाग्निपुत्रवाचकत्वमभ्युपगम्य च परिहृता । स्पष्टं चैतत् तत्त्वप्रकाशिकायाम् (ब्र.सू. ४.३.१) ।

**सम्भवात्** "नास्मद्व्याख्याने उक्तो दोषः" इति शेषः । **अनेन** "मासाभिमानिभ्यो अयनाभिमानी" इति भाषणेन । **इति व्याख्यानमिति** । "षण्मासा एवोत्तरायणम्, तद्देवतैव मार्गभूता" इति **सङ्करव्याख्यानमित्यर्थः** । एकतरपक्षपरिग्रहे किं नियामकम् ? इत्यत आह **पुराणेति** । तत्र **मासैः** मासाभिमानिभिः परिवृतेन **अयनेन** अयनाभिमानिना देवेन **पूजितो ब्रह्म याति** इति पृथग्देवताभिधानाद् उभयोरेकैव देवतेति व्याख्यानमयुक्तमिति भावः । 'अनेन' इत्युक्तं व्यनक्ति 'पुराणेति' इत्यपि **आहुः** । **अत्र** अग्न्यादिदेवानां प्राप्यत्ववर्णनप्रकरणे । 'सह' इत्युपरितनभाष्यपदं संयोजयन् 'शुक्लम्' इति भाष्यस्थद्वितीयाऽनुसाराद् अपेक्षितमध्याहरति **सहस्थितं यातीति** । **अत्र** मार्गप्रकरणे । भाष्ये द्वितीयाश्रवणाद् 'याति' इति तावद्वक्तव्यमेव । मार्गप्रकरणे च गीतायां यथायोगं प्रथमान्तपदं संयोजनीयमिति भावः । **एतदपि** 'अहरभिजिता' (८.२४) इति भाषणमपि । **अभिमानीति** । अन्यथाऽहरादिप्राप्तावुदितायां तद्व्यतिरिक्ताभिजितोऽभावेन । तत्प्राप्तेरुक्तत्वात् "साह्ना

माध्यन्दिनेन'' (ब्र.वै.) इत्यत्र माध्यन्दिनशब्दिताभिजितः पृथक् प्राप्यत्वोक्तिरयुक्ता स्यादिति भावः ।

ननु ''अहरभिजिता सह स्थितं याति' इति भाषणेनाह्नः प्राधान्यम्, अभिजितोऽप्राधान्यं च प्राप्तम् । 'सहयुक्तेऽप्रधाने' इत्यप्रधाने तृतीयाऽनुशासनात् । तत्कथं तद्विरुद्धं 'साह्ना' इति वचनम् ? इत्यत आह **प्राधान्यादेरिति** । आदिपदेन साहित्यं ग्राह्यम् । गुणप्रधानभावस्य गम्यत्वे पूजकत्वे च साहित्यस्य चाविवक्षितत्वात् प्रमाणेन तथोक्तिर्युक्तेत्यर्थः । 'सपूर्णिमा' इत्यस्य प्रथमान्तत्वे प्रकृतासङ्गतेः तदनूद्यार्थमाह **सपूर्णिमा सपूर्णिमेनेति** । ''पूरी आप्यायने'' इत्यतो भावे क्तप्रत्यये पूर्णचन्द्रस्य पूरणम्, तेन निवृत्ता पूर्णिमा, भावप्रत्ययान्तान् ''तेन निर्वृत्तम्'' इत्यर्थे तद्धित इमप्प्रत्ययः, टाप् च, सति चैवं 'पूर्णिमा' इति रूपम् । ''पूर्णिमया सहितः सपूर्णिमः'' इति बहुव्रीहौ, ''गोस्त्रियोरुपसर्जनस्य'' इति ह्रस्वत्वे, सपूर्णिमः शुक्लपक्षः, तेन 'सपूर्णिमेन' इत्यनेन शुक्लं पूर्णमासीत्येतत् प्रमापितं भवतीति भावः । प्रमाणे 'सपूर्णिमेन' इति निर्देशः किमिति न कृतः ? इत्यत आह **सुपां सुलुगित्यादेरिति** । ''सुपां, सुलुक् पूर्वसवर्णाऽऽच्छेयाडाड्यायाजालः'' इति सूत्रात् तृतीयाविभक्तेः पूर्वसवर्णदीर्घे 'सपूर्णिमा' इति छान्दसं रूपमित्यर्थः ।

ननु ''अयनं विषुवा सह'' (गी.भा. ८.२४) इत्यत्र 'विषुवा' इति कथं भाषणम् ? विविधं सुवतीति विसूः, विपूर्वात् ''षु = प्रेरणे'' इत्यतः कर्तरि क्विपि, ''उपसर्गात् सुनोति'' इत्यादिना षत्वे च, विषुशब्दस्य निष्पत्त्या, ततस्तृतीयैकवचने 'विष्वा' इत्येव वक्तव्यत्वात्, इत्यत आह **विषुशब्दस्योवङिति** । ''तन्वादीनां छन्दसि वेति वक्तव्यम्'' इति वार्तिकाच्छन्दसि ''अग्ने यन्मे तनुवा ऊनं तन्म आ पृण'' (कृ.य.का.१, प्र.५, अनु.५) (२०) इत्यादाविव 'विषुवा' इति उवङादेशे रूपमित्यर्थः । ननु तथाऽपि पुराणे 'सविष्वा' इति कथं रूपम् । उक्तरीत्या तत्राप्युवङादेशे 'विषुवा' इति निर्देष्टव्यत्वात् । न च ''विषुवा सहितम्'' इत्यत्र अयनविशेषणतया नपुंसकभावे ''ह्रस्वो नपुंसके प्रातिपदिकस्य'' इति ह्रस्वत्वेन 'सविषु' इति प्रातिपदिकनिष्पत्तौ ततस्तृतीयायाम् ''इकोऽचि विभक्तौ'' इति नुमागमे च 'सविषुणा' इति भवितव्यमिति वाच्यम् । एवमपि 'सविष्वा' इति प्रयोगानुपपत्तेस्तदवस्थत्वादित्यत आह **यणादेशविकल्पश्चेति** । सत्यं नुमागमेन भवितव्यमिति । छन्दस्तुल्यत्वात् पुराणस्य यणादेशोऽप्यत्र नुमागमेन विकल्पेन क्रियते । तथा च 'सविषुणा' इतिवत् 'सविष्वा' इति रूपमपि छन्दसि साध्वेवेति भावः । न केवलं 'सपूर्णिमा' इत्यत्र पूर्वसवर्णदीर्घः, तथा 'विषुवा' इत्यत्र उवङादेशश्छान्दसः । किन्तु 'सविष्वा' इत्यत्र यणादेशविकल्पश्चेति चशब्दार्थः ।

यद्यपि विषुवच्छब्द एव कालार्थः । "अथो एष वै विषूवान् विष्णुं विषूवन्तो भवन्ति । यं एव विद्वाँ स एता आसते" (कृ.य.का.७, प्र.४, अनु.३) (१२) इति यजुस्संहिताभाष्ये "विषुवान् इति संवत्सरमध्यवर्ती मुख्योऽहर्विशेषः" इति **माधव**वचनात् । विषूवान् दिवा कीर्त्यम्" (तै.ब्रा. अ.१, प्र.२. अनु.३) (३३) इति यजुर्ब्राह्मणे पाठात्, पुराणे च भविष्योत्तरे "दशार्वाङ् नाडिकाः पुण्याः पश्चादपि विषूवति" इति, शातातपस्मृतौ "कुर्यात् सदायने मध्ये विष्णुपद्यां विषूवति" इत्युक्तत्वात् ।

"साङ्गं बलं पार्श्वयुगे स राजा बिभ्रद्विषूवानिव पक्षसी द्वे ।
ऋद्धिं प्रदित्सन्निजसेवकानां शालामिव स्वां नगरीं प्रपेदे ॥"

इति वाक्यकारप्रयोगाच्च । तथाऽप्यत्र भाष्यपुराणयोः विषुशब्द एव विषुवच्छब्दार्थ एष्टव्यः । शुक्लादिशब्दे मतुब्लोपेनेवात्रापि मतुब्लोपेन उक्तरीत्या विविधफलापादनहेतुना योगेन वा काले व्याख्यातव्यत्वात् । 'अहरभिजिता' इत्यादिकालवाचकशब्दैः सह पठितत्वादिति ज्ञातव्यम् । 'विषु-शब्दस्य' इति पाठेऽपि उवङादेशो यणादेशविकल्पश्च पूर्ववद्विषुशब्द एव विषुवच्छब्दार्थक इति व्याख्यानं द्रष्टव्यम् ।

तेन "समरात्रन्दिवे काले विषुवद्विषुवं च तत्" इत्यमरव्याख्याने (सुधा) "विषु साम्ये-ऽव्ययम्, ततो मतुप्, 'संज्ञायाम्' इति वत्वम् । 'अन्यत्रापि' इत्युक्तेः मत्वर्थीयो वप्रत्ययः । समरात्रन्दिवं यस्मिन् मेषतुलावच्छिन्ने काले स कालः 'विषुवत्', 'विषुवम्' चैतदित्युच्यते" इति व्युत्पादनात् विषुशब्दश्चादिगणे पठितोऽव्ययमिति, ततः 'अव्ययादाप्सुपः' इति लुकि तृतीयैक-वचनाभावात् कथमुवङ् ? कथं च यण् ? इति चोद्यं प्रत्यस्तम् । भाष्यादौ विषुशब्दस्यैव मतु-ब्लोपेन, अभेदोपचारेण वा 'समरात्रन्दिवे' इति वासरार्थकत्वेन द्रव्यार्थतयाऽनव्ययत्वेन तत्र उवङ्-यणादेशयोर्व्याख्यातुं शक्यत्वात् । अत एव तृतीयस्कन्धतात्पर्ये—

"मध्याह्नस्त्वभिजित्प्रोक्त आषाढोत्तर एव च ।
श्रवणस्यापि पूर्वार्धो विषुवद्वाऽभिजित्स्मृतः ॥" (भाग.ता. ३.१९.२७)

इति विषुवच्छब्द एव कालार्थ उक्तः । पठ्यते च विषुवच्छब्दः छान्दोग्यब्राह्मणे दशरात्रे चतुर्था-ध्याये षष्ठे खण्डे "विषुवानेष भवति । देवलोको वा एषः, यद्विषुवान्" इति "विषुवत् एव तद्रूपम्" इति च । तत्रैव पञ्चमखण्डे "तदाहुर्विविधमिव वा एतत् यदग्निष्टोमः विषुवानग्निष्टोमः" इति । तथा

चात्रापि तुल्यनक्तंदिवकालतदभिमानिदेवतास्मरणस्य आवश्यकताज्ञापनाय विषुवच्छब्दार्थकेन विषु-शब्देनैव तत्प्रत्यायनाय युक्तमेवोवङादेशादिव्युत्पादनम् । दृश्यते च स्वतोऽव्ययादपि अर्थान्तर-वाचिनः शब्दात् सुबुत्पत्तिः "स्फ्यः स्वस्तिर्विधनः स्वस्तिः परशुर्वेदिः परशुर्न स्वस्तिः" (कृ.य.का. ३, प्र.२. अनु.४) (११) इति । अत्र **भट्टभास्करेण** स्वस्तिशब्दोऽयं निपातो गुणमात्रे अविनाशे वर्तते । सोऽयमिदानीं मतुब्लोपाद्, अभेदोपचाराद्वा शुक्लादिशब्दवत् गुणिन्यविनाशहेतौ वर्तत इत्युक्तत्वात् ।

**केचित्तु** यद्यपि 'विषुवा', 'सविष्वा' इति भाष्यप्रमाणप्रयोगौ द्वावपि विषुवच्छब्दप्रकृतिकावेव । तत्र भाष्ये विषुवच्छब्दात् तृतीयाविभक्तेः "सुपां सुलुक्" इति पूर्वसवर्णदीर्घे रूपम् । प्रमाणे च षवर्णगतोकारलोपः, ततो न नुमागमप्रसक्तिः, अनिगन्तत्वात् । पूर्ववत् सवर्णदीर्घे 'विष्वा' इति रूपमिति शक्यं व्याख्यातुम् । प्रसिद्धश्च विषुवच्छब्द **उक्ताभिधानादौ** । तथाऽपि 'तनुवा', 'तन्वा' इत्यादाविवोकारान्तत्वस्य झटितिप्रतीतिकत्वाद्, उपायस्योपायान्तरादूषकत्वात्, उपलक्षणत्वेनैवं व्याख्यातमित्याहुः । तन्नातीव चतुरस्रम् । प्रमाणे 'सविष्वा' इत्यत्रोकारान्तत्वाभावे उकारलोपः, टाविभक्तेः पूर्वसवर्णदीर्घत्वं चेति द्वयं कल्पनीयम् । टीकारीत्या यणादेशनिपातनमात्रे कृते सर्वं समञ्जसमित्यतो भाष्येऽप्युकारान्तत्वस्य वक्तुमुचितत्वादिति ॥ २४-२६ ॥

**गीतातात्पर्यनिर्णयः**

**तत्कालमरणविवक्षायामग्निर्ज्योतिर्धूमानामयोगः ।**

*न्या०दी०*— एवं स्मृतिसमाख्यानादुक्त एवार्थो नाहरादिकाले मृतानामपुनरावृत्त्यादिरिति समर्थितम् । विपक्षे बाधकं चाह **तत्कालेति** ॥ यद्यत्राहरादिकालमरणे अपुनरावृत्त्यादि स्यादिति विवक्षा भवेत् तर्हि अग्निर्ज्योतिर्धूमकथनस्यासङ्गतिः स्यात् । न ह्यहरादाविव अग्निर्ज्योतिर्धूमेषु मरणं नामास्तीति भावः ।

**गीतातात्पर्यनिर्णयः**

**"अथ यो दक्षिणे प्रमीयते पितृणामेव महिमानं गत्वा चन्द्रमसः सायुज्यं सलोकतामाप्नोत्येतौ वै सूर्याचन्द्रमसोर्महिमानौ ब्राह्मणो विद्वानभिजयति तस्माद् ब्रह्मणो महिमानमाप्नोति" इति विदुषो दक्षिणायनमरणेऽप्यपुनरावृत्त्या ब्रह्मप्राप्ति-श्रुतेः ।**

***प्रका०***— उत्तरायणमृतानां ब्रह्मप्राप्तिः, न तु दक्षिणायने इत्येतच्छ्रुत्या निषेधति । "य एवं विद्वानुदगयने प्रमीयते देवानामेव महिमानम् गत्वाऽऽदित्यस्य सायुज्यं गच्छति" (महा.ना.उ.) । **प्रमीयते** म्रियते । महिमात्र तत्कृतपूजोच्यते । महपूजायामिति धातुव्याख्यानात् ।

***न्या०दी०***— इतश्च न प्रतीतोऽर्थ इत्याह **अथेति** ॥ "य एवं विद्वानुदगयने प्रमीयते देवानामेव महिमानं गत्वाऽऽदित्यस्य सायुज्यं गच्छत्यथ यो दक्षिणे प्रमीयते" इति श्रुतावुत्तरायणे मृतस्य ज्ञानिनोऽपुनरावृत्त्या ब्रह्मप्राप्तिं, दक्षिणायने मृतस्य कर्मिणः पुनरावृत्त्या चन्द्रप्राप्तिं चोक्त्वा पुनर्ज्ञानिन उत्तरायणे दक्षिणायने वा मृतस्यापुनरावृत्त्या ब्रह्मप्राप्तिरुच्यते । अत उत्तरायणे मृतानां न पुनरावृत्तिर्दक्षिणायने मृतानां पुनरावृत्तिरिति नियमाभावान्नान्योऽर्थ इति भावः । महिमानं पूज्यम् । मह पूजायामिति धातोः । "आदित्याच्चन्द्रमसम्" इति श्रुतेः ब्रह्ममार्गेऽपि सूर्याचन्द्रमसोः विद्यमानत्वात् सूर्याचन्द्रमसोः महिमानमाप्नोतीति युक्तम् ।

***भा०दी०***— मूलोक्तश्रुतेः पूर्वशेषमाह **य एवमित्यादिना** ॥ अथेत्यादेरर्थो **दक्षिणायन** इत्यादि । अतो वा इत्यादेरर्थः **पुनर्ज्ञानिन इत्यादि** । सूर्यचन्द्रमसोरिति लेखकदोषमूलोऽयं पाठः । देवताद्वन्द्वे चेत्यानङ्गि कृते सूर्याचन्द्रमसोरिति भाव्यत्वात् ।

**गीतातात्पर्यनिर्णयः**

**"विद्वान् ब्रह्म समाप्नोति यत्र तत्र मृतोऽपि सन् ॥"**

**—इति च पाद्मे ॥ २३-२६ ॥**

***प्रका०***— **यत्र तत्र** इत्यस्य अहरादिषु वा रात्र्यादिषु वेत्यर्थः ॥

***न्या०दी०***— अत्र ज्ञानिन उत्तरायणे मृतस्य ब्रह्मप्राप्तिकथनं फलाधिक्याभिप्रायमिति ज्ञातव्यम् । अत्र स्मृतिं चाह **विद्वानिति** ॥ यत्र तत्रेत्यस्य अहरादिषु वा रात्र्यादिषु वा इत्यर्थः ॥

***भा०दी०***— नन्वेवं गीतायामग्निर्ज्योतिरित्यादिना ज्ञानिनो ब्रह्मप्राप्त्यर्थमुत्तरायणे मृत्युक्तिः किमर्थंन्यत आह **अत्रेति** । गीतायामित्यर्थः ॥ **अत्रेति** । ब्रह्मप्राप्तौ कालनियमो नेत्यत्रेत्यर्थः ॥ ॥ २३-२६ ॥

*॥ इति श्रीमद्गीतातात्पर्यटीकाभावदीपे राघवेन्द्रयतिकृते*

*अष्टमोऽध्यायः ॥*

**गीता**

**नैते सृती पार्थ जानन् योगी मुह्यति कश्चन ।**
**तस्मात्सर्वेषु कालेषु योगयुक्तो भवार्जुन ॥ २७ ॥**

*वि०वि०*— मार्गकथनस्य प्रयोजनमाह **नैत इति** । योगी ब्रह्मसाक्षात्कारोपायवान् । एते गती मार्गौ जानन् । साक्षात्कुर्वन्न मुह्यति । तस्मात् सदा भक्तियुक्तो भव ॥

*वा०ल०*— 'नैते सृती' इत्यत्र सृती मार्गौ ॥

*॥ इति श्रीवादिराजतीर्थकृते श्रीमद्भगवद्गीतालक्षालङ्कारे अष्टमोऽध्यायः ॥*

*सा०सं०*— मार्गयोरुक्तेः फलमाह **नैत इति** । हे **पार्थ एते** प्रागुक्ते । **सृती** मार्गौ । **जानन् योगी** सृत्युपायभूतज्ञानकर्मानुष्ठानवान् । यद्वा, **योगी** ब्रह्मापरोक्षज्ञानवान् । **एते** सृती । **जानन्** साक्षात्कुर्वन् । **कश्चन** कोऽपि, न **मुह्यति** भगवद्विस्मृतिरूपमोहं न प्राप्नोति । **तस्मात्** योगस्य पुमर्थहेतुत्वात् । सर्वदा भगवज्ज्ञानभक्तिपूर्वं स्वोचितनिवृत्तकर्मानुष्ठानरूपोपाययुक्तो **भवेति** । द्विःसम्बोधनमादरार्थम् ॥

*अ०प्र०*— मार्गज्ञानफलं दर्शयन् भक्तियोगमुपसंहरति **नैते इति** ।

हे पार्थ ![१], कश्चन[२], योगी[३], एते[४], सृती[५], जानन्[६], न मुह्यति[७], तस्मात्[८], हे अर्जुन ![९], सर्वेषु कालेषु = सर्वदा[१०] योगयुक्तः = भगवज्ज्ञानभक्तिपूर्वं स्वोचितनिवृत्तकर्मानुष्ठानरूपोपाययुक्तः[११] भवेति अनेन भक्तियुक्तत्वेन सर्वकालेषु स्वात्मनः परमात्माधीनत्वं अवाप्स्यसीति भावः ॥ २७ ॥

**गीता**

**वेदेषु यज्ञेषु तपःसु चैव**
**दानेषु यत्पुण्यफलं प्रदिष्टम् ।**
**अत्येति तत्सर्वमिदं विदित्वा**
**योगी परं स्थानमुपैति चाद्यम् ॥ २८ ॥**

*इति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे अक्षरपरब्रह्मयोगो नाम अष्टमोऽध्यायः ॥*

***वि०वि०***— किञ्च वेदाध्यायनादि यत्पुण्यमुपदिष्टं तत्सर्वमपीदं मार्गादिकं विदित्वाऽतिक्रामति । आद्यं परं विष्णोः स्थानं उपैति । उक्तं च—

'मार्गौ ब्रह्म च यः पश्येत् साक्षादेवापरोक्षतः ।
सर्वपुण्यातिगोऽमुह्यनात्यसौ ब्रह्म तत्परम् ॥' इति ॥

*इति श्रीमद्भगवद्गीताविवृतौ श्रीमज्जयतीर्थशिष्य–विद्याधिराजभट्टोपाध्यायविरचितायां श्रीमन्मध्वमतानुवर्तिन्यां अष्टमोऽध्यायः ॥ ८ ॥*

***सा०सं०***— अध्यायार्थं फलोक्त्योपसंहरति **वेदेष्विति** । वेदाध्ययनयज्ञानुष्ठानकृच्छ्रादितपश्चरणेषु **यदेव पुण्यफलं प्रदिष्टं** निर्दिष्टमस्ति तत्सर्वमेवेति वा एवशब्दान्वयः । **इदम्** अध्यात्मादिस्वरूपं भगवतोऽशेषस्रष्टृत्वं शुक्लकृष्णमार्गादिकं च प्रागुक्तम् । **विदित्वाऽत्येति** अतिक्रामति । ततोऽतिशयितफलवान् भवति । किं तदित्यत आह **योगीति** । ज्ञानोपायवान् । **आद्यं परं स्थानं** विष्णोः स्थानम् । **उपैति** चेति । यद्वा,

"मार्गौ ब्रह्म च यः पश्येत् साक्षादेवापरोक्षतः ।
सर्वपुण्यातिगोऽमुह्यन् यात्यसौ ब्रह्म तत्परम् ॥"

इत्युक्तदिशा मार्गब्रह्ममात्रपरामर्शकोऽत्रेदं शब्दः । **विदित्वा** इत्यस्य साक्षात्कृत्वेत्यर्थः ॥

*इति श्रीमत्सर्वतन्त्रस्वतन्त्रश्रीसुधीन्द्रगुरुपादशिष्येण राघवेन्द्रेण कृते श्रीमद्गीतार्थसङ्ग्रहे अष्टमोऽध्यायः ॥*

***अ०प्र०***— अध्यायार्थफलोक्त्या अष्टप्रश्नार्थनिर्णयः । सफलं उपसंहरति **वेदेष्विति** ।

अध्यायान्ते अष्टविंशतिश्लोकस्यान्वयः । वेदेषु[१], यज्ञेषु[२], तपस्सु[३], दानेषु[४], यत्पुण्यफलं[५], प्रदिष्टं[६], तत्सर्वमेव[७], अत्येति = एति एव[८], इदं[९], विदित्वा अत्येति = अतिक्रामति[१०] ततो ज्ञानसाधितफलवान् भवति किं तदित्याह **योगीति** । योगी[११] आद्यं[१२], परं[१३], स्थानं[१४], उपैति[१५] इत्यन्वयः ।

वेदेषु = अध्ययनादिभिः[१], यज्ञेषु = अनुष्ठानादिभिः[२], तपस्सु = कायशोषणादिभिः[३], दानेषु = सत्पात्रार्पणादिभिः[४], यत्पुण्यफलं[५], प्रदिष्टं = शास्त्रेषु च उपदिष्टं[६], तत्सर्वमेव[७], अत्येति = एति प्राप्नोत्येव[८], इदं = अध्यात्मादिस्वरूपं भगवतोऽशेषस्रष्टृत्वं शुक्लकृष्णमार्गादिकं च प्रागुक्तं इदं[९], विदित्वा अत्येति = अतिक्रामति[१०] ततो ज्ञानसाधितफलवान् भवति किं तदित्याह

**योगीति** । योगी = ज्ञानोपायवान्[११] वेदादि दानान्तपुण्यफलं अवरं ब्रह्म सुखेन सह न तुल्यमिति विदित्वा साक्षात्कृत्वा[१२], आद्यं = परं स्थानं उपैति = वेदादीनां पुण्यफलरूपसुखसाधनं कृत्वा साध्यं परममुत्कृष्टं विष्णोः स्थानं कार्यकारणातीतं परब्रह्ममुपैतीति । यद्वा, मार्गौ ब्रह्मचर्यः पश्येत् साक्षादेवापरीक्षतः सर्वपुण्यातिगोमुख्यान् मामेति असौ ब्रह्म तत्पर इत्युक्त्वादिमार्गब्रह्ममन्त्रपरामर्शकोऽत्रेदंशब्दे विदित्वेत्यस्य साक्षात् कृत्वेत्यर्थः ॥

*इति श्रीमद्भगवद्गीताया विवरणे अन्वयप्रकाशिकायां*
*अक्षरपरब्रह्मयोगो नाम अष्टमोध्यायः ॥*

**भाष्यम्**

**एते सृती सोपाये ज्ञात्वाऽनुष्ठाय न मुह्यति । तच्चाह स्कान्दे—**

**''सृती ज्ञात्वा तु सोपाये अनुष्ठाय च साधनम् ।**
**न कश्चित् मोहमाप्नोति न चान्या तत्र वै गतिः ॥''**

**—इति ॥ २७ ॥ २८ ॥**

*इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमद्भगवद्गीताभाष्ये अष्टमोऽध्यायः ॥*

***प०टी०***— न केवलभक्त्या भगवद्भावभावितत्वेनान्तकालस्मरणं भवति, किन्तु मार्गज्ञानध्यानाभ्यां चेत्यभिप्रायं श्लोकं सप्रमाणकं व्याचष्टे **एतदिति** । सोपायेऽनुष्ठाय च साधनम् इति 'योगी' इत्यस्यार्थः ॥

*॥ इति श्रीपद्मनाभतीर्थभट्टारकविरचित-श्रीमद्भगवद्गीताभाष्यभावप्रदीपिकायां अष्टमोऽध्यायः ॥*

***प्र०दी०***— ''नैते सृती पार्थ'' इति मार्गज्ञानमात्रेण मोहाभावोऽभिधीयत इति प्रतीतिनिरासार्थमाह— **एत इति** । अनुष्ठायोपायमिति शेषः । कुत एतत् ? 'योगी' इत्युक्तत्वात् । पुराणसंवादाच्चेत्याह— **तच्चेति** । मोहो भगवद्विस्मृतिरूपः । अन्या भगवत्प्राप्तेः । भाष्ये पुराणे चानुष्ठायेत्याकारस्थाने क्वचिदीकारो लेखकदोषेण पतितः । मूलपुस्तकेष्वदर्शनात् ॥ २७ ॥ २८ ॥

*इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य श्रीमद्गीताभाष्यस्य टीकायां*
*जयतीर्थमुनिविरचितायां प्रमेयदीपिकायां*
*अष्टमोऽध्यायः समाप्तः ॥ ८ ॥*

***भा०दी०***— **उपाय इतीति** । ज्ञानं कर्म चेत्यर्थः ॥

*इति श्रीगीताभाष्यटीकायाः प्रमेयदीपिकायाः टिप्पण्यां*
*राघवेन्द्रयतिकृतायां भावदीपे अष्टमोऽध्यायः ॥*

***भा०र०***— "अनुष्ठाय च साधनम्" (स्का.) इति वचनानुसारेण भाष्ये शेषमाह **उपायमितीति** । ज्ञानकर्मरूपमित्यर्थः । भाष्ये 'सृती' इत्यस्य मार्गावित्यर्थः । **योगीत्युक्तत्वादिति** । सोपायमार्गज्ञानस्य तदपायानुष्ठानस्यैवात्र योगत्वेन विवक्षितत्वात् "न मुह्यति" इति युक्तमिति भावः । ननु भगवदनुस्मरणं कर्तव्यम् । तादर्थ्येन मार्गादिज्ञानमप्यापादनीयमिति प्रकृतत्वात्, अत्र मिथ्याज्ञानस्य प्रतिषेध्यतया अप्राप्तस्याभाववचनं न प्रकृतसङ्गतम् ? इत्यतो विवक्षितमोहशब्दार्थं दर्शयति **मोहो भगवदिति** । अन्यत्वं किमपेक्षया ? इत्यतः प्रतियोग्याह **भगवत्प्राप्तेरिति** । एवं च तत्रोक्तसाधनानुष्ठानेन मोहाभावे भगवत्प्राप्तिरेव फलं योगिन इति भाष्यं व्याख्यातम् भवति । **लेखकेति** । अनुपूर्वात् "ष्ठा = गतिनिवृत्तौ" इत्यतः क्त्वाप्रत्ययस्य समासे ल्यपि 'अनुष्ठाय' इत्याकारस्यैव श्रवणौचित्येन ईकारस्यालाक्षणिकत्वात् । "घु-मा-स्था-गा-पा-जहाति-सां हलि" इति प्राप्तम् ईत्वं तु "न ल्यपि" इति प्रतिषिद्धमिति भावः । हेत्वन्तरं चाह **मूलेति** । **अदर्शनात्** ईकारपाठस्य ॥ २७-२८ ॥

***गीताक्षरार्थस्तु***— "ते ब्रह्म तद्विदुः कृत्स्नमध्यात्मं कर्म चाखिलम् ।" (७.२९) "साधिभूताधिदैवं मां साधियज्ञं च ये विदुः ।" (७.३०) उत च यद् उक्तं पूर्वाध्यायान्ते, तद् ब्रह्मादिशब्दार्थव्याख्यानम् अत्रादौ क्रियत इति व्याख्यानव्याख्येयभावलक्षणया सङ्गत्या पूर्वानन्तर्यमस्याध्यायस्य । "प्रयाणकालेऽपि च माम्" (७.३०) इत्युक्तव्याख्यानप्रसङ्गेनान्तकालस्मरणफलम्, तदुपायप्रकारः, ब्रह्मप्राप्तिमार्गश्चोच्यते । कर्तव्यस्मरणविषयत्वगम्यत्वादिरूपो भगवन्महिमैव वर्ण्यत इति षट्कान्तर्भावश्च ज्ञातव्यः । तत्र ब्रह्माध्यात्मादिस्वरूपजिज्ञासया अर्जुनः पृच्छतीत्युच्यते **अर्जुन उवाचेति** । पप्रच्छेत्यर्थः ।

नन्वर्जुनस्य ज्ञानित्वाद् जानात्येवासौ "भगवानेव ब्रह्म" इति । अतः "किं तद् ब्रह्म" इति प्रश्नः कथं युज्यते ? कारणाभावादिति चेत् । उच्यते । अर्जुनस्य ज्ञानित्वेऽपि युक्तोऽयं प्रश्नः । "ते ब्रह्म" (७.२९) इत्यत्र ब्रह्मणो भगवता 'तत्' इति परोक्ष्येणोक्तत्वात्, भगवतोऽन्यदेवात्रोक्तं ब्रह्मेति प्रतीयते । "वासुदेवात्मकं ब्रह्म" (व्या.यो.) इत्यादेः भगवान् ब्रह्मेति प्रतीयते । एवमुभयथा प्रतीतिजनितसंशयस्य प्रश्नकारणस्य सद्भावादिति । ननु ब्रह्मशब्दस्य भगवन्मात्रवृत्तित्वात् कथं 'तत्'

इति विशेषितत्वेऽपि अन्यत्वप्रतीतिरिति चेन्न । ब्रह्मशब्दस्य भगवति मुख्यत्वेऽपि प्रकृतिवेदादेरप्यमुख्यतया तदर्थत्वात्, 'तत्' इति विशेषितत्वेन मुख्यार्थासम्भवे अमुख्यार्थः प्रकृत्यादीनां मध्ये किञ्चिदत्र स्यादिति प्रतीतेरप्रतिहतप्रसरत्वात् ।

ननु 'तत्' इति विशेषणेन प्राप्ता ब्रह्मणो भगवदन्यत्वशङ्का "साधिभूताधिदैवं माम्" (७.३०) इत्युपरितनवाक्येन भगवतैव परिहृता– 'ब्रह्म' इति वक्तव्ये 'माम्' इत्युक्तत्वात् । अतः कथं ब्रह्मणो भगवदन्यत्वप्रतीतिः ? इति चेत्– यद्यप्येषा प्रतीतिरुपरितनवाक्ये परिहृता । तथाऽपि पुनर्भवेदेव तत्र "साधियज्ञं च" (७.३०) इति चशब्दस्य "साधिभूताधिदैवं सधियज्ञं मां च" इति संयोजने अधिभूतादिसहितत्वेन ब्रह्मज्ञानादन्यदेव विष्णुज्ञानमुच्यत इति 'तत्' इति विशेषणादेव प्रतीतिसम्भवात् । अतो युक्त एवायं प्रश्नोऽर्जुनस्येत्युत्तरप्रस्थाने (गी.ता. ८.४.) स्फुटम् । "ते ब्रह्म तद्विदुः" (७.२९) इति यत् पूर्वं ब्रह्मोपक्षिप्तं तद् ब्रह्म किम् ? इति स्वरूपप्रश्नः । यत्प्रोक्तमधिभूतम् 'साधिभूताधिदैवम्' इति, तच्च किम् अस्मिन् लोके ॥ १ ॥

**अत्र** एतस्मिन् परिदृश्यमाने लौकिके देहे **कोऽयमधियज्ञः** ? इति स्वरूपप्रश्नः । अनेन प्रसिद्धोऽग्न्यादिर्व्यावर्तितः । **कथं** केन प्रकारेणाधियज्ञः ? इति प्रकारप्रश्नः । 'देहे' इत्यादि पदकृत्यं तु प्रश्नोत्तरवाक्याक्षरार्थकथनावसरे स्पष्टीभविष्यति । **प्रयाणकाले** अन्तकाले **नियतात्मभिः** वशीकृतमनस्कैः **कथं ज्ञेयोऽसि** ? किमर्थम् ? कथम्भूतः ? केन प्रकारेण स्मर्तव्योऽसीति ॥ २ ॥

प्रश्नाष्टकं क्रमेण परिजहारेत्युच्यते **भगवानिति** । यद् "ब्रह्म किम् ?" इति त्वया पृष्टम्, तत्रोत्तरम् "परममक्षरं ब्रह्म" इति । वेदप्रकृत्योरपि ब्रह्माक्षरशब्दवाच्यतया प्रसक्तौ, तद्व्यावर्तनाय 'परमम्' इत्यक्षरं विशेषितम् । 'किमध्यात्मम् ?' इत्यस्योत्तरं **स्वभाव इति** । "ते ब्रह्म तद्विदुः" (७.२९ ) इति जीवानां प्रकृतत्वात् स्वशब्दो जीववाची, तस्य **भावः** अन्तःकरणादिर्देहपर्यन्तः पदार्थः । **अध्यात्मम् आत्मानं** जीवमधिकृत्य तदुपकारित्वेन वर्तमानं वस्त्वित्यर्थः । **अध्यात्मम्** अध्यात्मे = आत्मानमधिकृत्य प्रवृत्तो ग्रन्थः, तस्मिन् आत्माधिकारनामके ग्रन्थे **किं** प्रतिपाद्यं किम् ? इति प्रश्नपक्षेऽपि एतदेवोत्तरम् **स्वभाव इति** । **स्वः** जीवश्चासौ भवतीति **भावश्च** जीवात्मा । आत्मैव ह्यात्माधिकारे प्रतिपाद्यत इति भावः ।

ननु जीवोपकारिदेहादिवाचित्वे भावशब्दः सार्थकः, षष्ठ्याः साकाङ्क्षत्वात् । जीववाचित्वे तु तस्य पदार्थत्वाव्यभिचारात् स्वपदेनैवालम्, किं भावशब्देन ? इति चेन्न । अन्तःकरणादिव्यावृत्त्यर्थत्वात् तस्य । स्वशब्दमात्रोपादाने तस्यात्मीयेऽपि प्रयोगाद् अन्तःकरणादिकमपि प्रसज्येत ।

तथा चात्माधिकारे किं प्रतिपाद्यम् ? इति द्वितीयप्रश्नस्य नेदमुत्तरं स्यात् ? आत्मैव ह्यात्माधिकारे प्रतिपाद्यः नान्तःकरणादि । अतस्तद्व्यावृत्त्यर्थो भावशब्दः प्रयुक्तः । कथं तेन तद्व्यावृत्तिः ? इति चेत् सर्वदैकप्रकारेण भवतीति भावोऽत्र विवक्षितः । न ह्येकप्रकारेण स्थितिरन्तःकरणादेः । "अन्नमयं हि सोम्य मनः" (छा. ६.२.९) इत्यादिना । तस्य विकारित्वावेदनात् । ततश्चान्तःकरणादौ व्यावृत्ते स्वशब्द आत्मार्थतया व्याख्यातो भवति । तर्हि 'भावः' इत्येवास्तु, किं स्वशब्देन ? इति चेन्न । तस्येश्वरव्यावृत्त्यर्थत्वात् । ईश्वरो हि सर्वदैकप्रकारेणास्त्येव । अतो 'भावः' इत्येवोक्ते तत्प्रसक्तौ पूर्ववत् द्वितीयोत्तरत्वासम्भवे तद्व्यावृत्त्यर्थः स्वशब्द इति । न हीश्वरो जीवानां स्वः । "किं कर्म ?" इत्यस्योत्तरं **भूतभावेति** । **भूतानां** जीवानां **भावानां** जडपदार्थानां चोद्भवकरी ईश्वरकर्तृका क्रिया, तद्रूपो विसर्गो विशेषणसर्जनमेव **कर्मसंज्ञितः** संज्ञाशब्दात् इतच् । कर्मशब्दवाच्य इति यावत् ॥ ३ ॥

"अधिभूतं किम् ?" इति प्रश्नस्योत्तरम् **अधिभूतं क्षर इति** । **भूतानि** सशरीरान् जीवान् अधिकृत्य तदुपकारित्वेन वर्तमानं वस्तु **क्षरः** विनाशी **भावः** पदार्थः भवति = उत्पद्यत इति व्युत्पत्त्या उत्पत्तिमान् कार्यभूतः भावः पदार्थः । स च शरीरजीवोपकारित्वेनाधिभूतशब्दार्थ इति प्रत्येकमुत्तरम् । नन्वव्यक्तमपि सशरीरजीवोपकारितया वर्तमानम् इति तस्याप्यधिभूतान्तर्भावोऽस्त्येव । न च तद् विनाशिकार्यम् । "नासतो विद्यते" (२.१६) इत्युक्तत्वात् । ततो अव्यापकमुत्तरमिति चेन्न । "अव्यक्तं पञ्चमे व्योम्नि निष्क्रिये सम्प्रलीयते", "तस्मादव्यक्तमुत्पन्नम्", "विकारोऽव्यक्तजन्म हि" (स्कान्दे) इत्यादिप्रमाणैरव्यक्तस्यापि वैषम्यपरित्यागेन साम्यावस्थापत्तिलक्षणविनाशस्य, विक्रियालक्षणजन्मनश्चावेदनेन तस्याधिभूतान्तर्भावेऽपि, "क्षरो भावः" इत्युत्तरस्य विवक्षितभूतोपकारिसर्वपदार्थविषयकत्वेनाव्यापकत्वाभावात् । "अधिदैवं किमुच्यते ?" इत्यस्योत्तरम् **पुरुष इति** । दैवतानि = सर्वान् देवानधिकृत्य तत्पतित्वेन वर्तमानं वस्तु, **पुरुषः** पुरि = शरीरे, शेते = तिष्ठतीति व्युत्पत्त्या जीवः । न च जीव अध्यात्मशब्देनोक्त इति किमिह तदुक्त्या ? इति वाच्यम् । सर्वजीवाभिमानिनः सङ्कर्षणस्य ब्रह्मणो वाऽत्र पुरुषशब्देन विवक्षितत्वात् । देवाधिकारनामके ग्रन्थे मुख्यतः प्रतिपाद्यं किम् ? इति प्रश्नाशयेऽप्युक्तः 'पुरुषः' इत्युत्तरम् । देवाधिकारकनामकग्रन्थे प्रतिपाद्याः के ? इत्यधिदैवतशब्दार्थश्चेत्पृष्टः, तदा **पुरुषः** स्वशरीरे तिष्ठन्तः, अन्यशरीरे प्रेरकतया तिष्ठन्तश्च देवा इत्युत्तरम् ।

"अधियज्ञः कः" इति प्रश्नस्योत्तरम् **अधियज्ञोऽहमिति** । नायम् अध्यात्मादिशब्दवत् अधियज्ञशब्दोऽव्ययीभावः, येन 'अधियज्ञम्' इति नपुंसकत्वं स्यात् । किन्तु "अधिगतो यज्ञ-

मधियज्ञः'' इति प्रादिसमासः । ''अधिष्ठितो यज्ञो अनेन'' इति बहुव्रीहिर्वा । भगवतोऽन्यो-ऽग्न्यादिरधियज्ञः प्रसिद्ध इति सिद्धार्थतालक्षणदोषपरिहारार्थं प्रश्नवाक्ये 'देहे' इति विशेषणमुक्तम् । कर्तृ-भोक्तृ-फलदातॄणां देहे प्रवर्तकत्वेन वर्तमानः कः ? इति । अतः परिहारवाक्येऽपि यथाप्रश्नं 'देहे' इति वक्तव्यमेवेति सप्रयोजनं विशेषणम् । 'कथमधियज्ञः ?' इति प्रश्नस्तु सर्वयज्ञभोक्तृत्व-तत्प्रवर्तकत्वादेरधियज्ञो भगवान् इति प्रतिवचनाध्याहारेण परिहरणीयः ।

नन्वेष परिहारो भगवतैव कुतो नोक्तः ? इति चेत्, उच्यते । 'अधियज्ञोऽहम्' इति यदा-ऽधियज्ञत्वेन भगवानुक्तः, तदा तस्य सर्वयज्ञभोक्तृत्वादेरधियज्ञत्वम् अर्जुनस्य सिद्धमेव । ''भोक्तारं यज्ञतपसाम्'' (५.२९) इत्यादेरर्थस्य तेन श्रुतत्वात् । अधियज्ञस्य भगवतोऽन्यत्वपक्ष एव 'कथम्' इति पृष्टत्वात् । एवमालोच्य भगवता 'कथम्' इत्यस्य प्रश्नस्य परिहारः 'अधियज्ञोऽहम्' इत्यतः पृथङ्नोक्तः । मन्दान् बोधयितुं तु भाष्यकारः 'सर्वयज्ञभोक्तृत्वादेरधियज्ञः' इत्यध्याहृत्य प्रश्नं पर्यहार्षीदिति । यद्यधियज्ञः स्वयमेव, तर्हि कथं 'साधियज्ञम्' (७.३०) इति प्रागधियज्ञसाहित्यं भगवत उक्तम् ? इति शङ्कामपाकर्तुं च परिहारवाक्ये 'देहे' इति विशेषणं सर्वप्राणिदेहस्थरूप-विशेषापेक्षया साहित्यमुक्तमिति तात्पर्यात् । ईश्वरदेहं व्यावर्तयितुम् 'अत्र' इति देहविशेषणम् । न हि लौकिकदेह इव स्वदेहे ईश्वरस्य पृथग्भावेन नियन्तृत्वमस्ति ॥ ४ ॥

अन्तकाले ''किमर्थं स्मर्तव्योऽसि ?'' इत्यस्य परिहार उच्यते **अन्तकाल इति** । प्रयाणकाले **मामेव स्मरन् कलेवरं** देहं त्यक्त्वा **यः प्रयाति** गच्छति स **मद्भावं** मयि सत्तां निर्दुःख-निरतिशयानन्दात्मिकां याति । मद्भद्भावम् अभिव्यक्तनिरतिशयानन्दानुभवात्मकम् इति वा । मत्प्राप्तिमेवान्तकाले मत्स्मरणं फलतीति ॥ ५ ॥

तत्स्मरणेन तद्भावप्राप्तिः कथम् । इत्यतो व्याप्तिरुच्यते **यं यमिति** । **अन्ते स्मरन्** यः कलेवरं त्यजति स तं तं भावं याति । अन्तकाले स्मरणोपायः कथ्यते **सदेति** । तस्मिन् **भावः** अन्तर्गतं मनः तेन **भावितः** अतिवासितः संस्कृतः निरन्तरचिन्ताजात-तद्गोचरस्मृतिजनकसंस्कारशाली-त्यर्थः ॥ ६ ॥

प्रकृतमनुसन्धीयते **तस्मादिति** । निरन्तरमद्भावनाया मत्प्राप्तिहेतुस्मृतिजनकत्वात् मय्यर्पित-मनोबुद्धिः सन्निति । अत्र बुद्धिर्मनोवृत्तिविशेषः । अत्रार्थे संशयाभावः ॥ ७ ॥

सदा तद्भावभावितत्वं स्पष्टीक्रियते **अभ्यासेति** । **अभ्यासः** आवर्तनमेव **योगः** उपायः, **तद्युक्तेन अनन्यगामिना** अनन्यविषयेण । श्रितादिषु गमिगाम्यादेरुपसङ्ख्यानात् समासः । 'नान्य-

गामिना' इति पाठेऽप्ययमेवार्थः । **दिव्यं** सृष्ट्यादिक्रीडादियुक्तम्, पुरि शेते, पिपर्तीति वा **पुरुषं** प्राणिदेहे नियन्तृत्वेन वर्तमानम्, पूर्णं वा मामिति यावत् ॥ ८ ॥

"अन्तकाले कथंभूतः स्मर्तव्योऽसि" इति प्रश्नस्य ध्येयगुणकथनेन परिहारः श्लोकद्वयेनोच्यते **कविमित्यादिना** । **कविं** सर्वज्ञं **पुराणम्** 'पुरा' इत्यव्ययं चिरविप्रकृष्टकालमाह । ततः "**तत्र भवः**" इत्यर्थे "सायं चिरम्" इत्यादिना ट्युप्रत्यये "पुराणप्रोक्तेषु ब्राह्मणकल्पेषु" इति निर्देश-सामर्थ्यात् तुडागमाभावे च पुराणशब्दोऽतिविप्रकृष्टभूतकालसम्बन्धिनमर्थमाह । 'पुराऽपि नवम् इति पुराणम्" इति **विवृतिकृतः** । **अनुशासितारं** शिक्षकम् **अणोरणीयांसं धातारं** ? धारणपोषण-कर्तारम् **अचिन्त्यरूपं** साकल्येनाचिन्तनीयस्वरूपम्, आदित्यस्य वर्ण इव वर्णो यस्य तं तथो-क्तम् । आदित्यवर्णश्चेच्छरीरित्वेन जन्मादिप्रसङ्गः ? इत्यत उक्तम् **तमसः परस्तादिति** । अव्यक्तात् परतः स्थितम् अप्राकृतविग्रहं मृत्युरहितं वा । तेन नोक्तदोष इति भावः ॥ ९ ॥

वायुजयादियोगयुक्तानां मृतिकाले कर्तव्यमुच्यते विशेषतः **प्रयाणकाल इति** । ननु "अनु-स्मरेद्यः स तं पुरुषमुपैति" इत्यन्वयादेकस्य वाक्यस्य कथं भिन्नविषयत्वम् उच्यते ? एकस्मिन्नपि वाक्ये "योगबलेनैव भ्रुवोर्मध्ये प्राणमावेश्य" इत्येतावन्मात्रं वायुजयादिप्रधानसाधकविषयं प्रतिपत्त-व्यम् । यथा 'प्रातरुत्थाय' इति श्रुतौ "न भृशं वदेत्" इत्यादिकं किञ्चित्साधारणं किञ्चिदसाधा-रणम् । कुतो 'योगबलेन' इत्यादेर्वायुजयादिप्रधानसाधकविषयत्वमिति चेत् । वायुजयादिरहिताना-मपि ज्ञानभक्तिवैराग्यादिसम्पूर्णानां भवत्येव मुक्तिः । तद्वतां त्वीषज्ज्ञानाद्यसम्पूर्णानामपि वायु-जयादिनिपुणानां तद्बलादल्पा किञ्चिच्छीघ्रगामिनी च सा भवतीति विशेषस्य प्रामाणिकत्वेन सर्वसाधारणत्वाभाव इति ॥ १० ॥

वायुजयादियुतानां मरणकाले कर्तव्यमेव सध्येयं प्रपञ्च्यते **यदक्षरमिति** । **यदक्षरं** सर्वथा नाशरहितं **वेदविदो** वेदार्थतत्त्वज्ञाः **यत्** च **वीतरागाः** अपगतरागादिदोषाः **यतयो** यत्नवन्तः **विशन्ति** मुक्तौ, **यत्** च **इच्छन्तो ब्रह्मचर्यं** मनआदीनां ब्रह्मणि चरणं **चरन्ति** अनुतिष्ठन्ति । **तत् पद्यते** गम्यते प्राप्यते मुमुक्षुभिरिति **पदं** गम्यं सङ्ग्रहेण **प्रवक्ष्ये** व्याख्यास्यामि ॥ ११ ॥

एवं ध्येयमुक्त्वा तत्स्मरणप्रकारः प्रपञ्च्यते **सर्वेति** । **सर्वद्वाराणि** प्राणवायुसञ्चरणद्वारभूत-सुषुम्नाव्यतिरिक्तनाडीः **संयम्य हृदि** नारायणे मनो निरुध्य विष्णुविषयं कृत्वा । "मनो निरुध्य" इत्यनेनैव सर्वेन्द्रियसंयमनं लब्धम् । तत्किं पुनरुच्यते 'द्वाराणीन्द्रियाणि' इति । मैवम् । वायु-सञ्चरणद्वाराणां नाडीनामत्र ग्रहणात् । **आत्मनः** स्वस्य **प्राणं** प्राणवायुं मूर्ध्न्याधाय, "सुषुम्नानाडी-

मार्गेण ब्रह्मरन्ध्रे निधाय'' इति **विवृतिकृत्**सूक्तिः । **योगधारणाम् आस्थितः** अखण्डस्मृतिरूप-योगभरण एवाभियुक्तः ॥ १२ ॥

ओमित्येकम् अक्षरं = वाचकं यस्य तद् **ओमित्येकाक्षरं ब्रह्म** परं ब्रह्म **माम् ओमित्येकाक्षरं** प्रणवं **व्याहरन्** एव **अनुस्मरन् त्यजन् देहं यः प्रयाति स याति परमां गतिं** परमगम्यं मामाप्नोति । न च ''एकाक्षरवाच्यत्वाद् एकाक्षरं ब्रह्म'' इत्युत्तरप्रस्थाने (गी.ता. ८.१३) व्याख्यानाद् अत्र प्रणवपरत्वेन कथं व्याख्यानमिति वाच्यम् । ब्रह्मपरत्वाप्रहाणेनैवेह प्रणवार्थकत्वाङ्गीकारात् । अत एव **न्यायदीपिकायां** ब्रह्मशब्दस्य परब्रह्मण्येव मुख्यत्वान्न प्रतीत एवार्थ इत्येवकारः प्रयुक्तः ॥ १३ ॥

अन्तकाले स्मरणं नित्याभ्यासशालिन एव भवति । भवेच्च तत् मत्प्राप्तिहेतुरित्युच्यते **अनन्यचेता इति** । **सततम्** अनन्यविषयचित्तः **यो नित्यशो मां स्मरति**, 'सततम्' इति नैरन्तर्यम्, नित्यशः ''सङ्ख्यैकवचनाच्च वीप्सायाम्'' इति शस् । नित्यमिति दीर्घकालत्वमभिसंहितमिति आहुः । नित्ययुक्तस्य नित्योपायवतः **योगिनः** परिपूर्णयोगस्य नित्योपायत्वेन सम्पूर्णयोगस्येत्यर्थः । **तस्य** ''कृत्यानां कर्तरि वा'' इति षष्ठी । **सुलभः** अकृच्छ्रेण लभ्यः ॥ १४ ॥

''स याति परमां गतिम्'' (८.१३), ''तस्याहं सुलभः'' (८.१४) इति द्वेधा वचनात् परमगतिः, भगवत्प्राप्तिश्च पृथक् फलमिति न मन्तव्यम् । किन्तूभयमपि मत्प्राप्तिरूपम् एकमेव फलम् इति भावेन स्वप्राप्तिः स्तूयते **मामुपेत्येति** । **महात्मानः** महान् **आत्मा** मनो ज्ञानं येषां ते तथोक्ता ज्ञानिनः । **दुःखालयम्** आध्यात्मिकादिदुःखकारणम् **अशाश्वतम्** अनवस्थितस्वरूपं **पुनर्जन्म** पुनर्देहयोगं **नाप्नुवन्ति** । एवं भगवत्प्राप्तिस्तुत्या परमगतिः मल्लाभश्च मत्प्राप्तिरूपकमेव फलमित्युक्तम् । **कुतः** ? इत्यत उक्तम् **संसिद्धिं परमां गता इति** । ये मामुपेतास्ते **परमां सिद्धिं** मोक्षलक्षणां हि **गताः** । न च मुक्तानां निर्बीजं जन्म सम्भवतीत्येवं तत्र स्वं प्राप्तानां जन्माभावे हेतुरयमुच्यते ॥ १५ ॥

महामेरुस्थब्रह्मसदनं जनलोकं चारभ्य परतः स्थितानामपि न पुनरावृत्तिः । अतः ''मामुपेत्य पुनर्जन्म नाप्नुवन्ति'' इति किमुच्यते ? इत्यत उच्यते **आब्रह्मभुवनादिति** । सत्यम् । आब्रह्मसदनाद् एवम् आजनाच्च अर्वाग् भवा एव **लोकाः** तत्रत्या जनाः पुनरावर्तिनः, परे त्वपुनरावर्तिन इति । **तथाऽपि** नोक्तमयुक्तम् । यतस्तेषु लोकेषु स्थितं **माम् उपेत्य** अवस्थितस्य **पुनर्जन्म न विद्यते** इति ॥ १६ ॥

"मां प्राप्यावस्थितानां तु न पुनरावृत्तिः" इति प्रतिज्ञामात्रेण प्रागुक्तमर्थं स्थापयितुम् अशेष-सृष्टिप्रलयादिकारणत्वरूपसामर्थ्यम् आत्मनो वक्तुम् उपोद्घात उच्यते **सहस्रेति** । सहस्रशब्दोऽत्र न दशशतवाची, किन्तु ततोऽपि बह्वर्थपरः । **यद् ये जनाः सहस्रयुगपर्यन्तं** बहुसहस्रयुगानि **पर्यन्तः** अवसानं यस्य तत् तथा द्विपरार्धात्मकम् **अहर्विदुः युगसहस्रां तां** बहुसहस्रयुगादधिकां द्विपरार्ध-प्रलयात्मिकां **रात्रिं च ब्रह्मणः** परब्रह्मणः विदुः, त **एवाहोरात्रविदः** । परब्रह्मणः कूटस्थनित्य-स्यापि सृष्ट्यादिसव्यापारनिर्व्यापारावस्थे रात्राविव प्रलयकाले प्रवृत्त्यभावाद्, अह्नीवान्यदा प्रवृत्ति-सद्भावाद् अहोरात्रत्वेनोपचर्यत इत्याकरादौ (गी.ता.) स्फुटम् ॥ १७ ॥

ततः किम् । इत्यत उच्यते **अव्यक्तादिति** । 'मामुपेत्य' (८.१६) इत्युक्तस्यार्थस्य "यं प्राप्य न निवर्तन्ते" (८.२२) इत्यव्यक्तविषयतया परामर्शात्, "अव्यक्तं परमं विष्णुम्" (गा.) इति पुराणे प्रयोगाच्चाव्यक्तो भगवान् । तस्माद् **अहरागमे** द्विपरार्धावसाने, सृष्टिकाल इति यावत् । 'व्यज्यन्ते' इति व्यक्तयः सृज्यपदार्थाः **प्रभवन्ति** उत्पद्यन्ते, **रात्र्यागमे अव्यक्तसंज्ञके** अव्यक्त इति संज्ञा यस्य सोऽव्यक्तसंज्ञकः, "आपोऽन्यतरस्याम्" इति ह्रस्वः, शैषिकः कः । एतस्मिन् **प्रलीयन्ते** ॥ १८ ॥

महामहिमस्थापनायोक्तौ सृष्टिलयौ न सकृदेव तस्मादित्युच्यते **भूतग्राम इति** । यो व्यक्ति-शब्देनोक्तो भूतग्रामः ब्रह्मादिचेतनाचेतनसमुदायः, स एवायम् **अहरागमे** 'प्रभवति' इत्युक्तोत्पत्ति-मनूद्य लय उच्यते । **भूत्वा** उत्पद्य रात्र्यागमे **अवशो** भगवद्वशः सन् तत्र प्रलीयत इति ॥१९॥

भूतग्राम इव किं भगवानप्युत्पत्त्यादिमान् ? नेत्युच्यते **पर इति द्वाभ्याम्** । **अव्यक्तो** भगवांस्तु **तस्मात्** उत्पत्तिलयोपेताद् व्यक्ताद् भूतग्रामाद् **अन्यो** विलक्षणो भावयतीति **भावः** स्वतन्त्रः पदार्थः ।

"सृष्टिः स्थितिश्च संहारो भावनं समुदाहृतम् ।
तद्यः करोति पुरुषः स भाव इति कीर्तितः ॥" (विवेके)

इति वचनादिति विवृतिकृत्सूक्तिः । **परः** उत्तमो यः **सनातनः** चिरन्तनः **भूतेषु सर्वेषु नश्यत्सु** अपि **न विनश्यति** ॥ २० ॥

सर्वात्मना प्रभवप्रलयाभावाद् **अव्यक्तोऽक्षर इत्युक्तः** "तस्मादक्षरं तस्मादक्षरम्" इत्यादि-शास्त्रेषु, **तं परमां गतिमाहुः** । सा च परमगतिर्भगवल्लाभरूपैवेत्युक्तार्थस्मरणाय **यं प्राप्य न निवर्तन्ते तन्मम धाम** स्वरूपमित्युक्तम् ॥ २१ ॥

एतादृशी भगवत्प्राप्तिः केन साधनेन स्यात् ? इति शङ्काऽपनोदाय भक्तेर्भगवत्प्राप्तिसाधनत्वं "भक्त्या युक्तो योगबलेन च" (८.१०) इत्यत्रोक्तम् । तत्र योगादिसाधनैः सहोक्तत्वेन तत्साम्य-शङ्कायाम्, साधनेषु भक्तेरेवोत्तमत्वं वक्तुम्, पुनरत्र भक्तेः साधनत्वमुच्यते **पुरुष इति** । **अनन्यया** अनन्यसाधारण्या **भक्त्या तु** भक्त्यैव **लभ्यः** प्राप्यः । 'परमया' इत्यनुक्तावपि पुनः साधनोक्ति-बलादेव तल्लाभ इति ज्ञातव्यम् ॥ २२ ॥

यत्कालाग्निज्योतिर्धूमलोकाभिमानिदेवताऽधिष्ठितमार्गाभ्यां गता आवृत्त्यनावृत्ती गच्छन्ति ता उच्यन्ते **यत्रेत्यादि त्रिश्लोक्या** ॥ **यत्र** यत्कालाभिमानिदेवताऽधिष्ठितमार्गेषु धूमादिलोकाभिमानि-देवताऽधिष्ठितमार्गेषु च मृत्यनन्तरं च **प्रयाता योगिनः** ज्ञानयोगिनः कर्मयोगिनश्च अनावृत्तिम् **आवृत्तिं चैव यान्ति तं कालं** कालाभिमानिदेवताऽधिष्ठितमार्गम्, अग्निज्योतिर्धूमानाम् अकाल-त्वेऽपि कालाभिमानिनां बाहुल्याद् अल्पसलिलयुतपयसि पयःपदस्य सलिलोपलक्षकत्ववत् कालपद-स्येतरगम्यदेवताऽधिष्ठितमार्गोपलक्षकत्वाशयेन 'कालम्' इत्येवोक्तम् ॥ २३ ॥

ता देवता उद्देशेन निरूप्यन्ते **अग्निरिति** । अत्राग्निशब्देनाग्निनामा प्रधानवह्निपुत्रो गृह्यते । ज्योतिःशब्देन त्वर्चिर्नामाऽग्निपुत्र एव ग्राह्यः । तावुभावप्येकरूपौ, एकपुरस्थौ चेति सूत्रभाष्ये स्फुटम् । तेन "तेऽर्चिषमभिसम्भवन्ति" (छा.५.४.१), "अर्चिरादिना तत्प्रथितेः" (ब्र.सू. ४.३.१) इत्यादौ अर्चिर्नामकज्योतिषः प्रथमप्राप्यत्वावगमाद् अत्र कथमग्नेः प्रथमप्राप्यत्वोक्तिरिति चोद्यं निरस्तम् । प्राप्यलोकभेदाभावात् । आह च "एकस्मिंस्तु पुरे संस्थो द्विरूपोऽग्नेः सुतो महान्" (ब्र.त.) इति प्राप्तिक्रमापेक्षया चाग्निर्ज्योतिरित्युक्तिः । तथा च भाष्यम् "अग्निं प्राप्य ततश्चार्चिः" (ना.) इति । **अहः** अहरभिमानिनी देवता, अभिजित्कालाभिमानिदेवता चात्र ग्राह्या । **शुक्लः** शुक्लपक्षाभिमानिदेवता । अत्र पौर्णिमास्यभिमानिदेवताऽपि ज्ञातव्या । **षण्मासाः** षण्मासाभि-मानिन्यो देवताः, **उत्तरायणं** तदभिमानिनी देवता षण्मासदेवतातोऽन्या । **तत्र** उक्तदेवताऽधिष्ठित-मार्गेषु ॥ २४ ॥

'धूमः' इत्यत्र धूमादिशब्दैर्दशदेवता उच्यन्ते । **तत्र** तत्तद्देवताऽधिष्ठितमार्गेषु । **चान्द्रमसं** चन्द्रमसि भवं ज्योतिः प्रकाशं **योगी** इष्ट्यादिकारी ॥ २५ ॥

निरयमार्गं प्राप्तस्यापि कालभेदेन स्वर्गमार्गगमनमिव धूमादिमार्गं गतस्यापि कदाचिदर्चिरादि-मार्गगमनमपि व्यत्यस्यास्ति किम् ? इति शङ्कां परिहर्तुं मुक्तौ मार्गौ निगमनेन व्यवस्थाप्येते **शुक्ल-कृष्ण इति** । शुक्ला च कृष्णा च त एव ह्रस्वत्वेन शुक्लकृष्णे, ज्ञानलक्षणप्रकाशसाध्यत्वाद्

*अर्चिरादिः शुक्ला गतिः, तदभावात् कर्मसाध्यत्वाच्च धूमादिगतिः कृष्णा ।* **जगतः** ज्ञानकर्मिलोकस्य *शाश्वते शाश्वत्यौ सदैकप्रकारे, न तु कदाऽपि व्यत्यस्ते ।* तत्र **एकया** शुक्लगत्या अर्चिरादिमार्गेण, **अन्यया** *कृष्णगत्या धूमादिमार्गेण ॥ २६ ॥*

*मार्गकथनस्य प्रयोजनमुच्यते* **नैत इति** । **एते** उक्ते **सृती** मार्गौ **जानन् योगी** ते सोपाये *ज्ञात्वा तदुपायम् अनुतिष्ठन्* **कोऽपि न मुह्यति** भगवद्विस्मृतिरूपं मोहं न प्राप्नोति । **तस्मात्** *भगवदनुस्मृत्यनुकूलत्वात् ।* **सर्वदा योगयुक्तो** भगवज्ज्ञानभक्तिपूर्वकस्वोचितकर्मानुष्ठानलक्षणो- पायवान् **भव** । *द्विःसम्बोधनम् आदरसम्पादनार्थम् ॥ २७ ॥*

एवं "किं तद् ब्रह्म" इत्यादिप्रश्ननिर्णयद्वारेण अवधारितम् अक्षराख्यपरब्रह्म, तत्प्राप्त्यनुकूल- *मार्गादिकं च विदुषः सर्वातिशायि फलं निगद्यते* **वेदेष्विति** ॥ सम्यगधीतेषु **वेदेषु यज्ञेषु** साद्गुण्ये- नानुष्ठितेषु **तपस्सु** कायक्लेशात्मकचान्द्रायणादिषु सुतप्तेषु **दानेषु** सत्पात्रे प्रतिपादनेषु **यत् पुण्य- फलं प्रदिष्टं** शास्त्रेणोपदिष्टं **तत् सर्वमत्येति** अतिक्रामति न गणयति । **इदम्** अक्षराख्य- ब्रह्मस्वरूपं तत्प्राप्तिमार्गादि **विदित्वा** उक्तरीत्या परिज्ञाय स्थितो **योगी परम्** उत्कृष्टं दिव्यम् **आद्यम्** आदौ भवं कारणं **स्थानं** वैष्णवं पदम् **उपैति** प्रतिपद्यते च इति ॥ २८ ॥

*॥ इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमत्सुरेन्द्रतीर्थपूज्यपादशिष्यसुमतीन्द्रतीर्थविरचितायां प्रमेयदीपिकाव्याख्यायां भावरत्नकोशसमाख्यायामष्टमोऽध्यायः ॥*

स्वतन्त्रः कर्ताऽयं लघुरहं कर्मसु परं
प्रतिच्छायारूपः किमपि च करोमि स्वविहितम् ।
इति प्राज्ञैर्ज्ञात्वा सकलसुकृतानि प्रतिदिनं
हरावेव न्यस्यन् प्रथित इह कर्मज्ञ इति सः ॥

## गीतातात्पर्यनिर्णयः

**"मार्गौ ब्रह्म च यः पश्येत् साक्षादेवापरोक्षतः ।**
**सर्वपुण्यातिगोऽमुह्यन् यात्यसौ ब्रह्म तत् परम् ॥"**

**—इति च ॥ २७-२८ ॥**

*॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमद्भगवद्गीतातात्पर्यनिर्णये अष्टमोऽध्यायः ॥*

*प्रका०*— ''नैते सृती''त्यादेरर्थमाह **मार्गाविति** ॥

*इति श्रीमदानन्दतीर्थभगवत्पादविरचितस्य श्रीमद्गीतातात्पर्यनिर्णयस्य प्रकाशिकायां पद्मनाभतीर्थविरचितायां अष्टमोऽध्यायः ॥*

*न्या०दी०*— वेदेष्वित्यस्य अर्थः ''सर्वपुण्यातिगो यात्यसौ ब्रह्म तत्परम्'' इति ॥ मार्गकथनस्य प्रयोजनमुच्यते 'नैते' इति । तत्र परोक्षतः स्मृतिज्ञानमात्रेणेदं फलमित्यन्यथाप्रतीतिनिरासाय स्मृत्यैव व्याचष्टे **मार्गाविति** ॥ योगीत्यस्यार्थो ब्रह्म च पश्येदिति ।

*इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य श्रीमद्भगवद्गीतातात्पर्यनिर्णयस्य टीकायां जयतीर्थमुनिविरचितायां न्यायदीपिकायां अष्टमोऽध्यायः समाप्तः ॥*

★ ★ ★

**॥ इति अष्टमोऽध्यायः ॥**

★ ★ ★

